महर्षिप्रवरश्रीकृष्णद्वैपायनप्रणीतम्-

# श्रीमद्भागवतम्।

---

श्रीश्रीपादश्रीधरस्वामिकृतभावार्थदीपिका, श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी, श्रीमद्विशिष्टाद्वैत-
सिद्धान्तप्रतिष्ठापनाचार्यवर्यश्रीसुदर्शनसूरिकृतशुकपक्षीयव्याख्याटीका, तदनुगामिश्रीमद्वीर-
राघवाचार्यकृतभागवतचन्द्रचन्द्रिका, श्रीमन्माध्वसिद्धान्तधुरन्धरश्रीमद्विजयध्वजतीर्थकृत-
पदरत्नावली, श्रीगौडीयवैष्णवाचार्यप्रवरश्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भाख्यटीका,
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भाख्यटीका, श्रीमद्विष्णुस्वामिसिद्धान्तनिर्वाहकाचार्य
प्रवरश्रीमद्वल्लभाचार्यकृतसुबोधिनी, श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी,
श्रीनिम्बार्कसम्प्रदायि-श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपाख्यटीका इति दशभि-
र्व्याख्याभिर्भाषानुवादेन च समलङ्कृतम्

---

तदिदं

परमहंसपरिव्राजकाचार्यपूज्यपादश्रीमत्स्वामिप्रकाशानन्दसरस्वतीप्रवरशिष्येण,

**श्रीनित्यस्वरूपब्रह्मचारिणा**

सम्पादितम्।

---

बङ्गदेशान्तर्गत ताड़ास भूपते श्रीराधाविनोद प्रेम सेवा परायण राजर्षिराय-

**“श्रीवनमालिराय बहादुरस्य”**

सम्पूर्णसाहाय्येन

---

प्रकाशितञ्च।

तथा
श्रीवृन्दावन श्रीरङ्गमन्दिरस्थ पं० भागवताचार्य द्वारा
काञ्चीमण्डलान्तर्वर्ति 'कान्नूर' पं० श्रीरङ्गाचार्यद्वारा च संशोध्य

**श्रीवृन्दावनधामनि**

स्वकीये “श्रीदेवकीनन्दन” यन्त्रालये

मुद्रापितम्।

सम्वत् १९६४

1896

# चतुस्सप्ततितमोऽध्यायः ।

श्रीशुक उवाच ।

एवं युधिष्ठिरो राजा जरासन्धवधं विभोः ।
कृष्णस्य चानुभावं तं श्रुत्वा प्रीतस्तमब्रवीत् ॥ १ ॥

युधिष्ठिर उवाच ।

ये स्युस्त्रैलोक्यगुरवः सर्वे लोकमहेश्वराः ।
वहन्ति दुर्लभं लब्ध्वा शिरसैवानुशासनम् ॥ २ ॥
स भवानरविन्दाक्षो दीनानामीशमानिनाम् ।
धत्तेऽनुशासनं भूमंस्तदत्यन्तविडम्बनम् ॥ ३ ॥
न ह्येकस्याद्वितीयस्य ब्रह्मणः परमात्मनः ।
कर्मभिर्वर्धते तेजो ह्रसते च यथा रवेः ॥ ४ ॥
न वै तेऽजित भक्तानां ममाहमिति माधव ।
त्वं तवेति च नानाधीः पशूनामिव वैकृता ॥ ५ ॥

श्रीशुक उवाच ।

इत्युक्त्वा यज्ञिये काले वव्रे युक्तान् स ऋत्विजः ।
कृष्णानुमोदितः पार्थो ब्राह्मणान् ब्रह्मवादिनः ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुःसप्ततितमे राजसूयक्रिया द्विजैः ।
अग्रपूजाप्रसङ्गेन चैद्याघातादि वर्ण्यते ॥
राजसूयमुखे हत्वा जरासन्धं तदन्तरे ।
चैद्यं पदस्थं कुर्वन्तं बीजं कलिमिवावधीत् ॥

कृष्णस्य चानुभावमिति चकारात्तस्य स्वांशाऽनुविधायित्वञ्चाऽऽलक्ष्येत्यर्थः ॥ १ ॥

तदाह—ये स्युरिति । ये त्रैलोक्यस्यापि गुरवः स्युः सनकादयः सर्वे च लोकपालाश्च ते शिरसैव तवानुशासनं वहन्ति दुर्लभं लब्ध्वेति भावेनैवालभ्यमिति बहुमानेनेत्यर्थः ॥ २ ॥

स भवान् परमेश्वरोऽस्माकमनुशासनं धत्ते तदत्यन्तविडम्बनमननुरूपमनुकरणम् स्वतेजोहानिप्रसङ्गादित्यर्थः ॥ ३ ॥

अथवा तव पूर्णस्याज्ञाभङ्गाज्ञापालनाभ्यां न तेजसो हानिर्वृद्धिर्वा अतः कृपया सर्वं सहस्वेत्याह—न ह्येकस्याद्विती-



यस्येति । समानाभ्यामसङ्गितस्य ब्रह्मणस्त्वत्तोऽन्यो नास्ति परमात्मन इति सर्वजीवनियन्तुस्तव नियम्यत्वं सुतरां न सम्भवति अतः परानुग्रहार्थैरेतैः कर्मभिस्तव तेजो न वर्धते न च ह्रसति रवेरिवोदयास्तमयादिकर्मभिरित्यर्थः । तथा च श्रुतिः "न कर्मणा वर्धते नो कनीयान्" इति ॥ ४ ॥

नन्वेवमप्यहं परमेश्वरो भक्ता मे कर्मीयोऽहमिति पश्यन्ति कथं न भवेदत आह—न वै त इति । हे अजित ! तव भक्तानामेव तावदियं नानाधीर्भेदबुद्धिर्नास्ति यथा पशूनामज्ञानां वैकृता शरीरविषया तव तु नास्तीति किमु वक्तव्यमित्यर्थः ॥ ५ ॥

यज्ञिये यज्ञोचिते वसन्तादिकाले युक्तानभियुक्तान् स युधिष्ठिरः ऋत्विजो होतृप्रमुखान् वव्रे वृतवान् ॥ ६ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

स्थावरादित्यर्थः । चिराणां वृन्दावनतरुगोवर्द्धनादीनां चराणां तद्गतमृगपक्ष्यादीनां वृजिनघ्नः दुःखघ्नः आनन्दप्रदः द्वारकायामपि रैवतादीनां तद्गतमृगादीनां च पुनः श्रीमुखेन स्मितः सन् व्रजरमणीनां गोपीनां पुररमणीनां रुक्मिणीप्रमुखानाञ्च कामदेवं वर्द्धयन् उत्पन्नयन् कामस्यासौ दीव्यतीति तथा अथवा कामेन सङ्कल्पेन विहरतीति कामदेवः प्रेमा तं पतेन व्रजविलासद्वारकाविलासयोरेव यैरपदैर्नैव नित्यत्वं बोद्धव्यं मथुरादावादिषु यदुवृन्देदेवक्योर्मेयशोदयोर्वाक्मिण्यादीनां गोपगोप्यादीनाञ्च सह पूजाश्रवणात् ॥ ४८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एतादृशोऽपि भगवान् साम्प्रतं कास्तीत्याकाङ्क्षायामाह जयति जननिवास इति । स कृष्णो भगवानिदानीमपि तत्सम्बन्धिजनेषु सर्वेष्वेव जयति सर्वोत्कर्षेण वर्त्तते यतोऽयं जननिवासः स्वभावतोऽपि सर्वेषु जनेषु निवसतीति परमात्मा सर्वान्तरः ननु देवकीपुत्रं पृच्छामि देवक्यां जातः स क वर्त्तत इति तत्राऽऽह देवकीजन्मवाद इति । देवक्यां जन्मवादमात्रे लोकविवादे सति भगवान् कापि नास्तीत्युक्तौ सिद्धान्तनिरूपणप्रस्तावे मीमांसकाः देवक्यां जातोऽस्तीत्याहुः—ननु तावन्मात्ररूपत्वं तस्येत्यर्थः । ननु सर्वत्र किं कुर्वन् तिष्ठतीत्याकाङ्क्षायां तस्य त्रिविधं कर्माह तत्र सात्त्विकं निरूपयति यदुवराणां परिषदि सभायामपि केचलौकिकपरा अपि ये स्वे स्वकीयाः सेवकाः सन्ति तेऽपि अधर्मजाते सर्वमेव दैत्यादि [illegible] स्वदक्षिपन् अद्यापि भगवान् द्वारकायां यादवसभायां सेवकैः सह विराजते यदि कश्चित्तत्र दैत्यः प्रकटो भवेत् तदा तत एव कश्चित्प्रेषयित्वा तं मारयतीत्यर्थः । तामसं चरित्रमाह स्थिरचरवृजिनघ्नः इति द्वारकायाभिरिक्तस्थाने सर्वत्रैव यत्रयत्र परिभ्रमणं कृतवान् तेषां सर्वेषामेव प्रसङ्गादपि वृजिनं पापं दूरीकरोतीति येवा जङ्गमा येवा वृक्षाः वृजिनस्यैव वा स्थिरचरभेदौ प्रकारद्वयमाश्रयौ अनेन सर्वत्रैव भगवानस्ति यदि जनो भवेदिति निरूपितं राजसमाह सस्मितश्रीमुखेन व्रजपुरवनितानां वर्द्धयन् कामदेवमिति सस्मितं शोभायुक्तं यन्मुखारविन्दं तेनैव व्रजे गोकुले पुरे मथुरायां द्वारकायां च याः स्त्रियः गोपिका कुब्जाप्रभृतयो महिष्यश्च तासां हृदये कामदेवं वर्द्धयन्नास्ते तामसस्य देवत्वं मोक्षपर्यवसानात् योऽस्त्येव सर्वेषु तमेव वर्द्धयन् स्वसम्बन्धमात्रेणैव मोक्षं प्रयच्छतीत्यर्थः । एवं पूर्वकथा पुरे यादृशी तादृश्येवेदानीमपि तथैव तेषु स्थानेषु करोति । अत्रार्थान्तरोऽपि वर्ण्यते अत्यन्तमोहितया लोके परस्त्रीसम्बद्धं भ्रमया मत्वा व्रजवनितानां पुरवनितानाञ्च ग्रामे रण्येच निवसतां काममुद्बोधयन्नास्ते इति तस्य देवत्वं मन्तव्यम् ॥ ४८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

हन्त हन्तैतादृशः कृष्ण एतावत्कालपर्यन्तं न तस्थाविति मा शोचेत्याह—जयतीति । जनेषु मथुरादिषु . . . मपत्वादवादेप्वेव निवासो यस्य सः जयति सर्वोत्कर्षेण वर्त्तते वर्त्तमाननिर्देशः सविशेषणस्यैव कृष्णस्य सार्वकालिकीं स्थितिं वक्ति शुकस्य तत्तत्त्वात् तत्राशीर्वादाशीमाङ्लिङ् प्रयोगो नैवाशङ्क्यः आशीर्वादेऽपि तदाशिषः सार्वत्रिकसत्यत्वात्प्रविविधितसिद्धिरेव देवक्यामेन्दवसुदेवगृहिण्योऽसौ मैव वाचः सिद्धमेवो यत्र सः तथाच प्रेमाश्रीनन्दभार्यायां यशोदा देवकीतिविख्याविपुराणे देवक्यामिव यशोदायां शुकोऽसेध्याद् प्रसक्तामहमिति अयतवुक्तिः भारमनवादपरिणामवादादिष्वपि वादशब्दस्य सिद्धान्तवाचित्वं दृष्टं यदुवरा गोपाः यादवाः क्षत्रियाः पुरस्थाश्च परिषत् सभारूपा यस्य सः स्वैर्दोर्भिः अधर्मं धर्मप्रतिपक्षमसुरसङ्घं निरस्यन् निघ्नन् दोस्तुल्यैरजुनादिभिर्वा अत एव स्थिरचराणां वृजिनं संसारदुःखं व्रजपुरस्थानां तेषां स्वविप्रयोगदुःखञ्च हन्तीति सः व्रजवनितानां पुरवनितानां मथुराद्वारकापुरस्थानुरागिणीनां सुस्मितेन श्रीमता मुखेनैव कामदेवं कामस्यासौ दीव्यतीति देवाऽप्राकृतप्रेमस्वरूपभूतस्तं वर्द्धयन् सन् जयतीति व्रजमथुराद्वारकावधलीलानां सर्वासामेव दशमस्कन्धवर्णितानां नित्यत्वमुक्तं एतद् प्रकारश्च सप्रमाणकः सर्वं एवोज्ज्वलनीलमणिटीकायां साधु विवृत एव अत्राप्येकादशान्ते भगवद्धर्माद्धर्मप्रसङ्गे व्याख्यास्यत एव ॥ ४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उक्तलीलस्य भगवतो बहुशो वर्णितं परत्वं सङ्क्षेपत आह जयतीति । जनानां सर्वेषां निवासः धारकः तदपि मक्तवत्सलत्वात् देवक्यां जन्मेति वादः कथा यस्य सः यदुवराः परिषत्सभा सेवककृपा यस्य सः दोर्भिः भुजैः अधर्मं अस्यन् क्षिपन् स्थिराणां चराणां च वृजिनं पापं हन्तीति तथा शोभनं स्मितं यस्मिन् तेन श्रीमता मुखेन व्रजवनितानां पुरवनितानाञ्च दीव्यति विजिगीषति संसारमिति देवः कामश्चासौ देवस्तं वर्द्धयन् भक्तमनोरथपूरणार्थं सत्सङ्कल्पानुगुणञ्चेष्टितं कुर्वन्नित्यर्थः अत्यतिशयेनोत्कर्षेण वर्त्तते ॥ ४८ ॥

---

भाषाटीका ।

सब प्राणियों में निवास करने वाला देवकी में जन्म भया इस प्रकार का जिस का वाद है, यदुवंशियों में श्रेष्ठ जिस के सभासद हैं निज भुजाओं से अधर्म का नाश करने वाला स्थावर जंगम प्राणिमात्र के पातक का नाश करने वाला सुन्दर मंदहास युत श्रीमुख से व्रज की और मथुरा तथा द्वारका पुरी की वनिताओं को कामदेव की वृद्धि करने वाला, अर्थात् प्रेमद्वारा मोक्ष देने वाला श्रीकृष्ण भगवान् सर्व प्रकार के उत्कर्ष से वर्त्तमान है ॥ ४८ ॥

---

श्रीमद्ब्रह्मानन्दाचार्यकृततत्त्वबोधिनी ।

अनन्यत्वमेव तात्पर्यम् एतस्यैव सर्वात्मत्वं ब्रह्माविश्रितं योगस्यापि ज्ञानमूर्तिरयमेवेति आत्मेति च एतदर्थमेव चित्तशुद्धिरीश्वरमिति "आत्मन्येव वशं नयेदिति" वाक्यात्तात्पर्यं अनयोरपि पशुपतिमतस्याप्यत्रैव स्कन्दपुराणे महादेवेन स्कन्दं प्रत्युक्तत्वात्—

परमो विष्णुरेवैकस्तद् ज्ञानं परमं मतम् ।
शास्त्राणां निर्णयस्त्वेष तदन्यन्मोहनाय हि ॥ इति

वैष्णवसिद्धान्ते तु न सन्देह एव अतः सर्वशास्त्राणामत्रैव तात्पर्यमित्यर्थः ॥ २० ॥

ननु तथापि ब्रह्मलक्षणाभावे कथं ब्रह्मत्वमिति चेत्तत्राह "एक एवाद्वितीयो" इति वेदान्तेषु "एकं ब्रह्म अद्वितीयं ब्रह्म" इति कथित् ब्रह्मलक्षणं कथितं निर्णयशास्त्रे "विश्वरूपब्रह्मे"ति अत एव विश्वमिति प्रथमं नाम किञ्च "स आत्मानं स्वयमकुरुत" इति श्रुतेः "यो ह्यात्मानं स्वयं करोति स आत्मा ब्रह्मे"ति यस्यात्माश्रयः स ब्रह्मेति "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतिभिः सृष्टिप्रलयकर्ता ब्रह्मैव वस्तु सर्वान्तर्यामी सर्वमेकः स ब्रह्मेति "अन्तरो यमयति" इति श्रुतेः एवमनुवाक्यानुरोधेन सर्वमेव धर्मजातं भगवद्गतमित्यनुवदन्ति एकमेवायं महतां हरिरत्र प्रमाणं ते हि सर्वत्र कृष्णमेव पश्यन्ति "अद्वितीयस्य ज्योतींषि विष्णुरि"त्यादिवाक्यात् तेषामनुभवोऽपि प्रमाणं लोकेषु भविष्यतीत्याशङ्क्याह—असाविति—

सर्वेषामेव भूतानां पिता माता स माधवः ।
तमेव शरणं यात शरण्यं कौरवर्षभाः ॥

इति मार्कण्डेयवाक्यात् पर्णपुटे तेनायमेव दृष्ट इति अभिज्ञानाच्च किञ्च ऐतदात्म्यमिदं जगत् दुर्वाससा आरण्यकेपर्वणि निर्धारितं अन्यथा शाकान्नतुष्टिभक्षणेन कथं ते तृप्ता भवेयुः किञ्च अयमेव आत्मनात्माश्रयोभूत्वा जगदात्मत्वं सृजत्यवति हन्ति स्वयं स्वज्ञः अत्र प्रमाणं सभ्या इति सम्बोधनं तत्स्मरणार्थम् ॥ २१ ॥

किञ्च इहैव जगति विविधानि कर्माणि जनयन् यो वर्तते सर्वकर्माण्ययमेवोत्पादयति यतः प्रविश्यमवाचमिति वाक्यानुसारेण अत्रापि प्रमाणं सभ्या इत्येव किञ्च साक्षिणां यतः सर्वोऽपि लोकोऽस्मदादिः धर्मादिलक्षणं श्रेय ईहते यदपेक्षयैव न हि भगवदपेक्षाभावे श्रेयः सिध्यति अत्र वय-मेव प्रमाणम् ॥ २२ ॥

तस्मात् साक्षात् पूर्णपरब्रह्मत्वात् सर्वानुपपत्त्यभावाच्च कृष्णायैव दीयतां परमार्हणं तथाप्यस्मदपेक्षया कनिष्ठः मातुलेयः कथं दानमर्हतीत्याशङ्कायामाह—महत इति । विश्वरूपप्रदर्शनादि पितामातेतिवाक्याच्च महत्वं सिद्धं मोहार्थमेव च तस्यावाप्यत्वमिति परत्वरूपार्हणं न देयं किञ्च परमार्हणं नन्वेवं तस्मै को विशेषः अलौकिकं च भवति अतो व्यासादिरेव कश्चित् पूजार्हो भवत्वित्याशङ्कायामाह—एवञ्चेदिति । अत्रैव यावन्तः समागतास्तिष्ठन्ति सर्वे एवैकदा पूजयितुमशक्याः त एकपूजायामन्यद्रोहो भवतीति प्रत्यक्षविरोधः अन्योन्यादेव तत्पूजा इति श्रुतिविरोधश्च अतस्तावद्यावदेवं यस्मिन् दाने सर्वे एव तृप्ता भवन्ति सोऽयमेवेत्याह—एवं चेत्सर्वभूतानामात्मनश्चार्हणं भवेदिति ॥ २३ ॥

तत्र हेतुः सर्वभूतात्मभूतायेति सर्वभूतभूतः आत्मभूतश्च वेदव्यासव्यावृत्त्यर्थं कृष्णायेत्येकवचनकथनं ननु तथापि गृहीतावतारः कदाचिदपि आत्मानं परिच्छिन्नं मन्येत तदा दोषादानमनुचितं स्यादित्याशङ्क्याह अनन्यदर्शिन इति न तस्य कश्चिदप्यन्यदर्शनमस्ति किन्तु सर्वमात्मत्वेनैव पश्यतीत्यर्थः प्रसङ्गाद्दोषान्तरमपि वारयति शान्ताय पूर्णायेति शान्तो दानपात्रं पूर्णश्च लोलुपताक्रोधदोषौ एवं निर्दोषपूर्णगुणपात्रे दाने अनन्तं फलं भवति ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

श्रेष्ठ्यमत्यन्तिकम् आपेक्षिकमपि श्रैष्ठ्यं वस्तुतोऽस्यैवेति कैमुत्येनाह—एष वै इति ॥ १९ ॥

उक्तमर्थं विवृणोति । यदात्मकमिति साङ्ख्यं ज्ञानं योगोऽष्टाङ्गः यत्परः यद्विषयकः ॥ २० ॥

उक्तमर्थं प्रतिपादयति एक एव सजातीयभेदरहितः परमेश्वरान्तराभावादितिभावः अद्वितीयो विजातीयभेदरहितश्च तत्र हेतुः ऐतदात्म्यमिति स्वार्थेष्यञ् एतदात्मकमित्यर्थः एतच्छक्तिकार्यत्वादेव ऐतदात्मकमित्याह—आत्मना प्रकृत्या आत्माश्रयः अनन्याश्रयः हे सभ्याः ! इति अत्र विप्रतिपत्तिश्चेद्विप्रतिपद्यतां मयैव सर्वं समाधेयमिति भावः ॥ २१ ॥

श्रीकृष्णस्य कृपयैव सर्वलोकस्य सर्वकर्माणि तत्फलानि च सिध्यन्तीति—तदर्थमप्ययमग्रेऽर्हितुं युज्यत एवेत्याह विविधानीति इह भूर्लोके यदपेक्षया यत् कृपावलोकेनैव तपोयोगादीनि जनयन् कुर्वन् यत् यस्मादयं सर्वोऽपि जनो धर्मादिलक्षणं श्रेय ईहते साधयति कर्माणि तत्फलानि च यदधीनानीत्यर्थः ॥ २२—२३ ॥

न केवलमिदमिदानीमेव राजन्यास्मिन्नेव विधीयते किन्तु विधिरयं सार्वकालिकः सार्वलौकिकश्चेत्याह—सर्वेति अनन्यदर्शिने स्वाभिन्नदर्शिने ॥ २४ ॥ २५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

साङ्ख्यं चेतनाचेतनविवेकः योगः परमात्मध्यानयोगः ॥२०॥

एकः अद्वितीयः निरस्तसमानातिशयः आत्मनात्माश्रयः स्वाश्रयः स्वयमजः इदं सृजत्यवति हन्ति अत एवेदं जगदैतदात्म्यम् ॥ २१ ॥

यस्य प्रेरकस्य अपेक्षया अवलोकनेन विविधानि कर्माणि जनयन् कुर्वन् यत् यस्मात् कर्मफलदात् सर्वोऽपि जनः धर्मादिलक्षणं श्रेयः ईहते साधयति ॥२२॥

यस्मादेवं तस्मात् कृष्णाय परमार्हणं दीयताम् ॥ २३ ॥

सर्वेषां भूतानामात्मभूताय उपादानभूताय अत एवानन्यदर्शिने अन्यत्स्वस्माद्भिन्नं पश्यतीति अन्यदर्शी तन्न भवतीति अनन्यदर्शी तस्मै सर्वभूताभिन्नाभिज्ञायेत्यर्थः ॥ २४—२६ ॥

इत्युक्त्वा सहदेवोऽभूत्तूष्णीं कृष्णानुभाववित्।
तच्छ्रुत्वा तुष्टुवुः सर्वे साधु साध्विति सत्तमाः ॥ २५ ॥
श्रुत्वा द्विजेरितं राजा ज्ञात्वा हार्दं सभासदाम्।
समर्हयद्धृषीकेशं प्रीतः प्रणयविह्वलः ॥ २६ ॥
तत्पादाववनिज्यापः शिरसा लोकपावनीः।
सभार्यः सानुजामात्यः सकुटुम्बोऽवहन् मुदा ॥ २७ ॥
वासोभिः पीतकौशेयैर्भूषणैश्च महाधनैः।
अर्हयित्वाऽश्रुपूर्णाक्षो नाशकत्समवेक्षितुम् ॥ २८ ॥
इत्थं सभाजितं वीक्ष्य सर्वे प्राञ्जलयो जनाः।
नमो जयेति नेमुस्तं निपेतुः पुष्पवृष्टयः ॥ २९ ॥
इत्थं निशम्य दमघोषसुतः स्वपीठादुत्थाय कृष्णगुणवर्णनजातमन्युः।
उत्क्षिप्य बाहुमिदमाह सदस्यमर्षी संश्रावयन् भगवते परुषाण्यभीतः ॥ ३० ॥

भाषा टीका।

वहां के सभा में बैठे भए पुरुष सभ्य पुरुषों के मध्य में प्रथम पूजा के योग्य श्रेष्ठ पुरुष का विचार करते २ सभा में अनेक योग्य पुरुषों के होने से किसी एक नियत पुरुष का निश्चय जब न करसके तब माद्रीको पुत्र सहदेव बोला ॥ १९ ॥

परमपूज्य सनकादिकन के भी स्वामी श्रीकृष्णभगवान् हि अग्रपूजा के योग्य है क्यों कि ब्रह्मादिक सब देवता और देश काल द्रव्य आदिक सब यहि के आधीन है ॥ २० ॥

यह सब विश्व श्रीकृष्ण का शरीर है और सब यज्ञ इनका आराधन हैं तथा अग्नि आहुति वेद मन्त्र इनका हि रूप हैं और ज्ञान मार्ग तथा कर्म मार्ग इनकी प्राप्ति के उपाय हैं ॥ २१ ॥

हे सभ्य ओ! कर्माधीन जन्म रहित और निज समान रहित तथा सहकारी रहित यह श्रीकृष्ण हि सृष्टि के पूर्व काल में रहा और इस जगत्का अन्तरात्मा यहि है और स्वतन्त्र होकर अपने संकल्प से हि यह जगत्को सृजता है पालन करता है संहार करता है ॥ २२ ॥

इस संसार में यह सबहि लोक जिस के अनुग्रह से नाना प्रकार के कर्मों को करता भया जिस से अपने मनो वाञ्छित फलको प्राप्त होता है ॥ २३ ॥

इसी कारण से परमपूज्य श्रीकृष्ण के अर्थ अग्रपूजा दीजियेगा ऐसा कीये तो सब प्राणियों का और पूजा करने वारे का पूजन होजावेगा ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

श्रीकृष्णानुभाववित् सहदेव इत्युक्त्वा तूष्णीमभूत् ॥ २५ ॥

द्विजेरितं साधुसाध्विति घोषं श्रुत्वा हार्दमभिप्रायम् ॥ २६—३१ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

इत्युक्त्वेत्यत्र हेतुः कृष्णानुभावविदिति तच्छ्रुत्वेति तादृगनेकान्ये याथ तत्र किञ्चिदवक्तव्यतापेक्षयैव ते पूर्वन्तूष्णीमासन्निति भावः। सत्तमा अत्र द्विजाः श्रुत्वा द्विजेरितमिति वक्ष्यमाणात् ॥ २५ ॥

सभासदामन्येषाञ्च सर्वेषां हार्दं सम्मतिमित्यर्थः। यद्वा श्रीकृष्णे स्नेहं ज्ञात्वाच प्रीतः सानन्दस्सन् निजाभीष्टसिद्धेः अत एव प्रणयेन तत्प्रेम्णा विह्वलोपि समर्हयत् सम्यगर्हयत् कुतः हृषीकेशं प्रणयकोपेन तत्र मुहुः कृतवर्जनमपि स्वभावतः कृतसर्वेन्द्रियाकर्षम् ॥ २६ ॥

सम्यक्त्वमेव दर्शयति—तदिति द्वाभ्याम् ॥ २७ ॥

महाधनैरमूल्यैरित्यर्थः। इदं वास आदीनां सर्वेषामेव विशेषणम् ॥ २८ ॥

नम इति केचित् जयेति केचित् केचित्त्वत्यन्तहर्षेण नमो जयेति च वदन्तः ॥ २९ ॥

अत्र यद्यपि शिशुपालदन्तवक्त्रयोर्जयविजयत्वेन नान्तरासुरभावः किन्तु बहिस्तदनुकरणमेवेति हिरण्याक्षवधटीकाकृद्भिरुद्दर्शितमस्ति युक्तञ्च तत् अन्यथा क्रोधेन मुक्तत्वाय सालोक्याय च न कल्पतेति तदुद्देश्यविरोधः स्यात् अन्तरानुकूल्यादेव सिद्धायामेव पूजायां तादृशं बहुधार्षैः

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तस्मादद्वयोरेवास्यार्थान्तरं वास्तवम् अन्येषान्तु गीर्देवीप्रेरितमेव तथापि पुंवत्सपोषणार्थं यथादृष्टमेव स्पष्टमाह—इत्थमिति । निशम्य श्रीसहदेववचनमारभ्य नमो जयेत्यन्तं श्रुत्वा दमघोषसुत इति पितुरपि दुष्टत्वेन तस्य तदाधिक्यं सूचितं तथैव श्रीहरिवंशे गोमन्थपादाहमन्थने व्यक्तं श्रीकृष्णस्य गुणवर्णनेऽपि किम्पुनरर्हणेन जातो मन्युः क्रोधो यस्य सः यस्मादमर्षी असहिष्णुः मत्सरीत्यर्थः । यद्वा जातमन्युर्जातशोकः अमर्षी क्रुद्धश्च सन् अत एव स्वपीठादुत्थाय बाहुं दक्षिणमुत्क्षिप्य च सम्यक् समीप एवोच्चैर्भाषणादिना अभावयत् यस्मादभीतः महासाहसिक इत्यर्थः ॥ ३० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अवनिज्य प्रक्षाल्य ॥ २७—४५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीति । कृष्णप्रभाववित् सहदेवस्तूष्णीं बभूव तत्सहदेवोक्तं श्रुत्वा सर्वे सत्तमाः द्वैपायनादयः साधुसाध्विति तुष्टुवुः ॥ २५ ॥

श्रुत्वेति । द्विजैरितं साधु साध्विति घोषं श्रुत्वा समासदां सभ्यानां जातं हार्दमभिप्रायं ज्ञात्वा चेति शेषः । यद्वा जातमभिव्यक्तं हार्दमभिप्रायो यस्मात्तद्द्विजेरितं श्रुत्वेत्यर्थः राजा युधिष्ठिरः प्रीतः प्रीतियुक्तः प्रणयेन स्नेहेन विह्वलः परवशः समार्हयत् ॥ २६ ॥

अर्हणप्रकारमेवाह—द्वाभ्याम् । तस्य भगवतः पादाववनिज्य प्रक्षाल्य लोकान्पावयन्ति पुनन्तीति तथा ता अपः भार्यादिसहितः शिरसा वहन् ॥ २७ ॥

पीतैः कौशेयैश्च वासोभिर्महाधनैर्बहुमूल्यैरनर्घ्यैरिति यावत् भूषणैश्चार्हयित्वा अश्रुभि आनन्दाश्रुभिः पूर्णे अक्षिणी यस्य सः तं भगवन्तमवेक्षितुं नालं न प्रबभूव ॥ २८ ॥

इत्थमिति । इत्येवं सभाजितं सम्पूजितं भगवन्तमवलोक्य नमो जयेति वदन्त इति शेषः । तं श्रीकृष्णं नेमुः नमश्चक्रुः ॥ २९ ॥

इत्थमेवम्भूतं श्रीकृष्णस्य गुणवर्णनं श्रुत्वा दमघोषसुतः शिशुपालः जातो मन्युर्यस्य सः आसनादुत्थाय बाहुमुत्क्षिप्य उद्धृत्य अमर्षी क्रुद्धो ऽभीतश्च भगवते परुषाणि वचांसि संभावयन् संभावयितुम् इदं वक्ष्यमाणमाह इत्यर्थः ॥ ३० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सत्तमाः सतां श्रेष्ठाः ॥ २५—३० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं युधिष्ठिरमुक्त्वा स्वयमुद्यममकृत्वा तूष्णीभूत अन्यथा पूजार्थं स्वयमेव बलात् सामग्रीं सम्पादयेत् तत्र हेतुः कृष्णानुभावविदिति स्वयमेव भगवदनुभावः सर्वेषां हृदयं प्रेरयिष्यति यथाभिप्रेतोऽर्थो भविष्यति अत्र भगवद्धर्मा प्रकटीभविष्यन्तीति भगवदिच्छायां सन्देहात् तूष्णीं भाव ततो भगवदिच्छया तद्वाक्यं सर्वसम्मतं जातमित्याह—तच्छ्रुत्वेति । सर्व एव सोऽर्थः सर्वयुक्तिसह इति साधुसाध्विति त्यक्त्वा भगवन्त सहदेवं तुष्टुवुः दैत्यांशानां स्तोत्रं तेष नाशप्रतिबन्धकमिति तत्र भगवदिच्छाभावात् सत्तम एव तथोक्तवन्तः ॥ २५ ॥

ततः सर्वसम्मतिं ज्ञात्वा शापादिभयं परित्यज्य भगवत्पूजार्थं प्रवृत्त इत्याह—श्रुत्वा द्विजेरितमिति । सर्वैरेव द्विजैरीरितं राजत्वात्तेषां भावमपि जानाति तदाह ज्ञात्वा हार्दं सभासदामिति अत्र वादिनामविवादं मन्यन्ते सभासद तत इन्द्रियप्रेरकमन्तर्यामिनं तत्प्रेरितस्सन् समर्हयत् प्रीत इत्यन्तःकरणेन पूजनं प्रणयविह्वल इतीन्द्रियैः शरीरेण तु पूजयत्येव ॥ २६ ॥

तत्पूजाप्रकारमाह—तत्पादाववनिज्येति । चरणोदकधारण मतिभक्त्याबोधकम् अन्यथा भक्षयेति दानं व्यर्थं स्यात् अतः अपः लोकपावनीः शिरसा अवहत् सभार्य इति सम्पूर्णः सानुगामात्य इति सेवकामात्यसहितः सकुटुम्बश्च अनेन सर्वेषां भक्त्या सम्मतिश्चोक्ता ॥ २७ ॥

ततः पीताम्बरादिभिः पूजनमाह—वासोभिरिति । योग्यत्वाय पीतकौशेयैः पीतपट्टवस्त्रैः महाधनैर्भूषणैश्च पूजनं हर्षश्रान्तरस्थः भक्त्या पूजनं नाङ्गविकलं भवतीति ज्ञापयितुमाह—अर्हयित्वेति । अश्रुभिः पूर्णे अक्षिणी यस्येति भगवद्दर्शनेन चक्षुस्तेजःप्रसवसहितं जातमित्यर्थः । ततो यथाभिलषितेनापि न द्रष्टुं शक्त इत्याह नाशकत्समवेक्षितुमिति दर्शनोपभोगेनापि तत्र व्यापितमिति तस्याधिदैविकसमाराधनं पूर्णमेव स्थितमिति सूचितम ॥ २८ ॥

अयमुत्तमाधिदैविको धर्मो भवतीति ज्ञापयितुं सर्वसभाजनमाह—इत्थं सभाजितमिति । कायवाङ्मनोभिः स्तोत्रं मात्सर्याभावश्चोच्यते प्राञ्जलय इति कायिको व्यापारः नेमुरिति मानसः जयेति वाचनिको मात्सर्याभावश्च न केवलं तत्रत्यानां किन्तु दिविष्ठानामपीति ज्ञापयितुमाह-निपेतुः पुष्पवृष्टय इति अयं धर्मः सर्वोत्तमो जात इति ज्ञापनार्थम् ॥ २९ ॥

दैत्यांशस्यानभिनन्दनं प्रद्वेषो निन्दा च भगवतश्चाभिप्रेतोऽर्थ इति स्वतस्तन्मारणं सर्वात्मकत्वात् तस्यापि भोगार्थं बाधकांशं निराकृत्य सायुज्यमपि निरूप्यते तत्रादौ तद्दर्शनेन दैत्यक्षोभमाह इत्थं निशम्येति सर्वेषामनुमोदनं स्तोत्रं च निशाम्य विपरीतमदस्य दुष्टमदस्य यो घोषः सर्वलोकेषु वक्तारः तदात्मको दमघोषः तत्सुतः बीजयोनिदोषेण दुष्टः स्वतोऽपि उपविष्टश्चेत् ब्रूयात् तदा सर्वोऽपि न श्रोष्यतीति स्वपीठादुत्थाय भगवता स्वधर्मप्राकट्ये कृते सिंहासने भगवद्धर्मः प्रकटो जात इति सन्तत उत्थापित इति वस्तुस्थितिः तस्यानधिकारं सूचयति कृष्णगुणवर्णनेन जातो मन्युर्यस्येति

ईशो दुरत्ययः काल इति सत्यवती श्रुतिः ।
वृद्धानामपि यद्बुद्धिर्बालवाक्यैर्विभिद्यते ॥ ३१ ॥
यूयं पात्रविदां श्रेष्ठा मा मन्ध्वं बालभाषितम् ।
सदसस्पतयः सर्वे कृष्णो यत्सम्मतोऽर्हणे ॥ ३२ ॥
तपोविद्याव्रतधरान् ज्ञानविध्वस्तकल्मषान् ।
परमर्षीन् ब्रह्मनिष्ठाँल्लोकपालैश्च पूजितान् ॥ ३३ ॥
सदस्पतीनतिक्रम्य गोपालः कुलपांसनः ।
यथा काकः पुरोडाशं सपर्यां कथमर्हति ॥ ३४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

स एव दैत्यांशो ज्ञेयः भगवत्सम्बन्धिनमर्थं श्रुत्वा न सहते सन्तप्तश्च भवति प्रतिकूलं च वदति ततश्च दैत्यसन्धानं यज्ञे न युक्तमिति भगवत्प्रेरणयैव तस्यातथावचनम् अन्यथा वध्यो न भवति देवा मनुष्याः पितर एकत्र असुरा रक्षांसि पिशाचाश्चैकत्र "अपहता असुरा रक्षांसि पिशाचा वेदिषः" इति मन्त्रलिङ्गात्सर्वथा निराकार्याः असुरादयः तत्रायं बन्धुवेषेण गुप्त इति अशक्यवधो भवति तदर्थमेतावन्निरूप्यते उत्क्षिप्य बाहुमिति क्रियाशक्तिः रस्य महती सूचयति इदं वक्ष्यमाणमाह सदसस्पतीति तस्यापराधः सर्वजनीनो भवत्विति ज्ञापितं सदसि वा सर्वानेव भगवतः अपकर्षाणि अभीक्ष्णशः श्रावयन्निति सर्वेषामेव शत्रुरयमिति ज्ञापितम् अभीत इति सर्वेषामशक्यवधः ॥ ३० ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

द्विजानामीरितं साधुसाध्विति घोषं समर्हयत भो कृष्ण त्वं सर्वलोकानां पादावनेजनकर्मणि स्वगृहीते व्यग्रो वर्त्तसे साम्प्रतं परन्तु ब्रह्मरुद्रादिसर्वाग्रपूज्यस्य तव पादावनेजनार्थं व्यग्रो राजा त्वामाकारयति तस्य तत्र शीघ्रं गच्छेति सान्देशिकलोकद्वारा सम्यक् प्रकारेणानीय अर्हयत् पूजयामास आडम्बर आर्तः। हृषीकेशं स्वपादावनेजने मैवम्मैवं कुर्विति प्रणयकोपिनमपि सर्वेन्द्रियाणयाकर्षन्तम् ॥ २६—२९ ॥

अमर्षी असहिष्णुरतो जातमन्युः अत्र पूजाया आरम्भकाले नोक्तं किन्तु पूजासमाप्त्यनन्तरमेवेत्यत्र शिशुपालस्यायमभिप्रायः यदहमधुनैव विप्रतिपद्य बहुनैव हेतूनुपन्यस्य कृष्णस्यापूज्यत्वं प्रतिपादयामि ततो निरस्तीकर्तुमशक्यतमस्य ममैव मतं गृहीत्वा सभ्याः कृष्णमपूजयित्वा कमप्यन्यमेव योग्यमग्रपूजायां व्यवस्थापयिष्यन्ति यज्ञश्च साधुप्रवर्तिष्यते तस्मात् यज्ञं विजिघांसुरहं साम्प्रतं तूष्णीमेव वर्तिष्ये कृष्णे खलु पूजिते सत्येव तस्यापूज्यत्वं मत्प्रतिपादिते—

अपूज्या यत्र पूज्यन्ते पूज्यानां च व्यतिक्रमः ॥ इति
प्रति बध्नातिहि श्रेयः पूज्यपूजाव्यतिक्रमः ॥

इत्यादिस्मरणात् युधिष्ठिरस्यायं यज्ञो नष्ट इत्युक्त्वा मयि मत्संगिषु बहुषु राजसु वेदविद्विप्रेषु चास्य भ्रातृबन्धुषु दुर्योधनादिषु चोत्थाय गतेषु हाहाकारे प्रवृत्ते मद्भीष्टं सेत्स्यतीति ॥ ३०—३१ ॥

———

भाषाटीका।

दीए भए दान के अनन्त फल की इच्छा करने वारे को सब प्राणियों के अन्तरात्मा तथा देव मनुष्यादि प्राकृत आकार को नहि देखे वारे शांत स्वरूप परि पूर्ण श्रीकृष्ण के अर्थ हि अग्रपूजा देना योग्य है ॥ २५ ॥

श्रीकृष्ण के प्रभाव से ज्ञाता सहदेव इस प्रकार कह कर चुप होगया उसके वचन को सुनकर सबहि श्रेष्ठहि जन अच्छा २ इस प्रकार प्रशंसा करते भए ॥ २६ ॥

ब्राह्मणों के वचन को सुनकर तथा सभासदों के अभिप्राय को जानकर स्नेह से विह्वल प्रसन्न चित्त भया राजा युधिष्ठिर श्रीकृष्ण की अग्रपूजा करता भया ॥ २७ ॥

श्रीकृष्ण के चरणारविन्दों का प्रक्षालन कर लोकन को पवित्र करने वारे उस जलको भार्या सहित भ्राताओं सहित मंत्री सहित कुटुम्ब सहित मोद के साथ राजा मस्तक स धारन करता भया ॥ २८ ॥

रेशमी पीताम्बर वस्त्रों से और अमोल भूषणों से श्रीकृष्ण का पूजन करके आनन्द के अश्रुपातन से परिपूर्ण नेत्र वारा भया राजा सम्यक् देखने को समर्थन हि भया ॥ २९ ॥

इस प्रकार श्रीकृष्ण को पूजित देखकर सबहि अञ्जलि जोडकर नमः जय इस प्रकार श्रीकृष्ण को प्रणाम करते भए । तथा आकाश ते पुष्पन की वर्षा होती भई ॥ ३० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

हे सदसस्पतः! यत्सर्वे बालस्य भाषितं मा मन्यध्वं मा जानीत भोः किं तत् यतः कृष्णोऽर्हणे अग्रपूजायां सम्मतस्तत ॥ ३२-३३ ॥

वर्णाश्रमकुलापेतः सर्वधर्मबहिष्कृतः ।
स्वैरवर्ती गुणैर्हीनः सपर्यां कथमर्हति ॥ ३५ ॥
ययातिनैषां हि कुलं शप्तं सद्भिर्बहिष्कृतम् ।
वृथा पानरतं शश्वत्सपर्यां कथमर्हति ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अस्यैवं वास्तवोऽर्थः पूर्ववदुन्नेयः गोपाल इति वेदपृथिव्यादिपालक इत्यर्थः । कुत्सितं वेदविपरीतं लपन्तीति कुलपाः पाषण्डास्तान् अंसते समाघातयतीति तथा सः अकाकः कश्च अकश्च काके सुखदुःखे ते न विद्येते यस्य सोऽकाकः आप्तकाम इत्यर्थः । स यथा आप्तकामो देवयोग्यं केवलं पुरोडाशमपि नार्हत्यपितु सर्वस्वमपि तथाऽयं श्रीकृष्णोऽपि ब्रह्मर्षियोग्यं सपर्यामात्रं कथमर्हति किन्त्वात्मसमर्पणमप्यर्हतीत्यर्थः ॥ ३४ ॥

वर्णाश्रमकुलेभ्योऽपेतो ब्रह्मत्वात् "अनामगोत्रम्" इतिश्रुतेः अत एवानधिकारित्वात्सर्वैर्धर्मैर्बहिष्कृतः स्वैरवर्ती परमेश्वरत्वात् अत एव निर्गुणस्तम आदिरहितः एवम्भूतो जीवानां योग्यं तुच्छं सपर्यामात्रं कथमर्हतीत्यर्थः ॥ ३५ ॥

अपिच कथं वर्णनीयो मादृशैरेषां यदूनां महिमा यस्मादेषां कुलं ययातिना शप्तमपि किं सद्भिर्बहिष्कृतमपि तु शिरसा धृतं किञ्चास्मदादिकुलवार्त्तं वृथा पानरतमपित्वति नियताचारमित्यर्थः । अहो यदूनामेव तावदीदृशं माहात्म्यम् यदुकुलद्धस्य ययातेः शापेन प्राभूदित्यादि अयन्तु साक्षादीश्वरोऽतः सपर्यामात्रं कथमर्हतीत्यर्थः ॥ ३६ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथो स्वमतग्रहणार्थमुपालम्भगर्भं सभ्याननुनयन्नाह–ईशः दुर्घटघटनाशक्तः न च परिहर्तुं शक्य इत्याह दुरत्यय इति सत्यवती सत्या श्रुतिरैतिह्यं वेदो वा कुतः अपूर्वप्रवर्त्तनादित्याह वृद्धानामिति यद्यस्मात् कालात् ॥ ३१ ॥

ननु, सा बुद्धिः कानामेत्यपेक्षायामाह–यूयमिति । बालस्य सहदेवस्य भाषितं मामन्यध्वम् अधुनापि पूजां परिवर्त्तयध्वमित्यर्थः । तत्र हेतुः पात्रविदां श्रेष्ठाः अग्रपूजापात्रं यूयमेव वेत्थ न त्वयं बाल इत्यर्थः । यद्यस्मात् भाषितात् कृष्ण इति मूलनामग्रहणमनादरेण वास्तवार्थे सा श्रुतिः सत्यैव किन्तु यूयं बालस्य मूर्खस्य मम भाषितं मा मन्यध्वं यतः पात्रविदां श्रेष्ठाः तत्र हेतुः यद्यस्मात् श्रीकृष्णो नराकृतिपरब्रह्मरूपोऽग्रमर्हणे सम्मत इति ॥ ३२ ॥

किञ्च, पूजायोग्यान्याभावे कथञ्चिदर्हतु अत्र च तथोक्तेषु महत्सु कथमयमर्हतीत्याह–तप इति युग्मकेन । तपः स्वधर्मः विद्याः चतुर्दश व्रतं कृच्छ्रादि तद्धरान् अतिव्रज्य अति क्रम्येति क्व पाठः । कुलपांसनः मातुलवधादिना स्वकुलदूषणः वाक्यार्थोऽस्वेवमपतारिका किन्तु तप इत्यादि वाक्यया वेयं क्या गोपालः आभीरजातिरिति प्राकृतदृष्ट्या तद्वाक्यं न्यासेन वेदागमोक्तमहामन्त्रगणाधिदैवत्वेनाप्राकृततल्लीलत्वात स्वतः परममाहात्म्यविशेषः सिद्धः तथापि बाह्यमहिमदृष्ट्यैव वेदपृथिव्यादिपालक इति व्याख्यातम् ॥ ३३–३४ ॥

ननु, महादुष्टकंसवञ्चनार्थं गोपालनेन तस्य च वधेन को नाम दोषः इति स्वयमेवाशङ्क्याह—वर्णेति । यथाश्रुतार्थः स्पष्टः वास्तवार्थे ब्रह्मत्वेश्वरत्वपक्षस्तैर्व्याख्यातः नरलीलापक्षेऽपि यदि वर्णाश्रमकुलापेतादिरूपः स्यात्तदा सपर्या देवमुन्यादिभिः क्रियमाणत्वेन सर्वतः प्रसिद्धा कथमर्हति नार्हत्येवेत्यर्थः ॥ ३५ ॥

यतो ययातिनेति तं निन्दन् तत्सम्बन्धिनो यादवानपि सर्वान् निन्दति द्वाभ्याम् हि यतः शप्तं तदनुसारेण सद्भिश्च बहिष्कृतं परित्यक्तमित्यमित्यर्थः । वास्तवार्थे सद्भिर्महामुनिभिस्तत्तद्यजनादिना बहिष्कृते तस्माच्छापादित्यर्थः । अतः पानं पृथिवीपालनं यत्तत्र रतमासक्तं तर्हि कथं सपर्यां वृथाऽर्हति अपितु सार्थकमेवेत्यर्थः ॥ ३६ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह–ईश सप्तभिः । ईशः ब्रह्मादीनामपि प्रभुः कालो दुरत्ययः दुरतिक्रमणीयः इत्येवम्विधा श्रुतिः किम्वदन्ती सत्यवत् यथार्था कुतः यत यस्मात् वृद्धानामपि बुद्धिः बालस्य सहदेवस्य वाक्यैः भिद्यते विपरीता क्रियते इत्यर्थः ॥ ३१ ॥

यूयमिति । हे सदसस्पतयः बालभाषितं मा मन्ध्वं मा गृह्णीत किन्तर् यदर्हणे कृष्णः सम्मत इति तत् ॥ ३२ ॥

तपइत्यादि । तपोऽनशनादि विद्या शास्त्रजन्यं ज्ञानं व्रतं कृच्छ्रादि एतानि धरन्तीति तथा तान् ज्ञानं परमात्मोपासनात्मकं तेन विध्वस्तं कल्मषं पापं येषां तान् ब्रह्मणि परस्मिन् निष्ठा येषां तान् साक्षात्कृतब्रह्मस्वरूपानित्यर्थः । एवम्भूतान् परमर्षीनतिक्रम्यानादृत्य कुलाधमोऽसौ गोपालः काकः पुरोडाशमिव सपर्यां प्रति कथमर्हति ॥ ३३–३४ ॥

किञ्च, वर्णेति । वर्णादिभ्योऽपेतः भ्रष्टः सर्वस्माद्वर्णादिप्रयुक्तधर्मादिप्रयुक्ताद्धर्माद्बहिष्कृतश्च स्वैरं स्वेच्छं वर्त्तत इति तथा गुणैर्निरवद्यैर्हीनो रहितः ॥ ३५ ॥

ययातिनेति । एषां यदूनां कुलं ययातिना तत्कृतत्वेन शप्तं सद्भिः कुलीनैर्बहिष्कृतञ्च च शश्वत्सदा वृथा पाने रतं तत्परम् ॥ ३६ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ईशः कालो दुरत्ययः इति श्रुतिः सत्यवती अबाधितार्था तदुपपादयति । वृद्धानामिति । ३१ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मा मनुध्वं हे सर्वे सदस्सस्पतयः ! किं बालभाषितं तदाह कृष्ण इति ॥ ३२—३३ ॥

अतिक्रम्यातिक्रम्य कुलकर्मणि एते इत्याह गोप इति ॥३४॥

एतदेव विवृणोति वर्णेति ॥ ३५ ॥

यदोर्वंशे जातत्वात्कथं कुलाभाव इति तत्राह—ययातिनेति ॥ ३६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तादृशस्य सर्वोपालम्भवाक्यमाह—दृष्टो दुरत्ययः काल इति । सदस्सस्पतयो हि सभायां युक्तायुक्तं विचारयन्ति अतस्तान् प्रत्युपालम्भ उचितः यत् दैत्यांशः समीपे स्थितोपि न निवार्येत इति यदत्रानुचितं जायते धर्मत्यागे हेतुः काल एव स हि कदाचित् धर्ममङ्गीकरोति कदाचिदधर्ममिति द्विःस्वभावः स च ईशः कस्याप्यनुल्लङ्घ्यः इति कालमाहात्म्यवादिनी श्रुतिः सत्यैव स कालो यद्वशो लोक इति काकस्य त्वया विपरीते धर्मेऽद इत्याकाङ्क्षायामाह—वृद्धानामपि यद्बुद्धिरिति उभयथापि सभासदो वृद्धाः निन्दापक्षे सहदेवो बालः स्तुतिपक्षे शिशुपालः नाम्ना शिशुश्चासौ पालश्चेति पलसमूहः पालः मांसराशिः नतु कश्चित् तत्र धर्महेतुरिन्द्रियवर्गो जीवो वा तिष्ठति इति पलाशानामेव योग्यः कालस्यैतद्विपरीतं यदेतद्वाक्येनापि वृद्धानामपि बुद्धिः भेदं प्राप्स्यतीति कस्यानुगुणः काल इति एकोपि सभायां तथा विरुद्धं वदामीति ज्ञापितवान् एतत् द्वितीयं सभासदां दूषणम् ॥ ३१ ॥

पुनः स्ववाक्यश्रवणार्थं तान् स्तौति यूयं पात्रविदां श्रेष्ठा इति न केवलया विद्यया तपसा वापि पात्रतेति पात्रस्वरूपं ते जानन्तीति ते पात्रविदः तेषां श्रेष्ठाः पात्रसूक्ष्मविदः अत एव वा भाषितं मम सहदेवस्य माङ्गीकुरुत बालवाक्येन पात्रनिर्धारो न कर्तव्यः किन्तु स्वबुद्ध्यैव कर्तव्यः यतो यूयं सदस्स्पतयः सभायां नियुक्तिहेतवः तादृशा एव सर्वे भवन्त इत्यपि स्तुतिः तादृशानामनुचितांशमाह कृष्ण इति कृष्णशब्दो दुष्टमुखाविर्गतः मालिन्ययोगात् मलिनमेव वक्ति तथैव शिशुपालाभिप्रायश्च ततो योगात् तादृशः शिशुपाल एव भवति तादृशोऽयं यस्मात् अर्हणसमीपे सम्मतः तिष्ठत्विति सम्मतः इदं सभासदामनुचितमित्यर्थः । यतो मखे कालविलम्बो भविष्यति ॥ ३२ ॥

ननु भगवानपि क्षत्रियः सन्निहितबन्धुः ततश्च समीपस्थितो को हेतुरिति चेत् तत्राह—तपोविद्याव्रतधरानिति । निन्दापक्षे लोकप्रसिद्ध एवार्थः तपोविद्ययोः पात्रलक्षण एव साधनं स्पष्टं व्रतस्यापि हेतुत्वमाचारहीनं न पुनन्ति वेदा इति व्रतशब्दो नियमवाचकः किं बहुना भगवद्व्रतपर्यन्तं व्रतधारका अत्र सन्ति पात्रगुणानुक्त्वा दोषाभावमाह ज्ञानविध्वस्तकल्मषानिति । ज्ञानाग्निः सर्वकर्माणीति वाक्यात् सर्वापेक्षया ज्ञानं पापनिवर्तकं एतावत्साधारणब्राह्मणेष्वपि सम्भवति यूयन्तु परमर्षयः मन्त्रद्रष्टारः अनेन पूर्वकाण्डप्रवर्तकत्वमुक्तं तत्रापि ब्रह्मनिष्ठाः उत्तरकाण्डस्य प्रवर्तकाः लोके च तथात्वे सम्मता इत्याह—लोकपालैश्च पूजिता इति । लोकपालानां फलं दातुं शक्ताः ॥ ३३ ॥

एतादृशान् सदस्स्पतीनतिक्रम्येति अतिक्रमदोषोप्युक्त तेषामेव समीपे स्थितिरुचिता न ममेति तत्र हेतुत्वेन दूषणान्याह—गोपाल इति । यथा काक इति च पञ्चगुणा सदस्स्पतिषु त्रयो दोषाः अस्य इन्द्रियपालकः भूपालको क्षत्रियाधमः इदानीं यथासमो नृप इति दोषश्रवणात् तथा कुलपांसनः कुलाधमः येन वैश्यवंशाः सर्वोपि निन्दितः तु मासद्दृष्टात्पङ्क्तिं पुनन्ति किञ्च यथा काकः पुरोडा यदि कृष्णशकुनिरुपरि उपरि अतिपतेदिति सामीप्येऽपि दोष श्रवणात् स बहिः स्थितमेव बलिमर्हति नतु वेद्यां स्थि पुरोडाशं तत्सामीप्येऽपि हविषो नाशात्तथा अहं सपर्यां पू सामीप्येन कथमर्हामि निन्दायान्तु बाल्ये ऽन्यायवृत्तित्वं पश्चा परस्त्रीहरणादिना कीर्तिजनकत्वं यथा वा अकाकः पुरोडा नार्हति कं सुखमकं दुःखम् ऽभयरहितः अकाकः शुकादि तुल्यः स यथा पुरोडाशं कर्ममार्गे नार्हति तथा अहमपि सपर्यां नार्हामीत्यर्थः । वेदरक्षकः कुलपान् कुलपवित्रकरण दत्वान् कुलरक्षकान् वा अंसे नयतीति तत्परिपालकत्वं निवे पितं भौतिककर्माध्यक्षत्वञ्च नार्हतीति भगवत्परत्वेपि केचि योजयन्ति तच्छब्दयुक्त्यानुपेक्ष्यम् ॥ ३४ ॥

पुनः स्वनिन्दार्थं दूषणान्तरमाह—ययातिनेति । ययातिना हि चत्वारः पुत्रा निन्दिताः एकः पूरुः स्तुतः अथवा ययातिना एषां पाण्डवानां कुलं शप्तं यत्पुत्रवयसा मातृ सम्भोगः कृतः स कथं परम्परयापि दोषसम्बन्धात् कथं पूतो भवेत् अत एषां गृहे कथं भगवान् सपर्यामर्हति सद्भिश्च तेन वा हेत्वन्तरेण वा विगर्हितं शश्वद्वृथापानरतश्च एवमेतत्साधारणदूषणं तद्ययातिवंशोद्भवः सपर्यां समीपं च कथमर्हति ॥ ३५ ॥

कुलनिन्दां कृत्वा कुलोद्भवं निन्दति—वर्णाश्रमेति । वर्णाः आश्रमाश्चत्वारः कुलं क्षत्रियत्वजातिः एतत् त्रितयेनाप्यपेत भगवानेव वर्णाश्रमकुलरूप इति तदपेतः शिशुपाल इति तस्य तथात्वं सर्वैरेव धर्मैर्भगवद्बहिर्मुख्याद्बहिष्कृतः ततः स्वैरधर्मी स्वैर्बन्धुभिः सह वर्तनशीलोपि न भवति अन्यथा स्नेहमेव न कुर्यात् अत एव गुणैः तपआदिभिर्विहीनः सपर्यां समीपं वा कथमर्हतीत्यर्थः । केचिद्भगवत्पक्षोपि गुणातीत इति वर्णाश्रमकुलरहितत्वं देहाभावात् धर्मराहित्यं इन्द्रियाभावात् स्वैरवर्तित्वं स्वेच्छावर्तित्वं तेनान्तःकरणाभाव उक्तो ति तेन त्रितयरहितः त्रितयसहितयोग्यसपर्यां कथमर्हतीति आहुः ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हे सदस्स्पतयः मा गृह्णीतेत्यर्थः । वाग्देवीमते दुर्योधनादिषु विपक्षेषु बालभाषितमिदं मा मन्यध्वं किन्त्विदमेव तत्त्वं वेद ज्ञापितमित्यर्थः ॥ ३२ ॥

ब्रह्मर्षिसेवितान् देशान् हित्वैते ब्रह्मवर्चसम् ।
समुद्रं दुर्गमाश्रित्य बाधन्ते दस्यवः प्रजाः ॥ ३७ ॥
एवमादीन्यभद्राणि बभाषे नष्टमङ्गलः ।
नोवाच किञ्चिद्भगवान् यथा सिंहः शिवारुतम् ॥ ३८ ॥
भगवन्निन्दनं श्रुत्वा दुःसहं तत्सभासदः ।
कर्णौ पिधाय निर्जग्मुः शपन्तश्चेदिपं रुषा ॥ ३९ ॥
निन्दां भगवतः शृण्वंस्तत्परस्य जनस्य वा ।
ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युतः ॥ ४० ॥
ततः पाण्डुसुताः क्रुद्धा मत्स्यकैकयसृञ्जयाः ।
उदायुधाः समुत्तस्थुः शिशुपालजिघांसवः ॥ ४१ ॥
ततश्चैद्यस्त्वसम्भ्रान्तो जगृहे खड्गचर्मणी ।
भर्त्सयन् कृष्णपक्षीयान्राज्ञः सदसि भारत ॥ ४२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तपोविद्येत्यादि विशेषणानि सदसस्पतीन् प्रीणयित्वा पक्षे ज्ञापयितुमुपन्यस्तानि ॥ ३३ ॥

मातुलवधादिना कुलपांसनः पक्षे कुत्सितं वपन्तीति कुलपाः तान् अंसयति घातयतीति सः यथा वदेष न विद्यते कं सुखमकं दुःखञ्च यस्य स इति प्राकृतसुखदुःखातीतस्वरूप इत्यर्थः पुरोडाशार्पणमार्हो सपर्य्यामिन्द्रादिवत् कथमर्हति अपितु स्वात्मार्पणमेवेत्यर्थः ॥ ३४ ॥

वर्णाश्रमेति स्पष्टम् पक्षे वर्णाश्रमकुलानि आ सम्यक्प्रकारेण पान्तीति वर्णाश्रमकुलापाः श्रीवसुदेवादयस्तैः पुत्रादित्वेन इष्टः प्राप्तः सर्वधर्मैर्बहिष्कृतो रहितः स्वैरवर्त्तीव परमेश्वरत्वात् गुणैः सत्त्वादिभिर्हीनः शुद्धसत्त्वस्वरूपत्वात् एवम्भूतोऽयं सपर्य्यामात्रं कथमर्हति अपितु स्वात्मार्पणमपि ॥ ३५ ॥

ययातीति स्पष्टम् पक्षे ययातिना शप्तमपि सन्निकृष्टत्वात् शापात् बहिष्कृतं (किम्) अत एव कार्तवीर्य्यादिभिः साम्राज्यमपि प्राप्तम् अतं एव पानं पृथ्वीपालनं तत्र रतं तस्मादुपा सपर्य्यां कथमर्हति अपितु सार्थकमेव ॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

॥ २७—३१ ॥
हे सदसस्पतयः ! बालभाषितं मा मन्यध्वं मा जानीत मा-न्यजीत यत् कृष्णोऽर्हणे सम्मतस्तत् ॥ ३२—३६ ॥

भाषा टीका ।

इस प्रकार श्रीकृष्ण के गुण वर्णन को सुनकर श्रीकृष्ण के गुण वर्णन से क्रोधित भया असहनशील निर्भय दमघोष का पुत्र शिशुपाल निज आसन ते उठकर सभा के बीच में भुजा कों ऊपर उठाकर श्रीकृष्ण को कठोर वचन सुनावत यह बोलता भया ॥ ३१ ॥

"यह काल सबहि करने कों समर्थ है इसी कारण इस का उल्लङ्घन नहिं होसकता इस प्रकार काल की महिमाको कहने वारी श्रुति यथार्थ हि है इस काल के प्रभाव से ज्ञान वृद्ध वयो वृद्धन की बुद्धि सहदेव बालक के वचनों से भ्रान्त होती है ॥ ३२ ॥

हे सभापति औ आप सबहि पूजा पात्र को जानने वारे के मध्य में श्रेष्ठ हो इस वास्ते अग्रपूजा के निमित्त कृष्ण योग्य पात्र है इस सहदेव बालक के भाषण को आप लोग ग्रहण मतना करो ॥ ३३ ॥

तप विद्या व्रत के धारण करने वारे और ज्ञान करके जिन के पाप नष्ट भये हैं तथा लोक पालों से पूजित एतादृश ब्रह्मनिष्ठ महर्षियों को छोडकर ॥ ३४ ॥

तथा सभापतियों का अतिक्रमण करके जैसे देवतान का भाग पुरोडाशके योग्य काक नहि होता तैसे हि कुलको दाग लगाने वारा गौन के चराने वारा कृष्ण अग्रपूजा के योग्य कैसे होसकता है ॥ ३५ ॥

वर्ण आश्रम कुल ते भ्रष्ट तथा सब धर्म ते भ्रष्ट और स्वेच्छाचारी गुणों से हीन ऐसा यह कृष्ण अग्रपूजा के क्यों कर योग्य होसकता है ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

किंच ये राजानो दुष्टाज्जुष्टाद्यन्ति तदर्थं कीकटादिदेशानप्याश्रयन्ति एते तु ब्रह्मर्षिसेवितानेव देशानाभित्याब्रह्म-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

वा वस्तुतस्तु भगवन्मोहितः क्रीडार्थं स्वीकृतानि वान्यधर्मान् स्वीकृत्य निन्दतीति स्वकीयस्योपालम्भ इव महत्त्वख्यापका स्तुतिरेव भवति ॥ ३७ ॥

ततो यज्जातं तदाह—एवमादीनीति । अमङ्गलान्यमङ्गलवाक्यानि अन्तर्मङ्गलस्य महत्त्वात् बहिः मनसा ध्यायतीति वाक्यात् च अमङ्गलवाक्यान्येवोक्तवान् तदा भगवानप्येतच्छ्रुत्वा न किञ्चिदुवाच प्रतीकारार्थं कायिकं वाचिकं मानसं वा न सम्पादितवान् तूष्णीं भावो यथानुकल्प इति केचित् अत्र गणनायकृतत्वात् यथानुकल्पः सम्प्रोह इति वस्तुतस्तु धर्मे तद्वाक्यानां बाधकत्वाभावात् कुबुद्धिरयमित्युपेक्षितः ननु वो वाचाः वाचापेक्षया पक्षा इति कथमुपेक्षेत्याशङ्क्य दृष्टान्त माह—यथा सिंह इति। न हि शृगालशब्दे सिंहसमीपेपि जायमाने सिंहनिन्दारूपार्थोस्ति अभिमानेन कल्पयित्वा तत्र सदृशीकृत्वान्य एव शृगालः शब्दङ्करोति नतु सिंहः सिंहतुल्यो वा सिंहपदेन मारको निरूप्यते वर्णविपर्ययात् अतो मारयिष्याम्येवैनं किमनेनेति तूष्णीं स्थितः नापि तदुक्ता धर्मा भगवति सन्ति येन मर्मभेदः स्यात् नापि निन्दितानर्थान् भगवान् परिगृह्णाति येन निन्दके क्रोधः स्यात् अतो भ्रान्तवाक्यानुपेक्ष्यमेव ॥ ३८ ॥

अन्ये पुनः बहिर्मुखाः भगवन्निन्दनमेतदिति मत्वा तत्र स्थित्वा निरुद्धत्वाच्च न श्रोतव्यमिति शापं दत्वा गतवन्त इत्याह—भगवन्निन्दनं श्रुत्वेति। तत्तु दुःसहं कर्णयोरपि कठिनं निन्दासहितसभायां ये स्थिताः ते कर्णौ स्वस्य पिधाय चेदिपं शिशुपालं रुषा शपन्तो निर्जग्मुः ॥ ३९ ॥

एवं करणे धर्म इत्याह—निन्दां भगवतः शृण्वन्निति। अपकर्षवाक्यं निन्दा येनैव वाक्येन भगवत्यपकर्षप्रतीतिर्भवति तन्न श्रोतव्यं तथा भगवद्भक्तस्य जनस्य अपकर्षप्रतीतिर्भवति तत्स्यैति साधारणस्यापि ततः कर्णौ पिधाय नोपयाति सोपि सुकृतात् च्युतस्सन्नधो याति भगवदुत्कर्षज्ञानार्थं हि सर्वोपि प्रयत्नः तदपकर्षे इत्यागते विपरीतं जातमिति सुकृतस्य "धर्मस्य वृथा नाशात् स्वयं विपरीतज्ञानात् अधो याति इदमशक्तविषयं शक्तानां तु धर्मे चतुर्थे प्रतिपादितः "निन्दात्मसुखा कथातीमसतीं प्रभुश्चेजिह्वामसूनपि ततो विसृजेत्स धर्मः" इति ॥ ४० ॥

पाण्डवास्तु मर्त्तुं मारयितुञ्च समर्था इति तन्मारणार्थं प्रवृत्ता इति ततः पाण्डुसुता इति पितृनाम्ना शूरत्वाय व्यपदेशः भावो क्रुद्धाः अन्यथा मातृभगिनीपुत्रत्वात् स्नेहः प्रतिबन्धको भवेत् मत्स्याः विराटवंशोद्भवाः कैकेयाश्च भरतपूर्वजाः वैष्णवाः सृञ्जयाः द्रुपदवंशजाः एते चतुर्विधा इति उदायुधाः समुत्तस्थुः समरणसन्देहं वारयति शिशुपालजिघांसयेति ॥ ४१ ॥

शिशुपालोपि क्रियाशक्तौ सर्वाधिक इति जिघांसन्तं जिघांसीयादिति पाण्डववधार्थं असम्भ्रान्तो भूत्वा खड्गचर्मणी अग्रहीत् ततोऽन्यैः अनुचितं क्रियत इत्युक्तः तान् भर्त्सयन् कृष्णपक्षीया एत इति खाद्गचर्मसाधनं गृहीतवान् तस्य च रक्षासाधनं राज्ञः सदसीति नात्र ब्राह्मणघातकदुष्टेति सूचितं मारतेतीति विश्वासार्थम् ॥ ४२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

एते यदवो दस्यवः अब्रह्मवर्चसं ब्रह्मतेजोरहितं समुद्रं समुद्रगतं दुर्गं द्वारकाख्यम् आश्रित्य प्रजा बाधन्ते पक्षे ब्रह्मर्षिसेवितानपि देशान् माथुरान् हित्वा तत्र दुर्गाभावास्यकत्वाब्रह्मवर्चसं ब्रह्मतेजोमयं समुद्रगतं द्वारकाख्यं दुर्गमाश्रित्य बाधन्ते कानित्यपेक्षायामाह दस्यवः शिशुपालाद्याः प्रकर्षेण बलवत्त्वेन जायन्ते उत्पद्यन्त इति प्रजास्तानित्यर्थः ॥ ३७ ॥

शिवा शृगालस्तस्या रुतं श्रुत्वेतिशेषः द्वितीयेर्थे तु न विद्यन्ते भद्राणि येभ्यास्तानि सिंहः श्रीनृसिंहः शिवस्य आरुतं स्तुतिम् ॥ ३८ ॥

शपन्तः अरे शिशुपाल ! सद्यः प्राणैर्वियुज्यस्वेत्याक्रोशन्तः ॥ ३९ ॥

निष्क्रमणे प्रमाणं शास्त्रवाक्यमाह—निन्दामिति ॥ ४० ॥

पाण्डुसुताः भीमादयः सम्यगुत्प्लुत्य तस्थुः ॥ ४१-४२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अब्रह्मवर्चसं ब्रह्मतेजोरहितम् समुद्रदुर्गम ॥ ३७ ॥

शिवारुतं श्रुत्वा यथा सिंहस्तूष्णीभवति तद्वत् ॥ ३८—४५ ॥

---

भाषा टीका।

ययाति राजाने इनके कुल को शाप दिया है इसी कारण सज्जनों ने इनके कुलकों राज्यते बाहिर करदिया है और इनका कुल सदा वृथाहि मद्यपान में प्रीति वारा है इस लिये कैसे अग्रपूजा के योग्य है ब्रह्मर्षियों से सेवित माथुरादि पवित्र देशन कों छोड़कर ब्रह्मतेज का नाश करने वारे समुद्र दुर्ग का आश्रय लेकर धर्म विरोधी यादव लोग प्रजान कों बाधा करते हैं ॥ ३७ ॥

जिसका मङ्गल कर्म नष्ट होगया वह शिशुपाल इत्यादिक भगवान् के निन्दा के वचनोंकों बोलता भया परन्तु श्रीकृष्ण भगवान् कुछ भी नहि बोले जैसे गीदड के भाषण कों सुनकर सिंह कुछ भी नहि बोलता ॥ ३८ ॥

भगवान् की दुःसह निन्दा को सुनकर उस सभा में बैठे भए विवेकी जन क्रोध से शिशुपाल को गालीदेत अपने दोनो कानो कौं मूदकर सभात उठगये ॥ ३९ ॥

भगवान् का अथवा भागवत की निन्दा सुनने वारा जो पुरुष यदि उस स्थान से नहि चलाजावे तो वह भी पुण्य से भ्रष्ट होकर नरक में पडता है निन्दा करने वारे को नरक में जाने का तो कहनाहि क्या है ॥ ४० ॥

तावदुत्थाय भगवान् स्वान्निवार्य स्वयं रुषा।
शिरः क्षुरान्तचक्रेण जहारापततो रिपोः ॥ ४३ ॥
शब्दः कोलाहलोप्यासीच्छिशुपाले हते महान्।
तस्यानुयायिनो भूपा दुद्रुवुर्जीवितैषिणः ॥ ४४ ॥
चैद्यदेहोत्थितं ज्योतिर्वासुदेवमुपाविशत्।
पश्यतां सर्वभूतानामुल्केव भुवि खाच्च्युता ॥ ४५ ॥
जन्मत्रयानुगुणितवैरसंरब्धया धिया।
ध्यायंस्तन्मयतां यातो भावो हि भवकारणम् ॥ ४६ ॥
ऋत्विग्भ्यः स सदस्येभ्यो दक्षिणां विपुलामदात्।
सर्वान् सम्पूज्य विधिवच्चक्रेऽवभृथमेकराट् ॥ ४७ ॥
साधयित्वा क्रतुं राज्ञः कृष्णो योगेश्वरेश्वरः।
उवास कतिचिन्मासान् सुहृद्भिरभियाचितः ॥ ४८ ॥

भाषाटीका।

भगवान् की निन्दा सुनने के पश्चात् पांचों पाण्डव और मत्स्य केकय सृञ्जय देश के क्षत्रिय जन क्रोधित हुए आयुध लेकर शिपाल के वध करने की इच्छा कर उठ खडे होते भए ॥ ४१ ॥

हे भारत तदनन्तर सभामें कृष्णके पक्षके राजाओं का तिरस्कार करत् निर्भय होकर शिशिपाल भी उनके मारने के वास्ते ढाल तरवार लेताभया ॥ ४२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तावदुत्थायेत्यस्यायमभिप्रायः एष मत्पार्षदो महाबलः सर्वानेतान् हन्यादतो मयैव शीघ्रं हन्तव्य इति तत्क्षणमेवोत्थाय शिरो जहारेति ॥ ४३—४५ ॥

नन्वेवं निन्दकस्य कथं वासुदेवे प्रवेशस्तत्राऽऽह-जन्मत्रयेति। जन्मत्रयेऽनुगुणितमनुवर्तितं यद्वैरं तेन संरब्धयाऽऽविष्टया तन्मयतां तत्स्वरूपतां यातः पुनः पार्षदो बभूवेत्यर्थः। अत्र हेतुः भावो हीति भावो भावना अनुध्यानं भवस्य स्वेवाकारजन्मनः कारणम् पेशस्कारिध्यानेन कीटादौ तथा दृष्टत्वादित्यर्थः ॥ ४६–५१ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तावदुत्थायेति जन्मत्रयान्तेऽधुना विप्रशापान्मोचयित्वा पुनः श्रीवैकुण्ठपार्षदतां प्रापयितुं पूर्वपूर्ववन्मयैव स्वहस्तेन हन्तुं योग्य इति पाण्डवादीनां तद्वधोद्यमात् प्रागेवोत्थाय यतो भगवान् तत्राहिंसानभक्तवात्सल्यायशेषगुणयुक्तः आपततः अभिमुखमागच्छतः ॥ ४३ ॥

अथानन्तरं महान् शब्द आसीत् अपीति कश्चित्पाठः उक्तसमुच्चयार्थः कथम्भूतः कोलाहलः केषाञ्चिद्धाहेति केषाञ्चित्साधुसाध्विति केषाञ्चिच्च जयजयेत्यादिभिर्वाक्यैर्व्यक्ता—वचः ॥ ४४ ॥

ज्योतिः तद्रूपेण लीनतया स्थितं पार्षदवपुरेव तस्यान्तःस्थत्वात् ॥ ४५ ॥

प्रविवेश च तन्मयतां तद्रूपप्राचुर्यं तत्सदृशाकारतामित्यर्थः कीटदृष्टान्तेन च तथैवायाति कीदृशधियापि किङ्कुर्वन् तत्राह—जन्मेति तत्र हेतुः भाव इति भावोऽत्र तद्रूपभावनाभिप्रायार्थवद्भावस्यासंस्कारः स च दैत्यभावस्यौपाधिकत्वेन बहिरङ्गत्वादन्तर्निगूढो वर्तत एव अत एव दन्तवक्त्रविशेषणमिदं तैरपि व्याख्यास्यते परमार्थस्तु दुर्भेदो गत (मद) इति एवं तस्य श्रीभगवति प्रवेशोऽपि सर्वाविर्भावैकीभूतावतारात् समथालाभेनैव ज्ञेयः प्रकटलीलासमाप्तौ तु तत्र तत्र तदवसरागमने निजाभीष्टस्य श्रीवैकुण्ठाच्युतरूपस्य भगवतः पार्षदत्वाय बहिःप्राकट्यमपि लभ्यते यथा सप्तमे—

"वैरानुबन्धतीव्रेण ध्यानेनाच्युतसात्मताम्।
नीतौ पुनर्हरेःपार्श्वं जग्मतुर्विष्णुपार्षदौ"।

इति ॥ ४६ ॥

ततश्च विघ्नविनाशेन यज्ञः सुष्ठु समाप्त इत्याह—ऋत्विग्भ्य इति अवभृथं यज्ञावसानकर्म एक एव राडिति साम्राज्यसिद्धेः ॥ ४७ ॥

योगेश्वरेश्वर इति तादृशोऽपि सुहृद्भिरभियाचितस्तेषां प्रार्थनावशः सन्नित्यर्थः। यद्वा योगेश्वरेश्वर इति "चित्रं बतैतदेकेन वपुषा युगपत्पृथक्" इत्यादिवत् सदा सर्वसुहृद्गृहेषु निजाविर्भावानन्दतां सूचितम् ॥ ४८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

भावाभिवृत्तिः भवकारणम् शुभाशुभजन्मनोः फलोदयकारणम् ॥ ४६— ॥ ४८ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

...वदिति। तावत्तत् क्षणमेव उत्थाय स्वान् स्वकीयान्निवार्य्य क्षुरस्येवान्तो धारा यस्य तेन चक्रेणापततो रिपोः शिरो जहार चिच्छेद ॥ ४३ ॥

शब्द इति। शिशुपाले हते सति महानुच्चैः कोलाहलः कलकलशब्दः आसीत् तस्य चैद्यस्यानुयायिनोऽनुवर्त्तिनो भूपाः जीवितेच्छवः दुद्रुवुः ॥ ४४ ॥

चैद्येति। सर्वभूतानां पश्यतां सतां आद्याकाशात् च्युता उल्का भुवीव चैद्यस्य देहादुत्थितं तेजो जीवात्मकं वासुदेवं श्रीकृष्णम् उपाविशत्तावत्प्रविश्य ततस्तत्साधर्म्यमवाप इत्यर्थः ॥ ४५ ॥

तदेव व्यञ्जयन् कथं तन्निन्दकस्य तत्साधर्म्यप्राप्तिरिति शङ्कां च निराकुर्वन्नाह-जन्मत्रय इति। जन्मत्रयेणानुगुणितमनुवर्तितं यद्वैरं तेन संरब्धया आविष्टया धिया ध्यायंस्तन्मयतां तत्प्रचुरतां तत्साधर्म्यमिति यावत् यातः प्राप्तः पार्षदो बभूवेत्यर्थः। हि यस्माद्भावाभिवृत्तिर्भवकारणं शुभाशुभजन्मनोः निदानम् अतः शुभाश्रयविषयो भावः शुभभवकारणं बभूवेत्यर्थः ॥ ४६ ॥

ऋत्विग्भ्य इति। एकराट् युधिष्ठिरः सदसि भवाः सदस्याः तैस्सहितेभ्यः ऋत्विग्भ्यः विपुलां महतीं दक्षिणां ददौ ततो विधिवदवभृथं नाम स्नानं चक्रे ॥ ४७ ॥

साधयित्वेति। राज्ञो युधिष्ठिरस्य क्रतुं राजसूयं साधयित्वा सुहृद्भिः पृथादिभिर्याचितः प्रार्थितः कतिचिन्मासानुवास उषितवान् मासानित्यत्यन्तसंयोगे द्वितीया ॥ ४८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

स्ववचनं सत्यं कर्तुं तावत्ततः पूर्वमेव कृष्णः क्षुरान्तचक्रेण क्षुरधारसुदर्शनेन रिपोः शिरो जहारेत्यन्वयः ॥ ४३—४४ ॥

ज्योतिर्जयविततन्यात्मकं आद्याकाशाच्च्युतोल्का भुवीव ॥४५॥

जन्मत्रयेऽनुगुणितेन सम्वर्धितेन वैरेण शत्रुभावेन विशिष्टेनेतरेण ज्ञानेन संरब्धया समुद्रिक्तया धिया ध्यायंस्तन्मयतां द्वेषमयताम् असुरो भगवत्प्रधानतां जयो यातः तथाहि भावो भक्तिर्भवकारणं माङ्गल्यकारणं भवति ॥ ४६ ॥

अग्र्यतेऽग्रपूजासमर्पणेन युधिष्ठिरः कृतकृत्यः किमुत ऋत्विगादिभ्योपि यथाविहितदक्षिणामदादिति तत्राह—ऋत्विग्भ्य इत्यादिना-एकराट् चक्रवर्ती ॥ ४७—४९ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

कृष्ण एव स्वयं हि तथा लीलाव्यवहारमाश्रितवानिति ज्योतिस्तद्रूपेण लीलया स्थितं पार्षदवपुरेव तस्यानश्वरत्वात् प्रविशंश्च तन्मयतां तद्रूपप्राचुर्यं तत्सदृशाकारता—मित्यर्थः ॥ ४५ ॥

कीदृशाधियाऽपि किं कुर्वन् तत्राह—जन्मेति। तत्र हेतुः भावो हीति भावाऽत्र तद्रूपभावनामिश्रपार्षदभावस्य संसारः सच भगवल्लीलेच्छया यद्यपि हरेव प्रवर्त्तितस्य दैत्यभावस्योपाधिकत्वात् निगूढं वर्त्तत एवेति ॥ ४६—५१ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

भगवान् एवं तदपेक्षया बलिष्ठं मत्वा अमोघवीर्ये च स्वार्थे यतन्त इति भक्तद्रोहे वधः स्मृत इति शास्त्रं पुरस्कृत्य स्वयं मारणार्थे प्रवृत्त इत्याह—तावदुत्थायेति। भगवत्स्वात् स्वस्य पूर्णा शक्तिः अत एव स्वान् भक्तान् निवार्य स्वयं चक्रेण शिरश्चिच्छेद सोपि भक्तः कथमेवं कृतवान् इत्याशङ्कायामाह—रुषेति। भगवद्रोषधर्मेण स मारितः भगवद्भक्तेषु तस्य रोषजननात् तत्रापि शिरश्चिच्छेद येन मार्गेण सा वाङ्निर्गच्छति अलौकिकेन भगवत्सामर्थ्येन स मारित इति शङ्काव्यावृत्त्यर्थमाह-क्षुरान्तेति। क्षुरान्तचक्रेणेन तथासति लोके भगवन्माहात्म्यं न स्यात् साधनोत्कर्षस्तु कर्तुर्नापकर्षं सम्पादयति आपततोरिपोरिति तस्यापराधो वधहेतुरुक्तः ॥ ४३ ॥

ततस्तद्वधे महान् शब्दो जातः कोलाहलश्च सर्वैः कृतः शिशुपाले हत इति निमित्तम् अनायासेन तन्मारणश्चोक्तं तत्तत्पक्षपातिनः दैत्यांशाः सर्व एव जीवरक्षार्थं युद्धमकृत्वैव जीवनार्थं दुद्रुवुः ॥ ४४ ॥

एवं धर्मार्थं तस्य वधं निरूप्य यद्येवं जीवो न मुक्तो भवेत् तदा श्मशानत्वं तस्य स्थापनस्य भवेदिति तद्दोषपरिहारार्थं मुक्तिमाह—चैद्यदेहोत्थितं ज्योतिरिति। हृदये स्थितं जीवाख्यं तज्ज्योतिः भगवदिच्छया सहजक्रियायुक्तं वासुदेवं मोक्षदातारम् उपाविशत् भगवत्पादयोः प्रविष्टं वैकुण्ठात्मकं तत्पुनर्लोकाय अन्तिकामित्यादिपदैः व्यापिवैकुण्ठस्यैव निरूपणम् अन्यथा कृत्रिमवैकुण्ठात् त्याजनं व्यर्थं स्यात् "प्रक्षालनाद्धि पङ्कस्य" इति न्यायात् एतदन्यथानुपपत्त्यैव आराग्रजीवपक्ष एव मुख्य इत्यङ्गीकर्तव्यं सात्त्विकशरीरांशशेषेनेति मतसङ्गतं ज्योतिरिति वाक्यात् अन्यत्रात्मज्योतिप्रकाराच्च गृहीत्वैतानि संयातीतिवाक्यात् तस्य सहजक्रियापि सिद्धा केवलजीवस्य यद्येतादृशं रूपं सिध्यति तथोपपादितं निबन्धे पश्यतां सर्वभूतानामिति सायुज्ये प्रमाणमुक्तं जीवस्वरूपनिर्द्धारश्च प्रवेशः सर्वैर्दृष्ट इति ज्ञापयितुं दृष्टान्तमाह—उल्केवेति। निर्गमनप्रवेशनयोस्तस्यादर्शनं स्यात् आकाशात् च्युता ॥ ४५ ॥

एवं निश्शङ्कप्रवेशमुक्त्वा भगवन्निन्दाकर्तुः कथं सायुज्यमिति शङ्कां वारयति—जन्मत्रयेति। वैकुण्ठात्पतितस्य हिरण्यकशिपुरावणशिशुपाललक्षणजन्मत्रये अनुगुणितमावर्त्तितं यद्वैरम् अपकारं वधादिना तेन यः संरम्भः क्रोधसंरम्भः तद्युक्तया धिया वैरबुद्ध्या तं भगवन्तं ध्यायन् तन्मयतामेव जातः तेन पेशस्कारिवत् भगवद्ध्यानेन भगवद्रूपोभूत्वा भगवति सायुज्यं प्राप्तवान् अन्यथा जीवभावे भगवति स्थितजगत

ततोऽनुज्ञाप्य राजानमनिच्छन्तमपीश्वरः ।
ययौ सभार्यः सामात्यः स्वपुरं देवकीसुतः ॥ ४९ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

इव न सायुज्यता स्यात् तस्मादिदं भगवद्रूपेण तज्जन्म तत्र कारणं भाव एव निरन्तरस्मरणमेव यमेवार्थं निरन्तरं स्मरति स एव भवति ॥ ४६ ॥

एवं प्रसङ्गात् दोषनिवृत्तिं मोक्षञ्च निरूप्य प्रारब्धयागं सिद्धं निरूपयति—ऋत्विग्भ्य इति । ततो ऋत्विग्भ्यो दक्षिणा ततः सदस्येभ्यो यावन्तो वै सदस्या इति सर्वेभ्य एव विपुलां वाञ्छितादप्यधिकामदात् ततः सवनत्रयानन्तरं सायस्कृद्विरात्रसत्रानन्तरं सर्वानेव देवान् यज्ञभागभुजः तत्तत्स्थाने सम्पूज्य लौकिकानपि दानमानादिभिः ततोऽवभृथस्नानं कृतवान् एकराडिति एकराज्यं तस्य सिद्धमिति यागफलस्यानुवादः ॥ ४७ ॥

एवं सफलं यागमनूद्य भगवतैवैतत्सर्वं कृतमिति भगवच्चरित्रमुक्त्वा उपसंहरन् भगवतः प्रयाणमाह—साधयित्वेति द्वाभ्याम् । राज्ञः क्रतुं राजसूयं साधयित्वा कृष्णः फलात्मापि साधनत्वेन स्वंनियोगे कारयित्वा सम्मोहमनुत्पाद्य यथा न ज्ञातं तथा योगं साधयित्वा योगेश्वराणामपीश्वरो दुर्ज्ञेयः योगचर्या दुर्ज्ञेयेति सिद्धेपि योगे ते स्वात्मानं न ज्ञास्यन्तीति निश्चित्य कौतुकार्थमन्यैः सुहृद्भिरभियाचितः सन् कतिचिन्मासानुवास ॥ ४८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तावदुत्थायेत्यत्र भगवतोऽयमभिप्रायः यद्यहं तूष्णीमेव वर्ते तदैते परस्परं युद्ध्यमानाः यज्ञप्रदेशमिमं रुधिरप्रदेशमेव करिष्यन्ति यदि च ससेनासहितो रथमारुह्यानेन सह योत्स्ये तदपि स्थलमिदं रक्तकर्दममयं भविष्यति उभयथापि मत्प्रेष्ठस्य युधिष्ठिरस्य राजसूययज्ञो नङ्क्ष्यति सन्धिस्त्वत्र सर्वथैव दुष्करस्तस्मादेवंविधेयमिति निश्चित्य तत्क्षण एवोत्थाय शिरो जहार तथा यथा तत्र स्थले रुधिरबिन्दुरपि न पपातेति ॥ ४३—४४ ॥

ज्योतिः तद्रूपेण लीनतया स्थितं पार्षदवपुरेव तस्यान्तश्चरत्वात् बात् च्युता उल्केवेति कं वैकुण्ठपर्यन्तमुत्प्लुत्य तत्रस्थवैकुण्ठनाथस्य श्रीकृष्णस्यैक्यमवधार्य कृष्णमेव उपाविशत् कृष्णवपुषि प्रविश्य स्वप्रभोर्वैकुण्ठनाथस्य पार्श्वे एव स्थितं बभूवेत्यर्थः । लीलान्ते स्वप्रभुणा वैकुण्ठनाथेन सार्द्धं प्रभासक्षेत्राद्वैकुण्ठमेव यास्यति राजसूयसमयेतु कृष्णे वैद्यः सायुज्यं प्रापेति लोकप्रसिद्धिरभूत् ॥ ४५ ॥

जन्मत्रये अनुगुणितम् अनुवर्तितं यद्वैरं तेनैव संरब्धया आविष्टया धिया तन्मयतां तत्स्वरूपतां यातः पुनः पार्षदो बभूवेत्यर्थः । तत्र हेतुः भावो भावना भवस्य तत्प्राप्तेः कारणं भूप्राप्ताविस्यस्मात् तदुक्तं—

"वैरानुबन्धतीव्रेण ध्यानेनाच्युतसात्मताम् ।
भीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदौ ॥"

इति ॥ ४६—४७ ॥

योगेश्वरेश्वर इति । योगेश्वराणां श्रीरुद्रादीनामीश्वरः एव श्रीयुधिष्ठिरस्य तु प्रेमवश्यत्वादीशितव्यो निर्देशवर्त्येव तदीयराजसूयसकलभारं स्वयमेवोवाहेति भावः ॥ ४६—५१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

द्वेषेणापि हरिप्राप्त्यं तत्प्राप्तिकारणमित्याह—जन्मत्रयेति । जन्मत्रये अनुगुणितं दृढीकृतं यद्वैरं तेन संरब्धया आक्रान्तया धिया तन्मयतां तत्प्राचुर्यतां तत्साधर्म्यं यातः भूयस्तत्पार्षदो बभूव हि यतः भावो ध्यानं भवकारणं भवस्य ध्येयाकारजन्मनः कारणं निदानम् ॥ ४९—५० ॥

---

भाषा टीका ।

उसी क्षण में श्रीकृष्ण भगवान् उठकर अपने पक्ष के न को निवारण करके क्रोधयुत होकर छुरा की धार के समान तीक्ष्ण चक्र से आप ही आवते भये शिशुपाल के शिर का छेदन करते भए ॥ ४३ ॥

शिशुपाल के मरने पर महान् कोलाहल शब्द होता भया और शिशुपाल के पक्ष के राजा लोग जीने की इच्छाकर वहां से भगगए ॥ ४४ ॥

शिशुपाल के देह से ते ज्योति निकलकर सब प्राणियों के देखतेर जैसे आकाश ते निकली भई बिजली पृथिवीमें समाय जावे तैसे हि श्रीकृष्ण के देह में लय हो गई ॥ ४५ ॥

हिरण्यकशिपु रावण शिशुपाल तीन जन्म में निरन्तर अभ्यास किये वैर से व्याप्त भई बुद्धि से भगवान् का का ध्यान करते २ भगवान् के सदृश पार्षद रूपको प्राप्त होगया क्योंकि जिस वस्तु का निरन्तर चिन्तवन हि करता रहता है वह चिन्तवन हि उस वस्तु के सदृश आकार का हेतु होता है ॥ ४६ ॥

चक्रवर्ती राजा युधिष्ठिर सभासदों सहित ऋत्विजन को महान् दक्षिणा देता भया पश्चात् पूजा के सब सजनों की पूजाकर विधि विधान से यज्ञान्त स्नानकरता भया ॥ ४७ ॥

राजा युधिष्ठिर के यज्ञ को सिद्ध करायकर सुहृदन से प्रार्थित होकर योगेश्वरन के भी ईश्वर श्रीकृष्ण भगवान् कुछ मास पर्य्यन्त वहांहि वास करते भए ॥ ४८ ॥

---

वर्णितं तदुपाख्यानं मया ते बहुविस्तरम् ।
वैकुण्ठवासिनोर्जन्म विप्रशापात्पुनः पुनः ॥ ५० ॥
राजसूयावभृथ्येन स्नातो राजा युधिष्ठिरः ।
ब्रह्मक्षत्रसभामध्ये शुशुभे सुरराडिव ॥ ५१ ॥
राज्ञा सभाजिताः सर्वे सुरमानवखेचराः ।
कृष्णं क्रतुञ्च शंसन्तः स्वधामानि मुदा ययुः ॥ ५२ ॥
दुर्योधनमृते पापं कलिं कुरुकुलामयम् ।
यो न सेहे श्रियं स्फीतां दृष्ट्वा पाण्डुसुतस्य ताम् ॥ ५३ ॥
य इदं कीर्तयेद्विष्णोः कर्म चैद्यवधादिकम् ।
राजमोक्षं वितानं च सर्वपापैः प्रमुच्यते ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे
शिशुपालवधो नाम
चतुस्सप्ततितमोऽध्यायः ॥७४॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सुरा मानवाः खेचराः प्रमथाश्च ॥ ५२ ॥

पापं धर्मद्विषम् अत्र हेतुः कलिं कलेरंशम् अत एव कुरुकुलस्याऽऽमयं व्याधिवद्बाधकम् ॥ ५३ ॥

वितानं यज्ञञ्च ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ईश्वरः परमस्वतन्त्रोऽप्यनुज्ञाप्य ययौ याने हेतुः देवकीति मातापित्रादिसुखार्थमिति भावः ॥ ४९ ॥

वैकुण्ठेस्तु कथमपि विप्रा नावमन्तव्या इत्यानुषङ्गिकतया बोधयन् महाकथामुपसंहरति—वर्णितमिति । तत् त्वया सप्तमे पूर्वं श्रुतं वा बहुविस्तरः शब्दप्रपञ्चो यस्मिन् तत् क्रियाविशेषणं वा किं तदाह—वैकुण्ठेति । तादृशयोरपि वैकुण्ठेति पाठः क्वचित् ॥ ५० ॥

कुतूहलतया तदभिषेकं स्तौति—राजेति । स्नात इत्यत्र स्वयं श्रीभगवता द्रौपदीसहितस्य तस्य केशसंस्कारपूर्वकाभिषेकादिविशेषो महाभारते दृश्यः ॥ ५१ ॥

तत्तत्र राज्ञेति युग्मकमिदं सुराः श्रीब्रह्मादयः मानवा राजादयः खेचराः सिद्धादयः कृष्णमिति—

"यस्मिन्नृलोकविजयराजसूये निरीक्ष्य दृक्स्वस्त्ययनं त्रिलोकः ।
कार्त्स्न्येन चाद्येह गतं विधातुरर्वाक्सृतौ कौशलमित्यमन्यत "

इति । यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतं विस्मापनं स्वस्य च सौभगर्द्धेः परंपदं भूषणभूषणाङ्गमित्यादिवर्णितरूपादिकमित्यर्थः क्रतुं च तत्सान्निध्यात्सर्वविलक्षणतां यातम् एवं साधवः सर्वे हृष्टाः ॥ ५२ ॥

दुष्टास्तु स्वपापेनैव दूयन्तेति बोधयितुं तन्मुख्यस्य तापं निदर्शयति—दुर्योधनमिति । स तु कृष्णं क्रतुं च न प्रशशंस नच मुदा स्वधाम ययौ किन्तु केवलं शोकसन्तप्तोऽभूदित्यर्थः । तत्र हेतुः पापमिति । पाण्डुसुतस्येत्यसहने हेत्वन्तरं भ्रातृत्वेन स्पर्द्धया तत्रापि धर्मनिष्ठत्वेन मात्सर्य्योपपत्तिरिति भावः ॥ ५३ ॥

एवं श्रीकृष्णं साक्षात्पश्यतामपि दुर्योधनादीनामभक्त्या दुःखमेव कथञ्चिच्छ्रुत्या च सर्वेषां सदा सुखमेवेत्याशयेनाह—य इति । अनेनाधिकारापेक्षा निरस्ता विष्णोः स्वमाहात्म्यविशेषप्रकटनेनापि विश्वव्यापकस्य श्रीकृष्णस्य आदिशब्देन युधिष्ठिरप्रतिष्ठापनादिकं सर्वैः पापैस्तत्तदन्तरायैः ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वैकुण्ठवासिनोः वैकुण्ठप्राप्तिश्च अत्र वक्तव्यं सर्वं पूर्वं प्रपञ्चितमिति ॥ ५०—५४ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत इति । ईश्वरो भगवान् स गमनमनिच्छन्तमपि राजानं युधिष्ठिरमनुज्ञाप्य राजानंप्रत्यनुज्ञां प्राप्येत्यर्थः । स्वपुरं द्वारकां प्रति ययौ ॥ ४९ ॥

जन्मत्रयानुगुणितवैरविस्तरबुभुत्सुमालक्ष्याह—वर्णितमिति । वैकुण्ठवासिनोर्जयविजययोः विप्राणां सनकादीनां शापाद्धेतोः पुनःपुनर्जन्म तद्विषयं यदुपाख्यानं तत् मया तुभ्यं बहुविस्तरं यथा तथा वर्णितम् ॥ ५० ॥

राजसूयेति । राजसूयसम्बन्धिना अवभृथेन स्नातः सुरराडिन्द्र इव शुशुभे ॥ ५१ ॥

राज्ञेति । राज्ञा युधिष्ठिरेण सम्पूजिताः सर्वे सुरा मानवाः खचराश्च शंसन्तः स्तुवन्तः मुदा हर्षेण स्वधामानि स्वस्थानानि प्रति ययुः ॥ ५२ ॥

किं सर्वे मुदा ययुरित्याह- दुर्योधनमिति । दुर्योधनमेकं विना सर्वे मुदा ययुः तत्र हेतुत्वेन तं विशिनष्टि पापोऽतएव कलिं धर्मद्विषं कुरुकुलस्यामयं रोगवन्नाशनिदानं किञ्च दुर्योधनः समृद्धां पाण्डुसुतस्य श्रियं सम्पदं दृष्ट्वा न सहे न सोढवान् ॥ ५३ ॥

उपवर्णितोपाख्यानकीर्तनफलमाह—य इति । राज्ञां जरासन्धबन्दीकृतानां मोक्षणं ततस्त्वाजनं वितानं यज्ञं च यः कीर्तयेदनुवर्णयेत्स सर्वैः पापैः प्रमुच्यते ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तयोरुपाख्यानं वैकुण्ठवासिनोर्जयविजययोर्विप्रशापात्पुनः पुनर्जन्म ॥ ५० ॥

राजसूयावभृथविहितकर्मणा ब्रह्मणां विप्राणां क्षत्राणां प्रबलेश्वराणां सभामध्ये स्वराडिन्द्रः ॥ ५१—५३ ॥

बन्धुभूतशिशुपालवधलक्षणं हरेः कर्म न पुण्यसाधनं किन्तु तद्विपरीतकारणमिति शङ्काशङ्कां परिहरन् फलमाह— इदमिति ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥

( श्रीविजयध्वजतीर्थटीका द्वयशीतितमोऽध्यायः ॥ ८२ ॥ )

---

### श्रीमज्जीवगोस्वामीकृतक्रमसन्दर्भः ।

कतुश्च कृष्णसम्बन्धेन शंसन्तः ॥ ५२—५४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो लीलान्तरं कर्तुं राजानमनुज्ञाप्य स्नेहवशादनिच्छन्तमपि ईश्वरत्वात् स्वातन्त्र्यमवलम्ब्य यथागतं समार्यः सानुगामात्यः स्वपुरं ययौ ननु भगवत्कार्यं किमपि न सिद्धं महत्या सम्भृत्या किमित्यागतः किमिति गतः इत्याशङ्क्याह—देवकीसुत इति । भक्तवात्सल्येन देवक्याश्च पुत्रो जातः तथेदमपि कृतवानित्यर्थः ॥ ४९ ॥

उपसंहरति—वर्णितं तदुपाख्यानमिति । नन्वत्र शिशुपालस्य स्वरूपं न सम्यगुक्तं तदकथने कथा न रसवतीत्याशङ्क्याह—मया पूर्वमेव वैकुण्ठवासिनोर्जन्म विप्रशापात् पुनः पुनः जातमिति बहुविस्तरं यथा भवति तथा तस्य शिशुपालस्य उपाख्यानं मया वर्णितं तृतीये सप्तमे च ॥ ५० ॥

ततो राज्ञः सर्वपापक्षये महती शोभा जातेत्याह—राजसूयावभृथेनेति । राजसूयावभृथ्यमवभृथकर्म तत्र स्नातो, राजा सर्वपापक्षये जाते ब्रह्मक्षत्रसभामध्ये सर्वेभ्यः अधिकं शुशुभे समानजातीयोऽपि ब्राह्मणादीनांपि सर्वोत्कर्षेण भात इत्यत्र दृष्टान्तमाह—सुरराट् देवेन्द्र इवेति ॥ ५१ ॥

राजसूयस्य साङ्गस्य फलमनूद्य प्रख्यापयित वदन् सर्वेषां राज्ञां प्रतियानमाह—राज्ञा सभाजिता इति । सर्वे सुरादयः सभाजिताः सात्त्विका राजसाः तामसाश्च आधिदैविकमाध्यात्मिकश्च उभयसमाराधनं मध्ये अंशत्वेन प्रसङ्गाच्च स्वयं प्रीणिताः मुदा स्वधामानि ययुः ॥ ५२ ॥

राजसूयस्य फलं स्वाराज्यं सर्वसन्तोषं चोक्त्वा भूभारहरणमपि तस्य प्रयोजनमिति तस्यापि बीजं तत्र जातमिति निरूपयति—दुर्योधनमृते पापमिति । दैत्यांशाः पूर्वमेव निराकृताः अयं सन्निहितबन्धुत्वेन छन्नः अन्तः स्थितः तथापि फले सिद्धे स्वदोषं प्रकटितवान् ततो मानभङ्गं प्राप्य विनिर्गतः यतः स पापरूपकलेरवतारः तादृशः कथं बन्धुरितिचेत्तत्राह—कुरुकुलस्यामयमिति । ब्रह्मकल्पादेतत्पर्यन्तं कुरुवंशे यावत्पापमभूत् तदेवैकीभूतं दुर्योधनरूपेणाविर्भूतम् अतस्तस्य बन्धुत्वं पापत्वञ्चाविरुद्धमिति अर्थः आमयो रोगः प्राणिनां सहजः सामान्यवैषम्येन नित्यं भवति स कदाचित् प्रवृद्धः रोगव्यपदेशं प्राप्नोति तथायमपि पापरूप इति भावः तस्योद्वेगे किं निमित्तमित्याकाङ्क्षायामाह—यो न सेहे, श्रियं

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स्फीतामिति धर्मफलधर्मो न सहते यथा आमयी गुरुभोजनं राजसूयोपायाभ्यां पाण्डुसुतस्य श्रीः स्फीता जाता तादृशीं श्रियं न सहेत इति कुरुकुले रोगत्वम् ॥ ५३ ॥

एतदुपाख्यानश्रवणस्य फलमाह—य इदं कीर्त्तयेदिति । प्रत्यहं पठेत् किमित्येतत्पठिष्यतीत्याशङ्कायामाह—विष्णोः कर्मेति । इदन्तु राजसूयाख्यं राज्ञः कर्म कथं भगवत्कर्मेत्यत आह—वैद्यवधादिकमिति । शिशुपालवधः आदिर्यस्य ततः प्रभृति सर्वं भगवत्कर्मैव तर्हि तावदेव श्रोतव्यमित्याशङ्क्याह—राज्ञां मोक्षं विनाशमेति नयमेतत् तामसं राजसं सात्त्विकमेतत् एतत्कीर्त्तनेन श्रवणेन च सर्वपापैः प्रमुच्यत इति श्रवणादिफलं निरूपयन् तस्य धर्मस्योत्तमत्वमाह—यथा स्वरूपतः उत्तमत्वं वर्ण्यते तथा इष्टफलसाधकत्वेनापि माहात्म्यमिति फलोक्तिः ॥ ५४ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभ
दीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे
पञ्चविंशाध्यायविवरणम् ॥२५॥७४॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वितानं यज्ञम् ॥ ५४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुस्सप्ततितमोऽध्यायो दशमे ऽपि सङ्गतः ॥ ७४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

॥ ५१ ॥

वेषपशब्द उपदेवावाचकः ॥ ५२-५३ ॥

वितानं राजसूयम् ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
चतुस्सप्ततितमाऽध्यायार्थप्रकाशः ॥७४॥

---

भाषा टीका ।

श्रीकृष्ण के जाने में राजा की इच्छा नहि भी है तथापि राजा युधिष्ठिर से पूछकर भार्य्याओं सहित और मन्त्रियों सहित देवकीनन्दन जगदीश्वर द्वारकापुरी को पधारते भए ॥ ४६ ॥

सनकादिकन के शापते वैकुण्ठ वासी जय विजय का वारंवार जन्म और जो उसका इतिहास रहा सो मैने तुम्हारे अर्थ बड़े विस्तार से तृतीय तथा सप्तम स्कन्ध में वर्णन किया ॥ ५० ॥

राजसूय के यज्ञान्त में स्नान किया राजा युधिष्ठिर ब्राह्मण क्षत्रियों की सभा के मध्य में इन्द्र के समान शोभित होता भया ॥ ५१ ॥

राजा युधिष्ठिर से पूजित भए देवता मनुष्य आकाश चारी सबहि श्रीकृष्ण की और यज्ञ की प्रशंसा करत हर्ष के साथ अपने२ धामन को चले गए ॥ ५२ ॥

राजा युधिष्ठिर की उस समृद्ध श्रीको देखकर जिसने सहन नहि किया उस कुरुकुलके रोग रूप कलिके अंश पापी दुर्योधन के बिना सबहि हर्षित होकर गए ॥ ५३ ॥

शिशुपाल का वध आदि तथा जरासन्ध के रोके भए राजान का मोक्ष और राजसूय यज्ञ महोत्सव इत्यादि श्रीकृष्ण के चरित्र को जो कीर्तन श्रवण स्मरण करता है वह पुरुष सब पापन ते छूट जाता है ॥ ५४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धमें चौहत्तरके अध्यायकी
भाषाटीका समाप्ता ॥ ७४ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे चतुस्सप्ततितमोऽध्यायः ॥ ७४ ॥

# पञ्चसप्ततितमोऽध्यायः ।

---

श्रीशुक उवाच ।

अजातशत्रोस्तं दृष्ट्वा राजसूयमहोदयम् ।
सर्वे मुमुदिरे ब्रह्मन्नृदेवा ये समागताः ॥ १ ॥
दुर्योधनं वर्जयित्वा राजानः सर्षयः सुराः ।
इति श्रुतं नो भगवंस्तत्र कारणमुच्यताम् ॥ २ ॥

ऋषिरुवाच ।

पितामहस्य ते यज्ञे राजसूये महात्मनः ।
बान्धवाः परिचर्यायां तस्यासन् प्रेमबन्धनाः ॥ ३ ॥
भीमो महानसाध्यक्षो धनाध्यक्षः सुयोधनः ।
सहदेवस्तु पूजायां नकुलोद्रव्यसाधने ॥ ४ ॥
गुरुशुश्रूषणे जिष्णुः कृष्णः पादावनेजने ।
परिवेषणे[१] द्रुपदजा कर्णो दाने महामनाः ॥ ५ ॥
युयुधानो विकर्णश्च हार्दिक्यो विदुरादयः ।
बाह्लीकपुत्रा भूर्याद्या ये च सन्तर्दनादयः ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चयुक्सप्ततितमे यज्ञावभृथसम्भ्रमः ।
सुयोधनस्य चाज्ञान्त्या मानभङ्गो हरेर्भ्रमात् ॥

दुर्योधनस्यैव दुःखे कारणं प्रष्टुमुक्तमनुवदति—अजातशत्रोरिति ॥ १ ॥

इति श्रुतम् त्वन्मुखादेवेत्यर्थः ॥ २ ॥

दुर्योधनस्यासहनकारणत्वेन यागमहोत्सवमेव पुनः सिंहावलोकनेन निरूपयति—पितामहस्येत्यादिना, एकदाऽन्तःपुरे तस्येत्यतःप्राक्तनेन ग्रन्थेन । प्रेमबन्धनाः प्रेम्णैर्यन्त्रिताः ॥ ३ ॥

पूजायां सम्मानने द्रव्यसाधने नानावस्तुसम्पादने ॥४॥

गुरूणां शुश्रूषणे चन्दनालेपनादौ ॥ ५—६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पापामित्यादिना प्रागुक्तस्यापि कारणस्य विशेषं बुभुत्सुरुक्तानुवादपूर्वकं पृच्छति—अजातेति युग्मकेन । इति दुर्योधनेऽपि तस्य द्वेषाभावः सूचितः दुर्योधनस्य तु मात्सर्ये हेतुः राजानम् आत्मन्येव तदभिमानिनमित्यर्थः । श्रुतं परम्परया श्रीभगवन्मुखेन तु निश्चिततयेत्यर्थः ॥ १—२ ॥

ते पितामहस्येति श्रोतुस्तस्य प्रहर्षणार्थं यज्ञे परिचर्यायां विविधक्रियायां तस्य बान्धवाः महात्मनः उत्कृष्टस्वभावस्य अतस्तत्प्रेमबन्धनाः प्रेम्णा बध्यन्त इति तथा ॥ ३ ॥

भीम इति चतुष्केण तदेव विविच्य वदन्नादौ मुख्यकर्मसु स्थितान् आह द्वाभ्याम् अध्यक्षो नियोक्ता कश्चित् स्थाने समये कश्चित्स्वयं कर्ता च भीमादीनां तत्तत्कर्मणि प्रवृत्तिस्तत्र तत्र तेषां नैपुण्यादिच्छाविशेषाच्च अत एव सर्वेषां विशेषणत्वेन निर्दिष्टं महामना इति महात्मन इति पाठः क्वचित् ॥ ४ ॥

सतां श्रीभगवत्पक्षपातिनां शुश्रूषणे जिष्णुरध्यक्षः सतामेव पादप्रक्षालने श्रीकृष्णोऽध्यक्षः अयं भावः नास्मिन् कर्मण्यसौ श्रीयुधिष्ठिरेण नियुक्तः किन्तु प्रेमबन्धना इत्युक्तत्वात् स्वयमेव प्रवृत्तः तत्रान्येषामभिमानित्वात्तेन कर्मणा श्रीमद्यशः सङ्कोचः स्यात्तच्च मदेकबन्धोरस्य माभूदिति परिवेषणेति ॥ ५ ॥

---

(१) द्रुपदजः इति० वीर० पाठः ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

विकर्णो दुर्योधनभ्राता चित्रः विराट इति पाठः स्पष्टः हार्दिक्यः कृतवर्मा आदिशब्दाच्छ्रीभीष्मद्रोणादयो दुश्शासनादयश्च तत्र "कृताकृतपरीक्षायां भीष्मद्रोणौ महामती" इति समापर्वोक्तेः तथैव तौ ज्ञेयौ बाह्लीकपुत्रः सोमदत्तः तत्पुत्रो भूरिः आदिशब्दाद्भूरिश्रवः प्रभृतयः तथापि बाह्लीकपुत्रा इति पुत्रपौत्रयोरभेदात् सन्तर्दनः केकयः श्रीपृथाभगिनी श्रुतकीर्त्तिपुत्रः आदिशब्दात्तद्भ्रातरश्च ॥ ६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

—११ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

"दुर्योधनमृते पापम्" इत्येतस्यैव विस्तरबुभुत्सया प्रष्टुमुक्तमनुवदति राजा—अजातशत्रोरिति द्वाभ्याम् । राजसूयस्य महोदयं महोत्सवं दृष्ट्वा मुमुदिरे सन्तुष्टुवुरिति नोऽस्माभिः श्रुतं त्वन्मुखादेवेत्यर्थः । हे भगवन् ! तत्र दुर्योधनासन्तोषे कारणमुच्यताम् ॥ १—२ ॥

तद्वक्तुं प्रस्तौति—पितामहस्येति । ते तत्र पितामहस्य महात्मनो राज्ञो युधिष्ठिरस्य राजसूये तस्य राज्ञो बान्धवाः प्रेमबन्धनाः प्रेमयन्त्रिताः परिचर्यायामासन् परिचेरुरित्यर्थः ॥ ३ ॥

तदेव प्रपञ्चयति—भीम इति । महानसाध्यक्षः पाकशालाध्यक्षो बभूव सुयोधनः धनाध्यक्षः आस पूजायां सन्माननेऽसहदेवः द्रव्यसाधने नानावस्तुसम्पादने नकुलोऽभवदित्यर्थः ॥ ४ ॥

जिष्णुरर्जुनः सतां शुश्रूषणे चन्दनलेपनादौ कृष्णः पादावनेजने पादप्रक्षालने द्रुपदजा चूडजुजः परिवेषणे भक्ष्यभोज्यादिविनियोगे कर्णस्तु दाने निरूपित इति वचनपरिणामेनोत्तरत्र सम्बन्धः ॥ ५ ॥

युयुधानः सात्यकिस्तत्प्रभृतयः ॥ ॥ ६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनन्तरातीताध्यायोक्तमेव प्रश्नपूर्वकं विस्तृत्य कथयति, अजातशत्रोरित्यादिना ॥ १–७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १–४ ॥

कृष्णः पादावनेजने ॥ ५—७ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥ १—४० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

षड्विंशे राजसूयस्य भूभारहरणे यथा ।
कारणत्वं तदर्थं हि मानभङ्गो निरूप्यते ॥
यथान्यद्भगवत्कर्म मुख्यं कंसवधादिकम् ।
राजसूयकृतिस्तद्वद्भूभारहृतिकारणम् ॥
स्वातन्त्र्ये तु हरेरत्र गौणतेति निरूपणम् ।
हरेः कथायां तस्यात्र न युक्तमिति निश्चयः ॥
लौकिक्येव समृद्धिर्हि तस्याभिमतिकारणम् ।
अतः सेवात्र पूर्वोक्तादधिका वर्ण्यते स्फुटा ॥
तस्माद्भावालौकिकीयं भावादत्र न सर्वथा ।
न विरोधस्ततः पूर्वैर्नाम्निभिरपि बाधकैः ॥

एवं पूर्वाध्यायान्ते दुर्योधनमृते पापमित्युक्तं तत्र राजा विस्तारं पृच्छति—अजातशत्रोरिति द्वाभ्याम् । स्वयं सर्वं सावधानतया शृणुत इति ज्ञापयितुं सार्द्धेन पूर्वोक्तमनुवदति अजातशत्रोरिति वैरकारणाभावः । तामलौकिकीं राजसूयेन महोदयो यस्येति तां समृद्धिं दृष्ट्वा पुल्लिङ्गपाठो वा तस्य वाऽऽह्लादकत्वम: ह—सर्वे मुमुदिरइति । ब्रह्मवादिनो वाक्यं सत्यमिति सम्बोधनं सात्त्विका राजसा एव निरूपिताः नृदेवा इति नरश्च देवाश्चेति ॥ १ ॥

राजानो ऋषयः सुरा इति त्रिविधा लोकान्तरस्था इति श्रुतमिति श्रुतं समर्थनीयमिति त्वत्त एवच श्रुतमस्ति नोऽस्माभिः सर्वैरेवं भगवन्निति ज्ञापनार्थं प्रशंसा दुर्योधनस्य बन्धोरपि कथं न मुत तस्य सन्तोषाभावे कारणमुच्यतामित्यर्थः ॥ २ ॥

लौकिकसम्पत्तिमाह—पितामहस्येति । सम्बन्धेन श्रवणप्रोत्साहो निरूप्यते महात्मन इति महानुभावत्वात् अन्येषां परिचर्यायां न काचन लज्जा अत एव बान्धवाः परिचर्यायां तस्यासन् ॥ ३ ॥

यज्ञे बहूनि कार्याणि तत्र प्रतिनियतकार्यकर्तृत्वं सर्वेषां वक्तुं सामान्यतो निरूप्य विशेषतो निरूपयति—भीमो महानसाध्यक्ष इति । स एव तत्र तेन युज्यते यो यस्मिन् कर्मणि महत्येव प्रीतो भवति तत्र बहुभक्षकत्वात् भीम एव महानसाध्यक्षः कृतः स हि बहुपाचयति तथा धनाध्यक्षः धनरक्षकः दुर्योधनः स हि पद्महस्तः गमर्थं स्पृशति सोऽक्षयो भवति सहदेवो ज्ञानवान् ब्राह्मणादिपूजायां नियुक्तः नकुलस्तु अश्विनीकुमारपुत्र इति द्रव्याणां गुणदोषाभिज्ञत्वात् द्रव्यसाधने द्रव्याणां विनियोगार्थं परीक्षायां नियुक्तः ॥ ४ ॥

तथा सतां सेवायां जिष्णुरर्जुनः स ह्युपासितवृद्धः सेवां जानाति कृष्णः पादावनेजन इति भगवत अनङ्गत्वे दुर्योधनदृष्टौ सर्वोत्तमत्वं न स्फुरिष्यतीति ब्रह्मण्यत्वात् तत्र विनियोगो वर्ण्यते इदमेव हि भगवत आधिक्यं भृगुपरी-

निरूपिता महायज्ञे नानाकर्मसु ते तदा ।
प्रवर्तन्ते स्म राजेन्द्र राज्ञः प्रियचिकीर्षवः ॥ ७ ॥
ऋत्विक्सदस्यबहुवित्सु सुहृत्तमेषु स्विष्टेषु सूनृतसमर्हणदक्षिणाभिः ।
चैद्ये च सात्वतपतेश्चरणं प्रविष्टे चक्रुस्ततस्त्ववभृथस्नपनं द्युनद्याम् ॥ ८ ॥
मृदङ्गशङ्खपणवधुन्धुर्यानकगोमुखाः ।
वादित्राणि विचित्राणि नेदुरावभृथोत्सवे ॥ ९ ॥
नर्तक्यो ननृतुर्हृष्टा गायका यूथशो जगुः ।
वीणावेणुतलोन्नादस्तेषां स दिवमस्पृशत् ॥ १० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

क्षायां निरूपयिष्ये परिवेषणे द्रुपदजा द्रौपदी अमृतहस्ता कर्णो दाने अत्युदारत्वात् महामना इति बहुदानेपि राज्ञः सन्तोष एवेत्येतदर्थमुक्तम् ॥ ५ ॥

युयुधानादयः सर्व एव नानाकर्मसु वैषम्याभावार्थे नियुक्तः युयुधानः सात्यकिः यादवोप्यर्जुनशिष्यः विकर्णादयोऽपि बान्धवाः बाह्लीकः शन्तनोर्भ्राता तस्य पुत्राः भूरिश्रवादयः सन्तर्दनादयश्च गोत्रजाः सर्वेषां कथनं सम्भ्रमार्थम् ॥ ६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पञ्चसप्ततितमे क्रतुकृत्ये तत्र कः किमकरोदितिवर्ण्यम् ।
आवभृथ्यकृतुकश्च विमानो मन्युमांश्च धृतराष्ट्रतनूजः ॥
श्रुतं त्वन्मुखात् ॥ १ ॥

यो न सेहे श्रियं स्फीतामित्यनेनोक्तं मात्सर्यमेकं कारणं कारणान्तरमपि विवक्षुः स्मृत्यारूढमवर्णितं राजसूयपरिशिष्टभागमपि सिंहावलोकन्यायेन वर्णयति—पितामहस्येत्यादिना ॥ २ ॥

प्रेमबन्धना इत्यनेन स्वेच्छयैव स्वरोचिते कर्मणि प्रवृत्ताः नतु राज्ञा प्रवर्त्तिताः अतः पादावनेजनकर्मणि स्वाभिमानानामहार्ये कृष्ण एव प्रवृत्तः ॥ ३-१० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पञ्चसप्ततितमे दुर्योधनासन्तोषहेतुतया राजसूयावभृथोत्सवो दुर्योधनदौरात्म्यञ्च वर्ण्यते—यो न सेहे श्रियं स्फीतामिति । दुर्योधनासन्तोषे कारणं पृष्टमुक्तमनुवदति, अजातशत्रोरिति ॥ १ ॥

इति श्रुतं त्वत्त इति शेषः ॥ २ ॥

प्रेमबन्धनाः स्नेहबद्धाः ॥ ३—४ ॥

जिष्णुरर्जुनः ॥ ५-६ ॥

---

भाषा टीका ।

राजोवाच ।

हे ब्रह्मन् ! राजसूय यज्ञ में जो राजा लोग तथा ऋषियों सहित देवता लोग आये हैं वे सब एक दुर्योधन के सिवाय युधिष्ठिर के राजसूय यज्ञ के महोत्सव का दर्शन करके मोद को प्राप्त होते भए ॥ १ ॥

यह हमने आप से श्रवण किया हे भगवन् ! दुर्योधन के असन्तोष के कारण को आप कहियेगा उसको प्रसन्नता क्यों नहि भई ॥ २ ॥

श्रीशुक उवाच ।

आप के पितामह महात्मा युधिष्ठिर के राजसूय यज्ञ में राजा के बान्धव जन युधिष्ठिर के प्रेम परतन्त्र होकर सर्व प्रकार की परिचर्य्या में सब कार्य्य के सिद्ध करने वारे होते भए ॥ ३ ॥

भीमसेन तो रसोईघर का मालिक भया धन के देने लेने का अधिकारी दुर्योधन भया और आये भये श्रेष्ठ पुरुषों की पूजा में सहदेव अधिकारी भये तथा अनेक प्रकार की सामग्री के सम्पादन में नकुल अधिकारी भये ॥ ४ ॥

गुरुन की शुश्रूषा करने में अर्जुन अधिकारी भये और ऋषि मुनियों के चरण प्रक्षालन में श्रीकृष्ण अधिकारी भये भोजन परोसन में द्रौपदी भई दान देने में उदार मन वारा कर्ण अधिकारी भया ॥ ५ ॥

सात्यकि विकर्ण कृतवर्मा विदुरादिक भूरिश्रवा से आदि लेकर बाल्हीक के पुत्र और जो सन्तर्दन से आदि लेकर रहे हैं ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

निरूपिताः नियुक्तास्सन्तो नानाकर्मसु प्रवर्तन्ते स्म ॥ ७ ॥

ऋत्विजश्च सदस्याश्च सभासदो बहुविदस्तेषु स्विष्टेषु सम्यक् पूजितेषु सूनृतं प्रियवाक् समर्हणमलङ्कारादि दक्षिणाश्च प्रसिद्धास्ताभिः द्युनद्यां गङ्गायाम् ॥ ८—१० ॥

चित्रध्वजपताकाग्रैरिभेन्द्रस्यन्दनार्वभिः ।
स्वलङ्कृतैर्भटैर्भूपा निर्ययू रुक्ममालिनः ॥ ११ ॥
यदुसृञ्जयकाम्बोजकुरुकेकयकोसलाः ।
कम्पयन्तो भुवं सैन्यैर्यजमानपुरस्सराः ॥ १२ ॥

श्रीधरस्वामीकृतभावार्थदीपिका ।

चित्राणि ध्वजपताकाग्राणि येषु तैरिभेन्द्रैः स्यन्दनैरर्वभिरश्वैर्भटैश्च एवं चतुरङ्गैः सैन्यैर्निर्ययुः ॥ ११ ॥

यजमानो युधिष्ठिरः पुरस्सरो येषां ते ॥ १२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदा तत्क्षण एव प्रवृत्तते स्म ॥ ७ ॥

बहुविदः ऋत्विक्सदस्येतरे विद्वांसो विप्रादयः अवभृथे श्रीयुधिष्ठिरस्य स्नपनमृत्विगादयश्चक्रुः ततस्तत्पश्चादिति तत्तत्प्रसिद्धेव स्नानविस्ततया तस्य कृत्यत्वादिति विशेषद्योतनार्थं तद्वृन्द्येष्वातिशयद्योतनार्थं चैद्ये चेति पश्चान्निर्देशः धुनद्यां गमनमस्य कर्मणो यमुनासम्बन्धवद्गङ्गासम्बन्धोपि स्यादिति स्पृहया कौशिकराजधान्याः सम्माननापेक्षया च ॥ ८ ॥

धुन्धुरी आनकभेदः आनकः पटहो दुन्दुभिर्वा ॥ ९ ॥
वीणा कच्छपी वेणुरूपाङ्गं तलं करतालं नर्त्तकीनामुचिते काव्ये तेषामेव प्राधान्यात् ॥ १० ॥

एवमवभृथोत्सवं सामान्यतो वर्णयित्वा तदर्थं प्रस्थानमारभ्य विशेषतो वर्णयति—चित्रेत्यादिभिर्विरेजुरित्यन्तैः । चित्रेति सार्द्धकम रुक्ममालाः स्वर्णपुष्पमाल्यानि किम्वा किरीटादिस्वर्णपङ्क्तयः तद्युक्ताः ॥ ११ ॥

भूपानेवाह -यद्विति । काम्बोजाः सुदक्षिणादयः ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

महायज्ञे नानाकर्मसु निरूपितास्सन्तो राज्ञो युधिष्ठिरस्य प्रियं कर्तुमिच्छवः यथानियोगं प्रवर्त्तन्ते स्म प्रावर्तन्त ॥ ७ ॥

ऋत्विगिति । ऋत्विजश्च सदस्याश्च बहुविदश्च तेषु सुहृत्तमेषु च सूनृतादिभिः स्विष्टेषु सम्यक् पूजितेषु सत्सु तत्र सूनृतं प्रियवाक्यम् अर्हणमलङ्कारादि सात्वतपतेः श्रीकृष्णस्य चरणं प्रविष्टे सति धुनद्यां गङ्गायामवभृथस्नपनं चक्रुः ॥ ८ ॥
तदेव प्रपञ्चयितुं तावत् गङ्गां प्रति गमनारम्भं प्रस्तौति मृदङ्गेति । अवभृथे अवभृथसम्बन्धिन्युत्सवे मृदङ्गादयो अन्यानि वादित्राणि वाद्यानि च विचित्राणि नेदुर्दध्वनुः ॥ ९ ॥
नर्त्तक्य इति । तेषां च तासाञ्च तेषां "पुमान् स्त्रिया "इत्येकशेषः नर्त्तकानां नर्त्तकीनाञ्चेत्यर्थः । वीणादीनां नादः यद्वा तेषां मृदङ्गादीनां वीणादीनाञ्च च प्रसिद्धो नादः दिवमन्तरिक्षमस्पृशद्व्याप्नोत् ॥ १० ॥

चित्रेति । रुक्ममालाः स्वर्णमाला एषां सन्तीति तथा व्रीह्यादित्वान्मत्वर्थीय इनिः ते भूपाः चित्रा ध्वजादयो येषां तैरिभेन्द्रादिभिः स्वलङ्कृतैर्भटैश्च सह निर्जग्मुः ॥ ११ ॥

यद्विति । यजमानो युधिष्ठिरः पुरस्सरः पुरोयायी येषां ते यद्वादयः सैन्यैर्भुवं कम्पयन्तो निर्ययुरिति पूर्वेण सम्बन्धः ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ऋत्विजश्च सदस्याश्च बहुविदश्च ते तथा तेषु सुहृत्तमेषु स्विष्टेषु सुष्ठु पूजितेषु सत्सु ततः कालव्यवधानमन्तरेण ॥ ८ ॥

आराद्दूरे समीपे च ॥ ९—११ ॥

श्रीमज्जीवगोस्वामीकृतक्रमसन्दर्भः ।

धुनद्यामित्यनेन तत्रैव तस्य विधानादिति गम्यते ॥८-१५ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

महायज्ञोयमिति आकारणप्रेषणद्रव्यसमानयनादिना कर्मसु नियुक्ताः सन्तः प्रवर्त्तन्ते स्म राजसूयस्य परमधर्मत्वात् तत्कर्तुं मनःप्रीतिं सर्व एव कर्तुं प्रवृत्ताः एवमारम्भे सर्वेषां बन्धूनां विनियोगलक्षणः महान् सम्भ्रम उक्तः ॥ ७ ॥
अन्ते तु महानेव सम्भ्रमो जात इति वक्तुं मध्ये वैदिकं सङ्क्षेपेणाह—ऋत्विक्सदस्येति । ऋत्विजः सदस्या बहुविदश्च विहितदानेन सन्तर्पिताः सुहृत्तमास्तु लौकिकदानेन स्विष्टाः इच्छापूरणेन प्रीणिताः सूनृतं वाचा तर्पणं समर्हणं कायिकं दक्षिणा द्रव्यकृता मानसन्त्वेभिरेव ज्ञायते एवं मित्राणां सन्तोषं कृत्वा अमित्राणाञ्च नाशं व्याजेनैव कृतवानित्याह—चैद्ये च सात्वतपतेश्चरणं प्रविष्ट इति चक्रुस्ततस्त्ववभृथस्नपनमिति लौकिकोत्सवो ऽवभृथे भवति धुनदी यमुनैव देवरूपित्वात् इयमपि सूर्यमण्डलादेव समागतेति वैदिकविरोधाभावे गङ्गायां वा गताः अनेनालौकिकसामर्थ्यं च द्योतितम् ॥ ८ ॥

तत्र मृदङ्गादिवाद्यानां वादनमाह—मृदङ्गेति । लौकिकोत्कर्षार्थमेव वादित्राणां सिद्धानामपि वर्णनम् ॥ ९ ॥

अवभृथनिमित्तमाश्रित्य लौकिके उत्सवे उत्सवकार्यं सर्वमेवाह—नर्तक्यो ननृतुरिति । हृष्टा उत्सवासक्ता यूथशः समू-

सदस्यर्त्विग्द्विजश्रेष्ठा ब्रह्मघोषेण भूयसा ।
देवर्षिपितृगन्धर्वास्तुष्टुवुः पुष्पवर्षिणः ॥ १३ ॥
स्वलङ्कृता नरा नार्यो गन्धस्रग्भूषणाम्बरैः ।
विलिम्पन्त्योऽभिषिञ्चन्त्यो विजह्रुर्विविधै रसैः ॥ १४ ॥
तैलगोरसगन्धोदहरिद्रासान्द्रकुङ्कुमैः ।
पुंभिर्लिप्ताः प्रलिम्पन्त्यो विजह्रुर्वारयोषितः ॥ १५ ॥
गुप्ता नृभिर्निरगमन्नुपलब्धुमेतद्देव्यो यथा दिवि विमानवरैर्नृदेव्यः ।
ता मातुलेयसखिभिः परिषिच्यमानाः सव्रीडहासविकसद्वदना विरेजुः ॥ १६ ॥
ता देवरानुत सखीन् सिषिचुर्दृतीभिः क्लिन्नाम्बरा विवृतगात्रकुचोरुमध्याः ।
औत्सुक्यमुक्तकवराच्च्यवमानमाल्याः क्षोभं वधुर्मलधियां रुचिरैर्विहारैः ॥ १७ ॥
स सम्राड्रथमारूढः सदश्वं रुक्ममालिनम् ।
व्यरोचत स्वपत्नीभिः क्रियाभिः क्रतुराडिव ॥ १८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

इष्टाः वीणावेणुश्च तलस्तालः हस्ततलोत्थाद्वा वा दिवमस्पृशत् दिवि लौकिकोक्तिः ॥ १० ॥

एवं निर्गमने सम्भ्रममुक्त्वा सर्वेषां राज्ञां युधिष्ठिरेण सह निर्गमनप्रकारमाह—गरुडादिचिह्निता ध्वजाः अथपत्रा- ङ्किताः पताकाः आश्चर्यहेतुत्वं चित्रत्वं ध्वजानां पताकानाञ्च श्रेष्ठाः अन्याः इभेन्द्राः स्यन्दनानि च अर्वाणश्च अश्वाः एते स्वलङ्कृता भटाश्च चतुरङ्गानामलङ्करणमुक्तं तैः सह भूपा निर्ययुः रुक्ममालङ्करणसमूहयुक्ताः रुक्मं सुवर्णम् ॥ ११ ॥

यदुसृञ्जयादयः क्षत्रियावान्तरभेदाः तत्तत्कुलाभिमानयुक्ता अपि सह निर्ययुरित्युत्कर्षः स्वसैन्यैर्भुवं कम्पयन्तः यजमानो युधिष्ठिरः पुरस्सरो येषाम् ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

चित्राणि ध्वजपताकाग्र्याणि येषु तैः इभेन्द्रादिभिश्चतु- रङ्गसैन्यैः सह निर्ययुः अर्वाणो ऽश्वाः ॥ ११—१३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निरूपितास्सन्तः नानाकर्मसु प्रवर्त्तन्ते ॥ ७ ॥

सूनृतेन प्रियवचनेन समर्हणेन अलङ्कारवस्त्राद्यर्पणेन दक्षिणया च स्विष्टेषु अवभृथस्नपनं, क्रतुसमाप्तौ अवभृथाख्यं स्नानं चक्रुः ॥ ८—१० ॥

चित्राणि ध्वजपताकाग्र्याणि येषु तैरिभेन्द्रैस्स्यन्दनैः रथैः अर्वाभिरश्वैः ॥ ११ ॥

यजमानो युधिष्ठिरः पुरस्सरः अग्रगो येषां ते ॥ १२ ॥

---

भाषाटीका ।

वे सब उस काल में महायज्ञ में नाना प्रकार के कर्मन में नियुक्त होकर हे राजेन्द्र ! राजा के प्रियकरण की इच्छा करके अपने२ कर्म में प्रवृत्त होते भए ॥ ७ ॥

ऋत्विज सभासद तथा अनेक शास्त्र के ज्ञाताजन और अति सुहृद जनों को प्रियवचन पूजन दक्षिणाओं से पूजित होने पर और शिशुपाल को श्रीकृष्ण के चरणार- विन्द में प्रविष्ट होने पर अनन्तर, गंगाजी में सब ओर यज्ञान्त स्नान करते भए ॥ ८ ॥

यज्ञान्त स्नान उत्सव में मृदंग शंख पणाव घुंघुरी आनक गोमुख आदि विचित्र बाजे बजते भए ॥ ९ ॥

नाचने वारी प्रसन्न होकर नाच करती भई गान करने वारे झुंड के झुंड गान करते भए उनके वीणा वंशी तालन को बडो भारी शब्द आकाश में पूरि गयो ॥ १० ॥

सुवर्ण की माला धारण किये राजा लोग अच्छे विचित्र ध्वजापताका वारे हस्ति रथ अश्वों के साथ और अलंकार धारण किये योधाओं के साथ निकसते भए ॥ ११ ॥

यदुवंशी सृञ्जय वंशी काम्बोज देश के कुरुवंशी कश्मीर देश के कोशलदेश के राजा लोग सेनाओं से भूमी को कम्पायमान करत युधिष्ठिर महाराज को आगे करके निकसते भए ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सदस्या ऋत्विजोऽन्ये च द्विजश्रेष्ठा निर्ययुः ॥ १३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च गन्धादिभिः स्वलङ्कृताः नराः नार्यश्च मिथो विजह्नुः ॥ १४ ॥

रसानेवाह—तैलेति । किञ्च सान्द्रकुङ्कुमादिभिः पुम्भिर्लिप्ताः तान् प्रालिम्पन्त्यो वारयोषितश्च विजह्नुः ॥ १५ ॥

नृभिर्गुप्ता रथादियानैर्नृदेव्यो राजपत्न्यो निरगात्रिरगुः एतदुपलब्धुं विमानवरैर्देव्यो यथा तद्वत् मातुलेयैः सखिभिश्च परितः सिच्यमानाः सव्रीडेन हासेन विकसन्ति वदनानि यासां ताः ॥ १६ ॥

देवरान् पतिभ्रातॄन् उत सखीन् सखीनपि दृतीभिरुदकमोदनयर्भयन्त्रैः सेचनपात्रैश्च मलधियां कामिनाम् ॥ १७ ॥

क्रियाभिरङ्गक्रियाभिः क्रतुराट् सशरीरो राजसूय इव ॥ १८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

देवर्षीत्यर्द्धकम् ॥ १३ ॥

स्वलमिति सार्द्धकम् । विलिम्पन्त्य इत्यादौ स्त्रीत्वं नार्य्य इत्यस्यैव विशेषणत्वात् अर्थान्तराणामेव विविधतया लिम्पन्त्योऽभितः सिञ्चन्त्यश्च ॥ १४ ॥

पुम्भिरित्यर्द्धकम् । तैलादिभिः प्रकर्षेण पुम्भ्यो ऽप्याधिक्येन लिम्पन्त्यः ॥ १५ ॥

नृदेव्यः नृदेवस्य श्रीयुधिष्ठिरस्य पत्न्यः श्रीद्रौपदीशैब्येयीप्रभृतयः गङ्गातीरगमनानन्तरं तदुत्सवोचितां तासां क्रीडामाह—सार्द्धेन तावच्च श्रीद्रौपद्याद्या एव श्रीरुक्मिण्याद्यास्तु प्रायः कौतुकदर्शिन्यः तस्मिन् यज्ञकर्मणि द्रौपद्यादीनामेव मुख्यत्वात् मातुलेयशब्दाच्च यथापत्युर्भागिनेये भागिनेयता प्रयुज्यते तथा मातुलेयोप्यत्र पत्युर्मातुलेय एव गृह्यते स एव युक्तः स्वमातुलेयेन परिहासस्यानर्हत्वात् स च श्रीकृष्ण एव च प्रसिद्धः प्रसिद्धस्यैव च ग्रहणं युक्तं "हन्तायमद्रिरबला हरिदासवर्यः" इत्यत्र श्रीगोवर्द्धनवत् ततः श्रीकृष्णो देवर इति तत्सहयोगेनान्ये च देवरा गृह्यन्ते ते च निकटा भीमादयः सखायस्तु तेषामेव भ्रातृप्राया ज्ञेयाः अत एव देवरानुत सखीनिति वक्ष्यमाणैकवाक्यत्वञ्च अतो लोके किञ्चिन्नर्मप्रासेस्तत्र योग्या अन्तरङ्गसम्बन्धाच्च सुहृदस्त्यास्पदानि च ते ॥ १६ ॥

गौरवेण प्रासावपि वैशिष्ट्यविवक्षया कुचादिप्रयोगः किञ्चौत्सुक्येन सेकाभिनिवेशेन च मुक्तकबराच्च ताश्च्यवमान माल्याश्च अत्र कबराच्च्यवमानेति कबराः पतमानेति पाठविकल्पो दृश्यते मलधियां दुर्योधनादीनामेव नतु साधूनां किमुत तद्विधदेवरादीनामित्यर्थः ॥ १७ ॥

अथ पुनाराज्ञो गमनं वर्णयति—स इति । तस्य पत्न्यः श्रीद्रौपद्याद्याः ताभिः सह ॥ १८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सहस्रेति । सदस्यादयो भूयसा ब्रह्मघोषेण निर्ययुः तदा देवादयः पुष्पवर्षिणः तुष्टुवुश्च ॥ १३ ॥

किञ्च गन्धादिभिः स्वलङ्कृताः नराः नार्यश्च विविधैः रसैः विलिम्पन्तोऽभिषिञ्चन्तश्च मिथो विजह्नुः ॥ १४ ॥

रसानेवाह—तैलेति । पुम्भिः कर्तृभिस्तैलादिभिर्लिप्ताः वारयोषितः पुनस्तैर्विलिम्पन्त्यः विजह्नुः गोरसो दधिक्षीरादिः गन्धोदकं चन्दनोदकम् ॥ १५ ॥

गुप्ता इति । दिवि यथा विमानवरैर्देव्यो देवपत्न्यः देवस्त्रियः तथा नृदेव्यः राज्ञां स्त्रियो नृभिर्भटैर्गुप्ताः रथादियानैरेतदवभृथस्नपनम् उपलब्धुं द्रष्टुं निर्जग्मुः ता नृदेव्यः मातुलेयैः सखिभिश्च सिच्यमानाः सव्रीडेन हासेन विकसन्ति वदनानि यासां ताः विरेजुः ॥ १६ ॥

ता इति । ता नृदेव्यः दृतीभिरुदकमोदनयर्भयन्त्रैः देवरान् पतिभ्रातॄनुत सखीनपि सिषिचुः स्वयञ्च तैः सिक्ताः क्लिन्नानि सिक्तानि अम्बराणि यासां ताः अत एव विवृतं व्यक्तं गात्रं शरीरं कुचावूरुप्रदेशश्च यासां ता औत्सुक्यात्तत्प्रयुक्तजलक्रीडातिशयान्मुक्तेभ्यः श्लथेभ्यः कबरेभ्यः च्यवमानानि गलितानि माल्यानि पुष्पाणि यासां ता रुचिरैर्विहारैर्मलधियां कामिनां क्षोभं चित्तचाञ्चल्यं कामोद्रेकमिति यावत् दधुश्चक्रुः ॥ १७ ॥

स इति । सन्तः समीचीनाः अश्वाः सन्त्यस्येति तथा तं रथमारूढः सम्राट् युधिष्ठिरः क्रियाभिरङ्गक्रियाभिः प्रयाजादिभिः क्रतुराट् राजसूय इव स्वपत्नीभिर्व्यरोचत रराज ॥ १८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

रसैश्च हरिश्च हरिद्रादिरागजलैः ॥ १४ ॥

एतदेवाह—तैलेत्यादिना ॥ १५ ॥

नृदेव्यः राज्ञः एतदुपालब्धुं चक्षुर्विषयं स्थलं निरगमन्नित्यन्वयः । देव्यः देवस्त्रियः मातुलेयैः सखिभिश्च ॥ १६ ॥

दृतीभिः जलसेचनपात्रैः मलधियो विषयाविष्टानां रुचिरैः भूषणैः समेताः ॥ १७—१८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नृदेव्यः श्रीद्रौपद्याद्याः श्रीयुधिष्ठिरपत्न्यः मातुलेयाऽत्र पत्युर्मातुलेयः श्रीकृष्णस्तत्सखायश्च पत्युरेव भ्रातरः श्रीभीमादयः तत्तुल्या अन्ये च केचित् । देवरान् श्रीकृष्णभीमादीन् तत्तुल्यानन्यांश्चेति ॥ १६ ॥

मलधियामेव न तु साधूनां किमुत तद्विधदेवरादीनामित्यर्थः ॥ १७-३६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं केवललौकिकपराणां निर्गमनमुक्त्वा अलौकिकानामपि सह विर्गमनमाह—सदस्येति । त्रिविधाः अपि ब्राह्मणाः ब्रह्मघोषेण सह निर्गताः भूयसेति बाह्यापेक्षया ब्रह्मघोषस्यैव निकटे जायमानत्वात् भूयस्त्वम् अलौकिकपक्षे देवानामप्यागमनमाह—देवर्षीति । देवादय उपरिगच्छन्तः पुष्पवृष्टिं स्तोत्रञ्च कृतवन्तः ॥ १३ ॥

ततः कामकलाभिः गच्छतामुत्सवमाह—स्वलङ्कृता इति । गन्धादिभिः स्वलङ्कृताः विविधैरसैः विलिम्पन्तः तैलगोरसादिभिः हृष्टाः सन्तः कामकलाभिर्विजन्हुः याभिः सह क्रीडोपयुज्यते तास्तेच विजन्हुरिति विमर्शः ॥ १४ ॥

साधारणीनां भेदेनाह—तैलगोरसेति । इदमर्धं देहलीप्रदीपवत् पुम्भिर्वैटैः प्रकर्षेण लिप्ताः स्वयमपि लिम्पन्त्यः वारयोषितः वेश्यावराणां समूहो वारं तस्य योषित इति धर्ममध्येऽपि लौकिकभाषात्वात् तथा वर्णनदोषः ॥ १५ ॥

ततो राजपत्नीनां निर्गमने विहरणमाह—गुप्ता नृभिरिति । शस्त्रपाणिभिः पदातिभिः गुप्ताः एतदवभृथाख्यं कर्म देव्यः राजस्त्रियः नरयानैः निर्गताः नरयानानां तासाञ्चोत्तमत्वं दृष्टान्तेनाह—देव्यो यथा दिवि विमानवरैरिति । नृदेव्य इति तासामपि लेपनादिलीलामाह—ता मातुलेयसखिभिरिति । मातुलेयैः सखिभिश्च परिषिच्यमानाः मातुलेया एव वा सखायः मातुलेयस्य भगवतः सखाभिरित्यपि व्याख्यानं सर्वराज्ञां स्त्रीणां प्रक्रान्तत्वात् मातुलेयपदञ्च तासामेव मातुलेयं गमयति न भर्तुर्मातुलेयं ता देवरानुतसखीरित्यग्रे विरोधश्च मातुलेयकन्यापरिणये ज्येष्ठस्य कनिष्ठा देवरा मातुलेयाश्च भवन्ति मातुलेयपदं पैतृष्वस्रेयस्याप्युपलक्षणं देवरैः सह सखीनां परिहासविलासः लौकिकः सर्वदेशप्रसिद्धो न निषिद्धः यथा राजभोग्याः पदार्थाः सर्वेषामुपयुज्यन्ते तथा स्त्रीणामपि बाह्यलीलाः सम्बन्धिनामपि युज्यन्ते मातुलेयपदेन धर्मो विवाहो निराकृतः धर्मविवाहवतीनान्तु सुतरां पतिव्रतानान्तु विलासा एव न भवन्ति सुतरामन्यैः सह तस्मात् सुष्ठूक्तं मातुलेयैः सखिभिश्चेति तथापि सम्वृता इति सव्रीडा हासेविकसद्वदना इति पूर्वोक्ताभ्यो विशेषः परिषेचनन्तु जलमध्येनतु मध्येमार्गे तत्रैव कमलानीव विरेजुः ॥ १६ ॥

ता अपि प्रतियोगिनां सेचनं चक्रुरित्याह—ता देवरानिति । त एव मातुलपुत्रा देवरा एव उतेति सखीनां भिन्नत्वाय इतरः वंशचर्मकृताः स्वयञ्च ताः क्लिन्नाम्बराः सूक्ष्मवस्त्रपरिधानाद्विवृतगात्राः रसस्थानामपि दर्शनार्थं विशेषतो निरूपणं कुचोरुमध्या इति शृङ्गारस्थानत्वाय तासां तथावर्णनं मध्यं नाभिस्थानं क्रीडोत्सुक्येन मुक्तं कबरं यासाम् अत एव च्यवमानमाल्याः तासां दर्शनेन कन्दर्पाविर्भावो भवतीति तेन प्रकारेण विशेषो वर्णितः दोषजनकत्वं व्यवस्थया परिहरति—मलधियामिति । अजितान्तःकरणानामेव तद्दर्शनेन क्षोभः अनेन कीर्तनश्रवणादावपि दोषः परिहृतः रुचिरैरिति रसाभासव्यतिरिक्तैः ॥ १७ ॥

ततो युधिष्ठिरस्य निर्गमनमाह—ससम्राडिति । साम्राज्यं कर्मणा तेनैव प्राप्तमिति सम्राड्विशेषणं तदर्थं तत्कर्ममात्रमिति सत्पदेन दान्तत्वमपि गम्यते सुवर्णालङ्कारोपेतं स्वपत्नीभिः असाधारणाभिः पूर्ववैलक्षण्यार्थमुक्तं तस्यालौकिकत्वमाह—क्रियाभिर्नित्याभिः ऋत्विक्भिर्वा क्रतुराडिवेति प्रकरणेन प्राप्तं लौकिकत्वं परिह्रियते क्रतुराडपि स्वेनाङ्गसहितो दृश्यते ॥ १८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नृदेव्यो नृदेवस्य युधिष्ठिरस्य पत्न्यः द्रौपदीयौधेयीप्रभृतय एव एतत्सुखमुपलब्धुं यथा दिवि विमानवरैर्देव्यस्तथैव रथादिभिर्निरगमन् मातुलेयेति यथा पत्युर्भागिनेये भागिनेयशब्दः प्रयुज्यते तथैव पत्युर्मातुलेयोऽपि मातुलेय उच्यते तस्य देवरत्वात्तेनैव सह परिहासौचित्यात् ता देवरानुत सखीनित्युत्तरवाक्यदर्शनाच्च स एवात्र गृहीतः नतु स्वमातुलेयस्तेन सह परीहासानौचित्यात् तस्मात् मातुलेयः प्रसिद्धः कृष्ण एव ततश्च मातुलेयैः कृष्णगदसारणादिभिः सखिभिर्भीमार्जुनादिभिश्च ॥ १४ ॥

इतीभिरुदकनोदनविचित्रनर्मयन्त्रैः मलधियां दुर्योधनादीनामेव नतु साधूनाम् ॥ १५—१७ ॥

स्वपत्नीभिर्जलविहारानन्तरमुत्थिताभिः जलविहारपूर्वकुत्सवर्णनमिदं वा ज्ञेयं क्रियाभिरङ्गक्रियाभिः क्रतुराट् सशरीरो राजसूय इव ॥ १८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सदस्यादयः भूयसा ब्रह्मघोषेण निर्ययुः देवादयश्च तदा पुष्पवर्षिणस्तुष्टुवुः ॥ १३—१५ ॥

यथा दिवि विमानवरैर्देव्यः देवपत्न्यः तथा नृदेव्यः राजपत्न्यः नृभिर्गुप्ताः रथादिभिः निरगमन् निरगुः ताः मातुलेयैः श्रीकृष्णगदादिभिः सखिभिश्च परिषिच्यमानाः सव्रीडहासेन विकसन्ति वदनानि यासां ताः विरेजुः एतत्सुखमुपलब्धुमनुभूतं तद्वृभिरिति शेषः ॥ १६ ॥

इतीभिः उदकनोदनचर्ममयैर्यन्त्रैः मलधियां कामिनाम् ॥ १७ ॥

क्रियाभिः अङ्गक्रियाभिः क्रतुराट् राजसूय इव ॥ १८ ॥

---

### भाषा टीका ।

सभासद ऋत्विज और भी द्विजों में श्रेष्ठजन बड़ी भारी वेदकी ध्वनि के साथ निकसते भए और देवता ऋषि पितृ गन्धर्व लोग पुष्पन की वर्षा करत स्तुति करते भए ॥ १३ ॥

सुगंध माला भूषण वस्त्रों से अलंकार किये स्त्री पुरुष परस्पर में कुंकुम लगावत और पिचकारीन से भिजोवत अनेक प्रकार के । श्रृङ्गार रसों से विहार करते भए ॥ १४ ॥

पत्नीसंयाजावभृथ्यैश्चरित्वा ते तमृत्विजः ।
आचान्तं स्नापयाञ्चक्रुर्गङ्गायां सह कृष्णया ॥ १९ ॥
देवदुन्दुभयो नेदुर्नरदुन्दुभिभिः समम् ।
मुमुचुः पुष्पवर्षाणि देवर्षिपितृमानवाः ॥ २० ॥
सस्नुस्तत्र ततः सर्वे वर्णाश्रमयुता नराः ।
महापातक्यपि यतः सद्यो मुच्येत किल्बिषात् ॥ २१ ॥
अथ राजाऽहते क्षौमे परिधाय स्वलङ्कृतः ।
ऋत्विक्सदस्यविप्रादीनानर्चाभरणाम्बरैः ॥ २२ ॥
बन्धुज्ञातिनृपान् मित्रसुहृदोऽन्यांश्च सर्वशः ।
अभीक्ष्णं पूजयामास नारायणपरो नृपः ॥ २३ ॥
सर्वे जनाः सुररुचो मणिकुण्डलस्रगुष्णीषकञ्चुकदुकूलमहार्घ्यहाराः ।
नार्यश्च कुण्डलयुगालकवृन्दजुष्टवक्त्रश्रियः कनकमेखलया विरेजुः ॥ २४ ॥

भाषा टीका ।

तेल गोरस सुगन्धजल हरदी सघन कुंकुमन करके पुरुषों से लिपाय मान वेश्याओं पुरुषों को तेल आदि लगायत विहार करती भई ॥ १५ ॥

इस यज्ञान्त स्नान उत्सव को प्राप्ति के वास्ते स्वर्ग में रहने वारी देवांगना विमानन में बैठ के जैसे निकसीं तैसे हि योधाओं से रक्षित राणी लोग रथादिकन में बैठ के निकसती भई और पति के मामा के पुत्रों से तथा सखाओं से भीजीः भई लज्जा सहित हास से विकसित मुख वारी होकर शोभा को प्राप्त होती भई ॥ १६ ॥

वस्त्र भीजने से शरीर कुचा ऊरू मध्य जिनके दीखने लगे उत्कण्ठा से जूडा खुलने से जिनके जूडानतें पुष्प गिरते हैं एताहश वे स्त्री लोग डोलचीन से देवरन को और सखान को भिजोवती भई इस रीति सें मनोहर विहारों सें कामं मल वासित बुद्धि ;वारेन कों क्षोभ करती भई ॥ १७ ॥

सुवर्ण की मालायुत अच्छे घोडा जुरे भये रथ में विराजमान चक्रवर्ती राजा युधिष्ठिर द्रौपदी आदि पत्नीयों के साथ इस प्रकार शोभायमान भए कि मानो क्रियाओं के साथ मूर्तिमान् राजसूय यज्ञ शोभित भया ॥ १८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

पत्नीसंयाजो यागविशेषः अवभृथसम्बन्धि आवभृथ्यश्च तैश्चरित्वा तानुष्ठायेत्यर्थः ॥ १९—२१ ॥

अहते नूतने आनर्चार्चितवान् ॥ २२—२३ ॥

सुराणामिव रुक् कान्तिर्येषां मणिकुण्डलैः सहिताः स्रगुष्णीषादयो येषां ते कुण्डलयुगनालकवृन्देन च जुष्टा वक्त्रश्रीर्यासां ताः ॥ २४—२९ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ गङ्गां गतस्यावभृथकृत्यं वर्णयति—पत्नीति । ते पूर्वोक्ताः श्रीद्वैपायनादयः ॥ १९ ॥

देवादीनां यथापूर्वं पुष्पवर्षणे भेदयम् ॥ २० ॥

ततस्तस्मात् युधिष्ठिरस्नपनात्पश्चात् वर्णा ब्राह्मणादयः तत्र चाश्रमयुता आश्रमिण इत्यर्थः । वर्णाश्रमाभ्यां युता इत्यन्त्यजा अपि गृहीताः किन्तु तत्सहयोगस्तेषां न युक्त इति पश्चादेव ते ज्ञेयाः, श्रीविष्णुपुराणे शतधन्वनो मयूरजन्मन्यपि तत्स्नाने शुद्धिश्रवणात् यतो यत्रावभृथतीर्थे किमुत श्रीयुधिष्ठिरादिश्रीवेदव्यासाद्यधिष्ठिते किमुततरां गाङ्गे किमुततमां साक्षाच्छ्रीकृष्णसनाथे इतिभावः ॥ २१ ॥

अथानन्तरमेव ॥ २२ ॥

आदिशब्दगृहीतानेव विवृणोति—बन्धुज्ञातिनृपानिति । बन्धून् श्रीकृष्णादीन् ज्ञातीन् श्रीभीष्मादीन् मित्राणि विराटादीनि सुहृदः सम्बन्धिनः द्रुपदादीन् नृपानिति सर्वत्र विशेष्यम् अन्यानुदासीननृपांश्च बन्ध्वादीनां यथापूर्वश्रेष्ठ्येन तत्तत्क्रमेण पूजनं नारायणः "नारायणस्त्वं न हि सर्वदेहिनामात्मासि "इत्याद्युक्तमाहात्म्यः श्रीकृष्णः तत्परस्सन् तत्प्रीत्यर्थमितिभावः ॥ २३ ॥

जनाः पुमांसः ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

पत्नीति। पत्नीसंयाजाः यागविशेषाः अवभृथस्य सम्बन्धि आवभृथ्यं तच्च कर्म चरित्वाऽनुष्ठाय ते ऋत्विजः तं सम्राजमाचान्तं कृताचमनं कृष्णया द्रौपद्या सहितं स्नापयाञ्चक्रुः॥ १९॥

देवेति। नराणां दुन्दुभिभिः समं सह देवानां दुन्दुभयो नेदुः देवादयः पुष्पवर्षाणि मुमुचुः॥ २०॥

सस्नुरिति। ततः स्नापनानन्तरं चातुर्वर्ण्यचातुराश्रम्यव्यवस्थया अवस्थिताः सर्वे जनाः सस्नुः स्नानं चक्रुः तत्र कारणमाह, महापातक्यपीति। यतः स्नानान्महापातक्यपि किल्बिषाद्ब्रह्महत्यादिपातकान्मुच्येत किम्पुनरितरे पातकिनस्ततो मुच्येरन्निति कैमुत्यन्यायद्योतनार्थोऽपिशब्दः पापनिवृत्तये सस्नुरिति भावः॥ २१॥

अथेति। राजा युधिष्ठिरोऽहते नूतने क्षौमे वस्त्रे परिधाय आभरणादिभिः ऋत्विगादीनानर्चितवान्॥ २२॥

बन्धूनिति। मित्रानिति पुंस्त्वमार्षं तत् नृपानित्यस्य विशेषणम् अभीक्ष्णं पुनःपुनः पूजयामास तत्र हेतुत्वेन विशिनष्टि नारायणः परो यस्य सः सर्वस्य नारायणात्मकत्वबुद्धियुक्त इत्यर्थः॥ २३॥

सर्वइति। सर्वे जनाःनराः सुराणामिव रुक्कान्तिर्येषां ते मणिकुण्डलादीनां द्वन्द्वः ततो मत्वर्थीयोऽच् मणिकुण्डलाभ्यां सहिताः स्रगादयो येषामिति वा तथाभूता विरेजुः नार्यस्तु कुण्डलयुगेनालकवृन्देन च जुष्टस्य मुखस्य श्रीर्यासां तथाभूताः कनकमेखलयोपलक्षिता विरेजुः॥ २४॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

पत्नीसंयाजावभृथ्याख्येष्टिभिश्चरित्वा कृत्वा॥ १९-२१॥ अहते अधौते॥२२-३१॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

अभिव्यक्तदयायान्तु सर्वैरेव क्रियाभिर्नित्याभिः ऋत्विजां वा यागाः नानाशाखासु प्रकारभेदेन न भवन्ति इति पत्नीसंयाजावासंख्याः साम्प्रतं प्रचरन्ति सहकान्ता वा तस्मिन् पक्षे स्वतन्त्रतया पत्नीसंयाजाः पृथगेव क्रियन्ते आज्यादिद्रव्यैः आवभृथ्याश्च इष्टयः आवभृथ्यैः कर्मभिः चरित्वाऽऽचरणं कृतिः ततस्त एव ऋत्विजः आचान्तं कर्मसमाप्त्यनन्तरं स्नापयाञ्चक्रुः अभिषेकविधिना अभिषेको मुख्ययैवेति लक्षणयेत्युक्तं मुख्याभिषेकीतिवाक्यात् गङ्गायामिति अन्त्यवगाहाभिषेकः॥ १९॥

तस्य यागकृतिः सर्वसम्मता जातेति ज्ञापयितुं देवदुन्दुभीनां वादनं नरदुन्दुभयः लौकिकाः अभिलषितसमये नरदुन्दुभिवादनं तदैव देवदुन्दुभीनामपीति देवा इच्छानुसारिणो जाता इति ज्ञापयितुं सहभावो निरूपितः देवत्वसम्पादककर्मापेक्षयापि राजसूयो महानिति ज्ञापयितुं मुमुचुः पुष्पवर्षाणीत्याह—॥ २०॥

ततो राजसन्निधौ सर्व एव सस्नुः पतितपावन्यां तत्र प्रवेशाभावात् सर्वोऽप्यभूता अतो स्नुरुक्तं माहात्म्यमाह—महापातक्यपीति। सद्यः स्नानानन्तरमेव [illegible] अभ्युदयात् स्नातिचेत् अतो राज्ञः लौकिकोत्कर्षार्थमलङ्करणमाह—अथेति। एतावत्कालं स्वमलङ्कृतः नियमे व्यवभूयत्वात् अहते नूतने क्षौमे क्षौम्यं वै क्षौममिति लोकेन वस्त्रे इव परिधाय अलङ्कृतो जातः ततोऽन्यानपि ऋत्विगादीन् सम्मानवेषान् कृतवान्॥२१—२२॥

यथायोग्यं बन्धुज्ञातिनृपान् मित्रान् सुहृदश्च अन्यांश्च [illegible] गतान् सर्वप्रकारेण पूजायामत्र कालो न नियामकः किन्तु पुनः पुनरेवेति ज्ञापयितुं अभीक्ष्णमित्युक्तं पूजयामासेति विभिन्नक्रमः। ननु लौकिकम् अनेनास्मिन् प्रकरणे राज्ञः केवलैव वैदिकी चेष्टा अन्येषां लौकिक्येति। ननु विहिताः परिचिकीर्षा एव भवन्ति यागाङ्गभूताः किमिति सर्वानेव पूजयामासेत्याकाङ्क्षायामाह—नारायणपर इति। तस्य भगवत्पूजायामेव [illegible] तेन तदात्मकाः सर्वइति। अन्यथा सर्वपूजने [illegible] सम्भृद्धिः॥ २३॥

राजपूजितानां सर्वेषां शोभामाह—सर्वे जना इति। [illegible] दोषो निवृत्तः इच्छापूरणादाभरणैश्च कान्त्या सुरूपो जाताः तत्र हेतुभूतं विशेषणं मणिकुण्डलेति। मणिकुण्डले युक्ते स्रजः उष्णीषं कञ्चुकं दुकूलमध्यवस्त्रं महार्घ्यश्च हारो येषां नार्यश्च तथाऽलङ्कृताः चकारेण तद्गौणैः विशेषमाह कुण्डलयुगेनालकवृन्देन च जुष्टा वक्त्रश्रीर्यासां सुतरां कनकमेखलया विरेजुः एतदत्यन्तालौकिकी शोभा॥ २४॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

पत्नीसंयाजो यागविशेषः आवभृथ्यानि अवभृथसम्बन्धि कर्माणि च तैश्चरित्वा तान्यनुष्ठायेत्यर्थः॥ १९—२४॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

पत्नीसंयाजा यागविशेष आवभृथ्यानि अवभृथसम्बन्धिकर्माणि च तैः चरित्वा तान्यनुष्ठायेत्यर्थः। आचान्तं कृताचमनं कृष्णया द्रौपद्या सह स्नापयाञ्चक्रुः॥ १९-२१॥

अहते नूतने॥ २२—२३॥

सुराणामिव रुक् कान्तिर्येषां ते मणिकुण्डलाभ्यां सहिताः स्रगादयो येषां ते कुण्डलयुगेनालकवृन्देन च जुष्टा वक्त्रश्रीर्यासां ताः॥ २४॥

---

भाषा टीका।

पत्नीसंयाजनाम यज्ञ और अवभृथ कर्मों का अनुष्ठान करायकर ऋत्विज लोग आचमन किये राजा युधिष्ठिर को द्रौपदी के साथ गङ्गाजी में स्नान कराते भये॥ १९॥

उस समय में मनुष्यन की दुन्दुभियों के साथ देवतान की दुन्दभी बजती भई और देवता ऋषि पितृ मनुष्योंने पुष्पन की वर्षा करी॥ २०॥

अथर्त्विजो महा(शा)शीलाः सदस्या ब्रह्मवादिनः ।
ब्रह्मक्षत्रियविट्शूद्रा राजानो ये समागताः ॥ २५ ॥
देवर्षिपितृभूतानि लोकपालाः सहानुगाः ।
पूजितास्तमनुज्ञाप्य स्वधामानि ययुर्नृप ॥ २६ ॥
हरिदासस्य राजर्षेराजसूयमहोदयम् ।
नैवातृप्यन् प्रशंसन्तः पिबन् मर्त्योऽमृतं यथा ॥ २७ ॥
ततो युधिष्ठिरो राजा सुहृत्सम्बन्धिबान्धवान् ।
प्रेम्णा निवासयामास कृष्णञ्च त्यागकातरः ॥ २८ ॥
भगवानपि तत्राङ्ग न्यवात्सीत्तत्प्रियङ्करः ।
प्रस्थाप्य यदुवीरांश्च साम्बादींश्च कुशस्थलीम् ॥ २९ ॥
इत्थं राजा धर्मसुतो मनोरथमहार्णवम् ।
सुदुस्तरं समुत्तीर्य कृष्णेनासीद्गतज्वरः ॥ ३० ॥

भाषा टीका ।

वर्णाश्रमवारे सबहि मनुष्यों ने गंगाजी में स्नान किया क्योंकि गंगा स्नान करने से महापातकी भी पातकते शीघ्र हि छूट जाता है ॥ २१ ॥

स्नान के अनन्तर नूतन रेशमी वस्त्र धारण कर तथा अलङ्कार धारण कर राजा युधिष्ठिर आभरण वस्त्रादियों से ऋत्विक सभासद ब्राह्मणोंका पूजन करता भया ॥ २२ ॥

नारायणपरायण राजा युधिष्ठिर बन्धु ज्ञाति राजा लोगनको मित्र सुहृदनको तथा अन्य सब का बारम्बार पूजन करता भया ॥ २३ ॥

देवतान के सदृश कान्ति वारे मणि जटित कुण्डल माला पाग अंबरकी रेशमी वस्त्र अमोल हार धारण किये सब पुरुष जन और युगल कुण्डल करके तथा अलक समूह करके युक्त मुख की शोभा वारीं स्त्रीजन सुवर्ण की करधनी करि के विराजमान होते भए ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

गतज्वरो निश्चिन्त आसीत् ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथेति युग्मकम् । अथावभृथपूजानन्तरगृहागमनानन्तरं महा[illegible] परमकुलीनाः परमपूज्या इत्यर्थः । लोकपाला देवेष्वपि मुख्याः श्रीब्रह्मादयः ऋत्विगादीनामेषां क्रमेणानुज्ञापनं ज्ञेयम् ॥ २५ ॥

हरिः सर्वदोषहरो रूपगुणादिना सर्वस्यापि मनोहरः श्रीकृष्णः तस्य दासो भक्तस्तस्य अत एव राजा चासौ ऋषिश्च सर्वज्ञानादिपूर्णस्तस्येति राजसूयमहोदयस्य तस्य सर्वगुणपूर्णतादिकं सूचितम् अत एव प्रशंसन्तोपि नैवातृप्यन् किन्तु प्रीत्यानारतमेव प्रशंसन्ति स्मेत्यर्थः । तत्र दृष्टान्तः मर्त्यो मरणधर्मा नित्यं रोगार्त्तः अमृतं मरणादिदुःखहरं परमसुखकरं च दिव्यरसं पिबन् यथा न तृप्यति तद्वत् ॥ २६—२७ ॥

एवं यज्ञसम्बन्धिनः प्रस्थाप्य स्नेहास्तु स्वस्वगृहं जिगमिषतोपि स्नेहभरेण तत्र न्यवासयत् इत्याह—तत इति । यत्तूक्तं "ततोऽनुज्ञाप्य राजानमनिच्छन्तमपीश्वरः । ययौ सभार्य्यः सामात्यः स्वपुरं देवकीसुतः" इति तत्र सङ्क्षिप्त क्रमः पुनरुत्तरेणानेनैव प्रकरणेन ज्ञेयः ततस्तस्मात् ऋत्विगादीनां स्वस्वधामयानात्पश्चात् सुहृदः श्रीभीष्मादयः सम्बन्धिनो द्रुपदादयः बान्धवा मित्राणि विराटादयः तान् निवासयामास तत्र हेतुः प्रेम्णेति तथा कृष्णं स्वयं भगवन्तञ्च तस्य निवासने पूर्वोक्तमेव हेतुं कार्य्यद्वारा विशिष्य दर्शयति त्यागे कातरः विरहदुःखाद्भीतः इति ॥ २८ ॥

ननु तेन स्वातन्त्र्यभङ्गाच्छ्रीकृष्णस्य तत्रानिच्छाशङ्कया प्रत्युत भक्तप्रीतेरेव तत्प्रीतित्वात् प्रीतिरेवाभूदित्याह—भगवानपीति । परमस्वतन्त्रोपि तत्र इन्द्रप्रस्थे नितरां श्रीमहिषीवर्गसाहित्यादिना न्यवात्सीत् यतस्तस्य परमभक्तस्य श्रीयुधिष्ठिरस्य प्रियङ्करः ननु द्वारकावासिनामपि चिरविरहातुराणां प्रियाचरणं योग्यं तत्राह—प्रस्थाप्येति । तेषामाश्वासनार्थमेवेति भावः । ननु तेषां प्रस्थापनेन कथं तेषामाश्वासनं स्यात्तत्राह—स्वान् स्वांशभूतानिति श्रीप्रद्युम्नस्य द्वारकायां स्थितत्वात् साम्बादीनित्युक्तं साम्बादिभिः पुत्रैस्तु तन्मातरोपि गृह्यन्ते ॥ २९ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

मनोरथमहार्णवं यस्य विभूतीर्भवत इत्यारभ्य तदेवदेव भवतश्चरणारविन्देत्यादयस्तैर्मोकलक्षणं कृष्णेन हेतुना सम्यक् सुखेन सम्पूर्णतया वोत्तीर्य ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथेति । महच्छीलं सुस्वभावः सद्वृत्तिर्वा येषाम् ऋत्विगादयः पूजिताः सन्तः हे नृप ! तमनुज्ञाप्य तदनुज्ञामुपादायेत्यर्थः स्वधामानि स्वगृहाणि ययुः ॥ २५—२६ ॥

हरिदासस्येति । राजसूयमहोत्सवं प्रशंसन्तो नातृप्यन् यथा मर्त्योऽमृतं पिबन् तृप्यति तद्वत् ॥ २७ ॥

तत इति । सुहृदश्च सम्बन्धिनो ज्ञातींश्च बान्धवांश्च जिगमिषून् प्रेम्णा निवारयामास त्यागाद्विश्लेषात्कातरः दीनः त्यागमसहमान इत्यर्थः । प्रेम्णा च श्रीकृष्णं निवारयांमास॥ २८ ॥

भगवानपीति । तस्य युधिष्ठिरस्य प्रियङ्करः प्रियचिकीर्षुः कुशस्थलीं द्वारकां प्रति साम्बादीन्यदुवीरान् प्रस्थाप्य प्रयाप्य स्वयं तत्रैवान्यानि कतिचिद्दिनानि अवात्सीत् उषितवान् ॥ २९ ॥

इत्थमिति । सुदुस्तरं तर्तुमशक्यं मनोरथं राजसूयचिकीर्षारूपं महार्णवं कृष्णेन कर्णधारस्वामीयेन समुत्तीर्य गतज्वरो निश्चिन्त आसीत् इत्यन्वयः ॥ ३० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

अथ भिन्नप्रक्रमेण समागतानां निर्गमनमाह—अथर्त्विज इति । अग्रे वक्ष्यमाणमानभङ्गः प्रत्यापात्तिपर्यन्तं मध्ये केनाप्यंशेन न्यूनतायां तेनैव दुष्टानां सन्तोष इति न मात्सर्यं पुष्टिं भवेदिति प्रपत्तिपर्यन्तं वर्णना महाशालाः श्रोत्रियाः तेषामेवार्त्विज्यं सदस्यास्तु ब्रह्मवादिनः त एव सर्वशाः एवमुभये अपेक्षितधर्मयुक्ता निरूपिताः अन्ये विप्रादयः तेषामागमनमेव प्रयोजकं तदाह ये समागता इति ॥ २५ ॥

तथा देवादीनामपि ते सर्वे पूजिताः अन्तः मुदा स्वधामानि ययुः नृपेति सम्बोधनं समाप्तौ सन्तोषाय ॥ २६ ॥

तेषां मानसं कायिकं चोक्त्वा वाचनिकमाह—हरिदासस्येति । राजर्षेः स्वधर्मनिरतस्य हरिदासस्य च प्रमाणप्रमेयबलपुष्टस्य तत्रापि राजसूयस्य तत्रापि महोत्सवं अत एव प्रशंसन्तः स्वयमेव नैवातृप्यन् अन्येच्छया निर्णमायां तदिच्छापूर्त्तौ निवृत्तिरपि भवेत् इदन्तु स्वार्थमेवेति निरन्तरं प्रशंसा प्रतिक्षणन्तु रसाधिक्याय दृष्टान्तमाह मर्त्यो मरणधर्मा अमृतं स्वादिष्टं मरणनिवर्त्तकञ्चेति अनुभवपर्यवसानाभ्यां तत्कदापि निवर्त्तते अत्रापि तदासक्त्या वर्णनायां यो यत्कृत इति न्यायेन राजतुल्यत्वसम्पादकत्वात् अनिवृत्तिर्युक्तेत्यर्थः ॥ २७ ॥

लौकिकं बन्धुषु विशेषतो वक्तुमिति साधारणसुहृत्स्नेहेन श्रोत्रेति [illegible] यदि तु बन्धून् [illegible] तत इति । भगवदिच्छयैवैषां यतो ऽवरोधो भविष्यतीति सुहृदो निवारिताः सम्बन्धिनो विवाहः स्वजनवा ज्ञातयो [illegible] यागश्रमेण बान्धवाः परिचर्यायामेव व्यापृताः न सुखेन भोगं प्राप्तवन्तः । अतः [illegible] निवृत्ते सह भोगेच्छया [illegible] तेषां स्थापनमित्यर्थः कृष्णश्चेति विशेषार्थमुक्तं बहुकालस्थापनं सूचयति त्यागकातर इति ॥ २८ ॥

सर्वे बान्धवाः अविशेषात्सम्भिताः भगवतस्तु कार्यान्तरमप्यस्तीति कदाचिदर्थमिति आद्यश्लोकमाह भगवानपीति अत्र स्वप्रतारणे तत्रैवावात्सीदिति एककारेण सभार्यस्य स्थितिर्निरूपिता कार्यान्तरार्थं स्वप्रतिनिधितया अन्यान् प्रस्थापितवानित्याह प्रस्थाप्येति भगवति विद्यमाने रक्षाविकलत्वं द्वारकायां भवेत् तत्रैकेन इदं न सिध्यतीति रक्षार्थं यदुवीरान् विकासार्थं साम्बादींश्च प्रस्थापितवान् तत्र स्वस्मात् सभयं स्थानमाह कुशस्थलीमिति कुशो दैत्य इति तस्यां पूर्वं दैत्योपद्रवसम्भवः ॥ २९ ॥

यागपूर्वं मध्ये अन्ते च यावदभीप्सितं तावज्जातमिति राजकृत्यमुपसंहरति—इत्थं राजेति । राजेति स्वधर्मपरत्वं धर्मसुत इति बीजशुद्धिः मनोरथ एव महार्णवः अदृष्टत्वात् प्रतिबन्धकमकरसद्भावाच्च अत एव सुदुस्तरत्वम् स्वस्यापि परं कृष्णेन समुत्तीर्य गतमानसज्वर आसीत् यथा वैष्णवधर्मैः स्वस्ताविकं [illegible] निश्चिन्त उत्तीर्णो निश्चिन्तो भवतीत्यर्थः ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

महाशालाः परमकुलीनाः ॥ २५—३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

महत् शीलं येषां ते ॥ २५—३१ ॥

---

भाषा टीका।

अनन्तर महाशीलस्वभाववाले ऋत्विज सभासद ब्रह्मवादी ब्राह्मण क्षत्रिय वैश्य शूद्र तथा आये भए राजा लोग ॥ २५ ॥

देवता ऋषिजन पितृ अन्यप्राणी तथा सुरगण सहित लोकपाल ए सब पूजाको प्राप्त होकर राजाकी पूछ करि हे नृप ! अपने २ धामको चले गए ॥ २६ ॥

श्रीकृष्ण के दास राजा युधिष्ठिर के राजसूय महोत्सवकी प्रशंसा करत तृप्त नहि भए कि जैसे मनुष्य अमृतको पान करत तृप्त नहि होता ॥ २७ ॥

अनन्तर राजा युधिष्ठिर वियोग होनेते भयभीत होय सुहृद सम्बन्धी बन्धुजन श्रीकृष्णको प्रेम से निवारण करते भया ॥ २८ ॥

एकदाऽन्तःपुरे तस्य वीक्ष्य दुर्योधनः श्रियम् ।
अतप्यद्राजसूयस्य महित्वञ्चाच्युतात्मनः ॥ ३१ ॥

यस्मिन्नरेन्द्रदितिजेन्द्रसुरेन्द्रलक्ष्मीर्नाना विभान्ति किल विश्वसृजोपक्लृप्ताः ।
ताभिः पतीन् द्रुपदराजसुतोपतस्थे यस्यां विषक्तहृदयः कुरुराडतप्यत् ॥ ३२ ॥

यस्मिंस्तदा मधुपतेर्महिषीसहस्रं श्रोणीभरेण शनकैः क्वणदङ्घ्रिशोभम् ।
मध्ये सुचारु कुचकुङ्कुमशोणहारं श्रीमन्मुखं प्रचलकुण्डलकुन्तलाढ्यम् ॥ ३३ ॥

सभायां मयक्लृप्तायां क्वापि धर्मसुतोऽधिराट् ।
वृतोऽनुजैर्बन्धुभिश्च कृष्णेनापि स्वचक्षुषा ॥ ३४ ॥
आसीनः काञ्चने साक्षादासने मघवानिव ।
पारमेष्ठ्यश्रिया जुष्टः स्तूयमानश्च वन्दिभिः ॥ ३५ ॥
तत्र दुर्योधनो मानी परीतो भ्रातृभिर्नृप ।
किरीटमाली न्यविशदसिहस्तः क्षिपन् रुषा ॥ ३६ ॥

भाषा टीका ।

हे राजन् ! युधिष्ठिर के प्रिय करनेकी इच्छा कर श्रीकृष्ण भगवान्भी साम्ब से आदि लेकर प्रद्युम्नादिकों द्वारका के प्रति भेज कर आप वहांहि वास करते भए ॥ २९ ॥

इस प्रकार धर्म पुत्र राजा युधिष्ठिर अत्यन्त दुस्तर राजसूय समाप्ति के मनोरथ रूप समुद्र को श्रीकृष्ण कर के सम्यक् प्रकार तीर कर निश्चिन्त होगया ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अच्युते आत्मा यस्य तस्य ॥ ३१ ॥

नरेन्द्रादीनां लक्ष्मीर्लक्ष्म्यो विभूतयो विश्वसृजा मयेनोपक्लृप्ताः विरचिताः ताभिः सह कुरुराट् दुर्योधनोऽतप्यत् ॥ ३२ ॥

महिषीसहस्रमिति बहुत्वोपलक्षणं क्वणद्भिरङ्घ्रिभिः शोभा यस्य मध्ये सुचारु सुचारुमध्यमित्यर्थः । कुचकुङ्कुमैः शोणाः हाराः यस्य तत् श्रीमन्ति मुखानि यस्य तत् चलैः कुण्डलैः कुन्तलैश्चाढ्यं सम्पन्नमशोभतेतिशेषः ॥ ३३ ॥

क्वापि कदाचित् स विरेजइतिशेषः । स्वस्य चक्षुषा हिताहितज्ञापकेन ॥ ३४-३५ ॥

मानी साहङ्कारः किरीटश्च माला च विद्येते यस्य सः न्यविशदाविवेश क्षिपन् द्वार्स्थादीनधिक्षिपन् ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

एवं दुर्योधनस्यानुतापबीजत्वेन श्रीयुधिष्ठिरस्य राजसूयं वर्णयित्वा तदनुतापोत्थाने हेत्वन्तरञ्चाह—एकदेत्यादिना तदशोत्यन्तेन । एकदेति महाभिमानिनस्तस्य प्रायो निजशिबिर एव स्थितिर्बोध्यते ततश्च एकदा नित्यतत्श्रवणमात्सर्योद्दीपित- तया कदाचिदागतो सत्यां श्रियं साम्राज्यलक्ष्मीं राजसूय- सम्बन्धिमहित्वं प्रभावं प्रतिष्ठाञ्च वीक्ष्येति पूर्वं राजसूयसमये लोकसम्मर्दादिना कार्य्यव्यग्रतया च नात्यवधानं कृतवान् अधुनातु तत्तदपगमे विशेषतो दृष्टेत्यर्थः । अतप्यत साक्षादेव तापं व्यञ्जितवानित्यर्थः । श्रीयुधिष्ठिरस्य तु सा श्रीः तच्च महित्वं युक्तमेव न च तत्रगर्वादिदोषोऽभूदित्याह—अच्युते सर्वैश्वर्य्यसर्वमाधुर्यपरिपूर्णे श्रीकृष्णे आत्मा चित्तं यस्य तस्येति ॥ ३१ ॥

तत्र राजसूयमाहात्म्यं दर्शितं श्रियञ्च दिग्दर्शनयोपदिशं- स्तद्धेतुकं तत्तापमनुवदति—यस्मिन्निति । अन्तःपुरे नानाविधाः विशेषेण नरेन्द्रादेर्लक्ष्मीतोऽप्याधिक्येन भान्तिस्म किल निश्चये तत्र हेतुः विश्वसृजा मयेन सभानिर्माणद्वारा किं वा विश्व- कर्मणोपक्लृप्ताः तेनैव पुरनिर्माणात् पतिं श्रीयुधिष्ठिरं पतीनिति चित्सुखः द्रुपदराजस्य सुतेति तदङ्ग एव तस्याविर्भावसूच- नेनालौकिकरूपगुणादिमत्त्वं सूचितं यस्यां पूर्वोक्तायां श्रियां विषक्तहृदयो मात्सर्यादिना आविष्टचित्तः कुरुराडिति कुरूणां राजाऽहमेवेत्यभिमानेन मात्सर्य्योदयादितिभावः ॥ ३२ ॥

किम्बहुना "रेमे रमाभिर्निजकामसम्प्लुतः" इत्युक्तरीत्या श्रीकृष्णलक्ष्मीरूपास्ता एव यत्र स्वयं खेलन्ति स्मेत्याह यस्मिंस्तदेति । तदा राजसूयानन्तरं मधुपतेः स्वयं भगवतः श्रीकृष्णस्य श्रोणीभरेणोपलक्षितम् अत एव शनकैः क्वणद्भिरङ्घ्रिभिः शोभा यस्य तत् श्रीमन्मुखत्वे हेतुः चपलेति तेनान्यदपि सौन्दर्य्यादिकं बोध्यते ॥ ३३ ॥

एकदेत्यादिकं विवृणोति—सभायामित्यादि षड्भिः । तत्र सभायामिति युग्मकम् । पूर्वोक्तायां सभायामासीनः मयक्लृप्ताया- मिति परमाद्भुतत्वमभिप्रेतं तच्चोक्तं सभापर्वणि—
"सभा तु सा महाराज शातकुम्भमयद्रुमा ।

स्थलेऽभ्यगृह्णाद्वस्त्रान्तं जलं मत्वा स्थलेऽपतत् ।
जले च स्थलवद्भ्रान्त्या मयमायाविमोहितः ॥ ३७ ॥
जहास भीमस्तं दृष्ट्वा स्त्रियो नृपतयोऽपरे ।
निवार्यमाणा अप्यङ्ग राज्ञा कृष्णानुमोदिताः ॥ ३८ ॥
स व्रीडितोऽवाग्वदनो रुषा ज्वलन्निष्क्रम्य तूष्णीं प्रययौ गजाह्वयम् ।
हाहेतिशब्दः सुमहानभूत्सतामजातशत्रुर्विमना इवाभवत् ।
बभूव तूष्णीं भगवान् भुवो भरं समुज्जिहीर्षुर्भ्रमति स्म यद्दृशा ॥ ३९ ॥
एतत्तेऽभिहितं राजन् यत्पृष्टोऽहमिह त्वया ।
सुयोधनस्य दौरात्म्यं राजसूये महाक्रतौ ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे
दुर्योधनमानभङ्गो नाम
पञ्चसप्ततितमोऽध्यायः ॥७५॥

---

भाषाटीका ।

हे नृप ! किरीट माला धारण किये और चारों तर्फ से भ्राताओं के बीच में हाथ में खड्ग लिये अहंकारी दुर्योधन क्रोध से द्वारपाल आदिको दुर्वचन बोलता उस सभा में प्रवेश करता भया ॥ ३६ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

तत्र स्थले वस्त्रान्तमभ्यगृह्णादाकुञ्चितवान् कुतः तस्मिन् स्थले एव भ्रान्त्या जलं मत्वा जले चापतत् कुतः स्थलवद्भ्रान्त्या ॥ ३७—३८ ॥

भुवो भरं भारं जिहीर्षुरिमि अद्य सम्पादितेन कलहबीजेन कुरूणां संहारं करिष्यामीति मत्वेति किञ्च यस्य दृशा दृष्टिमात्रेण दुर्योधनो भ्रमति स्म भ्रान्तिं प्राप मयमायातु निमित्तमात्रम् स भूभारहरणबीजं दुर्योधनस्य भ्रमं भीमादिहास्येन च तस्य पराभवं विधाय तूष्णीमासीदित्यर्थः ॥ ३९—४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अन्तशब्दः स्वरूपे अधोवस्त्रमेवेत्यर्थः । स्थलवत् स्थलतुल्ये जले या भ्रान्तिस्तया जलेचापतत् यतो मयस्य मायया विपरीतदृष्टिकारिशिल्पपरिपाट्या विशेषेण निजाभिमानध्वंसमाविना मोहितः अस्तु तावल्लोकपालादिमाया किञ्चाद्भुततरां भगवन्मायेति तं दुर्मानिनं प्रति सोपहासो भावः

तथा च सभापर्वणि—
स्फाटिकस्थलमासाद्य जलमित्यभिशङ्कया ।
स वस्त्रोत्कर्षणं राजा कृतवान् बुद्धिमोहितः ॥
ततः स्फाटिकतोयां तां स्फाटिकाम्बुजशोभिताम् ।
वापीं मत्वा स्थलमिव सवासाः प्रापतज्जले ॥
किञ्च—
जले निपतितं दृष्ट्वा किङ्करा जहसुर्भृशम् ।
वासांसि च शुभान्यस्मै प्रददू राजशासनात् ॥
तथागतन्तु तं दृष्ट्वा भीमसेनो महाबलः ।
अर्जुनश्च यमौ चोभौ सर्वे ते प्राहसंस्तदा ॥
नैवामृष्यत्ततस्तेषामपहासममर्षणः ।
आकारं रक्षमाणस्तु न स तान् समुदैक्षत ॥
पुनर्वसनमुत्क्षिप्य प्रतरिष्यन्निव स्थलम् ।
आरुरोह ततः सर्वे जहसुस्ते पुनर्जनाः ॥
द्वारं च विवृताकारं ललाटेन समाहनत् ।
संवृतं च तथा मत्वा द्वारदेशादुपारमत् ॥
इत्यादि ॥ ३७ ॥

तं दुर्योधनमिति भ्रातृभिः साहित्येपि तस्यैव पतनादिकमग्रगामित्वात् अपरे पाण्डवानामात्मीया नृपतयः यद्वा अन्ये च किङ्कराद्यपराक्षसादयः श्रीभीमादीनां यथापूर्वं हासे श्रीकृष्णेन हासे सर्वचित्ताकर्षकेण भगवतानुमोदिताः श्रीनेत्रान्तस्मितादिना प्रेरिता इत्यर्थः । अङ्गेति श्रीभगवदनुमोदनेन राज्ञोपि निवारणाशक्त्या हासप्रौढत्वानुस्मरणेन सहासं सम्बोधनम् ॥ ३८ ॥

अवाग्वदनोऽधोमुखः हाहेति महादुःखस्मारणिका [illegible] अजातशत्रुत्वाद्भ्रातृ सहजकृपया विमना इवाभूत् [illegible] ऽभूत् बभूवेत्यर्थकं तूष्णीं बभूव निजाभीष्टसिद्धेः [illegible]

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सेवाह—मुदं इति । अत्र जिहीर्षुरवैरिति पाठः टीकासम्मतः असुजिहीर्षुरिति पाठो बहुत्र ॥ ३९ ॥

राजसूय इति तदन्त इत्यर्थः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीया ।

अवभृथा नेनभृतेन ॥ २५—४० ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्थल इति । वस्तूनां जलस्थलबुद्धिविपर्यासकारिणीं सभामाविशन् दुर्योधनः तावत्स्थले जलभ्रान्त्येति शेषः । वस्त्रान्तमभ्यगृह्णादुद्धृतवान् तथा कश्चित्स्थले जलं मत्वा न्यपतत् तथा जले च स्थलभ्रान्त्या न्यपतत् जलविषयकज्ञानस्य स्थलविषयकज्ञानसारूप्यज्ञापनाय वस्त्रकर्षणं तदात्मिकया भ्रान्त्येत्यर्थः । भ्रान्तौ कारणं वदन्विशिनष्टि—मयस्य मायया विमोहित इति ॥ ३७ ॥

जहासेति । तमेवम्भूतं दुर्योधनं दृष्ट्वा भीमो जहास हसितवान् तथाऽन्ये नृपाश्च राज्ञा युधिष्ठिरेण निवार्यमाणा अपि भगवताऽनुमोदितास्ते पश्यतेत्येवं प्रबोधिताः जहसुः ॥ ३८ ॥

स इति । स दुर्योधनो लज्जितो धोमुखो गजाह्वयं हास्तिनपुरं ययौ तदा सुमहान् हाहा दुर्योधनोऽवमानित इति शेषः । इत्येवम्विधः शब्दो बभूव अजातशत्रुर्युधिष्ठिरो विमनाः खिन्नमना इवाभवत् इवशब्दोऽनतिरिक्तार्थकः ॥ ३९ ॥

प्रश्नस्योत्तरमुक्तं निगमयति—एतदिति । हे राजन् ! यत्प्रश्नं त्वया पृष्टः तस्यैतदुत्तरं तुभ्यम् इतीत्थमभिहितं किं तत् यत् दुर्योधनस्य दौरात्म्यं युधिष्ठिरसम्पदवलोकनजपरितापरूपं दौर्जन्यमिति ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्थलेऽभ्यगृह्णाद्वस्त्रान्तं हरिर्लोपकाचिते ।
भूतले पुष्करिणीं मत्वा सर्वे ते जहसुर्जनाः ॥ क ॥
कान्तिकुड्येषु मूर्धा पुरः पुष्करिणीं कचित् ।
विलोक्य स्फाटिकीं भूमिं मन्वानो न्यपतज्जले ॥ ख ॥
जानीहि निमितं न्यासाम इति हलायुधः ॥ ग ॥

पुरः प्रमतः स्फटिकमाणिमिव ज्ञाम् ॥ घ ॥
॥ ३७—४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यस्यां पूर्वोक्तायां श्रियाम ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततस्तत्र पदार्थेषु भ्रमो जात इत्याह—स्थलेऽभ्यगृह्णादिति । काचादिभिः कृत्वा तथा कृतवान् ततः स्थल एव जलबुद्ध्या वस्त्रान्तं सभातलादभ्यगृह्णात् तत्र हेतुः जलं मत्वेति । न केवलं वस्त्रग्रहणमात्रं किन्त्वेतन्निम्नस्थानमिति जले प्रविशन्निव स्थल एवापतत् एवं जले च स्थलबुद्ध्या सवस्त्र एव प्रविष्टः निम्नत्वात्पतितः तत्र हेतुः स्थलभ्रान्त्येति यथा स्थले पूर्वं जलभ्रमतो जातः एवम् अत्रापि स्थले जात इत्यर्थः । तत्राप्रत्याख्येयहेतुमाह—मयमायाविमोहित इति । यो हि दुष्टः साभिमानक्रोधेन तं देशं प्रविशति तस्य भ्रमो भवतीति काचित् माया देवतारूपा तस्यां सभायां मयेन स्थापिता सा तथैव विरुद्धं भ्रमयतीति मायया विमोहितः ॥ ३७ ॥

जहासेति । तमन्धमिव दृष्ट्वा भीमस्तत्प्रतिकूलभ्रमकभावः स्त्रियः सर्वाः सभायाः अपरे नृपतयः येन दुर्योधनसम्बन्धिनः । ननु राजसभायां हास्यमनुचितमिति चेत् तत्राह—निवार्यमाणा अपीति । राज्ञा निवार्यमाणा अपि सतोऽनुचितस्य का वार्ता तत्र हेतुः कृष्णानुमोदिता इति अन्तःकरणे बहिश्च एतदर्थमेवैतावानुद्यम इति ॥ ३८ ॥

ततो यज्जातं तदाह—सव्रीडित इति । अवाग्वदनो बहिः ततोऽपमानेन जातो महान् रोषः तेन ज्वलन्निव तस्मात् स्थानात् भीमभर्त्सनमकृत्वैव तूष्णीं निष्क्रम्य तूष्णीं राजानं गमिष्यामीत्यननुज्ञाप्य गजाह्वयमेव प्रययौ यमुनामुत्तीर्य गत एव ततो महान् बन्धुरेवं गत इति हाहेतिशब्दः सुमहानभूत् सोऽपि सतामेव बभूव तूष्णीमिति पुनः सन्मार्गमार्गायां भूभारहरणं न भवेत् तन्मारणे वा पाण्डवानां गर्वो न गच्छेत् इति भगवान् सर्वसमस्तूष्णीमास यतो भुवो भारं जिहीर्षुः नन्वेवं कृते कथं भूभारहरणं भविष्यतीत्याशङ्क्याह—यद्दृशेति ।

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यत यस्मात् कारणात् भगवान् दृशा ज्ञानचक्षुषा ज्ञानेनैव सह भ्रमति साध्यसाधनभावः सर्वोपि तस्य प्रत्यक्ष इत्यर्थः स्मेति सर्वलोके वेदप्रसिद्धिरेव प्रमाणं निरूपितम् ॥ ३९ ॥

उक्तमुपसंहरति—एतत्तेऽभिहितमिति । राजन्निति खेदात्मसम्बोधनम् एतस्य चरित्रस्य निरोधोपयोगित्वं नास्तीति यद्भाव्युदासार्थं त्वया पृष्टश्चेत् तदोक्तमित्याह—यत्पृष्टोहमिह त्वयेति त्वया मानभङ्गे हेतुः पृष्टः तत्र दुर्योधनस्य दौरात्म्यमेव मानभङ्गे हेतुरित्युत्तरं दौरात्म्यञ्च निरूपितमभिमानरूपं तच्च राजसूये समागतस्य कर्तुमनुचितं यदि धर्मार्थमागतोभिमानं करोति तत्रापि महाक्रतौ निरभिमानतयैव तत्र गन्तुमुचितमित्यर्थः ॥ ४० ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे षड्विंशाध्यायविवरणम् ॥२६॥७५॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

स्थले वस्त्रान्तमभ्यगृह्णात् आकुञ्चितवान् तस्मिन् स्थल एव जलं मत्वा तथा जले चापतत् कुतः तस्मिन् जलेऽपि स्थलवत् स्थल इव या भ्रान्तिस्तया स्थलं मत्वेत्यर्थः । मयस्य माया ह्रेतुजनविज्ञापनीयशक्तिर्या तया विमोहितः ॥ ३७ ॥

स्त्र्यादयोपि जहसुः राज्ञा नेत्रेङ्गितेन मा हसतेति निवार्यमाणा अपि कुतः कृष्णेनानुमोदिताः हसतेति भ्रुवा दत्तानुमतय इत्यर्थः । भुवो भारं हर्तुमिच्छुः कलहबीजोत्थापनादिति भावः । यस्य दृशा दृष्टिमात्रेणैव दुर्योधनो भ्रमति स्म मयमायातु निमित्तमात्रमिति भावः ॥ ३८—४० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
पञ्चसप्ततितमोऽध्यायो दशमे ऽजनि सङ्गतः ॥ ७५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्थले जलं मत्वा वस्त्रान्तम् अभ्यगृह्णात् उद्धृतवान् जले च स्थलवद्भ्रान्त्या अपतत् ॥ ३७—३८ ॥

यमभीमादिकृतो हासो दुर्योधनस्य मानभङ्ग इत्यादिका भगवान् तूष्णीं बभूव ॥ ३९—४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे पञ्चसप्ततितमाऽध्यायार्थप्रकाशः ॥७५॥

---

भाषा टीका ।

उस सभा में मयदानव ने ऐसी माया रची है कि—अनजान मनुष्य को जल में स्थल की भ्रान्ति और स्थल में जलकी भ्रान्ति होजावे इस लिये मयकी माया से मोहित होकर दुर्योधन ने स्थल में हि भ्रम से जल मानकर स्थल में वसन को ऊपर उठालिया तथा स्थल के समान भ्रम से जल को हि स्थल जानकर दुर्योधन जल में गिर पडा ॥ ॥ ३७ ॥

हे राजन ! उस दुर्योधन को देखकर भीमसेन हँसने लगा तथा स्त्रीजन और राजा लोग भी देखकर हाँसी करते भए यद्यपि राजा युधिष्ठिर ने सब को मने भी किया तथापि श्रीकृष्ण ने कटाक्ष से उनको हँसने अनुमति देदई इस वास्ते सब हँसने लगे ॥ ३८ ॥

वह दुर्योधन सब के हँसने से लज्जित होकर नीचे को मुखकर क्रोध रूप अग्नि से प्रज्वलितभया चुपचाप हस्तिनापुर को चलागया तब तो सज्जन पुरुषों को भविष्य अनर्थ के भयसे हा हा इस प्रकार का महान् शब्द होता भया राजा युधिष्ठिर भी उदास मन हो गया भूमि के भार को हरण करने की इच्छा से श्रीकृष्ण भगवान् चुपचाप होगये क्योंकि श्रीकृष्ण की दृष्टि से हि दुर्योधन को सभा में भ्रम भया रहा ॥ ३९ ॥

हे राजन् ! राजसूय यज्ञ में दुर्योधन के असन्तोष का कारण जो मोसे तुमने पूछा रहा सो उस का वृत्तान्त मैने तुम्हारे अर्थ कह दिया ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धमें पिचहत्तरके अध्यायकी भाषाटीका समाप्ता ॥ ७५ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

# षट्सप्ततितमोऽध्यायः।

श्रीशुक उवाच।

अथान्यदपि कृष्णस्य शृणु कर्माद्भुतं नृप।
क्रीडानरशरीरस्य यथा सौभपतिर्हतः ॥ १ ॥
शिशुपालसखः शाल्वो रुक्मिण्युद्वाह आगतः।
यदुभिर्निर्जितः सङ्ख्ये जरासन्धादयस्तथा ॥ २ ॥
शाल्वः प्रतिज्ञामकरोच्छृण्वतां सर्वभूभुजाम्।
अयादवीं क्ष्मां करिष्ये पौरुषं मम पश्यत ॥ ३ ॥
इति मूढः प्रतिज्ञाय [१] देवं पशुपतिं प्रभुम्।
(विज० पाठ०) (गते तस्मिन् बहून् वर्षान् प्रतीक्ष्य तदुपागमम्।
तदनन्तरजोऽमात्यैरभिषिक्तो नृपार्थिभिः ॥
तपस्तप्त्वा स नृपतिर्देवं पशुपतिं प्रभुम् ॥०॥)
आराधयामास (२) नृपः पांसुमुष्टिं सकृद्ग्रसन् ॥ ४ ॥
संवत्सरान्ते भगवानाशु तोष उमापतिः।
वरेणच्छन्दयामास शाल्वं शरणमागतम् ॥ ५ ॥
देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम्।
अभेद्यं कामगं वव्रे स यानं वृष्णिभीषणम् ॥ ६ ॥

---

**श्रीधरस्वामीकृतभावार्थदीपिका।**

ततः षट्सप्ततितमे वृष्णिशाल्वमहामृधे।
द्युमद्गदाप्रहारेण रणात्प्रद्युम्ननिर्गमः ॥
समाप्य धर्मराजस्य राजसूयमहोदयम्।
निहत्य भौमराजादीनथोपारमदच्युतः ॥

॥ १–३ ॥

सकृत्पांसुमुष्टिमेकां ग्रसन् भक्षयन् ॥ ४ ॥

संवत्सरान्त इति आशु तोषोऽपि भगवानुमापतिः श्रीकृष्णविद्विषि शाल्वे वरस्य वैफल्यं मन्यमानो न शीघ्रं प्रादुरभूत् तथापि निर्बन्धमाकलय्य संवत्सरान्ते च वरेणच्छन्दयामास। यथेष्टं कामितमात्र वरं वृणीष्वेत्युवाचेत्यर्थः ॥ ५–६ ॥

**श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।**

अथानन्तर्ये तदानीमेवेन्द्रप्रस्थाद्द्वारकामागतेन भगवता शाल्वस्य वधात् तत्रापि व्यक्तं भावि अद्भुतत्वे हेतुः क्रीडामयं नरशरीरं प्रसिद्धमनुष्याकारो विग्रहो यस्य तस्य तेन विचित्रमधुरक्रीडाविस्तारणादित्यर्थः। किं तदित्यपेक्षायामाह—यथेति। येन प्रकारेण हतस्तत्प्रकारकं कर्म ॥ १ ॥

तत्रोपोद्घातकथामाह—शृण्विति। सङ्ख्ये युद्धे तस्य का वार्ता जरासन्धादयोऽपीत्यर्थः ॥ २ ॥

तथापि प्रतिज्ञामकरोत् अनादरे षष्ठी अशक्येऽर्थे प्रतिज्ञा नोचितेति तेषां वाक्यमनादृत्येत्यर्थः। यद्वा शृण्वतामित्यर्थः ततश्च प्रतिज्ञाया दार्ढ्यं बोधयति ॥ ३ ॥

इत्येतत्प्रतिज्ञाय यतो मूढः निर्बुद्धिः श्रीकृष्णमायया नाम्नातो-

---

(१) तपसे प्रतिष्ठमानः इति (२) वने इति च त्रिवत्सः पाठः।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

(ग्ला।) ह्यन्यभावाननुसन्धानात् तमेव कथमाराधयामासेत्यत्र योग्यपदान्येवोपन्यस्यति देवं निजेष्टदैवतं पशूनां स्वसदृशानां तु प्रथमानां पतिं प्रभुम् आश्वभीष्टदानसमर्थञ्चेति नृपः सुखभोग योग्योपीत्यर्थः पांशुमिति योग्यमेव तस्य प्रथमतस्तद्भोजनमित्युपहासव्यञ्जना ॥ ४ ॥

भगवानिति वरवैफल्यज्ञाने कारणम् अत एव तादृशवरेणाऽपि छन्दयामास अत्र उमाया मायांशत्वात्पतिरिति वञ्चनाभिप्रायेण ननु तद्धिनागमनमेवोचितं तत्राह—शरणमागतम् अन्यथा शरणागतोपेक्षा लोके प्रवर्त्तेतेति शङ्कयेति भावः। अत्र सामान्यतो यत्तस्य पशुपतित्वं तच्छ्मशानवासादिनैव तादृशाद्गेन निजगोपनायैव दत्तात्रेयस्य स्त्र्यादिसङ्गवत् यत्र भगवद्विरोधिभ्योऽपि वरप्रदानं तत्पुनस्तानुत्साह्य बलसहायादिसम्पादनेन योग्यांश्च कृत्वा श्रीभगवदत्यभीष्टयुद्धादिलीलायां प्रवर्त्तनायेति वास्तवं ज्ञेयम् ॥ ५ ॥

अत एव वृष्णीनां भीषणमेव वव्रे ननु घातकमिति श्रीशिवेनान्तस्तथा प्रेरणादितिभावः ॥ ६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

॥ १—३ ॥

पांशुमुष्टिं भस्ममुष्टिम् ॥ ४—१९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथ. साल्ववधात्मकं भगवच्चेष्टितमनुवर्णयितुं प्रस्तौति वृन्दावनतिलकेन—अथेति। क्रीडार्थं नरस्येव शरीरं यस्य तस्य श्रीकृष्णस्याद्भुतमन्यदपि चेष्टितं शृणु किन्तदित्यत आह—यथेति। यथा सौभपतिः सौभं नाम पुरं तस्य पतिः शाल्वो यथा येन प्रकारेण हतः तथा तस्य हननमित्यर्थः ॥ १ ॥

शिशुपालसख इति। तदा साल्वो रुक्मिणीविवाहे आगतः सङ्ख्ये युद्धे निर्जितः जरासन्धादयश्च जिताः स तदा सर्वभूतानां शृण्वतां सतां प्रतिज्ञामकरोदिति सम्बन्धः। प्रतिज्ञामेव दर्शयति, अयादवीं यादवरहितां क्ष्मां भूमिं करिष्यामि मे पराक्रमं पश्य ॥ २—३॥

इतीत्थं प्रतिज्ञाय प्रतिज्ञां कृत्वाऽत एव मूढः पशुपतिं देवं रुद्रमाराधयामास किङ्कुर्वन् प्रत्यहं सकृत्पांशुमुष्टिम् एकं प्रसन् भक्षयन् आराधयामासेति सम्बन्धः ॥ ४ ॥

सम्वत्सरान्त इति। आशुतोषः ईषत्सन्तोषवान् भगवद्विद्वेषित्वादिति भावः। वरेणेति—हेत्वर्थे तृतीया वरार्थं छन्दयामास वरं वरयेत्युवाचेत्यर्थः ॥ ५ ॥

देवेति। स साल्वः यानं विमानं वव्रे वृतवान् कथम्भूतं देवादीनां भेत्तुमशक्यं कामं यथेच्छं गच्छतीति तथा तद्वृष्णीनां भ्रातृणां भीषणं भयङ्करम् ॥ ६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

बभूव तूष्णीं भगवान् श्रुत्वो मदं शिरीषुरात्मेहितमात्मनि स्मरन्।
तदाऽऽविरासीज्जगदीशसाक्षी मुनिः सुरासुरवन्दितपादपङ्कजः॥क॥

उपेत्य नारदः, सर्वैः सदस्यै रभिपूजितः।
कृष्णेनाभ्यर्चितः सम्यगुपविष्टो नृपान्तिके ॥ ख ॥

उवाच धर्मराजस्तं प्रणिपत्य यथाविधि।
भवान् सर्वत्र गोऽब्रह्मन् सर्वकालेष्वलङ्कृतः ॥ ग ॥

नृपाणां शौर्ययुक्तानां सर्वमण्डलवासिनाम्।
इदानीं कतमः शूरो नित्योद्योगेन वर्तते ॥ घ ॥

इति तेनोदितां वाणीमाकर्ण्य मुनिरब्रवीत् ॥ ङ ॥

नारद उवाच।

भग्नदर्पा नृपाः सर्वे कृष्णेनाप्रतिमौजसा।
वसन्ति विषये स्वे स्वे महचेष्टा गतश्रियः ॥ च॥

एक एव महोत्साहः क्षत्रियाणां धुराधुरी।
जातः शाल्वेषु नृपतिर्बहुपादातिवाहनः ॥ छ ॥

भ्रातर्युपरते युद्धे विष्णुना लोकजिष्णुना।
ब्रह्मदत्तसुते हंसे यमुनायां महात्मना ॥ ज ॥

कृष्णद्विडेष राजेन्द्रो रुक्म्यादीन् कुण्डिने पुरे।
समाजं कारयामास भ्रातुराज्यकाङ्क्षया ॥ झ ॥

शिशुपालद्युमद्वैदन्तवक्त्रपुरस्सरैः।
पराजितेषु सङ्ग्रामे जरासन्धादिषु प्रभो ॥ ञ ॥

योगेश्वरेण श्रीकृष्णेनानुज्ञातः साक्षा सान्त्ववचनेन ॥ क ॥ आत्मना स्वेनैव ईहितं चेष्टितम् आत्मनि मनसि स्मरन् मध्ये-मितिशेषः तत्र कथान्तरं वक्तुं तन्नारदागमनमाह-तदेति ॥ क-ञ ॥

रुक्म्यादीन राज्ञःसमाजंसम्मेलनंभ्रातृव्यंस्मणाभावकरणाय ॥झ॥ शिशुपालद्युमद्वैदन्तःसहजरासन्धादिषु सत्सु ॥ ञ ॥

॥ १—३ ॥

तस्य साल्वस्यानन्तरजोऽनुजः ॥ ० ॥

छन्दयामास वरमकरोत् ॥ ५-९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

॥ १-३ ॥

तमेव कथमाराधयामासेत्यत्र योग्यपदान्येवोपन्यस्यति देवं निजेष्टदेवतं पशूनां सदृशं प्रथमानां पतिं प्रभुम् आश्वभीष्टदानसमर्थञ्चेति ॥ ४ ॥

भगवानिति वरवैफल्यज्ञाने कारणम् अतएव तादृशवरेणापि छन्दयामास। ननु तद्धिनागमनमेवोचितं तत्राह शरणमागतम् अन्यथा शरणागतोपेक्षा लोके प्रवर्त्तेतेति शङ्कयेति ॥ ५—१३ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

॥ १—१३ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

जातिश्चापि विरोधस्तु षड्भिरेव निरूपितः।
कर्मणोऽपः फलांशस्तु षड्भिरेव निरूप्यते॥
फलन्तु त्रिविधं प्रोक्तं शत्रुनाशो यशस्तथा।
अलौकिकी तथा सम्पत् द्वाभ्यां द्वाभ्यां निरूप्यते॥
बन्धूनाश्च तथांशस्य मित्रस्येति पृथक् पृथक्।
बन्धूनां कृष्णसन्नाथानाम्येवेच्छा कथञ्चन॥
सदागतस्य स्वेष्टस्य कीर्तिरेवेप्सिता भुवि।
मित्रस्य कर्मविमुख्यात्सम्पत्तिर्वाञ्छिता क्वचित्।
परोक्षे दारदो हि मित्रत्वमुपयाति हि।
अभावो द्वारकास्थानां बन्धूनाश्च तथा क्वचित्॥
अनिवार्यं दुःखमुक्तं द्वितीयेन विचार्यते।
सप्तविंशे तथाध्याये यादवानां महद्भयम्॥
महादेवादिपुष्टेभ्यः साल्वादिभ्यो निरूप्यते।
अर्थस्याप्येवतासिद्ध्यै प्रद्युम्नाय जयो महान्॥
निरूपितः समस्तानां यतः स्यात्तु महद्भयम्।

तत्सम्बन्धतयाफलप्रकरणमारभते-अथेति। तदैव निरुद्धानां भगवत्परता भवति एतच्चरित्रमुत्तममिति श्रवणार्थं विशेषेण प्रेरयति अन्यदपि कृष्णस्य शृण्विति यत अद्भुतं कर्मेति अज्ञातचरित्रात् भगवतोऽद्भुतानि कर्माणि बहूनि भवन्ति इदञ्च चरित्रमद्भुतं तदेवाद्भुतं यदन्यार्थमारब्धमन्यार्थं भवति अत एव विश्वमेवाद्भुतं चरित्रमिति भगवच्छालं धनार्थं प्रयत्नं कुर्वन् अधर्मं करोति अर्थार्थमनर्थमेव पुरुषार्थान्तरोपि किं बहुना सुखार्थं यतमानो दुःखं प्राप्नोति सर्वोभ्रमादिधर्मेषु भगवद्गुणसम्बन्धव्यतिरेकेषु बोद्धव्यम् अत्रापि फलं भगवदनुभवः साक्षात्त्वेन मन्यते तथा सर्व एव भगवत्सम्बन्धी पदार्थः इदं रहस्यं सर्वदैव भगवदीयैः अनुसन्धेयम् अतो यदपि सर्वमेवाद्भुतं तथापीदं महत् तस्याद्भुतत्वमुपपादयति क्रीडानरशरीरस्येति क्रीडार्थं नरशरीरम् अङ्गीकृतं यत्र क्रीडासम्भावनापि नास्ति नराणां सुखस्यैव नरकत्वात् तत्किमित्याकाङ्क्षायां निर्दिशति यथा सौभपतिर्हत इति मायिकं पुरं सौभशब्देनोच्यते तस्य पतिः साल्वः स चेत्प्रयत्नं न कुर्यात् जीवेद्वा कियत्कालं दुर्योधनादिवत् अयन्तु शीघ्रमेव हतः॥ १॥

तस्य हननार्थम् उपाख्यानमाह—शिशुपालसख इति। उपपत्तिका तेन सह मैत्री शिशुपालसखित्वेनैव प्रसिद्धः साल्वः अत एव रुक्मिण्युद्वाहे आगते उपस्थिते आगतो वा यदुभिर्निर्जितः आगतं वा सङ्ख्ये युद्धे तदा यदुभिर्निर्जितः न केवलमेकः किन्तु जरासन्धादयोपि तथा मित्राणि निर्जितानि एवं सर्वेष्वेव तथाभूतेषु सर्वहितान्वेषी यादवानां मारणं विचारितवान्॥ २॥

ततस्तत्सिद्ध्यर्थं साल्वः प्रतिज्ञामकरोदिति क्लेशोऽप्यनिवृत्त्यर्थं सर्वभूभुजां शृण्वतामकरोत् प्रतिज्ञामाह—अयादवीं क्ष्मां करिष्ये इति यस्यां क्ष्मायां यादवा न तिष्ठन्तीति सबीजनिर्हरणार्थः किं ब्रह्मशापेनेव नेत्याह पौरुषं मम पश्यतेति पश्यतेति पौरुषं स्वकीयं लोकान्पश्यति॥ ३॥

ततोऽत्यन्तमाह-इत्युक्त्वा मूढः असाध्यसाधनार्थं प्रवृत्तः भूमिर्यादवोपजीविनी कथं यादवरहिता स्वरूपं लप्स्यते इति तथापि मौढ्यात् प्रतिज्ञाय तत्राप्यसमर्थं देवं सेवितवान् यतः स पशूनामेव पतिः प्रभुः न त्वन्तर्यामी यदि पुरुषोत्तममन्तर्यामिनं वा भजेत् भक्तो ज्ञानी यं वा भजेत् तदा जगज्जननसामर्थ्यं विश्वोपसंहारसामर्थ्यं वा भवेत् विश्वामित्रस्येव तद्वदुपाकसाध्यमिति मत्वा क्षिप्रप्रसादं स्वस्य पशुत्वात् प्रभुमाराधयामास तत्राराधनप्रकारः पांसुमुष्टिं सकृद्ग्रसन्निति भगवद्वैमुख्यात् समुखं धूलिप्रक्षेपः॥ ४॥

ततो यज्जातं तदाह-संवत्सरान्त इति। महादेवः कालप्रेष्यः सम्वत्सरात्मकस्तु कालः साल्वो दुर्बुद्धिः भगवद्विरोधार्थं यतते अस्मांश्च प्रार्थयते तस्माद्भुतकर्मत्वाद्भगवदभिप्रायो न ज्ञायते किमस्मा एव वरो देयो न वेति तदर्थं सम्वत्सर—प्रतीक्षा कृता यदि सम्वत्सरेणायं म्रियेत तदा स्वामिहितकर्त्रा सम्वत्सरेणैव कार्यं सिद्धम् अथ यदि क्लेशमेव दत्त्वा जीवयिष्यति तदा मयापि क्लेशदानार्थमेव वरो देय इति विचार्य सम्वत्सरं तूष्णीं स्थितः नन्वग्रेपि कथं न स्थितः तत्राह—आशुतोष इति। स परमदयालुः अल्पमप्यन्यस्य क्लेशं न सहते तथाप्यस्थाने यत्नं करोतीति तावद्विलम्बं कृतवान् ननु तथापि स्वामिद्रोही उपेक्षणीय एव किं किमिति वरो दत्त इत्याकाङ्क्षायामाह उमापतिरिति। उमापि तपः कुर्वाणा मया उपेक्षिता सा गर्भे पतिता तथायमपि भविष्यतीति विचार्य ततो विप्रार्थमेव वरेण छन्दयामास स वरं ब्रूहीत्युक्तवान् ननु तस्य को धर्मः येन वरार्थं छन्दयामास तपस्तु नास्त्येव भगवद्वैमुख्यात् नहि नारकिणो रोगिणो वा तपः कुर्वन्ति किन्तु कर्मानुभव एव तेषां तादृशः तस्मादुपेक्षणीय एवेत्याशङ्कायामाह--शरणागतमिति शरण्योपेक्षा दोषभियेति॥ ५॥

ततस्तस्यान्तर्यामिणैव बुद्धिनाशो जात इति यत्किञ्चित्प्रार्थयते देवासुरेति देवासुरमनुष्याः त्रिगुणप्रधानाः गन्धर्वोरगराक्षसाः मिश्रगुणप्रधानाः एवं षड्भिः सर्व एव सगुणाः परिगृहीताः तेषां सर्वेषामेवाभेद्यम् अस्मदधीनं च कामगमन्यथा समुद्रवदस्मत्पुरुषार्थाय न स्यात् किञ्च यदर्थस्तु प्रयासः तदर्थं किञ्चित् याचनीयमिति तस्य यानस्यापरं धर्मं प्रार्थयते वृष्णिभीषणमिति वृष्णीनां भयजनकं महादेवोपि भगवति किञ्चिद्बाधकमिति तथेत्यङ्गीकृतवान्॥ ६॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

षट्सप्ततितमे साल्वे रुद्रप्राप्तवरे रणम्।
कुर्वति द्युमतः शस्त्रायुकं प्रद्युम्ननिष्क्रमः॥

क्रीडाप्रधानश्चासौनरशरीरश्चेति शाकपार्थिवादिः॥ १-४॥

वरेण द्दित्सितेन छन्दयामास वशीचक्रे "अभिप्रायवशौ छन्दौ" इत्यमरः॥ ५—६॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

षट्सप्ततितमे वृष्णिसाल्वयुद्धे प्रद्युम्नप्रमुखवृत्तमाह—अथेति।

तथेति गिरिशादिष्टो मयः परपुरञ्जयः ।
पुरं निर्माय शाल्वाय प्रादात्सौभमयस्मयम् ॥ ७ ॥
स लब्ध्वा कामगं यानं तमोधाम दुरासदम् ।
ययौ द्वारवतीं शाल्वो वैरं वृष्णिकृतं स्मरन् ॥ ८ ॥
निरुध्य सेनया शाल्वो महत्या भरतर्षभ ।
पुरीं बभञ्जोपवनान्युद्यानानि च सर्वशः ॥ ९ ॥
सगोपुराणि द्वाराणि प्रासादाट्टालतोलिकाः ।
विहारान् सविमानाग्र्यान्निपेतुः शस्त्रवृष्टयः ॥ १० ॥
शिलाद्रुमाश्चाशनयः सर्पा आसारशर्कराः ।
प्रचण्डश्चक्रवातोऽभूद्रजसाच्छादिता दिशः ॥ ११ ॥
इत्यर्द्यमाना सौभेन कृष्णस्य नगरी भृशम् ।
नाभ्यपद्यत शं राजंस्त्रिपुरेण यथा मही ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथेति क्रीडार्थं नरस्येव शरीरं यस्य तस्य अप्राकृतेन देहेनैव नरवद्विहरत इति भावः ॥ १—३ ॥

प्रत्यहम् सकृदेकवारम् ॥ ४ ॥

आशु तोषोपि श्रीकृष्णविद्विषं शाल्वं सम्वत्सरान्ते वरेण दित्सितेन छन्दयामास वरं वरयेति चोदयामास ॥ ५-६ ॥

भाषा टीका ।

हे नृप ! अनन्तर लीला के वास्ते मनुष्य शरीर धारी श्रीकृष्ण के अन्यभी एक अद्भुत चरित्रको तुम सुनो जिस प्रकार श्रीकृष्णने शाल्वको मारा ॥ १ ॥

शिशुपालका सखा और रुक्मिणी के विवाह में आया शाल्व राजा युद्ध में यादवनने वह जीत लियारहा तथा जरासन्ध आदि राजाभी उनोने जीत लिये रहे ॥ २ ॥

उस समय सब राजान के सुनते २ शाल्वने यह प्रतिज्ञा करीहि कि मैं भूमिको यादव रहित कर दूंगा आप सब मेरे पुरुषारथको देखियेगा ॥ ३ ॥

हे नृप ! वह मूर्ख ऐसी प्रतिज्ञा कर के नित्यप्रति एक बार धूरिकी एक मुट्ठीका भोजन करत फल देने में समर्थ महादेवकी आराधना करता भया ॥ ४ ॥

शीघ्र प्रसन्न होने वारे उमापति भगवान् एक सम्वत्सर व्यतीति होने पर शरणागत शाल्वको वर मागने के वास्ते प्रेरणा करते भए ॥ ५ ॥

देव असुर मनुष्य गन्धर्व उरग राक्षस जन जिसका भेदन नहि करसकें तथा इच्छाचारी और यादवनको भय कारी ऐसा विमान शाल्वने महादेवजी से मागा ॥६॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तथेति प्रतिज्ञाय गिरिशेनाऽऽदिष्टोऽयस्मयं लोहमयं पुरं सौभसंज्ञं निर्माय रचयित्वा प्रादात् ॥ ७ ॥

तमसोन्धकारस्य धामाऽऽश्रयम् अन्यैर्दुरासदं दुष्प्रापम् ॥ ८—९ ॥

प्रासादा गृहा अट्टालास्तदुपरिगृहास्तोलिकास्तत्पर्यन्तकुड्यानि ताः विहारान् क्रीडास्थानानि च स बभञ्ज किञ्च विमानाग्र्यात्तस्माच्छस्त्रवृष्ट्यादयः पेतुः ॥ १० ॥

आसारशर्कराधारा सम्पातवज्रोपलाः ॥ ११ ॥

शं सुखं नाभ्यपद्यत ॥ १२-१५ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

परपुरञ्जय इति । सौभसदृशपुरादिनिर्माणमय्या माययेति शेषः । पुरं तदाकारं महारथं प्रकर्षेण दैत्यपक्षत्वादुत्कटया अदात् ॥ ७ ॥

तमोधामत्वादेव दुरासदं चक्षुषाप्यगम्यम् अत्र वृष्णिकृतं कृष्णकृतमिति पाठद्वयम् ॥ ८ ॥

निरुध्येतित्रिकम । तत्र विहारान् स इत्यन्तमेकं वाक्यं द्विधा इत्यन्तमन्यत् पुरीं श्रीद्वारकां निरुध्य सर्वतो बहिरावृत्य इतिमहाविस्मयात्सम्बोधयति—भरतर्षभेति । यद्वा अनिष्टाशङ्किनं तमाश्वासयति महावंशाभेद्यत्वेन त्वया श्रीभगवन्माहात्म्यं ज्ञायत एवेति कापि शङ्का न कार्य्येति भावः । बभञ्ज भङ्क्तुमुद्यतवान् "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" ॥ ९ ॥

गोपुराणि पुर्य्याबहिर्द्वाराणि तत्सहितानि द्वाराद्यन्यानि भञ्जनार्थमेव नितरां नैरन्तर्य्येणाविशन्ति पेतुः प्रचण्डश्चासौ चक्रवातश्च वात्याविमानार्थमेव नितरां नैरन्तर्य्येणाविशन्ति पेतुः प्रच-

श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

चक्रवातो चक्रवातश्च वात्या विमानाम्यादेवाभूत् शीघ्रभ्रमणोर्जितत्वात् रजसा चक्रवातमयेन ॥ १०—११ ॥

भृशमर्द्यमाना हिंस्यमाना श्रीकृष्णस्य पुरीति साश्चर्यदुःखवचनं तस्य दुर्बोधलीलस्य तादृश्येवेच्छेति भावः ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तथेति । तथेत्यङ्गीकृत्य गिरिशेनादिष्टो मयः सौभं नाम अयोमयं कोहमयं पुरं निर्माय ददौ ॥ ७ ॥

सलब्ध्वेति । स शाल्वः तमसोऽन्धकारस्य धामाऽऽश्रयं यानं लब्ध्वा अधिष्ठायेत्यर्थः । कृष्णस्य कृतं वैरं स्मरन् द्वारवतीं ययौ ॥ ८ ॥

निरुध्येति । हे भरतर्षभ ! पुरीं द्वारवतीं निरुध्य उपवनादीन् बभञ्ज ॥ ९ ॥

तत्राट्टकाः प्राकारोपरिगृहाः तोरणाः बहिर्द्वाराणि विहाराः क्रीडास्थानानि विमानाग्र्यात्तस्मात्सौभाच्छस्त्रवृष्टयः शिलादयश्च निपेतुः ॥ १० ॥

तत्रासारो धारासम्पातः शर्कराः सूक्ष्मशिलाः प्रचण्डो निष्ठुरश्च वातो बभूव दिशश्च रजसाधूलिताः छादिताः बभूवुः ॥ ११ ॥

इतीति । इतीत्थं सौभेन यानेन भृशमर्द्यमाना पीड्यमाना कृष्णस्य नगरी द्वारका हे राजन् ! शं सुखं नाभ्यपद्यत न प्राप यथा त्रिपुरेणार्द्यमाना मही शं नाभ्यपद्यत तद्वत् ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

(मूलं) आययौ स्वं जनपदं समग्रबलवाहनम् ।
इदानीं राजपुत्राणां स एवोद्योगवान्नृप ॥ क ॥
इति धर्मसुतः श्रीमान् श्रुत्वा तत्रान्द्वोदितम् ।
पार्श्वे भगवतः शौरेः शनैर्मुखमवैक्षत ॥ ख ॥
निशाम्य तद्वासुदेवो धैर्यसारो निराकुलः ।
किञ्चिन्महद्भयास्तु नामेत्याह सा हि महात्मता ॥ ग ॥
पूजयित्वा ऋषिं सम्यक् सूनृतैर्गीर्भिरच्युतः ।
चिराभिलषितः सोपि प्राप्तः साम्बस्याचिन्तयत् ॥ घ ॥
उग्रसेनं यदुपतिं युयुधानं च माधवः ।
अक्रूरं कृतवर्माणमन्यांश्च यदुपुङ्गवान् ॥ ङ ॥
प्रेषयामास रक्षार्थे द्वारवत्याः ससैनिकान् ॥ च ॥
श्रीविजयध्वजटीका चतुरशीति तमोऽध्यायः समाप्तः ॥

श्रीशुक उवाच ।

तथा वसति गोविन्दे शक्रप्रस्थे महात्मनि ।
ससानुजे चैव नृपे कृतकृत्ये युधिष्ठिरे ॥ छ ॥
आकर्ण्य शाल्वः सङ्क्रुद्धो दमघोषसुतं हतम् ।
जरासन्धश्च सुहृदं राजसूयं कर्तुं कृतम् ॥ ज ॥

अयस्मयं अयोमयम् "अयस्मयादीनिच्छन्दसि" (१-४-२०) इति पाणिनिः ॥ ७ ॥

शङ्करादिभिपुञ्जात्मकत्वात्तमोधामेत्युच्यते ॥ क—म ॥

सूनृतैः सूनृताभिः ॥ घ—ङ ॥

ससैनिकान् ससेनानायकान् ॥ च ॥

तथा महोत्सवसमेतत्वेन शाल्वः सङ्क्रुद्धोऽभूदिति शेषः ॥ छ—ज ॥

आगत्य चान्तरिक्षे तं विमानमावसंस्तस्मिन्विमाने स्थितः युयुधे इत्यन्वयः सम्प्रहारप्रकारमाह—पुरीमिति ॥ ८—९ ॥

अट्टालोऽट्टः तोलिका वीथिका गृहपङ्क्तिमध्यपद्धतिरित्यर्थः । विहायस आकाशात् ॥ १० ॥

आसारो वेगवान्वर्षः तत्सहिताः शर्कराः क्षुद्रपाषाणाः चक्रवातो मण्डलवायुः ॥ ११ ॥

शं सुखम् ॥ १२-१९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वरमात्रसिद्धो नित्यो भविष्यतीति अनित्यत्वे कृतकार्यं प्रयोजकमिति मयं प्रत्याज्ञां दत्तवानित्याह—तथेति । गिरिशादिष्ट इति परपुरञ्जय इति शत्रूणां पुरजयशीलः स हि जानाति पुरं जेयमजेयं च अतो यथा अजेयं तथा करिष्यतीत्यर्थः । अतस्तादृशं पुरं निर्माय शाल्वाय प्रादात् तस्य नामस्वरूपे आह—सौभमयस्मयमिति । सुष्ठु भा येषां ते सुभाः तेषां सम्बन्धि पुरं सौभम् उत्कृष्टलोहनिर्मितं दृढं भवति ॥ ७ ॥

ततः कृतार्थो भूत्वा युद्धार्थं द्वारकां समागत इत्याह—स लब्ध्वेति । कामगम इच्छामात्रेणैव इष्टदेशप्रापकं तमोधाम अन्धकारप्रचुरं तस्मिन्नन्धकारस्तिष्ठतीति स न दृश्यते दुरासदं च केनापि प्राप्तुमशक्यम् एवं प्राप्तदेववरस्य भगवद्विरोध एव फलमिति द्वारवतीमेव ययौ वृष्णिकृतं वैरं रुक्मिणीहरणात्मकं शिशुपालवधात्मकञ्च पूर्वं दृष्टं श्रुतञ्च स्मरन् ॥ ८ ॥

ततो वैरेण यत्कृतवान् तदाह—निरुध्येति । सौभमात्रन्तु तस्य वरप्राप्तं सा तु सामान्निकयधिका अतस्तदा पुरीं निरुध्य उद्यानोपवनानि सर्वशो बभञ्ज ॥ ९ ॥

ततो दुर्गमध्येऽप्युपद्रवं कृतवान् इत्याह—सगोपुराणीति । गोपुरद्वारसहितानीति द्वाराण्यालक्ष्यशस्त्रवृष्टयो निपेतुरिति सम्बन्धः बभञ्जेति केचित् प्राकारा अट्टालास्तोलिकाश्च प्राकारापर्वताः तोलिकाः छिद्रपङ्क्तयः यत्र स्थितैः पाषाणाः क्षिप्यन्ते प्रतोलिका वा शोभास्थानानि विहाराविश्रामस्थानानि तानि विमानाग्र्यसहितानि तेषां भञ्जनार्थं तत्र स्थितपुरुषाणां पीडार्थं वा शस्त्रवृष्टयो निपेतुः साधारणमेतद्युद्धम् ॥ १० ॥

दैत्ययुद्धमाह—शिलाद्रुमा इति । पाषाणा वृक्षाश्च बहिरुत्पाटिताः अन्तः प्रक्षिप्ताः अशनयोपि तस्य वरप्राप्त्या आसुरमायया तदधीनाः तदा सर्पाश्च प्रासारशर्कराः प्रकृष्टासाररूपाः शर्कराः सूक्ष्मपाषाणवृष्टिं कृतवन्तः शिलाद्रुमास्तामसाः अशनयः सात्त्विकाः सर्पप्रासारशर्कराः राजसाः एवं त्रैविध्येन सर्व एव प्रकार उक्तः । ततः कृत्रिममाह—प्रचण्डश्चक्रवातः

प्रद्युम्नो भगवान् वीक्ष्य बाध्यमाना निजाः प्रजाः ।
माभैष्टेत्यभ्यधाद्वीरो रथारूढो महायशाः ॥ १३ ॥
सात्यकिश्चारुदेष्णश्च साम्बोऽक्रूरः सहानुजः ।
हार्दिक्यो भानुविन्दश्च गदश्च शुकसारणौ ॥ १४ ॥
अपरे च महेष्वासा रथयूथपयूथपाः ।
निर्ययुर्दंशिता गुप्ता रथेभाश्वपदातिभिः ॥ १५ ॥
ततः प्रववृते युद्धं शाल्वानां यदुभिः सह ।
यथाऽसुराणां विबुधैस्तुमुलं लोमहर्षणम् ॥ १६ ॥
ताश्च सौभपतेर्माया दिव्यास्त्रै रुक्मिणीसुतः ।
क्षणेन नाशयामास नैशं तम इवोष्णगुः ॥ १७ ॥
विव्याध पञ्चविंशत्या स्वर्णपुङ्खैरयोमुखैः ।
शाल्वस्य ध्वजिनीपालं शरैः सन्नतपर्वभिः ॥ १८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अभूदिति भ्रमं जनयतीति भिन्नतया च निरूपितं चक्रवातो वात्या रजसा रेणुसमूहेन दिशा आच्छादिताः एवं प्राकारसम्बन्धवितानां क्रियाविघातकं ज्ञानविघातकं च कृतवन्त इत्यर्थः ॥ ११ ॥

तेषामुपद्रवेण जातं फलमाह—इत्यर्द्यमानेति सौभेनाधमेन पीड्यमाना अतदर्हा यतः कृष्णनगरी अतिसुकुमारी शं नाभ्यपद्यत निरोधात् न भक्तिमार्गविरुद्धं वर्णनं राजभिति विश्वासार्थं पीडाया इयत्ता वक्तुं दृष्टान्तमाह—त्रिपुरेण यथा महीति ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सौभं सौभसंज्ञम् अयस्मयं लोहमयम् ॥ ७—९ ॥

तोलिका भित्तिः विहारान् क्रीडास्थानानि स शाल्वः ततश्च विमानश्रेष्ठात् सौभात् ॥ १०—१२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सौभसंज्ञम् पुरम् ॥ ७—९ ॥

स शाल्वः सगोपुराणि गोपुरसहितानि द्वारादीनि बभञ्जेति शेषः तोलिका कुड्यानि विमानाख्यात्सौभात् शकदृषदश्च निपेतुः ॥ १० ॥

शिलादयश्च निपेतुरित्यनुषङ्गः असारेण जलधारासम्पातेन सह शर्करा जलोपलाः ॥ ११—१२ ॥

भाषाटीका ।

शाल्व के वर को अङ्गीकार कर महादेवजी ने शत्रुन के पुरको जीतने वारे मयदैत्य को उक्त विमान बनाने की आज्ञा दई उस मयने लोहे से निर्मित पुरके समान सौभ नामा विमान को निर्माण करके शाल्व को दे दिया ॥ ७ ॥

इच्छाचारी और अन्धकार का धाम इसी से दुष्प्राप्य ऐसे विमान को प्राप्त होकर वह शाल्व यादवन के किये वैर का स्मरण करत द्वारकापुरी को जाता भया ॥ ८ ॥

हे भरतर्षभ ! बडी भारी सेनासे द्वारकापुरी को घेर कर शाल्व राजा सब उपवनों का और उद्यानों का भञ्जन करता भया ॥ ९ ॥

किले के दरवाजेन सहित अन्य दरवाजे महल अटाली पाश की भींति विहारस्थान इन सब का भी भञ्जन करता भया और उस श्रेष्ठ विमान ते शस्त्रन की वर्षा पडती भई ॥ १० ॥

तथा शिला वृक्ष बिजली सर्प जलके धारापात ओले भी पडते भए तथा अति भयङ्कर पवन का चक्र होता भया और धूलीसे सबदिशा आच्छादित हो गईं ॥ ११ ॥

हे राजन् ! इस प्रकार सौभ करके पीडाको प्राप्त भई श्रीकृष्ण की पुरी सुख को नहि प्राप्त हुई जैसे त्रिपुर करके भूमी सुख को नहि प्राप्त हुई रही ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तुमुलं व्याकुलम् लोमहर्षणं रौद्रम् ॥ १६ ॥
नैशं निशाभवं तम उष्णगुः सूर्य इव ॥ १७ ॥

श्रीवरस्वामिकृतभावार्थदीपिका।

चित्र विव्याधेति स्वर्णमयानि पुङ्खानि पृष्ठप्रान्ता येषां तैः अयो लोहं तन्मयानि मुखान्यग्राणि येषां तैः ध्वजिनीपालं सेनान्यं सन्नतानि निम्नानि पर्वाणि ग्रन्थयो येषां तैः ॥ १८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

बाध्यमानाः बाधितुमारभ्यमाणाः मा भैष्टेत्यभ्ययात् अब्रवीत् यतो भगवान् स्वयं भगवत एव तृतीयव्यूहः तथा लौकिकलीलया च धीरः शूरः तत्रापि महारथः योधवर्गश्रेष्ठः तत् किमिदमाश्चर्यं किन्तु तादृशस्यापि लीलाकौतुकमिति भावः ॥ १३ ॥

सात्यकिरिति युग्मकम् । चारुदेष्णः प्रद्युम्नानुजः अक्रूरानुजाः आसङ्गसारमेयादयश्चतुर्दश भानुविन्दः श्रीसत्यभामाज्येष्ठपुत्रो भानुरेव शुकः कश्चित् सारणः श्रीरोहिणीसुतः चकारात् सर्वेषां निर्याणे प्राधान्यापेक्षया पुरीरक्षार्थं श्रीबलदेववसुदेवोग्रसेनादयोऽभ्यन्तर एवासन्निति ज्ञेयं रथादीनां यथापूर्वं सेनाङ्गत्वे गुप्तिसाधनत्वे च ज्ञेयम् ॥ १४-१५ ॥

सांबानां साम्बदेवीयानां यद्वा साल्वस्य (स्व) तदीयानामित्यर्थः ॥ १६ ॥

रुक्मिण्याः श्रीमहिषीवर्गश्रेष्ठायाः सुतः ज्येष्ठपुत्रः इति माहात्म्यभरः सूचितः ॥ १७ ॥

स्वर्णपुङ्खैरित्यादिविशेषणैः शराणामाशुवेधकत्वं सूचितम् ॥ १८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उष्णगुः आदित्यः ॥ १७—२० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रद्युम्न इति । भगवान् षड्गुणसम्पन्नः प्रद्युम्नः बाध्यमानाः पीड्यमानाः निजाः स्वकीयाः प्रजाः प्रेक्ष्य इतीत्यनन्तरमुक्त्वेति शेषः अभ्ययादभ्यद्रवत् ॥ १३ ॥

तथा सात्यकिप्रभृतयोऽपरेच यदुवीरा महान्तः इष्वासाः धनूंषि येषां ते रथयूथपानामपि यूथपा दंशिताः कवचिताः रथकुञ्जराश्वैश्चतुर्भिरङ्गैर्गुप्ताश्च निर्ययुः द्वारकाया इति शेषः ॥ १४-१५ ॥

तत इति । युद्धं प्रवृत्तमभूत् यथा विबुधैर्देवैः सह असुराणां तद्वत् कथम्भूतं तुमुलं व्याकुलं रोमहर्षणं शृण्वतामपि रोमोद्गमम् ॥ १६ ॥

ताश्चेति । याः शस्त्रवृष्ट्यादयो मायास्ताः क्षणेन नाशयामास उष्णा गावः किरणाः यस्य सः सूर्यो नैशं निशासम्बन्धि तमोऽन्धकारं नाशयति तद्वत् ॥ १७ ॥

विव्याधेति । स्वर्णमयाः पुङ्खाः पृष्ठप्रान्ताः येषां तैरयो लोहं तन्मयानि मुखान्यग्राणि येषां तैः सन्नतानि निम्नानि पर्वाणि येषां तैः पञ्चविंशत्या शरैः साल्वस्य ध्वजिनीपालं सेनान्यं विव्याध ॥ १८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उष्णा गावो यस्य स उष्णगुः सूर्यः ॥ १७...१९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं महादेवप्रीत्यर्थं तस्योत्कर्षमुक्त्वा सर्वथा भक्तोपाय एव भगवत्परो भवतीति उपायान्तरं दूरीकर्तुं प्रद्युम्नादीनां रक्षार्थं युद्धमाह—प्रद्युम्न इति । तस्य प्रथमतो गमने हेतुर्भगवानिति भगवत्स्वरूपज्ञानमुपायज्ञानञ्च निजाः प्रजाः इति रक्षाभिनिवेशार्थमुक्तम् आदौ मनसा रक्षां विचारितवान् ततो वचनेनैवाप्याह—मा भैष्टेति । अभ्ययात् मुखतो मा भैष्टेत्युक्त्वा पश्चात् रथेन युद्धदेशमभ्ययादित्यर्थः ॥ १३ ॥

तथा सात्यकिरपि चारुदेष्णः प्रद्युम्नभ्राता अक्रूरो भ्रातृसहितः हार्दिक्यादयो यादवाः गदादयो भ्रातरः शुकसारणौ दूतौ परं भ्रातरौ ॥ १४ ॥

अपरेच यादवाः महेष्वासाः धनुर्धराः रथयूथपानामपि यूथपाः दंशिताः रथादिभिः वेष्टिता निर्ययुः फलप्रकारत्वात् लौकिकी भाषा फलं सर्वथानुभवसिद्धत्वात् लौकिकमेव अतः अतो महान्तः साधनसहिताः युद्धार्थं निर्गता इति स्वतः प्रतीकाराऽप्रवृत्तिः तद्भगवान् दूरीकरिष्यति लौकिकीभाषेयमिति न पूर्वविरोधः बलभद्रो विद्यमानोऽपि महादेवप्रेरितोऽयमित्युपेक्षत इति केचित् कश्चिदन्यत्र गत इति च ॥ १५ ॥

तत उभयोः शूरत्वख्यापनाय युद्धं वर्णयति—ततः प्रवर्तते युद्धमिति । बहुवचनं प्राणभृन्न्यायेन धामव्यपदेशन्यायेन वा उभयेषां युद्धे दार्ढ्यमाह यथाऽसुराणां विबुधैरिति असुराणां यथा देवैस्तुमुलमधिकं लोमहर्षणं प्रचण्डप्रहारयुक्तं यस्मिन् श्रुते रोमाञ्चो भवति ॥ १६ ॥

ततो मायया तेषां विभीषिका प्रदर्शिता तां प्रद्युम्नो निवारितवानित्याह—ताश्च सौभपतेर्माया इति । दिव्यास्त्रैराग्नेयादिभिः नारायणास्त्रेण पाशुपतेन वा मूलोच्छेदमकृत्वा अप्राकृतबुद्ध्या युद्धं करोतीति अपरितोषेणाह—रुक्मणीसुत इति । यदर्थं कृतवान् तज्ज्ञातमित्याह—क्षणेन नाशयामासेति नैशं तमो रात्रेः सम्बन्ध्यन्धकारः सूर्यस्य सहजनिराकार्यः तेन निरायासेन निराकरणमुक्तम् ॥ १७ ॥

ततो विशेषयुद्धमाह—विव्याध पञ्चविंशत्येति । पञ्चविंशतितत्त्वात्मकाः सर्वे सर्वभावेन विद्धा इति ज्ञापयितुं साल्वस्य ध्वजिनीपालं सेनापतिं शरैर्विव्याध स्वर्णपुङ्खैरिति प्रत्यञ्चातः शीघ्रनिर्गमनार्थम् अयोमुखैरिति उत्तमवेधार्थं मध्ये शराः सन्नतपर्वाणः ॥ १८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रद्युम्नो भगवान् वीक्ष्येति युद्धार्थं बलभद्रे निर्गमिष्यति

शतेनाताडयच्छाल्वमेकैकेनास्य सैनिकान्।
दशभिर्दशभिर्नेतॄन् वाहनानि त्रिभिस्त्रिभिः ॥ १९ ॥
तदद्भुतं महत्कर्म प्रद्युम्नस्य महात्मनः।
दृष्ट्वा तं पूजयामासुः सर्वे स्वपरसैनिकाः ॥ २० ॥
बहुरूपैकरूपं तद्दृश्यते न च दृश्यते।
मायामयं मयकृतं दुर्विभाव्यं परैरभूत् ॥ २१ ॥
क्वचिद्भूमौ क्वचिद्व्योम्नि गिरिमूर्ध्नि जले क्वचित्।
अलातचक्रवद्भ्राम्यत्सौभं तद्दुरवस्थितम् ॥ २२ ॥
यत्र यत्रोपलक्ष्येत ससौभः सहसैनिकः।
शाल्वस्ततस्ततोऽमुञ्चञ्छरान् सात्वतयूथपाः ॥ २३ ॥
शरैरग्न्यर्कसंस्पर्शैराशीविषदुरासदैः।
पीड्यमानपुरानीकः शाल्वोऽमुह्यत्परेरितैः ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

सति वयमेव शाल्वं वधिष्यामस्त्वया तु सुखेनैव स्थेयमित्युक्त्वा साम्बादिभिः सह प्रद्युम्न एव निर्जगामेति ज्ञेयम् ॥ १३—१६ ॥

नैशं निशाभवम् उष्णगुः सूर्यः ॥ १७ ॥

स्वाजिनीपालं सेनान्यं सन्नतानि निम्नानि पर्वाणि ग्रन्थयो येषां तैः ॥ १८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अभ्ययात् अभ्यद्रवत् ॥ १३—१५ ॥

तुमुलं व्याकुलम् ॥ १६—१८ ॥

---

भाषाटीका।

महायश वारा रथ पर बैठा शूर वीर प्रद्युम्न भगवान् अपनी प्रजानको पीडित देख कर बोला, कि-आप लोग भय मतना करो ॥ १३ ॥

सात्यकि चारु देष्ण साम्ब अनुज सहित अक्रूर हार्दिक्य भानुविन्द गद और शुक सारण ॥ १४ ॥

इन के सिवाय अन्यभी महा धनुष धारी रथ समूहके पालन करने वारेन के समूह केभी रक्षा करने वारे महा रथोत्रन कवच धारण किये रथ हस्ती अश्व पयादेन से रक्षित होकर युद्ध के वास्ते द्वारकापुरी से निकसते भए ॥ १५ ॥

पश्चात् जैसे पहले असुरनको देवतान के साथ युद्ध भया रहा तैसेहि शाल्व और उस के सेना वारेनका यादवन के साथ संकुल तथा देखने सुनने वारेन के रोमांच खडे जिस से होजावें ऐसा युद्ध प्रवृत्त भया ॥ १६ ॥

रुक्मिणी पुत्र प्रद्युम्न ने दिव्य अस्त्रों से शाल्वकी उन मायानका क्षण मात्र में इस प्रकार नाश कर दिया कि जैसे रात्रि के अन्धकारको सूर्य्य भगवान् नाश कर देते हैं ॥ १७ ॥

सुवर्ण के पुंख वारे लोहेकी भाल वारे नीची गाँठ वारे पचीस बाणों से प्रद्युम्नजी शाल्व के सेनापतिका बेधन करते भए ॥ १८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

सैनिकान् भटान् नेतॄन् सारथीन् ॥ १९ ॥

स्वपरसेनयोर्वर्तमानाः सर्वे पूजयामासुः सन्मानितवन्तः ॥ २० ॥

कदाचिद्बहुरूपं कदाचिदेकरूपं कचिद्दृश्यते कचिन्न दृश्यते एवं दुर्विभाव्यं दुर्वितर्क्यमभूत् ॥ २१ ॥

किञ्च क्वचिदिति एवं तद्दुरवस्थितञ्चाभूत् ॥ २२—२३ ॥

अग्निवद्दाहकोऽर्कवद्दुष्प्रसर्वतः संस्पर्शो येषां तैः आशीविषवदेकदेशस्पर्शमात्रेण मारकत्वाद्दुरासदैर्दुःसहैः पीड्यमानं पुरमनीकानि च यस्य सः परैर्यदुभिरीरितैर्मुक्तैः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एकैकेनेति। प्रत्येकमेकैकेन शरेणेत्यर्थः। एवमग्रेपि ॥ १९ ॥

अद्भुतं लोकातीतम् अतो महत् सर्वतः श्रेष्ठं तच्च तस्य नात्यद्भुतमित्याह महात्मनः अपरिच्छिन्नशक्तेरित्यर्थः ॥ २० ॥

तच्च श्रीप्रद्युम्नभयात्तत्सौभमवश्यमस्थिरञ्चाभूदित्याह बहीति द्वाभ्याम् ॥ २१ ॥

क्वचित्कदाचित् गिरेः रैवतकस्य मूर्ध्नि ॥ २२ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

क्वचिद्वोः क्वचित्त्रिदपि लक्ष्यते ॥ २३ ॥

अग्नयः दाहकतया तद्रूपत्वेन रूपिता इत्यर्थः । अर्कसंस्पर्शा अर्कस्येव रश्मिद्वारा सर्वत्र संस्पर्शसंतापमयो येषां ते च तैः ॥ २४ ॥ ०

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मयामयम् आश्चर्यं द्रव्यमयं मूर्छित इति भयादपक्रमणं अकीर्तिकरं मत्तु मूर्च्छाधामित्यर्थः ॥ २१—२३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

साल्वम् शतेन च बाणानामिति शेषः । अताडयत् सैनिकान् प्रद्युम्न एकैकेन शरेणाताडयत् नेतॄन्वान्तरसेनानायकान् सारथीन् वा दशभिर्दशभिः शरैर्वाहनानि गजाश्वरथादीनि त्रिभिस्त्रिभिः शरैरताडयत् ॥ १९ ॥

तदिति । तत्प्रद्युम्नविक्रमात्मकं महदतिकौशलं कर्म दृष्ट्वा स्वपरसैन्ययोः वर्तमानाः सर्वे ते प्रद्युम्नं पूजयामासुः बहु मेनिरे ॥ २० ॥

बहुरूपेति । तन्मयकृतं सौभं कश्चिद्बहुरूपं कश्चिदेकरूपं कश्चिद्दृश्यते कश्चित्तु न दृश्यते एवं परैर्दुर्विभाव्यमवितर्क्यमभवत् ॥२१॥

क्वचिद्भूमाविति । एवं दुरवस्थितमनवस्थितमभूत् ॥ २२ ॥

यत्र यत्रेति । उपलक्ष्येत दृश्येत सात्वतयूथपाः यदुवीराः ॥२३॥

शरैरिति । अग्निवद्दाहकोऽर्कवत् संशोषकः युगपत्सर्वतः संस्पर्शो येषां तैराशीविषवत् स्पर्शमात्रेण दुरासदैः दुस्सहैः परेरितैर्यदुवीरप्रयुक्तैः शरैः पीड्यमानं पुरमनीकानि च यस्य सः साल्वोऽमुह्यत् मुमोह ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अस्य प्रद्युम्नस्य ॥ २०—२१ ॥

दुरवस्थितं नैकत्र स्थितमभूदिति शेषः ॥ २२ ॥

तस्य सौभस्य सैनिकः सेनासहितः शाल्वः यत्रयत्रोपलक्ष्येत सात्वतयूथपाः ततः शरानमुञ्चन्नित्यन्वयः ॥ २३ ॥

इति परैः शरैः प्रपीड्यमानः पुरस्थितानीकः ॥ २४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः शतेन शाल्वमताडयत् एकैकेन चास्य सैनिकान् दशभिः दशभिः सारथीन् अश्वांस्त्रिभिः त्रिभिः ॥ १९ ॥

सर्वमेकेन सर्वेषां प्रहारः अत्याश्चर्यत्वात् शत्रुभिरपि स्तुत इत्याह—तदद्भुतमिति । अद्भुतमाश्चर्यकरं मन्त्रसामर्थ्यात् पितुः सामर्थ्याद्वा फलदिति एवं वारयन्ति महात्मन इति स्वयमेव महानुभावः अत एवाश्चर्यं स्वस्य परस्य शत्रोश्च सैनिकाः ॥ २० ॥

ततः शाल्वः स्वयं युद्धं करिष्यतीति वक्तुं तस्य स्वरूपमाह—बहुरूपैकरूपमिति । कदाचित् बहुरूपं दृश्यते कदाचिदेकरूपं कदाचित् दृश्यते कदाचिन्न दृश्यत इति प्रमाणप्रमेययोरपि वैलक्षण्यमुक्तं तत्र हेतुः मायामयमिति तर्हि दिव्यास्त्रेण नाशं यास्यतीति अत आह—मयकृतमिति । तर्ह्यन्यैः तादृशैः सूक्ष्मेक्षितया तन्नाशोपायो ज्ञातो भविष्यतीत्याशङ्क्याह—परैरन्यैर्दुर्विभाव्यं तर्कितुमशक्यमभूदित्यर्थः ॥ २१ ॥

तस्य देशोपि दुर्लक्ष्य इत्याह—क्वचिद्भूमाविति । लक्ष्यं दृष्ट्वा पश्चाच्छस्त्रप्रयोगः तत्स्थिरे चरे च भवति चरेच लक्ष्यभूमिः ज्ञातुं शक्या भवति अस्य तु सर्वमेवाशक्यमिति लक्षणमात्रव्यवधानेपि विरुद्धे देशान् वर्णयति आकाशभूम्योरिति व्यवधानम् एवं गिरिमस्तकजलयोरपि अलातचक्रवत् भ्राम्यच्च भवति तेनाविद्यमानस्थलेपि दृश्यत इति तन्निराकरणार्थं न शस्त्रप्रयोगः कर्तुं शक्यः केनचिन्मन्त्रादिना तथात्वे तत्प्रतीकारेण प्रतिकर्तव्य इति शङ्कां वारयति तत्सौभं स्वभावत एव दुरवस्थितमिति ॥ २२ ॥

एवं माहात्म्यमुक्त्वा तादृशमपि यादवैर्निराक्रियत इत्याह—यत्रयत्रेति । उपलक्षणविधयापि यत्र प्रतीयेत ससौभः स शाल्वः सैनिकसहितश्च ततस्ततः सात्वतयूथपाः शरानमुञ्चन् तत इति तस्मादेशात् शाल्वस्य गमनं सूचयति अन्यथा तत्र तत्रेत्युक्तं स्यात् ॥ २३ ॥

एवं सर्वतः शरप्रक्षेपे सूक्ष्मोपि गन्तव्यदेशो नष्ट इति सौभं सैनिकाश्च शाल्वस्य पीडिता जाता इत्याह—शरैरग्न्यर्कसंस्पर्शैरिति । स्पर्शे अग्न्यर्काभ्यां तुल्यता पर्यवसाने आशीविषतुल्यता अत एव दुरासदैः अप्रतीकार्यैः शरैः पीड्यमानपुरमनीकाः सैनिकाश्च यस्य एतादृशः शाल्वः अमुह्यत तर्हि पलायनं तेषां प्रार्थना वा कर्तव्येति तत्राह परेरितैरिति शत्रुप्रेरिता एते बाणा अतः शत्रुजयो मरणं वा उपायः नान्य इति मोहं प्राप्तवान् ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

नेतॄन् सारथीन् ॥ १९ ॥

तत् सौभम् ॥ २०—२३ ॥

अग्न्यर्कयोरिव स्पर्शो येषां तैः आशीविषैः सर्पैरिव दुरासदैः दुस्सहैः पीड्यमानं पुरम् अनीकानि च यस्य सः परेर्यदुभिरीरितैर्मुक्तैः ॥ २४—२५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नेतॄन् सारथीन् ॥ १९—२० ॥

माया अद्भुतरूपा मयशक्तिस्तन्मयं तया रचितम् अत एव दुर्विभाव्यमतर्क्यम् ॥ २१ ॥

दुरवस्थितमभूत् ॥ २२—२३ ॥

परैः शत्रुभिरीरितैः शरैः पीड्यमानं पुरमनीकश्च यस्य

शाल्वानीकपशस्त्रौघैर्वृष्णिवीरा भृशार्दिताः ।
न तत्यजू रणं स्वं स्वं लोकद्वयजिगीषवः ॥ २५ ॥
शाल्वामात्यो द्युमान्नाम प्रद्युम्नं प्राक्प्रपीडितः ।
आसाद्य गदया मौर्व्या व्याहत्य व्यनदद्बली ॥ २६ ॥
प्रद्युम्नं गदया शीर्णवक्षस्स्थलमरिन्दमम् ।
अपोवाह रणात्सूतो धर्मविद्दारुकात्मजः ॥ २७ ॥
लब्धसंज्ञो मुहूर्तेन कार्ष्णिः सारथिमब्रवीत् ।
अहो असाध्विदं सूत यद्रणान्मेऽपसर्पणम् ॥ २८ ॥
न यदूनां कुले जातः श्रूयते रणविच्युतः ।
विना मत्क्लीबचित्तेन सूतेन प्राप्तकिल्बिषात् ॥ २९ ॥
किं नु वक्ष्येऽभिसङ्गम्य पितरौ रामकेशवौ ।
युद्धात्सम्यगपक्रान्तः पृष्टस्तत्रात्मनः क्षमम् ॥ ३० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सः मुह्यत् विस्मृतकार्याकार्योऽभूत् कथम्भूतैः अग्निवत्सद्यो मारकत्वात् अर्कवदनिवार्यत्वात् स्पर्शो येषां तैः आशीविषवदेकदेशस्पर्शमात्रेण मारकत्वाद्दुरासदैः दुस्सहैः ॥ २४ ॥

भाषा टीका ।

और सौ बाणों से शाल्वको ताडना करते भए तथा एक २ बाण से शाल्व के सेना वारेनको ताडना करते भए और दश २ बाणों से सेना पतीनको ताडना करते भए तथा तीन २ बाणों से वाहनोंको ताडना करते भए ॥ १९ ॥

महा बुद्धिमान प्रद्युम्न के उस अद्भुत कर्मको देख कर अपनी पराई सेना के सबहि जन प्रद्युम्न की बडाई करते भए ॥ २० ॥

मयदैत्यका किया भया वह शाल्वका आश्चर्य रूप विमान कभी अनेक रूप कभी एक रूप कभी तो दीखने लगे और कभी नहि दीखे इस प्रकार अन्य पुरुषोंको अतर्कणीय हो-जाता भया ॥ २१ ॥

वह सौभनाम विमान कभी भूपिपर कभी आकाश में कभी पर्वत के शिखर पर कभी जलमें जैसे लुका के फिराने चक्राकार होजाता है तैसेहि वह विमान भ्रमण करत एक स्थान में स्थित नहि रहा ॥ २२ ॥

सौभविमान सहित सेनापति सहित शाल्वराजा जहां जहां दीखा तहां तहांहि यादव समूह के रक्षक सेनापति बाण छोडते भए ॥ २३ ॥

अग्नि के सदृश दाह करने वारे सूर्य्य के तुल्य सर्वत्र एक काल में अति प्रचण्ड स्पर्श वारे सूर्य के समान दुःसह यादवन के चलाए भए बाणों से जिसका विमान और सेना पीडित होगए वह शाल्वराजा मोहको प्राप्त होगया ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

भृशार्दिता अपि स्वं स्वं रणं स्वां स्वां युद्धभूमिम् ॥ २५ ॥
मौर्व्या कार्ष्णायसमय्या व्याहत्य प्रहृत्य ॥ २६ ॥
अपोवाहाऽन्यतो निनाय ॥ २७—२८ ॥
मत् मत्तो क्लीबं चित्तं यस्य तेन त्वया सूतेन ॥ २९ ॥
पितरौ रामकृष्णावभिसङ्गम्य तत्पार्श्वं गत्वा ताभ्यां पृष्टः स्वयोग्यं किन्तु वक्ष्यामीति ॥ ३० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

लोकद्वयस्य जिगीषवः क्षात्रधर्मप्रवर्त्तनार्थं यशोधर्मप्रवर्त्तनार्थं यशोधर्माद्यपेक्षकास्सन्तः यद्वा जगद्धितार्थं निजकीर्तिविस्तारेणोर्ध्वाधोलोकद्वयवशीकरणेच्छव इत्यर्थः ॥ २५ ॥

प्रद्युम्नाद्धेतोः प्राक् प्रकर्षेण पीडितः अस्त्रप्रहारेण दुःखितः विशेषेणाहत्य प्रहृत्य ॥ २६ ॥

अशीर्णवक्षःस्थलमप्यपोवाह किमर्थम् अरिन्दमं क्षणं विश्रम्य निजारिं दमयितुमित्यर्थः । तथापि रणादपवाहनमयुक्तं तत्राह धर्मवित् सारथिः रथिरक्षणधर्मो जानन् यतो दारुकस्यात्मजः ॥ २७ ॥

कार्ष्णिः तदपत्यत्वेन तद्वल्लीलावैचित्र्याकर्षिचित्त इत्यर्थः । अतो मोहाद्यनुकरणं सर्वं सङ्गच्छतेऽति भावः । अहो इति खेदे मे मम श्रीयादवेन्द्रसुतस्येत्यर्थः ॥ २८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

क्लीबं पौरुषहीनं चित्तं यस्य तेन सूतेन त्वया हेतुना प्राप्तं त्वया किल्बिषं पापं येन तस्मात् ॥ २९ ॥

वैरिवधादिना स्वान् रमयतीति रामः केशवश्च हेलया केशिसूदनात्, तावपि तयोर्महावीर्यत्वं सूचितं धर्मादिकद्वयकृत्यत्वमुक्तम् आत्मनः क्षमं योग्यं कर्म ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

साल्वेति साल्वसैन्यपानां शस्त्रौघैः भृशं पीडिता अपि यदुवीराः स्वं स्वं रणं रणभूमिं न तत्यजुर्न त्यक्तवन्तः तत्र हेतुत्वेन विशिनष्टि-लोकद्वयमपि जेतुमिच्छवः ॥ २५ ॥

साल्वामात्य इति । द्युमानाम द्युमदाख्यः बली मैर्व्या कार्ष्णायसमय्या गुर्व्येति पाठान्तरं व्याहृत्य प्रताड्य व्यनदत् ॥२६॥

प्रद्युम्नमिति । गदया तत्प्रहारेण विदीर्णं वक्षःस्थलं यस्य तं प्रद्युम्नं रणाङ्गणस्थानादपोवाह अपसारयामास तत्र हेतुत्वेन सूतं विशिनष्टि-धर्मवित् सूतः कृच्छ्रगतं रथेऽवस्थितम् इत्येवम्विधधर्मवित् दारुकस्य कृष्णसारथेरात्मजश्च ॥ २७ ॥

लब्धसंज्ञ इति । तावन्मूर्छितस्ततो मुहूर्तेन लब्धा संज्ञा चेतना येन सः कार्ष्णिः प्रद्युम्नः सारथिमुवाच, उक्तिमेवाह—अहो इति सार्द्धैश्चतुर्भिः । हे सूत ! इदमसाधु किं तन्मम रणादपसर्पणम् इति यत् ॥ २८ ॥

कुतस्तस्यासाधुत्वमत आह—नेति । यदूनां कुले जातः कोपि रणाद्विच्युतः पलायितः न श्रूयते किम्पुनर्न दृश्यत इति भावः । क्लीबमधृष्टं चित्तं यस्य तेन त्वया सूतेन हेतुना प्राप्तं कल्मषमयशो येन तस्मान्मत्तः विनाऽन्यः कोपि रणविच्युतो न भूयात् इति सम्बन्धः ॥ २९ ॥

किञ्च, किन्त्विति । रामकेशवावभिसङ्कम्य तत्पार्श्वं गत्वेत्यर्थः तातौ पूज्यौ व्याख्याप्य युद्धादपक्रान्तः पलायितोऽहमात्मनः क्षमं योग्यं किन्नु वक्ष्यामि ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शाल्वस्यानीकपाः सेनानायकाः तेषां शस्त्राणामोघैः ॥२५-२६॥

"रथिनि प्राणसन्दिग्धे सारथीरथमाहरेत् ।
जीवयेद्युक्तः साधु युद्धकर्मविशारदः ॥

इति युद्धधर्मवित् ॥ २७ ॥

अपसर्पणम् अपसरणम् ॥ २८ ॥

कुतोऽसाध्वित्यतस्तदाह—नेति मह्लिना ॥ २९ ॥

धर्मसाधनायुद्धादपगतोऽहं पितृभ्यां पृष्टः तत्र पितरौ रामकेशवौ मया कृतमक्षमं किंतु कथं नु वक्ष्य इत्यन्वयः ॥ ३० ॥

---



श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं यादवानां पौरुषमुक्त्वा शाल्वस्य सैनिकानामपि पौरुषमाह—तुल्यत्वाय शाल्वानीकपशस्त्रौघैरिति शाल्वस्याप्यनीकपाः सेनारक्षकाः तेषाञ्च शस्त्रौघाः तैः सर्वशः पीडिता अपि वृष्णिवीराः स्वं स्वं रणं न तत्यजुः अनेन भगवत्कृपया युद्धं जायत इति लक्ष्यते अपरित्यागे हेतुः लोकद्वयजिगीषव इति जये मरणे वा इह लोके कीर्त्तिः परलोके स्वर्ग इति अतो लोकद्वयजयार्थमपरित्यागः ॥ २५ ॥

एवं साधारणयुद्धमुक्त्वा प्रधानयुद्धमाह—शाल्वामात्य इति । अमात्यो मुख्यमन्त्री शाल्वतुल्यः नाम्ना द्युमान् कान्तियुक्तश्च पूर्वं प्रद्युम्नात्पीडितः सन् आसाद्य निकटे आगत्य मौर्व्या कृष्णलोहनिर्मितया तृणविशेषबद्धया वा गदया व्याहत्य ताडयित्वा व्यनदत् शब्दं कृतवान् जितं जितमिति यतो बली गदायां बलं प्रधानं तेन महती पीडा जातेति सूचितम् ॥२६॥

ततो यज्जातं तदाह-प्रद्युम्नमिति । शरीरस्यैव महती पीडा जाता यः कश्चनाप्यपकर्षः स सर्वोपि महादेवसम्माननार्थः द्युमतः प्रतिज्ञाय गदया शीर्णं वक्षःस्थलं यस्येति स्वभावतोऽप्यप्रयोजकत्वं वारयति--अरिन्दममिति । तदा रणस्थानात् तस्य सूतः अपोवाह दूरे नीतवान् सोपि शत्रुपक्षपातीति शङ्काव्युदासार्थमाह—दारुकात्मज इति । तस्य भयाभयं वारयति धर्मविदिति ॥ २७ ॥

ततः किं जातमित्याकाङ्क्षायामाह—लब्धसंज्ञो मुहूर्तेनेति । मुहूर्तमात्रं मूर्छितः प्रद्युम्नस्य रुक्मिणीपुत्रत्वात् मातुलादिपक्षपाताद्वा ततो भगवदनुग्रहात् मुहूर्तानन्तरं लब्धसंज्ञः यतः कार्ष्णिः कृष्णपुत्रः अग्रे सारथिं दृष्ट्वा अनभिप्रेतं पलायनमिति बोधयन्नब्रवीत्—अहो इति । तस्य तिरस्कारवचनम् इदं मम अपसर्पणम् अत्यन्तमसाधु सर्वत्र निन्दितं सूतेति सम्बोधनं परिज्ञानार्थम् ॥ २८ ॥

ननु लोके पलायमाना अपि शूरा दृश्यन्ते तत्राह—न यदूनां कुले जात इति । रणस्थानादपसरणं न श्रुतपूर्वं मरणं वा जयो वेति न तृतीयः पक्षः नन्वत्र चेज्जातं तदापि व्याप्तिभङ्गेनेति आशङ्कायामाह—विनामत्क्लीबचित्तेन सूतेनेति अहमेवैकः सोपि सूतेन तथा जातः सूतोप्यत्रैव तथा जातः क्लीबचित्त इति अतः प्राप्तकल्मषोऽहम् ॥ २९ ॥

ननु, किमेतावता तत्राह—किन्नु वक्ष्य इति । पितरौ रामकेशवावभिसङ्गम्य नु इति वितर्के किं वक्ष्ये वचने प्रकारः कोपि नास्तीति ननु प्रहार एव वर्तते तत्राह युद्धात्सम्यगपक्रान्त इति धर्मादनपेतं युद्धम् अतस्तस्मादपक्रमः अधर्मो भवति तर्हि तूष्णीं स्थातव्यमिति चेत्तत्राह—पृष्ट इति । तर्हि अशक्तिर्वक्तव्येति चेत् आत्मनः क्षममिति नहि मया अशक्तिर्वक्तुं शक्या ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रद्युम्नाद्धेतोः प्राक् प्रथमं पीडितः प्रद्युम्नप्रयुक्तेनास्त्रेण बाधितः मौर्व्या कार्ष्णायसमय्या ॥ २६ ॥

व्यक्तं मे कथयिष्यन्ति हसन्त्यो भ्रातृजामयः।
क्लैब्यं कथं कथं वीर तवान्यैः कथ्यतां मृधे ॥ ३१ ॥

सारथिरुवाच।

धर्मं विजानताऽऽयुष्मन् कृतमेतन्मया विभो।
सूतः कृच्छ्रगतं रक्षेद्रथिनं सारथिं रथी ॥ ३२ ॥
एतद्विदित्वा तु भवान् मयाऽपोवाहितो रणात्।
उपसृष्टः परेणेति मूर्छितो गदयाऽऽहतः ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे
सौभवधो नाम
षट्सप्ततितमोऽध्यायः ॥७६॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

तं प्रद्युम्नं शीर्णवक्षस्स्थलमिति प्रकृत्या द्युमतो गदया चिदानन्दमयवक्षस्तस्य शीर्णत्वासम्भवेपि लीलाशक्त्यैव तस्य युद्धोत्साहरसवर्द्धनार्थमावेशमात्रे उत्पादिते तं गदयैव शीर्णवक्षःस्थलं मत्वा अपोवाह—अन्यत्र निनाय यतो धर्मवित् "सूतः कृच्छ्रगतं रक्षेत्" इति धर्मज्ञः वस्तुतस्तु प्रकारप्रक्षेपेण सच्चिदानन्दविग्रहत्वलक्षणं तस्य धर्मं न वेत्तीत्यधर्मवित् तच्च तदज्ञानं तस्य परमसुखकरमेव यतो दारुकात्मजः "परीक्षितिं भवेद्रागो दारुकस्य तथोद्धवे" इति श्रीमत्किरसामृताकमहाक्षेमवतो दारुकस्यात्मजः प्रद्युम्नविषयकमहास्नेहवानिति भावः ॥ २७ ॥

ततश्च लब्धा सम्यक् संज्ञा अनेन युद्धस्थलादहमपसारित इति ज्ञानं येन सः कृतावधान इत्यर्थः। यद्वा लब्धा संज्ञा अर्थसूचना अपसारणव्यापारेण स्वमूर्च्छाज्ञापना सूतकृता येन सः अत एव तं प्रति कुपितः सन्नब्रवीत् अन्यायिनि "संज्ञा स्याच्चेतनानामहस्ताद्यैः स्वार्थसूचना" इत्यमरः। मुहूर्तेन क्षणेन ॥२८॥

सूतेन त्वया हेतुना प्राप्तं किल्बिषं कलङ्को येन तस्मात् ॥ २९ ॥

क्षमं योग्यम् ॥ ३० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

रणं युद्धस्थानम् ॥ २५—२६ ॥

अपोवाह अपमार्ग्यामास ॥ २७ २८ ॥

क्लीबमधृष्टं चित्तं यस्य तेन प्राप्तकिल्बिषात् मत् मत्तो विना रणाद्विच्युतस्यकयुद्धस्थानः न श्रूयते ॥ २९—३० ॥

भाषा टीका।

शाल्व के सेनापियों के बाण अवाहों से अत्यन्त पीड़ितभी होगए तथापि इस लोक में विजय व कीर्ति तथा मरने पर स्वर्ग प्राप्ति इस प्रकार दोनों लोक के विजयकी कांक्षा वारे यदुवीर अपने अपने रणको नहिं छोडते भए ॥ २५ ॥

शाल्वका प्रधान मंत्री द्युमान् नामी वली पहले प्रद्युम्न से पीडित भया रहा इसी कारण निकट में आय कर मुर जाति के लोह से निर्मित गदा से प्रद्युम्न के ऊपर प्रहार करके गर्जना करता भया ॥ २६ ॥

वैरीनको दमन करने वारे प्रद्युम्नका वक्षस्थल गदा से भग्न होगया उनको दारुकका पुत्र धर्मका ज्ञाता सूत रणभूमि से बाहिर निकाल लेगया ॥ २७ ॥

एक मुहूर्त में होस होने पर श्रीकृष्ण पुत्र प्रद्युम्न सारथि के प्रति बोला कि– हे सूत ! जो मेरा रण से भागना भया सो अत्यन्त अनुचित भया ॥ २८ ॥

कायर चित्त वारे तू सूत के निमित्त से अपकीर्तिको प्राप्त भया मेरे विना अन्य पुरुष यदुवंशीन के कुल में रणते भगा भया नहि सुना जाता है ॥ २९ ॥

मुझते सम्यक् भगा भया मैं श्रीरामकृष्ण पितान के पास जाय कर उनोंने मोसे पूछा तो वहां अपनो कौनसे योग्य कर्मको कहूंगा ॥ ३० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

भ्रातृजामयो भ्रातृभार्याः व्यक्तं निश्चितं क्लैब्यं कथयिष्यन्ति तत्कथनमनुकरोति–कथं कथमिति ॥ ३१ ॥

विभो हे समर्थ ! एतदपसर्पणम् धर्ममाह—सूत इति ॥ ३२ ॥

अपोवाहितो ऽपनीतः उपसृष्ट उपसर्गं पीडां प्राप्त इति कृत्वा यतः परेण शत्रुणा गदया हतस्त्वं मूर्छितो निद्रसंज्ञतां गतो भवानिति ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

भ्रातृजामयो भ्रातृभार्याः हेवीर ! अन्यैः सह मृधे तव हृत्वं कथं कथमभूत् विस्मये हित्वम ॥ ३१-३२ ॥

अपोवाहितः अपनीतः उपसृष्टः पीडित इत्यर्थः । यतो गदया हतो भवानधुना मूर्च्छितोऽभूत् इति ज्ञात्वैव मया अपोवाहितः ततश्च धिक्सूत मां मैव मयमासीरिति प्रत्युक्तिर्नैया ॥ ३३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
षट्सप्ततितमोऽध्यायो दशमेऽजनि सङ्गतः ॥ ७६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भ्रातृणां जामयो भार्याः ॥ ३१-३२ ॥

परेण शत्रुणा गदया हतः अत एव स्पृष्टः रथोपस्थं पतितो मूर्च्छितो नष्टसंज्ञः अतः सूतः कृच्छ्रगतं रथिनं रक्षेदिति धर्मं विचिन्त्य मयाऽपोवाहितोऽपनीतः ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षट्सप्ततितमाऽध्यायार्थप्रकाशः ॥७६॥

---

भाषा टीका ।

और मेरी भौजाई हँसती हुई यह मिलिकहि कौनसी कि हे वीर ! युद्ध में शत्रुओं से तुमको व्याकुलता किस प्रकार भई जिस कारण तुम रण से भग दिये सो कहि- येगा ॥ ३१ ॥

सूत उवाच ।

हे आयुष्मन् ! हे विभो ! धर्म के द्वारा मैंने रण से आप को बाहिर निकाल दिया है क्योंकि यह धर्म है कि जो रथी कष्टको प्राप्त होजावेतो उसकी रक्षा सूत करे और जो सूत कष्टको प्राप्त होजावे तो उसकी रक्षा रथी करे ॥ ३२ ॥

शत्रुने आपको गदाका प्रहार किया उस से मूर्छित होकर आप पीडित होगए यह जान कर मैने आपको रण से बाहिर निकाल दिया ॥ ३३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धमें छिहत्तरके अध्यायकी
भाषाटीका समाप्ता ॥ ७६ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

## सप्तसप्ततितमोऽध्यायः ।

---

श्रीशुक उवाच ।

अ० पाठ: (इति सूतोदितां वाणीमाकर्ण्य यदुनन्दनः ।
पुनरात्तप्रहरणः सूतमाह रणाङ्गणे ॥०॥)
(१) स उपस्पृश्य सलिलं दंशितो धृतकार्मुकः ।
नय मां द्युमतः पार्श्वं वीरस्येत्याह सारथिम् ॥ १ ॥
(२) विधमन्तं स्वसैन्यानि द्युमन्तं रुक्मिणीसुतः ।
प्रतिहत्य प्रत्यविध्यन्नाराचैरष्टभिः स्मयन् ॥ २ ॥
चतुर्भिश्चतुरो वाहान् सूतमेकेन चाहनत् ।
द्वाभ्यां धनुश्च केतुं च शरेणान्येन वै शिरः ॥ ३ ॥
(३) गदसात्यकिसाम्बाद्या जघ्नुः सौभपतेर्बलम् ।
पेतुः समुद्रे सौभेयाः सर्वे सञ्छिन्नकन्धराः ॥ ४ ॥
एवं यदूनां शाल्वानां निघ्नतामितरेतरम् ।
युद्धं त्रिनवरात्रं तदभूत्तुमुलमुल्बणम् ॥ ५ ॥
इन्द्रप्रस्थं गतः कृष्ण आहूतो धर्मसूनुना ।
राजसूयेऽथ निर्वृत्ते शिशुपाले च संस्थिते ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सप्तसप्ततितमे मायामायाविचक्षणः ।
कृष्णेनाऽऽगत्य शाल्वस्तु हतः सौभश्च चूर्णितम् ॥

दंशितः सन्नद्धः ॥ १ ॥
विधमन्तं क्षपयन्तं प्रतिहत्य प्रतिरुध्य ॥ २ ॥
अष्टानां विनियोगमाह—चतुर्भिरिति ॥ ३ ॥
सौभेयाः सौभस्थाः ॥ ४ ॥
नवानां रात्रीणां समाहारो नवरात्रम् त्रयाणां समाहारस्त्रिनवरात्रम् सप्तविंशतिमहोरात्राणीत्यर्थः । तुमुलमाकुलम् उल्बणं घोरम् ॥ ५ ॥
पुरमप्युपद्रवति-इन्द्रप्रस्थं गत इत्यादिना ॥ ६—७ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सुदम्को मिलोपक्रमे दंशित इति सन्नद्धत्वार्थं मध्ये सूतोक्त्यावरणात् धृतमुद्यतं कार्मुकं येन सः इति परमोत्साहो दर्शितः अतस्तत्रैव नयने हेतुमाह—वीरस्येति ॥ १ ॥

प्रतिहत्य स्वसैन्यं कम्पानं तं तत्रापि रुद्ध्वा प्रत्यविध्यत् तत्कृतवेधप्रतियोगितयाविध्यत् नाराचैर्गुणविशेषैः स्मयन् स्मयमान इति वीरस्वभावत्वेनोत्साह एव दर्शितो ननु क्रोध इति श्लाघितम् ॥ २ ॥

वै समुच्चये शिरोऽपीत्यर्थः ॥ ३ ॥

न केवलं स एव स्वविक्रमं दर्शयामास तेन विवर्द्धितोत्साहा अन्येऽपि यदुवीरा इत्याह—गदेति । सर्वे प्रायश इत्यर्थः ॥ ४ ॥

त्रिनवरात्रं व्याप्य ॥ ५ ॥

इन्द्रेति युग्मकम् । आहूत इत्याहूतः श्रीनारदद्वारा तादृशविज्ञापनात् राजसूय इत्यादि इन्द्रप्रस्थगमनप्रयोजने सर्वस्मिन्

---

(१) तस्य सत्र द्युमानेव (२) आहनत् (३) गदसात्यकिरक्रूरः साम्बश्च शुकसारणौ । चतुर्भिर्नामसंमोच्य अच्छुस्सौभपतेर्बलम् ॥ इति च विज० पाठः

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

समास इत्यर्थः। अयेति येति वा पाठः निमित्तानि पथि पश्यन् ॥ ६—७ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

॥ १—१० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथ पुनः सम्रक्षेन प्रद्युम्नेन द्युमति हते सति यदुषु [illegible] क्रुध्यमानेषु भगवानागत्य साल्वं जघानेत्याह सप्तमेन [illegible] तमेन—लब्धेति। सतु प्रद्युम्नः सलिलमुपस्पृश्याचम्य मूर्च्छा [illegible] उत्थित-स्यादिति भावः। दंशितः सन्नद्धः धृतं कार्मुकं धनुर्येन सः सारथि-माह—किमिति। वीरस्य द्युमतः पार्श्वे समीपं [illegible] नय प्राप येति ॥ १ ॥

विधमन्तमिति। रुक्मिणीसुत इत्यस्य [illegible] गत इत्यादिः स्वसैन्यानि विधमन्तं ताडयन्तं द्युमन्तं [illegible] सन्धि-कृष्य स्मयमानेनानायासः सूच्यते अष्टभिः शरैः प्रत्या[illegible] प्रत्यता-डयत् ॥ २ ॥

तत्राष्टानां विनियोगमाह—चतुर्भिरिति। वाहांश्चानेकेन कार्मुकम् एकेन ध्वजम् एकेन सूतम् एकेन तु द्युमच्छिरो ऽहनत् ॥ ३ ॥

गदेति। गदप्रभृतयो यादवाः सौभपतेर्बलं [illegible] सौभयाः सौभस्थाः सर्वे संछिन्नाः कन्धराः येषां ते [illegible] पेतुः पतितवन्तः ॥ ४ ॥

एवमिति। इतरेतरं परस्परं निघ्नतां सम्बन्धि [illegible] त्रिनव-रात्रमभूत् नवानां रात्रीणां समाहारः नवरात्रं त्रयाणां समाहार-स्त्रिनवरात्रं सप्तविंशत्या रात्राणीत्यर्थः। तुमुलमाकुलमुल्वणं घोरम् ॥ ५ ॥

अत्र केचिदप्यन्यविषयः [illegible] दूषयितुमनुवदति शुकः—इन्द्रप्रस्थस्था-विना एवं वदन्ति [illegible] प्राक्तनेन। धर्मसूनुना युधिष्ठि-रेणाहूतः श्रीकृष्णः राजसूये सम्वृत्ते परिसमाप्ते सति शिशु-पाले संस्थिते मृते च सति तत्रैव कतिचिद्दिनानि स्थितः अनिष्टानि निमित्तानि पश्यन् कुरुवृद्धादीन् भीष्मादीन् ससुतां पृथां कुन्तीं मुनींश्चामन्त्र्य पृष्ट्वा द्वारवतीं ययावाहेत्युत्तरेण सम्बन्धः ॥ ६—७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यदूनन्दयतीति यदुनन्दनः एव समान् दंशितो रणाङ्गणे आस्ते इति शेषः ततः किं तत्राह—नयेति ॥ ० ॥

॥ १—४ ॥

त्रिनवरात्रं सप्तविंशद्रात्रम् ॥ ५ ॥

अभिप्रवक्तारं कृष्णागमनं वक्ति—इन्द्रप्रस्थमिति ॥ ६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

॥ १—२६ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

१—२९ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

अष्टाविंशेतिपीडायां भगवत्स्मरणे कृते।
तत् दुःखवारणं कृष्णश्चकारेति निरूप्यते ॥
द्युमतोऽपि वधं कृष्णश्चेत्कुर्यात् स्वयमादरः।
तदा प्रद्युम्नदुःखस्य न निवृत्तिर्भवेत्क्वचित् ॥
अतः प्रद्युम्नहस्तेन मारणं तस्य वर्ण्यते।
भक्तानां दुःखदानन्तु न युक्तमिति वै हरिः ॥
मतान्तरेणाशक्यत्वं बोधयामास वाक्यतः।
अन्यथा श्रीशुको लीलां तादृशीं नैव वर्णयेत् ॥
तादृग्लीलान्तरमिव वर्णितां वा न पूरयेत्।
एवंसिद्धान्तमज्ञात्वा लोको भ्राम्यति सर्वथा ॥
कल्पान्तरे तथा चक्रे स्वमांशावतारतः।
विरोधे यदि नो भूताः[illegible] हि विरुध्यते ॥
शास्त्रार्थे दोषनाशाय [illegible]मुच्यते।
अतः स्कन्धार्थशास्त्रार्थौ [illegible] कथितौ ॥

पूर्वाध्यायान्ते द्युमतापकर्षे प्रद्युम्नं निरूपितः प्रद्युम्नस्य तदानीं द्युमद्वधार्थं प्रवृत्तिरुच्यते स उपस्पृश्येति मूर्च्छानन्तरं तथा कर्तव्यमिति सलिलोपस्पर्शनमाचमनं [illegible] पुनर्दंशितः बद्धकवचः नारायणकवचादिना लौकिकेन च ततो धृतकार्मुकः अनेन पूर्वं कवचरहितएव [illegible] गत इति लक्ष्यते अत एव गर्वनाशार्थं [illegible] ततः [illegible] द्युमतः पार्श्वे नयेति सूतं प्रतिवचने [illegible] प्रशंसामाह वीर-स्येति ॥ १ ॥

सतु वञ्चितः सन् लज्जया आक्रोशेन मारित इति दोष-व्यावृत्त्यर्थमाह—विधमन्तं स्वसैन्यानीति। स्वबल[illegible] मारणीय एवेत्यर्थः। तथाप्याक्रोशेन मारणमाह—रुक्मिणीसुत इति। प्रतिहत्य सन्धिष्य भर्त्सयित्वा वा [illegible] प्रत्य-विध्यत् ससामर्थ्यं माशितवानेवेत्यर्थः। [illegible] [illegible]मित्यर्थः ॥ २ ॥

अष्टबाणानां विनियोगमाह-चतुर्भिश्चतुरो वाहानिति। द्युमतः शिरः अन्येनाष्टमेन बाणेन येन प्रेरितो येन [illegible] लभ्यः प्रतिष्ठः तत्सर्वमाच्छिनत् ॥ ३ ॥

ततोऽन्येऽपि प्रधाने मारिते तद्बलं मारितवन्त इत्याह—गदसात्यकिसाम्बाद्या इति गदया प्रद्युम्नो मारित इति स्व-बलेन तत्सैन्यं मारितवन्तः गदाभ्यामेव शीर्षं [illegible] भवति ततः सौभेयाः सर्वे अन्तरिक्षे [illegible] यमाना वा समुद्रे पतिताः [illegible] ॥ ४ ॥

एवं भगवत्प्रतीक्षार्थं [illegible] [illegible] तानां युद्धाद्भुतमाह—एवं यदूनामिति। इतरेतरं [illegible]

तामापतन्तीं नभसि महोल्कामिव रंहसा ।
भासयन्तीं दिशः शौरिः सायकैः शतधाऽच्छिनत् ॥ १३ ॥
तं च षोडशभिर्विद्ध्वा बाणैः सौभं च खे भ्रमत् ।
अविध्यच्छरसन्दोहैः खं सूर्य इव रश्मिभिः ॥ १४ ॥
शाल्वः शौरेस्तु दोःसव्यं सशार्ङ्गं शार्ङ्गधन्वनः ।
बिभेद न्यपतद्धस्ताच्छार्ङ्गमासीत्तदद्भुतम् ॥ १५ ॥
हाहाकारो महानासीद्भूतानां तत्र पश्यताम् ।
निनद्य सौभराडुच्चैरिदमाह जनार्दनम् ॥ १६ ॥
यत्त्वया मूढ नः सख्युर्भ्रातुर्भार्या हृतेक्षताम् ।
प्रमत्तः स सभामध्ये त्वया व्यापादितः सखा ॥ १७ ॥
तं त्वाद्य निशितैर्बाणैरपराजितमानिनम् ।
नयाम्यपुनरावृत्तिं यदि तिष्ठेर्ममाग्रतः ॥ १८ ॥

भाषाटीका ।

मरे के सदृश असार सेनाका ईश्वर शाल्वराजा श्रीकृष्णको देख कर श्रीकृष्ण के सारथ के मारने के वास्ते भयंकर शब्द वारी शक्तिको युद्ध में छोडता भया ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तञ्च शाल्वं शरसन्दोहैः शरजालैः खं सूर्य इव रश्मिभिरिति सुनीलत्वविपुलत्वादिभिराकाशोपमा सौभस्य अचिन्त्यवेगबाहुल्यादिभिः शराणां रश्मिसादृश्यम् अनेनैव रश्मिवच्छरजालप्रसारणात्सूर्यतुल्यः श्रीकृष्ण इति ॥ १४ ॥

दोर्बाहुम् ॥ १५-१६

सख्युः शिशुपालस्य ईक्षतामस्माकं प्रमत्तोऽनवहितः व्यापादितो निहतः ॥ १७ ॥

अपराजितोऽहमिति मानिनं मानवन्तम् अपुनरावृत्तिं मृत्युं तिष्ठेः स्थास्यसि ॥ १८—२२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नभस्यापतन्ती नभस्येवाच्छिनदित्यर्थः ॥ १३ ॥

खे भ्रमदपि ॥ १४ ॥

दोषो नपुंसकत्वं च दृश्यते सव्यं दोरच्छिनत्तस्येति रघुकात्यात शार्ङ्गभञ्जनमपि ॥ १५ ॥

जनानां तादृशानां युद्धानां मर्दनमपि लीलयैव तादृशतामनुकुर्वन्तं तमाहेति धृष्टता निर्बुद्धिता च सूचिता ॥ १६ ॥

यदिति युग्मकम् । यत् येन त्वया अस्माकं सख्युस्तव भ्रातुः पैतृष्वसेयस्य सभामध्ये न तु युद्धमध्ये अतः प्रमत्तः अनवहितः अत एव व्यापादितः त्वयेति पुनस्त्वया व्यापादनस्य तदेककर्तृत्वेन परमदुष्यत्वं तथा सखेति वाक्यः क्रोधविशेषं सखाति भिन्नार्थकत्वस्यावश्यकत्वं च सूचयति यद्वीत्यनुमेव मद्वयतिकल पलायिष्यस इति भावः । गीर्देवीमते अमूढ हे परमविद्वन् ! अस्माकं सख्युर्भ्रातुश्च शिशुपालस्य तथा नोऽस्माकञ्च ईक्षतामीक्षमाणानां तत्रासांश्चागाद्रत्नैः । येन त्वया भार्या लक्ष्मीत्वाख्या आर्यैव हृता तथा प्रमत्तः पीतमद्यादिवयानादुर्धर्षमायुष्मत्तमैः सोऽस्मत्सखा व्यापादितः ॥ १७ ॥

तं न विद्यते पुनरावृत्तिर्यस्मात्तथाभूतं तथा अपराजितः केनाप्यनभिभूतो मानः पूजा तद्वन्तञ्च त्वां त्वदीयैरेव निशितैर्बाणैर्हेतुभिर्नयामि गच्छामि प्रविशामीत्यर्थः । "नय एव गतौ" किन्तु मद्बाणमेव तत्र साधकतममित्याह यदीति ॥ १८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

न्यपतदिति मनुष्यभावानुकारः ॥ १५—२७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तामिति । रंहसा वेगेन नभस्यापतन्तीम् उल्कामिव दिशो भासयन्तीं तां शक्तिं शतधा चिच्छेद ॥ १३ ॥

तमिति । खे आकाशे भ्रमद्भ्राम्यमाणं सौभं तं सौभपतिञ्च आविध्य खमाकाशं रश्मिभिः सूर्य इव शरजालैः पुनः सौभमाविध्यत् सुनीलत्वविपुलत्वादिभिराकाशोपमा सौभस्याचिन्त्यवेगत्वबाहुल्यादिभिः शराणां रश्मिसादृश्यमनेनैव रश्मिवच्छरजालप्रसारणात् सूर्यतुल्यः श्रीकृष्ण इत्यवगन्तव्यम् ॥ १४ ॥

श्रीभगवानुवाच ।

वृथा त्वं कत्थसे मन्द न पश्यस्यन्तिकेऽन्तकम् ।
पौरुषं दर्शयन्ति स्म शूरा न बहुभाषिणः ॥ १९ ॥
इत्युक्त्वा भगवाञ्छाल्वं गदया भीमवेगया ।
तताड जत्रौ संरब्धः स चकम्पे वमन्नसृक् ॥ २० ॥
गदायां सन्निवृत्तायां शाल्वस्त्वन्तरधीयत ।
ततो मुहूर्त आगत्य पुरुषः शिरसाऽच्युतम् ।
देवक्या प्रहितोऽस्मीति नत्वा प्राह वचो रुदन् ॥ २१ ॥
कृष्णकृष्ण महाबाहो पिता ते पितृवत्सल ।
बद्ध्वाऽपनीतः शाल्वेन शौनिकेन यथा पशुः ॥ २२ ॥
निशम्य विप्रियं कृष्णो मानुषीं प्रकृतिं गतः ।
विमनस्को घृणी स्नेहाद्बभाषे प्राकृतो यथा ॥ २३ ॥
कथं राममसम्भ्रान्तं जित्वाऽजेयं सुरासुरैः ।
शाल्वेनाल्पीयसा नीतः पिता मे बलवान् विधिः ॥ २४ ॥

भाषा टीका ।

वहां देखने वारे प्राणियोंका महान् हाहाकार शब्द होता भया तवतो शाल्वराजा ऊंचे स्वरसे गर्जना करके श्रीकृष्ण के प्रति यह बोलता भया ॥ १६ ॥

हे मूढ ! जिस कारण हमारे सबके देखते २ देखते हमारे मित्र शिशुपालकी भार्या को तैने हरी, तथा हमारा मित्र असावधान रहा उसका शिशुपालको तैने सभाके मध्यमें मार दिया ॥ १७ ॥

इसी कारण अपने को अपरा जितमानने वारे तोको इस कालमें तीक्ष्ण बाणोंसे मृत्युको प्राप्त करताहूं, यदि युद्धमें तू मेरेआगे स्थिर रहेगा तो ॥ १८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

घृणी दयावान् ॥ २३—२४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कत्थसे आत्मानं श्लाघसे तच्च युक्तमित्याह—मन्द हे निर्बुद्धे ! मन्दत्वमेवाह, नेति. आसन्नमृत्युत्वादीदृशं कत्थनं युक्तमेवेतिभावः । शूरोऽपि न खलु भवसीत्याह—पौरुषमिति । लोके प्रसिद्धमेवैतदित्यर्थः ॥ १९ ॥

स शाल्वः ॥ २० ॥

गदायामित्यर्थकम् सम्यक् निवृत्तायां मिहृतः पुनः श्रीभगवत्करपङ्कजं गतायां मुहूर्ते आगते सतीत्यर्थः मुहूर्तादिति कल्पित पुरुषः श्रीवसुदेवस्य प्रसिद्धभृत्यविशेषाकारः वचनात् सन्देशं गीर्देवीमते अप्रहित इतिच्छेदः वचो यत्किञ्चिद्वचनमात्रं नतु सत्यमित्यर्थः ॥ २१ ॥

हे कृष्ण ! एतत्संज्ञयातिप्रसिद्ध ! वीप्सा आसानुकारात् हे महाबाहो परमवीरेत्यर्थः । इति तात्पितुः शत्रुणा बद्धानयनं परमानुचितमितिभावः किञ्च हे पितृवत्सलेति शोकं जनयति अपनीतः अपगमय्य अपकारार्थं वा नीत इत्यर्थः । नच त्वत्पिता आत्मानं मोचयितुं शक्तइत्यादिकं दृष्टान्तेन बोधयन् शोकमधिकं जनयति । शौनिकेनेति । पशुघातिना व्याधेनेत्यर्थः । श्रीदेवीमते अपितेति छेदः पितृसदृशः कोऽप्यन्मायानिर्मित इत्यर्थः ॥ २२ ॥

कृष्णः स्वयं भगवानपि प्रकृतिं स्वभावं विमनस्कः शोकाकुलस्सन् घृणी पितरि कृपावान् अतः स्नेहात् प्राकृतवत् स्वयं खासितेव बभाषे ॥ २३ ॥

असम्भ्रान्तम् अप्रमत्तम् अल्पीयसा तदपेक्षयाऽतिक्षुद्रकेणापि अहो दुर्घटमपि विधातुरिच्छया घटतेति शोकादाह—विधिर्बलवानिति ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थमुक्तः प्राह—भगवान् वृथेति । हे मन्द ! निकटवर्ति प्रगल्भं भाषसे अन्तिके समकक्षरं प्राप्तं मृत्युं न पश्यसि किं कत्थसीत्यर्थः । किञ्च शूराः केवलं पौरुषमेव दर्शयन्ति न तु बहु यथा तथा भाषन्त इति तथा ॥ १९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीति । भीमो भयङ्करो वेगो यस्यास्तया गदया जत्रौ स्कन्धमूले तताड ताडयामास स च साल्वः असृङ्गुधिरं वमन् उद्गिरन् च कम्पे कम्पितवान् ॥ २० ॥

गदायामिति । सन्निवृत्तायां भगवत्पार्श्वेनापनीतायां सत्यामित्यर्थः । अन्तरधीयत अन्तर्हितवान् तत अनन्तरं मुहूर्तानन्तरं कश्चित् साल्वप्रेषितः पुरुषः आगत्याच्युतं शिरसा नत्वा प्रणम्य रुदन् वचो वाक्यं प्राह, किमित्यत आह—देवक्या प्रहितः प्रेषितोऽस्मीति ॥ २१ ॥

किञ्च, हे पितृवत्सल ! ते तव पिता वसुदेवः साल्वेन बद्ध्वा आनीतः यथा सौनिकेन पशुमारकेण पशुरपनीयते तद्वत् ॥ २२ ॥

निशम्येति । मानुषीं प्रकृतिं स्वभावं अनुगतः प्राप्तः घृणी दयावानत एव विमनस्को दुःखितमनाः स्नेहात्पितृविषयकानुभावे यथा प्राकृतः पुरुषस्तद्वत् ॥ २३ ॥

भाषणमेवाह—कथमिति । सुरासुरैरपि जेतुमशक्यं न प्रसिद्धं रामं कथं जित्वा क्षुद्रेण साल्वेन मम पिता आनीतः विधिर्दैवं बलवानहो ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यत्र तवातिकौतुकमिति व्याख्यातं वीर्यं नास्ति स त्वं वृथा कत्थसे पौरुषं प्रदर्शयेदर्शय शूराणाञ्च भाषणं फल्गु निरं वीर्यप्रकटनं बहिरित्यर्थः । यद्वा शूराणां पौरुषं दर्शय भाषणं फल्गु तुच्छं विकत्थनमित्यर्थः ॥ १९—२६ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

निशम्य विप्रियमित्यादि । अमानुषीं प्रकृतिं गतः आकृतिरेव तस्य मानुषी मनुष्यसदृशी न प्रकृतिरित्यर्थः । विमनस्कः खिन्नमनाः स्नेहादपि स्नेहेनापि अघृणी स्थिरः यतः अप्राकृतः एवं सत्यथा यथावत् बभाषे ॥ २३ ॥

तत्किमित्याह—कथमित्यादि । एवम्भूतं रामं जित्वा कथम् अल्पीयसा क्षुद्रेण शाल्वेन बलवान् मे पिता आनीतः कीदृशः पिता विधिः सर्वतो भावेन समर्थः तदिदं मृषैवेति सावज्ञप्रकटनम् ॥ २४—२५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवांस्तु वाक्येन शब्दातिक्रमं वारयति । वृथा त्वं कत्थस इति । अर्थस्य बाधितत्वादत एव मन्दत्वं प्रत्युत विपरीतं तवास्तीत्याह—न पश्यसीति । आन्तिके मदग्रे तवान्ति कोऽस्तीति इदमयुक्तमिति जयापजययोः अव्यवस्थेति शूराणां प्रकाशं वाक्यकौशलमयुक्तमिति उपदिशति पौरुषं दर्शयन्तित्येति पौरुषं पुरुषकार्यं शूरा क्षत्रियाः ब्राह्मणानान्तु वाक्यबलमेव भवति इति तदनुवादः ॥ १९ ॥

एवमुक्त्वा अवाक्यस्सत्यत्वाय भगवान् स्वपौरुषं दर्शयामास—इत्युक्त्वेति । यतो भगवान् समर्थः भीमवेगयेत्यलौकिकं सामर्थ्यं निराकृतं तदोक्कण्ठमालायीनि संरब्धः क्रोधेन क्रियावेषमात्रं वा ततः स शाल्वः असृग्वमन् चकम्पे ॥२०॥

ततस्तस्य लोहितं दृष्ट्वा कृतकार्या गदा निवृत्ता तस्यां निवृत्तायां प्रहारान्तरेण मरणं भविष्यतीति निश्चित्य असुरत्वाद्भगवद्रूपां मायां प्रार्थयितुम् अन्तरधीयत तुशब्देन महादेवपक्षो निवारितः ततो भगवद्रूपमायाकृत्यमाह —ततो मुहूर्त इति । मुहूर्तानन्तरं कश्चित् पुरुषः समागतः इदं मानसनिराकरणं तेन मनसा प्रार्थितेनेश्वरेण क्रियत इति भगवतोऽपि मनस्येव काचित् प्रतिभासैव स पुरुषो मायिकः न चापि भगवदीय इति भगवत्समीपागमनेऽपि न तस्य नाशः सोऽपि व्यामोहार्थमच्युतमप्यामुग्धं देवक्या अहं प्रहित इति आत्मानं निवेद्य पश्चाद्भगवन्तं नत्वा रुदन् वचः प्राह—देवक्याः स्वरूपस्वख्यापनार्थं रोदनं तस्य वा वाक्यम् ॥ २१ ॥

कृष्ण कृष्णेति । दुःखे वीप्सा महाबाहो इति क्रियाशक्तिसामर्थ्यं वाच्यमाह—पिता त इति । पितृवत्सलेति अभिमानार्थं सम्बोधनं बद्ध्वा पनीत इति महदपमानना स्वयमेव त्यक्ष्यतीति शङ्काभावायं दृष्टान्तमाह—सौनिकेनेति । सूनायां प्रसिद्धः मारक एव अतो मारणार्थं नीतवानित्यर्थः ॥ २२ ॥

निराकरणकार्ये भगवति भातमित्याह—निशम्य विप्रियमिति । मानुषीं मनुष्यस्वभावमङ्गीकृतवान् ततः तत्स्वभावात् विमनस्कः घृणी पितरि कृपावांश्च ततः स्नेहात् वक्ष्यमाणं बभाषे "मनःपूर्वरूपमुत्तररूप" इति श्रुतेः । तस्य वपुरेव शिर इति मनसः पुरुषशब्दप्रकृतिकत्वात् शब्दाभावे मानसपीडापूर्णा नोक्ता भवतीति शब्दोऽपि निरूप्यते ॥ २३ ॥

कथं राममिति । रामो रक्षार्थं नियुक्तः सदासम्भ्रान्तः अतिसावधानः समयविशेषात् अतिक्रमस्तु तस्याशक्य इत्याह—सुरासुरैरजेयमिति । अतः सर्वोत्तमो भविष्यतीत्याशङ्क्याह—शाल्वेनाल्पीयसा नीत इति । मे पितेति भाग्य वा तस्य कथं न रक्षकं जातमित्यर्थः सर्वातिक्रमस्य दृष्टत्वात् नियन्ता विधिरेव बलवान् ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

परमतमाह—गदायां सन्निवृत्तायामित्यारभ्य यावत्स्वाप्नयथेति ॥ २१-२२ ॥

घृणी दयावान् ॥ २३-२५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

घृणा दयाऽस्यास्तीति स तथा ॥ २३-२५ ॥

---

भाषा टीका ।

श्रीभगवानुवाच ।

अरे मन्द ! तू वृथाहि बकवाद करता है समीप में अपने

इति ब्रुवाणे गोविन्दे सौभराट् प्रत्युपस्थितः ।
वसुदेवमिवानीय कृष्णं चेदमुवाच सः ॥ २५ ॥
एष ते जनिता तातो यदर्थमिह जीवसि ।
वधिष्ये वीक्षतस्तेऽमुमीशश्चेत्पाहि बालिश ॥ २६ ॥
एवं निर्भर्त्स्य मायावी खड्गेनानकदुन्दुभेः ।
उत्कृत्य शिर आदाय खस्थं सौभं समाविशत् ॥ २७ ॥
ततो मुहूर्त्तं प्रकृतावुपप्लुतः स्वबोध आस्ते स्वजनानुषक्ततः ।
महानुभावस्तदबुध्यदासुरीं मायां स शाल्वप्रसृतां मयोदिताम् ॥ २८ ॥
न तत्र दूतं न पितुः कलेवरं प्रबुद्ध आजौ समपश्यदच्युतः ।
स्वाप्नं यथा चाम्बरचारिणं रिपुं सौभस्थमालोक्य निहन्तुमुद्यतः ॥ २९ ॥
एवं वदन्ति राजर्षे ऋषयः केच नान्विताः ।
यत्स्ववाचो विरुध्येत नूनं ते न स्मरन्त्युत ॥ ३० ॥

भाषा टीका ।

मृत्यु को तू नहि देखता और जो शूरवीर होते हैं वे बहुत बोलते नहि हैं किन्तु अपने पराक्रम को दिखावते हैं ॥ १९ ॥

इस प्रकार कहकर श्रीकृष्ण भगवान क्रोधित होकर भयंकर वेगवारी गदा से कण्ठ के मूल में शाल्व को मारते भए गदा के प्रहार से रुधिर की वमन करत् शाल्व राजा कंपायमान होजाता भया ॥ २० ॥

गदा के निवृत्त होने पर शाल्व अन्तर्धान होगया पश्चात् एक मुहूर्त काल व्यतीत होने पर शाल्वने माया कर के भेजा भया वसुदेव के भृत्यके रूप धारी एक पुरुष आय कर मस्तक से श्रीकृष्णको प्रणाम कर के रुदन करत् यह बोला कि मैं देवकीने पठायो हूँ ॥ २१ ॥

हे कृष्ण ! हे कृष्ण ! हे महाबाहो ! हे पितृवत्सल ! जैसे कसाई पशूको बांध कर लेजाता है तैसेहि शाल्व राजा आप के पिता वसुदेवको बांध कर लेगया ॥ २२ ॥

इस प्रकार के अप्रिय वचनको सुन कर प्राकृत मनुष्य वत् स्नेह से मनुष्य स्वभावको प्राप्त होकर तथा दयावान् और उदासीन मन होकर श्रीकृष्ण बोलते भए ॥ २३ ॥

सुर और असुरों से अजेय पुरकी रक्षा में सावधान ऐसे श्रीबलरामजीको जीत कर अति तुच्छ शाल्व राजा हमारे पिताजीको कैसे लेगया इस वास्ते दैवहि बलवान् है ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

जनिता जनयिता ईशश्चेच्छक्तश्चेत् ॥ २६–२७ ॥

स्वबोधः ज्ञातसिद्धज्ञानवानपि स्वजनस्नेहतः प्रकृतौ मनुष्यस्वभावे उपप्लुतो निमग्न आस्ते अतिष्ठत् ततस्तामासुरीं मायामबुध्यत् मायेयमिति ज्ञातवान् ॥ २८ ॥

स्वाप्नं स्वप्नप्राप्तं यथा ॥ २९ ॥

एवं परमतमुपन्यस्य निराकरोति—एवमिति । केच केचन नान्विताः अनन्विताः पूर्वापरानुसन्धानरहिताः तदाह यत्स्ववाच इति तत्रानुस्मरन्तीत्यर्थः । अयमभिप्रायः न तावद्राजसूयार्थं रामेण सह गतः श्रीकृष्णः सङ्कर्षणमनुज्ञाप्येति पूर्वमुक्तत्वात् ॥ ३० ॥

---

श्रीमज्जीवगोस्वामीकृतवैष्णवतोषिणी ।

प्रत्युपस्थितः पुनः परावृत्य समीपमागतः किं कृत्वा वसुदेवमिवानीय कञ्चित्तदाकारमुपस्थाप्य ॥ २५ ॥

जनिता जनकः नत्वन्नदात्रादिलक्षणः पिता इति सम्बन्धविशेषेण शोकभरमुत्पादयति—यदर्थमिति । सत्पुत्रस्य तदर्थे प्राणत्यागौचित्यादितिभावः । वीक्षतः साक्षाद्वीक्ष्यमाणस्यापि तव हे बालिश ! मत्प्रभावानभिज्ञत्वादितिभावः । गीर्देवीतु वाचयति यदर्थमिह मयि जीवसि बलं प्रकटयसि स एव ते तव अजनिता जनको न भवति अत एव अतातस्तातो न भवतीत्यर्थः । तस्मात्पश्यतस्ते इन्द्रजालमिव कौतुकेन पश्यति त्वयि अमुं वधिष्ये तत्र निजोत्कर्षमाह—ईश इति । चेदित्यवधारणे "धत्से पदं त्वमविता यदि विघ्नमूर्ध्नि" इतिवत् । हे बालिश ! बालाः मूर्खाः सन्त्येषां बालिनो मूर्खजनास्ताः तान् मारयामि श्यति तनूकरोति क्षिणोतीति हे बालिश ! यस्मादयमीश्वरः परमस्वतन्त्रस्त्वं तस्मात् पाहि [illegible] ॥ २६ ॥

आनकदुन्दुभेस्तदाकारस्य [illegible] पाठः ॥ २७ ॥

ततः शिरस उत्पादनादावामाच हेतोः [illegible]

क्व शोकमोहौ स्नेहो वा भयं [1]वा येऽज्ञसम्भवाः ।
क्व चाखण्डितविज्ञान[2]ज्ञानैश्वर्यस्त्वखण्डितः ॥ ३१ ॥
यत्पादसेवोर्जितयाऽऽत्मविद्यया हिन्वन्त्यनाद्यात्मविपर्ययग्रहम् ।
लभन्त आत्मीयमनन्तमैश्वरं कुतानु मोहः परमस्य सद्गतेः ॥ ३२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

इति ऋषय इत्यपि तथा राजर्षे इति सम्बोधनं स्वपर-पक्षाभिनिवेशयोः मिथ्यात्वोपहासौ बोधयति एतेषां मध्ये केचनैवान्विता शुष्कवादिनः सर्वनिराकरणे अंशनिराकरणे प्रयोजनं यत् नान्विता इति पदच्छेदे सर्वनिराकरणं वा उपहासे युक्तिमाह—यत्स्ववाचो विरुद्ध्येरन्निति ते किं कल्पान्तरव्यवस्थां योगबलेन ज्ञात्वा वदन्ति आहोस्विद् इदानीन्तनभगवच्चरित्रकथा श्रावे नास्माकं कापि क्षतिः द्वितीये तु कृष्णस्तु भगवान् स्वयमिति शास्त्रार्थालोचनया तदनुगुणा एव धर्माः वक्तव्या इति विरुद्धकथनात् ते नूनं न स्मरन्ति अपित्र नाट्यशास्त्रेण स अपि पूर्वमपि स्मृतिमप्रमाणमेव ननु सर्वत्रं-वतारेषु अवतारधर्माः प्रवर्त्तन्ते अन्यथा वसुदेवसुतत्वादयोपि बाधितार्था इति न वक्तव्याः स्युः ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

जनिता जनयिता ॥ २५—२७ ॥

प्रकृतौ मानुषस्वभावे उपप्लुतः स्यात् सुष्ठु अबोधः सञ्जातः स्म तदनन्तरन्तु स महानुभावस्तत्सर्वमासुरीं मायां साल्वेन प्रसृतां प्रयुक्तां मयात् उदितां अबुध्यत ॥ २८ ॥

अत एव न तत्रेत्यादि स्वाप्नं स्वप्नप्रपञ्चं यथा ॥ २९ ॥

एवं परमतमुपन्यस्य तन्निराकरोति—एवमिति । केच केचन नान्विताः पूर्वापरानुसन्धानरहिताः तदेवाह यत्स्ववाचो विरुध्येत विरुद्ध्येरन्निति तत्रानुस्मरन्तीत्यर्थः । तथाहि न तावद्राजसूयार्थं रामेण सह गतः कृष्णः सङ्कर्षणमनुज्ञाप्येति पूर्वमुक्तत्वात् तमश्चार्य्यामिश्राभिमन्त्र्य इति तैर्वर्णितं कृष्णोक्तं कथं सङ्गच्छतां यदि वा कष्टेन सङ्गच्छतां नाम तदा पुनरपि "कथं राममसम्मन्त्र्य जितमाऽजेयं सुरासुरैः" इति कृष्णोक्तमुपपद्यतामिति ॥ ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जनिता जनयिता ॥ २५—२७ ॥

स्वः स्वासाधारणः "यः सर्वज्ञः सर्ववित्" इत्यादिश्रुतिप्रसिद्धो बोधो यस्य स तथाभूतोपि स्वजनेषु योनुषङ्गः अनुरागस्तस्मात् प्रकृतौ प्राकृतजनस्वभावे उपप्लुतो निमग्नः आस्ते अजितस्तदा ततः मयोदितामासुरीं मायां साल्वप्रहितां अबुध्यत भगवान् ॥ २८ ॥

एतदेवं प्रबुद्धः न हूनं न पितुः कलेवरं समपश्यत् यथा प्रबुद्धः स्वाप्नमर्थं न पश्यति तद्वत् ॥ २९ ॥

परमतं दूषयति—एवमिति । केच केचन ऋषयः एवं वदन्ति ये नान्विताः पूर्वापरानुसन्धानरहिताः तदाह यत्स्ववाचो विरुध्येत विरुद्ध्येरन् विरोधं प्राप्नुयुः तत्र स्मरन्ति नूनं निश्चितम् अयमाशयः न तावद्रामेण सह राजसूयार्थं गतो हरिः सङ्कर्षणमनुज्ञाप्येत्युक्तत्वात् ॥ ३० ॥

---

भाषा टीका ।

श्रीकृष्ण जी इसप्रकार कहिरहे हैं इतनेही में शाल्व राजा प्रकट होकर मायासे रचे भये वसुदेव के समान पुरुष को लाय कर श्रीकृष्ण के प्रति यह बोले ॥ २५ ॥

तेरे उत्पन्न करने वाला यह पिता है जिसके अर्थ इस संसार में तू जीता है तेरे देखतेर मैं इस का वध करूंगा हे अज्ञ ! यदि समर्थ होतो तू इस की रक्षा कर लेना ॥ २६ ॥

मायावी शाल्व राजा इसप्रकार श्रीकृष्ण का तिरस्कार करके तरवार से मायवसुदेव के शिरको काटकर उस शिरको लेकर आकाश में स्थित विमान पर जावैठा ॥ २७ ॥

इस के अनन्तर पिता के विषय में आसक्ति होनेत एक मुहूर्त्त पर्य्यन्त श्रीकृष्ण भगवान् मनुष्य स्वभाव में डूब जाते भए पश्चात स्वतः सर्वज्ञ महानुभाव श्रीकृष्ण भगवान् पिता के वधको मयदैत्य से शिक्षित और शाल्व से प्रसारित आसुरी माया जानते भए ॥ २८ ॥

सर्व कालमें प्रकृष्ट ज्ञानवान् श्रीकृष्ण जी ने के शरीर को नहिं देखा जैसे जागने पर स्वप्न को नहिं देखते पश्चात विमान पर वैठे भये आकाशचारी वैरि शाल्व को देखकर श्रीकृष्ण जी उस के वध करने को उद्युक्त होते भए ॥ २९ ॥

हे राजर्षे ! पूर्वापर विवेक नहिं करने वारे कोई ऋषि लोग ऐसे कहते हैं जो अपने वचन विरोध को प्राप्त होता है उस का वे ऋषि लोग विवेक नहिं करते ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

असम्भावितमित्याह—क्व शोकेति ॥ भयं वा पुनर्निमित्तदर्शनकृतं नूनं हन्युः पुरीं मां ते यदुक्तं यच्च हृताच्छार्ङ्ग

(१) [illegible] । (२) ज्ञानैश्वर्यस्य त्वात्मनः ॥ इति वीर० पाठः ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पापेन शाल्वस्यापात्मा वा सौभेन गदया हत इति माया निर्मितत्वात् केवलं... निर्मितमेव ततस्तदिमन् प्रविश्य शाल्वो युद्धं कुर्यात् अतः ...नान्तरमपि सौभस्य पृथक् गदया हता दन्तवक्त्रः पूर्वमृतानां सखीनाम् अपचितिं कुर्वन् सखीनामर्थे तथा क्रोधेन युद्धार्थमभिमुख्येन समागतः सखिः सह युद्धेन छिद्रदशायां स्वस्य अथो भविष्यति इति ॥ ३७ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे अष्टाविंशाध्यायविवरणम् ॥२८॥७७॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सखीनां शिशुपालादीनामपचितिं वैरनिर्यातनमात्स्येष्टिं कुर्वन् कर्तुम् ॥ ३७ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
सप्तसप्ततितमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ७७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे सप्तसप्ततितमोऽध्यायार्थप्रकाशः ॥७७॥

---

भाषा टीका ।

संमुख आवते भए शाल्व के गदा सहित हस्त को भाले से काटकर पश्चात शाल्व के वध करनेके वास्ते श्रीकृष्ण भगवान् प्रलय कालमें प्रचंड सूर्य्य के सदृश अद्भुत सुदर्शन को धारण करत सूर्य्य सहित उदयाचल के समान प्रकाश मान होते भये ॥ ३५ ॥

जैसे इन्द्र ने वृत्रासुर के शिरको छेदन किया रहा तैसे हि श्रीहरि उसी चक्र से अनेक मायां जान ने वारे शाल्व के कुंडल किरीट युक्त शिर के काट देते भये तबतो मनुष्यों को हाहा कार शब्द होता भया ॥ ३६ ॥

पापी शाल्व के गिरने पर और गदासे सौभ विमान के चूर्ण होने पर स्वर्ग में देवता समूहसे बजाते भये हुए भी बजाते भये हे राजन् अपने सखाके बैर चुकाने लिये क्रोध करके दन्त वक्त्र युद्धकरनेको आताभया ॥ ३७ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धमें छिहत्तरके अध्यायकी भाषाटीका समाप्ता ॥ ७६ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

## अष्टसप्ततितमोऽध्यायः ।

श्रीशुक उवाच ।

शिशुपालस्य साल्वस्य पौण्ड्रकस्यापि दुर्मतिः ।
परलोकगतानाञ्च कुर्वन् पारोक्ष्यसौहृदम् ॥ १ ॥
एकः पदातिः सङ्क्रुद्धो गदापाणिः प्रकम्पयन् ।
पद्भ्यामिमां महाराज महासत्त्वो व्यदृश्यत ॥ २ ॥
तं तथायान्तमालोक्य गदामादाय सत्वरः ।
अवप्लुत्य रथात्कृष्णः सिन्धुं वेलेव प्रत्यधात् ॥ ३ ॥
गदामुद्यम्य कारूषो मुकुन्दं प्राह दुर्मदः ।
दिष्ट्या दिष्ट्या भवानद्य मम दृष्टिपथं गतः ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ततोऽष्टसप्ततितमे दन्तवक्त्रविदूरथौ ।
हत्वा हरिः पुरे रेमे रामः सूतं ततोऽवधीत् ॥

सखीनामपचितिं कुर्वन्नित्युक्तं तदेवाह—शिशुपालस्येति पारोक्ष्यसौहृदं परोक्षे करणीयं सुहृत्कृत्यम् ॥ १—२ ॥

प्रत्यधात् प्रतिरुरोध ॥ ३ ॥

मुकुन्दं प्राह दुर्मद इत्यादेरधिक्षेपपरता स्फुटैव परमार्थस्तु दुर्मदो गतमदः प्राह मुकुन्दं तृतीये जन्मनि मुक्तिदानार्थमागतम् अद्येति जन्मत्रये निवर्त्स्यमाणोऽद्य ब्रह्मशापावसाने भवान् मम स्वामी दृष्टिपथं गतः प्राप्तः एतद्दिष्ट्या दिष्ट्या भद्रं भद्रम् अतिहर्षे वीप्सा । ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

शिशुपालस्येति युग्मकम् इमां महीं महत् सत्त्वं बलं कायो वा यस्य सः व्यदृश्यत श्रीभगवता ॥ १—२ ॥

रथादवप्लुत्येति प्रतियोधस्य पदातित्वेन धर्मानुरोधात् उद्यद्वेत्यत्राद्यार्येति कश्चित् ॥ ३ ॥

कारूषः करूषदेशभवः ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १ ॥

व्यदृश्यत दन्तवक्त्र इत्यर्थः । २—१५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सखीनामपचितिं कुर्वन्नित्युक्तं विस्तरेणाह—शिशुपालस्येत्यादिना । पारोक्ष्यसौहृदं परोक्षेण कर्तव्यं सुहृत्कृत्यं कुर्वन् "लक्षणहेत्वोः" इति शत्रादेशः कर्तुमित्यर्थः । व्यदृश्यतेत्युपरत्र सम्बन्धः कथम्भूतः एकोऽसहायः गदा पाणौ यस्य सः पद्भ्यां महीं प्रकम्पयन् महत्सत्त्वं बलं यस्य सः हे महाराज ! ॥ १-२ ॥

तदा कृष्णः किमकरोत्तदाह—तमिति । तं दन्तवक्त्रमवलोक्य त्वरया सहितः सिन्धुं समुद्रं वेलेव प्रत्यधात् ; प्रतिरुरोधेत्यर्थः ॥ ३ ॥

गदामिति । कारूषो दन्तवक्त्रः प्राह । तदेवाह—दिष्ट्येति । दिष्ट्या अयमानन्दो जातः इत्यर्थः । कोऽसौ अद्य दृष्टिपथं भवान् प्राप्त इत्येषः ॥४॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रीशुक उवाच ।

( मूलम् ) उद्यापनज्ञानहेतोर्मुनातीरमागतम् ।
श्रुत्वा तूर्णं कलिङ्गेशो दन्तवक्त्रः सहानुजः ॥
महत्या सेनया युक्तो गजानीकसमन्वितः ।
गच्छन्तं द्वारकां कृष्णं पथि रोद्धुं समाययौ ॥
सोऽपश्यत् पथि गच्छन्तं वृतं यदुकुमारकैः ।
कान्ताषोडशसाहस्रशिबिकापरिवारितम् ॥

त्वं मातुलेयो नः कृष्ण मित्रध्रुङ्मां जिघांससि ।
अतस्त्वां गदयामन्द हनिष्ये वज्रकल्पया ॥ ५ ॥
तर्ह्यानृण्यमुपैम्यज्ञ मित्राणां मित्रवत्सलः ।
बन्धुरूपमरिं हत्वा व्याधिं देहचरं यथा ॥ ६ ॥
एवं रूक्षैस्तुदन् वाक्यैः कृष्णं तोत्रैरिव द्विपम् ।
गदयाऽताडयन्मूर्ध्नि सिंहवद्व्यनदच्च सः ॥ ७ ॥
गदयाऽभिहतोऽप्याजौ न चचाल यदूद्वहः ।
कृष्णोऽपि तमहन् गुर्व्या कौमोदक्या स्तनान्तरे ॥ ८ ॥

भाषा टीका ।

इकेला पयादो गदाधारी अति क्रोधित बड़ा बलवान् दन्तवक्र दोनों पावन से भूमि को कंपायमान करता हे महाराज दीखता भया ॥ २ ॥

उसको इस प्रकार आते देखकर गदा लेकर श्रीकृष्ण भगवान् शीघ्र हि रथ सें नीचे कूदकर जैसे समुद्र को किनारा रोक लेता है तैसें हि उसको रोक लेते भए ॥ ३ ॥

दुष्टमद वारा दन्तवक्र गदा को उठाकर श्रीकृष्ण के प्रति कि आप मेरी दृष्टिके सन्मुख प्राप्त भए यह महान् आनन्द भया ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च हे ! कृष्ण त्वमस्माकं मातुलेयो बन्धुः एवमपि मित्रध्रुक् मित्राणि घातितवान् माञ्च जिघांससि तस्मादस्माकं त्वत्तो मृत्युः सनकाद्यनुग्रहप्राप्तो नूनं दुर्वारः अतस्त्वामेतावन्मात्रमहं याचे, किन्त्वाह—अमन्द सर्वसहनसमर्थ । क्षात्रधर्मेण सेवितुं गदया त्वां हनिष्ये प्रहरिष्यामि तामेकधारं सहस्व इति ननु वज्रतुल्यां त्वद्गदां को वा सहेत नैवामित्याह अवज्रकल्पया उत्पलमालावदतिकोमलयेत्यर्थः ॥ ५ ॥

नन्वेवं हनने कस्तव पुरुषार्थस्तमाह—तर्हीति । अज्ञ ! न विद्यते ज्ञो यस्मात् हे सर्वज्ञेत्यर्थः । परमार्थतः स्वामिनमेतद्देहसम्बन्धेन बन्धुरूपमरिं शत्रुशापेन शत्रुत्वेन प्रतीतं त्वां हत्वा मित्राणामानृण्यमुपैष्यामि मित्रत्वेनाऽऽधीयते गमासि निस्यत इति व्याधिः देहेऽन्तर्यामितया चरतीति तथा तम् ईश्वरं हत्वा क्षात्रधर्मेणाराध्य मुक्तेर्गत्यर्थस्य ज्ञानार्थत्वाज्ज्ञात्वेति वा तेन यथा पित्रादीनामानृण्यमुपयन्ति तद्वदिति ॥ ६ ॥

रूक्षैरित्यादि प्रतीत्यभिप्रायेण तोत्रैरङ्कुशादिभिः ॥ ७—१५ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मातुलेयोपि दन्तवक्रमातुः श्रुतदेवायाः श्रीवसुदेवभगिनीत्वात् वास्तवार्थेस्त्वेवं वा मित्रध्रुक् यासावहमेति तं मां जिघांससि हन्तुं गन्तुं लोकयितुमिच्छसीत्यर्थः । अतो हे अमन्द ! ("विधाय सुहृदां सुखम्" इति "हत्वा कंसं रङ्गमध्ये प्रतीपं सर्वसात्वताम् । यदाह वः समागत्य कृष्णः सत्यं करोति तत् । आगमिष्यत्यदीर्घेण कालेन व्रजमच्युतः ॥ प्रियं विधास्यते पित्रोर्भगवान् सात्वतां पतिः" इति च स्वमुखेन भक्तजनमुखेन धर्मसङ्कल्पसिद्धेरन्यथानुपपत्तेः सत्यसङ्कल्प इति परमेश्वरमिद्धा श्रुतिः । सत्यव्रतमिति । ईश्वराणां वचः सत्यं तथैवाचरितमिति च कथं श्रीमद्भागवतमेव कथं वाऽक्रूरस्य कुरुजायाश्च सकृन्मात्रगृहागमनप्रतिज्ञा सम्पादिता कथं वा मुहुरपि तेषामपि मानः सम्पादयितव्यः । न केवलमेतावदेव तस्य व्रजागमनमपि श्रीद्वारकावासिवचनेन स्फुटमेवाह प्रथमे । "यर्ह्यम्बुजाक्षापससार भो भवान् कुरून् मधून् वापि सुहृद्दिदृक्षया" इत्यत्र मधून् मथुरामेति व्याख्याय तदानीं तन्मण्डले सुहृदो व्रजस्था एव प्रकटा इति अभिधामिपादैरपि तथाभिमतं "तत्र योगप्रभावेण नीत्वा सर्वजनं हरिः" इत्यत्र सर्वशब्देनाम्बीणां तत्राविद्यमानत्वात् सुहृद्दिदृक्षुरुत्कण्ठ इति श्रीबलदेवागमनेपि तत्रैव मतप्रयोगात् श्रीमगधस्तत्र गमने समयश्चायमेव तत्स्वारस्य लब्धेः । विधाय सुहृदां सुखमित्युक्तत्वात् अनुनैव निर्जिताशेषशत्रुत्वादिना तेषां नैश्चिन्त्यं जातमिति एतत् प्राचीनलीलावेन स्थापयिष्यमाणायां मूर्योपलगयाग्रायम् । वज्रकल्पया हीरकवद्विराजमानया गदया स्वदीयया कौमोदक्या हेतुना त्वां हनिष्ये प्राप्स्ये इति ॥ ५ ॥

आनृण्यं च मयाऽवश्यकृत्यमित्याशयेनाह—मित्रेति । बन्धुरिव रूप्यते दृश्यते यस्तं विचारे तु महावैरिणमित्यर्थः स्वदेहसम्बन्ध्यपि महादुःखदः स्याविस्यादौ दृष्टान्तः व्याधिमिति वास्तवार्थे च यथा यथावत्स्वा ज्ञात्वा अन्तरैः यद्वा व्याधिं विगतः आधिर्येन तं देहचरमन्तर्यामित्वादिति ॥ ६ ॥

द्विपं मत्तगजं तोत्रैरिवेति दृष्टान्तोऽयमन्तर्दुःखाभावविवक्षया ॥ ७ ॥

आजौ युद्धक्रियायां न चचाल न च्युतः पतितो भवत् यतः कृष्णोपीति ॥ ८ ॥

---

एवं सौभं च साल्वं च दन्तवक्त्रं सहानुजम् ।
हत्वा दुर्विषहानन्यैरीडितः सुरमानवैः ॥ १३ ॥
मुनिभिः सिद्धगन्धर्वैर्विद्याधरमहोरगैः ।
अप्सरोभिः पितृगणैर्यक्षैः किन्नरचारणैः ॥ १४ ॥
उपगीयमानविजयः कुसुमैरभिवर्षितः ।
वृतश्च वृष्णिप्रवरैर्विवेशालङ्कृतां पुरीम् ॥ १५ ॥
एवं योगेश्वरः कृष्णो भगवाञ्जगदीश्वरः ।
ईयते पशुदृष्टीनां निर्जितो जयतीति सः ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सूक्ष्मतरं चक्षुरग्राह्यं ननु स्वल्पतमप्रमाणं । उल्केव भूमिं खाच्च्युतेति वैद्यवधोक्तेः । तथापि पश्यतामिति श्रीभगवदिच्छाया एव कारणत्वं सूचितम् । अत्र श्रीकृष्णस्य व्रजागमनं व्रजेन सह वृन्दावन एव च तस्याप्रकटलीलाप्रवेशः श्रीकृष्णसन्दर्भे चतुःसप्तत्यधिकशततमाद्यनुच्छेदावतारिका प्रबन्धक्रमात्प्रदर्शितः । अतएव यमुनामनुयान्त्येवेत्युक्त्वापि श्रीबलदेवस्य पुनर्व्रजगमनं नोक्तं भावित्वादिति ततस्तु पुरानिवृत्तिभावित्वादित्यर्थः । विशुद्धपक्षे विमलकीर्तिर्भविष्यति ॥१०–४०॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो यज्जातं तदाह—गदानिर्भिन्नहृदय इति । मुखतो रुधिरोद्गमनं वाक्पारुष्यदोषपरिहारार्थं ततो दुर्योत्पत्त्यर्थमिव केशान् बाहुदण्डौ च प्रसार्य धरण्यां भगवच्चरणारविन्दे विशिष्टासुर्विगताशुर्वा न्यपतत् आदौ मात्रैव समवनयनं द्वितीये भोगावेशाभावात् प्राणानां परित्यागः ॥ ९ ॥

तदुत्तरं सायुज्यं जातमित्याह—ततः सूक्ष्मतरं ज्योतिरिति । आत्मज्योतिः कृष्णं भगवच्चरणारविन्दम् अत्र सर्वे साक्षिण इत्याह—पश्यतामिति । यथा चैद्यवध इति चैद्यवधे तत्तेजः दशदिशो भासयन् भगवन्तं प्रविवेश एवमयमपीत्यर्थः ॥ १० ॥

तस्य सायुज्यं दृष्ट्वा तद्भ्राता विदूरथोपि तथापि तथा कर्तुं प्रवृत्त इत्याह—विदूरथस्त्विति । अथ रच्युतकालङ्कारः विदूरथ इति विकटो भवति दूरादेव रथ इति तद्भ्राता दन्तवक्त्रस्य भ्रातृशोकेन परितः प्लुतः मग्नः सन् असिचर्मभ्यामुद्यतायुधः अनेन सर्प इव तस्य क्रोधो निरूपितः तज्जिघांसति आगमनाभिप्रायः श्रान्तोपि प्रवर्तकः ॥ ११ ॥

तत्प्रवृत्तस्य सम्बन्धीति आगत एव प्रहारात्पूर्वमेव चक्रेण शिरो जहार क्षुरनेमिनेति । स्वालौकिकसामर्थ्याभावः जहार हरिश्चक्राद् सकुण्डलं सकिरीटमिति देहाभिमानं तेन मुक्तियोग्यता निरूपिता ॥ १२ ॥



भाषा टीका ।

गदा से भिन्न हृदय होकर मुख से रुधिर की वमन करत् केश भुजा पाव पसार कर प्राण रहित दन्तवक्र धरणी में गिरपड़ा ॥ ९ ॥

हे नृप ! सब प्राणियों के देखतें२ आश्चर्य कारि अति सूक्ष्म जीवरूप ज्योति दन्तवक्र के शरीर ते निकसकर श्रीकृष्ण के शरीर में प्रवेश करगई जैसे शिशुपाल के वध में उसके शरीर से ज्योति निकसकर श्रीकृष्ण के श्रीअङ्ग में प्रवेशकर गई रही ॥ १० ॥

अनन्तर दन्तवक्र का भ्राता विदूरथ भ्राता के मरणजनित शोक सें व्याप्त भया श्रीकृष्ण के मारने की इच्छा करके ढाल तरवार से युक्त होकर ऊंचे२ स्वास लेता भया युद्ध करने कों आतो भयो ॥ ११ ॥

हे राजेन्द्र ! आते भये विदूरथ के किरीट कुण्डल सहित शिर का छुरा की धार के समान तीक्ष्ण धार वारे सुदर्शन चक्र सें श्रीकृष्ण जी ने काटि दिया ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं श्रीकृष्णो महाबलानपि लीलया जयत्येवेति कृत्वा स कदाचिज्जरासन्धादिभिर्निर्जित इति पशुदृष्टीनामीयते नित्यजये हेतवः योगेश्वरो भगवान् जगदीश्वर इति ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवमितित्रिकम् । अन्यैः श्रीकृष्णेतरैर्दुर्विषहान् असह्यविक्रमानपीत्यर्थः । सुरैर्मानवैश्च ईडितः जयजयेत्यादिना स्तुतः मुन्यादिभिरुपगीयमानः शोभादिवचनेन विजयो यस्य सः तैरेव सर्वैः कुसुमैः कृत्वाऽभितो वर्षितः वृष्ट्येव व्यापित इत्यर्थः वृष्णिप्रवरैः प्रत्युद्गमार्थं श्रीप्रद्युम्नादिभिः तत्प्रस्थानान्तरमभ्यागतैरेव सर्वैः श्रीवसुदेवबलदेवोग्रसेनादिभिर्वृतः अलङ्कृतां स्वभावत एव किं वा महादुष्टवर्गविजयोत्सवेन विशेषतो भूषिता-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मित्यर्थः । अत्र दन्तवक्रवधप्रसङ्गे पाद्मोत्तरखण्डे विशेषः श्रूयते तथाहि तदीयगद्यानि "अथ शिशुपालं निहतं श्रुत्वा दन्तवक्रः कृष्णेन योद्धुं मथुरामाजगाम, कृष्णस्तु तच्छ्रुत्वा रथमारुह्य मथुरामाययौ तयोर्दन्तवक्रवासुदेवयोरहोरात्रं मथुराद्वारि सङ्ग्रामः समवर्त्तत, कृष्णस्तु गदया तं जघान स तु चूर्णितसर्वाङ्गो वज्रनिर्भिन्नो महीधर इव गतासुरवनीतले पपात सोऽपि हरेः सारूप्येण योगिगम्यं नित्यानन्दसुखदं शाश्वतं परमं पदमवाप । इत्थं जयविजयौ सनकादिशापव्याजेन केवल भगवतो लीलार्थम् संसृतावततीर्य्य जन्मत्रयेऽपि तेनैव निहतौ जन्मत्रयावसाने मुक्तिमवापतुः" इति. अत्र कल्पभेदव्यवस्था न मन्तव्या सङ्गतेः सद्भावात् साह्यगतेरेव गतिः नसाद्त्राप्यपा सङ्गतिः कर्त्तव्या मारितमात्रे साल्वे तन्निष्क्रयार्थमप्यागतत्वेन निर्द्दिष्टस्य तस्य तच्छ्रवणं गृहे न सम्भवति किन्तु सोऽयं पौण्ड्रकस्य वधं पूर्वमेव ज्ञात्वा शिशुपालवधे तु ज्ञातमात्रेऽतिरुषा निजदेशतः शक्रप्रस्थदिशमेवागमः तत्र गदामात्रमादायैकाकित्वेन चलिततया पृथ्वीप्रकम्पनगतितया महासत्वतया सिन्धुतया वज्रनिर्भिन्नमहीधरतया च तत्र तत्र पठितया महादेवाराधनेनाकस्माद्धिरण्याक्षसदृक्षताप्राप्ततया चागतः श्रीशुकदेवनिर्द्दिष्टदुर्मतितया जरासन्धवधार्थं श्रीमदुद्धव मन्त्रमेवावलम्ब्य श्रीकृष्णं चक्रमात्रबलं मत्वा द्वन्द्वयुद्धाय गदामादाय श्रीबलदेवभीमादीन् गदाशिक्षानिपुणान् मत्वा तमेकाकिनमेवाह्वयितुं तञ्च तद्देशमुपद्रावयितुं मथुरायामेवाययौ ततश्च नूनं श्रीनारदमुखात् द्वारकामागतं विनिहतसाल्वं च श्रीकृष्णं श्रुत्वा तत्रैव चलितुमुद्यतो हिरण्याक्षवद्देवातिदूरादपि दृष्टः तावदेव च साल्ववधानन्तरं श्रीभगवता मनोजवेनैव स्वरथेन तद्वदेकाकितयैवागतवता मथुरातो निष्क्रम्यागच्छन्नसौ प्रतिकूलागमनतया दृश्यतेत्यादि तत्रैव चासौ दन्तवक्रो हत इत्यत्रापि मथुरायां द्वारकादिग्द्वारि दन्तवक्रहेतिसंस्कृतानुगायां लोकभाषायां दतिहा नाम्ना प्रसिद्धः श्रीवज्रेण वासितो ग्रामो वर्त्तते अथ विदूरथस्तु तदसमत्या तेन सममनागतोऽपि भ्रातृस्नेहेन पश्चादागत्य तं हतं दृष्ट्वा श्रीकृष्णवित्रभानौ पतङ्ग इव पपातेति किञ्चान्यदपि तदनन्तरमुत्तरखण्डे वर्त्तते यथा कृष्णोऽपि तं हत्वा यमुनामुत्तीर्य्य नन्दव्रजं गत्वा सोत्कण्ठौ पितरावभिवाद्याश्वस्य ताभ्यां साश्रुकण्ठमालिङ्गितः सकलगोपवृद्धान् प्रणम्याश्वास्य बहुवस्त्राभरणादिभिस्तत्रस्थान् सर्वान् सन्तर्पयामास —

"कालिन्द्याः पुलिने रम्ये पुण्यवृक्षसमाचिते ।
गोपनारीभिरनिशं क्रीडयामास केशवः" ॥ इति

यमुनाजलमुत्तीर्येति ब्राह्मणबालकाहरणे दर्शितप्रभावेन स्वेनैव रथेनेति स्वयं बहुवस्त्रादीनां तत्क्षणं तत्सम्पत्तिश्च लक्ष्मीपतित्वादकस्मात्सर्वत उपस्थितेरिति च इदं पुनर्व्रजागमनं श्रीमद्भागवतस्यापि सम्मतम् —

"नात्तथा तप्यतीर्वीक्ष्य स्वप्रस्थाने यदूत्तमः ।
सान्त्वयामास सप्रेमैरायास्य इति दौत्यकैः ॥

इति —

"यात यूयं व्रजं तात वयञ्च स्नेहदुःखितान् ।
ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम् ॥ इति.

हत्वा कंसं रङ्गमध्ये प्रतीपं सर्वसात्वताम् ।
यदाह वः समागत्य कृष्णः सत्यं करोति तत् ॥
आगमिष्यत्यदीर्घेण कालेन व्रजमच्युत. ।
प्रियं विधास्यते पित्रोर्भगवान् सात्वतां पतिः" ॥

इति च स्वमुखेन भक्तजनमुखेन च बहुसङ्कल्पसिद्धेरन्यथानुपपत्तेः सत्यसङ्कल्प इति हि परमेश्वरनिष्ठा श्रुतिः, सत्यव्रतमिति ईश्वराणां वचः सत्यमिति च स्वयं श्रीमद्भागवतमेव कथं वाऽक्रूरस्य कुब्जायाश्च सकृन्मात्रगृहागमनप्रतिज्ञा सम्पादिता कथं वा मुहुरपि तेषामपि सा न सम्पादयितव्या न केवलमेतावदेव तस्य व्रजागमनमपि अत्र मधून् मथुरां प्रति व्याख्याय तदानीं तन्मण्डले सुहृदो व्रजस्था एवं प्रकट इति श्रीस्वामिपादैरपि तथाभिमतं "तत्र योगप्रभावेन नीत्वा सर्वं जनं हरिः" इत्यत्र सर्वशब्देनान्येषां तत्राविद्यमानत्वात् सुहृद्दिदृक्षुरुत्कण्ठ इति श्रीबलदेवागमनेऽपि तत्रैव तत्प्रयोगात् श्रीभगवतस्तत्र गमने समयश्चायमेव तत्स्वारस्यलब्धः विधाय सुहृदां सुखमित्युक्तत्वात् अधुनैव निर्जिताशेषशत्रुत्वादिना तेषां नैश्चिन्त्यं जातमिति एतत्प्राचीनलीलात्वेन स्थापयिष्यमाणायां सूर्य्योपरागयात्रायामप्येतदेव निजभक्तदिस्यनागमने कारणमुपन्यस्तं स्वयं भगवता —

"अपि स्मरथ नः सख्यः स्वानामर्थचिकीर्षया ।
गतांश्चिरायितान्छत्रुपक्षक्षपणचेतसः" ॥ इति

एवमपि यदिदं श्रीमद्व्रजागमनं पुराणान्तरेषु नोद्घाटितं तत् खलु परोक्षवादरीतिकत्वादृषीणाम् अत्र च परोक्षवादो बहिर्मुखान् प्रति तादृशतदीयरहस्यलीलादिगोपनाय अनुरागिणः प्रति उत्कण्ठावर्द्धनायचेति ज्ञेयम् अभ्युपगम्य त एव चानेकत्र पुराणेऽनुक्तस्याप्येकत्रोक्तस्य प्रामाणिकत्वं यथा ब्रह्ममोहनवस्त्रहरणमृद्भक्षणादिलीलानां यत्तु 'तत्र तत्र स्वयं सूचितस्यापि व्रजागमनस्य श्रीशुकदेवेन चात्राकथनं तत्खलु परोक्षवादसिद्धान्तमेव द्रढयति—विशेषश्चास्य "तत्स्मारितानन्तहताऽखिलेन्द्रियः" इतिवन्मध्ये मध्ये प्रेममूर्च्छां प्राप्नुवतः कदाचिदाशीप्सितकथासक्त्या स्यात्कदाचिच्च स्यादपि यथैव काश्चिदपि लीलाः क्रमवैपरीत्येनापि वर्णिताः सन्ति यथैव दन्तवक्रवधात्पूर्वापि सूर्योपरागयात्रा दूरतः परत एव वक्ष्यते यतस्तीर्थयात्रातः श्रीबलदेवे कुरुयुद्धमागते सत्येव सर्वकौरववधोत्तरकाल एव च दुर्योधनवधः तदुत्तरतो वक्ष्यमाणा सूर्य्योपरागयात्रा तु श्रीभीष्मद्रोणाद्यागमनमपीति, क्रमस्त्वयमेव प्रथमं सूर्य्योपरागयात्रा ततो राजसूयसभा ततो द्यूतं ततः पाण्डवानां वनगमनं तदैव साल्वदन्तवक्रवधव्रजागमनानि वनादागतेषु पाण्डवेषु श्रीबलदेवतीर्थयात्रादिकमिति. सूर्य्योपरागयात्रातु कंसवधात्तातिबहुसम्वत्सरानन्तरा यतस्तत्रैव —

"कंसप्रतापिताः सर्वे वयं याता दिशं दिशम् ।
एतर्ह्येव पुनः स्थानं दैवेनासादिता स्वसः" ॥

इति कुन्तींप्रति श्रीवसुदेववाक्यम् अतः प्रथमदर्शनादेव श्रीद्रौपद्या श्रीरुक्मिण्यादीनां मिथो विवाहप्रश्नोत्तरे घटेते यत्तु "आस्तेऽनिरुद्धो रक्षायां कृतवर्मा च यूथपः" इति सूर्य्योपरागयात्राम् अनिरुद्धस्यापि प्रौढत्वप्रतीतेश्चिरकालत्वमाकल्पते तत्पुन-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नातिदीर्घेण कालेन "स कार्ष्णी रूढयौवनः" इति न्यायेनाल्पकालत एव तत्स्वरूपेण तादृशत्वम् अत एव "आगमिष्यत्यदीर्घेण कालेन व्रजमच्युतः" इत्यपि सङ्गच्छते श्रीकृष्णनन्दनोऽप्यन्योऽनिरुद्धो वर्त्तते यः खलुः दशमान्ते महारथमध्ये गणितो वर्णितो व्याख्यातश्चेति व्यवस्थितमेव श्रीपाद्मोत्तरखण्डे स्पष्टमुक्तं पुनः श्रीव्रजागमनं किञ्चान्यदपि रहस्यमेतदन्ते तत्र वर्त्तते यथा—

"रम्यकेलिसुखेनैव गोपवेषधरः प्रभुः ।
बहुप्रेमरसेनात्र मासद्वयमुवास ह ॥

अथ तत्रस्था नन्दगोपादयः सर्वे जनाः पुत्रदारसहिताः पशुपक्षिमृगादयश्च वासुदेवप्रसादेन दिव्यरूपधरा विमानमारूढाः परमं वैकुण्ठं लोकमवापुरिति ह स्फुटं प्रकटं यथा स्यात्तथा मासद्वयमुवास अथानन्तरं दिव्यरूपधारा इति परमानन्देन पूर्वतोऽप्यलौकिकशोभायुक्ता इत्यर्थः । श्रीगोगोपगोपीपरिकरत्वेनैव नित्यलीलायाः स्थापितत्वात् परमं वैकुण्ठं लोकमिति "दर्शयामास लोकं स्वं गोपानामित्यादिना "नन्दादयस्तु तं दृष्ट्वा परमानन्दनिर्वृताः । कृष्णञ्च तत्र छन्दोभिः स्तूयमानं सुविस्मिताः ।" इत्थं तेनैव नाथेन सनाथं गोलोकमेवेत्यर्थः ।

"वत्सैर्वत्सतरीभिश्च सरामो बालकैर्वृतः ।
वृन्दावनान्तरगतः सदा क्रीडति माधवः ॥

इति स्कान्दोक्तानुसारेण श्रीरामरोहिण्यादियुक्तमपि तमिति भावः । तेषामुत्कण्ठां दृष्ट्वा "न वेद स्वां गतिं भ्रमन्" इति विचिन्त्य तदभिप्रायेणैव श्रीभगवता पूर्वमपि दर्शितोऽसौ एवं श्रीवृन्दावन एव तादृशप्रकाशस्य विद्यमानत्वाद्विमानारूढा इति तदानीं सूर्य्योपरागयात्रातः समागत्य दुःखात् दूरतो यमुनापार एव कृतवासत्वात् अत एवोक्तं कृष्णोऽपि तं हत्वा यमुनामुत्तीर्य्यैति विमानमत्र दारुकादिभिः सह वैकुण्ठादागतः स्वेच्छापरिमाणो भगवद्रथ एव तादृशतया तत्र नयनं चैश्वर्य्यज्ञानप्रधानभक्तेषु देवादिषु महिमदर्शनार्थमेव तस्य शीघ्रत्वमहाज्योतिर्मयत्वाभ्यामलक्ष्यगतित्वेन विस्मापनार्थमेव च व्याख्यानान्तरन्तु न युक्तम् "अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्" इतिन्यायात् अर्क इत्यव्ययं निकटार्थे यदि चेयं तस्य पुनर्व्रजागतिः नित्यप्राप्तिश्च न स्यात्तदा सर्वा गोकुलानुरागवर्णना उद्धवादिषु स्वयं भगवता तदुत्कण्ठासूचनाश्च विफला एव स्युः न केवलं विफला विरसा एव चेति सुधीभिर्विचार्य्यम् एवं श्रीव्रजवासिनां पुनः साक्षात्तादृशतत्प्राप्त्यपेक्षयैव सूर्योपरागयात्रायामुक्तम्—

"मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते ।
दिष्ट्या यदासीन्मत्स्नेहो भवतीनां मदापनः ।इति

श्रीभगवता "गोपीनां स गुरुर्गतिः" इति श्रीशुकदेवेन च तथा श्रीभागवतैकादशे "केवलेन हि भावेन" इत्यादिपद्यद्वयं साधकचरीणां श्रीगोपीनां प्रथमं स्वप्राप्तिमुक्त्वा प्रस्तावान्नित्यप्रेयसीनामपि तन्मध्यादवियोगानन्तरप्राप्तिस्तस्य वियोगस्यातीतत्वनिर्देशात् ह्यतिक्रियते द्वाभ्याम्—

"रामेण सार्द्धं मथुरां प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः ।
विगाढभावेन न मे वियोगतीव्राधयोऽन्यं ददृशुः सुखाय ॥
तास्ताः क्षपाः प्रेष्ठतमेन नीता मयैव वृन्दावनगोचरेण ।
क्षणार्द्धवत्ताः पुनरङ्ग तासां हीना मया कल्पसमा बभूवुः" ॥

इति पूर्वन्तु तस्य व्रजाय प्रस्थापने—

"मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः ।
स्मरन्त्योऽङ्ग विमुह्यन्ति विरहौत्कण्ठ्यविह्वलाः ॥
धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथञ्चन ।
प्रत्यागमनसन्देशैर्बल्लव्यो मे मदात्मिकाः" ॥

इत्यत्र वर्त्तमानप्रयोग एव कृतः सम्प्रति त्वतीतनिर्द्देशः क्रियते ततश्च विगाढभावेन वियोगतीव्राधयः सत्यो मत्तोऽन्यं मन्त्र्यादिकमपि न सुखाय ददृशुः ततश्चाधुना सुखाय पश्यन्तीति वियोगो नास्तीत्यर्थः । एवं तास्ताः क्षपा मया हीनाः कल्पसमा बभूवुः अधुनातु तादृश्यो न भवन्तीति वियोगो नास्तीत्यर्थः । हे उद्धव ! त्वद्द्वारा तासु सन्देशानुसारेण श्रीवृन्दावनस्यैवाप्रकटप्रकाशविशेषप्रवेशात्तासां नित्यमत्प्राप्तिरिति भावः । ननु पूर्वोक्तानुसारेण गोलोकाख्य वृन्दावनस्य प्रकाशविशेषे तस्मिन्नस्ति प्रकटलीलामदृश्यैवाप्रकटलीला तर्हि कथमुभयोरेकत्र समावेशः ? उच्यते, प्रकटलीलायाः प्रकटप्रकाशस्य चाभेदेनैव तावप्रकटलीलाप्रकाशौ प्रतिपन्नाविति च दर्श्यते तदनन्तरपद्येन—

"ता नाविदन्मय्यनुषङ्गबद्धधियः स्वमात्मानमदस्तथेदं ।
यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नाम रूपे"

इति. अस्यार्थः तास्तथाभूताः विरहोत्कण्ठातिशयेनाभिव्यक्तदुर्द्धरमहाभावाः सत्यः अथ कदाचित्तद्दर्शनार्थं गते मयि लब्धो योऽनुषङ्गो महामोदनाख्यभावाभिव्यक्तिकारी पुनश्च संयोगस्तेन बद्धा धीर्यासां तथाभूताः सत्यः स्वं ममतास्पदमात्मानमहङ्कारास्पदं च अदः प्रकटलीलानुगतत्वेनाभिमतं तथैव इदं प्रकटलीलानुगतत्वेनाभिमतं वा यथा स्यात्तथा नाविदन् किन्तु द्वयोरैक्येनैवाविदुरित्यर्थः । प्रकटप्रकाशस्य तल्लीलायाश्चाभेदेनैवाप्रकटं तद्द्वयमजानन्निति विवेचितं ततश्च नाम च रूपं च तस्मिन् तन्नामरूपात्मनि अप्रकटप्रकाशविशेषे प्रविष्टा इव प्रविष्टाः वस्त्वभेदादित्यर्थः । तत्र प्रकटाप्रकटलीलागतयोर्नामरूपयोरभेदे दृष्टान्तः, यथा समाधौ मुनय इति. समाधिः शुद्धान्ममात्रस्फूर्त्तिः तस्मिन् तयोर्लीलयोर्भेदावेदने दृष्टान्तः यथाब्धितोये नद्य इति । यथा नद्यः पृथिवीगतामब्धितोयगतां च स्वास्थितिं भेदेन न विदन्ति किन्तूभयस्यामपि स्थितौ समुद्रतोयानुगतावेवाधिशान्ति तथा प्रकटाश्च लीलास्थितिं ताश्च भेदेन नाविदुः किन्तु मय्येवाविविशुरित्यर्थः । दृष्टान्तस्त्वयं लीलाभेदावेदनांश एव नतु सर्ववेदनांशे "लोकवत्तु लीलाकैवल्यम्" ( २। १। ३३ ) इतिवत् ततश्चाप्रकटलीलायां प्रविष्टा अपि यद्रूपमात्मनः प्रापुस्तदनन्तरमेव दर्श्यते—

"मत्कामा रमणं जारमस्वरूपविदोऽबलाः ।
ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः ॥ इति

अत्र "आनन्दो ब्रह्म" इति श्रुतिप्रसिद्धेरानन्दरूपं ब्रह्मैव विशेष्यं सर्वैः पदैः सर्वविशेषाश्रयस्य तस्यैव विशेषयितव्यत्वात् अन्वये चार्थिक एव क्रमो गृह्यते तस्यैव प्राधान्यात् "पच्यन्तां विविधाः पाकाः" इत्यादौ सर्पदोहश्च गृह्यताभिनिवत् "नचात्रानूयविधेय.स्तयोः पूर्वापरीभावः श्रयणीयः यस्य पर्णमयी

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

जडुर्भवति न स पापं श्लोकं शृणोतीति यद्वैपरीत्यस्य प्रतीतिवशाल्लब्धत्वात् ततश्चायमर्थः पूर्वोक्तरीत्या ताः ब्रह्म प्रापुः तासां मदंशभूतानां नित्यप्रियाणां सङ्गादन्या अपि साधनसिद्धाः शतसहस्रशः प्रापुः गणद्वयस्यास्य भेदो रासारम्भे दर्शित एव सङ्गस्य तत्प्रापकत्वं झटिति समानभावजनकत्वात् यथोक्तमेतत्पूर्वोक्तमेव केवलेन हि भावेनेत्यादि एवं गवादिष्वपि द्विविधत्वं ज्ञेयं तदेवं यत्प्रापुस्तच्च ब्रह्मनाद्वैतवादिना इति श्रीविष्णुपुराणात् परमा लक्ष्मीः स्वरूपशक्तिरूपा यत्रेति निरुक्तेश्च तथाभूतं श्रीभगवद्रूपमेव नच भगवद्रूपस्य विविधत्वेपि मत्तोन्याकारं प्रापुः किन्तु मां "ब्रह्मणो हि प्रतिष्ठाहम्" इति निर्दिष्टं मद्रूपं स्वयं भगवन्तं नराकृतिपरब्रह्माख्यमेव मत्कामा इति विशेषणात् "मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते। दिष्ट्या यदासीन्मत्स्नेहो भवतीनां मदापनः॥ इति निर्विशेषब्रह्ममात्रप्राप्तिनिषेधपूर्वकसाक्षात्स्वप्राप्तेः प्रतिज्ञातत्वात् "दर्शयामास लोकं स्वं गोपानां तमसः परम्" इत्यादौ च "वाञ्छन्ति यद्भवभियो मुनयो वयञ्च" इति मुमुक्षुमुक्तभक्तैरपि वाञ्छनीयेन प्रेमविशेषेण लब्धतया सर्वतो वैशिष्ट्येन तल्लाभावगमात् सर्वेषामेव व्रजवासिनां श्रीकृष्णरूपस्य स्वधामैव स्वलोक इति तेनैव दर्शितत्वेन अथ तत्रस्था नन्दादयः सर्वे जनाः पुत्रदारसहिता इत्यादौ च श्रीकृष्णादिलक्षणपुत्रश्रीयशोदादिलक्षणदारसहिततत्प्राप्तेः सर्वव्रजजनकीयत्वेन तास्तु कैमुत्यस्य सिद्धत्वाच्च तदेवं ब्रह्मत्वेनानन्दरूपतया स्वरूपस्य तथा परमत्वेन गुणानामपि सर्वोत्कृष्टत्वं दर्शयित्वा स्वस्य सर्वोत्तमनायकत्वं दर्शितं तत्रापि मां पदेन स्वयं भगवत्त्वं व्यज्य परमवैशिष्ट्यं ज्ञापितं तदेवं स्वरूपे निर्दिष्टे कीदृक् सम्बन्धं त्वां प्रापुरित्याशङ्किष्यत इत्यभिप्रेत्य तासामेव विशेषणेष्वन्तःपतितया स्वविशेषणाभ्याम् सम्बन्धमपि निर्दिशति "मत्कामा रमणं जारमस्वरूपविदः" इति च तत्र रमणः पतिः जार उपपतिः इत्येव रूढ्या लभ्यते "रूढिर्योगमपहरतीति" न्यायेन जारशब्दवद्रमणशब्दस्याप्यन्यार्थो न युज्यते तथा हि समानेपि यौगिकत्वेन नन्दनरमणशब्दयोर्भिन्नार्थत्वेन प्रतीतेर्मित्रापुत्रो मित्ररमणो नोच्यते न च मित्रापतिर्मित्रानन्दन इति तथा च विश्वप्रकाशे पटोलमूले रमणं स्यात्तथा रमणः प्रिय इति प्रियशब्दस्य चात्रपतिवाचित्वमेव "धवः प्रियः पतिर्भर्ता" इत्यमरकोषात् जारस्तूपपतावेव रूढः "जारस्तूपपतिः समौ" इत्यमरकोषात् पापपतिरयमुच्यते जारः पापपतिः समाविति त्रिकाण्डशेषात् तस्मात्पत्यावेव रूढोऽयं रमणशब्दो यौगिकत्वेनान्यवाचकत्वं नाङ्गीकरोति तदेवं यो जारः स पतिर्न भवति यः पतिः स जारो न भवतीति तथात्रैकस्मिन् द्वावपि पर्य्यवसायितव्याविति स्थितः स्वयमेव तासां विशेषणाभ्याम् व्यवस्थापयति मत्कामा रमणमिति जारमस्वरूपविद इति च अत्र मत्पदाभावात् स्वरूपशब्देनात्र तासामेव स्वरूपमुच्यते ततश्च प्रथमं तावल्लीलाशक्त्या जन्मादिना विस्मारितं मन्नित्यप्रेयसीत्वलक्षणं स्वरूपमजानन्त्यो रागातिशयाज्जारतया प्रतीतमेव मां प्रापुः तथापि मत्कामामपि कामेभिलाषः कथमस्मिन् रमणत्वमेव जारवद्बुद्धिः स्याज्जारत्वन्तु स्वप्नवद्विलीयतेति लक्षणो यासां तथाभूताः सत्यो रमणत्वमेव प्रापुः परपुरुषरागिणीष्वन्यास्वपि तादृशभावादुर्लभतादिकं तत्खलु विप्रलम्भात्मकमेवेति विप्रलम्भ एव तत्र रत्युत्कर्षः ततश्च सङ्गतां वा सहृदयेन तासु तस्य कादाचित्कता यदि—

"न विना विप्रलम्भेन संयोगः पुष्टिमश्नुते।

कषायिते हि वस्त्रादौ भूयान् रागो विवर्द्धते॥

इत्यादिन्यायेन पर्य्यवसाने कषायेण राग इव विप्रलम्भेन संयोगः पुष्टः स्यात् तेन स इव पुनरपि बाधितो न स्यात् हन्त हन्त तस्य शश्वदावृत्तिः कस्य वा कर्णयोरेकतरेणापि स्पृहयतां भोजनरुचिवृद्धये लङ्घनाद्युग्रचिकित्सानामविश्रान्तिवत् तस्मात्कपि तदुपद्रवशमनाय रमणतया प्राप्तावेव तात्पर्य्यम् अन्यथा रसभङ्गश्च स्यात् तथाहि "निवारयामः समुपेत्य माधवं किन्नो करिष्यन् कुलवृद्धबान्धवाः" इति. "विसृज्य लज्जां रुरुदुः स्म सुस्वरं गोविन्द दामोदर माधवेति "ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः" इति त्यक्तलौकिका इति गतह्रिय इति काचिन्मधुकरं दृष्ट्वेति "या दुस्त्यजं स्वजनमार्य्यपथञ्च हित्वा" इति "मातरं पितरं भ्रातॄन् पतीन् पुत्रान् स्वसॄरपि। यदर्थे जहिम दाशार्ह" इति च व्यक्तदुःखरश्रीकृष्णमहाभावानां व्रजं प्रत्यागते श्रीकृष्णे परपत्नीत्वस्य मिथ्यात्वव्यक्तिं विना तस्य व्रजे परमलज्जा प्रसज्जेत उक्तञ्च लज्जाशीलत्वं तस्य श्रीहरिवंशे—

"यत्र ह्रीः श्रीःस्थिता तत्र यत्र श्रीस्तत्र सन्नतिः।

सन्नतिर्ह्रीस्तथा श्रीश्च नित्यं कृष्णे तथाऽऽत्मनि॥ इति

तस्मात्तल्लज्जानिवारणार्थमपि मायया स्वगुप्ते रमणत्वं व्यञ्जनीयमेव तच्च लोकवल्लीलाकैवल्यमये व्रजे लोकरीत्यैव नतु परीक्षित्सभायामिव गोपीनां तत्पतीनाञ्चेत्यादिदर्शितपरमात्मत्वादिरीत्या किञ्च श्रीलत्वाद्रसविघातकृत्पारदार्य्यस्य अयत्नपूर्वकं तत्रैवात्र च रमणत्वमेव व्यञ्जयितव्यमिति दिक्। यथाह श्रीगोपालोत्तरतापिन्यां ताः प्रति दुर्वासाः "जन्मजराभ्यां भिन्नः स्थाणुरयमच्छेद्योयं योसौ सौर्य्ये तिष्ठति योसौ गोषु तिष्ठति योसौ गोपान् पालयति योसौ गोपेषु तिष्ठति योसौ सर्वेषु वेदेषु तिष्ठति योसौ सर्वैर्वेदैर्गीयते योसौ सर्वेषु भूतेष्वाविश्य भूतानि विदधाति स वो हि स्वामी भवति" इति सौर्य्ये इति सौरी यमुना तद्दूरभवदेश इत्यर्थः। अथ तत्तद्ग्रन्थानन्तरमपि पाद्मोत्तरखण्डे गद्यान्तरं यथा "कृष्णस्तु नन्दगोपव्रजौकसां सर्वेषां परमं निरामयं स्वपदं दत्वा दिवि देवगणैः संस्तूयमानो द्वारवतीं विवेश" इति निरामयं प्रापञ्चिकदोषाभिन्नं पुनर्विरहदुःखरहितञ्चेत्यर्थः। स्वपदं स्वस्य श्रीगोपालरूपस्यैव नित्यविहारास्पदमित्यर्थः। तथा च सति जारत्वमेव तस्मिन्न सिद्ध्यतीति श्रीशुकदेवेन सिद्धान्तितं गोपीनां तत्पतीनाञ्चेत्यादिना श्रीदत्तात्रेयेण परमार्थविवेकश्लाघागर्भे गुरुत्वेन मतया पिङ्गलया च आत्मना रमणेनैव रंस्ये अनेन यथा रमेति जारभावेन प्राप्तेरागन्तुकत्वेन दर्शितत्वात् दर्शयिष्यमाणत्वाच्च न पर्य्यवसितपुरुषार्थत्वं तस्माज्जारत्वेन प्रतीतमपि मल्लक्षणं नराकृतिपरब्रह्मैव रमणरूपं प्रापुरित्येवं जारतया पूर्वप्रतीतस्यैव मनूद्य रमणत्वं विधीयते प्रसिद्धं ह्यनूद्याप्रसिद्धं विधातव्यं विप्रोयं पण्डित इतिवत् जारत्वं यद्यपि प्रसिद्धमिति न वैपरीत्यं घटते किञ्च प्राप्ते हि याचमर्थवादिति न्यायेन द्वयः

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

जुहोतीत्यादौ दधिपदवद्रमणपद एव विधेयत्वं ननु पूर्वपूर्वप्राप्ते ब्रह्मादिजारपर्य्यन्त इति इह च ब्रह्मत्येवोक्ते श्रुतानिर्विशेष ब्रह्मवादानां भगवत्त्वं भ्रमाविषयः स्यादिति परमामित्युच्यते सिद्धेच भगवत्त्वे श्रीकृष्णरूपत्वं न व्यक्तीभवतीति मामित्युच्यते मामित्येवोक्तञ्च ब्रह्मत्वं भगवत्त्वञ्च प्रमाणान्तरसापेक्षं भवतीति तत्तदुच्यते यदि रमणपदं नोच्येत तर्हि जारमित्येवं विधेयतया प्रतीयेत यदि च जारपदं नोच्येत तर्हि पूर्वप्रतीतत्वाद्रमणपदेनापि जारत्वमेव प्रतीयेतेति तन्निरासार्थे तव दर्शनात् "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इति मम भक्तभावानुसारित्वात् सोयं भावश्च श्रीराधादेव्या स्वयमेव होषां व्यक्तीकृतः "अपि तव मधुपुर्य्यामार्य्यपुत्रोऽधुनास्ते स्मरति स पितृगेहान् सौम्यबन्धूंश्च गोपान् । क्वचिदपि स कथां नः किङ्करीणां गृणीते भुजमगुरुसुगन्धं मूर्द्ध्नि धास्यत् कदानु"॥ इत्यनेन अत्र खलु पत्यावेव कविभिः प्रयुक्तेनार्यपुत्रइत्यनेन तदीयात्वमेव स्वान्तर्भावितं व्यज्य किङ्करीणामित्यनेन तदेव दैन्येनापि नाटकीकृत्य भुजमगुरुसुगन्धमित्यादिना तेनापि तादृशत्वेन रूपेव स्वस्मिन्नङ्गीकृतिः प्रार्थिता मयाचेयं कर्त्तुमिष्टैव गोपीनां मद्वियोगाधिमित्यारभ्य वल्लव्यो मे मदात्मिका इत्यनेन तस्माद्रमणतयैव तासामप्राप्तिः पर्य्यवसिता तदेवमेवाभिप्रेत्य पत्युपपतिशब्दावदत्वा जाररमणशब्दाभ्यां तत्तद्यौगिकार्थबलेन तथा तथा प्राप्तेर्निकर्षप्रकर्षौ व्यज्य रमणतया प्राप्तिरेव पूर्त्तये योग्येति व्यञ्जितं व्याख्यातञ्च स्वामिभिः जारबुद्धिवेद्यमपीत्येव ननु रमणबुद्धिवेद्यमपीति तासां क्रमेण तथातथा मत्प्राप्तौ मत्कृपैव हेतुरित्याह—अबला इति । ज्ञानक्रियाशक्तिहीनत्वान्मत्कृपाविषया इत्यर्थः । तदेवं स्थितेपि विशेषप्रतिपत्तये विचार्य्यते रमणोत्र रतिजनको वक्तव्य इतिचेत् न रतिजनकत्वं विना लौकिकोपि जारो नाश्रीयते इति जारपदेनैव तदर्थतायालब्धेः किमुत सर्वोत्तमनायकतासूचकेन परमस्थितिमामितिच पदेन इत्यादिस्थायिभावश्च न साक्षाद्वाच्यः किन्तु भङ्ग्या व्यञ्जयितव्य एवेति तु रसशास्त्राणां स्थितिः क्रीडार्थत्वेपि क्रीडाच पूर्वहेतोरेव लभ्यत इति तेनाप्यलं. ननु सत्स्वपि केषुचित्पतिं मन्यादिषु रमणपदमत्र तत्सम्बन्धदुःखनिवारकत्वं प्रति नेयमिति चेत्कष्टं कथं वा तासामनुभवापलापः क्रियते कृष्णेतरपतितत्सम्बन्धिमात्राणां सम्बन्धमात्रस्य ताभिः सुदुस्सहत्वात् यथोक्तं "कुर्वन्ति हि त्वयि रतिं कुशलाः स्व आत्मन्नित्यप्रिये पतिसुतादिभिरार्त्तिदैः किम्" इति तेष्ववस्थितेस्तु सुतरां यथोक्तं नान्यसमक्षमङ्गः स्थातुं त्वयाभिरामिता बत पारयाम इति किमुत तत्कृतिं निवारणादीनां यथोक्तम् "अन्तर्गृहगताः काश्चित्"इत्यादि तदेवं यौगिकी वृत्तिर्न घटते गौण्यान्तु तत्सदृशत्वप्राप्तेर्जार इत्येव प्रतिपद्येतेति पौनरुक्त्यमेवापद्येत नच जारपदं वा तद्वृत्तिद्वयं नेतव्यं यौगिकया अभिमतत्वात् गौण्यां तद्गुणयोगाभिधानेन रमणशब्दयोगेन च गुप्तत्वादिरीतिकपतेरेव प्रतिपत्तव्यत्वेन जारताप्रतिसिद्धेर्व्याघातात् श्रीभगवता तु तत्र तत्र तत्तद्विशेषणं दत्वा व्यवस्थापितमेवेत्यलं स्वयं कुकल्पनायां दुराग्रहेण तस्माद्भिन्नवाचकत्वेपि सर्वविशेषाश्रये तस्मिन् ब्रह्मणि सामानाधिकरण्यस्यावमन्तव्यत्वादेकस्य प्रातीतिकत्वमन्यस्य वास्तवत्वमित्यंव मन्तव्यं तत्र न सम्भवात् नच कल्पिताकल्पितयोर्युगपदाविर्भावो न स्यात् संज्ञाया आविर्भावेच्छायायाः स्थितिश्रवणात् नचौपपत्त्यापगमे निवारणाद्यभावेन रागवृद्धिर्न स्यात् यद्यप्यसौ पार्श्वगतो रहोगतस्तथापि तस्याङ्घ्रियुगं नवं नवमिति वचनस्य तासु सर्वोर्द्ध्वप्रेमवतीषु कैमुत्योपपत्तेः नच यत्र मिथो दुर्लभता यत्र प्रच्छन्नकामुकत्वञ्च यत्रच निवारणा स्यादेषा तु नो रतिः परा ज्ञेयेति रसशास्त्रानुसारेणौपपत्य एव रतेरुत्कर्षः रत्नावतीनाटिका ययातिचरितवद्दाम्पत्येपि तत्सम्भावात् नेष्टा यदङ्गिनि रसेकविभिः परोढेत्यादौ परोढानङ्गीकाराच्च लज्जालुत्वाद्बहुप्रेयसीत्वाच्छ्रीव्रजराजनन्दने तु मुहुर्दुर्लभतादिकमपि सम्भवतीति किमनिष्टप्रसङ्गेन "या दुस्त्यजं स्वजनमार्य्यपथं च हित्वा" इत्यादिदर्शितं तत्तदुल्लङ्घनं तु तासामुत्कण्ठात्मकप्रेमबलस्य प्रकाशकमेव ननु तत्कृतनिवारणतया तस्य जनकं नहि महादुर्गत्रोटनं महाहस्तिनो बलजनकं किन्तु तत्प्रकाशकमेवेति किञ्च परकीयत्वे सति तदनुवादश्च कार्य्य इति तथोक्तं तस्माद्रमणतया प्राप्तावेव वक्तुर्मम विवक्षितपर्य्यवसानमिति भावः । तदेतदेवं "तमेव परमात्मानं जारबुद्ध्यापि सङ्गता" इत्यवष्टम्भेन "या मया क्रीडता रात्र्याम्" इत्यत्र ज्ञापितम् अप्यर्थत्वेन तस्याहेयत्वव्यक्तेः "जिघांसयापि हरये स्तनं दत्वाप सद्गतिम्" इतिवत् अपिशब्दस्य खलु स्वभावोयं यन्निन्द्यवाचकसान्निध्ये निन्द्यस्य हेयत्वं स्तुत्यवाचकसान्निध्ये स्तुत्यस्योपादेयत्वं गमयति पलाण्डुमपि सिञ्चति तुलसीमपि सिञ्चतीतिवत् नच भर्तृबुद्धिरपि तादृशी "याः सम्पर्य्यचरत् प्रेम्णा पादसम्वाहनादिभिः । जगद्गुरुं भर्तृबुद्ध्या तासां किं वर्ण्यते तपः"॥ इत्यत्र स्तुतत्वात् न चासामहो चरणेत्यादौ जारभावोपि स्तुतः अपितु राग एव स एव जारतयापि तं स्वीकारितवानिति एतस्यैव चमत्कारकारित्वात् नचैताः परमित्यादौ मुमुक्षुमुक्तभक्तानामुद्धवोक्तानां परदारा भूत्वा जारतया तं भजामेति तात्पर्य्यं किन्तु तादृशनिरर्गलमहाप्रेम दृष्ट्वा तत्कृपामाशासानास्तच्छविमेव ते प्रार्थयन्ते ततो यद्यपि यथा भीष्ममुदारं दर्शनीयं कटङ्करोतीत्यादौ कृतिक्रियाया विशेषणानि चान्वयन्ते तथात्र प्राप्तिक्रिययापि कटङ्करोति तञ्च भीष्ममित्यादिवद्ब्रह्म प्रापुस्तच्च परमित्यादिरीत्या तथापि रमणत्वेन प्राप्तिरेवात्र विधेया जारमप्यमुमविद इत्युक्त्वा तन्नित्यप्रेयसीत्वात्तासां तच्च श्रीमद्दशाक्षरादौ व्यक्तम्—

"अनेकजन्मसिद्धानां गोपीनां पतिरेव वा ।
नन्दनन्दन इत्युक्तस्त्रैलोक्यानन्दवर्द्धनः" ॥

इति तन्मन्त्रस्य तन्नामव्याख्यातृगौतमीयात् अनेकजन्मसिद्धत्वमत्र "बहूनि मे व्यतीतानि जन्मानि तव चार्जुन" इतिवत् एवशब्दः प्रकटलीलागतजारत्वकिम्वदन्तीनिरासार्थः वाशब्दश्च पूर्वोक्तब्रह्मत्वेश्वरत्वमयव्याख्याद्वयस्यानादरापेक्षया नच ताभिः परकीयतया प्रसिद्धाभिस्तस्य रमणतया प्राप्तिर्व्रजे कथङ्घटतेति वाच्यं यया लीलाशक्त्याऽन्यथा प्रत्यापितं तया यथावत् प्रत्यापयितुं कथमिव न शक्येत नच तासां श्रीकृष्ण एव पर्य्यवसितत्वे तत्पतिं मन्यादीनामसूया स्यात् "नासूयन् खलु कृष्णाय" इत्याद्युक्तानुसारेण मायया स्वकल्पितानां तत्प्रतिरूपाणामर्प-

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

णेन समाधानानन्तरञ्च प्रकाशान्तरेण यदुभिर्मिलित्वेतिशेषः "वृतश्च वृष्णिप्रवरैर्विवेशालङ्कृतां पुरीम्" इत्युक्तत्वात् श्रीकृष्णागमनं प्रतीक्ष्य तेषां बहिरेव स्थितत्वात् तच्च मासद्वयविलम्बेपि जाते नाशङ्काकरं विदूरवर्त्मत्वात् तस्यैव योगमायया मुहूर्त्तवद्भानसम्भवात् एकस्मिन्नपि यातेऽब्दे इत्यत्र क्षणार्द्धं मेनिरेऽर्भका इतिवत् पश्चादेव तद्विशेषज्ञानं श्रीदारुकमुखादित्यवगन्तव्यं तस्मादिदमपि व्यवस्थितम् एवं श्रीगोकुलवासिनामप्रकटलीलाप्रवेशस्य सिद्धत्वादेव श्रीरामस्य यमुनामनु तीर्थकृतौ तथा प्रथमस्कन्धवर्णिते भारतयुद्धानन्तरं श्रीभगवतो हस्तिनापुराद्द्वारकापुरगमने रासपञ्चाध्याय्यां श्रीमदुद्धवसन्देशे च तत्तद्व्याख्यानं मेलयित्वा द्रष्टव्यम् ॥ १३—१५ ॥

इत्थं सर्वविजयमुक्त्वा लोकरीत्या कदाचित्पराजयोपि जात इति सम्भावयतो निन्दति-एवमिति । इतीति जये सति कदाचित्पराजयोपि स्यादिति विचिन्त्येत्यर्थः । तच्चान्येष्वेव सम्भवेत् नतु भगवतीत्याह—पशुदृष्टीनां निर्बुद्धीनामेव ईयते तैरेव प्रतीयते नत्वन्यैरिति पराजयस्तु कल्पनयैवेत्यर्थः । यतो योगस्य अचिन्त्यशक्तेरीश्वरः स्वामी तत्र लिङ्गं भगवान् सर्वैश्वर्यादिभिर्युक्त इति तत्र च लिङ्गं जगतः सर्वस्यैवेश्वर इति ॥ १६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

निर्जितो जयतीति भ्रान्तिः अजित एव जयतीत्यर्थः ॥ १६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमिति । अन्यानपि दुर्विषहान् सोढुमशक्तान् शत्रून् सौभादीन् हत्वा सुरादिभिरीडितः उपगीयमानः विजयो यस्य सः वृष्णिप्रवरैर्यदूत्तमैः परिवृतश्च पुरीं द्वारकां विवेश ॥ १३-१५ ॥

इत्थं सर्वत्र सर्वदा विजयिनो भगवतः क्वचित्पराजयं वदन्तो मूढा इत्याह—एवमिति । भगवान् षाड्गुण्यपूर्णः जगतः कृत्स्नस्येश्वरः प्रशासिता च अनेन पराजयसम्भावना दूरत एवापास्तेति सूचितम् निर्जितः जरासन्धादिभिरिति शेषः । क्वचिच्च जयतीत्येवं पशुदृष्टीनां मूढानाम् ईयते प्रतीयते निर्जितो जयति इति भ्रान्तिरजित एव जयतीत्यर्थः ॥ १६ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

(मूलम्) एवं निहत्य समरे दन्तवक्त्रविदूरथौ ।
कालयामास तत्सैन्यं जगृहे वारणादिकम् ॥ क ॥
भूयः पुष्परथं दिव्यमारुह्य समलङ्कृतम् ।
सहितः सात्वतगणैरीडितः सुरमानवैः ॥ ख ॥

कालयामास द्रावयामास वारणादिकमित्यत्र गजाश्वरथादिकं गृहीते ॥ क ॥

पुष्परथं विवाहयोग्यरथम् ॥ ख ॥

॥ १३—१५ ॥

पशुदृष्टीनां अज्ञजनबुद्धीनां पक्षे जयतीति ईयते ज्ञायते ॥१६॥

(मूलम्) तस्य कर्माण्युदाराणि पुण्यश्लोकस्य भारत ।
शक्यन्ते कथितुं नैव वर्षाणामयुतैरपि ॥*॥
एवमारभ्य राक्षस्याः पूतनायाः परन्तप ।
भूभारभूतानसुरान् जघान मधुसूदनः ॥×॥

ब्रह्माद्यन्यतमेनापि तत्कर्मसमाप्तिं कर्तुं न शक्यते किं पुनर्मयेति भावेनाह तस्येति ॥ * ॥

स्कन्धमारभ्ययदैत्यहननं तदादितः उपसंहरति एवमिति ॥ × ॥

( श्रीविजयध्वजतीर्थरीत्या एकाधिकशततमोऽध्यायः ॥ १०१ ॥ )

राजोवाच ।

(मूलम्) अष्टादशाक्षौहिणीनां तावद्भिर्मौसयादिनैः ।
व्यापादनं येनकृतं तस्मैविश्वात्मनेनमः ॥ क ॥
शृण्वतो मे कथास्तस्य चरितानि च सहस्रशः ।
वैक्लव्यम्विस्मयो भीतिर्वर्धते मे पुनःपुनः ॥ ख ॥
मन्ये प्रायेण पाप्मानं जीर्णं मम दुरत्ययम् ।
इन्द्रियाणि प्रबुद्धानि प्रसन्नं च मनो भृशम् ॥ ग ॥
क्षुत्तृष्णे च प्रशान्ते मे आत्माचानन्दनिर्भरः ।
प्रसादात्तावधर्मज्ञ कृतार्थोऽहमिहाभवम् ॥ घ ॥
अपिच श्रोतुमिच्छामि किञ्चिदर्थं तपोधन ।
युध्यतः सुहृदो दृष्ट्वा निवारितुमशक्नुवन् ॥
तीर्थं स्नातुं गतो रामः किञ्चकार तपोधन ॥ ङ ॥

सितकेशावेशिनोबलभद्रस्य चरितं कृष्णमाहात्म्यानुस्यूतमेवातस्तदपि पुरुषार्थोपयोगिभवतीत्यनेनाध्यायद्वयेन निरूपयति तत्रादौ श्रुतकृष्णवैभवो विस्मितमनाः राजा भगवन्तं नमति-अष्टादशेति । माययामहिम्नाव्यापादनं निधनं विश्वात्मने सर्वान्तर्यामिणे ॥ क ॥

हरिकथाश्रवणस्य प्रत्यक्षफलमाह-शृण्वत इति । वैक्लव्यं पारवश्यङ्कथाश्रवणतात्पर्यं विस्मयःस्मयभावःभीतिःविहिताकरणेप्रत्यवायबुद्धिः ॥ ख ॥

प्रबुद्धानिप्रफुल्लानि स्वविषयइतिशेषः ॥ ग ॥

आत्माभोगायतनं आनन्दनिर्भरःपूर्णानन्दः ॥ घ ॥

कृतार्थश्चेत्तूष्णीम्भवेति तत्राह—अपिचेति किञ्चिदित्यव्ययं शब्दतोल्पमर्थतो महान्तमित्यतो वा व्यत्ययः ङ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मारितान् सात्विकराजसतामसान् उपसंहरति-एवं सौभमिति । चकारस्तत्सेनापरिग्रहार्थः साल्वे चकारः तन्मायाधिष्ठातावरनाशार्थः दन्तवक्त्रो विदूरथसहितः दुर्विषहैरन्यैः शूरैः सह तेपि मारिता इति हत्वा स्थितः ईडित इति क्रियाध्याहारोपि अर्थाद्भवति सुरैर्मानवैश्च दुर्विषहानन्यैरिति यादववाचकत्वं वा ॥ १३ ॥

तथा मुनिप्रभृतिभिरपि कुसुमैरभिवर्षित इत्यन्तं महती स्तुतिः भगवतो युद्धलीला समाप्यत इति सन्तोषात् कृता श्रोतॄणां युद्धलीलाभिनिवेशो भवत्विति ॥ १४ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो भगवतः पुरप्रवेशमाह–वृतश्च वृष्णिप्रवरैरिति । हत्वा स्तुतः विवेशेति तस्य क्रियात्रयं निरूपितम् ॥ १५ ॥

त्रिगुणां भगवतः क्रियालीलामुपसंहरन् दोषभावमाह—एवं योगेश्वर इति । योगे भ्रष्टास्ते मोचिता इति एकप्रयोजनं कृष्णत्वाद्भूभारो हृत इत्यपरं भगवानिति सामर्थ्यं जगदीश्वर इत्यावश्यकत्वम् एवं क्रियाकरणे हेतूनुक्त्वा लौकिकबुद्ध्या प्राप्तान् हेतून् निन्दति—ईयते पशुदृष्टीनामिति । पशुदृष्टिभिः निर्जितो भगवान् जयतीति ईयते ज्ञायते कदाचिन्निर्जितः कश्चिज्जयतीति, एतदुभयमपि पूर्वापरानुसन्धानरहितानामेव त एव पशवः यतः सः पुरुषोत्तमः नतु केनाप्यंशेन भावान्तरं प्राप्त इत्यर्थः । अत्र भगवतः शस्त्रसन्न्यासः पुराणान्तरेपि निरूपितः । स एवात्र उपसंहारेणापि सूचितः ॥ १६ ॥

———

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पशुदृष्टयो बहिर्मुखाः दुर्योधनादयस्तु तदपि न चमत्कारं प्राप्नुवन्तीत्याह—पशुदृष्टीनां पशुदृष्टिभिस्तु जनैरयं मथुरात्याजनपूर्वकं जरासन्धादिनिर्जित एव द्विषान् वीरान् जयतीति ईयते प्रतीयते अत्र दन्तवक्त्रवधप्रसङ्गे पाद्मोत्तरखण्डे विशेषो दृश्यते तथाहि तदीयगद्यानि "अथ शिशुपालं निहतं श्रुत्वा दन्तवक्त्रः कृष्णेन सह योद्धुं मथुरामाजगाम । कृष्णस्तु तच्छ्रुत्वा रथमारुह्य मथुरामाययौ तयोर्दन्तवक्त्रवासुदेवयोरहोरात्रं मथुराद्वारि सङ्ग्रामः समवर्त्तत । कृष्णस्तु गदया तं जघान सतु चूर्णितसर्वाङ्गो वज्रनिर्भिन्नो महीधर इव गतासुरवनितले निपपात सोपि हरेः सारूप्येण योगिगम्यं नित्यानन्दसुखदं परमं पदमवाप इत्थं जयविजयौ सनकादिशापव्याजेन केवलं भगवतो लीलार्थं संसृताववतीर्य्य जन्मत्रयेपि तेनैव निहतौ जन्मत्रयावसाने मुक्तिमवाप्तौ" इति कृष्णस्तु तत् श्रुत्वेति मनोजवस्य नारदस्यैव मुखात् अत एव सालववधानन्तरं द्वारकामप्रविश्यैव मनोजवेन रथेन तत्क्षण एव मथुरान्तिके तं ददर्श अत एवाद्यापि मथुराया द्वारकादिग्द्वारि दन्तवक्त्रहेति संस्कृतानुगलोकभाषया दतिहा इति नाम्नाख्या वर्त्मेण वासिनो ग्रामो वर्त्तते तत्र पाद्मे तदनन्तरमपि गद्यञ्च यथा "कृष्णोपि तं हत्वा यमुनामुत्तीर्य्य नन्दव्रजं गत्वा सोत्कण्ठौ पितरावभिवाद्याश्वास्य ताभ्यां साश्रुसेकमालिङ्गितः सकलगोपवृद्धान् प्रणम्य बहुवस्त्राभरणादिभिस्तत्रस्थान् सन्तर्पयामास—

"कालिन्द्याः पुलिने रम्ये पुण्यवृक्षसमाचिते ।
गोपनारीभिरनिशं क्रीडयामास केशवः ॥
रम्यकेलिसुखेनैव गोपवेषधरः प्रभुः ।
बहुप्रेमरसेनात्र मासद्वयमुवास ह ॥

अथ तत्रस्था नन्दगोपादयः सर्वे जनाः पुत्रदारादिसहिताः वासुदेवप्रसादेन दिव्यरूपधराः विमानमारूढाः परमं वैकुण्ठलोकमवापुः कृष्णस्तु नन्दगोपव्रजौकसां सर्वेषां निरामयं स्वपदं दत्त्वा दिवि देवगणैः संस्तूयमानो द्वारवतीं विवेश" इति अत्र भागवतामृते कारिकाभिरेव व्याख्या यथा—

यदुत्तीर्य्येत्युत्तरणं तदाप्लवनमुच्यते ।
दुष्टं हत्वा व्रजे यानं स्नानपूर्वमिहोचितम् ॥
व्रजेशादेरंशभूता ये द्रोणाद्या अवातरन् ।
कृष्णस्तानेव वैकुण्ठे प्राहिणोदिति साम्प्रतम् ॥
प्रेष्ठेभ्योपि प्रियतमैर्जनैर्गोकुलवासिभिः ।
वृन्दारण्ये सदैवासौ विहारं कुरुते हरिः ॥ इति

अत्र नन्दगोपादयः पुत्रदारसहिता इति नन्दगोपादीनां पुत्राः कृष्णश्रीदामसुबलादय एव दाराश्च यशोदा कीर्त्तिदादय एव सर्वे जना इति व्रजमण्डलस्थाः सर्वे एवेत्यतः परमं वैकुण्ठं गोलोकमेव ययुः दिव्यरूपधरा इति गोलोके देवलीलत्वमेव नतु गोकुल इव नरलीलत्वं तेषामिति विशेषो ज्ञेयः तस्माद्रामावतारेऽयोध्यावासिनां सशरीराणामेव यथा वैकुण्ठप्रापणं तथैवात्रावतारेपि व्रजस्थानाम् एतच्च द्वारकातः कृष्णस्य व्रजागमनं श्रीभागवतसम्मतमपि मन्यते "यर्ह्यम्बुजाक्षापससार भो भवान् कुरून् मधून् वाथ सुहृद्दिदृक्षया" इति प्रथमस्कन्धोक्तेः सुहृद्दिदृक्षा कृष्णस्य बलदेवव्रजागमनसमयत एवासीत् किन्तु तत्रात्ममातापित्रादिगुरुजनासम्मतिरेव तत्र प्रतिबन्धिका आसीत् साच प्राग्विवृताकारिकयाम् इदानीन्तु शाल्ववधान्ते नारदमुखादेकाकिनं दन्तवक्त्रमायान्तं श्रुत्वा द्वारकामप्रविश्य तं हन्तुमेकाकिनयैव तत्र गमने न कापि कस्याश्चिद्विप्रतिपत्तिः दन्तवक्त्रं हत्वा तु अयमवसरो व्रजस्थबन्धुवर्गमिलन इति विमृश्य गायन्ति ते विशदकर्मेत्यत्र गोप्यश्चेत्युद्धवसङ्केतं च स्मृत्वा व्रजमागत्य स्वविरहं निर्वाप्य कंसवधान्ते विवृतं व्रजस्थानां प्रकाशद्वयमैकधर्म्यादेकीकृत्य मासद्वयं पूर्ववत् प्रकटं विहृत्य व्रजस्थलीलां प्रापञ्चिकलोकचक्षुर्भ्यस्तिरोधाप्य कृष्णः पित्रादिबन्धुवर्गसहितो वैकुण्ठं गच्छतीति स्वर्गस्थादिलोकदृश्यः सङ्केन पूर्णकल्पप्रकाशेन गोलोकं जगाम अन्येन पूर्णतमप्रकाशेन प्रापञ्चिकलोकादृश्यो व्रज एव नित्यं विजहार अन्येन पूर्णप्रकाशेन रथारूढ एकाकी द्वारकां जगाम शौरसेनिकलोकास्तु कृष्णो दन्तवक्त्रं हत्वा व्रजस्थैः पित्रादिभिर्मिलित्वा द्वारकामसौ गच्छति व्रजस्थाः सर्वेत्वकस्मात् क्व गता इत्यजानन्तो महाविस्मयमवापुः किञ्च व्रजस्थान् गोपान् सशरीरानेव वैकुण्ठं प्रापयामास यः स एव कृष्णो द्वारकास्थान् यदून् कथं मौशललीलया तादृशीं दुरवस्थां प्रापयामासेति विचिन्त्य परीक्षिदयं दुर्मनायिष्यते यदुष्वेवास्य स्वीयाभिमानादिति विमृश्य श्रीशुकदेवः पाद्मोत्तरखण्डोक्तामेतां लीलां न श्रावयामासेति तत्त्वं ज्ञेयं किन्त्वेवं योगेश्वरः कृष्णो भगवान् जगदीश्वर इत्यत्र इति पदार्थस्य विवेशेतिक्रियान्विति कृतस्यान्यथानुपपत्तिं प्रमाणीकृत्य किञ्चित्तदलक्षितं द्योतयामासेत्यपि ज्ञेयं किञ्च व्रजस्थलीलोपसंहारः प्रकारान्तरेण क्वाप्यदृष्टत्वात्तत्रायमेव प्रकारः सर्वैरपि प्रमाणीकर्त्तव्य एव अत्र वैष्णवतोषिण्यां दृष्टा लीलाक्रमस्त्वयं प्रथमं सूर्योपरागयात्रा ततो राजसूयसभा ततो द्यूतं ततः पाण्डवानां वनगमनं तदैव शाल्वदन्तवक्त्रवधव्रजागमनव्रजलीलोपसंहाराः ॥ १६ ॥

———

श्रुत्वा युद्धोद्यमं रामः कुरूणां सह पाण्डवैः ।
तीर्थाभिषेकव्याजेन मध्यस्थः प्रययौ किल ॥ १७ ॥
स्नात्वा प्रभासे सन्तर्प्य देवर्षिपितृमानवान् ।
सरस्वतीं प्रतिस्रोतं ययौ ब्राह्मणसंवृतः ॥ १८ ॥
पृथूदकं बिन्दुसरस्त्रितकूपं सुदर्शनम् ।
विशालं ब्रह्मतीर्थञ्च चक्रं प्राचीं सरस्वतीम् ॥ १९ ॥
यमुनामनु यान्येव गङ्गामनु च भारत ।
जगाम नैमिषं यत्र ऋषयः सत्रमासते ॥ २० ॥
तमागतमभिप्रेत्य मुनयो दीर्घसत्रिणः ।
अभिनन्द्य यथान्यायं प्रणम्योत्थाय चार्चयन् ॥ २१ ॥
सोऽर्चितः सपरीवारकृतासनपरिग्रहः ।
रोमहर्षणमासीनं महर्षेः शिष्यमैक्षत ॥ २२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

योगश्वरैः युज्यते इति योगः सङ्कल्पस्तदीशः सत्यसङ्कल्पः सङ्कल्पमात्रेणैव सर्वत्र कर्त्तुं कुशल इत्यर्थः । भगवान् स्वाभाविकषड्गुणनिधिः जगदीश्वरः विश्वनियन्ता एवम्भूतः कृष्णः एवमुक्तप्रकारेण क्वचित् साक्षादेव जयति शिशुपालदन्तवक्रादीनामन्यवध्यत्वासम्भवात् क्वचित्स्वयम्पलायनादिमिषेण शत्रुवधमकृत्वा युधिष्ठिरादिश्रैष्ठ्यख्यापनार्थं भीमादिद्वारा जयत्येव जरासन्धादिभिर्जित इति पशुदृष्टीनामीयते प्रतीयते इत्यर्थः ॥ १६—१७ ॥

### भाषा टीका ।

इस प्रकार सौभविमान का विध्वंस करके और इस ऐसे सुनने के अयोग्य शाल्व कौं तथा अनुज दन्तवक्र कौं मारकर देव मनुष्यों सें स्तुति किये गये ॥ १३ ॥

तथा मुनिजनों सें, सिद्ध गन्धर्वों सें विद्याधर महान् उरगों से स्तुति किये गये अप्सराओं सें पितृगणों से पक्षों से किन्नर चारणों से ॥ १४ ॥

जिस के विजय का गान होरहा है तथा पुष्पों सें जिन पर वर्षा भई है और श्रेष्ठ यादवों से युक्त भये श्रीकृष्ण भगवान् अलङ्कृत द्वारकापुरीर में प्रवेश करते भए ॥ १५ ॥

आश्चर्य योग के नियन्ता जगदीश्वर श्रीकृष्ण भगवान् बडे२ बलवानो कौं सदा जीतते हि हैं तथापि पशु बुद्धि वारे कौं तो हारे समान हि प्रतीत होते हैं ॥ १६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

विदूरथान्तमामध्य पूतनादिद्गनोः कुलम् ।
कृष्णस्तूपारमद्धाराद्रामोऽहन् सूतबल्वलौ ॥

तत्प्रसङ्गमाह—श्रुत्वेति ॥ १७ ॥

प्रतिस्रोतं प्रतिलोमम् ॥ १८ ॥

सुदर्शनं तीर्थम् चक्रं चक्रतीर्थम् ॥ १९ ॥

यमुनामनु यानि तीर्थानि गङ्गामनु च यानि तानि सर्वाणि गत्वा नैमिषमरण्यं जगाम ॥ २० ॥

अभिप्रेत्य श्रीराम इति ज्ञात्वा ॥ २१ ॥

महर्षेर्व्यासस्य ॥ २२ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मध्यस्थः उभयपक्षाग्राही सन् श्रीकृष्णस्यैव लीलाकौतुकसमीहितं खल्विदं प्रययौ श्रीद्वारकातः प्रतस्थे ॥ १७ ॥

ब्राह्मणसंवृतः इत्यतिनिर्वेदं बोधयति—तन्मात्रसाहित्यात् ॥ १८ ॥

पृथ्विति युग्मकम् । पृथूदकं कुरुक्षेत्रवर्त्ति यत्र वैन्येनाश्वमेधानां शतं विहितं बिन्दुसरः कर्दमाश्रमं गूर्जरदेशीयसिद्धपुरवर्त्ति त्रितकूपं त्रितोनाम एकतद्वितयो भ्राता स तु स्वं वञ्चयित्वा भ्रात्रोर्गोव्रजं नयतोरग्रवर्त्ती तत्र कूपे वृकभयात्पतितः तत्रैव च सोमेन देवानिष्ट्वा तत उत्थितश्च स तु सरस्वतीतीरवर्त्ती कूपस्त्रितकूपः विशालाम अवन्तीं विशाखमितिपाठे सरस्वतीवर्त्तिनमेव तीर्थविशेषं ब्रह्मतीर्थं कन्यातीर्थसोमतीर्थयोर्मध्यवर्त्ति तथा चारण्यपर्वणि कन्यातीर्थानन्तरं—

"ततो गच्छन्नरव्याघ्र ब्राह्मणस्तीर्थमुत्तमम् ।
तत्र वर्णावरः स्नात्वा ब्राह्मण्यं लभते नरः ॥

ततस्तु सोमतीर्थञ्च कथितमिति चक्रं चक्रतीर्थं प्राचीं सरस्वतीञ्च कुरुक्षेत्रवर्त्तिनीमिति मार्गव्युत्क्रमोयं तत्क्रमतस्तीर्थक्रियाविधानद्योतयति ॥ १९—१० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

आदौ उत्थाय ततः प्रणम्य स्वागतादिनाऽभिनन्द्य च यथान्यायमर्चयन् ॥ २१ ॥

महर्षेः शिष्यमिति विनयादिगुणयोग्यः तथाप्यासीनमिति महापराधः ॥ २२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १७ ॥

प्रतिस्रोतं पश्चिमाभिमुखस्रोतसम् ॥ १८—२२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ पुनः कानिचिद्बलभद्रचेष्टितानि अनुवर्णयति—श्रुत्वेत्यादिना यावदेकोनाशीतितमाध्यायसमाप्ति । कुरूणां पाण्डवैः सह युद्धोद्यमं युद्धाय यत्नं श्रुत्वा मध्यस्थः उभयेषामपि बान्धवताविशेषादुभयमध्यस्थस्तटस्थ इति यावत् हेतुगर्भमिदम् अतः पुण्यतीर्थस्नानयात्राव्याजेन प्रययौ ॥ १७ ॥

स्नात्वेति । प्रतिप्रत्यक्स्रोतः प्रवाहो यस्यास्तां सरस्वतीं प्रत्यक्सरस्वतीं ययौ इत्यर्थः ॥ १८ ॥

ततः पृथूदकादीनि तीर्थविशेषाणि ययाविति सम्बन्धः तत्र चक्रं चक्रतीर्थं प्राची सरस्वतीं त्रिवेणीमित्यर्थः ॥ १९ ॥

ततो यमुनामनु यानि तीर्थानि गङ्गामनु च यानि तीर्थानि तानि सर्वाणि सादरं यथा तथा नारदमिति पाठे तदाख्यं तीर्थं नैमिशञ्च जगामेति सम्बन्धः । नैमिशं विशिनष्टि यत्रेति । यत्र नैमिशे ऋषयः शौनकादयः सत्रमासतेऽनुतिष्ठन्ति ॥ २० ॥

तत्र यद्भूत्तदेवाह—तमित्यादिना । तं बलभद्रमागतमभिप्रेत्य दृष्ट्वेत्यर्थः । दीर्घं सहस्रसमं सत्रमेषामस्तीति तथा ते मुनयः यथान्यायमभिनन्द्यार्घ्यमर्चितवन्तः ॥ २१ ॥

स इति । कृतः आसनपरिग्रहो येन स रामः रोमहर्षणमैक्षतेति सम्बन्धः । कथम्भूतमासीनमुपविष्टं महर्षेर्बादरायणस्य शिष्यम् ॥ २२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

॥ १७ ॥

भोजनादिना मानवसन्तर्पणं प्रतिस्रोतं प्रवाहाभिमुखम् ॥ १८ ॥

पृथूदकं नाम तीर्थं त्रितस्य मुनेः कूपं विशालमप्येकं तीर्थम् ॥ १९-२० ॥

अभिप्रेत्याभिगम्य ॥ २१—२२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भगवतः क्रियाशक्तिमुपसंहृत्य बलभद्रस्यापि कीर्तिसिद्ध्यर्थं धर्मक्रियामाह—श्रुत्वा युद्धोद्यममिति । यत्रानर्थपर्यवसानं तत्परित्याग एव आदौ धर्मः तत्रापि तद्व्याजेन तीर्थाभिषेकव्याजेन आचरणं सुतरामेव अतः युद्धोद्यमं श्रुत्वा भगवान् पाण्डवपक्षपातीति स्वस्य कौरवपक्षपाते अन्योन्यमेव विरोधो भवतीति तीर्थाभिषेकव्याजेन वस्तुतः तीर्थयात्रा नाभिप्रेतेति निमित्ताभावात् तद्व्याजेनैव उभयोर्मध्यस्थः प्रययौ तीर्थस्नानेव किलेति प्रमाणं जीववत्तस्य तीर्थाचरणं भगवत्त्वाद्विरोधीति स्वतः अनुक्त्वा किलेत्युक्तं हृदये व्याजेऽपि लोकप्रतीत्यर्थम् ॥ १७ ॥

प्रभासे गत्वा सङ्कल्पं कृत्वा ततो निर्गत इत्याह—स्नात्वा प्रभासमिति । भगवता सात्त्विकप्रकरणधर्मः कर्तव्यः स च प्रवृत्त्यात्मकः स धर्मो यज्ञतीर्थानि च तदुक्तं "यज्ञास्तीर्थानि च पुनः समानि हरिणा कृताः" इति यज्ञाः कृताः तीर्थानि च पुनः तत्समानानि च कृतानि तत्र वसुदेवः जीवतीति न स्वतो यागकरणं सम्भवतीति सुतरां राजसूयादिकरणं ततो भगवान् साहाय्यमेव कृतवान् बलभद्रस्तु तीर्थयात्रां यज्ञसमानां मन्यत इति तामेव कर्तुं प्रवृत्तः व्याजेन करणं धर्मो न भवतीति पश्चाद्भगवान् निमित्तं सम्पादयिष्यतीति अन्यथाऽनग्निकारिणा कृतमकृतमिति धर्म एव न भवेत् प्रभासेऽग्निकुण्डे सङ्गमे वा स्नात्वा ततो देवर्षिपितृमानवान् ब्राह्मणभोजनादिना सन्तर्प्य सरस्वतीतीरे एव प्रतिस्रोतं यथा भवति तथा ययौ ब्राह्मणसम्वृत इति तत्पूर्त्यर्थः ब्राह्मणाभ्यनुज्ञाव्यतिरेकेण तीर्थपूर्त्यभावात् ॥ १८ ॥

यद्यपि प्रतिस्रोतोगमने क्रमेण पृथूदकादीनि तीर्थानि न सन्ति तथापि तीर्थमाहात्म्यं पुरस्कृत्य तेषां गणना तस्मिन् कल्पे वा तथा सन्निवेशः पृथूदकादीनि षट् तीर्थानि सर्वत्र प्राची सरस्वती एवं प्लक्षजाता सरस्वतीति यावत् ॥ १९ ॥

ततो यमुनां प्राप्य अनुस्रोतन्यायेन प्रयागे समागतः ततो गङ्गामनु हरिद्वारपर्यन्तं वा गतः ततः पुनः गोमतीतीरं नैमिशपर्यन्तं समागतः तत्र विलम्बे कारणमाह—यत्र ऋषय इति । सत्रं यत्किञ्चिदासत ॥ २० ॥

ततो यज्जातं तदाह—समागतमभिप्रेत्येति । मुनयः अग्रे अस्मान् ज्ञानोपदेशो भविष्यतीति एष ज्ञानयुक्तः अत एव तदर्थं दीर्घसत्रिणः तस्यागमनमभिनन्द्य यथान्यायं यथा क्षत्रियोत्तमे समागते कर्तुमुचितं तथा कृतवन्तः ततो भगवद्बुद्ध्या प्रणम्य उत्थाय च अर्चयन् ॥ २१ ॥

स हि व्याजेन प्रवृत्तः मुख्यज्ञानाभिप्रायाभावात् भगवच्छास्त्रपर्यालोचनाभावाच्च स्मृतिन्यायेन धर्ममप्यधर्मं ज्ञात्वा धर्मस्थाने ऽधर्मे नियुक्त इति तेषां सत्कारफलासिध्यर्थम् उपकारमिव कुर्वन् सूतनिराकरणार्थं तं दृष्ट्वानित्याह—सोऽर्चित इति । सपरिवारः ब्राह्मणसहितः कृतः आसनपरिग्रहो येन स्थिरतायै उपदेशयोग्यत्वायाभिमानाय चोक्तं रोमहर्षणः सूतः ब्राह्मणानामग्रे उच्चासने स्थितः न चायं बालः यतो महर्षेः ( व्यासस्य ) शिष्यः ॥ २२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

"विदूरथान्तानसतो हत्वाऽस्त्रन्यासमाचरत् ।
हरिर्बलस्तु पुनरप्यवधीत् सूतबल्वलौ" ॥

अप्रत्युत्थायिनं सूतमकृतप्रह्वणाञ्जलिम् ।
अध्यासीनं च तान् विप्रांश्चुकोपोद्वीक्ष्य माधवः ॥ २३ ॥
कस्मादसाविमान् विप्रानध्यास्ते प्रतिलोमजः ।
धर्मपालांस्तथैवास्मान् वधमर्हति दुर्मतिः ॥ २४ ॥
ऋषेर्भगवतो भूत्वा शिष्योऽधीत्य बहूनि च ।
सेतिहासपुराणानि धर्मशास्त्राणि सर्वशः ॥ २५ ॥
अदान्तस्याविनीतस्य वृथा पण्डितमानिनः ।
न गुणाय भवन्ति स्म नटस्येवाजितात्मनः ॥ २६ ॥
एतदर्थो हि लोकेऽस्मिन्नवतारो मया कृतः ।
वध्या मे धर्मध्वजिनस्ते हि पातकिनोऽधिकाः ॥ २७ ॥
एतावदुक्त्वा भगवान्निवृत्तोऽसद्वधादपि ।
भावित्वात्तं कुशाग्रेण करस्थेनाहनत् प्रभुः ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

श्रुत्वेति मम दुर्योधनः प्रियो युधिष्ठिरोपि उभयोरपि निमन्त्रणे आयास्यति कस्य पक्षे स्यामितिविमृश्य तीर्थस्नानमिषेण प्रययौ ॥ १७ ॥

सरस्वतीं प्रतिस्रोतं प्रतिलोमस्रोतस्वतीम् ॥ १८ ॥

चक्रं चक्रतीर्थं यमुनाम् अनु लक्षीकृत्य यानि तीर्थानि तानि गत्वेत्यर्थः ॥ १९—२१ ॥

महर्षेर्व्यासस्य ॥ २२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

प्रतिस्रोतं प्रतिलोमम् ॥ १८ ॥

चक्रं चक्रतीर्थम् ॥ १९ ॥

यमुनामनु लक्षीकृत्य यानि गङ्गाञ्चानुलक्षीकृत्य यानि तीर्थानि ताः नैमिषं च जगाम ॥ २० ॥

अभिप्रेत्य ज्ञात्वा ॥ २१ ॥

कृतः आसनपरिग्रहो येन सः महर्षेर्व्यासस्य ॥ २२ ॥

भाषा टीका ।

पाण्डवन के साथ कौरवन के युद्ध के उद्यमको सुन कर पक्षपात रहित बलदेवजी तीर्थस्नान के निमित्त से द्वारका पुरीते निकस गए ॥ १७ ॥

प्रथम प्रभासतीर्थ में स्नान कर देवता ऋषि पितृ मनुष्यों का तर्पण कर के प्रवाह के सन्मुख होकर ब्राह्मणों से सम्युक्त होकर श्रीबलदेवजी सरस्वती के तीर २ जाते भए ॥ १८ ॥

उस के तीरपर बिन्दु सरतीर्थ में गए पश्चात् पृथूदक त्रितकूप सुदर्शन विशालतीर्थ ब्रह्मतीर्थ चक्रतीर्थ प्राचीसरस्वती इन तीर्थन में गए ॥ १९ ॥

हे भारत ! यमुनातीर के तीर्थ तथा गङ्गातीर के तीर्थन को गए पश्चात् जहां शौनकादिक ऋषिजन यज्ञका अनुष्ठान करते रहे उस नैमिषारण्य में गये ॥ २० ॥

श्रीबलदेवजी को आयेभये जानकर बहुत काल पर्यन्त यज्ञ करने वारे शौनकादिक मुनिजन उठकर श्रीबलदेवजीका अभिवादन करके और प्रणाम करके विधिपूर्वक पूजनकरते भये ॥ २१ ॥

ऋषियों से पूजित होकर परिवार सहित आसन स्वीकार करके विराजमान बलदेवजी नें व्यासजी के शिष्य रामहर्षण को व्यास गद्दी पै बैठे देखा ॥ २२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सूतं प्रातिलोमजं न कृतं प्रह्वणमञ्जलिश्च येन तम् अध्यासीनं च तान् तेभ्योऽप्युच्चैरासीनामित्यर्थः ॥ २३—२४ ॥

अज्ञानश्चध्यास्त इति चेत् नैवमित्याह—ऋषेरिति ॥ २५ ॥

ननु, बहुज्ञः कथमेवं कुर्यात्तत्राह—अदान्तस्येति । गुणाय यथोचितानुष्ठानाय ॥ २६ ॥

विप्रानध्यास्तामन्यद्वा किञ्चित्करोतु किं तवेति चेत्तत्राह एतदर्थ इति । धर्मध्वजिन उपमालिङ्गधारिणः ॥ २७ ॥

भावित्वादिति । न हि भवितव्यं केनापि परिहर्तुं शक्यत इत्यर्थः अहनत् अहन् ॥ २८ ॥

श्रीमज्जीगोस्वामिकृतवैष्णवतोषिणी ।

प्रथममप्रत्युत्थायिनं ततोऽकृतप्रह्वणाञ्जलिं ततो विप्रानध्यासीनं ततः सूतं लिङ्गविशेषेण तज्जातिमुद्दिश्येत्युत्तरोत्तरार्थक्रमग्रबुद्धिः उद्दीक्ष्येति, उच्चासनोपविष्टत्वादुच्चरूढदृष्ट्या वीक्ष्येत्यर्थः ॥ २३ ॥

कस्मादिति युग्मकम् । इमान् यज्ञपरान् तथैवेति समुच्चयं धर्मपालानप्यस्मांश्च कस्माद्धेतोर्दुर्मतिरयमध्यास्ते अपितु न कस्मादपि किन्त्वस्मात् केवलं दुर्बुद्धित्वादेवेत्यर्थः ॥ २४ ॥

भगवत इति श्रीभगवदवतारत्वात् धर्मशास्त्राणि स्मृत्यादीनि च ॥ २५ ॥

गुणाय उपशमादिफलाय न भवन्ति शास्त्राणि कुतः अजितात्मनः प्राचीनापराधेनाजितचित्तस्य अत एवादान्तस्य असंयतेन्द्रियस्य अत एव वृथा पण्डितमानिनः ॥ २६ ॥

मयेत्येकवचनं श्रीकृष्णेनाभेदविवक्षया स वा परमकोमलस्वभावत्वेन महतां नाहन्तु सहे इत्यभिप्रायेण वा टीकायामुत्तमलिङ्गधारिण इत्यनधिकार्य्यपेक्षया ॥ २७ ॥

उक्त्वेति स्वमनस्येवान्यथा मुनिभिः प्रत्युत्तरेण तद्वधप्रतिषेधसम्भवात् तीर्थयात्रायामसतां वधान्निवृत्तोपि अहन् तथैव तन्मृत्योर्भावित्वात् करस्थेनेति तीर्थं ब्रह्मचारित्वात् हस्ते तद्ग्रहणात् ननु कुशाग्रमात्रेण हननं कथं घटेत तत्राह—प्रभुः सर्वं कर्तुं समर्थः ॥ १८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रह्वणं प्रणामः ॥ २३—३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अप्रत्युत्थायिनं प्रत्युत्थानमकृतवन्तं तं सूतं प्रतिलोमजं न कृतं प्रह्वणं प्रणामोऽञ्जलिश्च येन तं तान् विप्रानध्यासीनं विप्रेभ्योऽप्युच्चासनासीनमित्यर्थः । माधवो रामस्तुकोप सकोपं प्राह इत्यर्थः ॥ २३ ॥

तदेवाह—कस्मादिति चतुर्भिः । विप्रानध्यास्ते विप्रेषूच्चैरासनमधितिष्ठतीत्यर्थः । प्रतिलोमज इत्यनेन तदनर्हत्वाविष्कारः तथा धर्मं पालयन्तीति तथा तानस्मानप्यध्यास्तेऽतो ऽयं दुर्मतिर्वधमर्हति ॥ २४ ॥

अज्ञानमध्यास्ते इत्यत आह—ऋषेरिति । ऋषेर्भगवतो बादरायणस्य शिष्यो भूत्वा बहूनि इतिहासादीनि सर्वशः कार्त्स्न्येन अधीत्य च॥ २५ ।

अदान्तस्य दमविनयादिरहितस्य वृथा पण्डितमात्मानं मन्यमानस्य गुणाय न भवन्ति इतिहासाद्यध्ययनादीनीति शेषः । किन्तु दोषायैवेति भावः । अदान्तस्येत्यादि विशेषणैरस्याज्ञानकृतमध्यासनाधिष्ठानमपित्वहङ्कारप्रयुक्तमिति सूच्यते ॥ २६॥

विप्रानध्यास्तामन्यद्वा करोतु किं तवेत्यत आह—एतदर्थं इति । क्रीलावधं ? धर्मध्वजिनः उत्तमवेषधारिणो मे वध्या इत्येषः, कुतः ? हि यस्मात्ते धर्मध्वजिनोऽधिकाः पातकिनः अतो दुष्कृद्विनाशार्थमवतीर्णेन मयैवम्विधाः अवश्यं वध्याः इत्यर्थः ॥ २७ ॥

एतावदिति । असतां वधान्निवृत्तोपि भगवान् रामः भावित्वाद्भावितव्यस्य केनाप्यपरिहार्यत्वात्तं रोमहर्षणं कुशाग्रेण अहनत् ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रत्युत्थायिनम् आभिमुख्येन स्थितं प्रह्वणं नमनं तान्विप्रानध्यासीनं तेषां मध्ये उच्चासने स्थितं माधवो मधुकुलोद्भवः ॥२३॥

प्रतिलोमजः विपरीतजन्मा अस्मानिति द्वितीया पञ्चम्यर्थे ॥ २४ ॥

सेतिहासपुराणान्यधीत्य सुदृष्ट्वा प्रतिजन्मनः ॥ २५ ॥

गुणाय पुण्यफलदानलक्षणाय न भवन्ति ॥ २६ ॥

एतदर्थः दुष्टनिग्रहार्थः ॥ २७ ॥

असद्वधान्निवृत्तोपि मरणस्यावश्यं भावित्वात् ॥ २८—२९॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमपि स्मृतिविरुद्धं करोतीति तस्मिन् क्रोधं कृतवान् इत्याह—अप्रत्युत्थायिनमिति । वस्तुतो ब्राह्मणातिक्रम एव तस्य दण्डे हेतुः तथापि ब्राह्मणैः केनचित्प्रकारेण तस्य दोषोङ्गीकृतः तस्य मात्सर्याजनकत्वात् अप्रत्युत्थापनमेव हेतुं मन्यते यद्यस्य महत्त्वं केनापि प्रकारेण जातं तथापि ब्राह्मणोत्तमादधिकं भवति ब्राह्मणाश्चेदभ्युत्थानादिकं कृतवन्तः तत्रास्याभ्युत्थाने कः सन्देहः अतो नास्मिन् धर्मः मार्गाभावात् अतः पाखण्डेन केनचिल्लोभादिना पुष्टः धर्माभासः गर्वजनकत्वाद्दुष्कार्यमेव जात इति तस्मिन् विद्यमानं धर्मं पाखण्डत्वेन अभिप्रेत्य क्रोधं कृतवान् सूत इति जात्या हीनः न कृतः प्रह्वणार्थमञ्जलिर्येन प्रतत्वेनाप्येतावत्कर्तव्यमिति द्वितीयो दोषः उक्तः तृतीयमाह—अध्यासीनमिति । आधिक्येनोच्चासनेन ब्राह्मणान् हीनान् कृत्वा आसीनः तत्र विप्राः विशेषेण पूरकाः सर्वसुहृदः अतस्तेषां तूष्णीम्भावो न दोषायेति स्वयं दण्डाधिकृत इति क्रोधोपपत्तिरुक्ता माधवो मधुवंशोत्पन्नः ॥ २३ ॥

तस्यालोचनामाह—कस्मादिति । असाविति नास्मिन् तेजो दृश्यत इति ज्ञापितम् इमान् विप्रानिति तेजोदर्शनं न्यायमपि महान् यतः प्रतिलोमजः अनेन ज्ञानाधिक्यादुपविष्ट इति पक्षो निराकृतः विप्राणामेव ज्ञानतो ज्येष्ठमिति भावः । किञ्च धर्मपालांस्तथैवास्मानिति ऐहिकभयमामुष्मिकभयञ्च नास्त्यस्मिन्निति द्वयं निरूपितं तत्र दण्डो वध एवेत्याह—वधमर्हतीति ननु बोधनीय एवायं किमिति वधः क्रियत इत्याशङ्क्याह—दुर्मतिरिति । दुष्टबुद्धिः उक्तमपि न गृहिष्यति ।२४॥

नन्वयमनुपासितवृद्धः बालवत्प्रबोधनीय एवेति चेत्तत्राह—ऋषेर्भगवतोभूत्वेति । ऋषिर्मन्त्रद्रष्टा तस्य शिष्योप्यलौकिकार्थज्ञो भवितुमर्हति तत्रापि भगवतः सानुभावस्य न केवलं शिष्यत्वमात्रं किन्तु बहून्यधीत्येति चकारादध्यापनाभ्यासे-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वेदाध्ययनं शङ्कितं भविष्यतीति तन्निराकरणार्थं सेतिहासपुराणानीत्याह—इतिहासश्रवणेन नीतिज्ञानं भवति तदभावे केवलधर्मेऽप्यनर्थः स्यात् गजेन्द्रवत् पुराणाध्ययनात् साभिप्रायधर्मज्ञानं धर्मशास्त्रैः देशकालकुलादिधर्माः आधुनिका एव सर्वे एव ज्ञाता भवन्ति सर्वेश इति तत्तदभिप्रायोऽपि बहूनां मुखादवगतः ॥ २५ ॥

ननु विद्यया कथमस्य गुणो नोत्पादिताः कथमयमेतादृशो जात इत्याह—अदान्तस्येति । विद्या गुणोत्पादिका आश्रयदोषाभावे भवति तत्राजितेन्द्रियत्वं महानाश्रयदोषः "पराञ्चि खानि व्यतृणत्स्वयम्भूः" इति सहजबहिर्मुखानि विद्याह्यन्तर्मुखं कर्तुमिच्छति तदिन्द्रियाणां प्रतिबन्धेन भवतीति इन्द्रियजयो मृग्यते किञ्च विद्याग्रहणे विद्याबाधकधर्माभावो हेतुः विद्याह वै ब्राह्मणमाजगाम गोपाय माशेवधिष्टेहमस्मि असूयकायाऽनृजवेऽयताय न मां ब्रूयाद्वीर्यवती तथा स्यामिति अविनीतस्य विद्या निर्वीर्येति न गुणजननसामर्थ्यं किञ्च वृथा पण्डितमानिन इति विद्या बुद्ध्या गृहीता सती स्वकार्यं करोति तदभिमानात् तस्याग्रहणमेव यस्तु पाठव्यतिरेकेणापि मन्यते पण्डितोऽहमिति स प्रयोजनाभावात् स्वार्थं विद्यां न गृहीष्यत्येव कथं विद्याफलं जनयेत् अतो न गुणाय भवन्ति पुराणादीनि किञ्च नटस्येवेति परप्रदर्शनार्थमेव यो विद्यां गृह्णाति तस्य न विद्यातः फलं यथा नटस्य किञ्च अजितात्मनः अन्तःकरणजयाभावे उत्पादिता अपि गुणाः तामसैर्भावैस्तिरोहिता भवन्ति अतोऽस्य सर्वमेवं वर्त्तत इति दोषपञ्चकसद्भावान्नास्मिन् विद्याफलम् ॥ २६ ॥

नन्वस्य दोषेणायमेव नष्टो भवतु किं तव यथास्य विनयो धर्मः एवं क्षमापि तदभावे तथापि दोष एवेत्याशङ्क्याह—एतदर्थ इति । इदं नाधिकारिभिः कर्त्तुं शक्यम् अन्यथा अधिकारस्वीकारो व्यर्थः स्यात् यथा परमहंसानां सर्वातिक्रमसहनं युक्तम् एवं राज्ञोऽपि चेत्तदा सर्वनाशः स्यात् एतदर्थमेव ममावतारः येन धर्मो रक्षितो भवति अतस्तदेव मम कर्त्तव्यं धर्मे च प्रतिपन्ना निराकर्त्तव्याः तत्राधर्मकारिभ्योऽपि धर्मध्वजिनो दुष्टाः अन्यानपि नाशयन्तीति तेषां दोषाधिक्यमाह—तेहि पातकिनोऽधिका इति । ते अधिकाः पातकिनः साक्षान्निषिद्धाचरणमधर्मः तद्योत्कर्षः महापातकं तेभ्योऽपि धर्मध्वजिनः अधिकाः विधर्मः परधर्मश्चेति वाक्ये एतन्निरूपितम् उपधर्मास्ते तद्धर्मनिवृत्तीच्छायामपि न निवर्त्तन्ते नापि प्रतीकारार्थम् इच्छामपि कुर्वन्ति अतोऽस्मिन् विद्यमाने अधर्मानुवृत्तिर्भविष्यतीति वधावश्यकता निरूपिता ॥ २७ ॥

ततो यत्कृतवांस्तदाह—एतावदुक्त्वेति । सहि सङ्कल्पमारभ्य असद्वधादपि निवृत्तः वृतिनोऽवध्यवधोऽपि निषिद्ध इति तथापि क्षोभाधिक्यात् तथैव भावित्वात् धर्मपरीक्षार्थं लौकिकं शस्त्रं परित्यज्य तत्रापि स्वहस्तस्थितं सूक्ष्ममेव कुशं मारणार्थं गृहीतवान् हस्तस्थितो तस्मिन् क्रियाशक्त्यभ्यासः मारणे च हेतुः प्रभुरिति ॥ २८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तान् विप्रानप्यधि तेभ्यो विप्रेभ्यः सकाशादप्यधिके उच्चे आसने आसीनं कथकत्वादिति भावः ॥ २३ ॥

अस्मानपि अध्यास्ते अतिक्रम्योच्चासने आस्ते उपविष्ट एव न तूत्तिष्ठति ॥ २४ ॥

अज्ञात्वैवास्ते इति चेन्न, ऋषेरिति ॥ २५ ॥

न गुणाय शास्त्राणि नोपशमादिफलाय ॥ २६ ॥

ननु विप्रानध्यास्तामन्यद्वा किमपि करोतु निरभिमानस्याक्रोधनस्य परमेश्वरस्य तव किमनेनेत्यत आह—एतदर्थ इति । धर्मध्वजिनः धर्मरहितत्वेऽपि स्वस्य धर्मवत्त्वं प्रदर्शयन्तः ॥ २७ ॥

भावित्वात्तन्मृत्योस्तथैव भावित्वात् नहि भवितव्यं केनापि परिहर्त्तुं शक्यत इति भावः ॥ २८—२९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अप्रत्युत्थायिनम् अकृतप्रत्युत्थानं सूतं "ब्राह्मण्यां क्षत्रियाज्जातः स वै सूत उदाहृतः" इति स्मृतिप्रोक्तलक्षणं प्रतिलोमजं न कृतं प्रह्वणं प्रणामोऽञ्जलिश्च येन तम् तान् विप्रानप्यधि आसीनम् विप्रेभ्योऽप्यधिके उच्चे आसने उपविष्टम् ॥ २३-२५ ॥

सेतिहासपुराणानि धर्मशास्त्राणि च गुणाय यथोचितानुष्ठानाय न भवन्ति ॥ २६ ॥

धर्मध्वजिनः यथार्थधर्मानुष्ठानाभावेऽपि आत्मनो धार्मिकत्वख्यापकाः ॥ २७ ॥

भावित्वात्तन्मृत्योस्तथैव भावित्वात् ॥ २८—२९ ॥

---

भाषाटीका ।

बलदेवजी को देखकर सूतजी उठे नहि और प्रणाम अञ्जलि भी उसने नहि किया और ऋषीन से भी ऊंचे आसन पर बैठा भया उस को देखकर बलदेवजी क्रोधकरते भए ॥ २३ ॥

क्षत्रिय से ब्राह्मणी में उत्पन्न भया यह सूत जाति किस कारण से धर्म रक्षक इन ब्राह्मणों से औरते सेहि हमारे सें ऊंचे आसन पर बैठा है ताहि कारण से यह दुर्मति बध के योग्य है ॥ २४ ॥

भगवान् व्यासऋषि का शिष्य होकर इतिहास बहुत पुराणों को तथैव सब धर्मशास्त्रों को पढकर भी अभिमान से सबके ऊपर बैठा है ॥ २५ ॥

विषयनते इन्द्रियों को नहि रोकने वारे मनको नहि जीतने वारे विनयरहित अपने को वृथा पंडित, मानने वारे को इतिहास पुराण आदि बहुत से शास्त्र शम दमादि गुणों के अर्थ नहि होते जैसे मायावी नट अनेक प्रकार के वैभव दिखाता है परन्तु वैभव

हांहेति वादिनः सर्वे मुनयः खिन्नमानसाः ।
ऊचुः सङ्कर्षणं देवमधर्मस्ते कृतः प्रभो ॥ २९ ॥
अस्य ब्रह्मासनं दत्तमस्माभिर्यदुनन्दन ।
आयुश्चात्म क्लमं तावद्यावत्सत्रं समाप्यते ॥ ३० ॥
अजानतैवाचरितस्त्वया ब्रह्मवधो यथा।
योगेश्वरस्य भवतो नाम्नायोऽपि नियामकः ॥ ३१ ॥
यद्येतद्ब्रह्महत्यायाः पावनं लोकपावन ।
चरिष्यति भवाँल्लोकसङ्ग्रहोऽनन्यचोदितः ॥ ३२ ॥

भाषा टीका ।

उसको सुखकारी नहि होते है ॥ २६ ॥

इसी प्रयोजन के लिये मैंने इस लोकमें अवतार किया है कि बाहर से धर्म का प्रकाश करने वारे और भीतर पाप करने वारे ऐसे धर्म ध्वजा मेरे वध के योग्य है क्यों कि वे अधिक पातकी हैं ॥ २७ ॥

यद्यपि असत्पुरुषों के वधसे निवृत्ति भी रहे तथापि धर्मवान बलदेव जी इतना कहकर हांनहार नहि मिट सका इस वास्ते कुशाके अग्र भाग से रोमहर्षण का बध करते भये ॥ २८ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

ते त्वया ॥ २९ ॥

अधार्मिकप्रतिलोमजवधः कोऽयमधर्म इतिचेत्तत्राहुः—अस्येति । पुराणप्रवचनायाऽऽत्मनः शरीरस्य नास्ति क्लमो यस्मिंस्तदायुश्च दत्तमिति ॥ ३० ॥

ब्रह्मवधेपि किं ममेश्वरस्येति चेत्सत्यमेव तथापि प्रायश्चित्तं कर्तव्यमित्याशयेनाहुः—योगेश्वरस्येतिसार्धेन । आम्नायो ब्राह्मणो न हन्तव्य इत्यादिलक्षणः ३१ ॥

तथाप्येतस्याः ब्रह्महत्यायाः पावनं प्रायश्चित्तं हे लोकपावन ! अनन्यचोदितः स्वयमेव भवान्यदि करिष्यति तर्हि लोकसङ्ग्रहो भविष्यति नान्यथेति ॥ ३२ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

खिन्नमानसाः सन्त ऊचुः किं सक्रोधं नहि नहि किन्तु सविनयमेवेत्याह—हे प्रभो ! सर्वेश्वर ! ते त्वयाऽधर्मः कृत इति तथापि तथाविनये हेतुः सङ्कर्षणं स्वयं भगवतो वासुदेवस्य द्वितीयव्यूहम् अत एव देवं सर्वाराध्यमिति वास्तवार्थेतु न विद्यते धर्मो यस्मात्परमधर्म इत्यर्थः ॥ २९ ॥

किञ्च, हे यदुनन्दन ! सद्धर्मपालनार्थं यदुकुलेऽवतीर्णोसि त्वया असत तमवश्यं पाल्यमवात भावः ॥ ३० ॥

यथा यथावत् अजानतैव विचाररहितेनैव आचरितः (इव) ब्रह्मवध इवेति योज्यम् एवं ब्रह्मवधसदृश एवायं नतु ब्रह्मवधः किञ्च योगेश्वरस्येति ॥ ३१ ॥

तथापि यदीति नान्यचोदितः सर्वेश्वरत्वेनानन्यप्रेर्योपि भवान् यद्वा अनन्यप्रवर्तितो लोकसङ्ग्रहः तद्रक्षणे हेतुः लोकपावनेति ॥ ३२ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आम्नायोऽपि न नियामकः कर्तनकृदित्यर्थः इति ॥ ३१ ॥

भवान् करिष्यति लोकसङ्ग्रहं लोकसङ्ग्रहः स्यादित्यर्थः ॥ ३२—३४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हाहेति । खिन्नं मानसं येषां ते ऊचुः उक्तिमेवाह—अधर्म इत्यादिना सपादत्रयेण ॥ ते त्वया ऽधर्मः कृतः ॥ २९ ॥

अधार्मिकप्रतिलोमजवधः कोयमधर्मः ? इत्यत आहुः-अस्येति सार्धेन । हे यदुनन्दन ! अस्य रोमहर्षणस्यास्माभिर्ब्रह्मासनं यावान् यावता कालेन सत्रं समाप्यते तावदात्मनो देहस्य न क्लमः श्रमो यस्मिन् तदायुश्च दत्तं पुराणवक्त्रे ब्राह्मणाय देयं यस्मात्प्रत्युत्थीयते तद्ब्रह्मासनमित्यर्थ ॥ ३० ॥

अजानतेति । अतस्त्वया अजानतैव आचरितं कृतं यथा ब्रह्मवधः ब्रह्महत्या तद्वत् । ब्रह्महत्यासदृशं पापं कृतमित्यर्थः । ननु ब्रह्मवधादपि किं ममेश्वरस्येत्यत आहुः—योगेश्वरस्येति सार्धेन यद्यपि योगेश्वरस्यावद्यास्पर्शोपयुक्तयोगानिर्वाहकस्याकर्मवश्यस्य तव "ब्राह्मणो न हन्तव्यः" इत्यादिलक्षण आम्नायोपि न नियामकः यद्यपि त्वं न विधिवश्य इत्यर्थः ॥ ३१ ॥

तथापि हे लोकपावन ! ब्रह्महत्यायाः पावनं प्रायश्चित्तं चरिष्यति चरत्वनुतिष्ठत्वित्यर्थः । किमर्थमित्यत आहुः—नान्यैश्चोदितः स्वयमेव यदि भवांश्चरिष्यति तर्हि लोकसङ्ग्रहः स्यादित्यर्थः। "यद्यदाचरति श्रेष्ठः" इत्युक्तरीत्या लोकानुशिक्षितुं चरेति भावः ॥ ३२ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ब्रह्मासनं ब्राह्मणमध्ये ब्राह्मणयोग्यासनम् ॥ ३० ॥

अस्य निधनं त्वया अजानतेव यद्वाऽजानता वा ब्राह्मणवधसमानदोषोयमित्याशयेनाह—ह्मोनि । भवत आम्नायो विधिनिषेधशासि शास्त्रं नियामकम् इदं कुरु नेदमिति नियन्ता नास्ति कुत इत्यत्राह योगेश्वरस्येति ॥ ३१ ॥

विध्यगोचरत्वात् क्षपणः स्वहार्द विज्ञापयन्ति—यदीति । यदि भवान् त्वं ब्रह्महत्यायाः एतत्पावनं शुद्धिलक्षणं परिहारं चरिष्यति तर्हि लोकसङ्ग्रहं करिष्यति कुतोऽत्राह नेति ॥ ३२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधनी ।

यद्यपि तन्मारणं धर्मः तथापि धर्मप्रवर्त्तकानां नाभिप्रेतः अतस्ते खिन्ना जाता इत्याह—हाहेति । सर्व एव स्वाभिलषितनाशात् हाहेति वादिनः ते हि भगवत्कथां शृण्वानाः तद्विघातो जात इति खिन्नमानसा जाताः यतो मुनयः श्रुतो हि भगवान् मन्तव्यो भवति साक्षाद्गुरोः सकाशात् अध्ययनव्यापारे मननं बाधितं भवेत् अनायं प्रसङ्गागृहं समागतः सर्वं श्रावयतीत्यनायासेनाभिलषितसिद्धिः नष्टाशा-त्मनःखेदः तथापि जात एवार्थामिति तूष्णीं स्थातव्यं किमित्युपालम्भः क्रियत इति तत्राह—सङ्कर्षणमिति । सह्यन्यधर्मोऽन्यत्र प्रयोजयितुं शक्यः दृष्टादृश्ययोर्मेलकत्वात् तत्रापि देवः अलौकिकमपि योजयेत् अतः स वक्तव्य एवेत्यूचुः ते त्वया अधर्मः कृत इति अयमधर्मः तवैव जातो नास्माकमयमभिप्रायः प्रभोइति सामर्थ्यमेव त्वया प्रकटितं नतु ज्ञानमिति सूचितम् ॥ २९ ॥

कथमधर्ममित्याशङ्कायामाह—अस्य ब्रह्मासनं दत्तमिति । अन्यस्मात्कथाश्रवणं दोषायेति ब्रह्मासनं दत्तवन्तः यावद्द्यमासने उपविश्य तिष्ठति तावद्ब्राह्मण एवेति अत एवानेन नोत्थितं तैस्तु स्वब्रह्मत्वमत्र स्थापितमिति तेषाम् उत्थानेप्यस्यानुत्थानं न हि ब्राह्मणः क्षत्रियं मन्यते धर्मस्तु अयुक्ते ब्रह्मत्वं स्थापितमिति वधे सानुकूलः अस्माभिरिति स्वसामर्थ्यं पापयन्ति यदुनन्दनेति ब्राह्मणहृदयानभिज्ञत्वं पितापुत्रौ विजानीयादिति वाक्यात् क्षत्रियः पुत्रो भवति ततः पितुः अभिप्रायाज्ञानं तव प्रयुक्तमिति गूढोऽभिप्रायः किञ्च अस्मद्वाक्यमपि त्वया नाशित इत्याह—आयुश्चेति । यद्यपि ब्राह्मणानां कृतिः अन्यथापि भवेत् तथापि वाक् मृषा भवितुं नार्हति अस्माभिश्च अल्पायुरयं ज्ञात्वा अस्मै आयुर्दत्तं यावत्सत्रं समाप्यते तावदस्मदायुरत्र तिष्ठति अतोस्माकमायुषोपि क्षयो जातः सूर्यो धर्माधिकरणदशायाम् आयुर्न गृह्णातीत्यवोचाम किञ्च आत्माक्लमश्च आत्मनो देहस्य क्लमाभावः अतः स्वकीयदानमलौकिकदानञ्च स्वयं नष्टमित्याक्रोशो जातः ॥ ३० ॥

तर्हि किं पर्यवसितं जातमित्याकाङ्क्षायामाहुः अजानतैवाचरितमिति । यथा ब्रह्मवधः तथास्य च वध इति महापातकसमस्त्वम् अज्ञानात् कृतमिति प्रायश्चित्तार्हता कामतो ब्राह्मणवधे निष्कृतिर्न विवक्षितेति तर्हि किं कर्तव्यमित्याकाङ्क्षायामपि आह—योगेश्वरस्येति । योहि जीवः तस्यैव कर्मणा गुणदोषौ भवतः भवांस्तु योगेश्वरो ब्रह्म अतो भवतो नियामक आम्नायोऽपि न भवति वेदेन हि सर्वार्थो नियम्यते अतो यद्यपि तव न वधदोषः प्रकारान्तरेण धर्मोऽभीप्सितमप्युक्तम् ॥ ३१ ॥

तथापि प्रायश्चित्तं कर्तव्यमित्याहुः—यद्येतद्ब्रह्महत्याया इति । एतादृशब्रह्महत्यायाः पावनं प्रायश्चित्तं तदा तव लोकसङ्ग्रहः इति चेत्तत्राहुः—लोकपावन इति । लोकपावित्र्यार्थमेव त्वया समागतमिति यथा वधाभावे त्वया अवतारवैयर्थ्यमुक्तं तथा प्रायश्चित्ताकरणेपि लोकोपकाराभावादवतारवैयर्थ्यमिति भावः ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आत्मनो देहस्य नास्ति क्लमो यस्मिन् तादृशमायुश्च दत्तम् ॥ ३० ॥

अजानतैव जनेन यथा आचर्य्यते तथा सर्वज्ञेनापि त्वयेत्यर्थः । किन्तु त्वयि न पापसम्भावनेत्याह—योगेश्वरस्येति ॥ ३१ ॥

एतस्याः ब्रह्महत्यायाः पावनं प्रायश्चित्तं भवान् यदि चरिष्यति तदैव लोकसङ्ग्रहो भविष्यति नान्यथा यतः स अनन्यचोदितः अनन्यप्रवर्त्तितः ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मनो देहस्य नास्ति क्लमः क्लेशो यस्मिन् तदायुश्च दत्तम् ॥ ३० ॥

अजानतैवेति "आचार्य्यशास्ता या जातिः सा नित्या साऽजरामरा" इति महर्षिणोत्कृष्टायां जातौ सर्वाभिमाननिरासपूर्वकपरब्रह्मात्मकत्वलक्षणायां निवेशितत्वात् एवास्माभिः 'ब्रह्मासने' स्थापितस्य सर्वज्ञेनापि त्वया भावित्वादजानतेव यथा यथावदेव ब्रह्मवधः कृतः इत्यर्थः । यद्यपि योगेश्वरस्य भवतः "ब्राह्मणो न हन्तव्यः" इत्यादिलक्षण आम्नायोपि नियामकः इदं कुर्वित्येवं नियोजको नास्ति तस्य जीवविषयत्वात् ॥ ३१ ॥

तथापि हे लोकपावन ! नान्यचोदितः स्वेच्छयैव ब्रह्महत्यायाः पावनं प्रायश्चित्तं यदि चरिष्यति तर्हि लोकसङ्ग्रहो भविष्यतीत्यर्थः ॥ ३२ ॥

---

भाषाटीका ।

उस समय खिन्न मन होकर हाहाकार करते सब ऋषिजन बलदेवजी के प्रति बोले कि हे प्रभो ! आपने यह अधर्म किये ॥ २९ ॥

हे यदुनन्दन ! जितने काल तक यज्ञ समाप्त होगा इतने काल तक हमने इस रोमहर्षण को ब्रह्मासन दिया है इस वास्ते व्यासगादी पर बैठकर इस को अन्यके लिये उठना योग्य नहि और जिस में देह को परिश्रम नहिं होवे ऐसा आयुः भी हमने इस को दिया है यह सब नहि जानते हि आपने ब्राह्मणवध के सदृश इस का वध किया है ॥ ३० ॥

श्रीभगवानुवाच ।

(च)करिष्ये वधनिर्वेशं लोकानुग्रहकाम्यया ।
नियमः प्रथमे कल्पे यावान् स तु विधीयताम् ॥ ३३ ॥
दीर्घमायुर्बतैतस्य सत्त्वमिन्द्रियमेव च ।
आशासितं यत्तद्ब्रूत साधये योगमायया ॥ ३४ ॥

ऋषय ऊचुः ।

अस्त्रस्य तव वीर्यस्य मृत्योरस्माकमेव च ।
यथा भवद्वचः सत्यं तथा राम विधीयताम् ॥ ३५ ॥

श्रीभगवानुवाच ।

आत्मा वै पुत्र उत्पन्न इति वेदानुशासनम् ।
तस्मादस्य भवेद्वक्ता आयुरिन्द्रियसत्त्ववान् ॥ ३६ ॥

भाषा टीका ।

हे लोकपावन वेद आदि सब योग के आप ईश्वर हो इस वास्ते वेद भी आप का नियन्ता नहि है तथापि यदि अन्य की प्रेरणा के विना स्वयं हि इस ब्रह्महत्या के प्रायश्चित्त कों आप करोगे तो अन्य लोकन की भी प्रायश्चित्त में प्रवृत्ति होगी अन्य प्रकार से लोक संग्रहन होगा क्यों कि जो शिष्ट पुरुष करता है उसी कों देखकर अन्यपुरुष भी करता है ॥ ३१-३२ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

वधस्य निर्वेशं प्रायश्चित्तं प्रथमे कल्पे मुख्य ( कल्पे ) पक्षे विधीयतामुपदिश्यताम् ॥ ३३ ॥

किञ्च बत हे मुनयः! एतस्य दीर्घमायुः सत्त्वं बलमिन्द्रियं तत्पाटवञ्च अन्यच्च यद्भवद्भिराशासितमपेक्षितं तं नो ब्रूत सर्वम् ॥ ३४ ॥

अस्त्रादीनां यथा सत्यता भवेदस्माकं च वचः सत्यं यथा भवेत् तथा विधीयतामित्यर्थः ॥ ३५ ॥

तथा सम्पादयन्नाह—आत्मा वा इति । "अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे आत्मा वै पुत्रनामासि सजीव शरदः शतम्" इत्यादि वेदानुशासनं वेदवचनम् तस्मादस्य रोमहर्षणस्य पुत्रः उग्रश्रवाः भवतां पुराणप्रवक्ता भवेत्स चायुरादिमांश्च भवेत् अतः साक्षाज्जीवनादस्त्रस्य मृत्योश्च सत्यता पुत्ररूपेण चायुरादिसिद्धेर्युष्मद्वचनस्यापि सत्यता स्यादिति भावः ॥ ३६ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नियमो व्रतं कल्पे पक्षे सतु स एव भवत्वनुकल्पादिरित्यर्थः ॥ ३३ ॥

योगमायया अचिन्त्यशक्त्या ॥ ३४ ॥

अस्त्रस्य वीर्यस्य च पराक्रमस्य त्वदीयत्वेन मृत्योश्च विधात्रा त्वयैव नियुक्तत्वेन अस्माकं वचसश्च त्वद्भजनादिना तावकसम्बन्धित्वेनावश्यं सत्यतापेक्ष्यत इति हे रामेति । च तेनैव तव सर्वरमणतासिद्धेरितिभावः ॥ ३५ ॥

वै प्रसिद्धौ ॥ ३६ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अस्त्रस्य सत्यत्वम् अस्माकं वचः सत्यमिति स्वरस एवार्थः ॥ ३५—४० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमुक्तः प्राह रामः—करिष्य इति द्वाभ्याम । लोकानुग्रहकाम्यया लोकानुजिघृक्षया वधस्य निर्वेशं प्रायश्चित्तं करिष्ये प्रथमेकल्पे मुख्यपक्षे यावान्नियमः सतु विधीयतां मुख्यप्रायश्चित्तमुपदिश्यतामित्यर्थः ॥ ३३ ॥

किञ्च दीर्घमिति । अस्य रोमहर्षणस्य दीर्घमायुः सत्त्वं बलम इन्द्रियम् इन्द्रियपाटवात्मकमन्यच्च यद्भवद्भिराशासितम अपेक्षितं तत्सर्वं ब्रूत योगमायया आश्चर्यशक्त्याऽहं तत्सर्वं साधये ॥ ३४ ॥

इत्थमुक्ताः प्राहुर्मुनयः-(श)अस्त्रस्येति । अस्त्रस्य त्वत्प्रयुक्तकुशाग्ररूपस्य तव वीर्यस्य च मृत्योः रोमहर्षणस्य च यथा सत्यत्वं यथा चास्माकं वचः यावत्सत्रं त्वं दीर्घायुष्मान्पुराणवक्ता भवेत्येवंविधं वचः सत्यं भवेत्तथा हे राम! विधीयतां क्रियतामित्यर्थः॥३५॥

अस्त्रादीनां सत्यत्वं सम्पादयन् आह रामः—आत्मा वा इति । " अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे आत्मा वै पुत्र-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नामासि सजीवः शरदश्शतम्" इत्यादि वेदानुशासनं वेदवाक्यं तस्मादस्य पुत्रः उग्रश्रवाः भवतां पुराणवक्ता भवेत् आयुरादिमांश्च भवादित्यर्थः । अतः साक्षाद्रोमहर्षणस्याजीवनादस्य मृत्योश्च सत्यता पुत्ररूपेण च आयुरादिसिद्धेर्भवद्वचनस्यापि सत्यता स्यादिति भावः ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रथमे कल्पे उत्तमकल्पे यावान्नियमो विधिः सत्वेव निधिर्भवद्भिर्विधीयताम् ॥ ३३ ॥

अस्य भवतं दीर्घमायुः सत्वमिन्द्रियं दूरश्रवणदूरदर्शनादिशक्तिमत्साधयें किम्बहुना यद्यदाशांसितं कामितं तत्तत् साधय इत्याह—आशासितमिति ॥ ३४ ॥

मत्रवीर्ययोरमोघत्वं मृत्योरनावृत्तित्वमस्मद्वचसश्चावन्ध्यफलत्वं यथा स्यात्तथा विधीयताम् ॥ ३५ ॥

पुराणानां वक्ता पुत्रः स्यात् ॥ ३६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ऋषिप्रोक्तं प्रायश्चित्तं कर्त्तव्यमिति निश्चित्य पृच्छति चरिष्य इति । वधनिर्वेशो वधप्रायश्चित्तं लोकपावनोपपापिमङ्गीकृत्याह—लोकानुग्रहकाम्ययेति । तनश्चानुकल्पं परित्यज्य मुख्यकल्पमेव वदन्त्वित्याह—नियमः प्रथमे कल्प इत्याह—मुख्यकल्पे यावदुक्तं तावत् वदो न वदतीति शङ्कां च परित्यज्य स विधीयताम् ॥ ३३ ॥

अथान्यदप्यभिलषितं भवतां करिष्यामीत्याह-दीर्घमायुरिति । यथैतस्य दीर्घमायुः सत्वं वलम इन्द्रियसामर्थ्यं च चकारादन्यदपि यदेव किञ्चित् भवतामाशासितं चकारात्पूर्वमाशासतञ्च तत्सर्वं योगमायया साधयिष्यामि ॥ ३४ ॥

तदा सन्तुष्टा ऋषय ऊचुः परीक्षार्थं सन्दिहानाः विरुद्धद्वयमस्माभिर्वक्तव्यं तत्र यदि समाधानं ज्ञास्यति तदा अस्योक्तं भविष्यतीति तद्दशमाहुः अस्त्रस्येति । चत्वारोत्र व्यापृताः अस्त्रं तव वीर्यं मृत्युरयञ्चेति तत्र तस्य जीवने अयं बाधितं भवेत् अजीवनेतु अयं चकारात्तव वाक्यञ्च यथैतद्वयमपि सत्यं भवेत्तथा राम विधीयतामिति ॥ ३५ ॥

एकेनैव चतुर्णां दूषणानां निस्तारमाह—आत्मा वै पुत्र उत्पन्न इति । "अङ्गादङ्गात् सम्भवसि हृदयादभिजायसे आत्मा वै पुत्रनामासि सजीव शरदः शतम्" इति यद्यप्ययमनुकल्पः तथापि मुख्याभावे विधीयते यतो वेदानुशासनं तस्मादस्य आयुरिन्द्रियवीर्यवान् अयमेव भवेत् तदा अस्य मम वीर्यस्य मृत्योश्च न बाधा भवति सामान्यात् प्रतिनिधिस्तद्धर्मजः स्यादिति न्यायादस्यापि तथाविधा भवत्विति बोधितम् ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

निर्वेशं प्रायश्चित्तम् ॥ ३३ ॥

यस्मान्ममैव हि मुखं ब्राह्मणकुलं तस्माद्भवतां वाक्यभङ्गो न मे चिकीर्षित इत्यतो ब्रूत यथा युष्मदुक्तमेव करोमीत्याह—दीर्घमिति । सत्यं बलम् इन्द्रियमिन्द्रियपाटवम् ॥ ३४ ॥

अस्त्रादीनां सत्यता यथा भवेदस्माकं च वचः सत्यं यथा भवेत्तथा विधीयतामित्यर्थः ॥ ३५ ॥

तत् सम्पादयन्नाह—आत्मा वा इति । "अङ्गादङ्गात् सम्भवसि हृदयादभिजायसे आत्मा वै पुत्रनामासि सजीव शरदः शतम्" इत्यादि वेदानुशासनं वेदवचनं तस्मादस्य रोमहर्षणस्य पुत्रः उग्रश्रवाः भवतां पुराणप्रवक्ता भवेत् स चायुरादिमांश्च भवेत् अतः साक्षादजीवनादस्त्रस्य मृत्योश्च सत्यता पुत्ररूपेण चायुरादिसिद्धेर्युष्मद्वचनस्य सत्यताऽभूदिति भावः ॥ ३६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

लोकानुग्रहकाम्यया वधस्य निर्वेशं प्रायश्चित्तं करिष्ये तत्र प्रथमं कल्पं मुख्यपक्षे नियमो विधीयताम् ॥ ३३ ॥

सत्वं बलम् इन्द्रियं करणपाटवम् अन्यच्च भवद्भिर्यदाशासितमपेक्षितं तत्सर्वं ब्रूत ॥ ३४ ॥

अस्त्रादीनां सत्यता यथा भवेत् यावत्सत्रं त्वं दीर्घायुष्मान् पुराणवक्ता भवत्यस्माकञ्च वचः सत्यं यथा भवेत्तथा विधीयताम् ॥ ३५ ॥

अस्य मृतत्वादस्त्रादीनां सत्यता भवतु "अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे आत्मा वै पुत्रनामासि सजीव शरदः शतम्" इति वेदवचनान्मृतस्याप्यस्य रूपान्तरभूतः पुत्रः युष्माकं पुराणवक्ता भवत्वतः भवतां वचसः सत्यता भवतु इत्याह आत्मेति अस्य रोमहर्षणस्य पुत्रः उग्रश्रवाः ॥ ३६ ॥

---

भाषा टीका ।

श्रीभगवानुवाच ।

लोकन के अनुग्रह की कामना सें इस वध के प्रायश्चित्त को मैं करूंगा इस लिये मुख्य पक्ष में प्रायश्चित्त का जितना नियम है उतना हि मोको कर्त्तव्य है ॥ ३३ ॥

तथा इस रोमहर्षण का दीर्घ आयु बल और इन्द्रियों की कुशलता इस के सिवाय अन्य भी आप को जो अपेक्षित हो वह सब आप लोग कहो अपनी अचिन्त्य शक्ति सें मै सब का सम्पादन करूंगा ॥ ३४ ॥

ऋषय ऊचुः ॥ आप का अस्त्र प्रभाव और इस रोमहर्षण का मरण तथा सत्र पर्यन्त इस को दीर्घ आयुः आप पुराण वांचना इत्यादि जो हमने वरदान दिया है ये सब जैसें सत्य हो हे राम ! तैसे हि आप कीजियेगा ॥ ३५ ॥

श्रीभगवानुवाच ।

पिताहि पुत्र रूप से उत्पन्न होता है यह वेदकी आज्ञा है इसी कारण इसी रोमहर्षण का पुत्र उग्रश्रवा आपका पुराण

किं वः कामो मुनिश्रेष्ठा ब्रूताहं करवाण्यथ ।
अजानतस्त्वपचितिं यथा मे चिन्त्यतां बुधाः ॥ ३७ ॥

ऋषय ऊचुः ।

इल्वलस्य सुतो घोरो बल्वलो नाम दानवः ।
स दूषयति नः सत्रमेत्य पर्वणि पर्वणि ॥ ३८ ॥
तं पापं जहि दाशार्ह तन्नः शुश्रूषणं परम् ।
पूयशोणितविण्मूत्रसुरामांसाभिवर्षिणम् ॥ ३९ ॥
ततश्च भारतं वर्षं परीत्य सुसमाहितः ।
चरित्वा द्वादशमासांस्तीर्थस्नायी विशुद्ध्यसे ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे
बल्वलवधोपक्रमो नाम
अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

भाषा टीका ।

वक्ता होगा और आप के वचनानुसार दीर्घ आयु इन्द्रिय कुशलता बल आदि वारा भी वह होगा ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रथमं तावदपेक्षितं कथयत तदहं करिष्यामीत्याह—किम्वः कामइति । किं विषयो वः कामो वर्तते तद्ब्रूतेति अथानन्तरं ब्रह्मदण्डं गृहीत्वा ऽपचितिं निष्कृतिमजानतो मे हे बुधाः ! यथावच्चिन्त्यतामपचितिरिति ॥ ३७ ॥

प्रथमं तावत् अपेक्षितं कर्त्तव्यं कथयन्ति इल्वलस्येति द्वाभ्याम ॥ ३८—३९ ॥

प्रायश्चित्तमाहुः—ततश्चेति । परीत्य प्रदक्षिणीकृत्य सुसमाधानादिगुणविशेषाद्वैकाब्दमात्रमुक्तमित्यविरोधः सुसमाहितः कामक्रोधादिरहितः चरित्वा कृच्छ्राणि ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अजानत इति नरलीलावेशात् वास्तवस्त्वेतु वधदोषाभावात् ॥ ३७ ॥

पर्वणि अमावास्यादौ वीप्सयाऽवश्यं सर्वपर्वस्वागमनं बोधयन्ति ॥ ३८ ॥

ब्रह्मद्विधपालनार्थं हे दशार्हवंशावतीर्ण ॥ ३६ ॥

ऋषयस्तु चातुर्मास्यव्रतवसिततीर्थकरणादधिकं प्रायश्चित्तं नोपदिष्टवन्त इति ततश्चेति भारतं वर्षमिति तन्मध्यभागमित्यर्थः । द्वादशान् द्वादशेति चित्सुखः द्वादशेति पाठः सुमङ्गल एव स्वामिपादानाञ्च सम्मत इव तद्व्याख्यानात विशुद्ध्यसे निर्मलकीर्त्तिर्भविष्यसि वस्तुतस्तु अन्तर्भूतण्यर्थत्वं विशोधयसि निर्मलयशसा अधिकं पावयिष्यसीत्यर्थः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च ब्रह्मदण्डार्थं युष्मदपेक्षितं कथयत तदहं करिष्यामीत्यत आह—किं वः काम इति । हे मुनिश्रेष्ठाः । वो युष्माकं किं कामः यद्विषयः कामः वर्त्तते तं ब्रूत अथानन्तरं ब्रह्मदण्डं गृहीत्वाऽपचितिं निष्कृतिमजानतो मम हे बुधाः । यथावद्धर्मशास्त्रानुसारतः अपचितिश्चिन्त्यतां विधीयतामित्यर्थः ॥ ३७ ॥

इत्थमुक्तास्तावदपेक्षितं कथयन्ति—इल्वलस्येति । दानवो वर्त्तत इति शेषः स बल्वलः प्रतिपर्वागत्य सत्रं दूषयति ॥ ३८ ॥

तं बल्वलं जहि मारय तदेव नोऽस्माकं परमम् उत्कृष्ट

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

शुभूषणं तं कथम्भूतं पूयादीनभिवर्षतीति तथाभूतं तत्र पूयं हयम् ॥ ३६ ॥

ततस्तद्वधानन्तरं भारतं वर्षं परीत्य प्रदक्षिणीकृत्य सुसमाहितो रागद्वेषादिरहितः तीर्थस्नानशीलो द्वादशमासांश्चरित्वा विशुद्ध्यसे शुद्धो भविष्यसि चरित्वेत्यस्य कृच्छ्राणीत्यादिर्वा ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हे बुधाः ! युष्माभिर्वरो दत्त इत्यजानतो मेऽपचितिं परिहारं बुध्यताम् ॥ ३७ ॥

प्रायश्चित्तं विधातुमाहुः—इल्वलस्येति ॥ ३८—४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां
अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥
( श्रीविजयध्वजतीर्थरीत्या पञ्चसप्ततितमोऽध्यायः ॥ ६६ ॥ )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

किञ्च यद्यपीदं भवतां सर्वथा नाभिप्रेतं तथाप्येतत्प्रतिनिधित्वेनान्यत्कर्तव्यमित्याह—किं वः कामो मुनिश्रेष्ठा इति । अथ तदनन्तरं शीघ्रमेव तत्करवाणि तर्हि स्वेच्छयैव किञ्चित् कर्तव्यमिति चेत्तत्राह—अजानतस्त्वपचितिमिति । विधाय यथावत् यतो भवन्तो बुधाः अतः अपचितिं अपराधदूरीकरणोपायं चिन्त्यतां तदनूच्यतामित्यर्थः ॥ ३७ ॥

तदाहुः—इल्वलस्येति । समानमेव निष्कृतिहेतुर्भवति इल्वलोऽपि ब्रह्मवधपरो भवति ऋषिवेषेणैव कचित् स्थित्वा अगस्त्यायातिथये ये च वातापिं स इल्वलः तस्य सुतो बल्वलः स स्वभावतोऽपि वध्य इति ज्ञापयितुमाह—दानव इति । किमतस्तत्राह—स दूषयति नः सत्रमिति । पर्वणि पर्वणि पूर्णमास्यां सुत्यादिवसे ॥ ३८ ॥

एवं तस्यापराधमुक्त्वा कर्तव्यमाह—तं पापं जहीति पापत्वादवश्यं मारणीयः दाशार्हेति स्वस्य शरणागतत्वं तस्य तत्पालकत्वं च बोधितं तदेव नः शुश्रूषणम् अपेक्षितत्वात् दुःखनिवारकत्वाच्च यद्यपि पादसम्वाहनादिकमपि भवति शुश्रूषणं तथापि तत्परं तस्य दूषणप्रकारमाहुः—पूयशोणितेति परशुश्रूषणत्वायैतदग्रे कथितं पूयादिवर्षणामभितो वर्षणं यस्मादिति ॥ ३९ ॥

एवं स्वाभिलषितमुक्त्वा तत्करणेनास्मत्सन्तोषे सुगममेव प्रायश्चित्तं त्वया कर्तव्यमित्याह—ततश्च भारतं वर्षमिति । भारतवर्षस्य सम्पूर्णस्य परिभ्रमणं कर्तव्यम् अयं मुख्यः कल्पः तत्र प्रकारः सुसमाहित इति द्वादशान् मासान् व्रतं चरित्वेति शूद्रहत्या व्रतमुपदिष्टं ततः वर्षपर्यन्तं तीर्थस्नानेनाग्निमेन वा विशुद्ध्यसे शुद्धोभविष्यसि यात्राब्रह्महत्यायाः प्रायश्चित्तं भवति कालस्तु शूद्रहत्यायाः अस्मत्सन्तोषो बल्वलवधेन वाक्यादीनां सत्यता प्रतिनिधिस्थापनेनेति सर्वं यथोचितं जातमिति विशुद्ध्यसे ॥ ४० ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभ
दीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे
एकोनत्रिंशाध्यायविवरणम् ॥ २९॥७८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किञ्च प्रायश्चित्तोपदेष्टृभ्यो बुधेभ्यः प्रथमं किञ्चिद्देयं भवतीत्याभिप्रेत्याह—किं व इति । तदनन्तरमेव अपचितिं निष्कृतिमजानतो मे यथावच्चिन्त्यतां निष्कृतिर्व्यवस्थीयतामित्यर्थः ॥ ३७॥

पर्वणि पर्वणि प्रत्यमावास्यादिनम् ॥ ३८-३९ ॥

प्रायश्चित्तमुपदिशन्ति—ततश्चेति । परीत्य प्रदक्षिणीकृत्य सुसमाधानादि गुणविशेषादेकाब्दमात्रमुक्तमित्याविरोधः चरित्वा कृच्छ्राणि ॥ ४० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
अष्टयुक्सप्ततितमो दशमेऽजनिसङ्गतः ॥ ७८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जानतापि विद्वद्भ्योऽर्थे दत्वा धर्मः प्रष्टव्यः इति लोकशिक्षार्थं सर्वज्ञोऽपि मुग्धवत्पृच्छति-किं वो युष्माकं प्रायश्चित्तोपदेष्टृणां काम्यते इति काम ईप्सितोर्थः किमस्ति तर्हि ब्रूत अहं करवाणि अथानन्तरं अपचितिं प्रायश्चित्तमजानतो मे मम यथावदपचितिश्चिन्त्यतां शास्त्रतो व्यवस्थीयताम् ॥ ३७॥

प्रथमं स्वकामं कथयन्ति—इल्वलस्येति द्वाभ्याम् । अपचितिं कथयन्ति-ततश्चेति । भारतवर्षं परीत्य प्रदक्षिणीकृत्य सुसमाहितः रागद्वेषादिरहितः तीर्थस्नायी द्वादशान्मासान् चरित्वा कृच्छ्राणि ब्रह्महत्याप्रायश्चित्तस्य बहुकालनिर्वर्त्यस्यापि द्वादशमाससाध्यत्वोक्तौ हेतुरुक्तः सुसमाहित इति ॥ ३८-४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टसप्ततितमाऽध्यायार्थप्रकाशः ॥७८॥

---

भाषा टीका।

हे मुनि! श्रेष्ठों आपकी क्या कामना है सोभी आप कहिये आप के कहने के अनन्तर हि. मै आप के कहेकों करूंगा, हे बुधाः! सूतहत्या के प्रायश्चित्त को मै नाहि जानता इस वास्ते यथावत् विचार कर मेरे लिये प्रायश्चित्त आप कहियेगा॥ ३७॥

ऋषयऊचुः॥ इल्वलका पुत्र बल्वलनाम कर के भयंकर दैत्य है वह अमावास्या पूर्णमासी आदि सब पर्वमें आयकर हमारे यज्ञको भ्रष्ट करता रहता है॥ ३८॥

हे दाशार्ह! उस पापीको आप मारियेगा उसका बध करताहि आपको तर्फ से हमारी परम सेवा है क्योंकि यह पर्व २ में आय कर राधि रुधिर विष्ठा मूत्र मदिरा मांसकी वर्षा करता है॥ ३९॥

अनन्तर अति सावधान होकर वारहमास पर्यन्त भरत खण्डके तीर्थों में भ्रमण करके और कृच्छ्र व्रत करके तीर्थों में स्नान करके आप शुद्ध हो जावोगे॥ ४०॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धमें अठत्तरके अध्यायकी
भाषाटीका समाप्ता॥ ७८॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे अष्टसप्ततितमोऽध्यायः॥ ७८॥

---

## एकोनाशीतितमोऽध्यायः ।

### श्रीशुक उवाच ।

ततः पर्वण्युपावृत्ते प्रचण्डः पांसुवर्षणः ।
भीमो वायुरभूद्राजन् पूयगन्धस्तु सर्वशः ॥ १ ॥
ततोऽमेध्यमयं वर्षं बल्वलेन विनिर्मितम् ।
अभवद्यज्ञशालायां सोऽन्वदृश्यत शूलधृक् ॥ २ ॥
तं विलोक्य बृहत्कायं भिन्नाञ्जनचयोपमम् ।
तप्तताम्रशिखाश्मश्रुं दंष्ट्रोग्रभ्रुकुटीमुखम् ॥ ३ ॥
सस्मार मुसलं रामः परसैन्यविदारणम् ।
हलं च दैत्यदमनं ते तूर्णमुपतस्थतुः ॥ ४ ॥
तमाकृष्य हलाग्रेण बल्वलं गगनेचरम् ।
मुसलेनाहनत्क्रुद्धो मूर्ध्नि ब्रह्मद्रुहं बलः ॥ ५ ॥
सोऽपतद्भुवि निर्भिन्नललाटोऽसृक्समुत्सृजन् ।
मुञ्चन्नार्तस्वरं शैलो यथा वज्रहतोऽरुणः ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ऊनाशीतितमे रामो बल्वलं छिन्नतुण्डये ।
निहत्य तीर्थस्नानाद्यैः सूतहत्यामपानुदत् ॥

उपावृत्ते प्राप्ते ॥ १—२ ॥

भिन्नो विदीर्णोऽञ्जनचय उपमा यस्य तमतिकृष्णमित्यर्थः । तप्तताम्रवच्छिखा श्मश्रूणि च यस्य तम् दंष्ट्राभिरुग्रं भ्रुकुटीमुखं यस्य तम् ॥ ३—५ ॥

अरुणो रुधिरेण दैत्यः शैलो धातुभिर्यथेति ॥ ६—७ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततस्तदैव प्रचण्डः अतितीव्रः भीमो भयङ्करः पूयगन्धश्चाभूत् हे राजन्निति विस्मयात् । ततस्तस्मात् वायोरनन्तरम् अमेध्यानि पूयादीनि तन्मयं विशेषेण पूर्वतोऽप्याधिक्येन च निर्मितम् अनु पश्चात् अदृश्यत तत्रत्यैः यद्वा स्वयमेव दृश्योऽभूदित्यर्थः ॥ १—२ ॥

तमितियुग्मकम् । बृहत्कायमित्यादिविशेषणैर्यथोत्तरं घोरत्वं सूचितम् । राम इति तज्जिघांसया मुनीन् रमयन्निति भावः । तत्तत्स्मरणे हेतुः परेति दैत्येति च, लीलया ताभ्यां तद्वधार्थमिति भावः । अहनत् प्रहृतवान् यतो ब्रह्मद्रुहं विप्रकुलहिंसकं बल इति बलाधिक्येन हननस्य गाढता सूचिता ॥ ३—५ ॥

सम्यक् धारादिरूपेण उत्सृजन् अत एवारुणः महाकायस्यापि तस्य सकृत् प्रहारेण पतने दृष्टान्तः । शैल इति । वज्रेण आहतः प्रहृतः सोऽप्यसृक्तुल्यं गैरिकं समुत्सृजन् तेनैवारुणो महाशब्दं कुर्वन् पतति वहत इति पाठे पाठान्तरेऽप्यर्थः । स एव सम्यक् ईश्वरत्वश्रीकृष्णैकप्रियत्वात् यतो मुनयो महाभिज्ञाः अवितथाः सत्याः सद्यःफलाः आशिषः सुखं जगत् पाहि सुसिद्धाभीष्टो भूया इत्याद्याः प्रयुज्य दत्वा अभ्यषिञ्चन् तस्य मङ्गलाभिषेकं कारयामासुः । यतो महाभागाः परमभाग्यवन्त इति सर्वसम्पत्तिमत्त्वं सूचितम् । तत्रानुरूपो दृष्टान्त वज्रघ्नमिति ॥ ६—७ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथपल्वलध स्वं वक्तुं तद्धुश्चेष्टितं प्रस्तौति—तत इति । पर्वण्युपावृत्त

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

प्राप्ते सति प्रचण्डो निष्ठुरः पांसून् वर्षतीति तथा भयङ्करो दुर्गन्धो वायुरभूदुदभूत् ॥ १ ॥

ततः अमेध्यमिति छेदः स बल्वलः शूलं धरतीति तथा अन्वदृश्यत ॥ २ ॥

तमिति । तं बल्वलमवलोक्य रामः परसैन्यं विदारयतीति तथा तं मुसलं दैत्यान् दमयति नाशयतीति तथा तद्धलञ्च सस्मारेति सम्बन्धः तं कथम्भूतं बृहत्कायः शरीरं यस्य भिन्नो विदीर्णो ऽञ्जनचयः उपमा यस्य तमतिकृष्णमित्यर्थः । तप्तताम्रवच्छिखा श्मश्रूणि च यस्य तं दंष्ट्राभिरुग्रं भ्रुकुटीयुतं मुखं यस्य तम् ॥ ३ ॥

तौ हलमुसलौ तूर्णं तदैव उपतस्थतुः सन्निहितौ बभूवतुः ॥४॥

तमिति । गगनेचरं तं बल्वलं हलाग्रेणाकृष्य बलो रामः क्रुद्धो मूर्ध्नि मुसलेनाहनत् ताडयामास तत्र हेतुत्वेन बल्वलं विशिनष्टि—ब्रह्मद्रुहं ब्रह्म ब्राह्मणकुलं तस्मै द्रुह्यतीति तथा तम् ॥ ५ ॥

स इति । निर्भिन्नं ललाटं यस्य सः बल्वलः असृग्रुधिरं समुत्सृजन्नुद्गिरन्नार्त्तस्वरं मुञ्चंश्च भुवि भूमावपतत् यथाऽरुणः गैरिकादिधातुभिरिति शेषः । उपमेयेतु रुधिरेणारुणः वज्रेणाहतः पर्वतः पपात तद्वदित्यर्थः ॥ ६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

॥ १-२ ॥

तप्तताम्रवत्प्रकाशमानाभिः शिखाश्मश्रुदंष्ट्रोग्रभ्रुकुटीभिर्युक्तं मुखं यस्य स तथा तं शिखा च श्मश्रूणि च दंष्ट्रे च उग्रभ्रुकुटी च शिखाश्मश्रुदंष्ट्रोग्रभ्रुकुट्यः उग्रा भ्रुकुटी उग्रभ्रुकुटी ॥ ३-७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

॥ १—४० ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

॥ १—३४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

कीर्त्यभावे सुसंसिद्धे कीर्त्तिहेतून् बलः स्वयम् ।
त्रिंशत्तमे तथाऽध्यायं चकारेति निरूप्यते ॥

तत्र प्रथमं बल्वलवधार्थे प्रतीक्षा कृता ततो बल्वलसमागममाह—ततः पर्वण्युपावृत्त इति । दानवा अदृश्याः इवेति तत्कार्यमेव दृष्टं वर्णयति ततः प्रचण्डपांसुवर्षणः पांसुवृष्टिं वर्षन् भयानको वायुराविर्भूतः एतत्तेषां प्रथमकार्यं राजन्निति सम्बोधनं महती सेना पश्चात्समायातीति ज्ञापनार्थम् ततः पूयगन्धश्च सर्वतो जातः वृष्ट्यर्थं सुरामांसादीनां आनयनात्॥ १ ॥

ततो यज्ञशालायाममेध्यमयं वर्षमभूत् तेन स एवोपद्रव इति निश्चितं ततः सोऽप्यन्वदृश्यत शूलभृगिति युद्धार्थं महादेवाल्लब्धवरत्वं ख्यापयितुम् ॥ २ ॥

ततो बलदर्शनेन तस्य स्वरूपं वर्णयति—तं विलोक्येति । आदौ मूर्त्तिस्थौल्यं दृष्ट्वापि भयजनकं बलाधिकञ्च वर्णेनापि तथात्वमाह-भिन्नाञ्जनचयोपममिति । अञ्जनचयोऽञ्जनपर्वतः प्रसिद्धाञ्जनपर्वतात्कृत्स्नश्चेन्मूर्त्तिमानञ्जनपर्वतो भवति तस्याधिदैविकः पृथक् पर्वतः स्थितः तदायं तत्तुल्यो भवति एवं तस्मिन् तामसभावमुक्त्वा तथा सति जडो भविष्यतीत्याशङ्क्य तस्य स्वरूपे वर्णे च राजसं भावमाह—तप्तताम्रशिखा श्मश्रुमिति । अग्निनप्तताम्रवत् शिखा केशाः श्मश्रूणि च यस्य तं दंष्ट्राभिः उग्रभृकुट्या च सहितं मुखञ्च भ्रुकुटीसहितं मुखं दंष्ट्राभिरुग्रं वा अयं सर्वथा वध्य एवेति ॥ ३ ॥

स्वशस्त्रं मुसललाङ्गलात्मकं द्वारकायां स्थितं पाताले वैकुण्ठे वा स्थितं सस्मार यतो रामः सर्वेषां रतिजनकः पूर्ववद्विशेषणं परसैन्यविदारणमिति शत्रुसेनाविनाशकं हलञ्च तादृशं चकारेण तद्धर्मानुत्कर्षः स्मरणानन्तरमेव बलभद्रमुपतस्थतुः तत्समीपमागते ॥ ४ ॥

ततो लीलायाः कर्त्तव्याभावात् एकेनैव प्रहारेण तं मारितवानित्याह—तमाकृष्येति । गगनेचरं दूरे वर्त्तमानमपि भगवत्त्वेपि क्रुद्धत्वान्मारणं क्रोधे हेतुः ब्रह्मद्रुहमिति बल इति सामर्थ्यम् ॥ ५ ॥

न तस्य पराक्रमः कोपि जात इति वक्तुं शीघ्रं तस्य पतनमेवोच्यते—सोऽपतदिति । भुवीति तस्यापि मुक्तिः निर्भिन्नललाटत्वं प्रहारज्ञापकम् असृक् समुत्सृजन्निति महाप्रहारः प्रतीकाराऽकरणज्ञापकः आर्त्तस्वरं मुञ्चन्निति मुक्त्यर्थं स्वस्मिन् दया ख्यापिता तादृशोपि हन्तव्य एवेति दृष्टान्तमाह—शैलो यथा वज्रहत इति । अरुणः अरुणवर्णः पर्वतः ॥ ६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ऊनाशीतितमे हत्वा बल्वलं बहुतीर्थगः ।
भीमदुर्योधनयुद्धं दृष्ट्वा रामः पुरीं ययौ ॥

उपावृत्ते प्राप्ते ॥ १—५ ॥

अरुणो रुधिरेण दैत्यः शैलो धातुभिः ॥ ६-७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ऊनाशीतितमे बल्वलवधरोमहर्षणहत्याशान्त्यर्थं तीर्थस्नानादिकं बलकर्म वर्णयति—तत इति । उपावृत्ते प्राप्ते पांसून् वर्षतीति तथा पूयगन्धो दुर्गन्धो वायुरभूत् ॥ १-२ ॥

भिन्नः किञ्चित् पुरुषाकारेण विदीर्णः अञ्जनचयः उपमा यस्य तम् ॥ ३-५ ॥

अरुणः गैरिकादिना ॥ ६-७ ॥

---

संस्तुत्य मुनयो रामं प्रयुज्यावितथाशिषः ।
अभ्यषिञ्चन् महाभागा वृत्रघ्नं विबुधा यथा ॥ ७ ॥
वैजयन्तीं ददुर्मालां श्रीधामाम्लानपङ्कजाम् ।
रामाय वाससी दिव्ये दिव्यान्याभरणानि च ॥ ८ ॥
अथ तैरभ्यनुज्ञातः कौशिकीमेत्य ब्राह्मणैः ।
स्नात्वा सरोवरमगाद्यतः सरयुरास्रवत् ॥ ९ ॥
अनुस्रोतेन सरयूं प्रयागमुपगम्य सः ।
स्नात्वा सन्तर्प्य देवादीन् जगाम पुलहाश्रमम् ॥ १० ॥
गोमतीं गण्डकीं स्नात्वा विपाशां शोण आप्लुतः ।
गयां गत्वा पितॄनिष्ट्वा गङ्गासागरसङ्गमे ॥ ११ ॥
उपस्पृश्य महेन्द्राद्रौ रामं दृष्ट्वाऽभिवाद्य च ।
सप्तगोदावरीं वेणां पम्पां भीमरथीं ततः ॥ १२ ॥

---

भाषा टीका ।

श्रीशुक उवाच ।

हे राजन् ! अनन्तर पर्वको आने पर धुरिकी वर्षा करने वारा रधिकी दुर्गन्ध वारा भयङ्कर प्रचंड पवन चारों से चलने लगा ॥ १ ॥

अनन्तर बल्वल कर के निर्मित रुधिर आदि अपवित्र वर्षा यज्ञ शाला में होने लगी पश्चात् त्रिशूल धारन लिये बल्वल दीख पड़ा ॥ २ ॥

बड़े लम्बे नामाशरीर वारे विदीर्ण अञ्जनकी सांशि के सदृश कृष्ण वर्ण वारे तप्त किये भये तांबे के सदृश शिखा डाढी मूंछ वारे डाठ और भयं कर भृकुटी युक्त मुख वारे उस बल्वलका देखकर ॥ ३ ॥

श्रीबलरामजीने शत्रु सेनाको विदारण करने वारे मुसलको तथा दैत्यनको दहन करने वारे हलको स्मरण किया वे दोनो हल मुसल उसी क्षण में बलदेवजी के समीप में आय गए ॥ ४ ॥

आकाश चारी ब्रह्म द्रोही उस बल्वल को हलके अग्रभाग से खींच कर क्रोधित होकर श्रीबलदेव जी मूसल से मस्तक में प्रहार करते भए ॥ ५ ॥

मूसल से उस का ललाट फट गया और रुधिर की वमन करने लगा रुधिर ते लाल होगया दीन स्वर से पुकारत वह बल्वल भूमि पर गिर पड़ा जैसे वज्र के लगने से पर्वत गिर पड़े ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

श्रियोधामान्यम्लानानि पङ्कजानि यस्यां ताम् ॥ ८ ॥

किम्तत्सरः यतइति आस्रवदुद्गात् ॥ ९ ॥

अनुस्रोतेनानुलोमतः पुलहाश्रमं हरिक्षेत्रम् ॥ १० ॥

गोमत्याङ्गण्डक्यां विपाशायां च स्नात्वा शोणे च आप्लुतः दृष्ट्वा सम्पूज्य ॥ ११ – १२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीधामेति महादिव्यत्वं तथा वैजयन्त्याः पञ्चवर्णत्वेपि पङ्कजप्रायत्वमुक्तम् ॥ ८ ॥

अथानन्तरमेव तीर्थयात्रोद्यतत्वात् तैर्मुनिभिरभ्यनुज्ञातः ब्राह्मणैः स्वसङ्गागतैः पुरोहितादिभिः सह सरयुः सरयूः ॥ ९ ॥

सरयूमनुस्रोतेन सरय्वा आनुलोमतः स्नात्वा प्रयागे सन्तर्प्य च ॥ १० ॥

गोमतीमिति सार्द्धद्वयकम् । विद्यमानपितृपितामहत्वापि तत्र गयायां पितृयागः श्रीवसुदेवाज्ञया तत्पूर्वजापेक्षयेति ज्ञेयं सागरसङ्गमे उपस्पृश्य स्नात्वेत्यर्थः । तदनन्तरं गम्येपि श्रीपुरुषोत्तमक्षेत्रे तस्यागमनं सर्वैः स्वावतारैस्सह सम्पूर्णतयाऽवतीर्णेन भगवता श्रीकृष्णेन सह श्रीविष्ण्वादिवत् श्रीजगन्नाथदेवस्याप्यैक्यप्राप्त्या तत्पूज्यत्वात् किं वा आत्मनस्तत्र साक्षाद्दर्शमानत्वेनात्मनोऽत्यन्ताभिन्नत्वेन प्रयोजनविशेषाभावादिति दिक् ॥ ११ ॥

उपस्पृश्य आचम्य स्नात्वा वा तदनन्तरं गम्येतु श्रीपुरुषोत्तमक्षेत्रे तत्रागमने श्रीकृष्णबलभद्रसुभद्राख्यत्वेन साक्षात् स्वपूजने लज्जापत्तेरितिज्ञेयं रामं जामदग्न्यं ततो रामदर्शनादेः पश्चादेव सप्तगोदावरादीनि तीर्थानि उपस्पृश्य तेषु स्नात्वेत्यर्थः । एवं परशुरामे भक्तिः सूचिता तत्र सप्तगोदावरमिति नदीभिश्चेति समाहारे ऽव्ययीभावः सप्तगोदा-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वरमिति बहुत्र पाठस्तत्रार्थः वेणाभीमरथ्यौ नद्यौ पम्पाख्यं सरः ॥ १२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पुलहाश्रमं सालग्रामम् ॥ १०—१२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

संस्तुत्येति । अवितथाः सत्याः ताः आशिषः प्रयुज्याशीर्वादान् कृत्वेत्यर्थः । हे महाभाग ! अभ्यषिञ्चन् स्नापयामासुः यथा विबुधाः देवाः वृत्रघ्नम् इन्द्रं तद्वदित्यर्थः ॥ ७ ॥

वैजयन्तीमिति । श्रियो धामान्यम्लानानि पङ्कजानि यस्यां तां वैजयन्तीं नाम मालां दिव्ये वस्त्रे दिव्यान्याभरणानि च ददुः ॥ ८ ॥

अथेति । तैर्मुनिभिर्ब्राह्मणैः सह कौशिकीं नदीमागत्य तत्र स्नात्वा ततः सरोवरमगात् किं तत्सरस्तत्राह, यतः सरसः सरयूरास्रवदुद्गात् ॥ ९ ॥

सरयूमनुस्रोतेनानुलोमेन स बलभद्रः पुलहाश्रमं सालग्रामक्षेत्रं गोमत्यां गण्डक्यां विपाशायाञ्च स्नात्वा शोणे च नदे आप्लुतः स्नातः पितॄन् पितामहादीनिष्ट्वा सम्पूज्य मनसा आराध्येत्यर्थः । जीवत्पितृकत्वाच्छ्राद्धाधिकाराभावात् यद्यपि जीवत्पितृकत्वाच्छ्राद्धादिकाभावात् यद्यपि जीवत्पितृकैः गया न गन्तव्येति वदन्ति तथाप्यत एव वचनात् तीर्थयात्राव्याजेन गन्तव्या नतु श्राद्धार्थमित्यवगम्यते गङ्गासागरसङ्गमं गत्वोपस्पृश्य तत्र स्नात्वा क्त्वाप्रत्ययान्तानां समुद्रसेतुमगमदित्युपरिष्टादन्वयः ॥ १०—१२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रियो धामानि अम्लानानि च पङ्कजानि यस्यां सा तथा ताम् ॥ ८ ॥

यतः सरोवरात् आस्रवत् अस्यन्दत् ॥ ९ ॥

स्रोतेन प्रवाहेण ॥ १० ॥

शोणं नदम् ॥ ११ ॥

सप्तशाखाभेदेन समुद्रङ्गता सप्तगोदावरी तां वेणीं कृष्णवेणीम् ॥ १२-१८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः इष्टस्य सिद्धत्वात् मुनयः स्तोत्रादिकं कृतवन्त इत्याह—संस्तुत्येति । स्तोत्रं च सन्तोषव्यापकं ततः प्रीतानां सत्याशीर्दानं ततः सकलपुरुषार्थसिद्ध्यर्थम् अभ्यषिञ्चन् कीर्त्यर्थं पापनिवृत्त्यर्थं वा परमदयालुर्भवतस्यः कथमेवं कृतवानित्याशङ्कां वारयितुं महता प्रार्थनया केवलं मारितवान् नतु स्वत एवेति ज्ञापयितुं दृष्टान्तमाह—वृत्रघ्नं विबुधा यथेति । वृत्रे हते यथा देवेन्द्राभिषेकं चक्रुरित्यर्थः । अनेन तस्य सर्वपापक्षयो निरूपितः ॥ ७ ॥

ततः कीर्त्यादुपचयार्थं वैजयन्तीं मालां ददुः आपादलम्बिनी वैजयन्ती श्रीधामेति स्थिरलक्ष्मीत्वम् अम्लानेति दोषाभावः पङ्कजेति गुणाः ततो रामाय सर्वरमणरूपाय दिव्ये वाससी दिव्यानि आभरणानि लौकिकशोभातिशयार्थं ददुः ॥ ८ ॥

एवं लौकिकालौकिकशोभातिशयसंयुक्तः सन् तदाज्ञापालनार्थं तैरभ्यनुज्ञातः तीर्थयात्रार्थमागतः ब्राह्मणैः सह कौशिकीं नदीं ययौ तत उत्तरभागे या कोटिग्रामादायाति सा कौशिकी तत्र स्नात्वा तेनैव मार्गेण मानसरोवरमगात् ॥ ९ ॥

तस्मात्सरोवरात् बह्व्यो नद्यः प्रसृताः ततः सरयूरपि प्रसृता अतस्तत्सङ्गे अनुस्रोतेन सरयूरयोध्यापर्यन्तमागत्य पश्चात्प्रयागे समागतः सरयुशब्दः सरयूशब्दश्च सर इत्युदकनामसरो युनक्तीति तथा ततः तीर्थराजः प्रयाग इति तत्र विशेषस्नानादिकमाह—स्नात्वा सन्तर्प्येति । तत उत्तरभागे पुलहाश्रमं हरिक्षेत्रं गतः ॥ १० ॥

गमनमध्य एव गोमतीं गण्डकीं स्नात्वा विपाशा काचित् क्षुद्रा पञ्चनद्यां प्रविष्टा हरिक्षेत्रनिकट एव अन्या तु विपाशा काश्मीरदेशे ततः शोणे समागतः गङ्गामुत्तीर्य सोऽपि महानद इति शोणे आप्लुत इत्युक्तं ततो गङ्गायां गत्वा सामान्यपितॄनिष्ट्वा पितामहपित्रादीन् वा केवलगयाभिगमनं जीवत्पितृकस्य निषिद्धं यात्रायान्तु न निषिद्धमिति भावः । ततो गङ्गासागरसङ्गमङ्गतः सर्वत्र स्नानतर्पणादिः ॥ ११ ॥

ततो मध्ये तदानीं पुरुषोत्तमस्थानं स्थानमात्रं न भगवानस्तीति तदनुकथा महेन्द्राद्रिं गतः तत्र परशुरामं दृष्ट्वा अभिवाद्य च ज्येष्ठत्वात् ततः सप्तगोदावरीं गतः यत्र सप्तधा गोदावरी समुद्रं गतः ततः कृष्णवेण्यां तस्यापि सङ्गमं गतः ततो देशमध्ये समागत्य निवृत्तिसङ्गमे पाण्डुरङ्गं गां भीमरथीं गतः पम्पाख्यं सरः विद्यानगरसमीपे ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

श्रियोधामानि अम्लानानि पङ्कजानि यस्यां ताम् ॥ ८ ॥

किं तत् सरोवरं तत्राह—यत इति । आस्रवत् उद्गात् ॥ ९ ॥

सरयूमनुस्रोतेन सरय्वा अनुकूलस्रोतसेत्यर्थः ॥ १० ॥

गोमतीमित्यादीनां गत्वेत्यनेनान्वयः । स्नात्वेति तत्र तत्रेत्यर्थः पितॄनिष्ट्वेति जीवत्पितृपितामहस्यापि तस्य श्रीवसुदेवाज्ञया तत्पूर्वजापेक्षयैवेति ज्ञेयम् ॥ ११ ॥

उपस्पृश्य स्नात्वा तदनन्तरगम्येऽपि श्रीपुरुषोत्तमक्षेत्रे तस्यागमनं श्रीकृष्णबलभद्रसुभद्राणां स्वेषामेव स्वकर्तृके पूजनाद्याववश्यकर्तव्ये लज्जापत्तेरिति ज्ञेयमिति वैष्णवतोषिणी रामं जामदग्न्यम् अभिवाद्य स्नात्वा ॥ १२—१७ ॥

---

स्कन्दं दृष्ट्वा ययौ रामः श्रीशैलं गिरिशालयम् ।
द्रविडेषु महापुण्यं दृष्ट्वाद्रिं वेङ्कटं प्रभुः ॥ १३ ॥
कामकोष्णीं पुरीं काञ्चीं कावेरीञ्च सरिद्वराम् ।
श्रीरङ्गाख्यं महापुण्यं यत्र सन्निहितो हरिः ॥ १४ ॥
ऋषभाद्रिं हरेः क्षेत्रं दक्षिणां मथुरां तथा ।
सामुद्रं सेतुमगमन्महापातकनाशनम् ॥ १५ ॥
तत्रायुतमदाद्धेनूर्ब्राह्मणेभ्यो हलायुधः ।
कृतमालां ताम्रपर्णीं मलयञ्च कुलाचलम् ॥ १६ ॥
तत्रागस्त्यं समासीनं नमस्कृत्याभिवाद्य च ।
योजितस्तेन चाशीर्भिरनुज्ञातो गतोऽर्णवम् ।
दक्षिणं तत्र कन्याख्यां दुर्गां देवीं ददर्श सः ॥ १७ ॥
ततः फाल्गुनमासाद्य पञ्चाप्सरसमुत्तमम् ।
विष्णुः सन्निहितो यत्र स्नात्वाऽस्पर्शद्गवायुतम् ॥ १८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रियः शोभायाः धामानि अम्लानानि पङ्कजानि यस्यां ताम् ॥ ८ ॥

आस्रवदुद्गात् ॥ ९ ॥

अनुस्रोतेन अनुलोमेन पुलहाश्रमं शालग्रामक्षेत्रम् ॥ १० ॥

दृष्ट्वा सम्पूज्य ॥ ११-१२ ॥

भाषा टीका ।

महान् भाग्य वारे मुनि जन बलदेवजी की स्तुति कर के तथा यथार्थ आशीर्वाद करके बलदेवजी का अभिषेक कराते भए जैसे वृत्रासुर के वध करने वारे इन्द्र का अभिषेक देवताओं ने किया है ॥ ७ ॥

शोभा के धाम अकुमिलहाए कमल के पुष्प जिसमें लगे ऐसी वैजयन्ती माला को तथा दो दिव्य वस्त्रों को और अनेक दिव्य आभूषणों को बलदेवजी के अर्थ मुनि जन देते गए ॥ ८ ॥

अनन्तर उन मुनियों से अनुमति प्राप्त होकर बलदेव जी ब्राह्मणों के साथ कौशिकी नदी को जायकर वह स्नान करके पश्चात् जहां से सरयू नदी वहि है उस सरोवर को भए ॥ ९ ॥

बलदेवजी वहां से सरयू के उतरते प्रवाह के मार्ग से प्रयाग में आयकर वहां स्नान करके देवता आदि का तर्पण करके वहां से पुलहाश्रम को चलगए ॥ १० ॥

गोमती में गंडकी में विपाशा में स्नान करके बलदेवजी शोणनद में स्नान करते भए पश्चात् गया में जाय कर वहां श्राद्ध आदि से पितृन का यजन करके अनंतर गंगासागर संगम में स्नान करके ॥ ११ ॥

महेन्द्र पर्वत पर परशुराम जी का दर्शन करके तथा उनका अभिवादन करके पश्चात् सप्तगोदावरी तथा कृष्ण वेणा पंपा भीमरथी को जाते भए ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

श्रीशैलं श्रीपर्वतम् ॥ १३ ॥

काञ्चीं पुरीम् ॥ १४—१६ ॥

दक्षिणमर्णवम् ॥ १७ ॥

फाल्गुनमनन्तपुरम् पञ्चाप्सरसं सरः अस्पर्शदस्पृशत् ॥ १८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

द्रविडेष्विति सार्द्धद्वयं महापुण्यम् श्रीत्रिमल्लनाथाश्रयत्वात् श्रीवैष्णववर्गाश्रयत्वाच्च दृष्ट्वा ॥ १३ ॥

कामकोष्ण्यादिकमगमदिति परेणान्वयः प्रभुः सर्वथा समर्थः इति तत्र तत्र कृत्यानां सम्पूर्णतां बोधयति श्रीरङ्गाख्यं क्षेत्रं हरिः सर्वदुःखहरः सर्वमनोहरश्च भगवान् यत्र सन्निहितः श्रीरङ्गशायिमूर्त्या स्वयं वा सन्निहितो नित्यं वर्त्तत इत्यर्थः । अतएव महापुण्यं तथा शब्दस्यार्थः चेति तथा च ॥ १४ ॥

समुद्रसेतुञ्च महापातकनाशनमिति तत्र गमनमात्रे ब्रह्म-हत्यादि प्रायश्चित्तसिद्धेः ॥ १५ ॥

तत्रेत्यर्द्धकम् ब्राह्मणेभ्यस्तत्रत्येभ्यः हलायुध इति बलवत्त्वप्र-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मार्कण्डे तत्रत्रैशीयब्राह्मणकुलपालनार्थं हलस्यापरित्यागं बोधयति सकूर्पनत्वं बोधयन् तस्य साक्षाद्भगवत्त्वेन सर्व सामर्थ्यं सूचयति कुलाचलं भारतवर्षदक्षिणसीमापर्वतं गत इति परेणान्वयः ॥ १६ ॥

तत्र मलये सम्यगासीनं सदा तत्रैव निवासात् तेनागस्त्येन आशीर्भिर्योजितोऽनुज्ञातश्च सन् तत्र दक्षिणार्णवान्तिके देवीं जगत्पूज्यां स्वमहिम्ना द्योतमानां वा ॥ १७ ॥

पञ्चाप्सरसश्च तीर्थमासाद्य उद्यमत्वमेव दर्शयति, विष्णुर्विश्वव्यापकोऽपि भगवान् यत्र पञ्चाप्सरसे सन्निहितः गवामयुतम् अस्पर्शीत् ददावित्यर्थः ॥ १८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

श्रीशैलं श्रीपर्वतम् ॥ १३—१४ ॥

ऋषभाद्रिं वनगिरिम् ॥ १५—१७ ॥

फाल्गुनम् अनन्तपुरम् अस्पर्शीत् ददौ ॥ १८-२२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

गिरिशस्य रुद्रस्यालयं श्रीशैलं श्रीपर्वतं काञ्चीपुरीं सरिद्वरां कावेरीं श्रीरङ्गाख्यं महापुण्यं क्षेत्रं यत्र हरिः सन्निहितः परिवर्त्तते तथाभूतं श्रीरङ्गाख्यं महापुण्यावहं क्षेत्रम् ॥ १३-१४ ॥

ऋषभाद्रिं वनगिरिं तद्विशेषणं हरेः क्षेत्रमिति ॥ १५ ॥

तत्र समुद्रसेतौ हलायुधः रामः अयुतं धेनुर्ददौ कृतमालामिति अगमदित्यनुषङ्गः शेषो वा ॥ १६ ॥

तत्र मलयपर्वते तेन अगस्त्येनाशीर्भिर्योजितः चोदितश्च दक्षिणमर्णवं गतः तत्रार्णवसमीपे कन्याख्याम् कन्याकुमार्याख्यां दुर्गां देवीं ददर्श स बलरामः ॥ १७ ॥

तत इति । फाल्गुनमनन्तपुरं प्राप्य उत्तमं पञ्चाप्सरसं नाम सरः समासाद्य तद्विशिनष्टि यत्र पञ्चाप्सरसे विष्णुः सन्निहितः तत्र स्नात्वा गवामयुतमस्पृशाद्ददौ इत्यर्थः ॥ १८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अस्पर्शात् ददौ ॥ १८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्रैव स्कन्दं दृष्ट्वा ततः श्रीशैलं गतः अनेन देशमध्ये परिभ्रमणं कृत्वापि सर्वाणि तीर्थानि कृतानीत्युक्तं ततः पूर्वभागे श्रीशैले किमिति गतमित्याकांक्षायामाह—गिरिशालयमिति । तत्र महादेवं दृष्ट्वा द्रविडदेशेषु महापुण्यजनकं वेङ्कटाद्रिं भगवद्रूपं ददर्श सहि पर्वत एव विष्णुरूपः यथा नारायणः ॥ १३ ॥

ततः कामकोष्णीं कामाक्षीं शिवकाञ्चीति प्रसिद्धा ततः काञ्ची पुण्यकोटिः ततः कावेरी श्रीरङ्गस्थाने तत्र श्रीरङ्गञ्च महापुण्यहेतुं ददर्श सर्वायतनापेक्षया श्रीरङ्गे विशेषमाह यत्र सन्निहितो हरिरिति ॥ १४ ॥

ततो ऋषभाद्रिं तस्यैवापरभागे तद्धिदंक्षेत्रं विष्णुक्षेत्रं वेति सन्देहे निर्णयार्थमाह—हरेः क्षेत्रमिति । ततो दक्षिणमथुरां गतः या नाम मथुरेति प्रसिद्धा ततः समुद्रसेतुमगमत् सेतुबन्धे गतः तस्य माहात्म्यमाह—महापातकनाशनमिति । तदत्यन्तं पुण्यतममिति ॥ १५ ॥

तत्र धेनूनामयुतं प्रादात् तीर्थवासिभ्यो दानशङ्कां वारयितुमाह—ब्राह्मणेभ्य इति । यद्यपि तत्स्थानं स्वकृतमेव ततश्च न ज्ञातवानिति ख्यापयितुं हलायुध इत्युक्तं ततः कृतमाला अग्रे दक्षिणसमुद्रसमीपे ततः ताम्रपर्णी तत्रैव मलयः कुलाचलः यत्रागस्त्यस्थानम् ॥ १६ ॥

ततस्तत्रागत्यागस्त्यं नमस्कारं कृतवानित्याह— तत्रागस्त्यमिति । समासीनं तपःकुर्वाणं चिरासनं वा भगवच्चिन्तकं नमस्कारः माहात्म्यख्यापकः साष्टाङ्गः अभिवादं नामोच्चारणपूर्वकं चकारास्तस्य स्तोत्रमपि कृतवानिति ज्ञेयम् अतस्तेन आशीर्भिः योजितः ततोऽप्यनुज्ञातः दक्षिणसमुद्रस्थानं गतः यत्र कन्याकुमारी तिष्ठति ततस्तामपि दृष्टवानित्याह—ततः कन्याख्यां दुर्गामिति । लक्ष्म्यंशत्वं वारयितुं दुर्गापदं सा च देवी देवतारूपा पूर्वं मानुष्यपि देवतारूपा जाता ॥ १७ ॥

ततः फाल्गुनम् अनन्तशय्यां गतः तत्रार्जुनस्य पञ्चाप्सरसां पादगृहीतानामुद्धारणात्तन्नाम्नैव तत् प्रसिद्धं जातं तदाह पञ्चाप्सरसमिति उत्तमं स्थानमेतत् तस्य स्थानस्य माहात्म्यमाह विष्णुः सन्निहितो यत्रेति । तत्रापि स्नात्वा सेतावित्र गवामयुतं दत्तवान् ॥ १८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अस्पर्शीत् ददौ ॥ १८—२२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गिरिशालयं श्रीशैलं श्रीपर्वतम् ॥ १३—१६ ॥

दक्षिणम् अर्णवं गतः ॥ १७ ॥

तत्र दक्षिणार्णवसमीपे कन्याख्यां दुर्गां ददर्श ततः फाल्गुनमनन्तपुरं प्राप्य उत्तमं पञ्चाप्सरसन्नाम सरः आसाद्य ॥ १८ ॥

---

भाषा टीका ।

पश्चात् प्रभु बलदेवजी स्कन्दका दर्शन करके महादेव के स्थान श्रीशैल पर्वत पर जाय कर द्रविड देशों मे महा पवित्र वेंकटाद्रि पर्वतका दर्शन करके ॥ १३ ॥

ततोऽभिव्रज्य भगवान् केरलांस्तु त्रिगर्त्तकान्।
गोकर्णाख्यं शिवक्षेत्रं सान्निध्यं यत्र धूर्जटेः ॥ १९ ॥
आर्यां द्वैपायनीं दृष्ट्वा शूर्पारकमगाद्बलः।
तापीं पयोष्णीं निर्विन्ध्यामुपस्पृश्याथ दण्डकम् ॥ २० ॥
प्रविश्य रेवामगमद्यत्र माहिष्मती पुरी ॥
मनुतीर्थमुपस्पृश्य प्रभासं पुनरागमत् ॥ २१ ॥
श्रुत्वा द्विजैः कथ्यमानं कुरुपाण्डवसंयुगे।
सर्वराजन्यनिधनं भारं मेने हृतं भुवः ॥ २२ ॥
स भीमदुर्योधनयोर्गदाभ्यां युध्यतोर्मृधे।
वारयिष्यन् विनशनं जगाम यदुनन्दनः ॥ २३ ॥
युधिष्ठिरस्तु तं दृष्ट्वा यमौ कृष्णार्जुनावपि।
अभिवाद्याभवंस्तूष्णीं किं विवक्षुरिहागतः ॥ २४ ॥

भाषा टीका।

कामकोष्णी और कांची पुरीको जाते भए पश्चात् नदीन में श्रेष्ठ कावेरी गंगा को गए जिस कावेरी के मध्य में महापवित्र श्रीरंग क्षेत्र है जहां श्रीरंगनाथ हरि सान्निधि कर कर के विराजमान है ॥ १४ ॥

पश्चात् सुन्दरबाहु भगवान् के ऋषभाद्रि क्षेत्रको गए तथा दक्षिण मथुराको गए वहां से महापातक नाशक समुद्र सेतुको गए ॥ १५ ॥

तहां बलदेवजीने ब्राह्मणों के अर्थ दूध देने वारी दस हजार गौनका दान किया वहां से ताम्रपर्णी नदीको गए वहां से कृतमाला नदीको गए मलय पर्वतको गए ॥ १६ ॥

वहां विराजमान अगस्त्यमुनिको नमस्कार और अभिवादन कर के अगस्त्यजीने बलदेवजी के आशीर्वाद किये उन से अनुज्ञाको प्राप्त होकर दक्षिण समुद्रको गए तहां कन्या नामादुर्गा देवीका दर्शन बलदेवजीने किये ॥ १७ ॥

वहा से फाल्गुण नामा अनन्तपुरको गए जहां अनन्तशयन श्रीविष्णु भगवान् सान्निहित है वहां से पञ्चाप्सर नामा उत्तमतीर्थको गए वहां बलदेवजी स्नान कर के दस हजार गौनका दान करते भए ॥ १८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

केरलादीन् देशान् ॥ १९ ॥
द्वीपमयनं यस्यास्ताम् ॥ २०—२२ ॥
विनशनं कुरुक्षेत्रम् ॥ २३ ॥

विवक्षुर्वक्तुमिच्छुः किं वदिष्यतीति भिया तूष्णीमासन्निति ॥ २४—२६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तत इति सार्द्धकम्। [तोग्मान्] केरलान् त्रिगर्त्तकांश्च देशान् गोकर्णाख्यं चातिव्रज्य आगादिति परेणान्वयः। 'यतो भगवान् सर्वशक्तिमान् इति तत्र तत्र स्नानदानादिसत्कर्मसाङ्गता पूर्ववत् सूचिता ॥ १९ ॥

बल इति। वेगेन गमनं भ्रमाद्यभावञ्च सूचयति अत एवाथानन्तरमेवेति प्रवेशे शैघ्र्यं बोधयति ॥ २० ॥

[दण्डकं दण्डकानिति पाठः] मनुतीर्थमित्यर्द्धकम्। द्विजैस्तत्रत्यैः तीर्थयात्रयागतैर्वा विप्रैः हृतं श्रीकृष्णेनेति शेषः ॥ २१-२२ ॥

मृधे युद्धस्थले युध्यतोस्सतोः किं वा मृधे मुधा तौ वारयिष्यन् यद्वा युध्यतोरिति कर्मणिषष्ठी युध्यन्तौ वारयिष्यन् यदुनन्दन इति पुनः प्रभासगमनेन यदूनां प्रहर्षणात् यद्वा उभयोरपि भीमदुर्योधनयोर्यदुभिः सह तुल्यसम्बन्धात् द्वयोरपि जगामेति ॥ २३ ॥

कृष्णार्जुनाभ्यां पश्चादभिवादनं सम्प्रति भारतयुद्धे निजबन्धुवर्गादिसर्वक्षत्रियवर्गक्षये तस्मिन् तयोर्द्वयोरेव मुख्यत्वात्सङ्कोचापत्तेः आगत इत्यन्ते इति वितर्क्येति शेषः। यद्वा किं गुणादिकं वा वक्तुमिच्छन् आगत इत्यभिप्रायज्ञानेन किमपि वक्तुमशक्तेस्तूष्णीमभूवन्नित्यर्थः ॥ २४ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

विनशनं सरस्वतीतिरोधानदेशम् ॥ २३—२९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

भगवान् रामः केरलादीन् देशान् यत्र धूर्जटेः शिवस्य साम्निध्यं तद्गोकर्णाख्यं शिवाभिमानिक्षेत्रम् ॥ १९ ॥

द्वीपमयनं यस्यास्तामार्यामम्बिकां दृष्ट्वा शूर्पारकं क्षेत्रं जगाम तापीमिति। उपस्पृश्य ताप्यादिषु स्नात्वा अथ दण्डकं दण्डकाख्यमरण्यं प्रविश्य ततो रेवां नर्मदामगमत् यत्र रेवातीरे माहिष्मती पुरी वर्तते तां रेवामित्यर्थः ॥ २०—२१ ॥

श्रुत्वेति। तत्र द्विजैः कथ्यमानं सर्वेषां बहूनां राजन्यानां राज्ञां निधनं नाशं श्रुत्वा भुवोभारं हृतं भगवतेति शेषः मेने अमन्यत ॥ २२ ॥

स इति। स यदुनन्दनो रामः मृधे युद्धे युद्ध्यतोः सतोः तौ वारयिष्यन् वारयितुं विनशनं कुरुक्षेत्रं जगाम ॥ २३ ॥

युधिष्ठिर इति। तं रामं दृष्ट्वा ययौ तत्समीपमित्यर्थः तथा कृष्णार्जुनावपि ययतुः ते तमभिवाद्य किं वक्तुमिच्छुरिहागतः इति संशयानास्तूष्णीमभवन् ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

स्थानं दूरम् अनन्तक्षेत्रं धूर्जटेः शिवस्य ॥ १९—२० ॥
मनुतीर्थं नाम तीर्थम् ॥ २१ ॥

भुव एतत् एतं भारं हृतं श्रुत्वा एतत् एतर्हि भुवो भारं हृतं मेन इति शेषः इति वा ॥ २२ ॥

विशसनं युद्धम् ॥ २३ ॥

किं वक्तुकाम आगत इति मत्वा ॥ २४—२५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततोऽतिव्रज्य शीघ्रं तद्देशोल्लङ्घनार्थमतिव्रजनं यतोऽयं भगवान् तत्र देशे भेदत्रयमाह—केरलान् लोकमान् गर्त्तकांश्चेति स एव [ मलिवार ] इति प्रसिद्धः. ततोग्रे गोकर्णाख्यं रावणेन नीयमानो महादेवः तत्र स्थापितः नोद्धर्तुं शक्य आसीत् तत उत्पाट्यमानः गोकर्णाकृतिर्जातः तच्छिवक्षेत्रं तद्धूर्जटेः सांनिध्यं सर्वदैव ॥ १९ ॥

ततस्तीरे गच्छन् मनुतीर्थमुपस्पृश्य समुद्रसङ्गमपर्यन्तं गत्वा पुनः प्रभासमगमत् एवं भारतवर्षस्य परिभ्रमणमुक्तम् एतावतापि वर्षो न पूर्णः आर्या नदी द्वैपायनस्य सम्बन्धिनी ततः शूर्पारकस्थानं कृष्णवेण्यां ततः तापीं नदीं पयोष्णीं निर्विन्ध्यां च ततस्ततो दण्डकारण्यं प्रविष्टः ॥ २० ॥

तत्र च रेवां नर्मदामगमत् यत्र मण्डपा च निकटे माहिष्मती नाम पुरी पूर्वं प्रसिद्धा ततोऽप्यग्रे पुनर्भ्रमणार्थं गच्छन् कुरुक्षेत्रनिकटे गतः ॥ २१ ॥

तत्रत्यैर्द्विजैः कथ्यमानं कुरुपाण्डवानां संयुगे तत्सम्बन्धिनां सर्वेषां राज्ञां निधनं श्रुत्वा भुवो भारं हृतं मेने ॥ २२ ॥

ततस्तैरेव गदायुद्धमपि जायत इति श्रुत्वा भूभारस्तु हृत एव उद्देशान्तरं नास्तीति यथा पञ्चपाण्डवा जीवन्ति एवमेको दुर्योधनोपि जीवतां किं मरणेनेति निश्चित्य विनशनं प्रदक्षिणं कुर्वन् तत्र समागत इत्याह—स भीमदुर्योधनयोरिति। स रामः भीमदुर्योधनयोः गदाभ्यां युद्ध्यतो सतोः युद्धं वारयिष्यन् विनशनं कुरुक्षेत्रमागतः इदानीमागमने पक्षपातशङ्का नास्तीति तस्यागमनं यतो यदुनन्दनः यदुरिव विचारितार्थकर्त्ता स्नेहादिना पक्षपातरहितः ॥ २३ ॥

ततः सर्वेषां शङ्का जातेत्याह—युधिष्ठिरस्त्विति। तं रामं तुशब्देन साधारणानां विघ्नविनाशः सुखं जातमिति सूचितं युधिष्ठिरप्रभृतीनां तु ततोन्यथेति अन्यपक्षो व्यावर्त्तितः यमौ नकुलसहदेवौ सर्वे एवाभिवाद्य तूष्णीमभवन् तेषामालोचनमाह—किं विविक्षुरिहागत इति। क्रियाप्रयोजनन्तु निवृत्तं वाङ्मात्रमवशिष्यत इति तस्यैवोत्प्रेक्षा ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

विनशनं कुरुक्षेत्रम् ॥ २३ ॥

किम्वदिष्यतीति शङ्कया तूष्णीम् ॥ २४-२५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यत्र पञ्चाप्सरसि विष्णुः सन्निहितः तत्र स्नात्वा गवामयुतम् अस्पर्शात् अस्पृशत् ददौ केरलादीन् देशान् ॥ १९ ॥

द्वैपायनीं द्वीपमयनं यस्यास्तामार्यामम्बिकाम् ॥ २०—२२ ॥

वारयिष्यन् तौ वारयितुं विनशनं कुरुक्षेत्रम् ॥ २३ ॥

किंविवक्षुः किम्वक्तुमिच्छुरिहागतः इति संशयानाः तूष्णीमासन् ॥ २४-२५ ॥

---

भाषाटीका।

श्रीबलदेव भगवान वहां से केरल और त्रिगर्भ देशन को गए जहा महादेवजीकी सन्निधि है उस गोकर्णनामा शिव क्षेत्रको गए॥ १९ ॥

वहां से द्वीप में रहने वारी आर्य्या नामा देवीका दर्शन कर के बलदेवजी शूरपारक क्षेत्र मे गए वहां से तापी पयोष्णी निर्विन्ध्या नदीन में स्नान कर के दण्डकारण्यको गए॥ २० ॥

पश्चात नर्मदा नदीको बलदेवजी गए जहां माहिष्मती पुरी है पश्चात् ब्रह्मावर्त्त में मनुतीर्थ में स्नान कर के फिर प्रभासतीर्थ में आय गए॥ २१ ॥

वहां ब्राह्मणों ने कौरव पाण्डवन के महाभारत संग्राम में सब क्षत्रियन के नाश होने का वर्णन किया. उस का श्रवण करके बलदेवजीने यह माना कि भूमि भार नष्ट होगया ॥ २२ ॥

उस समय, कुरुक्षेत्र रणभूमि में. भीमसेन और दुर्योधन दोनों गदान से युद्ध करते रहे. उनकों निवारण-

गदापाणी उभौ दृष्ट्वा संरब्धौ विजयैषिणौ ।
मण्डलानि विचित्राणि चरन्ताविदमब्रवीत् ॥ २५ ॥
युवां तुल्यबलौ वीरौ हे राजन् हे वृकोदर ।
एकं प्राणाधिकं मन्ये उतैकं शिक्षया ऽधिकम् ॥ २६ ॥
तस्मादेकतरस्येह युवयोः समवीर्ययोः ।
न लक्ष्यते जयोऽन्यो वा विरमत्वफलो रणः ॥ २७ ॥
न तद्वाक्यं जगृहतुर्बद्धवैरौ नृपार्थवत् ।
अनुस्मरन्तावन्योऽन्यं दुरुक्तं दुष्कृतानि च ॥ २८ ॥
दिष्टं तदनुमन्वानो रामो द्वारवतीं ययौ ।
उग्रसेनादिभिः प्रीतैर्ज्ञातिभिः समुपागतैः ॥ २९ ॥
तं पुनर्नैमिषं प्राप्तमृषयोऽयाजयन् मुदा ।
क्रत्वङ्गं क्रतुभिः सर्वैर्निवृत्ताखिलविग्रहम् ॥ ३० ॥

भाषा टीका ।

करने के वास्ते बलदेवजी कुरुक्षेत्र में गए ॥ २३ ॥

वहां राजा युधिष्ठिर और श्रीकृष्ण तथा अर्जुन और नकुल सहदेव, बलदेवजी को देख कर और अभिवादन करके न जाने क्या कहने की इच्छा कर बलदेव जी आए है ऐसा भयभीत होकर सब चुप चाप हो गए ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्यः पराजयो वा रणः सङ्ग्रामः ॥ २७ ॥

अर्थवद्वाक्यम् ॥ २८ ॥

दिष्टं प्राचीनकर्म समुपागतः सङ्गतः ॥ २९ ॥

क्रत्वङ्गं यज्ञमूर्तिम् ॥ ३० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

संरब्धौ क्रुद्धौ किञ्च मिथो विजयेच्छाशीलौ अतो विचित्राणि बहुप्रकाराणि मण्डलानि गदायुद्धगतिभेदान् चरन्तौ दृष्ट्वा अयमुक्तौ हेतुः यद्वा तथाभूतावपि दृष्ट्वा अतएव नमस्कृतवन्तौ नेति भावः ॥ २५ ॥

तुल्यं बलं युद्धसामर्थ्यं ययोस्तौ किञ्च वीरौ महोत्साहौ हे राजन्निति शिष्ये दुर्य्योधने स्नेहविशेषेणादरात् अत एवादौ तत्सम्बोधनं यद्वा राज्यभोगापेक्षया जीवनार्थं युद्धत्याग एव तवोचित इति भावः यद्वा निजवाक्यग्रहणार्थं तुष्टं तमनुवर्णयति-एकं भीमं प्राणेन बलेनाधिकम् दुर्योधनाच्छ्रेष्ठम् उत तु एकं दुर्योधनं तु शिक्षया गदायुद्धविद्याज्ञानवैशिष्ट्येनाधिकं स्वयं तच्छिक्षणात् श्लेषेण प्राणादप्यधिकं परमसुहृत्तमं शिक्षया शिष्यतया चाधिकमिति मन्ये तदानीमेव वा तयोस्तद्दृष्ट्या पूर्वत एव वा वेद्मि ॥ २६ ॥

समं वीर्यं युद्धसामर्थ्यं ययोस्तयोः इह रणे न लक्ष्यते मया अतो ऽफलः जयादिरहितो विरमतु ॥ २७ ।

अर्थः कारणं प्रयोजनं वा तद्वदपि न जगृहतुः बद्धवैरौ चिरं वृद्धिभूतद्वेषौ अत एव निरन्तरं स्मरन्तौ ॥ २८ ॥

तद्युद्धं दिष्टं श्रीकृष्णेन भगवतैवादिष्टं प्रवर्त्तितं तदिच्छया जनितमित्यर्थः । अर्थवतोपि स्ववाक्यस्यैकतरेणाप्यग्रहणात् राम इति उग्रसेनादीनां रमणार्थमिति भावः । आदिशब्दात् श्रीवसुदेव प्रद्युम्नादयः द्वारकानिकटे चोग्रसेनादिभिः सम्यक् तन्मङ्गलाचारसहितं यथा स्यात्तथा उपसमीपे आ सर्वतो गतो मिलितः ॥ २९ ॥

पुनरिति तीर्थयात्रादिसमाप्तौ सत्यां यज्ञेच्छया प्राप्तं सर्वयज्ञोपकरणयादवादिस्वपरिवारसाहित्यादिनोत्कृष्टप्रकारेण स्वगोष्ठ्या यज्ञोचितं सम्पत्त्या च गतं सन्तं तदा तदानीमेव अचिरादित्यर्थः ॥ मुदेति पाठः स्पष्टः । पाठान्तरं स्पष्टं क्रतुरङ्गम् एकांशो यस्य यद्वा क्रतवोऽङ्गेषु अवयवेषु यस्य यद्वा क्रतोरङ्गानि नामोच्चारणादिना साङ्गता यस्मात्तमप्ययाजयन् तदानीञ्च तद्योग्यतामाह—निवृत्तः । उपरतः अखिलो विग्रहो युद्धं यस्य तथाभूतं यथा स्यात्तथा "विग्रहः समरे काये विस्तारप्रविभागयोः" इतिविश्वः ॥ ३० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

क्रत्वङ्गं यज्ञशरीरम् ॥ ३० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

उभौ भीमदुर्योधनौ दृष्ट्वेदं वक्ष्यमाणमब्रवीत् कथम्भूतौ संरब्धौ क्रुद्धौ विजयमाकाङ्क्षमाणौ विचित्राणि मण्डलानि गतिभेदांश्चरन्तौ कुर्वन्तौ ॥ २५ ॥

किमिवाह—युवामिति। हे राजन् दुर्योधन! हे वृकोदर! भीम! एकं भीमं प्राणाधिकं बलाधिकं मन्ये उतैकमेकन्तु दुर्योधनं शिक्षयाधिकं मन्ये ॥ २६ ॥

तस्मादेतौ तुल्यवीर्ययोर्युवयोरन्यतरस्य विजयोन्यः पराजयो भविष्यतीति न लक्ष्यते अतो निष्फलो रणः सङ्ग्रामः विरमतु शाम्यतु ॥ २७ ॥

नेति। नृपात्मजौ भीमदुर्योधनौ इत्थमुक्तावपि तस्य रामस्य वाक्यं न जगृहतुः तत्र हेतुत्वेन तौ विशिनष्टि—बद्धवैरौ तत्रापि हेतुरन्योन्यं दुरुक्तं दुष्कृतानि च स्मरन्तौ इति ॥२८॥

दिष्टमिति रामः तत्स्ववाक्याग्रहणं दिष्टं तयोः प्राचीनकर्मप्रयुक्तं मन्वानस्तूर्णीं द्वारवतीं पुरीं ययौ तत्र च स्थितैः सर्वसम्पत्समृद्धैरुग्रसेनादिभिः सङ्गतो बभूव ॥ २९ ॥

तमिति। तं बलभद्रं निवृत्ताखिलविरोधं क्रत्वङ्गैः सह क्रतुभिरयाजयन् क्रत्वङ्गमिति पाठे यज्ञशरीरकं परमात्मानम् ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

प्राणाधिकं बलाधिकम् ॥ २६ ॥

अन्यः पराजयो वा विरमतु शान्तो भवतु ॥ २७ ॥

दुष्कृतानि जतुगृहदाहादीनि ॥ २८ ॥

तद्युक्तं दिष्टं दैवकृतम् ॥ २९—३३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

येन ज्ञानेन आत्मनि स्वस्य एककर्तुः स्वरूपे आश्रये आत्मानं तमेव ॥ ३१—३४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततः स्वयमेव स्वगतं प्रकटीकृतवान् इत्याह—गदापाणी उभाविति। युद्धार्थं हस्तेन गदा उभयोरपि अतः साधनमाह—संरब्धाविति अनिवृत्त्यर्थं कामनामाह—विजयैषिणाविति तदर्थं यत्नमप्याह—मण्डलानि विचित्राणि चरन्ताविति नह्येवं प्रवृत्तौ कदाचित् स्वतो निवृत्तो भवतः तस्मात् ज्ञानेनैव निवृत्तिरिति ज्ञानोपदेशार्थमागतः इदं वक्ष्यमाणमब्रवीत् ॥२५॥

उभयोर्वादी प्रशंसामाह—युवां तुल्यबलाविति। युवयोर्भिन्नतया सम्बोधनं हे राजन्! हे वृकोदरेति राजन्निति। सम्बोधनादेकोपि जीवितः राज्यमेव प्राप्स्यतीति निश्चितं ननु भीमश्च बलभद्रश्चेति वाक्यात् कथं भीमसमो दुर्योधनः इति चेत्तत्राह—एकं प्राणाधिकं मन्य इति। एकं भीमं प्राणेन बलेन द्वितीयादधिकं मन्ये अपरं राजानं भीमापेक्षया शिक्षया मयैव कृतया अधिकं मन्ये ॥ २६ ॥

तर्ह्येवं सति किं भविष्यतीत्याशङ्कायामाह—तस्मादेकतरस्येति बलांशः शिक्षांशेन समो भविष्यतीति अत एकतरस्यापि युवयोर्मध्ये अर्थात्समवीर्यता जातेति जयः अन्यः पराजयो वा न लक्ष्यते अतो निष्फलः अयं क्लेशरूपो रणः विरमतु निष्फलत्वात् ॥ २७ ॥

एवमुक्तावपि न निवृत्तावित्याह—न तद्वाक्यं जगृहतुरिति। यतो बद्धवैरौ यद्यप्यर्थवत् आन्तरमनिवर्त्तकं बाह्यो निवर्त्तक इति ततो रामः तत्तेषामनिवर्त्तनं दिष्टं भाग्याधीनमिति मन्वानः यथाभाग्यं भविष्यतीति स्वयं यात्रां कुर्वन्नेव द्वारवतीं ययौ बलभद्रे बहुकाले गृहागते नष्टलब्धधना इव उग्रसेनादयः समागताः तं गृहे निन्युः ततो यात्राया अनिवृत्तत्वात् पुनर्नैमिषे समागतः एतावता वर्षः पूर्णः ॥ २८—२९ ॥

ततः ऋषयस्तं मुदा अयाजयन् सर्वैरेव क्रतुभिः अग्निहोत्रादिभिः क्रत्वङ्गमिति पित्रादिषु जीवत्सु कथं सर्वे यागाः कृताः इति शङ्का व्युदस्ता यतोयं क्रत्वङ्गः क्रतवः अङ्गानि अङ्गेषु वा यस्येति तमयाजयन् क्रत्वङ्गं वा भगवन्तं तस्मिन् पक्षे याजने भगवानिति क्रतोरङ्गमिति यजमानं पुरुषस्य च कर्मार्थत्वात् इति न्यायात् अत आह निवृत्ताखिलविग्रहमिति निवृत्तः अखिलैः सह विग्रहः कलहो यस्य ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

एकं भीमं बलाधिकं मन्ये उतैकं दुर्योधनं गदाशिक्षया अधिकम् ॥ २६ ॥

अन्यः पराजयः ॥ २७ ॥

अर्थवत् तद्वाक्यम् ॥ २८ ॥

दिष्टं श्रीकृष्णेनैवादिष्टं तत् प्रवर्त्तितमित्यर्थः ॥ २९ ॥

क्रत्वङ्गं यज्ञमूर्त्तिम् ॥ ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हे नृप! तस्य रामस्य अर्थवत् वाक्यं न जगृहतुः ॥ २८ ॥

दिष्टं तयोः प्राचीनं कर्म मन्वानः द्वारवतीं ययौ तत्रोग्रसेनादिभिः समुपागतः सङ्गतः ॥ २९ ॥

क्रतुरङ्गं शरीरं यस्य तम् ॥ ३० ॥

---

भाषा टीका।

वहां भीमसेन और दुर्योधन दोनोन के हाथ में गदा और दोनो क्रोध में भरे हुए दोनोनको परस्पर में विजय की इच्छा होरही है और गदा युद्ध के विचित्र मण्डलों में दोनो विचरते हैं ऐसा देखकर बलदेवजी दोनोन के प्रति बोले ॥ २५ ॥

हे राजन्! हे भीमसेन! तुम दोनोहि वीर तुल्य बल

तेभ्यो विशुद्धविज्ञानं भगवान् व्यतरद्विभुः ।
येनैवात्मन्यदो विश्वमात्मानं विश्वगं विदुः ॥ ३१ ॥
स्वपत्न्यावभृथस्नातो ज्ञातिबन्धुसुहृद्वृतः ।
रेजे स्वज्योत्स्नयैवेन्दुः सुवासाः सुष्ठ्वलङ्कृतः ॥ ३२ ॥
ईदृग्विधान्यसङ्ख्यानि बलस्य बलशालिनः ।
अनन्तस्याप्रमेयस्य मायामर्त्यस्य सन्ति हि ॥ ३३ ॥
योऽनुस्मरेत रामस्य कर्माण्यद्भुतकर्मणः ।
सायं प्रातरनन्तस्य विष्णोः स दयितो भवेत् ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे
बलदेवतीर्थयात्रानिरूपणं नाम
एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

भाषा टीका ।

वारे हो तहां एक भीमसेनको तो दुर्योधन से बल में अधिक मै मानता हूं और एक दुर्योधनको गदा युद्धकी शिक्षा करके अधिक मानता हूं ॥ २६ ॥

इसी कारण तुल्य पराक्रम वारे तुम दोनोंन के मध्य में एकका विजय अथवा एक का पराजय होना इस युद्ध में नहि दीखता तासे यह निष्फल युद्ध बन्द होना चाहिये ॥ २७ ॥

हे नृप ! बलदेवजी के उस हित वचनको दोनोंनेहि नहि ग्रहण किया क्योंकि दोनो बद्ध वैर वारे रहे और परस्पर में दुर्वचन तथा दुष्ट कर्मनका स्मरण करते रहे इस वास्ते दोनोंने बलदेवजी के वचनको नहि माना ॥ २८ ॥

अपने वचनको नमाने में उन के प्रारब्ध कर्मको हेतु मान कर बलदेवजी द्वारकाको चले गए वहां प्रीति वारे उग्रसेन आदि ज्ञातिन के साथ मिलते भए ॥ २९ ॥

सब कलह से निवृत्त और पुनः नैमिषारण्य में प्राप्त भए यज्ञ मूर्त्ति श्रीबलदेवजीको शौनकादिक ऋषिजन मोदके साथ यज्ञों से यजन कराते भए ॥ ३० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

आत्मन्यधिष्ठाने विश्वगं सर्वानुस्यूतं येनैव विदुः पश्यन्ति तद्विशुद्धं विज्ञानं व्यतरददात् ॥ ३१—३४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे •
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

विशुद्धं मायासम्बन्धरहितं विज्ञानमनुभवं विशब्दाभ्यां ज्ञानस्य श्रीभगवद्विषयत्वेन वैशिष्ट्यं बोध्यते अत आत्मनि स्वस्मिन्नेव विश्वं ततस्तेन महात्मनो ऽभिन्नत्वात् तथा विश्वगं विश्वव्यापकमपि आत्मानं भगवन्तमन्तर्यामितया च स्थितं येन साक्षादनुभवन्ति तद्व्यतरत् यतो भगवान् सर्वज्ञः परमदयालुर्वा विभुः सर्वं दातुं समर्थो भक्तेष्टपरिपूरको वा ॥ ३१ ॥

स्वपत्न्या श्रीरेवत्या सह ज्ञातयो यादवाः बन्धवः सम्बन्धिनः कौसलदेशाधिपादयः सुहृदो मित्राणि मैथिलादयः तैर्वृतः सुशोभने वाससी यस्य सः सुष्ठु अलङ्कृतश्च सन् रेजे अशोभत । तत्र दृष्टान्तः स्वैर्नक्षत्रैर्ज्ञात्यादिस्थानीयैः तद्युक्तया ज्योत्स्नया श्रीरेवतीस्थानीयया यथेन्दुरिति न च मन्तव्यम् एतावन्त्येव तस्य कर्माणीति अन्यान्यपि बहूनि सन्तीत्याह ॥ ३२ ॥

ईदृगिति । एतत्तुल्यविधाप्रकारो येषां तानि असङ्ख्यानि अनन्तानि सन्ति कर्माणीति शेषः । तत्र हेतुर्बलस्येत्यादिः । तत्र बलशालिन इति महाविक्रमवन्तीति भावः । किञ्च अनन्तस्य सर्वथाऽपरिच्छिन्नस्य इत्यसङ्ख्यानीति । किञ्च अप्रमेयस्य दुर्वितर्कमाहात्म्यस्येति अत्यन्ताद्भुतानीति किञ्च *मायया कृपया युक्तस्य मर्त्यस्य अप्राकृततदाकारलीलस्येति *परममधुराणीति सर्वत्रैव हेतुः बलस्य सर्वथा सर्वाधिकबलवत इति विशेषणानामेषां यथोत्तरं श्रेष्ठ्यं हि निश्चितम् अत्र प्रमाणापेक्षा कापि न कार्येत्यर्थः ॥ ३३ ॥

न च तत्कर्मणामीदृशमाहात्म्योऽर्थवादः शङ्क्यः साक्षान्महाफलसिद्धेरित्याशयेनाह— य इति । सायं प्रातश्च कालद्वयम्

* ईदृग्विधान्यसंख्यानि बलस्य बलशालिनः । अनन्तस्याप्रमेयस्य कर्माण्यद्भुतकर्मणः ॥ शृण्वन् गृणंश्च तत्कथा विष्णोः स दयितो भवेत् ॥ विज० पाठभेदः ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अनु निरन्तरतया वा स्मरेत मनसा चिन्तयदपि स विष्णोः निजाशेषभगवतः प्राकट्येन विश्वव्यापकस्य किं वा स्नेहभरेण श्रीरामान्तःप्रविष्टस्य श्रीकृष्णस्य दयितो दयापात्रं भवेत् कुतः रामस्य बहुधा तं तद्भक्तांश्च रमयतीति तथा तस्य ननु श्रीकृष्णप्रियपाण्डवद्वेषिदुर्योधनानुग्रहणादिना तद्विरुद्धमपि किञ्चिदुच्यते तत्राह—अद्भुतमिति। दुर्योधनस्य वधे हेतुर्दुरभिमानवर्द्धनेन तद्द्रुहां पाण्डवानां कीर्त्तिविस्तारणार्थमेवेति भावः। यतो ऽनन्तस्य महागम्भीराशयस्येत्यर्थः। यद्वा, निजाशेषभगवत्प्रकटनेनानन्तस्य विष्णोः सायं प्रातश्च सदा दयितो भवेत्॥ ३४॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
एकोनाशीतितमोऽध्यायः॥ ७९॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

ज्ञानप्रदानदक्षिणास्थानीयं येनेतिधारकत्वं विश्वगमिति प्राप्यत्वम्॥ ३१—३४॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकोनाशीतितमोऽध्यायः॥ ७९॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तेभ्य इति। भगवान् रामः तेभ्यः ऋषिभ्यः विशुद्धं विपर्ययसंशयादिरहितं विज्ञानं व्यतरद्ददावुपदिदेशेत्यर्थः। किन्तत् ज्ञानं यद्वितरदित्य आह-येनैवेति। येन ज्ञानेन आत्मनि परमात्मन्याधारभूते विश्वमात्मानञ्च विश्वगं विश्वं गच्छति व्याप्य तिष्ठतीति तथाभूतं विदुः साक्षात्कुर्युः तथाविधं ज्ञानं व्यतरदित्यर्थः। [ज्ञानप्रदानं दक्षिणास्थानीयम् इति बोध्यम]॥ ३१॥

स्वपत्न्येति। रेवत्याख्यया स्वपत्न्या सहावभृथस्नातः कृतावभृथस्नान इत्यर्थः। स्वज्योत्स्नया चन्द्र इव रेजे ज्योत्स्नास्थानीया स्वपत्नी चन्द्रस्थानीयस्तु रामः अनपायित्वाच्छुभ्रवर्णत्वाच्च॥३२॥

रामस्य चेष्टितानी साकल्येन वक्तुं न शक्यानीत्याशयेनाह--ईदृग्विधानीति। अनन्तस्य अनन्तावताररूपस्याप्रमेयस्यासंख्यातकल्याणगुणगणस्य मायामर्त्यस्य सङ्कल्पगृहीतमनुष्यजन्मनः॥३३॥

उपवर्णितबलभद्रचेष्टितश्रवणादिफलमाह—य इति। अद्भुतानि कर्माणि यस्य तस्यानन्तस्य तदवताररूपस्य बलदेवस्य कर्माणि यः पुमान् शृण्वन् सति वक्तरि गृणन् कथयन् सति श्रोतरि कीर्त्तयन्नुभयोरभावे स विष्णोर्दयितो निरतिशयप्रियो भवेत्॥ ३४॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकोनाशीतितमोऽध्यायः॥ ७९॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकोनाशीतितमोऽध्यायः॥ ७९॥
(श्रीविजयध्वजतीर्थरीत्या सप्तनवतितमोऽध्यायः॥ ९७॥)

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकोनाशीतितमोऽध्यायः॥ ७९॥

———

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
एकोनाशीतितमोऽध्यायः॥ ७९॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततो दक्षिणात्वेन तेभ्यो ज्ञानं दत्तवानित्याह—तेभ्यो विशुद्धविज्ञानमिति। दक्षिणाज्ञानसन्देश इति वाक्यात् "आत्मलाभान्न परं विद्यते" इति श्रुतेश्च आत्मदक्षिणां वै सत्रमिति च आत्मानमेव दक्षिणां नीत्वा स्वर्गं लोकं यातीति च ज्ञानदक्षिणैव दक्षिणा विशुद्धं ज्ञानमनुभवरूपं निरुपाधिकं ननु कर्मासक्तानां तेषां कथमकस्मात् ज्ञानमभूत् तत्राह—भगवान् व्यतरद्विभुरिति। भगवत्त्वात् तादृशज्ञानवत्त्वं वितरणञ्च वितरणेन हि दानपात्रापेक्षा विभुत्वात् सर्वसामर्थ्यं तस्मिन् ज्ञाने प्राप्ते तेषां का अवस्था जातेत्याकांक्षायामाह—येनैवात्मन्यदो विश्वमिति। परोक्षविश्वमात्मन्यपश्यन् विश्वस्मिंश्चात्मानं तदाह—आत्मानं विश्वगमिति॥ ३१॥

ततो दक्षिणादानानन्तरं यज्ञसमाप्तिश्च कृतवन्त इत्याह स्वपत्न्येति। रेवती रामस्य पत्नी तया सह अवभृथे स्नात एव ज्ञात्यादिभिर्वृतः पश्चाद्वा शोभार्थं निरूप्यते शोभायां पत्नीच हेतुभूता जातेत्याह—रेजे स्वज्योत्स्नयैवेन्दुरिति। अन्यथा दिवसे धूसरश्चन्द्रो न शोभते तस्यावभृथादुत्तीर्णस्य परमशोभां प्राप्तस्य पश्चाल्लौकिका वस्त्राभरणानि प्रतिपत्त्यर्थं निरूप्यन्ते सुवासाः स्वलङ्कृत इति॥ ३२॥

उपसंहरति-ईदृग्विधानीति। यथा तीर्थयात्रात्मकमिदम् एकं चरित्रम् एवंविधान्यसङ्ख्यातानि तस्य चरित्राणि यतोऽयं बलशाली बलकार्यं बह्वेव करिष्यतीति न तच्चरित्रं परजयात्मकं यतोऽयमनन्तः तर्हि कथं नोच्यत इति चेत्तत्राह—मायामर्त्यस्येति। स्तुतिपरत्वं वारयति सन्तीति युक्तश्चायमर्थः अवतारो हि किञ्चित् कार्यार्थः केषाञ्चित्कर्म साधयेत अन्येषामन्यदन्येषामन्य इति अन्यथा वैयर्थ्यापत्तेः तस्माद्ग्रन्थविस्तरभिया परं न लिख्यन्ते किन्तु सन्ति बुद्धिरेकत्र स्थिरीभूता दृढा भवतीति॥ ३३॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

बलभद्रचरित्रस्य श्रवणादेः भगवद्भजनोपयोगित्वमाह—शृण्वन् गृणन्निति । श्रोतरि सति गृणन्नित्यादिव्याख्येयं गृणन्नित्युच्चरन् स्वयमेव ननु भगवद्भक्तः किमिति श्रोष्यति भावान्तरापन्नस्य तत्राह अद्भुतकर्मण इति अद्भुतत्वाच्छ्रवणं दुर्योधनादय एवं मन्यन्ते यथा पाण्डवानां पक्षे कृष्णः एवमस्मत्पक्षे बलभद्र इति ततो वयं तुल्या जेष्याम इति इयं बुद्धिर्भूभारहरणार्थं बलभद्रेणैव सम्पाद्यते यथार्थं वदन् तथैव साहाय्यं च कुर्वन् तथापि मारयत्येव कृष्णरामयोरेकभावादिति अद्भुतकर्मत्वं स्वतन्त्रतया श्रवणादौ तत्रैव भक्तिर्भविष्यतीति कर्माङ्गत्वार्थमाह—सायम्प्रातरिति । अनन्तस्य शेषस्य विष्णोः पुरुषोत्तमस्य श्रवणादिकर्त्ता भगवतः प्रियो भवेत् अयमस्मत्सेवक इति प्रणीत्रचरित्रप्रियः एवमुपसंहृत्य फलकथनात् तच्चरित्रं समापितमिति सूचितं कीर्त्तिस्तस्य सर्वप्रकारेण स्थिरीकृता निरूपिता ॥ ३४ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे त्रिंशाध्यायविवरणम् ॥ ३०॥७९ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

येनैव ज्ञानेन आत्मनि परमात्मन्यधिष्ठाने अदो विश्वम् आत्मनं परमात्मानं च विश्वगं विश्वाधिष्ठितं विदुः ॥ ३१-३२ ॥

मायया स्वरूपेण मर्त्यस्य स्वरूपभूतया नित्यशक्त्या मायाख्यया युत इति श्रुतेः ॥ ३३ ॥

विष्णोस्तदनुजस्य कृष्णस्य ॥ ३४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकोनाशीतितमो दशमेऽजनि सङ्गतः ॥ ७९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तेभ्यः ऋषिभ्यः विशुद्धं संशयादिदोषरहितं व्यतरद्दिदेश येन विज्ञानेन आत्मनि परमात्मनि अदः कार्यभूतं विश्वम् आत्मानं परमात्मानं च कारणभूतं विश्वगं विश्वस्मिन् विदुः पश्यन्ति ॥ ३१—३२ ॥

ईदृग्विधानि कर्माणि सन्ति श्रीबलदेवचरितकथनान्ते तत्कृपा अपि भवत्विति प्रार्थयते अमर्त्यस्य मर्त्यशिक्षस्य माया कृपा मयि भवत्विति शेषः ॥ ३३ ॥

श्रीबलदेवचरितस्मरणादिफलं दर्शयति—यइति ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकोनाशीतितमाध्यायार्थप्रकाशः ॥ ७९ ॥

---

भाषाटीका ।

सर्वशक्तिमान् बलदेव भगवान् उन ऋषीनके अर्थ विशुद्ध विज्ञान देते भए जिस विज्ञान करके इस विश्वको परमात्मा के आधार जानते हैं, और विश्व के व्यापक परमात्मा को जानलेते है ॥ ३१ ॥

अपनी रेवती पत्नी के साथ ज्ञाति बन्धु सुहृद जनो से युक्त होकर बलदेवजी ने यज्ञांत स्नान किया, सुन्दर आभूषणों से अलंकृत तथा सुन्दर वस्त्र धारण किये बलदेवजी इस प्रकार से शोभा को प्राप्त भए कि जैसे अपनी चांदनी के साथ चन्द्रमा शोभित होता है ॥ ३२ ॥

बल करके शोभायमान अन्तरहित जीव माया से विलक्षण सङ्कल्प से मनुष्य शरीरधारी बलदेवजी के इस प्रकार के अगणित चरित्र हैं ॥ ३३ ॥

अन्तरहित अद्भुत कर्म वारे बलरामजी के चरित्रन को पुरुष सायंकाल प्रातः काल में सदा स्मरण करता है वह श्रीविष्णु भगवान् के अत्यन्तप्रिय होगा ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धमें उनासीके अध्यायकी
भाषाटीका समाप्ता ॥ ७९ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

## अशीतितमोऽध्यायः ।

राजोवाच ।

भगवन् यानि चान्यानि मुकुन्दस्य महात्मनः ।
वीर्याण्यनन्तवीर्यस्य श्रोतुमिच्छामहे प्रभो ॥ १ ॥
कोऽनु श्रुत्वा सकृद्ब्रह्मन्नुत्तमश्लोकसत्कथाः ।
विरमेत विशेषज्ञो विषण्णः काममार्गणैः ॥ २ ॥
सा वाग्यया तस्य गुणान् गृणीते करौ च तत्कर्मकरौ मनश्च ।
स्मरेद्वसन्तं स्थिरजङ्गमेषु शृणोति तत्पुण्यकथाः स कर्णः ॥ ३ ॥
शिरस्तु तस्योभयलिङ्गमानमेत्तदेव यत्पश्यति तद्धि चक्षुः ।
अङ्गानि विष्णोरथ तज्जनानां पादोदकं यानि भजन्ति नित्यम् ॥ ४ ॥

सूत उवाच ।

विष्णुरातेन संपृष्टो भगवान् बादरायणिः ।
वासुदेवे भगवति निमग्नहृदयोऽब्रवीत् ॥ ५ ॥

श्रीशुक उवाच ।

कृष्णस्यासीत् सखा कश्चिद्ब्राह्मणो ब्रह्मवित्तमः ।
विरक्त इन्द्रियार्थेषु प्रशान्तात्मा जितेन्द्रियः ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अथाशीतितमे कृष्णः श्रीदामानं गृहागतम् ।
सम्पूज्यापृच्छदर्थैस्तुं गुरुवासकथाम्मुदा ॥
सुदारिमारको हरिः पुरा चकार शं सताम् ।
अतःपरं विनैवतन्निजोपकारमाचरत् ॥

आश्चरितानि श्रुत्वा पुनर्मुकुन्दवीर्याणि पृच्छति—हे भगवन् ! श्रोतुमिच्छामह इत्यन्वयः ॥ १ ॥

उत्तमश्लोकस्य श्रीकृष्णस्य सत्यो मनोहराः विषयवैतृष्ण्यजनिकाः कथाः विशेषज्ञः सारवित् विषण्णो विषादं प्राप्तः ॥ २ ॥

कथाश्रवणं स्तुवन् दृष्टान्ततयाऽन्यार्थानाह—सा वागिति । तावेव करौ यौ तत्कर्मकर्तारौ तदेव मनो यत्स्थिरजङ्गमेषु वसन्तं स्मरेत् यस्तस्य पुण्याः कथाः शृणोति स एव कर्णः ॥ ३ ॥

उभयलिङ्गमिति मत्वा आनमेत्तदेव शिरः तदेव तस्य लिङ्गं स्थिरं जङ्गमञ्च तदैव लिङ्गमित्येव यत्पश्यति तदेव चक्षुः तान्येवाङ्गानि यानि पादोदकं भजन्तीति ॥ ४—६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कथासमाप्तिमिवालक्ष्य सोत्कण्ठः पृच्छति वस्तुतस्तु विष्णोः स दयितो भवेदित्यनेनोक्तां तद्दयां ततस्तज्जनितकथारुचिविशेषञ्च प्राप्य ताभ्यां पृच्छति—भगवन् हे सर्वज्ञ ! मुकुन्दस्य सर्वदुःखविमोचकस्य महात्मनः सर्वोत्तमस्वभावस्य यान्यन्यानि वीर्याणि प्रभावमयचरितानि च श्रोतुमिच्छामो वयं प्रार्थनायां लोट् अन्येषामपि वीर्याणां सम्भावने हेतुः अनन्तवीर्यस्येति । एवं कथने योग्यता तथा तद्वीर्याणामेव तादृशत्वात् अस्माकं तन्मात्रश्रवणौचित्यं तथा तेषामानन्त्येऽपि सर्वाण्येव तानि कथयेति भावः । ननु छिन्नाण्येव दिनानि तव जीवितमिति कथमेतावत्याशा सम्पद्येत तत्राह—प्रभोरिति आयूंष्यपि यथेष्टं दातुं शक्तस्येत्यर्थः अन्यतृप्तिविलसितमेवेदम् ॥ १ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, युष्माभिर्बहूनि तानि श्रुतान्येव किम्पुनस्तदिच्छया तत्राह—कोन्विति । असकृदपि श्रुत्वा कोनु पुमान् विरमेत् अपितु न कोपि तत्र हेतुः उत्तमाः उद्गते तमसी अज्ञानदुःखे यस्मात् तादृशः उत्तमः सर्वोत्कृष्टो वा श्लोको यस्य तस्य भगवतः सतीः श्रीकृष्णावतारसम्बन्धित्वेन तदीयकथास्वपि श्रेष्ठाः कथाः ननु बहवो विरमन्तोपि दृश्यन्ते तत्राह विशेषज्ञ इति विशेषौ महात्म्यमाधुर्य्यरूपे वैशिष्ट्ये जानात्यनुभवति यः सः इति अहो आस्तान्तदनुभवे जाते विरामः नित्यानुभूयमानदुःखध्वंसार्थमपि विरन्तुं न युज्यत इत्याह विषण्ण इति कामस्य विषयभोगस्य मार्गणैरन्वेषणैः श्लेषेण बाणैर्विषण्ण इति ॥ २ ॥

अन्यथा कर्णस्य वैयर्थ्यमेवेति दर्शयितुं तत्सहयोगेन अन्यान्यपीन्द्रियाणि तथा दृष्टान्तयति—सेति । गुणानिति बहुत्वं प्रीतौ जातायां नानागुणानुसन्धानात् करणतया वाचःप्रवृत्तेः कर्त्रधीनत्वं निर्दिश्य पुनरपरितोषेण सर्वेन्द्रियाणां तत्र स्वतः प्रवृत्तिरेव समीचीनेति ज्ञापयन् करादीनि कर्तृत्वेनैव निर्दिशति, तत्कर्मकरावित्यादिना. कर्म पूजापरिचर्य्यादि स्थिरेत्यादि सदा सर्वत्रैव स्मरणापेक्षया तस्य पुण्याः पुण्यकरीर्मनोज्ञा वा कथाः कर्णः श्रवणेन्द्रियम् अस्य ज्ञानेन्द्रियत्वाज्ज्ञानस्य चैकेनापि सिद्धिः करादिवन्न द्वित्वाद्यपेक्षत्वमित्येकत्वं निर्दिष्टम् एवं चक्षुरपि वक्ष्यते ॥ ३ ॥

उभयलिङ्गं विष्णोस्तज्जनानाञ्चेति व्यक्तीभावित्वात् श्रीमदर्चादिरूपं तद्भक्तरूपं च आ सम्यक् भूमिस्पर्शादिना नमेत् एवशब्देन विचित्ररूपदर्शनशीलस्य चक्षुषोऽन्यत्र प्रवृत्तिं निरस्यति नद्धि तदेव अनेनैव पूर्वत्राप्युत्तरत्रापि निर्द्धारो ज्ञेयः अथानन्तरं तस्य विष्णोर्जनानामपि भजन्ति श्रद्धया धारयन्ति नित्यस्य सर्वान्ते प्रयुक्तत्वात्पूर्वैरपि सर्वैः सहान्वयः अङ्गानि नाभेरूर्द्ध्वानि ज्ञेयानि अधस्तद्धारणनिषेधात् यथाकथंचित्तन्नामोच्चारणादिभिर्वागादीनां सार्थकत्वेपि तथा तथा तत्सिद्धयुक्तिः तत्तत्सम्यक्कृतयैव साफल्यसम्यक्त्वसिद्धेः करादीनां दृष्टान्तत्वेप्ययं भावः एवमेव वागादीनि सार्थकानि भवन्ति ममतु तत्तदभावेन सर्वाणि तानि व्यर्थान्येव केवलं त्वत्प्रसादाच्छ्रवणेन्द्रियमेव सार्थकं भवत्विति ॥ ४ ॥

विष्णुरातेनेति । त्वय्यस्मिंस्तादृशतदनुग्रहभावनोद्दीप्तप्रेम्णेत्यर्थः । अत एव सम्यक् सोत्कण्ठं पृष्टः सच स्वतो भगवान् भगवल्लीलातत्त्वज्ञत्वेन सर्वज्ञशिरोमणिः किञ्च बादरायणस्य सर्ववेदान्तसारज्ञस्य पुत्रः तेन पुनः सम्प्रश्नेन तु श्रीवसुदेवनन्दने समग्रैश्वर्य्यादिसमग्रकारुण्यादिगुणनिवासे नितरां मग्नहृदयः सन्नब्रवीत् तस्य परमकृपामयं कथास्वेव विशेषं स्मृत्वा कथयामासेत्यर्थः ॥ ५ ॥

कृष्णस्येति युग्मकम् सर्वचित्ताकर्षकसद्गुणनिधेः कश्चिदेकः श्रीदामनामा "श्रीदामरङ्कभक्तार्थं भूम्यानीतेन्द्रवैभवः" इति वृहत्सहस्रनामपाठात् ब्राह्मणत्वेपि विशेषमाह—ब्रह्मवित्तमः वेदार्थविदां श्रेष्ठः इत्यर्थः । श्रीभगवद्भक्त्येकनिष्ठत्वात् अत एव इन्द्रियार्थेषु विषयेषु विरक्तः कुतः प्रकर्षेण शान्तः कामादिक्षोभरहित आत्मा चित्तं यस्य सः तच्च कुतः जितेन्द्रियः ॥ ६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—३ ॥

उभयलिङ्गं चरमचरं च शरीरं रामाद्यवताररूपम् अर्चारूपं चेति केचित् ॥ ४—१५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ भगवतो भक्तानुग्रहं ब्रह्मण्यत्वाद्यात्मकं कुचेलवृत्तान्तं प्रस्तोष्यंस्तावत्तद्विषयकं राज्ञः प्रश्नमाह सूतः–भगवन्निति । हे भगवन् शुक ! अनन्तस्यापरिच्छिन्नस्वरूपस्वभावस्य महात्मनो भक्तानुकम्पिनो मुकुन्दस्य यानि वीर्याणि प्रभावसूचकानि कर्माणि तानि श्रोतुम् इच्छामहे प्रभो ! वक्तुं समर्थेतिभावः ॥ १ ॥

बहुधा श्रुतवतोपि कुतस्तव न विरक्तिरुदेतीत्यत आह—कोन्विति । हे ब्रह्मन् ! उत्तमश्लोकस्य सत्कथाः असकृदपि श्रुत्वा काममार्गणैर्विषयान्वेषणैरविषण्णो विषादमप्राप्तः विशेषज्ञो रसज्ञश्चेत् कोवा पुमान् विरमेत भगवत्कथाश्रवणादिति शेषः । सारज्ञश्चेन्न कोपि विरमेतेत्यर्थः । यद्वा काममार्गणैर्विषण्णः निर्वेदं प्राप्तः ॥ २ ॥

भगवद्गुणवर्णनादिषूपयुक्तानामेव वागादीन्द्रियाणां साफल्यमन्यथा वैयर्थ्यमेवेत्याह—सेति द्वाभ्याम् । या अनन्तस्य गुणान् गृणीते वर्णयति सैव वाक् सफलेत्यर्थः । विपर्यये " जिह्वाऽसती दार्दुरकीव" इत्यादि द्वितीयस्कन्धोक्तार्थोऽनुसन्धेयः तस्य भगवतः कर्माराधनात्मकं कुरुत इति तथा तावेव करौ हस्तौ स्थावरेषु चरेषु चान्तरात्मतया वसन्तं भगवन्तं यत् स्मरेत् तदेव मनः यस्तस्य पुण्याः कथाः शृणोति स एव कर्णः श्रोत्रम् ॥ ३ ॥

उभयं चराचरात्मकं लिङ्गं शरीरं यस्य तं विभवावताररूपमर्चावताररूपञ्चेति वा यदानमेत्प्रणमेत्तदेव शिरः यत्तं पश्यति तदेव चक्षुः विष्णोस्तज्जनानां तद्भक्तानां वा ( उदकं ) पादोदकं नित्यं यानि भजन्ति सेवन्ते तान्येवाङ्गानि गात्राणि ॥ ४ ॥

इत्थमापृष्टः प्राह मुनिरित्याह सूतः–विष्णुरातेनेति । विष्णुरातेन परीक्षिता नितरामासक्तं मानसं हृदयं यस्य सः ॥ ५ ॥

उक्तिमेवाह–कृष्णस्येत्यादिना यावदुत्तराध्यायसमाप्ति । ब्रह्मवित्तमः ब्रह्मविदां श्रेष्ठः इन्द्रियार्थेषु शब्दादिविषयेषु विरक्तः तत्र हेतुः प्रशान्तः आत्मा मनो यस्य जितानीन्द्रियाणि बाह्यानि येन सः ॥ ६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रीशुक उवाच ।

( मूलम् ) भगवानपि गोविन्दः साधयित्वा स्ववाङ्छितम्
सुयोधने महाबाहौ निहते गदया रणे ॥ क ॥
विसृज्यायोधनं शून्यं प्रयातुमुपचक्रमे ।
कृपश्च कृतवर्मा च द्रौणिश्च रथिनां वरः ॥ ख ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अवशिष्टा महात्मानः सुयोधनबले त्रयः ।
पञ्च पाण्डुसुता वीराः सात्यकिश्च महाबलिः ॥ ग ॥
वैश्यापुत्रो युयुत्सुश्च शिष्टाः कृष्णपुरोगमाः ।
तान् पुरस्कृत्य गोविन्दो मुनिवृन्दसमन्वितः ॥ घ ॥
जगाम हास्तिनपुरं धृतराष्ट्रं प्रसादितुम् ।
गान्धारी धृतराष्ट्रश्च विदुरश्च महामतिम् ॥ ङ ॥
प्रसाद्य पाण्डवान् स्वे स्वे राज्ये संस्थाप्य यत्नतः ।
स्तूयमानो मुनिगणैः सूतमागधवन्दिभिः ॥ च ॥
अनुयातः पाण्डुपुत्रैः प्रेमबाष्पाविलेक्षणैः ।
ताननुज्ञाप्य सोत्कण्ठान्रथेनादित्यवर्चसा ॥ छ ॥
शङ्खदुन्दुभिनिर्घोषैर्वेदमङ्गलनिःस्वनैः ।
पुण्याहमन्त्रघोषैश्च द्वारकां प्रययौ हरिः ॥ ज ॥
विचित्रतोरणां रम्यां चलत्कदलिकाकुलाम् ।
अलङ्कृतां पौरजनैः सिक्तसम्मृष्टभूतलाम् ॥ झ ॥
उपस्थितः पौरजनैः पालिकाङ्कुरधारिभिः ।
योषिद्भिर्वारमुख्याभिर्भूषिताभिश्च भूषणैः ॥ ञ ॥
वहद्भिर्दीपमुकुरकलशस्रक्फलाक्षतान् ।
उपस्थितो ब्राह्मणैश्च पुत्रैः पौत्रैः सहानुजैः ॥ ट ॥
प्रविवेश पुरीं दिव्यां दिवसे पूजितो हरिः ।
स प्रविश्य सभां दिव्यां सुधर्मां लोकविश्रुताम् ॥ ठ ॥
आहुकं वसुदेवञ्च रामञ्चैवाभ्यवादयत् ।
प्रणम्य मातरो विश्वाः काञ्चने परमासने ॥ ड ॥
उपविश्य यथाजोषं पूजितो यदुपुङ्गवैः ।
रराज रजनीनाथो यथा ग्रहगणैर्दिवि ॥ ढ ॥
हतावशिष्टैर्भूपालैस्तत्पुत्रैश्च महाबलैः ।
अभिषिक्तैर्यथास्थानं सेव्यमानो दिवानिशम् ॥ ण ॥
अवतीर्णमहाभारां विश्वां विश्वम्भरो हरिः ।
धर्मराजं पुरस्कृत्य धर्मेणैवान्वशासत ॥ त ॥

अनेनाध्यायद्वयेन कृपणब्राह्मणकृपातिशयकथनेन हरिभक्तस्य केवलं न पारत्रिकमेव फलम् अपितु ऐहिकमप्यतिविस्मयकरं स्यादितीदृशं माहात्म्यं वक्ति तत्र प्रथमतो भारतयुद्धं समाप्य कृष्णस्य हास्तिनापुरप्रयाणप्रकारं प्रख्यापयति—भगवानपीति ॥क॥

शून्यं यद्यादिनापि रहितं प्रयातु गन्तुम् अष्टादशाक्षौहिणीभ्यः शिष्टानाह—कृपश्चेति ॥ ख—ङ ॥

भगवत्सेवामन्तरेण राज्यमिच्छन्निस्वतो यत्नत इति युक्त्या प्रतिपाद्येत्यर्थः ॥ च ॥ छ ॥

वेदे ये मङ्गलनिःस्वनाः मङ्गलवचनानि तैः ॥ ज ॥ झ ॥

उपस्थितोऽभिगतः अङ्कुरपूरितपालिकापात्रविशेषः ॥ ञ ॥ ठ ॥

मातरो मातॄः ॥ ड ॥

यथाजोषं यथासुखम् ॥ ढ ॥ त ॥

॥ १-२ ॥

राजा एतदेव इन्द्रियकृत्यमिति वक्ति—सा वागिति । या अनन्तस्य गुणान् गृणीते सैव वाक् यौ तत्कर्मकरौ तावेव करौ अनेन करोतीति कर इति कर्तर्यच्प्रत्ययः सफल इति सूचितं यच्चिरजङ्गमेषु वसन्तं हरिं स्मरेत्तदेव मनः "मन ज्ञाने" इतिधातोः स्मरणलक्षणं ज्ञानं यत्तस्य हरेः कथाः शृणोति स कर्णः "कृण आकर्णने" इतिधातुः ॥ ३ ॥

चराचरभेदेनोभयविक्रम् उभयप्रतिमामानमेयत्तदेव शिरः श्रयत इति शिरः "श्रिञ् सेवायाम्" इतिधातोर्नमनलक्षणसेवायां शिरः इति निपात्यते यदुभयलिङ्गं पश्यति तदेव चक्षुः "चक्षुर्दर्शने" इतिधातुः तस्य हरेर्जनानां यानि विष्णोः पादोदकं नित्यं भजन्ति पानस्नानलक्षणां सेवां कुर्वन्ति अथ मङ्गलानि तानि एवाङ्गानि नान्यानि ॥ ४—६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १ ॥

असत्कारिति यो विशेषज्ञः यो वा काममार्गणैर्विषयणः सोऽपि सोऽपि ॥ २ ॥

स्थिरजङ्गमेष्विति । सदा सर्वत्रैव स्मरणापेक्षया ॥ ३ ॥

उभयलिङ्गं श्रीमदर्चादिरूपं तद्भक्तादिरूपञ्च । तदन्यसर्वविस्मरणांशे दृष्टान्तः ॥ ४— १६ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥ १—२ ॥

सा वागित्यादि । स्थिरजङ्गमेषु वसन्तं स्थिराः संसारवासनया ऽनुत्तरलो ये जङ्गमाः प्राणिनो महान्तस्तेषु वसन्तं तेषां हृदये सन्तम् ॥ ३ ॥

उभयलिङ्गं भगवन्मूर्तिर्वैष्णवं च विष्णोः पादोदकं तज्जनानां च ॥ ४—१५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सम्पत्तिर्भगवन्मित्रे द्वाभ्यामत्र निरूप्यते ।
लोकावगतहेतूनामभावात् केवलं हरेः ॥
एकाशे तथाध्याये कृष्णमित्रस्य सर्वथा ।
सम्पत्त्यभावो वाक्याच्च स्थाप्यते सविशेषणः ॥
अङ्गत्वेन बलस्यात्र श्रुत्वा लीलां विचक्षणः ।
निर्विण्णो भगवल्लीलां विशेषणात्र पृच्छति ॥

पूर्वाध्याये बलभद्रलीलां श्रुत्वा भगवल्लीलायां जातस्पृहः पृच्छति—भगवन् यानि चान्यानीति चतुर्भिः । भगवन्निति सम्बोधनं भगवच्चरित्रे श्रद्धां ज्ञानञ्च सूचयति यानि प्रसिद्धानि चरित्राणि चकारादप्रसिद्धानि च अन्यानि ग्रन्थान्तरेपूक्तानि तत्सम्बन्धि चकारादनुक्तानि च नन्वेवं चरित्रबाहुल्यं नास्तीति च शङ्कनीयं यतो मुकुन्दस्य चरित्रबाहुल्याभावे सर्वेषां मुक्तिर्न सिद्धा भवेत् देशकालव्यवहितानां सर्वेषामेव चरित्रश्रवणादिनैव मोक्षे सिद्धे मम त्वेतावती श्रद्धा तानि सर्वाण्येव चरित्राणि श्रोतव्यानीति न केवलं मोक्षार्थित्वेनैव किन्तु महत्त्वार्थिनं आत्मार्थिनश्च तत्रापि वीर्याणि पराक्रमरूपाणि तत्रापि बाहुल्यमाह अनन्तवीर्यस्येति श्रोतुमिच्छामह इति श्रवणेच्छा सर्वेषां निरूपिता प्रभो इति एतावता श्रवणेच्छापूर्तिर्भवत्स्वयैव कर्तुं शक्या नान्येन इति ॥ १ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु, श्रुतान्येव बहुचरित्राणि पुनः कथमाकाङ्क्षेति चेत्तत्राह—कोनु श्रुत्वेति । असकृत् वारंवारमपि श्रुत्वा श्रवणाद्विरमेत् ब्रह्मविद्यस्मिन्नर्थे सर्वज्ञत्वात् सम्मतिरुक्ता तत्राप्युत्तमश्लोकस्य सत्कथाः उत्तमैः श्लोक्यन्त इत्यतियोग्यानां कथाश्च सद्रूपाः स्वतोपि पुरुषार्थपर्यवसायिन्यः एवं सर्वप्रकारेण उत्तमाभ्यः कोवा विरमेत ननु सत्कथाः बह्व्य एव सन्ति बहूनां भगवतश्च ततश्च श्रुतानामेवानुवृत्तिः कर्त्तव्या किमपूर्वश्रवणेनेत्याशङ्कायामाह—विशेषज्ञ इति । यदैकं चरित्रं श्रुतं तदा यावान् रसः तदपेक्षया द्वितीयचरित्रश्रवणे शतगुणः ततस्तृतीयेपि ततः शतगुणाधिक्यम् एवमुत्तरोत्तरं श्रोतॄणां रसाधिक्यमनुभवसिद्धम् अतो विशेषज्ञः कोवा विरमेत् पूर्वचरित्रेणान्तःकरणमालिन्ये निवृत्ते उत्तरोत्तरमधिकचरित्रस्वरूपज्ञानात् विशेषज्ञता युक्तैव तत्र कदाचित् संसारे व्यापृतः अन्यधर्मैर्बाह्यगृहीतः विरमेतापि यस्तु पुनर्विरक्तः स कथं तन्न गृह्णीयात् वैराग्ये उपपत्तिमाह—विषण्णः काममार्गणैरिति । कामाः नानाविधाः मार्गणत्वादन्तःस्थिताः भित्वा बहिर्निर्गच्छन्ति बहिः स्थिताश्चान्तः प्रविशन्तीति तत उपायो जातः यतोऽयं काममयः पुरुषः अतः सर्वतो भिन्नः सर्वानन्दहेतोश्चरित्रात् कथं विरमेतेत्यर्थः ॥ २ ॥

एवं जीवस्य स्वतः भगवच्चरित्राद्विरतिमुक्त्वा विरक्तौ न केवलम् आत्मन एव कामैः नाशः किन्तु सर्वेन्द्रियाणामपि वैफल्यमिति वदन् इन्द्रियवत्त्वं भगवच्चरित्रादेवेत्याह—सा वागिति द्वाभ्याम् । वाग्देवतारूपा अनेनान्येषां दैत्यरूपा वागिति तेषामिन्द्रियाणां वागादिपदप्रयोगो भाक्तः आभासा वा वागादयः अन्यथा भगवतः सकाशात् उत्पन्नाः वागादयः कथमन्यपरा भवेयुः अथ याहु प्राजापत्या इत्यत्र देवपक्षतेह वाचमूचुरित्यादिना वाक्शब्दव्यवहार उक्तः आसुराणान्तु सर्वेन्द्रियाणामासुरत्वमेव न वागादित्वम् अथवा इन्द्रियाणां द्वेधा उत्पत्तिः श्रुतौ निरूपिता "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च"इति. "पराञ्चि खानि व्यतरत्स्वयम्भूः"इत्यादि च पुराणादिष्वहङ्कारादपि तेषामुत्पत्तिः यत्र ये भगवद्योग्याः तेषां भगवदीयैव सामग्री तत्रैव वागादिव्यवहारः ब्रह्मनिर्मितेऽहङ्कारनिर्मिते वा इन्द्रियवर्गेणायं व्यवहारः राजसतामसव्यवहारात् अतः सात्विका निर्गुणाश्च भगवदीया भवन्तीति भगवत्कृतेन्द्रियसम्बन्ध एव तेषां तत्र परीक्षार्थमिदमारभ्यते सा वागिति अभिप्रेता वाक् सैव यया तस्य गुणान् गृणीते गृणनं नोच्चारणमात्रं किन्तु नितरां "गृणिगरणे"इत्यनुशासनात् भगवतः कथामात्रं कदाचिदन्योपि वदेत् उत्कर्षाधायकामान्तु तेन प्रकारेण नितरां भक्तिपूर्वकमुच्चारणं भगवत्कृतवाच एवेति न काप्यव्याप्त्यतिव्याप्ती इदमेव चाभिज्ञापिकम् एवमग्रेपि ज्ञातव्यं करौ च तत्कर्मकरौ कर्म लौकिकं परिचर्यात्मकं भगवत्त्वेन ज्ञात्वा यत्कृतौ तदपि भवति तच्छब्देन पुरुषोत्तमो वा यज्ञस्तु पुरुषस्य कर्मेति न तत्रातिव्याप्तिः चकाराद्बहिर्मुखानामपि सेवकसेवकानां करौ सङ्गृहीतौ गुणानुवर्णनं तु न तेषामान्तरं शक्यं बाह्यन्तु प्रसंगाद्भवेदपि मनश्च तत्र चकारः पूर्वकर्मसङ्ग्रहार्थः ननु सेवकानां स्थिरजङ्गमेषु वसन्तं भगवन्तं स्मरेदिति अनेन द्वितीयस्कन्धे सूक्ष्मधारणायां यदुक्तं धारणया स्मरतीति तत्र विशेषो निरूप्यते—स्थिरजङ्गमेषु वसन्तमिति । तत्र स्वदेहान्तर्हृदयावकाश इति अन्यदपि रूपद्वयं सामान्यात् सङ्गृह्यते आधिदैविकमन्तर्यामिरूपं च तत्राप्युत्तमत्वादिभेदः कल्पनीयः उत्तमास्तु पूर्वोक्ताः सर्वत्र भगवद्दर्शनन्तु भगवत एव तथानुगृहीतस्य वा भवति तादृशस्य स्मृतिर्निवर्त्तत एव सर्वत्रानुभव एव, कर्णयोस्तु विशेषमाह—शृणोतीति । तत्पुण्यस्य जीवतकरणस्य कथाः पुण्यजनकास्तु प्रकरणविरोधान्न ग्राह्याः कर्ण इत्येकवचनं वामाभिप्रायं उत्तरो देवहूस्मृत इति वाक्यम् अथवा यः कर्णो भक्तिजनिकां कथां शृणोति स सर्वसम्मत इति तं परित्यज्य योपि पुण्यकथाः शृणोति स कर्णः स एव कर्णः पूर्वोक्तो वा ॥ ३ ॥

इन्द्रियाणां निरूप्य अङ्गानि निरूपयन् उत्तमाङ्गं निरूपयति—शिरस्तु तस्योभयलिङ्गमानमेदिति । उभयं स्थावरजङ्गमात्मकं लिङ्गं यस्येति अन्यत्तु भारात्मकत्वेन पूर्वमेव निरूपितं तुशब्दः तद्व्यावर्त्तयति एतद्येन सम्भवति तदप्येन्द्रियकार्यं तथापि फलदशायामुपयुज्यत इति तदाह तदेव यत् पश्यतीति । सर्वमेव जगत् तल्लिङ्गत्वेनैव यदा पश्यति तदेव चक्षुः भवति अत्रायं साधनक्रमोपि निरूपितः मार्गान्तरानुसारेणैव गुणानुकीर्त्तनपर्यन्तमधिकारं सिद्धे पश्चात्कीर्त्तनं भगवदीयानां प्रथमं साधनं ततः सेवारुच्या सेवा ततो ज्ञानोदये सर्वत्र भगवदनुसन्धानं तादृशस्य बहिर्व्यापारे तत्साधकपुण्यकथाश्रवणं तस्य पुण्यैर्नारदादिभिर्वा कथाश्रवणं ततः सर्वत्र भगवत्साक्षात्कारः ततो नमनमिति एवं क्रमसिद्ध्यर्थं सर्वापेक्षया पूर्वमेव कर्त्तव्यम् आवश्यकफलसाधकमिति भगवच्चरणोदकस्य पश्चादपि साधकमिति सर्वाङ्गे निरूपयति—अङ्गानि विष्णोरिति । तान्येवाङ्गानि यानि विष्णोः पादोदकं गङ्गां वहन्ति अथ भिन्नप्रक्रमेण विष्णोः शालग्रामादौ तज्जनामाश्च नित्यं वहन्ति अङ्गात्प्रथममागमनं भिन्नप्रक्रमः नित्यवहनं त्रिषवणम् अहरहः तदेकपानादिना वा एवं भगवदीयत्वेनैव सर्वपुरुषार्थ इति कथं कथातो विरतिरिति ॥ ४ ॥

एवं भगवदुत्कर्षे वर्णिते श्रवणेन शुकोपि भक्त्यानन्दे निमग्नः कथारम्भः कृतवानिति सूतः शौनकादीन् प्रत्याह विष्णुरातेन, संपृष्ट इति सहि भगवता एतदर्थमेव रक्षितः शुकोपि परमभगवच्छ्रद्धया भगवान् यतो बादरायणः तपःपरायणाद्भगवत उत्पन्नः अत एव वासुदेवे सत्वान्तःकरणाविर्भूते निमग्नहृदयः सन् ततो गूढं भगवच्चरित्रं गृहीत्वैवाब्रवीत् इदं सख्यचरित्रं एकादशाध्यायैर्वक्तव्यम् अतो निमग्नहृदयत्वादिकं साधनेन निरूपितम् ॥ ५ ॥

कथामाह—कृष्णस्यासीदिति । स पूर्वमपि कृष्णस्यैवासीत् इदानीं तु सखा बाल्ये मित्रं कश्चिदिति विशेषतो देवांशत्वनिराकरणं किन्तु केवलं स जीवः तर्हि तेन सह कथं सख्यमासीत्तत्राह—ब्राह्मण इत्यादिसप्तविशेषणानि येन षड्गुणैश्वर्ययुक्तो भगवांश्च तत्र प्रतिष्ठितो भवति । ततो भगवानेव भगवतः सखाऽभवदित्युक्तं भवति तत्र ब्राह्मणः श्रियो रूपं ब्रह्मानन्दत्वाल्लक्ष्म्याः अयञ्च ब्राह्मणः सम्बन्धी·

यदृच्छयोपपन्नेन वर्त्तमानो गृहाश्रमी ।
तस्य भार्या कु( चे )चैलस्य क्षुत्क्षामा च तथाविधा ॥ ७ ॥
पतिव्रता पतिं प्राह म्लायता वदनेन सा ।
दरिद्रा सीदमाना सा वेपमानाऽभिगम्य च ॥ ८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधनी ।

ब्रह्मसम्बन्धयोग्यतामेव सम्पादयति न जीवसम्बन्धमिति प्रकरणाद्ब्राह्मणार्थं निरूक्तम् अनेन एतादृशभावे यदृष्टं भगवदिच्छा वा तेनैवास्य सख्यं जातमित्युक्तं भवति ब्रह्मविदां मध्ये श्रेष्ठः ब्राह्मणोत्कर्षः परमोयं ज्ञानस्यैतद्रूपं विरक्त इति इन्द्रियाणामर्थेषु सहजेषु रागाभावः वैराग्यस्य रूपं प्रकर्षेण शान्तः आत्मा यस्येति त्रितयानन्तरं धर्मो निरूपितः ततो जितेन्द्रियः ऐश्वर्ययुक्तः ॥ ६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अशीतितम आयातः श्रीदामा हरिणार्चितः ।
सप्रेमपृष्ट उक्ता च कथा गुरुकुलाश्रया ॥
हे प्रभो ! तानि श्रोतुमिच्छाम इत्यन्वयः ॥ १ ॥

असकृदपि श्रुत्वा ननु विरमन्तोपि बहवो दृश्यन्ते तत्राह—विशेषज्ञ इति । निर्विशेषतत्त्वज्ञानिन एव विरमन्तु अप्राकृतगुणरूपलीलास्वादविशेषज्ञस्तु को विरमेत् किञ्च नित्यानुभूयमानदुःखध्वंसार्थमपि विरमितुं न युज्यते इत्याह—विषण्णः विषण्णोपि अन्यथा श्रवणद्वयं व्यर्थमेव स्यादिति भावः ॥ २ ॥

न केवलं कर्णस्यैव किन्तु कृष्णसम्बन्धं विना सर्वेषामप्यङ्गानां वैयर्थ्यमाह—सा वागित्यादि । अन्यानि वागादीनि तु "जिह्वाऽसती दार्दुरिकेव" इत्यादि शौनकोक्तेर्निन्द्यान्येवेत्यर्थः तत्कर्मकरावेव करौ धन्यौ स्थिरेषु जङ्गमेषु वसन्तं स्मरेत् यन्मनस्तदेव मन इति यत्र यत्र नेत्रं पतति तत्र तत्रैव कृष्णस्मरणशीलं मन एव धन्यमित्यर्थः ॥ ३ ॥

उभयलिङ्गं विष्णोस्तज्जनानाञ्चेति व्यक्तीभावित्वात् विष्णुप्रतिमारूपञ्च तत् द्वयमेव यत्पश्यति तदेव चक्षुः अङ्गानि नाभिरूर्ध्ववर्त्तीनि ज्ञेयानि ॥ ४—६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अशीतितमे आगते सुदाम्नि श्रीकृष्णकृतसत्कारादिकं वर्ण्यते ब्रह्मचरितानि श्रुत्वा पुनः श्रीकृष्णचरितानि पृच्छति भगवन्निति ॥ १ ॥

कामस्य मार्गणैर्विषण्णः विषादं प्राप्तः विषयेभ्यो जातग्लानिरित्यर्थः । विशेषज्ञः मुकुन्दवीर्यश्रवणादेः सर्वानन्देभ्यो विशेषं फलं जानातीति स तथा ॥ २ ॥

तौ एव करौ तत्कर्मकरौ तदेव मनो वसन्तं यत् स्मरेत् ॥ ३ ॥

उभयोः विष्णुतज्जनयोर्लिङ्गं मूर्त्तिं तज्जनानां वैष्णवानाम् ॥ ४—६ ॥

---

भाषा टीका ।

राजोवाच ।

हे भगवन् ! हेप्रभो अनन्तवीर्य्य संयुक्त महात्मा श्रीकृष्णके जो इनके सिवाय अन्यवीर्य्यहैं उनके श्रवण करनेकी हम सब इच्छा करते है ॥ १ ॥

हेब्रह्मन् ! उत्तम यश सम्पन्न श्रीकृष्णकी समीचीन कथान को सुनकर वारंवार कामके बाणोंसे विषादको प्राप्त भया विवेकी पुरुष कौन विरामको प्राप्त होसकताहै कोई भी नहीं ॥ २ ॥

जिस वाणीसे पुरुष, भगवान्के गुण कर्म नामन का कथन करताहै वहि वाणी सफलहै जो भगवान्की सेवा करने वारे है वेही हस्त सफल है, और स्थावरजङ्गम सब वस्तुमें अन्तर्य्यामी रूपसे वास करने वारे परमात्माको जो स्मरण करताहै वहि मन सफलहै और जो परमात्माको कथामका श्रवण करताहै, वहि कर्ण सफल है ॥ ३ ॥

जो मस्तक, भगवान्के अर्चावतार आदि और वैष्णव इन दो रूपनको नमन करताहै वहि सफल है, और जो भगवत् भागवत दोनों रूपका दर्शन करताहै वहि नेत्र सफल है, और जो अङ्ग, भगवानके अथवा भागवतनके चरणोदकको नित्य प्रति धारण करतेहै वेही सफलहैं ॥ ४ ॥

सूतउवाच ।

निरवच्छिन्न ज्ञान आदि गुण संपन्न श्रीवासुदेवके विषय में जिनका हृदय डूब रहाहै ऐसे व्यास पुत्र शुकदेव भगवान् राजा परीक्षितने पूछा तो श्रीशुकदेवजी बोले ॥ ५ ॥

श्रीशुकउवाच ।

इन्द्रियनके विषयनमें वैराग्यवान् इन्द्रियजित शान्त मन वारा ब्रह्मज्ञानिन में श्रेष्ठ एक कोई ब्राह्मण श्रीकृष्णका सखा रहा ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तथाविधा कुचैला किञ्च क्षुत्क्षामा यत्किञ्चित्संपन्नम् तदेव परिविष्य स्वयं क्षुधा जीर्णा ॥ ७ ॥

पतिव्रता सती म्लायता शुष्यता वदनेन सीदमाना ः

ननु ब्रह्मन् भगवतः सखा साक्षाच्छ्रियः पतिः ।
ब्रह्मण्यश्च शरण्यश्च भगवान् सात्वतर्षभः ॥ ९ ॥
तमुपैहि महाभाग साधूनाञ्च परायणम् ।
दास्यति द्रविणं भूरि सीदते ते कुटुम्बिने ॥ १० ॥
आस्तेऽधुना द्वारवत्यां भोजवृष्ण्यन्धकेश्वरः ।
स्मरतः पादकमलमात्मानमपि यच्छति ।
किन्त्वर्थकामान् भजतो नात्यभीष्टाञ्जगद्गुरुः ॥ ११ ॥
स एवं भार्यया विप्रो बहुशः प्रार्थितो मृदु (दुः) ।
अयं हि परमो लाभ उत्तमश्लोकदर्शनम् ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

भोगसम्पादनाशक्त्यावसीदन्ती वेपमाना भयेन कम्पमाना ॥ ८–१० ॥

भोजवृष्ण्यन्धकेश्वर इति तत्स्वीकारमात्रेण सर्वे ते दास्यन्तीति भावः । नात्यभीष्टान् परिपाकविरसत्वात् ॥ ११—१२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अतो गृहाश्रम्यपि यदृच्छया प्रयत्नं विनापि उपपन्नेन समीपलब्धेन अर्थेन वर्त्तमानः वृत्तिं कल्पयन् कुचेलस्य जीर्णमलिनक्षुद्रवस्त्रस्य भार्य्या चासीदिति पूर्वेणैवान्वयः तथाविधा तादृशासद्गुणा ॥ ७ ॥

वदनम्लान्यादिमयं प्रथमतो भर्तृभोगसम्पादनाशक्त्या निरन्तरबुभुक्षयैव च ततो भगवति भक्तौ तत्प्रार्थनानर्हत्वभावनया पतिभयेन सम्भवति ॥ ८ ॥

भगवतः पूज्यस्य भवत इत्यर्थः । साक्षात्सर्वेषां प्रकट एव श्रियःपतिः ननु तादृशेन सहाधमस्य मम सख्यं कुत इति चेत्तत्राह—ब्रह्मण्यः ब्राह्मणहितकारीति ननु तादृशं ब्राह्मण्यञ्च मम कुत इति चेत्तत्राह—शरण्यः शरणागतवत्सल इत्यर्थः । कोसौ ? तत्राह—भगवान् सात्वतर्षभः तद्रूपत्वेनावतीर्णोऽयमित्यर्थः ॥ ९ ॥

तमिति सार्द्धकम् । अतस्तमुपेहि तत्समीपे गच्छ ननु तथाप्यत्यन्तायोग्यत्वाल्लज्जया बिभेमिच तत्राह—साधूनां भवादृशां परायणं परमाश्रयं तदेकाश्रयत्वेन भयादिना तदनाश्रयणं सतामयुक्तमिति भावः । ननु साधुत्वे सति तदास्तां नाम अहन्त्वसाधुरेव नेत्याह—हे महाभागेति । अन्यथा तेन सह सख्यानुपपत्तेरिति भावः । अतो भवता ऽनभ्यर्थितमपि धनं तच्च भूरि बहुलं ते तुभ्यं दास्यति किञ्च सीदते दारिद्र्येण क्षुधादिना सदा दुःखं लभमानाय किञ्च कुटुम्बिने इति दानपात्रता सूचिता ॥ १० ॥

नन्वसौ निजबन्धुसन्तोषार्थं कदाचिदिन्द्रप्रस्थे कदाचित् वृन्दावने कदाचित् युद्धार्थमन्यत्रापि गच्छेदिति दूरं गन्तुमशक्तेन मया कथं प्राप्तव्यमिति चेत्तत्राह—आस्त इति । तदितो नाति दूरां श्रीद्वारकां गच्छ युद्धादिनिवृत्त्या यदुभिः सह विलासार्थमधुना तत्रैव निवासार्हत्वादिति भावः । यद्वा भोजादयः ईश्वराः सर्वसम्पत्तिमन्तो यस्मात्स इति गमनमात्रेणैव तव सर्वसम्पत्तिर्भवितेति भावः । यद्वा द्वारकावासतो नातिचिरकालगतमिदं वृत्तं ज्ञेयं ननु तथाप्ययोग्याय भूरि न दास्यत्येव तत्राह—स्मरत इति । चतुर्थ्याः षष्ठी पादकमलमेकमपि स्मरतः तच्चिन्तनमात्रे प्रवर्त्तमानायापि आत्मानं सर्वेश्वरमपि यच्छति तद्वश्यं करोतीत्यर्थः । भजतः भजते श्रवणाद्यशेषभक्तिं कुर्वते यथाविधि पूजयते वा जनाय अर्थकामान् किन्तु अर्थान् कामांश्च यच्छतीति किमुत वक्तव्यमित्यर्थः । किमुततरां सख्यसौभाग्ययुक्ताय तुभ्यमिति भावः । तेषां न्यूनत्वे हेतुः नात्यभीष्टान् परिणामविरसत्वेन प्रायो ऽनभीष्टान् ननु तर्हि तानयाचमाना न दास्यत्येव तत्राह—जगतो गुरुः सर्वधर्मोपदेष्टा ततो भक्तस्य मनोरथं किमिति न पूरयेदिति भावः यद्वा जगतो गुरुः पितेति अयं भावः यथा पिता क्रीडनकादिकं तुच्छमपि प्रार्थयमानाय बालकाय स्नेहेन तदिच्छया दत्ते पश्चाद्रत्नालङ्कारादिकमपि तथा सार्थकामानपि ददाति पश्चात्परमपदञ्चेति ॥ ११ ॥

स एवमिति सार्द्धकम । भार्य्ययेत्यावश्यकतत्करणार्थं तद्वचनं पाल्यमिति भावः । तत्रापि च विशेषेण प्रतिकामं पूरयतीति विप्रः तत्रापि बहुशो बहुलयुक्तिप्रदर्शनेन तत्रापि मुहुर्मुहुरं स्वारं मृद्विति पाठे क्रियाविशेषणम् एवं प्रार्थितोऽपि अयं हीत्यादि मनसा सञ्चिन्त्यैव गमनाय मतिं दधे दीयतामित्यस्यानन्तरमुवाचेति शेषः । हे कल्याणि ! इति श्रीभगवद्दर्शनमङ्गले प्रवर्त्तनात् तत्प्रार्थनञ्च रिक्तपाणितादोषनिरासाय ॥ १२–१३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यदृच्छयोपपन्नेन दैवाल्लब्धेनान्नादिना वर्त्तमानः 'जीवन् एवम्भूतः कृष्णस्य सखा आसीदिति सम्बन्धः । तस्य ब्राह्मणस्य कुचेला-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्वयं कुत्सितचेलमस्यतीदमन्वर्थं नाम भार्या क्षुत्क्षामा यदृच्छया लब्धं तस्मै परिविष्य स्वयं क्षुधा जीर्णा तत्र हेतुः तथाविधा पतिव्रता जितेन्द्रिया ॥ ७ ॥

अत एव पतिव्रता एवम्भूता सा म्लायता शुष्यता वदनेन पतिं प्राह ॥ ८ ॥

तदेवाह–नन्विति सार्द्धत्रिभिः। हे ब्रह्मन्! भगवतः पूज्यस्य तव यः सखा कृष्णः तमुपेहि समीपं गच्छ कथम्भूतः? साक्षाच्छ्रियो लक्ष्म्याः पतिः तत्र दारिद्र्यापनयनं तस्य कियदितिभावः। ननु श्रियः पतिश्चेन्मां नावलोकयेदपीत्यत आह—ब्रह्मण्य इति। ब्रह्मणि ब्राह्मणकुले साधुः तस्मात्त्वामादरिष्यत इति भावः। अथापि श्रियःपतिश्चेन्मोक्षदो ननु वित्तद इत्यत आह शरण्यः चतुर्विधपुरुषार्थार्थिनां शरणार्हः अथापि न मदभिप्रेतं जानीयादित्यत आह—भगवान् ज्ञानसत्यादिषाड्गुण्यपूर्णः अथापि परत्वेन न मामाद्रियेतेत्यत आह—सात्वतर्षभः निरतिशयसौशील्यादेव सात्वतश्रेष्ठतयाऽवतीर्णे इति भावः ॥ ९ ॥

तमेव किं विशिष्योपेहीति ब्रूषे इत्यत आह—साधूनां भवादृशां परमयनं प्राप्यम् उपेताय किं दास्यतीत्यत आह—दास्यतीति। भूरि पुष्कलं द्रविणं धनं सीदते क्लिश्यमानाय कुटुम्बिने च तुभ्यं दास्यति ॥ १० ॥

क्वास्त इत्यतः आह—आस्ते इति। द्वारकायामेवाधुनाऽऽस्ते न तु शत्रुविजयाद्यर्थं क्वापि गत इति भावः। दास्यति वा नवेति संशयानं प्रत्याह–स्मरत इति। स्मरत एवात्मानमपि यच्छति ददाति किम्पुनः दूरकृत्वा भजतो याचमानस्यार्थकामान् ददातीति वक्तव्यमित्यर्थः। नान्वाशिनष्टि–नात्यभीष्टानीति। परिपाकविरसत्वादितिभावः। भर्तुर्भोगसम्पादनार्थमेवं प्रचोदितमिति न पूर्वोक्तजितेन्द्रियपातिव्रत्यादिविरोधः ॥ ११ ॥

स इति। स विप्रः कुचेलः मुमुक्षुत्वभावत्वात् ओमिति वदतीति भावः उत्तमश्लोकस्य भगवतो दर्शनमित्ययं परमो लाभः ॥१२॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तथाविधा भर्तृवन्मलिनवस्त्रा ॥ ७ ॥

म्लायता म्लानं गच्छता अशनयावेपमानेत्येकम्पदं अशनया अशनेच्छया कम्पमाना ॥ ८—९ ॥

सीदते अवसन्नाय दरिद्राय ॥ १० ॥

अर्थकामान् यच्छतीति किन्तु वक्तव्यं किञ्च जगद्गुरुः अन्यमुक्तेभ्योऽभ्यमिष्टं न यच्छति किन्तु भजतः पुरुषस्य यच्छत्येवेत्यर्थः। यद्वा ना परमपुरुषः अभ्यमभीष्टं यच्छतीत्यतः तमुपेहीत्यन्वयः ॥ ११—१३॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

यदृच्छयोपपन्नेन वर्त्तमानः वीर्यवान् इदं स्वतिसहनं परमवीर्यकार्यं गृहाश्रमी गृहस्थः एतत्कीर्त्तिरूपं मन्वेतादृशस्य गृहस्थाश्रमो न युक्त इति शङ्कां वारयितुमाह—तस्य भार्या कुचेलस्य क्षुत्क्षामा च तथाविधेति। पूर्वं परमहंसगृहस्थनिर्णये यद्येतादृशी भार्या लभ्यते तदा गार्हस्थ्यमुत्तमम् एतदभावे पारमहंस्यमिति अन्यथा पुरुषार्द्धशृगल इति पुरुषार्थसाधने खण्डः स्यात कुचेलस्येति तस्यां रागाभावो निरूपितः रागिणां प्रथमतो वस्त्रालङ्करणमिति तस्यां रागाभावे अस्यापि हेतुमाह—क्षुत्क्षामेति। सर्वथा क्षुधा क्षामा कृशा तदपेक्षया तस्याः व्रतमधिकमिति पदार्थोत्पत्तावेक एव प्रकारः तत्रापि विशेषभोजनादाधिक्यं चकारात्तद्धर्मयुक्तापि तथाविधा कुचेला अनेन तस्मिन्नपि तस्याः रागाभावो निरूपितः ॥ ७

तस्याः कामनायां प्रथमतो हेतुमाह—पतिरेव व्रतं यस्याः यथा व्रती स्वव्रतोत्कर्षं वाञ्छतीति तथा सापि भर्तुः सर्वसमृद्धिं वाञ्छतीति पतिव्रतात्वादेव नान्यतस्तत्सम्पादनम् अतः पतिं प्राह म्लायता वदनेनेति दैन्यख्यापनं ननु मनसि कामाभावे दैन्यकपटरूपमिति पातिव्रत्यविरुद्धम् विद्यमाने तु तथाविधत्वं नास्तीत्याशङ्कायामाह सेति। सा पतिव्रता व्रतार्थं तत्साधनमिति न दोष इति भावः। स्वतः स्वव्रतोत्कर्षो नास्तीति ज्ञापयितुमाह—दरिद्रा सीदमाना सेति। दारिद्र्यात् दुर्गतेः न कोऽप्यर्थः तत्राप्यघमात्रं शरीरेण प्राप्नोति ततः प्रथमत एव देहवियोगे व्रतभङ्गोपि भविष्यतीति भयात्तथा करणं यतः सा पूर्ववत् तर्ह्येतावत्कालं कथं नोक्तवती तत्राह—वेपमानेति। भयादिति केचित् शरीरं पतनदशापन्नमिति अतःपरं कालो विलम्बं न सहत इति आभिमुख्यंनागस्य चकारात् तन्मनःप्रीतिं कृत्वा स्तोत्रं वा वक्ष्यमाणमाह ॥ ८ ॥

तस्या वाक्यानि निरूपयति - नन्विति सार्द्धत्रिभिः। सर्वथा अवसादे ईश्वरोपसर्पणं विहितम् अतः आपद्धर्मत्वात्सा बोधयति नन्विति कोमलसम्बोधनं ब्रह्मन्नित्यविकृतत्वाय सिद्धदशापा तव विषयभोगेपि न स्वरूपनाशः किञ्च भगवता स्वस्य रूपं त्वयि समर्पितम् अतो भगवतस्तव सखा भगवान् साक्षात् अनेन प्रतिग्रहस्तद्दोषश्च निवारितः तस्याप्यस्मत्तुल्यत्वे व्यर्थमुपधावनमिति शङ्काव्युदासार्थं सख्यपदं नैव भगवत्त्वं प्राप्तमिति साक्षाच्छ्रियःपतिरित्याह—मूर्त्तिमत्याः आधिदैविक्याः लक्ष्म्याःपतिः तेन सर्वाः सम्पदः तदधीना इत्युक्तं तथाप्यसभ्यं कथं दास्यतीत्यत्र हेतुमाह—ब्रह्मण्य इति। चकारात्स्वतोप्युदारः किञ्च शरण्यश्च शरणं गच्छति तस्मै च सर्वं प्रयच्छति शरणागतायापि गमनमात्रेणैव दास्यतीति चकारार्थः नन्वेवं सति सर्वेभ्यो दाने सति पदार्थक्षयः अल्पावशेषे स्वार्थं वा स्थापयतीति शङ्कां वारयति भगवानिति। पूर्णसर्वशक्तिः सेवकाः प्रतिबन्धं करिष्यन्तीत्यत आह—सात्वतर्षभ इति। सात्वतानां परमभक्तानाम् ऋषभः स्वामी ॥ ९ ॥

किमतो यद्येवं तत्राह—तमुपेहि तन्निकटे गच्छेति प्रार्थना ननु महाभाग्यव्यतिरेकेण कथं भगवत्समीपगमनं तदभावश्च दारिद्र्यादेवावसीयते तत्राह—महाभागेति। पातिव्रत्येन तद्भाग्यं प्रादुर्भूतं पश्यन्ती तथा सम्बोधयति अनेनाल्पद्रव्येति भाग्यरहितः कथं सर्वपुरुषार्थनिधिः प्राप्स्यतीति परिहृतम् इदानीं

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मेव प्रादुर्भावात् किञ्च साधूनां च परायणं ये स्वभावत एव दरिद्राः परमसाधवः तेषामपि परमयनं चकारो युक्त्यन्तरामिदर्शाति ख्यापयितुं नन्वेवमपि को वेद दास्यति न वेति शङ्काऽव्युदासार्थमाह—दास्यति द्रविणं भूरीति । तत्र हेतुः सीदते ते कुटुम्बिन इति । सीदत्कुटुम्बी पात्रं तथापि भवान् सर्वगुणसम्पन्नः ॥ १० ॥

कदाचिद्भगवानन्यत्र गत इति शङ्कां व्युदस्यति—आस्ते ऽधुनेति । तस्य कार्यान्तरवैयग्र्याभावाय ऐश्वर्यं निरूपयति भोजवृष्ण्यन्धकानाम् ईश्वर इति त्रिगुणप्रधानाश्रयो निरूपिताः तथापि "दाता जगति दुर्लभः" इति न्यायेन कदाचिन्न दद्यात् तत्राह, स्मरतः पादकमलमिति । यः स्मरति तस्मै बहु प्रयच्छति किं बहुना ब्रह्मानन्दं किं बहुना आत्मानन्दमपि तत्र किं वक्तव्यं भजते अर्थकामान् ददातीति नन्वर्थकामावेव चेत्तस्याभीष्टौ तदा न दद्यादित्यत आह—नात्यभीष्टानिति । बहुधैव दीयत इति लोके प्रसिद्धं सर्वथाऽनभीष्टं सखा न दास्यतीत्यत आह—नातीति । किञ्चिदभीष्टत्वं वर्त्तत एव अतः प्रथमं दत्त्वा पश्चात् दूरीकरिष्यतीति भावः । ननु पात्रं प्राप्य कदाचित् कूकरं याचयतीति शङ्कां वारयति । जगद्गुरुरिति । सर्वेषां हितोपदेष्टा कथमन्यथा कुर्यादित्यर्थः । अनभीष्टत्वे वा हेतुः अन्यथा जगद्गुरुत्वं न स्यादिति स्वयं विषयासक्तः मह्यभ्येभ्यो वैतृष्ण्यं बोधयितुं शक्नोति ॥ ११ ॥

एवं तस्या वाक्यानुक्त्वा तेनामावृत्था तस्यापि मनः किञ्चित् तथा जातमित्याह—एवं स इति । ननु स्वयमेव कुतो न गतः किमिति भार्यया प्रार्थितः यतो भगवद्दर्शनं सर्वेषामेवाभीष्टं तत्राह—विप्र इति । बहुशो बहुप्रकारेण उक्तसदृशेन मुहुः एकस्मिन्नपि दिवसे वारं वारं भर्त्रे रोचत इति ततस्तस्य गमनार्थमालोचनमाह—अयं हि परमो लाभ इति । उत्तमश्लोकस्य दर्शनं ब्रह्मभावादपि दुर्लभं यतो ब्रह्मणोपि तद्वाञ्छितम् ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तथाविधा तादृशगुणयुक्ता क्षुत्क्षामा चेति चकारात् क्षुत्क्षामत्वमित्येको गुणः तु तस्मादप्यधिकस्तस्याः प्राप्तं यत्किञ्चिदन्नं तस्मै परिवेष्य स्वयं क्षुधयैव स्थितत्वादिति भावः ॥ ७ ॥

सीदमाना भर्तृभोगसंपादनासामर्थ्यात् सीदन्ती वेपमाना भगवति भक्तीतरप्रार्थनाया अनर्हत्वात् पतिभयेन सकम्पा ॥ ८ ॥

ननु श्रीपतिना दीनस्य मम कुतः सख्यं तत्राह—ब्रह्मण्यः मम तादृशं ब्राह्मण्यमपि नास्तीति चेत् शरण्यः भक्त्यभावान्मम शरणागतत्वमपि नास्तीति चेत् भगवान् सर्वज्ञतया तव दुःखं दृष्ट्वा दयिष्यत एवेत्यर्थः । ननु स्वकर्मफलभोगेषु मादृशेष्वनन्तेषु दुःखिजीवेषु मध्ये सर्वत्र समः स मह्यमेव कथं धनं दद्यादिति चेन्मैवमित्याह— सात्वतां भक्तानाम् ऋषभः पतिरिति स मा ददातु नाम किन्तु व्यजनादिभिस्तं परिचरन्तः परमकृपालवस्तद्भक्तास्तु दास्यन्त्येवेति भावः । सात्वतान् यदुवंश्यान् स पालयत्येव त्वत्पालने तस्य को भारः को वा दोषो भवितेति भावः ॥ ९ ॥

साधूनाञ्चेति चकाराद्दीनानाञ्च यदि त्वमात्मानं साधुं न मन्यसे तदा दीनन्तु भवस्येवेति भावः । अतः सीदते कुटुम्बिने इति दानपात्रत्वं द्योतितम् ॥ १० ॥

ननु स साम्प्रतमिन्द्रप्रस्थे द्वारकायां वा असुरमारणार्थमन्यत्र काप्यास्ते वा तत्राह—आस्त इति । अधुना स्वस्थांशाच्च, स्वनगरादन्यत्र न यातीत्यर्थः । भोजवृष्ण्यन्धकेश्वर इति तत्स्वीकारमात्रेण तेपि दास्यन्तीति भावः । ननु तदापि धनं प्रार्थयितुमहं लज्जे तत्राह—स्मरत इति । चतुर्थ्यर्थे षष्ठी, स्मरणमात्रं कुर्वते जनाय अप्रार्थकायापि स्वात्मानमपि ददाति किम्पुनरर्थकामान् परिणामविरसत्वात् । दातुं नात्यभीष्टान् यतो जगतां गुरुर्हितकर्त्ता याचकानामिच्छया नाप्यप्रार्थितोपि दत्ते तेन तत्र गत्वा त्वया तूष्णीमेव स्थेयं सतु त्वदभीष्टं बहुधनं त्वद्धितकारित्वाद् स्वाभीष्टं स्वचरणपद्ममाधुर्यञ्च दास्यतीति द्योतितम् ॥ ११ ॥

बहुशः प्रार्थित इति तस्या भार्य्यात्वात् तस्य च मृदुत्वादितिभावः । तस्या प्रार्थनया अप्रसन्नं मनः परामर्शेन प्रसादयति अयमिति ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तथाविधा तादृशगुणयुक्ता क्षुत्क्षामा च यदृच्छयोपपन्नं संस्कृत्य बहुमानेन भर्त्रे परिवेष्य स्वयं क्षुधाजीर्णा अनेन गुणेन भर्तृतोप्यधिकेत्यर्थः ॥ ७ ॥

एकदा अभिगम्य म्लायता शुष्यता वदनेन पतिं प्राह कथम्भूता सीदमाना भर्तुर्यथार्थभोजनाच्छादनसम्पादनेन सीदन्ती यतः पतिव्रता वेपमाना निष्कामभक्तं धनार्थं भगवति नियोजनेन भर्तृक्रोधसम्भावनया कम्पमाना ॥ ८ ॥

साक्षाच्छ्रीः स्वयं श्रीः रुक्मिणी तस्याः पतिः ॥ ९–१० ॥

अर्थकामान् यच्छतीति किन्तु वक्तव्यम् कथंभूतान् नात्यभीष्टान् धर्मार्थमपि ईहेत यात्रार्थं बाधा नो धनमिति सिद्धान्तं विजानतस्तवेति शेषः ॥ ११–१४ ॥

---

भाषा टीका ।

और वह यत्न के विना प्राप्त अन्न से जीवन करने वाला गृहस्थाश्रमी रहा उस मलिन जीर्ण वस्त्र धारी ब्राह्मणकी पति के सदृशगुणवती क्षुधा से कृश भार्य्या रही ॥ ७ ॥

दारिद्र्य युत खेदको प्राप्त कंपायमान मलिन वदन वारी वह पतिव्रता स्त्री एक दिन पति के संमुख जाय कर बोली ॥ ८ ॥

हे ब्रह्मन् ! साक्षात् लक्ष्मीपति और ब्राह्मणों के भक्त. आश्रयण के योग्य यादवन में श्रेष्ठ श्रीकृष्णभगवान् आपके मित्र हैं यह निश्चय हि है ॥ ९ ॥

हे महाभाग ! धर्मशील महात्मानको सबहि फल देने के परम उपाय उस श्रीकृष्ण मित्र के पास आप जाइयेगा

इति सञ्चिन्त्य मनसा गमनाय मतिं दधे ।
अप्यस्त्युपायनं किञ्चिद्गृहे कल्याणि दीयताम् ॥ १३ ॥
याचित्वा चतुरो मुष्टीन् विप्रान् पृथुकतण्डुलान् ।
चैलखण्डेन तान् बद्ध्वा भर्त्रे प्रादादुपायनम् ॥ १४ ॥
स तानादाय विप्राग्र्यः प्रययौ द्वारकां किल ।
कृष्णसन्दर्शनं मह्यं कथं स्यादिति चिन्तयन् ॥ १५ ॥
त्रीणि गुल्मान्यतीयाय तिस्रः कक्षाश्च सद्विजः ।
विप्रोऽगम्यान्ध(क)वृष्णीनां गृहेष्वच्युतधर्मिणाम् ॥ १६ ॥
गृहं द्व्यष्टसहस्राणां महिषीणां हरेर्द्विजः ।
विवेशैकतमं श्रीमद्ब्रह्मानन्दं गतो यथा ॥ १७ ॥
तं विलोक्याच्युतो दूरात्प्रियापर्यङ्कमास्थितः ।
सहसोत्थाय चाभ्येत्य दोर्भ्यां पर्यग्रहीन्मुदा ॥ १८ ॥

भाषा टीका ।

क्षेमयुत कुटुम्बी आपके अर्थ वह श्रीकृष्ण बहुत धन देवेंगा ॥ १० ॥

भोज वृष्णि अन्धक यदुवंशीनके ईश्वर श्रीकृष्ण वर्त्तमान कालमें द्वारकामें विराजमानहैं निज चरणारविन्दके स्मरण करने वाले पुरुषोंको अपने आत्मा कोभी वह देदेता हैं ॥ ११॥

जब ऐसाहै तो वह जगतका गुरू श्रीकृष्ण निज भक्त को अत्यन्त महि वांछित अर्थ कामोंको देता है इसमेंतो कहनाहि कहाहै इस प्रकार कोमल वचनसे भार्य्याने बहुत बार उस विप्रको प्रार्थनाकी तबतो उस ब्राह्मणने विचार किया कि जानेसे श्रीकृष्णका दर्शन होगा यही परम लाभहै ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अप्यस्ति किमस्तीति प्रश्नः ॥ १३—१४ ॥

मह्यं मम ॥ १५ ॥

गुल्मानि रक्षार्थं सैन्यस्थानानि कक्षाः प्रतोलीः अतीयाय अतिक्रम्य जगाम सद्विजः द्विजैः सहितः ततश्च अगम्याः दुर्गमाः येऽन्धका वृष्णयश्च तेषां गृहेषु ॥ १६ ॥

तथा हरेर्द्व्यष्टसहस्राणां महिषीणां च ये गृहास्तेषु मध्ये श्रीमदेकतमं गृहं विवेश तदा च स द्विजो ब्रह्मानन्दङ्गतो यथा तथा बभूवेतिशेषः ॥ १७ ॥

पर्यग्रहीत्, पर्यरम्भत ॥ १८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

याचित्वा प्रति विप्रान् प्रति चतुर इत्यधिकन्यूनतायां प्रयोजनाभावात् पृथुकतण्डुलाः नवार्द्रभ्रष्टधान्यकुट्टनाज्जाताश्चिपिटतण्डुलाः ॥ १४ ॥

सोऽपि तानवादाय अन्यासद्भावात् किल वार्त्तायाम् ॥ १५ ॥

त्रीणीत्यर्द्धकम् । गुल्मलक्षणमिदमुक्तम्--
नवद्विपं नवरथं सप्तविंशति सादिकम् ।
गुल्मं तज्ज्ञैः स्मृतं पञ्चचत्वारिंशत्पदातिकम् ॥
इति. अत्र तु पुररक्षकतावत्सेनानिवेशस्थलमेव गुल्ममित्युपचारात् तादृशानि त्रीणि । विप्र इति सार्द्धकं । ननु दुर्गमगृहाणां गृहेषु कथं प्रवेशः तत्राह अच्युतस्य ब्रह्मण्यदेवत्वादिनिज माहात्म्ये सदा सुस्थिरत्वेन तत्राश्रितस्यैव धर्मः तद्वतां यद्वा भगवद्धर्मवतां वैष्णवत्वेन स्वत एव ब्राह्मणानां वैष्णवानां चादरादित्यर्थः ॥ १६ ॥

श्रीमदिति श्रीरुक्मिणीगृहस्य श्रैष्ठ्येन शोभाभरात् तथा च पाद्मोत्तरखण्डे गद्यं स तु रुक्मिण्यान्तःपुरद्वारि क्षणं तूष्णीं स्थित इत्यादि, अतोऽग्रे शैब्यास्थाने गुर्जरादिप्रसिद्धः साक्षादिति पाठ एव सङ्गतः तथाचानन्तराध्यायेऽपि "तावद्भ्रातुर्गृहं हस्तम्" इति. "राघवत्वे ऽभवत्सीता रुक्मिणी कृष्णजन्मनि" इति श्रीविष्णुपुराणोक्त्या तस्या एव प्राधान्येन श्रीरिति प्रसिद्धेः तदन्यसर्वविस्मारणांशे दृष्टान्तः ब्रह्मेति ॥ १७ ॥

अच्युतदेवसर्वसद्गुणसह्यवहारेभ्यः यथाकथञ्चिज्ज्ञानात् सख्याच्च विच्युतिरहित इत्यर्थः । अतः प्रियायाः पर्यङ्कश्रितोऽपि पर्य्यङ्कं आश्रित इति चित्सुखः अर्थः स एव टीकायां पर्य्यरम्भतेत्यस्यालिङ्गदित्यर्थः ॥ १८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अन्यैर्द्विजैर्भिक्षुभिः सहित इति निर्भयप्रवेशे हेतुः ॥ १६—२१॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इति मनसा सञ्चिन्त्य चिन्तापूर्वकं निश्चित्येत्यर्थः । वित्तलाभस्त्वानुषङ्गिक इत्यभिप्रेत्येति भावः । मतिं बुद्धिं दधे चक्रे विधाय प्राहेत्यर्थः । तदेवाह—अपीति । हे कल्याणि ! उपायनं भगवते समर्पणीयं योग्यं वस्तु गृहे किमस्तीति प्रश्नः ॥ १३ ॥

इत्थमापृष्टा सा पृथुकतण्डुलान् तानपि चतुरो मुष्टीन् ग्रामस्थान् विप्रान् प्रति याचित्वा चेलखण्डेन छिन्नपटशकलेन बध्वा भगवत उपायनं भर्त्रे ददौ तद्धस्ते ददौ इत्यर्थः ॥ १४ ॥

स इति । स विप्राग्र्यः कुचेलः तान् पृथुकतण्डुलान् ॥ १५ ॥

त्रीणीति । स द्विजः कुचेलः गुल्मानि रक्षार्थसैन्यस्थानानि ततः कक्ष्याः प्रतोलयस्ताश्चातीयायातिक्रान्तवानित्यर्थस्यान्वयः अच्युतस्येव धर्माः सम्पत्त्यादिगुणाः येषां तेषामगम्यानां दुर्गमानामन्धकानां वृष्णीनाञ्च गृहेषु मध्ये ॥ १६ ॥

द्व्यष्टसहस्राणि हरेर्महिषीणां गृहान् तत्रापि श्रीमदेकतमं गृहं विवेशेति सम्बन्धः द्विजशब्दस्य त्रैवर्णिकसाधारणत्वाद्ब्राह्मणत्वावगमाय विप्र इति चोक्तमित्यतो न पौनरुक्त्यं यथा ब्रह्मानन्दं मोक्षसुखं प्राप्तो वैकुण्ठं हरेर्मन्दिरं विशति तद्वत् ॥१७॥

तमिति । प्रियायाः रुक्मिण्याः पर्यङ्के आसीनो भगवांस्तं कुचेलं दूरादेव दृष्ट्वा दोर्भ्यां बाहुभ्यां पर्यग्रहीदालिङ्गितवान् ॥ १८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

चैलखण्डेन जीर्णवस्त्रखण्डेन ॥ १४—१५ ॥

गुल्मानि शिबिराणि कक्ष्याः पुरप्रकोष्ठानि "कक्ष्या कच्छे वरत्रायां काञ्च्यां गेहे प्रकोष्ठके" इति यादवः । अन्धवृष्णीनां गृहेषु मध्ये यानि द्व्यष्टसाहस्रमहिषीणां गृहाणि गम्य गत्वा तेष्वेकतमं गृहं विवेशेत्यन्वयः । द्विजत्वं क्षत्रियस्याप्यस्तीति विप्र इति आनन्दं गतो मुक्तो ब्रह्म विशति यथा तथा ॥ १६—१७ ॥

पर्यग्रहीदाश्लिष्टवान् ॥ १८—१९ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ब्रह्मानन्दमिति ॥ १७—१८ ॥

निर्वृतिरानन्दः प्रीतिः स्नेहः ॥ १९—२९ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

त्रीणि गुल्मानीत्यादि त्रीणि गुल्मानि तिस्रः कक्षाश्च सद्विजः द्विजैरन्यैः सहितः सविप्रः अतीयायेत्येकं वाक्यं पुनरुत्तरस्मिन्ये द्व्यष्टसहस्राणां हरेर्महिषीणां मध्ये एकतमं मुख्यतमं गृहं द्विजो विवेशेति एक एवेति मतम् पुनर्द्विजशब्दोपादानं विवेशैकतममित्यादि एकतमं प्रधानतमं श्रीरुक्मिणीभवनं यथावत् गतः सन् विवेशेत्यन्वयः कीदृशं ब्रह्मानन्दं ब्रह्मानन्दस्वरूपम् ॥ १६—२२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमेकं कार्यमुभयं साधयिष्यतीति सञ्चिन्त्य इदं गोप्यं भार्यायै न वक्तव्यमिति मनुतेत्युक्तम् अन्यथा साप्यागच्छेत ततो गमनाय मतिं दधे ततो गमनसामग्रीं विचारयन् रिक्तहस्तो न पश्येदित्युपायनं याचितवान् 'याचनावाक्यमाह—अप्यस्तीति । अपीति सम्भावनायां हे कल्याणि कदाचित् कुतश्चित् प्राप्नुयात् गृहेऽस्तीति प्रश्नः नास्तीत्युक्ते कदाचिद्गमनप्रतिबन्धकमेतदेव भवेदिति तूष्णीं स्थिता ॥ १३ ॥

ततः अप्रतिषिद्धमनुमतं भवतीति ज्ञात्वा याचयति—दीयतामिति । सा च पतिव्रता भर्तृवाक्यं प्रतिपालयितुं चतुरो मुष्टीन् पृथुकतण्डुलान् धान्यचिपिटान् ते मध्ये भक्षयितुमपि शक्नुयात् इति तानेव याचयित्वा चैलखण्डेन स्ववस्त्रखण्डेन तान् बद्ध्वा स्वभर्त्रे उपायनं प्रादात् एतद्भगवते देयमिति अबध्वा दाने कदाचित् अन्यस्मै प्रयच्छेत् पातयेद्वा ॥ १४ ॥

ततो भगवन्तं प्रति सोपायनस्य गमनमाह—स तानादायेति । कियदिति प्रमाणं मध्ये यो गच्छति स स्वाभिलाषितं चिन्तयति ततोऽयमपि चिन्तयन् गच्छति तत्किं धनं दर्शनं चेति सन्देहे तन्निवृत्त्यर्थमाह कृष्णसन्दर्शनमिति ॥ १५ ॥

ननु, कथं कियद्दानं प्राप्स्यामीति ततः दुर्गगतत्वात् रक्षकास्तत्र तत्र स्थिताः ते किमपि न प्रवेशयन्ति अज्ञातचरं तत्र कथमयं गतः इति शङ्कां निवारयति त्रीणि गुल्मान्यतीयायेति । गुल्मानि सेनाभेदाः कक्ष्याः प्राकारभेदाः गुल्मशब्देन गुल्मकृतं वनं दुर्गाणि वा निःशङ्कगमने हेतुः स—द्विज इति । द्विजैः सहितः स एव वा द्विजः द्विजत्वं साधारणमिति विशेषेण पूरणत्वं वदन् विप्रत्वमाह—अन्धकवृष्णीनाम् अच्युतधर्मिणां वैष्णवानां परितो व्याप्तानां गृहेषु मध्ये हरेः द्व्यष्टसहस्राणां महिषीणां गृहेषु च मध्ये द्विजः अप्रत्याख्येयः एकतमं गृहं विवेश भगवानत्र स्थास्यतीति तत्र हेतुः श्रीमदिति शोभासम्पत्त्यतिशययुक्तं तत्र गमनमात्रेणैव तस्य या दशा तामाह— ब्रह्मानन्दं गतो यथेति । द्वारकायां वैकुण्ठावेशात्तस्य च ब्रह्मत्वात् तन्मध्ये भगवद्गृहस्य च आनन्दांशत्वात् तत्र प्रविष्टो ब्रह्मानन्दं प्राप्तोऽयेव यथेति प्रकारभेदार्थमुक्तं ततः परितो विलोकनसामर्थ्यरहितः आनन्दानुभवेन निमीलिताक्ष इव भगवता दृष्ट इत्याह-तं विलोक्येति । प्रियापर्यङ्के लक्ष्मणापर्यङ्के विहृतिवेलायां चतुर्थप्रहरे रात्रौ वा प्रियापर्यङ्के भगवानुपविष्टः सा लक्ष्मणा चिह्नेन लक्ष्मीर्भवति ततः सहसोत्थाय अग्रे समागत्य दोर्भ्यां पर्यग्रहीत् अनेन तुल्यता निरूपिता । मुदेत्यान्तरो भावः यथा भगवत्सम्बन्धे तस्य हर्षः एवं तत्सम्बन्धे भगवतोपि भक्तत्वादिति ज्ञापितम् ॥ १६—१८ ॥

---

सख्युः प्रियस्य विप्रर्षेरङ्गसङ्गातिनिर्वृतः।
प्रीतो व्यमुञ्चदब्बिन्दून्नेत्राभ्यां पुष्करेक्षणः॥ १९॥
अथोपवेश्य पर्यङ्के स्वयं सख्युः समर्हणम्।
उपहृत्यावनिज्यास्य पादौ पादावनेजनीः॥ २०॥
अग्रहीच्छिरसा राजन् भगवाँल्लोकपावनः।
व्यलिम्पद्दिव्यगन्धेन चन्दनागुरुकुङ्कुमैः॥ २१॥
धूपैः सुरभिभिर्मित्रं प्रदीपावलिभिर्मुदा।
अर्चित्वाऽऽवेद्य ताम्बूलं गाश्च स्वागतमब्रवीत्॥ २२॥
कुचेलं मलिनं क्षामं द्विजं धमनिसन्ततम्।
देवी पर्यचरत्साक्षाच्चामरव्यजनेन वै॥ २३॥
अन्तःपुरजनो दृष्ट्वा कृष्णेनामलकीर्तिना।
विस्मितोऽभूदतिप्रीत्या अवधूतं सभाजितम्॥ २४॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अप्यस्ति गृहे भक्तिचेद्दीयतां रिक्तपाणिः सख्युस्तस्य गृहं कथं यास्यामीति भावः॥ १३—१४॥

कथं स्यादिति द्वाःस्थैर्वारयिष्यमाणत्वादिति भावः॥ १५॥

गुल्मानि पुरबहिर्द्वाररक्षकसैन्यनिवेशस्थानानि कक्षाः पुरान्तर्द्वारदीर्घप्रकोष्ठान् सद्विजः तत्रत्यद्विजसहितः अगम्याः ये अन्धकवृष्णयस्तेषां गृहेषु तद्गृहनिकटे इत्यर्थः॥ १६॥

द्व्यष्टसहस्राणां हरेर्महिषीणां द्व्यष्टसहस्रमहिषीगृहाणां मध्ये एकतमं मुख्यतमं गृहं विवेशेत्यन्वयः। तच्च गृहं रुक्मिण्यागृहमेव यदुक्तं पाद्मोत्तरखण्डगद्ये "स तु रुक्मिण्यन्तःपुरद्वारि क्षणं तूष्णीं स्थितः" इत्यादि तदन्यसर्वविस्मरणांशे दृष्टान्तः ब्रह्मेति॥ १७॥

अभ्येत्य प्राङ्गणमागत्य पर्यग्रहीत् परिरेभे॥ १८-१९॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

मह्यं मम कृष्णदर्शनं कथं स्यादिति चिन्तयन्॥ १५॥

गुल्मानि रक्षार्थं सैन्यस्थानानि कक्षाः प्रतोलीश्च स द्विजः श्रीदामा प्रतीयाय अतिक्रान्तवानित्यर्थः। ततश्च अगम्याः येऽन्धकवृष्णयः अन्धकवृष्णयः तेषाम् अच्युतधर्मोऽस्ति येषां विष्णुधर्मनिरतानां भागवतानामित्यर्थः॥ १६।

गृहेषु हरेर्महिषीणां गृहेषु च मध्ये एकतमं श्रीमद्रुक्मिणीगृहं विवेशेत्यर्थः। तत्र स द्विजः यथा ब्रह्मानन्दं गतो तथा बभूवेति शेषः॥ १७—१९॥

भाषा टीका।

मनसे ऐसा चिन्तवन करके द्वारका जाने के वास्ते उस विप्र ने बुद्धि, करी॥ भार्य्या से बोला कि यदि गृह में भगवान् के समर्पण योग्य कुछ वस्तु होय तो हे कल्याणि! दीजियेगा॥ १३॥

ऐसा कहने पर उसकी भार्य्या अन्य ब्राह्मणों से याचना कर के धान के चार मुट्ठी चूडानको एक वस्त्रकी चीर में बांध कर पतिको श्रीकृष्णकी भेट के योग्य उन चूडानको देती भई॥ १४॥

वह विप्रों में श्रेष्ठ उन चूडानको लेकर श्रीकृष्णका दर्शन मोको किस प्रकार होवेगा ऐसा चिन्तवन करत द्वारकापुरीको प्रयाण करता भया॥ १५॥

ब्राह्मणों के साथ वह विप्र द्वारका में अन्तःपुर के बाहिर दरवाजे पर तीन पलटन और तीन ड्योढीनको उल्लंघन कर के जाता भया श्रीकृष्णहि जिनको इस लोक परलोक के कल्याण करने वारे और दुःख सेभी जिनके शत्रु नांहि आय सके ऐसे अंधक वृष्णयादवन के गृहनमें॥ १६॥

तथा श्रीकृष्णको सोरह हजार भार्य्याओं के गृहन के मध्य में प्रति सम्पत्ति युत एक मुख्य गृह में वह ब्राह्मण गया वहां जाय कर उस समय ब्रह्मानन्दको जैसे प्राप्त हो तैसा होगया॥ १७॥

उस ब्राह्मणको दूर से हि देख कर निज प्रिया रुक्मिणी के पलिंग पर विराजमान श्रीकृष्ण शीघ्रहि उठ कर आगण में आय कर मोद के साथ दोनो भुजान से मिलते भए॥ १८॥

श्रीधरस्वामिकृतभावार्थदीपिका।

अब्बिन्दूनानन्दाश्रूणि॥ १९॥

समर्हणमुपायनमुपहृत्य समर्प्य पादावनेजनीरपः॥२०-२२॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

धमनिभिः सिराभिः सन्ततं व्याप्तम् ॥ २३ ॥
अवधूतं मलिनम् ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सख्युः सतीर्थत्वेन सह विहारिणः तेष्वपि बहुषु प्रियस्य प्रेमविशेषविषयस्य किञ्च विप्रश्चासौ ऋषिश्च श्रीभगवद्भक्त्यादिमाहात्म्यज्ञः तस्य निर्वृतिरानन्दः प्रीतिः स्नेह इति भेदः विशेषेणामुञ्चत् तत्र पुष्करेक्षण इति श्रीनेत्रयोः सौन्दर्य्याधिकता सूचिता ॥ १९ ॥

अथ चिरपरिरम्भणानन्तरमेव उपवेश्येति भयादिनानुपविशन्तं बलादाकृष्य स्वयमुपवेश्येत्यर्थः । स्वयमित्यस्य यथायोग्यं परैरप्यन्वयः समर्हणं पूजाद्रव्यं स्वयमेवोपहृत्य ततः स्वयमेवावनिज्येत्यादि भगवान साक्षात्परमेश्वरोऽप्यग्रहीत् किमर्थं लोकपावनः तद्विक्षणेन लोकान् पावयितुमिति यद्वा भगवानपि लोकपावनोऽप्यग्रहीत् अहो विनयादिसौशील्यमिति भावः । व्यलिम्पदित्यर्थकम् दिव्येन गन्धेन अगुर्वादिसाधितसुगन्धिद्रव्यविशेषेण चन्दनादिभिश्च सहैव पिष्टैः विशेषेण भक्त्युद्रेकादिना अलिम्पत्तमिति शेषः ॥ २०—२१ ॥

अर्चित्वा अर्च्चयित्वा परमान्नादिभोजनञ्च यथासमयं ज्ञापनपूर्वकं ज्ञेयं तच्च भुक्त्वेत्यादिनाग्रे वक्ष्यत्यपि ॥ २२ ॥

कुचेलमिति वस्त्राप्रदानं सूचयति तच्च सकारणमग्रे व्यक्तं भावि मलिनं विवर्णमित्यादिकं शीतादिदुःखेनैव एभिस्तु विशेषणैः परिचरणीयत्वायोग्यता तस्योक्ता एवं तेषां यथोत्तरं श्रेष्ठ्यं तथापि पर्य्यचरत्, का ? या साक्षात्स्वयमेव देवी पट्टराज्ञी श्रीरुक्मिण्णीत्यर्थः । इति श्रीमगवद्वृत्तस्या अपि परमब्रह्मण्यत्वं दर्शितम् ॥ २३ ॥

अवधूतं श्रीकृष्णेन सभाजितं दृष्ट्वा ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सख्युरिति । अङ्गसङ्गेनालिङ्गनेनातीव निर्वृतः सुखितः प्रीतश्च पुष्करेक्षणः नेत्राभ्यामानन्दाश्रुबिन्दूनभ्यमुञ्चत् ॥ १९ ॥

अथेति । उपविष्टं कृत्वा तस्य सख्युः स्वयमेवोपायनमुपहृत्य समर्च्य पादाववनिज्य प्रक्षाल्य पादावनेजनीरपः शिरसा अग्रहीदधार व्यलिम्पदिति । चन्दनादिभिः साधितेन दिव्यगन्धेन मित्रं सखायं व्यलिपत् ॥ २०-२१ ॥

सुरभिभिर्धूपैर्दीपैर्बलिभिरन्यैश्च पूजासाधनैरर्चित्वा गां धेनुं ताम्बूलं च निवेद्य स्वागतमब्रवीत् पप्रच्छ ॥ २२ ॥

कुचेलमिति । मलिनत्वभ्यङ्गोद्वर्त्तनाद्यभावात् धमनीभिः सिराभिः सन्ततं क्षामं मेदोमांसादिरहितकेवलत्वङ्नाडीमात्रावशिष्टशरीरमित्यर्थः । तत्र हेतुः क्षामं क्षुधा कर्शितं भैष्मी रुक्मिणी चामरव्यजनेन पर्यचरत्सभाजयामासेत्यर्थः ॥ २३ ॥

अन्तःपुरजन इति । अमला निर्मला कीर्त्तिर्यस्य तेन कृष्णेन प्रीत्या सभाजितं सम्यक् पूजितं तमवधूतं मलिनं वीक्ष्य विस्मितो बभूव ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

पादावनेजनीरपः पादप्रक्षालनजलानि ॥ २०-२२ ॥
धमनिसन्ततं सिरासहस्राचितगात्रम् ॥ २३—२५ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत आनन्दापूरित इव लीलां कृतवानित्याह—सख्युः प्रियस्येति । सखित्वात्तस्य यथाजातं तथैव भाव्यं भगवतोऽपि सुतरां प्रियस्य स प्रीतिविषयः पूर्वत्र हेतुरपि भवति ततो विप्रर्षिः ब्राह्मणोत्तमः अलौकिकः परमानन्दोऽप्यस्मिन् प्रादुर्भूत इति तत्सङ्गेनातिनिर्वृतः अन्तःसुखं प्राप्तवान् ततः प्रीत्या मनस्तं द्रष्टुं बहिरागतमिव नेत्राभ्याम् अश्रुबिन्दून् व्यमुञ्चत पुष्करेक्षण इति कृपालुत्वमुक्तं हेतुत्वेन ॥ १९ ॥

ततो भार्याकृतवैलक्षण्यमावश्यकमिति तेनैव सख्यं न्यूनं भविष्यतीति शङ्कायामाह—अथोपवेश्य पर्यङ्क इति । ततः सख्युः समर्हणं स्वयं कृतवान् अस्य पादाववनिज्य समर्हणसाधनान्युपाहृत्य पादावनेजनीरपः ॥ २० ॥

शिरसा अग्रहीत् धर्मोयमिति नात्र दूषणं लोकशिक्षार्थंञ्च धर्मकरणं राजन्निति सम्मत्यर्थं विशेषतश्चरणोदकधारणे अभिप्रायान्तरमाह—लोकपावन इति । सहि सर्वलोकात्मकः ब्राह्मणोऽपि स्वयं स्थित इति पूर्वमुक्तं तेन स्वचरणारविन्दोदकेन लोकान् पावितवानित्युक्तं नैतावता त्वपकर्षः यतो भगवान् ततः पूजामाह—व्यलिम्पद्दिव्यगन्धेनेति । पूजयासदेवत्वं वारयति मित्रमिति प्रदीपावलिभिरारात्रिकैः अनेन तस्य सुखं तथा यद्यपि न भवति तथापि मुदा कृतवान् ततः पुष्पैः शिरसि अर्चित्वा ताम्बूलं निवेद्य गाञ्च विधिपरिपालनार्थं पश्चात् स्वागतमब्रवीत् अत्र वृषभो गौः ॥ २१ ॥ २२ ॥

ततो भार्यापि पतिव्रतात्वान्मात्सर्यादिकमकृत्वा तं पूजितवतीत्याह—कुचेलमिति । मलिनभग्नस्थूलवस्त्रं शरीरं संस्काररहितं दुर्बलं धमनिभिः सिराभिः सन्ततं तथापि द्विजं ब्राह्मणस्यैवैष शोभा तादृशमपि देवी देवतारूपा लक्ष्म्यावेशात् शैब्या लक्ष्मणा चामरव्यजनेन पर्यचरत् पूर्वं भगवति चामरव्यजनं कुर्वाणा स्थिता पश्चाद्ब्राह्मणपूजायामपि तथैव कुर्वाणा स्थितेत्यर्थः ॥ २३ ॥

एवमुभाभ्यां पूजितं दृष्ट्वा तत्रत्या आश्चर्ययुक्ता जाताः इत्याह-अन्तःपुरजन इति । कृष्णेन सभाजितमवधूतं दृष्ट्वा विस्मितोऽभूत अनेन भगवत्यपि अपकर्षो भाव्यतामिति शङ्काभावायाह—अमलकीर्त्तिनेति । तत्राप्यतिप्रीत्या तत्रापि सोऽवधूतः मलिन एव अन्यद्वारा मलापकर्षणं कृत्वा पश्चात्पूजापक्षो निवारितः ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पादावनेजनीरपः ॥ २०—२२ ॥

साक्षाद्देवी रुक्मिणी शैब्येति क्वाचित्कः पाठः पाश्चोत्तरखण्डासम्मतः ॥ २३ ॥

किमनेन कृतं पुण्यमवधूतेन भिक्षुणा ।
श्रिया हीनेन लोकेऽस्मिन् गर्हितेनाधमेन च ॥ २५ ॥
योऽसौ त्रिलोकगुरुणा श्रीनिवासेन सम्भृतः ।
पर्य्यङ्कस्थां श्रियं हित्वा परिष्वक्तोऽग्रजो यथा ॥ २६ ॥
कथयाञ्चक्रतुर्गाथाः पूर्वा गुरुकुले सतोः ।
आत्मनो ललिता राजन् करौ गृह्य परस्परम् ॥ २७ ॥

श्रीभगवानुवाच ।

अपि ब्रह्मन् गुरुकुलाद्भवता लब्धदक्षिणात् ।
समावृत्तेन धर्मज्ञ भार्य्योढा सदृशी न वा ॥ २८ ॥
प्रायो गृहेषु ते चित्तमकामविहतं तथा ।
नैवातिप्रीयसे विद्वन् धनेषु विदितं हि मे ॥ २९ ॥
केचित्कुर्वन्ति कर्माणि कामैरहतचेतसः ।
त्यजन्तः प्रकृतीर्दैवीर्यथाऽहं लोकसङ्ग्रहम् ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अमलकीर्त्तिनेति ततःप्रभृति श्रीदामपरिचरणरूपा कीर्तिः सदामदारिद्र्यभञ्जनरूपं नामचाभूत् अवधूतं मलिनवेषम् ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उपहृत्य समर्प्य पादावनेजनीः अपः ॥ २० ॥

शिरसा अग्रहीत् दधार तत्र हेतुः लोकपावनः एवंविधमज्जनचरणोदकं शिरसा धारणीयमित्येवं लोकशिक्षया लोकान् पावयति पवित्रीकरोतीति तथा ॥ २१—२२ ॥

धमनिभिः सिराभिः साक्षाद्देवी रुक्मिणी ॥ २३ ॥

अवधूतं मलिनवेषम् ॥ २४ ॥

भाषा टीका ।

प्यारे सखा विप्र ऋषि के अंग संग से अति आनन्द को प्राप्त तथा प्रसन्न भए कमल नेत्र श्रीकृष्ण, दोनो नेत्रों से आनन्द के आंशून की बूंद टपकाने लगे ॥ १९ ॥

अनन्तर उस ब्राह्मण को पलिंग पर बैठाय कर साक्षात् आपं हि श्रीकृष्णजी, पूजा की सामग्री को सम्पादन कर के निज सखा ब्राह्मण के दोनों चरण पखार कर ॥ २० ॥

हे राजन्! लोकन को पवित्र करने वारे श्रीकृष्ण भगवान् उस ब्राह्मण के चरण प्रक्षालन जल को मस्तक से धारण करते भए, अनन्तर चन्दन अगरू केशरि से बनाए भए दिव्य सुगन्धि से उस ब्राह्मण को चर्चित करते भए, ॥ २१ ॥

सुगन्धि धूपों से और दीपावलियों से मोद के साथ मित्र का अर्चन कर के तथा ताम्बूल और गौ का निवेदन कर के श्रीकृष्ण भगवान् कुशल पूछते भए ॥ २२ ॥

मलिन वस्त्र धारण किये मलिन रूप कृश नाडीन से व्याप्त ब्राह्मण को लक्ष्मणा देवी चमर वीजना से परिचर्य्या करती भई ॥ २३ ॥

निर्मल कीर्त्ति सम्पन्न श्रीकृष्ण ने प्रीति से उस मलिन ब्राह्मण की पूजा करी उस को देख कर अन्तःपुर में रहने वारा सबहि जन आश्चर्य्य करने लगा ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विस्मयमाह—किमनेनेतिद्वाभ्याम् ॥ २५ ॥

सम्भृतः सम्मानितः ॥ २६ ॥

सतोर्वसतोः गृह्य गृहीत्वा ॥ २७ ॥

भार्या ऊढा परिणीता नवेति गृहस्थलिङ्गदर्शनाद्भोगादर्शनाच्च संशयादिव प्रश्नः ॥ २८ ॥

अप्रतिषेधादुद्वाहमनुमतं मत्वाऽऽह—प्राय इति । तर्हि ते चित्तं नूनमकामविहतं कामैर्विहतं न भवतीति मे विदितम् तथाहि धनेषु वस्त्रादिषु नैवातिप्रीयसे हे विद्वन्निति विदुषस्त्वैतद्युक्तमिति भावः ॥ २९ ॥

कामहतत्वाभावे किं गृहधर्मक्लेशेनेत्याशङ्क्याऽऽह—केचिदिति । दैवीरीश्वरमायारचिताः प्रकृतीर्विषयवासनास्त्यजन्तः कामैरनाकृष्टचेतसामपि कर्मकरणे दृष्टान्तः यथाऽहमिति लोकसङ्ग्रहं लोकस्य सङ्ग्रहो ग्रहणं यथा भवति तथाऽहमीश्वरोऽपि कर्माणि यथा करोमि तद्वत् ॥ ३० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रिया सम्पत्त्या हीनेन भिक्षुणा याचकेन अतोऽस्मिन् लोके गर्हितेन अतश्चाधमेन निकृष्टेन इति पुनरुक्तयोऽन्यता निरस्ता॥२५॥

असौ अयम् अधुना साक्षादेवेत्यर्थः। त्रिलोकगुरुणा श्रीब्रह्मादिपूज्येनापीति गर्हितत्वाधमस्य श्रियो नितरां धाम यस्मिन् तेनापीति च श्रीहीनादेः सम्माननाऽनर्हतोक्ता अतः आस्तां वा विप्रत्वादिना सम्माननं परिष्वङ्ग ईदृशो नार्हत्येवेत्याशयेनाह—प्रियां श्रीरूपां पर्यङ्कस्थामपि हित्वा परिष्वक्तः प्रियामिति तु पाठोऽनुवृत्तः पारिष्वङ्गश्च महादरेण परमस्नेहेन चेति सूचयति यथाऽग्रज इति तादृशं श्रीमदग्रजं पुरजनवचनमिदमेव युक्तमेव अन्येषां श्रीभगवतस्तथा विधानं तु नायुक्तताभानमिति तद्वचनत्वेनोक्तम् ॥ २६ ॥

पुरजनविस्मयापनोदनार्थमिव तत्सखो मिथः सख्यसुखोदयार्थं सस्नेहभरं प्रकाशयन् करग्रहणपूर्वकं पूर्वाः प्रियवार्ताः गुरोः कुले गृहे तथाच विश्वः "कुलं जनपदे गृहे" इत्यादि लालिताः सर्वलोकमनोहराः परस्परं करौ गृहीत्वेति श्रीभगवता व्यञ्जितेन सख्येन तस्यापि सख्याद्यात् ॥ २७ ॥

तत्र श्रीभगवानुवाचेति प्राचुर्यात् अपि किम् अनेन लब्धदक्षिणत्वादेः सर्वस्यापि प्रश्नो ज्ञेयः हे धर्मज्ञेति यदि समावर्तनं कृतं तदा नाश्रमान्तरदोषपरिहारार्थमवश्यं भार्या परिग्राह्येति धर्मं भवान् वेत्त्येवेति भावः ॥ २८ ॥

अकामविहतमिति। धनेषु नाभिप्रायम् इति चापाततस्तद्दाने व्याजार्थं तत्र प्राय इत्यनेन विशब्देनातिशब्देनच वासनाया मूर्च्छितत्वेन स्थितिं सूचयित्वा काममपि दास्यामीति निगूढमाश्वासितश्च अन्यत्तैः तत्र तर्हीति चूर्णिकामनुसृत्य अध्याहृतं तथाहीति तदित्यनेन हिशब्दस्यान्वयात् ॥ २९ ॥

कर्माणि गृहस्थधर्मान् केचित्कामैरहतचेतसः केचित् दैवीः प्रकृतीस्त्यजन्तः इत्यावृत्त्यान्वयः ननूत्तरः पक्षः सम्भवतु नाम पूर्वस्तु न भवेदित्याशङ्क्याह-यथाहमिति । लोकस्य सङ्ग्रहो येन तादृशं यथा स्यात् ॥ ३० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

केचित् मुमुक्षवस्त्यजन्तः त्यक्तफलसङ्गाविरहे दृष्टान्तः यथा अहमिति। लोकसङ्ग्रहमिति क्रियाविशेषणं लोकेन सङ्ग्रहो यस्येति बहुहितवल्लोकसङ्ग्रहानुगुणमित्यर्थः ॥ ३० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विस्मितवाक्यमेवाह—किमिति द्वाभ्याम् । पुरा पूर्वजन्मनि किं पुण्यमनेन कृतमित्यर्थः। अन्यथैवं पूजितो न स्यादित्यभिप्रायस्तं विशिनष्टि अवधूतेन मलिनेन श्रिया हीनेन दरिद्रेणात एव अखिललोके गर्हितेनादरणीयेन अस्मिन् लोक इत्यनेन अमुष्मिंस्त्वादरणीय एवेति सूच्यते अधमेन न ह्यधमः पूज्यते किन्तु पूज्यकापेक्षयोत्तम एव पूज्यत इति ॥ २५ ॥

योसावुक्तविधोप्ययं त्रिजगद्गुरुलोकगुरुणा श्रीनिवासेन सम्भृतः सम्मानितः परिष्वक्तः आलिङ्गितश्च यथाग्रजो रामस्तद्वत् ॥ २६ ॥

कथयाञ्चक्रतुरिति। अस्य कृष्णकुचेलावितिशेषः पुरा गुरुकुले सतोर्वर्तमानयोरात्मनोर्याः सुन्दराः गाथाः कथाः ताः परस्परं करौ हस्तौ गृह्य गृहीत्वा ल्यबार्षः हे राजन् कथयाञ्चक्रतुः ॥ २७ ॥

तदेवाह—अपीति। हे ब्रह्मन्! लब्धा दक्षिणा येन तस्माद्गुरुकुलात्समावृत्तेन कृतसमावर्तनाख्यकर्मणा भवता "वेदमधीत्याभिसमावृत्य "इत्यधीतसाङ्गसशिरस्कस्वाध्यायैरनुष्ठेयं समावर्तनाख्यं कर्म विहितं हे धर्मज्ञ ! सदृशी अनुरूपा भार्योढा परिणीता नवा? अपिशब्दः प्रश्नद्योतकः॥ २८॥

नोढेवेत्यहन्तु सम्भावयामीत्यभिप्रायस्त्वाह—प्राय इति । अकामविहत तव चित्तं प्रायशः गृहेषु गृहाश्रमेषु न रमत इत्यध्याहारः, यद्वा, तव चित्तं गृहेषु कामैरविहतं विहतं न भवति यथा हे विद्वन् तत्त्वत्रययाथात्म्यज्ञानिन्! धनेष्वपि विषयभूतेषु नातीव प्रीयसे प्रीतियुक्तो भवसीति मे मया विदितम् ॥ २९ ॥

गृहस्थलिङ्गदर्शनादूढेवेति पुनर्निश्चित्य कामहतत्वाभावे किं गृहाश्रमेणेत्याशङ्कामपदनुदंस्तत्प्रयोजनमाह-केचिदिति। कामैरविहतं चेतो येषां तथाभूता अपि केचिन्मुमुक्षवः दैवीं देवस्य विष्णोः सम्बन्धिनीं प्रकृतिं मायां "दैवी ह्येषा गुणमयी मम माया दुरत्यया "इत्युक्तविधां त्यजन्तः "लक्षणहेत्वोः "इति शत्रादेशः त्यक्तुं प्रकृतिसम्बन्धान्मोक्तुमिति यावत् कर्माणि गृहस्थाश्रमप्रयुक्तान्यनभिसंहितफलानि नित्यनैमित्तिकादिरूपाणि कुर्वन्ति ब्रह्मविद्याङ्गत्वेनानुतिष्ठन्तीत्यर्थः। ब्रह्मविद्याङ्गतया कर्मणामनुष्ठानार्थं गृहाश्रमपरिग्रह इति भावः । ननु कामैश्चेतसोऽविहतत्व एव हि कर्माणि कर्तव्यानि कर्मणां विद्याङ्गत्वमपि चित्तशुद्धिजननद्वारैव तथा च सति कामैरविहतचेतसां किं कर्मानुष्ठानेनेत्यत आह-यथाहं लोकमिति लोकस्य सङ्ग्रहो यस्मिंस्तद्यथा अहं तथा करोमि तद्वत् अयं भावः कामैर्विहतचेतोभिस्तद्विहतिद्वाराविद्यानिष्पत्तये कर्माणि कर्तव्यानि अविहतचेतोभिस्तु लोकसङ्ग्रहार्थमिति भावः ॥ ३० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

सम्भृतः सभाजितः सङ्गृहीतो वा ॥ २६ ॥

गुरुकुले सतां स्वेषां काले पूर्वास्मिन् याः गाथाः वृत्तास्ताः कथयाञ्चक्रतुः ॥ २७ ॥

स भवान् सदृशी भार्या लब्धापि किं न वा यथा प्राकृतस्य चित्तं गृहेषु कामविहतं भवति तथा प्रायस्ते चित्तं गृहेषु भार्यादिष्वकामविहतं कामनाविषयेच्छया विहितं न स्यात् तत्तस्य चित्तं धनेष्वपि नैवातिप्रीयते कथमेतत्तत्राह—विदितमिति ॥ २८—२९ ॥

केचित्प्रवृत्तिमार्गस्थाः प्रकृतिं देहाभिमानलक्षणां दैवीं देवाधीनाम् ॥ ३० ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कथयाञ्चक्रतुरिति विप्रस्यापि मध्ये तत्पूरणादिति ज्ञेयम् ॥ २७—२९ ॥

केचित् कामैरहतचेतसः केचित्तु दैवीः प्राकृतीस्त्यजन्त इत्यानुपूर्व्यान्वयः ॥ ३०—३१ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

देवी. पर्य्यचरच्छैब्येत्यादि । देवी रुक्मिणी कीदृशी शैब्या शिवं कल्याणं तस्य समूहं शैवं तत्र साधुः शैब्या अन्यथोत्तराध्याये "तावच्छ्रीजगृहे हस्तम्" इत्यस्यासङ्गतिः वस्तुतस्तु श्रीरुक्मिण्येव एकतमं गृहमिति च तस्या एव गृहस्य प्राधान्यम् ॥ २३—४५ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

विस्मितानां वाक्यमाह—किमनेनेति । ते सर्वे पुण्यफलमेव शुभं मन्यन्ते अदृष्टपूर्वत्वात् किमित्याशङ्का किञ्चित्तथा भविष्यतीति चेत्तत्राहुः—अवधूतेनेति पञ्चविशेषणानि यद्यस्य धर्मो भवेत् तदा प्रथमं धर्मोत्पादितं शरीरं भवेत् देहे कान्त्यतिशयो भवेत् अयञ्च श्रिया हीनः लौकिकी सम्पत्तिश्च अनेनैव समुज्झिता किञ्च यद्यस्य धर्मो भवेत् तदा लोके कीर्त्तिर्भवेत् अयञ्च लोके गर्हितः अस्मिन्निति वयमेवात्र प्रमाणम् इह लोकवत्परलोकोपि इति सूचितं किञ्च धर्मे विद्यमाने तत्कार्यमस्य धनं भवेत् अयञ्चाधनो दरिद्रः अधम इति वा क्वचित्पाठः तदा संस्कारसामग्र्यभावात् संस्काराभावात् तथोक्तिः चकारादन्येपि लक्ष्मणादयः सङ्गृहीताः ॥ २५ ॥

ननु किमस्य जातं येनैतावदुच्यत इति तत्राह—योसाविति । त्रैलोक्यगुरुणा भगवान् हि लोकशिक्षार्थं कर्माणि करोति लोके यद्येतादृशेनापि सख्यं बोधयेत् तदा नीचैरपि लोकाः सख्यं कुर्युः किञ्च भगवान् श्रीनिवासः यदि पुण्यरहितोपि लक्ष्म्या संयुज्येत तदा कोपि दरिद्रो न भवेत् एतादृशेन सम्भृत इति किञ्चित्पुण्यमस्तीति ज्ञायते काम्यञ्च परमकाष्ठापन्नः किञ्च महता आदरेण परिष्वक्तः अनेनान्तरोऽपि भावोऽस्मिन् वर्णितः तं भाव निरूपयितुं दृष्टान्तमाह अग्रजो बलभद्रो यथेति । कदाचिद्देशान्तराद्बलभद्रः समागच्छेत् तदा भगवानेव सादरं करोतीत्यर्थः पूजात्वधिका ॥ २६ ॥

एवं कायिकमानसिकसन्तोषजननामुक्त्वा वाचिकसन्तोषजननामाह—कथयाञ्चक्रतुरिति । गाथाः पूर्वकथानिबद्धाः श्लोकाः याः पूर्वं गुरुकुले सतोः सम्बन्धिन्यः ताः कथयाञ्चक्रतुः कथानिमित्तं वा स्मृत्वा कथयामासतुः ता आत्मनो ललिताः स्वस्यैव प्रियंजनिकाः राजन्निति सावधानार्थं परस्परं करौ गृहीत्वेति तुल्यतामापाद्य ये श्लोकाः यावाः श्रुतयः ताः परस्परसन्तोषार्थं प्रथमं पठितवन्तः ततो भगवानाह—समुदायानुवादो वा तत्र प्रथमं भगवद्वाक्यानि षोडशभिराह—अपि ब्रह्मन्निति । वाक्यैस्तस्य सख्यस्वभावोपि स्थिरीक्रियते अन्यथा वर्णनार्थमेव तथा वर्णितः स्यात् तत्र प्रथमं वियोगावधि यज्जातं तत्पृच्छति—अपीति त्रिभिः । विद्यासमाप्तिस्तदैव जाता तदनु नैष्ठिकब्रह्मचर्यं वा समावर्त्तनेन विवाहो वा कृत इति वक्तव्यं तदर्थं पृच्छति ब्रह्मन्निति सम्बोधनात् विद्यासिद्धिः सूचिता गुरुकुलात् ब्रह्मचर्यं गुरुकुले अदृष्टार्थमपि स्थित्वा भवति "गुर्वभावे तत्पत्न्यां तत्पुत्रे तद्गात्रे वा ब्रह्मचर्यमिति ज्ञापयितुं कुलपदं "गुरवे तु वरं दत्वा स्नायीत तदनुज्ञया" इति स्नानाख्यं समावर्त्तनं दक्षिणादानानन्तरं भवति तदनन्तरं च—

"चतुर्थमायुषो भागमुषित्वाद्यं गुरौ द्विजः ।
द्वितीयमायुषोभागं कृतदारो गृहे वसेत् ॥ इति

तदनन्तरं विवाहः तत्राह गुरुकुलाल्लब्धदक्षिणात् समावृत्तेन तदनन्तरं समावर्त्तनसंस्कारेण संस्कृतेन हे धर्मज्ञ ! धर्मरहस्याभिज्ञ ! सदृशी स्वस्य सर्वतः समा भार्या ऊढा नवा ऊढेति ॥ २७-२८ ॥

तस्य भावं स्वीकृत्य रागविप्रयोर्विवाह इति निन्दायां प्राप्तायां तन्निषेधार्थमाह—प्रायो गृहेष्विति । ते चित्तं गृहेषु कामविहतं प्रायेण न भवति अन्यथा कथं परिग्रह इति विशेषमाह—तथेति । यथा लोकानां तथा कामैर्न हतमित्यर्थः अत एव गृहेषु नैवाभिप्रीयते अतिप्रीतियुक्तं चित्तं न भवति तत्र हेतुं सम्बोधनेनाह—हे विद्वन्निति । ज्ञानोदयाच्छरीराध्यासाभावात् तत्प्रीतिकरे गृहे न प्रीतिः ननु धनाभावादपि गृहे पुरुषो न प्रीयते "अन्तरं नैव पश्यामि निर्धनस्य मृतस्य च" इतिवाक्यात् तत्राह—धनेष्विति. तव चित्तं नानाप्रकारधनेष्वपि न प्रीयते गोभूहिरण्यादिभेदेन धनं बहुविधं तथा गृहा अपि स्त्रीभेदेन विलासभेदेन, अत्र प्रमाणमाह—विदितं म इति । युक्तश्चायमर्थः योहि महापुरुषः स एतादृश एव भवेदिति ॥ २९ ॥

ननु, विरक्तस्य सन्यास एवाधिकारः "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति श्रुतेः । अतः कथं विवाह इति चेत्तत्राह—केचित्कुर्वन्ति कर्माणीति । "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा इति" "इन्धानास्त्वा शतं हिमाः" इति च श्रुतेः । यावज्जीवं कर्म कर्त्तव्यम् अत एवाग्निहोत्रादौ यावज्जीवाधिकारः तत्र विरक्ताविरक्तभेदेन परित्यागकर्मणां व्यवस्थां मन्यमानान् प्रति भगवान् प्रकारान्तरेण व्यवस्थामाह—एके तु यथा स्वयोक्तः तथैव व्यवस्थापयन्ति । केचित्तु कामैरहतचेतसोपि निष्कामा अपि कर्माण्येव कुर्वन्ति ननु कषायपक्वकर्माणीति कर्मणां न साक्षात् पुरुषार्थसाधकत्वं किन्त्वन्तःकरणशोधकत्वमेव यथा प्रमुच्यन्ते कामा येस्य हृदि स्थिता इति कामाभावे मोक्षः सन्निहितः इति कर्मणां कोपयोग इति चेत्तत्राह—त्यजन्तः प्रकृतीर्दैवीरिति । स्वभावविजयार्थं कर्मणां करणं स्वभावो हि दुर्जयः अत एव भगवानाह—"प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति" इति. ताश्च प्रकृतयः स्वभावरूपाः देशकालबीजयोन्यादिभेदेन नैकविधा भवन्ति ताश्चेत् पुरुषं त्यजन्ति तदा मूलप्रकृतिमपि त्यक्त्वा स्वस्थो भवति तदभावे कामोऽप्रयोजकः कामाभावेपि संसारस्य निरूपितत्वात् ननु ताः प्रकारेणैव जेतव्याः तत्र कर्मणां किं प्रयोजनम् ?

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्राह—देवीरिति । ता देवतारूपाः अतो वैदिककर्मभिरेव तासां निवृत्तिरिति कर्मकरणं ननु कषायपाकार्थमेव कर्मणां विनियोगः श्रूयते स्वर्गाद्यर्थं वा ननु स्वभावजय[illegible]तश्च केवलयुक्त्या तदर्थं कर्मकरणमिति चेत्तत्राह—यथाहं लोकसङ्ग्रहमिति । अहं च कर्माणि करोमि लोकसङ्ग्रहार्थं तत्र युक्तिरेव मूलं मम वर्त्मानुवर्त्तन्त इति नच्चैवं कश्चिदपि वाक्यमस्ति लोकसङ्ग्रहार्थमीश्वरेण कर्त्तव्यानीति तस्मात्फलनिर्णयः युक्त्यापि भवतीत्यर्थः ॥ ३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

विस्मयमाह— किमनेनेति द्वाभ्याम् । अधमवेषत्वादधमेन ॥ २५-२६ ॥

गृह्य गृहीत्वा ॥ २७ ॥

भार्य्या ऊढा परिणीता नवेति गृहस्थलिङ्गदर्शनात् भोगादर्शनाच्च संशयादिव प्रश्नः हे धर्मज्ञेति यदि समावर्त्तनं कृतं तर्ह्यनाश्रमित्वदोषपरिहारार्थमवश्यं भार्या परिग्राह्येति धर्म भवान् वेत्त्येवेति भावः ॥ २८ ॥

त्वया लज्जया सम्प्रत्यवचनादपि मयैवमहमज्ञासिषमेवेत्याह—प्राय इति । सम्प्रति गृहस्थस्यापि ते चित्तम् अकामविहितं न कामैर्विहन्तुं शक्यं हे विद्वन् ! भोगपरिणामविज्ञ धनेषु वस्त्रेषु च नातिप्रीयसे एव इति विदितम अत एवाधुना तानि तानि न दीयन्ते प्राय इत्यतीति पदाभ्यां भार्य्यानुरोधेन धनादिषु प्रीयसे चेत्यत एव पश्चात्तानि दास्यन्ते चेति भावः । पश्यत भोः किलायं गृहस्थोऽप्यतिनिस्पृहः परस्मात किमपि न कामयते बलाद्दत्तमपि न गृह्णातीति द्वारकायां तत्प्रतिष्ठाख्यापनार्थमेव तस्य सकामत्वं न प्रकटीकृतं नापि किञ्चित् प्रकटं दत्तञ्चेति ज्ञेयम् ॥ २९ ॥

त्वमतिविरक्तोऽप्यस्य इव सन्न्यासं नाकरोरित्यत्र तत्त्वामहं जाने इत्याह-केचित् विरक्ताः कामैरनाकृष्टचेतसोपि कर्माणि कुर्वन्ति केचिच्च दैवीः प्रकृतीर्देवनिर्मिताम् चित्तस्य स्वभावान् दुर्लक्ष्य सूक्ष्मविषयवासनात्मकमालिन्यमयान् त्यजन्तस्त्यक्तुञ्च कर्माणि कुर्वन्ति तत्र पूर्वेषां दृष्टान्तः यथाहं लोकसङ्ग्रहं यथास्यात्तथा कर्म करोमीति ॥ ३० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विस्मयमाह—किमनेनेति द्वाभ्याम् । श्रिया हीनेन निर्धनेन गर्हितेन धनसाध्यस्वजनादिसत्काराहों लोके स्तुत्यो भवति तद्विपरीतेन अधमेन लोके बहुधनसञ्चयेन परोपकारी उत्तमः स्वभोजनाच्छादनमात्रकर्त्ता मध्यमः अयन्तु स्वभोजनाच्छादने ऽप्यकल्पोऽधमस्तेन ॥ २५ ॥

सम्भृतः श्रेष्ठत्वेन धृतः परिष्वक्तश्च यथा अग्रजो हलः ॥ २६ ॥

समावृत्तेन समाप्तब्रह्मचर्येण भार्योढेत्युक्तिः समावर्तनकर्मस्मरणात् जितेन्द्रियत्वस्मरणात् नवेत्युक्तिः ॥ २८ ॥

जितेन्द्रियत्वेन गार्हस्थ्याभावसम्भावनायां सत्यामपि केषाञ्चिज्जितेन्द्रियाणां लोकशिक्षा यैर्गार्हस्थ्यमाचरतां मतमाश्रित्य समावृत्तेन त्वया भार्योढैवेत्याशयेनाह—प्राय इति द्वाभ्याम् । ते चित्तम् अकामविहतं कामविहतं न भवति अतः गृहेषु गृहोचितेषु कर्मसु साधनेषु धनेषु च न प्रीयसे न प्रीतियुक्तो भवसि इति मे विदितम ॥ २९ ॥

तथापि कामैरहतचेतसोऽनाकृष्टचेतसोऽपि केचिन्मुनयः दैवीः देवमायारचिताः प्रकृतीर्विषयवासनास्त्यजन्तः कर्माणि गृहोचितानि कुर्वन्ति यथाहं लोकस्य सङ्ग्रहो यथा तथा कर्माणि करोमि तथा जितेन्द्रियेणापि त्वया लोकशिक्षायै गृहोचितकर्मानुष्ठानार्थं भार्य्योढैवेति भावः ॥ ३० ॥

---

भाषा टीका ।

भिखारी दरिद्री लोकमें निन्दित अधम इस मलिन ब्राह्मणने कौनसा पुण्य किया ॥ २५ ॥

कि जिसके प्रतापसे सेजपर स्थित रुक्मिणी को छोड कर त्रिलोक के गुरु श्रीनिवासने बडे भ्राता के समान इस का सत्कार किया और आलिंगन किया ॥ २६ ॥

हे राजन् ! श्रीकृष्ण और वह सुदामाजी परस्पर जब उज्जैनमें सांदीपिनि गुरु कुलमें दोनो रहे उस कालकी अपनी पहली मनोहर कथा कहते भये ॥ २७ ॥

श्रीभगवानुवाच ।

हे ब्रह्मन् ! हे धर्मज्ञ ! विद्या पाठनें के अनन्तर आपसे दक्षिणा के प्राप्त गुरु कुलसें आयकर समावर्तन संस्कार को प्राप्त अपने अपने सदृस भार्य्य को विवाही अथवा नहि ॥ २८ ॥

हे विद्वन् ! आप गृहनमें वर्त्तमान भी होताहे तथापि आप का चित्त बहुधा करकें संसार के विषय से क्षुभित नाहि है यह मोको विदित है इसी कारण धन .वस्त्रादिकन में आपकी अत्यन्त प्रीति नाहिं है ॥ २९ ॥

उनके चित्त विषयों से नही भी हो तथापि कोई कविवे की जन देवीमायाको त्यागने के अर्थ निष्काम कर्मन को करतेहैं । जैसं मोको कुछ प्रयोजन नही भी है तथापि लोक संग्रह के वास्ते मै कर्म करताहूं ॥ ३० ॥

कच्चिद्गुरुकुले वासं ब्रह्मन् स्मरसि नौ यतः ।
द्विजो विज्ञाय विज्ञेयं तमसः पारमश्नुते ॥ ३१ ॥
स वै सत्कर्मणां साक्षात् द्विजातेरिह सम्भवः ।
आद्योऽङ्ग यत्राऽऽश्रमिणां यथाऽहं ज्ञानदो गुरुः ॥ ३२ ॥
नन्वर्थकोविदा ब्रह्मन् वर्णाश्रमवतामिह ।
ये मया गुरुणा वाचा तरन्त्यञ्जो भवार्णवम् ॥ ३३ ॥
नाहमिज्याप्रजातिभ्यां तपसोपशमेन वा ।
तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथा ॥ ३४ ॥
अपि नः स्मर्यते ब्रह्मन् वृत्तं निवसतां गुरौ ।
गुरुदारैश्चोदितानामिन्धनानयने क्वचित् ॥ ३५ ॥
प्रविष्टानां महारण्यमपर्तौ सुमहद्द्विज ।
वातवर्षमभूत्तीव्रं निष्ठुराः स्तनयित्नवः ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नौ आवयोः यतो गुरोः विज्ञेयं परमात्मतत्त्वम् तमसः संसारस्य ॥ ३१ ॥

तत्राऽऽत्मज्ञानप्रदस्य गुरोरत्यन्तं पूज्यत्वं वक्तु पुरुषस्य त्रीन् गुरूनाह—स वा इति । इह संसारे यत्र सम्भवो जन्म-मात्रं स पिता तावदाद्यः प्रथमो गुरुः पूज्यः । कर्मविद्याप्रदं गुरुमाह—द्विजातेः सतः पुंसः सत्कर्मणां यत्र सम्भवः उपनीय वेदाध्यापक इत्यर्थः । स द्वितीयो गुरुः यथाऽहमीश्वरस्तथा प्रथमादपि पूज्य इत्यर्थः । ब्रह्मविद्याप्रदं गुरुमाह—आश्रमिणां सर्वेषामपि ज्ञानदो यः स तु साक्षादहमेवेति ॥ ३२ ॥

अतो ज्ञानप्रदं गुरुरूपं मामाश्रित्य ये संसारं तरन्ति ते बुद्धिमन्त इत्याह-नन्विति । हे ब्रह्मन् ! ते ननु वर्णाश्रमवतां मध्ये अर्थकोविदाः इह मनुष्यजन्मनि तत्रापि वर्णाश्रमवत्त्वे सति ये मया गुरुणा गुरुरूपेण वक्त्रा वाचा उपदेशमात्रेणाञ्जः सुखेनैव भवार्णवं तरन्तीति ज्ञानप्रदाद्गुरोरधिकः सेव्यो नास्तीत्युक्तम् ॥ ३३ ॥

अत एव तद्भजनादधिको धर्मश्च नास्तीत्याह—नाहमिति । इज्या गृहस्थधर्मः प्रजातिः प्रकृष्टं जन्म उपनयनं तेन ब्रह्मचारिधर्मः उपलक्ष्यते ताभ्यां तथा तपसा वनस्थधर्मेण उपशमेन यतिधर्मेण वा अहं परमेश्वरस्तथा न तुष्येयं यथा सर्वभूतात्माऽपि गुरुशुश्रूषयेति ॥ ३४ ॥

किञ्च अस्माकं गुरुशुश्रूषणं किमपि दैवादेव सम्पन्नं तत्किम् त्वया स्मर्यते इति पृच्छति—अपि न इति । गुरौ निवसताम् अस्माकं यत्किमपि वृत्तं तत् क्वचित् कदाचित् ॥ ३५ ॥

अपर्तौ अपगते ऋतौ अकाल इत्यर्थः । वातश्च वर्षश्च तयोः समाहारः स्तनयित्नवो गर्जितानि चाभवन् ॥ ३६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मौनं सम्मतिलक्षणमिति न्यायेन तत्स्वीकारमालक्ष्य सख्यहेतुपूर्वगाथा एव कथयितुमारभमाणो वक्ष्यमाणकष्टवार्त्तायां दोषपरिहारार्थं सुखहेतुत्वबोधनार्थञ्चादौ गुरुतत्सेवादिमाहात्म्यमाह—कच्चिदिति चतुर्भिः । नौ वासं विज्ञाय अनुभूय विज्ञेयमिति विशब्देन श्रीभगवत्तत्त्वमभिप्रेतं तमसः सर्वाज्ञानदुःखमयतः प्रकृतेः पारं श्रीवैकुण्ठलोकं लभत इत्यर्थः ॥ ३१ ॥

सवै स एव यत्र निमित्ते अस्य द्विजातुत्त्यान्वयः निमित्ते द्विजातेः सत इति तृतीयस्याप्यपेक्षितत्वात् यतः ज्ञानदो मत्तत्त्वोपदेशकः स्वतोऽप्युत्तमे भयान्तरे सति गुरोस्तुल्यत्वमेवोच्येत अत एव स्वपरितोष एव फलत्वेनोपसंहरिष्यते नाहमित्यादिना ॥ ३२ ॥

ननु निश्चये अञ्ज इति विज्ञेयविज्ञानेन भक्तेः सिद्धत्वा अवान्तरफलतया भवार्णवतरणस्य सुखसिद्धेः ॥ ३३ ॥

सर्वभूतात्मेति । सर्वभूतानामन्तर्यामित्वेन तेषां सेवया मत्सन्तोषसम्भवेऽपि गुरुसेवया तुष्येयमित्यतिशयविवक्षया तां विनाऽन्यथैवर्थ्यापत्तेश्च गुरौ मदावेशेन साक्षान्मद्रूपत्वात् मत्कृपावररूपत्वाच्चेति भावः । अन्यत्तैः । यद्वा, इज्या मत्पूजा प्रजातिर्मद्दीक्षा तपो मत्समाधिः उपशमो मन्निष्ठा तैरपीति किन्त्वर्थद्वयमिदं स्वधर्मभगवद्धर्मोपदेष्टृत्वेन यथायथं गुरुद्वयतारतम्ये ज्ञेयम् ॥ ३४ ॥

एवं श्रीगुरुसेवामाहात्म्यमुक्त्वा लोकशिक्षार्थं तत्प्रकारं दर्शयन् एकत्रैव दुःखप्राप्त्यादिना सख्यस्य हेतुविशेषं प्रतिपादयन् तत्र दार्ढ्यं बोधयति—अपीत्यादिना । नौ इति श्रीबलदेवापेक्षया पूर्वं सतोरिति द्विवचनं तु तदपेक्षयापि स्वयोरैक्यव्यञ्जनया तं स्नेहयति स्म, गुरौ गुरुगृहे ब्रह्मन्निति मुहुः सम्बोधनेन लज्जाभयादिकं निरस्यन् सख्यमेव दृढयन् स्वसन्दर्शनाय मुखमुन्नमयंस्तं प्रहर्षयति ॥ ३५ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रविष्टानां प्रविष्टेष्वस्मासु सत्सु अपर्तौ शीनर्तौ प्राप्ते तीव्रं दुःसहं हे द्विजाति तद्भूतवृत्तस्मरणात् तेन कौतुकाद्वा निष्ठुरास्तीव्राः स्तनयित्नवो महागर्जितं कुर्वाणा विद्युत्पाताश्चाभवन् ॥ ३६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तमसः परम् अज्ञानस्य पारं स गुरुकुलवासः सत्कर्मसम्भवात् अनुष्ठानहेतुः तद्धेतुभूतज्ञानोत्पादकत्वादित्यभिप्रायः यद्वा, सत्कर्मणां पुंसां द्वितीयजन्मनः सम्भवेन गुरुकुलवासरूपः आद्याश्रम इत्यर्थः । यस्मिन्नाश्रमे गुरुरहमिव ज्ञानप्रदः स इत्यन्वयः ॥ ३१—३२ ॥

वर्णाश्रमवतां मध्ये अथ कोविदाः प्रयोजनकुशलाः अञ्जः अञ्जसा ॥ ३३ ॥

प्रजातिः सन्तत्युत्पादनम् ॥ ३४—३५ ॥

अपर्तौ अकाले ॥ ३६-३९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कच्चिदिति । हे ब्रह्मन्! नौ आवयोः गुरुकुले वासं स्मरसि कच्चित् तं विशिनष्टि यतो गुरुकुलावासाद्विज्ञेयं स्वपरात्मयाथात्म्यं विज्ञाय तमसः पारमज्ञानस्य पारं मुक्तिमिति यावत् अश्नुते प्राप्नोति ॥ ३१ ॥

किञ्च, स वा इति । सवै गुरुकुलवासः द्विजातेस्त्रैवर्णिकस्य सतां कर्मणां सम्भवोऽनुष्ठानहेतुः तद्धेतुभूतज्ञानोत्पादकत्वादित्यभिप्रायः । यद्वा, सत्कर्मणां पुंसां द्वितीयजन्मसम्भवेन गुरुकुलवासरूपो ह्याश्रम इत्यर्थः । यस्मिन्नाश्रमे गुरुरहमिव ज्ञानदः स इत्यन्वयः । यद्वा ज्ञानप्रदस्य गुरोः अत्यन्तपूज्यतां वक्तुं पुरुषस्य त्रीन् गुरूनाह—सवा इति । अङ्ग हे ब्रह्मन्! इह संसारे यतस्सम्भवो जन्ममात्रं स पिता तावदाद्यः प्रथमः गुरुः । द्विजातेः सतः पुंसः सत्कर्मणां यत्र सम्भवः उपनीय वेदाध्यापकः स द्वितीयो गुरुः यथा अहमीश्वरस्तथा प्रथमादपि पूज्य इत्यर्थः । ब्रह्मविद्याप्रदं गुरुमाह-आश्रमिणां सर्वेषामपि ज्ञानदो यो गुरुः स तु साक्षादहमेवेति ॥ ३२ ॥

अतो ज्ञानप्रदं गुरुमाश्रित्य ये संसारं तरन्ति ते बुद्धिमन्त इत्याह—नन्विति । हे ब्रह्मन् ! इह लोके सर्वेषां वर्णानामाश्रमिणाञ्च मध्ये त एवार्थकोविदाः पुरुषार्थकुशलाः, के? ये मया गुरुणा गुरुरूपेण वक्त्रा वाचा उपदेशमात्रेणाञ्जः सुखेन संसाररूपं महार्णवं तरन्ति ॥ ३३ ॥

एवं महोपकर्तुर्गुरोरधिकः सेव्यो नास्तीत्युक्तम् अत एव तद्भजनादधिको धर्मश्च नास्तीत्याह—नाहमिति । इज्या महायज्ञपञ्चकं प्रजातिः प्रकृष्टं जन्म तपोऽनशनादिरूपं शमः इन्द्रियनिग्रहः यथाऽहं गुरुशुश्रूषया तुष्येयं प्रीतः स्यां न तथेज्यादिभिः तुष्येयम् आत्मानं विशिनष्टि—सर्वभूतानामन्तरात्मा ॥ ३४ ॥

किञ्चास्माकं गुरुशुश्रूषणे किमपि दैवादेव सम्पन्नं तत्किं त्वया न स्मर्यत इति पृच्छति—अपि न इति । गुरौ तत्सन्निधौ वसतामस्माकं वृत्तं न स्मर्यते किम् किं तदित्यत आह गुरुदारैरित्यादिना । इन्धनानयने निमित्ते चोदितानामस्माकं कदाचित् कदाचित् ॥ ३५ ॥

अपर्तावपगते ऋतावकाल इत्यर्थः । महारण्यं प्रविष्टानां सतां वातो वर्षश्च तयोः समाहारस्तदभूत् तथा निष्ठुराः स्तनयित्नवः स्तनयित्नुशब्दोऽत्र तद्गर्जितलाक्षणिकः गर्जितानि चाभवन् ॥ ३६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तात्पर्यात्पुनरुक्तं करोति—कच्चिदिति । यतो यस्मिन् गुरुकुलवासे विज्ञेयं विज्ञाय तमसः अज्ञानस्य पारं प्रकृतेर्वा वैकुण्ठमश्नुते ॥ ३१ ॥

इतोऽपि गुरुकुलवासः कर्तव्य इत्याह—स वा इति । यस्माद्द्विजातेः साक्षात्सत्कर्मणां सम्भवो जन्म स गुरुकुले वासो वा इत्यन्वयः, अत्र हेतुमाह—आद्य इति । ज्ञानदो गुरुः आश्रमिणाम् आद्यः हि यस्मात्तस्मात् यथाऽहमिति ॥ ३२ ॥

ज्ञानमपि यन्मुक्तिसाधनं तद्दद्देव गुरुरित्याह—तेत्विति । गुरुणा गुरुत्वेन मयाप्युक्तया वाचा अञ्जः शिक्षिताः ये पुरुषाः भवार्णवं तरन्ति ते त्विह वर्णाश्रमवतां मध्ये अर्थकोविदाः स्वप्रयोजनसम्पादनपटव इत्यन्वयः ॥ ३३ ॥

सर्वेषु साधनेष्वयमेव भगवदनुग्रहान्तरङ्गमित्याह—नेति । इज्या यजनं प्रजनं प्रजातिः सन्ततिजननं "नापुत्रस्य लोकोऽस्ति" इतिश्रुतिः ॥ ३४ ॥

अनुग्रहविशेषस्मरणार्थम् उभयोरनुभूतविशेषं स्मारयति अपीति । गुरौ निवसतां नौ यत्कर्म तत् स्मर्यतामपि स्मर्यते किम् ॥ ३५ ॥

अपर्तौ वर्षाकालमन्तरेण वातयुतवर्षम् ॥ ३६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ननूत्तरः पक्षः सम्भवतु नाम पूर्वस्तु न सम्भवेदित्याशङ्क्याह--यथाहमिति । सवै इत्यत्रापि यत्रेत्यस्य त्रिरावृत्तिः कार्या । यत्र सम्भवो यत्र निमित्ते द्विजातेः सतः यत्रैव च निमित्ते सत्कर्मणां सम्भव इति ॥ ३२—४५ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं स्वतो ज्ञातमप्यर्थं प्रश्नव्याजेन विरक्ततया गृहाश्रमे तिष्ठतीति कृतमुक्त्वा तथाकरणस्य प्रयोजनं स्वभावाद्दासत्या केवलं कृतवानिति श्रुतेपि दोषेणाननुभूय न जानाति अतो विषयतीक्ष्णतामिति मनःप्रत्ययजननार्थं विवाहं कृतवान् यतः इच्छा निवर्त्तते तत इच्छायामपि निवृत्तायां गले पतिता भार्येति उपहसन्निव कृतमभिनन्द्य तेन सह सख्यं स्मारयितुं गुरुकुलवासं बोधयति-कच्चिद्गुरुकुले वासमिति चतुर्भिः । आदौ गुरुकुलवासस्य प्रशंसा निरूप्यते सफलत्वेन महत्त्वे स्मरणं भवति ब्रह्मन्निति सम्बोधनं तत्प्रसादादेव जातमिति बोधयति

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ना आवयोः गुरुकुले वासं किं स्मरसि अनेन बाह्याभ्यन्तरभेदेन यत्किञ्चिदनुभूतं गुरुकुले तत्स्मरणेन कृतार्थता भवतीति ज्ञापितं गुरुकुलस्य प्रतिष्ठामाह—द्विजो विज्ञाय विज्ञेयमिति । विज्ञेय-मात्मानं प्रमाणं च विज्ञाय ज्ञात्वा तमसः पारं भगवन्त मश्नुते "आदित्यवर्णं तमसः परस्तात्" इति श्रुतेः ॥ ३१ ॥

किञ्च गुरुकुलवासो द्विजन्मनां द्वितीयं जन्म तत्र साक्षात् कर्मणां सम्बन्धी सम्यग्भवो यत्रेति तत एव कर्माण्युत्पा द्यन्ते "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते" इति श्रुतेः किञ्च यश्चाश्रमिणामाद्यो भवति गुरुकुले स्थितो ब्रह्मचारी भवति आश्रमाः पुरुषार्थसाधकाः तेषामाद्योऽयं तदभावे कोऽप्याश्रमो न भवेदिति साध्यसाधकत्वेन गुरोरुपयोगमुक्त्वा साक्षाद् ज्ञानसाधकत्वेन पुरुषार्थोपयोगित्वमाह——यथाहं ज्ञानदो गुरुरिति । गुरोः भक्तेरनुभवपर्यवसायित्वात् स्वतु-ल्यता ॥ ३२ ॥

ननूभयोः कथं करणत्वम् अननुगमादित्याशङ्क्याह—नन्वर्थ-कोविदा इति । अर्थे पुरुषार्थे ये पुरुषाः कोविदाः पण्डिताः शीघ्रं पुरुषार्थसिद्धिर्भवत्विति विचारयन्ति तेन ये मया गुरुणा वाचा वाङ्मात्रेणैव अञ्जः अनायासेन भवार्णवं तरन्ति तरि-ष्याम इति निश्चित्य गुरुमेव भजन्ते त एव अर्थकोविदा इत्यर्थः । ब्रह्मन्निति सम्बोधनं सम्मत्यर्थे साधनान्तरव्युदासार्थ-माह—वर्णाश्रमवतामिहेति । अनेन वर्णधर्मा आश्रमधर्माश्च तत्साधका इत्युक्तं भवति ॥ ३३ ॥

एवं प्रसङ्गात् ये केचन संसारतरणोपायाः गुरुसेवाति-रिक्ताः तान् निषेद्धुं गार्हस्थ्यवानप्रस्थसंन्यासानां मुख्यधर्माणां मत्प्रीतिहेतुत्वं नास्तीत्याह—नाहमिज्या प्रजातिभ्यामिति । इज्या यागः प्रजातिः सन्ततिः उभयं गार्हस्थ्यधर्मः ऋणापकरणरूपः तपोवनस्थस्य उपशमः परमहंसस्य एवं त्रिभिरपि अहं न तुष्येयं तत्र हेतुः सर्वभूतात्मेति सर्वभूतेषु आत्मा यस्य यागेन जीवानां नाशः प्रजात्या उत्पत्तिः तेनोत्पत्तिप्रलयौ कुर्वन् मम सन्तोषं न जनयति उत्पादनेनापि जीवः क्लिष्टो भवतीति तपसा शरीरक्लेशः उपशमेन देहेन्द्रियादीनाम् अतः क्लेशकरत्वात् मम न सन्तोषः गुरुशुश्रूषायां तु स्नेहे सेवया सेवकस्यानन्दः गुरो-श्चेति अतोऽहं तुष्येयं वेदाध्ययनस्यैव ऋणापकरणरूपत्वात् सेवा अधिकैव यद्यप्यङ्ग ! भावेनैव सेवाया विनियोगः तथापि भक्त्या कृतः मत्प्रीतिहेतुरपि भवति संयोगपृथक्त्व—न्यायेन ॥ ३४ ॥

एवं गुरुकुलवासं स्तुत्वा तं स्मारयित्वा आवयोर्वासः सेवार्थं परमक्लेशं सम्पादितवानिति सेवाविशेषं स्मारयति-अपि नः स्मर्यते ब्रह्मन्निति नवभिः । त्रिगुणकार्यमेतदिति नोऽस्माकं सम्बन्धि वक्ष्यमाणं स्मर्यते अपीति सम्भावनायां ब्रह्मन्नित्यम-सूयार्थं गुरौ निवसतां व्रतस्थानां गुरुवाक्यत्वात् गुरुपुत्रगुरुपत्नी-वाक्यमपि कर्तव्यमिति अत एव गुरुदारैः प्रेरितानामिन्ध-नानयने अरण्यादिन्धनमानीयतामिति कश्चित् कदाचित् विषम-समये ॥ ३५ ॥

तत उत्कृष्टे इन्धनार्थं महारण्यं प्रविष्टानाम् अपर्तौ वर्षाति-रिक्तकाले शिशिरे द्विजेति सम्बोधनं जन्मभूमिः सेति ज्ञाप-नार्थं सुमहद्वातवर्षमभूत् निष्ठुराश्च स्तनयित्नवः गर्जितानि नैष्ठुर्यं कर्णासह्यम् ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मामतिनीचमपि यदेवं सम्मानयति तन्मां परिचित्यान्यस्य कस्यचिद्भ्रान्त्या वेति मनसि सन्दिहानस्य तस्य सन्देहापगमार्थं गुरुकुलवासं स्मारयति—कच्चिदिति द्वादशभिः । नो आवयोः विज्ञेयं भगवत्तत्त्वं तमसः संसारस्य ॥ ३१ ॥

इह खलु पिता उपनेता मदीयतत्त्वोपदेष्टा चेति त्रय एव गुरवो भवन्ति तेष्वन्त्य एवातिपूजनीय इत्याह—स वा इति । इह संसारे यत्र सम्भवो जन्ममात्रं स आधानकर्त्ता पिता तावदाद्यो गुरुः । यत्र द्विजातेः सतः पुंसः सत्कर्मणां सम्भवः स उपनेता सावित्र्युपदेष्टा द्वितीयो गुरुः यस्तु आश्रमिणाम् आश्रमिभ्यश्चतुर्थ्य एव ज्ञानदः मत्तत्त्वोपदेष्टा स यथाहं मत्तुल्यत्वेनातिपूजनीय इत्यर्थः ॥ ३२ ॥

तृतीयो गुरुरेव संसारात्तारयतीत्याह—ननु निश्चितमेव वर्णाश्रमवतां मध्ये ते एव अर्थकोविदाः ये मया मद्रूपेण मत्तत्त्वोपदेष्ट्रा गुरुणा वाचा मन्मन्त्रोपदेशमात्रेणैवाञ्जः सुखे-नैव भवार्णवं तरन्ति ॥ ३३ ॥

तस्मान्मदुपदेष्टा गुरुरेवातिशयेन शुश्रूषणीय इत्याह—नाह-मिति । इज्या होमो ब्रह्मचारिधर्मः प्रजातिः प्रजापुत्रोत्पादनं गृहस्थधर्मः ताभ्यां तपसा वनस्थधर्मेण उपशमेन यतिधर्मेण वा अहं परमेश्वरस्तथा न तुष्येयं यथा सर्वभूतानामात्माऽपि गुरु-शुश्रूषया ॥ ३४ ॥

गुरौ निवसतामस्माकं यद्वृत्तं तत्किं स्मर्यते ॥ ३५ ॥

अपर्तौ अपगतवर्षर्तौ शीतकाल इत्यर्थः । स्तनयित्नवो गर्जन-वन्तो मेघः ॥ ३६–३७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं सर्वज्ञोपि लीलासौष्ठवार्थं तद्गार्हस्थ्यं सम्भाव्य गुरु-कुलवासं स्मारयति—कच्चिदित्यादिना । नौ आवयोः गुरुकुले वासं स्मरसि कच्चित् यतः वासात् निज्ञेयं यद्विज्ञानेन आत्मा-नात्मपरब्रह्मरूपादि विज्ञातं भवति तत्परं ब्रह्म विज्ञाय तेन सः प्रकृतेः पारं मोक्षमश्नुते प्राप्नोति ॥ ३१ ॥

गुरवस्त्रयः पितृउपनेतृमत्तत्त्वोपदेष्टृभेदात् तत्र मत्तत्त्वोपदेष्टा मदभिन्न एवेत्याह—इह संसारे यत्र सम्भवो जन्म स जनयिता ताव-दाद्यः प्रथमो गुरुः पूज्यः द्विजातेः सतः पुंसः सत्कर्मणां यत्र सम्भवः उपनीय वेदाध्यापकः यथाहं मत्सदृशो द्वितीयो गुरुः आश्रमिणां सर्वेषां यथाऽधिकारं ज्ञानदो मत्स्वरूपादि-विषयकबोधप्रदो यः स तु साक्षादहमेवेति ॥ ३२ ॥

मज्ज्ञानप्रदेन गुरुणा जनाः भवार्णवं तरन्ति तस्य सर्व-श्रेष्ठत्वे हेतुमाह—नन्विति । इह वर्णाश्रमवतां मध्ये ये जाता इति शेषः । ते गुरुणा मदात्मयाथात्म्योपदेष्ट्रा वाचा मद्वि-षयकेन श्रोतव्येन वाक्येन मन्त्रादिरूपेण वेदान्तवाक्यकद-म्बेन च अर्थेषु उपास्योपासककृपाफलभक्तिरसाविरोधिसंज्ञकेषु

सूर्यश्चास्तङ्गतस्तावत्तमसा चावृता दिशः ।
निम्नं कूलं जलमयं न प्राज्ञायत किञ्चन ॥ ३७ ॥
वयं भृशं तत्र महानिलाम्बुभिर्निहन्यमाना मुहुरम्बुसम्प्लवे ।
दिशोऽविदन्तोऽथ परस्परं वने गृहीतहस्ताः परिबभ्रिमातुराः ॥ ३८ ॥
एतद्विदित्वा उदिते रवौ सान्दीपनिर्गुरुः ।
अन्वेषमाणो नः शिष्यानाचार्योऽपश्यदातुरान् ॥ ३९ ॥
अहो हे पुत्रका यूयमस्मदर्थेऽतिदुःखिताः ।
आत्मा वै प्राणिनां प्रेष्ठस्तमनादृत्य मत्पराः ॥ ४० ॥
एतदेव हि सच्छिष्यैः कर्तव्यं गुरुनिष्कृतम् ।
यद्वै विशुद्धभावेन सर्वार्थात्मार्पणं गुरौ ॥ ४१ ॥
तुष्टोऽहं भो द्विजश्रेष्ठाः सत्याः सन्तु मनोरथाः ।
छन्दांस्ययातयामानि भवन्त्विह परत्र च ॥ ४२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

कोविदाः व्युत्पन्नाः सन्तः भवार्णवं नूनं निश्चितम् अस्तरन्तीत्यन्वयः॥ ३३ ॥

मत्स्वज्ञानप्रदगुरुशुश्रूषयाऽहं प्रीतः स्यामित्याह, नाहमिति इज्या गृहस्थधर्मः प्रजातिः प्रकृष्टं जन्मोपनयनं तेन ब्रह्मचारिधर्म उपलक्ष्यते नाप्यहम् तपसा वनस्थधर्मेण उपशमेन यतिधर्मेण च अहं तथा न तुष्येयं प्रीतः स्याम् यथा सर्वभूतात्मापि गुरुशुश्रूषया गुर्वाज्ञानुवृत्त्येत्यर्थः॥ ३४ ॥

किञ्च नः अस्माकं गुरौ वृत्तम् अनुकूलाचरणरूपं चेष्टितं त्वया स्मर्यते कच्चिदावश्यके कार्ये इन्धनानयने निमित्ते चोदितानां प्रवर्तितानाम् ॥ ३५ ॥

अपर्त्तौ अपगते ऋतौ अकाले तीव्रम् उल्वणम् वातेन सह धर्षं महदभूत् तथा स्तनयित्नवो गर्जितानि अभूवन् ॥ ३६ ॥

भाषा टीका।

हे ब्राह्मन्! हम दोनों के गुरू कुल वास कों आप कभी स्मरणकरते हो जिस गुरू से ज्ञातव्य परमात्मतत्त्व कें जानकर द्विज संसार के अन्तको प्राप्त होजाता है ॥ ३१॥

हे मित्र! इस संसार में जिससे जन्म मात्र होता है वह पिता प्रथम गुरु है और द्विजको उपनयन संस्कार कर के जो वेदका अध्यापक है वह द्वितीय गुरु होता है और जो चारों आश्रमियोंको ज्ञान देने वारा है वहतो साक्षात् जैसे मैं सर्वेश्वर गुरु हूं तैसेहि गुरु भाव से पूजनीय है ॥ ३२ ॥

हे ब्रह्मन्! इस लोक में जो गुरु मूर्त्ति मेरे उपदेश मात्र कर के परिश्रम के विना संसार समुद्रको तिरते हैं वेहि विवेकी जन वर्णाश्रमियों के मध्य में निज प्रयोजन के विषय कुशल हैं॥ ३३ ॥

यद्यपि मैं सब प्राणियोंका आत्मा हुं इस कारण सब प्राणी मेरे शरीर हैं तथापि गुरू की परिचर्य्या करनेसे जैसा मैं प्रसन्न होता हूं तैसे गृहस्थ के पंचमहा यज्ञादि धर्म में तथा ब्रह्मचारी के उपनयनादि धर्म से वानप्रस्थ के तप में सन्यासी के शमदमादि धर्म से मैं प्रसन्न नहि होता ॥ ३४ ॥

हे ब्रह्मन्! आप मैं बलदेवजी हम सब जब गुरूजी के समीप मे निवास करते रहें तब कदाचित् गुरूजी की भार्य्या ने हम कों इन्धन लाने के वास्ते आज्ञा करी रहो हमारे उस वृत्तांत का आपको स्मरण होताहै ॥ ३५ ॥

जब गुरूजी की भार्य्या की आज्ञा से हमलोग घोर वनमे प्रविष्ट होगए तब हे द्विज वर्षा ऋतु के निवृत्त होनेपर शीत काल मे महान् दुःसह पवनसहित वर्षा भई और भी दुःसह ये घन की गर्जना भई ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

निम्नं कूलं नतमुन्नतंञ्च स्थानम ॥ ३७ ॥

अम्बूनां संप्लवो व्यामिश्रणं यस्मिन्नेकोदके तस्मिन् वने इत्यर्थः। परिबभ्रिम "भृञ् भरणे" इति धातोरूपम् परि परितः बभ्रिम इडागमश्छान्दसः भारान् धृतवन्त इत्यर्थः॥ ३८—३९ ॥

उवाच कृपया श्लोकत्रयीम यया वयं कृतार्था इत्याह—अहो इति आत्मा देहः॥ ४० ॥

गुरोर्निष्कृतं प्रत्युपकारः सर्वे अर्थाः यस्मात्स आत्मा देहस्तस्यार्पणं विनियोगः ॥ ४१ ॥

अयातयामानि यातो यामो यस्य पक्वस्यान्नस्य तद्वत्सारं

श्रीधरस्वामिकृतभावार्थदीपिका ।

भवति ,तद्वदन्यदपि गतसारं गौण्यावृत्त्या यातयाममित्युच्यते अगतसाराणि छन्दांसि मत्तोऽधीयमानानि भवन्त्वित्यर्थः ॥ ४२॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

चकाराभ्यां द्वयोरपि प्राधान्यं यौगपद्यात् निम्नं नीचं स्थानं कूलं च तदुन्नतं किञ्चानेन प्रकर्षेणाज्ञायत किञ्चिदपि सम्यक् न ज्ञातमस्माभिः यतो जलमयं जलेन प्लावितमित्यर्थः ॥ ३७ ॥

परितो बभ्रिम बभ्रमिमेत्यर्थः । भ्रमधातोरुपलोप आर्षः ॥ ३८ ॥

एतदस्मद्दुःखं विदित्वा वितर्क्य गुरुर्महानपि ॥ ३९ ॥

अहो इति य आत्मा प्राणिनां प्रेष्ठस्तमप्यनादृत्य मत्पराः सन्तो यूयमस्मदर्थे दुःखिता जाता इत्यर्थः । मदित्येकत्वं निर्दिशन्नप्यस्मदिति बहुत्वं निर्दिशन्मत्सम्बन्धिष्वपि तत्परा जाता इति व्यनक्ति स्म ॥ ४० ॥

अतो गुरुसेवा युष्माकं सुसम्पन्नेत्याह इयदिति ॥ ४१ ॥

अतो वो युष्मभ्यं तुष्टोऽहं किञ्च छन्दांसीति अयातयामानि अजीर्णानि अभुक्तानि अविस्मर्यमाणानीत्यर्थः "जीर्णं च परिभुक्तं च यातयाममिदं द्वयम्" इत्यमरनानार्थात् ॥ ४२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आत्मा वै इति शरीरम् ॥ ४०—४१ ॥

अयातयामानि वीर्यवन्ति प्रदोषरहितानि ॥ ४२—४४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तावत्तथैव सूर्योऽस्तङ्गतश्च अत एव दिशस्तमसा व्याप्ताः निम्नोन्नतं कूलमुन्नतञ्च स्थलं जलमयं हेतुगर्भमेतत् न प्राज्ञायत न ज्ञातमभूत् ॥ ३७ ॥

वयमिति । अम्बूनां सम्प्लवे प्रवाहे महानिलैरम्बुभिश्च हन्यमानाः पीड्यमाना दिशोऽविदन्तः अतः अजानन्तः एवातुराः परस्परं गृहीताः हस्ताः यैः ते वयं वने परिबभ्रिम परितो बभ्रिम इन्धनभारान् धृतवन्त इत्यर्थः । पर्यचरामेति वा उपसर्गवशाद्भ्रमणार्थत्वात् इडार्षः ॥ ३८ ॥

एतदिति । एतदस्माकं कृच्छ्रं विदित्वा सूर्ये उदिते सत्यन्वेषमाणो नोऽस्मानपश्यत् दृष्ट्वा चाब्रवीदित्यर्थः ॥ ३९ ॥

तदेवाह—अहो इति त्रिभिः । हे पुत्रकाः ! देहिनामात्मा देहः प्रेष्ठः प्रियतमस्तथापि तमात्मानमनादृत्य मत्पराः मत्सेवापराः मत्प्रयोजनार्थमतीव दुःखिता इत्यर्थः ॥ ४० ॥

इयदेवेति । सच्छिष्यैः गुरोः कर्त्तव्यं निष्क्रियं प्रत्युपकारः इयदेवैतावदेव कियत् यद्विशुद्धभावेन निष्कपटभावेन सर्वथा सर्वप्रकारेण आत्मार्पणं देहसमर्पणमित्येतावत् "शरीरमर्थं प्राणांश्च सद्गुरुभ्यो निवेदयेत्" इत्युक्तेरिति भावः ॥ ४१ ॥

तुष्ट इति । हे द्विजश्रेष्ठाः ! द्विजशब्दस्य त्रैवर्णिकपरत्वादेवं सम्बोधनं वो युष्मभ्यमहं गुरुः सन्तुष्टः अतो युष्माकं मनोरथाः अपेक्षाः सत्याः सफलाः सन्तु किञ्च छन्दांसि मत्तोऽधीता वेदाः इह परत्र च लोके अयातयामान्यगतसाराणि सफलानि ऐहिकामुष्मिकापेक्षितफलजननसमर्थानि भवन्तु इत्यर्थः ॥ ४२॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इदं निम्नमिदं कूलमिति किञ्चन स्थूलजलप्रवाहेण न प्राज्ञायत न ज्ञातमभूत् ॥ ३७ ॥

अम्बुसम्प्लवे जलप्रवाहे दिशोऽविदन्तः अजानन्तः परिबभ्रिम परितो भ्रान्ता बभूविम ॥ ३८ ॥

विदित्वा उदित इत्यनेन दुःखातिशयं दर्शयति—कथमेतदत्राह—अहो इति ॥ ३९ ॥

आत्मा देहः ॥ ४० ॥

गुरुनिष्कृतं गुरुप्रत्युपकारः सर्वोऽर्थो यस्मात्स तथा सर्वार्थ-आत्मा शरीरं तस्यार्पणं यत्तत् ॥ ४१—४२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एतस्मिन्नन्तरे सूर्यश्चास्तङ्गतः तमसा दिशश्चावृताः तथापि कथं नागतमित्याकाङ्क्षायामाह-निम्नं कूलं जलमयमिति । नद्याः कूलं सर्वमेव जलमयं कियती नदी कियती भूमिरिति ज्ञातुमशक्यं ततः क्षिप्रोत्तरणार्थं न प्राज्ञायत कमप्युपायं न ज्ञातवन्तः ततस्तत्परपार एव रात्रौ स्थिता इति ॥ ३७ ॥

क्लेशस्थितिं स्मारयति—वयं भृशमिति । वयं त्रयोऽपि तत्रैवारण्यदेशे अनन्तमहानिलाम्बुभिः नितरां हन्यमानाः उपवेशनार्थमपि भूमिर्नास्तीत्याह—अम्बुसम्प्लव इति । ततो दिशोऽप्यविदन्तः एवं जाते किं कर्त्तव्यमिति विचार्य अथ भिन्नप्रक्रमेण अतःपरं गमनार्थे प्रयत्नो न कर्त्तव्यः किन्तु कालक्षेप एवेति विचार्य अन्योन्यविश्लेषाभावाय गृहीतहस्ताः सन्तः तस्मिन् वने आतुरा दीनाः क्षुधिताः सन्तः परिबभ्रिम इतस्ततो भ्रमणमेव कृतवन्तः ॥ ३८ ॥

तर्हि निर्दयो गुरुः कथं तत्र वासः कृत इति चेत्तत्राह एतद्विदित्वेति । गुरोरपि हृदये अयमस्मत्क्लेशो भात एव अत एवानुदित एव रवौ सान्दीपिनिर्गुरुः गृहान्निर्गतः नः अस्मान् अन्वेषमाणः आतुरान्वेपमानानपश्यत् ॥ ३९ ॥

ततो दया परमा तस्योत्पन्नेत्याह—अहो इति । एतदर्थमेव भगवतैवैवं सम्पादितं विद्या हि वेधन्यायेन गुरौ स्थिता अतिमन्थनात् प्रादुर्भूता शिष्ये समायाति तत्र मथनस्थानीया परमा दया अहो इत्याश्चर्ये हे पुत्रका इति दयया जातस्नेहात् सम्बोधनं पुत्रकाः पुत्रप्रायाः अनेन भवतामेव गृहमिति स्वार्थमेवैतत् क्रियते इत्याश्वासनमप्युक्तं तेषां दुःखं निरुक्तं गच्छतीत्यनुवदति—अस्मदर्थेऽतिदुःखिता इति । ननु व्रतं क्रियते कथं दुःखमिति चेत्तत्राह—आत्मा वै प्राणिनां प्रेष्ठ इति । "द्रव्यसंस्कारविरोधे द्रव्यं बलीयान्" इति न्यायेन शरीरव्रतयोर्विरोधे

इत्थंविधान्यनेकानि वसतां गुरुवेश्मसु ।
गुरोरनुग्रहेणैव पुमान् पूर्णः प्रशान्तये ॥ ४३ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

शरीरमेवादरणीयं तत्रापि स्नेहपात्रं विधिस्नेहयोः स्नेहो बलिष्ठ इति एवं वैदिकलौकिकन्यायांल्लङ्घनमपि कृत्वा यतो मत्परा जाताः तदाह—आत्मा देहः प्राणिनामतिप्रेष्ठः तमनादृत्य मत्परा जाता इति ॥ ४० ॥

तर्हि विरुद्धाचरणात् कथं भवान् प्रसन्न इत्याशङ्क्याह—इयदेव हीति । सच्छिष्यैरलौकिकैः इयदेव तावदेव गुरुनिष्कृतं गुरोः प्रत्युपकारः तदाह—यद्विशुद्धभावेन सर्वस्यार्थस्य आत्मनश्च समर्पणं वै निश्चयेन ॥ ४१ ॥

ननु केनचिद्व्याजेन तद्भवद्भिः कृतमित्यहं तुष्टः यावदुक्तं निष्कपटतया कृतमिति सम्बोधनेनैव तोषफलमाह—हे द्विजश्रेष्ठा इति । श्रैष्ठ्यं भवतु व्रतस्य सर्वोत्कर्षः सम्पद्यतामित्यर्थः । यदर्थं च व्रतं कृतं तद्दानमाह, सत्याः सन्तु मनोरथा इति । पठितानां विद्यानाञ्च अयातयामत्वमाह— छन्दांस्ययातयामानीति ।

अम्नाया तु विनिर्मुक्ता अनध्याये तथा स्मृताः ।
अयाज्ये योजिताश्चैव निषिद्धा येच पाठिताः ॥
फलार्थे योजिता दृष्टा यातयामा भवन्ति हि ।
अन्यथा ज्ञातरूपाश्च अन्यथार्थप्रबोधिताः ॥
अव्रतैः शूद्रसङ्काशे पातित्याद्याकुले स्थले ।
आधीताः सर्वथैवैते यातयामा भवन्त्विति ॥

तेष्वपि समयेषु मत्प्रसादादयातयामा मा भवन्त्विति वरः इह परत्रेति परलोकार्थमिह लोकार्थंच स्वार्थे स्थापिताः परलोकार्थे भवन्ति विनियुक्तास्त्वैहिकफलाः भवतां तूभयत्रापि फलसाधका भवन्त्वित्यर्थः चकारात् सर्वकर्मस्वपि ॥ ४२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

परिबभ्रिम परितो भ्रमणं करवाम इन्धनभारमवहाम वा भ्रमधातोर्भ्रमणार्थः छान्दसः प्रयोगः ॥ ३८—३९ ॥

उवाच चेत्याह त्रिभिः—अहो इति ॥ ४० ॥

गुरोर्निष्कृतम् ऋणशोधनं सर्वोऽर्थो ममतास्पदम् आत्मा अहन्तास्पदञ्च तयोरर्पणम् ॥ ४१ ॥

अयातयामानि अगतसाराणि "जीर्णञ्च परिभुक्तं च यातयाममिदं द्वयम्" इत्यमरः ॥ ४२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

निम्नं कूलं नतमुन्नतं च स्थानम् ॥ ३७ ॥

भृशमत्यर्थं मुहुः महानिलैरम्बुभिश्च हन्यमानाः पीड्यमानाः अम्बूनां सम्प्लवाः प्रवाहाः यस्मिन् तस्मिन् वने दिशोऽविद्वन्तः इन्धनभारान् धृतवन्तः "भृञ् भरणे" इत्यस्य रूपम् । इदा गमदछान्दसः ॥ ३८—३९ ॥

उवाचेत्याह—अहो इत्यादिना ॥ ४० ॥

सच्छिष्यैः कर्तव्यं गुरोर्निष्कृतं प्रत्युपकारः एतदेव किम् यद्विशुद्धभावेन सर्वोऽर्थश्च आत्माच तयोर्गुरौ अर्पणमिति ॥ ४१ ॥

मनोरथाः वाञ्छितार्थाः युष्माकं सत्याः सन्तु किञ्च छन्दांसि मत्तोऽधीता वेदाः इह लोके परत्र परलोके च अयातयामानि अगतसाराणि यथेष्टफलदानि भवन्तु ॥ ४२ ॥

भाषा टीका ।

उक्त वर्षा होने पर सूर्य्य अस्त होगया, तथा विशाल में अन्धकार छाय गया, सबकूं जलमय होने से नीचा ऊंचा स्थान कुछ भी नहिं जान पडा ॥ ३७ ॥

जल के प्रवाह युत वन में महान् पवन से और जलसे अत्यन्त पीडित तथा दिशान को नहि जानत व्याकुल चित्त, परस्पर में हस्त गृहण किये हमलोग, वारम्वार भ्रम ते रहे ॥ ३८ ॥

सान्दीपिनी गुरूजी, ईंधन के लिये हमारे गमन को जान कर, सूर्य्य के उदय होने पर वन में, हम शिष्य लोगन का खोज करते २ आचार्य्यजी, हम लोगन को व्याकुल देखते भए ॥ ३९ ॥

देख कर बोले, कि—हाय कष्ट, हे पुत्रओ! तुम सब हमारे प्रयोजन के वास्ते अत्यन्त दुखी होगए, सब प्राणिओं को अपना शरीर अत्यन्त प्यारा है यह निश्चित है उस का अनादर करके आप लोग हमारी सेवा में परायण हो ॥ ४० ॥

सज्जन शिष्यों को गरू का उपकार इतना हि कर्तव्य है, कि—निष्कपट प्रेम से अपने सब धन और शरीर का गुरु के अर्थ, समर्प्पण कर देना ॥ ४१ ॥

हे द्विज श्रेष्ठ ओ! मैं तुम्हारे ऊपर प्रसन्नहों तुम्हारे सबहि मनोरथ सफल होजावें और तुम्हारे पढे भए वेद यालोक परलोक के सकल फल देनेमें समर्थ होजावे ॥ ४२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

इत्थंविधान्येवम्प्रकाराण्यनेकानि वृत्तानि किं त्वया स्मर्यन्ते इति शेषः । फलितमुपसंहरति—गुरोरिति ॥ ४३ ॥

ब्राह्मण उवाच ।

किमस्माभिरनिर्वृत्तं देवदेव जगद्गुरो ।

भवता सत्यकामेन येषां वासो गुरावभूत् ॥ ४४ ॥

यस्यच्छन्दोमयं ब्रह्म देह आवपनं विभो ।

श्रेयसां तस्य गुरुषु वासोऽत्यन्तविडम्बनम् ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे

श्रीदामचरिते

अशीतितमोऽध्यायः ॥ ८० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अस्माभिः किमनिर्वृत्तमसम्पन्नं येषामस्माकं भवता सह वासोऽभूत् ॥ ४४ ॥

भवतस्तु सर्वमेतद्विडम्बनमात्रमित्याह—यस्येति । छन्दोमयं वेदाख्यं ब्रह्म तथा श्रेयसामावपनं तदुद्भवस्थानं देहो मूर्तिर्यस्य तस्य तव ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अशीतितमोऽध्यायः ॥ ८० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इत्थमित्युक्तकम् । गुरोरित्यपि सर्वकामपूर्णो भवति प्रशान्तये प्रकृष्टसुखस्वरूपाय मोक्षाय श्रीभगवदनुभवाय च भवतीत्यर्थः ॥ ४३ ॥

संक्षेपेण सर्वोत्तरमाह—किमिति द्वाभ्याम् । अस्माभिर्हेतुभिः किमनिर्वृत्तं किन्त्वस्माकं भवता पृष्टमपृष्टं सर्वमेव सुसम्पन्नमित्यर्थः । तत्र हेतुमाह—देवदेवेत्यादिसम्बोधनाभ्यां तथा सत्यकामेनेति च ॥ ४४ ॥

तर्हि वेदाध्ययनादिना किं तत्राह—यस्येति । छन्दोमयं वेदप्रधानं तदेकगम्यम् अत एव श्रेयसां सर्वपुरुषार्थानाम् उद्भवस्थानं च यद्वस्तु तदेव यस्य देहः अत्यन्तविडम्बनम् अनुकरणमात्रं लीलाकौतुकमेवेति यावत् ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
अशीतितमोऽध्यायः ॥ ८० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आवपनं पुरुषार्थानामास्थानम् उत्पत्तिभूमिः छन्दोमयं ब्रह्म ॥ ४५ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
अशीतितमोऽध्यायः ॥ ८० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थमिति । गुरुवेश्मनि स्वाचार्यगृहेषु वसतामस्माकम् एवम्विधान्यनेकानि वृत्तानि किं त्वया न स्मर्यन्त इति शेषः फलितमाह—गुरोरिति । अनुग्रहेणैवेत्येवकारेण उपायान्तरव्यावृत्तिः पूर्णः पूर्णमनोरथः स्यादिति लक्ष्यत इत्यर्थः ॥ ४३ ॥

इत्थमुक्तः प्राह कुचेलः-किम्निति । हे देवदेव ! हे जगद्गुरो अस्माभिरनिर्वृत्तमसम्पन्नमस्माकं दुर्लभ्यं किं न्वास्ति न किमपीत्यर्थः तत्र हेतुं वदन्नात्मनो विशिनष्टि येषामस्माकं सत्यकामेन भवता सह गुरुकुले वासो बभूव तैरस्माभिरिति सम्बन्धः सत्यकामस्य तव गुरुकुलवासः केवलमस्मन्मनोरथपूरणार्थ एवेति भावः ॥ ४४ ॥

अन्यथा न घटत इत्यभिप्रयन्नाह—यस्येति । छन्दोमयं वेदरूपं ब्रह्म यस्य देहः विग्रहः श्रेयसां पुरुषार्थानामावपनम् उत्पत्तिभूमिः तस्य तव गुरुषु गुरुगृहेषु वासोऽत्यन्तविडम्बनमभिनयमात्रं विडम्बनेनास्मन्मनोरथः पूर्णार्थः अन्यथा सर्वविद्यास्थानतत्त्वबोध्यपुरुषार्थमत्तुष्ट्यवपुष्कशीलशरीरस्य तव न घटत इत्यर्थः ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अशीतितमोऽध्यायः ॥ ८० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उक्तमतिविशति-इत्थमिति । इत्थंविधान्यनेकानि व्यसनान्यासन्निति शेषः । तानि व्यसनानि गुरोरनुग्रहेण निस्तीर्य पुमान् प्रशान्तये प्रकृष्टसुखवृत्तये पूर्णः कृतार्थः स्यात् ॥ ४३ ॥

अस्माभिर्गुरुकुलवासे इदं कृतमिति विशेष्य किं वक्तव्यं सर्वमप्यनुष्ठितमिति ब्राह्मण आह—किमिति । सत्यकामेन भवता सह येषां नो गुरुकुलवासोऽभूत्तैरस्माभिः गुरुकुलवासे किमनिर्वृत्तं न कृतं किं सर्वं मया चीर्णमेव ॥ ४४ ॥

किन्त्वेवमस्माकं युक्तं तव तु अत्यन्तविडम्बनमित्याह यस्येति । छन्दोमयं वेदमुख्यप्रतिपाद्यम् आवपनं जगदुत्पत्तिक्षेत्रं ब्रह्म यस्य तव देहः स्वरूपं तस्य तव योयं गुरुषु वास

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सोऽयमत्यन्तविडम्बनम् अनुकार इति ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अशीतितमोऽध्यायः ॥ ८० ॥
( श्रीविजयध्वजतीर्थरीत्या अष्टनवतितमोऽध्यायः ॥ ९८ ॥ )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
अशीतितमोऽध्यायः ॥ ८० ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
अशीतितमोऽध्यायः ॥ ८० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

इदमेकं फलसाधनरूपं चरित्रमुक्त्वा नैतावदेवेत्याह—इत्थंविधान्यनेकानीति । गुरुवेश्मसु वसतां भवन्ति गुरुवासस्य नित्यत्वमाह—गुरोरनुग्रहेणैवेति । न केवलं वासेन पुमान् पूर्णो भवति सर्वार्थैः प्रशान्तः एव भवति स्वाभाविकाः कामादयः तदुत्पन्नैर्न शान्ता भवन्ति किन्तु गुर्वनुग्रहेणैव भगवता कृतस्मरणेन वा प्रशान्त एव पूर्णः समर्थः एवमुपाख्यानैः सर्वे पुरुषार्थास्त्वया साधिता नवेति प्रश्नः ॥ ४३ ॥

तत्रोत्तरमाह—किमस्माभिरनिर्वृत्तमिति । को वा पुरुषार्थोऽस्माभिर्नोत्पादितः परं विशेषोऽस्तीत्याह—भगवता सह येषां गुरौ वासो भवेदित्यर्थः । गुरुगृहवासनानन्तरं तत्प्रसादेच जाते पश्चात्सर्वे पुरुषार्थाः साधयितुं शक्यन्ते अस्माभिस्तु गुरुकुल एव पुरुषार्थस्वरूपेण त्वया सङ्गताः अतो गुरुकुलवासोऽस्माकमेव सफलो जातः नत्वन्येषामिति अस्माभिः किं न निर्वृत्तं नापि तत्तन्मन्त्रदेवतानां तृप्तिः प्रयोजिका मृग्यते यतो भवानेव देवहेतवः नापि गुरुप्रसादो मृग्यते यतो भवानेव जगद्गुरुः किञ्च भवान् सत्यकामः अस्मत्सङ्गेऽध्ययनयुक्तानामस्माकञ्च लोकन्यायेन सर्वे पुरुषार्थाः सिद्धा भवन्त्विति भवतः कामः सत्य एव भवतीति भवदिच्छयैवास्माकं सर्वे पुरुषार्थाः सिद्धा इत्यर्थः । अतस्त्वया सह गुरुगृहवासः पुरुषार्थः तत्साधनञ्च ॥ ४४ ॥

किञ्च यदुक्तमस्माकं सर्वेषां गुरुगृहवासं स्मरसीति तत्र स्वामिनस्तत्र वासः अनुकरणार्थमेव भवतीत्याह—यस्य छन्दोमयं ब्रह्मेति । वेदात्मकब्रह्मशब्दब्रह्मेति यं विदुः तस्य देहः ब्रह्माध्ययनार्थं गुरुगृहवासोऽपेक्ष्यते ननु कथं मम देहः जीवविशेष एव कश्चित्तत्राधिष्ठितो भवेदिति तत्राह—विभोरिति । भवानेव तमधिष्ठातुं शक्तः देशकालपुरुषानन्त्येष्वधिष्ठितस्य फलदानं व्यापकाधिष्ठानव्यतिरेकेण न भवतीति तस्यैव फलसाधकत्वमाह—श्रेयसामावपनमिति । श्रेयांस्यस्मिन्नां समन्तादुप्यन्त इति एतादृशदेहवतः तव गुरुषु वासोऽत्यन्तं विडम्बनमनुचितानुकरणमित्यर्थः ॥ ४५ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे
एकत्रिंशाध्यायविवरणम् ॥ ३१ ॥ ८० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अनेकानीति वृत्तान्यभूवन्निति शेषः ॥ ४३ ॥

किम् अनिर्वृत्तम् अपितु सर्वमेव निर्वृत्तं सुसम्पन्नमित्यर्थः । सत्यकामेन सत्यसङ्कल्पेनेति भवतो गुरुकुलवासः स्वेच्छाधीनः समिद्वहने वातवर्षादिकृच्छ्रमपि गुरुभक्तिज्ञापकस्य तव स्वेच्छाधीनमेवान्यथा वातादीनां का खलु त्वयि शक्तिः "भीषास्माद्वातःपवते" इत्यादिश्रुतेः । अस्माकं तु तत्र त्वत्साहित्यं महाभाग्यफलमिति भावः ॥ ४४ ॥

छन्दोमयं ब्रह्मैव यस्य तव देहः श्रेयसां सर्वेषाम् आवपनं क्षेत्रम् ॥ ४५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
दशमेऽशीतितमः सङ्गतस्सङ्गतस्सताम् ॥ ८० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इत्थम्विधान्यनेकानि ईदृशानि बहूनि वृत्तानि अभूवन्निति शेषः फलितमाह गुरोरिति ॥ ४३ ॥

अस्माभिरनिर्वृत्तमसम्पन्नं किमपि तु सर्वं निर्वृत्तमेव भवता सह येषामस्माकं वासो गुरावभूत् ॥ ४४ ॥

श्रेयसां श्रेयस्साधनानां ज्ञानादीनामावपनं क्षेत्रं ज्ञापकमित्यर्थः । एवम्भूतं छन्दोमयं वेदाख्यं ब्रह्म देहः प्रकाश्यं तस्य स्वतस्सिद्धज्ञानस्य गुरुषु वासः अत्यन्तं विडम्बनं लोकसङ्ग्रहार्थमिति फलितार्थः ॥ ४५ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अशीतितमाध्यायार्थप्रकाशः ॥ ८० ॥

---

भाषाटीका ।

गुरुजी के गृहन में निवास करते समय हमारे इस प्रकार के अनेक वृत्तान्तों का आप को स्मरण होता है । बहुत कहने से क्या है गुरुन की कृपा से ही शिष्य, इस लोक में पूर्ण कामना वारा होकर मुक्ति के अर्थ समर्थ होता है ॥ ४३ ॥

भाषा टीका ।

ब्राह्मण उवाच ।

हे देव देव ! हे जगद्गुरो आप सत्य काम के साथ गुरु समीप में जिनका निवास भया, उन हमको कौनसा फल नहि प्राप्त भया, सब हि फल की प्राप्ति होगई ॥ ४४ ॥

हे विभो धर्म. अर्थ. काम. मोक्ष सब हि फलकी उत्पत्ति का स्थान वेद रूप ब्रह्म, जिसका शरीर है उस आप का गुरुन के समीप में वेद पढने के वास्ते निवास होना वह केवल हमारी शिक्षा के लिये अत्यन्त लीला रूप है ॥४५॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धमें अस्सीके अध्यायकी
भाषाटीका समाप्ता ॥ ८० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे अशीतितमोऽध्यायः ॥ ८० ॥

# एकाशीतितमोऽध्यायः ।

श्रीशुक उवाच ।

स इत्थं द्विजमुख्येन सह सङ्कथयन् हरिः ।
सर्वभूतमनोऽभिज्ञः स्मयमान उवाच तम् ॥ १ ॥
ब्रह्मण्यो ब्राह्मणं कृष्णो भगवान् प्रहसन् प्रियम् ।
प्रेम्णा निरीक्षणेनैव प्रेक्षन् खलु सतां गतिः ॥ २ ॥

श्रीभगवानुवाच ।

किमुपायनमानीतं ब्रह्मन् मे भवता गृहात् ।
अण्वप्युपाहृतं भक्तैः प्रेम्णा भूर्येव मे भवेत् ।
भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते ॥ ३ ॥
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ ४ ॥
इत्युक्तोऽपि द्विजस्तस्मै व्रीडितः पतये श्रियः ।
पृथुकप्रसृतिं राजन्न प्रायच्छदवाङ्मुखः ॥ ५ ॥
सर्वभूतात्मदृक्साक्षात्तस्याऽऽगमनकारणम् ।
विज्ञायाचिन्तयन्नायं श्रीकामो माऽभजत्पुरा ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकाशीतितमे सख्युर्जग्ध्वा पृथुकतण्डुलान् ।
श्रियं निर्मितवानिन्द्रदुर्लभां तु तदाश्रमे ॥

संकथयन् सुखगोष्ठीः कुर्वन् सर्वभूतानां मनसोऽभिज्ञः मदर्थं पृथुकानानीय दातुं लज्जित इति जानन्नित्यर्थः ॥ १ ॥

प्रहसन् क्ष्वेलीं कुर्वन् ॥ २ ॥

लज्जया त्वकथयतस्तामपनुदन्नाह-अण्वपीति द्वाभ्याम् ॥३-५॥

सर्वभूतानामात्मदृगन्तःकरणसाक्षी ॥ ६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स इतियुग्मकम् । सः पूर्ववर्णितब्रह्मण्यत्वभक्तसौहृद्यादिगुणः यतो हरिः सर्वमनोहरत्वात्तथामेवासौ अत एव द्विजेषु मुख्येन तत्प्रियसखत्वाच्छ्रेष्ठेन तेन सह सङ्कथयन् सङ्कथा-रसेन तमानन्दयन्नित्यर्थः । तत्र हेतुः, सर्वेति । तत्र हेतुर्भगवा-निति । तत्र च वैशिष्ट्यं कृष्ण इति सर्वभूतमनोऽभिज्ञ इति मदर्थं दूरतस्तावता प्रयासेन पृथुकतण्डुलाः समानीताः दृष्ट्वापि मद्वैभवं तदर्थमानीतं कथं समर्प्यमिति प्रेम्णा जलादौ न विक्षिप्ताः सम्प्रत्यपि यत्नेनैव रक्षिताः तथापि दातुं लज्जत इति च तत्रैव सङ्कथने जानन्नित्यर्थः । अत एव स्मयमानः प्रेम्णा तं ब्राह्मणं प्रकर्षेण कौतुकरसप्रसादसानन्दरवेण ईक्षन् ईक्षमाणश्च तच्च निरीक्षणेन कदाऽयं दास्यतीत्यनुसन्धानेनेत्यर्थः । तद्ग्रन्थिनिरीक्षणेनोपलक्षित इति वा तथापि यतो ब्रह्मण्यः ब्राह्मणजातावेव तावत्सहजाहितः किमुत तादृशीत्यर्थः ततोऽप्यसौ प्रहसन् मत्प्रजावत्या यदुपायनं दत्तं तत्रवान् कथं गोपयतीति परिहसन्नुवाच यतः प्रियं सखायमिति खलु वाक्यालङ्कारे तदेवं सताङ्गतिः स एव सतां परमाश्रय इत्यर्थः ॥ १—२ ॥

किमित्यर्द्धकम् । किमानीतं तत्कथयेति देहि वेति शेषः । हे ब्रह्मन्निति ! वेदार्थविदा त्वया मदर्थमानीतं स्वयं गृहीतुं न युज्यत इति सनर्मभावः तत्रापि गृहादुपनीतः सकाशादिति

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पूर्ववत् किञ्च भवान् मित्रोचितं न व्यवहरति यत्परमपतिव्रतया पत्न्या प्रेरितोपि मां याचितुं सङ्कुचति अहन्तु तदुचितव्यवहारपरः यतो याचित्वैव गृह्णामीति परिहासं परित्यज्य तं प्रोत्साहयन् यथार्थमाह—अण्वपीति । स्वल्पमप्यन्नादिकं भक्तैः सादरैः तत्रापि प्रेमवद्भिः प्रेम्णा यद्वा भक्तविषयकप्रेम्णा भूर्य्येव भवेत् तावतैव बहुकालतृप्तिः स्यादित्यर्थः अभक्तैरुपहृतं मे तोषाय न कल्पते न सम्पद्यते तेषु न किञ्चिदपि तोषत इत्यर्थः ॥ ३ ॥

असद्भावे सति पत्रादीनां मध्ये यत्किञ्चिल्लभ्यते तदेकमपीत्यर्थः । अतएव क्रमानुक्तिः भक्त्या प्रेम्णा अतः प्रकर्षेण यच्छति अहं स्वयमेवाश्नामि स्वीकरोमि कुतः भक्तोपहृतं तनस्तेषामुपहरणमात्रं मदशने कारणं नतु मन्त्रादिकमपीति भावः । पुनरुक्तिर्भक्तौ सलालसां ख्यापयति भक्त्युपहृतत्वे हेतुः प्रयतात्मनः विशुद्धचित्तस्य कामनान्तरशून्यस्येतियावत् । तत्र पत्रपुष्पयोरसनायोग्यत्वमप्यशननिर्देशस्ते अप्यश्नन्निवोपभुञ्जे किम्वा भोज्याभावे तेऽश्नामिफलतोये तु सुतरामश्नाम्येवेति गमयति तोयस्य पे यत्वेप्यशननिर्देशस्तोयाहारवत्तदेकतृप्त्यपेक्षया ॥ ४ ॥

पृथुकानां प्रसृतिं चतुर्मुष्टिभिः प्रसृतिः तत्परिमितान् चिपिटान् तस्मै प्रकर्षेण स्वेच्छया नायच्छत् किन्तु व्रीडितः सन्नवाङ्मुखो बभूवेत्यर्थः । व्रीडायां हेतुः श्रियः पतय इति ॥ ५ ॥

तर्हि श्रीभगवांस्तु किं व्यवसितवान् इत्यपेक्षायामाह—सर्वेति सार्द्धैश्चतुर्भिः । साक्षादेव सर्वेषां भूतानामात्मनां च दृक् द्रष्टा तदन्तर्यामी पुरुषः सोपि साक्षात्तुल्यो ऽन्यूनरूपो यस्य सः “विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्” इतीतरगृहीताभ्यः “साक्षात्प्रत्यक्षतुल्ययोः” इत्यमरः विज्ञाय अपरोक्षतया ज्ञात्वा किमचिन्तयत्तदाह-नायमित्याद्यधिकेनैकेन । श्रीकामः सन् पुरा पूर्वजन्मनि मा मां नाभजत् इति सख्यार्थमेवाभजदिति सूचितम् ॥ ६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—३३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः किं जातं तदाह—स इति । स हरिरित्थं द्विजमुख्येन कुचेलेन सह सङ्कथयन् सुखगोष्ठीं कुर्वन् सर्वभूतानां मनसोभिज्ञः मदर्थे पृथुकानानीय दातुं लज्जित इति जानन्नित्यर्थः । तं विप्रमुवाच ॥ १-२ ॥

तदेवाह-किमिति सार्द्धद्वयेन । हे ब्रह्मन् ! भवता गृहात् मे मह्यम् उपायनं किमानीतं लज्जया तूर्ष्णीं स्थितस्य तामपश्यन्नाह—अण्विति द्वाभ्याम् । यद्भक्तैः प्रेम्णोपहृतं समर्पितं तदणु अत्यल्पमपि मे भूर्येव भवेत् यद्भूर्यप्यभक्तोपहृतं तन्मम सन्तोषाय न कल्पते इत्यर्थः ॥ ३ ॥

अतः पत्रादीनामन्यतमं यः पुमान् मह्यं प्रयच्छति ददाति समर्पयतीति यावत् प्रयतः नियतः विशुद्ध आत्मा मनो यस्य तस्य सम्बन्धि भक्त्या समर्पितमहमश्नामि ॥ ४ ॥

इतीति । व्रीडाऽस्य सञ्जात इति तथाऽत एवावाङ्मुखः हे राजन् ! तस्मै श्रियः पतये भगवते पृथुकप्रसृतिं न प्रायच्छत् नददौ ॥ ५ ॥

सर्वभूतानामात्मानमन्तःकरणं पश्यतीति तथाऽत एव साक्षाद्द्रष्टा भगवान् सर्वभूतमनोभिप्रायसाक्षात्कर्त्ता वा तस्य द्विजस्यागमनकारणं विज्ञाय कार्यमात्मना कर्त्तव्यमचिन्तयत् किमिति विज्ञायेत्यत्राह—श्रीकाम इत्यादिना मामित्यन्तेन श्रीकामो नाभजत् मामिति शेषः । किन्तु मोक्षार्थकाम इत्यर्थः ॥ ६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सङ्कथयन् संलापङ्कुर्वन् ॥ १-२ ॥

दरिद्रत्वेन भूरिद्रव्याभावात् भवतो महतोऽल्पं मनस्तुष्टिकरं न स्यादिति नानीतमिति शङ्का माभूदित्याह—अल्पमिति । आहृतमानीतं द्रव्यभूरित्वाभूरित्वे अप्रयोजके किन्तु भक्तिरेवेत्यनेनादर्शि ॥ ३—५ ॥

सर्वभूतानामात्मदृक् स्वभावज्ञः “आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि” इति यादवः ॥ ६—७ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥ १—२ ॥

भक्तैः सादरैः तत्रापि प्रेमभक्तैः प्रेम्णा ॥ ३—५ ॥

सर्वेषां भूतानामात्मनां च दृक् द्रष्टा तदन्तर्यामी पुरुषः सोऽपि साक्षात्तुल्योऽन्यूनरूपो यस्य सः ॥ ६—६ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥ १—३७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

द्वात्रिंशे भगवानस्य पुरुषार्थतयोदितः ।
स्वकर्त्तव्यं विदित्वैव कृतवानित्युदीर्यते ॥
मर्यादयाप्रेरिता तु लक्ष्मीः स्थैर्यमिहोच्यते ।
अतोत्र भगवांस्तस्य पृथुकानप्यभक्षयत् ॥
दानेपि तेजोहानिः स्याद्भार्यादत्तमुपायनम् ।
तस्या एव फलं भूयादिति जग्धुं समुद्यतः ॥
मुष्टिरेको जगत्तृप्त्यै वनवासे निरूपितः ।
सर्वं फलं सर्वतृप्त्या परलोके तथा परः ॥
तृतीये देवता वधाद्दात्मानञ्च ततः परम् ।
एवं बुद्ध्या तया दत्तास्तेनाविर्विविशुर्हरिम् ॥

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

चतुर्थ्यंशः सिद्धिमेतु तस्या नाधिकमित्युत ।
लक्ष्मणायां प्रविष्टा श्रीः प्रतिबन्धं चकार ह ॥

पूर्वाध्यायान्ते मनःप्रीतिमुक्त्वा तदिष्टं पूरयित्वा तद्भार्येष्टं पूरयितुं पूर्वमुपसंहरन्नाह—स इत्थमिति । जीवेन सह सङ्कथेत्याह—द्विजमुख्येनेति । ब्रह्मभावाज्जीवोपि आदेशी भवतीति सङ्कथनं न दोषायेत्यर्थः । ततो भार्याहृदयं ज्ञात्वोवाचेत्याह—सर्वभूतमनोभिज्ञ इति । हेतुत्वार्थं साधारण्येन निरूपयति स्मयमानः भार्यासम्बन्धात् तेन सह परिहासं चिकीर्षुः हेत्याश्चर्ये न हि पूर्णो भगवान् अदत्तं स्वयं गृह्णातीति ब्राह्मणस्तु जानन्नपि लज्जया न दत्तवान् तथापि भगवान् ब्रह्मण्यः ब्राह्मणानां हितकर्त्ता सोपि ब्राह्मणः स्वयं च कृष्णः तदर्थं चावतीर्णः अन्यथा भगवान् कथमागच्छेत् प्रहसन्निति गोप्यं करोतीति तं प्रति तथा वचने हेतुः प्रियमिति ॥ १–२ ॥

सार्द्धाभ्यामाह—भगवद्वाक्यं, किमुपायनमानीतमिति । ब्रह्मन्निति सम्बोधनात् धर्मज्ञानं सूचितं तेन उपायनानयनं निश्चितं ते मह्यं मध्ये ,शास्त्रार्थत्वाय गृहीतन्तु न मे सुखायेति विशेषमाह–गृहादिति । ननु पूर्णस्य तव किमुपायनेन अस्मदर्थन्तु अस्माभिरेव दत्तं स्यात् अतो ऽयर्थं गृहणमिति चेत्तत्राह—अण्वप्युपाहृतमिति। एतत्सर्वं प्रायेणाभक्तैरुपहृतमेतत्सर्वं पृथुकतण्डुला एव भक्तोपाहृताः सर्वस्यामपि द्वारकायां भक्ताहृतत्वे को विशेष इति चेत्तत्राह प्रेम्णा अण्वपि भक्तोपाहृतं भूर्येव मे भवेत् प्रेमान्तःकरणधर्मः यां हि स्वापेक्षया अधिकमानयति तत्तस्याधिकं भवति "ये यथा मां प्रपद्यन्ते" इति मम चायं नियमः प्रेम्णा समानीतं हृदयानीतं भवति हृदमणुमात्रं तण्डुलास्तु मुष्टिचतुष्टयात्मिकाः अहञ्च हृदयरूप एव तत्गृह्णामि अतः अण्वप्युपाहृतं मत्समानत्वात् भक्ष्यं न्यूनपरिमाणमेव युक्तमिति मे भूर्येव भवेत् अभक्तेन उपाहृतं बहिर्वृष्ट्या उपहृतं भवति ब्रह्माण्डमितं भवति तद्ग्रहणे अहमपि तथा अतो यथा कथञ्चित् सर्वसामर्थ्येनापि समाहृतं मम तृप्तिहेतुर्न भवतीति अल्पत्वाय न मे तोषाय कल्पते अथवा "भक्त्यैव तुष्टिमभ्येति„ इति वाक्यात् प्रेम्णैव तुष्यति नत्वान्येनेति प्रेम तु साधारणमेव मत्संनिधौ समायातीति तस्या देहोऽन्यार्थमेव विनियुक्त इति लिङ्गशरीरञ्च तथैवावरुद्धमिति तण्डुलाश्रितैव भक्तिरत्रागता अतो भक्तिसहभावः पदार्थानां निरूप्यते अभक्तेन रूक्षेण लोकेपि घृतादिप्लुतं भक्ष्यं तोषाय नतु रूक्षं विधौ द्वयं प्रयोजकम् अधिकारविशेषणं करणञ्च निषेधे न विशेषणमाह—करणन्तु सिद्धमेवेति अभक्तस्य भक्तिरप्यभक्तिरेवेति वा ॥ ३ ॥

एवं पदार्थस्थितिमुक्त्वा स्वस्य बलादिव ग्रहणे हेतुमिव स्वसङ्कल्पमाह—पत्रं पुष्पमिति । पत्रन्तु तुलस्यादि पुष्पं लवङ्गादि फलमाम्रादि तोयं गङ्गाजलादि एतच्चतुष्टयमविकृतमनुपहतञ्च अन्यत्पाकादिना उपहतं भवेत् अग्निसंस्काराद्यभावात् वनस्थानां दरिद्राणां परमहंसानाम् उपलक्षणविधया तेषामर्थे चतुष्टयमुक्तमिति केचित् ब्राह्मणद्वारा त्वन्यदपि भक्षयामीति नाहं तथाश्नोति वाक्यादपि कृतमुत्तमसंस्कारेण संस्कृतामाप्त विचारकाः एकेनत्वाहृतमेक एव भक्षयामि नहि कस्यचिदपि चतुष्टये भक्ष्याधिक्यं भवति अत उद्दिष्टानां विकल्प इति ख्यापयितुं तदित्याह तत्रत्यादीनामश्नतमम् अहमिति पुरुषोत्तमः मदर्थं सम्पाद्य स्वाधिकारानुसारेण यत्रकचिन्निवेदयतु तत्रैवाहं भक्षयामि इत्यर्थः । दानसमये भक्त्यैव दानं यथेष्टं पुत्राय कश्चित्प्रयच्छति मम तु ततोपि विशेष इत्याह–भक्त्युपहृतमिति। तत्स्थानादुद्धरणप्रभृतिमत्समीपानयनपर्यन्तं स्नेहस्याविच्छेदोऽपेक्ष्यते स्मरणसहितस्नेह इति केचित् किञ्च तच्चेत् द्रव्यं प्रयतात्मनो भवति प्रकर्षेण नियतान्तःकरणस्य कामादिसर्वदोषरहितस्य चेत्पत्रादेकं भवेत् तदा अवश्यमश्नामि अशनं यथाक्रियोपलक्षकं वस्तुतस्तु सर्वमेतच्चतुष्टयमध्ये निविशन्ति अन्नवस्त्रादिकमपि फलमेव दुग्धेक्षुरसादिकं तोयं ताम्बूलादिकं पत्राणि सुवर्णरत्नादिकं पुष्पाणीति अन्तःप्रवेशनं च भोजनं यत्र कचित् स्वापतम् आत्मसत्करोतीत्यर्थः ॥ ४ ॥

एवं भार्यया प्रहितं त्वया भक्तेन भक्त्याचाहृतं देयमित्युक्तोपि द्विजः सङ्कोचाविष्टोऽल्पबुद्धिः श्रियः पतये तस्म पृथुकतण्डुलप्रसृति मुष्टिचतुष्टयात्मकं प्रसृतिः सेरमात्रं भवतीति न प्रायच्छत् लज्जया चाधोमुखो जातः किं मया समाहृतमिति अतिसाधारणानामेवैतद्भक्ष्यं ततो भगवान् विचारितवान् अयन्तु न प्रयच्छति तथापि ग्राह्यं नवेति तदर्थं चेतद्विचारयति किमस्मै सम्पदो देया नवेति ॥ ५ ॥

कामितं दोषरहितं भगवांस्तु प्रयच्छति ।
अलौकिकत्वात्सम्पत्तेर्दोषाभावः सुनिश्चितः ॥
कामाभावस्त्वस्य सिद्धो न देयं तत्कथञ्चन ।
स्वत आगमनं तस्य न भवत्येव भार्यया ॥
प्रेषितस्यागतिस्त्वस्य भार्यागतिरियं मता ।
प्रतिबन्धकता त्वस्य दाने लज्जादिदोषतः ॥
तस्मात्तस्या गृहीत्वैतत्तस्यै दास्यामि निश्चितम् ।

एतद्वदन्नस्य दोषाभावमाह—सर्वभूतानामात्मानमन्तःकरणं पश्यतीति एतस्य तस्य नापिहृदयं जानातीत्युक्तं साक्षात् तस्य आगमनकार्यं भार्यार्थमेव प्रासङ्गिकं नु स्वार्थम् एतद्विज्ञायाचिन्तयत् अत्रार्थः सन्दिग्ध इति सन्देहमेवाह—नायं श्रीकामः माञ्च पुरा अगमत् ततोऽयं भक्तो निष्काम अतोऽस्मै स्वरूपमेव देयमं ॥ ६ ॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एकाशीतितमे भुक्तपृथुकोऽस्मै परोक्षतः ।
दत्वाप्यतुलसंपत्तिं स्वं मेने ऋणिनं हरिः ॥

सर्वभूतानामपि किम्पुनस्तस्य मनसोऽभिज्ञ इति मदर्थं पृथुकान् आनीयापि दातुं लज्जते इति सहसैव जानन्नित्यर्थः । स्मयमान इति तवैतत् उपायनमहं व्यक्तीकरिष्याम्येवेति द्योतयामास तं ब्राह्मणं ब्रह्मण्य इति तस्य ब्राह्मणत्वे स्वयं तस्य भक्त इति तं प्रियं भगवानिति तस्य प्रियत्वे स्वयं तस्य भजनीय इत्यर्थः । प्रहसन्निति मल्लोभनीयमानीतं वस्तु कियन्तं क्षणं त्वं स्वकक्षे निन्होष्यसीति स्वप्रागल्भ्यप्रद्योतकः प्रहासः प्रेम्णा निरीक्षणेनेति प्रेमपूर्वकं यत् कक्षस्थपृथुकग्रन्थिनिरीक्षणं तेन उप

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

लज्जितः तं प्रेक्षमाण इति तवेदं धमनिसन्ततत्वमिदं च कुचेलत्व-मत्रत्यजनानां विस्मयरसपोषकमतःपरमपि श्वस्तनप्रहर-द्वयपर्य्यन्तं स्थास्यति न ततःपरमितिभावः। सर्वत्र हेतुः सतां गतिरिति ॥ १—२ ॥

भवता गृहादिति भवादृशेन प्रियेण मादृशस्य प्रियस्य निकटं प्रति ,यत्स्वगृहाच्चिराद्दागमनं तत् किं रिक्तहस्तत्वेन सम्भवेदित्यनुमानादेव विदितमिति भावः। ननु तदत्यल्पमेवा-तोऽत्र दर्शयितुमहं लज्जे इत्यत आह अपवपीति ॥ ३ ॥

ननु ! निर्बुद्धिना यदा स्वगृहादिदं त्वदर्थं गृहीतं तदा किमपि न विचारितमधुनातु विमृशामि त्वद्भक्षणयोग्यमिदं न भवत्यतो न दीयत इत्यत आह—पत्रमिति। अत्र भक्त्युप-हृतमिति पौनरुक्त्याद्धेतेति न करणे तृतीया किन्तु सहार्थे तेन भक्त्या युक्तो मद्भक्तजनो यद्ददाति तच्च भक्त्यैव उप-हृतं चेत्तर्ह्यश्नामि न तु कस्यचिदनुरोधेनेत्यर्थः। अयमर्थः वस्तु खल्वस्वाद्वस्वादु वा भवतु किन्तु स्वाद्विदमिति बुद्ध्या मद्भ-क्तेन भक्त्यैव यत् दीयते तन्मे अति स्वादिष्ठ भवेत्तत्र न मे कोऽपि विवेकस्तिष्ठतीति अश्नामीति ग्रेयमप्यनशनीयमपि पुष्पमहं भक्तप्रेममोहितोऽश्नामि ननु देवतान्तरभक्तस्य भक्त्यु-पहृतं वस्तु किं नाश्नासि यतो मद्भक्तजनो यद्ददातीति ब्रूषे तत्र सत्यं नाश्नाम्येवेत्याह—प्रयतात्मन इति। मद्भक्तस्यैव स शुद्धान्तःकरणो भवति नान्यथा यद्वा भक्तौ प्रकर्षेण यतमान-मनसः अतस्तस्यैवाश्नामि नान्यस्येत्यर्थः ॥ ४ ॥

पृथुकानां प्रसृतिं मुष्टिचतुष्टयं व्रीडित इत्यत्र हेतुः पतये श्रिय इति श्रीपतिं खलु कठोरविरसांश्चिपिटान् कथं भोजयामीति विमृश्येति भावः। अवाङ्मुख इति भोः प्रभो! मा मां विड-म्बय बहुशो याच्यमानोऽप्यहं तुभ्यमिदं न दास्यामीति मे सङ्कल्प इति विप्राभिप्रायः गृहादागमनसमये मद्भक्तस्य तव यः सङ्कल्पः स नान्यथा भवितुमर्हतीति भगवदभिप्रायः ॥ ५ ॥

आत्मदृक् अन्तःकरणसाक्षी यद्वा सर्वेषां भूताना-मात्मनां च दृक् द्रष्टा अचिन्तयत् सर्वज्ञोऽपि मद्भक्तस्यास्य कथ-मीदृशं दारिद्र्यमभूदिति तत्प्रेममुग्धश्चिन्तयामास तत्क्षण एव अधिगततत्त्वः स्वगतमाह–नायमिति। ननु निष्कामभक्तस्याप्य-ननुसंहितं फलं सद्विषयभोगो भवत्येव यदुक्तं "धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते। नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः। कामस्य नेन्द्रियप्रीतिः" इति उच्यते निष्कामभक्तस्य स्वभावभेदादननुसंहितं फलं द्विधं स्यात् विष्टमादिष्टञ्च यस्य विषयभोगमात्र एव द्वेषस्तस्य विषयभोगो नैव स्यादितिभरतादौ तथा दर्शनात् यस्य तु न द्वेषो नापि स्पृहा तस्य स स्यादेव प्रह्लादादौ तथा दर्शना-दतोऽस्य विप्रस्य प्रागेतज्जन्मनि च भोगे द्वेष एव केवलं भार्य्यानुरोधाद्भगवद्दर्शनलोभाच्चायात इति ॥ ६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एकाशीतितमे स्वभक्तपृथुकान् जग्ध्वा तस्मै श्रियं दत्तवान् हरिरित्याह—स इत्थमिति। स वर्णितवीर्यो हरिः इत्थं सङ्क-थयन् सुखगोष्ठिं कुर्वन् सर्वभूतमनोऽभिज्ञः मदर्थे पृथुकानानी-यापि लज्जया न ददातीति जानन्नित्यर्थः। अनेनाप्रकाशितान् प्रकटीकरिष्यामीति कौतुकेन स्मयमानस्तमुवाच ॥ १ ॥

किं कुर्वन् प्रहसन् क्ष्वेलिकां कुर्वन् ॥ २—४ ॥

पृथुकानां प्रसृतिं मुष्टिचतुष्टयम् ॥ ५ ॥

सर्वेषां भूतानामचेतनानाम् आत्मानं पश्यन्तीत्यात्मदृशश्च चेतनास्तेषां च साक्षी साक्षाद्द्रष्टा आगमनकारणं स्वदर्शन-मात्रम् "अयं हि परमो लाभः उत्तमश्लोकदर्शनम्,, इत्युक्त-त्वात् ॥ ६ ॥

---

भाषा टीका ।

श्रीशुकउवाच

आश्रितजनोंके दुःखनको हरण करने वारे सुदामा ब्राह्मणोंके साथ इस प्रकार सँलाप करत् सब प्राणियोंक मनको जानने वारे मन्दहास करत श्रीकृष्ण भगवान् सुदा-माके प्रति बोले ॥ १ ॥

ब्राह्मणभक्त सत्पुरुषोंके गति श्रीकृष्ण भगवान् हास्य करत् प्रेमयुक्त कटाक्ष से ब्राह्मणको देखत बोले ॥ २ ॥

श्रीभगवानुवाच ।

हे ब्रह्मन्। आप अपने गृहसे मेरे वास्ते क्या भेट लायेहो मेरे भक्तोने प्रेमसे समपर्ण किया थोडा भी वस्तु मोको बहुत होजाताहै और अभक्तने बहुतभी समर्प्पण कियाहै परन्तु वह मेरे सन्तोषके वास्ते नहि होता ॥ ३ ॥

जो पुरुष भक्तिसे मेरे अर्थ पत्र पुष्प फल जल सम-र्पण करताहै उस विशुद्ध मन वारे पुरुषके भक्तिसे समर्पित पुष्प आदि का मेभी प्रेमसे भोजनहि कर लेताहुं ॥ ४ ॥

हे राजन्! श्रीकृष्णने इस प्रकार उसको कहाभी तथापि वह ब्राह्मण लज्जित होकर नीचेको मुख कर श्रियः पति के अर्थ चूडानकी पसेको नहि देता भया ॥ ५ ॥

साक्षात् सर्व प्राणियोंके मनके साक्षी श्रीकृष्णजी उस ब्राह्मणके आगमन कारणको जानकर चिन्तमन करने लगे कि ऐश्वर्य्यकी काम वारा होकर इस सुदामाने पहले मेरा भजन नहि किया ॥ ६ ॥

पत्न्याः पतिव्रतायास्तु सख्याः प्रियचिकीर्षया ।
प्राप्तो मामस्य दास्यामि सम्पदोऽमर्त्यदुर्लभाः ॥ ७ ॥
इत्थं विचिन्त्य वसनाच्चीरबद्धान् द्विजन्मनः ।
स्वयं जहार किमिदमिति पृथुकतण्डुलान् ॥ ८ ॥
नन्वेतदुपनीतं मे परमप्रीणनं सखे ।
तर्पयन्त्यङ्ग मां विश्वमेते पृथुकतण्डुलाः ॥ ९ ॥
इति मुष्टिं सकृज्जग्ध्वा द्वितीयां जग्धुमाददे ।
तावच्छ्रीर्जगृहे हस्तं तत्परा परमेष्ठिनः ॥ १० ॥
एतावताऽलं विश्वात्मन् सर्वसम्पत्समृद्धये ।
अस्मिँल्लोकेऽथवाऽमुष्मिन् पुंसस्त्वत्तोषकारणम् ॥ ११ ॥
ब्राह्मणस्तान्तु रजनीमुषित्वाऽच्युतमन्दिरे ।
भुक्त्वा पीत्वा सुखं मेने आत्मानं स्वर्गतं यथा ॥ १२ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

अमर्त्यानां देवानामपि दुर्लभाः ॥ ७ ॥

अतिजीर्णत्वाद्वसनस्य पुनस्तन्मध्ये चीरेण बद्धान् ॥ ८ ॥

अङ्ग हे सखे ! मां विश्वं विश्वात्मानं माम् ॥ ९ ॥

इति यदन्नैकां मुष्टिं जग्ध्वा तत्परेति अयं भावः एतावता पुंस इहामुत्र मत्कटाक्षविलासभूतानां सर्वसम्पदां समृद्धयेऽलम् अतःपरं द्वितीयमुष्ट्यदनेन मा मामेतदधीनां कुर्विति ॥ १० ॥

त्वत्तोषकारणं तव तोषस्य कारणं यथा भवेत्तथा सर्वसम्पत्समृद्धये यां भक्तस्य समृद्धिं दृष्ट्वा त्वं तुष्येरित्यर्थः ॥ ११ ॥

स्वर्गतं स्वर्गवासिनम् ॥ १२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

ननु, तर्हि कथमधुना धनार्थमागतः तत्राह—पत्न्या इति । तत्प्रियचिकीर्षायां हेतुः पतिव्रताया इति करुणया धर्महानिभिर्याच्ञेति भावः । अनेन सापि सुष्ठु पतिसेवनार्थमेव तमेनं मद्याचनार्थं प्रेषितवतीति भावः । ननु तर्हि वदान्यान्तरं कुतो न गतः तत्राह सखेति मत्सख्येन मय्येवाऽऽगमनं योग्यमन्यत्र गमने सङ्कोचे च सति सख्यमेव न स्यादिति किञ्च सख्येन मुख्यतया मत्सन्दर्शनमेव प्रयोजनमिति भावः । अतः अस्य अस्मै दास्यामि यद्वा अस्य स्वाधीना एवेत्यर्थः । यद्वा साक्षात्तं प्रत्यदानेन केवलं तत्पत्नीप्रीत्यर्थमेव दानेन सम्बन्धमात्रापेक्षया सम्प्रदानत्वाभावादस्येति ॥ ७ ॥

इत्थमीदृशं सम्यक् चिन्तयित्वेति अदत्तं नोपतिष्ठत इति न्यायेन तत्सम्पत्सिद्ध्यर्थं स्वयं तदीयं किञ्चित् स्वीकर्तुमिति भावः । तथा च श्रीरुक्मिणी देवी वक्ष्यति " एतावताऽलमिति । इत्थं तस्य परमभक्तत्वं सञ्चिन्त्य स्वयमेव जहार बलात् गृहीतवान् कथं किमिदमित्येव वदन् स्वयं जहार बलाद्गृहीतवान् द्विजन्मन इति ब्राह्मण्येन वसनस्य पृथुकतण्डुलानामपि पावित्र्यादिकं ध्वनितम् ॥ ८ ॥

ननु, वितर्के एतदेव उपनीतं नच मन्तव्यमेतदुपायनं योग्यं न स्यादिति मम परमप्रियत्वादित्याह मे मम परमप्रीतिकरमिति तत्र हेतुः हे सखे इति सख्या त्वयानीतत्वादिति भावः । नच मन्तव्यमेतदल्पमित्यपि विश्वात्मनो मम तर्पकत्वाद्विश्वस्यापि तृप्तिञ्जनयितुं समर्थमित्याह—तर्पयन्तीति अन्यत्तैः यद्वा यतो माम् अतः सुतरामपि विश्वं यथा तरोर्मूलनिषेचनेनेत्यादिन्यायात् ॥ ९ ॥

यावदाददे तावदेवेत्यतित्वरां बोधयति अन्यथा भक्षिता स्यात् परमेष्ठिनः परमेश्वरस्यापि हस्तं जगृहे यतस्तत्परा ततः परमेष्ठिनस्तस्य तादृशकदन्नभोजनं सोढुमशक्तेरिति भावः ॥ १० ॥

ननु भवतु तस्या वस्तुत एवमभिप्रायः किमुक्त्वा जगृहे इत्यपेक्षायामाह— एतावतेति । एतावता द्वितीयमुष्टिपर्य्यन्तेन भोजनेन अलं प्रयोजनं नास्ति किमुतान्यने तेनेत्यर्थः । कुतः पुंसो जीवमात्रस्येहामुत्र च सर्वेषां तत्प्रेमपर्य्यन्तानां पुरुषार्थानां या सम्पत् तस्याः समृद्धये वृद्धये तत्तोषरूपमेव कारणं भवति सतु पूर्वत एव विद्यते परमभक्तयुपहृतपृथुकैकमुष्टिभोजनेन तु सुतराम् अतो मदंशाभासरूपाया व्यवहारसम्पदधिष्ठातृलक्ष्म्या दृष्टिमात्रेण या सम्पत् सिध्यति तस्याः सिद्ध्यर्थं मदीयपरमाश्रयस्य भवतः प्रयासेनालं किन्त्वस्य गृहे सिद्धैव सेत्यर्थः । अतो यदि गार्हस्थ्यसम्पत्तिं सम्प्रति प्रकटं दातुमिच्छसि तदा साप्यस्य गृहे सिद्धैव तस्मादेवमप्युपाहृतं भक्तैः प्रेम्णा भूर्य्येव मे भवेदिति भवदनुभव-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

प्रामाण्येन भोजनप्रयोजनेन तव सन्तोषे जाते तत्प्रयोजनान्तरे चास्य समृद्धिभरे जाते किं मुष्ट्यन्तरादनेनेति व्यञ्जनाभागर्थः हे विश्वात्मन्निति तत्परितोषे युक्तैव सर्वा सिद्धिरिति भावः एतदनन्तरं सखीभिर्विभज्य स्तोकं स्तोकं सा स्वयमपि तद्द्वाजनगौरवाद्भुक्तवतीति ज्ञेयं टीकायां तु तत्परेत्ययं भाव इत्यादिनैव व्याख्यातमिदं पद्यम् अयमेतावतेति पद्यार्थे एव तत्परेत्यस्याभिप्राय इत्यर्थः। तमेव व्यञ्जयति, एतावता पुंस इत्यादिना, एतावता प्रथममुष्टिभक्षणेनैव सर्वसम्पत्समृद्धिं दातुम् अलं पर्याप्तं तस्य पूर्तिर्जातेत्यर्थः। तामेव समृद्धिं विशिनष्टि त्वत्तोषेत्यादिना। धात्वर्थस्यैव विशेषणमिदं नतु क्तिन्प्रत्ययान्तस्य अतः क्लीवत्वादिकम् अलं शब्दोऽत्र धर्मपरत्वेन व्याख्यातः नतु अलमस्त्यस्य धनमित्यादिवत् धर्मिपरत्वेन अतो हेतुत्वविवक्षया तृतीया चेतिज्ञेयम् ॥ ११ ॥

तामिति। यस्मिन् दिने गतस्तदीयामेकामेव व्याप्येत्यर्थः। अच्युतस्य सर्वसुखपरिपूर्णस्य भगवतो मन्दिरमिति मन्दिरस्यापि तादृशत्वमभिप्रेतम् अतः सुखं यथा स्यात्तथा भुक्त्वा सायमप्यशित्वा पीत्वा च स्वर्गतमिव मेन इति लोकोक्तिमात्रम् अच्युतमन्दिर इत्युक्तत्वात् किं वा स्वःशब्देन वैकुण्ठलोकोऽप्युच्यते "स्वचूडामणिं सुभगयत्तमिवात्मधिष्ण्यम् इति द्वितीयोक्तेः यथा यथावत् द्वारकायास्तन्नित्यत्वेन परमवैकुण्ठत्वात् पाठान्तरे सुप्त्वाच श्रीभगवतैव सहेति ज्ञेयं छन्दोभङ्ग आनन्दावार्षः ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अधुनातु पतिव्रतायाः पत्न्याः प्रियं कर्त्तुमिच्छया मां प्राप्त इति कार्यचिन्ताप्रकारमेवाह--अस्येत्यादिना। अमर्त्यानां देवानामपि दुर्लभाः सम्पदः भोग्यभोगोपकरणभोगस्थानादिसमृद्धिरस्य द्विजस्य दास्यामि ॥ ७ ॥

इत्थमिति। अतिजीर्णत्वाद्वस्त्रस्य तन्मध्ये चीरेण बद्धान् पृथुकतण्डुलान् किमिदमिति पृच्छन् स्वयमेव जहार आददे आदाय उवाचेत्यर्थः ॥ ८ ॥

उक्तिमेवाह—नन्विति। ननु हे सखे ! मह्यमेतत्पृथुकतण्डुलरूपमुपायनमानीतमेतदेव मत्परप्रीणनम् नितरां प्रीतिकृत् अङ्ग हे सखे ! एते पृथुकतण्डुलाः विश्वशरीरकं मां तर्पयन्ति तृप्तं कुर्वन्ति ॥ ९ ॥

इतीत्यनन्तरमुक्त्वेति शेषः एकं मुष्टिं जग्ध्वा द्वितीयं मुष्टिं जग्धुमनुमाददे तावददनात्पूर्वमेव श्रीरुक्मिणी सत्वरा त्वरया युक्ता परमेष्ठिनः श्रीकृष्णस्य हस्तं जगृहे गृहीत्वा वारयन्ती प्राहेत्यर्थः ॥ १० ॥

तदेवाह—एतावतेति। हे विश्वात्मन् ! विश्वात्मना त्वयैकमुष्ट्यदनेनैव कृत्स्नं विश्वं तर्पितमिति सम्बोधनाभिप्रायः एतावता एकमुष्ट्यदनमात्रेणैव पुंसोऽस्मिन् अमुष्मिन् वा लोके सर्वसम्पदां समृद्धयेऽलं पर्याप्तम् इतःपरं द्वितीयमुष्ट्यदनेन किं मामपि द्विजाधीनां कर्त्तुमुद्युङ्क्ष इति भावः। तव तोषस्य कारणं यथा भवेत्तथा सर्वसम्पत्समृद्धये इति सम्बन्धः ॥ ११ ॥

ब्राह्मण इति। अच्युतस्य मन्दिरे भुक्त्वा पीत्वा तां रात्रिं सुखं यथा तथोषित्वा चात्मानं स्वर्गसङ्गतं स्वर्गवासिनम् इव अमन्यतेत्यर्थः ॥ १२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

चीरं पटच्चरम् जीर्णवस्त्रमित्यर्थः। इदं चीरबद्धं किमित्युक्त्वा द्विजन्मनः पृथुकतन्दुलान् स्वयमाजहार ॥ ८—१२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तत्परा तादृशकदन्नभोजनादिसोढुमशक्तेति विवक्षितम् ॥ १०—११ ॥

स्वर्गतमिव मेन इति लोकोक्तिमात्रं। वस्तुतस्तु स्वशब्देन वैकुण्ठोऽप्युच्यते यथा यथावत् ॥ १२—२७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

साम्प्रतञ्च पत्न्या सम्प्रेषितः आयातः मत्समीपं सन्निधरार्थः तर्हि कः सन्देहः इदानीं तस्या एवार्थे देयमिति चेत्तत्राह मे सखेति तथापि मम मित्रं मम च प्रियकरणार्थमागतः अतःकिमनेन हितं कर्त्तव्यं तस्या हितं वा भोगः किमतद्गामी तद्गामी वा एतद्गामीचेन्न देयं तद्गामीचेद्देयमिति आद्ये अस्य भोगात्स्वरूपात् प्रच्युतिः द्वितीये तु प्रासङ्गिको भोग इति स न नाशकः तस्याश्च प्रासङ्गिको मोक्षोपि भविष्यति अत एतदर्थं पृथुकभक्षणमावश्यकम अस्मै चेत् दानं स्यात् तदैवमेव दद्यात् न ह्यन्येभ्यो ब्राह्मणेभ्यः किञ्चित गृहीत्वा प्रयच्छति अतो द्वितीयपक्षमाह—प्राप्तो मामस्य दास्यामीति। मत्प्रीत्यर्थमेव सम्प्राप्तः अस्येति सम्बन्धमात्रं नतु सम्प्रदानम् एवं विचार्य दयोत्कर्षमाह—सम्पदोऽमर्त्यदुर्लभा इति। अमर्त्यानामपि दुर्लभाः यदा भगवान् स्वयमिन्द्रोऽभूत् तदा या सम्पत्तां दत्तवानिति वाक्यान्तरादवगम्यते "श्रीदामरङ्कभक्तार्थभूम्यानीतेन्द्रवैभवः" इति अत्र चामर्त्यदुर्लभा इति अतो देवव्यतिरिक्तेन्द्रो भगवानेवेति ॥ ७ ॥

एवं निश्चित्य वसनादाच्छादिनात् तेन प्रावृतात् तत्प्रावरणं दूरीकृत्य चीरेण वस्त्रखण्डेन बद्धान् द्विजन्मन इति यदाऽयमसावधानः कर्मकरणार्थं व्यग्रो वा तदा स्वयं जहार हरणसमयवाक्यमाह--किमिदमिति ॥ ८ ॥

पश्चान्मोचयित्वा पृथुकतण्डुलान् दृष्ट्वा भगवानाह—नन्वेतदुपनीतमिति। एतदुपायनं परमप्रीतिजनकं सखित्वात् सङ्कोचाददीयमानमपि ग्राह्यं पृथुकतण्डुलानां माहात्म्यमाह—तर्पयन्त्यङ्ग मां विश्वमिति। एते उपस्थिताः भक्त्या सम्बलिताः ॥ ९ ॥

एवं विचार्य मुष्टिमात्रं गृहीत्वा भक्षितवानित्याह—इति

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मुष्टिमिति सर्वमेव जग्धुं द्वितीयं मुष्टिमादत्ते तदा लक्ष्म्या प्रतिबन्धः कृत इत्याह—तावच्छ्रीर्जगृहे हस्तमिति । लक्ष्मणाभिनिविष्टाप्रतिबन्धे तस्या अभिप्रायमाह—तत्परेति । सा हि भगवत्परा सर्वं चेद्भक्षयिष्यति तस्मै सर्वं दास्यति ततो मां दास्यति अहमेव सर्वमिति अहन्तु भगवत्परेति न तत्र गमिष्यामि इति तात्पर्यं किञ्च अर्द्धेपि दत्ते आमुष्मिके फलं सेत्स्यतीति तस्य मर्यादा ब्रह्माण्डमेव सर्वमिति साम्प्रतं ब्रह्माण्डविग्रहो भगवानेवेति द्वितीयमुष्टावेव विघ्नं कृतवती तदाह—परमेष्ठिन इति । भगवतः पुरुषोत्तमत्वं लक्ष्म्यपि तथा जाता ॥ १० ॥

तत्र ब्रह्माण्डविग्रहस्यैव सम्बन्धिनीति सुदाम्न एव तथात्वे पुनरनिष्टं स्यात्तस्याः फलमात्रप्रतिबन्धकत्वशङ्कायां सा स्वाभिप्रायं निरूपयति । एतावताऽलमिति । एतस्यै द्रित्सितमल्पं मुष्टिमात्रस्यापि बहुदानसम्भवात् अत उक्तमेतावतेति अन्यथा एतावदलमिति वदेत् नच वक्तव्यं सर्वमेव दास्यामीति यतस्त्वं विश्वात्मा अन्येभ्यः किं दास्यसि अन्येच नवावश्यका इत्यर्थः । सर्वाः याः धनादिसम्पदः तासां समृद्धये ननु मुष्टिमात्रेण ऐहिकी सर्वा सम्पत् सिध्येत् न त्वामुष्मिकी तत्राह अस्मिन् लोके अथवा अमुष्मिन्निति लोकद्वये न तस्य भोगापेक्षा उत्तमाधिकारात् किञ्चित् कचित् भोगापेक्षा नदिह लोके परलोके वा भवतु तत्र एक एव मुष्टिः प्रयोजकः समुच्चयस्तु न तस्यापि सम्मत इति । ननु मुष्टिमात्रेण कथं सर्वा सम्पत्तिस्तदाह—त्वत्तोषकारणमिति । एकमुष्टिभक्षणे प्रयत्न आरब्धः सम्पूर्णगलनपर्यन्तमनुवर्त्तते तावता तद्रसेन तृप्यति मुष्ट्यन्तरे पुनः प्रयत्नः प्रारम्भणीयः तेन च प्रीतिरन्या पुनर्भविष्यति फलञ्च देयमेकम् अतस्तव सन्तोषो द्वितीय एवमेव निष्ठतीति द्वितीयो नोत्पादनीय एवेत्यर्थः ॥ ११ ॥

एवं भगवल्लक्ष्म्योः सम्वादमुक्त्वा एवं फलं भविष्यतीति विनिर्द्धार्य ब्राह्मणस्य तत्फलप्राप्त्यर्थं स्वगृहगमनं वदन् भगवत्सन्निधौ तस्य स्वाभिलषितमानन्दमाह—ब्राह्मणस्तान्तु रजनीमिति । अच्युतमन्दिरे उपित्वा तत्रैव वासं कृत्वा भुक्त्वा पीत्वा नानाविधरसानि अमृतादीन्यपि अलौकिकभोगसमर्थो भूत्वा मेने आत्मानं स्वर्गतं स्वर्गत एव अमृतपानादिकं प्राप्नोति भगवत्पूजार्थं किञ्चिदाभरण वस्त्रादिकं गाञ्च दत्तवानिति लक्ष्यते यावता सुवेषेण गृहं गच्छति ॥ १२ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अत एव पुनः स्वगतमाह—पत्न्या इति । पतिव्रताया इत्यनेन तस्या अत्यन्तं प्रेमानुरोधेनैव सकामत्वं स्वतस्तु परमनिस्पृहत्वमेवेत्यतो ऽमर्त्यानां देवानामपि दुर्लभाः ॥ ७ ॥

अतिजीर्णत्वाद्वसनस्य पुनस्तन्मध्ये चीरेण बद्धान् स्वयं स्वपाणिना कक्षादाकृष्य जहार ॥ ८ ॥

चिरलमेतन्मदयोग्यमिति मामन्यथा यतो मे परमप्रीणनं माध्यलंवतस्तर्पयन्तीत्यादि ॥ ६ ॥

जगृहे स्वपाणिना जग्राह मा भुङ्क्ष्वेति घोतयामास तत्र स्वस्य सख्युर्गृहादागतमिदमद्भुतं वस्तु स्वयमेव यदि सर्वं भोक्ष्यसे तदाहं स्व(जा)यातृभ्यः स्वसपत्नीभ्यः स्वकिङ्करीभ्यः स्वस्मै च विभज्य किं दास्यामि चण्टमे खण्डैकैकोपि पृथुको नायास्यतीति स्वाभिप्रायं श्रीदामानं ज्ञापयामास महासौकुमार्य्यवतोऽस्योदरगताः कठोरपृथुका अपकरिष्यन्तीति वास्तवं स्वाभिप्रायं स्वसखीभिर्ज्ञापयामास ॥ १० ॥

स्वप्रेयांसं प्रति तु स्वाभिप्रायं ज्ञापयन्ती मनसैवाह—एतावता तु भुक्तेनैवालम् एतावतैव तृप्तो भव अतःपरं न भोक्तव्यमिति भावः । हे विश्वात्मन् ! तव तृप्तौ विश्वमेव तृप्तं भवेदिति भावः । ननु स्वप्रियसखायास्मै महासम्पत्तीर्दातुम् अन्यदपि भोक्तव्यं तत्राह—अस्मिन् लोके अमुष्मिन् वा लोके पुंसः सर्वसम्पत्समृद्ध्यर्थं त्वत्तोष एव कारणं भवति विसर्जनीयलोप आर्षः । तस्मादलं विरसकठोरपृथुलपृथुकचर्वणेनेति भावः । एषा रुक्मिण्यास्स्वगतोक्तिरेव नतु स्पष्टोक्तिः तथात्वे दर्थावगमे सख्यधर्मोयं धनं प्राप्स्यामिमवाक्यं श्रीदाम्नो न सम्भवेदिति विवेचनीयम् ॥ ११ ॥

स्वर्गतं यथा स्वर्गतमिव ॥ १२ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पत्न्यास्तु प्रियाचिकीर्षया प्राप्तः तत्र हेतुगर्भं विशेषणं पतिव्रताया इति । सापि पतिसेवार्थं द्रविणं वाञ्छति नान्यथा अतः अमर्त्यानां देवानामपि दुर्लभाः दास्यामि ॥ ७—८ ॥

विश्वं सर्वात्मानं माम् ॥ ९ ॥

श्रीरुक्मिणी परमेष्ठिनः परमलोकवासिनः श्रीकृष्णस्य हस्तं जगृहे उवाच च ॥ १० ॥

एतावतेति । हे विश्वात्मन् ! एतावता एकमुष्टयदनेनैव पुंसोऽमुष्य अस्मिन् अमुष्मिन् वा लोके सर्वसम्पत्समृद्धयं अलं पर्य्याप्तम् ननु स्वभक्ताय ऐहिकामुष्मिकसुखसाधनभूतसम्पत्समृद्धिमात्रं दत्त्वा नाहं तुष्यामि किन्तु मोक्षं दत्त्वा तुष्यामि तदर्थं द्वितीयमुष्ट्यदनं करिष्येऽत आह त्वत्तोषस्य कारणं त्वद्भावापत्तिरूपमोक्षसुखं तदपि एतावतैव भविष्यतीति शेषः । अतोऽवशिष्टान् पृथुकतण्डुलान् मह्यं देहीति भावः । एवं सत्यस्य श्रीपतिभावापत्तिर्भविष्यतीति गूढो भावः एकमुष्ट्यदनमात्रेण पतिव्रतामनोरथपूर्त्यर्थं सम्पत्समृद्धिः विप्रमनोरथपूर्त्यर्थं मुक्तिर्भविष्यतीति भावः ॥ ११ ॥

तां रजनीमच्युतमन्दिरे सुखं यथा भवति तथोषित्वा स्वर्गवासिनमात्मानं मेने अमन्यत ॥ १२ ॥

———

भाषा टीका ।

किन्तु पतिव्रता भार्य्या के प्रिय करने की इच्छा करके यह मेरा सखा मेरे पास आया है इस कारण मनुष्यों को दुर्लभ सम्पत्तियों को मैं इस ब्राह्मण को देऊंगा ॥७॥

इस प्रकार चिन्तवन करके उस ब्राह्मण के चीर में

श्वोभूते विश्वभावेन स्वसुखेनाभिवन्दितः ।
जगाम स्वालयं तात पथ्यनुव्रज्य नन्दितः ॥ १३ ॥
स चालब्ध्वा धनं कृष्णान्न तु याचितवान् स्वयम् ।
स्वगृहान् व्रीडितोऽगच्छन्महद्दर्शननिर्वृतः ॥ १४ ॥
अहो ब्रह्मण्यदेवस्य दृष्टा ब्रह्मण्यता मया ।
यद्दरिद्रतमो लक्ष्मीमाश्लिष्टो बिभ्रतोरसि ॥ १५ ॥
क्वाहं दरिद्रः पापीयान् क्व कृष्णः श्रीनिकेतनः ।
ब्रह्मबन्धुरिति स्माहं बाहुभ्यां परिरम्भितः ॥ १६ ॥
निवासितः प्रियाजुष्टे पर्यङ्के भ्रातरो यथा ।
महिष्या वीजितः श्रान्तो वालव्यजनहस्तया ॥ १७ ॥
शुश्रूषया परमया पादसंवाहनादिभिः ।
पूजितो देवदेवेन विप्रदेवेन देववत् ॥ १८ ॥

भाषा टीका ।

बंध चूडा चावरन कौ यह क्या है ऐसा पूंछ कर वस्त्र से आप हि श्रीकृष्ण जी ने लेलिया ॥ ८ ॥

हे सखा ! आप की लाई भई यह भेट मोको अत्यन्त तृप्तिकारी है यह निश्चित है हे मित्र ! चूडान के तण्डुल विश्व सहित मोको तृप्त करते है ॥ ९ ॥

ऐसा कहि कर एक बार एक मुट्ठी भक्षण करके जब दूसरी मुट्ठी भक्षण करने को लेने लगे उतने ही में भगवत्परायण श्रीरुक्मिणी जी ने श्रीकृष्ण का हस्त पकड लिया ॥ १० ॥

हे विश्वात्मन् ! जिस प्रकार आप का सन्तोष हो इस के वास्ते आप के भक्त को इस लोक में अथवा परलोक में सब सम्पत्ति समृद्धि के अर्थ एक मुट्ठी भक्षण मात्र से ही पूर्त्ति है ॥ ११ ॥

अनन्तर सुदामा ब्राह्मण श्रीकृष्ण के मन्दिर में सुन्दर नाना प्रकार के भोजन करके और सुन्दर दुग्ध आदि का पान करके जिस प्रकार सुख होय उस प्रकार उस रात्रि में वास करके अपने को स्वर्ग वासी मानता भया ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

श्वोभूते उदिते रवौ विश्वं भावयतीति विश्वभावस्तेनेति पुरतो भाविनमिन्द्रदुर्लभं विभवं सूचयति स्वसुखेन स्वानन्दपूर्णेनेति दानेऽदीनतां दर्शयति—नन्दितो विनयोक्तिभिः ॥ १३ ॥

व्रीडितः स्वचित्तकार्पण्येन लज्जितः महतः श्रीकृष्णस्य दर्शनेन निर्वृतः सुखं प्राप्तः ॥ १४ ॥

निर्वृतिमेवाऽऽह—अहो इति चतुर्भिः— । यद्यतः लक्ष्मीमुरसि बिभ्रता आश्लिष्टोऽहम् ॥ १५ ॥

पापीयान्नीचः ॥ १६—१७ ॥

पूजितश्चन्दनलेपनादिभिः ॥ १८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततः किं वृत्तमित्यपेक्षायामाह—श्व इति । यतो विश्वेषां भावनः पालकः ततः सुतरां स्वेषां भक्तानां सुखं यस्मात् तथाभूतः तेन प्रातरुत्थायाभिवन्दित इति युक्तमेव ब्रह्मण्यत्वादिगुणयुक्तत्वमिति भावः । ततश्च धिक् याच्ञार्थमहमिहागत इत्यन्तःसङ्कोचेनैव श्रीबलदेवमप्यमिलित्वा शीघ्रञ्च स्वालयं प्रति जगाम प्रस्थितवान् ततश्च यथा यथावत् आनिजान्तःपुरसीमव्रजनाद्विनयोक्तिपरिक्रमनमस्कारसाञ्जलिसुखवीक्षणादिनीतियुक्तं यथा स्यात्तथाऽनुव्रज्य नन्दितः पथीति पाठे दूरे इत्यर्थः । दत्तन्तु न किञ्चिदपीति कौतुकेन सम्बोधयति हे तातेति ॥ १३ ॥

सख्युः सकाशाद्धनमलब्ध्वापि स्वगृहानेवागच्छत् नतु स्वयं याचितवान् तत्र हेतुः, व्रीडित इति । महद्दर्शननिर्वृत इति च ॥ १४ ॥

यद्यप्यहो इत्यादिभिः सार्द्धैरष्टभिः कुलकं स्यात् इति तच्चिन्तयन्नित्यनेन तदनुपङ्क्ति चित्रेत्यादिसार्द्धेन चान्वयात् तथापि स्पष्टतार्थं पृथगेवाङ्कयित्वा व्याख्यायते अहो आश्चर्यं लक्ष्मीं पीतरेखारूपाम ॥ १५ ॥

पूर्वार्धमेव विशदयति—क्वेति । अहं जीवविशेषस्तावत्क कृष्णस्तु स्वयं भगवान् क ? तत्राप्यहं दरिद्रो धनादिहीनः पापीयांश्च तद्भाग्यहीनः क ? सतु श्रीनिकेतनः स्वभावतः सम्पत्तिमान् तत्तच्छक्तिमांश्च केत्यर्थः । तत्र तत्र च भ

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ब्रह्मबन्धुः विप्रकुले जात इति मात्राखेतोर्बाहुभ्यां ताभ्यामेव परिरम्भितः परिरब्धः स विस्मये एवं परिरम्भे विप्रत्वमेव कारणमुक्तं नतु सख्यं तत्रात्मनोऽतीवायोग्यत्वमननात् अतो भगवतो ब्रह्मण्यतैव श्लाघिता नतु भक्तवत्सलताऽपीति ॥ १६ ॥

न केवलं परिरब्ध एव श्रिया रुक्मिण्या जुष्टे सदा भगवता सहाधिष्ठिते पर्यङ्के निवासितश्च प्रियेति क्वचित्पाठः तच्च परमादरस्नेहाभ्यामेवेतिसूचयति भ्रातरोऽनुजाः श्रीगदादयो यथेति किञ्च महिष्येति वालव्यजनं चामरं वीजने हेतुः श्रान्तः दूरागमनादिना जातश्रम इति करुणां च दर्शयति ॥ १७ ॥

किञ्च, शुश्रूषयेति । पादसम्वाहनादिभिः या शुश्रूषा सेवा तया पूजितः सत्कृतः स्वयन्तु कीदृशेन देवानामाराध्येन विप्राणामप्याराध्येन क इव देववत् इष्टदेव इव ॥ १८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः श्वोभूते उदिते रवौ विश्वं भावयत्यभ्युदययुक्तं करोतीति तथा तेन स्वसुखेन श्रीकृष्णेनाभिनन्दितः अभिनन्दनपूर्वकमनुज्ञात इत्यर्थः । तथा हे तात ! तेन पथ्यनुव्रज्यानुगम्य वन्दितश्च स्वालयं स्वगृहं प्रति जगाम ॥ १३ ॥

सखेति । स ब्राह्मणः सख्युस्सकाशाद्धनमलब्ध्वा स्वयं व्रीडितः कार्पण्येन लज्जितः न याचितवान् भगवानयाचितो न ददौ स्वयन्तु न याचित्वापि लब्धवानित्यर्थः । किन्तु महतो भगवतो दर्शनेनैव निर्वृतः सुखितः स्वगृहान् प्रति जगाम ॥ १४ ॥

निर्वृतिमेवाह—अहो इति चतुर्भिः । ब्रह्मण्यदेवस्य ब्राह्मणश्रेष्ठस्य ब्रह्मण्यता ब्रह्मकुले साधुता दृष्टा काऽसौ उरसि वक्षसि लक्ष्मीं बिभ्रता भगवता अहं दरिद्रोऽप्याश्लिष्ट आलिङ्गितः इति यद्दया ॥ १५ ॥

अयमलभ्यलाभ इत्याह—काहमिति । पापीयान्नीचः अथापि ब्रह्मबन्धुरयमित्यभिप्रेत्य बाहुभ्यामालिङ्गितः ॥ १६ ॥

किञ्च श्रिया लक्ष्म्यवताररूपया रुक्मिण्या जुष्टे सेविते पर्यङ्केऽहं निवासितः यथा भ्रातरस्तद्वत् किञ्चाऽध्वनि श्रान्तोऽहं वालव्यजनं हस्ते यस्यास्तया महिष्या भार्यया वीजितश्च ॥१७॥

किञ्च, शुश्रूषयेति । पादसम्वाहनपादपीडनमार्दवैर्यैषाम् आदिशब्देन चन्दनलेपादिसंग्रहः देवानां ब्रह्मादीनां देवेन तथापि सौशील्यातिशयेन विप्राणां देवेन कर्त्रा देववदहं पूजीतः ॥ १८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अनुव्रज्य अनुगम्य नन्दितः कृष्णेनेति शेषः ॥ १३ ॥

महतः कृष्णस्य दर्शनेन निर्वृतः ॥ १४—१५ ॥

अहं ब्राह्मणानां विप्राणां बन्धुरिति स्मृत्वा ॥ १६ ॥

भ्रातरो यथा भ्रातरमिति शेषः ॥ १७—१८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः प्रातःकाले ततो निर्गत इत्याह—श्वोभूत इति । समवधाने हेतुः, विश्वभावेनेति । विश्वस्मिन्नेवानुभावो यस्य यत्रैव गमिष्यति तत्रैव सर्वाविर्भावे सम्भवति किमर्थमितो नयनं सख्यमेव पुरस्कृतमिति सखा बहु, न ददाति गच्छानीत्युक्ते अभिनन्दितः गन्तव्यमिति ततः स्वालयं गतः भगवान् पुनः पथि उदकान्तमागत्य नन्दितः सन्तोषं प्रापितः ॥ १३ ॥

मध्ये तस्य भार्याभयाच्चिन्तां जातामाह—स चालब्ध्वेति स्वतो भगवता न दत्तमिति धनं चालब्ध्वा स्वयञ्च न याचितवान् सख्युः सकाशात् तत् उभयथापि लज्जितः स्वगृहान् गच्छन् महद्दर्शनेन निर्वृतः सुखित एव जातो नतु धनाभावेन दुःखितो जात इत्यर्थः ॥ १४ ॥

ततस्तस्य मनोरथो यथा जातस्तमाह अहो ब्रह्मण्यदेवस्येति षड्भिः । धर्मिणातु सिद्ध एवार्थः धर्मैः कृत्वा सन्देह इति ब्रह्मण्यदेवोपि अवसरविशेषे ब्राह्मणस्य हितं करोति अस्यतु अनवसरेपि तथा करणादाश्चर्यं मय्येव ब्रह्मण्यता दृष्टा तदाह, यद्दरिद्रतम इति । लक्ष्मीमुरसि बिभ्रता भगवता दरिद्रतमः स्प्रष्टुमप्ययोग्योहम् आश्लिष्टः ॥ १५ ॥

एतदेव विशदयति—काहं दरिद्र इति । अत एव पापीयान् दारिद्र्यव्याप्तदेहः दारिद्र्येण वा अनुमितपापवान् क्व च वा भगवान् श्रीनिकेतनः अतः सखित्वसम्भावनापि नास्ति अतुल्यत्वात् तर्हि कथमालिङ्गनं कृतवानित्यत आह—ब्रह्मबन्धुरिति । स्मेति प्रसिद्धे ब्राह्मणो माननीय इति ॥ १६ ॥

सहि ब्रह्मणो भावः स्वयं विष्णुरिति तुल्यतया आलिङ्गनं सर्वभोगदानं च कृतवानित्याह—निवासितः प्रिया जुष्टे पर्यङ्क इति । स्वस्थाने स्वयमेव योग्यो भवति नत्वन्यस्तत्रोपवेशनीयः तत्राह—भ्रातरो यथेति । अनेनानौचित्यमेव परिहृतम् उपचारास्तु कृता एवेत्याह—महिष्या वीजित इति । अदृष्टार्थतां निवारयति श्रान्त इति । वालव्यजनहस्तेति राजोपचारः ॥ १७ ॥

ततो भगवतापि ब्राह्मण इति पूजित इत्याह—शुश्रूषया परमयेति । पादसम्वाहनमेवाधिर्येषामिति ते उपचाराश्चतुष्षष्टिः नृत्यगीताद्याः ननु किमाधिक्यमेतावता तत्राह—देवदेवेनेति । देवाः पूज्याः तेषामपि देवो भगवान् तेनापि पूजितश्चेत् किमवशिष्यते ननु भगवान् हीनभावं किमित्यवलम्बते तत्राह विप्रदेवेनेति । विप्रा एव देवा यस्येति देववदित्यणुमात्रमपि स्वव्यापारः तत्र निवारितः स्नानादिकमपि भगवतैव कारितमिति ज्ञापितम् ॥ १८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

श्वोभूते परदिने विश्वमेव भावयति सङ्कल्पमात्रेण सृजतीति विश्वभावस्तेन तस्मात्तादृशविचित्रमहासम्पत्सुदामपुरसृष्टौ तस्य कः प्रयास इति भावः । स्वसुखेन स्वानन्दपूर्णेनेति तस्य तादृशविषयानन्दमात्रदाने च कः प्रयास इति भावः । यथा यथोचितम् ॥ १३—१४ ॥

स्वर्गापवर्गयोः पुंसां रसायां भुवि सम्पदाम् ।
सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम् ॥ १९ ॥
अधनोऽयं धनं प्राप्य माद्यन्नुच्चैर्न मां स्मरेत् ।
इति कारुणिको नूनं धनं मे भूरि नाददात् ॥ २० ॥
इति तच्चिन्तयन्नन्तः प्राप्तो निजगृहान्तिकम् ।
सूर्यानलेन्दुसङ्काशैर्विमानैः सर्वतो वृतम् ॥ २१ ॥
विचित्रोपवनोद्यानैः कूजद्द्विजकुलाकुलैः ।
प्रोत्फुल्लकुमुदाम्भोजकह्लारोत्पलवारिभिः ॥ २२ ॥
जुष्टं स्वलङ्कृतैः पुम्भिः स्त्रीभिश्च हरिणाक्षिभिः ।
किमिदं कस्य वा स्थानं कथं तदिदमित्यभूत् ॥ २३ ॥
एवं मीमांसमानं तं नरा नार्योऽमरप्रभाः ।
प्रत्यगृह्णन् महाभागं गीतवाद्येन भूयसा ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

निर्वृतिमेवाह—अहो इति चतुर्भिः । यत् यतो लक्ष्मीम् उरसि बिभ्रता तेनाहमाश्लिष्टः ॥ १५ ॥

इतिरप्यर्थे ॥ १६—१९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्वोभूते उदिते रवौ विश्वं भावयत्युत्पादयतीति तथा तेन अनेन पुरतो भाविनः अन्यदुर्लभो विभवः सूच्यते स्वसुखेन स्वं सुखं यस्मात्तेन मोक्षप्रदेन अनेन भाविमोक्षसुखमपि सूच्यते अभिवन्दितः अभिवन्दनपूर्वकमनुज्ञातः नन्दितो विनयोक्तिभिः ॥ १३ ॥

स द्विजाग्र्यः महतः वेदाविर्भावस्थानभूतस्य "एतस्यैव महतो भूतस्य निःश्वसितं यदृग्वेदः" इत्यादि श्रुतेः । दर्शनेन "अयं हि परमो लाभः उत्तमश्लोकदर्शनम्" इत्युक्तेः स्वेप्सितेन निर्वृतः सुखितः—दास्यति द्रविणमिति पत्नीकाङ्क्षितं न लब्धं धनं येन. सः पत्नी किं वक्ष्यतीति स्वगृहान् व्रीडितोऽगच्छत् जगाम ॥ १४ ॥

निर्वृतिं दर्शयन् भगवतो गुणान् संस्मृत्य वर्णयति—अहो इति चतुर्भिः ॥ १५—१८ ॥

भाषाटीका ।

हे तात ! सूर्य्य के उदय होने पर आनन्द मूर्ति श्रीकृष्णचन्द्रने ब्राह्मणको विदा कर के मार्ग में उस के पीछे २ जाय कर सर्व प्रकार से उसकी वंदना करी पश्चात् वह ब्राह्मण अपने धामको चला गया ॥ १३ ॥

सुदामाजी ने साक्षात् याचना नहि करी इसी कारण श्रीकृष्ण ते धन को नहि प्राप्त होकर श्रीकृष्ण के दर्शनसे सुखी हो कर लज्जा को प्राप्त भया निजगृह को चला गया ॥ १४ ॥

विदा होने के अनन्तर सुदामाजी यह चिन्तवन करने लगे कि ब्राह्मणों के भक्तन के इष्टदेव श्रीकृष्णका अत्यन्त आश्चर्य कारी ब्राह्मण कुल में भक्तपनो मैने देखा क्योंकि जिस वक्षस्थल में लक्ष्मी जी को धारण करते हैं उसी वक्षस्थल में श्रीकृष्ण ने अत्यन्त दरिद्री मेरा आलिङ्गन किया ॥१५॥

कहां दरिद्री पापी मैं और श्रीनिवास श्रीकृष्ण कहां इस पर भी यह सुदामा अधम ब्राह्मण है ऐसा मानिकर श्रीकृष्ण ने दोनों भुजान सें मेरा आलिङ्गन किया ॥१६॥

जैसें भ्रातान को अपने पलिंग पर निवास कराते हैं। तैसें ही मार्ग में परिश्रम को प्राप्त मेरा प्यारी रुक्मिणी जी के सेवित पलिग पर निवास करा और बालव्यजन से पटरानी ने मेरी हवा करी ॥ १७ ॥

देवनके देव ब्राह्मण देव श्रीकृष्ण ने पादसं वाहनसे आदि लेकर परम पूजा करके इष्टदेव के सदृश मेरा पूजन किया ॥ १८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं सम्पूज्यापि धनस्यादाने कारणं कल्पयति—स्वर्गापवर्गयोरिति द्वाभ्याम् । स्वर्गादीनां यद्यपि तस्य चरणार्चनमेव कारणं तथाऽपि कारुणिकत्वाद्भूर्यपि स्वल्पमपि धनं मह्यं नाददात् ॥ १९—२० ॥

इत्येवं चिन्तयन्निजगृहस्यान्तिकं तत्प्राप्तं तस्य विशेषणं सूर्येति ॥ २१ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

विचित्रोपवनादिभिर्वृतं कथम्भूतैः कूजद्भिर्द्विजकुलैः पक्षिसमूहैराकुलैर्व्याप्तैः तथा प्रोत्फुल्लानि कुमुदादीनि येषु तानि वारीणि येषु तानि तथा तैः ॥ २२ ॥

किञ्च जुष्टमिति । हरिणीनामिवाक्षीणि यासां ताभिः तदैश्वर्यं दृष्ट्वा वितर्कितवांस्तदाह किमिदमिति प्रथमं तेजःपुञ्जं दृष्ट्वा किमिदमिति पश्चाद्विमानानि दृष्ट्वा कस्यचेति स्थानं स्वीयमिति ज्ञात्वा कथं तदिदं स्थानमित्येव रूपमभूदिति ॥ २३ ॥

अमरप्रभास्तत्तुल्यकान्तयः प्रत्यगृह्णन्नुपायनादिभिराद्दतवन्तः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स्वर्गेति युग्मकम् । पुंसां साध्यो यः स्वर्गोऽपवर्गश्च संसारदुःखध्वंसः तयोः (तथा) रसायां भुवि च याः सम्पदो विभूतयस्तासां च मूलमिति तद्विना सुष्ठ्वनुष्ठितेऽपि साधनान्तरे विघ्नापातात् वस्तुविचारे निष्किञ्चनत्वार्थप्रयुक्तत्वात्तत्स्मरणस्यैव साधकतमत्वादिति भावः । चरणार्चनमिति चरणशब्दसाहित्यं भक्तिमात्रव्यञ्जनाय कृतं यथाकथञ्चिदर्चनमात्रे तु तात्पर्यं किन्तु तथापि मैवं ज्ञेयं प्रमत्तत्वात् वक्ष्यते च मयोपनीतं पृथुकैकमुष्टिमिति ॥ १९—२० ॥

इति तावच्चिन्तयन्निति सार्द्धद्वयकम् । इति एवं तत् श्रीभगवन्माहात्म्यं धनप्राप्तिकारणञ्चान्तर्निगूढतया चिन्तयन् तत्र च दिव्यरत्नमयतया तेजसा सूर्यादितुल्यैर्विमानैस्तत्सदृशैर्दिव्यगृहैः सर्वतो वृतं स्थानमपश्यदिति शेषः ॥ २१ ॥

अनेन प्रकारेण तत् श्रीकृष्णकारुण्यम् अन्तश्चिन्तयन् निजरहस्यमिदं कुतोऽपि कोऽपि न शृणुयादिति शङ्कया नतु मुखे जल्पन् विमानैस्तत्सदृशगृहभेदैः तथा बृहत्सहस्रनामस्तोत्रे "श्रीदामरङ्कभक्तार्थभूम्यानीतेन्द्रवैभवः" इति कुमुदं श्वेतम् उत्पलं नीलम् अम्भोजं कमलं कह्लारं सौगन्धिकं पक्षिभिर्हंसादिभिः स्त्रीभिर्दास्यादिभिः हरिणाक्षिभिरित्युभयेषां युगपद्विशेषणत्वेन एकशेषात्पुंस्त्वं समासान्ताभाव आर्षत्वादनित्यत्वाद्वा अत्रैवं ज्ञेयं तस्य विप्रस्य द्वारकावासरात्रौ स्वगृहे सुप्तायां पत्न्यां तत्स्थानं तादृशं तद्रूपादिकं च सर्वं दिव्यमभूत् पश्चात्प्रातः प्रबुद्धया तया तद्दर्शनात् सुधार्मिकतया सत्या स्वविचारेण तत्रत्यदास्यादिद्वारा च स्वभर्तृसङ्गतः श्रीभगवत्प्रभावाः सर्वं ज्ञातं ततश्च स्वपत्यागमनापेक्षया तद्वर्त्मनि स्थाने स्थाने लोका नियुक्ता इति ॥ २२—२३ ॥

ननु, ते परमदिव्यरूपाः कथं दरिद्ररूपस्य तस्यानुगता वशोभन्त तत्राह—महाभागमिति । महाभागत्वमेव सर्वेषां चित्तं चमत्कारयन् शोभाहेतुत्वाय सम्पद्यत इति भावः ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं सम्पूज्यापि धनस्यादाने कारणं कल्पयति—स्वर्गापवर्गयोरिति द्वाभ्याम् । यद्यपि रसायां पाताले भुवि च सम्पदां सर्वासां सिद्धीनामणिमादीनाञ्च स्वर्गापवर्गयोः स्वर्गमोक्षयोश्च कारणं तस्य भगवतश्चरणार्चनमेव ॥ १९ ॥

तथाप्ययं भगवान् कारुणिकः हेतुगर्भमिदम् अतो निर्धनो मादृशो धनं लब्ध्वा नितरां माद्यन् गर्वितो मां न स्मरेदित्यभिप्रेत्य मे मह्यं भूरि बहुधनं नाददात् न ददौ ॥ २० ॥

इतीति । तच्चिन्तया भगवद्गुणानुचिन्तयैव हृष्टः स्वगृहसमीपं प्राप्तः तस्य विशेषणं सूर्येति सूर्यादिवद्दीप्यमानैरित्यर्थः । सर्वतः परितः वृतम् ॥ २१ ॥

किञ्च, विचित्रेति । कूजतां द्विजानां पक्षिणां कुलानि तैराकुलैर्व्याप्तैर्विचित्रैरुपवनैरुद्यानैश्च वृतं तथाप्रोत्फुल्लानि ( कुमुदादीनि ) कुसुमादीनि येषु तानि वारीणि येषु तैः सरोभिरिति विशेष्यमध्याहार्यं जुष्टं युक्तमित्यर्थः ॥ २२ ॥

पुम्भिः हरिणानामिवाक्षीणि यासां ताभिः स्त्रीभिश्च जुष्टं तदाश्चर्यं दृष्ट्वा वितर्कितवानित्याह—किमिति प्रथमं तेजःपुञ्जं दृष्ट्वा किमिदमिति पश्चाद्विमानानि दृष्ट्वा कस्यचेदं स्थानमिति स्वीयमिति ज्ञात्वा कथं तदिदं स्थानम् इत्येवंरूपमभूत् ॥ २३ ॥

इत्येवं मीमांसमानं वितर्कयन्तं द्विजं नराः नार्यश्च हे महाभाग भूयसा गीतवाद्येन प्रत्यगृह्णन् उपायनादिभिराद्दतवन्त इति सम्बन्धः । अमरप्रभाः देवतुल्यकान्तयः इति नरनारीविशेषणम् ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

दिवि आकाशे ॥ १९ ॥

माद्यन्मदं गच्छन् ॥ २० ॥

अन्तर्हृदय इति तस्मिन् कृष्णे स्थितचित्ततया स्वगृहान्तिकं प्राप्तः ॥ २१ ॥ २२ ॥

स्वमन्दिरं दृष्ट्वा इदं किं कस्यचेदं स्थानम् इदं तदिति तत् द्वारकाविधं कथम्भूत् ॥ २३ ॥

एवं मीमांसमानं जिज्ञासमानं तं नरादयः प्रत्यगृह्णन् अभ्याययुरित्यन्वयः ॥ २४—२७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भगवन्तं स्तुत्वा धनादानात् अन्यथा दुःखं प्राप्नोति तन्निराकरणार्थं हेत्वन्तरमेवात्र स्थापयति, स्वर्गापवर्गयोरिति । पञ्चधा हि फलं जगति प्रसिद्धं लोकत्रयसुखं मोक्षः अणिमादिसिद्धयश्चेति तेषामेव हरेः पादसेवनं कारणं पुंसां सर्वेषामेव नतु कस्यचिदपि देवतान्तरोपासकस्य हेत्वन्तरमस्तीति मूलं मुख्यकारणं नन्विदानीं चरणसेवार्थं गतः तदा कथं न दत्तवान् पूर्वं चरणसेवा न कृतेति चेदन्नीं चरणसेवा कृतेति तस्याः कारणतयैव न स्यात् ॥ १९ ॥

तत्राह—अधनोऽयं धनं प्राप्येति । धनेनावश्यं मदो भवेत् मदेन च विस्मृतात्मा मां सुतरामेव न स्मरेत् ततः स्मर-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

णाभावे सर्वनाश इति कारुणिको भगवान् मे भूरिधनं नाददत् तुल्यं तु दत्तवानिति सूचितम् ॥ २० ॥

उपसंहरन्नग्रिममाह—इति तच्चिन्तयन्निति । तत्प्रमेयं चिन्तयन् निजगृहस्यान्तिकं प्राप्तः अपूर्वं दृष्टवानित्याह—एतादृशैर्मनोभिलषितसुखावहैः सर्वतो व्याप्तम् ॥ २१ ॥

ततः परितः शोभामाह—विचित्रोपवनोद्यानैरिति । उपवनं फलप्रधानम् उद्यानं पुष्पप्रधानम् अवान्तरभेदपरिग्रहार्थं बहुवचनं कूजद्द्विजानां कूजद्विहङ्गानां कुलानि जातिविशेषास्तैराकुलानि पुष्पसमृद्धिः निरूपिता तामसराजसभावान्निरूप्य सात्विकभावानाह—प्रफुल्लानि कुमुदानि येषु वारिषु तैः पुष्करिणीस्थैः सर्वतो वृतं कुमुदं रात्रिविकासि अव्यवच्छितम् अम्भोजकल्हारोत्पलानि दिनसन्ध्यारात्रिविकासयुक्तानि नियतानि ॥ २२ ॥

मध्यं वर्णयति । जुष्टं स्वलङ्कृतैः पुम्भिरिति स्त्रीभिश्च हरिणाक्षिभिः परमसौन्दर्ययुक्ताभिः एवम्विधं गृहान्तिकस्थानं दृष्ट्वा गन्धर्वनगरादिशङ्कया अलौकिकं किञ्चित् सम्भावयति किमिदमिति इदं परिदृश्यमानं गन्धर्वनगरमाया वैभवादीनाम् अन्यतम आहोस्वित् सत्यमेवेति ततः स्थिरतां पदार्थानां दृष्ट्वा स्वस्यैव भ्रमात् स्थानान्तरगमनं सम्भावयति कस्यवा स्थानान्तरमिदमिति ततोपि पारतो भोगात् दृष्ट्वा मदीयमेवैतत् स्थानमिति निश्चित्य तदतिहीनः मस्मद्गृहमिदम् एतादृशं कथमभूदिति चिन्तितवान् ॥ २३ ॥

एवमाश्चर्याविष्ट एव तस्मिन् तत् निर्णयार्थं कौतुकान्तरमाह—एवं मीमांसमानमिति । पूजितविचारवचनो मीमांसाशब्दः एवमुत्कृष्टार्थविचारकं पुरुषा नार्यश्च गीतवाद्येन भूयसा प्रत्यगृह्णन् नन्वयं पिशाचसदृशः गीतवाद्यादिकं कथं भजते योग्यत्वाभावादित्याशङ्क्याह—महाभागमिति । परमभाग्ययुक्तं तस्मिन् भगवत्स्वरूपदेवेन्द्रावेशो जातः अतो योग्यरूप इव सन् नृत्यादिभिः पुरस्कृतो जात इत्यर्थः ततःपूर्वं तस्मिन्नेव स्थाने अमरावती प्रादुर्भूता तस्याश्च इन्द्रपत्न्याविर्भावः तेन परमसौन्दर्यं प्राप्तवती ततो भगवता चिपिटभक्षणोत्तरक्षण एव तादृशीमवस्थां प्राप्ता कदा पतिरायास्यतीति पतिमेव चिन्तयाना इदानीं पतिमागतमाकर्ण्य पत्नी तदेकनिष्ठा उद्धर्षो हर्षोत्फुल्लनयना अतिसम्भ्रमात् सर्वाभरणभूषिता सर्वैश्वर्ययुक्ता तूर्णं गृहान्निश्चक्राम, निष्क्रामतीं तां स्थानञ्च वर्णयति—रूपिणी श्रीः आलयादिवेति । क्षीरसमुद्रात् कमलालयाद्वा रूपिणी श्रीः कृतावतारा यथा निर्गच्छति ततः पतिव्रता पतिं दृष्ट्वा मदर्थं भर्त्रा क्लेशं प्राप्त इति चिरात् दूरादागत इति प्रेमोत्कण्ठा सती अश्रुलोचना जाता ततो लज्जावशादपशकुनभयाद्वा मीलिताक्षी जाता ततो यथोचितं पूजां कृतवतीत्याह—बुद्ध्याऽनमदिति । विवेकवत्या बुद्ध्यैव भर्तृनमस्कारं कृतवती मनसा चालिङ्गनम् एतावदेव च कर्त्तव्यम् ॥२४-२६॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अभूर्य्यपि धनं नाददात् यद्वा यन्मह्यं नाददात्तदेव मे भूरि धनं यद्वा तु निश्चितम् ऊनम् अल्पधनं न अददात् अपितु भूरि अदात् ॥ २० ॥

तत् तदा निजगृहस्यान्तिकं विशिनष्टि—सूर्य्येत्यादिभिः ॥ २१—२२ ॥

प्रथमं तेजःपुञ्जं दृष्ट्वा किमिदमिति ततो विमानानि दृष्ट्वा कस्यवेति तत्स्थलस्य स्वीयत्वं निश्चित्याह—कथं तदिदमिति । प्रत्यगृह्णन्निति एताश्च भगवतैव मह्यं दत्ता इति निश्चित्य तान् स प्रगृह्णात् मनसा स्वीचकार पश्चादेता अपि तं प्रत्यगृह्णन् स्वामित्वेन स्वीचक्रुः ॥ २३—२४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सर्वसुखमूलं भगवच्चरणार्चनमस्ति तत्र विघ्नकरं धनं मह्यं न दत्तवानित्याह—स्वर्गेति द्वाभ्याम् ॥ १९—२० ॥

निजगृहान्तिकं परितः कीदृशं विमानैरावृतम् ॥ २१ ॥

चित्रोपवनादिभिश्चावृतं कूजद्भिर्द्विजकुलैः पक्षिसमूहैः आकुलैः व्याप्तैः प्रोत्फुल्लानि कुमुदादीनि येषु तानि वारीणि येषु तैर्जलाशयैरिति विशेष्यपदाध्याहारः ॥ २२ ॥

किञ्च स्वलंकृतैः पुम्भिः हरिणाक्षिभिः मृगनयनीभिस्त्रीभिश्च जुष्टम् दूरतस्तेजःपुञ्जं दृष्ट्वा किमिदमिति तदनन्तरं स्थानं दृष्ट्वा कस्य वा स्थानमिति तदनन्तरं स्वीयं निश्चित्य तत् तादृशम् इदम् एवंविधं कथमभूदिति तर्कितवान् ॥ २३ ॥

एवं मीमांसमानं तर्कयन्तम् अमरप्रभाः देवतुल्यकान्तयः प्रत्यगृह्णन् स्वामित्वेन स्वीचक्रुः ॥ २४ ॥

---

भाषाटीका ।

यद्यपि पुरुषन को पाताल लोक की भूलोक की सम्पत्तियों का और अणिमादि सब सिद्धियों का तथा स्वर्ग मोक्ष का कारण श्रीकृष्ण के चरणारविन्द का अर्चना हि है ॥ १९ ॥

तथापि यह निर्धनी सुदामा धन को पाय कर अत्यन्त गर्वित होकर मेरा स्मरण नहि करैगा ऐसा विचार कर करुणावान् श्रीकृष्ण ने मो को धन नहि दिया यह निश्चित है ॥ २० ॥

सुदामाजी अपने मन में इस प्रकार का चिन्तवन करत अपने गृहके समीप में प्राप्त भए । अब गृह को देखते हैं तो सूर्य्य अग्नि चन्द्रमा के सदृश वारे अनेक विमानों से चारों तर्फ घिरा भया है वीच में गृह है ॥२१॥

बोल ने वारे पक्षीन के समूह से व्याप्त विचित्र नजरि वागन से तथा विना लगाये भए वृक्षन के समूहन सें घिरा भया वह गृह है ॥ और प्रफुल्लित कुमोदिनी श्वेत कमल कल्हार रक्त कमल युत सरोवरन से युक्त वह गृह है ॥ २२ ॥

पतिमागतमाकर्ण्य पत्न्युद्धर्षाऽतिसम्भ्रमा ।
निश्चक्राम गृहात्तूर्णं रूपिणी श्रीरिवालयात् ॥ २५ ॥
पतिव्रता पतिं दृष्ट्वा प्रेमोत्कण्ठाश्रुलोचना ।
मीलिताक्ष्यनमद्बुद्ध्या मनसा परिषस्वजे ॥ २६ ॥
पत्नीं वीक्ष्य (वि)प्रस्फुरन्तीं देवीं वैमानिकीमिव ।
दासीनां निष्ककण्ठीनां मध्ये भान्तीं स विस्मितः ॥ २७ ॥
प्रीतः स्वयं तया युक्तः प्रविष्टो निजमन्दिरम् ।
मणिस्तम्भशतोपेतं महेन्द्रभवनं यथा ॥ २८ ॥
पयःफेननिभाः शय्या दान्ता रुक्मपरिच्छदाः ।
पर्यङ्का हेमदण्डानि चामरव्यजनानि च ॥ २९ ॥
आसनानि च हैमानि मृदूपस्तरणानि च ।
मुक्तादामविलम्बीनि वितानानि द्युमन्ति च ॥ ३० ॥

भाषा टीका ।

भूषण धारण किये पुरुषों से और हिरणीयों के नेत्र सदृश चपल नेत्र वारी स्त्रीयों से युक्त यह गृह है । इस प्रकार के गृह को देख कर सुदामाजी मन में विचार करने लगे, कि—यह क्या तेज है? और यह किसका है पश्चात निज गृह जान कर विचार करने लगे कि यह गृह इस प्रकार को कैसे हो गया ॥ २३ ॥

सुदामा जी इस प्रकार विचार करते हि हैं इतने हि में देवतान के सदृश कान्ति वारे नर और नारी बहुत गाजे वाजे के साथ उस महाभाग सुदामा जी को आगे आय कर लेते भए ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

उद्भूतो हर्षो यस्याः सा अतिसम्भ्रमः आदरो यस्याः सा आलयात् कमलवनाद्रूपधारिणी श्रीरेव स्वर्गस्य तत्र भगवता आनीतत्वात्स्वर्गिणामिव तयोरूपञ्च बभूवेति भावः ॥ २५ ॥

बुद्ध्या अयमेव वन्द्य इति निश्चयेन मनसा सङ्कल्पेन ॥ २६-२८ ॥

यत्र मन्दिरे पयःफेननिभाः शय्याः आस्तरणानीत्यादि सम्पदस्तत्र सर्वसम्पदां समृद्धीर्विलोक्य तर्कयामासेतिचतुर्थेनान्वयः । यत्र च दान्ताः गजदन्तमयाः पर्यङ्काः ॥ २९ ॥

यत्राऽऽसनानि च मृदून्युपस्तरणानि तूलादिमयानि येषु तानि यत्र मुक्तादामविलम्बवन्ति द्युमन्ति च वितानानि ॥ ३०—३१ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

आकर्ण्य पूर्वनियुक्तलोकेभ्यः श्रुत्वा अन्यत्तैः यद्वा रूपिणी श्रीरुक्मिणीव सौन्दर्य्यवती पत्नी अत एव श्रीरिवालयात् वैकुण्ठलोकात् ॥ २५ ॥

प्रेमोत्कण्ठयाऽश्रुलोचना मीलिताक्षी लज्जया अतो बुद्ध्यैव ननाम मनसैव परिषस्वजे नतु साक्षादित्यर्थः । तत्र बुद्ध्येति "पतिरेको गुरुः स्त्रीणाम्" इति विचारांशापेक्षया मनसेति रागप्राधान्येन सङ्कल्पमात्रापेक्षया कारणभेदः ॥ २६ ॥

पत्नीमिति युग्मकम् । स विप्रः प्रथमं प्रीतः ततः स्वयमपि युक्तः सहसा जातेन रूपादिना योग्यतां प्राप्तस्तया सह मन्दिरं प्रविष्टः ॥ २७—२८ ॥

तदेव वर्णयति—पय इति चतुष्केण । चामराणि, व्यजनानि च तालवृन्तादीनि स्वच्छानि स्फाटिकानां कुड्यानि भित्तयो येषु तेषु तदीयेषु क्रीडागृहेषु महत् मारकतं मरकतसमूहो येषु तेषु यद्वा महामरकतमयेषु गृहेषु रत्नरूपा दीपाः भ्राजमानाः सन्ति पाठान्तरे रत्नदीपैः सह रत्नसंयुता इति रत्नमयालङ्कारवत्वात् ॥ २९—३१ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पतिमिति । आलयात्कमलवनाच्छ्रीर्लक्ष्मीरिव स्वगृहात्तूर्णं निश्चक्राम निर्गतवती ॥ २५ ॥

पतिव्रतेति । उत्कण्ठया प्रेमपूर्वकानुध्यानेनाश्रूण्यानन्दजलबिन्दवो लोचनयोर्यस्याः सा प्रेम्णा पतिं दृष्ट्वा मीलिते अक्षिणी यया सा बुद्ध्याऽनमत्प्रणनाम मनसा परिषस्वजे आलिङ्गितवती च ॥ २६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

पत्नीमिति। स ब्राह्मणः वैमानिकीं विमानारूढां देवीं स्त्रियमिव प्रस्फुरन्तीं तां निष्कः पदकाख्यभूषणं कण्ठे यासां तासां दासीनां मध्ये भान्तीं दीप्यमानां पत्नीं वीक्ष्य विस्मितो बभूव॥ २७॥

प्रीत इति। तया पत्न्या युक्तः सहितः निजमन्दिरं प्रविशत्, मणिस्तम्भेत्यादिना। यथा महेन्द्रभवनं तद्वत् स्थितम्॥ २८॥

पय इति। पयःफेनेत्यादेः मन्दिरः इत्यादि पयःफेननिभाः दुग्धफेनसम्मृदुलाः शुभ्राश्च दान्ताः धौताः परिच्छदाः रुक्ममयाः परिकराः यासां ता शय्या इति द्वितीयान्तान् व्यलोकयेत्युपरिष्टात्सम्बन्धः। प्रथमान्तपाठेतु यत्र मन्दिरे पयःफेननिभाः शय्यादयः तत्र सर्वसम्पदां समृद्धिमवलोक्य तर्कयामासेति सम्बन्धः। अस्मिन् पक्षे दान्ताः दन्तमयाः रुक्मपरिच्छदा इति च पर्य्यङ्कविशेषणं हेममयो दण्डो येषां तानि चामरव्यजनानि च॥ २९॥

आसनानीति। मृदून्युपस्तरणानि तूलादिमयानि येषु तानि आसनानि मुक्तादाम्नां मुक्तासराणां विलम्बा येषु सन्तीति तथाभूतानि तानि वितानान्युल्लोचाः द्युमन्ति कान्तियुक्तानि च॥ ३०॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

स निजमन्दिरं प्रविष्टोऽभूत्॥ २८-२९॥

द्युमन्ति द्युतिमन्ति॥ ३०-३१॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

प्रथमं प्रीतः ततः स्वयमपि युक्तः रूपादिभिर्योग्यतां प्राप्तः सन्॥ २८—२९॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततो ब्राह्मणः पत्नीं दृष्ट्वा विस्मितो जात इत्याह—पत्नीं दृष्ट्वेति। पूर्वापेक्षया प्रकर्षेण स्फुरन्तीं देवीं देवतामिव वस्त्रालङ्करणादिभिः पूजितां तस्यां तेजोविशेषं भावादिकं दृष्ट्वा तामुत्प्रेक्षते—वैमानिकीमिवेति। यथा विमानस्था अप्सरा भवति ततोऽप्यतिशयमाह दासीनां निष्ककण्ठीनां मध्ये भान्तीमिति। दासीनां विशेषणं रसस्त्रीत्वाय तासां मध्ये विभान्तीं शोभमानामेतादृशीं दृष्ट्वा स ब्राह्मणो विस्मितः भगवच्चरित्रमेतादृशमलौकिकमिति ततो भगवता कृपयैतद्दत्तमिति निश्चित्य प्रीतस्सन् तया युक्तो निजमन्दिरं प्रविष्टः॥ तन्मन्दिरं वर्णयति—मणिस्तम्भशतोपेतमिति। एकमेव भवनं मणिस्तम्भशतोपेतं यत्र पत्न्यासह स्थितिः एवं लोकोत्तरं तदित्युक्त्वा सामान्यतः परमोत्कर्षमाह—महेन्द्रभवनं यथेति॥ २७—२९॥

तत्रत्यान्यपदार्थान् वर्णयति—पयःफेनेति त्रिभिः। शयनोपयोगीन्यासनोपयोगीनि गृहोपयोगीनि च वस्तूनि वर्ण्यन्ते पयःफेननिभाः शुभ्रा उत्तुङ्गाः शय्याः दन्तनिर्मिताः पर्य्यङ्काः रुक्मपरिच्छदाः सुवर्णेन दन्तमध्ये योजिताः हेमदण्डानि चामरव्यजनानि चकारादन्यान्यपि शयनसाधनानि आसनान्युपवेशनस्थानानि हैमानि सुवर्णमयानि मृदुपदसन्ति आस्तरणानि च मृदुपदनिर्मितानि चकारादन्यानि सिंहासनोपयोगीनि तदुपरि मुक्तादामविलम्बीनि चन्द्रातपानि द्युमन्ति च विचित्राणि कान्तियुक्तानि॥ २९—३०॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

रुक्मिणी श्रीरिति मग्नच्छवि भित्तिके गृहे सा कुचेला शुष्ककुचाद्यवयवा निशि सुप्ता आसीत् प्रातरुत्थाय स्वं स्वीयं गृहादिकञ्च तादृशं दृष्ट्वा क्षणं चमत्कारसिन्धुमग्ना पश्चाद्गगवता दत्तं तद्वैभवं निश्चित्य ततः पतिमायान्तं तु निश्चक्राम॥ २५॥

पतिं दृष्ट्वेति। धमनिव्याप्तं शुष्कगात्रं कुचेलं स्वपतिं सा परिचिनोत्येतदर्थमेव भगवता सख्युस्तस्य तादृशत्वं न दूरीकृतमिति ज्ञेयम्॥ २६॥

सतु स्वपत्नीं तां न परिचिकाय इत्याह—पत्नीं स्वभार्य्यां देवीमिव वीक्ष्य स विस्मितः केयं देवाङ्गना मामधममभ्युपैतीति विस्मयाब्धौ पतितः ततश्च तवैवेयं सा भार्य्येति ताभिर्ज्ञापितस्तत् क्षण एव स्व(मेव) देहञ्च दिव्यसौन्दर्य्यतारुण्यवस्त्रालङ्कारायाश्रितं वीक्ष्य प्रीतः महेन्द्रभवनं यथेति "श्रीदामरङ्कभक्तार्थभूम्यानीतेन्द्रवैभवः" इति वृहत्सहस्रनामस्तोत्रम्॥ २७-३१॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

उद्धर्षेण उद्भूतेन हर्षेण अतिसम्भ्रमो वैवश्यं यस्याः सा आलयात् कमलवनात् रूपिणी रूपधारिणी श्रीरिव गृहात्तूर्णं निश्चक्राम निर्गतवती॥ २५॥

प्रेम्णा स्नेहेन या उत्कण्ठा हर्षोद्रेकः तया अश्रूणि लोचनयोः यस्याः सा बुद्ध्या अनमत् मनसा परिष्वजे आलिङ्गितवती॥ २६॥

भान्तीं दीप्यमानाम्॥ २७-२८॥

यत्र मन्दिरे पयःफेननिभाः शय्यादयः तत्र ब्राह्मणः सर्वसम्पदां समृद्धिं विलोक्य तर्कयामासेति चतुर्थेनान्वयः। शय्या आस्तरणानि दान्ताः गजदन्तमयाः पर्य्यङ्काः॥ २९॥

मुक्तादाम्नां विलम्बा ये येषु सन्ति तानि वितानानि॥ ३०॥

---

भाषा टीका।

पति को आये भए सुन कर उत्पन्न हुए हर्ष से अति व्याकुल भई सुदामा जी की भार्य्या जैसे कमल वन से साक्षात् लक्ष्मी निकसे तैसे ही शीघ्रही निज गृह से निकसती भई॥ २५॥

पति को देख कर प्रेम से उत्साह भया उस से नेत्रों में अश्रुपात बहने लगे तब तो नेत्र मीच कर पतिव्रता बुद्धि

स्वच्छस्फटिककुड्येषु महामारकतेषु च ।
रत्नदीपान् भ्राजमानाँल्ललनारत्नसंयुतान् ॥ ३१ ॥
विलोक्य ब्राह्मणस्तत्र समृद्धीः सर्वसम्पदाम् ।
तर्कयामास निर्व्यग्रः स्वसमृद्धिमहैतुकीम् ॥ ३२ ॥
नूनं बतैतन्मम दुर्भगस्य शश्वद्दरिद्रस्य समृद्धिहेतुः ।
महाविभुतेरवलोकतोऽन्यो नैवोपपद्येत यदूत्तमस्य ॥ ३३ ॥
नन्वब्रुवाणो दिशते समक्षं याचिष्णवे भूर्यपि भूरिभोजः ।
पर्जन्यवत्तत्स्वयमीक्षमाणो दाशार्हकाणामृषभः सखा मे ॥ ३४ ॥
किञ्चित्करोत्युर्वपि यत्स्वदत्तं सुहृत्कृतं फल्ग्वपि भूरिकारी ।
मयोपनीतां पृथुकैकमुष्टिं प्रत्यग्रहीत्प्रीतियुतो महात्मा ॥ ३५ ॥
तस्यैव मे सौहृदसख्यमैत्री दास्यं पुनर्जन्मनि जन्मनि स्यात् ।
महानुभावेन गुणालयेन विषज्जतस्तत्पुरुषप्रसङ्गः ॥ ३६ ॥

---

भाषा टीका ।

मे पति को नमस्कार करती भई और मनसे पति को मिलती भई ॥ २६ ॥

जिन के कण्ठ में पदक पड़ी हैं ऐसी दासियों के मध्य में अत्यन्तशोभायमान और विमान में बैठी देवाङ्गना के सदृश प्रकाशमान भार्य्या को देख कर सुदामा जी चकित होगए ॥ २७ ॥

इन्द्र के भवन सदृश मणीन के सैकड़ों खम्भा युक्त निज मन्दिर में सुदामा जी आप प्रसन्न होकर भार्य्या सहित प्रवेश करते भए ॥ २८ ॥

उस मन्दिर मे दूध के झाग सदृश कोमल पद्म बिछौना बिछे और जिन में सुवर्ण के पत्र की लगी ऐसी अनेक सेज बिछी हैं और जिन में सुवर्ण की सामग्री एवं हाथी दांत के बड़े२ पलिंग जहां विद्यमान हैं और सुवर्ण की डांडी के अनेक चौंर बीजना जिस में विद्यमान हैं ॥२९॥

कोमल बिछौना वारे सुवर्ण के अनेक आसन जिस में विद्यमान हैं मोतीन की मालान के गुच्छा वारी प्रकाशमान अनेक चांदनी जिस में लगि रही हैं ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

स ब्राह्मणो निर्व्यग्रः सन् स्थिरस्सन्नहैतुकीमाकस्मिकीं स्वस्य समृद्धिं तर्कयामास कुत एषा समृद्धिरागतेति ॥ ३२ ॥

निश्चिनोति—नूनमिति एतन्ममेति एष प्रासादहश्च तस्यैतन्मम महती विभूतिर्यस्य तस्यावलोकादन्यः ॥ ३३ ॥

ननु स चेदवलोकनमात्रेण महदैश्वर्यं दत्तवांस्तर्हीदं तुभ्यं मया दत्तमिति किं नावोचदत आह—नन्विति । ननु मे सखा समक्षमब्रुवाण एव याचिष्णवे याचकाय भूरि बह्वपि दिशति ददाति अत्र हेतुः भूरिभोजः स्वयं तद्देयं पर्जन्यवदीक्षमाण इति, अयमर्थः स्वयं तावद्भूरिभोजो बहुभोज आप्तकामत्वाल्लक्ष्मीपतित्वाच्च अतो यथा पारावारपरिपूरकोऽतिवदान्यः पर्जन्यः कदाचिद्बह्वपि वर्षमल्पमेवेव मन्यमानो लज्जयेव समक्षमवर्षन्रात्रौ निद्राणे कर्षके तत्क्षेत्रमाप्लावयत्येवं श्रीकृष्णोऽपि स्वभोगापेक्षया तद्देयमिन्द्रादिर्दिवमप्यतितुच्छं मन्यानस्तस्य च भजनं बहुमन्यमानः समक्षमब्रुवाण एव ददातीति ॥ ३४ ॥

तदेवाऽऽह—किञ्चिदिति । उरु बह्वपि स्वदत्तं यत्किञ्चित्करोत्यल्पं मन्यते सुहृत्कृतं फल्ग्वतितुच्छमपि भूरिकारी बहु मन्यत इत्यर्थः । अतएव मयोपनीतां समीपं नीताम् प्रीतियुतः स्वयमेव प्रतिगृहीतवान् ॥ ३५ ॥

श्रीकृष्णस्य भक्तवात्सल्यं दृष्ट्वा तद्भक्तिं प्रार्थयते । तस्येति सौहृदं प्रेम सख्यं हिताशंसनञ्च मैत्री उपकारत्वञ्च दास्यं सेवकत्वम् तत्समाहारैकवचनम् तस्य तत्सम्बन्धिनो मे मम स्यान्नतु विभूतिः किञ्च महानुभावेन तेनैव विषज्जतो विशेषेण सङ्गं प्राप्नुवतस्तद्भक्तेषु प्रकृष्टः सङ्गः स्यादिति ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्र स्वगृहे सर्वसम्पदां समृद्धीरित्यतोऽनुक्तान्यप्यन्यानीन्द्रभवनाधिकानि वैभवानि गृहीतानि स्वस्य समृद्धिं विभूतिमित्यर्थः । तर्कयामास कुतः ? कथं जातेति विचारितवान् एवं कुत एषा समृद्धिरागतेति तेषां व्याख्याऽप्येव युक्ता तर्कणस्य प्रकारापेक्ष्यत्वात् ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नूनं निश्चये बत हर्षे यदूत्तमस्यावलोकतोऽन्यत् किञ्चिदपि बतस्य॰ मम ह सा समृद्धिहेतुर्न अन्य इति तु पाठः सर्वत्र एतच्छब्दार्थमेव हेतुत्वेन विवृणोति दुर्भगस्य धनादिभाग्यहीनस्य अतः शश्वन्नित्यं दरिद्रस्येति यदूत्तमस्य तु कीदृशस्य महती सर्वतः पूर्णा विभूतिर्लक्ष्मीरूपा शक्तिर्यत्र तादृशस्य ॥ ३३ ॥

दाशार्हकाणामृषभो मे मम सखाऽसौ असमक्षं याचिष्णवे साक्षादयाचकाय किन्तु निगूढतद्वासनायुक्ताय अब्रुवाणोऽपि असमक्षमपि भूरि साद्गुण्यादिकमपि दिशते नन्वसमक्षयाचनं कथं जानीयात् तत्राह तत्स्वयमेवेक्षमाणः सर्वज्ञशिरोमणित्वादिति भावः । तत्र भूरिदाने हेतुः भूरिभोज इति तादृशः स्वयमल्पं दातुं लज्जत इति भावः अनुक्त्वैवासाक्षादेव च दाने हेतुः असमक्षं याचिष्णव इत्येवं तदेव सारस्याय स्यादिति भावः । स च निरुपाधिकः दातुः स्वभावोऽन्यत्रापि दृश्यत इत्याह—पर्जन्यवदिति कदाचित् प्रकटमयाचमानेऽपि सुप्तेऽतिलोकगर्जनं विनाऽपि वर्षतीति दर्शनात् दाशार्हकाणामृषभ इति तादृशभावनायां निजभावविशेषोद्रेकात् तत्रैव सखेति तेन परमानन्दमदोद्रेकादुक्तम् ॥ ३४ ॥

नच मन्तव्यं तावद्दत्त्वापि तस्य तृप्तिः स्यादिति स्वल्पेऽपि भक्तकृते बहुमाननादित्याह—किञ्चिदिति । तत्र मत्कृतमेव मुख्यं प्रमाणमित्याह, मयेति । पूर्वत्र हेतुः महात्मा महान् पूज्यः आत्मा कृपार्द्रादिस्वभावो यस्य सः अतो मत्पृथुकैकमुष्टेस्सकाशात् तुच्छत्वमननेन नूनमसौ लज्जितश्चास्ते इति भावः ॥ ३५ ॥

यस्मादेवं तस्मात्तस्यैवेति येन मम सम्बन्धेन तत्कणमपि साक्षादं चर्वितवान् तस्यैवेत्यर्थः । सौहृददास्ये स्वकर्तृके तद्विषयके सख्यमैत्र्यौ च तत्कर्तृकेस्वविषयके तस्मिन्नेव प्रेम करवाणि तस्यैव च सेवां स एव मम हितमाशास्तां स एव मामुपकरोतु चेत्यर्थः । पुनरिति पुनरपीत्यर्थः । यद्वा त्वर्थोऽयं पुनःशब्दः ॰जन्मादिकं यत्र कुत्रापि स्यात् सौहृदादिकन्तु तस्यैवास्त्वित्यर्थः । सौहृदादिकन्तु तैर्व्याख्यातम् अथवा सौहृदं दैहिकसम्बन्धः सख्यं विश्वासः मैत्री स्नेहः पुनः सदैन्योक्तिर्दास्यमिति यद्वा सौहृदं निरुपाधि मिथो हितकारित्वं सख्यं सह विहारमयः प्रणयः मैत्रस्निग्धतामात्रमपि दास्यं कर्मकारत्वमपीति पुनरिति वाक्यालङ्कारे अन्यत्समानं नन्वेवकारेण तदीयसुहृदादयोऽपि व्यावर्त्त्यन्ते नेत्याह—महानुभावः महान् ऐश्वर्यं यस्य तेन किञ्च गुणानां रूपतारुण्यकारुण्यवात्सल्यादीनामालयेन विषञ्जतः विशेषेण सौहृदादिना सङ्गं प्राप्नुवतो मम तत्प्रभावेन तदीयगुणेनैव च तस्य गुणानां सुहृदादीनां प्रकृष्टः सप्रेमकः सङ्गश्च स्यात् ॥ ३६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

पर्जन्यवत् । पर्जन्यो गर्जितपूर्वकं ददाति नैवमित्यर्थः । यद्वा पर्जन्यवत् ददाति न अस्मानीक्षमाण इत्यर्थः ॥ ३४ ॥

किञ्चिदिति । महदपि स्वदत्तम् अल्पं मन्यते सुहृद्दत्तमल्पमपि भूरि मन्यत इत्यर्थः ॥ ३५ ॥

सौहृदसख्यमैत्रीदास्यमिति द्वन्द्वैकवद्भावः सौहृदं हितैषित्वं सख्यं प्रियैषित्वम् अमित्रात्रायकत्वं मैत्री उपकारस्मरणेन किञ्चित्करत्वं दास्यम् ॥ ३६—४१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

महान्तो मरकता इन्द्रनीलमणयो येषु तेषु स्वच्छेषु स्फटिकमयकुड्येषु रत्नान्येव दीपाः स्वरिरैस्संवृताः भ्राजमाना औज्ज्वल्यातिशयाद्रत्नानां दीपत्व रूपणम् ॥ ३१ ॥

विलोक्येति । निर्व्यग्रः निश्चलः स्थितः सन्नहैतुकीमाकस्मिकीं स्वस्य समृद्धिं तर्कयामास कुतः? एषा समृद्धिरागतेति तावच्चिन्तितवानित्यर्थः ॥ ३२ ॥

निश्चिनोति—नूनमिति । दुर्भगस्यास्मिन् जन्मनि निर्भाग्यस्य शश्वत्सदा जन्मान्तरेष्वपीत्यर्थः । दरिद्रस्य मम समृद्धिहेतुः सम्पद्धेतुः महाविभूतेः विभूतिद्वयनायकस्य यदूत्तमस्य भगवतो अवलोकनादन्यो नैवोपपद्यते न सम्भाव्येत नूनं ध्रुवम् अहो बतैतदाश्चर्यमित्यर्थः ॥ ३३ ॥

एवं तर्हि समक्षमेव मह्यं दास्यामीति ब्रुवन् किं न ददावित्याशङ्क्याह—नन्विति । भूरिभोगः बहुभोगो भगवान् हेतुगर्भमिदम् अतः याचिष्णवे याचकाय भूर्यपि बहुभाग्यमप्यब्रुवाणो दास्यामि प्रतिगृह्णीष्वेत्येवमवदन्नसमक्षमेव दिशते यच्छति विरिञ्चिभोगपर्यन्तमपि याचकाय दीयमानं स्वभोगापेक्षया अतितुच्छमेवेत्याभिप्रेत्य लज्जया तत्समक्षं न यच्छति किन्त्वसमक्षमेवेत्यर्थः । एतदेव दृष्टान्तमुखेन वदन् कृतज्ञतामप्याह—पर्जन्यवदिति । यथा पर्जन्यः कदाचित् बह्वपि वर्षमल्पमेव मन्यमानः शयाने सति जने रात्रावगर्जन्नसमक्षमेव वर्षति तद्वदयं दाशार्हकाणामृषभो यदुपतिः तत्सेवकसमर्पितमत्यल्पमपि समीक्षमाणो बहुमन्यमानः सकामे कामनया युक्ते पुंस्यभिलषितानर्थानसमक्षं वर्षतीत्यर्थः ॥ ३४ ॥

तत्स्वयमीक्षमाण इत्येतदेव स्पष्टं दृष्टान्तेन द्रढयति—किञ्चिदिति । यत्स्वदत्तमात्मना दत्तमैश्वर्यमुरु भूर्यपि तत्किञ्चित्करोत्यत्यल्पं मन्यत इत्यर्थः । यत्सुहृदा भक्तेन कृतं समर्पितं फल्गु अल्पमपि तद्भूरि बहु करोतीति तथा तथा हि मयोपनीतं समीप आनीतं पृथुकानाम् एकं मुष्टिं स्वयं महात्मोभयविभूत्यधिपतिरपि प्रीतियुक्तः प्रत्यग्रहीत महात्मेत्यस्य सर्वभूताभिप्रायज्ञ इति वाऽर्थः ॥ ३५ ॥

अतः कृतज्ञतमस्य भगवतः सख्यादिकमेव मम प्रतिजन्मनि स्यादिति प्रार्थयते—तस्यैवेति । भगवत एव सौहृदं हितैषित्वं प्रेम वा सख्यं प्रियत्वं हिताशंसनं वा मित्रत्रायकत्वं वा मैत्री उपकारकरणेन किञ्चित्करत्वं दास्यं भूयात् तेषां द्वन्द्वैकवद्भावः तन्मम जन्मनि जन्मनि वीप्सायां [illegible]ः स्यादस्तु नतु विभूतिरिति भावः । किञ्च गुणालयेन अनन्तकल्याणगुणाश्रयेण महानुभावेन भगवता विषञ्जतः विशेषेण

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सङ्गतिं प्राप्नुवतो मम तत्पुरुषाणां तद्भक्तानां प्रसङ्गः प्रकृष्टस्सङ्गः स्यात् ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

निर्व्यग्रः निस्सम्भ्रमः ॥ ३२ ॥

ममैतदेव समृद्धिहेतुर्महाविभूतेर्यदूत्तमस्यावलोकतोऽभ्यन्निमित्तं नैवोपपद्येत सएव हेतुरित्यन्वयः ॥ ३३ ॥

यः स्वयमब्रुवाणस्तूष्णीकः पर्जन्यवत् नः अभयं शं दिशते ददाति तेन यो यस्मै विष्णवे अभूर्यपि धनं ददाति भूरि तेजाः अनल्पप्रभावो भवति स एतादृशमहिमा दाशार्हकाणामृषभः श्रीकृष्णः मे सखा नन्वनुमतं लोकेनेति शेषः ॥ ३४ ॥

भक्तदत्तमेव हरेस्तृप्तिजनकत्वेनानन्तफलत्वेन परिणमति नाभक्तदत्तमित्याह—किञ्चिदिति । यत्सुष्ठु भक्तिपूर्वमदत्तं तदुर्वपि किञ्चित्करोति फलत इतिशेषः । "त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिम्" इत्यादेः सुहृत्कृतं पूजनं फल्गु अपि अल्पमपि भूरिकारि एतत्कुतो दृष्टमत्राह मयेति हेतुगर्भविशेषणमेतत् ॥ ३५ ॥

यतोऽत्र भक्तिरेव प्रधानकारणमतः सैव सम्पाद्येति भावेनाह-तस्यैवेति । योऽहमनादिकालमारभ्य तच्चरणैकशरणः तस्यैव मे सौहृदादि स्यादित्यन्वयः न केवलस्य हरेः भक्तिलक्षणसङ्गेन पूर्यते अपितु तद्भक्तसङ्गोपि स्यादिति प्रार्थयते—महानुभावेनेति । भगवता सह विपज्ञतः विशेषेण सङ्गं कुर्वतः मे तत्पुरुषप्रसङ्गः तस्य हरेः पुरुषेषु ब्रह्मादिष्वपि प्रकृष्टसङ्गश्च स्यादित्यन्वयः ॥ ३६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

गृहभित्तीर्वर्णयति—स्वच्छस्फटिककुड्येष्विति । स्फटिकमयाः भित्तयः महामरकतमयाश्च तेषु सर्वत्र रत्नप्रदीपा आभान्ति ललनाः स्त्रियश्च रत्नसंयुताः चित्रमयारत्नैर्विरचिताः सत्यः स्त्रिय एव वा ॥ ३१ ॥

एवं दृष्ट्वा ब्राह्मणस्य या बुद्धिस्तामाह-विलोक्य ब्राह्मणइति । किञ्च सर्वसम्पदां समृद्धीर्दृष्ट्वा तस्य हेतुं तर्कयामास निर्व्यग्रः सावधानः ननु हेतुः प्रसिद्धएव भवति किमिति चिन्तनं तत्राह स्वसमृद्धिमहेतुकीमिति ॥ ३२ ॥

लोकावगतहेत्वभावात् तत्र बहून् हेतून् उत्प्रेक्ष्य निराकरोति—नूनं बतैतदिति । भगवदिच्छा अदृष्टं कालो ग्रहाः भगवानेव वेत्ति तत्रान्ये बाधिकविषया इति भगवानेव दृष्टकारणमिति निर्णयमाह—एतत्परिदृश्यमानं मम दुर्भगस्य कथं बतेति हर्षे कदाचिद्भाग्योदयेन भवतीति चेत् तत्राह—शश्वद्दरिद्रस्येति—सर्वदा दरिद्रोऽहं कथमेकदैव सुसमृद्धो जातः न ह्यकस्मादेवं भाग्यानि भवन्ति अतो महाभूतेर्भगवत एवावलोकनादृते अन्यो हेतुर्नैवोपपद्येत लोकेष्वेवं श्रूयते अकस्माल्लक्ष्म्या दृष्टो महासमृद्धो जात इति भगवांश्च महाविभूतिः महत्यो विभूतयो लक्ष्मीसदृश्यो यस्येति अतोपपत्तिमप्याह—यदूत्तमस्येति । यादवाः पूर्वमन्यप्रयोजकाः स्थिताः इदानीं भगवद्दृष्ट्या अतिसमृद्धदृष्टा उपपत्तिर्यदूत्तम इति ॥ ३३ ॥

ननु भगवांश्चेत् दद्यात् तर्हि कथं न वदेत् अतः सन्देह इति चेत्तत्राह—नन्वब्रुवाण इति । नन्विति निश्चये भगवानेव याचिष्णवे एतद्दिशते आदिशति प्रदर्शयति प्रयच्छतीत्यर्थः परमसमक्षम अब्रुवाणश्च इदं प्रयच्छामीति नोक्तवान् स्वसमक्षञ्च न दत्तवान् एतवान् परं विशेष इत्यर्थः नन्वेतादृशं दातृस्वरूपं न क्वाप्युपलक्षितमिति चेत्तत्राह—पर्जन्यवत्तत्स्वयमीक्षमाण इति । यथा पर्जन्यः कृषीवलानात्मैकशरणान् निदाघपीडितान् दृष्ट्वा कदाचिच्छयानेष्वेव तेषु तत्सस्यं सर्वमेवाप्याययति एवं भगवानपि मां तथाविधमेवमाप्यायितवान् तद्भक्तानां स्वरूपं स्वयमेवेक्षमाणः ननु तथापि यावदपेक्षितं तावदेव दद्यात् कथं बहु दत्तवान् इत्याशङ्क्याह—भूर्यपीति । यतः स्वयं भूरिभोजः ननु केचित् स्वयं भोक्तारोपि परस्मै न बहु प्रयच्छन्तीति चेत्तत्राह—दाशार्हकाणामृषभ इति । दशार्हका दाशार्हाः यादवविशेषाः ते सेवकसमृद्धिवाञ्छायुक्ताः तेषामधिपः स्वसेवकान् दाशार्हान् तथा कृतवानिति ननु तं तस्य सम्बन्धिन इति चेत्तथाहमपीत्याह—सखा म इति ॥ ३४ ॥

अन्यमपि भगवद्गुणं स्मृत्वा धीरोदात्तो भगवानेवैवं दातुं समर्थ इति निश्चिनोति—किञ्चित्करोतीति । योऽल्पं प्रयच्छति स लज्जया अनुक्त्वा प्रच्छन्नत्वं ज्ञापयति अतः स्वदत्तमुर्वपि किञ्चित्करोति सुहृत्करोतीति सुहृत्कृतमस्मदीतं तु तर्पयन्त्यङ्ग मां विश्वमित्यादिवाक्यैः फल्ग्वपि मुष्टिचतुष्टयात्मकमुपायनं भूरिकारी तत्प्रकटीकरोति मयोपनीतमिति भगवानिन्द्रादिभिरप्यानीतमेवममृतं न भक्षयति यथा पृथुकानाम् एकमुष्टिं भक्षितवान् अत अमृतापेक्षयापि पृथुकानामानन्ददातृत्वाद्भूरिकारित्वं तत्रापि प्रीतियुतः परमापेक्षितपदार्थं प्राप्त इव स्वयन्तु महात्मा कोटिब्रह्माण्डनायकः ॥ ३५ ॥

तस्मादेवं भक्तवत्सलः कोपि नास्तीति तत्सम्बन्धा मम बहवो भवन्त्विति प्रार्थयते—तस्यैव मे सौहृदसख्यमैत्रीति । प्राणिनो देहेन्द्रियं प्राणान्तःकरणानि चतुर्विधानि भवन्ति तत्र हृदयस्य सम्बन्धः सौहार्देन भवति सौहार्देनैव स्मरणं सख्यं प्राणस्य स हि सर्वत्र जीवमुपयाति सखायमेवानुगच्छति भगवांश्चेन्मत्प्राणानां स भवेत् तदा तमेवानुगच्छेयुरिति तात्पर्यम् इन्द्रियाणां मैत्री तानि मित्रानुगुणमेव कुर्वन्ति दास्यं देहस्य एतच्चतुष्टयं मम पूर्वं स्थितमेव अन्यथा भगवत्सम्बन्धः कथं भवेत् पुनर्जन्मनि जन्मनि स्यादिति प्रार्थना यत्र याच्ञाभावेपि समृद्धिमेतावतीं दत्तवान् तत्र याच्ञाया किं न दद्यादिति गृहे प्रविष्टो याचते नन्वेकस्मिन् जन्मनि एकेन सहजातं जन्मान्तरे शिवेनान्येन वा प्रार्थयतां कोयं निर्बन्ध इति चेत्तत्राह-महानुभावेन गुणालयेनेति। स हि महानुभावः तत्सेवकसेवकेष्वपि न संसारादिधर्मा भवन्ति इति किञ्च गुणालयेन गुणानां स एव एक आलयः आकरः ननु तत्र सख्यार्थं जन्मादिप्रार्थनायां तत्र विषयैः सह आसङ्गः स्यात् तदा अनर्थो भवेदित्याशङ्क्याह—विषज्जतस्तत्पुरुषप्रसङ्ग इति । तदा भगव-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

केः सह सङ्गो भवतु तेनैव सङ्गदोषो निवर्त्स्यित्यर्थः ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अहेतुकीमाकस्मिकीम् ॥ ३२ ॥

एव चासावहञ्च तस्य एतन्मम महाविभूतेस्तस्यावलोकायो न अन्यत्रैवेत्यपि पाठः ॥ ३३ ॥

ननु स चेदवलोकनमात्रेणैव महदैश्वर्य्यं दत्तवांस्तर्हि इदं तुभ्यं दत्तमिति तदैव किं नावोचदत आह—ननु निश्चितमेव मे सखा समक्षमब्रुवाण एव याचिष्णवे मद्विधयाचकजनाय भूर्य्यपि बहुतरमपि दिशते दिशति ददाति अब्रुवाणत्वे हेतुः भूरिभोजः लक्ष्मीकान्तत्वादात्यन्तिकभोगाधिक्यवान् अयं भगवत आशयः मत्प्रियसखोऽयं स्वभोग्यवस्तुनोऽप्याधिकान् पृथुकान् मह्यं ददौ स्वगृहे ह्यवर्त्तमानानामपि तेषां याचित्वैवानीतत्वात् तस्मादस्मै मयापि स्वभोग्यादधिकमेव दातुं युक्तं किन्तु मद्भोग्यस्य सममेव क्वापि नास्ति अधिकं कुतः स्यादिति अतः स्वभोग्यादधिकञ्च स्वभोग्यसमञ्च दातुमसमर्थो देयमैन्द्रपारमेष्ठ्यादि पदमल्पमेव मन्यमानो लज्जया अब्रुवाण एव परोक्षमेव ददातीति तत्र दृष्टान्तः पर्जन्यवदिति यथा पारावारपरिपूरकोपि वदान्यः पर्जन्यः कर्षकदत्तं बहुविधं पूजोपहारं सम्भुज्य कर्षकापेक्षया बह्वपि वर्षं स्वयं तदल्पमेव देयमीक्षमाणः कदाचिल्लज्जयेव समक्षमवर्षन् रात्रौ कर्षकेषु निद्राणेषु तत्क्षेत्राण्याप्लावयति तथेत्यर्थः । दाशार्हकाणामृषभ इति दाशार्हवंश्या एव वदान्यास्तेषामपि ऋषभः ॥ ३४ ॥

उरु अपि बह्वपि स्वदत्तं महामीदृशैश्वर्य्यं किञ्चित्करोति अल्पं मन्यते सुहृदो मद्विधस्य फल्गु अतितुच्छमपि वस्तु भूरिकारी बहुमन्यत इत्यर्थः । यतो मयेत्यादि ॥ ३५ ॥

तस्यैवैतादृशभक्तवत्सलस्य सौहृदं स्नेहः सख्यं सहायस्थायित्वमयः प्रणयः मैत्री बन्धुभावः दास्यं सेवा तेषां द्वन्द्वैक्यं महानुभावेन तेनैव विपज्जतः विशिष्टसङ्गं प्राप्नुवतो मम तद्भक्तेषु प्रसङ्गः स्यात् ॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

रत्नान्येव च प्रदीपाः रत्नप्रदीपाः ॥ ३१ ॥

सर्वसम्पदां समृद्धीर्विलोक्य निर्व्यग्रः अवहितः सन् अहेतुकीमाकस्मिकीं स्वस्य समृद्धिं तर्कयामास कुतः इयमागतेति चिन्तितवानित्यर्थः ॥ ३२ ॥

निश्चित्याह—नूनमिति ॥ ३३ ॥

इदं तुभ्यं दत्तमित्येवमब्रुवाणेनासमर्चं बहुविभवे दत्ते बीजमाह—नन्विति । दाशार्हकाः कृतज्ञाः तदृषभोऽतिकृतज्ञः भूरिभोजोपि बहुसम्पत्पूर्णगृहादिभोक्तापि तत् गृहे विद्यमानम् उपावतः सम्पादितं पृथुकमुष्टिचतुष्कं स्वयमीक्षमाणैः स्वगृहगतविभूतिदानेनापि तत्प्रतिकर्तुमात्मानं मन्यमानः याचिष्णवे भार्याद्वारेति शेषः । अस्मद्विधाय भूर्य्यपि इन्द्रादिषु अविद्यमानमपि लज्जया असमक्षम् अब्रुवाण एव मे सखा दिशते ददातीत्यन्वयः । पर्जन्यवत् यथा कदाचिदतिदुःखोपार्जितैर्जलादिभिः कर्षकेणार्चितः पर्जन्यः स्वाभाविकं स्वीयं जलसमूहं तत्सममन्यमानः कर्षके निद्राणे असमक्षं तत्क्षेत्रं रात्रौ लज्जया ऽऽप्लावयति तद्वत् ॥ ३४ ॥

तत्स्वयमीक्षमाण इत्यनेन सूचितां भगवतः कृतज्ञतां प्रपञ्चयति—किञ्चिदिति । स्वदत्तम् उरु अपि यत् करोति न बहुमन्यते इत्यर्थः । सुहृत्कृतं फल्गु अल्पमपि भूरिकारी भूरि बहुकरोतीति तथा बहुमन्यते इत्यर्थः । अतो ममोपनीतं केवलं समीपं नीतं ननु अर्पितं तथापि महात्मा सर्वात्मा स्वतः परिपूर्णकामः पृथुकैकमुष्टिं स्वयमेव प्रीतियुतः प्रत्यग्रहीत् प्रतिगृहीतवान् ॥ ३५ ॥

भगवति विविधां भक्तिं भागवतेषु च प्रसङ्गं प्रार्थयते तस्यैति । सौहृदादीनां द्वन्द्वैकवद्भावः महानुभावेन भगवता विपज्जतः विशेषेण अन्येभ्यस्तत्पुरुषेषु श्रेष्ठेन भावेन सङ्गं प्राप्नुवतः तत्पुरुषेषु भागवतेषु प्रकृष्टः सङ्गश्च स्यात् ॥ ३६ ॥

भाषा टीका ।

जहाँ बड़ी नीलमणि जटित निर्मल बिल्लोरी पाषाण की भीतिन में प्रकाशमान अनेक रत्न हि मानो दीपक हैं तथा उत्तम स्त्री जहाँ विद्यमान हैं ॥ ३१ ॥

उस भवन में उनको देखकर और सब समृद्धिको देखकर सावधान चित्त होकर सुदामा ब्राह्मण निज समृद्धि को निर्हेतुक तर्कना करता भया कि यह समृद्धि कैसे आय गई ॥ ३२ ॥

पश्चात् उसने यह निश्चय किया कि भाग्य हीन सदा दरिद्री मेरी अद्भुत इस समृद्धि का महान् ऐश्वर्य सम्पन्न यदूत्तम श्रीकृष्णके कृपा कटाक्ष के सिवाय अन्य हेतु नहि घटिसका है यह निश्चित है ॥ ३३ ॥

यहाँ भोग सम्पन्न दाशार्हक वंशियों में श्रेष्ठ यह सखा ये सखा श्रीकृष्ण मैं तुमको देता हुं ऐसा नहि कहत आप निज आश्रित को देखत मेघके सदृश असमक्ष में याचना करने को बहुत भी देते हैं यह निश्चित है ॥ ३४ ॥

आश्रितन के अर्थ आपके दिए भये बहुत से ऐश्वर्य को भी भगवान् थोडा मानते हैं कि हमने कुछ नहि किया और जिन भक्तों के किए भए थोडे भजन को भी बहुत मानते हैं कि हमने बहुत किया क्योंकि भगवान् उदार चित्त हैं इसी लिये मेरी लाई भई चूडाकी एक मुट्ठी को अति प्रसन्न होकर अंगीकार किया ॥ ३५ ॥

इसी लिये जन्म जन्म में वारंवार मोकों श्रीकृष्ण के विषय में हि सुहृदियना और उसी के साथ सखा भाव तथा मित्र भाव और उसी का दास भाव होउ ओर कल्याण गुण सम्पन्न महानुभाव श्रीकृष्ण से प्रेरित होकर विशेष संग को प्राप्त होने वारे मोको भगवान् के भक्तन का हि सत्सङ्ग हो यह मेरी प्रार्थना है ॥ ३६ ॥

भक्ताय चित्रा भगवान् हि सम्पदो राज्यं विभूतीर्न समर्थयत्यजः ।
अदीर्घबोधाय विचक्षणः स्वयं पश्यन्निपातं धनिनां मदोद्भवम् ॥ ३७ ॥
इत्थं व्यवसितो बुद्धया भक्तोऽतीव जनार्दने ।
विषयाञ्जायया त्यक्ष्यन् बुभुजे नातिलम्पटः ॥ ३८ ॥
तस्य वै देवदेवस्य हरेर्यज्ञपतेः प्रभोः ।
ब्राह्मणाः प्रभवो दैवं न तेभ्यो विद्यते परम् ॥ ३९ ॥
एवं स विप्रो भगवत्सुहृत्तदा दृष्ट्वा स्वभृत्यैरजितं पराजितम् ।
तद्ध्यानवेगोद्ग्रथितात्मबन्धनस्तद्धाम लेभेऽचिरतः सतां गतिम् ॥ ४० ॥
एतद्ब्रह्मण्यदेवस्य श्रुत्वा ब्रह्मण्यतां नरः ।
लब्धभावो भगवति कर्मबन्धाद्विमुच्यते ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे
पृथुकोपाख्यानं नाम
एकाशीतितमोऽध्यायः ॥ ८१ ॥

श्रीधरस्वामिकृतभावार्थदीपिपिका ।

ननु, भक्तेः फलं सम्पदं प्राप्य पुनर्भक्तिं किमिति प्रार्थयसेऽत आह—भक्तायेति । सम्पदः कोशादीन् राज्यमैश्वर्यं विभूतीः कलत्रपुत्रादींश्च समर्थयति न ददात्यपि तु दृढां भक्तिमत्र कुतः अदीर्घबोधाय अविवेकिनो मम तु भक्त्यभावादेवं जातमतस्तद्भक्तिरेव स्याद्विति भावः ॥ ३७ ॥

त्यक्ष्यन् शनैःशनैस्त्यागमभ्यस्यन् जायया सह बुभुजे ॥३८॥
श्रीकृष्णस्यैवं ब्रह्मण्यता नातिचित्रमित्याह—तस्येति ॥ ३९ ॥

अन्यैरजितमपि स्वभृत्यैः पराजितं दृष्ट्वा तस्य ध्यानं तस्य वेगस्तेनोद्ग्रथितमात्मबन्धनमहङ्कारो यस्य सः गतिमित्याविष्टलिङ्गं धाम विशेषणम् सतां ब्रह्मविदां प्राप्यमित्यर्थः ॥ ४० ॥

एतत्पृथुकोपाख्यानं श्रुत्वा तत्र ब्रह्मण्यतां विशेषतः श्रुत्वेति ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकाशीतितमोऽध्यायः ॥ ८१ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भगवान् सर्वैश्वर्यपरिपूर्णोऽपि अजः सदा स्वयमेव सिद्धः अतो, दानेऽप्यनन्यापेक्षोऽपीति भावः । तासामदाने हेतुः चित्राः विविधप्रकाराः ततो नानाप्रकारं भक्तान्तःकरणं स्याद्विति किञ्च धनोपलक्षितत्वात् धनं सम्पदादित्रयं तन्मदोद्भवं नितरां पातं स्थानिष्ठातो भ्रंशं स्वयं स्वधर्मादिभ्यो नरकेषु पतनं वा साक्षादेव पश्यन् यतो विचक्षणः सर्वज्ञः ननु तर्हि श्रीध्रुवप्रह्लादाम्बरीषेभ्यः कुतोऽददात् तत्राह—अदीर्घेति । दीर्घबोधानां तेषां स्वतो विवेकबलेन मदानुद्भवात् अदीर्घबोधाय मह्यन्तु दुराग्रहदर्शनादेव दत्तवानिति भावः ॥ ३७ ॥

बुद्ध्या विचारेण व्यवसितः कृतनिश्चयः अतो, जनेषु निजभक्तेषु अर्द्दनं किमुपायनमानीतमित्यादि प्रकारेण याचनं यस्य सः परमभक्तवत्सलः श्रीकृष्ण इत्यर्थः । तस्मिन्नतीव भक्तः जातप्रेमा अतो विषयान् त्यक्ष्यन् तथापि बुभुजे किमर्थं जायया हेतुना पतिव्रतायास्तस्याः प्रीत्यर्थमित्यर्थः अन्यथा धर्मदोषः स्याद्विति भावः । तथापि नातिलम्पटः अतिशयेन नितरामलम्पटः तेष्वनासक्त एव बुभुजे ॥ ३८ ॥

तस्येत्यस्यावतारिकाटीका श्रीकृष्णत्वमेव तत्र हेतुरित्यभिप्रायेण यद्वा ब्राह्मणस्य तस्य गुणातिशयं वक्ष्यन् श्रीभगवतो गुणविशेषमाह—तस्येति । देवदेवस्य श्रीब्रह्मादिपूज्यस्य किञ्च यज्ञपतेः विप्राद्यनुष्ठेययज्ञानां फलप्रदस्य किञ्च प्रभोर्जगदीश्वरस्य विशेषणानामेतेषां यथोत्तरं विप्रसेवनायोग्यत्वाधिक्यं तस्यापि प्रभवः सेव्याः वै एतत्प्रसिद्धमेवेत्यर्थः तस्मान्नाश्चर्यमिति भावः । तस्मात्तेभ्यः परमन्यद्दैवं देवता च नास्ति अत एव भक्त्या पूज्या इत्यर्थः । एवमन्यत्र प्रामकतिपयेश्वरमन्यादावप्यसम्भवसम्भवेन गुणेन सर्वमनोहरणात् हरेरिति ॥ ३९ ॥

तथापि स विप्रस्त्वेवं पूर्वोक्तप्रकारेण स्वभृत्यैरेव पराजितमजितं दृष्ट्वा भक्ताय चित्रा इत्यादिना निश्चित्य तस्य भक्तवशीकृतत्वस्य भक्त्या तम अमुकेनैव वशीकृतोऽसावमुकेनैवमिति सप्रेमचिन्तनं तस्य वेगः प्रवाहस्तेन उद्ग्रथितमात्मबन्धनं ब्राह्मणत्वाद्यभिमानो यस्य सः तद्धामश्रीद्वारकाख्यं मित्यतत्स्थानं

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

...स्थितः शीघ्रमेव लेभे तस्य च तत्सर्वं नाश्चर्यमित्याह—
...गवत्सुहृदिति. । अन्यत्तैः यद्वा सतां नित्यरूपाणां यादवानां
...तिमिति ॥ ४० ॥

अहो भगवन्मित्रमसौ विप्रः शीघ्रं तद्धाम प्रापेति चित्रं न
...त्तव्यं तत्कथाश्रवणेनापि तत्सिद्धेरित्याह—एतदिति । ब्रह्मण्यतामपि
...म्पुनः मुख्येन तादृशपरिरम्भणादि नरो यः कश्चिदपि मनुष्यइति
...धिकारापेक्षा निरस्ता भगवति श्रीकृष्णे लब्धो भावः प्रेमा येन
...थाभूतस्सन् कर्मबन्धाद्विशेषेण मुच्यते स्वयमेव प्रारब्धभोगा-
...तिनो न स्यात् स्वेच्छया सुखं भक्तिमनुतिष्ठन्स्तत्पदं लभत
...त्यर्थः । अन्यैस्तैः यद्वा एष उक्तो यो ब्रह्मण्यदेवः तस्य श्री-
...णस्येत्यर्थः । अत एव भगवति सर्वैश्वर्यप्रकाशके तस्मिन्नेव
...भावः ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
एकाशीतितमोऽध्यायः ॥ ८१ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकाशीतितमोऽध्यायः ॥ ८१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, भक्तस्सन्नेव किमिति पुनः तद्भक्तिं प्रार्थयसे इत्यत आह—भक्तायेति । चित्रं यद्यहं भक्तस्तर्हि मह्यमैश्वर्य-प्रदानमतिचित्रमित्यर्थः । इत्थमैश्वर्यदानेन मामभक्तमेव संभावयामीतिभावः । कुतः हि यस्मादजो भगवान् भक्ताय सम्पदो राज्यं विभूतीश्च न समर्थयति न वर्धयति न यच्छतीत्यर्थः । तत्र सम्पदो भोग्यभोगस्थानादिसमृद्धयः विभूतयः पुत्रपशुवित्तादिसमृद्धयः अदाने हेतुं वदन् भगवन्तं विशिनष्टि—धनिनां मदस्योद्भवो यस्मात्तदैश्वर्यं निपातं निपतन्त्यनेन नरक इति तथाभूतम् अदीर्घबोधाय अविवेकाय च भवेदिति पश्यन् जानन् विचक्षणः हेतुगर्भमिदम् अतस्तावन्नसमर्धयत्येवेति सम्बन्धः अतः किम्वाऽहमभक्तस्तस्मात्तद्भक्तिं प्रार्थये इति भावः ॥ ३७ ॥

इत्थमिति । बुद्ध्या विवेकात्मिकया व्यवसितः निश्चिन्वन्नितरां भगवति भक्तियुक्तस्सन् विषयांस्त्यक्ष्यन् शनैःशनैर्विषयत्यागमभ्यसन्नातिलम्पटः तेष्वतीवादररहितः तान् जायया सह बुभुजे अनुबभूव ॥ ३८ ॥

स्वयं निस्समाभ्यधिको भगवान् कथमेवमकिञ्चनं द्विजमादृतवानिति स्मयमानं राजानमालक्ष्याह— तस्यैवेति । हे प्रभो ! यज्ञपतेर्यज्ञनिर्वाहकस्य देवानां ब्रह्मादीनामपि देवस्य हरेः प्रभवो दैवञ्च ब्राह्मणा एव तेभ्यो ब्राह्मणेभ्यः परमन्यद्दैवं न तस्य विद्यते इत्यर्थः ॥ ३९ ॥

ततो ब्राह्मणः किमभूदित्यत आह—एवमिति । भगवत्सखः स ब्राह्मणः अन्यैरजितमपि [ स्वभक्तैः ] स्वभृत्यैः पराजितं वशीकृतं दृष्ट्वा तस्य भगवतो ध्यानवेगोद्ग्रथितम् उन्मोचितमात्मनः स्वस्य बन्धनं संसृतिबन्धो यस्य सः चरितैस्तद्ध्यानाकृतयाऽनुष्ठितैर्वर्णाश्रमानुगुणैः पञ्चमहायज्ञाद्यनुष्ठानैर्ध्यानद्वारा साधनैः सतां मुक्तानां गतिं प्राप्यं तस्य भगवतो धाम स्थानं वैकुण्ठाख्यं लेभे प्राप्तवान् स्वभृत्यैः पराजितं सताङ्गतिम् उपायभूतं दृष्ट्वेति वा सम्बन्धः ॥ ४० ॥

अथोपवर्णितभगवच्चेष्टितश्रवणफलमाह—एतदिति । ब्रह्मण्यश्रेष्ठस्य भगवतो ब्रह्मण्यतां श्रुत्वा लब्धः भावो भक्तिर्येन सः कर्मबन्धात्प्राचीनकर्मरूपाद्बन्धनान्मुक्तो ऽभवत् ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकाशीतितमोऽध्यायः ॥ ८१ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

हरिरैहिकमैश्वर्यं न ददातीति मन्दजनानुमितस्वदोषापमार्जनायेयं सम्पादितेति भावेनाह—भक्तायेति ॥ ३७ ॥

त्यक्त्वाऽहम्मतामिति शेषः ॥ ३८ ॥

देवदेवस्येत्यनेन सर्वप्रभुत्वं यज्ञपतेरित्यनेन सर्वदेवत्वञ्च हरेरेव मुख्यमिति सूचितम् । अनेन इतरैर्ब्राह्मणभक्तिरेवावश्यं कर्तव्येति तात्पर्यं विधीयते न तु तस्यैवेति ॥ ३९ ॥

तस्य विप्रस्य का सिद्धिरभूत्तत्राह—एवमिति । अजितं नाम भगवन्तं स्वभक्तैः पराजितं दृष्ट्वा तस्य हरेर्ध्यानवेगेन उद्ग्रथितमुन्मुक्तम् आत्मबन्धनं यस्य तथा तद्भक्तैरेव प्राप्यं तद्धाम वैकुण्ठादिलक्षणम् ॥ ४० ॥

एतच्चरितोपासकस्य फलमाह—एवमिति । लब्धभावो लब्धभक्तिः अनेनास्य विप्रस्येतरभक्तवैलक्षण्यमुक्तं स्यादिति तात्पर्यमवगन्तव्यम् ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकाशीतितमोऽध्यायः ॥ ८१ ॥

( श्रीविजयध्वजतीर्थटीका एकोनशततमोऽध्यायः ॥ ९९ ॥ )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भक्तायेति । अदीर्घबोधाय महान्तु दुराग्रहदर्शनादेव दत्तवानिति भावः । स विप्रस्त्वेवमुक्तप्रकारेण स्वभृत्यैरेव पराजितं तमजितं दृष्ट्वा भक्ताय चित्रा इत्यादिना निश्चित्य तस्य भक्तवशीकृतत्वस्य यद्ध्यानम् अमुकेनैवं वशीकृतोऽसावमुकेनैवमिति चिन्तनं तस्य वेगः प्रवाहः तेनैवोद्ग्रथितमात्मबन्धनं ब्राह्मणत्वाद्यभिमानो यस्य सः ब्रह्मण्यतामिति किमुत मुख्येन तादृशपरिरम्भणादि ॥ ४०—४१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकाशीतितमोऽध्यायः ॥ ८१ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

विषयान् जायया त्यक्ष्यन्नित्यादि । भगवत्प्रसादबुद्ध्या बुभुजे अत एव नातिलम्पटः तत्रापि त्यक्ष्यन् अद्य श्वो वा त्यक्ष्यामीति कृत्वा ॥ ३८—४१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
एकाशीतितमोऽध्यायः ॥ ८१ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ननु, तस्मिन् जन्मनि धनराज्यादिसम्पत्तौ न भगवद्भक्तैः सह सङ्गः तथा निस्तार इति चेत्तत्राह—भक्ताय चित्रा इति । भगवान् विचित्रा बुद्धिव्यामोहकाः सम्पदः भक्ताय न समर्द्धयति तथा राज्यं विभूतीरैश्वर्याणि च तत्र हेतुः अज इति । स्वयं न जातः अनेन षड्भावविकारा निराकृताः अतः स्वार्थं सेवकानां समृद्धिं न करोतीत्यर्थः । तेषामेवार्थे करिष्यतीति पक्षं दूषयति दीर्घबोधायेति यतः सम्पदादयः अदीर्घबोधा भवन्ति दीर्घबोधाभावाय नाशाय वा अतो भक्तानां दीर्घबुद्धिर्भविष्यति नेति जाता वा नाशं यास्यतीति न समर्द्धयति नात्रान्यकथनापेक्षा यतः स्वयमेव विचक्षणः कदाचिद्विस्मरणे का गतिरिति चेत्तत्राह— पश्यन्निपातं धनिनां मदाद्भवतीति । धनिनां धनमदपातदर्शनमेव भगवत्स्मारकमित्यर्थः ॥ ३७ ॥

एवं भगवति सख्यादिकमेव निश्चित्य तत्परोभूत्वा त्यागार्थं विषयोपभोगं कृतवानित्याह—इत्थं व्यवसित इति । एवं बुद्ध्या निश्चीय स्वयञ्च जनार्दने भक्तो भूत्वा जायया सह तदर्थमेतावज्ञातमिति कियत्कालानन्तरं तां विषयांश्च त्यक्ष्यामीति अनतिलम्पटः किञ्चिल्लम्पटो भूत्वा अन्यथा रसो न भवतीति बुभुजे ॥ ३८ ॥

एवं तस्य चरित्रमुक्त्वा भगवतोऽयं ब्रह्मण्यत्वगुणयुक्त इति ज्ञापयितुं स्तौति—तस्य वै देवदेवस्येति—

पूज्यो दुःखप्रहर्त्ता च कर्माध्यक्षः प्रभुस्तथा ।
चतुर्भिर्यो महान् लोके तादृशोऽपि द्विजप्रियः ॥

तदाह, तस्य प्रसिद्धस्य देवानामपि देवस्य सर्वदुःखहर्तुः यज्ञभोक्तुर्नियन्तुः एतादृशस्यापि ब्राह्मणाः प्रभवः देवञ्च आज्ञां कुर्वन्ति पूजयन्ति चेत्यर्थः । किञ्च भगवतो विचारे न तेभ्यः किञ्चिदुत्तमं वर्त्तते अनेन दाक्षिण्यात्तान्मानयति इति पक्षो निवारितः—

शुक्लास्त एव वक्तारो माहात्म्योत्सौ [illegible]णाः ।
निस्पृहा ज्ञानसंयुक्ता मोक्षयो[illegible] [illegible] ॥

॥ ३९ ॥

एवं ब्रह्मण्यत्वगुणं स्थापयित्वा ततः सुदाम्नः [illegible] जातमित्याकाङ्क्षायामाह—एवं स विप्रो भगवानिति । भगवदावेशाद्भगवान् भगवतः सुहृच्च भगवत्सुहृत्ता अजितं सर्वैरपि स्वभक्तैः पराजितं सर्ववश्योपि भक्तवश्य इति सर्वेश्वरे वशं जाते सर्वे पुरुषार्थाः करस्थिता इति तद्ध्यानवेगोद्ग्रथितात्मबन्धन. इति तस्य ध्यानवेगेनैव उद्ग्रथिताः आत्मानः सर्वं एव अविद्यादिबन्धाः यस्येति तथाविधो भूत्वा भगवच्चिन्तनेनैव तद्धाम लेभे वैकुण्ठं प्राप्तवान् ततः अचिरतः शीघ्रमेव सतां गतिं भगवन्तमपि पश्चात्सायुज्यं प्राप्तवानित्यर्थः ॥ ४० ॥

एवं सुदाम्न उद्धारमुक्त्वा तस्य पश्चादपि लोके कीर्त्तिर्भवत्विति एतदुपाख्यानस्य श्रवणफलमाह—एतद्ब्रह्मण्यदेवस्येति—एतदित्यव्ययम् इमां ब्रह्मण्यतां श्रुत्वा नरो भवति लब्धभावो यति नराणामैहिके द्वाविति तद्भगवान् करोतीति भगवद्भावो दृढो भवति ततः कर्मबन्धाद्विमुच्यते यत्रैतच्छ्रोतुरपि मोक्षः तत्र सुदाम्नो मोक्षे कः सन्देहः एवं भुक्तिमुक्तिप्रदो भगवानेवेत्युक्तम् अन्यदपि फलं भगवान् प्रयच्छतीति च एवं निरुद्धानां फलदाता निरूपितः ॥ ४१ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभ-
दीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे
द्वात्रिंशाध्यायविवरणम् ॥ ३२॥८१ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु, तव भक्तिरस्त्येव तत्फलं सम्पत्तिश्च प्राप्ता तत्र नास्ति मे भक्तिर्नापि भक्तेर्वास्तवं फलं सम्पत्तिरित्याह—भक्तायेति । सम्पदः कोषादीन् राज्यमैश्वर्यं विभूतीः कलत्रादीन् न समर्द्धयति न ददाति अदीर्घबोधायेति दीर्घबोधेभ्यः प्रह्लादादिभक्तेभ्यो यदिह सम्पदोपि ददाति तत्रापि तेषां नापकारः मम त्वदीर्घबोधस्य भक्त्यभावादेव सम्पत् प्राप्तिरभूत्तदलमनयेति विमृश्य स यावदर्थमेव विषयभोगं कुर्वन् स्थण्डिलशायी तदीयव्रतनिष्ठः श्रवणकीर्तनादिषु परमाग्रहवानभूदितिज्ञेयं भक्ताय सुखयितुं सम्पदादिकं [illegible] समर्द्धयति न सम्यग्वर्द्धयति किन्तु तदभीप्सितप्रेमसेवासिद्ध्यर्थमपि स्वमात्रं वर्द्धयतीति केचिदाहुः "ऋधु वृद्धौ ॥ ३७-३८ ॥

भक्तवत्सलस्यापि कृष्णस्यैषा ब्रह्मण्यतैव लोके प्रसिद्धा अभूदित्याह—तस्येति । सर्वेषां प्रभोरपि हरेर्ब्राह्मणा एव प्रभवः देवदेवस्यापि तस्य ब्राह्मणा एव दैवं यज्ञपतेरपि ते एव यजनीया इत्यर्थः ॥ ३९ ॥

तस्यैहिकीं सम्पदमुक्त्वा पारलौकिकीं सम्पदमाह—एवमिति । सर्वैरजितमपि स्वभृत्यैः पराजितं वशीकृतं दृष्ट्वा तत् ध्यानवेगेति तस्य पूर्ववृत्तमुक्तम् ॥ ४०—४१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
एकाशीतितमोऽध्यायो दशमेऽजनि सङ्गतः ॥८१॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्वभक्तेभ्यो भक्तिफलं स्वपदं ददाति नतु सम्पदः अतः प्राप्तासु संपत्सु अनासक्तस्तमेव भजामीत्याशयेनाह—भक्तायेति । न समृद्धयति न ददाति अतो मम भार्यामनोरथपूर्त्यर्थं तद्दत्तास्वपि संपत्सु अनासक्तः सन् तत्पदप्राप्त्यर्थमेव भजामीति भावः ॥ ३७ ॥

एवं कृतनिश्चयस्य मुनेः हरिभजनेन हरिपदप्राप्तिमाह—

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

त्थमिति त्रिभिः। त्यक्षन् शनैः शनैः त्यजन् जायया सह भुजे ॥ ३८ ॥

प्रभवः मान्याः भक्तप्रियत्वात् अत एव तेभ्योऽन्यं दैवतं न्यं न विद्यते ॥ ३९ ॥

स विप्रः सतां मुक्तानां गतिं गम्यते इति गतिस्तं ण्यं भगवन्तं अजितमपि भक्तैर्जितं वशीकृतं दृष्ट्वा तस्य गवतः ध्यानवेगेनोद्ग्रथितमात्मनो बन्धनं संसारलक्षणं यस्य ः तद्धाम भगवत्पदमचिरतः स्वल्पेनैव कालेन लेभे॥ ४० ॥

प्रकरणश्रवणादिफलमाह—एतदिति। एतत्प्रथुकोपाख्यानं ह्मण्यदेवस्य श्रीकृष्णस्य विशेषतो ब्रह्मण्यताञ्च श्रुत्वा भगवति लब्धभाक् प्रदीपसन्निधौ स्वपात्रत्वानुसारेण लब्धप्रकाशवत् स्वाधिकारत्वानुसारेण लब्धभक्तिरित्यर्थः। कर्मबन्धाद्विमुच्यते ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकाशीतितमाध्यायार्थप्रकाशः ॥ ८१ ॥

---

भाषा टीका।

धनी पुरुषोंको मदकरके नरकपात होता है इस बातको विचार कर स्वयं चतुर कर्म के आधी जन्म रहित श्रीकृष्ण भगवान् अविवेकी भक्तके अर्थ नाना प्रकार की संपत्ति राज्य स्त्रीपुत्र विभूतीनको नहि देतेहैं ॥ ३७ ॥

भगवान्के विषय में अति भक्तिमान् सुदामाजी बुद्धिसे इस प्रकार निश्चय कर संसार के विषयनमे अत्यन्त लिपायमान नहि होकर विषयनके त्याग करने को स्त्री करके सहित विषयनका भोग करताभया ॥ ३८ ॥

देवन के देवे ! भक्तन के दुःखहारी यज्ञन के भोक्ता सब के स्वामी श्रीकृष्णके ब्राह्मणहि स्वामीहै तथा इष्टदेवहै इसी कारण ब्रह्मणोंसे अधिक वस्तु दूसरा कोईभी नहिहै ॥ ३९ ॥

भगवान्को सखा सुदामा ब्राह्मण, अभक्तजनों से नहि पराजित निजभक्तों से पराजित श्रीकृष्णको इसप्रकार देखकर भगवानके ध्यानके वेगसे आत्मा को बंधन कारी अंहकारते छूटकर थोडेहि कालमें सत्पुरुषों कों प्राप्य भगवान्के वैकुंठधामको प्राप्त होगया ॥ ४० ॥

ब्रह्मण्यदेव श्रीकृष्ण को ब्राह्मणों के विषयमें भक्तिको तथा सुदामा के अर्थ संपत्ति देने को सुनकर भगवान् के विषयमे भक्तिको प्राप्त होकर पुरुष कर्म रूप बंधन ते छूट जाताहै ॥ ४१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धमें इक्यासीके अध्यायकी
भाषाटीका समाप्ता ॥ ८१ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे एकाशीतितमोऽध्यायः ॥ ८१ ॥

# द्व्यशीतितमोऽध्यायः ।

श्रीशुक उवाच ।
अथैकदा द्वारवत्यां वसतो रामकृष्णयोः ।
सूर्योपरागः सुमहानासीत् कल्पक्षये यथा ॥ १ ॥
तं ज्ञात्वा मनुजा राजन् पुरस्तादेव सर्वतः ।
स्यमन्तपञ्चकं क्षेत्रं ययुः श्रेयोविधित्सया ॥ २ ॥
निःक्षत्रियां महीं कुर्वन्रामः शस्त्रभृतां वरः ।
नृपाणां रुधिरौघेण यत्र चक्रे महाह्रदान् ॥ ३ ॥
ईजे च भगवान्रामो यत्रास्पृष्टोऽपि कर्मणा ।
लोकस्य ग्राहयन्नीशो यथाऽन्योऽघापनुत्तये ॥ ४ ॥
महत्यां तीर्थयात्रायां तत्रागन् भारतीः प्रजाः ।
वृष्णयश्च तथाऽक्रूरवसुदेवाहुकादयः ॥ ५ ॥
ययुर्भारत तत्क्षेत्रं स्वमघं क्षपयिष्णवः ।
गदप्रद्युम्नसाम्बाद्याः सुचन्द्रशुकसारणैः ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

द्व्यशीतितम आगत्य कुरुक्षेत्रं रविग्रहे ।
वृष्णीन् दृष्ट्वा मुदा भूपाश्चक्रुः कृष्णकथा मिथः ॥
श्रीदामसुहृदे कृष्णः प्रकल्प्यैन्द्रं पदं भुवि ।
नन्दादिसुहृदानन्दी कुरुक्षेत्रं जगाम सः ॥

कल्पक्षये यथा सर्वग्रास इत्यर्थः ॥ १ ॥

ज्योतिर्विद्भिः कथ्यमानमादावेव ज्ञात्वा स्यमन्तपञ्चकं क्षेत्रं कुरुक्षेत्रम् ॥ २ ॥

अब्रह्मण्यक्षत्रियवधस्थानत्वेन परशुरामस्याघापनुत्तिस्थानत्वेन च क्षेत्रस्य पापनिरासकत्वमाह— निःक्षत्रियामिति द्वाभ्याम् ॥ ३ ॥

अन्यो विद्वान् यथा ॥ ४ ॥

आगन्नाजग्मुः भारतीर्भारत्यः ॥ ५—६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ कथान्तरारम्भे पृथुकोपाख्यानादनन्तरं वा एकदेति राजसूयात्पूर्वं श्रीबलदेवव्रजगमनादूर्ध्वं कदाचिदित्यर्थः । द्वारकायां वसतोः श्रीमथुरां त्यक्त्वा कियन्तमपि समयमुषित्वा स्थितयोः सतोरित्यर्थः । सुशब्दार्थं व्यञ्जयति कल्पक्षये यथेति आच्छादनस्य कालस्य चातिबाहुल्यात् ॥ १ ॥

हे राजन्निति तं पूर्वकथायामाविष्टमस्यामवधापयति अत्र पूर्वतोऽपि रसविशेषोऽस्तीति द्योतनाय श्रेयस्स्नानदानादि सुकृतम् ॥ २ ॥

तत्रैव गमने हेतुः—निःक्षत्रियामिति । द्वयं श्रीपरशुरामप्रभाव एव तस्य तादृशत्वे हेतुरिति महाह्रदानित्येतत् स्यमन्तपञ्चकमितीत्याख्याकारणमुक्तं समन्तात्पञ्चह्रदा अस्मिन्निति ॥ ३ ॥

लोकसङ्ग्रहे हेतुः, ईशः सर्वलोकेश्वरः स धर्मप्रवर्तनेन सर्वलोकहितार्थमिति भावः । प्रशंसा चेयं श्रीव्रजवासिनां श्रीकृष्णमिलनानन्दगर्भा ज्ञेया तत्तीर्थयात्राहेतुकत्वात्तस्य पद्यद्वये चात्र तदा फलाधिक्यवशात्ते ययुरित्यतस्तत्प्रतिष्ठापनञ्च ग्रहणयोग एव तेन कृतमिति बोधितम् ॥ ४ ॥

महत्यामित्यर्द्धकम् । महत्यामिति सर्वग्रासेन महापर्वत्वात् अतएव भारत्यः भारतवर्षवर्तिन्यः प्रायः सर्वा एवेत्यर्थः । वृष्णय इति युग्मकम् । प्रजास्ववतीर्णत्वेन तच्छ्रेष्ठत्वाङ्गीकारादादौ यादवानाह—वृष्णय इति सपादेन । श्रीकृष्णरामादय इत्यर्थः । यथा ते तथैवाक्रूरादय इति तेषां प्रायः श्रीकृष्णसाहित्यगमनावर्शनात् तथाऽक्रूरस्यादित्वं कर्मण्यत्यन्तादरात् स्वमघं क्षपयिष्णवः क्षपयितुमिच्छव इत्यर्थः । एतच्च विशेषणं

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सर्वेषामेव तत्र वृष्णीनां लीलया तदन्येषां केषाञ्चित् वस्तुतोऽपि न केवलं पुण्यपरावृत्त्या एव कुमाराश्च ययुरित्याह गदेति । तर्हि द्वारकारक्षणे के आसन् तत्राह—सुचन्द्रेतिपादद्वयेण । सुचन्द्रः श्रीरुक्मिण्याः पुत्रश्चारुचन्द्रः ॥ ५—६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—१८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ भगवतः सबान्धवस्य तीर्थयात्राव्याजेन सुहृत्समेतत्सल्लापाद्यात्मकं चेष्टितमनुवर्णयति त्रिभिरध्यायैः—अथेति रामकृष्णयोर्द्वारकायां वसतोः सतोः सुमहान् सर्वग्रासः तत्र दृष्टान्तः, कल्पक्षये यथेति. यथा कल्पावसाने सूर्यो न दृश्यते तद्वदित्यर्थः ॥ १ ॥

तमिति । हे राजन् ! तं सूर्योपरागं ज्योतिर्विद्भिः कथ्यमानम् आगामिनं ज्ञात्वा सत्तमाः शिष्टाः सर्वे श्रेयोविधित्सया पुण्यार्जनेच्छया स्यमन्तपञ्चकं नाम क्षेत्रं कुरुक्षेत्रमित्यर्थः ययुर्जग्मुः ॥ २ ॥

अब्रह्मण्यक्षत्रियवधस्थानत्वेन परशुरामस्याघापनुत्तिस्थानत्वेन च क्षेत्रस्य पापनिरासकत्वमाह—निःक्षत्रियामिति सार्द्धाभ्यां । रामो भार्गवः रुधिरौघेण रुधिरधारया यत्र क्षेत्रे महाह्रदान् पञ्च चक्रे ॥ ३ ॥

ईज इति । कर्मणा नृपवधप्रयुक्तपापेनास्पृष्टोऽपि रामो भार्गवः लोकस्य ग्राहयन्नन्येऽपि मत्तोऽर्वाचीनाः शिष्टा एवं कुर्युरिति तान् ग्राहयितुमित्यर्थः । तथाऽन्येषामविदुषामघापनुत्तये पापापनोदनाय च यत्र क्षेत्रे ईजे इयाज तत्क्षेत्रं ययुरिति पूर्वेण सम्बन्धः ॥ ४ ॥

महत्यामिति । महत्याम् अतिशयितपुण्यावहायां भारतीभारत्यः भारतवर्षस्थाः प्रजाः क्षेत्रं क्षेत्रेऽगमन्नाजग्मुः तथाऽक्रूरादयश्च वृष्णयश्चागमन् ॥ ५ ॥

किमर्थमित्यत आह—ययुरिति । हे भारत ! स्वं स्वकीयमघं पापं क्षपयिष्णवः निरसितुमिच्छव इत्यर्थः गदेति गदादिभिस्सह अनिरुद्धः रक्षायां निमित्तभूतायां द्वारकारक्षणार्थमित्यर्थः । तत्रैवास्त स्थितवान् इत्यर्थः । तथा यूथपः सेनानीः कृतवर्मापि तत्रैवास्ते इत्यर्थः । एतैर्विशेषणैस्सर्वे भगवदादयो जग्मुरित्यभिप्रायः । तत्र श्रीकृष्णस्तु लोकं तीर्थयात्रायां प्रवर्त्तयितुं गत इति बोध्यं । तेऽक्रूरादयः देवधिष्ण्याभैर्देवविमानसङ्काशैरिति रथविशेषणं तरलाः तरङ्गाः तद्वत् प्लवो गतिः येषां तैः इतिहयविशेषणम् ॥ ६—७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

( सूर्योपरागे कुरुक्षेत्रं प्रति श्रीकृष्णादीनां गमनकथा तु (३८९) पृष्ठे श्रीविजयध्वजतीर्थीयपाठे मुद्रापिताऽभूत् )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १—२६ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥ १—१३ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सात्विकप्रक्रियायान्तु षड्भिः षड्भिस्त्रयं जगौ ।
प्रमेयसाधनफलं धर्मास्तत्र निरूपिताः ॥
धर्मिणोऽत्र त्रयो वाच्यास्तत्राध्यायत्रयं मतम् ।
सात्विकेतु प्रमेये हि धर्मी यादृग्विधो मतः ॥
त्रयस्त्रिंशे तथाऽध्याये प्रथमं स निरूप्यते ।
सर्वाभीष्टः सर्वसाक्षी सर्वप्रियहितैषिणः ॥
तीर्थैकगम्यो ज्ञानात्मा गुरुर्मोक्षप्रदः परः ।
सात्विकानामेकमेव साधनं गुणवर्णनम् ॥
सरसस्य श्रुतिश्चापि तदग्रे विनिरूपितम् ।
ततः फलात्मा स हरिः सर्वाभीष्टप्रपूरकः ॥
देशकालौ तथा चाङ्गं ततस्तत्रैव तत्त्रयम् ।
तामसा राजसाः प्रोक्ताः राजसाश्चैव सात्विकाः ॥
ततोऽध्याये प्रमेयेऽत्र सर्वे सात्विकतां गताः ।
प्रमेयमेतदेवात्र यदा सर्वे नु सात्विकाः ॥
तदा प्रमेयो भगवान् नान्यथेत्युच्यते स्फुटः ॥

इदानीमध्यायत्रयेण भगवत्साक्षात्कारः भगवदीयानां साधनं तेषां फलञ्च क्रमेण निरूप्यते—तत्र प्रथमं सात्विकानामपि सर्वोत्कृष्टानां ग्रहणादिकालविशिष्टे कुरुक्षेत्रादावेव भगवद्दर्शनं नान्यत्रेति निरूप्यते, तदर्थं कुरुक्षेत्रयात्राप्रसङ्गः तीर्थमपि गृहे स्यात् तदा न फलतीति मथुरातो द्वारकातश्च सर्वेषां गमनं तत्र कालस्य प्राधान्यात् प्रथमं सूर्यग्रहणमाह—अथैकदेति । राहुग्रस्तादिवाकरात् नान्यो मुख्यः कालः सच कालः सर्वनाशक इति भगवति विद्यमाने कदाचिन्न भवेदित्याशङ्क्याह—रामकृष्णयोर्द्वारकायामेव सतोः यथा कल्पक्षये कल्पक्षयनिमित्तं तत्सूचकः सूर्योपरागः सर्वग्रासात्मको भवति एवं भगवति विद्यमानेऽपि जातः भूभारहरणं सूचयिष्यति ॥ १ ॥

ततः किमत आह—तं ज्ञात्वेति । ज्योतिःशास्त्रप्रामाण्यात् पूर्वमेव माघे मासि ग्रहणं जायत इति श्रुत्वा स्यमन्तपञ्चकं क्षेत्रं कुरुणा निर्मितदेशानां मध्ये मुख्यं श्रेयोविधित्सया तत्र गत्वा श्रेयस्सम्पादयिष्याम इति निश्चित्य तस्मिन् समागताः ॥ २ ॥

ननु, तत्रैव श्रेयःसम्पादनं कुत इति चेत्तत्राह निःक्षत्रियां महीं कुर्वन्निति । पूर्वं रामेण क्षत्रियाणां सर्वेषामेव नाशार्थं सङ्कल्पः कृतः ततः क्षत्रियाः सर्वान् मारयिष्यन्तीति क गुरुवेन मृते प्राप्स्याम इति मोक्षं विचार्य "कुरुक्षेत्रसमागता" इति धर्मक्षेत्रमिति कुरुणा महता कष्टेन तत्स्थानं तथा कृतमिति तत्रैव मोक्षो भविष्यतीति निश्चित्य परशुराममारणसमये सर्व एव

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्र समागताः ततो रामेण ते सर्वे हताः तेषां रुधिरौघेण नव ह्रदांश्चक्रे तान्येव तीर्थानि जातानि गङ्गातोऽप्यधिकानि अनेन तस्योत्कर्षो निरूपितः शस्त्रभृतां वर इति स्वधर्मनिष्ठया तस्य सम्यग्देशज्ञानं निरूपितम् ॥ ३ ॥

किञ्च, न केवलं क्षत्रियाणामेव तत्रोत्कर्षः सम्पादितः किन्तु स्वस्यापीत्याह—ईजे च भगवान् राम इति । प्रायश्चित्तार्थं यज्ञांश्च तत्रैव कृतवान् प्रायश्चित्तन्तु पापसम्बन्धे भवति तथाच तस्मिन् क्षेत्रे पापमप्युत्पद्यत इति शङ्काव्युदासार्थमाह यत्रास्पृष्टोपि कर्मणेति । यद्यपि भगवत्त्वेनापि न कर्मसम्बन्धः तथापि तत्र देशमाहात्म्यादेव न कर्मसम्बन्ध इति ज्ञापयितुं यत्रेत्युक्तम् अन्यथा चकारादपि पूर्वस्थानमायाति तर्हि यागस्य किं प्रयोजनमित्याशङ्क्याह—लोकं संग्राहयन्निति । ननु, किमित्येव मन्यते तत्राह, ईज इति । ननु ईश्वरस्य यज्ञाधिकार एव नास्ति कथं कृतवानिति चेत्तत्राह—यथाऽन्य इति फलार्थतां वारयति अघापनुत्तय इति पापक्षयार्थम् ॥ ४ ॥

एवं देशकालयोर्माहात्म्यमुक्त्वा तत्र सर्वासां प्रजानां समागमनमाह—महत्यां तीर्थयात्रायामिति । एतादृशे निमित्ते तीर्थयात्रा महती भवति महत्त्वं सर्वेषां गमनात्फलाधिक्याच्च अत एव भारतीः भारतवर्षोद्भवाः प्रजाः सर्वा एव तत्रागमन् तत्र महतां नामानि सङ्क्षेपेणाह—वृष्णयश्चेति । आदौ वृष्णयः समागताः तत्रापि मुख्या एव समागता इति वक्तुम् अक्रूरवसुदेव आहुकादय इति सात्विका महान्तो राजानश्चोक्ताः ॥५॥

तेषामन्यत्र गमनं वारयितुमाह—ययुस्तं भारतं क्षेत्रमिति । भरतवंशोद्भवेन निर्मितं क्षेत्रं वृष्णीनां सर्वश्रेयांसि गृह एवेति भगवद्ब्रह्मस्वत्वणं पापं सम्भवतीति तस्यान्यत्रानिष्कृतिमलभमानाः स्वमसाधारणमघं क्षपयिष्णवः तत्रागता इत्युक्तं त्रिविधा एव समागता इति शङ्काव्युदासार्थम् अन्यानपि गणयति गदप्रद्युम्नसाम्बाश्चेति ॥ ६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

रविग्रहे कुरुक्षेत्रे बन्धूनां सङ्गमो मिथः ।
कृष्णो व्रजस्थप्रेमाब्धौ द्व्यशीतितम आप्लुतः ॥

अथेति क्रमानुक्तकथान्तरारम्भे एकदेति बलदेवव्रजगमनादूर्द्ध्वं राजसूयात्पूर्वमेवेयं कुरुक्षेत्रयात्रा यदस्यां धृतराष्ट्रविदुरयुधिष्ठिरभीष्मद्रोणादीनां सुखमेकत्रावस्थितानां श्रीकृष्णदर्शनानन्दकथा दृश्यते अस्या यात्राया राजसूयानन्तर्य्यत्वेत्येवं न सम्भवेत् यतो राजसूयानन्तरमेव मन्युग्रस्तेन दुर्योधनेन द्यूतप्रवर्त्तनं ततो वनपर्वदृष्ट्या साल्वदन्तवक्त्रवधसमकालमेव युधिष्ठिरादीनां वनगमनं तेषामागमनानन्तरमेव भीष्मद्रोणादिवधमयभारतयुद्धमिति श्रीवैष्णवतोषणी कल्पक्षये यथा सर्वग्रास इत्यर्थः ॥ १ ॥

स्यमन्तपञ्चकं कुरुक्षेत्रं सूर्योपरागे सत्वस्यैव क्षेत्रस्य सर्वतः सकाशादपि पुण्यप्रदत्वाधिक्यश्रवणादितिभावः ॥ २ ॥

क्षेत्रस्यास्य श्रीपरशुरामपराक्रमद्योतकत्वमाह—निःक्षत्रियामिति ॥ ३ ॥

पापापनोदकत्वमाह—ईजे चेति ॥ ४ ॥

आगन् आजग्मुः भारतीः भारत्यः ॥ ५—६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अथ श्रीकृष्णस्य सूर्योपरागयोगतः कुरुक्षेत्रयात्राव्याजेन सुहृत्सङ्गमादिचेष्टितं वर्णयति-अथैकदेति-द्व्यशीतितमाध्याये । एकदापूर्वोक्तात्कौरवपाण्डवयुद्धात्पूर्वमेव भीष्मादिसमागमस्य वक्ष्यमाणत्वात् कल्पस्य क्षयं कल्पावसाने यथा सर्वग्रासस्तथा महान् सर्वग्रासरूपः सूर्योपरागः आसीत् ॥ १ ॥

स्यन्तपञ्चकं कुरुक्षेत्रम् ॥ २—३ ॥

अन्यः कर्मणा संस्पृष्टः ॥ ४ ॥

भारतीः सूर्योपरागं श्रुत्वेति शेषः । प्रजाः आगन् आजग्मुः ॥५॥

तत्क्षेत्रं गदादयः ययुरन्ये स्वमघं क्षपयिष्णवः अघ्नन्तोपि ययुः सुचन्द्रादिभिः सह ॥६॥

---

भाषाटीका ।

श्रीशुक उवाच ।

इसके अनन्तर यह कहते हैं कि श्रीराम कृष्णजी जब द्वारका में निवास करते रहे तब एक समय में जैसे कल्प के अन्त में सर्व ग्रास ग्रहण होता है उसी प्रकार का सूर्य ग्रहण होता भया ॥ १ ॥

हे राजन् ! उस ग्रहण को जानकर उस के पहिले हि पुण्य सम्पादन की बांछासे सबहि देशनते मनुष्य स्यमन्त पञ्चक नाम कुरुक्षेत्र को जाते भये ॥ २ ॥

शस्त्रधारीन में श्रेष्ठ परशुरामजीने भूमि को निःक्षत्रिय करत राजान के रुधिर प्रवाह से जिस देश में बड़े बड़े कुण्ड किये हैं उसी देश का स्यमत पञ्चकनाम है वह कुरुक्षेत्र के अन्तर्गत है ॥३॥

यद्यपि राजान के वध करने से जो पाप होता है उससे लिपायमान नहि भी रहे परशुराम भगवान् तथापि लोक शिक्षाके लिये जैसे पाप निवृत्ति के वास्ते प्राकृत मनुष्य यज्ञ करता है तैसेहि सर्व शक्तिमान् परशुरामजी ने जिस देश में यज्ञ किया है उसी देश का स्यमन्तपंचक नाम है ॥ ४ ॥

महान् तीर्थयात्रा के निमित्त कुरुक्षेत्र में भरतखण्ड की प्रजा जातीभई और अक्रूर, वसुदेव उग्रसेन आदि कृष्णवंशी भी उसी प्रकार जाते भए ॥ ५ ॥

हे भारत ! अपने पापके नाश करने की इच्छा करके उस कुरुक्षेत्र में गद प्रद्युम्न साम्ब आदि भी जाते, भए और सुचन्द्र शुकसारण सहित अनिरुद्धजी रक्षा के निमित्त रहे तथा कृतवर्मा सेनापति रहा ॥ ६ ॥

आस्तेऽनिरुद्धो रक्षायां कृतवर्मा च यूथपः ।
ते रथैर्देवधिष्ण्याभैर्हयैश्च तरलप्लवैः ॥ ७ ॥
गजैर्नदद्भिरभ्राभैर्नृभिर्विद्याधरद्युभिः ।
व्यरोचन्त महातेजाः पथि काञ्चनमालिनः ॥ ८ ॥
दिव्यस्रग्वस्त्रसन्नाहाः कलत्रैः खचरा इव ।
तत्र स्नात्वा महाभगा उपोष्य सुसमाहिताः ॥ ९ ॥
ब्राह्मणेभ्यो ददुर्धेनूर्वासस्स्रग्रुक्ममालिनीः ।
रामह्रदेषु विधिवत्पुनराप्लुत्य वृष्णयः ॥ १० ॥
ददुः स्वन्नं द्विजाग्र्येभ्यः कृष्णे नो भक्तिरस्त्विति ।
स्वयञ्च तदनुज्ञाता वृष्णयः कृष्णदेवताः ॥ ११ ॥
भुक्त्वोपाविविशुः कामं स्निग्धच्छायाङ्घ्रिपाङ्घ्रिषु ।
तत्रागतास्ते ददृशुः सुहृत्सम्बन्धिनो नृपान् ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सुचन्द्रशुकसारणैः सहानिरुद्धो द्वारकारक्षायामास्ते तथा कृतवर्मा च यूथपतिः सेनानीः देवधिष्ण्याभैर्विमानसङ्काशैः तरलान्तरङ्गास्तद्वत् प्लवो गतिर्येषां तैः ॥ ७ ॥

विद्याधरद्युभिर्विद्याधराणामिव द्युतिर्येषां तैः महातेजाः महातेजसः ॥ ८ ॥

दिव्याः अत्युत्तमाः स्रग्वस्त्रसन्नाहाः येषाम् ॥ ९ ॥

पुनरन्येद्युराप्लुत्य यद्वा तस्मिन्नेवाहनि मुक्तिस्नानं कृत्वा॥१०-११॥

स्निग्धा शीतला छाया येषामङ्घ्रिपानामङ्घ्रिषु मूलेषु ॥ १२-१४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

रक्षायां रक्षार्थम् आस्ते आसीदिति अनिरुद्धस्यात्यल्पवयस्त्वादिना लघुत्वेऽपि प्राधान्यान्महानुभावत्वं ज्येष्ठान्वयत्वात्तादृशव्यवहारार्हत्वञ्च दर्शितम्। अनिरुद्धोऽयं श्रीकृष्णपुत्रो वा ते इति च युग्मकं । ते वृष्णयो रथादिभिः सेनायाश्चतुर्भिरङ्गैः कारणभूतैः नृभिः पदातिभिः ॥ ७—८ ॥

कलत्रैः सह खेचराणां दृष्टान्तत्वं साधारणजनचमत्काराय श्रीकृष्णे चन्द्रादीनामिव तत्र तेषु ह्रदेषु उपोष्य सूर्यग्रहणापेक्षयैव नतु तीर्थोपवासापेक्षया "मुण्डनञ्चोपवासश्च सर्वतीर्थेष्वयं विधिः। वर्जयित्वा कुरुक्षेत्रम्" इति स्मृतेः ॥ ९—१० ॥

स्वन्नमुत्तमान्नं महाभागत्वमेव दर्शयन् स्नानदानादौ सुसङ्कल्पितमाह—कृष्ण इति । न इति प्रत्येकं स्वस्वपरिवारापेक्षया भक्तिः सादरप्रेमास्तु भवतात् लालसास्वभावीयम् एवं ग्रहणदिने कृतमुक्त्वा तत्परदिनेऽप्याह स्वमिति तदनुज्ञाताः व्रतसमाप्तौ तदनुज्ञां प्रार्थ्य प्राप्य चेत्यर्थः तत्र हेतुः कृष्णेति ॥ ११ ॥

तत्रेति सार्द्धत्रयकम् । कांश्चिन्निजागमनात्पूर्वमागतान् कांश्चित् पश्चादागतान् तत्र कांश्चिदुपरागात्पूर्वं कांश्चित्तु पश्चाद्ददृशुरित्यर्थः ॥ १२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नदद्भिरभ्राभैर्नीलमेघसङ्काशैरिति च गजविशेषणं विद्याधराणामिव द्युतिर्येषां तैः नृभिर्नरैश्च व्यरोचन्तेति सम्बन्धः महाभागाः भाग्यवन्तः सर्वे काञ्चनमालायुक्ताः ॥ ८ ॥

दिव्याः स्रगादयो येषां ते सन्नाहः कवचादिपरिकरबन्धः खेचरा देवा इव कलत्रैः सह व्यरोचन्त । तत्रेति । वासःस्रगादयः आसां सन्तीति तथा ताः धेनूर्ददुः रामह्रदेषु भार्गवनिर्मितेषु ह्रदेषु आप्लुत्य स्नात्वा कृष्णो भगवति नोऽस्माकं भक्तिरस्त्विति प्रार्थयमाना ददुः तथा स्वयं भगवानपि तत्राप्लुत्य ददौ इत्यर्थः कृष्णो देवता येषां ते ॥ ९—११ ॥

अतएव तेन कृष्णेनानुज्ञाताः वृष्णयः कामं यथेष्टं भुक्त्वा स्निग्धा सान्द्रा छाया येषां तेषामङ्घ्रिपाणां वृक्षाणामङ्घ्रिषु मूलेषु उपविविशुः। तत्रेति । ते वृष्णयस्तत्र स्यमन्तपञ्चके आगतान् सुहृदादीन् ददृशुः सुहृदश्च सम्बन्धिनश्च तान् ॥ १२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सर्वेषामेवागमने द्वारकायां कः स्थितः ? इत्याकाङ्क्षायामाह— आस्ते ऽनिरुद्धो रक्षायामिति। अनिरुद्धो योगपतिरिति योगाभ्यासपरस्याप्यनागमनमुक्तं कृतवर्मा च यूथप इति तस्य सेनापतिरित्यर्थः। योऽपि तस्योत्तरसाधकः सोऽपि नागच्छेदिति यद्यपीयं यात्रा सर्वथा साधारणी तथापि भगवच्चरित्रस्य प्रकरणत्वात् मुख्यतया यादवा वर्ण्यन्ते ये समागतास्ते किं

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

यात्रानियमेन आहोस्विदुभयेति सन्देहे निरूपयति—ते रथै-र्देवधिष्ण्याभैरिति। कृत्वा कार्पटिकं वेषमिति नियमो यात्रायां देशमात्रप्राधान्ये सति नियमः कालप्राधान्ये तु न नियम इति चतुरङ्गसेनया महत्या सहितास्ते व्यरोचन्तेति रथा शोभाविषयश्च निरूप्यते रथादयो वाहनरूपा इति केचित् देवधिष्ण्यानि विमानानि जगन्नाथादिदेवस्थानयात्रानिमित्त-देवासनरथसदृशा वा नानालङ्कारणोपेताः तैर्व्यरोचन्तेत्यग्रिमेण सम्बन्धः। ते गदादयः सर्व एव वा लोकाः तथा हया अपि तरलवत्तरङ्गवत् प्लवः प्लवनं गतिर्येषां हयानां गतिरेव गुणः ॥ ७ ॥

गजाश्च नदन्तः अभ्राभाः अत्युच्चाः नादेनान्तस्तोषो मत्तता वा निरूप्यते नृभिः पदातिभिर्दोलावाहकैर्वा तेषां कान्तिः विद्याधरसदृशी ते हि नानाविद्यया नानारूपा भवन्ति अल-ङ्कृताश्च प्रतिक्षणमन्यथान्यथारूपमिति ज्ञापयितुं विद्याधर-कान्तितुल्यता स्वयमपि महातेजाः महत्तेजो येषामिति समासन्तोऽटच् तेन टिलोपात् महातेज इत्यकारान्तो भवति अनेन सहजोत्कर्षः तेषामुक्तः आगन्तुकमाह—पथिकाञ्चन-मालिन इति अनेन सर्वदेशस्वास्थ्यं सर्वनिर्मलचित्तताच निरूपिता ॥ ८ ॥

अन्यथा साभरणा निर्भयाश्च सर्वे सर्वतो नागच्छेयुः दिव्यस्रग्वस्त्रसन्नाहाः दिव्यान्यलौकिकानि लोके आश्चर्यकराणि वस्त्रादीनि ( सम्बाहाश्च ) सन्नाहा वा कवचादयः सर्व एव सस्त्रीकाः प्रवृत्तौ स्त्रीसहितानामेवाधिकार इति महत्त्व-ज्ञापकं वा स्त्रीणां बाहुल्यं शोभातिशयश्च ज्ञापयितुं दृष्टान्तः खेचरा इवेति। एवं सर्वेषामागमनमुक्त्वा अमावास्यायां ग्रहण-दिवस एव यावतामागमनं भवति तानुक्त्वा पश्चात्तीर्थ-स्नानादिकं कृतवन्त इत्याह—तत्र स्नात्वेति। महाभागा इत्य-नेन तीर्थप्राप्तिभाग्यं दानाद्यर्थञ्च निरूप्यते ततो प्रस्तावमयः सूर्य इति तस्मिन् दिवसे सर्वेषामुपवासः ननु तीर्थप्राप्ति-निमित्तः कुरुक्षेत्रे तन्निषेधात् सुसमाहिता इति सर्वभोग-निवृत्तिः क्रोधादिसर्वदोषनिवृत्तिश्च ततो ग्रहणसमये ब्राह्मणेभ्यो ददुर्धेनूः वासांसि स्रजश्च रुक्ममालाश्च यासु सर्वालङ्कर-णोपेता दत्ता इत्यर्थः तत्र मुख्यमेकं सरः अन्येच ह्रदा नव ते रामह्रदाः "शोणितौघान् ह्रदान्नव" इति वाक्यात् ततो रामह्रदे-ष्वपि विधिवत्फलसाधकत्वात् स्नानं कृतवन्तः ॥ ९—१० ॥

तत्रापि स्वर्णं ददुः स्नानपूर्व्यर्थे दानाभावे स्नानं विफलं स्यात्, कामनामाह—कृष्णे नो भक्तिरस्त्विति—तीर्थसुवर्णदान-योरुभयोरपि सार्वकामिकत्वात् तत्स्नानं द्वितीयदिवस एवेति केचित् पुनः यद्वा द्वितीयदिवसेऽपि दानञ्च ततो ब्राह्मणानु-ज्ञया कृष्ण एव देवता येषाम् ॥ ११ ॥

तत्र तीर्थे कृष्णं पूजयित्वा भोजनार्थमुपविष्टे भुक्ते वा भगवति भगवता वाऽनुज्ञाताः स्निग्धच्छायायुक्तेष्वङ्घ्रिपेषु भुक्त्वा समुपविविशुः एतावत्पर्यन्तं तीर्थवैयग्र्यालोकदर्शनार्थं नावकाशः ततो यादवाः स्वयमन्यत्रागन्तैव भगवांस्तत्र वर्तत इति तत्रैव समागतान् सर्वान् ददृशुरित्याह—तत्रागतांस्ते ददृशु-रिति सुहृदो मित्राणि सम्बन्धिनः विवाह्यान् अपरानु-दासीनान् च भगवद्दर्शनार्थमागतान् नृपानिति वा ॥ १२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अनिरुद्धो द्वारकारक्षायामास्ते इति तस्यैव श्वेतद्वीपस्थस्य पालनकर्तृविष्णुत्वेन प्रसिद्धेः देवधिष्ण्याभैर्देवविमानतुल्यैः ॥ ७

महातेजाः महानेजसः ॥ ८—९ ॥

पुनराप्लुत्य उपरागमुक्तिस्नानं कृत्वा ॥ १०—११ ॥

स्निग्धा छाया येषां तेषामङ्घ्रिपानामङ्घ्रिषु तले ॥ १२—१८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अनिरुद्धः यूथपः सेनानीः कृतवर्मा च रैवत्यां द्वारकारक्षार्थ आस्ते तरलवत् तरङ्गवत् प्लवो गतिर्येषां तैः ॥ ७ ॥

विद्याधराणामिव द्युतिर्येषां तैः ॥ ८ ॥

दिव्याः स्रगादयो येषां ते खेचरा इव व्यरोचन्त महा-तेजः श्रीकृष्ण खेचरइव शुशुभे इतिशेषः ॥ ९ ॥

वासःस्रगादयः सन्ति यासान्तास्तथा पुनराप्लुत्य सूर्यो-परागमुक्तिस्नानं कृत्वा ॥ १० ॥

स्निग्धा छाया येषामङ्घ्रिपाणां तेषामङ्घ्रिषु मूलेषु उपवि-विशुः ॥ ११—१४ ॥

---

### भाषा टीका।

देवतान के विमान सदृश रथन कर के तथा तरंग सदृश चलन वारे अश्वन कर के ॥ ७ ॥

मेघ सदृश नाद करने वारे हस्तियों कर के विद्या-धर देवतान के सदृश कीर्ति वारे मनुष्यन कर के सहित बडे तेज वारे सुवर्णकी माला धारण किये दिव्यमाला वस्त्र धारण किये वे यादव लोग, मार्ग में आकाश चारी देवतान के समान प्रकाशमान होते भए महाभाग्य संपन्न यादव लोग तीर्थ में स्नान कर के तथा उप वास कर के सावधान होकर ब्राह्मणों के अर्थ सुंदर वस्त्र पुष्प माला सुवर्ण माला वारी दूध देनें वाली गौनका दान करते भए परसरामजी के किये भए कुण्ड में फिर विधि पूर्वक स्नान कर के वृष्णि वंशी लोग ॥ ८-१० ॥

श्रीकृष्ण में हमारी भक्ति होउ ऐसा संकल्प कर के ब्राह्मणों के अर्थ सुंदर अन्न दान करते भए श्रीकृष्णहि हैं इष्ट देव जिनके ॥ ११ ॥

ऐसे वृष्ण वंशी ब्राह्मणों से भोजन की अनुमतिको प्राप्त भए निज इच्छा के अनुसार भोजन कर के सघन छाया वारे वृक्षन के मूल में बैठ गए वहां कुरुक्षेत्र में सुहृद सम्बन्धी ॥ १२ ॥

मत्स्योशीनरकौसल्यविदर्भकुरुसृञ्जयान्।
काम्बोजकैकयान् मद्रान् कुन्तीनानर्त्तकेरलान् ॥ १३ ॥
अन्यांश्चैवात्मपक्षीयान् परांश्च शतशो नृप।
नन्दादीन् सुहृदो गोपान् गोपीश्चोत्कण्ठिताश्चिरम् ॥ १४ ॥
अन्योऽन्यसन्दर्शनहर्षरंहसा प्रोत्फुल्लहृद्वक्त्रसरोरुहश्रियः।
आश्लिष्य गाढं नयनैः स्रवज्जला हृष्यत्त्वचो रुद्धगिरो ययुर्मुदम् ॥ १५ ॥
स्त्रियश्च संवीक्ष्य मिथोऽतिसौहृदस्मितामलापाङ्गदृशोऽभिरेभिरे।
स्तनैः स्तनान् कुङ्कुमपङ्करूषितान्निहत्य दोर्भिः प्रणयाश्रुलोचनाः ॥ १६ ॥
ततोऽभिवाद्य ते वृद्धान् यविष्ठैरभिवादिताः।
स्वागतं कुशलं पृष्ट्वा चक्रुः कृष्णकथा मिथः ॥ १७ ॥
पृथा भ्रातॄन् स्वसॄर्वीक्ष्य तत्पुत्रान् पितरावपि।
भ्रातृपत्नीर्मुकुन्दञ्च जहौ सङ्कथया शुचः ॥ १८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

प्रोत्फुल्लहृद्वक्त्रसरोरुहैः श्रीः शोभा येषां ते ॥ १५ ॥

अतिसौहृदेन यत् स्मितं तेनामलाः अपाङ्गैर्दृशो दृष्टयो यासां ताः मिथः परस्परं सम्वीक्ष्य दोर्भिरभिरेभिरे आलिङ्गनं कृतवत्यः ॥ १६—१७ ॥

सङ्कथया मिथः सप्रेमगोष्ठ्या ॥ १८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

नृपानेवाह —मत्स्येति। उशीनरान् आवन्त्यान् काम्बोजान् आरट्टांश्च सिन्धुपारस्थान् श्रीनन्दादींश्च तत्रागतानित्यन्वयार्थस्यायं भावः ज्ञातीन् वां द्रष्टुमेष्याम इति भगवदभिप्रायेण मथुराद्वारकादौ पूर्वमागमनं प्रतिपाद्य ततः परमोत्कण्ठितास्ते कथमपि तन्मिषं लब्ध्वा गता इति सुहृदो मित्राणि सुहृदित्यादौ प्रागुक्तेपि पुनरेतदुक्तिः सौहृदविशेषविवक्षया गोपीश्च चिरमुत्कण्ठिताः श्रीभगवद्दर्शनोत्सुकाः इत्येवमत्रान्यत्र च तासामीदृशविशेषणं विना निर्देश एव न क्रियत इति माहात्म्यविशेषः सूचितः एवं प्रेमोद्रेकेण सम्बोधनं नृपेति ॥ १३—१४ ॥

तत्रादौ श्रीकृष्णभक्तानां सामान्यतः सर्वेषां पुंसां समागमसुखमाह—अन्योन्येति। अन्योन्यं यत्सन्दर्शनं साक्षाद्दर्शनं तेन हर्षस्य रंहो वेगः तेन कृत्वा प्रकर्षेण उत्फुल्लानि हृदय पाणिवक्त्ररूपाणि च सरोरुहाणि तैः श्रीर्येषां तथाभूताः सन्तो गाढमाश्लिष्य मुदं ययुः। नयनैरित्यादिविशेषणैस्त्रिभिः एषां यथोत्तरमुत्कलक्षणत्वे श्रैष्ठ्यम् इत्यानन्दविशेष उक्तः ॥ १५ ॥

तथैव तद्भक्तानां स्त्रीणामाह—स्त्रियश्चेति। मिथः इति सर्वत्रोपयोज्यं निहत्य गाढालिङ्गनादुन्मर्द्य ॥ १६ ॥

एवं सर्वजनानां समान्यतः समागममुक्त्वा विशेषत आह—तत इति। वृद्धान् ज्येष्ठान् यविष्ठैः कनिष्ठैः मिथः पृष्ट्वा मिथः कथाश्चक्रुः ॥ १७ ॥

तत्रैव श्रीकुन्तीवसुदेवयोर्विशेषं रसविशेषेण विस्तार्याह पृथेति पञ्चभिः। भ्रातॄन् श्रीवसुदेवादीन् स्वसॄः श्रुतदेव्याद्याः तत्पुत्रान् श्रीरामगदादीन् सन्तर्दनादींश्च पितरौ शूरं तत्पत्नीञ्च भोज्यां भ्रातृपत्नीः श्रीदेवक्याद्याः शुचः चिरादर्शनशोकान् जहौ तत्याज यद्वा अश्रूण्यमुञ्चत् ॥ १८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

मत्स्यादयः शब्दाः जनपदतद्राजसाधारणाः अन्यान्मत्स्यादिभ्योऽन्यानात्मपक्षीयान् स्वपक्षपातिनस्तथा परान् शत्रूंश्च सुहृदो नन्दादीन् गोपांश्चिरमुत्कण्ठाप्रीतिपूर्वकानुध्यानमासां सञ्जातेति तथा ताः गोपीश्च ददृशुरिति पूर्वेण सम्बन्धः ॥ १३-१४ ॥

अन्योन्येति। अन्योन्यस्य सन्दर्शनेन यो हर्षस्तस्य रंहसा वेगेन अतिशयेनेति यावत् प्रोत्फुल्लैर्हृद्वक्त्राण्येव सरोरुहाणि तैः श्रीः शोभा येषां ते गाढं यथा तथा आलिङ्गय नयनैः स्रवन्ति जलानि येषां ते हृष्यन्त्यः उदञ्चितरोमाणः (तनवो) त्वचो येषां रुद्धा गद्गदाः गिरो येषां ते मुदं हर्षं ययुः प्रापुः ॥ १५ ॥

स्त्रियश्चेति। अतिसौहृदेन स्मितं तेनामलाः अपाङ्गैर्नेत्रान्तैर्दृशो दृष्टयो यासां ताः कुङ्कुमपङ्केन रूषितान् लिप्तान् तादृशैः स्तनैर्निहत्य सम्पीड्य मिथोऽभिरेभिरे परिषस्वजिरे प्रणयेन प्रीत्याऽश्रूणि लोचनयोर्यासां ताः ॥ १६ ॥

तत इति। ते यदवो मत्स्यादयश्च वृद्धान् वयसाऽधिकानभिवन्द्य यविष्ठैर्न्यूनवयस्कैरभिवन्दिताश्च स्वागतं कुशलञ्च पृष्ट्वा तत्र परस्परं कथाश्चक्रुः कथयामासुः ॥ १७ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तावत्पृथा कुन्ती भ्रातॄन् स्वसृर्भगिनीश्च तत्पुत्रान् भ्रातृपुत्रान् स्वसृपुत्रांश्च वीक्ष्य सङ्कथया मिथः सप्रेमगोष्ठ्या शुचः क्लेशान् जहौ तत्याज ॥ १८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवृहत्क्रमसन्दर्भः ।

नन्दादीनित्यादि । नन्दोपनन्दसनन्दादीन् सुहृदो गोपान् दामसुदामवसुदामादीन् गोपीश्चोत्कण्ठिता इत्यादिना अन्योन्यसन्दर्शनेनेत्यत्र नन्दादयो वसुदेवादिभिः परिष्वक्तुं, चक्रुरित्यर्थः ॥ १४—३६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नानादेशस्थास्त इति देशभेदान्निरूपयति-मत्स्येति । नारवदेशः कोङ्कणदेशः अन्यंतु प्रसिद्धाः एकादश निरूपिताः तत्तन्मनोवृत्तिप्राधान्यख्यापनाय अनुक्तमनुक्तयार्थमाह-अन्यांश्चेति । परान् शत्रुपक्षीयान् शतश इति शत्रुबाहुल्यं सूचितं द्रष्टुं समागता इति भगवतोऽचिन्त्यसामर्थ्यं निरूपितम् एते सर्वे क्षत्रिया एव सजातीया निरूपिताः विजातीयान् निरूपयन् प्रथमं नन्दादीनपश्यत् गोपान् गोपीश्च उत्कण्ठिता इति भगवद्विषयिणी उत्कण्ठा भगवदीयान् वा सुसमृद्धान् एतावान् भगवतो विलास इति द्रष्टुं तासामुत्कण्ठा उत्कण्ठायामेव चिरमिति विशेषणम् ॥ १३—१४ ॥

ततस्तेषामन्योन्यसम्भाषणादिकं लौकिकभाषया निरूपयति अन्योन्यंति । भगवद्भक्तैः सह साक्षात् परम्परया वा सर्वेषामासक्तिरस्तीति । सर्वे भगवदीया एवेति प्रमेयत्वं तेषामन्यथा तन्निरूपणेऽधर्मः स्यात् प्रकरणञ्च विरुद्ध्येत अतस्तदुक्तार्थमेव अन्योन्यदर्शनेन प्रेमाधिक्यं निरूप्यते हर्ष आन्तरः तस्य तादृशो वेगः यो बहिरपि स्वानुभावं प्रकाशयति अतो हृदकसरोरुहयोः उत्फुल्लयोः श्रीर्येषां दूराद्दर्शनस्यैतावत् आश्लेषस्य ततोऽप्याधिक्यमित्याह—आश्लिष्येति । कायवाङ्मनसां सर्वेन्द्रियाणां च भाव उत्पन्न इति निरूपयति तत्र प्रथमं सर्वेन्द्रियोपलक्षणार्थं हृष्यत्त्वच इति कायिकः सन्तोषः रुद्धगिर इति वाचिकः मुदं ययुरिति मानसः ॥ १५—१६ ॥

एवं पुरुषाणाम् अन्योन्यं स्त्रीणामप्याह-स्त्रियश्च सम्वीक्ष्येति । तासां भावः प्रकटो जात इति ख्यापयितुं स्मितामलापाङ्गनिरूपणम् अतिसौहृदमान्तरं स्मितं मध्यस्थम् अमलापाङ्गा बाह्याः एतत्सहिता दृष्टयो यासाम् अभितः आन्तरमानसव्यवधानराहित्येन स्तनं वाचनिकं स्तनैः स्तनानिति कायिको गाढाश्लेषः प्रणयेणाभुलोचना इति सर्वेन्द्रियसंश्लेषः एवमुभयेषामेकता निरूपिता अतः सर्व एव भगवदीयाः भगवदीयाश्च भगवानिति प्रमेयं भगवानेव निरूपितो भवतीति तेषामर्थाद्भगवदीयत्वं निरूप्य साक्षान्निरूपयति ततोऽभिवाद्येति वृद्धाभिवादनं धर्मः कीर्तनाङ्कं यविष्ठैरभिवादिता हीनानां परिग्रहः एवमुभयीचार्थे परिगृह्य सर्वोपकारार्थं कृष्णकथां मिथः चक्रुः एतदेव परमवैष्णवलक्षणं तेऽन्योऽन्यतो भागवताः प्रसह्य "सभाजयन्तो मम पौरुषाणि" इति वाक्यात् ॥ १७ ॥

एवं साधारणानां निरूप्यासाधारणानां स्वभावत [illegible]वासक्तियुक्तानामन्योन्यवैमनस्यलक्षणे दोषे परिहर्तुमुपालम्भपरिहारौ निरूप्येते-पृथाभ्रातॄनिति । भ्रातरो वसुदेवादयः स्वसारः श्रुतदेव्याद्याः तत्पुत्राः बलशिशुपालादयः पितरौ मारिषाशूरौ भ्रातृपत्नीः देवक्याद्याः मुकुन्दः सर्वेषां मोक्षदानार्थमागतो भगवान् चकारात्तस्य सर्वसम्बन्धो निरूपितः एवं सङ्कथया शुचो जहौ सामान्यप्रश्नेनैव शोकलक्षणो दोषो निवृत्तः ॥ १८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अन्योन्यसन्दर्शनेन यो हर्षः तस्य रंहसा वेगेन, प्रोत्फुल्ले हृदयसरोरुहे श्रीः शोभा येषां ते गाढं यथा तथा आश्लिष्य आलिङ्गय मुदं ययुः प्रापुः ॥ १५ ॥

अतिसौहृदस्मिताभ्याममलाः अपाङ्गदृशः नयनप्रान्तदृष्टयो यासां ताः मिथः सम्वीक्ष्य कुङ्कुमपङ्केन रूषितान् लिप्तान् स्तनान् तादृशैरेव स्तनैर्निहत्य दोर्भिरभिरभिरे परिषस्वजिरे ॥ १६-१७ ॥

सङ्कथया अन्योन्यसप्रेमगोष्ठ्या ॥ १८ ॥ १९ ॥

---

### भाषा टीका ।

मत्स्य राशीनरदेश के कौसल देशके विदर्भ देश के कुरुदेश के सृंजय देश के आए भए राजान को यदुवंशीयों ने देखे श्रीकाम्बोज देश केकयदेशके मद्र देशके कुन्ति देशके आनर्त्त देशके केरलदेशके अपने पक्षपातीनको और हेनृप शत्रूनके पक्षपातीनको भी वहां देखे तहां नन्दजू आदि सुहृद गोपनको और बहुत कालसे प्रीति पूर्वक स्मरण करने वारी गोपीनको यादवोंने देखे परस्परमें दर्शन होनेसे हर्षके वेगते प्रफुल्लित हृदय मुख रूप कमलनकी शोभा वारे जिनके नेत्रोंसे आनन्दके जल बह रहेहैं शरीर में रोमाञ्च होरहेहैं प्रेमसे गद्गदवाणी होरहीहै एतादृश यदुवंशी आदि परस्परमें अति गाढ आलिङ्गन करके मोदको प्राप्त होते भए ॥ १३—१५ ॥

प्रतिप्रेम मन्दहास निर्मल कटाक्ष वारी अति प्रीतिसे नेत्रोंमें अश्रुपात वारीस्त्री जनभी परस्पर में देखकर सघन केशरिसे चर्चित स्तनोंको और स्त्रियोंके स्तनोंके साथ मिलाकर भुजान करके मिलती भई ॥ १६ ॥

अनन्तर यादव तथा आए भए अन्यराजा लोग उनको प्रणाम करके छोटओंसे प्रणामको प्राप्त भए सुन्दर आगमन तथा कुशल पूछकर आपसमें श्रीकृष्णकी कहते भए ॥ १७ ॥

तहां कुन्तीमहारानी वसुदेव आदि भ्रातानको बलदेवजी आदि भतीजेनको तथा निज माता पितानको देवकी आदि भौजाईनको और श्रीकृष्णको देखकर परस्पर सल्लाप करनेसें अनेक प्रकारके शोकनका परित्याग कर देती भई ॥ १८ ॥

---

कुन्त्युवाच ।

आर्य भ्रातरहं मन्ये आत्मानमकृताशिषम् ।
यद्वा आपत्सु मद्वार्त्तां नानुस्मरथ सत्तमाः ॥ १९ ॥
सुहृदो ज्ञातयः पुत्रा भ्रातरः पितरावपि ।
नानुस्मरन्ति स्वजनं यस्य दैवमदक्षिणम् ॥ २० ॥

वसुदेव उवाच ।

अम्ब माऽस्मानसूयेथा दैवक्रीडनकान्नरान् ।
ईशस्य हि वशे लोकः कुरुते कार्यतेऽथ वा ॥ २१ ॥
कंसप्रतापिताः सर्वे वयं याता दिशंदिशम् ।
एतर्ह्येव पुनः स्थानं दैवेनासादिताः स्वसः ॥ २२ ॥

श्रीशुक उवाच ।

वसुदेवोग्रसेनाद्यैर्यदुभिस्तेऽर्चिता नृपाः ।
आसन्नच्युतसन्दर्शपरमानन्दनिर्वृताः ॥ २३ ॥
भीष्मो द्रोणोऽम्बिकापुत्रो गान्धारी ससुता तथा ।
सदाराः पाण्डवाः कुन्ती सृञ्जयो विदुरः कृपः ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तामेव वसुदेवपृथयोः सङ्कथामाह—आर्येत्यादिचतुर्भिः । अकृताशिषमपूर्णमनोरथम् ॥ १९ ॥

यस्य दैवमदक्षिणमननुकूलं तं स्वजनमपि सन्तं सुहृदादयो नानुस्मरन्ति अतो मम दैवं प्रतिकूलं युष्माकं कोऽपराध इतिभावः ॥ २०—२१ ॥

ईशवशत्वमेवाह—कंसप्रतापिता इति । हे स्वसः ! एतर्ह्येव सम्प्रत्येव ॥ २२—२६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्र श्रेष्ठ्यात् श्रीवसुदेवं सम्बोध्याह—आर्य्येति । हे गुरो ! ज्येष्ठत्वार्ह इत्यात्मनस्तत्पाल्यत्वं सूचयति—हे भ्रातरिति स्नेहं जनयति. यद्वा, एकमेव पदं हे वृहद्भ्रातरित्यर्थः । भावः स एव यद्यस्मात् सत्तमाः सत्तमत्वेन बन्धुदीनवात्सल्ययोग्या अपि नानुस्मरथ अम्बाद्य येनापि न स्मरथ बहुत्वं पित्राद्यपेक्षया ॥ १९ ॥

सुहृदः सम्बन्धिनः सुहृदादीनां यथोत्तरं स्नेहानुस्मरणे श्रैष्ठ्यम् ॥ २० ॥

अम्ब हे मातः ! इति कनिष्ठभगिनीत्वेन स्नेहविशेषात् ववस्य ईश्वरस्य क्रीडनं क्रीडा तेन कातरान् विवशान् "दैवक्रीडनकान्नरान्" इतिपाठे क्रीडनकान् क्रीडासाधनानि तत्रापि नरान् देवाद्यपेक्षया स्वल्पशक्तिमत इत्यर्थः । रोगजरामरणादिधर्मिणो वा आद्यस्तु पाठश्चित्सुखसम्मतः एवमुक्तमस्वातन्त्र्यमेव दर्शयति—ईशस्येति । हि यतः अथवेति समुच्चये लोकः स्वातन्त्र्येण यत्कुरुते यच्च कार्य्यते पारतन्त्र्येण तत्र नियोजनविषयो भवति तत्सर्वमीशस्य वशे तदधीनमेवेत्यर्थः । तस्य नियोजकस्यापि नियोजकत्वात् ॥ २१ ॥

कंसेति अयमर्थः पूर्वं तावत्कौमारमारभ्य वेणस्येव कंसस्य प्राबल्ये विशेषतश्च केश्यरिष्टतृणावर्त्तपूतनादिसङ्ग्रहे जाते तेन प्रतापिताः नभोवाणीमारभ्य तु ततोऽप्यतितरां कीर्त्तिमदादिजन्मारभ्य ततोऽप्यधिकतमं प्रतापिताः देवर्षिवचनमारभ्यतु दिशि गतास्तदुपलक्षणत्वेन वयञ्च प्रस्थापितबालकद्वयं गोकुले तत्कृतोपद्रवतया भीताश्च तदेतदप्युपलक्षणं जरासन्धकृतमुहुरवरोधेतु दिशन्दिशं गन्तुमप्यशक्ता द्वारकामागता अपि जतुगृहे भवतां दाहप्रतीत्या निरालम्बत्वमाचिता वयमेतर्ह्येव भवत्पुत्राणां कुर्वद्धराज्यप्राप्तिसमयरूपे सम्प्रत्येव दैवेनेश्वरानुकूल्येन पुनः स्थानं स्वगोष्ठीष्वव्यग्रतया स्वस्थानमासादिता इति अत्र तु हे स्वसः इति भ्रातृणामस्माकं दशां श्रोतुमागृह्णत्या भवत्या ज्ञायत इति भावः ॥ २२ ॥

मिथोऽर्चने योग्येऽपि यदुभिरेवार्च्चनं तेषामेव सर्वश्रेष्ठत्वेन सर्वसम्मानकर्ताहत्वात् ततश्चाच्युतस्य सर्वसौन्दर्य्यादिपरि-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

पूर्णस्य भगवतः सम्बन्धः साक्षाद्दर्शनं तेन तदेव वा परमानन्दः ब्रह्मसुखादपि सुखविशेषः तेन निर्वृतास्तृप्ताः परिपूर्णा इत्यर्थः॥ २३॥

नृपानेव नाम्ना निर्दिशन् परमानन्दनिर्वृतिहेतौ तस्मिन् वैशिष्ट्यमप्याह—भीष्मेति चतुर्भिः। अम्बिकायाः पुत्र इति धृतराष्ट्रस्यान्धकत्वं सूचितम्। सुताः दुर्योधनादयः तथेति समुच्चये दाराः श्रीद्रौपद्यादयः॥ २४॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

भ्रातरिति वसुदेवः सम्बोध्यते॥ १९-२८॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तावत् पृथावसुदेवयोः सङ्कथामाह— आर्येति चतुर्भिः। हे आर्य हे भ्रातः! अहमात्मानमकृताशिषमप्राप्तमनोरथं मन्ये मम मनोरथपूर्त्तिरजातेत्यर्थः। कुतः यद्यस्मात् हे सत्तमाः! मद्वार्त्तां नानुस्मरतः न स्मृतवन्तः अडभाव आर्षः॥ १९॥

युक्तश्चैतदित्याह—सुहृद इति। यस्य दैवमदक्षिणं प्रतिकूलं तं स्वजनमपि सुहृदो नानुस्मरन्त्येव अतो मम दैवं प्रतिकूलमिति भावतां कोऽपराध इतिभावः॥ २०॥

एवमुक्तः प्राह वसुदेवः-अम्बेति। हे अम्ब! दैवस्य क्रीडनकान् क्रीडासाधनभूतान्नरानस्मान् प्रति मासूयेथाः असूयां माऽकार्षीः कुतः हि यस्माल्लोकः जनः ईश्वरस्य वशे ईश्वरेण वशीक्रियत इत्यर्थः। यथा ( ईशस्य ) यथाकथि कार्यते व्यापार्यते च॥ २१॥

ईशवशत्वमेवाह-कंसप्रतापिता इति। कंसेन प्रतापिताः क्लेशिताः सर्वे वयं दिशंदिशं याताः गताः हे स्वसः! एतर्ह्येव सम्प्रत्येव दैवेन स्थानमासादिताः प्रापिताः॥ २२॥

वसुदेवेति। ते मत्स्यादयो नृपाः वसुदेवादिभिर्यदुभिरर्चिताः अच्युतसन्दर्शनजपरमानन्देन सुखिताश्चासन् बभूवुः॥ २३॥

* भीष्मादयः अन्ये च युधिष्ठिरमनुव्रताः ते सर्वे सस्त्रीकाः श्रियो लक्ष्म्याः निकेतनमाश्रयं शौरेः श्रीकृष्णस्य वपुः शरीरं वीक्ष्य विस्मिताः बभूवुरिति चतुर्णामन्वयः तत्राम्बिकापुत्रो धृतराष्ट्रः ससुता दुर्योधनादिसहिता गान्धारी॥ २४—२७॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

विशेषनिराकरणार्थमुपालम्भमाह-आर्य भ्रातरिति। दुष्टस्तु न पृच्छत्येव त्वन्त्वार्यः तथापि न पृच्छसीत्याश्चर्यं तत्र स्वयमेव हेतुं कल्पयति अहमात्मानमेव अकृताशिषम् अल्पभाग्यं मन्ये न कृताः आशिषो भाग्यहेतुयुक्तानीति ननु त्वामुपेक्षकं मन्ये भाग्याभावे बन्धूनां प्रश्नाद्यभावः लोकेऽपि सिद्ध इति तं निरूपयति—सुहृद इति। अस्माकन्तु आपत्सु एकथा अपि वार्त्तां नानुस्मरन्तीति किमाश्चर्यं यस्य दैवमदक्षिणं तं सुहृदादयः केऽपि न स्मरन्ति सर्वदैव यद्वेत्यापात्स्यतीति न वक्तव्यं दैवमदृष्टाभिमानिनी देवता अदक्षिणं प्रतिकूलम्॥ १६—२०॥

उपालम्भं परिहरति-वसुदेवः। अम्बेति कनिष्ठभगिनीं स्नेहात् मातृनाम्ना सम्बोधयति—अस्मान् भ्रात्रादीन् मासूयेथाः दोषारोपणं न माद्राक्षीः तत्र हेतुः, देवक्रीडनकानिति. देवोऽत्र कालः स एवावतीर्णः अतो देवपदं तत्रापि नरान् मनुष्याः, सर्वे सेवका इति कथमेवमिति चेत्तत्राह—ईशस्य हि वशे लोक इति। प्रयोजककर्तृत्वे साक्षात्कर्तृत्वे च ईशस्य नियन्तुः कालस्यैव वशे युक्तश्चायमर्थः तदुदर एवोत्पन्नत्वात् यो हि यस्य गृहे उत्पद्यते स तस्य वशे भवति हीति समुच्चयार्थे च अनादरे सर्वाः क्रियाः तदधीना इत्यर्थः॥ २१॥

एवं सामान्यतः पराधीनत्वमुक्त्वा विशेषतोऽप्याह—कंस-प्रतापिता इति। प्रकर्षेण तापमुत्पादिताः सर्व एव यावन्तः दिशं दिशमष्टदिक्षु याताः एतर्ह्येवेदानीमेव भोगेन काले न स्मृतः ततः कंसवधं साम्प्रतमेव जातमिति मन्यते पुनः स्थानं यथा प्रतापनात्पूर्वं दैवेन भगवता कालेनासादिताः स्वस इति सम्बोधनमप्रतारणाय॥ २२॥

एवं दोषपरिहारमुक्त्वा गुणान् वक्तुं प्रथमतो मानसमाह—वसुदेवोग्रसेनाद्यैरिति। वसुदेवोऽलौकिको महान् उग्रसेनो लौकिकः तौ आदिभूतौ येषां यदूनां तैरग्रे वक्ष्यमाणाः सर्व एवार्चिताः सन्तः महत्पुरस्कारेण गतमूलदोषाः अच्युतसन्दर्शनेन यो जातः परमानन्दः तेन निर्वृताः आसन् निर्वृतिर्मानसी तान् गणयति भीष्म इति त्रिभिः सात्त्विक राजसा स्तामसाश्च क्रमान्निरूपिताः अम्बिकापुत्रो धृतराष्ट्रः ससुत दुर्योधनादिसहिता तथेति नन्याः सात्त्विकत्व सन्देहव्युदासः नव भेदाः सात्त्विकाः॥ २३—२४॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अकृताशिषम् अकृतसुकृतं यद्यतो निश्चितमेव सत्तमा अपि नानुस्मरथेति ममैव भाग्यं नास्ति युष्माकं कोऽपराध इति भावः॥ १६-२०॥

अम्ब हे परमवत्सले! कनिष्ठभगिनीत्यर्थः दैवस्य क्रीडनकान् क्रीडासाधनानि कुरुते स्वातन्त्र्येण कार्य्यते पारतन्त्र्येण॥ २१॥

कंसप्रतापितास्सर्वे वयं दिशन्दिशं याता इत्यन्यानितस्ततः कंसभयात् पलायितान् यादवान् क्रोडीकृत्यैकं एतर्ह्येव समयं हे स्वसः!॥ २२—२६॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तामेव वसुदेवपृथयोः सङ्कथामाह-आर्येत्यादि चतुर्भिः। अकृताशिषमकृतसुकृतम् यत यस्मात् सत्तमा अपि यूयं नानुस्मरथ॥ १९॥

यस्य जनस्य दैवमदक्षिणं प्रतिकूलं तं स्वजनं स्वीयं जन-

* हे राजेन्द्र कथम्भूतं वपुः श्रीनिकेतं सर्वशोभास्थानं सस्त्रीकं रुक्मिण्यादिस्त्रीसहस्रसहितम्। इति पाठान्तरम्।

कुन्तिभोजो विराटश्च भीष्मको नग्नजिन्महान्।
पुरुजिद्द्रुपदः शल्यो धृष्टकेतुः स काशिराट् ॥ २५ ॥
दमघोषो विशालाक्षो मैथिलो मद्रकेकयौ।
युधामन्युः सुशर्मा च ससुता बाह्लिकादयः ॥ २६ ॥
राजानो ये च राजेन्द्र युधिष्ठिरमनुव्रताः।
श्रीनिकेतं वपुः शौरेः सस्त्रीकं वीक्ष्य विस्मिताः ॥ २७ ॥
अथ ते रामकृष्णाभ्यां सम्यक्प्राप्तसमर्हणाः।
प्रशशंसुर्मुदा युक्ता वृष्णीन् कृष्णपरिग्रहान् ॥ २८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

मा[?] सुहृदादयो नानुस्मरन्ति अतो दैवोपेक्षितास्मीत्यर्थः ॥ २० ॥

हे अम्ब देवि! दैवक्रीडोपस्करान् अस्मान् मा असूयथाः अ[?]यां माकार्षीः कुरुते स्वयं करोति कार्यते पित्राद्याज्ञया प्रि[?]ते ॥ २१ ॥

[?]शिवशत्वं दर्शयति—कंसप्रतापिता इति ॥ २२-२६ ॥

भाषा टीका।

कुन्त्युवाच

कुन्ती[?]जी वसुदेवजीके प्रति बोली कि हे भ्राता! मै अपने आत्म[?]को ऐसा मानतीहुं कि मैने कुछभी पुण्य नहि किया क्योंकि[?] सर्वप्रकार श्रेष्ठ होकर भी आप सब आपत्तियोंमें मेरी वार्त्ता[?]का भी स्मरण नहि करते ॥ १८ ॥

जिस का दैव[?] प्रतिकूल होता है उसको सुहृद ज्ञाती भ्राता माता पिता[?] स्वजन आदि कोई भी स्मरण नहि करता ॥ २० ॥

[व]सुदेव उवाच।

हे अम्ब! परम वात्सल्यगुण युत कुन्ती! परमेश्वर की लीला के खिलौना रूप हम[?] मनुष्योंपर दोषारोपण करके तू मतना देखे क्योंकि सब हि[?]जन ईश्वर के आधीन है इसी कारण उसते प्रेरितहि भया [यह] लोक कर्म करता है अथवा परमात्मा हि इस लोक से कर्म करा[?]ता है ॥ २१ ॥

हे बहना! कंसने क्लेश दिया [इ]सी कारण हम सब जहां तहां सब दिशान मे भग गये अ[ब]हि थोडे दिनों से देवने फिर भी हम स्थान मे प्राप्त किये हैं ॥ २२ ॥

श्रीशुकउवाच।

वहां प्राप्त भए राजान का वसुदेव उग्रसेन आदि यादवों ने सत्कार किया वे राजा लोग [श्री]कृष्ण से सम्यक् प्रकार दर्शन जनित परमानन्द से अ[त्य]न्त सुखी हो गए ॥ २३ ॥

भीष्मजी द्रोणाचार्य्य धृतराष्ट्र तथा पुत्रों सहित गान्धारी स्त्रीयों सहित पाण्डव कुन्ती सृञ्जय विदुर कृपाचार्य्य ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

युधिष्ठिरं येऽनुव्रतास्ते राजसूये जितत्वात् ॥ २७-२८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

महानिति। भक्त्या निजकन्यादानेन भगवदीयेश्वरवर्गेषु नग्नजितः श्रेष्ठयात् पुरुजित् शैब्यः श्रीमित्रवृन्दापिता काशिराट् सुदक्षिणभ्राता अन्यो वा कश्चित् तेन सह वर्त्तत इति द्वयोः स्नेहविशेषः सूचितः विशालाक्षः कश्चित् मैथिलो बहुलाश्वश्च अन्यो वा तद्देशाधिपः कश्चित् आदिशब्दात्तदनुयायिनः ॥ २५—२६ ॥

जरासन्धशिशुपालयोरनुक्तिर्नूनं श्रीभगवांस्तत्रागत इति मत्सरेण तयोरनागमनात् युधिष्ठिरमनुव्रता इति तदानीं राज्यार्द्धप्राप्तेः स्वतः श्रीनिकेतं सर्वशोभासम्पदाविर्भावाश्रयं सस्त्रीकं यथा स्यात्तथा वीक्ष्य साक्षाद्दृष्ट्वा स्त्रीभिस्सह वर्त्तमानैः सस्त्रीका इति तासां मुख्यतया विस्मयाधिक्यमुक्तं प्रेमाद्रस्वभावत्वात् यद्वा यथा स्त्रियस्तथा तेपीति तुल्यभावविशेषोऽभिप्रेतः ॥ २७ ॥

अथानन्तरं स्वयं श्रीरामकृष्णाभ्यामपि तत्रापि सम्पत् "परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः" इतिविश्वः ॥ २८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथेति। ते भीष्मादयः कृष्णरामाभ्यां कर्तृभ्यां सम्यग्यथातथा प्राप्तं समर्हणं यैस्ते कृष्णेन परिगृह्यन्त इति तथा तान् वृष्णीन् प्रशशंसुः ॥ २८ ॥

अहो भोजपते यूयं जन्मभाजो नृणामिह ।
यत्पश्यथाऽसकृत्कृष्णं दुर्दर्शमपि योगिनाम् ॥ २९ ॥
यद्विश्रुतिः श्रुतिनुतेदमलं पुनाति पादावनेजनपयश्च वचश्च शास्त्रम् ।
भूः कालभर्जितभगाऽपि यदङ्घ्रिपद्मस्पर्शोत्थशक्तिरभिवर्षति नोऽखिलार्थान् ॥ ३० ॥
तद्दर्शनस्पर्शनानुपथप्रजल्पशय्यासनाशनसयौनसपिण्डबन्धः ।
येषां गृहे निरयवर्त्मनि वर्ततां वः स्वर्गापवर्गविरमः स्वयमास विष्णुः ॥ ३१ ॥

श्रीशुक उवाच ।

नन्दस्तत्र यदून् प्राप्तान् ज्ञात्वा कृष्णपुरोगमान् ।
तत्रागमद्वृतो गोपैरनस्स्थार्थैर्दिदृक्षया ॥ ३२ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

सस्त्रीकं यथा स्यात्तथा वीक्ष्य तद्दर्शनम् ॥ २७—३९ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तथैव नवविधान् राजसान् निरूपयति—कुन्तिभोज इति । महानिति नग्नजितो विशेषणं दमघोषादयस्तामसाः मद्रदेशाधिपतिः केकयदेशाधिपतिश्च ससुता इति भूरिश्रवाद्यो भिन्नतया निरूप्याः अतस्तेपि नवविधाः ॥ २५—२६ ॥

निर्गुणान्परमसात्त्विकान्वा सम्बन्धाभावान्निरूपयति—राजन इति । अन्ये पूर्वोक्तव्यतिरिक्ता चकारात्तत्सम्बन्धिनश्च नन्वेते सम्बन्धिनस्ते त्रिगुणा जाताः अन्ये कथं निर्गुणाः परमसात्त्विका वा जातास्तत्राह युधिष्ठिरमनुव्रता इति । परमवैष्णवसङ्गात् तच्छीलन शिक्षिताः एवं चतुर्विधा अप्येते श्रीनिकेतं भगवतो वपुर्दृष्ट्वा विस्मिताः इदं वपुर्ध्यानगम्यं कथं दृश्यत इति ध्यान गम्ये नियामकं श्रीनिकेमिति सस्त्रीकमिति सहजभार्यायां विद्यमानायां पुनरन्यासां परिग्रहोप्याश्चर्यमिति तासामेकमत्यं कान्त्यतिशयं वा दृष्ट्वा विस्मितानां निरन्तरस्मरणेन ज्ञानोत्पत्तौ मुक्तिः स्यादिति तत्साम्प्रतमनभिप्रेतमिति कृष्णरामाभ्यां तेषां पूजा समारब्धा सम्यक्प्राप्तं समर्हणं यैरिति ततो भगवदिच्छया भक्ता एव भूत्वा भगवत्स्तोत्रं कृतवन्त इत्याह प्रशशंसुरिति । मुदा युक्ता इत्यन्तरस्तोषः केवलवाचिकत्वं व्यावर्त्तयति भगवांस्तु सर्वैरेव स्तूयते ते विरलाः ये भगवत्परिगृहीतान् स्तुवन्ति अतः कृष्णपरिगृहीतान् वृष्णीन् प्रशशंसुः ॥ २७—२८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

युधिष्ठिरमनुव्रता इति । तदानीं तस्य राज्यार्द्धप्राप्तेः॥२७-२९॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

युधिष्ठिरमनुव्रताः राजसूये जितत्वात् ॥ २७—२८ ॥

भाषाटीका ।

कुन्तिभोज विराट भीष्मक महात्मा नग्नजित, पुरुजित द्रुपद शल्य काशी राज सहित धृष्ट केतु ॥ २५ ॥

दमघोष विशाल नेत्र वारो मिथिला को राजा, मद्रदेश और कैकय देश के दोनों राजा युधा मन्यु सुशर्मा और पुत्रों सहित बाल्हिक आदि राजा ॥ २६ ॥

हे राजेन्द्र ! युधिष्ठिर के आज्ञानुवर्त्ती जो राजा लोग रहे वे सब श्रीकृष्ण के स्त्री सहित श्रीनिवास दिव्य रूपका दर्शन करके आश्चर्य को प्राप्त होगए ॥ २७ ॥

अनंतर ! श्रीरामकृष्ण से सर्व प्रकार सन्मान को प्राप्त भए वे राजा लोग मोद से युक्त होकर श्रीकृष्ण ने अपने मानकर जिनका अङ्गीकार किया है उन वृष्णियों की प्रशंसा करते भए ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

जन्मभाजो नृणां मध्ये सफलजन्मानः ॥ २९ ॥

किञ्च न केवलं तस्य दर्शनमेवापितत्यन्तदुर्लभं बहु युष्माकं स्वतः सम्पन्नमित्याहुः—यद्विश्रुतिरिति द्वाभ्याम् । यदिति पृथक् पदम् यस्येत्यर्थः विश्रुतिः कीर्त्तिः श्रुतिभिर्नुता वेदैः स्तुता इदं विश्वमलमत्यर्थं पुनाति यद्विश्रुतिश्रुतिरमीवमलमिति पाठे श्रुतिः श्रवणममीवं पापमिति यस्य पादावनेजनपयो गङ्गा च यस्य वचो वाक्यरूपं शास्त्रं च वेदाख्यं विश्वं पुनाति किञ्च कालेन भर्जितं दग्धं भगं माहात्म्यं यस्याः सा तथाविधाऽपि भूर्यस्याङ्घ्रिपद्मस्पर्शेन उत्था आविर्भूता शक्तिर्यस्याः सा नोऽस्माकमखिलानर्थान् अभितो वर्षति ॥३०॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दर्शनञ्च स्पर्शनञ्चानुपथोऽनुगतिश्च प्रजल्पो गोष्ठीच शय्या शयनं चासनञ्चाशनं भोजनञ्च यौनं विवाहसम्बन्धस्तेन सह वर्तमानः सपिण्डबन्धो दैहिकसम्बन्धः तेन श्रीकृष्णेन सह दर्शनाद्युपलक्षितः स यौनः सपिण्डबन्धो येषां वोऽस्ति किञ्च येषां वो गृहे विष्णुः स्वयमास आविरभूत् निरयवर्त्मनि प्रवृत्तिमार्गे वर्त्तमानानां स्वर्गापवर्गाभ्यां विरमयति वितृष्णान् करोतीति तथा सः ते यूयं जन्मभाज इति यद्वा तदिति सामान्यनिर्देशः स इत्यर्थः । स विष्णुः स्वयं येषां वो निरयवर्त्मनि संसारकारणे गृहे वर्त्तमानानामपि बध्यते सम्बध्यत इति बन्धोः दर्शनादिभिः सम्बन्धस्सन् स्वर्गापवर्गविरम आस परमसुखप्रदो बभूवेत्यर्थः ॥ ३१ ॥

अनस्थार्थैरिति तत्रैव वासचिकीर्षया शकटेषु स्थापितैर्थैः सहागत इत्यर्थः ॥ ३२—३३ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

यदुराजत्वेन श्रेष्ठ्यव्यवहारात् नृपत्वेन स्वसाम्यमननाच्च उग्रसेनं सम्बोध्याहुः—अहो इति । सादरसम्बोधने आश्चर्ये वा योगिनाम् सनकादीनामपि सकृदपि दुर्दर्शं कृच्छ्रेणैवान्तः साक्षात्कार्यम् ॥ २९ ॥

यद्विति युग्मकम् । षष्ठ्यालुक् छान्दसः विश्रुत्यादीनां यथोत्तरं पावनत्वे न्यूनत्वम् एवं प्राचीनं साधारणं माहात्म्यमुक्त्वा साम्प्रतं विशेषमाह—भूरिति । कालः कलिः तदानीं तस्य प्रवेशात् पक्षे प्रकर्षेण सुकोमलत्वादिना तस्य भूस्पर्शानर्हत्वं तथापि स्पर्शप्राप्त्या परमसौभाग्यञ्च सूचितः अत एव उत्थसर्वार्थशक्तिः सती नोऽस्माकमखिलानर्थान् अभितो वर्षति अविच्छेदेन सम्पादयतीति तदिति तृतीयाया लुक् सयौनः यौनसम्बन्धेन सहितः सपिण्डबन्धः पक्षान्तरे च सपिण्डं समानपिण्डता ज्ञातित्वमित्यर्थः । निरयवर्त्मनीति लोकदृष्ट्या स्वर्गापवर्गविरमः दर्शनादिपरममहासुखविशेषप्रदानेन स्वर्गरूपमहाविषयभोगे ब्रह्मानुभवसुखे च वैतृष्ण्यापादकः स्वयमिति युष्मदीयप्रयासं विनेत्यर्थः । यद्वा अयनमयः संसारः तस्मान्निर्गतं निरयं वर्त्मापि यस्य तस्मिन् स्वरूपमेव विष्णुः सर्वव्यापकः साक्षाद्भगवानेवेत्यर्थः । अन्यत्तैः तैस्तु तदिति सामान्यनिर्देश इत्यादौ तत्किमपि वस्त्वित्यर्थः । विष्णुरिति तद्विशेषणमजहल्लिङ्गमिति स्थितेऽपि तात्पर्यवृत्त्या स इत्यवगम्यत इत्यर्थः । यद्वा तदिति पुंस्यपि प्रथमाया लुक् छान्दसः ॥ ३०—३१ ॥

एवं श्रीकुन्तीवसुदेवादीनां सम्भाषणादिकमल्पकतयादौ समाप्य कुरुक्षेत्रयात्रा मुख्यप्रयोजनमुपरागात्प्रागेवागतैः श्रीनन्दादिभिः पूर्वयुक्त्या दुर्घटमिलनैः सह तदानीन्तनमेव श्रीभगवतः समागमं विस्तरेणाह—नन्द इत्यादिना यावदध्यायसमाप्ति । तत्र कुरुक्षेत्रे प्रकर्षेण सर्वपरिवारसाहित्यादिना प्राप्तानागतान् चारादिद्वारा ज्ञात्वा ननु तस्य तादृशस्य केवलैर्यदुभिः किमित्याशङ्क्याह—कृष्णः व्रजचित्ताप्रकर्षकः स्वतन्त्रः पुरोगमोऽग्रो येषां तान् गोपैः श्रीमदुपनन्दादिभिर्द्दिनः एकशेषेण गोपीभिश्च तत्पत्न्यादिभिः तत्र हेतुः दिदृक्षयेति । भवत्वन्येषामन्यपारलौकिकमैहिकञ्च निमित्तं तेषां तु श्रीकृष्णदिदृक्षैव तत्रागमने निमित्तमित्यर्थः । इति तेषां तद्विरहोचितदशापि सूचिता अन्यत्तैः यद्वा अनस्थासु शकटोपरिस्थासु श्रीगोपीषु अर्थः श्रीकृष्णार्थप्रियद्रव्यादिर्येषां तैः ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भोजपते इति हे उग्रसेन ॥ २९ ॥

विश्रुतिश्रुतिर्यस्य विश्रवणं विश्रुतिः विश्रुतिमितिपाठे "इमं मे गङ्गे यमुने सरस्वति" इत्यादिषु विविधश्रुतिषु श्रुतमिति पयोविशेषणं स्ववचः गीताशास्त्रं यस्य कीर्त्तिः श्रवण गङ्गाजलं गीताशास्त्रं चेति अलं पुनातीत्यन्वयः अमीवमलमिति पाठे पापाख्यं मलमित्यर्थः । भूरिति कालभर्जितभगापि कालेन दग्धैश्वर्यापि भूमिर्यदङ्घ्रिपद्मस्पर्शोत्थशक्तिरस्माकमखिलानार्थान् वर्षतीत्यर्थः ॥ ३० ॥

अनुपथशब्दोऽनुगमपरः सयौनं सविवाहादिसम्बन्धः सपिण्डबन्ध एकगोत्रान्वयः स्वर्गापवर्गविरमः जन्ममृत्युनिवारकः ॥ ३१-३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रशंसामेवाह—अहो इति त्रिभिः । भोजपतिरुग्रसेनः हे भोजपते ! इह लोके नृणां मध्ये यूयमेव जन्मभाजः सफलजन्मानः कुतः यद्यस्माद्योगिनामपि दुर्दर्शं श्रीकृष्णमसकृत् पश्यथ ॥ २९ ॥

किञ्च, न केवलं तस्य दर्शनमेवापित्वत्यन्तदुर्लभं बहु युष्माकं सम्पन्नमित्याहुः, यद्विश्रुतिरिति द्वाभ्याम् यदिति पृथक् पदमव्ययं यस्येत्यर्थकं विश्रुतिपादावनेजनपयोभ्यां पृथक् सम्बध्यते यद्वा पादेत्यस्य यस्येत्यादिः यस्य भगवतो विश्रुतिः कीर्तिः श्रुतिभिर्वेदैः नुता इदं कथयत्सर्वं माश्वपाकं जगत्पुनाति यस्य पादावनेजनपयः पादप्रक्षालनजलं तदात्मिका गङ्गा च जगत्पुनातीत्यर्थः । वाचः काव्यपुराणादिरूपं शास्त्रं शासनात्मकवेदाश्च विश्वं पुनाति किञ्च कालेन भर्जितं दग्धं भगवन्माहात्म्यं यस्यास्तथाविधापि भूः पृथ्वी यस्याङ्घ्रिपद्मस्पर्शेन उत्था आविर्भूता शक्तिर्माहात्म्यमैश्वर्यम् इति यावत् सा यस्याः तथाभूता नोऽस्माकमखिलानर्थान् सर्वान् अभीष्टानर्थानभिवर्षतीति श्रुतेरितिपाठे श्रुतेर्यस्य विश्रवणं विश्रुतिः विश्रुतमिति पाठे "इमम्मे गङ्गे यमुने सरस्वति" इत्यादिषु विविधश्रुतिषु श्रुतमिति पयोविशेषणं वचः गीतात्मकं शास्त्रं यस्य कीर्त्तनं जगदलं सकलमितिपाठे अलं पुनातीत्यन्वयः जगदमीवमलं पुनातीति पाठे अमीवं पापं तदेव मलं यस्य तज्जगत्पुनातीत्यर्थः । गङ्गाजलं गीताशास्त्रञ्चेदं जगत्सकलं पुनातीत्यर्थः ॥ ३० ॥

किञ्च, यद्दर्शनमिति । यस्य दर्शनं च स्पर्शनञ्चानुपथः अनुगतिश्च प्रजल्पो गोष्ठीच शय्या शयनं आसनञ्चाशनं भोजनञ्चेतीतरेतरयोगद्वन्द्वः सयौनसपिण्डाभ्यां विवाहैकगोत्रत्वाभ्यां बन्धः सम्बन्धः दर्शनादिभिः सहितस्सयौनसपिण्डबन्धः स येषां भवतामस्ति किञ्च येषां गृहे श्रीकृष्णः स्वयमास आवि-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

बभूव येषां वो निरयवर्त्मनि प्रवृत्तिमार्गे वर्त्ततां वर्त्तमानानामपि स्वर्गापवर्गविरमः भगवत्सङ्गात्स्वर्गापवर्गवैतृष्ण्यञ्चास अभूत् ॥ ३१ ॥

नन्द इति । कृष्णपुरोगमान् कृष्णप्रभृतीन् ज्ञात्वा आकर्ण्य तद्दिदृक्षया कृष्णादिदर्शनेच्छया गोपैः परिवृतः अनोभिः शकटैर्गमनसाधनैः तत्र कृष्णसन्निधौ आजगाम ॥ ३२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

प्रशंसामाह—त्रिभिः सात्विकादिभावेन अहो इति भगवद्दर्शनं दुर्लभं मत्वा तत्तेषामनायासेन जायत इति हे भोजपते राजन् ! यूयमेव जन्मभाजः सुतरां नृणां मध्ये वैकुण्ठवासिनां तु कदाचिद्भवतीति योगः कदाचित्परिपक्वः सकृद्दर्शयति भवन्तस्त्वसकृद्वारम्वारं पश्यत पश्यथेति पाठे तादृशाभावश्छान्दसः ॥ २९ ॥

एवं भगवद्दर्शनं स्तुत्वा भगवतो गुणश्रवणादीन् धर्मान् स्तुवन्ति-यद्विश्रुतिरिति । विश्रुतिः कीर्त्तिः श्रुतिभिः सर्वैरेववेदैर्नुता अनेनाधिक्यं माहात्म्यं चोक्तं श्रुतिभिः श्रोत्रेन्द्रियैर्वा नुता अतिरसालत्वेनात्यादरं गृहीता इयं जगदेवात्यर्थं पुनाति भगवत्कीर्त्तेः विषयत्वेन भगवत्सम्बन्धः नतु साक्षात् तादृश्यपि चेत्पुनाति तदा साक्षात्सम्बन्धो भगवान् किं वक्तव्य इति माहात्म्यं निरूपितं भवति कीर्त्तिः सात्विकी गङ्गा राजसी शास्त्रं ततोन्यदिति सर्वेषां तुल्यत्वायाह—पादावनेजनपयः शास्त्रं वचो गीता भागवतञ्च एतद्द्वयमप्यलं पुनाति एवं कीर्त्यादिद्वारापि भगवन्माहात्म्यमुक्त्वा प्रकारान्तरेण पुनः साक्षादेवाह—भूरिति । कालेनातिबलिष्ठेन भर्जितभगापि गतदृष्टादृष्टसामर्थ्यापि यदङ्घ्रिस्पर्शमात्रेणैव उत्थाः उत्थिताः सर्वा एव शक्तयो यस्याः तादृशीभूत्वा नोऽस्मभ्यं सर्वानेवार्थान् वर्षति अनेन कालग्रस्तस्यापि भगवच्चरणस्पर्शे पुनः प्रत्यापत्तिर्निरूपिता पूर्वस्माच्चाधिक्यं सर्वोपजीव्यत्वञ्च निरूपितम् ॥ ३० ॥

एवं दर्शनस्पर्शमाहात्म्यमुक्त्वा तादृशदर्शनादिकं सर्वं येषां मिलितं भवति तेषां भाग्यं किं वक्तव्यमित्याह—तद्दर्शनेनेति । तादृशं दर्शनं स्पर्शनम् अनुपथं सहचलनं प्रकृष्टजल्पाः इष्टकथाः शय्या शयनम् अशनं भोजनम् आसनमुपवेशनं सयौनं स्वीकृतः सम्बन्धः सापिण्डो गोत्रसम्बन्धः एवंविधैर्नवविधैर्बन्धोर्यस्य साक्षात्सम्बन्धो भगवता सहास्तीति सगुणस्तु सम्बन्धोदुर्लभ इति स एवोक्तः किञ्च येषां भागवतानां नरकवर्त्मनि गृहे वर्त्ततां नरक आवश्यकः साधारणगृहमात्रमेव नरकसाधनं सुतरां मर्यादारहितानाम् अस्माकं वो धा स्वयमेव विष्णुः सर्वसन्देहनिवारकः य एव सम्बन्धो नरकहेतुरन्येषां स एव भवतां विष्णुर्जात इति ततोपि किमित्याशङ्कां वारयितुं विष्णोः प्रकृतोपयोगिगुणमाह—स्वर्गापवर्गयोरपि विगतरमणरूपः भगवति दृष्टे न कोपि स्वर्गे मोक्षे वा रमत इति विरामो वा तावदेव स्वर्गापवर्गौ प्राप्नोति यावद्भगवानेवं सम्बन्धो न प्राप्यते एवं तान् स्तुत्वा परमभक्त्याविष्टास्तूष्णीं स्थिताः एवमेकविधानां भगवत्परत्वं निरूपितम् ॥ ३१ ॥

प्रमेयस्थाय द्वितीयानामाह—नन्दस्तत्रेति । स दूरे स्थितः पूर्वभागे ते तु पश्चिमभागे स्थिताः अतः पश्चात् श्रुत्वा सर्वैः सहितः तत्र गतः तत्र कुरुक्षेत्रे यदून् प्राप्तान् कृष्णपुरोगमान् भगवानेव पुरोगमो येषामिति भगवदैश्वर्यं तत्र द्रष्टव्यमिति गोपैरनोभिश्च सर्वसामग्र्या वृतः भगवन्तं द्रष्टुं तत्रागतः ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यदिति पृथक्पदं यस्येत्यर्थः । विश्रुतिः कीर्त्तिः श्रुतिभिर्नुता इदं विश्वम् अलमत्यर्थं पुनाति यस्य पादावनेजनपयः गङ्गा च यस्य वचो वाक्यरूपं शास्त्रं वेदाख्यं च विश्वं पुनाति किञ्च कालेन भर्जितं दग्धं भगं माहात्म्यं यस्याः सा [illegible] यत्पादाग्रपद्मयोः स्पर्शेन उत्तिष्ठति शक्तिर्यस्यास्तथाभूता सती नोऽस्माकमखिलानर्थान् पुरुषार्थान् अभितो वर्षति ॥ ३० ॥

तदित्यपि पृथक्पदं तेन सहेत्यर्थः । दर्शनाद्युपलक्षितः सयौनः सपिण्डो बन्धुसम्बन्धो येषां वोऽस्ति किञ्च येषां वो गृहे विष्णुः स्वयमास आविर्बभूव द्योतते स्मेतिवा निरयवर्त्म पापं तस्मान्निवर्त्ततां निवर्त्तमानानां निष्पापानामित्यर्थः स्वर्गापवर्गस्पृहाया विरमो विरामो यस्मात्सः ॥ ३१ ॥

अनःस्थाः ये भर्त्ताः स्वपुत्रं कृष्णं भोजयितुं तन्निकटे वासं कर्त्तुं च आनीतास्तैश्च वृतः ॥ ३२—३३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

नृणां मध्ये यूयं जन्मभाजः सफलजन्मानः इति फलितोऽर्थः ॥ २९ ॥

यदिति पृथक्पदमतः पदान्तरेणापि सम्बध्यते यस्य श्रीकृष्णस्य श्रुतिभिर्नुता स्तुता विश्रुतिः कीर्तिः यस्य पादावनेजनपयः गङ्गा च यस्य वचो वाक्यरूपं शास्त्रं श्रुतिरितिरूपम् इदं विश्वमलमत्यर्थं पुनाति पवित्रीकरोति किञ्च कालेन भर्जितं दग्धं भगं माहात्म्यं यस्याः सा तथाविधापि भूः यदङ्घ्रिपद्मस्पर्शेन उत्था प्रबुद्धा शक्तिर्यस्याः सा नोऽस्माकमखिलानर्थान् अभिवर्षति ॥ ३० ॥

तदित्यपि पृथक्पदम् तेन श्रीकृष्णेन सह दर्शनाद्युपलक्षितः सयौनः सवैवाहिकः सपिण्डः सदैहिकः बन्धः सम्बन्धः येषां वोस्ति किञ्च स्वर्गापवर्गाभ्यां विरमयति स्व सहजानन्ददानेन सुखयित्वा भोगमोक्षाभ्यां वितृष्णान् करोतीति तथा सः स्वयं विष्णुः श्रीकृष्णः निरयवर्त्मनि "एतेवैनिरयास्तात लोकस्य परमात्मनः" इति वैष्णववचनात् पुनः प्राकृतलोकप्रायके प्रवृत्तिमार्गे मानुषे लोके वा वर्ततां येषां वो गृहे आस आविर्बभूवेत्यर्थः । अतो यूयं जन्मभाजः ॥ ३१ ॥

श्रीकृष्णपुरोगमान् यदुनिकटे श्रीनन्दवाससूचनार्थमनस्स्थैरित्युक्तम् ॥ ३२ ॥

---

तं दृष्ट्वा वृष्णयो हृष्टास्तन्वः प्राणमिवोत्थिताः ।
परिषस्वजिरे गाढं चिरदर्शनकातराः ॥ ३३ ॥
वसुदेवः परिष्वज्य सम्प्रीतः प्रेमविह्वलः ।
स्मरन् कंसकृतान् क्लेशान् पुत्रन्यासञ्च गोकुले ॥ ३४ ॥
कृष्णरामौ परिष्वज्य पितरावभिवाद्य च ।
न किञ्चनोचतुः प्रेम्णा साश्रुकण्ठौ कुरूद्वह ॥ ३५ ॥
(१ तावात्मासनमारोप्य बाहुभ्यां परिरभ्य च ।
यशोदा च महाभागा सुतौ विजहतुः शुचः ॥ ३६ ॥

भाषाटीका ।

हे उग्रसेन ! इस लोकमें मनुष्य लोगनमें जन्मका सफल क[illegible] वारे आपहीहो क्योंकि योगिलोगन काभी दर्शन करने को [illegible]ोग्य नहि होते श्रीकृष्णजीको आप वारं वार दर्शन करते[illegible] ॥ २९ ॥

[illegible]दोंने जिसकी स्तुति करी है वह श्रीकृष्णकी कीर्त्ति इस [illegible]विश्वको पवित्र करती है जिस श्रीकृष्ण के चरणारविन्द[illegible]का प्रक्षालन रूप गंगाजलभी विश्वको पवित्र करता है और [illegible]जिस श्रीकृष्णका वाणी रूप वेद गीता आदि शास्त्र भी वि[illegible]को पवित्र करता है काल कर के जिसका ऐश्वर्य्य दग्ध हो[illegible]या वह भूमिभी जिस श्रीकृष्ण के चरणारविन्द के स्पर्श [illegible]ने से फिरभी उत्पन्न शक्ति वारी होकर हमारे सब वांछित [illegible]र्थोंकी वर्षा करती है ॥ ३० ॥

हे यादवओ[illegible] आपको श्रीकृष्णका दर्शन स्पर्शन पाछे २ चलना संल्लाप [illegible]य्या आसन भोजन इत्यादि सहित विवाह सम्बन्ध तथा गोत्र[illegible] सम्बन्ध भया है और जिन आप के गृह में श्रीकृष्णजी [illegible]वयं प्रकट भये हैं तथा नरक मार्ग के सदृश प्रवृत्ति मार्ग में [illegible]वर्त्तने वारे जिन आपको श्रीकृष्ण संग से स्वर्ग मोक्षकी [illegible]ष्णा निवृत्त होगई है इस कारण से आपका जन्म सफल है ॥ [illegible]१ ॥

श्रीशु[illegible] उवाच ।

कुरुक्षेत्र में श्रीकृष्ण आदि[illegible]यादवनको आए भए जान कर गोपन कर के सहित नन्द[illegible]ी श्रीकृष्ण आदि के दर्शन करनेकी वांछा कर के शकटन [illegible] ऊपर स्थापित वस्तुओं के संहित वहांहि आवते भए ॥ ३[illegible] ॥

---

श्रीधरस्वामिकृतभावार्थ[illegible]दीपिका ।

वसुदेवस्तं परिष्वज्य प्रेमविह्वलो बभू[illegible]ति शेषः ॥ ३४-३५॥ तौ सुतौ परिरभ्य नन्दो यशोदा च [illegible]रहशोकान् विजहतुस्तत्यजतुः यद्वा शुचोऽश्रूणि विजहतुर्मुमुच[illegible]रित्यर्थः ॥ ३६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वृष्णयः श्रीकृष्णावासद्वारसभोपाविष्टाः तन्वः करचरणाद्यङ्गानि मूर्छितानां यथा मुख्यं प्राणमागतं प्राप्योत्तिष्ठन्ति तथोत्थिताः इति सद्यो युगपदुत्थानं वृष्णीनां तदेकालम्बनजीवनत्वं च सूचितम् इति तस्य परमगुणो व्यक्तः अत एव चिरेण यद्दर्शनं तेन कातराः विवशाः यद्वा चिरं दर्शने कातराः अत्युत्सुकाः अत एव गाढं परिषस्वजिरे ॥ ३३ ॥

एवं सामान्येन सर्वेषां समागममुक्त्वा तत्रैव श्रीवसुदेवस्य विशेषणाह—वसुदेव इति । अन्योन्यतो विशेषात् सम्यक् प्रीतो मुदः पश्चाच्च प्रेम्णा विह्वलः कम्पपुलकादिभिराकुलोऽभूदित्यर्थः । किञ्च स्मरन्निति क्लेशान् स्वबन्धनपुत्रवधादीन् पुत्रयोः पुत्रस्य वा न्यासं तद्दर्शनतः पूर्ववृत्तस्मृत्या तत्क्लेशवर्गनिस्तारहेतुतदीयमहोपकारानुसन्धानादित्यर्थः ॥ ३४ ॥

एवं तेन सहागतैः श्रीमदुपनन्दादिभिरपि समागमो ज्ञेयः तावदेव श्रीव्रजेश्वरीमपि तद्दर्शनोत्कण्ठाविस्फुटहृदयां वर्त्मन्यपि कृतोपवासप्रायां कृशातिकृशामश्राविलमुखीं स्वसखीगृहीतबाहुमध्यां पटावृतशाकटीयानेन तं दूरत एवागतां निशम्य सहसैव श्रीमदानकदुन्दुभिना तां च तत्र तदन्तरीणपरिजनैः समं निजान्तरावासं प्रापय्य तत्रैव श्रीकृष्णरामयोराहूतयोः सतोर्यद्वृत्तं तदाह—कृष्णेति । अत्र यद्यपि व्रजादागताः पित्रादयः श्रीवसुदेवादिभिः समुपविष्टाः बहिः कक्षायां मिलिताः मात्रादयस्तु श्रीदेवक्यादिभिरुपविष्टा अन्तःकक्षायामिति महाजनव्यवहाराद्गम्यते तथापि युगपदिव तत्तन्मिलनवर्णनं द्वयोरपि समानप्रेमपरिपाटीबोधनार्थं सङ्क्षेपार्थमेव च कृतं तदेवमेव वक्ष्यमाणं श्रीदेवकीयशोदादीनां मिथः परिष्वङ्गसम्भाषादिकमपि सम्भवतीति विवेक्तव्यं पित्रोः स्नेहभराकृष्टचित्तः कृष्णः तयोः स्नेहरमितो रामश्चेति द्वावपि युगपदेव पितरौ श्रीयशोदानन्दौ परिष्वज्य परिष्वङ्गानन्तरं चिरतः स्वास्थ्ये जात एवाभिवाद्य तच्च दर्शनमात्रादभिसृत्य पितृभ्यामालिङ्गितयोस्ताभ्यां स्वाभ्याञ्च मोचनाशक्तेः ततः कथञ्चित्कृतेऽप्युपवेशे किञ्चन नोचतुः कुशलप्रश्नादिकं चिरं वक्तुं न शक्तौ कुतः साश्रुकण्ठौ बाष्परुद्धकण्ठत्वादित्यर्थः । तत्र हेतुः प्रेम्णेति । पित्रोः स्वविषयकेण स्वयोश्च तद्विषयकेण स्नेहभरेणेत्यर्थः । एवमस्य पूर्व-

---

(१) तावुत्सङ्गं समारोप्य इति वीर० पाठः ।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अपि सर्वत्रान्वयः तेन कम्पपुलकादिविकारादयोऽपि ज्ञेयाः श्रीकृष्णस्यादौ निर्देशः स्नेहभराकृष्टतयाग्रेऽभिगमनात् किं वा सुस्निग्धेन श्रीरामेणैव तस्याग्रे करणात् पितराविति सदा तयोस्तौ प्रत्येव मातापितृत्वबुद्धेः इति प्रेमोद्रेकेण सम्बोधयति कुरूद्वहेति महाकुलप्रभावानां महत्तमानां भवादृशामपीदृशः स्वभावः आचारयुक्त एवेति भावः ॥ ३५ ॥

ततश्च ताविति आसनं श्रीवसुदेवेनातिथ्यरीत्या तत्रापि स्नेहोद्रेकविह्वलत्वेन तेषां पतनशङ्कया सद्योर्पितमारोप्य तत्रोपवेश्य यशोदेति तादृशप्रेमवर्णनेनाप्यमपि यशःसौभाग्यदानतो योग्यतमाम्नी सेत्यर्थः अतो महाभागा परमधन्या चकारात् श्रीनन्दश्च महाभागस्तत्रोपवेश्य अत्र श्रीयशोदाया एव साक्षादुक्तिस्तत्रापि तस्या वात्सल्यातिशयव्यञ्जनार्थं ननु प्रौढयोः प्रकटितैश्वर्यविशेषयोस्तयोः कथं ताभ्यां निःशङ्कं स्वयमात्मासनारोपणादि तत्राह सुताविति स्वाभाविकवात्सल्येन सदैव तौ प्रति तयोस्तद्बुद्धेरित्यर्थः । अतः सर्वतो विशेषेण जहतुः ॥ ३६ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तमिति । तं नन्दं प्राणं मुख्यप्राणं प्रति तन्वः शरीराणीव तावद्विनिर्गते पुनरागते सति मुख्यप्राणे यथा शरीराण्युत्तिष्ठन्ते तद्वदित्यर्थः । उत्थिताः सन्तः चिरं दर्शने निमित्ते कातराः लम्पटाः अतो गाढं यथा तथा परिषस्वजिरे आलिङ्गितवन्तः ॥ ३३ ॥

वसुदेव इति । परिष्वज्य नन्दमिति शेषः । प्रणयेन स्नेहातिशयेन विह्वलः परवशः गोकुले पुत्रयोः रामकृष्णयोर्न्यासम् अवस्थापनञ्च स्मरन्नास्ते इत्यध्याहारः ॥ ३४ ॥

कृष्णरामाविति प्रथमान्तं पिता च माता च पितरौ "पितामात्रा" (१-२-७०) इत्येकशेषः तौ यशोदानन्दावभिवाद्यालिङ्ग्य च हे कुरूद्वह ! प्रेम्णा साश्रुः कण्ठो ययोस्तौ किञ्चिदपि नोचतुस्तूष्णीमासतुरित्यर्थः ॥ ३५ ॥

ताविति । यशोदा चेति चशब्दान्नन्दः तौ सुतौ रामकृष्णावात्मनः उत्सङ्गमारोप्य तस्मिन्नुपवेश्येत्यर्थः । बाहुभ्यां परिरभ्य च शुचः पुत्रविश्लेषजशोकान् विजहतुः ॥ ३६ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तस्मिन् यादवानां पूर्वापेक्षया विशेषानुवृत्तिमाह—तद्दृष्टेति । दर्शनमात्रेणैव सर्ववृष्णयो हृष्टाः तेषां मनःप्रीतिर्जाता ततो देहेनापि मनःप्रेरणरहितेनापि उत्थिता इत्याह—तन्वः प्राणमिवोत्थिता इति । यथा प्राणेषु समागतेषु करचरणाद्यवयवाः स्वयमेवोत्थिता भवन्ति अनेनैतावत्कालं यादवा मूर्छिता इव स्थिता इत्युक्तम् अतः परिषस्वजिरे क्रमेण यथालाभं किञ्च चिरदर्शनेन बहुकालजातदर्शनेन कातराश्च जाताः कदाचिदस्मान् त्यक्त्वा गमिष्यतीति ॥ ३३ ॥

एवं साधारणानामुक्त्वा पूर्ववद्वसुदेवस्य विशेषमाह—वसुदेवः परिष्वज्येति । सम्यक् प्रीतः अन्तःप्रेम्णा च बहिर्विह्वलो जातः इति तस्यैतावत्येवावस्था निरूपिता विह्वलतायां हेतूनाह—स्मरन् कंसकृतान् क्लेशान् इति पुत्रमारणादीन् गोकुले कृष्णबलभद्रयोः स्थापनञ्च ॥ ३४ ॥

ततो नन्दस्य साक्षाद्भगवद्दर्शनमाह—कृष्णरामौ परिष्वज्येति । उभौ प्रथमं परिष्वज्य पितरावित्यभिवाद्य आविर्भूतप्रेम्णा साश्रुकण्ठौ भूत्वा न किञ्चनोचतुः तूष्णीं स्थितौ नन्दे कायिकमानसिकावेव व्यापारौ भगवता प्रदर्शितौ न तु वाचनिक इति कुरूद्वहेति विश्वासार्थं सम्बोधनम् ॥ ३५ ॥

ततो नन्दकृत्यमाह—तावात्मासनमिति । "ये यथा मां प्रपद्यन्ते" इति न्यायेन यशोदानन्दौ बालभावेनैव भगवद्भावनां कुरुत इति तयोर्बालत्वेनैवोपस्थितौ अतः सूक्ष्मत्वात् स्वक्रोडे उपवेश्य आत्मैवासनमिति ततो बाहुभ्यां परिरभ्य चकारादाघ्राणादिकमपि कृत्वा शुचः शोकाश्रूणि विजहतुः शोकं त्यक्तवन्तौ ॥ ३६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

परिष्वज्येति । प्रथममतिदौत्स्येन पितृकर्तृकपरिष्वङ्ग एव पुत्रकर्तृकपरिष्वङ्गहेतुर्बभूवेति भावः । ततश्च पितृभ्यां चिरं परिष्वङ्गितः परित्यक्तयोरेव पुत्रयोरभिवादनेऽवकाश इत्यतः परिष्वङ्गानन्तरमभिवादनमुक्तं नोचतुरित्यत्र हेतुः साश्रुकण्ठौ अश्रुगद्गदकण्ठत्वादित्यर्थः ॥ ३४—३५ ॥

ततश्च श्रीवसुदेवेनैव स्वान्तःपटगृहं प्रवेशितौ सपरिजनौ गृहीतकृष्णरामहस्तौ गत्वा तत्र किं चक्रतुरित्यपेक्षायामाह ताविति । प्रथमं नन्दस्ततोऽत्युत्कण्ठास्फुटहृदया यशोदेति क्रमः ननु, प्रौढयोः प्रकटितैश्वर्यविशेषयोस्तयोः कथं ताभ्यां स्वात्मासनारोपणादिकं सम्भवेदत आह—सुतौ स्वाभाविकवात्सल्यवतोस्तयोर्दृष्टश्रुततदैश्वर्ययोरपि तत्र सदैकरूपैव आर्षिकस्वसुतबुद्धिरेवेति भावः । शुचः विरहशोकान् अत्र कृष्णो यदा नन्दयशोदाभ्यां परिष्वक्तस्तदूरुपीठकृतासनो बभूव तदैव पूर्णतमो गोपजातिरेवाभूत्तेनैव सहोपविष्टाद्रौपदीणामालिङ्गनादिकं वक्ष्यते ॥ ३६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तन्वः शरीराणि अङ्गानीत्यर्थः । प्राणं पञ्चवृत्तिम् ॥ ३३ ॥

वसुदेवः कंसकृतान् क्लेशान् पुत्रन्यासञ्च स्मरन् प्रेमविह्वलः सन् सम्परिष्वज्य प्रीतो बभूवेति ॥ ३४-३५ ॥

तौ सुतौ परिरभ्य नन्दः यशोदा च शुचः अश्रूणि विजहतुर्मुमुचतुः ॥ ३६ ॥

---

### भाषा टीका ।

नन्दजीको देख कर वृष्णीजन हर्षित होकर उठे बहु काल के अनन्तर दर्शन होने से व्याकुल होत परस्पर में

रोहिणी देवकी चाथ परिष्वज्य व्रजेश्वरीम् ।
स्मरन्त्यौ तत्कृतां मैत्रीं बाष्पकण्ठ्यौ समूचतुः ॥ ३७ ॥
का विस्मरेत वां मैत्रीमनिवृत्तां व्रजेश्वरि ।
अवाप्याप्यैन्द्रमैश्वर्यं यस्या नेह प्रतिक्रिया ॥ ३८ ॥
एतावदृष्टपितरौ युवयोः स्म पित्रोः सम्प्रीणनाभ्युदयपोषणपालनानि ।
प्राप्योषतुर्भवति पक्ष्म ह यद्वदक्ष्णोर्न्यस्तावकुत्रचभयौ न सतां परः स्वः ॥३९॥

श्रीशुक उवाच ।

गोप्यश्च कृष्णमुपलभ्य चिरादभीष्टं यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शपन्ति ।
दृग्भिर्हृदीकृतमलं परिरभ्य सर्वास्तद्भावमापुरपि नित्ययुजां दुरापम् ॥ ४० ॥

भाषाटीका ।

गाय जैसे मिल जावे तैसेहि आलिंगन करते भए जैसे मूर्छा होने से कर चरणादिक मूर्च्छित होजाते हैं पश्चात् प्राणको आया देख कर कर चरणादिक चेष्टा धारे होजाते हैं तैसेहि नन्दजी को देख कर यादव लोग प्रसन्न होगए ॥ ३३ ॥

दर्शन किए कृशनको और गोकुल में नन्दजी के पास कृष्ण बलदेवजी के रखनेको स्मरण करत वसुदेवजी नन्दजीका आलिंगन कर के प्रति प्रसन्न होत प्रेम से व्याकुल होजाते भए ॥ ३४ ॥

हे कुरुश्रेष्ठ ! श्रीकृष्ण बलदेवजी दोनो नन्द यशोदा माता पिताको प्रणाम कर के पश्चात् आलिंगन कर के प्रेम से कण्ठ में अश्रुपात बहावत कुछभी नहि बोले ॥ ३५ ॥

महाभाग्यवती यशोदा और नन्दजी दोनो श्रीकृष्ण बलदेवजी दोनो पुत्रनको अपनी गोदीमे बैठाय कर दोनो भुजानसें आलिंगन कर के विरह से उत्पन्न शोकनको त्याग कर देते भए अथवा नेत्रों से अश्रुपात छोडते भए ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

व्रजेश्वरीं यशोदाम् ॥ ३७ ॥

अनिवृत्तां निवृत्तिकारणे सत्यप्यनुवर्तमानाम् ऐन्द्रमैश्वर्यं प्राप्यापि यस्याः प्रतिक्रिया कर्तुं न शक्यत इत्यर्थः ॥ ३८ ॥

तत्कृतां मैत्रीमाहतुः—एतावितिं न दृष्टौ पितरौ याभ्यां तौ वस्तुतस्त्वजन्मत्वादेवादृष्टपितरौ हि भवति ! युवयोः पित्रोर्न्यस्तावेतौ सम्प्रीणनादीनि प्राप्याकुत्र च भयौ क्वचिदपि भयरहितौ भूत्वोषतुर्वासं चक्रतुः कम्भूतयोः अक्ष्णोर्नेत्रयोः रक्षकं पक्ष्म यद्वत्तथा रक्षकयोः युक्तं युवयोरेतत् सतां परः स्वः इति नास्ति वैषम्यम् ॥ ३९ ॥

अभीष्टत्वे लिङ्गं यदस्य श्रीकृष्णस्य प्रेक्षणे दृशिषु नेत्रेषु व्यवधायकं पक्ष्मकृतं विधातारं शपन्ति दृग्भिर्नेत्रद्वारैर्हृदि कृतं हृदये प्रवेशितं परिरभ्य तद्भावं तदात्मतां प्रापुः अपि नित्ययुजामारूढयोगिनामपि ॥ ४०—४१ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ श्रीकृष्णरामसमागमाद्यनन्तरं किञ्चित्स्वास्थ्ये जाते नानाव्रजवासिलक्षमिलनार्थं श्रीनन्दवसुदेवाभ्यां सह तयोर्बहिर्निर्गतयोश्च सतोरित्यर्थः । देवक्या अपि पूर्वं रोहिण्या निर्देशस्तस्याः पुत्रमिलनानन्दवैक्लव्येनेतः किञ्चिद्विलम्बात् अस्याः श्रीमति व्रजे चिरं सहवासात्स्नेहविशेषाच्च व्रजेश्वरीमिति श्रीबादरायणेर्भावविशेषेण ते अप्यतिक्रम्य तां प्रति महागौरवात् मैत्रीं हिताचरणम् ॥ ३७ ॥

तत्र श्रीरोहिण्याह— केति । स्वोद्देशेन वां युवयोः दम्पत्योः विस्मरेत सदा नानुचिन्तयेदित्यर्थः । कुतः अनिवृत्ताम् अस्माभिर्निकटादागमनेन परित्यक्तयोरपि सदानुवर्तमानां विदूरेऽपि सदा स्वयमुपहृतदिव्यघृतक्षीरसारादिद्रव्याणां तथा अस्माकं कुशलवार्ताया हरणार्थं निजजनानाञ्च मुहुः प्रेषणात् अधुना यात्रामिषेण वयमागमनाच्च एवं प्रेम व्यज्य आदरं व्यञ्जयति व्रजेश्वरीति । ऐन्द्रैश्वर्यात् द्वारकैश्वर्यस्याधिक्येऽप्यपि प्राप्यं-स्यायुक्तिरैन्द्रैश्वर्येण महामहोदयेन विस्मृत्याधिक्यात् भवेद्व्यन्यदीयाया मैत्र्याः प्रत्युपकृतायाः सत्याः विस्मृतिर्नतु भवदीयायाः तादृशप्रत्युपकारासम्भवात इत्याह—यस्या इति ॥३८॥

अथ श्रीदेवक्याह—एताविति । न दृष्टावपि किम्पुनर्लालनादिप्राप्त्यानुभूतौ पितरौ याभ्यान्तौ जातमात्रावित्यर्थः । अतः पित्रोः साक्षात् पितृत्वं प्राप्तयोः स्म प्रसिद्धौ स्वेति क्वचित् तत्र कारणमाह—सम्प्रीणनेत्यादिना । सम्यक् प्रीणनं प्रियद्रव्यप्रदानादिना तोषणम् अभ्युदयं जातकर्मादिविवृद्धिं वा पोषणं स्तन्यादिना लालनञ्च विश्रमणादि पालनानीति पाठेऽपि स एवार्थः तानि प्रकर्षेण सर्वोत्कृष्टतया प्राप्य लब्ध्वा ननु भवतु स्वपुत्रत्वेनावगते श्रीकृष्णे तत्तत् श्रीरामे वा कथं तत्राह—न सतामिति । अन्यैः एषचार्थः श्रीदेवक्या यद्यपीत्थमेवाभिप्रेत्य । प्रयुक्तः यथा सुप्रसिद्धमेव जाते श्रीकृष्णे

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अस्मत्पुत्रत्वं ततोऽन्यथापि ज्ञायतैवेत्यतस्तदनुरूपमेव सान्त्वनं युक्तमिति। तथापि श्रीव्रजेश्वर्य्योस्तदृढनरसंस्काररसत्वेनान्यथाप्रतीत्यभावात् तथा "ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम्" इत्यैकान्तिकश्रीकृष्णमन्त्रानुस्मरणाद्यमेवार्थः स्फुरति स्म तथाहि एतौ युवयोः पित्रोर्युवाभ्यां पितृभ्यामेव न्यस्तौ अस्मात्सर्पितौ यौ यथा स्वं सम्प्रीणनः सर्वप्राणिसुखकरो योऽस्युवयो जन्म येच पोषणलालने तानि अक्ष्णोः पक्ष्म यद्वज्जन्मस्थानं रक्षकं च तद्वद्यथा स्यात्तथा युवयोरेव प्राप्यापि अदृष्टपितरौ पित्रोर्युवयोरकृतहृष्टी एव सन्तौ ऊषतुरस्मासु वासं स्वीकृतवन्तौ यदप्यत्रतादृग्वाच्यं नास्ति यथापीति भावः। तर्हि कथं तत्राह न सतामिति परः आत्मनो भिन्नोऽयं स्वः आत्मा वा तथा परः पित्रादिभ्यो भिन्नः स्वः पित्रादिरूपोवेति सतां नास्तीत्यर्थः। अत्र श्रीरामस्यापि तद्गृहे जातत्वात्तयोरेव जन्मोक्तमिति प्रतीतम्॥ ३९॥

अत्रोभयथापि श्रीव्रजेश्वर्य्योः प्रत्युत्तरं न युक्तमिति। किम्वा तदानीन्तया चिरात्पुत्रदर्शनपरमाविष्टया किञ्चिदपि न श्रुतमिति न किञ्चिदप्युक्तमित्येवं तदनुक्त्वा श्रीऋषिः श्रीयुक्त ऋषिः सर्वज्ञ उवाचेति श्रीगोपीनां श्रीकृष्णस्य च मिथो भावतत्त्वादिकं सम्यग्वेत्तीति तदुक्तो दृढविश्वास एव कार्य्य इति भावः। एवमग्रेपि ज्ञेयं ततश्चातिविरहतापक्षीणतमानां प्रतिक्षणमाश्वासनसन्तर्पणाभ्यां सन्धुक्षितप्राणानां चिरादागतानां नूनं श्रीभगवतैवोद्धवद्वारा निजान्तर्वासं नीतानां श्रीगोपीनां समागममाह—गोप्यश्चेति। न केवलं तेन्ये गोप्यश्चेति स्वानन्दपूर्त्तिव्यञ्जनं त्वर्थे वा चशब्दः सर्वतो विशेषात् चिरात् अभित इष्टं सर्वतो भावेन द्रष्टुं वाञ्छितम् उप समीपे लब्ध्वा यद्वा अभीष्टं निज प्राणकोटितोप्यधिकं प्रियं चिरादुपलभ्य तासां सर्वतोपि प्रेमाधिक्यं दर्शयति, यदिति. यस्य प्रकर्षेण नैरन्तर्य्यादिना ईक्षणे निमित्ते दृशिष्विति बहुत्वं तासां बाहुल्यात् तत्रासाकमेकस्या अप्येकस्यां दृशौ कथं पक्ष्म न दूरीकृतमित्यभिप्रायेण यद्वा अतिप्रेमतृष्णास्वभावेन तत्प्रेक्षकाणां सर्वेषामेवापेक्षया दृष्टिमात्रे कथं पक्ष्माणि कृतानीति दृदी कृतमिति दीर्घदृढाम्ब्रसः अलमत्यर्थं परिरभ्य अन्तः परिरम्भण स्वातन्त्र्यात् सैवा इति वर्गशो बहुधा भिन्ना अपि अविशेषेणेत्यर्थः। चिरविरहार्त्तिभरेण सर्वासामैक्यापादनात् तद्भावं तन्मयताम् आत्मादिविस्मृत्या तदेकपरिस्फूर्त्तेः अन्यत्तैः यद्वा हृदि कृतं सदा चित्ते धृतमेवाधुना दृग्भिः तं परिरभ्य परमासक्त्या सर्वतो निरीक्ष्य तद्भावं तं भावं प्रेम्णः परमं काष्ठाविशेषं प्राप्ताः तेन चिरमानन्दमूर्च्छामवापुरित्यर्थः। नित्ययुजां नित्यसंयोगवतीनां रुक्मिण्यादीनामपि दुरापम् अन्यत् समानम्॥ ४०॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

मैत्रीति पद्य उपलक्ष्यते॥ ३७—३९॥

अक्ष्णोः पक्ष्म यथा रक्षकं तद्वद्युवामित्यर्थः। पक्ष्मकृतं पक्ष्मकर्त्तारं ब्रह्माणं हृदि नित्ययुजां नित्ययुञ्जानानां योगिनाम् ॥ ४०—४२॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

देवकीति। व्रजेश्वरीं यशोदां परिष्वज्य तत्कृतां व्रजेश्वरीकृतां मैत्रीं स्मरन्त्यौ बाष्पमानन्दाश्रु कण्ठे ययोस्ते समूचतुः॥ ३७॥

उक्तिमेवाह—केति। हे व्रजेश्वरि! वां युवयोर्मैत्रीमनिवृत्तां यावद्देहमनुवृत्तामित्यर्थः। का वा स्त्री विस्मरेत न कापीत्यर्थः। अत्र हेतुत्वेन तां विशिनष्टि—ऐन्द्रमैश्वर्यं दत्त्वापि यस्या मैत्र्याः प्रतिक्रिया प्रत्युपकृतिरिह लोके नास्ति॥ ३८॥

मैत्रीं प्रपञ्चयतः—एताविति। न दृष्टौ पितरौ याभ्यां हेभवति युवयोः पित्रोर्न्यस्तावेतौ सम्प्रीणनादीनि प्राप्य अकुतश्चभयौ क्वचिदपि भयरहितौ भूत्वा ऊषतुः वासं चक्रतुः। कथम्भूतयोः अक्ष्णोर्नेत्रयोः पक्ष्मकं पक्ष्म यद्वत्तथा रक्षकयोः युवयोरितिसम्बन्धः। रक्षकयोरित्यस्याध्याहारः सुप्रीणनमपेक्षितप्रदानेन तर्पणम् अभ्युदयो महोत्सवः युक्तञ्चैतदित्यूचतुः न सतां परोऽस्तीति परः स्व इति पाठे परः स्वकः इति च न वैषम्यमस्तीत्यर्थः॥ ३९॥

गोप्यश्चेति। अभीष्टं प्रियतमं कृष्णम् उपलभ्य दृष्ट्वा यस्य कृष्णस्य प्रेक्षणे प्रवृत्तासु दृशिषु स्वनेत्रेषु व्यवधायकपक्ष्मकृतं विधातारं शपन्त्यः दृग्भिर्नेत्रद्वारैर्हृदि कृतं हृदये प्रवेशितमाश्लिष्य नित्ययुजां नित्यं मनोयुञ्जानानां योगिनामपि दुरापं दुर्लभं तद्भावं कार्त्स्न्येन तद्विग्रहावगाहनात्मकमभिप्रायं प्रापुः॥ ४०॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

नित्ययुजां नित्यसंयुक्तताद्यभिमानिनीनां पट्टमहिषीणामपि॥ ४०॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

गोप्यश्चेत्यादि। गोप्यः कृष्णम् उपलभ्य. तद्भावम् आपुः तं प्रसिद्धं भावं तद्भावं कीदृशम्? नित्ययुजां रुक्मिणीप्रमुखानामपि दुरापं दुर्लभं पुनः कीदृशम्? अभीष्टं वाञ्छितं चिरात् चिरकालेन किं कृत्वा दृग्भिर्हृदि कृत्वा परिरभ्य॥ ४०॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं पुरुषाणामन्योन्यसम्बन्धमुक्त्वा स्त्रीणामाह—रोहिणीति। अथ पूर्वाभ्यो भिन्नप्रक्रमेण चकारात् तत्सम्बन्धिन्योपि नृपसमा कथं परिष्वक्ते इत्याशङ्क्याह—व्रजेश्वरीमिति। व्रजस्य सर्वेगोधनस्य प्रभ्वी अतो देवताकृपत्वात्समेत्यर्थः। ततस्तत्कृतां मैत्रीं स्मरन्त्यौ बाष्पकण्ठ्यौ भूत्वा समूचतुः अनयोः कायिकादित्रयं व्यापार उक्तः॥ ३७॥

तयोर्वाक्यं श्लोकद्वयेनाह—को विस्मरेतेति। वां युवयोर्न्दयशोदयोरनिवृत्तां निवृत्तिरहितां प्रत्युपकाररहितामितियावत् व्रजे-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

अस्तीति माहात्म्यार्थं सम्बोधनं नन्दोपि निकट एव तिष्ठति क्षत्रियाणामेव दूरे व्यवहारः कदाचित्प्रत्युपकारसमर्था अपि यादवाः प्रत्युपकारं न कृतवन्त इति यशोदाया हृदयं कृतघ्नता भासेत तन्निवृत्त्यर्थमूचतुः, अवाप्याप्यैन्द्रमैश्वर्यमिति. ऐन्द्रमप्यैश्वर्यं प्राप्य को वा विस्मरेतेति यशोदानन्दाभ्यां यावानर्थो दत्तः सः स्वर्गादौ नास्त्येव स एव विस्मारको भवेत् यो महान् भवेत् अथ प्रत्युपकारः कर्तव्य इति तस्मिन्नपि पक्षे ऐन्द्रेपि पदे दत्ते न प्रत्युपकार इति इन्द्रपदकीर्तनं यस्याः मैत्र्याः इह जगति प्रतिक्रियैव नास्ति अनेन सर्वयादवाः भवद्भ्यां मैत्र्या क्रीता इति निरुक्तं भवति ॥ ३८ ॥

तां मैत्रीं स्मारयति-एतावदृष्टपितराविति। बाल्ये दर्शनदर्शनस्पर्शनदृष्टपितृत्वं युवयोरेव पित्रोः पितृभ्यां सम्प्रीणनादिकं प्राप्य युवयोरेवोषतुः सम्यक् प्रीणनमलौकिकदानहिताचरणादिभिः अभ्युदयः शान्तिकादिभिः पोषणं नवनीतादिभिः लालनं स्तुतिचुम्बनादिभिः एतच्चतुष्टयं प्राप्य अक्ष्णोः पक्ष्म तथा त्वमिति भवति इति सम्बोधनं हे भवति ! त्वमनयोरक्ष्णोः पक्ष्मेव रक्षकेति यशोदायाः अधिका स्तुतिः अत एव युवयोर्न्यस्तावेताव कुत्रचभयौ अत एव पूतनादीनां भयं निवृत्तमिति भावः नन्वेवं रक्षा स्वकीयस्यैव क्रियत इति कृष्णोऽस्माकमेव अस्माभिश्च रक्षितव्य इति शङ्कायामूचतुः न सतां परः स्व इति परस्वीयसद्बुद्धिः सतां कदापि न भवति ॥ ३९ ॥

एवं द्वितीयानामुक्त्वा तृतीयानामाह-गोप्यश्चेति। गोपीनां कृष्ण एव सम्भोग्यः नतु देवक्याद्या तादृश्यः कृष्णमुपलभ्य सम्यक् दृष्ट्वा दृशि स्थितं भगवन्तं दृग्भिरेव हृदीकृत्य अन्तः करणे समागतमात्मैव देहेन्द्रियव्यवधानराहित्येनालमत्यर्थं परिरभ्य सर्वा एव तद्भावं कृष्णभावं प्राप्ताः अन्तर्गते भगवति आलिङ्गनार्थं प्रवृत्ताः स्वजीवात्मानं तत्र संयोज्य भगवता सह ऐक्यं प्राप्ताः लिङ्गशरीरमपि तिष्ठतीति जीवधर्मापेक्षया भगवद्धर्मा बलिष्ठा इति जीवभावं परित्यज्य भगवद्भावं प्राप्ता इत्यर्थः। चिरादभीष्टमिति सर्वभावेन प्राणेभ्यो तत्समीपगमने हेतुरुक्तः अभीष्टतायाः परमसीमामाह—यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शपन्तीति। "जड उदीक्षतां पक्ष्मकृत् दृशाम" इति अक्षिरक्षार्थं पक्ष्मकरणं। भगवद्दर्शनदशायाम् अक्ष्युपघातकशङ्काभावत् पक्ष्म व्यर्थं प्रत्युत व्यवधानं करोतीति बाधकमेतत् ब्रह्मा भगवद्दर्शनयुक्तानां पक्ष्म कुर्वन् दर्शनरसानभिज्ञो जड एवेति वदन्त्यः भगवत्प्रेक्षणे दृशिषु यः पक्ष्मकर्ता तं शपन्ति एवं दर्शनरसाभिज्ञाः ततो दृग्भिर्हृदीकृतं भगवन्तं बहिः शङ्कया आलिङ्गनबाधात् अन्तरेव परिरभ्य तद्रूपा जाताः अयं भावस्तासां कामेन जातः तत्राप्यनायासेन साधनसहस्रस्यापि एतदशक्यमित्याह नित्ययुजामपि दुरापमिति। निरन्तरयोगरतानामप्यप्राप्यम् असूयादिसर्वदोषपरिहारार्थं भगवान् उपायान्तरमलभमानः स्वभावं दत्तवान् नतु तासां स्वभावे काचित् प्रतीतिरस्ति अत एव श्रूयते—

"गौमतिमुतिमति किमिदं हरिहरिहरिणा कोऽपि सङ्गः।
जातं पीतं वसनं मेचकमङ्गं गतोङ्गनाभावम्"।



इति अतः पूर्वविस्मरणार्थं भगवानेवं कृतवानिति तृतीयकक्षास्थानामप्युत्कर्ष उक्तः ॥ ४० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

ततश्च श्रीवसुदेवाहूते नन्दे बहिरुग्रसेनादिमिलनार्थं निर्गते सति रोहिणीदेवक्योर्व्रजेश्वरीसम्मिलनमाह-रोहिणीति। उपविष्टाभ्यामेव रोहिणीदेवकीभ्यां सात्मजायाः व्रजेश्वर्याः परिरम्भः ॥ ३७ ॥

पुनरपि रामकृष्णावुत्सङ्गगतौ परिष्वज्यैवोपविष्टायामश्रुस्तन्यपयःप्रवर्तिनयमुनागङ्गायामानन्दस्तम्भमोहमहावर्तविभ्रान्तचित्तायां व्रजेश्वर्यामग्रतः उपविष्टयोस्तयोर्मध्ये प्रथमं रोहिण्याह—केति। ऐन्द्रमैश्वर्यमपि प्राप्य किम्पुनर्द्वारकैश्वर्यमिति नरलोकरीत्यैवोक्तिः ॥ ३८ ॥

हन्तहन्तास्मत्पुत्राविमौ चिरात् स्वमातरमिव प्राप्य परमानन्दवारिधौ स्नातौ पुरोवर्तिन्यावप्यावामेवेक्षेते इयमपि चिरात् प्राप्तस्वपुत्रेव प्रेमान्धा मत्तापि कोटिगुणितमातृभाववती स्नेहसमुद्रनिमज्जिता मच्छ्यामगात्रां चिरात् प्रेक्ष्यापि न परिचिनोति तदहं स्निग्धसम्भाषणभङ्ग्यैव रहस्यतत्त्वमिमां ज्ञापयामीति मनसि विमृश्य श्रीदेवकी किञ्चिदुच्चैराह एताविति। न दृष्टौ पितरौ याभ्यां तौ युवयोः पित्रोः सम्प्रीणनादीनि प्राप्य हे भवति ! युवयोर्न्यस्तौ न्यासरीत्या स्थापितौ अकुत्रच भयौ न कुतोपि बिभ्यतौ भूत्वा ऊषतुर्युवयोर्गृहे वासं चक्रतुः कथम्भूतयोः अक्ष्णोर्नेत्रयोः रक्षकं पक्ष्म यद्वत् तथा रक्षकयोः युक्तञ्च युवयोरेतत् यतः सतां परः स इति नास्ति वैषम्यं ततश्च चिरादपि प्रतिसम्भाषणमप्राप्य हे सखि देवकि ! सम्प्रत्यस्या आनन्दनिद्रा नोपशाम्यति तदलमरण्यरुदितेन पुत्रावप्यस्याः प्रेमपाशबद्धौ वर्तेते तदागान्ताघव्रहिरत्युत्कण्ठितानां पृथाद्रौपद्यादिबन्धुजनतानां सम्मिलनार्थं प्रयावः नावयोरत्र लोकयात्रा महासम्मर्दः खलैकत्रैवावस्थितावकाशो योग्य इति श्रीरोहिण्युक्त्या देवकी तयासह निष्क्रान्तेति ज्ञेयम् ॥ ३९ ॥

ततश्चाराद्देव तत्रैव किञ्चिद्व्यवहितस्थले महोत्कण्ठास्फुटद्धृदयाः कृष्णसम्मिलनमप्राप्य प्राणान् जहतीरिव गोपीर्वीक्ष्य विदग्धचूडामणौ श्रीबलदेवेप्युत्थाय ततो निष्क्रान्ते तासामसाधारणदशाप्राप्तिमाह-गोप्यश्चेति। अत्र श्रीशुकदेवस्य ऋषिशब्देन निर्देशस्तद्वाक्य एव परमतत्त्वप्रकाशके दृढविश्वासं जनयितुं गोप्यश्चेति त्वर्थे चकारः नाम्नां सर्वतो विशेषात् ननु का गोप्य इत्यतस्तासामसाधारणं लक्षणमाह—यस्य श्रीकृष्णस्य प्रेक्षणे दृशिषु नेत्रेषु व्यवधायकपक्ष्मकृतं विधातारं शपन्ति यास्ता इति तेन दर्शने तावन्मात्रसमयविरहेपि यासां तथा असहिष्णुता यथा देवमात्रपरमसम्मानकर्तृणामपि स्त्रीणां तासां सर्वदेवमुख्ये विधातर्यपि अभिशापो भवत्ताभ्यो गोपीभ्यः एतावान् विरहः कृष्णेन दत्तः इति तस्मिन्नीर्ष्या ध्वनिना दृग्भिरवलोकनैराकृष्य दृग्भिरेव द्वारैर्हृदीकृतं हृदयप्रविष्टीकृतं परिरभ्य तस्य भावं महाभागं कृष्णोऽहं पश्यत गतिमितिवद्रसतादात्म्यं वा आपुः नित्ययुजामात्मा-

भगवांस्तास्तथाभूता विविक्त उपसङ्गतः ।
आश्लिष्यानामयं पृष्ट्वा प्रहसन्निदमब्रवीत् ॥ ४१ ॥
अपि स्मरथ नः सख्यः स्वानामर्थचिकीर्षया ।
गतांश्चिरायिताञ्शत्रुपक्षक्षपणचेतसः ॥ ४२ ॥
अप्यवध्यायथास्मान् स्विदकृतज्ञाविशङ्कया ।
नूनं भूतानि भगवान् युनक्ति वियुनक्ति च ॥ ४३ ॥
वायुर्यथा घनानीकं तृणं तूलं रजांसि च ।
संयोज्याक्षिपते भूयस्तथा भूतानि भूतकृत् ॥ ४४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

रामशिखामणीनां महायोगेश्वरश्रीरुद्रादीनामपि दुर्लभमापुस्ता अपि गोपीरध्यात्म्यं शिक्षयिष्यत्यधुनैव कृष्ण इति तस्मिन् पुनरपीर्ष्या ध्वनिता किं वा नित्यसंयोगिनीनां श्रीरुक्मिण्यादीनामपि दुर्लभम् ॥ ४० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

व्रजेश्वरीं श्रीयशोदाम् ॥ ३७ ॥

वां युवयोः अनिवृत्ताम् अबलाम् प्रतिक्रिया प्रत्युपकृतिः ॥ ३८ ॥

मैत्रीमेव सङ्केतः आहतुः—हे भवति । एतौ रामकृष्णौ न दृष्टौ पितरौ देहोत्पादकौ ययोः नित्यशरीरित्वात् अजावित्यर्थः हिशब्दस्यायमर्थः हि यतः भक्तमनोरथपूर्त्यर्थं पुत्ररूपेण प्रथममस्माभिः सङ्कल्पौ ततः पुत्रीभूते जनार्दने भक्तिं कर्तुमवतीर्णयोः युवयोः पित्रोः न्यस्तौ ततः सम्प्रीणनं चुम्बनादिना अभ्युदयं महोत्सवं नामकरणजन्मर्क्षक्रियादिना पोषणं दुग्धादिना पालनं भ्रूक्ष्यादिभ्यः प्राप्य अकुतश्च भयौ काचिदपि भयरहितौ भूत्वा ऊषतुः वासं चक्रतुः कथम्भूतयोर्युवयोः अक्ष्णोर्नेत्रयोः रक्षकं पक्ष्म यद्वत्तथा रक्षकयोः ननु शरीरतस्तु युष्माकमावयोः पुत्रौ न भवतः प्रथमसङ्कल्पात् युष्माकं पुत्रौ मुख्यौ इत्यत्राहतुः न सतां परः स्व इति सर्वेषामस्माकं पुत्रौ इति फलितार्थः ॥ ३९ ॥

यस्य श्रीकृष्णस्य प्रेक्षणे दृशिषु नेत्रेषु व्यवधायकपक्ष्मकृतं पक्ष्मस्रष्टारं शपन्ति तमभीष्टं पतिं प्रियं कृष्णमुपलभ्य प्राप्य दृष्ट्वेत्यर्थः । दृग्भिर्नेत्रद्वारैः हृदि कृतं हृत्प्रविष्टीकृतं परिरभ्य नित्ययुजामारूढयोगिनामपि दुरापं यद्भावं तस्मिन् विशेकान्यलक्षणां भक्तिमापुरित्यर्थः ॥ ४०—४२ ॥

भाषा टीका ।

अनन्तर रोहिणी और देवकी ये दोनो यशोदाकामिलकर यशोदा के किए भए पुत्र पालनादि मित्र भाव को स्मरण करती कण्ठ में आनन्द जनित सुनसे रुके भये कण्ठ से यशोदा के प्रति बोलीं ॥ ३७ ॥

हे व्रजेश्वरि ! इन्द्र के ऐश्वर्य्य को प्राप्त होकर भी इस लोक में मित्रताका के बदले में प्रत्युपकार नहि होसकता इस प्रकार प्रत्युपकार से निवृत्ति रहित जो आप दोनोंन की मित्रता है उसको कौन स्त्री भूल सकती है ॥ ३८ ॥

हे भवति ! जन्म से हि जिनोने माता पिता का दर्शन नहि किया ए दोनो रामकृष्ण नेत्रों के रक्षा करने वारे पलकन के समान आप दोनो के पास में रखदिए गए रहे इस कारण जिस वस्तु की इनको चाहना भई उसको देकर तृप्त करना जन्म दिवस में गोदानादि महोत्सव होना दूध दही माखन आदि से पोषण होना चूमा आदि से लाड प्यार होना इत्यादि को आप से प्राप्त होकर तथा निर्भय होकर इनोंने आपके पास निवास हि किया ऐसा होना आपको युक्तहि है क्योंकि सज्जनो को यह परायो है यह मेरी है ऐसा भेद भाव नहि होता ॥ ३९ ॥

श्रीशुक उवाच ।

व्रज में रहने समय श्रीकृष्ण के दर्शन करने में प्रवृत्त नेत्रों में पलक करने वारे विधाता को गाली देती रहिं गोपी कि श्रीकृष्ण के निरन्तर दर्शन में विरोध कारी पलकन को विधाता ने क्यों बनाया वे सब हे गोपीजन अतिप्रिय श्रीकृष्ण को बहुकाल के अनन्तर प्राप्त होकर प्रथम नेत्रों द्वारा श्रीकृष्ण को हृदय में प्रवेशित किया पश्चात् श्रीकृष्ण का अच्छी तरह से आलिंगन करके समाधि करने वारे योगियों को भी दुर्लभ भगवान् के तदाकार भाव को गोपियां प्राप्त होगईं ॥ ४० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

चिरायितान् विलम्बितान् अत्र हेतुः शत्रूणां पक्षस्य क्षपणे चेतो येषां तान् ॥ ४२ ॥

अपिस्वित् अस्मानवध्या यथावजानीथ अकृतज्ञा एत

श्रीधरस्वामिकृतभावार्थदीपिका ।

इत्यविशङ्कया ईषच्छङ्कया न शङ्कामात्रं निश्चितमेवैतत्परित्यज्य गतस्वाविस्यत •आह—नूनमिति ॥ ४३ ॥

एतत् सदृष्टान्तमाह-वायुरिति । आक्षिपते पृथक्करोती-त्यर्थः •॥ ४४ ॥ •

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततश्च सान्त्वनाय वासविशेषं नीतानां तासां श्रीभगवता स्वयमेव यत्सान्त्वनं तदाह-भगवान् सर्वज्ञः तथाभूताः स्वविरहेणात्यन्तदुरवस्थां प्राप्ताः विविक्ते नक्तं निर्जनतां गते प्रदेशविशेषे उप सामीप्ये सङ्गतस्सन् आश्लिष्य प्रेमवैयग्र्येण मूर्च्छामकार्थं प्रत्येकं वैभवविशेषेण युगपदालिङ्ग्य ततश्च मुहुरुदतीर्मूर्च्छन्तीः सान्त्वयित्वाऽचिरेण स्वस्थायमानाश्च दृष्ट्वेति ज्ञेयम् अनामयं पृष्ट्वेति पूर्वं मयोद्धवद्वारा विरहस्य हरणोपायः समुपदिष्ट एव तत एतत्कार्श्यादिहेतुः स न भवतीति व्यञ्जना निजापराधसङ्गोपनाय साधारणामयराहित्यमेव पृष्ट्वा ततश्च मृदुसंलापादिपरिपाटीभिः क्षणकतिपये गमिते सति प्रहसन् प्रेति प्रारम्भे तासां शोकादिबाधवार्थं स्मयमानः इदमत्यद्भुतम् ॥ ४१ ॥

अपि किं न इति बहुवचनं बहुसङ्केतेन स्वस्यैव बहुत्वमङ्गीकृत्य केवलस्वेच्छया झटित्यागमनं न समभवदिति सूचितं हे सख्य इति ताभिरात्मनः स्मरणयोग्यतां बोधयति आश्वासयति स्वापराधं क्षमापयति च किन्तु महापराधेन स्मरणयोग्या न खलु भवाम इत्याह—स्वानामिति । भवतीरनादृत्य स्वानां श्रीव्रजेश्वरभ्रातृत्वेन श्रीवसुदेवादिलक्षणज्ञातीनां महाशत्रुकंसवधरूपेप्सितार्थस्य कर्त्तुमिच्छया गतानपि किञ्च तत्प्रसङ्गेन चिरायितानपि चिरायितत्वे हेतुः शत्रुपक्षेति तद्वेन-स्त्वेनैव यादवानपि च सहायीकर्त्तुं श्रीवसुदेवपुत्रत्वं विख्याप्य विवाहाभासादिकञ्च कृतवन्तः स्म इति भावः ॥ ४२ ॥

अहो कृतज्ञतादिसद्गुणहीनस्य मम गुणैः स्मरणं न सम्भवेदेव किन्तु दोषेणैव स्मरथेत्याशयेन सकातर्य्यं निजापराधक्षमापनार्थमाह-अपीति । अपिस्विन् वितर्के अकृतज्ञ इति आ सर्वतः विशिष्टा या शङ्का तया किम्वा अविशङ्कया निश्चयेनेत्यर्थः । तत्र च प्रेमवशास्सञ्जाते सम्भ्रमात्निजैश्वर्य्यमननुसन्दधानो लोकवल्लीलाकैवल्यगीतिमनुसरन् तत्राप्युत्तरोत्तरमपश्यंस्तत्वज्ञानरीत्यैव सान्त्वयति—नूनमिति निश्चये भगवानीश्वरः ॥ ४३ ॥

नन्वेवं तस्य नैर्घृण्यवैषम्ये प्रसज्ज्येयातां तत्राह—वायुरिति । भूतकृदीश्वरः वायोर्यथा स्वाभाविकलीलयैव ते चलन्ति नतु•तदर्थावेशेन तथेति भावः ॥ ४४ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयः ।

अवध्यायथ अवध्यानं प्रीत्या चिन्तनम् ॥ ४२-४५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भगवानिति । तथाभूताः आत्मभावमापन्नाः ताः गोपीर्विविक्ते एकान्ते उपसङ्गतः अनामयमारोग्यं पृष्ट्वा इदं वक्ष्यमाणमब्रवीत् ॥ ४१ ॥

तदेवाह—अपीति षड्भिः । हे सख्यः ! नोऽस्मानपि स्मरथ किमित्यर्थः । क्षणसौहृदान् युष्मासु नुस्नगामेत्यत आत्मनो विशिनष्टि—सतां साधूनां स्वानामर्थं प्रयोजनं कर्त्तुमिच्छया चिरायितान् विलम्बितान् तत्र हेतुः शत्रुपक्षक्षपणं येतां येषां तानस्मान् ॥ ४२ ॥

अकृतज्ञविशङ्कयाऽकृतज्ञः कृतज्ञादन्यस्तद्विशङ्कया कृतघ्ना एवैते इति बुद्ध्येत्यर्थः । अवध्यायथापिस्विदवजानीथ किम् इत्यर्थः । अवपूर्वाद्ध्यायतेर्लोण्मध्यमबहुवचनं न शङ्कामात्रं निश्चितमेतत्परित्यज्य गतस्वादित्यत आह—नूनमिति । भूतानीति द्वितीयान्तम् ॥ ४३ ॥

एतत्सदृष्टान्तमाह—वायुरिति । घनानीकं मेघसमुदायं तृणादीनि च वायुर्यथा युनक्ति वियुनक्ति वियोजयति च तद्वत् भूतकृद्भूतस्रष्टा भगवान् कचिद्भूतानि संयोज्य पुनराक्षिपते वियोजयति च ॥ ४४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

प्रहसन् स्वापराधस्य तुच्छताकरणाय कृत्रिमं हसन् ॥ ॥ ४१-४४ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

भगवानित्यादि । भगवान् अचिन्त्यपरमैश्वर्य्यः तास्तु दृग्भिरेव परिरेभिरे अतो युगपत् घटते अयमेकस्तास्तु बह्वीरेकदा यदा श्लिष्येत् तेन भगवच्छब्दोपादानं तत्रापि तदानीं विविक्तस्थलाभावात् भारतप्रजानामेव तत्रसङ्गतेः सर्वेषां द्वारकावासिनाञ्च तथापि तत्रैव विविक्तस्थलमभूत् अनामयं पृष्ट्वा प्रहसन्नित्यर्थः । मद्विरहे कथमासामनामयं तदपि तत्पृच्छामीति स्ववैदग्ध्यात् प्रहासः ॥ ४१ ॥

अपीत्यादि । हे सख्यः ! यद्यपि कठिनत्वात् स्मृतियोग्योऽहं न भवामि तथापि निजसौजन्यात् किं स्मरथ स्मरण योग्यत्वे हेतुमाह—स्वानामित्यादि । स्वानां ज्ञातीनां प्रयोजनचिकीर्षया आगतान् तत्रापि चिरायितान् तत्र हेतुः शत्रुपक्षेत्यादि, अतो ज्ञातिप्रयोजनशत्रुवधादिबहिरङ्गकार्यहेतोर्भवतीनामासङ्गस्त्यक्त — इति प्रेमनिरपेक्षोऽहं स्मर्त्तुमयोग्य एवेति वाक्यार्थः ॥ ४२ ॥

प्रेम्णा स्मरणन्तु दूरादास्ताम् अवज्ञापूर्वकमपि किं स्मरतेत्याह-अप्यवध्यायतेत्यादि । अकृतज्ञया विशङ्कया अकृतज्ञोऽयं इति या आ सम्यक् विशेषणशङ्कात्रासः तथापि किंस्वित् अवध्यायत अवजानीत अवज्ञा च न योग्या नाहमकृतज्ञः दैवयोगेनैवैतदुपपन्नमित्याह-नूनं भूतानीत्यादि ॥ ४३ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तमेवार्थमध्यात्ममुद्रया दृढयति-वायुर्यथेत्यादि ॥ ४४ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो भगवान् तद्भावदार्ढ्यार्थं किञ्चिदुपदेष्टुं तत उत्थाय एकान्ते गत्वा यथोचितं कृतवान् इत्याह—भगवानिति । स्वयमेवान्तर्वर्त्तत इति यदेव करिष्यतीति विविक्ते एकान्ते उपसङ्गताः समीपमागताः गोपीः बहिः स्वयमेवाश्लिष्य बहिर्वर्त्तमानान् स्वकीयांस्तासु बहिः स्थापयित्वा पश्चादनामयं पृष्ट्वा स्ववचनं स्मृत्वा प्रहसन्निदं वक्ष्यमाणमब्रवीत् ॥ ४१ ॥

स्वलीलां तासु स्थापयन्निवाह—अपि स्मरतेति । हे सख्यः ! अपीति सम्भावनायां नोऽस्मान् किं स्मरत अस्मरणन्तु भवतीनामेव दोष इति परिहासोक्तिः स्वस्यापराधं परिहरति स्वानामर्थचिकीर्षया गतानिति किं कर्त्तव्यार्थं गतं मथुरायां तत्र बन्धूनां हितकरणार्थं प्रवृत्तौ भूयान् कालो जातः तेनैवानागमनं चित्तं तु भवतीष्वेवेत्यर्थः । चिरकालस्थितौ हेतुमाह—शत्रुपक्षक्षपणचेतस इति । शत्रूणां पक्षाः सर्व एव नाशनीया इति अन्यथा समूला न नश्यन्तीति स्त्रीभिः सह परिहासभावया एतद्भगवतोक्तं यस्तु मर्मानभिज्ञः स एतदङ्गीकरोति नत्वभिज्ञ इति अभिज्ञा गोपिकाः भगवान् वञ्चयतीति भगवति मवध्यानबुद्धयो भवन्ति ॥ ४२ ॥

अतस्तद्दोषपरिहारार्थं भगवानाह—अप्यवध्यायथ इति । "ध्यै चिन्तायाम्" इत्यस्य अवोपसर्गसहितस्य लोटि तादृशरहितस्य मध्यमपुरुषबहुवचनम् अवध्यायथेति अवध्यानं विरुद्धध्यानम् अपीति सम्भावनायाम अस्मान् बलभद्रोद्धवादिसाहित्येनावध्यान् प्राप्ति सूचयति—अपिस्विदिति । अकृतज्ञा एते इति या विशिष्टशङ्का विरुद्धशङ्का वा स्वाधीनत्वे दोषोऽयं भवेत् पराधीनत्वे नेत्याह-नूनं भूतानि भगवानिति । युनक्ति कञ्चिद्वियुनक्ति वियोजयति वा यस्मिन् पक्षे भगवति जार बुद्धिः ॥ ४३ ॥

तदेवं वचनं प्राणिन एव जारा भवन्तीति कथं कालेन संयोगवियोगौ क्रियेतेतिचेत्तत्राह—वायुर्यथा घनानीकमिति । यथा वायुः मेघसमूहं योजयति वियोजयति च यथा तृणसमूहं वात्यारूपः तूलञ्च कार्पासपिण्डं रजो भूरेणुः तृणादीनि राजससात्त्विकतामसानि निर्गुणा मेघाः चतुर्विधा अपि वायुना स्वेच्छया नीयन्ते स्थाप्यन्ते वा तथा भूतानि चतुर्विधान्यपि भूतानि भूतकृत्कालः योजयति वियोजयति च अतः कालाधीनत्वात् योगवियोगार्थं कोपि नोपालभ्यः ॥ ४४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

. ततश्च कृष्णो मातुरुत्सङ्गादुत्थाय क्वचन विविक्तप्रदेशे गत्वा ताभिः सह सम्मिलनसम्भाषणादिकं चकारेत्याह भगवानिति । तथाभूताः पूर्वश्लोकोक्तलक्षणामानन्दमूर्च्छां प्राप्ताः आश्लिष्य स्वीयविभूत्या शक्त्या च सर्वा दृढमालिङ्ग्य आलिङ्गनदार्ढ्येनैव ताः मोहात् प्रबोध्येत्यर्थः । अनामयं मद्विरहमहारोगपीडा सम्प्रत्युपशान्ता नवेति पृष्ट्वा प्रहसन्निति तासां हास्यमुत्पादयितुम् ॥ ४१ ॥

स्वानां मातृपितृज्ञातीनाम वसुदेवादीनाम अर्थः कंसवधादिस्तच्चिकीर्षया गतान् चिरायितान् विलम्बितान् तत्र हेतुः शत्रुपक्षस्य क्षपणे चेतो येषां तान् अत एव व्रजमागन्तुमप्राप्तावसारान् अस्मान् अपि किं स्मरथ ॥ ४२ ॥

यथा त्वं रात्रिन्दिवमस्मत्स्मरणविदीर्णहृदयोऽस्मद्विरहरोगनिवर्त्तितसकलविषयभोगो महाप्रेमी भवसि तथा किं वयं भवितुं शक्नुमः वयन्तु त्वां न स्मरामः त्वां विनापि सुखिन्य एवास्म इति वक्रोक्तिद्योतकभ्रूभङ्गिभिरेव ससंरम्भं कृतप्रत्युत्तराः स्ता आलक्ष्याह-अपिस्वित् अस्मान् अवध्यायथ अवजानीथ एवेति अकृतज्ञा इति आ सर्वतो या विशङ्का तत्र तत्र किं कर्त्तव्यमस्माभिस्तत्त्वं शृणुतेत्याह—नूनमिति ॥ ४३ ॥

एतत् सदृष्टान्तमाह-वायुरिति । आक्षिपते आक्षिपति पृथक्करोतीत्यर्थः ॥ ४४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अकृतज्ञा एते इत्याशङ्कया ईषच्छङ्कया अपिस्वित् अस्मान् अवध्यायथ अवजानीत किम् ॥ ४३ ॥

आक्षिपते वियोजयति ॥ ४४ ॥

भाषाटीका ।

श्रीकृष्ण भगवान् एकान्त स्थान में, भगवद्भाव को प्राप्त भई गोपीन के पास प्राप्त होकर उन का आलिङ्गन कर उन का कुशलक्षेम पूछ कर हंसते भए यह बोले ॥ ४१ ॥

हे सखीओ, अपने माता पिता आदि के प्रयोजन करने की इच्छा से हम व्रज ते चलेगए वहां हम को बिलम्ब होगया कारण कि शत्रुन के नाश करने में हमारा चित्त रहा क्या आप सब हमारा स्मरण करती रहीं ॥ ४२ ॥

एतो अकृतज्ञ हैं इस प्रकार की अति शङ्का से क्या आप सब हमारा अपमान करती हो इस में हमारा कुछ दोष नहि है, क्योंकि परमात्मा जीवों के कर्मानुसार कभी प्राणियों को मिलाय देता है कभी उन का वियोग कर देता है यह निश्चित है ॥ ४३ ॥

मेघन के समूह को तृण को रूई को पृथिवी के रेणून को पवन जैसे मिलाय कर के फिर उन का वियोग कर देता है इसी प्रकार विश्वकर्त्ता परमात्मा भी प्राणियों को मिलाय कर फिर उन का वियोग कर देता है ॥ ४४ ॥

मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते ।
दिष्ट्या यदासीन्मत्स्नेहो भवतीनां मदापनः ॥ ४५ ॥
अहं हि सर्वभूतानामादिरन्तोऽन्तरं बहिः ।
भौतिकानां यथा खं वार्भूर्वायुर्ज्योतिरङ्गनाः ॥ ४६ ॥
एवं ह्येतानि भूतानि भूतेष्वात्माऽऽत्मना ततः ।
उभयं मय्यथ परे पश्यताऽऽभातमक्षरे ॥ ४७ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अपि च अतिभद्रमिदं यदुत भवतीनां मद्वियोगेन मत्प्रेमातिशयो जात इत्याह—मयीति । मयि भक्तिमात्रमेव तावदमृतत्वाय कल्पत इति यदुत भवतीनां मत्स्नेह आसीत्तद्दिष्ट्याऽतिभद्रम् कुतः मदापनो मत्प्रापण इति ॥ ४५ ॥

कीदृशस्त्वं यं वयं स्नेहेन प्राप्स्याम इत्यपेक्षायामात्मस्वरूपमाह—अहंहीति । हे अङ्गनाः ! भौतिकानां शरावसैन्धवादीनां यथाऽऽकाशादीनि पञ्चमहाभूतान्याद्यन्तादिरूपाण्येवं सर्वभूतानां जरायुजादीनामहम् अतो व्यापकं मां भवत्यः प्राप्ता एवेति ॥ ४६ ॥

ननु चतुर्विधभूतग्रामाणां तद्वदुक्ता आत्मैवाऽऽद्यन्तादिरूपस्तस्मिंश्च सर्वव्यापकं सर्वभूतानि वर्त्तन्त इति कुतस्त्वत्प्राप्तिरस्माकमित्यत आह—एवं हीति । अयमर्थः शरावादीनां यथा भौतिकानां महाभूतान्याद्यन्तादिरूपाण्येवमेवैतानि चतुर्विधानि भूतेष्वपि भौतिकत्वाविशेषात्स्वकारणेषु भूतेष्वेव वर्तन्ते ननु भोक्तर्यात्मनि आत्मा तु तेषु भूतेष्वात्मना भोक्तृरूपेण ततो व्याप्तो न कारणत्वेन अथैतदुभयं भूतभौतिकरूपं भोग्यं च भोक्तारञ्चाऽऽत्मानं मय्यक्षरे परिपूर्णे आभातं पश्यतेति ॥ ४७ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ प्रसिद्धं ममैश्वर्यं नूनमेताभिरपि ज्ञातमस्तीति क्षणादनुसन्धाय तदेवालम्ब्यैतत्प्राथार्थ्येनापि सान्त्वयति—अहमेवेश्वरश्चेत्तथापि शत्रुपक्षक्षपणलीलावेशेन कृतेपि भवतीनां वियोजने मम शक्तिर्न भविष्यत्येव स्नेहपारवश्यादित्यभिप्रायेणाह—मयीति । हि प्रसिद्धौ भक्तिर्नवविधानां भक्तीनामेकापि प्रीतिमात्रं वा भूतानां सर्वेषामपि अमृतत्वाय मोक्षाय कल्पते तर्हि भवतीनां सर्वतः पूज्यानां मदापनः मामेव साक्षात्प्रापयितृ बलादाकर्षति, यः स्नेहः उभयाविर्भावहेतुः प्रेमपरिपाकविशेषः स यदासीत् संयोगवियोगलीलाभ्यामाविर्बभूव तत्तु दिष्ट्या अतिभद्रं पुनर्वियोगासम्भावादिति भावः ॥ ४५ ॥

ननु कथं भवत्प्राप्तौ स्नेह एव कारणम् नैत्याशङ्क्य सर्वाश्रयत्वात्तस्याहमेव योग्यो मम च स एव योग्य इत्याशयेनाह—अहं हीतिद्वाभ्यां शब्दार्थस्तु टीकासम एव तत्रोत्तरपद्ये भूतभौतिकरूपमित्येव लिखनं शुद्धं भूतभौतिकरूपं भोग्यं भोक्तृरूपस्त्वात्मेत्युभयमा स्पष्टीभावादिति तदेवं शीघ्रमेव भवतीनां नित्यमल्लाभो भविष्यतीतिभावः । ननु तर्हि कथमीदृशश्चिरविरह इत्याशङ्क्यार्थान्तरञ्च सङ्गमयति—अहमिति द्वाभ्यामेव । हि निश्चये "न चान्तर्न बहिर्यस्य" इति श्रीदामोदरलीलादर्शितन्यायाच्छ्रीविग्रहरूपोऽहमेव आदिः कारणं अन्तो लयस्थानम् अन्तरं मध्यम एवं सर्वव्यापकोऽहं सामान्यतो युष्मानपि व्याप्य तिष्ठाम्येवेति वस्तुतो विरह एव नास्तीत्यर्थः । अङ्गना इति तासां सौन्दर्य्यगुणोल्लेखेन स्वप्रेमाऽपि ज्ञापयति ॥ ४६ ॥

एवमिति । हि निश्चयं अनेन आदित्यादिनैव प्रकारेण एतानि महान्ति भूतानि आकाशादीनि भूतेषु देहेषु वर्तन्ते आत्मा चात्मना स्वयमेव तेष्वेव ततः स्वशक्त्या तानि व्याप्यास्तीत्यर्थः । उभयं देह आत्मा च मयि वर्त्तते कुतः परे परमेश्वरे जगतस्तदेकाधारत्वात् अथ अतः निजदेह आत्मा चेत्युभयमेव अक्षरे सदा सर्वत्र वर्त्तमाने मयि आभातं विराजमानं पश्यत अनुभवतेति एतच्चासां भावतोतिबहिरङ्गमित्याशङ्क्य श्रीमदुद्धवद्वारा सन्देशवदर्थान्तरं योजयति—यथाहम् अहङ्कारो भूतादिः सर्वेषां भूतानां खादीनामाद्यन्तादिरूपः अहङ्कारान्तर्गतान्येव खादीनीत्यर्थः । एवमेतानि प्रकटलीलायामनुभूयमानानि युष्माकं ममतास्पदानि भूतानि "एको विष्णुर्महद्भूतम्" इतिवत् परमार्थसत्यवस्तूनि श्रीवृन्दावनादीनि भूतेष्वप्रकटलीलागतेषु परमार्थसत्यवस्तुषु वर्त्तन्ते यथा युष्माकं प्रकटलीलाभिमान्यहन्तास्पदमात्मा च अप्रकटलीलाभिमान्यहन्तास्पदेनात्मना व्याप्तः एवमिदन्ताहन्तास्पदं यदुभयं तच्च पुनः परे प्रकटमत्र दृश्यमानेपि तस्यां वृन्दाटव्यां विहरमाणे तत्राप्यक्षरे नित्यमेव युष्मत्साङ्गिनि मयि आश्रयरूपे आभातं विराजमानं पश्यतेति तस्मात्प्रकाशभेदादेव तद्वस्थादिभेदव्यपदेशो विरहसंयोगव्यवस्था चेति पूर्णमप्युद्धवद्वारा सन्दिष्टमिति भावः तदेवमुभयथापि स्फूर्त्यस्फूर्त्योरेव संयोगविरहत्वं भवतीनाञ्च परमस्नेहेन स्फूर्त्तिः सदैव वर्त्तत इति वस्तुतो नास्त्येव विरह इति व्यञ्जितम् ॥ ४७ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उत्पत्तिकारणत्वे अन्तर्बहिः सद्भावे च दृष्टान्तमाह—यथा खमित्यादिना । यद्वा एवं पृथिव्यादिभूतानि देवादिशरीररूपं कार्याणि एवम्विधहेतुमन्तीत्यर्थः ॥ ४८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

भूतेष्वात्मा जीवात्मा आत्मना मया कृतशरीरसंसृष्टाकृतिरित्यर्थः॥ ४७-४८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

किञ्चातिभद्रमिदं यद्भवतीनां मद्वियोगेन मत्प्रेमातिशयोऽभूदित्याह—मयीति। मयि भक्तिमात्रमेतावदमृतत्वाय मुक्तये कल्पते यत्तु भवतीनां मयि स्नेहः आसीत्तद्दिष्ट्याऽतिभद्रं कुतः? मदापनः मत्प्रापणः॥ ४५ ॥

कीदृशस्त्वं यं वयं स्नेहेन प्राप्स्यामहे इत्यपेक्षायामात्मनो याथात्म्यमाह—अहमिति। आदिः सृष्टिकारणमन्तर्लयकारणम् अन्तरमन्तरात्मा बहिश्च व्याप्य स्थितः इत्यर्थः। अन्तर्बहिश्च सद्भावे दृष्टान्तार्थमाह—भौतिकानामिति। हे अङ्गनाः! खमाकाशः वाः जलं भूः पृथ्वी खादीनि यथा भौतिकानां भूतपरिणामात्मकानां देवमनुष्यादिशरीराणामन्तर्बहिश्च वर्त्तन्ते॥ ४६ ॥

एवं दृष्टान्तमुखेन शिक्षितमर्थं दार्ष्टान्तिके सङ्क्रमयति—एवमिति। एतान्याकाशादीनि तत्कार्यरूपाणि देवादिशरीरात्मकानि च भूतानि भूतेषु आत्मा तेषु भूतेषु स्थित आत्मा जीवात्मा च आत्मना मया अन्तर्बहिश्च व्याप्यन्त इति शेषः। ततस्तस्मादुभयं चेतनमचेतनञ्च वस्तुजातमक्षरेऽन्तर्बहिश्च व्याप्य वर्तमानेपि व्याप्यगतविकाररहिते मय्याभातं प्रमितं पश्यत मयीत्यनेन धारकत्वमुक्तम् आत्मनेत्यनेनान्तःप्रविश्य प्रशासितृत्वञ्च अन्तःप्रविश्य नियमनं ह्यात्मशब्दप्रवृत्तिनिमित्तम्॥ ४७॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

ननु केचित् त्वामेव परमेश्वरं वदन्तीत्याशङ्क्याह-मयीति॥४५॥ अहं हीत्यादि॥ ४६-४९ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

ननु, भूतानामेव खल्वियं व्यवस्था नतु भवदुपरि देवाधिकारं नापि वयं भूतात्मान इत्याशङ्क्याह—मयि भक्तिर्हीत्यादि। मयि श्रीकृष्णे भगवति भूतानां प्राणिनां भक्तिः अमृतत्वाय मोक्षाय कल्पते मोक्षाकाङ्क्षिणां भक्तेर्मोक्षदत्वाङ्गीकृतेः भवतीनां भूतमित्राणां पुनर्मयि यत् स्नेह आसीत् तद्दिष्ट्या भाग्येनैव कीदृशः मदापनः मां प्रियत्वेन प्रापयतीति तथा भक्तिस्नेहयोरयं विशेषः भक्तिः कदाचिन्मोक्षमपि प्रापयतीति स्नेहस्तु मामेव अतो मत्प्राप्तिर्वः शाश्वती॥ ४५ ॥

ननु, तथापि नैतादृशकाठिन्यमुचितमित्याशङ्क्याह-अहं सर्वभूतानाम् आदिरन्तश्च यथा तथा अन्तरं हृदयं च बहिश्च भौतिकानां यथा खमादीनि अन्तर्बहिश्च अतो भौतिकविग्रहाणां भवतीनां यदन्तर्बहिरपि भवेयं तत्किं चित्रं तेन भवतीभिः सह मे विरहमेव नास्ति॥ ४६ ॥

एतदेव पुनर्दृढयति—एवमित्यादि। एवम्भूतेषु भौतिकेषु यथा भूतानि महाभूतानि तथा आत्मा जीवः आत्मना परमात्मना सह भूतेषु ततः आततः उभयम् आत्मपरमात्मरूपं द्वयं परे परात्परे मयि अक्षरे दृश्यमानरूपत्वेन अव्यये आभान्तं पश्यत॥ ४७ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

परमार्थबुद्धियुक्ताश्चेत्तत्राह—मयि भक्तिर्हि भूतानामिति। भक्तिः शास्त्रीया आन्तरप्रेमसहितासेवादिः इन्द्रियाणामहमहमिकया स्वाभाविकी वृत्तिर्वा अमृतत्वाय मोक्षाय भूतानामिति नात्राम्तराधिकारभेदो वक्तव्यः यथा मर्यादायां ब्राह्मण एव मुच्यत इति न तथा भक्तिमार्गे कल्पत इति। असहायैव भक्तिर्मोक्षं दातुं समर्था नतु ज्ञानमिव कर्मापेक्षते अन्तःकरणशुद्धिं वा अतो भक्तानां मोक्षो नात्यन्तदुष्प्राप्यः भवतीनान्तु ततोपि विशेष इत्याह—दिष्ट्या यदासीन्मत्स्नेह इति। स्नेहो लौकिकः सतु कामकृतो भवति काममयः पुरुष इति सहजोपि कृत्रिमो वैधः सहजो भगवद्विषयको न भवतीति असंव्यवहार्यत्वाद्भगवतः प्रकृते तु दैवगत्या मद्विषयो जातः तस्य च फलं मदापनीति मामेवापयति प्रापयतीति मद्भावं मत्सायुज्यं वा करोतीत्यर्थः। अमृतत्वं ब्रह्मभावः। पुरुषोत्तमभावो मद्भावः तद्वैलक्षण्यं पूर्वमेवावोचाम॥ ४५ ॥

कीदृशो भगवान् यादृशं स्नेहः प्रापयतीति आकाङ्क्षायामाह—अहं हीति। स्नेहस्य मत्प्रापणे आवरणनिराकरणमेव साध्यं नतु प्रयासान्तरमस्तीति वक्तुं भूतानां पूर्वापरबाह्याभ्यन्तरभेदेन प्रादेशचतुष्टये स्वस्यावस्थानं निरूप्यते युक्तश्चायमर्थः। व्यापकोहि परिच्छिन्नस्य एवमेव भवति। आदिरन्त इति उत्पत्तेः पूर्वं नाशानन्तरञ्च अहमेवेति। कालपरिच्छेदं उभयतः स्थितिमाह—अन्तर बहिरिति। देशपरिच्छेदं सङ्घाताभिप्रायमेतत्। अणुजीवाभिप्रायेपि तत्र पञ्चमहाभूतानि दृष्टान्तीकरोति भौतिकानामिति खमाकाशं वाजलं तामसराजसभावनिरूपणार्थम् आकाशजलयोः क्रमो निरूपितः। तथैव भूवाय्वोः सृष्टिप्रलयभेदेन क्रमद्वयं निरूपितं भवति मध्ये सात्विकं तेजः आद्यं तयोस्तामसो तत्संलग्नो राजसो मध्ये सात्विकमिति यथा सङ्घातोऽव्यात्तं शरीरं तत्संलग्ना इन्द्रियप्राणाः मध्ये चैतन्यमिति ज्ञापनार्थम् अङ्गना इति सम्बोधनम् उत्तमाङ्गत्वेन विश्वासार्थम् एवं परितो वेष्टनमात्रतया स्वस्य जीवानां जगतो वा भेदो निरूपितः॥ ४६ ॥

तन्निराकुर्वन् केवलात्मप्रतिपत्तिमाह—एवमिति। अनेन प्रमेयं भगवानिति समर्थितं भविष्यति पूर्वश्लोके भूतानि परितो निरूपितानि भौतिकानां कालपरिच्छेदे देशपरिच्छेदे च मध्यभावस्तु न निरूपितः मध्यभावस्तु किमात्मक इत्याकाङ्क्षायामाह—मध्येपि भूतान्येव भौतिकेषु वर्त्तन्ते नदीनिमग्नघट इव स्थिता भविष्यन्तीति पिण्डकारणत्वे च स्थिता भविष्यन्तीति न जलात्मता घटस्य भविष्यतीति विशेषमाह आत्मात्मतयेति। आत्मनां भूतशब्दवाच्यानां घटपटादीनाम् आत्मतया स्वरूपत्वेन महाभूतानि भौतिकेषु भवन्तीत्यर्थः।

श्रीशुक उवाच ।

अध्यात्मशिक्षया गोप्य एवं कृष्णेन शिक्षिताः ।
तदनुस्मरणध्वस्तजीवकोशास्तमध्यगन् ॥ ४८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अनेन पञ्चमहाभूतात्मकत्वं जगतो निरूपितम् अतःपरमुभयविधस्य कार्यकारणभावापन्नस्य भूतजातस्य भगवानाद्यन्तयोरन्तर्बहिः तद्रूपश्चेति निरूपयति । तत उभयं मयीति बोधनार्थं तत इति क्रमः आनन्तर्यार्थो निरूपितः एतन्मयीति वचनं ब्रह्माण्डान्तर्वर्तिभूतभौतिकपक्षे पुरुषवचनं ब्रह्माण्डपक्षेतु कालपरम् अथ तदन्तरं कालसहितस्य सर्वस्यापि कार्यजातस्य पूर्वमपि परे अहं तेषामाद्यन्तान्तरवर्त्तीत्यादि एतावद्दूरे स्वरूपं निरूप्य तस्यानुभवं कारयति पश्यतेति किं प्रपञ्चमित्याकाङ्क्षायां क्रमनिरूपणं परित्यज्य फलमाह—अक्षरे आभातमिति । आननब्रह्मात्मभावोपि निरूपितो भवति जीवानामनतिरिक्तभावस्य निराकृतत्वात् देहस्य मदापनजनने अधिकार इव निरूपितः ॥ ४७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु भोः वाग्मिशिरोमणे ! यस्मिन् दोषमारोपयासि स भगवांस्त्वमेव सर्वलोकविख्यातो भवसीत्यस्माभिर्ज्ञायत एव, भोः सख्यः ! एवमेतत् सत्यमहं भगवानेव तदपि भवतीनां मत्स्नेहाधीन एवास्मीत्याह, मयि भक्तिमात्रमेव तावदमृतत्वाय मोक्षाय कल्पते यत्तु भवतीनां मत्स्नेह आसीत्तदिष्ट्या मद्भाग्येनैवातिभद्रमेव यतो मदापनः माम् आपयति बलादाकृष्य युष्मत् समीपमानयत्यानीयाचिरेणैव युष्मदन्तिक एव स्थापयिष्यतीति भावः ॥ ४५ ॥

किञ्च, मामेव भगवन्तं यदि यूयं जानीध्वे एव तदा मद्विरहदुःखं नास्त्येव युष्माकं, केवलमविवेकेनैव दुःखं लभध्वे तस्मादविवेकध्वंसनं मत्तः शिक्षध्वमित्याशयेनाह—अहमिति । वस्तुतस्तु भोस्त्रिजगतीवर्त्तिनो महायोगेश्वराः ज्ञानं दुःखमात्रध्वंसनं यत् यूयं ब्रूध्वे तदिदमवधत्त उद्धवोपदिष्टमिव साक्षान्मदुपदिष्टमपि ज्ञानं प्रेमवत्सु जनेषु दुःखानिवर्त्तनाद्वैयर्थ्यमेव प्राप्नोतीति ज्ञापयन्नेव गोपीज्ञानमाह—अहमिति । सर्वभूतानां देवमनुष्यतिर्यगादीनाम् आद्यन्तमध्यबहिर्वर्त्तीत्यर्थः भौतिकानां देहादीनां यथा खादीनि पञ्चमहाभूतान्याद्यन्तादिवर्त्तीनीत्यर्थः । हे अङ्गनाः ! रमण्यः ! एवं तत्त्वं मे यूयं स्त्रीजनाः नैव जानीथेति भावः ॥ ४६ ॥

एवं हि तदेवमित्यर्थः । एतानि भूतान्याकाशादीनि भूतेषु देहेषु वर्त्तन्ते आत्मा जीवश्च आत्मना स्वरूपेण ततः विस्तृतः देहव्यापकस्सन् वर्त्तते इत्यर्थः । उभयं देहजीवञ्च मयि परे परमात्मनि अक्षरे नित्ये, सर्वव्यापकेऽधिष्ठानतत्त्वे आभातं प्रकाशितं पश्यत तेन युष्माकं देहः आत्मानश्च मय्येव सदा वर्त्तन्त एवेति कुतो मद्विरहखेदोऽविवेकविजृम्भित इति भावः ॥ ४७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

संयोगवियोगयोरीश्वरकृतत्वेन तयोश्चिन्तां त्यक्त्वा मुक्त्यर्थं मद्भजनं कर्तव्यमित्युक्तं सार्द्धद्वाभ्याम् । अथ मया तु स्वेच्छया भक्तकार्यसिद्धौ संयोगवियोगौ भजमानेनापि कदाचिदपि कस्यचिदपि वियोगो नास्तीत्याह—अहमिति । सर्वभूतानां चिदचिद्रूपाणां भौतिकानां पञ्चभूतविकाराणाम् ॥ ४५-४६ ॥

उक्तार्थं स्पष्टीकरोति—एवमिति । एवमेतानि भूतानि आकाशादीनि उपलक्षणमेतदचेतनवर्गस्य सर्वोऽप्यचेतनवर्ग इत्यर्थः । भूतेषु आत्मा शुभाशुभकर्मकर्त्ता स्वेनैव प्रतिशरीरं पृथक् यस्ततः आत्मा जीवः जातावेकवचनं सः एवमुभयं चिदचित्तत्त्वद्वयम् अक्षरे निर्विकारस्वरूपे मयि आभातं सान्ततः प्रकाशमानं पश्यत ॥ ४७ ॥

---

भाषा टीका ।

जिस कारण मेरी भक्ति प्राणियों को मोक्ष देने में समर्थ है इसी लिये मो को प्राप्त करने वारा मेरे विषये में स्नेह जो आप का भया है यह अति मङ्गल भया ॥ ४५ ॥

हे अङ्गनाओ ! जैसें पृथिवी आदि पांच तत्त्व के रचे भए घट आदि कार्य्यों के आदि अन्त में पृथिवी जल तेज पवन आकाश ए पांच तत्त्व रहते हैं तैसे हि सब प्राणियों के आदि अन्त बाहिर भीतर व्यापक होकर मैं रहता हुं ॥ ४६ ॥

जैसें आकाश आदि पांच तत्त्वन में घट आदि सर्व वस्तु और स्थावरजङ्गम सर्व शरीर वर्त्ति रहै हैं और उन सब में जीवात्मा भोक्ता रूप से व्याप्त होरहा है तैसे हि जड चेतन दोनों वस्तु का निर्विकार सब सें परे मोमे भान हो रहा है अर्थात् सब मेरे आधार हैं इस प्रकार अनन्तर ज्ञान दृष्टि से तुम देखो ॥ ४७ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अध्यात्मशिक्षया स्वरूपोपदेशेन शिक्षिताः बोधितास्तस्यानुस्मरणेन ध्वस्तो जीवकोशो लिङ्गं यासां तास्तमेवाध्यगन् प्रापुः ॥ ४८ ॥

आहुश्च ते नलिननाभ पदारविन्दं योगेश्वरैर्हृदि विचिन्त्यमगाधबोधैः ।
संसारकूपपतितोत्तरणावलम्बं गेहञ्जुषामपि मनस्युदियात्सदा नः ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे
वृष्णिगोपसङ्गमो नाम
द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं प्राप्तोऽपि कृष्णः पुनर्गृहव्यासङ्गेन माऽपयात्विति तच्चरणस्मरणं प्रार्थयामासुरित्याह–आहुश्चेति । हे नलिननाभ! ते पदारविन्दं गेहञ्जुषां गृहसेविनीनामपि नो मनसि सदा उदियात् आविर्भवेत् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदुपदेशफलमाह—श्रीकृष्णेनैवमात्मानं श्रीकृष्णमेवाधिकृत्य या शिक्षा तया शिक्षिताः गृहीतार्थाः सत्यस्तदनुस्मरणेन तस्य शिक्षितार्थस्य सदा चिन्तनेन ध्वस्तो नष्टः जीवस्य जीवनस्य कोशमाच्छादनं न जीविष्याम इति भावना यासां ताः तं श्रीकृष्णमध्यगन् प्राप्स्याम इति दृढसम्भावनाविषयत्वेनाजानन् इति प्रथमे द्वितीयेतु तस्य सर्वव्यापकमूर्तेरनुस्मरणेन सप्रेमातिशयादेव तथानुभवेन ध्वस्तो जीवस्य आत्मनः कोशः परिच्छेदः अप्राप्तिरूपभावना याभ्यस्तथाभूताः सत्यः तमध्यगन् प्राप्तत्वेनैवामन्यन्तेत्यर्थः । तृतीये तस्याप्रकटप्रकाशस्यानुस्मरणेन ध्वस्तो जीवानां कोशो प्रकटलीलारूपो विच्छेदहेतुर्यासां ता इति सर्वत्र चार्थे श्लेषेण दृष्टान्तद्योतनाच अन्ये यथा अध्यात्मविद्यया आत्मानमधिगच्छन्ति तद्वदिति ॥ ४८ ॥

यद्यपि परोक्षवादस्य दृष्टान्ताय वा आध्यात्मभक्त्योक्तमपि तादृगर्थमनादृत्य तद्वचनेनैव तं प्राप्तव्यं ज्ञात्वा परमसन्तुष्टाः बभूवुस्तथापि परमौत्सुक्येन प्रार्थयामासुरित्याह–आहुश्चेति । हे नलिननाभेति पद्माकारनाभित्वात् परमसौन्दर्यमुद्दिष्टम् अतः अरविन्दरूपकेण श्रीपदस्य परममधुररमत्वं तापहरत्वादिकञ्च ध्वनितम् अतएव योगो भक्तियोगः तदीश्वरैर्वशीकृतभक्तियोगैरित्यर्थः । हृद्येव विशेषेण सर्वोत्कृष्टतया भाव्यं चिन्त्यम् अगाधबोधैर्ज्ञानिभिर्मुक्तैरपि परमपुरुषार्थतया भाव्यं किञ्च संसारेति एवं भक्तमुक्तविषयिणां त्रयाणां सेव्यत्वेन साध्यत्वं साधनत्वं चोक्तं सदा मनसि जुषां सेवमानानामपि नोऽस्माकं गेहं प्रति सकृदप्युदियात् तत्र प्रकटं भवतु यद्वा प्रथमतो नलिननाभेति सम्बोध्य सपरिचयविशेषं ज्ञापयित्वा तावता विरहस्यानौचित्यं दुःसहत्वं च ज्ञापितं वाक्यार्थश्चायम् आस्तामन्ताबहुर्विविहतानामस्माकं त्वद्दर्शनगन्धवार्त्तापि हे नलिननाभ! तव पदारविन्दं त्वदुपदेशानुसारेणाऽस्माकं मनस्यप्युदियात् ननु, किमिवात्रासम्भाव्यं तत्राहुः, योगेश्वरैरेव हृदि विचिन्त्यं नत्वस्माभिस्तत्स्मरणारम्भ एव मूर्च्छागामिनीभिः तदेवोपपादयन्ति अगाधबोधैः साक्षाददर्शनेऽप्यक्षुभितबुद्धिभिः नत्वस्माभिरिव तद्दर्शनेच्छया मुहुर्मोहेन क्षुभितबुद्धिभिः तदुक्तमुद्धवं प्रति स्वयं भगवता—

"मयि ताः प्रेयसां प्रेष्ठे दूरस्थे गोकुलस्त्रियः ।
स्मरन्त्योऽङ्ग विमुह्यन्ति विरहोत्कण्ठ्यविह्वलाः" ॥

चरणास्यारविन्दरूपकं तत्स्पर्शेनैव दाहशान्तिर्भवति नतु स्मरणेनैवेति ज्ञापनाय ननु तथा निदिध्यासनमेव योगेश्वराणां संसारदुःखमिव भवतीनां विरहदुःखं दूरीकृत्य तदुदयं करिष्यतीत्याशङ्क्याहुः— संसारकूपपतितानामेवोत्तरणावलम्बं नत्वस्माकं विरहसिन्धुनिमग्नानां तच्चिन्तनं दुःखवृद्धेरेवानुभूयमानत्वादिति भावः । नन्वत्रैवागत्य मुहुर्मां साक्षादनुभवत तत्राहुः गेहञ्जुषां परगृहिणीनामस्वाधीनानामित्यर्थः । यद्वा, गेहञ्जुषामिति सङ्गतिश्च त्वत्पूर्वसङ्गमाविलसिधाम्नि तत्रावस्मत्कामदुघे स्वाभाविकास्मत्प्रभीतिनिलये निजगृहे गोकुल एव भवतु नतु द्वारकादाविति स्वमनोरथविशेषेण तस्मिन्नेव प्रीतिमतीनामित्यर्थः । यः कौमारहरः स एव हि वर इत्यादिवत् तस्मात् अस्माकं मनसि भवच्चरणचिन्तनसामर्थ्याभावात् स्वयमागमनस्यासामर्थ्यादनभिरुचेर्वा "धारयन्त्येव कृच्छ्रेण प्रायः प्राणान् कथञ्चन । प्रत्यागमनसन्देशैः" इतिभवज्ज्ञातास्मन्मर्मानुरूपं भवान् साक्षादेव श्रीवृन्दावन एव यद्यागच्छेत् तदैव निस्तार इति भावः । अत्र श्रीदामादिगोपानां श्रीमदुद्धवयानदर्शितसिद्धान्तरीत्या विरह एव न जातोऽस्तीत्यनागमनात् किन्तु गोरक्षायामेव स्थितत्वान्मिलनादिकानां वर्णनं ज्ञेयम् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां
द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

गेहञ्जुषां गृहस्थानामैश्वर्यपराणामित्यर्थः ॥ ४९ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अध्यात्मशिक्षयेति। आत्मनि आध्यात्मं विभक्त्यर्थे ऽव्ययीभावः आत्मपरमात्मयाथात्म्यविषयज्ञानमित्यर्थः। तस्य शिक्षया सम्यगुपदेशेन साधनेनेत्थं कृष्णेन कर्त्रा शिक्षिताः गोप्यस्तस्य भगवदुपदिष्टात्मयाथात्म्यस्यानुस्मरणेन मननपूर्वकनिदिध्यासनेन ध्वस्तः जीवकोशः कोशवदावरकं कर्ममूलमज्ञानं यासां ताः तं भगवन्तम् अध्यगन् प्रापुः क्रमेण मुक्ता बभूवुरित्यर्थः॥ ४८॥

तदा तदुपदिष्टाध्यात्मानुस्मरणविरोधिमोहोपशमनाय मनसस्तदङ्घ्रिप्रावण्यं प्रार्थयमानाः प्राहुरित्याह; आहुश्चेति। उक्तिमेवाह—त इत्यादिना। हे नलिननाभ! अगाधोऽपारो बोधः ज्ञानं येषां तैर्योगेश्वरैर्हृदि विचिन्त्यं केवलं चिन्त्यमेव ननु दृश्यं संसारकूपे पतितानाम् उत्तारणायावलम्बमालम्बनभूतं ते तव पदाम्बुजं देहधारिणां नोऽस्माकं मनसि सदा उदियात् आविर्भवेत् यथावद्विषयीभवेदित्यर्थः॥ ४९॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां द्व्यशीतितमोऽध्यायः॥ ८२॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे द्व्यशीतितमोऽध्यायः॥ ८२॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

अध्यात्मशिक्षयेत्यादि। आत्मानम् अधि अध्यात्मं समुद्दिश्येत्यर्थः। अध्यात्मं या शिक्षा तया कृष्णेन शिक्षिताः गोप्यस्तं कृष्णम् अध्यगन् प्रापुस्तत्त्वतः पुनस्तद्विश्लेषो यथा न भवति तथा स्थिता इत्यर्थः। अचिरान्मामवाप्स्यथेत्युद्धवद्वारा यदादिष्टं तस्यैवायं प्रपञ्चः कीदृश्यः तदनुस्मरणेन ध्वस्तो जीवभावो यासाम् एतास्तु मुनिरूपा इति बोद्धव्यम्॥ ४८॥

आहुश्चेत्यादि। हे नलिननाभ! ते तव चरणारविन्दं सदा जुषां नोऽस्माकं मनसि उदियात् अर्थात्तव मनसि तव मन एव नो गृहं स्यादित्यर्थः। तत्रैव यथा सदा वसाम इति प्रसादः क्रियतामिति विनयोक्तिः कीदृश्यं पदारविन्दं योगेश्वरैर्हृदि विचिन्त्यं ननु साक्षाल्लभ्यं संसारकूपपतितानां जनानाम् उत्तरणायावलम्बं तव मनसि चेदस्माकं गृहं जातं तदा नः किं नाभूदिति वाक्यार्थः॥ ४९॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे द्व्यशीतितमोऽध्यायः॥ ८२॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तेन कोवाऽधिकारः सम्पन्न इत्याकाङ्क्षायामाह—अध्यात्मशिक्षयेति। अध्यात्मशिक्षा आत्मनो ब्रह्मत्वज्ञानबोधाय युक्तिपूर्वकनिरूपणं तेन गोप्यः एवं भगवता शिक्षिताः ब्रह्मभावापन्ना अपि बोधकस्य भगवतः अनुस्मरणेन वा ध्वस्तजीवकोशास्सन्तः व्यवधायकं स्वकीयमुपाधिरूपं लिङ्गशरीरं परित्यज्य तमेवाध्यगन् भगवद्रूपा एव जाताः॥ ४८॥

यथा भगवान् तेनान्तःपूर्णो भगवानेव जातः कोशस्थानीयो भगवानाधिदैविकः सहजशक्तिर्वा ,देहस्त्ववशिष्यते व्याप्तभगवदंशः तस्य प्रतिबन्धकत्वाभावाय भगवन्तं विज्ञापयामासुः आहुश्चेति भक्तानामयं स्थितिः उत्तमा एवं भावश्च ब्रह्मात्मभावोऽस्माकं जात एव च इन्द्रियवर्गश्चातीतः अतः आधिदैविके मनसि तवावतीर्णस्य पुरुषोत्तमस्य पादयुगलं मनसि सर्वदा स्फुरतु तावता इयमवस्था स्थिरा भविष्यति एतदभावे ब्रह्मभावापन्नस्यापि सर्वे दोषाः सम्भविष्यन्तीत्याशयेनाहुः—हे नलिननाभेति। पद्मनाभत्वादयं ब्रह्मादीनामुत्पादकः तदनुवृत्त्यैव जीवानां स्थितिर्वा ब्रह्मभावेन तद्वत्तायां कृतघ्नता भवतीति तदभावार्थं प्रार्थित इत्यर्थः। उपायेनाविर्भावं सम्पादयन्त्विति चेत्तत्राहुः—योगेश्वरैर्हृदि विचिन्त्यमिति। अगाधबोधैर्ज्ञानपूर्णैः बहिर्योगरूपसाधनयुक्तैरपि हृदि विचिन्त्यमेव नन्वेतादृशस्याविर्भावे किं प्रयोजनमिति चेत् तत्राह—संसारकूपपतितोत्तरणावलम्बमिति। संसारकूपे निर्गमोपायरहिते यः पतति दूरादुच्चैः स्थितः याचककर्मणा नीचत्वं प्राप्नोति तस्य वैकुण्ठपदारोहणे अवलम्बनं भवति कर्मज्ञानादिकम् ऊर्ध्वगमने तन्निरालम्बनेन साधकमिति सर्वथा आलम्बनं मृग्यते अस्य बाधान्तरसम्भावनामाहुः—गेहञ्जुषामपीति। देहो वर्तते इति देहभागिनः गृहे योजयिष्यन्ति ततो गृहासक्त्या पूर्ववदेव प्राकृतत्वं भविष्यति अयमेव च कूपे पातः अतीति कदाचित् त्वत्कृपया देहसम्बन्धो न भवेत् तदा न काचिच्चिन्ता इत्यपि सूचितं मनसि स्वयमेवोदियात् नोऽस्माकं सर्वासामेवं निष्कामतया गोप्यो मुख्याः भक्ता जाताः कामनिवारणार्थञ्च ज्ञानोपदेश इति निरूपितम्॥ ४९॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्धे त्रयस्त्रिंशाध्यायविवरणम्॥ ३३॥८२॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अस्याः पद्यश्लोक्या आभ्यन्तरहेत्वर्थस्तु वैष्णवतोषिण्यां द्रष्टव्यः अध्यात्मशिक्षया एवं ज्ञानोपदेशेन शिक्षिताः प्रबोधिताः तदनुस्मरणेन तद्विरहोत्थतीव्रनिरन्तरध्यानसूर्येण ध्वस्तो जीवनकुमुदस्य कोशोऽन्तर्भागो यासां ताः तत्प्राप्त्याशामात्ररक्षितकिञ्चिन्मात्रजीवना इत्यर्थः। तम् अध्यगन् अधिगतवत्यः यः खल्वस्माकमजिज्ञासूनामपि रासारम्भे धर्मोप-

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

देष्टा उद्धवद्वारा च ज्ञानोपदेष्टा साम्प्रतमपि ज्ञानमुपदिशति सोऽयं स्वभावोऽप्यस्य दुस्त्यज एवेति प्रत्यभिज्ञानवत्य इत्यर्थः । जीवकोशो लिङ्गदेह इति व्याख्यातुं न सङ्गच्छते नित्यसिद्धानां सतां लिङ्गदेहाभावात् साधनसिद्धानामपि तासां कृष्णसम्मुखानामेतावत्कालपर्यन्तं प्राकृतलिङ्गदेहसत्तानभ्युपगमात् ॥ ४८ ॥

आहुश्च वक्रोक्त्या सेर्ष्यमूचुश्चेत्यर्थः । भोस्तत्त्वज्ञानाध्यापकशिरोमणे ! परमेश्वर ! साक्षान्मूर्त्तपरमात्मन् ! अस्माकं गृहवित्त कुटुम्बाद्यासक्तिमधिकामवधार्य्यैव पूर्वमुद्धवद्वारा साम्प्रतं स्वयमपि यदज्ञाननिवर्त्तकज्ञानोपदेशेन चित्तं निर्मलयासि तदेष ते निरुपाधिक एव स्नेहोऽस्मासु मोक्षार्थकोऽवगतः किन्तु गोपस्त्रीजनानां दुर्मेधानामस्माकं हृदि कथमेतज्ज्ञानं तिष्ठेत् ब्रह्मादिगम्यं त्वच्चरणचिन्तनमपि नायाति तस्मात्तदेव यथाशक्यं स्यात्तथा कृपयेत्याहुः—ते इति । योगेश्वरैरेव हृदि विचिन्त्यं वयं स्वकर्मफलसन्तापिनाः कथं चिन्तयितुं शक्नुमः अगाधबोधैर्ध्येयन्तु मन्दधियः संसारकूपेऽस्माकं संसारदुःखं निवर्त्तयितुं त्वं कृपया यतस्वेति भावः । गेहञ्जुषां गृहासक्तानामपि नः सदा मनसि उदयतामित्यन्तः कोप एव व्यञ्जितः इह खलु—

"न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजःप्रपन्नाः॥ इति
"न किञ्चित् साधवो धीरा भक्ता ह्येकान्तिनो मम ।
वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥ इति

"स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः" इत्यादिपरश्शतवचनैरवगततत्त्वा भक्ताः केऽपि ज्ञानफलं मोक्षं भगवता दत्तमपि नैवाददते सर्वभक्तचूडामणिभिराभिर्गोपीभिर्मोक्षसाधनस्य ज्ञानस्य ग्रहणं कथमुपपद्यतामतः प्राणप्रेष्ठमुखात्तदसह्यमध्यात्मं श्रुत्वा श्लोकेनानेन कोप एव व्यञ्जयितुमर्हः इत्यत एवमेव व्याख्या समुचिता यथाश्रुतोपस्थितार्थव्याख्यानमपि मोहिनीसधर्मणः शास्त्रस्यास्य सम्भवेदेव तत्तु स्पष्टमेव यद्वा भोः साक्षादज्ञानध्वान्तभास्कर ! तव एतैस्तत्त्वज्ञानातपैर्वयमुज्ज्वलाम एव वयं हि चकोर्य्यस्त्वन्मुखचन्द्रज्योत्स्नयैव जीवामस्तस्मात् श्रीवृन्दावनमागत्य स्वीयरासादिविलासैरस्मान् जीवयेत्याहुः ते इति । योगेश्वरैर्हृदि विचिन्त्यम् अस्माभिस्तु हृदुपरि कुचद्वये तत् धृत्वैव जीवितुमुत्सामहे नान्यथेति भावः । अगाधबोधैर्गम्भीरबुद्धिभिः तरलबुद्धिभिरस्माभिस्तु तच्चिन्तनारम्भ एव मूर्च्छासिन्धौ निमज्ज्यते कुतस्तच्चिन्तनमिति भावः । किञ्च तत् चिन्तितं सत् संसारकूपादेवोद्धारकं ननु त्वद्विरहसमुद्रपतितजनानुद्धर्त्तुं समर्थमिति भावः वयं हि गोप्यो न संसारकूपे पतिताः आबाल्यादेव त्यक्तगृहपत्यादिसंसारसुखत्वात् किन्तु त्वद्विरहाम्बुधावेव ननु तर्ह्यागच्छत द्वारकामेव तत्रैव युष्माभिः सह विलसामस्तत्राहुः, ममस्यपि गेहं गेहरूपमास्पदं श्रीवृन्दावनं जुषां जुषमाणानां त्यक्तुमशक्नुवतीनामित्यर्थः । तत्रैव पिञ्छमौलित्वमुरलीमनोहरत्वादिमाधुर्य्याणामस्मद्रोचकत्वादिति भावः । तस्मादस्माकं तत्रैव चरणारविन्दम् उदियात उदयतां व्रजभूमौ त्वद्दर्शनेनैवास्माकं सन्तापोपशमो ननु त्वत्स्मरणेन कुतः पुनरात्मज्ञानेनेति भावः ॥ ४९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
द्व्यशीतितम एषोऽपि दशमेऽजनि सङ्गतः ॥ ८२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तदनुस्मरणेन ध्वस्तः जीवकोशः जीवस्वरूपावरकाज्ञानमूलः जन्ममरणप्रवाहलक्षणः संसारो यासां ताः तं श्रीकृष्णमध्यगन् प्रापुः तत्तन्मुक्तिकाले प्राप्ते इति शेषः ॥ ४८ ॥

यावत्प्रारब्धं कर्म तावत् गेहञ्जुषां गृहसेविनीनां सदा प्रतिक्षणमुदियात् आविर्भवेत् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्व्यशीतितमाध्यायार्थप्रकाशः ॥ ८२ ॥

---

### भाषाटीका ।

श्रीशुक उवाच ।

श्रीकृष्णने जीव ईश्वर के यथावत् तत्त्वज्ञान के उपदेश कर के इस प्रकार गोपीन को शिक्षा कर इस शिक्षा को प्राप्त होकर गोपियों ने श्रीकृष्ण का निरन्तर ध्यान किया उस प्रेम पूर्वक ध्यान से गोपीन का अज्ञान नाश होगया अज्ञान के नाश होने से वे गोपीजन श्रीकृष्णको प्राप्त हो गई ॥ ४८ ॥

और गोपीजन श्रीकृष्ण के प्रति बोलीं कि-हे कमलनाभ ! अगाध अज्ञान वारे योगीश्वरों से हृदय में ध्यानके योग्य तथा संसार कूप में पडे भये जीवों के उद्धारका अवलम्ब एतादृश आपका चरणारविन्द गृहका सेवन करने वारी हमारे मन में सदा प्रकट रहो ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धमें व्यासीके अध्यायकी
भाषाटीका समाप्ता ॥ ८२ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

# त्र्यशीतितमोऽध्यायः।

श्रीशुक उवाच।

तथाऽनुगृह्य भगवान् गोपीनां स गुरुर्गतिः।
युधिष्ठिरमथापृच्छत् सर्वांश्च सुहृदोऽव्ययम् ॥ १ ॥

त एवं लोकनाथेन परिपृष्टाः सुसत्कृताः।
प्रत्यूचुर्हृष्टमनसस्तत्पादेक्षाहतांहसः ॥ २ ॥

कुतोऽशिवं त्वच्चरणाम्बुजासवं महन्मनस्तो मुखनिःसृतं क्वचित्।
पिबन्ति ये कर्णपुटैरलं प्रभो देहम्भृतां देहकृदस्मृतिच्छिदम् ॥ ३ ॥

हित्वाऽऽत्मधाम विधुतात्मकृतत्र्यवस्थमानन्दसम्प्लवमखण्डमकुण्ठबोधम्।
कालोपसृष्टनिगमावन आत्तयोगमायाकृतिं परमहंसगतिं नताः स्म(ः)॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

त्र्यशीतितम एवात्र स्त्रीणां कृष्णकथोत्सवे।
द्रौपद्यै कृष्णभार्याभिरुक्ताः स्वस्वकरग्रहाः ॥

अव्ययं कुशलम् ॥ १ ॥

तत्पादेक्षया हतमंहो येषां ते ॥ २ ॥

महतां मनस्तः सकाशान्मुखद्वारतो निःसृतं क्वचित्कदाचिद्देहम्भृतां देहधारिणां देहकृच्चासावस्मृतिश्चाविद्या तां छिनत्तीति तथा तं देहकृदीश्वरस्तद्विषयाज्ञानच्छिदं वा ॥ ३ ॥

हित्वेति पद्यद्वयम्. त्वा त्वां हि एव त्वामेव नताः स्मेत्यर्थः। कथम्भूतम्? आत्मधाम्ना स्वरूपप्रकाशेन विधुताः निरस्ताः आत्मकृताः बुद्धिनिमित्तास्तिस्रोऽवस्थाः यस्मिंस्तम् अतएवाऽऽनन्दसम्प्लवं सर्वानन्दकदम्बरूपम् अखण्डञ्चापरिच्छिन्नं यतो न कुण्ठः कुण्ठितो बोधश्चिच्छक्तिर्यस्य तम्. ननु एवंरूपता श्रीकृष्णस्य कुतः? अस्मदादिवत्प्रतीतेरत आहुः कालोपसृष्टेति। कालेनोपसृष्टा विप्लुताश्च ते निगमाश्च तेषाम् अवने रक्षार्थमात्ता उपात्ता योगमायया आकृतिर्नराकारमूर्तिर्येन तं परमहंसानां गतिं त्वाम् अतस्तवैवं रूपत्वादस्माकमत्र त्वन्माययैतत्सर्वं विपरीत्या त्वामेव नताः स्मेति यद्वा त्वामिति प्रकरणाज्ज्ञातव्यम्, त्वां नताः स्म किं कृत्वा हित्वा किम् आत्मधाम आत्मा शरीरं धाम गृहं तत्र तत्र देहदैहिकसङ्गं परित्यज्येत्यर्थः। समानमन्यत् ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एवं श्रीगोपीनां प्रथमदिनगतं सम्भाषणमुपसंहरन् तेन अन्यदिनगतमपि प्रकारान्तरं लक्षयन् तासां यथाऽसौ स्वयमेव गुरुस्तथा स्वयमेव फलमिति बोधयित्वा पूर्वोपदेशतात्पर्यं व्यञ्जयन् ततो गौणत्वेनैव श्रीयुधिष्ठिरादिसम्भाषणमपि प्रस्तौति—तथेति। तथा तेन तासां प्रार्थनाप्रकारेण गोपीरनुगृह्य यतः स एव तासां गुरुरुपदेष्टा गतिश्च गम्यो नित्यप्राप्यः अथ तदनन्तरमेवेति तावत्कालं तत्सन्निधानामप्यस्फूर्तेः अपृच्छत् एतत्पूर्वं तेषां प्रश्नमपि न कृतवान् किमुतान्यदित्यर्थः। एवं तासां प्रेष्ठत्वबोधनार्थमेव तदनुवादः क्रियत इति भावः अव्ययं व्ययाभावं हानिराहित्यं कुशलमिति यावत् ॥ १ ॥

एवं क्रमरीत्या लोकनाथेन सर्वलोकेश्वरेणापि परि सर्वतः पृष्टाः सुष्ठु नानोपहारादिना सत्कृताश्च अतस्तत्प्रसाददर्शनेन हृष्टमनसः सन्तस्तत्पादेक्षयैव तु हतांहसो गतक्लेशास्ते श्रीयुधिष्ठिरादयः प्रत्यूचुः ॥ २ ॥

अशिवममङ्गलं तेषां कुतः कुत्र कस्माद्वेत्यर्वा तेषां तु सदा सर्वत्र मङ्गलमेवेत्यर्थः। केषां ये तव चरणाम्बुजयोरासवं माधुर्यं चरणाम्बुजेति भक्त्या तव रूपगुणलीलामाधुर्यमित्यर्थः। अलमत्यर्थं कर्णपुटैः पिबन्ति प्रीत्या शृण्वन्तीत्यर्थः—ननु परमदुर्लभं तत्कुतो लभ्यते तत्राहुः क्वचित्कदाचित् प्रेमोल्लाससमये महतां त्वद्भक्तानां मनसो मुखेन निःसृतं मनःपरिपूर्त्यात्युद्रेकेण मुखद्वारा प्रकाशमानम् आसवशब्देन तस्य स्वतो मधुरत्वं मादकतया सर्वदुःखविस्मारकत्वञ्च ध्वनितम् अमङ्गलनाशं कैमुत्येन पुष्णाति। देहम्भृतामिति। अनेन देहस्य प्रत्यक्षतया तत्कर्तुः स्मृतियोग्यतोक्ता तथापि देहकृतः ईश्वरस्य तव या अस्मृतिर्विस्मृतिः तच्छिदं यद्वा देहम्भृतां सदा विविधदुःखमयं देहं दधतां देहकृत् देहोत्पादिका चासावस्मृतिश्च त्वद्विस्मृतिः तच्छिदं सदा तत्स्मरणमङ्गलकरामित्यर्थः। तत्र त्वत्-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रभावात्सम्भवत्येवेत्याशयेनाहुः—प्रभो ! हे सर्वसामर्थ्ययुक्तेति यद्येवमन्यदापि तत्कदाचिदपि शृण्वताम् अमङ्गलं नास्ति तदा सम्प्रति कृपया त्वया स्वयं विस्तार्य्यमाणस्य तस्य श्रवणादप्यस्माकं किञ्चिदप्यमङ्गलं सुतरां नास्त्येवेति येषां च साक्षात्त्वद्दर्शनं येषु चेदृशस्तत्कृपाप्रश्नः तेषां प्रागेवाशेषामङ्गलक्षयात् पुनस्तत् कुतो वर्त्तताम् अतः सदा मङ्गलमेवेति भावः ॥ ३ ॥

अतः सर्वोपेक्षया त्वामेव प्रपद्यामह इत्याहुः—हित्वेति । कालेत्यादि आप्तत्वं प्रकटितत्वं यन्मर्त्त्यबालौपयिकं स्वयोगमायाबलं दर्शयता गृहीतं इत्यादि श्रीमदुद्धववाक्येन सर्वोत्तमं नराकृतिसामान्यदर्शनेनान्यदुर्बोधमित्यर्थः । अत एव परमहंसानामेव गतिं गम्यं ज्ञेयमित्यर्थः । अन्यस्तैः यद्वा आत्मधाम शुद्धस्वरूपं तदेव विशिनष्टि विधुतेत्यादिचतुर्भिर्विशेषणैः तादृशमपि तद्धित्वा तद्विज्ञानमनादृत्येत्यर्थः । त्वामेव नताः प्रपन्नाः स्म प्रसिद्धौ स्म इति विसर्गान्तपाठो वा नित्यमेव दृढं भजाम इत्यर्थः । कुतः परमहंसानामपि भजनीयं तत्रैव हेतुः कालेत्यादि तदवने निमित्ते तन्निमित्तीकृत्य आत्ताः सङ्गृहीताः योगमायाः सर्वे स्वरूपशक्तिविलासा यत्र तादृश्याकृतिर्यस्य तं व्याख्यान्तरे योगमायात्ता प्रकृतिरित्येव स्यात् यद्वा आत्मधाम निजनित्यलीलास्पदं श्रीगोलोकादिकं हित्वा आत्ता प्रकटिता योगमायाख्यचिच्छक्तिप्रधाना मूर्त्तिर्येन तम् आत्मधाम्नो विशेषणानि विधुतेत्यादीनि समानमन्यत् ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १ ॥

तत्पादेक्षाहतांहसः तत्पादसन्दर्शनहतपापाः ॥ २—३ ॥

आत्मधाम विधुतात्मकृतत्र्यवस्थम् अवस्था उत्पत्तिस्थितिलय स्वतेजसा निर्धूतस्वकृतजन्मादि अवस्थम् अन्येषां सृष्ट्यादिकृत्स्वयं सृष्ट्याद्यविषय इत्यर्थः । कालोपदिष्टनिगमावययात्तयोगमायाकृतिं कालाप्लुतवेदाख्यसेत्वायसाने तद्रक्षणाय स्वाश्चर्ययोगशक्तिकल्पितदिव्यविग्रहम् ॥ ४—७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथेति । गुरुस्तत्त्वोपदेष्टा भगवान् गोपीनां सङ्गति स्वपादारविन्दासक्तिं तथास्त्वित्यनुगृह्याथ युधिष्ठिरं सर्वान् सुहृदश्च प्रति अव्ययमारोग्यमपृच्छत् ॥ १ ॥

त इति । ते युधिष्ठिरादयः तस्य भगवतः पादयोरीक्षया दर्शनेन हतं निरस्तमंहः पापममङ्गलञ्च येषां ते अत एव हृष्टं मनो येषां ते प्रत्यूचुः ॥ २ ॥

उक्तिमेवाह—कुत इति द्वाभ्याम् । त्वच्चरणाम्बुजासवं त्वत्पादाब्जकथामृतमित्यर्थः । आसववन्मधुरं विषयविस्मापनञ्च ये कर्णपुटैः श्रोत्रचषकैः पिबन्ति त्वच्चरणाम्बुजं ये ध्यायन्तीत्यर्थः तेषामशिवम् मङ्गलं कुतः नास्त्येवेत्यर्थः । आसवत्वरूपणात्पिबन्तीत्युक्तं प्रसिद्धासवादौत्कृष्ट्यं वक्तुं विशिनष्टि—महात्मनां मनःपरिशुद्धाम्मुखमेव पद्मं तस्मान्निस्सृतं निर्गलितं देहधारिणां देहकृत्वासावस्मृतिः देहकृदस्मृतिः देहसम्पादकमज्ञानं छिनत्तीति तथा तं प्रसिद्धासवं तु नैवंविधमिति भावः ॥ ३ ॥

तमिति । यस्य चरणाम्बुजामृतमेवंविधं तं त्वां नताः स्मः प्रणमामः कथम्भूतं परमहंसानां गतिं प्राप्यं मुक्त्युपायभूतं च तदुपयुक्तं सौशील्यं वात्सल्यञ्चाहुः—कालेनोपसृष्टो विप्लुतो निगमो वेदः तस्यावने निमित्ते रक्षणार्थं वैदिकधर्ममर्यादापालनार्थमित्यर्थः । आत्ता परिगृहीता योगमायया स्वाश्चर्यशक्त्या नराकृतिर्विग्रहो यस्य तं योगमायेत्यनेन आकृतेरकर्मायत्तत्वमुक्तम् आत्तेत्यनेन स्वेच्छयैवोपात्तत्वं यद्यपि सङ्कल्पमात्रेण निगमविरोधिदुष्कृद्विनाशसम्भवस्तथाप्याश्रितवात्सल्यात्सौशील्याच्चात्त योगमायाकृतिरिति भावः आश्रितकार्योपादकज्ञानगुणयोगमाहुः अखण्डः अविच्छिन्नः अप्रतिहतः बोधः अनिष्टपरिहारेष्टप्रापणाद्युपयुक्तज्ञानं यस्य तं प्राप्यत्वोपयुक्तं गुणमाहुः, आनन्दसम्प्लवमानन्दप्रवाहरूपं प्राप्यवैलक्षण्यमाहुः—तिस्रः अवस्थाः उत्पत्तिस्थितिसंहृतयः आत्मधाम्ना स्वतेजसा विधुता निर्धूताः आत्मकृताः स्वकृताः तिस्रः अवस्थाः यस्य तम् अन्येषां सृष्ट्यादिकृत् स्वयं सृष्ट्याद्यविषयश्चेत्यर्थः ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

१—३ ॥

हित्वेति । आत्मधाम शुद्धस्वरूपं तदेव विशिनष्टि विधुतेत्यादि चतुर्भिर्विशेषणैः । तादृशमपि तद्धित्वा तद्विज्ञानमात्रेत्यर्थः । त्वामेव नताः प्रपन्नाः स्म प्रसिद्धौ स्म इति विसर्गान्त पाठो वा नित्यमेव दृढं भजाम इत्यर्थः । कुतः परमहंसानामपि गतिं भजनीयं तत्र हेतुः कालेत्यादि तदवने निमित्ते तन्निमित्तीकृत्य आत्ताः संगृहीता योगमायाः सर्वाः स्वरूपशक्तिविलासा यत्र तादृश्याकृतिर्यस्य तं व्याख्यान्तरे योगमाययात्ताकृतिरेव स्यात् ॥ ४—८ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥ १—५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

चतुस्त्रिंशे साधनानां मुख्यं साधनमीर्यते ।
कीर्त्तनं सरसत्वाय स्त्रीभिः स्त्रीणां निरूप्यते
सर्वसाधनसम्पत्तिः कृष्णानुग्रहपूर्विका ।
तदभावे नैवसिद्ध्येदित्यनुग्रहवर्णनम् ॥
अनुग्रहस्य स्थिरता सम्बुद्ध्यैव हरौ भवेत् ।
माहात्म्यज्ञानतः पुष्टास्तुत्या कार्यक्षमा भवेत्
सर्वशक्तियुतः कृष्णः श्रोतव्य इति सिद्ध्यति ।
शक्तीनामप्यभीष्टञ्च सज्ञानस्तुतिभावतः ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

*पूर्वाध्याये गोपीनामुपदेश उक्तः प्रार्थना च अनुग्रहस्त्ववशिष्यते तदर्थं तासामनुग्रहं कृतवानित्याह—तथानुगृह्येति तथा तैर्यथा प्रार्थितं तथैव तद्धृदये स्वचरणारविन्दं स्थापयित्वा युधिष्ठिरमथापृच्छदिति सम्बन्धः भगवतः तथाऽनुग्रहे हेतुमाह—गोपीनां स एव गुरुर्गतिः फलञ्च फलसाधनरूपत्वात् तासामन्य उपायो नास्तीति स्वचरणारविन्दं स्थापितवानित्यर्थः । गोपिका उत्तमाधिकारिण्यः परं सुहृदस्थाः तदनु मर्यादायां युधिष्ठिरः श्रेष्ठः अतस्तदनन्तरं युधिष्ठिरोऽनुगृहीतः ततः सर्वांश्च सुहृदः अव्ययमपृच्छत् अव्ययशब्देन कुशलं ज्ञानमभ्युच्यते तेन पूर्वं मनसा तेभ्योपि ज्ञानमुपदिष्टमिति लक्ष्यते तस्य पुनः प्रश्नस्थिरीकरणार्थम् अनेन उत्तमादयः सर्वे एवानुगृहीता इत्युक्तम् ॥ १ ॥

ततस्ते स्वाधिकारं प्रकटयन्तः प्रत्युत्तरमुक्तवन्त इत्याह—त एवमिति । प्रश्नेनापि महान् सन्तोषो जात इति ज्ञापयति लोकनाथेन परिपृष्टा इति । महतः प्रश्नमात्रमपि सन्तोषजनकं प्रकृते त्वधिकमप्यस्तीत्याह—सुसत्कृता इति । आसनादिकृतः सत्कारः अनेन कायिकपूजा निरूपिता ततः प्रत्यूचुः पूजितवाणीं निरूपितवन्तः कायवाङ्मनसां गुणमुक्त्वा दोषाभावमाह—तत्पादेक्षाहतांहस इति । भगवच्चरणारविन्ददर्शनेन हतपापाः ॥ २ ॥

यद्भगवता पृष्टं कुशलमस्तीति तत्रोत्तरमाहुः—कुतोऽशिवमिति । अशिवसम्भावनायां कुशलप्रश्नः सङ्गच्छते अन्यथा निस्सन्दिग्धे प्रश्नो व्यर्थः स्यात् यद्यपि संसारस्थेनाकुशलं सम्भवति तथापि सर्वाकुशलनिवर्त्तकसाधनस्य निरन्तरमनुष्ठानात् कथमशिवमित्यभिप्रायेणाहुः—कुतः अशिवमिति । तत्किं साधनमित्याकाङ्क्षायामाह—त्वच्चरणाम्बुजासवं महन्मनस्तो मुखनिस्सृतमिति । परमानन्दस्य तव चरणो भक्तिमार्गप्रवर्त्तकः अम्बुजमिति सुखसेव्यः तत्रस्थो मकरन्दरसः रसात्मको भगवान् सर्वत्रैव वर्त्तत इति ब्रह्मानन्द एव मार्गान्तरेण समानीतः देहाद्यभिमानवतामपि देहादिविस्मारकत्वेन आसवशब्दवाच्यो भवति स स्वभावत एव परमानन्दरूपो दोषान्तरनिवर्त्तकश्च तत्रापि यदि ततोऽप्युत्कृष्टरसेन सम्मिलितो भवेत् तदा किं वक्तव्यं रसान्तरेण पुष्टस्सन् परमानन्दं प्रयच्छतीति वक्तुमाह—महन्मनस्त इति । अत्र भक्तिमार्गस्यायं सिद्धान्तः ब्रह्मानन्दः स्वेच्छया वह्निमिव सङ्कुचितात्मा शतगुणित इव घनीभूतः परिणतदधिवदन्यूनः आनन्दघनो भवति तदात्मको भगवच्चरणः स यदा भक्तिमार्गेण गृहीतो भवति तदा भगवद्भक्तानां कायवाङ्मनोभिः दृढं गृहीतः रसात्मकत्वाद्भक्तानामानन्दरूपं भवति स भक्तिरस इत्युच्यते सोपि शब्दब्रह्मणि भगवताऽऽदायुस्यूतः घटीकृतजलमिव महतां श्रवणस्मरणकीर्त्तनादिभिः इन्द्रियाघातैः तच्छिद्रद्वारा सरसो हृदि विनिविशति स तु भक्तिरसापेक्षयापि पुनः भक्तेन्द्रियैः पावितत्वात् निर्गलितः ततोप्यधिकरसः एवं सति यदा यदा वारम्वारं भगवद्गुणान् कीर्त्तयति चरणारविन्दमकरन्दरूपान् भक्तिमार्गानुसारेण गूढार्थरूपान् तदा महन्मनसः महन्मनासि स्थित्वा मुखनिस्सृतो भवति कश्चिदिति । अत्यन्तभक्तसङ्गे रसाविर्भावे च कदाचिदेव वर्त्ततीति तथा अलङ्कर्णपुटैरत्यभितकर्णैरलमत्यर्थं पिबन्ति ननु दुर्लभोयं रसः कथं बहुपानसमर्थो भवेत् तत्राह—प्रभो इति । स हि सर्वसमर्थः तादृशा भक्ताः कोटिशो भवन्ति अतो भगवदाश्रये भूयानेव तादृशो रसः पीयत इति अशुभसम्भावनापि का अशुभं धर्मादेव निवर्त्तते ततो ज्ञानं ततः सवासनाऽविद्यानिवृत्तिः ततः केवलात्मा भगवन्निष्ठो भवति तदा आनन्दघनो भगवान् प्रकटो भवति । तत्र भक्त्या भक्तिरसः सर्वदोषनिवर्त्तकः नित्यं संसारविस्मरणहेतुः प्रादुर्भवति सोपि पूर्वोक्तप्रणालिकया एवं नित्यं पेपीयमानानामशुभसम्भावनापि बाधिता किञ्च देहाभिमाने विद्यमानेपि प्रयत्नमात्रेण गृहीते देहकर्त्री या स्मृतिः तामपि छिनत्तीति मूले गते देहत्वसम्भावनापि निरस्ता ॥ ३ ॥

एवं प्रश्नोत्तरमुक्त्वा भगवति स्वचिकीर्षितं विज्ञापयन्ति हित्वेति । आत्मधाम स्वगृहादिकं हित्वा देहं वा परमहंसगतिं त्वां गताः स्म इति सम्बन्धः । यथा कश्चित् पूर्वभावं परित्यज्य उत्तरभावग्रहणार्थं तद्दातारं नमस्यति हि त्वेति पदद्वयं वा आत्मनोपि धाम तेजोरूपं त्वां तस्मिन् पक्षे दोषाभावः पूर्वोक्त एवानुसन्धेयः नन्ववस्थात्रये विद्यमाने किं भगवच्छरणेनेत्यत आह—आत्मकृताः अन्तःकरणकृताः तिस्रोऽवस्थाः विधूताः दूरीकृताः येन तत्राहङ्कारमेव दूरीकरोति तत्र तत्कृतावस्थानात् दूरीकर्त्तुं कः प्रयासः ? न केवलमवस्थानिवर्त्तकत्वमात्रं तथा सति बीजभावेपि तदवस्थाभाव इति भगवतः को विशेषः स्यात् तत्राह—आनन्दसम्प्लवमिति । आनन्दस्य सम्प्लवः समापूरो यस्य सोपि चेत्परिच्छिन्नः स दोषस्तदवस्थ इति चेत् तत्राह—अखण्डमिति । तथापि लोके अज्ञातः परमानन्दो न पुरुषार्थ इति सुषुप्तौ तथोपालम्भात् अपुरुषार्थो भवेदित्याशङ्क्याह—अकुण्ठबोधमिति । न कुण्ठितः कुण्ठो बोधो यस्येति अनुभूयमानानन्दरूप एवेत्यर्थः । नन्वेतादृशः श्रुत्येकमात्रसमधिगम्यः स्वानुभवः प्रकटः ब्रह्मानन्द एव भवति न तु परिदृश्यमानो भगवानिति चेत्तत्राह—कालोपसृष्टनिगमावन आत्तयोगमायाकृतमिति । कालेन वेदानां नाशे तत्प्रतिपाद्यधर्माणां तत्सम्बन्धिनां सर्वेषामपि अवने रक्षार्थम् आत्ता योगमायया आकृतिर्येन स एव धर्मरक्षार्थमेवमाविर्भूतः न त्वन्य इत्यर्थः । तर्हि कथं न सर्वैस्तथा ज्ञायत इति चेत् तत्राह—परमहंसगतिमिति । ये संसारादात्मनः पृथग्भावं जानन्ति कर्त्तुं च शक्नुवन्ति ते हंसाः ततोऽपि ये जीवानां गतिं भगवद्गतिं च विवेचितुं जानन्ति ते परमहंसाः तेषामेव गतिर्गम्य इत्यर्थः । अतः स्वभजनानुकूलतया कियन्तो धर्मा ज्ञाता इति तथाभूताः भगवद्भावार्थं त्वां गता इत्यर्थः ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सुहृद्भिः संस्तुतः कृष्णस्तद्भार्य्या द्रौपदीं प्रति ।
स्वस्वोद्वाहकथामूचुस्त्र्यशीतितम ईरिताम् ॥

यथा तासां मनःप्रसादोऽभूत्तथेत्यर्थः । सर्वेषामेव साधूनां

ऋषिरुवाच ।

इत्युत्तमश्लोकशिखामणिं जनेष्वभिष्टुवत्स्वन्धककौरवस्त्रियः ।
समेत्य गोविन्दकथा मिथोऽगृणंस्त्रिलोकगीताः शृणु वर्णयामि ते ॥ ५ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स गतिर्भवेदेव गोपीनान्तु गुरुर्गतिर्महती गतिरित्यर्थः । अव्ययं कुशलम् ॥ १—२ ॥

त्वच्चरणाम्बुजासवं ये कर्णपुटैः पिबन्ति तेषां देहभृतां देहधारिणां कुतो ऽशिवमित्यन्वयः महतां मनस्तः सकाशात् मुखद्वारतो निस्सृतं देहकृवासावस्मृतिश्चाविद्या तां छिनत्तीति तथा तम् ॥ ३ ॥

हि निश्चितमेव त्वा त्वां नताः स्मः आत्मधाम्ना स्वविग्रहप्रकाशेन विधुताः खण्डिताः आत्मकृताः अविद्यानिर्मिताः अवस्थाः जीवानां त्रिगुणमय्योऽवस्था येन तम् अतः कथमकुशलमस्माकं सम्भवेदितिभावः । आनन्द एव सम्प्लवो निमज्जनं यस्य; यस्माद्वा तं प्रत्युत त्वां दृष्ट्वा वयमानन्द एव निमज्जाम इति भावः । अखण्डः परिपूर्णः विकुण्ठः कालादिभिरकुण्ठितो बोधो ज्ञानं यस्य तमित्यस्माकमखिलवृत्तीस्त्वच्चरणानुवर्त्तिनीस्त्वं जानास्येवेति भावः । कालेन उपसृष्टानां नष्टानां निगमानां वेदानां वेदोक्तमर्यादानाम् अवने पालने निमित्त एव आत्ता गृहीता योगमायया कृतिर्दुष्टनिग्रहशिष्टपालनलक्षणा लीला येन तमिति सर्वसुखप्रदमिति भावः ॥ ४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कृष्णयुधिष्ठिरादिसम्भाषणं द्रौपदिरुक्मिण्यादिसम्भाषणञ्च वर्णयति ङ्यशीतितमे—गोपीनां गुरुः स्वप्राप्त्युपायोपदेष्टा गम्यते इति गतिः प्राप्यश्च भगवान् यथा कृतार्थता स्यात् तथाऽनुगृह्य अथ युधिष्ठिरं सर्वान् सुहृदश्च अव्ययं कुशलमपृच्छत् ॥ १ ॥

ते युधिष्ठिरादयः तत्प्रादेक्षया लोकनाथचरणदर्शनेन हतमंहो येषां ते ॥ २ ॥

हे प्रभो ! देहकृद्देहावलिकृत्वासो अस्मृतिः आत्मपरमात्मस्वरूपाद्यज्ञानं छिनत्तीति तथा तं महतां मनस्तः सकाशात् मुखद्वारतो निस्सृतं त्वच्चरणाम्बुजयोरासवमासववन्मधुरं त्वदितररागविस्मारणं कथामृतमित्यर्थः । ये कश्चित्कदाचित् कर्णपुटैरलमत्यर्थं पिबन्ति तेषां देहभृतां प्राणिनां कुतोऽशिवमकुशलं न कुतोपीत्यर्थः ॥ ३ ॥

हि हेतौ त्वत्कथाश्रवणस्यैवं फलमतः त्वा त्वां नताः स्मः कीदृशं परमहंसानाम् सारासारविवेकवतां गम्यते अनया इति गतिः उपायः गम्यते इति गतिः उपेयः तमुपायोपेयम् कालेनोपसृष्टस्य विष्णुतत्त्वस्य निगमस्य अवने रक्षणे निमित्ते आत्ता उपात्ता आविष्कृता योगमायया युज्यते इति योगः मङ्गलपक्षस्तत्सहितया मायया दयया आकृतिः स्वामाविकी मूर्त्तिर्येन तम् अकुण्ठबोधं परिपूर्णज्ञानम् अखण्डमपरिच्छिन्नम् आनन्दसम्प्लवमानन्दसागरं स्वधाम्ना स्वतेजसा विधुताः आत्मकृता जीवोपकाराय स्वेनैव कृताः तिस्रः सृष्ट्यादिरूपा जाग्रदादिरूपा वा अवस्थाः यस्मिन् तम् ॥ ४ ॥

भाषाटीका ।

श्रीशुक उवाच ।

गोपीन को गुरु तथा परम फलरूप श्रीकृष्ण भगवान् उपरोक्त प्रकार से गोपीन के ऊपर अनुग्रह करके पश्चात् युधिष्ठिर के प्रति और सर्व सुहृदन के प्रति कुशल क्षेम पूछते भए ॥ १ ॥

लोक स्वामी श्रीकृष्णने उन युधिष्ठिर आदि सुहृदन को इस प्रकार कुशल पूछा और उनका सर्व प्रकार सत्कार किया श्रीकृष्ण के चरणारविन्द का दर्शन से उनके पाप निवृत्त होगए तथा उनके मन प्रसन्न होगए पश्चात् श्रीकृष्ण के प्रति ये बोले ॥ २ ॥

हे प्रभो ! व्यास पराशर आदि महत्पुरुषों के मनसे उनके मुख द्वारा निकस कथारूप अमृत का जो अपने कर्णरूप दोनान करके निरन्तर पीवते हैं उनको कहुं भी किसी कारण से भी अमङ्गल नहि होता वह कथामृत देहधारियों के देह कारी अनादि अज्ञान का छेदन करने वारा है और आपके चरणारविन्द के रस सदृश ध्यान का कारण है क्योंकि कथा श्रवण करने से हि आपके चरणारविन्द का प्रीतिरूप ध्यान होता है ॥ ३ ॥

हे भगवन् ! हम आपहि के शरणागत हैं आप कैसे हो कि जीव में बुद्धि सम्पादित जाग्रत् स्वप्न सुषुप्ति रूप तीन के प्रकार की अवस्था का निजस्वरूप के प्रकाश से आपने नाश किया है अर्थात् अज्ञान कृत जाग्रत् आदि अवस्था से आप रहित हो और आप निरवधिक आनन्द के प्रवाह हो और आप अखण्ड स्वरूप हो आपके ज्ञान का कभी संकोच न हि होता और काल करके नष्ट वेद मार्ग के रक्षा निमित्त आपने निज आश्चर्य शक्ति करके श्रीकृष्ण रूप दिव्य मूर्त्ति, को अङ्गीकार किया है और सारासार विवेकि परमहंस जनोंके आप परम पुरुषार्थ फलरूप हो ॥ ४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रिषु लोकेषु गीताः ॥ ५ ॥

द्रौपद्युवाच ।

हे वैदर्भ्य(१)च्युतो भद्रे हे जाम्बवति कौसले ।
हे सत्यभामे कालिन्दि शैब्ये रोहिणि लक्ष्मणे ॥ ६ ॥
हे कृष्णपत्न्य एतन्नो ब्रूत वो भगवान् स्वयम् ।
उपयेमे यथा लोकमनुकुर्वन् स्वमायया ॥ ७ ॥

रुक्मिण्युवाच ।

चैद्याय माऽर्पयितुमुद्यतकार्मुकेषु राजस्वजेयभटशेखरिताङ्घ्रिरेणुः ।
निन्ये मृगेन्द्र इव भागमजाविवूथात्तच्छ्रीनिकेतचरणोऽस्तु ममार्चनाय ॥ ८॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

कौसले हे सत्ये ! शैब्ये हे मित्रविन्दे रोहिणीनाम काचित्पट्टमहिषीतुल्या ॥ ६ ॥

हे अन्याः श्रीकृष्णस्य पत्न्यः ॥ ७ ॥

मा मामर्पयितुं सम्पादयितुं राजसु जरासन्धादिषु उद्यतकार्मुकेषु सत्सु अजेया ये भटास्तेषां शेखरिताः मुकुटीकृताः अङ्घ्रिरेणवो येन तेषां मूर्ध्नि पदं दधदित्यर्थः तस्य श्रीनिकेतस्य चरणो ममार्चनायास्तु ॥ ८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

यथा श्रीयुधिष्ठिराद्योऽभिष्टुतवन्त इति एतत्प्रकारेण जनेष्वपि राजादिष्वभिष्टुवत्स्वित्यर्थः । याः अन्धकानां यादवानां कौरवाणाञ्च श्रीयुधिष्ठिरादीनां स्त्रियः पत्न्यः ताः समेत्य मिलित्वा याः कथा अगृणन् ताश्च त्रिलोकगीनाहते तुभ्यं वर्णयामीति महानुग्रहवचनम् अतः परमभक्त्या शृण्वित्यर्थः एवं नानास्त्रीणां नानाकथास्वपि वृत्तासु श्रीरुक्मिण्यादीनां द्रौपद्या सह तद्विवाहप्रसङ्गस्यैव कथनं श्रीमन्मुनीन्द्रस्य भावविशेषेण तस्यामेवादरात् तस्या एव महामाधुर्य्येण मुख्यत्वाच्चेति ज्ञेयम् ॥ ५ ॥

तत्र श्रीद्रौपदी तु सख्यविशेषात् परमकौतुकेन विवाहमेव पृच्छति—हे वैदर्भीति युग्मकेन । अच्युत इति प्रत्येकं सर्वासां तासां गृहतो विच्युतिराहित्याभिप्रायेण यद्यपि रमारूपत्वात् नित्यमेव श्रीभगवतो महिष्यो यूयमिति जानीमस्तथापि प्रकटलीलायां स्वेषु भक्तेषु या माया कृपा तया लोकमनुकुर्वन् यथोपयेमे तथेति स्वादरविशेषो व्यञ्जितः स्वकौतुकविशेषश्च नाऽस्मान् प्रत्येतद्ब्रूत । तासां विवाहक्रमादिना ज्येष्ठत्वकनिष्ठत्वसम्भवेपि तत्तत्क्रमेण सम्बोधनं तत्रोपदेशक्रमापेक्षया तासु तिसृणां मुख्यत्वादादरेण हेशब्दप्रयोगः रोहिण्याश्च तासां मध्ये निर्देशः शताधिकषोडशसहस्रमहिषीमुख्यत्वेन ताभिस्तुल्यत्वात् प्रत्युक्तन्तु विवाहक्रमादेव केवलं जाम्बवत्याः प्राक् श्रीसत्यभामाया उक्तं तस्याः श्रीभगवत्प्रेमविशेषेण प्राधान्यात् श्रीभद्रामित्रविन्दयोश्च मिथो नामलिपिविपर्य्ययो लेखकभ्रमादेव ज्ञेयः पूर्वोक्ततद्विवाहप्रकारस्य बहुविरोधापत्तेः अतोऽग्रे श्रीलक्ष्मणोक्तावाद्यपद्यटीकायामपि यथा मित्रविन्दाया इत्यत्र भद्राया इति द्रष्टव्यम् ॥ ६—७ ॥

> वेदवृवेदभावाद्या वन्दे श्रीकृष्णवल्लभाः ।
> यासां वागर्थविवृतौ यत्कृपैव गतिर्मम ॥

ते राजान एवाजेयभटाः तेषां मूर्द्धाभिमणिभ्ररणरेणवोपि यस्य स इति यद्वा अजेया ये भटाः योद्धारस्तैरपि निजाजेयतार्थं शेखरितार्थं शेखरिता अङ्घ्रिरेणवोऽपि यस्य स इति सर्वोपरि प्रतिभटजेतेत्यर्थः । भागं स्वीयं मां यो निन्ये स्वीकृतवानित्यर्थः । तच्चानायासेनेति बोधयन् अजेयेत्यादिना सूचितं महावीरत्वमेव दृष्टान्तत्वेनाह—अजाश्च अवयश्च मेषाः तासां यूथात् स्वभागं मृगेन्द्र इवेत्यर्थः । एवं परिपाटीविशेषेण तत्तदुद्धृतकथनमसादृश्येन नेतुमयोग्यस्याप्यात्मनस्तत्तत्प्रकारेण नयनात् तत्कारुण्यभरबोधनार्थं ननु त्वमेव पूर्णा श्रीः पूर्णेनानेन भगवता कथं नानेन भगवता कथं नानेतव्येति चेत् तत्राह—तन्निति । तस्य चरण एव श्रीनिकेत इति तत्प्रसादादेव मम तादृशत्वमित्यर्थः । मम मत्कर्तृकायार्चनाया अस्त्विति प्रार्थनया यद्दास्ययोग्यापि न स्यां कुतस्तत्पत्नीत्वमर्हामीति केवलं दासीत्वेन तत्पादाब्जमेवैव काचित्प्रार्थ्यत इति भावः । अन्यैस्तैः यद्वा सचासौ श्रीनिकेतचरणश्चेति तथा सः अयमेव निन्ये इत्यस्य कर्ता तच्च यद्गादरणमित्यादिवक्ष्यकिविशेषात् अन्यत् समानम् ॥ ८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वर्णयामीति शुकवाक्यम् अजेयबलशेखरिताङ्घ्रिरेणुः अजेयबलवत्वादेव शिरोधृतपादरेणुः श्रीनिकेतचरणो मम श्रीमत्पादारविन्दपरिचर्यार्थम् ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीति । उत्तमश्लोकानां पुण्यकीर्त्तीनाम उत्तमं श्रीकृष्णमित्थं जनेष्वभिष्टुवत्सु सत्सु परितः स्तोत्रं कुर्वत्सु सत्सु अन्ध-

(१) अच्युते इति वीर०पाठ०

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कानां कौरवाणाञ्च स्त्रियः समेत्य सङ्गीभूय मिथो गोविन्दस्य कथा अगृणन् कथयामासुः तास्त्रिषु लोकेषु गीताः कथाः वयं वर्णयामहे त्वं श्रृणिवति शुकोक्तिः ॥ ५ ॥

इत्थं प्रतिज्ञाय तावत्ताः प्रस्तोतुं तं श्रीकृष्णपत्नीः प्रति द्रौपदी प्रश्नमाह–वैदर्भीतिद्वाभ्याम् । अच्युत इति वैदर्भीविशेषणं नित्यानपायिनीत्यर्थः । हे कौसल्ये ! सत्ये हे शैब्ये ! मित्रविन्दे ! रोहिणीनाम काचित्पट्टमहिषीतुल्या ॥ ६ ॥

अन्याः कृष्णपत्नीर्युगपत्सम्बोधयति–हे कृष्णपत्न्य इति । एतत् नोऽस्मभ्यं ब्रूत किं यदयं भगवान् श्रीकृष्णः स्वमायया स्वसङ्कल्पेन लोकमनुकुर्वन् यथा भवतीरुपयमे उदूढवानित्येतत् ॥ ७ ॥

एवमापृष्टासु तावद्रुक्मिणी प्राह-चैद्यायेति । मां चैद्याय शिशुपालायार्पयितुं दापयितुं राजसु चैद्यपक्षीयेषु उद्यतकार्मुकेषु उद्धृत चापेषु सत्सु अजेया भटास्तेषां शेखरिताः मुकुटवत्कृताः अङ्घ्रिरेणवो येन सः तेषां मूर्ध्नि पदं निदधादित्यर्थ । स भगवान् मृगेन्द्रः सिंहः अजानामवीनाञ्च यूथात् स्वभागमिव मां निन्ये आनीतवान् अत्रोद्यतकार्मुकराजन्ययूथस्याजावियूथतुल्यताऽभिप्रेता तस्य भगवतः श्रीनिकेतचरणःश्रीमत्पादारविन्दं ममार्चनाय परिचर्यार्थमस्तु तच्छ्रीनिकेतचरणं सदाऽहं परिचरेयमिति प्रार्थना ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

हे वैदर्भीत्यादि । यद्यपि श्रीकृष्णस्य श्रीरुक्मिण्यादिविवाहकथातिसुप्रसिद्धैव शतशः श्रुता च तथापि श्रीकृष्णे कस्याः कीदृशी श्रद्धा प्रीतिश्चेति सर्वासां हृदयं ज्ञातुं द्रौपद्या अयं प्रश्नप्रक्रमः हे वैदर्भीत्यादौ व्यतिक्रमो द्रौपद्या हर्षावेशवैवश्यसूचकः प्रत्युत्तरे तु क्रमः ॥ ६ ॥

. अनुकुर्वन् स्वमाययेति स्वमायया स्वलीलया लोकम् अनुकुर्वन् लोकानुकरणमेव लीला ॥ ७ ॥

चैद्यायेत्यादि । तच्छ्रीनिकेतचरणोऽस्तु ममार्चनाय श्रीनिकेतः पद्मं तद्वत् चरणः श्रीनिकेतचरणः तदिति षष्ठ्यर्थेऽव्ययं तस्येत्यर्थः । ममापि श्रीत्वात् तस्य चरण एव मे निकेतः तदर्चनमेव काम्यमिति भावः ॥ ८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

( अग्रिमश्लोकटिप्पणम् ) एवं पुरुषाणां सर्वभावप्रतिपत्तिमुक्त्वा स्त्रीणामपि साक्षाद्भगवत्प्रपत्त्यर्थं पुरुषद्वारा जातायामपि तादृशी प्रपत्तिर्भगवत्स्त्रीषु दृश्यत इति । तस्या मूलकारणं द्रष्टुं सर्वाः स्त्रियो मिलिताः ततस्ताभ्यः श्रुत्वा स्वयञ्च तथा जाता इति सर्वाः स्त्रियः पुरुषवदेवेति यदुपाख्यानं वृत्तं तदुपक्षिपति–इत्युत्तमश्लोकेति । उत्तमैः श्लोक्यत इति उत्तमानां तदेव प्रयोजनमिति । ततोऽप्युत्तमत्वमेव कर्त्तव्यमिति उत्तमश्लोकशिखामणिं भगवन्तमेव स्तुवन्ति सर्वे जनाः स्त्रीणां पुनः तदभिज्ञत्वाभावात् तज्ज्ञानार्थम् अन्धकानां यादवानां कौरवाणां च स्त्रियः समेत्य मिथः गोविन्दकथाः अगृणन् तास्ते वर्णयिष्यामीति प्रतिजानीते ननु तावता किं स्यादित्याशङ्क्याह–त्रिलोकगीता इति । ताः कथाः लोकत्रयेपि . गीताः अतः सावधानतयाऽपि श्रृणिवति सात्विकसाधनमिति नियोगः ॥५॥

तत्र प्रथमं द्रौपद्याः प्रश्नमाह—हे वैदर्भीति । अष्टस्त्रीणां प्रत्येकमन्यासां समुदायेन च सम्बोधनं सर्वभावेन भगवद्गुणज्ञानार्थं मूला प्रकृतिः लक्ष्मीः ततोऽष्टप्रकृतयो रुक्मिण्याद्याः ततः षोडशविकाराणां सहस्रशः कार्यप्रकृतयः सर्वासु भगवतो याः लीलाः यथा वा तासां परिग्रहः तदनुसन्धानेन कृतार्थता भविष्यतीति तथा प्रश्नः अच्युत इति सर्वास्वपि रमणे न च्युतो भवतीति जीववैलक्षण्यं निरूपितं हे भद्रे ! हे जाम्बवति ! हे कौसले ! हे सत्यभामे ! हे कालिन्दीति ! हे मित्रविन्दे ! षोडशसहस्रासु मुख्या रोहिणी सैवाष्टमहिषीष्वपि कल्पान्तरम् अत एव क्रमदीपिकायां सैव गृहीता ॥ ६ ॥

हे कृष्णपत्न्यः ! इति साधारणीनां सम्बोधनम् एतदनुपदमेव पृष्टव्यं नोऽस्मभ्यं ब्रूत तत्किमित्याकाङ्क्षायामाह—भगवानयं यथा उपयेमे इति आन्तरं भावमुत्पाद्य विवाहं कृतवानिति चेत् तत्राह— यथा लोकमनुकुर्वन्निति । लोकानुकरणं बाह्यप्रकारेण ननु सर्वान्तरो भगवान् कथं बाह्यप्रकारं करिष्यतीति चेत् तत्राह स्वमाययेति । असाधारणमायया बहिरपि स्वभावं प्रकटयतीत्यर्थः ॥ ७ ॥

तत्र प्रथमं वैदर्भी स्वविवाहप्रकारमाह—चैद्याय माऽर्पयितुमिति । राजा मत्पिता भ्राता वा यावद्दास्यति ततः पूर्वमेव नेष्यतीति तन्निराकरणार्थमुद्यतकार्मुका राजानो जाताः ततश्चैद्याय मामर्पयिष्यन्ति राजद्वारा एवं स्थिते अजेयभटशेखरिताङ्घ्रिरेणुः भगवान्निन्ये न जेयो भटोऽपि येषां ते अजेयभटाः भटः पदातिः कीर्तिवक्ता दूतरूपो वैतालिको वा तेषां शेखरितः मुकुटेष्वधिरूढः अङ्घ्रिरेणुर्यस्य तादृशं भगवन्तं जेष्यन्तीति । दूरापास्तम् अत एव मां निन्ये निश्शङ्कार्थमाह—मृगेन्द्र इवेति । एवमावश्यकनयने हेतुः भागमिति । अन्येषामप्रयोजकत्वमाह—अजावियूथादिति । अजानामवीनाञ्च समूहात् येपि सात्त्विकाः येपि राजसाः ते उभयेऽप्यप्रयोजकाः एवं पुरुषोत्तमत्वं प्रकटितमिति मम सर्वपुरुषार्थसिद्ध्यर्थं तच्चरणो ममार्चनायास्तु प्रत्यक्षमेव तत्र सर्वपुरुषार्थसत्त्वमित्याह–श्रीनिकेतेति । स्वभागत्वात् शरीरं स्वयमेव भोक्ष्यति तत्र प्रसङ्गात् आगतो जीवः भगवद्भक्तिमेव वाञ्छतीति निरूपितम् ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

याः कथाः अगृणन् तास्त्रिलोकगीतास्तुभ्यं वर्णयामि ॥ ५ ॥

कौसले हे नाग्नजिति ! अच्युतो भगवान् वो यथा उपयेमे एतद्ब्रूत सुष्ठु अमायया सत्यं ब्रूतेत्यर्थः । यद्वा अमायया निष्कैतवेन यथोपयेमे ॥ ६ ॥ ७ ॥

चैद्याय चैद्यार्थं मा माम् अर्पयितुम् तत्र प्रक्षिप्तुं उद्यतकार्मुकेषु सत्सु अजेया ये भटा योद्धारस्तेषां शेखरिताः मुकुटवत् कृताः अङ्घ्रिरेणवोऽपि येन तेषां मूर्धसु पदं दधादित्यर्थः । अजाः

सत्यभामोवाच।

यो मे सनाभिवधतप्तहृदा ततेन लिप्ताभिशापमपमार्ष्टुमुपाजहार।
जित्वर्क्षराजमथ रत्नमदात् स तेन भीतः पिताऽदिशत मां प्रभवेऽपि दत्ताम् ॥ ९ ॥

जाम्बवत्युवाच।

प्राज्ञाय देहकृदमुं निजनाथदेवं सीतापतिं त्रिनवहान्यमुनाऽभ्ययुध्यत्।
ज्ञात्वा परीक्षित उपाहरदर्हणं मां पादौ प्रगृह्य मणिनाऽहममुष्य दासी ॥ १० ॥

कालिन्द्युवाच।

तपश्चरन्तीमाज्ञाय स्वपादस्पर्शनाशया।
सख्योपेत्याग्रहीत्पाणिं योऽहं तद्गृहमार्जनी ॥ ११ ॥

भद्रोवाच।

यो मां स्वयंवर उपेत्य विजित्य भूपान्निन्ये श्वयूथगमिवात्मबलिं द्विपारिः।
भ्रातॄंश्च मेऽपकुरुतः स्वपुरं श्रियौकस्तस्यास्तु मेऽनुभवमङ्घ्र्यवने(१)जनत्वम् ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

छागा अवयो मेषास्तेषां यूथात् निन्ये तस्य श्रीनिकेतस्य चरणो ममार्चनार्थमस्तु ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

॥५॥
रोहिणी पट्टमहिषीसमा ॥ ६ ॥
अवशिष्टाः सर्वाः पृच्छति—हे कृष्णपत्न्य इति ॥ ७ ॥
मा माम अजैर्ब्रह्मशिवादिभिर्मैत्रैरन्यैः प्रबलैः सुरासुरादिभिश्च शेखरीताः मुकुटवत्कृताः अङ्घ्रिरेणवो यस्य सः ॥८॥

भाषा टीका।

ऋषिरुवाच।

पुण्यकीर्त्ति वीरों के शिखामणि श्रीकृष्ण को इस प्रकार सुन्दर जन स्तुति कर हि रहे हैं इसी अवसर में यादवन की और कौरवन की स्त्रीजन मिलकर आपस में गोविन्द की कथा कहने लगीं वे कथा त्रिलोकी में गाई गई हैं मैं उनको वर्णन करतों हूं हे राजन्! तुम उनका श्रवण करो ॥ ५ ॥

द्रौपद्युवाच।

हे रुक्मिणि! हे भद्रे! हे जाम्बवति! हे कौसले! हे सत्यभामे! हे कालिन्दि! हे शैब्ये! हे रोहिणि! हे लक्ष्मणे! ॥ ६ ॥
हे कृष्णभार्य्याओ! निजस्वरूपभावसे नहि चलायमान निरवधिक ज्ञानादि कल्याण गुण संपन्न श्रीकृष्णने निजमायासे लोक का अनुसार कर जिस प्रकार आपस में वे विवाह किया है इस वृत्तान्त को आप सब हमारे अर्थ कहियेगा ॥७॥

रुक्मिण्युवाच।

शिशुपाल के अर्थ मोकों अर्पण कराने के लिये अपने २ धनुष धारण कर शिशुपाल के तर्फ के राजा लोग तयार हि रहे उसी समय जिनको कोई नहि जीत सके ऐसे शूरवीरन के मुकुट के सदृश जिसने अपने चरण की रज को किया अर्थात् शूरवीरन के मस्तक पर अपने चरण को धरके जैसे बकरी मेढन के झुण्डते अपने भाग कों सिंह लेजाता है तैसे हि श्रीकृष्ण भगवान् उन राजान के झुण्डते मो को लेगए उस श्रीनिवास का चरणारविन्द मो को पूजनके वास्ते होय ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

सनाभेर्भ्रातुर्वधेन सिद्धकृतेन तप्तं हृदयस्य तेन मे ततेन तातेन लिप्तमभिशापं दुर्यशोऽपमार्ष्टुं परिहर्त्तुमृक्षराजं जित्वा रत्नं स्यमन्तकमुपाजहारानीतवान् अथानन्तरं मत्पित्रे रत्नमदात् तेन स्वापराधेन भीतः स मे पिता प्रभवे श्रीकृष्णाय मामदिशत ददौ दत्तामक्रूरादिभ्यः प्रतिश्रुतामपीत्यर्थः ॥ ९ ॥

देहकृत् पिता अमुं श्रीकृष्णं निजनाथं स्वामिनं देवमीश्वरं सीतापतिं प्राज्ञायाविज्ञाय त्रिनवहानि त्रिनवाहानि ह्रस्वश्छन्दोनुरोधेन सप्तविंशतिदिनान्यमुनाऽभ्ययुध्यत् परीक्षितः सञ्जाता परीक्षा यस्य स परीक्षितस्तं साक्षात्सीतापतिरेवासाविति ज्ञात्वा पादौ प्रगृह्य मणिना सह मामर्हणमुपाहरदर्हणतया समर्पितवान्, अहो तर्हि त्वमतिश्रेष्ठासि नेत्याह अमुष्याहं दासीति ॥ १० ॥

(१) जनीत्वम् इति' वीर० सुबोधि० पाठः।

श्रीधरस्वामिकृतभावार्थदीपिका ।

सख्या अर्जुनेन तस्य गृहमार्जनी गृहसम्मार्जनकर्त्री ॥ ११ ॥

शुनां यूथगतं स्ववलिं द्विपारिः सिंह इवेति मे भ्रातृंश्च अपकुर्वतोऽपकारं कुर्वतो विजित्य श्रियौको लक्ष्मीनिवासः तस्याङ्घ्र्यवनेजनत्वं चरणक्षालनकर्तृत्वमनुभवं प्रतिजन्म मेऽस्तु ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, दत्ताया भयादपि दानमयुक्तं तत्राह—प्रभवे परमेश्वरायेति । वस्तुतस्तस्यैव सर्वमिति यथाकथञ्चित्तदर्पणमेव न्याय्यमन्यार्पणन्तु अन्याय्यमेवेतिभावः । यद्वा श्रीकृष्णाल्लीलास्वरक्षणार्थं दत्तां प्रतिश्रुतां ननु दत्तां तल्लाभात् श्रीकृष्णायैवादिशत् एवं पितुरपराधोपि परिहृतः तदर्थमेवोक्तं सनाभीति। भ्रातृशोकततस्तयाऽतिव्याकुलत्वेनोन्मादादेवाभिशापो दत्तः नतु ज्ञानपूर्वकमिति भावः। अत्र य उपाजहार अदाच्च यस्मै प्रभवे चादिशत तस्य तच्छ्रीनिकेतेत्यादि रुक्मिणीवाक्येनैव अन्वयो ज्ञापितः। यद्वा, य उपाजहार सोऽदात्तस्मै प्रभवे चादिशतेत्यन्वयः । अत्र श्रीरुक्मिणीवत्साक्षाद्दास्यायप्रार्थनञ्च तासां दास्यप्रधानात्कान्तभावादस्यास्तु सख्यप्रधानायुक्तमेव ॥ ९ ॥

प्रकर्षेणाज्ञात्वेति अज्ञानस्यातिरेक उक्तः तादृशयुद्धप्रवृत्तेः देहकृत्साक्षात्पितैवेति ब्रह्मत्वेन तदसम्भावननिरासार्थं देवपुत्रत्वेन कामरूपित्वादिति भावः। सीतापतिं तस्या उद्धारार्थमेव तस्य सेवाविशेषलब्धया तस्यां भक्तिविशेषात् भक्तवात्सल्याभिप्रायाद्वा आसीत्तदष्टाविंशाहमिति प्रागुक्तेप्यत्र त्रिनवाहानि इति समाप्तिदिनाग्रहणात् अन्यत्तैः यद्वा परितःकृपया सर्वाङ्गेषु श्रीहस्तस्पर्शनादिनेक्षितः निरीक्षितः तथाच प्रागुक्तम् "अभिमृश्यारविन्दाक्षः पाणिना शङ्करेण तम्" इति ॥ १० ॥

मा मां सख्या अर्जुनेन सहोपेत्य ॥ ११ ॥

भद्राख्यानेऽत्र मित्रविन्दा निर्णीतैव तत्पवादिसम्प्रदायपुस्तकेपि तथा दृश्यते ततश्च विन्दानुविन्दाविति भ्रातृद्वयेपि प्रागुक्ते भ्रातृनित्यत्र बहुत्वं तदुपलक्षणत्वप्राप्तेः श्रियौक इति द्वे पदे सन्धिरार्षः ततु स्वपुराविशेषणं वा ॥ १२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सनाभीति । भ्रातृवधततहृदयेन ततेन तातेन रत्नेन सह ॥९॥

देहकृत पिता त्रिनवाहानि सप्तविंशत्यहानि ॥ १० ॥

सख्या अर्जुनेन ॥ ११ ॥

द्विपारिः सिंह इव अपकुर्वतः भ्रातृंश्च विजित्येत्यन्वयः ॥ ॥ १२-१८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ सत्यभामोक्तिमाह—य इति । सनाभेर्भ्रातुः प्रसेनस्य वधेन सिंहकर्तृकेण ततं हृदयं यस्य तेन ततेनास्मत्पित्रा लिप्तमावादितमभिशापं दुर्यशोऽपमार्ष्टुमपनेतुमृक्षराजं जाम्बवन्तं जित्वा रत्नं स्यमन्तकाख्यमुपाजहार आनीतवान् अर्थानन्तरं मत्पित्रे रत्नमदाद्दत्तो तेन स्वापराधेन भीतः स मे पिता प्रभवेऽस्मत्स्वामिने श्रीकृष्णाय दत्तामक्रूरादिभ्यः प्रतिश्रुतामपि माम् अपिशब्दाद्रत्नमपि आदिशद्ददौ इत्यर्थः ॥ ९ ॥

अथ जाम्बवती जगौ-प्राज्ञायेति । देहकृन्मम पिता जाम्बवान् अमुं श्रीकृष्णं निजनाथं स्वस्वामिनं स्वकुलदैवतञ्च सीतापतिमज्ञाय अज्ञात्वेत्यर्थः ल्यबार्षः । अमुना श्रीकृष्णेन सह त्रिनवाहानि सप्तविंशत्यहानि अत्यन्तसंयोगे द्वितीया छन्दोभङ्गाभावाय ह्रस्व आर्षः शकन्ध्वादित्वात्पररूपं वा अयुध्यत युयोध ततः परीक्षितः परीक्षाऽस्य सञ्जातेति तथा स मम पिता ज्ञात्वा सीतापतिरेवासावधुना यदुष्ववतीर्णे इति ज्ञात्वेत्यर्थः । पादौ प्रगृह्य पादग्रहणपूर्वकं प्रसाद्य मणिना सह मामर्हणमुपायनमुपाहरत् समर्पितवान् अहममुष्य भगवतो दासी यावदात्मभावि दास्यं कुर्यामिति प्रार्थना ज्ञेया ॥ १० ॥

अथ कालिन्दी जगौ-तपश्चरन्तीमिति । स्वस्य भगवतः पादस्पर्शनाशया पादसम्वाहनादिपरिचर्याचिकीर्षया तपः कुर्वन्तीं मां ज्ञात्वा सख्या अर्जुनेन सहागत्य मम पाणिमग्रहीत् इत्थं गृहीताऽहं तस्य भगवतो गृहमार्जनी गृहान् मार्जयतीति तथाभूता भवेयम् ॥ ११ ॥

अथ भद्रा गीतिमाह—य इति । शुनां यूथगतं स्वबलिं द्विपारिः सिंह इव नृपानपकुर्वतः मे भ्रातृंश्च विजित्य यः श्रियौकः श्रीनिवासः मां पुरं द्वारकां प्रति निन्ये आनीतवान् तस्य श्रियौकसः अङ्घ्र्यवनेजनीत्वं चरणक्षालनकर्तृत्वं ममाऽनुभवं प्रतिजन्म अस्तु स्यात् ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ननु, दत्ताया भयादपि दानमयुक्तं तत्राह—प्रभवे परमेश्वरायेति । वस्तुतस्तस्यैव सर्वमिति यथाकथञ्चित् तदर्पणमेव न्याय्यमन्यार्पणन्त्वन्याय्यं भवेदिति भावः ॥ ९—११ ॥

भद्राख्यानेऽत्र मित्रविन्दा ज्ञेया अग्रे च मित्रविन्दाख्याने भद्रा लेखकभ्रमात्, प्रागुक्तविवाहप्रस्तावविरोधात् तत्पवाद—संप्रदायपुस्तके यथायुक्तमेव नामद्वयमस्ति ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

सत्यभामा वदति-यो मे इति । अस्याः केवलं मानोज्ज्वलाद्भवं एव भावः तथापि अपि दत्तां वाग्दत्तामपि भीतः पिता माम् आदिशत् दत्तवान् भीतत्वे हेतुः प्रभवे समर्थाय उपालम्भप्रकटनमकृत्वा केवलं प्रकृतकथाकथनाद्भावोऽभिव्यक्तः ॥ ९ ॥

प्राज्ञायेत्यादि । अमुं सीतापतिं प्रथमतश्च प्रकर्षेण अज्ञाय

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

न ज्ञात्वा त्रिनवहानि सप्तविंशतिदिनान्यमुना अयुध्यत् पश्चात् देहकृत् पिता निजनाथदेवं निजानां भक्तानां नाथं च देवं च तं ज्ञात्वा माम् अर्हणम् उपाहरत् अमुष्य श्रीकृष्णस्याहं दासी न तु प्रेयसीत्यभिमानं वहामीति भावः ॥ १० ॥

तपश्चरन्तीत्यादि । तद्गृहमार्जनी सेवान्तरसम्भावनायोग्यताऽपि मे नास्तीति भावः । दैन्यातिशयः ॥ ११ ॥

यो मामित्यादि । तस्य अङ्घ्र्यवनेजनत्वम् अङ्घ्र्यवनेजनी भावः अनुभवम् अनवरतम् ॥ १२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यद्यपि द्रौपदी परिगणनां व्यत्यासेन कृतवती तथापि क्रमेणैव ताः स्त्रियः स्ववृत्तान्तं निरूपयन्ति, अतस्तदनन्तरभाविनी सत्यभामा स्ववृत्तान्तमाह-यो मे सनाभीति । सनाभिः सोदरो भ्राता तस्य वधो यद्यप्यन्यत्र जातः तथापि तद्वधेन तत्सहृदयः मम पिता अविचार्यैव भगवति क्षिप्तोऽभिशापः तमपमार्ष्टुम् ऋक्षराजं जित्वा अथ भिन्नप्रकारेण स्वयं प्रतिगृह्य पारिबर्हतया दत्तं रत्नं तस्मै मत्पित्रे उपाजहार ततो भीतो मत्पिता तेन रत्नेन सह मामादिशद्दत्तवान् यद्यपि तस्य भार्याः सिद्धाः तथापि प्रभुरिति अन्यस्मै दत्तामपि वाग्दत्तां "दत्तामपि हरेत्कन्यां श्रेयांश्चेद्वर आव्रजेत्" इति क्षत्रियविषयमेतत्

"नैतत्पूर्वे व्यधुर्नैव करिष्यन्ति चापरे ।
यदन्यस्याभ्यनुज्ञाय पुनरन्यस्य दीयते" ॥

इति मनुवाक्यं ब्राह्मणविषयकम् ऋषिपदप्रयोगात् किञ्च विवाहे बन्धूनामैकमत्यं मृग्यते तदैवाधिकारः ततोऽधिकारसम्पादनार्थमेव मां दत्तवान् अतः प्रायश्चित्तार्थे दत्ताहं दोषनिर्घातार्थे जातेति स्वार्थं नावशिष्टेति न किञ्चित्कामये इत्यर्थः । अत एव भगवतः सा प्रिया पित्रर्थमेव च व्यापृता अत एव तस्याः स्वर्गो नास्तीति पारिजातापहरणं स्वर्गे च नयनम् ॥ ६ ॥

जाम्बवतीत्याह प्राज्ञायेति-अज्ञाय अज्ञात्वा प्रकर्षेण ज्ञात्वा प्राज्ञाय कश्चित्मनुष्य इति भगवन्तं ज्ञात्वा मम देहकृत् कन्यापिता महता पापेनैव कन्यापितृत्वं भवतीति अत एव दुःखायैवेति शास्त्रम् अतो भगवन्तं न ज्ञातवान् अमुमित्यग्रे प्रदर्शयति, वस्तुतस्त्वयम् निज आत्मा नाथः स्वामी देवं पूज्यश्च ननु तादृशो राम इतिचेत् तत्राह-सीतापतिमिति । पूर्वं सीतायै महद्दुःखं दत्वा ततस्तां बहुधा अवतार्य तदर्थं स्वयमप्यागत इत्यर्थः । अज्ञानं तावदेव यावद्भगवतः सान्निध्यं भवति तत्र त्रिगुणानां भेदाः सप्तविंशतिस्तावतीति तत्रापि व्यवधानाद्भगवदज्ञानमिति तन्निराकरणार्थममुनाऽभ्ययुध्यत् ततो व्यवधानेषु गतेषु परीक्षिते परीक्षायां जातायां भगवानेवायमिति ज्ञात्वा अर्हणं पूजायोग्यां मां पादौ प्रगृह्य मणिना सह उपाहरत् एवं विवाहमुक्त्वा कामनामाह—अहममुष्य दासी । योहि स्वतन्त्रो भवेत् स कामयेत अहन्तु दासी दास्यव्यतिरेकेणान्यदस्याकामितं भवति ॥ १० ॥

ततः प्राप्ता कालिन्दी स्ववृत्तान्तमाह—तपश्चरन्तीं मामिति । अन्वेषणादिप्रेषणं व्याजार्थं वस्तुतस्तु स्वमेवाज्ञाय सख्या सह उपेत्य पाणिमग्रहीत् एवं विवाहमुक्त्वा कामनामाह—योहं तद्गृहमार्जनीति मम तु कामना नास्ति स्वभावत एवाह कालिन्दी तद्गृहस्य मथुरायाः मार्जनी शोधिका तद्गृहं वा सूर्यमण्डलं ततः शोधयित्वा वा निर्गता वा अथवा गृहदासीत्वं स्वस्याः कामितमेव जातमिति निरूपयति ॥ ११ ॥

ततोऽनन्तरा मित्रविन्दा स्ववृत्तान्तमाह-यो मामिति । स्वयम्वरे उपेत्येति पूर्वं स्वत एवासक्तापि भ्रात्रा निवार्य स्वयम्वरे योजिता ततः स्वयम्वरे स्वयमुपेत्य सर्वानेव विजित्य पैतृष्वस्रेयोवाहमिति स्वभागत्वादन्यभागमन्यो गृह्णन् श्वाभवतीति श्वयूथगमिव द्विपारिः सिंहः धर्मभूरक्षकामपि राज्ञो जयतीति एवं भ्रातॄनपकुर्वतः विजित्य यद्यपि विन्दानुविन्दौ द्वावेव प्रतिकूलौ तथापि तत्पक्षपातिनोऽन्येऽपि गोत्रजा इति भ्रातॄनिति बहुवचनं चकारादन्येऽपि प्रतिकूलाः सूचिताः ततः स्वपुरं निन्ये द्वारकां नीतवान् अनेन मध्ये विघ्नो निवारितः श्रियौक इति पुरस्य सर्वसमृद्धिरुक्ता ततः कामितमाह तस्य अङ्घ्र्यवनेजनीत्वम् अनुभवं जन्मनि जन्मनि भवतु अङ्घ्र्यवनेजनी पादप्रक्षालनकर्त्री एतत्कामितम् ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सनाभेर्भ्रातुः प्रसेनस्य वधेन तप्तं हृत् यस्य तेन ततेन तातेन हेतुना लिप्तम् अभिशापं कलङ्कम् अपमार्ष्टुं परिहर्तुम् ऋक्षराजं जित्वा रत्नं स्यमन्तकमुपाजहार आनीतवान् अथानन्तरं मत्पित्रे रत्नमदात् तेन स्वापराधेन भीतः स मे पिता प्रभवे यस्मै श्रीकृष्णाय मामादिशत ददौ दत्ताम् अन्यस्मै दातुं प्रतिश्रुतामपीत्यर्थः ॥ ९ ॥

देहकृत् मत्पिता अमुं निजनाथश्चासौ दैवमीश्वरश्च तं प्राज्ञाय अविज्ञाय त्रिनवहानि त्रिनवाहानि ह्रस्वश्छन्दानुरोधेन सप्तविंशतिदिनान्यमुना सह अभ्ययुध्यत ततश्च परीक्षितः परीक्षा सञ्जाता यस्य स सीतापतिरेवासाविति ज्ञात्वा पादौ प्रगृह्य मणिना सह मामर्हणमुपाहरत् अहो तर्हि त्वं पुरावृत्तकथास्वस्माभिः श्रुतचरी रामावतारोत्पन्ना श्रीरामाय दातुं प्रतिश्रुता तेनैकपत्नीव्रतधरेण तदानीं न स्वीकृता इदानीन्तु बहुपत्नीव्रतधरेण तेनैवानेन स्वीकृता तस्मात्त्वमतिश्रेष्ठासीत्यतः सलज्जमाह—अमुष्य दासीति ॥ १० ॥

सख्या अर्जुनेन ॥ ११ ॥

शुनां यूथगतं स्वबलिं द्विपारिः सिंह इव मे भ्रातॄंश्चापकुर्वतः अपकुर्वतो विजित्य श्रियोकः लक्ष्मीनिवासो यः स्वपुरं मां निन्ये तस्य अङ्घ्र्यवनेजनत्वं चरणक्षालनकर्तृत्वम् अनुभवं प्रतिजन्म मेऽस्तु ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सनाभेर्भ्रातुः प्रसेनस्य वधेन सिंहकृतेन तप्तं हृद्यस्य तेन मे ततेन तातेन लिप्तमभिशापं मणिग्रीवो वनं गतो मे भ्राता प्रायः कृष्णेन मण्यर्थं हत इत्येवं दुर्यशः अपमार्ष्टुमपनेतुं ऋक्षराजं मणिग्राहिणं जित्वा रत्नं स्यमन्तकमुपाजहार आनीत

सत्योवाच ।

सप्तोक्षणोऽतिबलवीर्यसुतीक्ष्णशृङ्गान् पित्रा कृतान् क्षितिपवीर्यपरीक्षणाय ।
तान् वीरदुर्मदहनस्तरसा निगृह्य क्रीडन् बबन्ध ह यथा शिशवोऽजतोकान् ॥ १३ ॥
य इत्थं वीर्यशुल्कां मां दासीभिश्चतुरङ्गिणीम् ।
पथि निर्जित्य राजन्यान्निन्ये तद्दास्यमस्तु मे ॥ १४ ॥

मित्रविन्दोवाच ।

पिता मे मातुलेयाय स्वयमाहूय दत्तवान् ।
कृष्णे ! कृष्णाय तच्चित्तामक्षौहिण्या सखीजनैः ॥ १५ ॥
अस्य मे पादसंस्पर्शो भवेज्जन्मनिजन्मनि ।
कर्मभिर्भ्राम्यमाणाया येन तच्छ्रेय आत्मनः ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वान् अथानन्तरं यः रत्नमदात् मत्पित्रे तस्मै प्रभवे श्रीकृष्णाय अक्रूरादिभ्यो दत्तां प्रतिश्रुतामपि मां तेन स्वापराधेन भीतः स मे पिता आदिशत ददावित्यन्वयः ॥ ९ ॥

देहकृत् मम देहकृत् जाम्बवान् अमुं श्रीकृष्णं निजनाथः स्वीययाप्यभ्यासी देव ईश्वरश्च तं सीतापतिं प्राज्ञाय अविज्ञाय त्रिनव अहानि अमुनाऽभ्ययुध्यत् 'कालाध्वनोरत्यन्तसंयोगे'(२-३ ५) इति द्वितीया शाकन्ध्वादित्वात्पररूपम् परीक्षितः परीक्षा सञ्जाता अस्येति सः तारकादित्वादितच् सीतापतिरयमित्यमुं ज्ञात्वा पादौ प्रगृह्य मणिना सह मामर्हणमुपाहरत् समर्पितवान् ॥१०॥

सख्या अर्जुनेन सहोपेत्य समीपं गत्वा स्वपादस्पर्शकाम्यया तपश्चरन्तीमाज्ञाय यः पाणिमग्रहीत् तस्याहं गृहमार्जनी गृहमार्जनकर्त्रीत्यन्वयः ॥ ११ ॥

अजयूथं ग्राममिसिंहसमूहमध्यगतम् स्वबलिं केसरी कन्यारूपं स्वीयं भागमित्यर्थः । द्विपारिः सिंह इव नृपान् मे भ्रातृंश्च अपकुर्वतः अपकारं कुर्वाणान् विजित्य श्रियौकः सम्पत्तिके तनं स्वपुरं मां यो निन्ये तस्य अकृष्ण्यवेमजन्मत्वं चरणक्षालनकर्तृत्वम् अनुभवं प्रतिजन्म मे ममास्तु ॥ १२ ॥

---

भाषाटीका ।

सत्यभामोवाच ।

मेरा चाचा प्रसेन मणि को धारण कर वनमें गया उस को सिंहने मारगेरा उसभ्राता के वधसे मेरापिता के हृदय में संताप भया उसने श्रीकृष्णको यहकलंक लगाया कि कृष्ण ने मेरा भ्राताको मार गेरा उसकुयशको मिटावने केलिये श्रीकृष्ण भगवान् द्वारका वासियोंको साथ लेकर प्रसेन केखोज लेते२ वनमेंगये वहां प्रसेन को मरा देखकर सिंहका खोज देखा आंगे सिंहको मरा देखकर भालु खोजदेखा उसको देखकर पर्वत की गुफामें आयकर श्रीकृष्णने जाम्बान ऋक्ष राजाको जीतकर उसमणिको लायकर मेरे पिता को दिया यद्यपि मेरे पिताने अक्रूर आदिके अर्थ मेरा वाग्दान करा दियारहा तथापि श्रीकृष्णसे भय भीतहोकर पिता ने प्रभुके अर्थमें देदई ॥ ९ ॥

जाम्बवत्युवाच ।

मेरे पिता जाम्बवान् ने श्रीकृष्णको निज स्वामी कुलदेव सीतापति श्रीराम रूप नहि जानकर सत्ताईस दिन पर्यंत श्रीकृष्णके साथ युद्धकिया अट्ठाईसवेंदिनमें पिताको यहपरिज्ञा भई कि श्रीकृष्णको स्वामी जानकर श्रीकृष्ण के चरणारविन्द ग्रहण पूर्वक परिचर्य्यका साधन मानकर पिता ने मणि सहित मेरा समर्पण करदिया इसे कारण मैं जाम्बवती उस श्रीकृष्ण की दासी हूं ॥ १० ॥

कालिन्द्युवाच ।

भगवान् के चरणारविन्दकी परिचर्या करने की आशा करके मै तप करती रही इस प्रकार मोको जान कर अर्जुन के साथ आयकर जिस श्रीकृष्ण ने मेरा हस्त ग्रहण किया है उसके गृह की बुहारी लगाने वारी दासी हूं ॥ ११ ॥

मित्रविन्दा बोली श्वानों के झुण्डमें स्थित निज बल बकरी को जैसे सिंह लेजाता है तैसे हि स्वयंबर मैं आयकर राजान को जीतकर तथा विरोध करने वारे मेरे भ्रातान को जीतकर जो श्रीनिवास मोको अपने पुर में लेगया वा श्रीकृष्ण के चरणारविंद का प्रक्षालन करना मोको जन्म जन्मान्तर मैं मिलो ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सप्तोक्ष्णो वृषभान् बलञ्च वीर्यञ्च सुतीक्ष्णशृङ्गाणि चाति शक्तितानि येषां तान् मे पित्रा कृतान् सम्पादितान् बलयिसे मां दातुं क्षितिपानां वीर्यस्य बलस्य परीक्षणाय लानतिप्रसिद्धान् वीराणां दुर्मदं घ्नन्ति ये तांस्तरसा शीघ्रमेव निगृह्य दमयित्वा क्रीडनमायासेनैव बबन्ध अजतोकानजापत्यानि ॥ १३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वीर्यमेव शुल्कं देयं यस्यास्तां दासीभिः सह चतुरङ्गिणीं गजाश्वादिसेनायुक्तां पुरं निन्ये ॥ १४ ॥

हे कृष्णे हे द्रौपदि ! तस्मिन्नेव चित्तं यस्यास्तां माम् अक्षौहिण्या सेनया सह सखीजनैश्च सह ॥ १५ ॥

येन पादसंस्पर्शेनाऽऽत्मनो मे तत्कैवल्याख्यं श्रेयो भवेत् सः यद्वा येन कारणेनाऽऽत्मनो जीवस्य तच्छ्रेयः स एव पुरुषार्थः इति ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

उक्षणः उक्षणः क्षितिपवीर्यपरीक्षणायेति श्रीभगवत्प्राप्त्यर्थमेव तदिति पूर्वमेवोक्तं ह स्फुटं सर्वेषां साक्षादेवेत्यर्थः । क्रीडया बन्धने दृष्टान्तः, यथेति । शिशव इति बहुत्वम् आत्मानं सप्तधा कृत्वेति पूर्वोक्तानुसारेण अजतोकान् छागापत्यानि ॥१३॥

वीर्यशुल्कामिति । श्रीभगवता तथा तत्पितृकृतनिबन्धपरिपालनात् ॥ १४ ॥

मित्रविन्दाख्यानेऽत्र भद्रापि निर्णीतैव ततश्च कैकेयीं भ्रातृभिर्दत्ताम् इति प्रागुक्तेऽप्यत्र पित्रा दत्तवानिति भ्रातृभिः प्रतिश्रुतां सर्वसम्मत्या पिताऽऽहूयादादित्यभिप्रायेण स्वयमाहूय दाने हेतुः तच्चित्तामिति तत्रैव हेतुः कृष्णायेति सर्वचित्ताकर्षकत्वेन तत्संज्ञायेत्याभिप्रायव्यञ्जनाय तथापि तत्साक्षात्पत्युर्नामग्रहणं तत्र स्मारितेन स्वभागधेयेन तासां परमोन्मादप्रायत्वं बोधयति येनेदमसङ्कोचाद्वदन्तीति अथवा गुर्वादिनामग्रहणं लोकेष्वेव दोषाय केवलनामस्तुच्छत्वादनादरापत्तेः श्रीभगवति तु गुणायैव महामहिमसूचकत्वात् परमादरापत्तेः "यस्य नाम महद्यशः" इतिश्रुतेः ॥ १५ ॥

अतोऽस्यैव पादयोः सम्यक् सम्वाहनादिना स्पर्शः कर्मभिर्भ्राम्यमाणायाः सत्या मे मम जन्मनि जन्मनि भवेत् भवतु इति नरलीलया सर्वमन्यपुरुषार्थवर्गमनादृत्य तत्र हेतुः तदिति ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ नाग्नजिती गायति--सप्तेति । क्षितिपानां राज्ञां वीर्यस्य परीक्षणाय परीक्षार्थं मम पित्रा नग्नजिता कृतान् सम्पादितान् बलं वीर्यं प्रभावश्च सुतीक्ष्णशृङ्गाणि च तान्यतिशयितानि येषां तान् वीराणां दुष्टं मदं घ्नन्ति इति तथा तान्प्रसिद्धान् सप्त उक्षणः वृषभान् यथा शिशवो बालाः अजतोकानजापत्यानि तथा तरसा आशु निगृह्य दमयित्वा क्रीडनायासेनैव बबन्ध ॥ १३ ॥

यो भगवान् युद्धे राजन्यान्निर्जित्य वीर्यमेव शुल्कं देयं द्रव्यं यस्यास्तां दासीभिः सह चतुरङ्गिणीं गजाऽश्वादिसेनायुक्तां मां निन्ये तस्य भगवतो दास्यं ममास्तु इति प्रार्थना ॥ १४ ॥

अथ मित्रविन्दागायनमाह--पितेति द्वाभ्याम् । हे कृष्णे ! द्रौपदि ! मे इति पूर्वोत्तरान्वयि पदं मम पिता स्वयमाहूय मम मातुलसुताय श्रीकृष्णाय तस्मिन् श्रीकृष्णे एव चित्तं यस्यास्तां मामक्षौहिण्या सखीजनैश्च सह दत्तवान् ॥ १५ ॥

अस्य श्रीकृष्णस्य पादसंस्पर्शः पादसम्वाहनादिपरिचर्या मम प्रतिजन्म भवेत् अस्तु इत्थं प्रार्थनायां हेतुत्वेन पादसंस्पर्शं विशिनष्टि-येन तत्पादसंस्पर्शेनात्मनो मम कर्मभिः पुण्यपापात्मकैः भ्राम्यमाणायाः संसरन्त्याः श्रेयो निःश्रेयसं भवेत् ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

क्षितपानामन्येषां श्रीकृष्णस्य च वीर्यस्य परीक्षणाय तारतम्यज्ञापनाय ॥ १३ ॥ १४ ॥

कृष्णायेति साक्षात् पत्युर्नामग्रहणे तात्पर्यमिदं गुर्वादिनामग्रहणे लोकेष्वेव दोषाय केवलनाम्नस्तुच्छत्वादनादरापत्तेः । श्रीभगवति तु गुणायैव महामहिमसूचकत्वात् परमादरापत्तेः । "यस्य नाम महद्यशः" इति श्रुतेः ॥ १५ ॥

कर्मभिर्भ्राम्यमाणायेति नरलीलावेशेन ॥ १६—२८ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

सप्तोक्षणेत्यादि । क्रीडन्नित्येकवचनोपादानेनैक एव बबन्धेत्यर्थः बद्धाऽऽत्मानं सप्तधा कृत्वा शिशव इति बहुवचनान्तेन दृष्टान्तेन शिशूनां स्वभावो दर्शितः ॥ १३ ॥

य इत्थमित्यादिना परेणान्वयः तद्दास्यं दासीभावः ॥ १४ ॥

पिता मे इत्यादि द्वाभ्याम् । अद्य पादसंस्पर्शः पादसम्वाहनम् ॥ १५-१६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नाग्नजितीत्याह—सप्तोक्षण इति । अतिबलं वीर्यः पराक्रमः सुतीक्ष्णे शृङ्गे च येषां तान् सप्तव्यसनात्मकान् अत एव क्षितिपवीर्यपरीक्षार्थे पित्रा कृतान् यो हि व्यसनग्रस्तो भवति स कुतो भोक्ता भविष्यतीति स्वकन्याया भोगः सिद्ध्यत्विति पित्रा ते कृताः व्यसनानि च त्रिगुणात्मकानि अतो बलीवर्दास्तथा निरूपिताः वीर्यं सात्विकं बलं तामसं शृङ्गे राजसे किञ्च व्यसनानि धर्मादिभिर्निराकर्तुमशक्यानीति ज्ञापयितुं तेषां विशेषणं वीरदुर्मदहन इति वीराः शूराः राजानः वीर्यं धर्मस्थानीयमुक्तं तथापि दुरभिमानजनकत्वात् न व्यसननाशने समर्थमित्याभिप्रायेणाह—दुर्मदेति । वीराणां दुष्टं मदं घ्नन्तीति दुर्मदहनः अनस्तरसा शीघ्रमेव निगृह्य यतः व्यसनानामेव व्यसनं भवति ततः क्रीडन्निव लौकिकव्यापारेणैव तन्निग्रहं कृत्वा हेत्वाश्चर्ये वैदिकैरपि दुर्निवार्यं कथं लौकिकेन निवारितवानिति लौकिकेऽपि प्रयासाभावायाह—यथा शिशवोऽजतोकानिति । स्थूलाः अजबालकान् बिभ्रतीति बालका एव बन्धनार्थं बिभ्रतीति तथाप्येकेन न

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भवतीति बहुवचनं व्यसनशान्त्यर्थं सप्ततन्तुं यज्ञं बालकाः कुर्वन्तीति ध्वनितम् ।। १३ ।।

ततः स्वामिलषिते सिद्धे पित्रैव दत्तां मां वीर्यमेव शुल्कं यस्याः दासीभिः सहितां राजन्यांस्तेषां चतुरङ्गिणीं सेनाञ्च पथि जित्वा मां स्वगृहं निन्ये कामनामाह—तद्दास्यमस्त्विति ॥ १४ ॥

ततो भद्रा निरूपयति—पिता म इति । मम मातुलेयो भगवान् श्रुतकीर्त्तिकन्येयं हे कृष्णे द्रौपदि ! कृष्णार्थं वा विशेषतो दाने हेतुः तच्चित्तामिति भ्रातृभिर्दत्तामिति बाच्यार्थं भ्रातर एव द्वारकां गता इति श्रेयम इदं तु दानं सङ्कल्पपूर्वकम् अक्षौहिणीसख्यश्च दाने सह भावमापन्नाः ॥ १५ ॥

कामनामाह—अस्य मे पादसंस्पर्श इति । जन्मनिजन्मनि भवेदिति यदायदा भगवानवतीर्णो भविष्यति तदातदा लक्ष्मीवदहमप्यागमिष्यामीति ननु स्वयमेव तच्छक्तित्वात्स्राविष्यति किमिति प्रार्थ्यत इति चेत्तत्राह—कर्मभिर्भ्राम्यमाणाया इति । जीवभावात्कर्मसम्बन्धः अन्यथा अन्यसम्बन्धिनी कथं भवेयं किमतो यद्येवं तत्राह येन पादस्पर्शेन तत्प्रसिद्धं ब्रह्मानन्दात्मकं श्रेयो भवति आत्मनः स्वस्यात्मगामि वा सप्तैता भक्तिभेदाः—

अर्चनात्मा रुक्मिणी स्यात् श्रवणस्तदनन्तरा ।
सर्वपापक्षयः पूर्वं यस्मादत्र निरूप्यते ॥
एकान्ते च प्रदत्तेति तृतीया स्मृतिरूच्यते ।
चतुर्थ्येव चतुर्थी स्यादावृत्तितीया पञ्चमी मता ॥
सर्वान् बलवतो दुष्टान् विनिग्रहैव कीर्त्तयेत् ।
षष्ठीतु सप्तमी प्रोक्ता सप्तमी तद्विपर्यया ॥
नमने पादसंस्पर्शः प्रतिवारं भवेदिति ।
सख्यरूपात्वष्टमीयं महता विनिरूप्यते ॥
॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सप्त उक्षणः वृषभान् मे पित्रा कृतान् बलीयसे वराय मां दातुं सम्पादितानित्यर्थः । वीराणां दुर्मदं घ्नन्तीति तान् निगृह्य दमयित्वा क्रीडनायासेनेव अजतोकान् छागबालकान् ॥ १३ ॥

वीर्यमेव शुल्कं यस्यां तां मां दासीभिः सहितां चतुरङ्गसेनासहितां स्वपुरं निन्ये ॥ १४ ॥

मातुलपुत्राय कृष्णाय कृष्णे हे द्रौपदि ! ॥१५॥

कर्मभिरिति नरलीलतया स्वदैन्योक्तिस्तत्प्रसिद्धं श्रेयः ॥१६॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उक्षणः वृषान् निगृह्य इत्यनेन अभक्तोपि बहुमूर्तित्वं सूच्यते ॥ १३ ॥

वीर्यमेव शुल्कं येषां, इमां मत्वाज्ञां मां दासीभिः सह चतुरङ्गिणीं मन्त्रिणा दत्तां सेनां वेतिशेषः यः पुरं निन्ये ॥ १४ ॥

हे कृष्णे द्रौपदि ! सेनया सखीजनैश्च सह ॥ १५ ॥

येन श्रीकृष्णेन हेतुभूतेन पादस्पर्शेन वा तत्प्रसिद्धं श्रेयः श्रीकृष्णाभावापत्तिः आत्मनो जीवस्य ॥ १६

भाषा टीका ।

सत्योवाच ।

राजानके बल परिक्षाके वास्ते मेरे पिता नग्नजितने अत्यन्त बल प्रभाव युत तथा अतितीक्ष्ण सींग युत और वीरनके पुरुषार्थके नाश करने वारे एताद्दश सात बैलोंका सम्पादन किया रहे कि जो इन सात बैलोंको एक बारहि नाथि लेवेगा उनको कन्याका विवाह किया जावेगा सो जैसे बालकलोग खेलत २ बकेरियाके बच्चोंको बांध लेतेहैं तैसेहि श्रीकृष्णने शीघ्रहि वशमें करके क्रीडा करते २ उन बैलोंको बांध लिया ॥ १३ ॥

इस प्रकार पराक्रमहि मेरे देनेमें कर रहा उस मोको दासियोंके साथ और चतुरङ्गिणी सेनाके साथ पिताने श्रीकृष्णको अर्थ दिया पश्चात् मार्गमें राजानको जीतकर जो श्रीकृष्ण मोको द्वारकामें लेगया उनका दासी भावहि मोको होय ॥ १४ ॥

भद्रोवाच ।

हे द्रौपदि ! मेरे पिताने मेरे मामाके पुत्र श्रीकृष्णके अर्थ उसको स्वयं बुलायकर श्रीकृष्णमें मेरा मन रहा इस कारण अक्षौहिणी सेनाके साथ और सखीजनोंके साथ मोको देदिया ॥ १५ ॥

कर्मन करके अनेक योनियोंमे भ्रमण करने वारी मोको जन्मजन्मान्तरमें श्रीकृष्णके चरणारविन्द की परिचर्य्या होइ जिस परिचर्य्यासे आत्माका मोक्ष रूप कल्याण होता है ॥ १६ ॥

लक्ष्मणोवाच ।

ममापि राज्ञ्यच्युतजन्म कर्म श्रुत्वा मुहुर्नारदगीतमास ह ।
चित्तं मुकुन्दे किल पद्महस्तया वृतः सुसम्मृश्य विहाय लोकपान् ॥१७॥
ज्ञात्वा मम मतं साध्वि पिता दुहितृवत्सलः ।
बृहत्सेन इति ख्यातस्तत्रोपायमचीकरत् ॥ १८ ॥
यथा स्वयम्वरे राज्ञि मत्स्यः पार्थेप्सया कृतः ।
अयन्तु बहिराच्छन्नो दृश्यते स जले परम् ॥ १९ ॥
श्रुत्वैतत्सर्वतो भूपा आययुर्मत्पितुः पुरम् ।
सर्वास्त्रशस्त्रतत्त्वज्ञाः सोपाध्यायाः सहस्रशः ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

राज्ञि हे द्रौपदि ! यथा मित्रविन्दायास्तथैव ममापि चित्तं मुकुन्दविषयमासीत् सुसम्मृश्य सुविचार्य पद्महस्तया श्रिया वृतः किलातोऽपि मम चित्तं श्रीमुकुन्दे आसेति ॥ १७ ॥

तत्र श्रीकृष्णप्राप्तावुपायमचीकरत् कारयामास ॥ १८ ॥

यथा राज्ञि ! तव स्वयम्वरे पार्थस्येप्सया आप्तुमिच्छया कृतस्तथा मत्स्यं कारितवान् पाठान्तरे पार्थस्येषुणाऽपाकृतः तर्हीमामप्यर्जुन एव किं नाविध्यत्तत्राऽऽह—अयन्त्विति । स मत्स्यो बहिरेवाच्छन्नो नान्तरतः स्तंभलग्नयोर्ध्वदृष्ट्या संलक्ष्यतेऽयन्तु न तथा किन्तु स्तम्भमूले निहितकलशजले केवलं दृश्यतेऽतो दृष्टिरधस्तादुपरि च लक्ष्यमिति श्रीकृष्णव्यतिरेकेण न कस्यापि भेद्य इति भावः ॥ १९—२० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इति सर्वोपरि परमानन्दमयमपि निजभागधेयविशेषकथनं ताभिर्लज्जया संक्षिप्तं मन्वाना तत्र च श्रीद्रौपदीं निजविवाहोद्यमं प्रच्छन्नमिव मन्वानां तर्कयान्ती तद्द्वयमपि परमतन्मदेन सहमाना तासां ज्येष्ठानां सतीनाम् उत्तरसमाप्ताववकाशं प्राप्य सङ्कोचेन निजविवाहवृत्तं विस्तारयन्त्याह-ममेति अच्युतस्य सर्वैश्वर्य्यपरिपूर्णस्य जन्म श्रीदेवक्यां तादृशमाविर्भावं कर्म च श्रीगोकुलक्रीडादिकं चकाराद्रूपादिकञ्च ननु मातुलेयत्वेन निकटत्वात्तस्य जामातृविधानेन भद्रायास्ताविस्तता घटतैव त्वया तु कथं श्रुतमित्यपेक्षायामाह-नारदेति । मुहुरित्यस्योभयतोऽप्यन्वयः ह हर्षे ननु बहुवल्लभेऽस्मिन्नभिलषितमयुक्तं सत्यं विचारेण तन्मात्रैकगतित्वादिलाशयेन तत्रात्मनो विचारमाह-किलेति । पद्महस्तयेति वैदग्ध्यादिकं ध्वनितं तच्च सुशब्देन संशब्देन च समर्थितमपि अत एव लोकपान् श्रीब्रह्मरुद्रादीन् विशेषेण दृक्पातार्थकरणेनापि किम्वा विदूर एव हित्वा वृतो मुकुन्द एव श्रीरोक्मथने अतो ममापि तादृशविचारेण तस्मिन्नेव चित्तमभूदिति भावः । यद्वा मम चित्तं मुकुन्दे आस अतः सुसम्मृश्य चित्तावतरणेन तमेव निश्चित्य विलासेन पद्महस्तया लोकपान् महाभूपतीन् विहाय मयाऽसौ वृतः एवमपि श्लेषेण तद्वृत्तान्तत्वं ध्वनितम् इति प्रथमं संक्षेपेणोक्तिः पश्चाद्विस्तरेण भविष्यति मतं निश्चयम् ॥ १७—१८ ॥

उपायमेवाह-यथेति । यादृशः कृतस्त्वत्पित्रा तादृशः कृतो मत्पित्रापीत्यर्थः । पार्थेषुणापाकृत इति पाठे यथा पार्थेषुणा यथा कृतः तथा श्रीभगवदिषुणेत्यर्थः । यद्यपि स्तम्भमूलत एवोर्द्धदृष्ट्या दृश्योऽसौ तत्रा दृष्टापि दूरत एवावरणं भित्त्वा तन्मात्रमेव छेत्तव्यमिति समयेन पश्चात्क्राम्यत्तदनुसन्धानस्य दुष्करत्वात्त्वत्पितृकृतोपि दुर्वेध एव तथाप्ययं मत्पितृकृतस्ततोपि दुर्वेध इत्याह—अयन्त्विति । सजले जलपरिपूर्णपरिखामण्डले जलगर्भमध्यस्थस्य स्तम्भमूलस्यागम्यत्वेन साक्षाददर्शनात् बिम्बदर्शनमात्रेण पूर्वमपि तद्वस्थितिप्रदेशानिश्चयादिति भावः ॥ १९ ॥

एतदाश्चर्य्यं लोभनञ्च ॥ २० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

बहिश्चान्तःप्रतिबिम्बस्य बिम्बभूतो मत्स्यस्तिरोहितः मत्स्यप्रतिबिम्बत्वेन जलं दृश्यते प्रतिबिम्बेन बिम्बभूतं मत्स्यावस्थानं निरूप्य तत्र वधो दुष्करः मत्स्यप्रतिबिम्बम् ॥ १६-१९ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ लक्ष्मणागीतिं प्रपञ्चयति—ममापीत्यादिना । हे राज्ञि ! नारदेन गीतमच्युतस्य जन्मादिकं श्रुत्वा ममापि यथा मित्रविन्दाय स्तथा ममापि चित्तं मुकुन्दे आसीदित्यर्थः पद्महस्तया श्रिया तदवताररूपया रुक्मिण्येत्यर्थः । वृतः किल अतोपि सुष्ठु विचार्य मम चित्तं मुकुन्दे आसेति संबन्धः ॥ १७ ॥

ज्ञात्वेति । हे साध्वि ! मम तमभिप्रायं ज्ञात्वा मम

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पिता बृहत्सेनो नाम दुहितृवत्सलः अतस्तत्र श्रीकृष्णप्राप्तावुपायमचीकरत् कारयामास ॥ १८ ॥

कोऽसावित्यतस्तं प्रपञ्चयति—यथेति । हे राज्ञि ! यथा तव स्वयम्वरे पार्थेप्सया आर्जुनप्राप्तीच्छया त्वत्पित्रा मत्स्यः कृतः तथा मत्पित्रापि कृत इत्यर्थः । तर्ह्यर्जुनएव किं नाविध्यत्तत्राह अयन्त्विति । स मत्स्यो बहिरेवाच्छन्नो नान्तः स्तम्भसंलग्नयोर्ध्वदृष्ट्या दृश्यते अयं तु न तथा किन्तु स्तम्भमूलनिहितकलशजले केवलं दृश्यतेऽतो दृष्टिरधस्तादुपरि च लक्ष्यमिति कृष्णमन्तरेण न कस्यापि भेद्य इति भावः । बहिराच्छन्नः प्रतिबिम्बस्य बिम्बभूतो मत्स्यस्तिरोहितः स मत्स्यप्रतिबिम्ब एव जले दृश्यते प्रतिबिम्बेन बिम्बभूतमत्स्यावस्थानं निरूप्य तत्र वेधो दुष्कर इति । व्याख्यानान्तरम् ॥ १९ ॥

श्रुत्वेति । एतन्मत्स्ययन्त्रनिर्माणं श्रुत्वा सर्वतो दिग्भ्यः मत्पितुः, पुरमाजग्मुः कथम्भूताः ? सर्वेषां शस्त्राणामस्त्राणां च तत्त्वं याथात्म्यं प्रयोगोपसंहारौ जानन्त इति तथा उपाध्यायैः सहिताश्च ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

लक्ष्मणा परिपाट्यानुपूर्व्येण कथयति—ममापीत्यादि । अपिशब्दः सविशेषकथनार्थं मया तु स्वयमेवासौ वृतः हे राज्ञि द्रौपदि ! तत्प्रकारमानुपूर्व्येण शृण्विति भावः ॥ १७ - १८ ॥

यथा स्वयम्वरे राज्ञीति पुनराज्ञीति सम्बोधनान्तरं हर्षोत्कर्षद्योतकं यथा तव स्वयम्वरं तव पित्रा पार्थेच्छया मत्स्यः कृतः तथा मत्पित्रापि मम कृष्णे किञ्चिद्यान् विशेषः स तु बहिर्दृश्यते अयन्तु आच्छन्नः परं केवलं जले दृश्यत इति भावः ॥ १९—२७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

लक्ष्मणा स्ववृत्तान्तं द्रौपद्यभिमाननाशायाह—ममापीति । सा हि स्वविवाहमुत्कृष्टं मन्यते राधावेधो हि दुर्लक्ष्यो भवति ततोऽप्यधिकश्चेद्भगवत्कृतोऽपि भवेत् ततो भर्तृसख्यं विहाय भगवत्सखीभवेदिति सा प्रथमं स्वमनःप्रीतिमाह—स एव सख्यं प्राप्नोति यस्य जन्मप्रभृति जन्मान्तरेषु वा भगवत्येव चित्तं भवति हे राज्ञीति सावधानतया श्रवणार्थं सम्बोधनम् अच्युतत्वं भजनीयत्वे मुख्यो हेतुः जन्मभक्तोद्धारार्थमेव कर्म तु भक्तकार्यार्थमेवेति श्रुत्वा कुलशीलौ वा मुहुर्नारदगीतमिति निर्द्धारार्थं प्रमाणानुवृत्तिरुक्ता मुकुन्दे चित्तमासेति तदेकप्रवणं जातम् अच्युतत्वादैहिकसुखदातृत्वं मुकुन्दत्वान्मोक्षदातृत्वमिति तथापि योगिगम्यः कथं स्त्रीमात्रस्य वरणीयो भवेत्तत्राह—पद्महस्तया किल वृत इति पद्मं हस्ते यस्या इति दीपमिव गृहीत्वा सर्वं दृष्ट्वा विचार्य ग्रहणं निरूपितं ननु तावता किं त्वयाऽन्यो ग्राह्य इति चेत्तत्राह—विहाय लोकपानिति । अन्ये लोकपाला अप्रयोजकाः सुदुष्टा इति ज्ञापितम् ॥ १७ ॥

यत्परं मनस्तस्मै देयमिति स्वयं दाने लज्जा भवतीति साधारणस्वयम्वरे च यः कश्चिद्वृहीष्यतीति पणबन्धो महान् कर्तव्य इति मम पिता मन्मनो ज्ञात्वा दुहितृवत्सलः यथाभगवानेव सिद्धो भवति तथोपायं कृतवानित्यर्थः ॥ १८ ॥

तमुपायमाह—यथा स्वयंवर इति । पार्थेप्सया अर्जुन एव गृह्णात्विति ततोऽपि मदीयो विशिष्ट इत्याह—अयन्तु बहिराच्छन्न इति स तु बहिर्दृश्यते परं जले , तस्य प्रतिच्छाया उपलभ्यत इत्यर्थः । मदीयस्य तु जलेऽप्युपलम्भो नास्ति सर्वथा बहिराच्छन्न एव अतः पार्थस्याप्यगम्यं भविष्यतीति पितुरभिप्रायः ॥ १९ ॥

ततः सर्वे बलोन्नद्धाः समागता इत्याह—श्रुत्वैतदिति । आगमने तेषां बलमाह—सर्वास्त्रशस्त्रतत्त्वज्ञा इति । अस्त्रशस्त्रयोर्वैदिकलौकिकयोः क्षेपाक्षेपरहितयोर्वा तत्त्वं स्वरूपम् अत्र स्थित्वा प्रक्षेपे एवं लक्ष्यं भवतीति अस्मिन् वा शस्त्रे योजिते लक्ष्यवेध इति अकस्माद्विस्मरणे सभाकम्पे वा सोपाध्यायाः सहस्रश इति एकस्य भङ्गे अपरो गृहीष्यतीति स्वतस्तेभ्यो आदानेऽपि प्रतिष्ठा न भवतीति समागताः सर्व एव पित्रा पूजिताः परं तारतम्यानुसारेण तत्र तरतमभावे नियामकं वीर्यं वयश्च मिलितम् अन्यथा तदुपाध्यायानामेव पूजनं स्यात् तत्रैव भगवन्मन्त्राभिमन्त्रितं धनुः शरश्च तत्रैव स्थापितं ते समाददुः आदाने हेतुः वेधं पर्षदि सभायां यतो मद्विवः मत्कामाः ततस्तेषां भङ्गप्रकारमाह—धनुरेवादाय केचिदसृजन् तत्र हेतुः सज्जीकर्तुमनीश्वरा इति केचित्पुनः वेधमात्रमेव पणीकृतमिति सज्जीकरणमप्रयोजकमिति अन्यैर्बहुभिर्वा सज्जीकृतमेव धनुः आदाय कोष्ठपर्यन्तं ज्यामाकृष्य अमुना धनुषा हताः सन्तः पतिताः कर्णान्तं ज्याकर्षणं कर्तव्ये कोष्ठप्रदेशे तु ज्या तिष्ठत्येव तस्यैवान्ते समीपे कथञ्चिदानीतवन्तः तावतैव बलक्षयो जातः तथैव इति पतिताः तदनन्तरं स्वोपरि पतितेन धनुषा हता इत्यर्थः ॥ २०-२२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

हे राज्ञि ! मुकुन्दे चित्तम आस आसीत् अतः पद्महस्तया मया लोकपालानपि विहाय मुकुन्द एव वृतः ॥ १७—१८ ॥

पार्थेप्सया अर्जुनप्राप्तीच्छया कृतः पार्थेष्वपाकृतः इति पाठे पार्थस्य इषुणा अपाकृतः विद्धः तर्हीममप्यर्जुन एव किं नाविध्यदतो विशेषमाह—अयन्तु परमचञ्चलो मत्स्यः स्वजले स्तम्भमूलगतजलसहितकलशे परं केवलं दृश्यते नतूर्द्ध्वमित्यन्वयः । अतो दृष्टिरधस्तादुपरि तु लक्ष्यमिति कृष्णव्यतिरेकेण न कस्यापि भेद्य इति भावः । तेन त्वत्पितृकृतो मत्स्यः खलु बहिराच्छन्नोऽपि स्तम्भसल्लग्नया ऊर्ध्वदृष्ट्या संलक्ष्यत एवेति तदनुसन्धानचतुरेणार्जुनेन स विद्ध एवेति भावः ॥ १९—२० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आस आसीत् ॥ १७ ॥

तत्र मुकुन्दप्राप्तौ अचीकरत् कारयामास ॥ १८ ॥

पार्थेप्सया अर्जुनप्राप्तीच्छया यथा मत्स्यः कृतः तव स्वयम्वरे तथा मम स्वयम्वरेऽपीति तर्ह्यर्जुन एव. किं नाविध्यदित्यत्राह

पित्रा सम्पूजिताः सर्वे यथावीर्यं यथावयः ।
आददुः सशरञ्चापं वेद्धुं पर्षदि मद्धियः ॥ २१ ॥
आदाय व्यसृजन् केचित् सज्यं कर्त्तुमनीश्वराः ।
आकोष्ठं ज्यां समुत्कृष्य पेतुरेकेऽमुना हताः ॥ २२ ॥
सज्यं कृत्वाऽपरे वीरा मागधाम्बष्ठचेदिपाः ।
भीमो दुर्योधनः कर्णो नाविन्दंस्तदवस्थितिम् ॥ २३ ॥
मत्स्याभासं जले वीक्ष्य ज्ञात्वा च तदवस्थितिम् ।
पार्थो यत्तोऽसृजद्बाणं नाच्छिनत् पस्पृशे परम् ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तुशब्दो विशेषं दर्शयति तव स्वयम्वरे बहिरनाच्छन्नः अयं मम स्वयम्वरे प्रकृत[सु]सजले स्तम्भमूलपात्रे प्रतिबिम्बरूपेण परं केवलं दृश्यतं बहिराच्छन्नः साक्षाद्द्रष्टुमनर्हः अतस्तच्छेदं श्रीकृष्ण एव समर्थ इतिभावः ॥ १९—२० ॥

भाषा टीका ।

लक्ष्मणोवाच

हे राज्ञि द्रौपदि ! नारदजीने वारम्वार श्रीकृष्णका जन्म और कर्मका गान किया रहा उसको सुनकर तथा हस्त में कमल पुष्प धारन करने वारी लक्ष्मी ने सब लोक पालनको छोडकर भगवान् क्यांहि वरेहैं इस वृत्तान्तको· अच्छी तरह के विचारकर मेरा चित्त श्रीमुकुन्दमें रहा ॥ १७ ॥

हे साध्वि ! पुत्रीमें प्रेमवारे वृहत्सेन इस नामसे प्रसिद्ध मेरे पिताने मेरे अभिप्रायको जानकर श्रीकृष्णकी प्राप्ति होनेमें एक उपाय करवाया ॥ १८ ॥

हे राज्ञि ! जैसे आपकें स्वयम्वरमें अर्जुनकी प्राप्तिकी वांछा से आपके पिताने मत्स्य कराया रहा तैसेहि मेरे पिताने कराया परन्तु आपके पिताका करायो भयो मत्स्य तो बाहिरकी तर्फसें हि ढका रहा भीतरकी तर्फ से न हि ढका रहा इस वास्ते स्तम्भके सहारेसें देखनेमें लखाई परःरहा. और मेरे पिता का करायो भयो मत्स्य तो स्तम्भ के मूल मे स्थित कलश के जल में हि केवल दीखता रहा इस कारण नीचे को दृष्टि और ऊपर को लक्ष्य होने से श्रीकृष्ण के सिवाय दूसरा उसका वेध नहि करसके हो ॥ १९ ॥

इस प्रकार के मत्स्य यन्त्र निर्माण को सुनकर सर्व शस्त्र· अस्त्र के तत्त्व को जान ने वारे और शस्त्र प्रयोगादि के शिक्षा करने वारेन सहित हजार हों, राजा लोंग सब १०दिशान ते मेरे पिता के पुर में आए ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मत्स्यं वेद्धुम् पर्षदि संसदि मद्धियो मय्येव धीर्येषामिति अन्यासिक्ता न वेद्धुं शक्ता इति भावः ॥२१ ॥

तदेवाऽऽह—आदायेति । अमुना चापेन ॥ २२ ॥

नाविन्दंस्तदवस्थितिमिति मागधादीनां क्रियाशक्तिरेव नतु लक्ष्याभिज्ञतेत्यर्थः ॥ २३ ॥

यतो यत्नवान् असृजत् मुमोच स बाणो मत्स्यं नाच्छिनत् परं केवलं पस्पर्श ज्ञानवानप्यर्जुनो बलेनापूर्ण इत्यर्थः ॥ २४-२५ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

चापं तद्विशेषं मत्पित्रैव तत्र स्थापितमिति भावः । पर्षदि वेद्धुमिति प्रगल्भता मद्धिय इति वेधे प्रयत्नपरतोक्ता तथापि ॥ २१ ॥

एके बलिनः आकोटि चापस्यैकस्याङ्कोटौ ज्यामादौ निधाय पश्चादन्यस्यां योजयितुं तत्पर्य्यन्तं समाकृष्य स्थिता अमुना हताः ज्यायोजनाशक्त्योच्चलितेन चापेनैव हता इत्यर्थः ॥ २२ ॥

अम्बष्ठः अम्बष्ठदेशाधिपः ॥ २३ ॥

मत्स्यस्याभासं छायां विशेषेण महाभिनिवेशेन मुहुरीक्षित्वा केवलं पस्पर्शेति बाणैकदेशेनैव संयोगात् नतु तन्मध्यभागेन स्पर्शज्ञानन्तु बाणे तत्सङ्घर्षणचिह्नदर्शनात् तत्रार्जुनस्य प्रवृत्तिः श्रीभगवन्माहात्म्यविस्तारणाय ज्ञेया ॥ २४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचान्द्रिका ।

पित्रेति । मम पित्रा वीर्यवयःस्थानाद्यनुरूपं सर्वे सम्पूजिताः मय्येव धीर्येषां ते मत्स्यं वेद्धुं पर्षदि, सभायां सशरं चापमाददुः ( जगृहुः ) मद्धिय इत्यस्यान्यचित्तत्वाच्च वेद्धुं नाशक्नुवन्निति भावः ॥ २१ ॥

तदेवाह—आदायेति । केचिद्व्यसृजन् लक्ष्यादन्यत्र प्रयुक्तवन्त इत्यर्थः । केचित्तु आकोटि धनुषः कोटिपर्यन्तं ज्यां समुत्कृष्य सज्जीकर्त्तुं ज्यासहितं कर्त्तुमारोपितज्याकं कर्त्तुमित्यर्थः । अनी·

राजन्येषु निवृत्तेषु भग्नमानेषु मानिषु ।
भगवान् धनुरादाय सज्यं कृत्वाऽथ लीलया ॥ २५ ॥
तस्मिन् सन्धाय विशिखं मत्स्यं वीक्ष्य सकृज्जले ।
छित्त्वेषुणाऽपातयत्तं सूर्ये चाभिजिति स्थिते ॥ २६ ॥
दिवि दुन्दुभयो नेदुर्जयशब्दयुता भुवि ।
देवाश्च कुसुमासारान् मुमुचुर्हर्षविह्वलाः ॥ २७ ॥
तद्रङ्गमाविशमहं कलनूपुराभ्यां पद्भ्यां प्रगृह्य कनकोज्ज्वलरत्नमालाम् ।
नूत्ने निवीय परिधाय च कौशिकाग्र्ये सव्रीडहासवदना कबरीधृतस्रक् ॥ २८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्वराः असमर्थाः अमुना चापेन हतास्ताडिताः निपेतुः ॥ २२ ॥

सज्यमिति । अपरे जरासन्धादयस्तु वीराः सज्यं कृत्वापि लक्ष्यावस्थितिं नाविन्दन् मागधादीनां क्रियाशक्तिरेव न तु लक्ष्याभिज्ञते (तिभावः) त्यर्थः ॥ २३ ॥

मत्स्येति । पार्थोऽर्जुनस्तु जले मत्स्याभासं मत्स्यप्रतिबिम्बं वीक्ष्य तदवस्थितिं मत्स्ययन्त्रावस्थानदेशं ज्ञात्वा यत्तो यत्नवान् बाणं व्यसृजन्मुमोच स बाणो मत्स्यं नाच्छिनत् परं केवलं पस्पर्श ज्ञानवानप्यर्जुनो न वेद्धुं प्रबभूवेत्यर्थः ॥ २४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमप्रसिद्धानां स्वरूपमुक्त्वा प्रसिद्धानामाह—सज्यं कृत्वेति । अपरे पूर्वोक्तेभ्यः अन्ये मागधो जरासन्धः अम्बष्ठो . भगदत्तः हस्तिपकत्वात् चैद्यः शिशुपालः तथैव भीमो दुर्योधनः कर्णश्च तथापि तस्य मत्स्यस्य अवस्थितिं न विदुः क तिष्ठतीति ततोऽर्जुनः आच्छादनसहितस्य जले प्रतिबिम्बं दृष्ट्वा मत्स्याभासं तत्र ज्ञात्वा अदकः स्थाने तिष्ठतीति निश्चित्य यत्तस्सन् पार्थः बाणमसृजत् तावताऽपि लक्ष्यं नाच्छिनत् परं पस्पर्श स्पर्शमेव सम्पादितवान् नरनारायणयोरेतावदन्तरं शक्तिद्वयमेकस्य पूर्णम् अपरस्यैका कथञ्चिदिति ॥ २३—२४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पर्षदि सभायां मद्धियः मयि धीः प्राप्त्याशा येषां ते ॥ २१ ॥

आ कोटि चापस्याग्रपर्यन्तं ज्यां समुत्कृष्यापि तत्र निधातुमशक्ताः अमुना चापेनैव हताः ॥ २२ ॥

अम्बष्ठोऽम्बष्ठदेशाधिपतिः तदवस्थितिं नाविन्दन्स्थितिं मागधादीनां क्रियाशक्तिरेव न तु लक्ष्याभिज्ञतेति भावः ॥ २३ ॥

मत्स्याभासं छायां वीक्ष्य विशेषेण महाभिनिवेशेन मुहुर्वीक्षित्वा यत्तः यत्नपरस्सन् केवलं पस्पर्शेति तदेकदेश एव न तु तन्मध्यदेशे बाणसंयोगादिति भावः । स्पर्शज्ञानन्तु बाणस्य तत्सङ्घर्षणाद्विहात लक्ष्याभिज्ञानवत्त्वेपि तादृग्बलाभावादेव न तच्छेद इति केचिदाहुः ॥ १४—२५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पर्षदि संसदि ॥ २१ ॥

अमुना चापेन ॥ २२—२५ ॥

---

भाषाटीका ।

वीर्यके अनुगुण अवस्थाके अनुगुण उन सब राजाओंका मेरे पिताने सत्कार किया मेरे विषयमें उन राजाओंकी बुद्धि हुई इस कारण सभामें मत्स्ययन्त्रवेधनके वास्ते बाण सहित धनुषको उन्होंने उठाया ॥ २१ ॥

धनुषकी प्रतिञ्चा चढानेमें असमर्थ होकर के एक राजा ओंने तो धनुषको लेकर छोड दिया और कई एक राजा लोग धनुषके द्वितीय छोरमें आरोपण करनेको प्रतिञ्चा खींचकर स्थितो भये परन्तु आरोपण करनेमें असमर्थ होने ते उनके हस्तसे धनुष छूटकर उनहीके लगा इस कारण वे राजालोग गिर पडे ॥ २२ ॥

उपरोक्त राजाओंसे भिन्न भीमसेन दुर्योधन कर्ण और मगधदेशके अम्बष्ठदेशके चन्देरीदेशके वीरलोगोंने धनुष पर प्रतिञ्चातो चढादी परन्तु उस मत्स्यकी स्थितिको उन्होंने नहीं जानी ॥ २३ ॥

जलमें मत्स्यके प्रतिबिम्बको देखकर और उसकी स्थितिको भी जान कर अर्जुनने सावधान होकर बाण छोडा परन्तु अर्जुनके बाणने मत्स्यका छेदन नहि किया केवल स्पर्शमात्र किया ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अभिजिति सर्वार्थसाधके मुहूर्ते ॥ २६—२७ ॥

भगवत्प्राप्तिहर्षनिर्भरेणाऽऽत्मानमेवानुवर्णयन्त्याह द्वाभ्याम्—तद्रङ्गमिति । तस्तदा कलौ कलस्वनौ नूपुरौ ययोस्ताभ्यां

### श्रीधरस्वामिकृतभावार्थदीपिका ।

पद्भ्यां रङ्गं प्राविशं कनकेनोज्ज्वलां रत्नमालां निवीय प्रावृत्य परिधाय च नीवीबन्धेन च कौशिकाग्र्ये उत्तमकौशेयवस्त्रे सव्रीडो हासो यस्मिंस्तद्वदनं यस्याः सा कबर्यां धृताः स्रजो यया सा ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

राजन्येष्विति युग्मकम् । वीक्ष्य विलासेन दृष्ट्वा अभिजितीत्यनेन मध्याह्नो ज्ञेयः अतस्तदुपरि रविस्थित्याऽधिकदुर्लक्ष्यत्वञ्च सूचितम् ॥ २५—२६ ॥

भुवि ये जयशब्दाः तैर्युतास्तत्समकाला दुन्दुभयो दिवि नेदुरित्यर्थः ॥ २७ ॥

प्रकर्षेण परमादरादिना हस्ताभ्यां गृहीत्वा नूत्ने इत्यादिकं विवाहे तदपेक्षत्वात् व्रीडा सभादिना अत एव हासः अन्तरानन्देन प्रसादमात्रं तद्युक्तं वदनं यस्याः इति वदनस्यैव तत्तद्धर्मत्वं नतु मम कृत्रिममित्यर्थः ॥ २८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भगवांस्तु विव्याधेत्याह—राजन्येष्विति । मानिषु साहङ्कारेषु राजन्येषु भग्नमानेष्वत एव निवृत्तेषु च सत्सु सूर्ये अभिजिति स्थिते ( सति ) सर्वार्थसाधके मध्याह्ने इत्यर्थः । लीलया अनायासेनैव तस्मिन् धनुषि विशिखं बाणं सन्धाय सकृदेव जले वीक्ष्य इषुणा मत्स्यं छित्वा न्यपातयत् ॥ २५—२६ ॥

भुवि जयशब्देन युताः ( दुन्दुभयो )देवदुन्दुभयो नेदुः यदा दिवि दुन्दुभयो नेदुस्तदैव भुवि जयशब्दा बभूवुरित्यर्थः ॥ २७ ॥

भगवत्प्राप्तिजहर्षनिर्भरेणात्मानमेवानुवर्णयन्त्याह—तदिति द्वाभ्याम् । तत् तदा नूत्ने नवीने कौशिकाग्र्ये उत्तमकौशिकेये (कौशेये) वस्त्रे परिधाय सव्रीडो हासो यस्मिंस्तद्वदनं यस्याः कबर्यां धृताः स्रजो यया सा अहं कनकेनोज्ज्वलां रत्नमालां निवीय प्रगृह्य कलौ कलस्वनौ नूपुरौ ययोस्ताभ्यां पद्भ्यां रङ्गं प्राविशं प्रविष्टास्मि ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तद्रङ्गमाविशमित्यादि । अहमिति हर्षोत्कर्षं गर्वपरम् औत्सुक्यादात्मानं विशिनष्टि—कलनूपुराभ्यामित्यादि । २८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं साधारणप्रसिद्धातिप्रसिद्धनिराकरणे जाते सर्व एव निवृत्ता इत्याह—राजन्येषु निवृत्तेष्विति । ततः कृष्णः किङ्करिष्यतीति शङ्कां वारयितुं भगवानित्याह—लीलया च सज्यं कृतवान् अनेनादित आरभ्य स्वयमेव सर्वं कृतवान् नत्वन्यकृतशेषः स्थापित इति ज्ञापितं लीलया मत्सन्तोषार्थं तस्मिन् सन्धाय विशिखमिति लौकिकन्यायेनैव मारितवानिति ज्ञापितं ततोऽर्जुनसन्तोषार्थं सकृन्मत्स्यं जले वीक्ष्य इषुणा छित्वा जलेऽपातयत् तस्मिन्नेव समये अभिजिल्लग्नं तेनैव सर्वे दोषाः परिहृता इति लौकिक एव प्रकार उक्तः ततो भगवता सर्वजीवाशक्यं कृतमिति इदमेकं चरित्रं लोके समुत्पन्नमिति सन्तोषाद्दिवि दुन्दुभयो नेदुः जयशब्दाश्च भूमावपि नरदुन्दुभयो जयशब्दाश्च ततो देवानां भगवान् स्वोत्कर्षं प्रकटीकृतवान् अतःपरं दैत्यवधं करिष्यतीति सन्तोषात् देवाश्चकारादन्येऽपि सिद्धादयः कुसुमासारान् मुमुचुः हर्षेण विक्लवाश्च जाताः ॥ २५—२७ ॥

ततः पणः सिद्ध इति मया वृत इत्याह—तद्रङ्गमाविशमहमिति द्वाभ्याम् । आत्मानं वर्णयत्येकेन द्वितीयेन स्वक्रियां विषयाः पञ्चविधाः शब्दादयः पञ्चापि मयि सन्तीति पञ्च विशेषणानि तादृशी अहं तद्रङ्गस्थानं प्राविशं यत्र विवाहो विवाहोत्सवः कलनूपुराभ्यामिति सशब्दान्याभरणानि निरूपितानि एतादृशपद्भ्यामुपलक्षिता कनकोज्ज्वलरत्नमालामिति रूपसम्पत्तिर्निरूपिता सा माला भगवतः कण्ठे देयेति स्वतुल्यतां निरूपयन्ती स्वस्यैव रूपातिशयं निरूपयति—ततः कौशिकाग्र्ये पट्टवस्त्रद्वयम् एकं निवीयोपरिधृत्वा अपरं परिधाय चकारात् कञ्चुकवदपि कृत्वा अनेन स्पर्शोत्कर्षो निरूपितः सव्रीडहासवदनेति रसः आन्तरभावसूचिका हासो बहिर्मोहजनकरूपः कबर्यां धृताः स्रजो ययेति गन्धः एवं सर्वगुणपूर्णा मुरारेरंसे स्वमालां निदध अग्रे रसशङ्काव्यावृत्त्यर्थं राज्ञो निरीक्षणं कृतवती ॥ वक्त्रमुन्नीय वक्त्रस्योन्नयने हेतुः उरुकुन्तलकुण्डलत्विड्गण्डस्थलमिति उरुकुन्तलानि यस्मिन् मुखे तेन कुन्तलानां प्रतिबन्धव्यावृत्त्यर्थमुन्नयनं कुण्डलत्विड्युक्तगण्डस्थलमिति सन्दर्शने विद्युता हते इव नेत्रे कुण्डलकान्त्याघातात् विषयदर्शनेन समर्थे अनेन प्रदर्शनार्थं मुखवर्णनापि कृता किञ्च यथा तेषां प्रतिघातकत्वं न भवति तथा दृष्टवती तदर्थमाह—शिशिरहासकटाक्षमोक्षैरिति । शिशिरः सर्वतापहारी हासः उत्पन्न एव सर्वाह्लादकरः तत्सहिता ये कटाक्षमोक्षाः एकेन वशीकरणमपरेण हननमिति आदौ दर्शनं न दोषाय सर्वानेव राज्ञो निरीक्ष्य परितः शनकैर्दृष्टिं प्रसारयन्ती तत्र भगवन्तं दृष्ट्वा तस्य मुरारेरंसे अनुरक्तहृदया सती मनोमालां दत्त्वा स्वमालां स्वप्रतिकृतिरूपां रत्नमालाम् अंसे विदधे ॥ २८—२९ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी

अभिजिति मध्याह्ने इति तदा च मत्स्योपरि सूर्य्य इति अतिदुर्लक्ष्यत्वेऽपीति भावः ॥ २६—२७ ॥

तत्कालभवं स्वहर्षं स्मरन्ती तादात्विकं स्वयम्वरणं स्वस्य वर्णयन्त्याह—तद्रङ्गमिति द्वाभ्याम् । तत्तदा कलौ कलस्वनौ नूपुरौ ययोस्ताभ्यां कौशिकाग्र्ये उत्तमकौशेयवस्त्रे निवीय प्रावृत्य परिधाय ॥ २८ ॥

---

उन्नीय वक्त्रमुरुकुन्तलकुण्डलत्विड्गण्डस्थलं शिशिरहासकटाक्षमोक्षैः ।
राज्ञो निरीक्ष्य परितः शनकैर्मुरारेरंसेऽनुरक्तहृदया निदधे स्वमालाम् ॥ २९ ॥
तावन्मृदङ्गपटहाः शङ्खभेर्यानकादयः ।
निनेदुर्नटनर्तक्यो ननृतुर्गायका जगुः ॥ ३० ॥
एवं वृते भगवति मयेशे नृपयूथपाः ।
न सेहिरे याज्ञसेनि ! स्पर्द्धन्ता हृच्छयातुराः ॥ ३१ ॥
मां तावद्रथमारोप्य हयरत्नचतुष्टयम् ।
शार्ङ्गमुद्यम्य सन्नद्धस्तस्थावाजौ चतुर्भुजः ॥ ३२ ॥
दारुकश्चोदयामास काञ्चनोपस्करं रथम् ।
मिषतां भूभुजां राज्ञि मृगाणां मृगराडिव ॥ ३३ ॥
तेऽन्वसज्जन्त राजन्या निषेद्धुं पथि केचन ।
संयत्ता उद्धृतेष्वासा ग्रामसिंहा यथा हरिम् ॥ ३४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अभिजिति सर्वार्थसाधके मुहूर्ते मध्याह्नसमये ॥ २६—२७ ॥

स्वशोभया श्रीकृष्णं वशीकर्तुं प्रवृत्तापि तत्कटाक्षविमोहिता स्वयमहमासमित्याशयेनाह द्वाभ्याम्-तदिति । तत्तदा कौशिकाग्र्ये उत्तमकौशेये वस्त्रे निवीय प्रावृत्य परिधाय च सव्रीडो हासो यस्मिन् तद्वदनं यस्याः सा कबर्यां धृताः स्रजो यया साहं कलौ मधुरस्वनौ नूपुरौ ययोस्ताभ्यां कनकेनोज्ज्वलां रत्नमालां प्रगृह्य रङ्गमाविशं प्रविष्टवती ॥ २८ ॥

भाषा टीका ।

इस प्रकार अहंकारीयों का अहंकार का भंग होगया इसी कारण मत्स्यके वेधकरनेसे जब राजालोग निवृत्तहोगये तब भगवानने धनुषको लेकर उसपर प्रतिंचा चढाकर विना परिश्रमके लीलाके साथ ॥ २५ ॥

अनंतर धनुषमें बाण का सन्धान कर जलमें एकवार मत्स्य को देखकर उस समय अभिजित नक्षत्र पर सूर्य्य का स्थिति रही तबहि बाणसे मत्स्यको छेदनकरके उसको नीचे गिरा दिया ॥ २६ ॥

मत्स्यको वेधन होनेपर स्वर्गमें जयश्ध्वनि के साथ दुन्दुभि बजने लगीं' और हर्षसे विह्वलहुए देवताओंने भूमि पर पुष्पन की वर्षा करी ॥ २७ ॥

उस समय नवीन श्रेष्ठ रेशमी वस्त्रनको नीचे उपर धारण कर और कनकसे प्रकाशमान रत्नों की माला को लेकर, केशों के जूडेमें मालाधारणकिये लज्जा सहित हास युक्त मुख सम्पन्न मैंने' मधुर शब्दायमान नूपुर युत चरणोंसे चलकर रङ्गभूमिमें प्रवेश किया ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

उरवः कुन्तलाः यस्मिन् कुण्डलयोस्त्विषो ययोस्ते गण्डस्थले यस्मिंस्तच्च तच्च शिशिरः सन्तापहरो हासो येषु तैः कटाक्षमोक्षैरपाङ्गमोक्षणविलासैः अनुरक्तं हृदयं यस्याः सा अहम् ॥ २९ ॥ ३० ॥

याज्ञसेनि हे द्रौपदि ! ईशे श्रीकृष्णे मया वृते सति स्पर्धन्तः स्पर्धमानाः नन्वेवं परमैश्वर्यं दृष्टवतां कुतः स्पर्धाऽत्र सरस्तत्राऽऽह हृच्छयातुरा इति हृच्छयेन कामेनाऽऽतुरा विवशाः कामविजृंभिता स्पर्धेतिभावः ॥ ३१ ॥

हयरत्नानां चतुष्टयं यस्मिंस्तं रथं द्वाभ्यां मामालिङ्ग्य द्वाभ्यां धनुर्बाणौ गृहीत्वा चतुर्भुजस्तस्थौ ॥ ३२ ॥

मृगाणां मिषतां मृगराडिव तदा हरिर्जगामेति शेषो ज्ञातव्यः दारुकस्यैव वा मृगराजोपमा ॥ ३३ ॥

अन्वसज्जन्त पृष्ठतः सक्ता बभूवुः निषेद्धुं प्रतिबन्धं कर्तुं केचन पुरतो गत्वा पथि संयत्ता बभूवुरित्यर्थः । उद्धृतेष्वासाः ऊर्ध्वकृतचापाः ग्रामसिंहाः श्वानो हरिं सिंहं यथेति ॥ ३४ ॥ ३५ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

कुन्तलानां गण्डान्तःपतनं कर्णसमीपस्थचूर्णकुन्तलानां बन्धनविशेषेण तत्समीपभासेः स्थितान् राज्ञो निरीक्ष्य शनकैरेव

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्र शिशिरेत्यादिलक्षणश्रीकृष्णकटाक्षमोक्षैः अनुरक्त-हृदया स्त्रीयां तदर्थं हस्तरचितां गृहीतां मालां मुरारेरिति महावीरत्वादिना मालानिधानयोग्यतोक्ता 'अन्यत्तैः यद्वा उरवः कुन्तलानां कुण्डलयोश्च त्विषो ययोस्ते गण्डमण्डले यस्मिन् तत् शिशिरः शीतलो मन्द इत्यर्थः । मुरारेरेवानुरक्तं हृत् यतते यातीति तथा सेति मिथः प्रेमोक्तम् अन्यत्समा-नम् ॥ २९ ॥

तावदिति तत्क्षणत एवेत्यर्थः ॥ ३० ॥

एवमनेनोक्तप्रकारेणापि वृते तावदपि दुराशाग्रस्तत्वा-दितिभावः । भगवति सर्वशक्तिमति यतः ईशे साक्षात्परमेश्वरे नृपयूथपा राजवर्गश्रेष्ठाः जरासन्धादयः हे याज्ञसेनीति विस्म-यात् अहो यायजूकद्रुपदकन्यात्वेन सद्बुद्धिमती त्वं तेषां चाहर्य-भरं पश्येति भावः ॥ ३१ ॥

हयरत्नचतुष्टयमिति रथस्य महावेगादिकं सूचितम् आजौ युद्धार्थे सन्नद्धः उद्यतः सन् रथस्थो रथोपर्य्येवोर्द्ध्वस्थानेन असीत् ॥ ३२ ॥

काञ्चनोपस्करं सौवर्णपरिच्छदमिति दूरदृश्यत्वादिकं ध्वनितम् अतो मिषतां पश्यतामपि अनादरे षष्ठी अतो मृगाणामिति दृष्टान्तेन श्रीदारुकस्य निर्भयत्वमुक्तं हे राज्ञीति परमो-त्साहात् ॥ ३३ ॥

श्वानोऽप्युद्धृतेष्वासधनुरूर्ध्वपुच्छा भवन्ति अन्यत्तैः यद्वा केचिद्रथवेगतोऽप्युत्सज्जितुमशक्ता दूर एवावस्थिताः आशुग-रथास्तु केचन ते कुक्कुरयोऽन्वसज्जन्त किमर्थं पथि निषेद्धुं रोद्धुमित्यर्थः । अतः संयत्ता युद्धोद्यताः अत एवोद्धृतेष्वासाः सन्तः ॥ ३४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ग्रामसिंहाः श्वानः हरिं नरसिंहम् ॥ ३४—४३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उन्नीयेति । उरवः कुन्तलाः यस्मिन् कुण्डलयोस्त्विषो ययो-स्ते गण्डस्थले यस्मिंस्तद्वक्त्रम् उन्नीय परितः शनैः राज्ञो राजन्यान्निरीक्ष्य मुरारेः श्रीकृष्णस्य शिशिरः सन्ताप-हरः हासो येषु तैः कटाक्षमोक्षैरपाङ्गवीक्षणविलासैरनुरक्तं हृदयं चित्तं यस्याः साऽहं तस्य अंसे स्कन्धे मालां निदधे न्यधां निहितवत्यस्मि ॥ २९ ॥

तावदिति । तदैव नदा मर्त्तक्यश्च ननृतुः ॥ ३० ॥

एवमिति । इत्थमीश्वरे भगवति मया वृते सति हे याज्ञसेनि द्रौपदि ! नृपयूथपाः हृच्छयेन कामेनातुराः स्पर्द्धमानाः न सेहिरे ॥ ३१ ॥

मामिति । हयरत्नानामश्वश्रेष्ठानां चतुष्टयं यास्मिन् रथम् आरोप्य तत्सन्निधाप्येत्यर्थः । द्वाभ्यां भुजाभ्यामालिङ्ग्य द्वाभ्यां धनुर्बाणाद् गृहीत्वा चतुर्भुजो युद्धे तस्था-वित्यर्थः ॥ ३२ ॥

दारुक इति । काञ्चनेनोपस्कृतं रथं गमयामास हे राज्ञि ! मृगाणां क्षुद्राणां पश्यतां ( सतां ) मृगाधिप इव भूभुजां मिषतां सतां हरिर्जगामेति शेषोऽवगन्तव्यः ॥ ३३ ॥

त इति । केचन ते राजन्याः सन्नद्धा आयत्ताः उद्यताः इष्वासाश्चापा येषां ते पथि निषेद्धुं वारयितुम् अन्वसज्जन्त पृष्ठतो-ऽन्वधावन् यथा ग्रामसिंहाः श्वानो हरिं सिंहं तद्वत् ॥ ३४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शिशिरहासकटाक्षमोक्षैरुपलक्षितं वक्त्रं । राज्ञो निरीक्ष्य अवज्ञयैव दृष्ट्वा ॥ २९—४० ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

उन्नीयेत्यादि । राज्ञो निरीक्ष्येति राज्ञः अनिरीक्ष्य जुगु-प्सया तान् न दृष्ट्वेत्यर्थः । निरीक्ष्येति वा ॥ २९-३८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तन्मम वरणं सर्वसम्मतं जातमिति ज्ञापयितुं तदानी-मुत्सवाद्यानाह—तावन्मृदङ्गपटहा इति । पञ्चैतानि मङ्गल-वाद्यानि नित्यानि गीतवाद्यनृत्यानि वक्तव्यानीति वाद्यानि उक्त्वा नृत्यमाह—नटनर्त्तकया ननृतुरिति । गानञ्चाह—गाय-काश्च जगुरिति ॥ ३० ॥

ततो यज्जातं तदाह—एवं वृते भगवतीति भगवत्त्वात् सर्वसम्पत्तिः ईशत्वादावश्यकः अन्ये नृपयूथपा इति नृपाणां यूथपत्वं शूकरत्वं निरूपितम् एकचरो हि सिंहः यूथचरास्त इति तेषां वध्यत्वं निरूपितं ततो न सेहिरे अनेन तेषामन्तःकरणदोषो निरूपितः याज्ञसेनीति विश्वा-सार्थं सम्बोधनं यज्ञरूपा सेना यस्य स यज्ञसेनः तस्य कन्या याज्ञसेनी यज्ञादेवोत्पन्नेति यतः स्पर्द्धिनः भग-वता सह स्पर्द्धायुक्ताः मदर्थं हृच्छयेन कामेनार्दिताः एवमन्यकृतो दोषः स्वभावकृतश्च निरुक्तः ॥ ३१ ॥

ततो भगवता यत्कृतं तदाह—मां तावद्रथमारोप्येति । तावता कथं निस्तार इति शङ्कां वारयितुमाह—हयरत्नचतु-ष्टयमिति—

स्यमन्तकः कौस्तुभश्च स्पर्शश्चिन्तामणिस्तथा ।
चत्वारो मणयः प्रोक्तास्तत्तुल्याः कृष्णवाजिनः ।

ततः शार्ङ्गमुद्यम्य कवचेन सन्नद्धः आजौ सङ्ग्रामे चतु-र्भुजः सन् तस्थौ ॥ ३२ ॥

साधनस्य च रक्षायाः क्रियायाः सर्वरूपतः ।
कालस्यापि स्वचेष्टायाः परिग्रह इहोदिताः ॥

बिभीषिकार्थमेतत्परिगृहीतवान् न तु तेषां मारणार्थं तथा-सति भूम्यर्थं मारणं न स्यादत एव दारुकेण भगवत्प्रेरि-तेन रथो द्वारकायामेव नीत इत्याह—दारुकश्चोदयामासेति । काञ्चनोपस्करत्वेन लघुता शीघ्रगमने बन्धनाभावश्च सूचितः मिषतां भूभुजामिति तेषामपि क्रियाशक्तिः भगवतैव चतु-

ते शार्ङ्गच्युतबाणौघैः कृत्तबाह्वङ्घ्रिकन्धराः ।
निपेतुः प्रधने केचिदेके सन्त्यज्य दुद्रुवुः ॥ ३५ ॥
ततः पुरीं यदुपतिरत्यलङ्कृतां रविच्छदध्वजपटचित्रतोरणाम् ।
कुशस्थलीं दिवि भुवि चाभिसंस्तुतां समाविशत्तरणिरिव स्वकेतनम् ॥३६॥
पिता मे पूजयामास सुहृत्सम्बन्धिबान्धवान् ।
महार्हवासोऽलङ्कारैः शय्यासनपरिच्छदैः ॥ ३७ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भुजत्वेन स्वीकृतेति ज्ञानशक्तिरेवावशिष्टेति राज्ञीति परिज्ञानार्थं किञ्च ते रूपाद्याश्चर्येणैव व्यामोहिता इति ज्ञापयितुं दृष्टान्तमाह—मृगाणां मिषतामेव सतां यथा मृगराट् हरतीति ॥ ३३ ॥

ये तु दूरे स्थिताः दर्शनानन्तरं प्रासवन्तः ते केचित् समागता इत्याह-अन्वसज्जन्तेति । केचन मूर्खाः दूरे स्थिताः अन्वसज्जन्त भगवन्तमन्वसज्जन्त पथि नयननिषेधं कर्तुं पथि भ्रान्ताः संयत्ताः सावधानाः उद्धृतेष्वासाः धनूंषि विस्फूर्ज्य अनेन भगवत्तुल्यता सामग्र्या निरूपिता तथापि शब्दमात्रता तेषु अर्थस्तु भगवत्येवेति ज्ञापयितुं दृष्टान्तमाह-ग्रामसिंहा इति । सिंहशब्दतुल्यत्वेपि यथा ग्रामसिंहसिंहयोरन्तरम् ॥ ३४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तात्कालिकमतिहर्षोत्थं मत्सौन्दर्यमन्यदेवासीदित्याह-उन्नीयेति। उरुकुन्तलानां कर्णसमीपस्थचूर्णकुन्तलानां कुण्डलयोश्च त्विषो ययोस्तथाभूते गण्डस्थले यत्र तत् ॥ २९—३० ॥

याज्ञसेनि द्रौपदि । स्पर्द्धन्तः स्पर्द्धमानाः ॥ ३१ ॥

भीरुस्वभावां मां द्वाभ्यां भुजाभ्यामालिङ्ग्य द्वाभ्यां धनुर्बाणौ गृहीत्वेति चतुर्भुजस्तस्थौ ॥ ३२ ॥

मिषतां मृगाणां मृगराडिव हरिर्जगामेतिशेषः । मिषतामित्यनादरे षष्ठी ॥ ३३ ॥

अन्वसज्जन्त पृष्ठतः सक्ता बभूवुः निषेद्धुं रोद्धुमित्यर्थः । उद्धृतेष्वासा ग्रामसिंहा अच्युतदृष्टपुच्छा भवन्ति ॥ ३४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उरुकुन्तलानां कुण्डलयोश्च त्विषो ययोस्ते गण्डस्थले यस्मिन् तत् वक्त्रमुन्नीय परितः राज्ञो राजन्यान्निरीक्ष्य मुरारेः शिशिरःसन्तापहरः हासो येषु तैः कटाक्षमोक्षैरपाङ्गवीक्षणविलासैः अनुरक्तं हृदयं यस्याः साऽहम् अंसे मुरारेः स्कन्धे शनकैः स्रजमालां निदधे ननु कण्ठे इति मोह उक्तः ॥ २९—३१ ॥

हया एव रत्नानि तेषां चतुष्टयं यस्मिन् तम् ॥ ३२ ॥

मृगाणां मिषतां मृगराट् यथा शरीरात्स्वं स्वमथवाचरणं मोदयति तद्वत् दारुको रथं चोदयामासेत्यन्वयः ॥ ३३ ॥

अन्वसज्जन्त पृष्ठतः सक्ता बभूवुः ॥ ३४—३५ ॥

भाषाटीका ।

जिस के ऊपर अलकावलि छिटक रही है और दोनो कुण्डलन की कान्तियुत कपोलन से शोभायमान, एतादृश मुख को ऊपर उठाकर शीतल हास युत कटाक्ष विलासों से चारों तर्फ स्थित राजान को अवज्ञा के साथ देख कर श्रीकृष्ण के बीच में अनुराग युत हृदय वारी मैंने अपनी माला को श्रीकृष्ण के कण्ठ में पहरा दई ॥ २९ ॥

उसी काल में मृदङ्ग पटह शङ्ख भेरी आनक आदि बाजे बजने लगे और नृत्य करने वारी नाच करने लगीं तथा गान करने वारे गान करने लगे ॥ ३० ॥

इस प्रकार निरवधिक ज्ञानादि गुण सम्पन्न सर्वेश्वर को मैंने जब वरे तब हे द्रौपदि ! काम से पीडित होकर निंदा करत राजा लोगो से सहन नहि भया ॥ ३१ ॥

उसी समय उत्तम च्यारि अश्व जुरे हुए रथ पर मोको बैठाकर शार्ङ्ग धनुष को लेकर कवच धारण किये चतुर्भुजा धारी श्रीकृष्ण भगवान् युद्ध में स्थित होगए ॥ ३२ ॥

हे राज्ञि ! कांचन की सामग्री सम्पन्न रथ को दारुक सारथी ने चलाया उस समय छोटे२ मृगन के देखते२ उन का तिरस्कार करके उनके मध्य में से जैसे सिंह अपने भाग को लेजाता है तैसें हि राज्यन के देखते२, उनका तिरस्कार कर श्रीकृष्ण भगवान् उनके देखते में को लेगए ॥ ३३ ॥

जैसे सिंह को रोकने के वास्ते चारों तर्फ से श्वान दौडते हैं तैसें हि सावधान होकर अपने २ धनुष धारण कर मार्ग में श्रीकृष्ण को रोकने के वास्ते कोई एक राजा लोग श्रीकृष्ण के पीछें धाए ॥ ३४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

रविं छादयन्ति ते रविच्छदा ध्वजेषु पटा यस्यां चित्राणि तोरणानि यस्यां सा च सा च तां कुशस्थलीं पुरीं यदुपतिः समाविशत् स्वकेतनं गृहमस्ताचलं वा ॥ ३६ ॥

महार्हवासःप्रभृतिभिः सुहृदादीन् पूजयामास ॥ ३७ ॥

दासीभिः सर्वसम्पद्भिर्भटरथवाजिभिः।
आयुधानि महार्हाणि ददौ पूर्णस्य भक्तितः॥ ३८॥
आत्मारामस्य तस्येमा वयं वै गृहदासिकाः।
सर्वसङ्गनिवृत्त्याऽद्धा तपसा च बभूविम॥ ३९॥

महिष्य ऊचुः।

भौमं निहत्य सगणं युधि तेन रुद्धा ज्ञात्वाऽथ नः क्षितिजये जितराजकन्याः।
निर्मुच्य संसृतिविमोक्षमनुस्मरन्तीः पादाम्बुजं परिणिनाय य आप्तकामः॥ ४०॥

श्रीधरस्वामिकृतभावार्थदीपिका।

दास्यादिभिः सहाऽऽयुधानि पूर्णायापि ददौ॥ ३८॥

इमाः अष्टौ वयं सर्वसङ्गनिवृत्त्या तपसा स्वधर्मेणाद्धा साक्षात्तस्य गृहदासिका बभूविम॥ ३९॥

क्षितिजये दिग्विजये जितानां राज्ञां कन्याः नोऽस्मांस्तेन रुद्धाः ज्ञात्वा ततो निर्मुच्य संसृतेर्विमोक्षो यस्मात्तत्पादाम्बुजमनुस्मरन्तीर्नः परिणिनायोदवहत् आप्तकामोऽपि यः॥ ४०॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

शार्ङ्गच्युतैः स्वयमिव निःसृतैः बाणौघैः केचित्कृत्तबाहवः केचित्कृत्ताङ्घ्रयः केचित्कृत्तकन्धरा इति विवेचनीयं यद्वा युगपदेव करौ युद्धार्थं गृहीतास्त्रत्याजनार्थमादौ बाहू ततो निपातनार्थमङ्घ्री ततश्च सद्यो मारणार्थं कन्धरं येषाम् इति बाणानामतिशीघ्रत्वमपि सूचितम् अतः प्रधने, युद्धभूमौ नितरां पेतुः मृता इत्यर्थः। प्रधनं सम्यक् दूरतस्त्यक्त्वा दुद्रुवुः वेगेन पलायन्त॥ ३५॥

ततस्तत्पश्चादेव न तुताननिर्जित्येत्यर्थः। यतो यदुपतिः महावीरवर्गश्रेष्ठ इत्यर्थः। यद्वा यदुपतिरिति पत्नीप्राप्त्यादिना पुरीप्रवेशतो यदूनां प्रहर्षोदयाभिप्रायेण अतीति तदानीं वैशिष्ट्यात् तदेवाह, स्वीति। दिवि भुवि चाभितः सर्वतोभावेन सम्यक् परमोत्तमत्वेन स्तुतामिति तत्र तत्र तादृशत्वाभावेनासाधारण्यमुक्तं तत्रापि स्वकेतनं निजावासं तरणिरिव स्वयं जाज्वल्यमानः तत्रत्यांश्च विद्योतयन् सम्यग्गीतवाद्यादिमहोत्सवेन आ सम्यक् आनन्देनाविशत् प्रविवेश तरणिपक्षे स्वकेतनं स्वमण्डलमित्येव तरणिश्चात्र विष्णुनामा ज्ञेयः॥ ३६॥

भगवतः सुहृदादीन् तत्र सुहृदो मित्राणि सम्बन्धिनो वैवाहिकाः बान्धवा ज्ञातयः पाणिग्रहणक्षणे द्वारकायां स्वयमेवागतास्सन्निति ज्ञेयम्॥ ३७॥

सर्वाः सम्पदः नवयौवनालङ्कारादयो यासां ताभिर्दासीभिः तादृशैर्भटादिभिश्च सेनायाश्चतुर्भिरङ्गैः यद्वा सर्वाभिः सम्पद्भिः धनादिभिः सह भटाः महावीराः पदातयः पूर्णायापि दाने हेतुः भक्तित इति। भक्त्या पत्रादीनामपि तेन ग्राह्यत्वात् तच्च प्रागुक्तमेव अत्र च रवेर्दीपमिवेत्युपमा द्रष्टव्या॥ ३८॥

एवमावेशेनात्मानं बहु वर्णयित्वा सलज्जा इव सर्वाः स्वज्येष्ठाः सन्तोषयन्त्युपसंहरति—आत्मारामस्येति। स्वयमेव पूर्णत्वादात्ममात्रक्रीडायोग्यस्यापि तस्य वयं गृहदासिका बभूविमेति तस्य कारुण्यमात्रमत्र कारणमिति भावः। एवं दैन्याद्भावविशेषाव्यञ्जनेन किन्तु भक्तिमात्रव्यञ्जनेन तत्तद्वर्णने स्वयं तत्तत्कथनप्रागल्भ्यमप्याच्छन्नम्॥ ३९॥

भौममिति त्रिकम्। योऽस्मान् परिणिनाय एतस्येति तृतीयेनान्वयः भौमं भूमेः पुत्रमित्यवध्यता सूचिता तमपि युधि नितरां हत्वा निशब्दार्थमेवाभिव्यञ्जयन्ति सगणमिति। ननु भूमेः पुत्रं कुतो हतवान्? तत्राहुर्नोऽस्मान् तेन रुद्धाः ज्ञात्वेति कारणान्तरन्तु गौणमेवेति भावः। तत्र हेतुः अथ भौमवधानन्तरमेव निर्मुच्य रोधान्निःशेषेण मुक्त्वा द्वारकायां प्रस्थापनात् ज्ञानान्तरेभ्यो वैशिष्ट्यं दर्शयन्त्यो निर्मोकहेतुमाहुः पादाम्बुजं तस्यानु निरन्तरं स्मरन्तीः संसृतिविमोक्षमिति संसारमहादुःखतोऽपि विशेषेण मोक्षयति किम्पुनस्तद्रोधादित्यर्थः। आप्तकामोऽपि परिणिनायेति तत्रापि परमकारुण्यादिकमुक्तम्। अन्यत्तैः। यद्वा, आप्तकामोऽपि यः परिणिनाय कुतः संसृतिविमोक्षमपि निर्मोक्षमपि निर्मुच्य किमुतान्यमामुष्मिकमैहिकं वा स्वार्थं निर्मुच्य पादाम्बुजमेव स्मरन्तीः अत एव न कामपि सम्पदामकामः॥ ४०॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ते नृपाः कृत्ताश्छिन्नाः बाह्वादयो येषां ते केचित्प्रधने युद्धदेशे नेपेतुः केचित्तु सन्त्यज्य दुद्रुवुः॥ ३५॥

तत इति। यदुपतिः श्रीकृष्णः पुरीं तत्रापि स्वगृहं समाविशदिति सम्बन्धः यथा सूर्यः स्वकेतनं मण्डलमस्ताचलं वा तद्वत्, कथम्भूताम्? परितोऽलङ्कृतां रविं छादयन्तीति तथा तेषु ध्वजेषु पटाः यस्यां (पटानि) चित्राणि तोरणानि यस्यां सा चासौ सा च ताम्॥ ३६॥

पितेति। अनर्घ्यवस्त्रादिभिः सुहृत्प्रभृतीन् पूजयामास॥ ३७॥

दासीभिरिति। सर्वसम्पद्भिः सर्वाभरणभूषिताभिरित्यर्थः। हे राज्ञि! दास्यादिभिस्सह पारिबर्हम् उपायनं पूर्णस्यावाप्तसमस्त-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कामस्यापि भगवतो भक्तितो ददौ पूर्णायेति पाठान्तरम् ॥ ३८ ॥

आत्मारामस्येति । इमाः अष्टौ वयं सर्वसङ्गनिवृत्त्या वैराग्येण तपसा च हेतुना तस्य भगवतः आत्मारामस्य निरवधिकस्वानन्दानुभवशीलस्याऽद्धा साक्षाद्गृहदासिका बभूविम ॥ ३९ ॥

अथ षोडशसहस्रपत्नीनां गीतिमाह चतुर्भिः—भौममिति । सगणं ससैन्यं भौमं नरकं निहत्य क्षितिजये दिग्विजये जितानां राज्ञां कन्याः अस्मांस्तेन नरकेन रुद्धाः ज्ञात्वा ततो मोचयित्वा संसृतेर्विमोक्षो यस्मात्तत्पदाम्बुजमनुस्मरन्तीरस्मानाप्तकामोऽपि परिणिनाय उपयेमे ॥ ४० ॥

---

### श्रीमज्जीवगोस्वामिकृतवृहत्क्रमसन्दर्भः ।

आत्मारामस्य तस्येमा वयं वै गृहदासिका इति वयमित्यात्मनः श्लाघापरत्वे बहुवचनं सर्वाभिप्रायेण वा ॥ ३९-४० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

यतो यज्जातं तदाह—ते शार्ङ्गच्युतबाणौघैरिति । एकोऽपि शार्ङ्गे योजितः यस्मात् च्युतश्चेद्बाणौघतामापद्यते अत एकेनैव बाणेन कृत्तबाह्वङ्घ्रिकन्धराः योद्धा छिन्ना भवन्ति ततः प्रधने निपेतुः एकेतु सन्त्यज्य दुद्रुवुरिति प्राणमानयोः छेदो निरूपितः ॥ ३५ ॥

ततः सभार्यस्य द्वारकाप्रवेशमाह—ततः पुरीमिति । अयं विवाहः सर्वसम्मत इति ज्ञापयितुं ततः यदुपुर्यामुत्सवो निरूप्यते आदौ सर्वैव पुरी अत्यलङ्कृता रविच्छद्ध्वजपटचित्रतोरणा रविमपि छादयन्तीति ध्वजपटाश्चित्रतोरणानि च उपरि मध्ये च शोभा निरूपिता अलङ्करणं त्वधः लेपनादिना कुशस्थलीमिति स्थानस्य सर्वाभेद्यत्वं निरूपितं दैत्यसम्बन्धेन निन्दितत्वमाशङ्क्याह—दिवि भुवि चाभिसंस्तुतामिति गुप्ततया प्रवेशं वारयति तरणिरिवेति ॥ ३६ ॥

एवं स्वस्यान्तर्निर्वाहमुक्त्वा तत्र गत्वा पिता सर्वमेव विवाहयोग्यं कृतवानित्याह—पितामे पूजयामासेति । सुहृदादयो भगवदीयाः महार्हाः अमूल्याः वासः प्रभृतयः शय्याः आसनानि परिच्छदाश्च गृहोपकरणानि ततः पारिबर्हदानमाह—दासीभिरिति । सर्वाः सम्पदो यासु वस्त्राभरणरूपाद्याः भगवदर्थमेव वा अन्याः सम्पदः तथा भटेभरथवाजिनश्च सेनाङ्गानि अमूल्यान्यायुधानि च दत्तवान् तत्र प्रयोजनमाह—भक्तित इति । हेत्वन्तरं वारयति पूर्णस्येति ॥ ३७ ॥ ३८ ॥

कामनामाह—आत्मारामस्येति । सर्वाभिः दास्यमुक्तं नोपपत्तिरिति स्वयमुपपत्तिश्चाह—आनीताः परं सर्वाः रमयति न स्वयं त्वात्मन्येव रमते अस्मिन्नर्थे प्रमाणसिद्धिस्तस्येति, इमाः रुक्मिण्याद्याः वयमिति मुख्यतया निरूपिताः चकारादन्याश्च सर्वा एव गृहदासिकाः भगवदर्थेनोपयुज्यन्त, इति इदमप्यत्यन्तं दुर्लभमित्याह—सर्वसङ्गनिवृत्त्येति । पूर्वजन्मनि सर्वसङ्गनिवृत्तिं कृत्वा तपश्च कृत्वा इमामवस्थां प्राप्ता इत्यर्थः ॥ ३९ ॥

महिष्य एव भावापन्नाः रोहिणीप्रमुखाः स्ववृत्तान्तमाहुः भौमं निहत्येति । सगणं सेवकसहितं तद्रक्षकदेवसहितं वा युध्यीति न चौर्यादिना तद्वधः ततः तेन रुद्धाः नः अस्मान् ज्ञात्वा निर्मुच्य पादाम्बुजं स्मरन्तीः परिणिनायेति सम्बन्धः अथ भिन्नप्रक्रमेण निर्मुच्येति संसाराद्देहात् चिन्तातश्च मोचनं निरूपितं तासां निरोधे हेतुमाह—क्षितिजये ये जिताः राजानः तेषां कन्या इति भगवतो देहेन निर्मोचनं किमाश्चर्यं यस्य पादाम्बुजं संसृतिविमोक्षं संसृतेरपि मोक्षो यस्मादिति तादृशञ्चेद्वयं स्मरामः तदाऽस्माकं का चिन्तेति साधनं निरूपितम् अत एव परिणिनाय स्वार्थतां वारयन्ति आप्तकाम इति ॥ ४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सन्त्यज्य प्रधनं विहाय ॥ ३५ ॥

रविं छादयन्तीति रविच्छदा ध्वजेषु पटाः यस्यां चित्राणि तोरणानि यस्यां सा च सा च ताम् ॥ ३६—३७ ॥

दास्यादिभिः सह आयुधानि पूर्णायापि ददावित्यत्र हेतुर्भक्तित इति । भक्त्या पत्रादीनामपि तेन ग्राह्यत्वात् ॥ ३८ ॥

प्रेमावेशेनात्मानं बहु वर्णयित्वा सलज्जा इव सर्वाः स्वज्येष्ठा रुक्मिण्याद्याः सन्तोषयन्त्युपसंहरति—आत्मारामस्येति । अन्यस्यान्या भार्या इवामुं वयमप्येताः वशीकर्तुं न प्रभवाम इति भावो विनयभरेण दैन्यादेव वस्तुतस्तु ताः अपि ह्लादिनीशक्तित्वादात्मभूताः प्रेम्णा तं वशीचक्रुरपीति भावः ॥ ३९ ॥

क्षितिजये दिग्विजये जितानां राज्ञां कन्याः नः अस्मान् रुद्धाः ज्ञात्वा रोधान्निर्मुच्य मोचयित्वा आप्तकामोऽपि यः परिणिनाय परिणीय स्वभार्याश्चकार एतस्य पादरजः कामयामहे इति तृतीयेनान्वयः । परिणये हेतुः, पादाम्बुजम् अनुस्मरन्तीः संसृतेरपि विमोक्षो यस्मात्तदिति रोधान्निर्मोचने हेतुः ॥ ४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

रविं छादयन्ति पुर्यां तदातपं वारयन्तीति रविच्छदाः ध्वजेषु पटाः यस्यां विचित्राणि तोरणानि यस्यां सा च सा च ताम् ॥ ३६—३७ ॥

पूर्णस्यावाप्तसमस्तकामस्यापि दास्यादिभिः सह आयुधानि ददौ तत्र हेतुः भक्तित इति ॥ ३८—३९ ॥

यः आप्तकामोऽपि सोऽपि भक्तवत्सलतया भौमं नरकं सगणं मुरपीठादिगणसहितं निहत्य तेन भौमेन क्षितिजये दिग्विजये जितानां राज्ञां कन्याः नोऽस्मान् रुद्धाः ज्ञात्वा ततो विमुच्य संसृतेर्विमोक्षो यस्मात् तत्पादाम्बुजमनुस्मरन्तीः नः परिणिनाय उपयेमे ॥ ४० ॥

---

न वयं साध्वि साम्राज्यं स्वाराज्यं भौज्यमप्युत।
वैराज्यं पारमेष्ठ्यञ्च आनन्त्यं वा हरेः पदम्॥ ४१॥
कामयामह एतस्य श्रीमत्पादरजः श्रियः।
कुचकुङ्कुमगन्धाढ्यं मूर्ध्ना वोढुं गदाभृतः॥ ४२॥
व्रजस्त्रियो यद्वाञ्छन्ति पुलिन्द्यस्तृणवीरुधः।
गावश्चारयतो गोपाः पादस्पर्शं महात्मनः॥ ४३॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे
तीर्थयात्रानुवर्णनं नाम
त्र्यशीतितमोऽध्यायः॥ ८३॥

भाषा टीका।

शारङ्ग धनुषते छूटे बाणोंके समूहोंसे हस्तपाद कन्धा कटिकर कितने एकतो रणभूमिमें गिरपडे औरकितने एक संग्रामको छोड़कर भगदिये॥ ३५॥

जैसे अस्ताचल में सूर्य्य प्रवेशकरताहै तैसेहि अनंतर श्रीकृष्णभगवान् द्वारकापुरी में प्रवेश करते भए जिसपुरी में नाना प्रकारके अलंकार होरहेहैं औरजिसमें सूर्य्यके धूपको अच्छादन करनेवारे ध्वजानकेवस्त्र पहरातेहैं और जिसमें विचित्र तोरण लगरहेहैं और स्वर्ग में तथा भूमिनमे जिसकी स्तुति करीगईहै॥ ३६॥

अनन्तर मेरे पिताने अनमोल वस्त्रभूषणोंसे तथा शेजआसन अनेकप्रकार की सामग्रीयोंसे सुहृद संबध बन्धुजनों का सत्कार किया॥ ३७॥

दासीनके साथ तथा सर्व संपत्तिके साथ और शूरवीर हस्ती रथ अश्वन करके सहित अमोल आयु धन को भक्ति से मेरे पिता ने परिपूर्ण के अर्थदान किया॥ ३८॥

श्रीरुक्मिणी आदि सब मिलकर कहतीहैं कि जन्म जन्मान्तरवैमें वैराग्य करके तथा तपकरके हमसब नाथामचर आनन्द स्वरूप मैं रमण करनेवारे श्रीकृष्ण के गृहकी साक्षात् दासीहैं यहप्रार्थना करतीहैं॥ ३९॥

महिष्यऊचुः।

सेना गण सहित भौमासुर का वधकरके भूमिकेविजय कर नेके समय भौमासुरने अपने बसमें किए राजा की कन्या निज रणिमास मे रोक राखी रही उनसबको जानकर पश्चात वहां से छुड़ाकर संसार से छुड़ाने वारे उसके चरण का स्मरण करने वारी हमसबको जिस परिपूरण कामने विवाह कियाहै॥ ४०॥

श्रीधरस्वामिकृतभावार्थदीपिका।

न वयमिति। साम्राज्यादि न कामयामहे किन्तु एतस्य



श्रीमत्पादरजो मूर्ध्ना वोढुं कामयामह इति ननु तस्य गृहिण्यो यूयं सर्वसम्पत्सम्राजः किमेवं कामयध्वमत आहुः हे साध्वि! साम्राज्यं सार्वभौमपदं स्वाराज्यमैन्द्रं पदम् भौज्यं तदुभयभोगम् भाक्त्वं विविधं राजन इति विराट् तस्य भावो वैराज्यं अणिमादिसिद्धिभाक्त्वमित्यर्थः। पारमेष्ठ्यं ब्रह्मपदम् आनन्त्यं मोक्षं हरेः पदं तत्सालोक्यादि नतु कामयामह इति यद्वा बह्वृचब्राह्मणोक्तक्रमेण प्रागादिदिक्चतुष्टयाधिपत्यानि साम्राज्यभौज्यस्वाराज्यवैराज्यानि व्याख्येयानि॥ ४१॥

तर्हिक तत्पादरज एव काम्यते ऽत आहुः—श्रियः कुचकुङ्कुमगन्धाढ्यमिति ब्रह्मादिसेव्यया लक्ष्म्याऽपि सेवितत्वादिति भावः॥ ४२॥

ननु, तर्ह्यतिदुर्लभत्वात्किं तद्वाञ्छयाऽत आहुः—व्रजस्त्रिय इति। यद्यथा गावो गाः महात्मनोऽपि गाश्चारयतः पादस्पर्शञ्च गोपा यथा वाञ्छन्ति तद्वत् तत्पराणां सुलभ इति भावः॥ ४३॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
त्र्यशीतितमोऽध्यायः॥ ८३॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

किन्तु केवलं तद्दास्यमेवेत्याहुः—नेति द्वाभ्याम्। हे साध्वीति पातिव्रत्यनिष्ठयैतत्त्वया साधु बुध्यत एवेति भावः। भौज्यमिति चतुर्थसन्ध्यक्षरमध्यएव पाठो गम्यते भुनक्तीति भुक् तस्य भावो भौज्यमित्यर्थात् तथैव बह्वृचब्राह्मणपाठाच्च उत अपि वैराज्यमपि साम्राज्यादीनां यथोत्तरं श्रैष्ठ्यम् एतस्य गदाभृत इति नरकवधार्थं गदया निर्बिभेदाद्रीन् इति "प्राकारं गदया गुर्व्या निर्बिभेद गदाधरः" इत्यनेन श्रोक्तगदाधरस्वामिप्रायेण श्रीः सर्वासम्पत्तिस्तद्भूतः पादस्यैकस्य रज एकमपि श्रीमदिति रजसोऽपि विशेषणं वा तस्य सर्वोत्तमत्वं प्रमाणयन्ति श्रिय इति॥ ४१—४२॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु श्रीः सर्वस्त्रीजातितः श्रेष्ठा तत्प्राप्यं कथं प्राप्स्यथ? उच्यते प्रेममाहात्म्येनैव तत्प्राप्तिः ननु जात्यादिमाहात्म्येनेत्याहुः-पुलिन्द्यः तृणवीरुधश्च श्रीवृन्दावनवासिन्यः तत्र पुलिन्दीनां तद्वाञ्छा-पूर्णाः पुलिन्द्य इति प्रागुक्तेः तृणवीरुधाञ्च वनलतास्तरव इत्याद्युक्तेः व्रजस्त्र्यादीनां यथापूर्वं प्रेम्णा तद्वाञ्छायाः श्रैष्ठ्यं किं वक्तव्यं व्रजस्त्रियो वाञ्छन्तीति पुलिन्द्योपि वाञ्छन्तीत्येवं कैमुतिकन्यायेन व्याख्येयं तत्र वीरुद्भ्यो हि तृणानां श्रैष्ठ्यं तेषां तत्स्य लीलाभाधिक्यात् अहो किं वक्तव्यं तास्तास्त-द्वाञ्छन्तीति गोपाः सम्वाहनाद्यर्थं पादस्पर्शं वाञ्छन्तीत्याहुः-गाव इति । महात्मन ऐश्वर्य्येण सर्वव्यापकस्यापि गाश्चारयत इति तत्कारुण्यमेव तत्र हेतुरित्यर्थः । अन्यत्तैः । तत्र च ननु तस्य गृहिण्यो यूयं सर्वसम्पन्नाजः किमेव कामयध्व इत्यत्र तदन्यत्रेच्छाराहित्यादिति परिहारो द्रष्टव्यः तर्हि किं तत्पादरज एव काम्यत इति यद्येवं किमपि न काम्यते तर्हि तद्रजोपि किमिति काम्यत इत्यर्थः । अथवा आनन्त्यं "तेये शतम्" इत्यादि श्रुतेरीत्या मनुष्यानन्दमारभ्य शतशतगुणितत्वेन प्राजापत्या-नन्दस्य गणनायाः परां काष्ठां दर्शयित्वा परब्रह्मणि तु "यतो वाचो निवर्त्तन्ते" इत्यनेन यदानन्दस्यानन्त्यं दर्शितं तदपी-त्यर्थः । किं बहुना हरेः श्रीपतेः पदं सामीप्यादिकमपि यत् तदेतत्सर्वमधीनमपि न कामयामहे नाधीनं कर्तुमिच्छाम इत्यर्थः किमधिकं लब्धुं कामयध्वे तत्राहुः एतस्यास्मत्पतित्वेन सर्व-ज्ञातस्य गदाभृतः श्रीमत्पादरज एव तावन्मूर्द्ध्ना वोढुं कामया-महे तत्रापि यत् श्रियः कुचकुङ्कुमगन्धेनाढ्यं तद्गन्धेन प्राप्त-सम्पद्विशेषं तत्पुनरधिकं कामयामह इत्यर्थः । ननु श्रीपतेरेव पदं श्रीकुचकुङ्कुमगन्धाढ्यं तत्तु भवत्यस्त्यक्तवत्य एव यदि श्रीरत्र रुक्मिण्यभिप्रेयते तर्हि तत्तु भवतीनां प्राप्तमेव तस्मा-त्तद्विलक्षणाया एव श्रियः कुचकुङ्कुमगन्धाढ्यं तस्मादिति गम्यते ततस्तदवबोधनाय पुनर्विशिष्यतां तत्राहुः व्रजस्त्रिय इति—

"पूर्णाः पुलिन्द्य उरुगायपदाब्जरागश्रीकुङ्कुमेन दयितास्तनमण्डितेन ।
तद्दर्शनस्मररुजस्तृणरूषितेन लिम्पन्त्य आननकुचेषु जहुस्तदाधिम्॥

इति स्ववाक्याद्यनुसारेण व्रजस्त्र्यादयो यद्वाञ्छन्ति तद्वाञ्छु-रित्यर्थः । वर्त्तमानप्रयोगेण तत्तदविच्छेद उत्प्रेक्ष्यते अत्र पुलि-न्द्यादिनिर्देशस्तु स्वेच्छामपि तत्प्राप्तियोग्यताविवक्षया तृण-वीरुधो दूर्वाद्याः आसां वाञ्छा "केवलेन हि भावेन गोप्यो गावो नगा मृगाः" इतिदृष्टेः गावो गाश्चारयतश्चारयन्तो गोपा इत्यन्ते निर्देशस्तु तेषां केषाञ्चित्प्रियसखादीनां तदनुमोदन-कारित्वेऽपि पुरुषत्वात्तत्रायोग्यत्वविवक्षया अयं भावः श्रीत्वेन प्रसिद्धायाः श्रियस्तत्र कामनैव श्रूयते नतु सङ्गतिः—

कस्यानुभावोस्य न देव विद्महे तवाङ्घ्रिरेणुस्पर्शाधिकारः ।
यद्वाञ्छया श्रीललना चरत्तपो विहाय कामान् सुचिरं धृतव्रता॥

इति नागपत्नीनामुक्तेः न च रुक्मिणीत्वेन प्रसिद्धायाः श्रिय-स्तत्र सङ्गतिः कालदेशयोरन्यतमत्वात् न च व्रजस्त्रीणां श्री-सम्बन्धलालसा युक्ता "नायं श्रियोङ्ग उ नितान्तरतेः प्रसादः" इत्यादिना ततोपि परमाधिक्यश्रवणात् तस्मात् "रुक्मिणी द्वार-वत्यान्तु राधा वृन्दावने वने" इति मात्स्यस्कान्दादि-निर्णीत्या—

"देवी कृष्णमयी प्रोक्ता राधिका परदेवता ।
सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनी परा ॥

इतिवृहद्गौतमीयदृष्ट्या च या तासु राधात्वे प्रसिद्धा सर्वतो विलक्षणा श्रीर्विराजते तामुद्दिश्यैव तासां तदिदं वाक्यं यथा—

"अनयाऽऽराधितो नूनं भगवान् हरिरीश्वरः ।
यन्नो विहाय गोविन्दः प्रीतो याममयद्रहः ॥

इति. अन्येनरयुपगतः प्रिययेहेत्यादि द्वयञ्च ततश्च तासां यथा तत्र स्पृहास्पदता तथाऽस्माकञ्चेति तदेवं तादृशप्रेमस्फूर्त्तिमय-तद्गन्धाढ्यतायाः सम्प्रत्यस्मासु प्रकाशः स्यादिति दर्शितं न केवलं तादृशं तद्रज एव वाञ्छन्ति अपितु तादृशं पाद-स्पर्शञ्च वाञ्छन्ति ततो वयमपि तच्च कामयामह इत्यर्थः । यद्वा तद्रजस एव विशेषणं पादस्पर्शमिति तदव्यभिचारिफल-त्वात्तदभिन्नमेवेत्यर्थः । एतस्य तस्य कीदृशस्य महान् सर्वत्र स्यादपि स्वभावादुत्तम आत्मा सौन्दर्य्यादिप्रकाशमयः स्वभावो यस्य तादृशस्य "तत्रातिशुशुभे ताभिर्भगवान् देवकी-सुतः" इतिश्रीशुकोक्तेः ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां
त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नेति । हे साध्वि ! वयं साम्राज्यादीनि न कामयामहे तत्र साम्राज्यं सार्वभौमपदं स्वाराज्यम् ऐन्द्रं पदं कैवल्यं वा भोज्यं तदुभयभोगभाक्त्वं विविधं राजत इति विराट् तस्य भावो वैराज्यम् अणिमादिसिद्धिभाक्त्वमित्यर्थः । पारमेष्ठ्यं ब्रह्मपदं आनन्त्यमिति स्वार्थे ष्यञ् अनन्तं हरेः पदं इत्यर्थः ॥ ४१ ॥

तर्हि किं कामयध्वम् ? तत्राहुः एतस्य गदाभृतः श्रियो लक्ष्म्याः कुचकुङ्कुमस्य गन्धेनाढ्यं श्रीमत्पादरजो मूर्ध्ना वोढुं काम-यामह इति सम्बन्धः श्रियः कुचकुङ्कुमगन्धाढ्यमित्यनेन ब्रह्मादि-सेवितया श्रियापि सेव्यमानत्वात्पादरज एव कामयामह इति सूचितम् ॥ ४२ ॥

नन्विति । दुर्लभत्वात्किं तद्वाञ्छयेत्यत आहुः-व्रजस्त्रिय इति । महात्मनः निरवधिकसौशील्ययुक्तात्मनः अत एव गावः गाश्चारयतो भगवतः यद्यथा व्रजस्त्रियः पुलिन्द्यः आरण्यक-स्त्रियः तृणानि वीरुधश्च पादस्पर्शं वाञ्छन्ति तद्वद्वयमपि कामयामह इत्यर्थः । सौशील्यसौलभ्याद्यनन्तकल्याणगुणाकरस्य भगवतः पादरजः तद्दासानां सुलभमेवेतिभावः । तृणवीरुधो वाञ्छन्तीत्यनेन तृणादीनामपि भगवत्सान्निध्यातिशयाहित-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वेणुन्यानां तदिच्छावत्त्वं सूचितम् ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

वयमिति द्वयम् ॥ ४१—४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

न वयमित्यादि । हे साध्वि ! वयं षोडशसहस्राणि साम्राज्यं साम्राज्यलक्ष्मीभारम् एवं स्वाराज्यमपि भोज्यादि च किं बहुना आनन्त्यं हरेः पदं वा तर्हि किं वाञ्छथेत्याहुः—कामयामह इत्यादि । एतस्य पादरजः कामयामहे कीदृशं श्रियः कुचकुङ्कुमगन्धाढ्यं किं कर्तुं मूर्ध्ना वोढुम् ॥ ४१—४२ ॥

ननु कथं नोह्यते तत्तु सुलभमेव भवतीनां तत् किं कामयामह इत्युच्यते तत्राहुः व्रजस्त्रिय इत्यादि । व्रजस्त्रियो यद्वाञ्छन्ति यथा व्रजस्त्रियो महात्मनोऽस्य पादस्पर्शं वाञ्छन्ति तथा वाञ्छाम इत्यर्थः। ननु तासां सौभाग्यमन्यदेव तत्कथमन्यासां भवेदित्याशङ्क्याहुः-पुलिन्द्य इत्यादि । ननु वृन्दावनसम्बन्धात् ता अपि सौभाग्यवत्य इत्याहुः तृणवीरुत्सामान्येनापि तत्रापि भूत्वा तद्वाञ्छाम इत्यर्थः । महात्मनः कीदृशस्य गावश्चारयतः गाः पालयतः सर्वाः कीदृश्यः अगोपाः गोपनं न गोपः न विद्यते गोपो यासां स्वप्रसिद्धा इत्यर्थः । तेनासां द्वारकाविलासावृन्दावनविलसितमेवातिप्रेय इति मन्तव्यम् ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
त्र्यशीतितमोऽध्यायः ॥ ८२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अस्य कामनामाहुस्त्रिभिः । न वयमिति । हे साध्वीति सम्बोधनं मात्सर्यकटाक्षाभावाय साम्राज्यं सार्वभौमं स्वाराज्यमात्मारामता अनेन सर्वदुःखाभावो निरूपितः अपीति सर्वविद्यादयोपि सङ्गृहीताः उत पुनः भोज्यम् इदानीन्तु भगवता सह भोज्यं कामयामह एव वैराज्यं ब्रह्माण्डरूपत्वं पारमेष्ठ्यं ब्रह्माण्डाधिपत्यं वेत्यनादरे आनन्त्यं मोक्षः हरेः पदं सायुज्यादि एवं लोकसिद्धानि फलान्यनूद्य निषेधन्ति—कामयामह इति । पूर्वोक्तान् न कामयामहे अपितु कामयामहे तत्किमित्याकाङ्क्षायामाह—एतस्य भगवतः श्रीयुक्तचरणरजः तद्रजो वर्णयन्ति, श्रियः कुचकुङ्कुमगन्धाढ्यमिति । तर्हि यथा श्रीः स्ववक्षसि चरणस्थापनं कामयते एवं किं भवतीभिरपीति चेत्तत्राह मूर्ध्ना वोढुमिति नन्वेतदसङ्गतं प्रतिभाति चरणश्चेन्मूर्ध्नि तिष्ठति तदा तद्रजो निरन्तरं तिष्ठति सविषमे कथं तिष्ठेदित्याशङ्क्याह, गदाभृत इति. अस्मासु चेत् किञ्चित् कर्तव्यं तदा गदामवलम्ब्य स्थास्यति इतरथा गदया समं करिष्यतीति वा भावः स हि कठिनेपि तिष्ठतीति ज्ञापनार्थं वा यथा ब्रह्मशिलायां स्थितः ॥ ४१-४२ ॥

ननु कामनाश्चेत्त्यक्तव्याः सर्वा एव त्यक्तव्याः किं रजःकामनया इत्याशङ्क्याह—व्रजस्त्रियो यद्वाञ्छन्तीति । तदेव सर्वोत्तममिति ज्ञातव्यं यं नीचोपि लोकः प्रसिद्धं परित्यज्य चेद्वाञ्छति यथाऽत्यन्तं क्षुधितः प्राप्तमपि भोजनं परित्यज्य यद्यन्यद्वाञ्छेत् तद्भोजनादुत्तममित्यध्यवसेयं तृप्तश्चेद्वाञ्छति तदा नैवम् अतो नीचान्नीचमेव दृष्टान्तीकुर्वन्ति व्रजस्त्रियो हि लोकोत्कृष्टं न दृष्टवन्त्य इति कदाचिदैन्द्रपदं वाञ्छेयुः ता अपि चेत्परित्यज्य रज एव वाञ्छन्ति ताः पुलिन्द्योपि ततो नीचाः तथा तृणवीरुधोपि "आसामहो चरणरेणुजुषाम्" इतिवाक्ये निरूपितं तथा गावोपि वाञ्छन्ति ता एव चारयतो भगवतः स्वयं तुल्या अपि गोपाः पादस्पर्शमेव वाञ्छन्ति काऽत्रोपपत्तिरिति चेत्तत्राह महात्मन इति महानेवात्मा इत्थम्भूतानुभावमित्यर्थः । युक्तिस्तु पूर्वमेवोक्ता भगवदीयशरीरं तेनैव भवतीति भगवदीयत्वेन परिसमाप्तसर्वार्था इति च ॥ ४३ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभ-
दीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धे
चतुस्त्रिंशाध्यायविवरणम् ॥ ३४ ॥८३ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यद्येवं तर्हि स्वपादाम्बुजभक्ताभ्यो भवतीभ्यः सर्वानेव कामान् कृष्णो दास्यतीति तत्राहुः—न वयमिति । साम्राज्यं सार्वभौमं पदं स्वः स्वर्गे राजत इति स्वराट् तस्य भावः स्वाराज्यमैन्द्रंपदं भौज्यं भुङ्क्ते इति भुक् तस्य भावो भौज्यं यथेष्टसर्वविषयभोगभाक्त्वं विविधं राजत इति विराट्भावो वैराज्यमणिमादिसिद्धिभाक्त्वमित्यर्थः। पारमेष्ठ्यं ब्रह्मपदम् आनन्त्यं मोक्षं हरेः पदं सालोक्यादिकं न कामयामहे तर्हि किं कामयध्वे एतस्य कृष्णस्य श्रीमत्पादरज एव तत्रापि श्रियः कुचकुङ्कुमगन्धमाढ्यम् अत्र श्रीपदेन प्रसिद्धा नारायणकान्ता लक्ष्मीर्न वाचनीया तस्याः खलु "यद्वाञ्छया श्रीर्ल[illegible]नाचरत्तपः" इति नागपत्न्यादिवाक्यात् कृष्णे कामनैव श्रूयते नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः" इत्युद्धवोक्तेर्न तु प्राप्तिः ॥ ४१—४२ ॥

न श्रीपदेन रुक्मिण्युच्यत इति तत्राहुः-व्रजस्त्रियो यद्वाञ्छन्तीति । "कस्मात् कृष्ण इहायाति प्राप्तराज्यो हताहितः नरेन्द्रकन्या उद्वाह्य" इति व्रजस्त्रीणामुक्तेस्तस्यां तासां सपत्नी-

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भावात्सुयेव नतु तत्सम्बन्धवति तस्मिन् वाञ्छति तस्मात्–

"देवी कृष्णमयी प्रोक्ता राधिका परदेवता ।
सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनी परा ॥ इति ।

वृहद्गौतमीयतन्त्रस्था श्रीपदेन श्रीराधैवोच्यते तस्याः कुच-कुङ्कुमगन्धाढ्यं पादरजो व्रजस्त्रियस्तत्सख्यः सुहृदश्च वाञ्छन्त्येव तृणवीरुधः सकाशात् पुलिन्द्यश्च वाञ्छन्ति यदुक्तं "पूर्णाः पुलिन्द्यः" इत्यत्र तृणरूषितेनेति गावः गाश्चारयतो महात्मनः एतस्य गोपाः प्रियनर्मसखाः केचित् सुबलादयश्च तत्सखी-भावभावितमतयश्च वाञ्छन्ति न केवलं तादृशं तदेव वाञ्छन्ति अपि तु तादृशं पादस्पर्शं च वाञ्छन्ति ततो वयमपि तत्र कामयामहे इत्यर्थः । यद्वा रजस एव विशेषणं पादस्पर्शमिति अत्र आसामीदृशी कामना तद्दिनमारभ्य अभवत् यस्मिन् दिवे प्रेमरसप्रसक्तः उद्धव एव कृष्ण-सन्निधौ रहसि स्त्रीजनमहासदसि श्रीराधायाःरूपगुणप्रेमसौभाग्य-माधुर्य्यपरमोत्कर्षं श्रीकृष्णवशीकारकमवर्णयत् तत्राद्यानां रुक्मिण्यादीनां स्वेषां सौभाग्योत्कर्षं मानयन्तीनां तत्र सा कामना भूत् षोडशसहस्रस्त्रीणान्तु ताभ्यो न्यूनसौभाग्यानामभूदित्यतो मौषलान्ते षोडशसहस्रगोपवेषधरेण कृष्णेनैताः अध्वन्यर्जुनादाच्छिद्य गोकुलमानेष्यन्ते इति केचिदाहुः ॥ ४३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
त्र्यशीतितम एषोऽत्र दशमेऽजनि सङ्गतः ॥ ८३ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, श्रीकृष्णभार्याभावमतिदुर्लभं गतानामपि भवतीनां कुत्र चिद्वासनाऽस्ति न वेत्यत आहुः–नेति । साम्राज्यं सार्वभौमं पदं स्वाराज्यमैन्द्रं पदम् भोज्यं तदुभयभोगभाक्त्वं विविधं राजते इति विराट् तस्य भावो वैराज्यमणिमादिसिद्धिभाक्त्वं पारमेष्ठ्यं चतुर्मुखपदम् अनन्तो नित्यस्वरूपो जीवस्तस्य भावः आनन्त्यं कैवल्यम् अक्षरस्वरूपोपासनासाध्यं स्वब्रह्मस्वरूप प्राप्तिलक्षणं मोक्षमित्यर्थः । भगवद्भावाप्तिलक्षणान्मोक्षादस्य-मोक्षस्य भिन्नत्वञ्च श्रीभगवद्गीताव्याख्यानादिषु प्राचां ग्रन्थेषु द्रष्टव्यम् हरेः पदं भगवत्पदप्राप्तिलक्षणं मोक्षं वयं न कामयामेत्युत्तरेणान्वयः ॥ ४१ ॥

किन्तु श्रीमत्पादरजः मूर्ध्ना वोढुं कामयामः ननु भगवतः प्रियाभूत्वा तस्य पादरजः किमिति काम्यते इत्यत आहुः श्रियः कुचकुङ्कुमगन्धाढ्यमिति श्रिया मूर्ध्ना धृतं ततोऽपनितं कुचकुङ्कुमगन्धाढ्यं भवति उपलक्षणमेतद्ब्रह्मादीनामपि—

"धन्या अहो अमी आल्यः गोविन्दाङ्घ्र्यब्जरेणवः ।
या ब्रह्मेशौ रमा देवी दधुर्मूर्ध्न्यघनुत्तये ॥

इत्युक्तेः । नित्ययुक्तया श्रिया पारमेष्ठ्याद्यधिपतिभिर्ब्रह्मादिभिश्च सेवितत्वात् मोक्षं पारमेष्ठ्यादिकञ्च न कामयामः श्रीमत्पादरज एव कामयाम इति फलितार्थः ॥ ४२ ॥

ननु दुर्लभ्यलाभः कथं भविष्यतीत्यत्र भक्तानां तत्सुलभमेवेत्याहुः–व्रजस्त्रिय इति । यत् यस्य महात्मनः परमात्मनः सर्वस्वामिनः चारयतः गा इति शेषः व्रजस्त्रियः पुलिन्द्यश्च तृणवीरुधः गावश्च गोपाश्च पादस्पर्शं वाञ्छन्ति तस्य पादरजो वयं कामयामेति पूर्वेणान्वयः ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्र्यशीतितमाध्यायार्थप्रकाशः ॥ ८३ ॥

———

भाषाटीका ।

हेसखि ! चक्रवर्त्ति पदवी अथवा इन्द्रपद अथवा दोनो पद के भोगभागी होनेकी अथवा अणिमादि ऐश्वर्य्य अथवा ब्राह्मण केपदके अथवा कैवल्य मोक्षकी अथवा भगवान् के परम पदकी ॥ ४१ ॥

हमसब वांछा नहि करती किन्तु लक्ष्मी केकुचकुङ्कुम की सुगन्ध युत गदाधर इस श्रीकृष्ण के श्रीमत्पदारविन्दकी रजको मस्तकसे धारणकरने की वांछाकरती है ॥ ४२ ॥

गोनके चराने वारे उदार चित्त श्रीकृष्ण के चरन स्पर्शको जैसे व्रज कीस्त्री चाहतीहैं जैसे भीलनकीस्त्री चाहतीहैं जैसे तृणऔर छोटे२ वृक्ष चाहते हैं जैसे गोपलोग चाहते हैं तैसे हम चाहतेहैं ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धमें त्र्यासीके अध्यायकी
भाषाटीका समाप्ता ॥ ८३ ॥

———

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे त्र्यशीतितमोऽध्यायः ॥ ८३ ॥



## चतुरशीतितमोऽध्यायः ।

श्रीशुक उवाच ।

श्रुत्वा पृथासुबलपुत्र्यथ याज्ञसेनी माधव्यथ क्षितिपपत्न्य उत स्वगोप्यः ।
कृष्णेऽखिलात्मनि हरौ प्रणयानुबन्धं सर्वा विसिस्म्युरलमश्रुकलाकुलाक्ष्यः ॥ १ ॥
इति सम्भाषमाणासु स्त्रीभिः स्त्रीषु नृभिर्नृषु ।
आययुर्मुनयस्तत्र कृष्णरामदिदृक्षया ॥ २ ॥
द्वैपायनो नारदश्च च्यवनो देवलोऽसितः ।
विश्वामित्रः शतानन्दो भरद्वाजोऽथ गौतमः ॥ ३ ॥
रामः सशिष्यो भगवान् वसिष्ठो गालवो भृगुः ।
पुलस्त्यः कश्यपोऽत्रिश्च मार्कण्डेयो बृहस्पतिः ॥ ४ ॥
द्वितस्त्रितश्चैकतश्च ब्रह्मपुत्रास्तथाऽङ्गिराः ।
अगस्त्यो याज्ञवल्क्यश्च वामदेवादयोऽपरे ॥ ५ ॥
तान् दृष्ट्वा सहसोत्थाय प्रागासीना नृपादयः ।
पाण्डवाः कृष्णरामौ च प्रणेमुर्विश्ववन्दितान् ॥ ६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

चतुर्भिरधिकाशीतितमे मुनिसमागमे ।
वसुदेवमखोत्साहबन्धुप्रस्थापनादिकम् ॥

सुबलपुत्री गान्धारी माधवी सुभद्रा क्षितिपानां राज्ञां पत्न्यः स्वगोप्यः कृष्णभक्ता गोप्यः विसिस्म्युर्विस्मयं चक्रुः ॥ १—६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पूर्वप्रसङ्गं संश्लाघ्यमुपसंहरति—श्रुत्वेति । श्रुत्वेत्यनेन याज्ञसेनीत्वस्यैव मुख्योऽन्वयः पूर्वप्रकरणे तस्या एव प्रस्तावात् प्रश्नकर्त्रीत्वाच्च सुबलपुत्र्यादीनान्तु गौणः तासां नाममात्रग्रहणात् ततस्तासां श्रवणं परम्परयैव ज्ञेयं नतु साक्षात् तासामग्रे तस्याः स्वातन्त्र्यस्य तादृशविनोदप्रस्तावस्य पट्टमहिषीभिः स्वयं तादृशकथनस्य चायोग्यत्वात् एवमपि प्रथमं पृथादीनामेवोपादानं गुरुत्वादेव याज्ञसेनीमाधवीत्यनयोरुभयतोऽप्यथशब्दनिर्देशस्तयोस्तदानीं सहावस्थानं सूचयति पूर्वपरिच्छेदसूचकत्वात् तदनन्तरं क्षितिपपत्नीनामुपादानं यथासम्भवं तन्निकटानिकटत्वबोधनाय उत स्वगोप्य इति सर्वतः पृथगुपादानात्तासां तु दूरत्वमेव व्यज्यते अतस्ताश्च परम्परयैव श्रुत्वेति ज्ञेयं तासु स्वयमद्यश्रितपूर्वपूर्वशतकृत्वः सङ्घुषितमहाप्रेमवतीषु विद्यमानासु तासां कथाया एव परमाश्चर्यत्वेन प्रस्ताव्यत्वात् अथवा स्वगोपीशब्देन तत्तत्पालयित्र्यस्तत्सख्यादय उच्यन्ते अत एव स्वेति पृथगुक्तिः तत्र पृथासुबलपुत्र्योर्विस्मयः पातिव्रत्यांशे याज्ञसेन्यास्तदंशे भावांशे च माधव्याः स्नेहांशे क्षितिपपत्नीनां यथायोग्यं स्वगोपीनान्तु स्वीयभावमर्मस्पर्शिभावत्वे पक्षान्तरे यथा स्वाश्रयं यतः प्रणयानुबन्धशब्दस्य तत्रतत्र तत्तदंशप्राधान्यविवक्षा न केवलं विस्मयः कासाञ्चित्प्रेमसामान्यांशस्पर्शेन कासाञ्चित्सजातीयतद्विशेषांशस्पर्शेन च श्रीभगवद्विषयकप्रीत्युल्लासश्च जात इत्याह—अलमश्रुकलाविति । अलमत्यर्थाः अश्रूणां याः कला धारा वाहिन्योऽक्षाः ताभिराकुलाक्ष्यः ननु भवतु कासाञ्चित्प्रीतिमतीनां तादृशत्वं कथमन्यासामपीत्याशङ्क्याहुः—कृष्णे सर्वाकर्षकस्वभावे यतः अखिलानां प्राकृताप्राकृतानाम् आत्मनि मूलस्वरूपे हरौ रूपगुणादिभिश्च सर्वमनोहरेति ॥ १ ॥

नानाकौतुके चात्र कौतुकान्तरमापतितमित्याह—इतीति । एतान्विचित्रप्रकारेण आजग्मुरित्यथाययुरिति क्वचित्पाठः ॥ २ ॥

मुनीनेव गणयति त्रिकेण—तत्र द्वैपायनस्य प्राग्निर्देशः पितृत्वादिना गौरवाधिक्यात् मुन्यन्तराणां क्रमस्त्वागमनक्रमः

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

देवेति गम्यते भगवानिति रामस्य विशेषणं दशावतारमध्य-पाठादादराधिक्येन द्वितादीनां ब्रह्मपुत्रा इति विशेषणं ब्रह्म-पुत्रोत्पत्तावनुक्तत्वात् यद्वा ब्रह्मपुत्राः सनकादयः ब्रह्मपुत्र इति पाठः क्वचित् आदिशब्दात् पराशरमैत्रेयवैशम्पायनादयः ॥ ३-५ ॥

सहसा अतर्कितं शीघ्रमेवेत्यर्थः । प्रागासीना इति यदि ते पूर्वं तेषाम् आगमनमश्रोष्यन् तदा नासिष्यन्तैव प्रत्युताग्रे गत्वा तान् स्वयमानयिष्यन्त चेतिभावः । आदिशब्दात् श्रीनन्दादयः पुरोहितादयश्च यतो विश्वेन वन्दितान् श्रीभगवतापि मानितत्वात् ॥ ६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—९ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्रुत्वेति । सुबलपुत्री गान्धारी याज्ञसेनी द्रौपदी माधवी सुभद्रा अथ तथा क्षितिपानां राज्ञां पत्न्यश्च उतापि च गोप्यः कृष्णभक्ता गोप्यश्च रुक्मिण्यादीनामखिलान्तरात्मनि भगवति कृष्णे हरौ अमलं निष्कपटं प्रणयानुबन्धं प्रेमपारतन्त्र्ययुक्तं बन्ध इति यावत् श्रुत्वा सर्वाः पृथादयः अश्रुकलाभिरानन्दाश्रु-बिन्दुभिराकुले व्याप्तेऽक्षिणी यासां ताः विसिस्म्युर्विस्मयं चक्रुः॥१॥

इतीति । इत्थं स्त्रीषु स्त्रीभिः सह सम्भाषमाणासु सतीषु तथा नृषु पुरुषेषु तैः सह सम्भाषमाणेषु सत्सु ॥ २ ॥

आगतान्मुनीन्निर्दिशति—द्वैपायन इति त्रिभिः ॥ ३ ॥

तत्र रामः परशुरामः ॥ ४ ॥

ब्रह्मपुत्र इत्यङ्गिरसो विशेषणम् अपरे निर्दिष्टेभ्योऽन्ये च ॥५॥

विश्ववन्दितान् कृत्स्नजगद्वन्द्यानित्यर्थः ॥ ६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रुत्वेत्यनेन याज्ञसेन्या एवास्यैव मुख्योऽन्वयः । पूर्वपूर्वप्रकरणे तस्या एव प्रस्तावात् सुबलपुत्र्यादीनां गौणः तासां नाममात्रा-ग्रहणात् ततस्तासां श्रवणं परम्परयैव ज्ञेयं नतु साक्षात् तासा-मग्रे तस्याः स्वानन्त्यस्य तादृशविनोदप्रदस्य प्रस्तावस्य पट्ट-महिषीभिः स्वयं तादृशकथनस्य योग्यत्वात् स्वगोप्यः तासां स्वस्वरूपगोप्य इत्यर्थः ॥ १—११ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

श्रुत्वेत्यादि । उत स्वगोप्य इति स्वशब्दो बलरामपरिगृहीता-गोप्यस्तदा तत्र नासन्निति मन्तव्यम् ॥ १—१० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पञ्चत्रिंशे सात्त्विकानां फलोत्कर्षो निरूप्यते ।
सन्मानसङ्ग्रहौ चैव ऋणापाकर्षणं तथा ॥
निरुद्धानां हि लोकेऽस्मिन् दुर्लभश्चेति रूप्यते ।
तदीयत्वं फलं नान्यदिति चोक्तं समासतः ॥
आत्मीयानां निरोधं हि हरिरत्र करोति हि ।
अतः फलं पूर्वमेव सिद्धं रीत्या तु बोध्यते ॥
अद्भुता भगवल्लीलानिरोधः फलसूचकः ।
फलं त्वफलतासिद्ध्यै किमाश्चर्यमतःपरम् ॥

पूर्वाध्याये भगवतः स्वीयकरणलीला सर्वाणि निरूपिता दृष्टा अदृष्टा च दृष्टा भगवत्कृतिः अदृष्टं चरणरज इति उभयोः सम्पत्तौ भगवदीयत्वं सेत्स्यति अतस्तासां स्त्रीणा-मत्याश्चर्यं भगवच्चरित्रं श्रुत्वा भगवति स्नेहानुबन्ध आश्चर्यञ्च जातमित्याह—श्रुत्वेति । द्रौपदी प्रसङ्गं परं कृतवती उपविष्टा-स्तु श्रवणार्थं सर्वा एव अतो मुख्याः नामत उच्चार्यन्ते सुबलपुत्री गान्धारी याज्ञसेनी द्रौपदी माधवी सुभद्रा अथ क्षितिपपत्न्यः इतरराजस्त्रियः उत स्वगोप्यश्च अथ द्वयमुनेति च स्त्रीणां चतुर्विधत्वमुपपादयति सात्त्विक्यो राजस्यो तामस्यो निर्गुणाश्चेति एताः सर्वा एव कृष्णे परमानन्दे सर्वेषामात्मभूते सर्वदोषनिवर्त्तके प्रणयः स्नेह एव अनुबन्धो यासां भगवत्पत्नीनान्तु विवाहादिरूपो बाह्योपि सम्बन्धोस्ति अस्माकन्तु साक्षात्सम्बन्धः प्रणयः एव अतः कथं भगवदीयाः भविष्याम इति कथञ्चयमवस्था च भविष्यतीति सर्वा एव विस्मयं प्राप्ताः स्मेति प्रसिद्धे कदाचिद्विस्मयो बाह्योपि भव-तीति क्रियान्तरमप्याह—अश्रुकलाकुलाक्ष्य इति । अश्रूणां कलाभिः आकुलानि अक्षीणि यासां कलाशब्दः शोकं वारयति आकुलत्वं ज्ञानक्रियायाः व्यापृतत्वं बोधयति ॥ १ ॥

एवं पूर्वोक्तसाधनस्य फलाकाङ्क्षां निरूप्य भगवानेव फल-मिति ज्ञापयितुं साधनानामेतच्छेषत्वं प्रतिपादयन् मुनीना-मागमनमाह—इत्थं सम्भाषमाणास्विति । स्त्रीभिः स्त्रीषु नृभिर्नृषु सर्वेषामेव भगवत्सम्बन्धिनां भगवत्परता निरूपिता भवति येन सम्मर्देपि मुनीनामागमनं न विरुद्ध्येत अत एव तत्र मुनयः आययुः यत्रैव यस्याभीष्टं फलं तत्रैव तस्यागमनम् अतो रामकृष्णावत्र वर्त्तेत इति तद्दिदृक्षया मननेन ज्ञात्वा मननं साधनमपि परित्यज्य समागता इत्यर्थः । इदानीं बाह्य-क्रिययैव प्राप्यत इति भावः ॥ २ ॥

तान् गणयति—द्वैपायन इति त्रिभिः । तत्रापि सात्त्वि-कादिभेदाः गौतमान्ताः नव सात्त्विकाः तत्रापि भेदत्रयम् उत्तमौ द्वौ मध्यमाः षट् एकश्चापर इति । रामादयोपि नव राजसाः रामः परशुरामः स भगवानेव तथापि तच्छिष्यास्तत्स्थानीयाः यां लीलां प्रकाशयन्ति सा निरूप्यते द्वितादयो बहव एवं ब्रह्मपुत्रः पुलहः अङ्गिरसो वा विशेषणम् एते प्रकारनिरू-पकाः ॥ ३—५॥

ततो यज्जातं तदाह—तान् दृष्ट्वेति । लोके तद्गुणाः प्रसिद्धाः इति तेषां बुद्धिमनुसृत्य व्यवहारं वा समाश्रित्य सन्माननां कुर्वन्ति सर्व एव सहसोत्थायेति अत्रापि भेदत्रयं साधारणाः भक्ता भगवांश्चेति तत्र सर्वे प्रणेमुः तत्र हेतुः विश्ववन्दिता-निति ॥ ६ ॥

---

मानानर्चुर्यथा सर्वे सहरामोऽच्युतोऽर्चयत् ।
स्वागतासनपाद्यार्घ्यमाल्यधूपानुलेपनैः ॥ ७ ॥
उवाच सुखमासीनान् भगवान् धर्मगुप्तनुः ।
सदसस्तस्य महतो यतवाचोऽनुशृण्वतः ॥ ८ ॥

श्रीभगवानुवाच ।

अहो वयं जन्मभृतो लब्धं कार्त्स्न्येन तत्फलम् ।
देवानामपि दुष्प्रापं यद्योगेश्वरदर्शनम् ॥ ९ ॥
किं स्वल्पतपसां नृणामर्चायां देवचक्षुषाम् ।
दर्शनस्पर्शनप्रश्नप्रह्वपादार्चनादिकम् ॥ १० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

चतुर्युक्ताशीतितमे मुनिकृष्णमिथः स्तुतिः ।
शौरेः प्रश्नो मखख्यातो नन्दप्रस्थापनादिकम् ॥

सुबलपुत्री गान्धारी याज्ञसेनी द्रौपदी माधवी सुभद्रा श्रुत्वेति पृथागान्धार्य्यादीनां परम्परयैव श्रवणं न साक्षात् तासामग्रे द्रौपद्याः पट्टमहिषीणां च स्वातन्त्र्येण तादृशविनोदवार्त्ताप्रश्नोत्तरकौतुकस्यानौचित्यात् तस्मात् द्रौपदीसुभद्रयोरेव ताभिः सहवयस्यभावेन तत्तदौचित्यात् साक्षात् श्रवणं गोपीनां तु ताभिः साजात्याभावादेव सहावस्थानाभावादतिपरम्परयैव अतएव तत्रोतशब्दो विप्रकर्षार्थज्ञापनाय प्रयुक्तः स्वशब्दप्रयोगात्तास्वेव कृष्णस्य स्वान्तरङ्गबुद्ध्या प्रतिनिशमन्यालक्षितं परिष्वङ्गादिविलासोऽस्यात्र तु कुरुक्षेत्रे तस्मिन् महातीर्थे ब्रह्मचर्य्यस्थितिप्रथैवेति ज्ञेयं विसिस्म्युरिति अश्रुकलाकुलाक्ष्य इति गोपीनां विस्मयोऽश्रुकला च तासां किञ्चित् स्वसजातीयभावदर्शनात् कृष्णस्य तत्तच्चरित्रश्रवणाच्च ननु पट्टमहिषीषु गोपीनां कश्चिदनुराग इति ज्ञेयम् ॥ १ ॥

नृषु सम्भाष्यमाणेषु च ॥ २—७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मुनिकृष्णसम्वादो वसुदेवमखोत्सवादिकं च वर्ण्यते—श्रुत्वेति चतुराशीतितमेन । सुबलपुत्री गान्धारी याज्ञसेनी कृष्णा माधवी सुभद्रा स्वगोप्यः श्रीकृष्णभक्ताः गोप्यः ॥ १—६ ॥

भाषा टीका ।

श्रीशुक उवाच ।

सब के आत्मा आश्रितन के दुःख निवर्त्तक श्रीकृष्ण के विषय में रुक्मिणी आदि महिषीन के प्रेमाधीन वचन को सुनकर आनन्द से उत्पन्न आंसून की बूंदों से व्याप्त नेत्र वारी कुन्ती गन्धारी द्रौपदी सुभद्रा तथा राजान की भार्य्या और गोपी ए सब आश्चर्य्य मानती भई ॥ १ ॥

इस प्रकार स्त्रीन के साथ स्त्रीजन सम्भाषण करती रहीं और पुरुषन के साथ पुरुष सम्भाषण करते रहे उसी समय श्रीकृष्ण बलदेवजी के दर्शन करने की वांछा करके वहां मुनिजन आवते भए ॥ २ ॥

व्यासजी नारदजी च्यवन देवल असित विश्वामित्र शतानन्द भरद्वाज गौतम ॥ ३ ॥

शिष्यन सहित परशुराम भगवान् वशिष्ठजी गालव भृगु पुलस्त्य कश्यप अत्रि मार्कण्डेय बृहस्पति ॥ ४ ॥

द्वित त्रित एकत सनकादिक तथा अङ्गिरा अगस्त्य याज्ञवल्क्य वामदेव से आदि लेकर अनेक ऋषिजन भी वहां आए रहे ॥ ५ ॥

पहले से बैठे भए राजान से आदि लेकर तथा पांचो पाण्डव और श्रीकृष्ण बलरामजी ए सब उन ऋषीन को देखकर अपने२ आसनते शीघ्र हि उठकर सब शिविश्वन जिनकी बन्दना करी है उन ऋषीन को प्रणाम करते भए ॥ ६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आनर्चुरर्चितवन्तः ॥ ७ ॥

धर्मगोप्त्री तनुर्यस्य स धर्मगुप्तनुः यथा नियता वाक् यस्य तस्य सदसः ॥ ८ ॥

जन्मभृतः सफलजन्मानः तत्फलं जन्मफलं किं तत् यद्योगेश्वरदर्शनम् ॥ ९ ॥

किञ्च युष्माकं दर्शनमेव तावद्देवानामपि दुष्प्रापमस्माकन्तु स्पर्शनादिकमपि कथं नु घटितमिति विस्मयेनाऽऽह—किमिति । स्वल्पतपसां तीर्थस्नानादिमात्रे तपोबुद्धिर्येषां तथाऽर्चायां प्रतिमायां देव इति चक्षुर्दृष्टिर्येषां तेषां योगेश्वरदर्शनादिकमिदं किमसम्भावितमित्यर्थः ॥ १० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तान् रामसहितोऽच्युतः सर्वैश्वर्य्यपरिपूर्णोपि श्रीकृष्णः स्वागतादिभिरार्चयत् यथा येनार्चनप्रकारेणैव सर्वेपि तानानर्चुः तस्य सर्वमूलरूपत्वात्तदर्चनेनैव तदर्चनं सिद्धमित्यर्थः । अर्चयन्निति पाठे युग्मकम् । स्वागतादीनां स्वागमानुसारेणार्थिकक्रम एवात्र ज्ञेयः । यद्वा, अर्चेयं व्यवहारक्रमः तत्र प्रथमतः स्वागतम् उपद्रवे जाते तेषां लोकपालानां प्रथमतस्तस्मै प्रतिकार्य्यत्वात् स्वागते ज्ञात एवासनदानार्हत्वात् आसनानन्तरमेव पाद्यं प्रत्येकगण्डूषप्रत्यक्प्रक्षालनपात्राभ्यां ज्ञेयम् एतदुपलक्षणत्वेनाचमनीयञ्च ततः स्वास्थ्ये सत्यर्घ्यादि सम्यगवैयग्र्य एव चानुलेपनं युक्तमिति ॥ ७ ॥

यतो धर्मगुप्तनुः धर्मरक्षार्थमवतीर्ण इत्यर्थः । महतोपि यतवाचः कुतः अनुशृण्वतः तदुक्तिश्रवणार्थमित्यर्थः ॥ ८ ॥

अहो प्रहर्षे वयं मनुष्याः योगेषु स्वस्वानुष्ठितेषु कर्मज्ञानभक्तिलक्षणेषु ईश्वराणां सिद्धानां दातुं दूरीकर्त्तुञ्च समर्थानां वा दर्शनं परमभागवतानामेव वा सर्वेषामेव तदुक्तिश्छत्रिन्यायेन साच सर्वादरार्था ॥ ९ ॥

एवं महातपसां देवानामपि दुष्प्रापं चेत्तर्हि ततोपि क्षुद्रतपसां तथार्चायां तेषां प्रतिमायामेव देवचक्षुषां तद्दर्शनाय तत्स्वरूपज्ञानेनापि वा भाग्यहीनानाम् अस्माकं दर्शनं स्पर्शनादिकञ्च किं सम्भवति नैवेत्यर्थः । अतो युष्मत्कृपाविलसितमेवैतदिति भावः ॥ १० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अर्चायां देवचक्षुषां प्रतिमामेव देवतां मन्यमानानां किं न किञ्चित् प्रतिमादर्शनादिकं नोद्देश्यमित्यर्थः ॥ १०—११ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तानिति । यदा सर्वे आनर्चुरर्चितवन्तः तदा सरामो ऽच्युतः कृष्णोपि तान् स्वागतप्रश्नादिभिरर्चितवान् ॥ ७ ॥

उवाचेति । धर्मगोप्त्री तनुर्यस्य भगवान् यतवाचो मौनीभूतस्य महतो विपुलस्य तस्य सदसि सभायाम् अनुशृण्वतः सतः सुखमासीनान् तान् द्वैपायनादीनुवाच ॥ ८ ॥

तदेवाह—अहो इति पञ्चभिः । हे मुनयः ! वयं जन्मभृतः सफलजन्मानो बभूविम तत्फलं जन्मफलं कार्त्स्न्येनास्माभिर्लब्धञ्च किं तत् यद्देवानामपि दुर्लभं योगिनां वो दर्शनमिति ॥ ९ ॥

कथन्त्वेतद्घटितम् इति विस्मयेनाह—किन्त्विति । अल्पं तपः पुण्यं येषामर्चायां प्रतिमायामेव देवचक्षुर्देवताबुद्धिर्येषां तेषामस्माकं वो दर्शनादिकं किन्तु कथं बभूवेत्यर्थः । प्रह्वोऽह्वः प्रणामपरः प्रश्नः स्वागतप्रश्नः ॥ १० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततस्तानानर्चुः यथा यथावत् सर्वएव यथा वा लोकस्थाः सर्वे भगवन्मार्गानभिज्ञाः तथा अभिज्ञा अप्यानर्चुरित्यर्थः । यदि भगवान् न पूजयेत् तदा द्वैविध्यमापद्येतेति सहरामः अच्युतोऽप्यर्चयत् आर्चयदिति सम्धिरार्षः । अडागमाभावो वा अर्चनाप्रकारमाह—स्वागतासनेति ॥ ७ ॥

स्तोत्राभावे कायिकं सर्वं नटवद्भवतीति स्तुतिमाह—उवाच सुखमासीनानिति । यतो भगवान् कर्त्तव्यं जानाति भगवतोपि तादृशकथने हेतुः धर्मगुबिति । तावताऽपि न काचित् क्षतिरिति विभुरिति धर्मगुप्तनुरिति पाठे धर्मरक्षार्थमेवं तनुर्यस्येति मुनिस्तोत्रादिकमपि अवतारकार्यमेवेति सूचितं यस्मिन् स्थाने स्तोत्रे कृते लोकप्रसिद्धिर्भवति तादृशमिदं स्थानमिति ज्ञापयितुमाह—सदसस्तस्य शृण्वत इति । महत इति माहात्म्यं प्रकृतोपयोगि यतवाच इति सावधानता च तथा ॥ ८ ॥

पञ्चभिर्भगवानाह स्तोत्रं तेषां महात्मनाम् ।
तन्मुखान्निर्णयं वक्तुं पूर्वपक्षोक्तिरूपतः ॥

आद्यौ भगवान् तेषां दर्शनं स्तौति—अहो इत्याश्चर्ये वयमिति श्लाघायां जन्मभृतो वयमेव सफलजन्मान इत्यर्थः कथमित्याकाङ्क्षायां जन्मफलं जातमिति निरूपयति लब्धं कार्त्स्न्येन तत्फलमिति जन्मफलं ज्ञानादिकमपि भवति धर्मश्च परं कार्त्स्न्येन फलं तस्य दुर्लभत्वमाह—देवानामपि दुष्प्रापमिति । यस्माद्योगेश्वराणां दर्शनं देवानामपि दुर्लभं यत इन्द्रोपि महतापि कष्टेन बृहस्पतेर्दर्शनं न प्राप्तवान् तदुक्तं षष्ठे ॥ ९ ॥

केवलं दर्शनस्य निरूप्य तत्सम्बन्धिनो सर्वेषामेव निरूपयन् अस्य फलत्वे तर्कमाह—किं स्वल्पतपसामिति । देवादीनां महत्तपो भवत्येव मनुष्याणामेव न भवतीति ज्ञापयितुं नृणामित्युक्तम् अल्पतपस्त्वे हेतुः अर्चायां देवचक्षुषामिति अर्चा प्रतिमादौ जडाजडप्रकृतिः तत्रापि पामरैः कृता तादृशी स्वस्य चेतनस्य कथं देवता भवेत् आकृतिरस्तीति चेत तर्हि नटेन किमपराद्धं स्थैर्यं नास्तीति चेत् तर्हि जडा आकृतिः चैतन्यं गुणाश्च राशिद्वयं कृत्वा विचार्यतां किं चैतन्यं गुणाः देवता आहोस्विदाकृतिमात्रमिति विशिष्टम सन्देहः आकृतिरप्रयोजिका भगवत्त्वात् अन्यथा तद्गृहाकृतिः तद्देहाकृतिश्च सर्वेष्वेव वर्तते इति तत्परित्यज्य कुशकाशावलम्बनेन बुद्धिस्थैर्य्यं कुर्वाणा अल्पतपसो भवन्ति मुनिषु तु दर्शनं स्पर्शनं पादयोस्ततः प्रश्नः ततो विनयः ततः पादार्चनं एतदादि सर्वं किं भवति चेतनधर्मोश्चैते ॥ १० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सदस इति सप्तम्यर्थे षष्ठी ॥ ८ ॥

जन्मभृतः सफलजन्मानो भवामः देवानामपि दुष्प्रापं किम्पुनर्नृणामत्यानाम् ॥ ९ ॥

धर्मगुप्तनुरित्यनेन अहो वयमित्याद्यास्तस्य वाचः 'केवलं धर्मगोपनार्था इति ज्ञापयन्ति अर्चायां प्रतिमायामेव देवबुद्धीनां

न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।
ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥ ११ ॥
नाग्निर्न सूर्यो न च चन्द्रतारका न भूर्जलं खं श्वसनोऽथ वाङ्मनः ।
उपासिता भेदकृतो हरन्त्यघं विपश्चितो घ्नन्ति मुहूर्त्तसेवया ॥ १२ ॥
यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः ।
यत्तीर्थबुद्धिः सलिले न कर्हिचिज्जनेष्वभिज्ञेषु स एव गोखरः ॥ १३ ॥

श्रीशुक उवाच ।

निशम्येत्थं भगवतः कृष्णस्याकुण्ठमेधसः ।
वचो दुरन्वयं विप्रास्तूष्णीमासन् भ्रमाद्धियः ॥ १४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु युष्मासु तदपि युष्माकमिदं युष्मत्कृपा विलसितमेवेति भावः ॥ १०—११ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यथा यथावत् आनर्चुः अर्चितवन्तः ॥ ७ ॥

धर्मगोप्त्री तनुर्यस्य सः यतवाचः मौनीभूतस्य सदसः सभायाः शृण्वतः अहो वयं जन्मभृत इत्याद्युवाच स भागवतेषु जनेषु धर्मं संस्थापयितुमित्यर्थः ॥ ८ ॥

जन्मभृतः सफलजन्मानः तत्तस्य जन्मनः फलं कात्स्न्येन साकल्येन लब्धम्, किं तत् ? यत् योगेश्वरदर्शनमिति ॥ ९ ॥

येषां दर्शनमात्रमपि देवानां दुष्प्रापं तेषां दर्शनस्पर्शनादिकं कथं घटितमिति विस्मयेनाह—किमिति । अल्पं तीर्थस्नानादितपो येषाम् अर्चायां प्रतिमायामेव देव इति चक्षुर्दृष्टिर्येषां तेषामस्माकं योगेश्वरदर्शनादिकं किम् कथं बभूवेत्यर्थः ॥ १० ॥

---

भाषा टीका ।

कुशल प्रश्न धन्य आगमन आसन पाद्य अर्घ्य माल्य धूप चन्दनादि सें सब हि मे उनका यथावत् पूजन किया तथा बलदेवजी सहित श्रीकृष्ण ने भी उनका पूजन किया ॥ ७ ॥

यह महान् समाज चुपचाप होकर सुनने लगा उस के सुनतेर धर्म की रक्षा करने वारे दिव्य शरीर धारी श्रीकृष्ण भगवान् सुखपूर्वक विराजमान ऋषीन के प्रति बोले ॥ ८ ॥

श्रीभगवानुवाच ।

हमारा जन्म सफल है और सर्व प्रकार से इस जन्म का फल भी हमको प्राप्त होगया क्योंकि देवतान को भी दुर्लभ आप योगेश्वरन दर्शन हमको प्राप्त भया यह महान् आश्चर्य है ॥ ९ ॥

जिनको अर्चा मूर्त्ति मात्र में हि पूज्य दृष्टि है और आप के सदृश भागवतन में पूज्य दृष्टि नहि हैं उन अत्यन्त अल्प-तप वारे मनुष्यन को आप का दर्शन स्पर्शन प्रश्न प्रणाम चरण पूजन आदि होना आश्चर्य है । अर्थात् अर्चा रूप में पूज्य बुद्धि होनी आश्चर्य नहि है किन्तु भागवतन में पूज्य बुद्धि होना आश्चर्य है क्योंकि निर्दोष होने से अर्चा में पूज्य बुद्धि होने में कष्ट नहि होता और भागवतन में सनमान बुद्धि होने से तथा देह सम्बन्ध से अन्यथा आचरण देखने से भागवतन में पूज्य बुद्धि होनी आश्चर्य है । और जहां पर्य्यन्त भागवतन में पूज्य बुद्धि नहि होती तहां पर्य्यन्त भगवद्भक्ति की पूर्त्ति नहि होती इस वास्ते अर्चा मात्र देवदृष्टि होना अल्पतप का कार्य्य है ॥ १० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एतत्प्रपञ्चयति-न ह्यम्मयानीति त्रिभिः ॥ ११ ॥

वाङ्मनसयोरप्युपासनाविषयत्वं "यो वाचं ब्रह्मेत्युपास्ते मनो ब्रह्मेत्युपास्ते" इति श्रुतेः । अघं तन्मूलमज्ञानं न हरन्ति अत्र हेतुः भेदकृतो भेदकर्तारः यद्वा भेदबुद्धिं कुर्वतः पुंसः विपश्चितो निरस्तभेदाः तेतु मुहूर्तमात्रसेवयैवाघं घ्नन्तीति ॥ १२ ॥

अतः साधून्विहायान्यत्राऽऽत्मादिबुद्ध्या सज्जमानोऽतिमन्द इत्याह-यस्येति । आत्मबुद्धिरहमिति बुद्धिः त्रयो धातवो वातपित्तश्लेष्माणः प्रकृतयो यस्य तस्मिन् कुणपे शरीरे स्वधीः स्वीया इति बुद्धिः भौमे भूविकारे इज्यधीर्देवताबुद्धिः यद्यस्य तीर्थबुद्धिस्तीर्थमितिबुद्धिः अभिज्ञेषु तत्त्ववित्सु यस्य एताः बुद्धयो न सन्ति स एव गोष्वपि खरो दारुणोऽत्यविवेकी यद्वा गवां तृणादिभारवाहः खरो गर्दभ इति ॥ १३ ॥

दुरन्वयमननुरूपम् भ्रमन्त्यनवस्थिता बुद्धिर्येषां ते ॥ १४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

यच्च तत्तच्छास्त्रप्रमितमहिम्नां तीर्थानां देवप्रतिमानाञ्च सेवया नराणामपि दोषहान्या ज्ञानं जायेतेति तत्सत्यमेव किन्तु तत्राप्यस्ति भवतामतिशय इत्याह—नहीति। काका अम्मयानि जलावयवरूपाणि नद्यादीनि तीर्थानि पावनानि न भवन्ति किं तथा मृच्छिलामयाः तद्विकाराः प्रतिमादयोऽपि देवास्तदधिष्ठानत्वेन तत्तदात्म्यापन्नतया पावना न भवन्ति किम्? किन्तु ते पुनन्तीत्यादि ॥ ११ ॥

अस्तु तावत् तत्प्रतिमायां तत्तद्रूपोपासनं तत्तन्निर्मिततीर्थसेवा वा साक्षत्तत्तदुपासनमपि न्यूनं ततो भू-प्रभृति जडोपासनन्तु सुतरामिति भवद्विधोपासनमेव सर्वोत्तममित्याह—नाग्निरिति। तारकास्तदाकारविमानाः बृहस्पत्यादयः भेदकर्त्तारः अहमिन्द्रोऽयं वरुण इति ज्ञापयितारः नतु सर्वत्राभिन्नं परमेश्वरं ज्ञापयितारः यद्वा तादृशपरमेश्वरादर्शितेन सर्वत्र तत्तद्भेदबुद्धिं कुर्वतः पुंस इति विपश्चितस्तु परमेश्वरैकदर्शिनः तादृसं परमेश्वरमेव ज्ञापयन्ति तस्मात्तदज्ञानमूलमघमपराधं मुहूर्त्तसेवया घ्नन्तीति ॥ १२ ॥

कुणपः शवः स्वतस्तत्तुल्यत्वादिह एव कुणपः तस्मिन् जीवद्व्यपदेशोऽपि त्रिधातुके तन्मूलकसर्वरोगाकुले अनेनात्मवैपरीत्येन तस्मिन्नात्मबुद्धेरयोग्यतोक्ता अभिज्ञेषु सर्वपरमात्मश्रीभगवद्विज्ञेषु तु योग्यता तेषां तादृशश्रीभगवन्मयत्वात् तथापि तस्मिन्नेवात्मबुद्धिः न त्वभिज्ञेषु एवमग्रेऽपि तथाहि तादृशदेहपरिकरेषु कलत्रादिषु तादृशेष्वपि स्वधीः नतु तादृशभगवत्परिकरेषु तेषु तादृशेषु तथा जले सामान्येऽपि तीर्थबुद्धिः स्नातः पवित्रोऽहमिति नतु तीर्थपादाह्वयश्रीभगवन्मयेषु तेषु कार्हिचिदिति कदाचिदपि तासां बुद्धीनामेकतराऽस्तित्वेऽपि नास्ति दोषः सूचितः सर्वदा सर्वराहित्येन त्वतिनीचत्वमेवेत्याह—स एव गोखर इति। गोरत्यन्तनिर्बुद्धिश्चासौ खरोऽत्यन्ताधमश्चेत्यर्थः। सिन्धुनदतीरारण्ये गोखराख्यो गर्दभाकारो निष्प्रयोजनपशुविशेषोऽप्यस्ति म्लेच्छजातिविशेषोऽपि बृहस्पतिसंहितायां त्ववैष्णवोऽपि तथा निन्दितः—

"अज्ञातभगवद्धर्ममन्त्रविज्ञानसंविदः।
नरास्ते गोखरा ज्ञेया अपि भूपालवन्दिताः॥ इति

अतो भगवदर्चादिसम्बन्धे तु तादृशस्यापि कनिष्ठभागवतत्वमेव नतु गोखरशब्दव्यपदेशत्वं यथैकादशे "अर्चायामेव हरये" इत्यादि. अतः पूर्वपूर्वमपि साधारणादेव तत्प्रतिमा तत्तीर्थान्येव दर्शितानि ॥ १३ ॥

भगवतस्तत्रापि कृष्णस्येति स्वयं भगवत इत्यर्थः। अतोऽकुण्ठमेधसः अपरिच्छिन्नज्ञानस्यापि इत्थं ईदृशं दुरन्वयमसम्बद्धं कर्मपरजीवसदृशोक्तेः स्वयञ्च विप्रास्तन्महिमाविद्वांसः अतस्तात्पर्यावधारणाशक्त्या भ्रमद्धियः संशयाकुलाश्चित्ताः ॥ १४ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

उपासितास्तत्कालसेविताः भूजलादिशब्दाः देवतापराः भेदकृतः आत्मनि देहिनि देहगतभेदं कुर्वाणस्य मन्यमानस्य ते मुहूर्त्तसेवया विपश्चितस्तु हरन्तीत्यर्थः ॥ १२ ॥

कुणपे शरीरे त्रिधातुके वातपित्तश्लेष्ममये स्वधीः मदीयत्वबुद्धिः भौमे. पार्थिवप्रतिमादाविज्यबुद्धिः गोखरः गोखरप्रायः अतः अभिज्ञेषु जनेषु सत्स्वपि तानगणयन् देवतादिषु पूज्यबुद्धिं कुर्वन्त इत्यर्थः। एते श्लोकाः साधुजन-प्रशंसापराः ॥ १३—१५ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

नन्वर्चायां देवचक्षुः पवित्रावहमपि किमिति तुच्छीकरोषीत्यत्राह—नहीति। अम्मयानि तीर्थानि मृण्मयाः शिलामयाश्च देवाश्च दर्शनादेव न पुनन्ति किन्तु उरुकालेन साधवस्तु दर्शनादेव पुनन्तीत्यर्थः। तीर्थानीति दृष्टान्तार्थम् ॥ ११ ॥

देवा उरुकालेनैव पुनन्तीत्येतत्प्रपञ्चयति—नाग्निरिति। भूजलादिशब्दैस्तदभिमानिदेवताः लक्ष्यन्ते ता अग्न्यादयश्चोपासिताः भेदकृतः आत्मनि देहगतभेदं कुर्वाणस्याघं हरन्ति उरुकालसेवया हरन्तीत्यर्थः। विपश्चितः साधवस्तु मुहूर्त्तसेवयैव हरन्ति इति अघशब्देन तन्मूलमज्ञानञ्च विवक्षितम् ॥ १२ ॥

यत एवमतोऽर्चादेवचक्षुषं क्षिपन्नर्थान्तरमप्याह-यस्येति। यस्य पुंसः त्रिधातुके वातपित्तश्लेष्ममये कुणपे शवप्राये शरीरे आत्मबुद्धिरात्माभिमानः कलत्रेषु दारेषु स्वधीः स्वकीयत्वबुद्धिः एवमहम्ममाभिमानौ उक्तौ पार्थिवप्रतिमादौ इज्यधीर्देवताबुद्धिः जले गङ्गादिजले एव तीर्थबुद्धिः कर्हिचिदप्यभिज्ञेषु स्वात्मपरमात्मयाथात्म्याभिज्ञेषु भवादृशेषु नेज्यधीः न तीर्थबुद्धिश्च स पुमान् गोखर एव गोप्रायः खरप्रायश्च यद्वा गवां सम्बन्धी खरः तदर्थतृणभारार्पखरसदृशः अतीव अज्ञ इत्यर्थः। न हि निन्दान्यायेनेयं साधुजनप्रसंशा ॥ १३ ॥

निशम्येति। अकुण्ठाप्रतिहतरहिता मेधा यस्य तस्य भगवतः कृष्णस्य दुरन्वयमननुरूपं वचो निशम्य भ्रमन्ती अनवस्थिता धीर्येषां तथाभूताः तूष्णीमासन्नहो स्वभजनाहितमाहात्म्यानस्मानयं स्वस्मादुत्कृष्टतमान् वदत्यतो विपरीतमेतद्वच इत्येवं तावद्भ्रमद्धियः इत्यर्थः ॥ १४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

"रुक्मिणी द्वारवत्यान्तु राधा वृन्दावने वने" इत्युपलक्षणा देवाः वक्ष्यमाणा अग्न्यादयः एवं भौम इज्यधीः इत्यत्रापि नञः शिरश्चालने भगवत्प्रतिमापूजकस्तु तादृशश्चेत् कनिष्ठभागवत एव। "अर्चायामेव हरये" इत्येकादशात् भेदकृतो भेदकर्त्तारः अयमिन्द्रोऽयं वरुण इति ज्ञापयितारो ननु सर्वत्राभिन्नं परमेश्वरं ज्ञापयितारः ॥ १२—२० ॥

———

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

न ह्यम्मयानि तीर्थानीत्यादि। अम्मयानि तीर्थानि न भवन्ति

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

अपितु भवन्त्येव एवं मृच्छिलामयाः देवा अपि किन्तु तानि ताश्च उरुकालेनैव पुनन्ति साधवस्तु दर्शनादेव अयं भावः "तीर्थानि यस्य हस्तौ च पादौ च" इत्यादि यथाविधि सेवया देवताश्च यथाविधि निरपराधनादेव पुनन्ति एतेतु यादृच्छिकसङ्गेनापि ॥ ११-१२ ॥

यस्यात्मबुद्धिः कुणपेत्यादि। कुणपे मृतप्राये शरीरे एवात्मबुद्धिः कलत्रादिषु स्वधीः आत्मीयबुद्धिः भौमे मृण्मये शिवलिङ्गदुर्गाप्रतिमादौ इज्यधीः सलिले जल एव तीर्थबुद्धिः नतु अभिज्ञेषु जनेषु वैष्णवेषु आत्मबुद्ध्यादयो यस्य स एव गोखरः पशुसेवी पशुः ॥ १३ ॥

वचो दुरन्वयमित्यादि। दुरन्वयं दुर्बोधं किमस्मान् स्तौति किमुह सतीति सर्वेषां धीविभ्रमो जाता इत्यर्थः। एवञ्च भ्रमद्धियः सन्तस्तूष्णीमासन्निति शेषः ॥ १४-१७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

नन्वेवं सति कथं सर्वोऽपि लोकः प्रवर्त्तत इति चेत्तत्राह—नह्यम्मयानि तीर्थनीति। तीर्थशब्देन यच्छोधकं स्वच्छं तदुच्यते तज्जलमपि भवति महान्तोऽपि भवति अतो जलमयानि किं तीर्थानि न भवन्ति भवन्त्येव अपां शोधकत्वस्य दृष्टत्वात् परं या शुद्धिः ज्ञानरूपा महद्भिर्भवति सा न भवत्येव तथैव देवा अपि मृण्मयाः शिलामयाश्च केषाञ्चिन्मते स्थानमेव देवः प्रतिमात्वप्रयोजिका तस्मिन् स्थाने या काचित् प्रतिमा स्थापिता सैव देवो भवति न त्वन्यत्र अतो मृण्मया एव देवाः शिलामया वा यत्र स्थाने न प्रसिद्धं शिलारूपलक्षणम् अष्टविधानां स्थिराः शिलामया एव भवन्तीति वा तर्हि लोकप्रसिद्धं किं निन्द्यते नेत्याह—ते पुनन्त्युरुकालेनेति। साधवस्तु दर्शनमात्रेणैव नहि निन्दा निन्दायितुं प्रवर्त्तते अपितु विधेयं स्तोतव्यमिति पूजायां प्राप्तायां मृण्मयाद्यपेक्षया साधवः पूज्याः तीर्थगमनापेक्षया साधव एवाभिगन्तव्या इति न तु लोकसिद्धिं निन्द्यते इत्यर्थः ॥ ११ ॥

नन्वेतदपेक्षया सूर्यादयः प्रत्यक्षदेवाः सन्ति तदेव कथं न पूज्यन्त इति चेत्तत्राह—नाग्निर्न सूर्य इति। अग्निरग्निहोत्रादिषु प्रसिद्धः सूर्योऽप्युपासनायां चन्द्रोऽपि प्रतापादौ तारका अपि ग्रहादिपूजायां बुधादिरूपा अश्विन्यादिरूपा वा भूमिश्च विश्वम्भरा उपासनादौ तथा जलं तथैव हृदयाकाशः तथैव प्राणायामरूपो वायुः श्वसनः अथ भिन्नक्रमेण वाक् सरस्वती मनश्च योगादौ "मनोवशे तेह्यभवंश्च देवाः" इति एते सर्वे भगवद्बुद्ध्या पूजिताः अघं हरन्ति पापक्षयमेव कुर्वन्ति नत्वाधिकं तत्र हेतुः भेदकृदिति भेदमङ्गीकृत्य हि सः प्रवर्त्तते यो ह्यखण्डं भिनत्ति सः कथं कृतार्थो भवेत् विपश्चितस्तु भेदं दूरीकुर्वन्ति तदाह—विपश्चितो घ्नन्ति मुहूर्त्तसेवयेति। तावतैव ज्ञानोदयः सर्वपापक्षयः अनायासेन भवति "नालङ्कुर्वन्ति तां शुद्धिं या ज्ञानकलया कृता" इति वाक्यात् ॥ १२ ॥

एवं परमार्थमुक्त्वा एतद्व्यतिरिक्तान् सर्वान् एकीकृत्य निन्दति—यस्यात्मबुद्धिरिति। कुणपे देहे चैतन्यरहितो देहः कुणपमित्युच्यते न हि चेतनस्य जडः आत्मा भवति तत्र मूलविचारेणापि दोषमाह—त्रिधातुक इति। वातपित्तश्लेष्मप्रकृतिकोऽयं देहः आत्मा चेतनप्रकृतिकः अतोऽस्य देहस्य धातव एव आत्मानो भवितुमर्हन्ति नन्वात्मा आत्मनो वाऽयं भवति एवमात्मबुद्धिर्भ्रान्तेति निरूप्य आत्मीयबुद्धिरपि भ्रान्तेत्याह—स्वधीः कलत्रादिष्विति आत्मीयास्त एव भवन्ति ये स्वस्योपकुर्वन्ति ते सन्त एव कलत्रादयस्त्वपकुर्वन्ति तथा भगवानेव आत्मनामात्मा सद्रूपः भौमे भूमिविकारे इज्यधीः स्वदेहस्यापि भूमिजत्वात् तीर्थबुद्धिश्च सलिले एवं बुद्धिचतुष्टयं यस्य सः न कर्हिचित् अभिज्ञेषु जनेषु मन्तव्यः किं नु मूर्खेष्वेव मन्तव्यः किंबहुना स एव बलीवर्दः खरो वा बलीवर्दानां तृणानयनार्थं खरो वा पशुप्रायाः गृहस्थाः तेषां निर्वाहक इति एवं मुनिस्तोत्रार्थं लोकप्रसिद्धाः पदार्थाः निन्दिताः ॥ १३ ॥

तेषां पूर्वं भगवानेव स्तोत्रं कृतवान् वेदादिद्वारा अतो विरुद्धमुभयमपि तन्निर्णयार्थं मुनीनां सन्देहो जात इत्याह, निशम्येत्थं भगवत इति। एवं भगवतो वचो निशम्य भ्रमद्धियो भूत्वा तूष्णीमासन्निति सम्बन्धः। ननु सन्देहः कथं भगवद्वाक्यप्रामाण्ये निश्चय एव अन्यथा पूर्वसिद्ध एवार्थः तत्राह, अकुण्ठमेधस इति. अकुण्ठा मेधा यस्येति को वैदिकेनाभिप्रायेण एवं वदतीति सन्देह इत्यर्थः। ननु निश्चय एव कुतो नोत्पद्यते तत्राह दुरन्वयमिति अन्वयो लोकसिद्धार्थसमर्पकः तद्विरुद्धत्वाद्दुरन्वयः अत एव भ्रमद्धियः ॥१४॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

वाङ्मनसयोरप्युपासनाविषयत्वं "यो वाचं ब्रह्मेत्युपास्ते यो मनो ब्रह्मेत्युपास्ते" इतिश्रुतिप्रसिद्धैः श्रुतिरूपासादिभिः आदरप्राप्त्यादिभिश्चात्मपरयोः साम्येऽपि भेदं करोतीति भेदकृत् तस्य अघं भेदोत्थमवज्ञोपेक्षामात्सर्यादिकं घ्नन्ति ॥ १२ ॥

अतः साधून् विहायान्यत्रात्मादिबुद्ध्या सज्जमानोऽति मन्द इत्याह—यस्येति। कुणपः शवस्तत्तुल्ये देहे त्रिधातुके वातपित्तकफमये यस्य आत्मा बुद्धिः आत्मप्रेमास्पदं तद्बुद्धिः स्वधीः स्वीया इमे इति धीः भौमे पार्थिवप्रतिमादौ इज्यधीः पूज्योऽयमिति बुद्धिः यत् यस्य सलिले नद्यादिजले तीर्थमिदमिति बुद्धिः कर्हिचित् कदाचिदपि अभिज्ञेषु भगवत्तत्त्वज्ञेषु यस्य ता बुद्धयो न भवन्ति स एव गोखरः गोश्चासौ खरश्चेत्युभयसाधर्म्यादुभयशब्दवाच्य इत्यर्थः। यद्वा गवामपि तृणादिभारवाहकः गर्दभः बृहस्पतिसंहितायान्तु—

"अज्ञानभगवद्धर्ममन्त्रविज्ञानसम्विदः।
नरास्ते गोखरा ज्ञेया अपि भूपालवन्दिताः" ॥

इत्युक्तम्। अत्र यस्यात्मबुद्धिः कुणप एव नत्वभिज्ञेष्वित्युक्त्या उभयत्रात्मबुद्ध्या न गोखरा इत्यायातम् अभिज्ञेष्वेवात्मादिबुद्धयस्त्वतिश्रेष्ठा एवेति भावः। अत्र भौमे भगवत्प्रतिमाभिन्ने इति व्याख्येयम्—

चिरं विमृश्य मुनय ईश्वरस्येशितव्यताम् ।
जनसङ्ग्रह इत्यूचुः स्मयन्तस्तं जगद्गुरुम् ॥ १५ ॥

मुनय ऊचुः ।

यन्मायया तत्त्वविदुत्तमा वयं विमोहिता विश्वसृजामधीश्वराः ।
यदीशितव्यायति गूढ ईहया अहो विचित्रं भगवद्विचेष्टितम् ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अर्चायामेव हरये पूजां यः श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥

इत्येकादशोक्तेरभिज्ञेष्विज्यबुद्ध्यभावेपि तत् प्रतिमासेविनः कनिष्ठ भक्तत्वोक्तेः एवं सलिल इत्यत्रापि गङ्गायमुनादिभिन्न इति व्याख्येयं तादृशवचनपरस्सहस्रस्य इति ॥ १३ ॥

वचः अहो वयं जन्मभृत इत्यादिकं दुरन्वयं तदननुरूपत्वाद् दुर्गमम् ॥ १४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

साधवो दर्शनादेव पुनन्ति अम्मयानि तीर्थानि दर्शनान्न पुनन्ति मृच्छिलामया देवाश्च दर्शनान्न पुनान्ति किन्तु उरुकालेन पुनान्ति ॥ ११ ॥

भेदं करोतीति भेदकृत् तस्य "ऐतदात्म्यमिदं सर्वम्" इत्यादिश्रुतेः । जगत्कारणात् आग्न्याद्येकतमं स्वोपास्यं पृथक् मन्यमानस्येत्यर्थः । अघं तन्मूलमज्ञानं न हरन्ति अनेन जगत्कारणस्य पुरुषोत्तमस्य सम्बन्धीनि तीर्थानि तत्प्रतिमा तदात्मकतया सेव्यमाना अग्न्यादयश्चात्र न गृह्यन्ते इति भगवतोऽभिप्रायः अतएव "यत्पादनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत्" बर्हायिते ते नयने नराणां लिङ्गानि विष्णोर्न निरीक्षतो ये । अग्नौ गुरावात्मनि च सूर्येषु इत्यादौ तेषां परमादरणीयत्वोक्तेश्च विपश्चितस्तु मुहूर्तमात्रसेवया घ्नन्ति सर्वात्मोपदेशादिनेति भावः ॥ १२ ॥

उक्तगुणान् विहाय देहाद्यात्मादिबुद्ध्या सज्जमानो निन्द्य इत्याह—यस्येति । यस्य जनस्य कुणपे शवप्राये त्रिधातुके त्रयो वातपित्तश्लेष्माणः धातवः प्रकृतयो यस्य तस्मिन् आत्मा अत्रातिप्रेमास्पदं वस्तु तद्बुद्धिः कलत्रादिषु भार्यापत्यादिषु स्वधीः स्वीया इति बुद्धिः भौमे भूमिविकारे इज्यधीः सलिले तीर्थबुद्धिः अभिज्ञेषु आत्मानात्मयाथात्म्यवित्सु ता बुद्धयः कर्हिचिदपि न भवन्ति । स गोखरः गावः इन्द्रियाणि खराणि दारुणानि यस्य सः दुष्टेन्द्रिय इत्यर्थः । यद्वा गवि दिवि अपि खरः देवलोकगतोपि गर्दभनिभः किं पुनर्नरलोकस्थ इत्यर्थः ॥ १३ ॥

अहो वयं जन्मभृतः इत्यादिकं वचो दुरन्वयं दुर्घटः अन्वयः परे तत्त्वे श्रीकृष्णे समन्वयो यस्य तत् निशम्य श्रुत्वा भ्रमन्ती दोलायमाना धीर्येषां ते तूष्णीमासन् ॥ १४ ॥

---

भाषाटीका ।

जलरूपी गङ्गादि तीर्थ और मृत्तिकारूपी तथा शिलारूपी देवता ए सब दर्शन मात्र से हि पवित्र नहि करते किन्तु बहुत काल में पवित्र करते हैं और आप के सदृश साधुजन तो दर्शन मात्र से हि पवित्र करते हैं ॥ ११ ॥

जिसका आत्मा में देवत्व मनुष्यत्वादि भेद बुद्धि है उस ने अग्नि सूर्य्य चन्द्रमा तारागणों की उपासना करी तथा पृथिवी जल आकाश पवन वाणी मनके अधिष्ठाता देवतान की उपासना करी परन्तु वे अग्नि आदि देवता उक्त भेद बुद्धि वार के पाप को शीघ्र हि नहि नाश करते किन्तु बहुत काल पर्य्यंत सेवा करने से पाप का नाश करते हैं। और साधुजन तो मुहूर्त्त मात्र सेवा करने से हि पाप का नाश करदेते हैं ॥ १२ ॥

जिस को वात पित्त कफ से प्रचुर मुरदेके समान शरीर में आत्माभिमान है और स्त्री पुत्रादि को में ममता बुद्धि तथा भागवतन को छोड कर जिस को केवल मूर्त्ति में पूज्य बुद्धि है तथा केवल जल में तीर्थ बुद्धि है और तत्व वेत्ता भागवतन के विषय में जिसको किसी प्रकार से पूज्य बुद्धि नहि है वही पुरुष बैलके सदृश तथा खर के सदृश अत्यन्त अज्ञानी है इत्यादि वचनों का यहि तात्पर्य्य है कि—जिसको भागवतन में भक्ति नहि है केवल मूर्त्ति मात्र आदि में प्रेम है वह प्राकृत भक्त है सो एकादश स्कन्ध में स्पष्ट कहेंगे ॥ १३ ॥

श्रीशुक उवाच ।

निरवधिक ज्ञानादि गुण सम्पन्न प्रतिरोध रहित बुद्धि युत श्रीकृष्ण के सर्वोत्तम होकर भी अपना निकर्षानु सन्धान रूप अनन्वित वचन को सुनकर भ्रमित बुद्धि होकर ऋषिजन चुपचाप होगए ॥ १४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ईशितव्यतामनीश्वरतां कर्माधिकारितां " जनसङ्ग्रहमात्रमेतदित्यूचुः स्मयन्तो हसन्तः ॥ १५ ॥

अनन्वयं विवृण्वन्त आहुर्द्वाभ्याम् यन्माययेति । तत्त्वविदुत्तमा अपि वयम् काऽसौ माया यया विमोहिता इति तामाहुः, यदिति. यद्यस्मादीहया नरचेष्टितेन गूढः सन् ईशितव्यायत्यनीश्वरवदाचरति ' भवान् नन्वहमीश्वरश्चेत्किम

अनीह एतद्बहुधैक आत्मना सृजत्यवत्यत्ति न बध्यते यथा ।
भौमैर्हि भूमिर्बहुनामरूपिणी अहो विभूम्नश्चरितं विडम्बनम् ॥ १७ ॥
अथापि काले स्वजनाभिगुप्तये बिभर्षि सत्त्वं खलनिग्रहाय च ।
स्वलीलया वेदपथं सनातनं वर्णाश्रमात्मा पुरुषः परो भवान् ॥ १८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

इत्येवमाश्चर्यम् ? तत्राऽऽहुः, अहो इति. भगवतस्तव विचेष्टितं विचित्रमतर्क्यञ्च ॥ १६ ॥

भगवत्स्वमेवाऽऽहुः—अनीह इति । अनीहोऽक्रिय एव आत्मना स्वरूपमात्रेण बहुधेत्यत्र दृष्टान्तः, यथा भौमैरिति भौमैर्घटादिविकारैरुपलक्षिता "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति श्रुतेः । ननु कथमहं जगत्सृष्ट्यादिकर्ता वसुदेवपुत्रश्चास्मीति तत्राऽऽहुः अहो इति विभूम्नः परिपूर्णस्य तवेदं जन्मादिचरितं विडम्बनमनुकरणमात्रं न तु तत्त्वमिति ॥ १७ ॥

जनसङ्ग्रहमाहुः—अथापीति त्रिभिः । सत्त्वं शुद्धसत्त्वात्मकं रूपं बिभर्षि स्वलीलया आचारेण वेदपथञ्च बिभर्षि ॥ १८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ईशितव्यतां चिरं विमृश्य नैश्वर्यभावान्न प्रतिष्ठालोभान्नाज्ञानाद्वा चलितं किन्तु परमसाद्गुण्येन नरलीलोचितविनय एवेति विचार्य्य स्मयन्तः साश्चर्यं सलज्जं सानन्दं परस्परं वीक्ष्य स्मयमाना एव जनसङ्ग्रहो लोकशिक्षणमिति जनानां भक्तानां सङ्ग्रह आकर्षणमिति वा तमूचुः जनसङ्ग्रहे हेतुः जगतां गुरुं सर्वसाद्गुण्यप्रवर्त्तकमिति ॥ १५ ॥

पुनश्चोचुरित्याह-श्रीमुनय ऊचुरिति । कथमूचुस्तत्राह यन्मायेति पञ्चभिः । तत्र दुरन्वयत्वं विवृण्वते द्वाभ्याम् यस्य मायया अतर्क्यशक्त्या वयं मोहिताः तस्य भगवतो विचेष्टितमित्यर्थः । तत्त्वेति. विश्वेति तत्तद्रूपत्वेन सर्वैर्ज्ञाता अपीत्यर्थः अन्यैः यद्वा गूढः वेदवुर्वेदोऽपि भगवान् ईहया विविधलीलया ईशितव्यायति जीववदाचरति परस्मैपदमार्षम् ॥ १६ ॥

नैवमधुनैव किन्तु सर्वदैवेत्याहुः—स्वयमेकः कर्त्रन्तरसहायरहितः तत्राप्यात्मना करणान्तरसहायरहितेन स्वरूपेणैव तत्राप्यनीहः क्रियापरिणामाभ्यां विकाररहितो भवान् एतद्विश्वमपि सृजतीत्यादि तत्रापि बहुधेति तत्तद्ब्रह्माण्डभेदेन कालभेदेन च विचित्रतयेत्यर्थः । तत्र स्वस्याज्ञानविषयाश्रयत्वासम्भवात्परिणामेनैवेत्याहुः—यथा भौमैरिति । अथ च न बध्यते तत्तद्दोषेण लिप्तो न भवति तस्मादहो विभूम्नः परमपूर्णस्य तव चरितं विडम्बनमस्मादृशबुद्धितिरस्कारकमित्यर्थः । "श्रुतेस्तु शब्दमूलत्वात्( २-१-२७ ) इतिन्यायेनाचिन्त्यशक्तित्वादितिभावः ॥ १७ ॥

यद्यप्येवं दुस्तर्कशक्तिरसि तथापि काले स्वजनोद्भवसमये स्वजनाभिगुप्तये यः खलनिग्रहस्तस्मै सत्त्वं स्वयमपि प्राकट्यं बिभर्षि तत्र च स्वलीलया वर्णाश्रमस्यात्मा प्रवर्त्तकः सन् सनातनं वेदपथं बिभर्षि पुष्णासि तदेतदपि दुरन्वयमिति भावः । तत्र किं विचार्य्यं यतः परः सर्वबुद्धिपद्धतिमतीतः पुरुषो भवानिति ॥ १८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यदीशितव्यः यस्येशितव्यः सः ईश्वरः ईहया गूढः मनुष्यचेष्टया इत्यभिप्रायो निर्देशः तस्माद्भगवाद्विचेष्टितं चित्रमित्यर्थः ॥ १६ ॥

सृजतीति निमित्तत्वमुक्तं भौमैरित्युपादानत्वमुक्तं भूम्नः भगवतः विडम्बनं मनुष्यचेष्टानुकारः ॥ १७–१८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

चिरमिति । जनसङ्ग्रहम् अकृत्स्नविदो जनाः इत्थं साधून् भजेयुरित्येवम्विधजनानुग्रहरूपाम् ईश्वरस्य भगवतः ईशितव्यतां ( कर्माधिकारितां ) चिरमालोच्य स्मयन्तः ईषद्धसन्तः जगद्गुरुं कृष्णं प्रतीत्थं वक्ष्यमाणप्रकारेणोचुरित्यन्वयः ॥ १५ ॥

तमेवाह—यदिति । हे विश्वसृजां ब्रह्मादीनामधीश्वर ! तत्त्वविच्छ्रेष्ठा अपि वयं त्वन्मायया विमोहितास्तावत्त्वदभिप्रायं जनसङ्ग्रहात्मकमवगन्तुमसमर्था बभूविमेत्यर्थः । कोऽसावभिप्रायः इत्यनस्तं निर्दिशन्ति, यदिति. गूढ ईहयेति सर्वेश्वरोऽपि भगवानीहया गूढः मनुष्यचेष्टयाच्छन्नः ईशितव्यायति ईशितव्यवत्कर्मवश्यवदाचरतीत्यर्थः । यत एवं तस्मादहो भगवतस्तव चेष्टितमहो विचित्रमतिचित्रमित्यर्थः । यद्वा तत्त्वविदुत्तमा अपि तावत्त्वन्मायया मोहिता इति चित्रम् ईश्वरोऽपीहया गूढस्सन्नीशितव्यायत इति यत् तद्भगवतस्तव चेष्टितमहो विचित्रमित्यर्थः । यदीशितव्याः सतु गूढ ईहयेति पाठे तु यस्येशितव्या वयं स ईश्वरो मनुष्यचेष्टयाच्छन्न इत्यर्थः ॥ १६ ॥

विश्वसृजामधीश्वरेति सम्बोधनाभिप्रेतं कृत्स्नजगत्स्रष्टृत्वं व्यञ्जयन्तो विस्मयन्ते-अनीह इति । अनीहः कर्मायत्तचेष्टारहितः भवानेकः कारणावस्थायामेक एव स्वात्मनैतज्जगद्बहुधा सृजति बहुधेत्यनेन नामरूपविभागनिबन्धनं बहुत्वं विवक्षितम् एक इत्यनेन तु तत्प्रतिसम्बन्ध्येकत्वं तदयमर्थः व्याकरिष्यमाणकार्यावस्थचिदचिद्वृत्तनामरूपविभागनिबन्धनं बहुत्वं प्रतिसम्बन्धि तदविभागनिबन्धमेकत्वापन्नचिदचिच्छरीरकतया एकत्वव्यपदेशार्होपादानकारणतया तावदवस्थितो बहुधैतज्जगत्सृजतीति एवश्लोक इत्यनेनोपादानत्वं फलितं सृजतीति ।

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कर्तृत्वनिर्देशाभिमित्तत्वम् आत्मनेत्यनेन स्वस्यैवोपकरणत्वं वस्तोपकरणान्तरनिरपेक्षत्वम् अवति रक्षति अत्ति संहरते च अथापि न सज्ज्यते सृज्यचिदचिद्गतैर्दोषैर्न स्पृश्यते इत्यर्थः। अनेनैवोपादानत्वप्रयुक्तविकाराश्रयत्वप्रसङ्गः परिहृतः विकाराणां चिदचिद्द्वारकत्वेन स्तुतो न सृज्यत इति भावः। एकस्यैव सतोऽनेकधापत्तौ दृष्टान्तः यथा भौमैर्भूमिः बहुनामरूपिणीति यथा एकैव मृद्भौमैस्तद्विकारैर्घटशरावमणिकादिभिर्बहूनि रूपाण्यस्याः सन्तीति तथाभूता तथैकोपि भगवान् बहुरूपो बभूवेत्यर्थः विभूम्नो भगवतस्तवेदं चरितं विडम्बनमनुकरणमहो अतिविचित्रमित्यर्थः ॥ १७ ॥

ननु, नाहं विश्वसृजामधीश्वरोऽपि तु वसुदेवसुतोऽन्यथा सर्वेश्वरस्यैवं मनुष्यतापत्तिर्न घटत इत्यत आहुः—अथापीति। यद्यपि सर्वेश्वरस्तथापि स्वजनानां स्वभक्तानां साधूनामभिगुप्तये परित्राणाय खलानां दुष्कृतां निग्रहाय च सत्त्वं शुद्धसत्त्वमयं रूपं बिभर्षि स्वलीलारूपेणाचारेण सनातनं वेदपथं च बिभर्षि पुष्णासि कथम्भूतः परः प्रकृतिपुरुषविलक्षणः पुरुषोपि वर्णाश्रमात्मा वर्णाश्रमोपलक्षितजीवात्मेव सन्नित्यर्थः। ग़द्वैवं वर्णाश्रमात्मा वर्णाश्रमयुक्तजीवात्मा इव प्रतीयमानोपि भवान् परः परमपुरुष एवेत्यर्थः ॥ १८ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

अथापीत्यादि। सत्यमिति स परात्परत्वेन प्रसिद्धस्त्वं स्वया लीलया स्वजनाभिगुप्तये वेदपथं बिभर्षि वर्णाश्रमात्मा सन् वर्णः क्षत्रियः आश्रमो गृहस्थः तत्र तत्रात्मा यत्नो यस्य "आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मविग्रहे" इत्यादि अन्यथा स्वजनानां यादवानां भक्तानां च अभिगुप्तिर्न स्यात् वस्तुतस्तु भवान् परः पुरुषः ॥ १८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततस्तेषां निर्णयो जात इत्याह—चिरं विमृश्येति। मुनय इति मननं विचारे सार्थकं विचारितमर्थमाह–ईश्वरस्येशितव्यतामिति। ईश्वरस्य सर्वसमर्थस्य ईशितव्यता सेवकता या सा जनसंग्रहः जनाः एवं बुद्ध्या संगृहीता भवन्तीति यथा स्वयं चेदेवं ब्रूयात् अन्योऽप्येवं वदेदिति ततो भगवद्वाक्याभिप्रायं ज्ञात्वा स्मयन्तो हसन्तः जगद्गुरुं सर्वहितोपदेष्टारं प्रति किञ्चिदूचुः ॥ १५ ॥

तत्र मुनयः द्वेधा निर्णीय वदन्ति–किमयं भगवान् अस्मान् व्यामोहयितुं वदति आहोस्विदन्येषामुपकाराय यद्यस्मात्प्रति वदति तदोत्तरमुच्यत इत्याहुः—यन्माययेति। तत्त्वविदां मध्ये उत्तमाः साक्षात्कारतद्बोधनसमर्थाः अनेन ज्ञानशक्तिर्निरूपिता विश्वसृजामधीश्वरा इति विश्वसृजः कश्यपादयः ये सर्वदा विश्वं सृजन्ति तेषामपि वयमधीश्वराः उपदेष्टारो नियन्तारो वा तेऽपि वयं विमोहिताः विमोहनमाहुः यद्यस्मात् भगवान् गूढस्सन् स ईशितव्यायति" ईशितवदाचरति सेवकभावं सम्पादयति ईहया चेष्टया तथा चेष्टां प्रकटयति यथा लोकः ईशितव्यं जीवमेव मन्यते नत्वीशम् एतादृशं भगवच्चरित्रं श्रुत्वा आश्चर्याविष्टा आहुः अहो विचित्रं भगवद्विचेष्टितमिति। भगवद्विचेष्टितत्वं तथा करणे अकरणे च हेतुरिति विचित्रता भगवांश्चेत् किमित्येवं करोति कुतो वा न करोतीत्युभयत्रापि भगवत्स्वस्य हेतुत्वात् अनीशितृवत् अल्पेशितव्यमपि भगवति नास्ति नापि भगवता एवं कर्त्तव्यमेवं न कर्त्तव्यमिति कश्चिन्नियन्तारोऽस्ति तस्मादलौकिकत्वात्सर्वमेव भगवच्चरित्रं विचित्रम् ॥ १६ ॥

सर्वस्यैवालौकिकत्वाय सहजमपि भगवच्चरित्रं परस्परविरुद्धमित्याह—अनीह इति। लोके ईहासहित एव घटादिकं सृजति मन्त्रयोगादिनापि सृजन् मानसीं क्रियामनुसन्धत्ते भगवांस्तु अनीह एव तत्राप्येकः एतच्चान्येन मनसाप्याकलयितुमशक्यं तच्च बहुधा ब्रह्माण्डकोटिषु विसदृशानेव सृजतीति तत्राप्यात्मनैवाविक्रियमाणेन एवमपि कुर्वन् तेन कर्मणा न बाध्यते करोति च यथा विकृतम् अन्यथा सा सृष्टिस्तादृशीत्येवेति नाश्चर्यं स्यात् तदर्थमाह यथा भौमैर्हि भूमिः भौमैरेव विकारैर्भूमिर्बहुनामरूपिणी भवति तथा भगवान् स्वयमेव नानाविधत्वमापद्यते अविकृतत्वाद्यस्त्वधिकाः अत एव भगवतः अनुकरणमपि विचित्रं सर्वमेवानुकरणं वा ॥ १७ ॥

एवमघटमानत्वमुपपाद्य श्रोतॄन् प्रत्युपदेशपक्षे वक्तुमुचितमिति समर्थयन्ते–अथापीति। काले तत्तदवसरे स्वजना भक्तजनाः तेषामभिगुप्तये रक्षार्थे सत्त्वं बिभर्षि यद्यपि सर्वजनपालनार्थे सत्त्वं धृतमेव तथापीदं तस्मादतिरिक्तं येनावतारा जायन्ते पूर्वमेव गुणानां भेदा निरूपिता सच्चिदानन्दस्य प्रकृतेः अहङ्कारस्य बुद्धेः कालस्य चेति तत्रेदं सत्त्वं सद्रूपस्य तेनैव च भक्ता रक्षिता भवन्ति किञ्च खलनिग्रहाय च दैत्यानां नाशाय च सर्वपालकं तु तेषां न नाशकं किन्तु पालकमेव चकारादन्यान्यपि भक्तिप्रवर्त्तनादीनि संगृह्यन्ते तस्य सत्त्वस्य स्वरूपे स्थितस्य स्वरूपधर्मस्य कथं ग्रहणमित्याकाङ्क्षायामाह—स्वलीलयेति। किञ्च तेन सत्त्वेन वर्णाश्रमात्मा भूत्वा पुरातनं वेदपथं पालयसि बिभर्षि वा रक्षार्थे हेतुः पुरातनमिति नूतननिर्माणे बह्वन्यथा कर्त्तव्यं स्यात् ननु वर्णाश्रमात्मा पुरुषः "ब्राह्मणोस्य मुखमासीत्" इति श्रुतेः। तत्राह—भगवानेव पुरुषः परः अनेन ब्राह्मणानां त्वद्रूपत्वात् स्वस्य स्वयं सर्वं सम्भवतीति वचनं समर्थितम् ॥ १८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ईश्वरस्य मुनिषु ईशितव्यत्वं चिरं विमृश्य तत्रोपपत्तिमपश्यन्तो जनसंग्रहो धर्मस्थापकस्य भगवतो लोकशिक्षणार्थकमेवेदं वचनाचरणादिकमित्यूचुः, तत्र हेतुः जगद्गुरुमिति ॥ १५॥

स्वयं परमेश्वरोपि भगवान् यत् ईशितव्यायते ईहया नरचेष्टया हेतुना गूढः दुर्लक्ष्यः सन् एतदेव विचेष्टितं भगवत् परमयशस्करमित्यर्थः। "भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्त्तिषु" इत्यमरः ॥ १६ ॥

ब्रह्म ते हृदयं शुक्लं तपःस्वाध्यायसंयमैः।
यत्रोपलब्धं सद्व्यक्तमव्यक्तञ्च ततःपरम् ॥ १९ ॥
तस्माद्ब्रह्मकुलं ब्रह्मन्! शास्त्रयोनेस्त्वमात्मनः।
सभाजयसि सद्धाम तद्ब्रह्मण्याग्रणीर्भवान् ॥ २० ॥
अद्य नो जन्मसाफल्यं विद्यायास्तपसो दृशः।
त्वया सङ्गम्य सद्गत्या यदन्तःश्रेयसां परः ॥ २१ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तवैश्वर्य्यमनैश्वर्य्यं च दुर्गमत्वादपारमित्याहुः—अनीह इति। एतत् जगत् बहुविधमात्मना स्वेनैव सृजति भगवानेक एव बहुनामरूपं जगद्भवतीत्यत्र दृष्टान्तः, यथा भूमिरेकापि भौमैः घटपटादिभिः अहो अद्भुतं विभूम्नः पूर्णपरमेश्वरस्यापि तव चरितं विप्राराधनादिलक्षणमीशितव्यत्वगमकं विडम्बनम् ईशितव्यस्यानुकरणमेव ॥ १७ ॥

तदनुकरणञ्च शिष्टपालनदुष्टनिग्रहधर्मस्थापनाद्यर्थमित्याहुः— त्रिभिः। अथापि पूर्णपरमेश्वरत्वेपि सत्वं शुद्धसत्वात्मकं रूपं बिभर्षि स्वलीलया स्वाचरणेन वेदपथञ्च बिभर्षि यतो वर्णाश्रमाणामात्मा प्रवर्त्तकः भवांस्तु परः पुरुषः तादृशत्वत्-स्वरूपेषु मध्ये मुख्यः ॥ १८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ईश्वरस्य सर्वनियन्तुः ईशितव्यताम् अस्मदाद्यर्थप्रत्युत्थानार्चनस्तुत्यादिचेष्टया परनियम्यतां चिरं विमृश्य किमर्थेयमिति सुविचार्य्य तदनन्तरं ज्ञाताभिप्रायाः स्मयन्तः ईषद्धसन्तः जनसङ्ग्रहः लोकशिक्षार्थोऽयमीशितव्यभावः इति जगद्गुरुं श्रीकृष्णम् ऊचुः ॥ १५ ॥

यदित्यादिपञ्चभिः। विश्वसृजामधीश्वराः ब्रह्मादयश्च विमोहिताः यन्मायानियम्या इत्यर्थः। स मायेशो भवान् ईहया अस्मदाद्यर्थप्रत्युत्थानार्चनस्तुत्यादिरूपया नरचेष्टया गूढः दुर्लक्ष्यः ईशितव्यायति परनियम्यवदाचरति इति यत् तदेव भगवद्विचेष्टितम अहो विचित्रम् अत्याश्चर्य्यभूतम् ॥ १६ ॥

यथैकैव कारणभूमिः भौमैः औषध्यादिकार्य्यरूपैः बहुनामरूपिणी भवति तथा एक एव भवान् विश्वहेतुः आत्मनोपकरणभूतेन एतत् विश्वं बहुधा नानारूपं सृजत्यवत्यत्सि कथम्भूतः अनीहः सृज्यमानपदार्थभोगादिचेष्टाशून्यः पूर्णकामत्वात् न बध्यते सर्वात्मत्वात् एवम्भूतस्य विभूम्नः चरित्रम अस्मदाद्यर्थप्रत्युत्थानार्चनस्तुत्यादिचेष्टितं विडम्बनमनुकरणमात्रं लोकशिक्षार्थमित्यर्थः ॥ १७ ॥

एवं यद्यपि अवाप्तसमस्तकामत्वान्निरीहस्तथापि जनशिक्षार्थं वर्णाश्रमाणामाश्रयः प्रवर्तकः परः पुरुषो भवान् काले तत्तत्समये स्वजनानां स्वभक्तानामपि गुप्तये रक्षणाय खलानां निग्रहाय च सत्त्वमप्राकृतं शुद्धसत्त्वमयं रूपं बिभर्षि लीलया लोकानुरूपाचाररूपया सनातनं वेदपथं वेदमार्गञ्च बिभर्षि ॥ १८ ॥

---

भाषा टीका।

बहुत काल पर्य्यन्त विचार कर ईश्वर होकर भी अपने को मुनिजनों का सेवक मानना यह केवल संसारिजनों के शिक्षणं निमित्त है इस प्रकार ऋषिजन हंसते गए श्रीकृष्ण के प्रति बोले ॥ १५ ॥

तत्वोपदेश करके प्रजापतियों के भी नियंता तथा तत्त्ववेत्ताओं में भी परम उत्तम हम लोग हैं परन्तु परमेश्वर की माया से मोहित बुद्धि होकर उस के अभिप्राय को हम नहि जानते क्योंकि आप मनुष्य चेष्टा से छिपे हुए सेवक के सदृश आचरण करते हो इस कारण भगवान् का चेष्टा अति विचित्र है ॥ १६ ॥

कर्माधीन चेष्टा रहित अन्य की सहायता रहित सूक्ष्म चेतनाचेतन संयुक्त निज आत्मा करके इस जगत्को अनेक प्रकार सृजता है पालन करता है संहार करता है तथापि उत्पत्ति आदि कर्म से बंधता नहि जैसे घट पट वृक्ष आदि कार्य्यों से भूमि हि अनेक नाम रूप धारी होती है तैसे हि परमात्मा है एतादृश अपरिमित माहात्म्य सम्पन्न परमेश्वर का चरित आश्चर्य रूप मनुष्य लीला है ॥ १७ ॥

यद्यपि आप परम पुरुष हो तथापि निजभक्त जनों की रक्षा के अर्थ और दुष्टजनों को दण्ड देने के अर्थ समय समय पर केवल अप्राकृत शुद्ध सत्त्व गुण से प्रचुर दिव्य रूप को आप धारण करते हो तथा जिस वर्ण में जिस आश्रम में अवतार लेते हो उसी वर्ण के उसी आश्रम के विषय में प्रदीपत्व अभिमान करके जिन आचरण से लोक शिक्षा के अर्थ लीला से हि सनातन वेदोक्त कर्म का आचरण करते हो ॥ १८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

अत एव ब्राह्मणेषु बहुमानमपि करोषीति सहेतुकमाहुः, ब्रह्मेति। ब्रह्म वेदाख्यं शुक्लं शुद्धं ते हृदयमन्तरङ्गं रूपम् कुतः

**नमस्तस्मै भगवते कृष्णायाकुण्ठमेधसे ।**
**स्वयोगमाययाच्छन्नमहिम्ने परमात्मने ॥ २२ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

इत्यत आहुः, यत्रेति. यत्र ब्रह्मणि व्यक्तं कार्यमव्यक्तं कारणं ततः परं सत्सन्मात्रं ब्रह्म च तप आदिभिरुपलभ्यं तद्ब्रह्म॥१९॥

तस्माद्ब्रह्महृदयत्वाद्वेदप्रवर्तकं ब्राह्मणकुलं शास्त्रयोनेर्वेदप्रमाणकस्य तव सद्धाम श्रेष्ठमुपलब्धिस्थानं सभाजयसि सम्पूजयसि तत्तस्मादेव कारणात्त्वं ब्रह्मण्यानामग्रणीर्मुख्यस्तत्प्रवर्तकः सन् कर्माचरसीत्यर्थः ॥ २० ॥

तस्मादीश्वरस्य तवेदं जनसङ्ग्रहमात्रं वयन्तु तव सङ्गत्या कृतार्था इत्याहुः-अद्येति पञ्चभिः । सतां गत्या त्वया सङ्गम्य सङ्गं प्राप्य यद्यस्मात्त्वं श्रेयसां परोऽवधिः ॥ २१ ॥ २२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, गोपयाम्येव तान् स्वजनान् वेदपथपोषणेन किं तत्राहुः ब्रह्म वेदाख्यं शास्त्रं तेन शुद्धं केवलानुग्रहमयं यद्रूपं तद्रूपमेव यत्र वेदाख्यब्रह्मणि तपः सर्वमनुष्ठानं स्वाध्यायस्तदर्थो सर्वा शिक्षा संयमः अन्यतो मनोनिवर्तनं तैः सह सत् परं ब्रह्म व्यक्तं जगत् अव्यक्तं प्रकृतिः तेभ्यः परं श्रीभगवदाख्यतत्त्वं चोपलभ्यमिति तत्पोषणेनैव स्वजनपोषणमित्यर्थः ॥१९॥

ननु भवत्स्वेवमपि युष्मान् कथं पूजयामि तत्राहुः तस्मादिति तदेवं लोकसङ्ग्रह इति यथोपक्रान्तं तथैवोपसंहृतमिति भावः ॥ २० ॥

भवत्स्वेवं नाम किमस्माकमचिन्त्यचिन्तनेन सम्प्रति स्वहृदयानन्दमेव निवेदयामेत्याशयेनाहुः—अद्येति । अद्यस्यजहल्लक्षणया एतादृशे स्वयं भगवतो भवतः प्रकाशसमये अवतीर्णो किलाद्य मे इति वक्ष्यमाण श्रीदेवकीवचनावत् एवमद्यैव नोऽस्माकं जन्मसाफल्यं वृत्तं तथाऽस्माकं विद्यायाः वेदाद्यभ्यासस्य तपसस्ततो ज्ञानस्य परोक्षज्ञानस्य दृशश्चापरोक्षज्ञानस्य जन्मसाफल्य जातं किं कृत्वा त्वया सतां विदुषां गत्या परमाश्रयेण सह सङ्गत्य मिलित्वा ननु भवन्तो ब्रह्मानुभविनः विचित्रमदाविर्भावानां द्रष्टारश्च कथं ममैवाविर्भावसमये जन्मादि साफल्यं वर्णयथ तत्राहुः यत् य एव श्रेयसां सर्वपुरुषार्थानां परोऽतः परमावधिरिति तथा च श्रीमदुद्धववचनं यन्मर्त्यलीलौपयिकमित्यादि ॥ २१ ॥

एवं तन्माहात्म्यभरचमत्कारेण भक्त्युद्रेकात्प्रणमन्ति—नम इति । तुभ्यमिति शेषः । साक्षात्तदनुक्तिभक्तिभरोदयादेव तस्मै सर्वागोचराय यतो भगवते कृष्णाय सर्वतोऽपरायेत्यर्थः स्वयं त्वकुण्ठमेधसे सदा सर्वज्ञानविच्छिन्नज्ञानाय एवं चेत्तर्हि कथमत्र नित्यमेव न तिष्ठथ तत्राहुः—स्वयोगेति "नाहं प्रकाशः सर्वस्य योगमायासमावृतः" इति न्यायेन "यन्मायया तत्त्वविदुत्तमा वयं विमोहिताः" इत्युक्तरीत्या च नैतादृशं ज्ञानं सदा तिष्ठतीति भावः तर्ह्यधुना कथं जातं तत्राहुः परमात्मने इति तवैवानुग्रहमय्या प्रेरणयैवेति भावः ॥ २२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ब्रह्म ब्राह्मणकुलं यस्य सः व्यक्तं कार्यम् अव्यक्तं कारणम् यद्वा व्यक्तं शरीरम् अव्यक्तमात्मस्वरूपम् ॥ १९ ॥

ब्रह्मकुलं ब्राह्मणकुलं शास्त्रप्रमाणकस्य तव । शेषभूतं तस्माद्वेदधारकं ब्रह्मकुलं सभाजयसीत्यर्थः । विद्यायाः साफल्यादित्यन्वयः ॥ २० ॥

श्रेयसां परः पुरुषार्थः प्रकृष्टः अतस्त्वया सङ्गम्य अद्य नो जन्मसाफल्यम् ॥ २१—२२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यतो वेद[मयं] एवं बिभर्षि अत एव ब्राह्मणान् बहुमन्यसे इत्याहुः—ब्रह्मेति द्वाभ्याम् । शुद्धं भ्रमविप्रलिप्सादिपुरुषदोषासंस्पृष्टं ब्रह्म वेदस्ते तव हृदयम् अन्तरङ्गं तद्ब्रह्म विशिषन्ति, तप इत्यादिना, यत्र यतो वेदात्तप आदिभिः सह सत् परमार्थं व्यक्तं कार्यम् अव्यक्तं कारणं यद्वा व्यक्तं शरीरम् अव्यक्तम् आत्मस्वरूपं तताभ्यां परं विलक्षणं परमात्मस्वरूपञ्च उपलभ्यं यथावदवगतं यत्तत्त्वत्रयस्तप आदि याथात्म्यावेदकं ब्रह्म तत्तव हृदयमित्यर्थः । तत्र तपोऽनशनादिरूपं स्वाध्यायोऽध्ययनं संयमः वर्णाश्रमानुरूपो धर्मः ॥ १९ ॥

तस्मादिति । यस्मादुक्तविधं ब्रह्म तव हृदयं तस्मादित्यर्थः । शास्त्रं वेदः योनिः स्वप्रमितिकारणं यस्य तस्य सर्वान्तरात्मनस्तव ब्रह्मकुलं स्थानम् उपलब्धिस्थानं त्वद्याथात्म्यावबोधकवेदाधारभूतमित्यर्थः । एवं हेतुनिर्देशः तस्मात्सद्धाम ब्राह्मणकुलरूपं धाम सभाजयसि बहुमन्यसे किञ्च ब्रह्मण्यानां ब्राह्मणान् बहुमन्यमानानामग्रणीः श्रेष्ठश्च भवानतोऽपि सभाजयसीति भावः ॥ २० ॥

आत्मनां कृतार्थतामाविष्कुर्वन्ति—अद्येति । सतां साधूनां गत्या प्राप्यप्रापकभूतेन त्वया सङ्गम्य नोऽस्माकमद्य जन्मसाफल्यं जातं तथा विद्यायाः तपसो दृशोर्नेत्रयोश्च साफल्यमित्यन्वयः । कुतः यद्यतः एतत्त्वत्सङ्गमनं श्रेयसामपि परमुत्कृष्टं श्रेयः ॥ २१ ॥

किञ्च, यथावद्विज्ञातुं न शक्नुम इत्यभिप्रायेण प्रणेमुः तस्मा इति । स्वयोगमायया स्वासाधारणाश्चर्यशक्त्या छन्नो गूढो महिमा ऐश्वर्यं यस्य तस्मै परमात्मनेऽन्तःप्रविश्य प्रशासनेन भर्त्रे ॥ २२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ ॥ २१—२२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ब्रह्म ते हृदयमित्यादि । ब्रह्म वेदः तव हृदयं हृत अयतीति तथा तव हृद्येव ब्रह्मास्ति त्वमेव वेदवक्ता यत्र त्वयि व्यक्तं कार्य्यम् अव्यक्तं कारणं सत् वर्त्तमानं तपस्स्वाध्यायसंयमैः सह उपलब्धं कीदृशम् अव्यक्तं शुक्लं शुद्धं ततः परं व्यक्ताव्यक्तयोः परं ब्रह्म त्वय्येवोपलब्धं त्वद्भिन्नम् एतदित्यर्थः ॥ १९—२० ॥

यदन्तःश्रेयसां पर इति श्रेयसां परः परो भाग्यो यदन्तः यः स्वमेव त्वत्सङ्गो वा अन्तोऽवधिरित्यर्थः ॥ २१—२९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं साधारण्येन वर्णाश्रमाणामुक्त्वा ब्राह्मणे विशेषमाहुः—ब्रह्म ते हृदयमिति । ब्रह्म ब्राह्मणजातिः ते हृदयमन्तरङ्गा शक्तिः ताश्च शक्तयः त्रिविधा भवन्तीति विशेषमाह—शुक्लमिति । तस्य माहात्म्यमाह, तपस्स्वाध्यायसंयमैः तदङ्गैः कृत्वा यत्र शुद्धे हृदये सदभिव्यक्तं सद्रूपं ब्रह्म अभिव्यक्तं भवति अव्यक्तश्च जगत्कारणभूतम् अक्षरात्मकं चकारादात्मस्वरूपञ्च ततः परं पुरुषोत्तममानन्दरूपं वा तपो वानप्रस्थे स्वाध्यायो ब्रह्मचर्ये संयमः पारमहंस्ये आश्रमत्रय एव सदाद्यभिव्यक्तिरिति नियमः सूचितः ॥ १९ ॥

किमतो यद्येवं तत्राह-तस्माद्ब्रह्मकुलमिति । त्वं ब्रह्मकुलं सभाजयासि तत्रैको हेतुः सद्धामेति सदादीनां धाम स्थानं यदुक्तं "यत्रोपलब्धं सद्व्यक्तम्" इति धामस्फूर्तिराश्रयो वा ब्रह्मन्निति सम्बोधनं तद्रूपतया हेत्वन्तरम् आत्मानमेव पालयसीति पुनरन्यं हेतुमाह—शास्त्रयोनेरिति । शास्त्रस्य वेदस्य योनिः कारणं वेदा उत्पादिताः तेषामाधारो ब्राह्मण एवेति तद्रक्षा कर्त्तव्येत्यर्थः । शास्त्रयोनेरात्मन इति वा तथा सति साधनफले निरूपिते शास्त्रं साधनमात्मा फलमिति किञ्च तस्मात् ब्रह्मण्याग्रणीर्भवान् यद्यप्येतत्सर्वमन्यथा भवति त्वं ब्राह्मणानां हितकार्येव ॥ २० ॥

एवं ब्राह्मणानां भगवतो हितकारित्वं ज्ञात्वा सन्तुष्टाः सन्तः स्वरक्षकनिधिरद्य प्राप्त इति स्वकृतकृत्यतामाहुः—अद्य नो जन्मसाफल्यमिति । सज्जन्म ऋषिवंशे तस्य च फलं ब्रह्मप्राप्तिः साऽद्य सम्पन्नेति विद्याः सर्वाः तासां फलं सर्वज्ञता तद्वितराभिन्नत्वं पूर्वमपि सिद्धं भगवल्लीलापरिज्ञानं तु जातमिति विद्यायाः फलं तपसा हि परञ्ज्योतिर्भगवन्तमधोक्षजं साक्षात्करोति तच्चाद्यैव जातमिति सर्वथा कृतार्थता अनघेति सम्बोधनपाठे न विद्यते अघं यस्मादिति हे सर्वपापनिवारकेति फलान्तरमपि सूचितम् अपहतपाप्मत्वेन वा अस्मत्सम्बन्धेन वा न काचित् क्षतिरिति अत एव त्वया सङ्गम्य जन्मसाफल्यादिकं जातं कथम्भूतेन त्वया सद्गत्या सतां गतिः प्राप्यं फलं स्वरूपस्यैव फलत्वमविकृतत्वञ्च ज्ञापयितुं स्त्रीलिङ्गपदप्रयोगः साफल्यं साधयन्ति यदन्तःश्रेयसां पर इति यद्यस्मात् कारणात् श्रेयसामन्तः परिसमाप्तिः परः एतदेव न ह्यस्मादन्यच्छ्रेयोऽस्तीति ॥ २१ ॥

एवं साक्षाद्विशेषपूर्णगुणत्वं भगवतो निरूप्य श्रद्धातिशयात्तं नमस्यन्ति—नमस्तस्मै भगवत इति । स एव कृष्ण इति कृष्णाय ननु ब्रह्मवादे सर्व एव साक्षाद्भगवान् को विशेष इति चेत्तत्राह—अकुण्ठमेधस इति । न कुण्ठा मेधा यस्येति अन्यत्र रूपान्तरभावे मेधाया अपगमोऽस्ति पश्चात्प्रत्यापत्तौ योजितपटवत् वैलक्षण्यं भवति भगवति तन्नास्तीति अकुण्ठत्वं नैतज्जीवेषु भवतीति साक्षादविकृतब्रह्मत्वमित्यर्थः । नन्वेवञ्चेत्कथं सर्वे न विदुः तत्र हेतुमाहुः, स्वयोगमाययाच्छन्नमहिम्न इति । अस्य साधनत्वेन स्वीकृतया मायया आच्छन्नो महिमा यस्येति मायापिहितदृष्टयो भगवन्माहात्म्यं न पश्यन्तीत्यर्थः—

विषयाच्छादनं स्वार्थे चेतने नोपपद्यते ।
अन्यार्थमेव तद्युक्तमात्मस्थे विषयेऽपि च ॥

ननु सर्वात्मकत्वाद्भगवतः आत्मानमेव प्रति कथं तिरोधानमिति चेत्तत्राह—परमात्मन इति । यथा गङ्गातदधिष्ठातृदेवतयोरन्तरम् एवमात्मपरमात्मनोर्वैलक्षण्यं यथा जले दृष्टेऽपि गङ्गादेवता न दृष्टा भवति जलाच्च तिरोधत्ते तद्वदित्यर्थः ॥२२॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

यतो वेदस्तव प्रियः इत्याहुः—ब्रह्म वेदाख्यं शुक्लं शुद्धं ते हृदयं यत्र ब्रह्मणि व्यक्तं कार्य्यमव्यक्तं कारणं ततःपरं सन्मात्रं ब्रह्म च तप आदिभिरुपलब्धम् ॥ १९ ॥

शास्त्रयोनेर्वेदप्रमाणस्य आत्मनः स्वस्य सद्धाम श्रेष्ठमुपलब्धिस्थानं ब्रह्मकुलं सभाजयासि पूजयसि ॥ २० ॥

त्वया सद्गत्या सद्गतिस्वरूपेण सह सङ्गम्य सङ्गं प्राप्य वर्त्तमानानां नोऽस्माकं विद्यादिसाफल्यं यत् यस्मात् त्वं श्रेयसां परः अन्तोऽवधिः सीमा ॥ २१ ॥

तस्मात् त्वं लोकसङ्ग्रहार्थमस्मान् स्तुहि प्रणम वा वयं तु त्वामिष्टदेवं नमस्कुर्म एवेति प्रणमन्ति, नम इति ॥ २२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वेदमार्गस्य सनातनत्वमुपपादयति—ब्रह्मेति । यत्र व्यक्तं कार्यं ततः कार्यात्परं पूर्ववर्तिसत्कारणम् अव्यक्तं व्यक्तविलक्षणञ्च तप आदिभिरुपलब्धं तत् ब्रह्म शब्दब्रह्म ते परब्राह्मणः हृदयं हृद्गतं सृष्टिसंहारवर्जितं नित्यमित्यर्थः । अनेन सृष्टिपूर्ववर्तिभगवद्गतस्य वेदस्य तन्मार्गस्य च सनातनत्वमुक्तम् । मायावादिव्याख्या यत्र ब्रह्मणि व्यक्तं कार्यमव्यक्तं कारणं ततः परं सत्सन्मात्रं ब्रह्मचेति सा निर्मूला "अथातो ब्रह्मजिज्ञासा" इत्युक्त्वा तल्लक्षणाकाङ्क्षायां "जन्माद्यस्य यतः" इति सूत्रकारेणोक्तत्वात् जगत्कारणात् परत्वेन चतुर्ष्वप्यध्यायेषु वस्त्वन्तरप्रतिपादनाभावाच्च ॥ १९ ॥

यस्माद्वेदमार्गं त्वं विभर्षि तस्मात्तन्निष्ठब्रह्मकुलं सभाजयसीत्याहुः—तस्मादिति । हे ब्रह्मन् ! परमात्मन् ! शास्त्रं शब्दब्रह्म योनिः ज्ञापकं प्रमाणं यस्मिन् तस्य आत्मनः परमात्मनस्तव तत्तस्य शास्त्रस्य च धाम उभयब्रह्मस्थानं ब्रह्म-

न यं विदन्त्यमी भूपा एकारामाश्च वृष्णयः ।
माया[ज]यवनिकाच्छन्नमात्मानं कालमीश्वरम् ॥ २३ ॥
यथा शयानः पुरुष आत्मानं गुणतत्त्वदृक् ।
नाममात्रेन्द्रियाभातं न वेद रहितं परम् ॥ २४ ॥
(१)एवं त्वा नाममात्रेषु विषयेष्विन्द्रियेहया ।
मायया विभ्रमच्चित्तो न वेद स्मृत्युपप्लवात् ॥ २५ ॥
तस्याद्य ते ददृशिमाङ्घ्रिमघौघमर्षतीर्थास्पदं हृदिकृतं सुविपक्वयोगैः ।
उत्सिक्तभक्त्युपहताशयजीवकोशा आपुर्भवद्गतिमथोऽनुगृहाण भक्तान् ॥ २६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कुलं सभाजयसि बहुमन्यसे अतः ब्रह्मण्येषु भवानग्रणीः श्रेष्ठः ॥ २० ॥

अथ भगवत्सङ्गत्या स्वकृतार्थतामाहुः—अद्येति । सद्गत्या सतामुपायोपेयेन त्वया सङ्गम्य सङ्गं प्राप्य विद्यादीनां साफल्यं जातं यद्यस्मात्त्वं श्रेयसां कल्याणानां परोऽवधिः ॥ २१ ॥

स्वयोगमायया युज्यते इति योगः सङ्कल्पस्तद्रूपया मायया वयुनेन छन्नमहिम्ने गूढप्रभावाय "नाहं प्रकाशः सर्वस्य योगमायासमावृतः" इति भगवद्वचनमप्यत्रानुसन्धेयम् एवम्भूताय दुर्ज्ञेयाय केवलं नमः ॥ २२ ॥

भाषा टीका ।

भ्रम आदि दोष रहित वेद आप का अन्तरङ्ग है जिस वेद में तप वेदाध्ययन संयमों को साथ परमार्थ स्वरूप शरीर जीवात्म स्वरूप तथा चेतनाचेतन से परे परमात्म स्वरूप का यथा ज्ञान होता है अर्थात् वर्णाश्रय धर्म का और माया जीव ईश्वर तत्त्वत्रय का यथावत ज्ञान उस वेद से हि होता है ब्राह्मणों के संमान करणे में कारण यह है कि—माया जीव और इन से परे परमातमा इन का यथा वत् स्वरूप जिस वेद से जानो गयो है वह निर्दोष वेदरूप ब्रह्म आप का हृदय है ॥ १९ ॥

हे ब्रह्मन् ! वेदरूप शास्त्र आप का ज्ञापक है उस आप के वेद का धारण करने वारा ब्राह्मण कुल है इसी कारण से आप ब्राह्मणकुल का पूजन करते हो दूसरें ब्राह्मणकुल के विषय में भक्ति वारेन में आप श्रेष्ठ हो इस कारण से भी ब्राह्मणकुल का पूजन करते हो ॥ २० ॥

सत्पुरुषों को संसार समुद्र से पार करने वारे तथा परम पुरुषार्थ आप के साथ समागम को प्राप्त होकर अब हमारे जन्म की सफलताभई है तथा विद्या तप दृष्टियों की सफलता भी अब हि भई है कारण कि-आप का समागम हि सब श्रेयका परम अवधि है उस के सिवाय अन्य उसम फल नहि है ॥ २१ ॥

निरवधिक ज्ञानादि कल्याण गुण सम्पन्न परमानन्द स्वरूप प्रति रोध रहित बुद्धि युतनिज आश्चर्य शक्ति से अच्छादित यहिमा वारे सब के भीतर प्रवेश कर नियम करने वारे वेदान्त प्रसिद्ध आप के अर्थ हमारा नमस्कार है ॥ २२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एकस्मिन्नेव स्थाने आरामो येषां तेऽपि कालं मृत्य्वादिकारणम् ईश्वरं नियन्तारम् ॥ २३ ॥

एतत्सदृष्टान्तमाहुः—यथेति । शयानः स्वप्नान् पश्यन् गुणतत्त्वदृक् स्वप्नविषयेषु तत्त्वदृष्टिः नाममात्रमिन्द्रियेण मनसा आभातं सिंहव्याघ्रादिरूपमात्मानं वेद तद्रहितं देवदत्तादिरूपमात्मानं न वेद यथा ॥ २४ ॥

एवं त्वा त्वां नाममात्रेषु स्वप्नादितुल्येषु विषयेष्विन्द्रियैर्या ईहा प्रवृत्तिः सैव माया तया विभ्रमच्चित्तो न वेद स्मृतेर्विवेकस्योपप्लवान्नाशात् ॥ २५ ॥

अघौघस्य मर्षं नाशं करोति यद्गङ्गाख्यं तीर्थं तस्यास्पदमाश्रयं तेऽङ्घ्रिं सुविपक्वयोगैरपि हृदिकृतं केवलं ननु दृष्टं तस्य तेऽङ्घ्रिं ददृशिम दृष्टवन्तो वयं बहुभिः पुण्यैरतोऽस्मान् भक्ताननुगृहाण भक्तान् कृत्वाऽनुगृहं कुर्वित्यर्थः । ननु किं भक्त्या यथापूर्वं तप एव तप्यतामिति नेत्याहुः उत्सिक्ता उद्रिक्ता या भक्तिस्तयोपहत [आशयलक्षणो] जीवकोशो येषां त एव पूर्वं भवद्गतिमापुर्नान्य इति ॥ २६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अहो दूरस्थाः के वयं यं श्रीकृष्णाख्यं स्वयं भगवन्तममी निकटस्थाः भूपाः अपि तथा एकारामाः वृष्णयोऽपि न विदन्ति यावन्महिमा तावत्त्वेनानुभवितुं न शक्नुवन्ति ननु सतत्सर्वमहिमाश्रयस्य प्रकटस्थाननुभवे किं कारणं तत्राहुः मायेति तर्हि तादृशमहिमाश्रयत्वे किं प्रमाणं तत्राहुः यवनिकेति । तत्तत्त्वदिच्छयाऽन्तरङ्गीकृतानाम् अनुभवोपि भवत्येवेतिभावः । महिमानमेवाहुः आत्मानं ब्रह्मरूपं कलयतीति कालमन्तर्यामिरूपम् ईश्वरं स्वयं भगवत्स्वरूपमिति ॥ २३ ॥

अन्यस्त्वन्यथैव वेदेत्याहुः—यथेतियुग्मकेन । तत्तु तैर्व्याख्यातम्

(१) एवं त्वामाश्रितं ब्रह्मन् नाममात्रेन्द्रियेहया ॥ इति वीर० पाठः ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अथवाऽयं व्याख्याक्रमः तादृशत्वे हेतुः स्वीयया असाधारणया योगमायया आवरणशक्त्यापि न छन्नो नावृतो महिमा यस्य तस्मै अशेषैश्वर्यप्रकटनात् यद्वा स्वेन भगवता योगः भक्तानां संयोगो यया तया मायया कृपया हेतुना अच्छन्नमहिम्ने अत एव परमात्मने सर्वेषां परमप्रियतमाय एवम्भूत्वा एते महमत्तोपि महाभग्या इत्याहुः—यम् अमी सन्ततसमागमिनो भूयास्तथैकारामा वृष्णयश्च मायायवनिकाच्छन्नं न विदन्ति, न पश्यन्ति किन्तु प्रकटस्वस्वरूपत्वादनाच्छन्नमेव पश्यन्ति तदनाच्छन्नत्वमनुभूयापि आत्मानं निर्विशेषब्रह्मस्वरूपमात्रं न पश्यन्ति किन्तु तदतिक्रम्य सविशेषतत्स्वरूपमपि तादृशत्वमनुभूयापि कालम् अन्तर्यामिस्वरूपमात्रं न पश्यन्ति किन्तु तदतिक्रम्य तदंशि श्रीभगवतः स्वरूपमपि तादृशत्वमनुभूयापि ईश्वरं परमेश्वरस्वरूपमात्रं न पश्यन्ति किन्तु सर्वं तत्तदनुभवानन्दातिक्रमेतदप्यतिक्रम्य परमस्निग्धबान्धवकुलेश्वरस्वरूपमपीति "इत्थं सतां ब्रह्मसुखानुभूत्या" इत्यादि न्यायेन "राजन् पतिर्गुरुरलं भवतां यदूनाम्" इत्यादिन्यायेन च तत्र दृष्टान्तः यथा गुणतत्त्वदृक् विषयानुभविता जाग्रत्स्वप्नावस्थः पुरुषः क्रमशस्तत्तदनुभूयातिक्रम्य च शयानः सुषुप्तस्सन् आत्मानं नाम्ना देवदत्तादिनाममात्राभिर्विषयानुभवैरिन्द्रियैश्चाभातं न वेद किन्तु तत्तद्रहितं परं शुद्धसुखस्वरूपं वेदेति यस्तु मायया विभ्रमचित्तः स त्वेवं न वेद मायाविभ्रममेवाहुः नाममात्रेन्द्रियेहया स्मृत्युपप्लवादिति अथवा शयानोपि पुरुषः वृष्णीनां मध्ये कश्चित्पुमान् आत्मानं त्वां यथा यथावद्वेद नतु रहितं तद्व्यतिरिक्तं परमन्यत् कुतः गुणानां कारुण्यादीनां तत्त्वं सत्यत्वनित्यत्वादिकं पश्यति साक्षादनुभवतीति तथा सः यथावत्स्वमेवाहुः—नामसु सर्वसंज्ञासु मात्रासु विषयेषु च आभातं स्वयमेव परिस्फुरितमिति एषां भगवत्समाधिरेव सुषुप्तमिति भावः। वक्ष्यते च 'शय्याशनाटनालाप' इत्यादि यद्वा नाम श्रीकृष्णादिसंज्ञा मीयते दृश्यत इति मात्रा रूपम् इन्द्रियाणि च तैराभातमेव श्यामसुन्दरं वेद नतु तैः रहितं ब्रह्मरूपमित्यर्थः ॥२४॥

उपसंहरति—एवमिति। त्वा त्वां प्रति अयं सर्वोपि जनः वेदानां स्मृतीनां धर्मशास्त्राणाञ्चोपप्लवादपि नाममात्रेषु येषु केषुचिद्विषयेषु या इन्द्रियाणामीहा प्रवृत्तिस्तयापि मायया मायारूपया विभ्रमचित्तो न भवति किन्तु वेद सदा त्वामनुभवतीत्यर्थः। अत्र 'एवं त्वा नाममात्रेषु विषयेष्विन्द्रियेहया' इति पाठो न स्वामिसम्मतः स्वप्नादितुल्यविषयेष्विति समस्तेन व्याख्यानात् किन्तु 'एवं त्वायं जनो ब्रह्मन्नाममात्रेन्द्रियेहया' इत्येव तत्सम्मत इति ज्ञेयम् ॥ २५ ॥

उपसंहरन्ति—तस्यैवमतिविरलानुभवस्य ते तवाङ्घ्रियुग्ममद्य वयं दद्राक्ष्म तस्माद्देशाद्य नो जन्मसाफल्यमित्युपक्रान्तमित्यर्थः। यतः परमसाधनसाध्यरूपमिदमिति क्रमात् विशेषणद्वयेनाहुः, अघौघेति। त्वद्भक्तिविमुखवृत्तिलक्षणापराधकुर्वन्नमापकगङ्गादिमहातीर्थानाम उत्पत्तिस्थानं सुविपक्वयोगैरात्मारामैश्च हृदि कृतमिति नन्वात्मरामत्वादिकमनादृत्य किं भक्तिमेव श्लाघध्वे तत्राहुः, उत्सिक्तेति। अपहृतेत्यत्र अपहृतेति पाठेपि स एवार्थः। तस्मात्किङ्करान् कृत्वा अनुगृहाण यथैवं दर्शनभाग्यं नित्यमेव जायेतेति भावः ॥ २६ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

यथा शयान इति स्वप्ने देहेन्द्रियादियुक्तमात्मानं पश्यति न देहात्परम् ॥ २४ ॥

एवं जाग्रत्पुरुषोपि न देहातिरिक्तं पश्यति अतः सुप्तप्रायपुरुषः प्रत्यगात्मानं न वेद आत्मनः परं परमात्मानं च न वेदेति कैमुत्यसिद्धमित्यर्थः। स्मृत्युपप्लवात् "ध्रुवा स्मृतिः" इति श्रुतिसिद्धोपासनान्वयाभावात् ॥ २३—२८ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

केवलं वयमेव न शक्नुमोऽपितु शश्वत्सहचरा वृष्णयोऽपीत्यभिप्रेत्याहुः—नेति। एकस्मिन् स्वात्मन्येवारमन्त इति तथा ते केवलप्रत्यगात्मानुभवपराश्च यं त्वां न विदन्ति यथा—वत्न जानन्ति कथम्भूतम्? सर्वजीवमोहिनी मायैव यवनिका तिरस्कारिणी तया छन्नं भूपादिनानाविषयम आत्मानमीश्वरमन्तरात्मतयासन्तमपि कालं बहिः कालरूपेण परिच्छिन्दन्तम् ॥२३॥

एतत्सदृष्टान्तमाहुः—यथेति। गुणतत्त्वदृग्गुणेषु सत्त्वादिगुणकार्येषु शब्दादिविषयेषु तत्त्वदृक् पुरुषार्थदर्शी यद्वा गुणतत्त्वं गुणपरिणामरूपं तत्त्वं देहमात्मतया पश्यतीति तथा सः शयानः पुरुषो यथा नाममात्रेन्द्रियाभातं मात्राशब्देन रूपं विवक्षितं स्वाप्ननामरूपेन्द्रियैरवभातमुपलक्षितं युक्तमित्यर्थः। तमात्मानं वेद नतु स्वतो नामादिरहितं परं देहाद्विलक्षणमात्मानं वेद ॥ २४ ॥

एवं जाग्रत्पुरुषोपि हे ब्रह्मन्! मायया त्वन्मायामूलया नाममात्रेन्द्रियेहया नाममात्रेन्द्रियानुगुणचेष्टया यः स्मृत्युपप्लवः स्वात्मपरमात्मयाथात्म्यविषयः स्मृतेः प्रमोषः तस्माद्विभ्रमत् अनात्मानं देहमात्मतया परतन्त्रं स्वतन्त्रतया च गृह्णच्चित्तं यस्य सः त्वामाश्रितं कर्त्तारिक्तः तं प्रत्यगात्मानमेव; न वेद प्रत्यगात्मनः परमात्मानं त्वां न वेदैवेति कैमुत्यसिद्धमित्यर्थः ॥ २५ ॥

तर्हि कैरप्यविज्ञेयोऽहमनुपास्योऽमोक्षदश्चेत्यत आहुः तस्येति। अघौघस्य मर्षं शुद्धिं करोति यद्गङ्गादितीर्थं तस्याश्रयमास्पदं ते तवाङ्घ्रि सुविपक्वो योगो भक्तियोगो येषां तैर्हृदि कृतं साक्षात्कृतं वयमधुना दर्शाम सुविपक्वयोगैर्हृदि कृतम् इत्यनेन योगपरिशुद्धमनोदृश्यत्वमुक्तम् अतः कैश्चिदप्यविज्ञेयत्वमनुपास्यत्वं च निरस्तम उत्सिक्तयोद्रिक्तया भक्त्या अपहृतः आशयो वासना जीवकोशः अज्ञानरूपः कोशश्च येषां ते कोशवदावारकत्वात्कोशत्वरूपणं भवद्गति प्रापुः अनेन मुक्तप्राप्यत्वमुक्तं यत एवमतो भक्तानस्माननुगृहाण ॥ २६ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अहो दूरस्थाः के वयं यं कृष्णाख्यं भगवन्तममी निकट-

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्वा भूपा अपि तथा एकारामा वृष्णयोऽपि न विदन्ति । यावन्महिमा तावत्तेनानुभवितुं न शक्नुवन्ति । ननु, सततं सर्वमहिमाश्रयस्य प्रकटस्य अननुभवे किं कारणं तत्राहुः-मायेति तर्हि तादृशमहिमाश्रयत्वे किं प्रमाणं तत्राहुः यवनिकेति । तद्स्वेच्छयाऽन्तरङ्गीकृतानामनुभवोऽपि भवत्येवेति भावः । महिमानमेवाहुः । आत्मानं ब्रह्म स्वरूपं । कलयतीति कालमन्तर्यामिरूपम् ईश्वरं स्वयं भगवत्स्वरूपमिति ॥२३॥

अन्यस्त्वन्यथैव वेदेत्याह—यथेति युग्मकेन ॥ २४—२६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अत एव न केपि जानन्तीत्याह—न यं विदन्तीति । अमी विद्यमानाः भूपाः यदि जानीयुः तदा नैवं व्यवहारं कुर्युरिति तेषां सङ्गो नास्तीति न वक्तव्यं यतः एकारामाः चकाराज्जन्मप्रभृति सर्वाः क्रियाः एकत्रेति निरूपितं वृष्णयश्च तथात्वेन प्रसिद्धाः तथापि न विदन्तीति तत्र हेतुं स्मारयन्ति माया(ज)यवनिकाच्छन्नमिति पुत्रोऽयं भ्राता पिता इत्यादि बुद्धिहेतुभूतया मायया नात्यं आवश्यकरूपया यवनिकया आच्छन्नं ननु ते हीनाः स्वभावत एव भगवन्तं न ज्ञास्यन्ति किमाच्छादनेनेति चेत् तत्राह—आत्मानमिति अनेन तेषां संसारोपि न भवेदिति लीलाबाधोपि निरूपितः किञ्च कालोऽयं यद्यात्मानं ज्ञापयेत् तदा ते मारिता न भवेयुरिति किञ्च ईश्वरोयम् ईश्वरास्तु गुप्ता एव तिष्ठन्तीति ॥ २३ ॥

नन्वात्मत्वे व्यवधानाभावात् कथमेतं न ज्ञातवन्तस्तत्राह, यथा शयान इति । यथा निद्रा आत्मज्ञाने व्यवधायिका तथा अविद्या माया वा भगवदीया तेषामात्मज्ञाने हेतुरिति वक्तुं मायायवनिकाच्छन्नत्वेन निरूपितमपि प्रकारभेदेन निरूपयितुम् इदमुच्यते शयानः पुरुषः आत्मानं नाममात्रेन्द्रियेष्वेव आभातं वेद ननु ततः परं तत्र हेतुः गुणतत्त्वदृगिति । गुणेषु स्वप्नप्रतिभातविषयेषु तत्त्वदृक् परमार्थबुद्धिः यदि जानीयादेते अपरमार्थाः इदानीमनुभूयमानदेहक्रियासहिताः तदा जाग्रदवस्थमात्मानं जानीयादेव नन्वात्मानुभवस्तत्राप्यस्तीति चेत् सत्यं तथापि नाम तदानीन्तनं देवदत्तादिरूपं मात्रा विषयाः इन्द्रियाणि च तेष्वेवाभातः त एव अहन्तया गृहीता इति आत्माभासप्रतीतिरेव नत्वात्मप्रतीतिः इत्यर्थः । उभयं निषेधयन्ति, न वेद रहितं परामिति. पूर्वोक्तनामादिरहितं तदवस्थातोपि च परं न वेद ॥ २४ ॥

एवं दृष्टान्तमुपपाद्य दार्ष्टान्तिके योजयति–एवं त्वामिति । यथा स्वप्नसङ्घातस्यायं सङ्घातः आत्मा तथाऽस्य भगवान् अत एव भगवतः अज्ञानं न च वक्तव्यं स्वप्ने अयं देहो न स्थितः ततो वैलक्षण्यमिति तर्हि क गतः तत्रैवाधारे तस्य प्रपञ्चस्योत्पन्नत्वात् अन्यथा तच्चालने तदपगमो न स्यात् तथापि न स पृथग्भासत इति चेत् तस्य परिच्छिन्नत्वात् तत्स्थानीयमन्यच्च स्वीकृतवानिति असमर्थत्वात्तस्याभानं भगवतस्तु व्यापकत्वात् सर्वसमर्थत्वाच्च पृथगप्याभानमेतावान् विशेषः अज्ञानं तु तुल्यमेव तदाह नाममात्रेन्द्रियेहया नाममात्रेन्द्रियेषु चलनादन्यथाबुद्धिकारिण्या आत्मबुद्धिमुत्पादयन्त्या विशेषेण भ्रमचित्तः त्वां परमार्थत आत्मानं न वेद अनेनाऽऽत्म परमात्मभावमेवानङ्गीकारेपि भगवद्ज्ञानं न समर्थितं नन्वनादिसिद्धत्वात्संसारस्य गुरुशास्त्रतपोभिः कदाचिद्भगवदनुभवः सम्भवति आत्मानुभवो वा ततः इदानीं भगवन्तं दृष्ट्वा सोऽयमिति कथं न प्रतीतिस्तत्राह–स्मृत्युपप्लवादिति ॥ २५ ॥

जन्ममरणादिना स्मृतिनाशात् तादृशोऽयमद्य दृष्ट इति स्वकृतार्थतामनूद्य कृपां प्रार्थयन्ते–तस्याद्येति । यः कदाचिदपि नोपलब्धः यः फलं सर्वं च स दृष्ट एव तत्रापि यथा सर्वदा दर्शनं भवति तेनोपायेन सहितो न दृष्ट इति ज्ञापनार्थं तस्याङ्घ्रि इदाशिमेत्युक्तं चरणस्य सर्वदा साक्षात्कारहेतुत्वे प्रकारमाह—अघौघमर्षमित्यादि त्रिभिर्विशेषणैः—

"मलापकर्षणं पूर्वं शुद्धादिगुणयोजनम् ।
ततश्च फलरूपं च योगसाधनभावितम् ॥

अघौघस्य पापसमूहस्य मर्षं मृषात्वं यस्मात् मर्षणं शोधनं वा किञ्च तीर्थास्पदं गङ्गादीनामुत्पत्तिस्थानं ततो योगसिद्धैः हृदि फलत्वे कृतम् एतादृशे चेत्प्राप्ताः तदा क्रमेण हृदि स्थितो भविष्यतीति तेनाग्रे सर्वं सेत्स्यतीति स्वभाग्याभिनन्दनं ननु कथमग्रे भवन्तो मुक्ता भविष्यन्तीति चेत्तं प्रकारमाहुः–उत्सिक्तेति उत्सिक्ता या भक्तिः मर्यादामुल्लङ्घ्य अधिका जाता तया कृत्वा उपहृता भगवते समर्पिताः आशयजीवकोशाः अन्तःकरणात्मसङ्घाताः यैः सङ्घातादात्मा तदुपाधिश्च पृथक्कृत्य निरूपितो आन्तरत्वज्ञापनाय आशय एव वा जीवकोश एवमुपाधिसमर्पणे केवला वयं भवद्गतिमापुः "आशंसायां भूतवच्च" (३ ३-१३२) इति प्राप्स्याम इति लृटि प्रयोक्तव्ये लिट् प्रयोगः अथ अस्मात् त्वदीया एवेति भक्तानस्माननुगृहाण आत्मसात्कुर्विति प्रार्थना ॥ २६ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एतस्मिन् शय्यासनादावारमन्तीति ते वृष्णयः आत्मानं परमप्रेमास्पदं यं त्वाम् ईश्वरं न विदन्ति अमी असाधवो भूपाः कालं स्वसंहर्तारं यं त्वाम् ईश्वरं न विदन्ति कुतः मायैव यवनिका तेषां ज्ञानस्यावरणकारिका तया आच्छन्नं तत्र भूपेषु माया अविद्या वृष्णिषु योगमायेति विवेचनीयम् ॥ २३ ॥

किञ्चानेकनामरूपात्मकमिदं जगत् त्वमेक एव ततः परोपि भवसीति लोकोऽयं न वेदेति सदृष्टान्तमाहुर्यथेति द्वाभ्याम् । यथा पुरुषो जीवः शयानः स्वप्नान् पश्यन् गुणतत्त्वदृक् स्वप्नविषयेषु तत्त्वदृष्टिः माम व्याघ्रादि मात्रा तद्रूपादि इन्द्रियं तत्श्रोत्रादि तैराभातं व्याघ्रसर्पराजादिकमनेकनामरूपं वेद ननु तत्तद्रूपी भवन्तमप्यात्मानं स्वरूपेण तद्रहितं ततो भिन्नं परं केवलमेकं वेद एवमेव तथा त्वाम् अयमज्ञानी अमी नामानि देवमनुष्यादीनि मात्रास्तद्रूपादयः इन्द्रियाणि तत्श्रोत्रादीनि ईहास्तच्चेष्टाश्च यतस्तया मायया भ्रमचित्तः सन् न वेद त्वां जगद्रूपेण बहुनामरूपमपि स्वरूपेण ततो भिन्नं न

श्रीशुक उवाच।

इत्यनुज्ञाप्य दाशार्हं धृतराष्ट्रं युधिष्ठिरम्।
राजर्षे! स्वाश्रमान् गन्तुं मुनयो दधिरे मनः ॥ २७ ॥
तद्वीक्ष्य तानुपव्रज्य वसुदेवो महायशाः।
प्रणम्य चोपसङ्गृह्य बभाषेदं सुयन्त्रितः ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

जानातीत्यर्थः। स्मृत्युपप्लवात् विवेकध्वंसात् ॥ २४ ॥ २५ ॥

ब्रह्मादयश्चाज्ञाव्याचक्षणा अपि वयन्तु त्वद्भक्ता एव भक्तिं विना एतादृशात्वद्दर्शनानुपपत्तेरित्याहुः—तस्येति। अघौघस्य मर्षो नाशो यस्मात् तस्य तीर्थस्य गङ्गाख्यस्य आस्पदमाश्रयं सुविपक्वयोगैरपि हृदि कृतं न तु दृष्टं वयं तु तदङ्घ्रिं दद्दशिम ननु तदपि लिङ्गदेहध्वंसनार्थं ज्ञानमवश्यापेक्ष्यमिति तत्राहुः उत्सिक्ता उद्रिक्ता या भक्तिस्तयैव उपहतः आशयलक्षणो जीवकोशो येषां ते एव पूर्वे भगवद्गतिमापुः नान्ये अथो अत एव भक्तानेवास्मान् ज्ञात्वा अनुगृहाण ॥ २६—१७ ॥

गङ्गादि तस्य आस्पदमाश्रयं सुविपक्वयोगैः सुष्ठुः विपक्वः भक्तिलक्षणो योगो येषां तैः हृदि कृतं साक्षाद्दृष्टम तस्य तेऽङ्घ्रिं दद्दशिम दृष्टवन्तो वयमतो ज्ञायते वयं भक्ता एव अतो ऽस्मान् भक्तान् अनुगृहाण कार्यकारणप्रकृतिवियोग-पूर्वकं स्वप्राप्तिलक्षणं मोक्षं देहीत्यर्थः। यतः उत्सिक्तया उद्रि-क्तया भक्त्या उपहतः विनष्टः आशयो वासना जीवकोशः लिङ्गदेहश्च येषां भवद्गतिं प्रापुः अतः ॥ २६ ॥

भाषा टीका।

माया रूपी कनात से ढके हुए सब के आत्मा तथा कालरूपी जिस ईश्वर को ए राजा लोग नहि जानते तथा भगवान्के साथ एक स्थान में रमण करने वारे ए यादव लोग भी नहि जानते ॥ २३ ॥

शरीर को आत्मा करके देखने वारा सुता भया पुरुष जैसे स्वप्न काल के नाम रूप इन्द्रियों युक्त देह को हि जानता है कुछ नामरूपादि रहित और देह से परे आत्मा को नहि जानता ॥ २४ ॥

इसी प्रकार स्वप्न के सदृश विषयों में इन्द्रियों करके प्रवृत्ति रूप माया से भ्रमित चित्त वारा जागता पुरुष भी विवेक के नाश होने से आप को नहि जानता ॥ २५ ॥

उक्त माहात्म्य सम्पन्न आप के चरणारविन्द को दर्शन अब हमने किया वह चरणारविन्द पाप समुदाय का नाश करने वारा है और वह सब तीर्थों का निवास है और जिन को उपासना की सिद्धि भई है जिनोने उस चरणार-विन्द को निज हृदय में किया है औ बढी भई भक्ति से जिनकी वासना का तथा अज्ञान का नाश भया है वे सत्पुरुष आप को गति को प्राप्त भए हैं इस कारण आप के भक्त जन हम लोगों के ऊपर आप अनुग्रह कीजिये ॥ २६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

न केवलं वयमेव त्वद्याथात्म्यानभिज्ञाः एकस्मिन्नेव स्थाने आगमो येषां ते वृष्णयोऽपि यं त्वां न विदन्ति यथावन्न जानन्ति तस्मै नम इति पूर्वेण सम्बन्धः कथम्भूतं माया भगवच्छक्तिः सैव यवनिका जीवावरणहेतुभूता तिरस्करिणी तया अच्छन्नमनावृतमपि साक्षाद्रूपेण सन्तमपि स्वयं तया मोहिता न विदन्तीत्यर्थः। अनावृतत्वाद्बहिरन्तरं न ते इत्यु-क्तत्वाच्च कालं सर्वसंहारहेतुमीश्वरं नियन्तारम् ॥ २३ ॥

स्वस्वरूपन्तावज्जीवो न जानाति परमात्मानं न जानातीति कैमुत्यन्यायं द्योतयन्तः एतत्सदृष्टान्तमाहुः शयानः अयानो वा पुरुषः परं केवलं गुणतत्त्वदृक् गुणे गुणकार्ये देहे एवेदं तत्त्वमिति दृक् दृष्टिर्यस्य सः देहात्ममानी नामानि च मात्रा-शब्दवाच्यानि रूपाणि चेन्द्रियाणि च तेषां समाहारः नाममात्रेन्द्रियम् आभाति यतः तं देहेन्द्रियादिप्रकाशरहितं देहेन्द्रियादिभिन्नं परं श्रेष्ठम् आत्मानं स्वस्वरूपं यथा न वेद ॥ २४ ॥

एवं स्वत्र त्वां पुरुषः स्मृतेः आत्मपरमात्मविवेकस्य उप-प्लवात् न वेदेति किमुत वक्तव्यम् नाममात्रेषु नामरूपेषु देह-गेहादिषु विषयेषु शब्दादिषु च इन्द्रियेहया इन्द्रियचेष्टया मायया मायाकार्यान्तःकरणवृत्त्या भ्रमचित्तः इति स्मृत्युपप्लवे हेतुर्दर्शितः ॥ २५ ॥

एवं सामान्यतो भगवतो दुर्ज्ञेयत्वमुक्तमथ शिष्टैर्भक्त्या त्वच्चरणं हृदि साक्षाद्दृष्टमतो वयमपि पूर्वं त्वद्भक्ता एव प्रत्यक्षचरणानुभवोपपत्तेः अतो भक्तान् प्रत्यक्षचरणानुभवज्ञान-वतोऽस्मान् स्वप्राप्तिलक्षणं मोक्षं देहीति प्रार्थयन्ते तस्येति हे आद्य विश्वहेतो! अघौघस्य मर्षं नाशं करोतीति तत् तीर्थं

श्रीधरस्वामिकृतभावार्थदीपिका।

॥ २७ ॥

उपसङ्गृह्य चरणौ पाणिभ्यां धृत्वा बभाषे इदमिति सन्धिरार्षः ॥ २८ ॥

वसुदेव उवाच ।

नमो वः सर्वदेवेभ्य ऋषयः श्रोतुमर्हथ ।
कर्मणा कर्मनिर्हारो यथा स्यान्नस्तदुच्यताम् ॥ २९ ॥

श्रीनारद उवाच ।

नातिचित्रमिदं विप्रा वसुदेवो बुभुत्सया ।
कृष्णं मत्वाऽर्भकं यन्नः पृच्छति श्रेय आत्मनः ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सर्वे देवा येषु तेभ्यः "यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति" इति श्रुतेः । येन कर्मणा यथाकृतेन वा कर्मणां निर्हारो निरासो भवति तदुच्यताम् ॥ २९ ॥

श्रीकृष्णं हित्वाऽस्मान् पृच्छतीति विस्मितान् प्रत्याह—नातीति । बुभुत्सया बोद्धुमिच्छया ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इति विज्ञप्तिप्रकारविशेषेणानुज्ञाप्य प्रस्थानार्थमनुज्ञां प्रार्थ्य दाशार्हं तत्कुलेऽवतीर्णं स्वयं भगवन्तं धृतराष्ट्रश्चेति तन्मध्ये उपविष्टत्वादन्धत्वात् श्रीव्यासात्मजत्वाच्छ्रीयुधिष्ठिरानुबोधाच्च स्वस्वाश्रमजिगमिषां च तेषां श्रीभगवदिच्छामभिप्रेत्य तत्रस्थशिष्यपरिचारकेषु भक्त्युपदेशायेति ज्ञेयम् अतो राजर्षे इति तत्तदभिप्रायं जानास्येवेति भावः ॥ २७ ॥

तत्तेषां मनो वीक्ष्य अभिप्रायं विज्ञायेत्यर्थः । तानुपव्रज्य तेषां समीपे गत्वा श्रीभगवत्पितृत्वेन महायशाः अतः श्रीभगवद्वदेव लौकिकलीलामनुसृत्य तदुचितस्वयशसा तत्र लोकांश्चानन्दयितुमिति भावः । सुयन्त्रितः परमविनीतः सन् ॥ २८ ॥

किं तदाह कर्मणेति । स्वयं ज्ञायमानस्यापि तान् प्रति प्रश्नस्तेषां तदुपदेशाधिकारिणां प्रमाणनेन मर्य्यादाप्रतिपालनाय ॥ २९ ॥

तत्र नन्वहो अस्मन्मनोरथदुष्प्रापभागधेयः श्रीकृष्णपिताऽसौ कथमन्यच्छ्रेयः पृच्छति पृच्छति चेत् तं त्यक्त्वा कथमन्यं पृच्छति इति विस्मित्य मनुयस्तूष्णीमासन् श्रीनारदस्तु पूर्वोक्तं तदभिप्रायं बुद्ध्वाऽप्यसहमान एवमचिन्तयत् यथाऽयं खलु सर्वश्रेयःप्रथप्रवीणः श्रीकृष्णमहिमनिष्णातश्च ननु श्रीनन्दवत्तदीयकेवलमाधुरीमग्नः तथापि यदिदं पृच्छति तत्किल लौकिकलीलायां स्वद्वारा स्वपुत्रस्य तस्य सात्विकयशोविस्तारणायैव तच्चातितुच्छमेव परममहिमकाष्ठावरिष्ठस्य तस्य ततः स्वयं श्रीभगवान् वा कथञ्चिदात्ममहिमगोपनीं तत्तल्लीलां प्रकाशयतु कथन्तरामयमपि तदनुवर्त्तते यदि वयमप्येतदनुवर्त्तामहे तदा मुह्येदेव लोकः तस्मादेतदुपालम्भव्याजेन श्रीभगवन्महिमैवास्माभिर्व्यञ्जयितुं योग्य इति तथैवाह—नापीति चतुर्भिः । तत्र तदुपालम्भः प्रथमाभ्यां लोकमोहदोषः उत्तराभ्याम् अपीति वाकदाक्यं अतीति चित्सुखः कृष्णं स्वयं भगवत्त्वेन सर्वपुरुषार्थशिरोमणिमपि सर्वज्ञशिरोमणिमपीत्यर्थः । अर्भकं लौकिकापत्यतुल्यं मत्वा आत्मनः श्रेयः पुरुषार्थान्तरसाधनं पृच्छति तत्रापि तं समीपवर्तिनं परित्यज्यास्मान् पृच्छतीत्यर्थः ॥ ३० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कर्मनिर्हारः कर्मबन्धच्छापणम ॥ २९—३१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतीति । दाशार्हं श्रीकृष्णम् इदमुक्त्वा अनुज्ञां पृष्ट्वेत्यर्थः । हे राजर्षे ! मनोदधिरे मनश्चक्रुः ॥ २७ ॥

तदिति । तन्मनोधानं वीक्ष्य तान्मुनीनुपव्रज्य समीपमेत्य प्रणम्योपसङ्गम्य चरणौ पाणिभ्यां धृत्वा सुयन्त्रितोऽवहितचित्तः इदं वक्ष्यमाणं बभाषे ॥ २८ ॥

सर्वे देवा येषु तेभ्यः युष्मभ्यं नमः हे ऋषयः ! श्रोतुं मद्वच इति शेषः "यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति" इतिश्रुतिप्रसिद्ध्यभिप्रायेणं सर्वदेवेभ्य इत्युक्तं किं तद्वच इत्यत आह— कर्मणेति । यथा यथानुष्ठितेन कर्मणा वर्णाश्रमानुगुणेन कर्मणां भगवद्भक्तियोगोत्पत्तिप्रतिबन्धकानां प्राचीनपुण्यापुण्यात्मकानां निर्हारः स्यादिति तदुच्यतां तत्रोत्तरमुच्यतामित्यर्थः ॥ २९ ॥

इत्थं पृष्टेषु मुनिषु किं सर्वज्ञं कृष्णं हित्वा अस्मान् पृच्छतीत्येवं संशयितवत्सु तान् प्रति प्रश्नकारणमुत्थापयन्नाह नारदः—नातिचित्रमिति चतुर्भिः । हे विप्राः ! वसुदेवः आत्मनः स्वस्य श्रेयस्साधनं बोद्धुमिच्छया नोऽस्मान् पृच्छतीत्येतन्नातिचित्रं तत्रहेतुः, कृष्णमर्भकं मत्वेति । मत्वा नः पृच्छतीति सम्बन्धः ॥ ३० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

धृतराष्ट्रं चेति तन्मध्ये उपविष्टत्वेन श्रीयुधिष्ठिरानुरोधात् ॥ २७ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रीभगवत्पितृत्वेन महायशाः । अतः श्रीभगवद्वदेव लौकिक लीलामनुसृत्य · तदुचितस्वयशसा तं लोकांश्चानन्दयितुमिति भावः ॥ २८ ॥

नन्वहो असमम्मनोरथदुष्प्रापभागधेयः श्रीकृष्णपिताऽसौ कथमन्यच्छ्रेयः पृच्छति चेत्तं त्यक्त्वा कथमन्यं पृच्छतीति विस्मित्य मुनयस्तूष्णीमासन् श्रीनारदस्तु पूर्वोक्तं तदभिप्रायं बुद्ध्वाऽप्यसहमानः एवमचिन्तयत् यथाऽयं खलु सर्वश्रेयःपथप्रवीणः श्रीकृष्णमहिमाभिज्ञातश्च । ननु श्रीनन्दवत्तदीयकेवलमाधुरी मग्नः तथापि यदिदं पृच्छति तत्किल लौकिकलीलायां स्वद्वारा स्वपुत्रस्य सात्विकयशोविस्तारणार्थमेव । तच्चानितुच्छमेव परम काष्ठावारिष्ठस्य ततः स्वयं भगवान् वा कथञ्चित् आत्ममहिम गोपनीं तत्तल्लीलां प्रकाशयतु कथन्तरामयमपि तदनुवर्त्तते यदि च वयमप्येतदनुवर्त्तामहे तदा मुग्धो देवलोकः तस्मादेतदुपालम्भव्याजेन श्रीभगवन्महिमैवास्माभिर्व्यञ्जयितुं योग्य इति ॥२९॥

तथैवाह—नापीमिचतुर्भिः । मर्त्यानामिति मर्त्यलीलाङ्गीकारादस्यापि तादृशो भावो जात इति भावः ॥ ३०—३३ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

ननु, साक्षाद्विराजमाने श्रीकृष्णे वसुदेवः कथमस्मान् पृच्छतीति मुनीनामाशङ्कामुत्थाप्य नारदो वदति-नापिचित्रमित्यादि । वसुदेवस्य वात्सल्यपरमभक्तत्वात् कृष्णे नित्यमर्भकबुद्धिरेव नोपदेष्टृबुद्धिरिति तम् अर्भकं मत्वा नः पृच्छतीति नापि चित्रम् ॥ ३० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं प्रार्थयित्वा तूष्णीमेवाङ्गीकारे कृतार्थत्वं ज्ञात्वा गन्तुमारेभिर इत्याह—इत्यनुज्ञाप्येति । दाशार्हं सेवकप्रियं ततो भक्ता अप्यनुज्ञाता इत्याह धृतराष्ट्रं युधिष्ठिरमिति वृद्धभक्तौ निरूपितौ विश्वासार्थं सम्बोधनं ततः स्वाश्रमान् गन्तुं मनो दधिरे ॥ २७ ॥

एवं निवृत्तिपराणां फलसिद्धिमुक्त्वा प्रवृत्तिपराणामपि फलसिद्ध्यर्थं प्रक्रियान्तरमारभते—तद्वीक्ष्येति । वसुदेवो हि तानुत्कृष्टान् जानाति अतः स्वकृतार्थत्वाय तान् प्रष्टुं यतते अतस्तानुपव्रज्य तस्यैवं ज्ञानिस्तारार्थं यत्ने पूर्वसिद्धं हेतुमाह—महायशा इति । महद्यशो यस्येति कथनार्थं इष्टमप्युपायं कृतवानित्याह—प्रणम्येति । चकारात्स्तोत्रमपि कृत्वा उपसङ्गम्य निकटे समागत्य सुयन्त्रितस्सन् वक्ष्यमाणमिदं बभाषे सन्धिरार्षः ॥ २८ ॥

ज्ञापनामाह—नमो वः सर्वदेवेभ्य इति । यद्यप्येते ऋषयः तथापि सर्वे देवा येष्वति "यावतीर्वै देवताः" इत्यादिश्रुतेः । सर्वदेवत्वम् अनेन देवा भवदधीना इति . स्तुतिरप्युक्ता हे ऋषयः ! लौकिकदृष्टारः अतो मत्स्वरूपं जानन्तीति विज्ञापितं श्रोतुमर्हथ, तदेवाहुः—कर्मणा कर्मनिर्हार इति । अयमाशयः ज्ञानेन कर्मनाशः सुप्रसिद्धः "ज्ञानाग्निः सर्वकर्माणि" इति वाक्यात् कर्मतु सजातीयं न व्यावर्त्तयति यद्यपि प्रायश्चित्ते कर्मनाशकत्वं निरूपितं तथापि न तत्कर्म अकर्म कर्म नाशयति विपरीतं वा निषिद्धं विधिबलाद्विहितं नाशयति यथा प्रायश्चित्तं यथा वा नद्यम्बु पूर्वपुण्यं नाशयति तथापि सजातीयस्य न भजातीयनाशकत्वं नद्यादिषु नद्यम्बुप्रभृतिषु कर्मनाशः अधर्मजननद्वारा तेन स नाशः दुःखमेव सम्पादयति न संसारनिवृत्तिः अन्यथा महान्तो ज्ञानतस्तत्रापि यतेरन् अतस्तादृशी कर्मनिवृत्तिरपेक्ष्यते यस्यां जातायां संसार एव निवर्त्तते यदि संसारनिवृत्तिमेव प्रार्थयेत् तदा ज्ञानादिकमेवोपदिदिशुः ज्ञानन्तु न गृहस्थस्येति मन्यते "कर्मण्येवाधिकारस्ते" इतिवाक्यात् अतः कर्मणैव केन चित्प्रकारेण कृतेन यथासंसारहेतुभूतकर्मनाशः तथा वक्तव्यमित्याह—नस्तद्वच्यतामिति । अत्र पुनः ऋषीणां पूर्ववत् सन्देह उत्पन्नः यथा भगवान् ईश्वरस्सन् विपरीतवाक्यमुक्तवान् तस्य च भावो यथाकथञ्चिद्वर्णितः एवं वसुदेवोऽपि मुक्त एव सिद्धसमस्तपुरुषार्थ एवं विपरीतवत् पूर्वनिर्हारं पृच्छति केनाभिप्रायेणेति किमस्मज्ज्ञानं प्रतीक्षते आहोस्विदन्यथेति ॥ २९ ॥

एवम् ऋषीणां सन्देहं ज्ञात्वा नारदः स्वयमाह—नापिचित्रमिदं विप्रा इति । इदं वसुदेववाक्यं नापि चित्रम् अपिशब्दात् गम्भीरार्थमपि न विप्रा इति भवन्तः पूरका इति स्वपूर्त्यर्थमेव तदाह, बुभुत्सयेति. ननु बुभुत्सामात्रं चेत्प्रयोजनं तदा कृष्णः किं न पृष्ट इति चेत्तत्राह—कृष्णं मत्वाऽर्भकं यत्र इति । स्वोत्पन्नः स्वाज्ञानं कथं ज्ञास्यतीति किञ्च "ये यथा मां प्रपद्यन्ते" इति न्यायेन वसुदेवदृष्टौ बालक एव प्रतिभाति अत एव नोऽस्मान् स्थूलान् पण्डितानिति ज्ञात्वा पृच्छति ॥ ३० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उपसङ्गृह्य पादौ धृत्वा बभाषे इदमिति सन्धिरार्षः एतावन्तो मुनयो हि निमन्त्र्यान्यानेतुमशक्याः एतैर्विना मम हृत्संशयोऽपि दुश्छेद एव तदधुनैवाहं प्रष्टव्यं पृच्छामीति भावः ॥ २८ ॥

सर्वदेवेभ्य इति । "यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति' इतिश्रुतेः । कर्मणैव कर्मणां निर्हारो नाशो यथेति मम गृहपुत्रकलत्राद्यासक्तस्य ज्ञानभक्त्योरनाधिकारादिति भावः ॥ २९ ॥

अहो अयं भगवतः पिताप्यात्मानं संसारिणं मन्यते यदि वा परार्थं पृच्छति तदपि कृष्णं हित्वा कथमस्मान् पृच्छतीत्यतिविस्मितांस्तान् प्रत्याह-नापीति । अर्भकं स्वपुत्रमेव नत्वीश्वरं अतः आत्मनः स्वस्यैव ॥ ३० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इत्येवं दाशार्हं श्रीकृष्णमुक्त्वेति शेषः । अनुज्ञाप्य आपृच्छ्य ॥ २७ ॥

सान्निकर्षो हि मर्त्यानामनादरणकारणम्।
गाङ्गं हित्वा यथाऽन्याम्भस्तत्रत्यो याति शुद्धये ॥ ३१ ॥
यस्यानुभूतिः कालेन लयोत्पत्त्यादिनाऽस्य वै।
स्वतोऽन्यस्माच्च गुणतो न कुतश्चन रिष्यति ॥ ३२ ॥
तं क्लेशकर्मपरिपाकगुणप्रवाहैरव्याहतानुभवमीश्वरमद्वितीयम्।
प्राणादिभिः स्वविभवैरुपगूढमन्यो मन्येत सूर्यमिव मेघहिमोपरागैः ॥ ३३ ॥
अथोचुर्मुनयो राजन्नाभाष्यानकदुन्दुभिम्।
सर्वेषां शृण्वतां राज्ञां तथैवाच्युतरामयोः ॥ ३४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तद्गमनोद्योगं वीक्ष्य उपव्रज्य समीपं प्राप्य उपसङ्गृह्य चरणग्रहणं हस्ताभ्यां कृत्वा बभाषेदमिति सन्धिरार्षः ॥ २८ ॥

हे ऋषयः! नमो वः युष्मभ्यं सर्वो विष्णुर्देव उपास्यो येषां तेभ्यः "विप्राणां देवदेवोऽसौ पूजनीयो जनार्दनः" इत्यादिभृगुवाक्यात् सर्वे देवा येषु तेभ्यः इति वा "यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति" इतिश्रुतेः। हे ऋषयः! श्रोतुमर्हथ मद्वाक्यमिति शेषः। कर्मणां भगवद्भावापत्तिलक्षणमोक्षप्रतिबन्धकानां निर्हारो निरासः यथा कर्मणा यथानुष्ठितेन क्रियायोगेन स्यात्तदुच्यताम् ॥ २९ ॥

यत् यतः कृष्णमर्भकं मत्वा बुभुत्सया बोद्धुमिच्छया नः अस्मान् पृच्छति तत्रापि आत्मनः स्वस्य अधुनापि श्रेयः पृच्छति अतः नातिचित्रं श्रीकृष्णं सर्वोपदेष्टृतया परमश्रेयोरूपतया च पुत्रवात्सल्यसुखसागरनिमग्नचित्तो न जानातीत्यर्थः ॥ ३० ॥

---

भाषाटीका।

श्रीशुकोउवाच।

हे राजर्षे। श्रीकृष्ण के प्रति तथा धृतराष्ट्र और युधिष्ठिर के प्रति जाने की अनुमति पूछकर मुनिजन निज२ आश्रमों को जाने के मन करते भए ॥ २७ ॥

ऋषियों के जाने के उद्योग को देखकर, महान् यशस्वी सपन्न वसुदेवजी, ऋषिन के पास जायकर उनको प्रणाम कर तथा उनके चरण पकर कर सावधान चित्त होकर यह वचन बोले ॥ २८ ॥

वसुदेव उवाच।

सर्व देवता रूप आपके अर्थ नमस्कार है, हे ऋषिओं आप मेरे वचन को सुनि येगा, जिस कर्म करनेसे जिस प्रकार कर्मों का नाश होता है सो हमारे प्रति आप कहियेगा ॥ २९ ॥

नारदउवाच।

हे विप्रओ श्रीकृष्ण को निज पुत्र मानिकर उस को छोडकर वसुदेवजी अपने कल्याण साधन को जानिबेकी इच्छा कर के जो हमारे प्रति पूछतेहैं यह अत्यन्त आश्चर्य नहिहै ॥ ३० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तत्रत्यो गङ्गातीरवासी ॥ ३१ ॥

श्रीकृष्णोऽर्भकत्वं मन्यमानोऽविद्याविजृम्भित इत्याह-यस्येति द्वाभ्याम्। अनुभूतिर्ज्ञानं कुतश्चिदपि न रिष्यति न नश्यति तदेवाऽऽह-कालेन कर्कटिकाफलवत् अस्य विश्वस्य लयोत्पत्त्यादिनाऽपि स्वतश्च विद्युदादिवत् अन्यस्माच्च मुद्गरादेर्घटादिवत् गुणतो रूपाद्यन्तरोत्पत्तेः पूर्वरूपादिना देहादिवत् ॥ ३२ ॥

तमेव कुतश्चिदप्यव्याहतानुभवमत एवेश्वरं किञ्च अद्वितीयं कृष्णमन्यः प्राकृतः उपगूढमाच्छन्नं मनुष्यं मन्येत कैः क्लेशकर्मादिभिः तत्र क्लेशाः रागादयश्च तत्पूर्वकाणि कर्माणि च तत्परिपाके सुखदुःखे च सत्त्वादीनां गुणानां पुनः प्रवाहश्च तैः प्राणादिभिश्च स्वैर्विभवैः स्वकार्यैः अत्र दृष्टान्तः मेघहिमोपरागैरभ्रतुषारराहुभिः स्वविभवैः सूर्यमिवेति ॥ ३३—३५ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

पूर्वत्र हेतुः—सन्निकर्षो हीति। सान्निकर्षोऽत्रेति पाठः क्वचित् पूर्वत्रैव दृष्टान्तः गाङ्गमिति मर्त्यानामिति मर्त्यलीलाङ्गीकारादस्यापि तादृशो भावो जात इति भावः। गाङ्गमम्भ इति गम्यम् अन्याम्भस्तीर्थान्तरमित्यर्थः ॥ ३१ ॥

यस्येति युग्मकम्। यस्य कर्तुः कर्मणश्चानुभूतिर्ज्ञानरूपा प्रकाशलक्षणा च न नश्यति अपितु नित्यं विराजत एवेत्यर्थः अन्यत्तैः। तत्रास्येत्यादौ विश्वस्य लयोत्पत्त्यादिहेतुनापि कालेनेति योजनिकार्थः। तथा घटादेर्नाशसम्बन्धीयो मुद्गरादिस्तेनैवेत्यर्थः तथा. गुणतो रूपाद्यन्तरोत्पत्तेर्हेतोः पूर्वरूपादिनाशद्वारा यथा देहादिर्नश्यतीत्यर्थः। दृष्टान्ताश्चैते व्यतिरेकेण एव तथा अद्वितीयं श्रीकृष्णमिति तस्यैव स्वयं भगवत्त्वाभिप्रायात् विशेषणान्येतेषां यथोत्तरं मनुष्यमननायोग्यत्वे हेतव

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

म् । तथापि क्लेशादिभिः प्राणादिभिश्चोपगूढं अन्यः साधारणो जनः निजपरिकरैः क्लेशादिभिः प्राणादिभिश्च हेतुभिर्मन्यते स्वयं क्लेशादियुक्तः आत्मानुमानानुसारेण तमपि. स्वसदृशं मन्येतेत्यर्थः । राहोरपि सूर्य्यविभवत्वं सूर्य्यस्य ग्रहराजत्वात् यद्वा तं क्लेशादीनां तत्रात्यन्ताभावत्वात्तैरव्याहतानुभवम् अतएवेश्वरं ज्ञानधीनज्ञानत्वात्परमस्वतन्त्रं तथा सर्वस्य तदेकप्रकाश्यत्वादद्वितीयं श्रीकृष्णमिमम् अन्यः पृथग्जन एव स्वविभवैः स्वरूपविभवरूपैरपि प्राणैरिन्द्रियैरादिग्रहणात्तत्तदवयवैश्चोपगूढं परिच्छिन्नज्ञानादिकं मन्येत मन्यत इति सम्भाव्यते कः कमिव मन्यते मेघादिभिः सूर्यमिवेत्यन्वयः अयं्चायं सूर्यस्तावन्मेघादिभिर्यथा परिच्छिन्नप्रकाशादिको भवति तद्युक्तमेव मेघस्य तदंशाकृष्टजलमयधूमादिपरिणामरूपत्वात् हिमस्य तदाकृष्टजलपरमाणुसङ्घरूपत्वात् उपरागहेतुराहोस्तत्प्रतियोगितमोरूपत्वात् तस्यास्य चक्षुरादयस्तु न तद्विधाः किन्तु स्वरूपविभवरूपाः तस्मात्तैराच्छन्नज्ञानादिर्न भवति नहि सूर्यो मेघादिभिरिव स्वरूपविभवैः प्रकाशौष्ण्यादिभिराच्छन्नप्रकाशादिर्भवति प्रत्युत तैः प्रकाशत एव तस्मात्स्वरूपस्य कालदेशाद्यपरिच्छिन्नत्वेन तद्विभवानां चक्षुरादीनामपि तादृशत्वादपरिच्छिन्नज्ञानादिरेवायं स्यात् मीक्ष एव तु जनोऽन्यथा मन्यत इति तदुक्तं "नचान्तर्न बहिर्यस्य" इति नातःपरं परमयद्भवतः स्वरूपमत्रानन्ते येनादृतो नरकभाग्भिरसत्प्रसङ्गैरिति येतु त्वदीयेत्यादि ॥ ३२—३३ ॥

अथानन्तरं श्रीवसुदेवनारदयोरभिप्रायं बुभुत्सुभयसमाधानार्थमित्यर्थः । तत्र श्रीनारदसमाधानन्तु वसुदेवभवान्नूनमिति उत्तरपद्येन ज्ञेयम् आभाष्य भोः परमकृतार्थशिरोमणे ! हे जगत्पूज्येत्यादिसम्बोध्य सप्तम्यर्थे षष्ठ्यः सर्वेषु राजसु शृण्वत्सु इति तान् प्रत्युपदेशार्थम् अच्युतरामयोश्च शृण्वतोरिति वक्ष्यमाणार्थस्य प्रामाण्यार्थः ॥ ३४ ॥

—————

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यस्यानुभूतिरिति । कालेन जन्मस्थितिप्रलयात्मकेन गुणत्रयावस्था अन्येषां ज्ञानलोपहेतवः तैरसङ्कुचितज्ञान इत्यर्थः ॥ ३२ ॥

अन्यैरलक्ष्यत्वे,दृष्टान्तमाह—सूर्यमिवेति ॥ ३३—३७ ॥

—————

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्कुत॰ इत्यत आह—सन्निकर्ष इति । हि यस्मात्सन्निकर्षः निरन्तरसान्निध्यमनादरणकारणं ततः कृष्णमर्भकं मत्वेत्यर्थः । सन्निकर्षस्यानादरणकारणत्वे दृष्टान्तः, गाङ्गमिति. यथा॰ तत्रस्थो गङ्गातीरस्थो गाङ्गमम्भो हित्वा अनादृत्य आत्मनो विशुद्धये विशुद्ध्यर्थम् अन्याम्भः प्रति याति पुण्यजलान्तरं याति तद्वत् ॥ ३१ ॥

एवं सन्निकर्षस्यानादरणकारणत्वमुक्त्वा सर्वज्ञत्वानभिज्ञानमपि तत्कारणमिति वक्तुं तावत्कृष्णस्य नित्यसर्वज्ञतामाह—यस्येति । यस्य कृष्णस्यानुभूतिर्ज्ञानं कालादिभिर्न रिष्यति न नश्यति तं श्रीकृष्णमिति उत्तरेण सम्बन्धः यथा अस्मदादीनामनुभूतेः कालादिभिः प्रमोषस्तथा नेश्वरस्येति भावः । अस्य जगत उत्पत्त्यादिनेत्यादिशब्देन प्रलयः गुणाः सत्त्वादयस्त्रयः कुतश्चन उक्तातिरिक्तादन्यस्मादपि कालादयो ह्यन्येषां ज्ञानलोपहेतवः तैरसङ्कुचितज्ञान इत्यर्थः ॥ ३२ ॥

तदेव सदृष्टान्तमुपपादयति—तमिति । क्लेशाः कर्माणि च पुण्यापुण्यात्मकानि च तेषां परिपाकः सुखदुःखे च गुणानां सत्त्वादीनां पुनः प्रवाहश्च तैरव्याहतोऽनुभवो महिमा यस्य तमद्वितीयं स्वतुल्यरहितमीश्वरं श्रीकृष्णं स्वविभवैः स्वकार्यैः प्राणादिभिरिन्द्रियादिभिरुपगूढमावृतं प्राकृतेन्द्रियतद्व्यापारैस्तिरोहितानुभवं मन्येत मन्यते अज्ञेति हेतुगर्भं स्वयमज्ञत्वादेवम्भूतमपीश्वरं स्वतुल्यं मन्यते इत्यर्थः । अत्र दृष्टान्तः मेघहिमोपरागैः अभ्रतुषारराहुभिः स्वविभवैः सूर्यमिवेति ॥ ३३ ॥

एवमुक्त्वा सर्वे मुनयः सम्भूयोचुरित्याह—अथेति । आभाष्य सम्बोध्य सर्वेषां राज्ञां शृण्वतां सतां तथैवाच्युतरामयोरपि शृण्वतोः सतोः ( मुनय ऊचुः आभाष्य सम्बोध्य हे राजन् ! परीक्षित ) ॥ ३४ ॥

—————

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ अनन्तरं श्रीवसुदेवनारदयोरभिप्रायं बुभुत्सुभयसमाधानार्थमित्यर्थः । श्रीनारदसमाधानन्त्वत्र "वसुदेव भवान्नूनम्" इत्यन्तिमपद्येन ज्ञेयम् ॥ ३४—३९ ॥

—————

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

ननु सन्निकर्षज एवास्मिन्नयमनादरः ननु वात्सल्येनेति पुनः शङ्कान्तरं निरस्यन्नाह—सन्निकर्ष इत्यादि । तत्तु मर्त्यानामेव नतु तद्विधानां तत्र दृष्टान्तः गाङ्गमित्यादि ॥ ३१—४० ॥

—————

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु जानाति भगवान् सर्वेश्वर इति तत्राह—सन्निकर्षोऽत्र मर्त्यानामिति । अनादरे सन्निकर्ष एव कारणं मर्त्यानामिति मरणधर्माणः ते जानन्ति सर्व एव मर्त्याः को विशेषः इति आत्मवत् सर्वदर्शनादनादरः सम्भावितं दृष्ट्वा दृष्टान्तमाह—गाङ्गं हित्वेति । तत्रत्यो जनः गङ्गातीरस्थः शुद्धये इति गङ्गातीरे सम्मर्दे स्नातः अशुद्धोऽहं जातः गृहे स्नास्यामीति मत्वा यथा पुनः गृहे स्नाति तदुक्तं शुद्धय इति सहि गङ्गाजलमपि जलत्वेनैव मन्यते नतु तन्माहात्म्यं वेद ॥ ३१ ॥

स्वयं भगवन्माहात्म्यमाह—यस्यानुभूतिरिति । ऋषयस्तु शास्त्रादिना सञ्जातज्ञानाः तथापि छिद्रयोजितपटवत् न तज्ज्ञानमुत्कृष्टं भगवतस्तु ज्ञानस्य न कदाचिदपि छेदः तमेवाह कालेन प्रलयेन यस्यानुभूतिरनुभवः न रिष्यति न नश्यति प्रलयमध्येपि नाशासम्भवात् तानपि हेतून् निषेधति लयोत्पत्त्यादिनेति यदा प्राणी म्रियते तदा पूर्वा-

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

नुभवो नश्यति यत्राप्युत्पद्यते तदापि लोकान्तरानुभवो नश्यति एवं महाव्याध्यपस्मारादिनापि पूर्वानुभवनाशः तदेकमपि भगवति न सम्भवति कदाचित्स्वतोप्यनुभवो नश्यति यदा संस्कारं नोत्पादयति कार्यकारणयोरभावात् एवं वचनम् अन्यस्मात् द्रव्यान्तरशापादिना चकारात् कालविलम्बेन निरोधज्ञानाविर्भावेन च गुणतो रजस्तमःप्रादुर्भावात् अनुक्तपरिग्रहार्थं न कुतश्चनेति ॥ ३२ ॥

एवं भगवन्माहात्म्यमुक्त्वा तत्र जानातीति वसुदेवदोषमाह—तं क्लेशेति। तं प्राणादिभिः स्वविभवैरुपगूढं प्राणादिभिर्वशीकृतं जीवं मन्यते सहि अध्यासं कारणत्वेन न जानाति पदार्थसम्बन्धमात्रं यथा कारागारे बद्धो बन्धकोपि ईश्वरोपि तिष्ठति भ्रान्तः सर्वांस्तुल्यानेव मन्यते भगवतः देहाद्यध्यासहेतुर्नास्तीति वक्तुं दोषाभावगुणानाह—क्लेशेति। शास्त्रान्तरसिद्धाः अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः इति अत्र तु संसारदुःखानुभव एव क्लेशः तत्साधकं कर्म मतान्तरं तु तत्साध्यं तस्य परिपाकः जात्यायुर्भोगाः देहसम्बन्धो वा तत्र यो गुणप्रवाहः उत्पत्तिस्थितिप्रलयपरम्पराः अज्ञानमारभ्य संसारप्रवाहपर्यन्तं निरूपितम् एतैः सर्वैरपि अव्याकृतः अनुभवो यस्य विशेषेण आ सर्वतः करणं व्याकरणं स्वाधीनकरणं स्वरूपनाशनमिति यावत् अनुभवोऽत्र स्वरूपं ज्ञाननाशाभावः पूर्वमेव निरूपित इति तस्यैव वा अनुवादः अनाशे हेतुः, ईश्वरमिति. न हीश्वरानुभवं कश्चिन्नाशयितुं शक्नोति तादृशोन्यस्ततोप्यधिकः नाशयेदिति चेत्तत्राह--अद्वितीयमिति । असमोर्द्ध्वमित्यर्थः । एतादृशमपि प्राणेन्द्रियान्तःकरणदेहैः स्वविभूतिभिः आधिदैविकैः आनन्दमयैः स्वयमेव वा तथाभूत इति स्वरूपभूतैर्वा तैरुपगूढं लीलार्थमावेष्टितम् अन्यो भ्रान्तो ऽस्मदादिजीवः स्वतुल्यं मन्येत कीदृशं मन्यते इति शङ्कायामाह, सूर्यमिवेति. यथा सूर्यं मन्यन्ते मेघैराच्छन्नं [illegible]हिमेन निष्प्रभम् उपरागेण ग्रस्तमिति तथा अविद्यया ग्रस्तं तृष्णादिना निष्प्रभं शरीरेण छन्नमिति वस्तुतस्तु मेघादिभिः सम्बन्ध एव सूर्यस्य नास्ति बहुव्यवधानात् तथाप्यन्योपि वस्तुतो विद्यादिभिर्ग्रस्तादिः कुतोवा भगवान् भविष्यति भगवतस्तु प्रकार उक्त एव ॥ ३३ ॥

एवं तस्य भ्रान्तत्वमुक्त्वा तादृशं स्वनिस्तारार्थं सत्यमेव प्रार्थयत इति समर्थिते निश्शङ्काः सन्तः उत्तरं दातुं प्रवृत्ता इत्याह--अथोचुरिति । मुनित्वात् ज्ञानं राजन्निति सावधानार्थं सम्बोधनम् आभाष्येति हे वसुदेव सावधानं शृण्वित्युक्त्वा यतो ऽयमानकदुन्दुभिर्महान् सर्वेषां शृण्वतामिति अनेन तेषां कथने उत्साहः सूचितः तथैव अच्युतरामयोरिति युक्तिपूर्वकं सर्वसिद्धान्ताविरुद्धं भगवान् शृणोतीति निरूपयिष्यन्तीति ज्ञापितम् ॥ ३४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ननु, कृष्णस्य जन्मक्षणमारभ्यैव तमीश्वरत्वेनायं जानात्येव सत्यं तदपि सन्निकर्ष एवानादरहेतुरित्याह—सन्निकर्ष इति। अत्र श्रीवसुदेवस्य प्रेमाणमेव तदैश्वर्यानुसन्धाने हेतुं नारदो जानन्नपि तदपि तस्मिन् महासंसदि प्रेमसिद्धान्तमतिरहस्यमविवृण्वन् लोकरीत्यैव समादधौ तथा बाधयित्वा वसुदेवस्य तस्य तदैश्वर्यज्ञानं च प्रोद्दीपयामासेति तत्त्वं ज्ञेयम् अनादरोऽत्र गौरवमननाभावः ॥ ३१ ॥

भो ब्रह्मन्पूज्यपादाः ! न केवलमज्ञायं वसुदेव एवोपालभ्यः किन्त्वत्रत्याः प्रायः सर्व एव लोकः कृष्णमीश्वरं न जानातीत्याह—यस्येति द्वाभ्याम् । यस्य अनुभूतिर्ज्ञानं कुतश्चिदपि न रिष्यति न नश्यति तं श्रीकृष्णं प्राणादिभिरुपगूढम् आच्छन्नम् अन्यः प्राकृतोऽयं लोकः स्वमिव मन्यत इत्यन्वयः। तदेवाह कालेन कर्कटिकाफलवत् कीदृशेन अस्य विश्वस्य लयोत्पत्तिकारणेन स्वतश्च विद्युदादिवत् अन्यस्माच्च मुद्गरादेः—घटादिवत् गुणतस्तमोगुणेन ब्रह्माण्डवत् न रिष्यति ॥ ३२ ॥

उक्तपोषन्यायेनेममर्थं पुनराह—तमिति। क्लेशा रागादयश्च कर्माणि क्लेशहेतवस्तच्च परिपाकाः तत्कार्य्यसुखदुःखानि च गुणानां सत्त्वादीनां प्रवाहश्च तैर्न व्याहतोऽनुभवो ज्ञानं यस्य तं प्राणादिभिः प्राणमनोबुद्ध्यादिभिर्लिङ्गशरीरघटकैः स्वविभवैः स्वकार्य्यैरेवाच्छन्नम् अत्र दृष्टान्तः मेघश्च हिमः कुहेलिका च उपरागो राहुश्च तैः स्वविभवैः सूर्य्यमिव मेघस्य सौरज्योतिः जलात्मकत्वात् जलस्य ज्योतिःकार्य्यत्वात् हिमस्य च जलविशेषत्वात् राहोश्च दुष्टजीवाविष्टध्वान्तखण्डात्मकत्वात् ध्वान्तस्य च चक्षुर्ग्राह्यत्वेन पौराणिकमते तैजसत्वात् मेघादीनां सूर्य्यकार्य्यत्वम् ॥ ३३ ॥

सर्वेषामित्यादिषु सप्तम्यर्थे षष्ठ्यः ॥ ३४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

किञ्च प्रासादप्रासेऽधिकी प्रीतिर्भवतीति लोकरीत्यैवं चेष्टत इत्याह—सन्निकर्ष इति। तत्रत्यो गङ्गातटस्थः ॥ ३१ ॥

किञ्चास्तां वसुदेवस्य परमभागवतस्य कथा अनावृतपरमेश्वरं परमश्रेयोरूपं श्रीकृष्णं लोकस्तु स्वतुल्यं मन्यते इत्याह यस्येति द्वाभ्याम् । यस्य श्रीकृष्णस्यानुभूतिर्ज्ञानं कुतश्चन कुतश्चिदपि न रिष्यति न नङ्क्ष्यति तदेवाह अस्य विश्वस्य लयोत्पत्त्यादिना स्वतः स्वभावतः अन्यस्मात् शस्त्रादितः गुणतः एकस्मिन् गुणे नष्टे पुरुषो जीवन्मृतो यथा भवति एकैकस्यापि गुणस्य यदीयस्य नाशो न भवति येनास्यौपचारिकोपि नाशः स्यादित्यर्थः। किम्बहुना अनन्तकोटिब्रह्माण्डसृष्टिसंहारनिमित्तभूतेन कालेनापि "ज्ञः कालकालः" इतिश्रुतेः ॥३२॥

नित्यानुभूतिं तत्रापि अव्याहतः निरावरणः अनुभवोऽनुभूतिर्यस्य सः नित्यानावृतज्ञानमित्यर्थः । ईश्वरं सर्वनियन्तारम् अद्वितीयं निस्समानातिशयं श्रीकृष्णम् अन्यः प्राकृतो जीवः स्वविभवैः स्वीयाः स्वकृतफलभूताः विविधाः भवाः पुनःपुनर्जन्मानि तेभ्यः तैः स्वरूपावरकैः क्लेशादिभिः तत्र क्लेशाः रागादयश्च तद्धेतुकानि कर्माणि च तत्परिपाकानि सुखदुःखानि च सत्त्वादिगुणानां पुनःपुनः प्रवाहश्च तैः प्राणादिभिः । प्राकृतप्राणदेहेन्द्रियमनोबुद्ध्यादिभिश्चेत्यर्थः । उपगूढमावृतं मन्येत स्वतुल्यं मन्यते इत्यर्थः । तत्र दृष्टान्तः मेघहिमोपरागैः

कर्मणा कर्मनिर्हार एष साधु निरूपितः ।
यच्छ्रद्धया यजेद्विष्णुं सर्वयज्ञेश्वरं मखैः ॥ ३५ ॥
चित्तस्योपशमोऽयं वै कविभिः शास्त्रचक्षुषा ।
दर्शितः सुगमो योगो धर्मश्चात्ममुदावहः ॥ ३६ ॥
अयं स्वस्त्ययनः पन्था द्विजातेर्गृहमेधिनः ।
यच्छ्रद्धयाऽऽप्तवित्तेन शुक्लेनेज्येत पूरुषः ॥ ३७ ॥
वित्तैषणां यज्ञदानैर्गृहैर्दारसुतैषणाम् ।
आत्मलोकैषणां देवकालेन विसृजेद्बुधः ।
ग्रामे त्यक्तैषणाः सर्वे ययुर्धीरास्तपोवनम् ॥ ३८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सूर्यमिव अभ्रतुषारराहुभिः स्वचक्षुरावरकैः भास्करम उपगूढं मन्यते यथा तद्वत् ॥ ३२—३५ ॥

भाषा टीका ।

क्योंकि इस संसार में निरंतर सन्निधि, अनादर का कारण होताहै जैसे गङ्गा तीर निवासी जन गङ्गा जलमें अनादर कर उसको छोडकर अपनी पवित्रता के अर्थ अन्य तीर्थ के जल के प्रति जाता हे, इसी कारण श्रीकृष्ण के नित्य सन्निधान होनेसे उनका अनादर कर वसुदेवजी हम सब के प्रति कल्याण का मार्ग पूछतेहैं ॥ ३१ ॥

जिस परमेश्वर के स्वतः सिद्ध ज्ञान का नाश काल से नहि होता, तथा इस विश्वकी उत्पत्ति पालन संहार करनेसे जिस के ज्ञान का नाश नहि होता तथा जिस के ज्ञान का नाश अपने से नहि होता और अन्य साधन से नहि होता किसी गुण कर कें जिस के ज्ञान का नाश नहि होता ॥ ३२ ॥

इस प्रकार अज्ञान गर्व राग द्वेष विषयोंमें आसक्तिरूप पांच प्रकारके क्लेशों से तथा पुण्यपाप के कर्मों के सुख रूप फलसे माया के सत्व रज तम गुणों के प्रवाह में जिस के अनुभवका नाश नहीं होता जिसके समान जिससे अधिक कोई नहि सर्व नियन्ता उस परमेश्वर को संसारी जन अपने दृष्टांत सें अपने से जनित प्राण मन बुद्धियों से आच्छादित मानते हैं परन्तु उनसे सूर्य्य का आच्छादन नहि होता वे सब सूर्य्य के नीचे हि रहते हैं इसी प्रकार प्राणादिकों से ईश्वर का आच्छादन नहि होता ॥ ३३ ॥

हे राजन् सब राजा न के सुनतेर तैसेहि श्रीकृष्ण बलदेवजी के सुनतेर अनन्तर हे वसुदेव इस ! प्रकार संभाषण करके वसुदेव के प्रति ऋषिजन बोले ॥ ३४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

चित्तस्योपशमः उपशमहेतुः योगो मोक्षोपायश्च शनैरात्ममुदमावहतीति तथा सुगमः प्रवृत्त्याश्रयत्वात् धर्मश्चावश्यकः अन्यथा विहिताकरणेन मालिन्यप्रसङ्गात् ॥ ३६ ॥

ननु, "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" इत्यादिना त्यागस्यैव विहितत्वात्कथं कर्ममोक्षोपाय इत्याशङ्क्याद्यावेव त्यागस्याशक्यत्वादित्याशयेनाऽऽहुः—अयमिति सार्धचतुर्भिः । स्वस्त्ययनं स्वस्ति क्षेममयतेऽनेनेति तथा श्रद्धया निष्कामतया शुक्लेन शुद्धेनाऽऽप्तेन वित्तेन पुरुष ईश्वर इज्येतेति यदेष पन्थाः ॥ ३७ ॥

स्वस्त्ययनमाहुः—वित्तैषणामिति । वित्तफलभूतैर्यज्ञैर्दानैश्च वित्तैषणां वित्तेच्छां विसृजेत् गृहैर्गृहोचितैर्भोगैर्दारसुतैषणां विसृजेत् तदनुभवेनैव तदौत्सुक्यनिवृत्तेः देहे मृते आत्मनः स्वर्गादिलोकैषणां कालेन तयानुसन्धानेन विसृजेत् देव हे वसुदेव ! यद्वा देवकालेन देवानामपि मृत्युना मृत्युहेतुभूतेनेत्यर्थः । अत्राचारं प्रमाणयति—ग्राम इति ॥ ३८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एष एव कर्मणा क्रियमाणेन कर्मणां कृतानां निर्हारः साधु यथा स्यात्तथा निरूपितः शास्त्रज्ञैः कः श्रद्धया विश्वासेन विष्णुं स्वमहिम्ना विश्वव्यापकं स्वयं भगवन्तमेव मखैः सर्वैर्यजेदिति यत् स इत्यर्थः । तस्यैव यजनं व्यक्तं हेत्वन्तरं सर्वेषां यज्ञादीनामीश्वरं फलदातारं सर्वदेवेश्वरत्वात् तद्यजनं विना नैष्कर्म्यस्यापि हेयत्वमुक्तं "नैष्कर्म्यमप्यच्युतभाववर्जितम्" इत्यादिना एवश्चेद्यदभीष्टं तथापि भवत्पुत्र एवायं प्रकारान्तरेणाराधनीय इति भावः ॥ ३५ ॥

साधुत्वमेवाहुः—चित्तस्येति । अयं वै पूर्वोक्तप्रकारककर्मनिर्हार एव चित्तस्य उप आधिक्येन शमः शमो मन्निष्ठताबुद्धेरिति श्रीस्वयं भगवत्सम्मतः शमः प्रापकत्वात् तत्रापि सुगमः सुकरो योग उपायः स्वतःसिद्धानां मन्त्राणां सङ्कल्पविशेषमात्रेण तादृशत्वसिद्धेः न त्वष्टाङ्गादिवत्कष्टसाध्यः तथा

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अयमेव मुख्यो धर्मः भागवतधर्मप्रवेशेन सर्वधर्माश्रयत्वात् तत्रापि सन्ततश्रीभगवत्स्फूर्तिमयत्वेनात्ममुदावहश्च ननु तत्कामस्फूर्तिमयधर्मवस्मात्सर्व्यादिदुःखावहः— तस्मादयमेव कविभिः शास्त्रैः शास्त्रचक्षुषा शास्त्ररूपं यच्चक्षुरर्थप्रकाशकं तद्दानेन दर्शितः प्रकाशित इत्यर्थः ॥ ३६ ॥

अत्राप्ययमित्यादि स्वस्त्ययनः गार्हस्थ्याश्रयस्य वित्तस्य भगवत्समर्पणरूपया प्रपत्त्या तत्प्रसादात् द्विजातेस्त्रैवर्णिकस्य अन्यस्यानधिकारात् आत्मेन स्ववृत्त्या लब्धेन न्यायार्जितेनेत्यर्थः अत एव शुक्लेन यथोक्तं श्रीविष्णुधर्मोत्तरे ।

"प्रतिग्रहेण यल्लब्धं याज्यतः शिष्यतस्तथा ।
गुणान्वितेभ्यो विप्रस्य शुक्लं तत्त्रिविधं स्मृतम् ॥
युद्धोपलब्धं कारश्च दण्डाच्च व्यवहारतः ।
क्षत्रियस्य धनं शुक्लं त्रिविधं परिकीर्तितम् ॥
कृषिवाणिज्यगोरक्षाः कृत्वा शुक्लं तथा विशः ।
द्विजशुश्रूषया लब्धं शुक्लं शूद्रस्य कीर्तितम् ।
क्रमागतं प्रीतिदायं प्राप्तञ्च सह भार्यया ॥
अविशेषेण सर्वेषां धनं शुक्लं प्रकीर्तितम् ।
शुक्लेन वित्तेन कृतं पुण्यं बहुफलं भवेत् ॥

इति । ननु पुरुषेज्यैव चेत्कर्तव्या तर्हि मुख्यनवविधभक्त्यङ्गेन परिचर्य्यामार्गेणार्चनमार्गेणैव वा स इज्यते किं गौणभक्त्यङ्गेन यज्ञादिना तत्राहुः गृहमेधिनः गार्हस्थ्यधर्माग्रहवतः इत्यर्थः । तत्र सम्यक् श्रद्धत्वाभावात् लोकसङ्ग्रहाग्रहाद्वेति ज्ञेयम् ॥ ३७ ॥

तस्मिंस्तत्तदर्पणात्तत्प्रसादेन तत्तदेषणापि क्षीयतइत्याहुः— वित्तेति । यज्ञदानैः वित्तव्ययमयतत्तत्कर्मभिः पूर्वोक्तरीत्या भगवदिज्यार्थैः तथा गृहैस्तत्रत्यदारसुतादिभिः तदिज्यार्थैः ततो या चात्मैषणा आत्मपक्षपातरूपा याच लोकैषणा लोकद्वयवशीकरणेच्छारूपाविशिष्टा तां च हे देव ! कालेन सर्वेणैवाचरणे (पथि) तदिज्यैकानुसन्धानतया तदर्थीकृतेन देवस्य भगवतः कालेन तदिज्यैकानुसन्धानमयसमयगमनेन वा विसृजेत् त्यक्तुमर्हः स्यात् बुधो विवेकी एवं वित्तवतो गृहस्थस्य ततः पूर्वमेषणासमनस्त्येन श्रवणादिकमपि सुष्ठु न सिद्ध्येदिति भावः । अत एव ( ग्रामे इत्यर्द्धकम् ) ग्रामे गृहाश्रमे एषणात्रया भावनाविरक्तस्य हठात्त्यागोऽपि श्रवणमननादिनिष्ठत्वासिद्धेस्तदनन्तरमेव त्याज्यमिति भावः ॥ ३८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वित्तैषणामिति । अर्थैषणानिमित्तं तद्रक्षणानिमित्तं दुःखम् अर्थस्य सम्यक् व्ययेन परिहरेदित्यर्थः । गृहैः गार्हस्थ्यवासेन दारपुत्रलाभे सति एतावताऽलमिति बुद्धिः स्यादित्यर्थः । कालेन कालपरिच्छिन्नत्वादनित्यत्वबुध्या लोकैषणां जयेदित्यर्थः ॥ ३८—३९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तिमेवाह—कर्मणेति । साधु यथा तथा एषु एवेति निरूपितः । कोऽसौ? यत्सर्वेषां यज्ञानामीश्वरं निर्वाहकं विष्णुं श्रद्धया मखैर्यज्ञैर्यजेदाराधयेदित्येषः ॥ ३५ ॥

चित्तस्येति । अयं विष्ण्वाराधनरूपो धर्मः अत्र लोके 'चित्तस्योपशमः शान्त्यावह' सुखावहः निरतिशयमोक्षसुखावहश्चातो ऽयमेव सुगमोपाय इति मुनिभिः शास्त्रमेव चक्षुस्तेन दर्शितः व्यस्तावृत्तयोर्निवृत्ते प्रेरणात्कर्मणि कः इह इत्यर्थः ॥ ३६ ॥

अयमिति । द्विजातेस्त्रैवर्णिकस्य गृहाश्रमिणः श्रेयःप्रापकोऽयमेव पन्थाः कोऽसौ शुक्लेन शुद्धेन आप्तवित्तेन परपीडादिकमन्तरेण लब्धेन धनेन पुरुषः परमपुरुषः श्रद्धया इज्येतेत्ययं भक्तियोगोत्पत्तिप्रतिबन्धनिरसनद्वारा मोक्षसुखावहः पन्थाः केवलमीश्वराराधनात्मकयज्ञ एवेत्यर्थः ॥ ३७ ॥

आप्तवित्तेनेज्येतेत्युक्तं सम्यग्व्यय एव वित्तस्य प्रयोजनमिति वदन्तः प्रसङ्गादन्यदप्याहुः—वित्तैषणामिति । यज्ञदानैश्च वित्तैषणां वित्तेच्छां विसृजेत् अर्थस्य सम्यग्व्ययेन तद्रक्षणदुःखं परिहरेदित्यर्थः । गृहैर्गृहोचितैर्भोगैर्दारसुतैषणां विसृजेत् तदनुभवे सत्येतावताऽलमिति तदौत्सुक्यनिवृत्तेः मृते देहे आत्मनः स्वर्गादिलोकैषणां कालेन स्वर्गादीनामपि कालवशात् चयिष्णुत्वनिरूपणेन त्यजेदित्यर्थः । तथाहि धीराः तावद्ग्रामे त्यक्ताः ईषणाः पूर्वोक्तास्त्रिस्रः यैस्ते ततः तपोवनं ययुः ॥ ३८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

गृहमेधिनः गार्हस्थ्यधर्माग्रहवत इत्यर्थः । भगवदर्चादिभक्त्यावतान्तु तदेव परमश्रेय इति भावः ॥ ३७ ॥

वित्तैषणामित्यादिकं तादृशभगवज्जनाधिकारिसम्पादनायोक्तम् ॥ ३८⋯६५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कर्मनिर्हारप्रकारमाहुः—कर्मणेति सप्तभिः । आदौ प्रकारमाहुः कर्मणा कर्मनिर्हारः एषः अग्रे वक्ष्यमाणः सर्वैरेव सिद्धान्तिभिः साधु निरूपित इति प्रमाणं स कः प्रकारः इत्याकाङ्क्षायामाह—यच्छ्रद्धयेति । श्रद्धा सर्वाङ्ग विष्णुं यजेदिति कर्मनिर्हारकं कर्म तत्र विष्णुशब्दः इन्द्रियाधिष्ठातृपरोपीति गुरुब्राह्मणादिचरणपूजयापि परम्परया विष्णुयागो भवतीति तन्निवृत्त्यर्थमाह—सर्वयज्ञेश्वरमिति । सर्वयज्ञानामीश्वरो विष्णुरत्राभिप्रेतः यतो यज्ञवराहेणाविर्भूतः "यज्ञो वै विष्णुः" इतिश्रुतेः "यज्ञेन यज्ञमयजन्त" इति द्वितीयान्तवाच्यो यज्ञोऽत्राभिप्रेतः स तु यज्ञैरेवेष्टो भवतीत्याह–मखैरिति । ईश्वरपदेन यज्ञैरेव भगवता नियोग इति भगवदाज्ञापरिपालनमिति प्रमाणमपि सूचितम् ॥ ३५ ॥

ननु, परिचर्यादिरपि पञ्चरात्राद्यागमे निरूपितः कस्मान्न ततो वैष्णवमार्गं परित्यज्य श्रौत एव मार्गो निरूपित इति चेत्तत्राह–चित्तस्येति । अयं प्रकारो विद्यमाने वित्ते कविभिर्निरूपितः वैष्णवमार्गस्तु प्रायेण किञ्च नाभिकृत एव योऽस्माभिर्निरूपितो यागादिरूपः स तु चित्तस्यैवोपशमजनकः शरीरन्तु तद्द्वारा

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

उपयुज्यते एषा युक्तिरप्रमाणमिति चेत्तत्राह—कविभिः शास्त्रचक्षुषेति । कर्तुः साधनस्य चोत्कर्षो निरूपितः किञ्च अयं सुगमो योगः शरीरक्लेशापेक्षया बहिरङ्गत्वात् किञ्च अयमस्माभिर्धर्मो निरूपितः ननु भक्तिः "तानि धर्माणि प्रथमान्यासन् "इतिश्रुतेः । एतस्य कर्मनाशकत्वमग्रे वक्तव्यं एतत्वे किं स्यादित्याशङ्कायामाह—आत्मसुखावहमिति । आत्मसुखमावहतीति एतस्य कर्मनाशकत्वं प्रतिज्ञातमिति आत्मसुखजनकत्वमधिकमित्यधिकं ज्ञातव्यम् ॥ ३६ ॥

नन्वन्येष्वपि मार्गेषु विद्यमानेषु कथमयं निरुक्त इति चेत्तत्राह—अयं स्वस्त्ययनः पन्था इति । गृहस्थस्यायमेव मार्गः स्वस्त्ययनः अन्येतु स एव मार्गाः गार्हस्थ्यभञ्जकाः यदनुचरितलीलेत्यादिषु निरूपिताः अतोऽयमेव मार्गः गृहस्थं गृहे स्थापयति किञ्च द्विजातिमात्रस्यात्राधिकारः अन्यत्रान्यदपि बीजसंस्कारादिकमधिकारिविशेषणं मृग्यते एवं साधयित्वा निश्चितं विशिष्टमनुवदति—यच्छ्रद्धयेति । प्राप्तेन स्वयं प्राप्तेन वित्तेन अनाशकेन हितकर्त्रा शुक्लेन सन्मार्गप्राप्तेन पूरुषं यज्ञपूरुषं श्रद्धया यजेतेति यत् अयमेव पन्था इति सम्बन्धः ॥ ३७ ॥

नन्वेतस्य कर्मनिर्हारकत्वं कथं तत्राह—वित्तैषणामिति । ईषणात्रयपरित्यागः कर्मबन्धाभावज्ञापकः कर्माणि हि ईषणाद्वारैव बध्नन्ति ईषणाभावेतु कर्माभावः सिद्ध एव लोके ईषणात्रयं वित्तैषणा दारैषणा लोकैषणेति त्रयाणां परित्यागप्रकार उच्यते वित्तैषणां यज्ञदानैरिति यस्य चित्ते महतीच्छा भवति तेन वित्तोपार्जनं कृत्वा यज्ञदानानि कर्त्तव्यानि ततो वित्तस्य बहुधा व्यवहृतत्वात् तदिच्छा निवर्त्तते अदृष्टद्वारापि तद्यज्ञदानादिकमन्तःकरणशुद्धिमुत्पाद्य निवर्त्तयतीत्यवगन्तव्यं ततो दारसुतैषणा गृहस्थाश्रमैर्दूरीकर्त्तव्या गार्हस्थ्ये तासां सम्व्यवहारो बहुधा भवतीति दारसुतानां व्यवहृतत्वात् तदिच्छापि निवर्त्तेत आत्मनां लोकानां स्वर्गादिलोकानाम् ईषणात् देवकालेन देवैः सह क्रीडया बुधः पण्डितः एवं विसृजेत् अत्र वैराग्यस्य ज्ञानैकसाध्यत्वात् अत एव वेदे स्वर्गार्थमेव यज्ञाः निरुक्ताः अन्यत्तु द्वयं प्रसङ्गादेव सेत्स्यति स्त्रीवित्तव्यतिरेकेण यज्ञाभावात् अत एव स्त्रीणामधिकारशरीरे प्रवेश उक्तः धनस्य च क्रियायाम् अन्यथा मानसा एव यज्ञाः वेदे उक्ताः स्युः अन्यथा श्रेयान् द्रव्यमयाद्यज्ञादिति वाक्यात् द्रव्ययज्ञानामधर्मत्वे तत्प्रतिपादकवेदो विरुध्येत इदमेव वेदस्य तात्पर्यं मन्यन्ते मुनयः अत एवात्मसुखावहो धर्म इति स्वर्गात्मकयज्ञार्थमेव यागाः कर्त्तव्या इति यथाश्रुतैव श्रुतिः समर्थिता अत एवाश्रमधर्माणामपि विधिरिति वक्तुं गार्हस्थ्यविधेरेतदेव प्रयोजनमित्याह—ग्रामेत्यक्तैषणाः सर्वे इति । ग्राम एव स्थित्वा ईषणाविनिर्मोकः कर्त्तव्यः अनेनैतत् ज्ञापितं पूर्वं यागे कृते स्वर्गेच जाते ततो लोकविरागं प्राप्य पुनरागत्य गार्हस्थ्य एवाङ्गत्वेन पूर्वं व्यवहृतसुवर्णस्त्रीणां लोकानां काङ्क्षाभावात् प्राधान्येन व्यवहारं कृत्वा तत ईषणात्रयं परित्यज्य तथा चित्तशुद्ध्यभावे विक्षिप्तमपि मनः धैर्यं प्रापयित्वा सम्यक् चित्तशुद्ध्यर्थं पुनर्गमनक्लेशं परित्यज्य तपोवनमेव विविशुः तपसा सम्यक् चित्तशुद्धिर्भविष्यतीति ये त्वेकजन्मपरतयैव सर्वं व्याचक्षते ते चिन्त्याः देवेति वसुदेवसम्बोधनं कालेनत्यनुपायश्चाहुः तेषां लोकैषणाया अनिवृत्तत्वात् कथं सर्वैषणापरित्याग इति बुध इत्यनेन ज्ञानेनैव तन्निवृत्तिः अन्यत्रापि तुल्या पूर्वं यागानां कर्त्तव्यता ईषणापरित्यागार्थमुक्ता, तद्द्वारा कर्मनिर्हारणार्था भवति ॥ ३८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कर्मनिर्हारो यथा स्यादिति प्रकारप्रश्नोत्तरमाहुः—यच्छ्रद्धयेति । मखानां विष्ण्वाराधनत्वज्ञानं विना कर्मनिर्हारो न भवेदिति भावः ॥ ३५ ॥

उपशमः उपशमहेतुः सुगमः प्रवृत्त्याश्रयत्वात् योगः मोक्षप्राप्तौ उपायः आत्ममुदावहः मनस्सुखप्रदश्च ॥ ३६ ॥

द्विजातेस्त्रैवर्णिकस्य आप्तवित्तेन न्यायप्राप्तधनेन शुक्लेन ॥३७॥

निष्कामत्वं विना कर्मनिर्हारो न स्यात् निष्कामत्वश्चानेन प्रकारेण भवेदित्याहुः—वित्तैषणां वित्ताकाङ्क्षां यज्ञैर्दानैश्च वित्तफलभूतैस्त्यजेत् सम्पादितेषु यज्ञेषु दानेषु किमतः परं वित्तेन इति भावयेत् गृहैर्गृहोचितैर्भोगैर्दारसुतैषणां स्त्रीसम्भोगवासनां पुत्रवासनाञ्च त्यजेत् तदनुभवेनैव तदौत्सुक्यानिवृत्तेः देहे मृते सत्यात्मनः स्वर्गादिलोकैषणां कालेन क्षयानुसन्धानेन विसृजेत् देव हे वसुदेव ! अत्राचारं प्रमाणयति—ग्राम इति ॥ ३८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अयं विष्णुयजनात्मको धर्मः चित्तस्य उपशमः शान्तिकरः योगो विष्णुप्राप्त्युपायश्च शास्त्रमेव चक्षुस्तेन ॥ ३६ ॥

द्विजातेस्त्रैवर्णिकस्य गृहमेधिनो गृहस्थस्य अयं पन्थाः स्वस्त्ययनः वैराग्यजननद्वारा मोक्षप्रापकः कोसौ यद्वा आप्तेन न्यायार्जितेन अत एव शुक्लेन शुद्धेन वित्तेन श्रद्धया पुरुषो विष्णुः ईज्येत इत्ययम् ॥ ३७ ॥

यज्ञादेर्वैराग्यहेतुत्वमाहुः—वित्तैषणामिति । विष्णूद्देशेन कृतैर्यज्ञैर्दानैश्च वित्तैषणां धनेच्छां गृहैः गृहोचितैर्भोगैर्दारसुतैषणाञ्च आत्मनः स्वर्गादिलोकैषणाञ्च कालेन स्वर्गादिक्षयहेतुभूतकालानुसन्धानेन विसृजेत् अत्र सदाचारं प्रमाणयन्ति ग्रामे इति ॥ ३८ ॥

---

भाषा टीका ।

सर्वयज्ञन के फल दाता विष्णुभगवान्को श्रद्धाकेसाथ जो यज्ञनसें आराधन करना यहि कर्म करकें कर्मन को नाश यथावत्निरूपण कियागया है अर्थात् परित्यागका आराधन मानिकर परमात्मा के नामसे यज्ञादि कर्म करनेसे संसारमें बांधने वारे कर्मनका नाशहोजाताहै और केवल स्वर्गादि फल के वास्ते कर्मकरनेसें बन्धन होताहै इस वास्ते स्वर्गादि

ऋणैस्त्रिभिर्द्विजो जातो देवर्षिपितृणां प्रभो ।
यज्ञाध्ययनपुत्रैस्तान्यनिस्तीर्य त्यजन् पतेत् ॥ ३९ ॥
त्वं त्वद्य मुक्तो द्वाभ्यां वै ऋषिपित्रोर्महामते ।
यज्ञैर्देवर्णमुन्मुच्य निरृणोऽशरणो भव ॥ ४० ॥
वसुदेव भवान्नूनं भक्त्या परमया हरिम् ।
जगतामीश्वरं प्रार्चः स यद्वां पुत्रतां गतः ॥ ४१ ॥
श्रीशुक उवाच ।
इति तद्वचनं श्रुत्वा वसुदेवो महामनाः ।
तानृषीनृत्विजो वव्रे मूर्ध्नाऽऽनम्य प्रसाद्य च ॥ ४२ ॥

भाषा टीका ।

फलकी वाञ्छाका छोडकर परित्यागका आराधन मानिकर यज्ञादि कर्म करना ॥ ३५ ॥

विवेकी पुरूषोंने शास्त्ररूपनेत्रसें यह सुलभउपाय दर्शायोहे और यहधर्म, आत्मा को मोक्ष के प्राप्तिकरनेवालाहे क्योंकि इस प्रकार कर्म करनेसे चित्तकीशान्ति होतीहे ॥ ३६ ॥

ब्राह्मण क्षत्रियवैश्य गृहस्वामी को यहि कल्याण आपके योग्य हेकि धनसे आमशुद्धधनसे श्रद्धाके साथ जो परमपुरूषका यजन करना ॥ ३७ ॥

विवेकीपुरूष, यज्ञ दानादिकरनेसे धनकी वांच्छा का इस प्रकार त्याग करदेवे कि यज्ञ दानादि सत्कर्म में खर्च होना यहि धन का फलहे केवल धनसे कुछ प्रयोजनहि, और गृहके उचित भोगनकरके स्त्री पुत्र की वाञ्छा को इस प्रकार त्यागदेवेकि स्त्री का भोग तथापुत्र का अनुभव यहसव विरस हे तथा अनित्यहे अपने को स्वर्गादि लोककीवाच्छा को इस प्रकार त्यागदेवे कि पुण्य कर्मके अन्त में देवतान को भी मरणे का समय आवताहे इस प्रकार के विवेकसे धन की स्त्री पुत्रकी स्वर्गादिलोक का तीनों वाच्छान को त्याग देवे ॥ ३८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

किञ्च, ऋणैरिति। तथाच श्रुतिः "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इत्यादि तान्यनिस्तीर्य तेषामृणान्यनपाकृत्य तथा च मनुः।

"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्।
अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः" ॥
इति ॥ ३९ ॥

निरृणो निर्मुक्तऋणः अशरणो भव गृहात्प्रव्रज ॥ ४० ॥

किञ्च अविशुद्धचित्तानामयं क्रमस्त्वन्तु कृतार्थ एवेत्याहुः वसुदेवेति। भवान् नूनं निश्चितं परमया प्रेमलक्षणया भक्त्या हरिं प्रार्चोऽर्चितवान् यद्यस्मात् वां युवयोः ॥४१—४४॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

प्रभो हे सर्वर्णमोचनसमर्थ! इत्यशक्तस्य न तद्दोषावहमिति सूचितं पितृणामिति हस्वत्वमार्षं तान् देवादीन् अनिस्तीर्य्य तानीति पाठे स एवार्थः देवादिपदानामपि तत्तदृण तात्पर्य्यात् पतेत् उभयतो भ्रश्येत् विघ्नाकुलो भवेदित्यर्थः। अत एव व्रजत्यध इति मनुः अत्र भगवदाश्रयत्वन्तु नोद्दिष्टम् इति तत्र न दोष इति भावः। "देवर्षिभूतात्मनृणां पितृणाम्" इत्यादेः ॥ ३९ ॥

तुशब्दो विशेषे तमेवाहुः—वै एव द्वाभ्यामृणाभ्यां मुक्त एव अथोन्मुच्य उर्द्धमुक्त्वा निरस्य निरृणः सन् अशरणो भव त्वन्तु त्यागमपि विष्णवर्थं कुर्वित्यर्थः ॥ ४० ॥

इदन्त्वजातभक्तिश्रद्धानां साधकानां रीतिरुक्ता भवांस्तु प्रथमत एव परमकृतार्थः इत्याहुः—वसुदेवेति। वसु भगवद्भक्तिलक्षणं धनं तेन दीव्यतीति तथा तत्सम्बोधनं तदेव दर्शयति भवानिति नूनं निश्चये हरिं सर्वदोषदुःखहरं यतो जगतां देवादीनामीश्वरं प्रकर्षेण पुत्रत्वेन स्ववश्यतापेक्षया आर्चः अतो भवान् अपास्तसमस्तर्णो मुक्तभक्तवर्गार्च्य एव ततोऽभिप्रायान्तरेणैवायं तवोद्यम इति भावः। इदमपि लौकिकलीलानुकरणानुसारेणैवोक्तं नतु नित्यत्वानुसारेण तत्तु वसुदेवशब्देन व्यञ्जितमेव शुद्धसत्त्वाख्यश्रीभगवदन्तरङ्गशक्त्याविर्भावरूपत्वेन तन्नामत्वात् तदुक्तं चतुर्थे "सत्त्वं विशुद्धं वसुदेवशब्दितम्" इति। नवमे "वसुदेवं हरेः स्थानं वदन्त्यानकदुन्दुभिम्" इति ॥ ४१ ॥

इति स्वस्यैवातिगूढाभिप्रायं तेषां वचः श्रुत्वा महामनाः तथैवावबुध्य चेत्यर्थः ॥ ४२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अशरणः गृहसङ्गरहितः ॥ ४०—५० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इतोऽपि विष्णुर्यष्टव्य इत्याहुः-ऋणैरिति । हे विभो ! देवानाम् ऋषीणां पितॄणां च ऋणैस्त्रिभिर्द्विजः त्रैवर्णिको जातः जायते अतस्तानि देवर्षिपितृऋणानि क्रमेण यज्ञाध्ययनपुत्रैरनिस्तीर्य अनपाकृत्यचरन् पतेत् नरकइति शेषः । अत्र "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इति श्रुतिः—

"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य मोक्षन्तु सेवमानो व्रजत्यधः" ॥

इति श्रुतिस्स्मृतिश्चानुसन्धेया श्रुतौ ब्रह्मचर्यशब्दस्तत्पूर्वकाध्ययनपरः ॥ ३९ ॥

अतस्त्वयाऽधुना देवऋणमेवापाकर्त्तव्यम् ऋषिपितृऋणाभ्यान्तु मुक्त एवेत्याहुः—त्वन्त्विति । हे महामते ! उन्मुच्योपाकृत्य निर्ऋणः ऋणत्रयरहितः अशरणः गृहसङ्गरहितो भव ॥ ४० ॥

हे वसुदेव ! भवान नूनं हरिमाराधितवान् कुतः यद्यस्मात् भगवान् स्वयं वां युवयोः पुत्रतां गतः ॥ ४१ ॥

इतीति । तद्वचनं तेषां वचः श्रुत्वा आनम्य प्रणम्य प्रसाद्य प्रसन्नान् कृत्वा ऋत्विजो वव्रे वृतवान् ॥ ४२ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

वसुदेवभवानित्यादि । यत् यो वां पुत्रतां गतः तं जगताम् ईश्वरं परमया भक्त्या प्राज्ञैः प्रकर्षेणार्चितवान् ॥ ४१-६८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

इदानीन्तु ऋणापाकरणार्थमेव यज्ञाः कर्त्तव्या इत्याह— ऋणैस्त्रिभिर्द्विजो जात इति "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते" इतिश्रुतेः ब्राह्मणो जायमानः उपनीयमानः तानि ऋणानि गणयति, देव ऋषिपितॄणामिति "ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इतिश्रुतेः । अत्र तु पितृऋणपरित्यागो दानेनाह—यज्ञाध्ययनदानैरिति । दानमत्रसन्तति—दानमेव पिण्डदानमित्येके तत्पुत्राणां कर्त्तव्यमिति फलतो निरूपितं येषां पुनः ईषणाविनिर्मोको जात एव तेषामपि ऋणविमोको न जात इति मुख्यपक्षे गार्हस्थ्यानन्तरमेव सन्न्यासमितिमतमाश्रित्याह-अनिस्तीर्य त्यजन् पतेदिति—

"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् ।
अनपाकृत्य तांस्तांस्तु मोक्षमिच्छन् व्रजत्यधः ॥

इति मनुवाक्यात् ननु 'ब्रह्मचर्यादेव प्रव्रजेत्", इत्यादिश्रुतेः का गतिः ? उच्यते ईषणाभावो ऋणाभावश्च मोक्षात्पूर्वभावो पक्षमधिकारिविशेषणं द्वितीयः प्रतिबन्धकाभावः अधिकारिविशेषणन्तु मृग्यमेव प्रतिबन्धकभावे तु भगवद्भजनोत्सम्भकसद्भावेऽपि कार्यं भवति तथा तदवदानैरवावदयत इति त्यक्त्वा वदनेनापि ऋणत्रयमपागच्छति एवं स्वाध्यायेनापि केवलेन पूर्वं बहुधा ऋणापकरणं कृतं यं यं क्रतुमधीते तेन तेनास्येष्टं भवतीति "भ्रातॄणामेकजातानाम्" इतिवाक्यन्यायेन भ्रातृपुत्रेण पितृऋणनिवृत्तिसम्भवं अन्यैर्वा नत्यादिभिर्ब्रह्मचर्यादेव प्रव्रजेदिति वाक्यं सिद्धं भवति तस्माद्यो मुख्यः प्रथमाभिकारी तेन ऋणापकरणमीषणानिवृत्तिश्च कर्त्तव्येति ऋषिभिः साधूक्तम् ॥ ३९ ॥

एवम् ऋणापकरणकर्त्तव्यतामुक्त्वा ऋणत्रयमध्ये ऋणद्वयमतीतम् ऋणमात्रमवशिष्यत इत्याहुः - त्वं त्वत्र मुक्तो द्वाभ्यामिति । वेदाः पठिताः पुत्राश्चोत्पादिता इति ऋषिपित्रोः ऋणाभ्यां भवान् मुक्तः महामत इति यज्ञाधिकारो निरूप्यते अजडत्वाय अतो यज्ञैर्देवर्णमुन्मुच्य निर्ऋणस्सन् पश्चादशरणः सर्वपरित्यागेयुक्तो भवेत्यर्थः । भिक्षुर्हि अनाग्नरनिकेतनो भवति एवं प्रकारत्रयेण यज्ञकारणमुपदिष्टं कर्मनिर्हारार्थमीषणापरित्यागार्थम् ऋणापाकरणार्थञ्चेति भगवान् भवदीयो जात इति भगवत्पूजा च कर्त्तव्यमित्यग्रिमश्लोकमोच्यत इत्येके अन्येतु तव देवादिऋणमेव नास्ति त्वं यतो जगतामीश्वरं प्राचैः अतस्तव यागस्यान्यत्र विनियोगाभावात् कर्मनिर्हारार्थमेव तव यज्ञो भविष्यतीत्याहुः-वस्तुतस्तु त्वं कृतार्थः तव कर्मनिर्हारादिकं नापेक्ष्यतइति मूलप्रश्ने उत्तरमुक्तं भवति परमया भक्त्या पूजितश्चेद्भगवान् परमप्रीत्याश्रयः स्वयमपि जात इति स पुत्रतां गत इत्यर्थः । एवं यज्ञाः कर्त्तव्या इत्युक्त भवति ॥ ४०—४१ ॥

ततो "ब्राह्मणानामेवार्त्विज्यम्" इति कुरुक्षेत्रमेव वेदिरिति भाग्यत ऋषयः समागता इति तेषां वचनं कृतवानित्याह इतितद्वचनं श्रुत्वेति । महामनाः यज्ञकरणे प्रोत्साहयुक्तः तानेव पूर्वोक्तान् ऋषीन् ऋत्विक्त्वेन वव्रे ओदनं पचतीतिवत् वरणेन तान् ऋत्विजः कृतवानित्यर्थः । मूर्ध्नाऽऽनम्येति नमनेनैव वशीकृताः अस्माभिरुक्तं कर्त्तव्यमिति कथमस्माभिरेव यागः कर्त्तव्य इति तेषां सङ्कोचाभावः कारित इत्याह प्रसाद्येति । चकारात् स्तोत्रादिकमपि कृत्वा ॥ ४२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किञ्च, ऋणैरिति । तथाच श्रुतिः "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इत्यादिः तान्यनिस्तीर्य तेषामृणान्यनपाकृत्य ॥ ३९ ॥

द्वाभ्याम् ऋणाभ्याम् अशरणो भव अगारात् प्रव्रज ॥४०॥

लोकरीत्यैव त्वया कृतस्य प्रश्नस्यास्माभिरपि लोकशास्त्ररीत्यैवोत्तरं दत्तं वस्तुतस्तु त्वयि भगवत्पितरि नित्यसिद्धे भगवतीव नैव लोकशास्त्रे अधिकर्तुं प्रभूष्णू स्यातां तदपि यदि त्वमात्मानं शास्त्रोक्तधर्माणामधिकारिणमेव मन्यसे तत्राप्युत्तरं शृण्वित्याहुः-वसु धनं श्रेष्ठं भक्तियोग एव तत्र दीव्यसि इत्यत एव हे वसुदेव ! भक्त्या तथापि परमया प्रकर्षेणैव आर्जः धर्ममेव तत् कथमधुना ततोऽतिनिकृष्टकर्माधिकारेऽपि पतिष्यसीति

त एनमृषयो राजन् वृता धर्मेण धार्मिकम्।
तस्मिन्नयाजयन् क्षेत्रे मखैरुत्तमकल्पकैः ॥ ४३ ॥
तद्दीक्षायां प्रवृत्तायां वृष्णयः पुष्करस्रजः।
स्नाताः सुवाससो राजन् राजानः सुष्ठ्वलङ्कृताः ॥ ४४ ॥
तन्महिष्यश्च मुदिता निष्ककण्ठ्यः सुवाससः।
दीक्षाशालामुपाजग्मुरालिप्ता वस्तुपाणयः ॥ ४५ ॥
नेदुर्मृदङ्गपटहशङ्खभेर्यानकादयः।
ननृतुर्नटनर्तक्यस्तुष्टुवुः सूतमागधाः।
जगुः सुकण्ठ्यो गन्धर्व्यः सङ्गीतं सहभर्तृकाः ॥ ४६ ॥
तमभ्यषिञ्चन्विधिवदक्तमभ्यक्तमृत्विजः।
पत्नीभिरष्टादशभिः सोमराजमिवोडुभिः ॥ ४७ ॥
ताभिर्दुकूलवलयैर्हारनूपुरकुण्डलैः।
स्वलङ्कृताभिर्विबभौ दीक्षितोऽजिनसंवृतः ॥ ४८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

भावः। न चेदमस्मदुक्तप्रमाणमेवेत्याहुः स यज्ञामिति। तदपि स्वमतिदैन्येनात्मनि सांसारिकत्वमारोप्य यदि कर्म चिकीर्षसि तदा भगवानिव लोकसङ्ग्रहार्थं कर्म कुर्विति भावः ॥ ४१—४४॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ऋणैरिति। तथा च श्रुतिः "जायमानो वै ब्राह्मणस्त्रिभिः ऋणवान् जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इति तानि अनिस्तीर्य अनपाकृत्य व्रजन् पतेत् पुरुष इति शेषः। तथा च मनुः—

"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्।
अनपाकृत्य मोक्षन्तु सेवमानो व्रजत्यधः ॥ इति

इदम् ऋणित्वं मुकुन्दशरणजनाभिन्नविषयम्—

"देवर्षिभूताप्तनृणां न किङ्करो नायमृणी च राजन्।
सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्तम्॥

इति वक्ष्यमाणात् ॥ ३९ ॥

त्वन्त्विति। तुशब्दः श्रीवसुदेवस्य सर्वथा कृतार्थतां दर्शयति ऋणिवत्कर्मप्रवृत्तिस्तु तस्य लोकसङ्ग्रहार्था अशरणः त्यक्तगृहस्थत्वाभिमानो भव ॥ ४० ॥

तस्य कृतार्थतामाहुः—वसुदेव इति। प्राच्यैः अर्चितवान् वां युवयोः ॥ ४१—४४ ॥

---

भाषा टीका।

पहले भी सबहि विवेकी जन भी गृहस्थाश्रमकी वासना को त्याग कर तपो वन में चले गए हैं हेप्रभो! देवता-ऋषि पितृओं को तीन ऋणों सहितहि द्विज उत्पन्न भया हे इसी कारण यज्ञ करनेसे देवतान के ऋण को वेद पढ़नेसे ऋषियों के ऋणको पुत्र के उत्पादन से पितृओंके ऋण को निवृत्त नहि करके जो गृहस्थाश्रमके कर्मन न का त्याग करता हे वह नरक में गिरता हे ॥ ३९ ॥

हे महामते ऋषि और पितृयों के दो ऋणों से तो तुम अब छूटगए हो, आगें यज्ञन करके देवतान के ऋण को निवृत्त करके अऋणिया होकर गृहका त्याग कर देउ ॥ ४० ॥

तुमने लोकरीति का प्रश्न किया उसका उत्तर भी लोकरीति से हमने दिया इस लिये अशुद्ध चित्त वारेन का यह क्रम है परन्तु हे वसुदेवजी आपतो कृतार्थ हो क्योंकि परम भक्ति से आपने जगदीश्वर हरिका अर्चन किया हे इसी कारण से वह परमात्मा आप के पुत्र भाव प्राप्त भया हे ॥ ४१ ॥

श्रीशुकउवाच।

इस प्रकार ऋषीन के वचन को सुनकर उदार मनवारे वसुदेवजी मस्तक से ऋषीन को प्रणाम करके तथा उनको प्रसन्न करके उनहि ऋषीन को निमित्त ऋण वर्णन करते भए ॥ ४२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

आलिप्ताः कुङ्कुमादिभिः वस्तुपाणयो गृहीतार्हणहस्ताः ॥ ४५—४६ ॥

अक्तं नेत्रयोरञ्जनेन अभ्यक्तं सर्वाङ्गेषु नवनीतेन ॥ ४७ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

ताभिः पत्नीभिः सहितो दीक्षितो विरेजे ॥ ४८—४९ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

धर्मेण न्यायेन विप्रैः क्षत्रियाणां याज्यत्वात् किम्वा धर्मेण हेतुना धर्मार्थं वृता इत्यर्थः। धर्मेण धर्मशास्त्रोक्तविधिनेत्यर्थः। धार्मिकं भगवद्धर्मपरम् उत्तमकल्पकैः मुख्यकल्पैः सर्वसामर्थ्यसद्भावात् ॥ ४३ ॥

तदिति युग्मकम्। वृष्णयो राजानश्च हे राजन्! इत्यहो भाग्यं राज्ञामिति भावः। पुनस्तथैव सम्बोधनमत्यन्तहर्षादेव तस्य श्रीवसुदेवस्य महिष्यः मुदिता इति चशब्दबलाद्भूषण्यादीनाञ्च विशेषणं द्रष्टव्यम् उप समीपे आजग्मुः ॥ ४४—४५ ॥

नेदुरितिसार्द्धकम्। सूताश्च मागधाश्च गन्धर्व्यः गायकानां गन्धर्वजातीनां स्त्रियः ॥ ४६ ॥

सोमराजमिवेति। राजशब्दात्तस्य कृतराजसूयावभृथत्वं स्मारयति यज्ञस्य तादृशत्वं गमयति यद्वा यदि बहवः सोमा भवन्ति तन्मध्ये च कोपि भवति तदैव स उपमीयेत इत्यर्थः अत एवोडुभीराज्ञीभिरित्यपि ज्ञापितम् अष्टादशभिरिति तादृशसप्तविंशतेरत्यन्तासम्भवादिति भावः। एवं श्रीहरिवंशेतु तज्जन्मप्रसङ्गे यदिदं तस्य वर्णनम्—

"मनुष्यलोके कृत्स्नेऽस्मिन् रूपेणाप्रतिमो भुवि।
यस्यासीत्पुरुषाग्र्यस्य कान्तिश्चन्द्रमसो यथा ॥ इति

अत्र तु तदपि न सोढम् ॥ ४७ ॥

विबभौ विशेषेण रेजे ॥ ४८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

त इति। एवं धर्मेण यथाविधि वृतास्ते ऋषयस्तस्मिन् समन्तपञ्चके क्षेत्रे उत्तमकल्पकैः मन्त्रतन्त्रद्रव्यादिलोपरहितैः मखैर्यज्ञैस्तं वसुदेवमयाजयन् ॥ ४३ ॥

एतदेव प्रपञ्चयति-तद्दीक्षायामित्यादिना। तद्दीक्षायां यज्ञदीक्षायां पुष्कराणां स्रजो येषां ते ॥ ४४ ॥

तस्य वसुदेवस्य महिष्यः पत्न्यः आलिप्ताः कुङ्कुमादिभिः वस्तून्यर्हणानि पाण्योर्यासां ताः ॥ ४५ ॥

सूता पुराणपाठकाः मागधाः वंशावलिपाठकाः सहभर्तृकाः ॥ ४६ ॥

तमिति। अक्तं नेत्रयोरञ्जनेनाभ्यक्तं सर्वाङ्गेषु नवनीतेनाक्तं तं वसुदेवम् उडुभिर्नक्षत्रैः सहितं सोमराजं चन्द्रमिवाष्टादशभिः पत्नीभिः सहितमभ्यषिञ्चन् ॥ ४७ ॥

ताभिरिति। दुकूलादिभिरन्यैश्च विविधैर्विपुलालङ्कारैः सुष्ठु अलङ्कृताभिः पत्नीभिः सह दीक्षितः अजिनेन सम्वृतः विरेजे ॥ ४८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततः सोमः प्रवाकृतवरणे जाते द्वैपायनादयः तं याजयामासुरित्याह—त एनमिति। धर्मेण नतृत्कोचनादिकं कृत्वा यतो धार्मिकः सः यादवाः वैदिकधर्मे न प्रशस्ता इति वसुदेवे विशेष उक्तः तस्मिन्नेव क्षेत्रे अयाजयन् मखैः सर्वैरेव उत्तमः कल्पो येषां न काप्यनुकल्पः कृत इत्यर्थः ॥ ४३ ॥

एवं वैदिकसमृद्धिमुक्त्वा लौकिकसमृद्धिमाह—तद्दीक्षायां प्रवृत्तायामिति। सर्वे एव वृष्णयः कमलमालायुक्ताः जाताः अनुवादो वा अनेन भगवत्सारूप्यं निरूपितं ततः स्नाताः अभ्यक्तेन सुवाससो जाताः अलङ्कृताश्च तथैव तन्महिष्यः अन्तस्तोषमाह, मुदिता। इति पुरुषाद्विशेषमाह निष्ककण्ठ्यः सुवासस इति इदं वस्त्रमुपरि धेयं ततश्चन्दनादिलिप्ताः उपायनहस्ताः सत्यः यस्यां शालायां दीक्षा कृता तामुपाजग्मुः पत्नीनां दर्शनार्थम् ॥ ४४—४५ ॥

एवं मनुष्यसम्भ्रममुक्त्वा वाद्यादिसम्भ्रममाह—नेदुरिति। वाद्यनृत्यगानानि निरूपितानि मध्ये सूतमागधवन्दिनां स्तोत्रञ्च अत्र रसाभिव्यक्त्यर्थं मुख्यतया स्त्रीणां गानमुक्तं ताश्च केवला निषिद्धा इति सहभर्तृका उक्ताः ॥ ४६ ॥

एवं लौकिकसम्भ्रममुक्त्वा यागप्रकारमाह—तमभ्यषिञ्चन् विधिवदिति। दशदीक्षासु अञ्जनमभ्यञ्जनञ्च ततस्तमभ्यषिञ्चन् पावनानन्तरं विधिवत् कल्पोक्तप्रकारेण तन्माष्टादशपत्न्यः न कापि तस्य भोगस्त्री तदर्थमाह पत्नीभिरष्टादशभिरिति। यथा चन्द्रस्य राजसूये बहुपत्नीकः प्रयोगः तथाऽत्रापि कृतवन्त इति वक्तुं दृष्टान्तमाह—सोमराजमिवेति। तास्त्वलङ्कारसहिताः स्वयन्त्वलङ्कृत इति यतो दीक्षितः अजिनेन कृष्णाजिनेन च सम्वृतः विभवैः सर्वैरेव कटकवलयादिभिः स्वलङ्कृताः स्त्रियः ॥ ४७-४८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

वस्तुपाणयः हस्तगृहीतार्हणद्रव्याः ॥ ४५—४६ ॥

अक्तं नेत्रयोरञ्जनेन अभ्यक्तं सर्वाङ्गेषु नवनीतेन सोमराजं बहूनां सोमानां यदि वा कश्चिदेको राजा भवति तमिवेत्यर्थः ॥ ४७—४९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तन्महिष्यः राज्ञः महिष्यः आलिप्ताः कुङ्कुमादिभिः वस्तूनि अर्हणानि पाणिषु यासां ताः ॥ ४५ ॥

सहभर्तृकाः सभर्तृकाः ॥ ४६ ॥

अक्तमञ्जनेन नेत्रयोः अभ्यक्तं नवनीतेन सर्वाङ्गेषु उडुभिः सोमराज इव पत्नीभिः सहितो दीक्षितो विबभौ विरेजे इत्युत्तरेणान्वयः ॥ ४७-४९ ॥

तस्यर्त्विजो महाराज रत्नकौशेयवाससः ।
ससदस्या विरेजुस्ते यथा वृत्रहणोऽध्वरे ॥ ४९ ॥
तदा रामश्च कृष्णश्च स्वैः स्वैर्बन्धुभिरन्वितौ ।
रेजतुः स्वसुतैर्दारैर्जीवेशौ स्वविभूतिभिः ॥ ५० ॥
ईजेऽनुयज्ञं विधिना अग्निहोत्रादिलक्षणैः ।
प्राकृतैर्वैकृतैर्यज्ञैर्द्रव्यज्ञानक्रियेश्वरम् ॥ ५१ ॥
अथर्त्विग्भ्योऽददात् काले यथाम्नातं सदक्षिणाः ।
स्वलङ्कृतेभ्यो विप्रेभ्यो गोभूकन्यामहाधनाः ॥ ५२ ॥
पत्नीसंयाजावभृथ्यैश्चरित्वा ते महर्षयः ।
सस्नू रामह्रदे विप्रा यजमानपुरस्सराः ॥ ५३ ॥
स्नातोऽलङ्कारवासांसि वन्दिभ्योऽदात्तथा स्त्रियः ।
ततः स्वलङ्कृतो वर्णानाश्वभ्योऽन्नेन पूजयत् ॥ ५४ ॥

भाषाटीका ।

हेराजन् ! यथाविधि वरे भए वे ऋत्विजन उस स्यमन्त पंचक क्षेत्रमे उत्तम प्रकार युत यज्ञोंसे धर्मात्मा वसुदेव को यजन करातेभए ॥ ४३ ॥

हेराजन ! जब वसुदेवजी को यज्ञकी दीक्षा भई तब स्नान किये सुन्दर वस्त्र पहरें सुन्दर आभूषण धारणकियें कमल कीमाला धारणकियें राजालोग तथा यादवलोग ॥ ४४ ॥

तथा कण्ठमे धुक धुका धारणकिये सुन्दर वस्त्र धारणकियें चन्दन आदिसे चर्चित मोदको प्राप्त हाथनमे भेट लिये वसुदेवजी की पटराणी तथा राजान की भार्य्याजन यज्ञ शालामे वसुदेवजी के पाश आवतेभए ॥ ४५ ॥

उससमयमे मृदङ्ग पटह शंख भेरी आनक आदि बाजे बजने लगे तथा नृत्य करने वारे स्त्री पुरुष नृत्यकरतेभए और सूतमागध लोग स्तुति करते भए और अपने पतियों के साथ सुन्दर कण्ठ वारी गंधर्वी, सगीत गान करती है ॥ ४६ ॥

नेत्रोंमे अञ्जन लगायें शरीर मे घृत लगायें वसुदेवजी का अठारह पत्नीयो के साथ ऋषिलोग विधि पूर्वक अभिषेक करतेभए जैसे पहले नक्षत्रोंकसाथ चन्द्रकाअभिषेक किया है ॥४७॥

रेशमी वस्त्रोंसें कडेनसे हारनूपुरकुण्डलों सें सुन्दर शृंगार कियें उन पत्नीयों के साथ दीक्षा को प्राप्त तथा मृगछाला धारणकियें वसुदेवजी प्रकाशमान होतेभए ॥४८॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

जीवेशौ सर्वजीवानामीशौ ॥ ५० ॥

अनुयज्ञं प्रतियज्ञम् आम्नातसर्वाङ्गाः प्राकृताः ज्योतिष्टोमदर्शपूर्णमासादयः तेभ्यश्चोदनालिङ्गादिभिरिति देशप्राप्ताङ्गा वैकृताः सौरसत्रादयस्तैः सर्वैः द्रव्यं पुरोडाशादि ज्ञानं मन्त्रः क्रिया कर्म तेषामीश्वरम् ॥ ५१ ॥ ५२ ॥

सस्नुः स्नानञ्चक्रुः ॥५३॥

आश्वभ्यः शुनोऽभिव्याप्य अन्नेन पूजयदपूजयत् ॥ ५४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पीतकौशेयवासस इति श्रीभगवत्परिधानीय नव्यदिव्यवस्त्रप्राप्तेः पाठान्तरे रत्नश्रेणीविलम्बयुक्तप्रान्तभागकौशेयवासस इति यथेस्यापातमात्रचमत्काराय ॥ ४९ ॥

जीवानामीशौ प्रजानां राजयुवराजाविव नियन्तारौ स्वविभूतिभिरन्तरङ्गवैभवैरेजतुः ता एवाह स्वैः स्वैर्बन्धुभिर्मातुलेयसम्बन्धिमित्रादिभिः स्वैः स्वैर्दारैश्चेत्यन्वयः तथापि सुतेषु पुनः स्वशब्दप्रयोगः आकारादिभिरभेदप्रतीतेः स्वतायाः स्पष्टज्ञानात् यद्वा जीवः स्वांशेन सर्वसमष्टिजीवान्तर्य्यामी स्वयं सङ्कर्षणः यथोक्तमेकादशे "कालो मायामये जीवः" इति ईशश्च ततः परः स्वयं भगवान् तौ सममन्यत ॥५०॥

अनुयज्ञं यो विधिस्तेन विधिमेवाह अग्नीत्यादिना द्रव्यादीनामीश्वरं भगवन्तमिति तस्यैवेज्यत्वादिति भावः ॥ ५१ ॥

अथ यागानन्तरं गवाद्या एव दक्षिणाः अलङ्कृत्यादात् कथम्भूताः महाधनाः महान्ति स्वर्णरत्नादीनि धनानि यासु ताः ॥ ५२ ॥

सस्नुः अवभृथस्नानं चक्रुः विप्राश्चान्ये ॥ ५३ ॥

नानेत्यर्द्धकं । स्नात इति कश्चित् तथा स्त्रियस्तस्य महिष्योऽप्यतुः ततः इति युग्मकं वर्णानपूजयत् अन्यांश्च श्वपचपर्य्यन्तानित्यर्थः ॥ ५४ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्राकृतैः वैकृतैः प्रकृतिभिः विकृतभिश्च द्रव्यज्ञानक्रियेश्वरं पञ्चभूतज्ञानेन्द्रियकर्मेन्द्रियनिर्वाहकं यज्ञा पुरोडाशादि द्रव्यम् अङ्ग कर्मविषयज्ञानतदनुष्ठानानां प्रभुम् ॥ ५१-६१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्य वसुदेवस्य सम्बन्धिनः ऋत्विजः नूत्नानि नवानि कौशेयानि वासांसि येषां ते सदस्यैः सभ्यैः सहिता विरेजुः यथा वृत्रहण इन्द्रस्याध्वरे तद्वत् ॥ ४९ ॥

तदेति । देवानां ब्रह्मादीनामपीशौ इति रामकृष्णयोर्विशेषणं जीवेशौ इति पाठान्तरं तदा जीवानामीश्वरावित्यर्थः । देवेशैः स्वविभूतिभिरिति च पाठः तदास्याः विभूतयो येषान्तैर्देवेशैर्देवश्रेष्ठांशसम्भूतैरिति स्वसुतविशेषणम् ॥ ५० ॥

ईज इति । अनुयज्ञं प्रतियज्ञमीजे इष्टवान् तदेवाह–विधिनेति । आम्नातसर्वाङ्गाः प्राकृताः ज्योतिष्टोमदर्शपूर्णमासादयः तेभ्यश्चोदनालिङ्गादिभिरतिदेशप्राप्ताङ्गाः वैकृताः सौर्यसत्रादयः सर्वैरग्निहोत्रादिनामकैस्तैः होमैश्च द्रव्यज्ञानक्रियेश्वरं भूतपञ्चकज्ञानेन्द्रियपञ्चककर्मेन्द्रियपञ्चकनिर्वाहकं भगवन्तम् ईजे यज्ञा पुरोडाशादिद्रव्यसाङ्गकर्मविषयज्ञानतदनुष्ठानानां प्रभुम् ॥ ५१ ॥

अथेति । वसुदेवः काले विहितकाले यथाम्नातं यथोक्तं दक्षिणाः ऋत्विग्भ्यः स्वयमप्यलङ्कृत्य तावत् ततो महाधनाः अनर्घाः गोभूकन्याश्च ददौ ॥ ५२ ॥

पत्नीसंयाजा भावभृथ्याश्च यागविशेषाः तैश्चरित्वा इष्ट्वा रामहृदे परशुरामनिर्मिते हृदे सस्नुः स्नानं चक्रुः ॥ ५३ ॥

स्नानेति । स्नानादीनि ददौ स्नापयामास तेभ्योऽलङ्कारवासांसि च ददौ इत्यर्थः । तत्र स्त्रियश्च सस्नुः सुष्ठ्वलङ्कृताश्चेति सम्बन्धः । आश्वभ्यः शुनोऽभिव्याप्य सर्वान् वर्णान् अन्नेन पूजयत् अपूजयत् अडभाव आर्षः । आगमशास्त्रस्यानित्यत्वाद्वा ॥ ५४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततः तस्य ऋत्विजां शोभामाह–तस्यर्त्विज इति । कर्मकारा इति कदाचिदनलङ्करणं ततोऽलङ्कारो निरूप्यते सदस्यसहिताः सर्व एव ऋत्विजो विरेजुः वृत्रवधानन्तरमिन्द्रो बहुदक्षिणाश्वमेधं कृतवान् तत्र ऋत्विजोपि समृद्धा जाताः तद्वदत्रापीत्यर्थः ॥४९॥

एवम् इन्द्रवरुणादिसाधारण्योऽस्य यज्ञ इति साधारण्यं निरूप्य सर्वतो विशेषमाह—तदा रामश्च कृष्णश्चेति । तत्तत्सम्बन्धिनो बहव इति चकारद्वयं स्वैः स्वैर्बन्धुभिः अन्विताः सुताः दाराश्च तैः सहितौ रामकृष्णौ एको जीवः अपरः ईशः उभौ जीवानां नियन्तारौ पूर्वोक्ताः दारादयो विभूतिरूपाः अथवा भिन्नाः विभूतयः तामस्यः सात्त्विक्यश्चेति ॥ ५० ॥

एवं सम्भ्रममुक्त्वा एवं प्रकारेण बहवो यज्ञाः कृताः इत्याह—ईजेऽनुयज्ञमिति । अनुयज्ञं विधिना ईजे अग्निहोत्रादिनामान्येव लक्षणानि येषां प्राकृतमग्निहोत्रं प्रसिद्धं वैकृतं तु कुण्डपायनामयमस्थं पयसाऽग्निहोत्रं द्रव्यान्तराग्निहोत्रं वा तथैव सर्वा इष्टयः दर्शपूर्णमासव्यतिरिक्ताः पशवो वैकृताः एवं सोमेष्वपि सर्वत्र प्रकृतिविकृतिभावोऽस्ति सर्वैरपि यज्ञैः भगवन्तमेव ईजे तत्र हेतुः द्रव्यमाधिभौतिकं ज्ञानमाधिदैविकं क्रिया आध्यात्मिकी एतत्त्रितयस्यापीश्वरो भगवान् अत एव तत्त्रितये भगवानेव पूज्यतेति युक्तम् अनेन सामान्ययज्ञा एव तेन कृताः न तु प्रसिद्धा राजसूयादय इति निरूपितम् ॥ ५१ ॥

ततो दक्षिणामाह—अथर्त्विग्भ्य इति । दक्षिणादानमुत्कर्षहेतुरिति लोकप्रसिद्धत्वात् पृथगुच्यते काले तत्तदवसरे यथाऽऽम्नातं यथोदितं स्वलङ्कृतेभ्य इति पूर्वं यज्ञार्थमलङ्कृता अपि पुनर्दक्षिणाङ्गत्वेन अलङ्कृताः कचिद्भूमिर्दक्षिणात्वेनोक्ता उर्वरा प्रतिष्ठिताय देयेति तथा देवविवाहे ऋत्विजे कर्मकुर्वत इति महाधनाः अन्याः काश्चन दक्षिणाः ततः पूर्ववत् पृथक् पत्नीसंयाजावभृथ्यकर्मणां करणं महर्षयः कारयन्तीति न काप्यनुशयः ततोऽवभृथस्नानं रामहृदेष्वेव कृतवन्तः सिद्धार्थत्वात् यजमानः पुरस्सरो येषाम् ॥ ५२—५३ ॥

स्नानोत्सवमाह—नानालङ्कारवासांसीति । अदाद्यजमानः तत्स्त्रियोपि तत अवभृथादुत्तीर्य स्वयं स्वलङ्कृतस्सन् सर्वानेवापूजयत् आश्वभ्यः अन्नेन पूजयन् ॥ बन्धूंश्च पारिबर्हेण बन्धून् गणयति विदर्भेति तथा सदस्यर्त्विक्सुरगणानित्यपूजयदितिपूर्वेणैव सम्बन्धः । अन्नैरपूजयदिति पाठः अग्रिमटीका ततस्ते श्रीनिकेतं भगवन्तम् अनुज्ञाप्य क्रतुं शंसन्तः प्रययुरिति प्रत्यापत्तिर्निरूपिता ॥ ५४—५६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

जीवेशौ सर्वजीवानामीशौ ॥ ५० ॥

अनुयज्ञं प्रतियज्ञम् आम्नातसर्वाङ्गाः प्राकृताः ज्योतिष्टोमदर्शपूर्णमासादयः तेभ्यश्चोदनालिङ्गादिभिरितिदेशप्राप्ताः वैकृताः सौर्यसत्रादयः तैः सर्वैरेव द्रव्यं पुरोडाशादि ज्ञानं मन्त्रः क्रिया कर्म तेषामीश्वरम् ॥ ५१ ॥

स वसुदेवः दक्षिणाः कीदृशीः महान्ति स्वर्णरत्नादीनि धनानि यासु ताः ॥ ५२ ॥

पत्नीसंयाजो यागविशेषः अवभृथसम्बन्धिकृत्यानि च तैः चरित्वा तान्यनुष्ठायेत्यर्थः ॥ ५३ ॥

स्नातो वसुदेवः तस्य स्त्रियश्चादुः आश्वभ्यः शुनोऽभिव्याप्य अन्नेन पूजयत् अपूजयत् ॥५४॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जीवानामीशौ ॥ ५० ॥

सर्वाङ्गाः ज्योतिष्टोमदर्शपूर्णमासादयः प्राकृतास्तैस्तेभ्यश्चो-

बन्धून् सदारान् ससुतान् पारिबर्हेण भूयसा ।
विदर्भकोसलकुरून् काशिकेकयसृञ्जयान् ॥ ५५ ॥
सदस्यर्त्विक्सुरगणान् नृभूतपितृचारणान् ।
श्रीनिकेतमनुज्ञाप्य शंसन्तः प्रययुः क्रतुम् ॥ ५६ ॥
धृतराष्ट्रोऽनुजः पार्था भीष्मो द्रोणः पृथा यमौ ।
नारदो भगवान् व्यासः सुहृत्सम्बन्धिबान्धवाः ॥ ५७ ॥
बन्धून् परिष्वज्य यदून् सौहृदाऽऽक्लिन्नचेतसः ।
ययुर्विरहकृच्छ्रेण स्वदेशांश्चापरे जनाः ॥ ५८ ॥
नन्दस्तु सह गोपालैर्बृहत्या पूजयाऽर्चितः ।
कृष्णरामोग्रसेनाद्यैर्न्यवात्सीद्बन्धुवत्सलः ॥ ५९ ॥
वसुदेवोऽञ्जसोत्तीर्य मनोरथमहार्णवम् ।
सुहृद्वृतः प्रीतमना नन्दमाह करे स्पृशन् ॥ ६० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दनादिभिरतिदेशप्राप्ताङ्गाः सौर्यसत्रादयो वैकृतास्तैश्च अनुयज्ञं विधिना द्रव्यज्ञानक्रियेश्वरं द्रव्यं कर्मफलं ज्ञानं कर्ता क्रिया कर्म तेषामीश्वरं भगवन्तम् ईजे ॥ ५१ ॥ ५२ ॥

सस्नुः स्नानं चक्रुः ॥ ५३ ॥ ५४ ॥

———

भाषा टीका ।

हे महराज ! सभासदों के साथ, रत्न रेशमी वस्त्रवारे जो वसुदेवजी के यज्ञ करनेवारे ऋत्विज, वे इसप्रकार शोभा को प्राप्तभए कि जैसे वृत्रासुरके मरणानन्तर इन्द्रके यज्ञमें ऋत्विज लोग, शोभा को प्राप्तभए है ॥ ४९ ॥

उस कालमें जीवाभिमानि संकर्षणावतार बलदेवजी और सर्व नियंता पर ब्रह्म नारायणावतार श्री कृष्णजी वे दोनो अपने २ बन्धुजनों के साथ अपनी २ स्त्री और पुत्रों के साथ तथा अपनी विभूतियों के साथ शोभायमान होतेभए ॥ ५० ॥

जिनके सब अङ्गों का प्रतिपादन कियागयाहै एतादृश दर्श पूर्णमादि नामक यज्ञोसे तथा ज्योतिष्टोमदर्श पूर्णमादि यज्ञों के दृष्टान्तोपदेशते जिनमें अङ्ग की प्राप्तिहै एतादृश सौरमन्त्रादिक यज्ञोंसे और अग्निहोत्रादि नामक यज्ञोसें पुरोडाशादि हविष्य मन्त्र कर्म इत्यादिके नियन्ता भगवान का विधिपूर्वक यज्ञ २ के वसुदेवजी सबयज्ञोंमे यजनकरतेभए ॥ ५१ ॥

यज्ञ के अनन्तर वसुदेवजी ने अलङ्कार किये ऋत्विजन के अर्थ जिस प्रकार की दक्षिणा कही है उसी प्रकार की दक्षिणा दई तथा बहुत से धन के साथ गो भूमि कन्यान का दान भी दिया ॥ ५२ ॥

पत्नीसंयाज नाम यज्ञ और यज्ञांत स्नान के जो कर्म रहे उनका अनुष्ठान कर करके ऋत्विज लोग और अन्य ब्राह्मण लोग वे सब यजमान को आगे कर परशुराम जी के निर्मित कुण्ड में स्नान करते भए ॥ ५३ ॥

स्नान करने के अनन्तर वसुदेव जी ने अपने वस्त्र भूषणों को बन्दीन के तांई देदिये तथा उनकी स्त्रीयों ने भी अपने वस्त्र भूषण बन्दीन के तांई दयदीये पश्चात् अन्य भूषण धारण कर वसुदेवजी ने श्वान से लेकर सब हि जातियों का अन्न से सत्कार किया ॥ ५४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

बन्ध्वादिचारणान्तान् पारिबर्हेण प्रीतिदानेन आपूजयत् तेच सर्वे प्रययुः ॥ ५५ ॥ ५६ ॥

प्रयाणे केषाञ्चिद्विशेषमाह—धृतराष्ट्र इति द्वाभ्याम् । अनुजो विदुरः पार्था युधिष्ठिरभीमार्जुनाः यमौ नकुलसहदेवौ ॥५७॥

सौहृदेनाऽऽक्लिन्नानि चेतांसि येषां ते ॥५८॥५९॥

मनोरथो यज्ञविषयस्तमेव महार्णवम् ॥ ६० ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

बन्धून् यादवादीन् विदर्भादींश्च तत्तद्देशनृपादीन् ॥ ५५ ॥

नरोऽन्ये सर्वे मनुष्याः भूतादयश्च तान् तत्र भूताः प्रमथाः सुरगणानितिभूतादीनित्यनेन साक्षात्ते तत्रागता इति ज्ञेयम् श्रीस्पर्द्धकम श्रीनिकेतमिति तद्वचनानायासेन सर्वाङ्गपूर्णतादिना केवलतत्सौन्दर्य्यादिना च सर्वेषां सन्तोषोत्पत्तिः सूचिता ॥५६॥

धृतेति युग्मकम् । सुहृदादयोऽन्ये च विरहात् यत्कृच्छ्रं दुःखं तेनैवोपलक्षिता ययुः अपरेऽप्युदासीनाः ॥ ५७—५८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं तेषां सर्वेषां श्रीभगवता प्रस्थापनं व्रजजनैः सहासङ्कोचेन चिरं तत्र निवासाभिप्रायामिति सूचयन्नाह—नन्द इति । तुशब्दः सर्वतो विशेषात् अत एव महत्या पूजया अर्चितश्च न्यवात्सीच्च वृहत्येति कश्चित् यतः बन्धुभ्यः श्रीवसुदेवादिभ्योपि श्रीकृष्णरामयोर्वत्सलः आद्यशब्दाद्वसुदेवाद्यः तत्र श्रीवसुदेवस्य साक्षादनुकिर्याङ्गत्वेन पूर्वमेव कृतपूजाविशेषत्वात् ॥ ५९ ॥

कंसवधमारभ्य श्रीवसुदेवस्य मनोरथश्चायं श्रीकृष्णरामसाहित्येन श्रीनन्दादिभिर्व्रजजनैः सङ्गत्य कचित्स्थाने सर्वेषां बन्धूनां मुर्मानां नृपादीनाञ्च साक्षान्महोत्सवः क्रियेतेति स एव महार्णवः दुर्घटत्वात् तमञ्जसा अनायासेनोत्तीर्य्य प्रीतमनास्सन् दिनान्तरे सुहृद्भिर्वृतः सर्वैर्नृपादिभिः सहितो भूत्वा तन्निवासकृतः सन्निति करे स्पृशन् आभिमुख्येनैकासन उपविश्य स्नेहेन तत्करं गृहीत्वेत्यर्थः । एषा च परिपाटी प्रायस्तस्य श्रीकृष्णावियोगदुःखसान्त्वनायेतिज्ञेयम् ॥ ६० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

बन्ध्वादीन् पारिबर्हेण बहुमानार्थदेयद्रव्येण पूजयदिति सम्बन्धः ॥ ५५ ॥

सदस्येति । सदस्यादयः श्रीनिकेतं कृष्णमनुज्ञाप्यानुज्ञां पृष्ट्वा कर्तुं प्रशंसन्तो ययुः ॥ ५६ ॥

धृतराष्ट्र इति । अनुजो विदुरः पृथा कुन्ती यमौ नकुलसहदेवौ सुहृदश्च सम्बन्धिनश्च बान्धवाश्च ते सौहार्देन सौहृदेन क्लिन्नमार्द्रं चेतो येषां ते विरहकृच्छ्रेण विश्लेषयुक्तक्लेशेन उपलक्षिताः ययुः तथा अपरे जनाश्च ययुः ॥ ५७ ॥ ५८ ॥

नन्दस्त्विति । बृहत्या महत्या पूजया समर्चितः गोपैः सह न्यवात्सीदुषितवान् तत्र हेतुत्वेन विशिनष्टि बन्धुवत्सल इति ॥ ५९ ॥

वसुदेव इति मनोरथः यज्ञविषयः स एव महार्णवः तमञ्जसा सुखेन उत्तीर्य निस्तीर्य ॥ ६० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

साधारणानां गमनमुक्त्वा प्रसिद्धानामाह—धृतराष्ट्रेति । अनुजो विदुरः पार्थाः पाण्डवाः यमौ नकुलसहदेवौ एते क्षत्रियाः सम्बन्धिनः ततो देवकृष्यादीन् सम्बन्धिनः आह, नारदो भगवान् व्यास इति । सर्वे एव यदून् परिपूज्य स्नेहेन क्लिन्नहृदयाः स्वस्वदेशान् ययुः विरहक्लेशेन सहिता एव ॥ ५७—५८ ॥

एवं सर्वेषां गमनमुक्त्वा नन्दस्य भगवद्विरहात् आगमनं भगवता सह गमनं भविष्यतीति शङ्कायां वसुदेवो मनोमात्रेण कृत्वा नन्दं प्रेषयित्वा भगवन्तं आपितवानिति वक्तुं तत्सम्वादो निरूप्यते, आदौ नन्दस्य स्वतो ममतामाह...नन्दस्त्विति । यद्यनन्तरं गोपालैः सहितः वृहत्या पूजया अर्चितः प्रथमत एव वा ततः कृष्णरामोग्रसेनाद्यैः सहान्यवात्सीत् यादववत् , सोप्येकः बन्धुवत्सलत्वान्न वैषम्यम् ॥ ५९ ॥

ततः सम्वादार्थं प्रसङ्गमाह...वसुदेवोऽञ्जसोत्तीर्येति । मनोरथ एव यज्ञः कथं भविष्यतीति यज्ञरूपः महानेवार्णवः विघ्नकसम्भवात् ततः सुहृद्भिर्वृतः प्रीतमनाः सन् करे स्पृशन्नन्दमाह हस्तस्पर्शेन स्वधर्मः तत्रारोपितः तेन स्वाभिलषितं स करिष्यतीति सूचितम् ॥ ६० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पारिबर्हेण प्रीतिदानेन च ॥ ५५ ॥

ते च सर्वे प्रययुः ॥ ५६ ॥

अनुजो विदुरः ॥ ५७—५८ ॥

तुशब्देन सर्वतोपि विशेषतः पार्थादिपूजातोपि बृहत्या पूजया तान् सर्वान् प्रस्थाप्यापि तस्य चिरमप्रस्थापनात् ॥ ५९ ॥

मनोरथो यज्ञविषयकस्तं महार्णवम् उत्तीर्य्य तत्सर्वसम्पूर्णतालाभेनेति भावः ॥ ६० ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

बन्ध्वादीन् चारणान्तान् पारिबर्हेण प्रीतिदानेन अपूजयत् ॥ ५५ ॥ ५६ ॥

विदुरः यमौ माद्रेयौ ॥ ५७ ॥ ५८ ॥

नन्दस्त्विति । तुशब्दो नन्दस्यादरणीयत्वे विशेषं दर्शयति बृहत्येत्यादिना ॥ ५९ ॥

मनोरथो यज्ञविषयकः स एव महार्णवस्तम् अञ्जसा सुखेन उत्तीर्य निस्तीर्य ॥ ६० ॥

---

भाषा टीका ।

स्त्री पुत्रों सहित विदर्भ कोसल कुरु काशी केकय सृञ्जय देश के बन्धुजनों का बहुत से दायजे से सन्मान किया ॥ ५५ ॥

तथा सभासद ऋत्विज देवतागण मनुष्य भूत पितृ चारणों का भी बहुतसी विदाई के साथ सन्मान किया वे सब श्रीकृष्ण के प्रति जाने की अनुमति पूछकर भगवान्‌की प्रशंसा करते हुए तथा यज्ञ की प्रशंसा करते हुए शीघ्रहि अपने२ आश्रमन को चलेगए ॥ ५६ ॥

धृतराष्ट्र विदुर पाण्डव भीष्म द्रोणाचार्य्य कुन्ती नकुल सहदेव नारदजी व्यासभगवान् तथा सुहृद सम्बान्धि बन्धुजन ॥ ५७ ॥

वे सब स्नेह सें आर्द्रचित्त होकर निजबन्धुजन यादव

वसुदेव उवाच ।

भ्रातरीशकृतः पाशो नृणां यः स्नेहसंज्ञितः ।
तं दुस्त्यजमहं मन्ये शूराणामपि योगिनाम् ॥ ६१ ॥
अस्मास्वप्रतिकल्पेयं यत्कृताज्ञेषु सत्तमैः ।
मैत्र्यर्पिताऽफला वापि न निवर्तेत कर्हिचित् ॥ ६२ ॥
प्रागकल्पाच्च कुशलं भ्रातर्वो नाचराम हि ।
अधुना श्रीमदान्धाक्षा न पश्यामः पुरः सतः ॥ ६३ ॥
मा राज्यश्रीरभूत्पुंसः श्रेयस्कामस्य मानद ।
स्वजनानुत बन्धून् वा न पश्यति ययाऽन्धदृक् ॥ ६४ ॥

श्रीशुक उवाच ।

एवं सौहृदशैथिल्यचित्त आनकदुन्दुभिः ।
रुरोद तत्कृतां मैत्रीं स्मरन्नश्रुविलोचनः ॥ ६५ ॥
नन्दस्तु सख्युः प्रियकृत् प्रेम्णा गोविन्दरामयोः ।
अद्य श्व इति मासांस्त्रीन् यदुभिर्मानितोऽवसत् ॥ ६६ ॥

भाषाटीका ।

को मिलकर विरहजनित कष्ट के गए तथा उनके सिवाय अन्यजन भी चलेगए ॥ ५८॥

श्रीकृष्ण बलदेव उग्रसेन आदि यादवों ने महान् पूजा से गोपन सहित नन्दजी का सत्कार इस कारण बन्धुजनों में प्रेम सम्पन्न होकर नन्दजी वहां हि रहे ॥ ५९ ॥

सुहृद सहित वसुदेवजी, यज्ञ के मनोरथ रूप महा समुद्र को परिश्रम के विना तिरकर प्रसन्न मन होकर नन्द जी का हस्त पकर कर नन्दजी के प्रति बोले ॥ ६० ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

शूराणां बलेन योगिनां ज्ञानेनापीत्यर्थः ॥ ६१ ॥

तत्कुतस्तत्राह—अस्मास्विति । कृताज्ञेषु कृतमुपकारमजानत्सु सत्तमैर्भवद्भिरप्रतिकल्पा अनुपमा मैत्री इयमर्पिता अफलाऽपि प्रत्युपकारशून्यापि कर्हिचिदप्यस्मान्न निवर्तेत तस्मादीश्वरकृतः पाशोऽयं भवतामिति गम्यत इत्यर्थः ॥ ६२ ॥

अफलत्वमेवाऽह—प्रागिति । हे भ्रातः ! अकल्पादसामर्थ्याद्वः कुशलं प्रियं न ह्याचराम न कृतवन्तो वयम् श्रीमदेन अन्धान्यक्षीणि येषां ते ॥ ६३ ॥

राज्यश्रीर्माभूत छान्दसोऽडागमः ॥ ६४-६५॥

अद्य श्व इति । प्रातर्निर्गमेऽद्यैवापराह्णे गम्यताम् अपराह्णे निर्गमे श्वो गम्यतामिति पुनः पुनरेवं मानितः ॥ ६६—६७ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अत एव सर्वे वयं त्वदधीना इति सूचयन्नाह—चतुर्भिः अत एव प्रथमतो भ्रातरिति सम्बोधनम् आवयोरपत्यादिषु भेद एव नास्तीति भावः । ईशकृतत्वादेव दुस्त्यजम् ॥ ६१ ॥

ईशकृतपाशत्वमेव कुतः तत्र तमेव दृष्टान्तयन् विवक्षितमाह—अस्मास्विति । मत्सम्बन्धेनान्येष्वपीत्यर्थः । कर्हिचित् कदाचिदपीति दूरदेशस्थित्यादावप्यपराधादौ सत्यपीत्यर्थः । अन्यत्तैः यद्वा तदेवमीशकृतस्नेहस्य पारस्परिकत्वे सत्येव गवोर्युगलतया बन्धनवत् पाशता युक्ता एतस्य, तद्संयोगेन्यतरस्य तत्सङ्गे हि परस्परसम्बन्धाभावदर्शनात् मम तत्संयोगाभावेपि तव तु तेन मयि बन्धः परम एवापूर्व इत्याह अस्मास्विति कृताज्ञत्वात् स्नेहेन बन्धुमशक्येष्वप्यस्मासु सत्तमैः कृतज्ञैर्भवद्भिर्या मैत्री स्नेहलक्षणाऽर्पिता सा त्वमुपमाप्यफला बन्धुसमर्थापि कर्हिचित्कदाचिदपि न निवर्त्तेत निवर्तितुं सम्भाव्यापि न स्यादिति ॥ ६२ ॥

पुरःसतः अग्रेवर्त्तमानानपि युष्मान् न पश्यामः किं पुनर्दूरस्थान् ॥ ६३ ॥

मानदेति श्रियां सत्यामपि अन्येभ्यो मानदातॄणां युष्माकमेव सोचितेति भावः ॥ ६४ ॥

स्वभावत एव सौहृदेन शैथिल्यं यत्र तादृशश्चित्तः पुनश्चेहं तत्कृतां मैत्रीं स्मरन् ॥ ६५ ॥

अत्र श्रीनन्दस्याप्यप्रतिवचनं युक्तमेव तस्य तत्त्वावज्ञानात् श्रीकृष्णस्य स्वजातत्वे सन्देहाभावात् श्रीकृष्णस्य च

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

"ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुखम्" इत्यनुसारेण अन्तरीणाहाद्रांत यथैव दर्शितं श्रीभक्तिरसामृतसिन्धौ—

देवक्या विवृतप्रसूचरितयाऽप्युम्मृज्यमानानने--
भूयोभिर्वसुदेवनन्दनतयाप्युद्घुष्यमाणे जनैः ॥
गोविन्दे मिहिरग्रहोत्सुकतया क्षेत्रे कुरोरागते-
प्रेमावल्लवनाथयोरतितरामुल्लासमभ्यापयो ॥

अथ श्रीनन्दोऽपि कथञ्चन चलितुमनुज्ञात इत्याशङ्कयाह—नन्दस्तु यदुभिः श्रीवसुदेवादिभिर्मानितः प्रत्यहं वर्द्धितमानः सन् मासांस्त्रीनवसत् कथमिव अद्य श्व इति मासत्रये जातेऽपि तथा रामे तद्वदेव स्वसुखंहतुत्वेन धृतनाम्नि भ्रातृपुत्रे च यः प्रेमा तेन तुशब्दश्च श्रीवसुदेवस्य तादृशसद्व्यवहारादपि तस्य व्यवहारस्योत्कर्षं दर्शयति, तदेवाह--सख्युस्तस्य प्रियकृदेव सन्नवसत् तत एव श्रीकृष्णे स्वात्मजत्वमव्यञ्जयन् स्वसङ्गे नेतुं साक्षादनागृह्णंश्चेत्यर्थः ॥ ६९ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अज्ञेषु सौहृदानभिज्ञेषु सत्तमैः युष्माभिः अर्पिता मैत्री अप्रतिकल्पा अप्रतिकार्या प्रागिति कुशलं नाचरामः नाचरितवन्त इति एवं पुरस्सतः पुरोवर्त्तिनो युष्मान् न पश्याम इत्यर्थः ॥ ६२—७१ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तिमेवाह—भ्रातरिति । हे भ्रातः ! य ईशेन भगवता कृष्णेन कृतः निर्मितः स्नेहलक्षणपाशस्तं सुराणां बलेन योगिनां ज्ञानेनापि दुस्त्यजं मन्ये इत्यर्थः ॥ ६१ ॥

कुत इत्यत आह—अस्मास्विति । यद्यस्मात्कृतमुपकारं न जानन्तीति तथा तेष्वस्मासु सत्तमैर्भवद्भिरियमप्रतिकल्पाऽनुपमा मैत्री अर्पिता निहिता अफला प्रत्युपकारशून्याप्यधुनापि न निवर्त्तते ॥ ६२ ॥

अफलत्वमेवाह—प्रागिति । हे भ्रातः ! प्राक् कंसकृतनिर्बन्धदशायाम् अकल्पाः असमर्थाः हेतुगर्भमिदम् अतो वो युष्माकं कुशलं प्रियं नाचरेमहि न कृतवन्तः अधुना तु श्रीमदेन ऐश्वर्यमदेनान्धे अक्षिणी येषां ते वयं पुराकृतमुपकारं न पश्यामः ॥ ६३ ॥

अतो हे मानद ! श्रेयस्कामस्य पुंसो राज्यश्रीर्माभूदिति प्रार्थना कुतः यतो मदान्धदृक् पुमान् सुजनान् साधूनुतापि च बन्धून् पश्यति ॥ ६४ ॥

एवमिति शुकोक्तिः । सौहृदेन शैथिल्यं स्वार्थे ष्यञ् शिथिलं चित्तं यस्य सः तत्कृतां नन्दकृतां मैत्रीं स्मरन्नश्रूणि विलोचनयोर्यस्य सः रुरोद ॥ ६५ ॥

नन्दस्त्विति । सख्युः वसुदेवस्य रामकृष्णयोश्च प्रियकृत् अत एव (लक्षणहेत्वोरिति शत्रा प्रियं कुर्वन्नित्यर्थः) अद्य श्वः इति प्रातः निर्गमे अपराह्णे गम्यताम् इत्यपराह्णे निर्गमे श्वो गम्यताम् इत्येवं यदुभिर्वारितश्च मानित इति पाठान्तरं त्रीन् मासान् अवसत् मासानित्यत्यन्तसंयोगे द्वितीया ॥ ६९ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नन्दस्तु । कामैः श्रीकृष्णस्य गोकुलागमनमयैः तत्र श्रीकृष्णेन स्वागमप्रतिज्ञा तत्रैव नित्यस्थितिमयो अन्यैस्तु गमनागमनमयीति भेदो ज्ञेयः ॥ ६९—७१ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

आदौ तत्स्तोत्रं वक्तुं स्वस्मिन्नन्दकृतसौहृदं स्थापयति—भ्रातरीशकृतः पाश इति । अत एव स्नेहः सुदुस्त्यजः भोगाभिनिवेशिनो ज्ञानिनो देवाः मोक्षसाधनाभिनिविष्टाः योगिनः तेषां स्नेहाभावः सम्भवति इदानीं स्वानुभवादेवं ज्ञायते तेषामपि सुदुस्त्यजमिति अतस्त्वया बन्धुत्वात्स्नेहः क्रियते न त्वस्य प्रतीकारः कर्त्तव्य इति भावः ॥ ६१ ॥

मैत्रीमपि अप्रतीकार्यां निरूपयति—अस्मास्वप्रतिकल्पेयमिति । सत्तमैर्भवद्भिरस्मासु मैत्री या अर्पिता सा अज्ञेषु अप्रतिकल्पा प्रतिकल्परहिता प्रतिकल्पः प्रत्युपकारः अतः अफलाः वाशब्दः अनादरे अफला सफला वा भवतु परं न निवर्त्तते ॥ ६२ ॥

एवं प्रत्युपकाराभावं मैत्रीञ्च स्थापयित्वाऽऽह—प्रागकल्पाच्च कुशलमिति । क्रिया प्रतिकल्पाभावेऽपि स्वशक्त्यनुसारेण प्रत्युपकारः कर्त्तव्यः तस्याप्यकरणे हेतुरुच्यते पूर्वं यदा कंसो न हतः द्वारकाया वा न गतं तदा वयमेवाकल्पाः तत एव हे भ्रातः ! वः कुशलं नाचरामहे सम्बोधनात् कुशलावश्यकत्वं बोधितम् अधुना पुनः प्राप्तराज्याः कल्पा अपि श्रीमदेनैवान्धाः सन्तः पुरःसतोऽपि विद्यमानाम् न पश्यामः धर्मिदर्शनानन्तरं हि तत्र प्रतिकर्त्तव्यसम्भावना ॥ ६३ ॥

तर्हि किं युक्तमित्याकाङ्क्षायां निर्णयमाह—मा राज्यश्रीरभूदिति । यद्यप्युभयत्रापि प्रतिकर्त्तव्यता नास्ति तथाप्यकल्पावस्थैव समीचीना ज्ञानशक्तिक्रियाशक्त्योः ज्ञानशक्तिसहितस्यैव सद्भावत्वात् क्रियाशक्तिस्तु सम्पत्तौ विद्यमानापि ज्ञानशक्त्यभावादप्रयोजिका अत एवमन्तरं वर्त्तत इति पुंसः श्रेयस्कामस्य राज्यश्रीर्माभूत् मानं ददातीति मानदः अनेन त्वं सर्वथा अस्माकं मानमेव प्रयच्छसि को दोषो राज्यस्येति चेत् सुजनानुतबन्धूंश्चेति यथा श्रियाक्तः वा अन्धा दृष्टिर्यस्य गतदृष्टिरित्यर्थः । सत्पुरुषान् बन्धूंश्च न पश्यति ॥ ६४ ॥

एवं स्वदोषख्यापनं नन्दगुणप्रकटीकरणं च कृत्वा स्नेहेन रोदनं कृतवानित्याह—एवमिति । रोदनमुक्तार्थस्य स्थापकम् अन्यथा मुखत एव वदतीत्यपि शङ्का स्यात् सौहृदेन शैथिल्यं यस्य चित्तस्य तादृशं चित्तं यस्य यतोऽयमानकदुन्दुभिः अतिसुबुद्धिः कंसाद्भगवन्तं रक्षितवान् नन्दं स्वगृह-

ततः कामैः पूर्यमाणः सव्रजः सहबान्धवः ।
परार्ध्याभरणक्षौमनानानर्घ्यपरिच्छदैः ॥ ६७ ॥
वसुदेवोग्रसेनाभ्यां कृष्णोद्धवबलादिभिः ।
दत्तमादाय पारिबर्हं यापितो यदुभिर्ययौ ॥ ६८ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नयने कः प्रयास इति भावः । तत्कृतां मैत्रीं भगवत्परिपालन रूपाम् अश्रूणि विलोचनयोर्यस्येति दुःखस्य सहजत्वं निरूपितम् ॥ ६५ ॥

एवं स्नेहानुबन्धं प्राप्य नन्दः सख्युः प्रियकर्त्ता गोविन्दरामयोः प्रेम्णा अद्य गमिष्यामि श्वो गमिष्यामीत्येव वदन् त्रीन् मासान् न्यवात्सीत् प्रत्यहमेव यदुभिर्मानितः मासत्रयं स्वभावत एव स्थितः ततोऽप्यधिक इति वदन् मासत्रयम् ॥ ६६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

बलेन शूराणामपि दुर्भिदं ज्ञानेन योगिनामपि दुस्त्यजमित्यर्थान्तरन्यासेन मत्पुत्रयोः स्नेहपाशेन युवां रात्रिन्दिवं दृढं बद्धावेव भवथ इति भावः ॥ ६१ ॥

रामकृष्णविषयकदृढस्नेहरूपमहाधनवितरणेन सत्तमैर्भवद्भिरस्मासु यत् या मैत्री अर्पिता इयम् अप्रतिकल्पा निरुपमा अफला प्रत्युपकारलिप्साशून्या कदापि न निर्वर्त्तिष्यते च एवार्थे अपि भिन्नमेव अस्मासु कीदृशेषु कृताज्ञेषु कृतमुपकारमजानत्सु तेन वयमसत्तमाः सत्तमान् युष्मान् प्रतीदं वक्तुमपि न त्रपामहे इति भावः ॥ ६२ ॥

स्वेषामकृतज्ञत्वमेवाह–प्राक् अकल्पात् कंसपारतन्त्र्येणासामर्थ्यात् युष्माकं प्रत्युपकारं नाचराम न करवाम कंसवधानन्तरमधुना स्वातन्त्र्येपि श्रीमदेत्यादि ॥ ६३ ॥

मा अभूत् माभूयात् अडागमआर्षः एवं महादैन्यविनयसिन्धौ मज्जयन् स्वयमेव निममज्ज वसुदेव इति भावः ॥ ६४-६५ ॥

नन्दस्त्विति । दुर्भिक्षोपक्रमे वसुदेवस्य य उपक्रमोऽभूत् स नन्दस्य नाभूदित्यर्थः । मत्पुत्रे श्रीकृष्णे तव स्वपुत्रत्वाभिमानं विध्वंसयन्नहमिदानीं खलु स्वपुत्रं गृहीत्वैव व्रजं यास्यामीत्यतिगाम्भीर्यादेव यन्न प्रत्यवोचत् किन्तु तूष्णीमेवातिष्ठत् तेनैव सख्युर्वसुदेवस्य प्रियकृत् अन्यथा त्वप्रियकृदेव सोऽभविष्यदिति भावः । अद्य श्व इति अद्य खलु त्रासमेव श्वः स्वपुत्रं गृहीत्वा व्रजं यास्यामीति प्रतिरात्रि विचारयन्नपि गोविन्दरामयोः प्रेम्णा तदाश्रयविषयकप्रेमानन्देन त्रीनपि मासान् अवसत् ॥ ६६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शूराणां बलेन योगिनां ज्ञानेनापि उपकारेष्वित्यर्थः । अस्मासु सत्तमैर्भवद्भिः अप्रतिकल्पा अनुपमा इयं मैत्री अर्पिता अफलापि प्रत्युपकारशून्यापि कर्हिचिन्न निवर्त्तेत यतः अत ईशा कृतः स्नेहपाश इति गम्यते ॥ ६१–६२ ॥

अस्मृतोपकारत्वमात्मनः द्योतयन् मैत्र्याः अफलत्वं दर्शयति–प्रागिति । प्राक् अकल्पात् कंसजरासन्धादिपारतन्त्र्येण असमर्थत्वात् कुशलं प्रियं नाचराम नाकरवाम अधुना स्वातन्त्र्यकाले श्रीमदेन अन्धान्यक्षीणि येषां ते पुरस्स्थितोपि न पश्यामः द्वितीयार्थे षष्ठी अग्रे सन्तमपि त्वां न पश्यामः त्वत्कृतमुपकारं न स्मराम इति किमु वक्तव्यमित्यर्थः ॥ ६३ ॥

श्रेयस्कामस्य मुक्तिकामस्य राज्यश्रीः माभूत माभूयात् अडागमश्छान्दसः ॥ ६४–६५ ॥

सख्युर्वसुदेवस्य रामकृष्णयोश्च प्रियकृत् अद्यश्व इति प्रातर्निर्गमे अद्यैव पराह्णे गम्यताम् पराह्णे निर्गमे श्वो गम्यतामिति यदुभिः प्रेम्णा यदुभिर्मानितः त्रीन् मासान् अवसदित्यन्वयः ॥ ६६–६७ ॥

---

### भाषा टीका ।

#### वसुदेव उवाच

हे भ्राता ! ईश्वर का किया भया मनुष्यों को जो स्नेह रूपी पाश है उस को बडे२ शूरवीरों और योगियों को भी मै दुस्त्यज मानता हूं ॥ ६१ ॥

किए भए उपकार को नहि जानने वारे हमारे विषयमे अति सज्जन आपने उपकार हित यह मित्र भाव अर्पण किया है सो आप ने प्रत्युपकार रहित इस मित्र को कर दिया हं इसी कारण किसी काल मे भी यह मित्र भाव निवृत्त नहि होसकता ॥ ६२ ॥

हे भ्राता ! पहलें कंस के उपद्रव सें असमर्थ होने ते हमने आप का प्रिय नहि किया, अब अपने आगे विद्यमान भी आप सब हो परंतु श्री मद से नेत्रों मे अन्ध होकर हम सब आप को देख ते भी नहि ॥ ६३ ॥

हे मानद ! कल्याण की कामना वारें पुरुष को राज्य श्री न होई मेरी यह प्रार्थना है क्यों कि उस राज्य श्री से अन्ध दृष्टि वारा पुरुष, अपने हित कारी जनों को अथवा बंधून को नहि देखता ॥ ६४ ॥

श्रीशुक उवाच । इस प्रकार अत्यंत प्रेम सें शिथिल चित्त होने के कारण नेत्रों मे अश्रु पात वारे वसुदेव जी नन्द जी के किए भए मित्र भाव को याद करत रुदन करने लगें ॥ ६५ ॥

अनंतर नन्दजी प्रेमसे वसुदेव जी के और श्री कृष्ण बलदेव जी के प्रिय करने के लिये आज जाइ येगा कल जाइ येगा इस प्रकार करते२ वसुदेव जी आदि से सत्कृत हो कर तीन मास पर्य्यंत वहां हि रहगए ॥ ६६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यापितो महासैन्येन प्रस्थापितः ॥ ६८–७० ॥

नन्दो गोपाश्च गोप्यश्च गोविन्दचरणाम्बुजे ।
मनः क्षिप्तं पुनर्हर्तुमनीशा मथुरां ययुः ॥ ६९ ॥
बन्धुषु प्रतियातेषु वृष्णयः कृष्णदेवताः ।
वीक्ष्य प्रावृषमासन्नां ययुर्द्वारवतीं पुनः ॥ ७० ॥
जनेभ्यः कथयाञ्चक्रुर्यदुदेवमहोत्सवम् ।
यदासीत्तीर्थयात्रायां सुहृत्सन्दर्शनादिकम् ॥ ७१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे
तीर्थयात्रानुवर्णनं नाम
चतुरशीतितमोऽध्यायः ॥ ८४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यदुदेवस्य वसुदेवस्य महोत्सवं यज्ञादिलक्षणं सुहृत्सन्दर्शनादिकञ्चेति ॥ ७१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
चतुरशीतितमोऽध्यायः ॥ ८४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत इतियुग्मकम् । ततः मासत्रायानन्तरं ययौ चलितवान् माथुरदेशं प्रति श्रीनन्द इति शेषः । तैः सह श्रीकृष्णलीलायास्तत्रैव तेषाञ्चाभीष्टत्वात् तस्य तत्रभवनं चावशिष्टशत्रुपक्षक्षपणस्य श्रीकृष्णेनावश्यापेक्षितव्यत्वादिति गम्यते ननु कथम्भूतस्सन् ययौ श्रीवसुदेवोग्रसेनाभ्यां कृष्णोद्धवबलादिभिरन्यैश्च यदुभिः प्रथमतस्तावत्कामैरभिलाषैः पूर्य्यमाणः व्यक्तमनुक्तानामप्यभिलाषाणां स्वयं सङ्कल्पेन दृढमाश्वास्यमान इत्यर्थः । तत्र सामान्यतः सर्वैः सर्वेषां श्रीकृष्णस्य श्रीगोकुले सम्प्रत्यागमनरूपस्य कामस्य पूरणं विशेषतस्तु केनचित् कश्चिच्चित्तविशेषेणसहितस्यापि अत एव कामैरिति बहुत्वं "वृष्णमार्ये"त्यादिना "कृष्णे कमलपत्राक्षे सन्न्यस्ताखिलराधसः" इत्यनेन च तेषां तदेककामत्वस्यान्यकामनात्यागस्य च श्रवणात् किञ्च वसुदेवोग्रसेनाभ्यामिति प्रथमोपादानं कुलश्रेष्ठत्वराजत्वाभ्यां वैशिष्ट्यात् ताभ्यां कामपूरणञ्चैव एतावन्तं कालं युद्धाद्युपद्रवेणागमनयोर्न वृत्तं सम्प्रति भविष्यत्येवेति श्रीबलदेवसहितेन श्रीकृष्णेनैवं 'ज्ञातीन् वो द्रष्टुमेष्यामः' इति कंसवधानन्तरं यन्निवेदितं तस्य समयो ऽयमागतः ततः शीघ्रमेव केनापि मिषेणागत्य सदा तत्रैव निवत्स्याम इति श्रीमदुद्धवेन चैतदनुमोदनं ज्ञेयम् अतस्तेन सह मन्त्रयित्वैव ताभ्यां तदङ्गीकृतमिति च अत एव मध्ये तस्य पाठः किन्तु तत्राप्येतौ सदा विहरिष्यतो द्वारकायामपीति पारमैश्वर्य्यज्ञानात्तन्मनस्समाधानम् एवं यदुभिश्च यथायथं ज्ञेयम् अत्र श्रीगोपीषु श्रीकृष्णस्य तद्वैशिष्ट्यमप्यनुसन्धेयम् अत्र च मर्य्यादा स्वयमुक्ता "अपि स्मरथ नः सख्यः"इत्यादौ "शत्रुपक्षक्षपणचेतसः" इत्यनेन दन्तवक्रवधपर्य्यन्तैव ज्ञेया सात्र दर्शिता किञ्च श्रीवसुदेवादीनामधुना श्रीकृष्णस्यात्रत्यदृढगार्हस्थ्यविस्तारातिशयममतादर्शनेन जातविश्वासत्वात्तथाऽङ्गीकारो ज्ञेयः तथापराद्ध्यांभरणादिभिश्च पूर्य्यमाणः आद्रियमाण इव पारिबर्हं पराद्ध्यांभरणादिकम् आदाय तत्स्नेहेन स्वीकृत्य यापितः श्रीवसुदेवादिभिरनुव्रजित इति ॥ ६७—६८ ॥

क्षिप्तं न्यस्तं हर्तुमाक्रष्टुमनीशा इति मनस्तास्मिन्नेवाक्षिप्तत् केवलं ते देहेन ययुरित्यर्थः । इति केवलं झटिति निजागमनप्रतिज्ञायुक्तश्रीभगवदाग्रहेणैवेति बोधितम् अत एव माथुरान् देशान् ययुः मथुरामिति पाठे ऽपि स एवार्थः पुनरिति तदनन्तरं पुनः प्राप्तिपर्य्यन्तं तथैवातिष्ठन्नित्यर्थः । चकाराभ्यां सर्वेषामेव तादृशभावे प्राधान्यं बोधयति ॥ ६९ ॥

बन्धुषु श्रीनन्दादिषु प्रति पुनः पुनर्निवृत्य दृढं यातेषु सत्स्विति तेषां स्मारके तत्स्थाने विरहोद्रेकेण क्षणमपि स्थातुमशक्तेरिति भावः । तथा प्रतियातेष्वेवेति अन्यथा तत्रैवास्थास्यन्नितिच तत्र हेतुः कृष्णो देवता येषां ते तद्ग्रहणहारैकानुसारादित्यर्थः । ययुर्द्वारवतीम्पुनरित्येव पाठः वृष्णय इति पूर्वेणान्वयः सुहृदः श्रीव्रजवास्याद्याः ॥ ७० ॥

इतःपरं पूर्वोक्तानुसारेण साल्ववधानन्तरदन्तवक्रवधप्रसङ्गे श्रीभगवतः स्वयमेव श्रीगोकुलागमनादिकं स्मर्त्तव्यं जनेभ्यः श्रीद्वारकास्थितेभ्यः अन्येभ्योपि सर्वेभ्यः वृष्णय एव किं वा सर्वजनेभ्यः सर्वे जनाः कथयाञ्चक्रुः अकथयन् आदिशब्दात् नृपमुनिगणवर्णितं यदूनां श्रीभगवतश्च माहात्म्यं श्रीमहिषीणां तस्मिन्नद्भुतभक्तिभरं तथा श्रीनन्दादिषु तस्य स्नेहविशेषं तेषां तेन तत्समानताश्वासनादिकञ्च—

तथाच—

यो गोष्ठं विरहय्य कार्य्यवशतः पुर्य्यां चिराय स्थितोऽप्यस्तूद्भवरौहिणेयमुखतः शश्वत्पुराऽऽश्वासयत् ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आगत्य स्वयमेव यः कुरुभुवि प्रस्थाप्य भूयो द्रुत-
त्यागच्छत्करुणः स एव शरणं श्रीकृष्णदेवो मम ॥७१॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां
चतुरशीतितमोऽध्यायः ॥ ८४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
चतुरशीतितमोऽध्यायः ॥ ८४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत इति । सव्रजः गोपैः सहितः सबान्धवश्च परार्घ्यैः श्रेष्ठैराभरणैः क्षौमैर्दुकूलैर्नानाविधैरनर्घ्यैः परिच्छदैः भोगोपकरणैरित्येवम्विधैः कामैः पूर्यमाणः दत्तान् पारिबर्हानादाय यदुभिर्यापितो महता सैन्येन प्रस्थापितो ययौ ॥ ६७—६८ ॥

नन्दो गोप्यश्चेति । गोविन्दस्य चरणाम्बुजे क्षिप्तं निहितं चित्तं पुनर्हर्तुमसमर्थाः सन्तः ययुः ॥ ६९ ॥

बन्धुष्विति । बन्धुषु नन्दादिषु प्रतियातेषु प्रस्थितवत्सु कृष्ण एव देवता येषां ते वृष्णयः प्रावृषं वर्षर्तुमासन्नां सन्निहितां वीक्ष्य ज्ञात्वा ॥ ७० ॥

जनेभ्य इति । वसुदेवस्य महोत्सवं यज्ञादिलक्षणं यच्च सुहृत्सन्दर्शनादिकं तत्सर्वं जनेभ्यो द्वारकास्थेभ्यः कथयामासुः ॥ ७१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
चतुरशीतितमोऽध्यायः ॥ ८४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
चतुरशीतितमोऽध्यायः ॥ ८४ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

नन्दो गोप्यश्चेत्यादि । नन्दो गोपाश्च तत्र गोविन्दचरणाम्बुजं क्षिप्तं मनः पुनर्हर्तुम् अनीशाः सन्तो माथुरान् ययुः नन्दः कथं तत्र न स्थित इत्याह—अगोप्यः न गोपयितुमर्हः स्वतः सिद्धत्वात् व्रजराजत्वाच्च गोपीजनस्तु तमेव प्राप तमध्यगच्छिति पूर्वोक्तेः सतु गोपीजनो द्युनिरूप इति पूर्ववत् ॥ ६९-७१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
चतुरशीतितमोऽध्यायः ॥ ८४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं मघाद्याषाढपर्यन्तं स्थित्वा ततः कामैर्नानाभिलषितैर्भगवता पूर्यमाणः सव्रजः गोपालसहितोबान्धवसहितश्च काम्यपदार्थान् गणयति परार्घ्यैति अमूल्यान्याभरणादीनि क्षौमाणि पट्टवस्त्राणि अनर्घ्यपरिच्छदाः दिव्यगृहोपकरणानि एतानि प्रत्येकं बहुभिर्दीयन्त इति तान् गणयति वसुदेवेति पञ्च मुख्यतया गणिताः उग्रसेनो राजा वसुदेववत् सोपि भगवता मोचित इति उद्धवोपि बहुकालं तद्गृहे स्थित इति बलो बलभद्रः आदिशब्देन देवक्यादयोपि गृह्यन्ते एतैः दत्तं पारिबर्हमादाय दूरे समागत्य यापितस्सन् ययौ ततो निर्गतः नन्दयं सर्वं गृहीत्वैव गच्छति न किञ्चित्स्वयं दत्तवान् इत्याशङ्क्याह—नन्दगोपाश्चेति नन्दगोपाश्चैका कोटिः गोप्यस्त्वपराः उभयेऽपि गोविन्दचरणाम्बुजे समुच्चयार्थे क्षिप्तं मनः अतिपुष्टत्वात् पुनर्हर्तुमशक्ताः माथुरानेव देशान् ययुः मनोनिमित्तं हि सर्वं दीयते नन्दादीनान्तु मनो भगवत्येव अतो नन्दादीनामेव बहुद्रव्यमत्र स्थितमित्यर्थः ॥ ६७-६९ ॥

ततो यज्जातं तदाह—बन्धुषु प्रतियातेष्विति । सर्वेष्वेव स्वस्वदेशं गतेषु स्वयमेकाकिनोपि बहुकालं स्थिताः तत्र निश्शङ्कस्थितौ हेतुः कृष्णदेवता इति कृष्ण एव अलौकिकप्रकारेण रक्षको येषां तर्हि कथं गता इत्याकाङ्क्षायामाह—वीक्ष्य प्रावृषमासन्नामिति दिनचतुष्टयदशकव्यवहिताम् ॥ ७० ॥

ततो ये नागतास्तेषामयं महोत्सवो न जात इति शङ्कां वारयितुं वृत्तान्तकथनमाह—जनेभ्यः कथयाञ्चक्रुरिति । वसुदेवस्य यज्ञमहोत्सवं यच्च सुहृत्सन्दर्शनादिकं तदप्येकं सात्त्विकानां निरुद्धानां परमोत्सवलक्षणं फलं दत्तवानिति ॥७१॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धविवरणे
पञ्चत्रिंशाध्यायविवरणम् ॥ ३५ ॥ ८४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ततो मासत्रयानन्तरं भोः प्राणपदार्द्धनिर्मन्थितश्रीसुखधर्मविन्दो ! कृष्ण ! साम्प्रतं चल व्रजमतःपरं समयं गमयितुं न शक्नोमि भोः सखे ! वसुदेव ! कृष्णं व्रजे प्रस्थापय भो राजन्नुग्रसेन ! त्वमप्येवमेव मत्प्रियसखमिममाज्ञापय नोचेदत्र पुण्यक्षेत्रे रामह्रदे वयमधुनैव म्रियामहे यूयं स्वचक्षुभिः पश्यत वयं हि सूर्योपरागे पुण्यजिघृक्षया नायाताः कृष्णमप्राप्य मर्तुं कृष्णं प्राप्य जीवितुमिति व्रजस्थानामस्माकं सर्वेषामेव दृढो निश्चय इत्युक्तवति श्रीव्रजराजे वसुदेवादिभिः कामैस्तस्य वाञ्छितैरर्थैः

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

पराद्ध्याभरणादिभिश्च स पूर्य्यमाणो ययावित्यन्वयः। तत्र वसुदेवेन देशकालपात्राभिज्ञेन स्वाप्तबन्धुभिर्विचार्य्य श्रीनन्दस्य कामपूरणं यथा भोः सखे! व्रजराज! सत्यं ब्रूषे भवादृशानां बन्धूनां जिघांसैव किं मे सम्मता तस्मात् सर्वथैव कृष्णं व्रजं प्रस्थापयिष्यामि किन्तु साम्प्रतमयमस्मान् बन्धुजातिसुहृदश्च बहूंश्च स्त्रीजनान् द्वारकां प्रवेशयतु ततः परदिन एव शुभक्षणे निर्विरोधमेव व्रजं प्रति यात्रां करोत्वित्यत्र परस्सहस्रान् शपथान् करोमि वयं खलु कृष्णेन सहैवागताः विना कृष्णं कथं गृहं गन्तुं प्रभवामः लोकाः किं वदिष्यन्ति त्वं सकलार्थपण्डितो ऽसि क्षमस्व ममैतद्विज्ञापनापराधमेव मामाज्ञापयति उग्रसेनेन यथा भोः व्रजेश्वर! अत्रार्थे अहमेव प्रतिभूरभूवं सशपथं ब्रवीमि बलादेव कृष्णमहं व्रजे प्रस्थापयिष्यामीति रामोद्धवसहितेन रहःप्रदेशे कृष्णेन यथा भोस्तात! यद्यहमद्य सन्त्यज्यैव खल्वेतान् व्रजं यामि तर्ह्येतेऽपि मद्विरहेण मर्त्तुमुद्यता भविष्यन्ति केश्यरिष्टादिभ्योपि महाबलिनः परस्सहस्राः शत्रवः एवैतान् पार्थिवान् निहन्युः अवश्यं भावि वृत्तमपि सर्वज्ञत्वादहं जानामि तदपि शृणु ब्रवीमि इतो द्वारकां गत्वैव लब्धनिमन्त्रणो युधिष्ठिरराजसूयार्थं यास्यामि तत्र चैद्यं हत्वा पुनरागत्य शाल्वमिहत्य दन्तवक्रवधार्थं मथुरादक्षिणद्वारप्रदेशमासाद्य तत्रैव तं व्यापाद्य व्रजं प्रविश्य बन्धून् सन्दृश्य हृष्यन्मनाः युष्मदुत्सङ्ग एव रङ्गेण खेलयन्नेव जन्मेदं गमयिष्यामि एतन्मम ललाटपत्रे विधात्रां लिखितमेतावद्दिनपर्य्यन्तं युष्मल्ललाटेष्वपि मद्विरहदुःखं लिखितमेतद्द्वयं नैवान्यथा भवितुमर्हत्यतएव हठं त्यक्त्वा साम्प्रतं व्रजं प्रति प्रतिष्ठस्व एतन्मध्ये च भवन्तौ पितरौ मम प्रियसुहृदश्च मद्विरहदुःखलिखितमेतद्द्वयं नैवान्यथा भवितुमर्हत्येववार्त्ता यदा यदा मां द्रष्टुं किमपि क्रीडयितुं भोजयितुमीहिष्यन्ते तदा भवद्भिश्चक्षूंषि मुद्रयितव्यानि यथाहमाविर्भूय सर्वानेव द्रवधून् वपुष्पीकृत्य सर्वानेव मनोरथान् सम्पादयिष्यामीति प्रतिजाने. किलाहमत्रार्थे मत्प्रियसखा हृषीकाटवीदावसन्तप्तचरगात्राः प्रमाणीकर्त्तव्या इति ततश्च व्रजराजः स्वपुत्रसुखतात्पर्य्यपर्य्यालोचकचेताः भद्रं भद्रमिति सर्वान् वसुदेवादीनुक्त्वा प्रबोधिता विरतरुदद्बन्धुताकस्तैर्दत्तं पारिबर्हमादाय यदुभिस्तत्सङ्गप्रस्थापितया महासेनया यापितो ययौ अत्र कामैरिति पूर्य्यमाण इति पदद्वयान्यथानुपपत्तेरेव खल्वेतावद्व्याख्यानं प्रपञ्चितं कृष्णो वसुदेवदेवक्योरेव पुत्र इति ब्रह्मणापि सपुत्रपौत्रेणापि सशपथमुक्तेऽपि प्रतीतिलेशमप्यकुर्वतोः व्रजेश्वरयोः स्वाङ्गुलिस्पृष्टमात्रकृष्णचिबुकलब्धमहासुखसम्पत्तिस्मृतिमात्रन्यक्कृतप्राकृताप्राकृतसर्वसम्पदोस्तयोः किं वसुदेवादिदत्तैः पराद्ध्याभरणक्षौमनानानर्घ्यपरिच्छदैः कामपूरणं सम्भवेत् यदि वा कामपूरणं भवेदेवेति प्रौढिस्तत्र सव्रजः सहबान्धवः इति विशेषणद्वयोपन्यासाच्च केवलं सस्त्रीकस्य नन्दस्यैव अपितु गोपीनां गोपानां सर्वेषां कृष्णप्रियसखानाञ्च ततश्च कृष्णस्य पिता नन्दः प्रेयस्यो गोप्यश्च सखायो गोपाश्च प्राप्तैर्बहुमूल्याभरणवस्त्ररत्नादिभिः पूर्णमनोरथीभूय व्रजं ययुरित्येवं व्याख्येयं तदा व्रजस्थानां सर्वेषां प्रेमवस्त्वमपगतमेव भक्तिरसामृतसिन्धुधृतप्रेमलक्षणे अनन्यममतेत्युक्तेरित्यवधेयम् ॥ ६७—७१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
चतुर्युक्ताशीतितमो दशमेऽजनि सङ्गतः ॥ ८४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यापितः प्रस्थापितः ॥ ६८—७० ॥
यदेव महोत्सवं वसुदेवयज्ञोत्सवम् ॥ ७१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
चतुरशीतितमाध्यायार्थप्रकाशः ॥ ८४ ॥

---

भाषा टीका।

अनन्तर अमोल आभूषण नानाप्रकार के अमोल वस्तुओं से व्रज सहित बन्धुजन नन्द जी की पूर्त्तिकर ॥ ६७ ॥

वसुदेव उग्रसेन कृष्ण बलदेवजी उद्धवजी आदि ने दीए भए दाइजे को लेकर वसुदेव जी आदि ने नन्दजी को विदा किया ॥ ६८ ॥

अनन्तर श्रीकृष्ण के चरणारविन्द में लगाए भए मनको निवृत्त करनेकों असमर्थ होकर नन्दजी गोप लोग गोपीजन मथुरा को चले गए ॥ ६९ ॥

सब बन्धुओं के जाने पर श्रीकृष्ण हि जिनके इष्ट देव हैं एतादृश यादव लोग समीप में आई भई वर्षाऋतु को देख कर फिर द्वारका को चले गए ॥ ७० ॥

द्वारका मे जायकर यादव लोग तीर्थयात्रा में वसुदेव जी का जो यज्ञ महोत्सव भया और सुहृद सायियों का जो दर्शनादिक भया उस को द्वारका वासिजनों के अर्थ वर्णन करते भए ॥ ७१ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धमें चौरासीके अध्यायकी
भाषाटीका समाप्ता ॥ ८४ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे चतुरशीतितमोऽध्यायः ॥ ८४ ॥

## पञ्चाशीतितमोऽध्यायः ।

श्रीबादरायणिरुवाच ।

अथैकदाऽऽत्मजौ प्राप्तौ कृतपादाभिवन्दनौ ।
वसुदेवोऽभिनन्द्याह प्रीत्या सङ्कर्षणाच्युतौ ॥ १ ॥
मुनीनां स वचः श्रुत्वा पुत्रयोर्धामसूचकम् ।
तद्वीर्यैर्जातविस्रम्भः परिभाष्याभ्यभाषत ॥ २ ॥
कृष्ण कृष्ण महायोगिन् सङ्कर्षण सनातन ।
जाने वामस्य यत्साक्षात् प्रधानपुरुषौ परौ ॥ ३ ॥
यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा ।
स्यादिदं भगवान् साक्षात् प्रधानपुरुषेश्वरः ॥४॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

पञ्चाशीतितमे रामकृष्णौ सम्प्रार्थितौ सुतौ ।
पित्रे ज्ञानमथो मात्रे मृतान् पुत्रानयच्छताम् ॥
नन्दयित्वा कुरुक्षेत्रयात्रायां सुहृदो बहून् ।
तत्त्वज्ञानं ततः पित्रोरादिशन्मृतसूनुभिः ॥

॥ १ ॥

धाम प्रभावस्तत्सूचकम् जातविस्रम्भः उत्पन्नविश्वासः परिभाष्य सम्बोध्य ॥ २ ॥

अस्य विश्वस्य यत्साक्षात्स्वरूपभूतं कारणं प्रधानपुरुषौ नाम परौ तयोरपि कारणत्वेनेश्वरौ च साक्षाद्वां युवामिति जाने ॥ ३ ॥

नन्विदं विश्वमनेकैः कारकैर्जायमानं कुतः प्रधानपुरुषात्मकं कुतस्तरामावयोस्तत्कारणत्वेनेश्वरत्वं तत्राऽऽह- यत्रेति । यत्राधिकरणे येन कर्त्रा करणेन च यतः अपादानात् यस्य सम्बन्धेन षष्ठ्यर्थस्याकारकत्वेऽपि निमित्ततोक्ता यस्मै सम्प्रदानाय यद्यदिति प्रयोज्यकर्तृकर्मकारके दर्शिते ननु तयोर्नास्ति भेदः यथोक्तम्—

"करोति क्रियमाणेन न कश्चित्कर्मणा विना ।
भवत्यर्थस्य कर्ता च करोतेः कर्म जायते" ॥

तथा—

करोत्यर्थस्य यः कर्ता भवितुः स प्रयोजकः ।
भविता तमपेक्ष्याथ प्रयोज्यत्वं प्रपद्यते" ॥

इति च । सत्यम् तथाप्यवस्थाभेदेन भेदो विवक्षितः दृश्यते चावस्थाभेदः तण्डुलानोदनं पचति मृदं घटं करोतीति तदेवं सप्तविभक्त्यर्था दर्शिताः यथेति यदेति च क्रियाविशेषणभूतानामन्येषामप्यव्ययानामर्थाः स्यादिति क्रियापदार्थोपलक्षणम् एवं सर्वं प्रपञ्चमनूद्य तत्कारणस्य भगवद्रूपतां विधत्ते इदं साक्षादिति प्रधानं भोग्यं पुरुषो भोक्ता तयोरीश्वरो भगवांस्त्वमेव साक्षादिति तयोरैक्यमभिप्रेत्यैकवचनम् ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवमैश्वर्यज्ञानपितृभावमिश्रप्रेम्णा श्रीवसुदेवेन मुनिवाक्योद्दीपितैश्वर्यज्ञानेन ताः सह श्रीभगवतस्तज्ज्ञानगोष्ठीमयो यः कादाचित्को लीलाविशेषस्तमथ प्रस्तौति—अथेति । लब्धमुन्युपदेशविशेषकुरुक्षेत्रयात्रान्तरम् एकदा कश्चित्प्रातर्नित्यवन्दनसमये एत आत्मजौ ताभ्यां तेन च तथाप्यपरित्याज्यतद्भावो अतः कृतेति च अत एवाभिनन्द्य आशीर्भिः प्रीणयित्वाऽऽह तत्र प्रीत्येति साक्षात्परमेश्वरयोरप्यनयोर्मत्पुत्रत्वेनोदय इत्यन्तःसन्तोषेणेत्यर्थः । अत एवाग्रे तत्खण्डनभङ्गिरपि तत्सन्तोषगर्भैव ज्ञेया सङ्कर्षणाच्युताविति तादृशैश्वर्ये तादृशप्रीतिविधायित्वेनाविच्छिन्नौ ॥ १ ॥

तदानीं स्वैश्वर्यज्ञानप्राबल्ये सूचितमेव कारणं व्यञ्जयन् पुनरुक्तपोषन्यायेनाह—मुनीनामिति । 'स' इति "विदितोऽपि भवान् साक्षात्' इत्यादौ पूर्वत एव तादृशज्ञानः मुहुश्च तद्वीर्यैर्जातविस्रम्भः सम्प्रति च मुनीनां वचस्तादृशं श्रुत्वा परिभाष्य कृष्णेत्यादिना सम्बोध्य ॥ २ ॥

तथैवाह—कृष्ण । हे स्वयं भगवन् ! वीप्सा तद्दार्ढ्यार्थ अतो हे महायोगिन् ! सर्वव्यापक ! योगमायाप्रभावनित्याश्रय ! तथा

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

हे सङ्कर्षण ! द्वितीयनिजव्यूहत्वाच्छ्रीकृष्णेन सङ्कृष्यते छायेवाप्रकट्यां प्रकटायामपि लीलायां निजसहचरः क्रियते यः हे तथाभूत ! अत एव हे सनातन ! तथैव नित्यसिद्ध ! वां युवां जाने निश्चित्य जानामि कीदृशं यथा स्यात्तथा जानीषे तत्राह यत् युवामस्य विश्वस्य यथाक्रमं प्रधानपुरुषौ स्थः तत्र प्रधानं' सर्वतः श्रेष्ठं प्रकृत्युपाध्यतीतं श्रीभगवद्रूपं 'पुरुषश्च प्रकृतीक्षणकर्त्ता तदंशः यथोक्तं तृतीये "भगवानेक आसेदमग्र आत्मनां विभुः" इत्युपक्रम्य—

"कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः ।
पुरुषेणात्मभूतेन वीर्य्यमाधत्त वीर्य्यवान्" ॥

तथा तत्रापि साक्षात्परौ सर्वमूलस्वरूपश्रीकृष्णादिरूपत्वेन स्वयं भगवदादिस्वरूपौ अभ्यस्तैः तत्र साक्षादित्यस्योभयत्र योजनमर्थवशात् ॥ ३ ॥

सर्वमूलस्वरूपत्वमेव दर्शयन् सङ्कर्षणस्यापि श्रीकृष्णेऽन्तर्भावमभ्युपगच्छंस्तमेव स्तौति त्रिभिः—यत्रेति । इदं स्वरूपाख्यतटस्थाख्यबहिरङ्गाख्यशक्तिमयं वैकुण्ठजीवजगदाख्यं वैभवं यत्र स्याद्येन स्यादित्यादि योजयित्वा स भगवान् श्रीकृष्णलक्षणस्त्वमेव साक्षात् स्वयमनन्याश्रयितया पूर्वोक्तप्रधानपुरुषयोरपि ईश्वरो मूलस्वरूपत्वादाश्रय इति योज्यं यत्रेत्यादिभिः स्वरूपसिद्धाधारशक्त्याद्यशेषशक्तिपरमाश्रयत्वव्यक्तेरिति भावः । तत्र यस्येति इदन्तानिर्दिष्टवस्तुनैव सम्बन्धो विवक्षितः तत्सम्बन्धं विना तस्य खपुष्पादितुल्यत्वं स्यादिति निमित्तत्वञ्च क्रियानिमित्तत्वाविवक्षया कारकत्वाभावश्च यस्मा इति तल्लीलोपयोगित्वात् यद्यदित्युपादानोपादेयशक्त्योस्तदात्मकत्वात्तदभेदेन निर्देशः यथा यदेति प्रकारकाशक्त्योरपि येनैव प्रकाररूपेण यस्मिन्नेव कालरूप इति, अभ्यस्तैः । तत्र कारिकार्थः कर्मैव किं तत्राह भवतीति भवतेरर्थस्य कर्त्ता यो मृदादिः स एव करोतेः कर्म जायते मृदेव घटो जायते मृदेव घटो भवति तं भावयतीति णिजन्तभवतेरेकपर्य्यायेण करोत्यर्थेन तद्व्याप्तेः एवं यस्य कर्मत्वं साधितं तस्यैव प्रयोज्यत्वं साधयति तथेति भावितुर्मृद्घटादेः तथापीति पूर्वावस्थाया मृदादेः प्रयोज्यत्वमुत्तरावस्थायाः घटादेः कर्मत्वमित्यर्थः ॥ ४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—२ ॥

अस्य प्रधानपुरुषौ अध्यक्षपुरुषौ ॥ ३ ॥

यत्र इति सप्तविभक्त्यर्थाः यथा यदा प्रकारः कालश्च वमित्यर्थः ॥ ४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ 'कदाचिद्वसुदेवदेवक्यावेदितयाथात्म्यस्य भगवतः लीलामज्ञोदात्मकं चेष्टितमनुवर्णयति—अथेत्यादि पञ्चाशीतितमेन । कृतं पादाभिवन्दनं याभ्यां तौ रामकृष्णावभिनन्द्य प्राह ॥१॥

किञ्च, मुनीनामिति । स वसुदेवः पुत्रयोः प्रभावसूचकं मुनीनां वचः 'वसुदेवभवान्नूनं भक्त्या परमया' इत्याद्युक्तं वचःस्मृत्वा तथा तयोः रामकृष्णयोर्वीर्यैर्जातो विस्रम्भो जगदीश्वरत्वविषयाविश्वासो यस्य सः परिभाष्य सम्बोध्य अभाषत ॥ २ ॥

तदेवाह—कृष्णेति । प्राकृतावावां किमित्येवं सम्बोधयसि इत्यत आह—जाने इति । वामिति "युष्मदस्मदोः षष्ठी चतुर्थी द्वितीयास्थयोर्वां नौ" इति (८-१-२०) इति वामादेशे सति रूपं यद्यस्मादस्य जगतः साक्षात्प्रधानपुरुषौ कारणभूतौ प्रकृतिपुरुषौ परौ ताभ्यां विलक्षणौ च वां युवां जाने कार्यावस्थचिदचिदात्मकस्यास्य जगतः कारणावस्थौ प्रधानपुरुषौ प्रकृतिपुरुषशरीरकौ अत एव तदात्मभूतौ तद्विलक्षणौ पुरुषौ जाने इत्यर्थः ॥ ३ ॥

एवं जगतस्तत्कार्यत्वं प्रतिज्ञातं ननु जगत्कार्य्यं चेत्कारकषट्कसाध्यं कस्यचित्सम्बन्धि केनचित्प्रकारेण युक्तं कालसहचरितं चेति कथं मदेककार्यमित्यत आह—यत्रेति । कारकषट्कसम्बन्धिप्रकारकालानां त्वच्छरीरत्वेन त्वदात्मकत्वात् कृत्स्नं जगत्त्वत्कार्यमेवेत्यभिप्रायः यत्राधिकरणे येन कर्त्रा यतः उपादानात् यस्य सम्बन्धिनः यस्मै सम्प्रदानाय यत्प्रयोजकं कर्तृ यदा यस्मिन् काले यथा यः प्रकारः एवं कारकषट्कादीनां निर्देशः यथा स्यादित्येनादिदं विश्वमधिकरणादिकं सर्वं साक्षात् प्रधानपुरुषयोः प्रकृतिपुरुषयोरीश्वरो भगवांस्त्वमेवेति सम्बन्धः स्यादित्यस्य यत्र स्यात् येन स्यादित्येवं प्रत्येकं सम्बन्धः । वक्ष्यमाणकान्त्यादिसामानाधिकरण्योपयुक्तत्वेनैतत्प्रपञ्चयति हे अधोक्षज ! आत्मन् आत्मनि आत्मना सृष्टम् अनेनाधिकरणान्तरकर्त्रन्तरव्युदासः नानाविधं देवनरपशुपादप—भिन्नमेतत्जगदात्मना स्वशरीरभूतेन जीवेनानुप्रविश्य रक्षणोपयुक्तमनुप्रवेशं कृत्वा प्राणः प्राणशरीरको जीवस्तच्छरीरकश्चैवमप्यजः प्राणजीवगतदोषास्पृष्टो बिभर्षि प्राणशरीरकत्वं जीवशरीरकत्वं च श्रूयते "मनोमयः प्राणशरीरनेता" "यस्यात्मा शरीरम्" इति ॥ ४—५ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १--११ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥१---५९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं निरोधः सर्वेषां भगवत्कृत ईरितः ।
स किं साक्षात्सर्वयुक्त्या भगवानन्यथापि वा ॥
अन्यथाचेत्कृतोऽप्येष निरोधो निष्फलो भवेत् ।
तस्मात् कृष्णस्य सर्वोक्त्या भगवत्त्वं तु साध्यते ॥
अतोऽग्रे भगवान् व्यासः षडध्यायीं चकार ह ।
ऐश्वर्यादिप्रसिद्ध्यर्थं सज्ञातिक्रियमेव हि ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्रादौ भगवद्भावसिद्ध्यर्थं युक्तिपूर्वकम् ।
ऐश्वर्यादीन् षडर्थान् हि षडध्याय्यां निरूप्यते ।
षट्त्रिंशे तु तथाऽध्याये कृष्णस्यैश्वर्यलक्षणः ॥
अलौकिको लौकिकश्च क्रियाज्ञानविभेदतः ।
निरूप्यते यतः पित्रोरैश्वर्यं ह्यद्भुतं भवेत् ॥
अनुभावात्पुरैश्वर्यं तयोर्हृदयसंहितम् ।
येन स्तुतिः कृता ताभ्यां कृष्णवाक्यात्तु निर्णयः ॥
तीर्थयज्ञसवृत्त्या हि शुद्धान्तःकरणो भवेत् ।
ततः कृष्णगुणज्ञाने तस्येच्छाऽभूद्वितीर्यते ॥
तथैव देवकी देवी ज्ञात्वा माहात्म्यमुत्तमम् ।
ऐश्वर्यस्य परीक्षार्थं पुत्राहृतिमुवाच ह ॥

एवमेतावद्भिरध्यायैस्त्रिविधानां निरोधो निरूपितः अथ भगवतः षड्गुणाः षड्भिरध्यायैर्निरूप्यन्ते क्रमेणैव ऐश्वर्यं लोकवेदातिशायि स ईश्वरः यः अलौकिकं करोति यो वा वेदस्याप्यशक्यं करोति सोऽत्र निरूप्यते पित्रे पुत्रत्वं स्थापयित्वैव ज्ञानोपदेशं यत्करोति यच्चाप्यखण्डं तथा बाल्ये मृतानां कालेन परमाणुसात्कृतानां पुनः कालमुल्लङ्घ्य यथास्थानं प्रापयित्वा तत्समानयनं ततोपि स्वपदप्रापणमपि एवं वेदकालोल्लङ्घनं न पुरुषोत्तमादन्यस्य शक्यं फलप्रकरणस्य सन्निधान एव गतत्वात् पित्रोरभिमतञ्च करोति अध्यायसङ्गतिः कथायाः पौर्वापर्यं नाभिलषितमिति भिन्नप्रक्रमेणारभते अथेति एकदा प्रसन्नसमये स्वयमेवात्मजौ प्राप्तौ लालनसमये ततः कृतपादाभिवन्दनौ जातौ ततो वसुदेवोपि तत्कृतमभिनन्द्य लौकिकप्रीतियुक्त एव ज्ञानार्थमुवाच सङ्कर्षणमच्युतञ्च सर्वमेतत् ज्ञाने पूर्वाङ्गं श्रुतिविरुद्धं स्वयं गुरोर्गृहे गत्वा नमस्कारानन्तरं गुरुणाभिनन्दितः ॥ १ ॥

एकं स्तौनीति मर्यादा तत्रापि पूर्वं तत्कामनया तदर्थं न प्रवृत्तः किन्तु प्रासङ्गिकस्मरणेन तथा कृतवानित्याह—मुनीनां तद्वचः स्मृत्वेति । तस्यानुभूतिः कालेनेत्यादि मुनिवाक्यं तस्य चाकस्मात् स्मरणं तच्च पुत्रयोर्धाम तेजः स्वरूपं वा सूचयति केवलवाक्यं स्मृतं वा चेत् ज्ञानं वा न जनयेत् तत्रापि न काचिच्चिन्ता किञ्च सम्वादात्तस्य प्रामाण्यमवधृतमित्याह—तद्वीर्यैर्जातविश्रम्भ इति । गोवर्द्धनोद्धरणादीनि वीर्याणि तैर्जातो विश्वासः ऋषिवाक्ये यस्य ततः हे कृष्ण ! हे रामेत्युक्त्वा अभ्यभाषत स्तुतिं कृतवानित्यर्थः ॥ २ ॥

स्तोत्रं षड्भिः ऽष्टादशभिः सर्वविद्यानिरूपकः ।
शरणागतिपर्यन्तमुभयोरात्मनस्तथा ।
स्वरूपमाह सर्वासां विद्यानामभिवाञ्छितम् ॥

आदौ जगत्कारणत्वमाह—कृष्णकृष्णेति । आदरे वीप्सा महायोगिभिरपि महानपि ज्ञातुमशक्य इत्यत्र हेतुरुक्तः सङ्कर्षणस्य नाममात्रेण सम्बोधनमुक्त्वा तदर्थापरिज्ञानात् तत्स्वरूपमाह—सनातनेति । अनेन नित्यार्थवाचकत्वमेव तस्यापि वक्तव्यमिति निरूपितं सम्यक् कर्षणात्मकत्वं प्रकृतेरिति तं प्रकृतिदेवतां मन्यते अत आह जाने वामिति अस्य जगतः साक्षात् सम्पूर्णस्य कार्यकारणाद्भेदोपचारेण तथात्वं वारयति उभयोः प्रधानपुरुषत्वम् उपचाराद्ङ्गीकारत्वं वारयति पराविति अक्षरादुत्पन्नौ मूलभूतावित्यर्थः ॥ ३ ॥

जगत्कारणत्वमुक्त्वा जगद्रूपतामाह—यत्रेति । लोके षट्कारणानां प्रकारसहितसर्वविभक्तीनां यावान् वाच्यार्थः हि सर्वोपि भगवानेव तत्कारणं प्रधानपुरुषौ च तस्यापि कारणमीश्वरः कालः तयोरपि नियन्ता पुरुषोत्तम एवेति कृष्ण एवोक्तः उभयोरेकत्वेन मूलमेव सर्वं भवतीति च एतादृशो भगवांस्त्वमेवेत्यर्थः ॥ ४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पञ्चाशीतितमे पित्रोर्हरेश्च ज्ञानगीस्तुतिः ।
मातुः पुत्रानानयन् स बलिना सबलः स्तुतः ॥
॥ १-२ ॥

अस्य विश्वस्य कारणीभूतौ यत् यौ प्रधानपुरुषौ परौ तयोरपि श्रेष्ठौ परमेश्वरौ वाम् अहं जाने यद्वा प्रधानीभूतौ परमेश्वरौ पुरुषौ वासुदेवसङ्कर्षणौ ॥ ३ ॥

कार्य्यभूतमिदं विश्वमपि त्वमेव भवसीति द्वयोरैक्यादेकवचनप्रयोगेणाह—यत् घटपटादिकं वस्तु यत्र देशे स्यात् येन कारणेन यतोऽपादानात् यस्य सम्बन्धे यस्मै देयं यद्देयं यथा येन प्रकारेण यदा यस्मिन् काले स्यात् तदिदं सर्वं भगवानेव भगवत्कार्य्यमित्यर्थः । कीदृशः साक्षात् प्रधानपुरुषयोरपीश्वरः॥४॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीवसुदेवकृतं भगवत्स्तवं श्रीदेवकीवचनात्सम्मृतबालानयनादिकं भगवच्चेष्टितं च वर्णयति—अथेति पञ्चाशीतितमेन ॥ १ ॥

धामसूचकम् स्वरूपज्ञापकम् ॥ २ ॥

विश्वकारणं परं धाम ततःपरं न किमपि वस्तु तद्द्योतकं मुनीनां वाक्यमवधार्य विश्वकारणं ससङ्कर्षणं श्रीकृष्णं कृष्णकृष्णेत्यादिना संस्तूय युवां न नः सुतौ किन्तु भूभारहरणाय साक्षात्परमेश्वरावतीर्णाविति विज्ञाप्य "तत्ते गतोऽस्म्यरणमद्य पदारविन्दम्" इति श्रीकृष्णचरणं शरणं व्रजति. यत् यो अस्य विश्वस्य परौ कारणभूतौ तौ वां युवां जाने प्रधानौ च तौ पुरुषौ प्रधानपुरुषौ ॥ ३ ॥

अथ बलं तदवतारभूतं तस्मिन्नन्तर्भाव्य तमेव जगद्धेतुं श्रीकृष्णं सर्वात्मतया वर्णयति—यत्रेति । यदा यत्र यथा येन प्रकारेण यत् प्रयोक्तृत्वं यत्र यस्मिन् अधिकारेण येन कर्त्रा करणेन च यतोऽपादानात् यस्य सम्बन्धेन यस्मै सम्प्रदानाय तत्तत्साक्षात् भगवान् श्रीकृष्णः स्यात् ननु सर्वस्य जडाजडस्य कथमैक्यमत्राह—प्रधानपुरुषेश्वरौ इति । प्रधानं प्रकृतिः भगवच्छक्तिः तस्याजडत्वविकारित्वादयो धर्माः पुरुषो जीवः भगवदंशः तस्य सुखदुःखभोक्तृत्वादयो धर्माः तयोरीश्वरः सर्वेश्वरत्वसर्वदोषास्पृष्टस्वरूपत्वसर्वकारणत्वसर्वज्ञत्वसर्वात्मत्वसच्चिदानन्दत्वाद्यनन्तकल्याणगुणाश्रयः स्वरूपेण सर्वजडाजडविलक्षण इत्यर्थः ॥ ४ ॥

---

एतन्नानाविधं विश्वमात्मसृष्टमधोक्षज।
आत्मनाऽनुप्रविश्यात्मन् प्राणो जीवो बिभर्ष्यज ॥ ५ ॥
प्राणादीनां विश्वसृजां शक्तयो याः परस्य ताः।
पारतन्त्र्याद्वैसादृश्याद्द्वयोश्चेष्टैव चेष्टताम् ॥ ६ ॥
कान्तिस्तेजः प्रभा सत्ता चन्द्राग्न्यर्कर्क्षविद्युताम्।
यत्स्थैर्यं भूभृतां भूमेर्वृत्तिर्गन्धोऽर्थतो भवान् ॥ ७ ॥
(१)तर्पणं प्राणनमपां देव त्वं ताश्च तद्रसः।
ओजः सहो बलं चेष्टा गतिर्वायोस्तवेश्वर ॥ ८ ॥

भाषाटीका।

श्रीबादरायणिरुवाच।

द्वारका आने के अनन्तर श्रीकृष्ण बलदेवजी दोनो पुत्र एक समय में वसुदेवजी के पास गए उनोंने वसुदेव जी के चरणों में प्रणाम. किया आशीर्वाद कर दोनोंको प्रसन्न कर के प्रेम के साथ उनके प्रति बोले ॥ १ ॥

पुत्रों .के वैभव जनाने वारा ऋषियों के वचन श्रवणकर उन के अलौकिक चरित्रोंसे उत्पन्न विश्वास वारे वसुदेवजी हे कृष्ण! हेराम इस प्रकार उनको सम्मुख कर उन के प्रति बोले ॥ २ ॥

हे कृष्ण! हे कृष्ण!! महायोगिन्! हे सङ्कर्षण! हे सनातन! जोकि इस जगत के कारणरूप जीव समूह तथा माया वे दोनों साक्षात् आपके शरीर हैं इसी कारण जैसें शरीर से जीवात्मा है तैसें हि आपके शरीर जीव माया से आप परे हैं उन दोनोंके आप नियन्ता हो इस प्रकार मैं आपकों जानता हूं ॥ ३ ॥

जिस आधार में यह जगत् होता है जिस कर्त्ता सें तथा साधन सें यह जगत् होता है जिस पदार्थ ते यह होता है जिस स्वामी का यह विश्व है तथा जिसके विहार के अर्थ यह बना है प्रेरणा से जो कार्य्य कर्त्ता तथा होने वारा कर्म और जिस काल में जिस प्रकार सें होता है वह सब जीव माया के ईश्वर निरवधिक ज्ञानादि कल्याण गुण सम्पन्न आप हि हो अर्थात् विचित्र नाना प्रकार का यह जगत् आपका शरीर है ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

किञ्च धारणपोषणकर्त्ताऽपि त्वमेवेत्याह-एतदिति। हे आत्मन्! प्राणः क्रियाशक्तिः जीवो ज्ञानशक्तिश्च सन् त्वमेव बिभर्षि ॥ ५ ॥

ननु, प्राणादीनां विचित्रशक्तीनां कारणत्वाधिगमात्कथं परमेश्वरस्यैव कारणत्वेन सर्वात्मकत्वमुच्यत इत्याशङ्क्य प्राणादिशक्तयोऽपि तस्यैवेत्याह—प्राणादीनामिति। प्राणः सूत्रं तदादीनां विश्वसृजां विश्वकारणानां याः शक्तयस्ताः परस्य परमकारणस्येश्वरस्यैव कुतः पारतन्त्र्यात् यथा वेधशक्तिर्न बाणस्यापितु पुरुषस्य तद्वदित्यर्थः। ननु भगवतः प्राणादिवर्गस्य च स्वातन्त्र्यमेव किं न स्यादत आह-वैसादृश्यात् द्वयोरिति। चेतनाचेतनत्वेन विसदृशत्वाद्द्वयोः अचेतनप्राणादिवर्गस्य चेतनपारतन्त्र्यमेव युक्तमित्यर्थः। यद्वा प्राणादिषु द्वयोर्द्वयोरेव तावद्विसदृशत्वं विरुद्धक्रियाकारित्वात्किम्पुनर्बहूनां तस्मादेकेन सर्वज्ञेन सर्वशक्तिनाऽधिष्ठितानामेव विशिष्टकार्यारम्भकत्वं युक्तं न स्वतन्त्राणामिति तथाचोक्तम्—

"यदैते संहता भावा भूतेन्द्रियमनोगुणाः।
यदायतननिर्माणे न शेकुर्ब्रह्मवित्तम ॥
तदा संहत्य चान्योऽन्यं भगवच्छक्तिचोदिताः।
सदसत्त्वमुपादाय चोभयं ससृजुर्ह्यदः" इति

तथा "नानात्वात्स्वक्रियाऽनीशाः प्रोचुः प्राञ्जलयो विभुम्" इत्यादि। ननु प्राणादीनां क्रियाकारित्वं शक्त्यभावे कुतः स्यादत आह—चेष्टैव चेष्टतामिति। चेष्टमानानामेषां चेष्टैव ननु शक्तिः यथा वायोः शक्त्या तृणादीनां चलनं यथा वा पुरुषस्य शक्त्या शराणां वेग इति ॥ ६ ॥

पारतन्त्र्यमेव प्रपञ्चयति। कान्तिरिति पञ्चभिः। चन्द्रस्य कान्तिः अग्नेस्तेजः अर्कस्य प्रभा ऋक्षविद्युतां सत्ता स्फुरणमात्रेण सत्त्वम् अर्थतो वस्तुतो भवान् तथाच श्रुतिः "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति इति। स्मृतिश्च—

"यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" ॥ इति

भूमेर्वृत्तिः प्राणिनामाधारत्वेन वर्तनं गन्धश्च भवान् तवैव शक्तिरित्यर्थः ॥ ७ ॥

किञ्च, हे देव! अपां तर्पणं तृप्तिजनकत्वं प्राणनं जीवनहेतुत्वं ता आपश्च तासां रसश्च त्वमेव किञ्च वायोरोजः सह आदि तवैव शक्तिः ॥८॥

(१) तर्पणं जीवनं चासां क्लेदनं तास्च तद्रसः ॥ इति वीर० पाठः।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पूर्वार्थमेव प्रतिपादयति—यतदिति । तत्रात्मन् आत्मनीत्यनेन यत्रेति आत्मेत्यनेन येनेति आत्मसृष्टमित्यनेन यत इति यस्येति यद्यदिति च सृष्टयादिशीलत्वेन यस्मा इति प्राणो जीव इत्यनेन क्रियाज्ञानशक्त्याश्रयतासूचकेन यथेति तत्रैव क्रियाशक्तिविशेषकालशक्तित्वसूचनेन यद्यदिति च अधोक्षजेत्यनेन तत्रापि परमाश्रयत्वम् अज इत्यनेन स्वयं भगवत्त्वमितिज्ञेयम् ॥ ५ ॥

विश्वसृजामिति । आदिशब्दात् वक्ष्यमाणा महाभूतादयः । पारतन्त्र्ये हेतुः श्रेषो वैसादृश्यादिति । अन्यसैर्व्याख्यातम् अत्र पारतन्त्र्यमित्यधिकं लेखकभ्रमादिति स्वपक्षे अतस्तच्छक्तिः तत्कृपाप्रभावादेव सिद्ध्येन्न त्वन्यथा । स्वकृतस्यैव सर्वेषां सर्वशक्तेरित्याह-प्राणेति । विश्वसृजां ब्रह्मादीनामपि ये प्राणादयस्तेषाम् अन्यत् समानम् ॥ ६ ॥

शक्तीराह—कान्तिरिति पञ्चभिः । यदिति लिङ्गव्यत्ययेन सर्वैरपि योज्यं याश्चन्द्रादीनां कान्त्यादयः ताः सर्वाभावेनैवेत्यन्वयः । तत्र भवानित्यादरात् अग्रतु त्वमिति भक्त्युद्रेकात् पुनश्च भवानिति तथैवेत्यतश्च भक्तिभङ्ग्यैवेति ज्ञेयम् । एवं तेजस्विनां स्वच्छक्तिहेतुत्वेनादौ तेजसः शक्तिरुक्ता तृतीयस्कन्धे कपिलदेवोक्तायाः पवनादितच्छक्तेरप्यत्रैव वतिभावो ज्ञेयः । एवमन्यत्रापि । अधुना भूमेः शक्तिं चरमादौ भौमत्वेनाद्रीणामाह-स्थैर्यं धारणशक्तिरित्यर्थः । एवमन्यत्रापि अर्थेलोभवानिति शक्तिमतोः कार्यकारणयोरभेदाभिप्रायेण तेषां तत्तच्छक्तिस्त्वच्छक्त्यैवेत्यर्थः । एवमग्रेपि ॥ ७ ॥

नन्वेक एवाहं कथं नत्तद्बहुरूपः तत्राह—इंयेति । हे अनन्तधामासमान ! एवमीश्वरे त्वयि तत्रैव विभूतयस्ता इति भावः । चेष्टा प्रयत्न गतिश्चलनमात्रम् अत्र तथेश्वरेति केवलगौडीयः पाठः ॥ ८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्राणः प्राणशरीरकः जीवः जीवशरीरकः मनोमयः प्राणशरीरः "यस्यात्माशरीरम्" इति श्रुतेः ॥ ५ ॥

विश्वसृष्टिहेतुभूतानां विश्वसृजां देवतानां याः शक्तयस्ताः परस्य परमात्मनः शक्तयः तद्दत्ता इत्यर्थः । कुतः पारतन्त्र्यात् तेषां देवानां परमात्मपारतन्त्र्यात् वैसादृश्यात् अनन्यप्रतिनियतशक्तित्वेन वैधर्म्यात् अतस्तेषां तास्ताः शक्तयः परमात्माधीना इत्यर्थः । द्वयोश्चेष्टैव चेष्टतां चेष्टमानानां देहिनां चेष्टा द्वयोश्चेष्टा जीवपरयोश्चेष्टैव न केवलं जीव एव स्वतन्त्रः प्रवर्त्तते किन्तु परमात्मानुमान्यः प्रवर्त्तत इत्यर्थः ॥ ६ ॥

सत्ताशब्दः ऋक्षाणां विद्युतां च प्रकाशसत्तामाह—प्रवृत्तिः प्रवर्त्तनशीलः भूमिवर्त्ती गन्ध एव एतत्सर्वं भवान् त्वदर्थमित्यर्थः ॥ ७ ॥

अपां तर्पणं लोकतृप्तिहेतुत्वं जीवनहेतुत्वं देवताधिष्ठितत्वं ताः आपः रसः माधुर्यं सर्वं भवान् त्वदधीनामित्यर्थः । वायोः ओजः प्रवृत्तिसामर्थ्यं सहो वेगः बलं धारणसामर्थ्यम् ईश्वरस्य तवैतत्सत्यमित्यर्थः ॥ ८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं भगवताश्चिदचित्सामानाधिकरण्यं शरीरात्मभावनिबन्धनमिति शिक्षा कृता अथ चिदचित्साधारणधर्मसामानाधिकरण्यं तन्निर्वाहकत्वनिबन्धनमिति शिक्षयति—प्राणादीनामिति । विश्वसृजां विश्वशरीरसृष्टिहेतुभूतानां प्राणादीनाम् आदिशब्देन भूतपञ्चकैकादशेन्द्रियमहदहङ्कारसङ्ग्रहः एतैर्हि विश्वसृष्टिः तेषां याः शक्तयः कार्योपयोग्यपृथक्सिद्धधर्माः ताः परस्य परमात्मनः तवैव शक्तयः त्वन्निर्वाह्या एतेत्यर्थः कुतः पारतन्त्र्यात्तच्छक्त्याश्रयाणां प्राणादीनां पारतन्त्र्यस्याभावात् एवञ्च तच्छक्तीनां पारतन्त्र्यं किम्पुनर्न्यायसिद्धमिति भावः । ननु प्राणादीनां शक्तयः मिथः प्राणादिभिर्वाह्याः कुतो न स्युरित्यत आह—वैसादृश्यादिति । अन्योन्यप्रतिनियतशक्तित्वेन वैधर्म्याच्च मिथो निर्वाह्यतेत्यर्थः । किमुताचेतनानां पारतन्त्र्यस्वभावतेति । गतश्चेतनस्यैव तत्स्वभावत्वादित्यभिप्रेत्याह—द्वयोश्चेष्टैव चेष्टतामिति । चेष्टतां चेष्टमानानां देवानां चेष्टा द्वयोश्चैव जीवपरयोश्चेष्टैव न केवलं जीव एव स्वतन्त्रः प्रवर्त्तते अपितु परमात्मानुमान्यः प्रवर्त्तत इत्यर्थः ॥ ६ ॥

सर्ववस्तुशक्तीनां तन्निर्वाह्यत्वनिबन्धनं सामानाधिकरण्यमाह—कान्तिरित्यादिना । चन्द्रस्य कान्तिरग्नेस्तेजः अर्कस्य प्रभा ऋक्षाणां नक्षत्राणां विद्युताञ्च सत्ता प्रकाशसत्ता भूभृतां पर्वतानां यत्स्थैर्यं भूमिवृत्तिर्गन्धः यद्वा वृत्तिः प्राणिनामाधारत्वेन वर्त्तनं गन्धश्चेत्येतत्सर्वम् अर्थतः वस्तुतः भवान् त्वन्निर्वाह्यमित्यर्थः ॥ ७ ॥

तर्पणमिति । अपां तर्पणं लोकतृप्तिहेतुत्वं जीवनं जीवनहेतुत्वं प्राणनमिति पाठे स एवार्थः क्लेदनमार्द्रीकरणं देवत्वमिति पाठे देवताधिष्ठितत्वं ता आपः तासां रसो माधुर्यं च सर्वं भवान् त्वदधीनमित्यर्थः । याः वायोः शक्तयः ओजःप्रभृतयः ताः ईश्वरस्त्वमेवेति पूर्ववत् तत्र ओजः प्रवृत्तिसामर्थ्यं सहो वेगः बलं धारणसामर्थ्यं चेष्टा व्यापारः गतिर्गमनम् ॥ ८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं स्वरूपकारणत्वे निरूप्य उत्पत्तिं निरूप्य स्थितिं निरूपयति—एतन्नानाविधमिति । भिन्नाभिन्नब्रह्ममायाद्यनेकप्रकारम् आत्मनैव सृष्टं सर्वेष्वेव प्रकारेषु भगवानेव कर्त्ता अधोक्षजेति सर्वकर्तृत्वं तस्याज्ञातं बहिर्मुखैरिति निरूपितं ततः 'तत्सृष्ट्वा तदेवानुप्राविशत्' इतिवदन्तः प्रविश्य प्रवेशे केवलमात्मनैव प्रविश्य पश्चात्तत्रानेकरूपो जात इत्याह-आदौ आत्मा तत्सर्वं व्याप्य स्थितः पश्चाज्जीवरूपेण प्राणरूपेण च जातः प्राणशब्देनेन्द्रियाण्यपि सङ्गृहीतानि ताः सन्त्यधमवदिति श्रुत्यर्थो निरूपितः ततः सर्वमेव जगच्छरीरादिकमपि बिभर्ति धारकशक्तिमपि तत्रैव योजितवान् अन्तर्यामीवातदर्थमधिकः प्रविष्टः सर्वे श्रुत्युक्ताः प्रकाराः अत्र सङ्गृह्यन्ते एवं स्थितिमुक्त्वा तस्याधिदैविकमपि रूपमाह—प्राणादीनामिति प्राणादयः सर्वे स्वक्रियाशक्त्या विश्वमेव सृजन्ति कर्मेन्द्रियैरेव सर्वं सृज्यत इति विश्वसृक् प्रयोगः एतेषां याः शक्तयः परस्यैव आधिदैविकस्यैव नत्वाध्यात्मिकस्य आधिभौतिकस्य वा यथा आत्मप्रयत्न एव

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

इन्द्रियाणां शरीरस्य च भवति नन्वेतेषां सहजाः शक्तयः कुतो नाङ्गीक्रियन्ते किमित्याधिदैविकमधिकं कल्प्यत इति शङ्कां परिहरति—पारतन्त्र्यादिति । एते आध्यात्मिकाः परतन्त्राः कथं स्वतन्त्रतया कार्यं करिष्यन्ति अन्यथा सर्वदैव कथं कार्यं न कुर्युः 'तस्माद्यदैव शक्त्याधानं तदैव कार्यं कुर्वन्ति नान्यदेति सर्ववस्तूनां वस्तुस्वरूपः आधिदैविकापरपर्यायः "चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं मनसो मनः" इत्यादि श्रुतिवाक्यो भगवानेवेत्यर्थः ननु जीवोऽङ्गीकर्तव्यः वक्ष्यामिति अन्तर्यामी जीवो वा शक्त्याधानं करोतु किमन्तर्गडुनारूपान्तरेणेत्याशङ्क्याह वैसादृश्यादिति। सर्ववस्तूनामात्मा विसदृशः चेतनत्वादन्येषां जडत्वात् यदि विसदृशोपि स्वशक्तिमादध्यात् अन्धादिषु श्रोत्रादिष्वपि चक्षुःशक्तिं कुतो नादध्यात् अतः प्रतिनियतपदार्थसिद्ध्यर्थं तत्तत्स्वभावापन्नम् अतिरिक्तमेव स्वरूपमङ्गीकर्तव्यमित्यर्थः । किञ्च यदेतदुक्तमाध्यात्मिकमाधिभौतिकञ्च ताभ्यामेव कार्यं सिद्ध्यत्विति तत्रोच्यते द्वयोरपि तयोश्चेष्टैव तृणादीनामेव ननु प्रेरकत्वं कर्तृत्वं वा सम्भवति कुत एतत् इत्याकाङ्क्षायां देहलीप्रदीपन्यायेन अग्रे अग्रे योजयित्वा निरूपयति चेष्टैव चेष्टतामिति चेष्टतां क्रियावतां चेष्टैव धर्मो भवितुमर्हति ननु प्रेरकत्वं कदाचिद्वा चेष्टाभावः तस्मादाधिदैविकरूपमवश्यमङ्गीकर्तव्यमिति भावः—

> कर्त्ता सर्वप्रतिष्ठात्मा नानारूपस्तथापरः ।
> चतुर्द्धा वेदस्यार्थं चतूरूपो निरूपितः ॥

॥ ५—६ ॥

विभूतिरूपं निरूपयति—कान्तिस्तेज इति । सर्ववस्तुषु या कान्तिः सौन्दर्यं तेजः दीप्तिः मण्यादिष्विव प्रभा परप्रकाशिका सत्ता वस्तुस्थितिः यद्यप्येतच्चतुष्टयं सर्ववस्तुषु विद्यमानं भवानेव तथापि तद्धर्मा येषु प्रसिद्धास्तान् गणयति कान्तिश्चन्द्रे तेजः सूर्ये प्रभा अग्नौ ऋक्षाणाञ्च विद्युतां सत्ता यथा भगवद्व्यतिरेकेण विद्युतां न क्वापि स्थितिः एवमेतेषामपि भगवानेव कान्त्यादिकं नान्यथेत्यर्थः धर्मरूपोयं निरूपितः सोपि भगवानिति ज्ञापयितुं षड्वर्गपूर्त्यर्थम्पुनर्द्धर्मीवाह यद्भूतां स्थैर्यं यश्च भूमेर्गन्धः तदुभयमपि त्वमेव तत्र सर्वत्र हेतुः अर्थत इति कार्यतः सुखादिकार्याणि जनयन्ति यदि सुखजनकत्वं धर्मिणि स्यात् तदा धर्माणामपि स्यात् कारणगुणा हि कार्यगुणानारभन्त इति यत्सामर्थ्यं धर्मिणो नास्ति तद्धर्माणां युक्तिबाधितमपि अथापि धर्मेषु कार्यातिशयो दृश्यते तेन ज्ञायन्ते ते धर्मा भगवद्रूपा इति एवं कार्येष्वपि कारणातिरिक्तसामर्थ्यं यत्र दृश्यते तद्भगवानेति ज्ञातव्यम् अनेन तेजोभूम्योः धर्माः भगवद्रूपा निरूपिताः ॥ ७ ॥

प्रसङ्गादन्येषामपि महाभूतानां धर्मा भगवद्रूपा इति निरूपयति तत्र प्रथमं जलस्याह—तर्पणमिति । यदकस्मात् पीते जले काचित्तृप्तिर्जायते सा तृप्तिर्न जलस्य अन्यथा जलस्य शोषो न भवेत् प्राणानामप्याप्यायनं जायते तिष्ठति तेन प्राणाः एवं सति जले मग्नः पुरुषो न म्रियेत तस्मान्न जलस्य धर्मः प्राणनं किन्तु भगवानेव किञ्च जलस्य देवत्वं श्रूयते गङ्गादिषु "आपो वै सर्वादेवताः" इति श्रुतिश्च अन्यथा पापक्षयादिकजनकत्वं न स्यात् किञ्च ताश्चापः कूपादिभेदभिन्नाः तासां दृष्टादृष्टादिफलभेदा दृश्यन्ते तद्भगवत्त्वेनोत्पद्यन्ते किञ्च तद्रसोपि नानाविधः कथमेकविधाज्जालानानेकविधो रसो भवति भूमावपि तत एव रस इति तत्रापीदं दूषणं वायोराह ओज इति ओज इन्द्रियाणां सामर्थ्यं सहोऽन्तःकरणस्य एतद्वायुकार्यमिति लोकः तथा सति वायुव्याप्तस्यैतदाधिक्यं भवेत् तस्माद्वायुधर्मत्वेन प्रसिद्धावपि भगवानेवेत्यर्थः । किञ्च या काचिच्चेष्टा तृणादिषु या वा जङ्गमानां गतिः सापि पूर्वोक्तन्यायेन भगवानेव वायोस्तत्त्वेति वायुरपि त्वमेवेत्युक्तं वायुभेदाश्च शतशः ईश्वरेति वायोः सूत्रात्मकत्वभावोपि भगवानेवेति निरूपितम् ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

किञ्चास्य पोषणकर्तापि त्वमेवेत्याह—एतदिति । आत्मना अन्तर्यामिस्वरूपेणानुप्रविश्य हे आत्मन् ! प्राणः क्रियाशक्तिमयसूत्रतत्त्वरूपः जीवो ज्ञानशक्तिमयबुद्धितत्त्वरूपश्च सन् त्वमेव बिभर्षि प्राणबुद्धिकर्मज्ञानेन्द्रियरूपेण पुष्णासि ॥ ५ ॥

ननु, प्राणजीवावेव तत्तद्रूपौ विश्वपोषकौ प्रसिद्धौ न त्वं तत्पोष्टा तत्राह प्राणादीनामिति स्वप्रभेदैर्बहुत्वादादिपदप्रयोगः विश्वसृजामिति न केवलं तयोर्विश्वपोष्टृत्वमेवापितु विश्वस्रष्टृत्वमपि प्रसिद्धमित्यर्थः । तेषां याः शक्तयस्ताः परस्य परमेश्वरस्यैव कुतः पारतन्त्र्यात् यथा वेधशक्तिर्न बाणस्य अपितु पुरुषस्य तद्वदित्यर्थः । ननु तयोः स्वाधिष्ठातृदैवतपारतन्त्र्यमस्तु परमेश्वरपारतन्त्र्यं कुतोऽवसितं तत्राह वै निश्चितं सादृश्यात् तदधिष्ठातृदेवतानामपि तत्तुल्यत्वात् यथैव प्राणजीवशब्दवाच्यानि कर्मज्ञानेन्द्रियाणि जडानि तथैव तदधिष्ठातृदेवतान्यपि जडानीत्यर्थः । ततश्चेश्वरस्य चिदात्मकत्वात्तयोस्तदधिष्ठातृदेवतानां च जडात्मकत्वाज्जडानां च चेतनपारतन्त्र्यदर्शनात्ताः शक्तयः परमेश्वरस्यैवेत्यन्वयः । ननु प्राणादीनां शक्त्यभावे कुतः क्रियाकारित्वं स्यादत आह द्वयोः प्राणजीवयोः तयोश्चेष्टैव चेष्टतां स्यादिति यावत् चेष्टमानानां प्राणबुद्धिकर्मेन्द्रियाणां चेष्टैव केवलं ननु शक्तिर्यथा पुरुषस्य शक्त्या शरादीनां वेग इत्यर्थः ॥ ६ ॥

तस्मात् वस्तुमात्राणां या याः शक्तयस्तास्तवैवेति प्रदर्शयति—कान्तिरिति । तत्र कान्तिः कमनीयता चन्द्रर्क्षविद्युतां प्रसिद्धैव अग्न्यर्कयोश्च शीतकाले अर्कस्योदयास्तसमयेऽपि तेजः स्पर्शाशक्यत्वलक्षणं सर्वेषामेव प्रभा अतिदूरस्थः प्रकाशः सत्ता च चन्द्रादीनाम् अर्थतो वस्तुनो भवान् तथाच श्रुतिः "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति । स्मृतिश्च—

> "यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
> यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥"

इति । यदिति लिङ्गविपरिणामेन सर्वत्र योज्यं भूमेर्वृत्तिः प्राणानामाधारत्वेन वर्त्तनं गन्धश्च भवान् तथैव शक्तिरित्यर्थः ॥ ७ ॥

दिशां त्वमवकाशोऽसि दिशः खं स्फोट आश्रयः।
नादो वर्णस्त्वमोङ्कार आकृतीनां पृथक्कृतिः ॥ ९ ॥
इन्द्रियं त्विन्द्रियाणां त्वं देवाश्च तदनुग्रहः।
अवबोधो भवान् बुद्धेर्जीवस्यानुस्मृतिः सती ॥ १० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

किं बहुना वस्तुधर्मा वस्तूनि च त्वमेवेत्याह—तर्पणमिति चतुर्भिः। हे देव! अपां तर्पणं तृप्तिजनकत्वं प्राणनं जीवनहेतुत्वं ता आपश्च तद्रसश्च त्वमेव वायोरोजस्सह आदिकं तवैव शक्तिः ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

आत्मना अन्तर्यामिरूपेणानुप्रविश्य प्राणः करणरूपः जीवः स्वांशभूतः कर्त्ता च तद्रूपस्त्वं एतद्विश्वं बिभर्षि अन्तर्यामिस्वरूपेण प्रेरकतया प्राणादिजडरूपेण करणतया जीवाख्येन अंशरूपेण कर्तृभोक्तृत्वादिना विश्वं पुष्णासीत्यर्थः ॥ ५ ॥

अत्र निरीश्वरा आहुः पुरुषः कर्ता भोक्ता करणकलापेन कर्माणि कुरुते नेश्वरः प्रेरको कश्चिदिति तान् निरीश्वरान् मन्दान् "अन्तःप्रविष्टः शास्ता जनानाम् 'स कारयति पुण्यमथापि पापं' यदासीत्तदधीनमेवासीत् ——

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥

इत्यादिशास्त्रबलेन निराकरोति प्राणादीनामिति प्राणादीनां प्राणाः इन्द्रियाणि तदादीनाम् विश्वसृजां ब्रह्मादिजीवानां च याः शक्तयः ताः परस्य परमात्मनः तत्र हेतुमाह—द्वयोः करणकर्त्रोः पारतन्त्र्यात् परमेश्वराय तत्त्वात् पारतन्त्र्येपि हेतुः वैसादृश्यादिति यदा कश्चित् कर्तर्य्यवहितेपि करणमनवहितं भवति कश्चित्करणेऽवहिते कर्ता ऽनवहितो भवति एवं द्वयोर्वैसादृश्यात्पारतन्त्र्यसिद्धिरित्यर्थः। अतः चेष्टतां स्वासाधारणचेष्टां कुर्वतां करणानां कर्तृणां च चेष्टापरस्यैवेत्यन्वयः ॥ ६ ॥

एवं चन्द्रादीनां कान्त्यादयो धर्मास्तवैव शक्तय इत्याह—कान्तिरिति पञ्चभिः। चन्द्रस्य कान्तिः अग्नेस्तेजः अर्कस्य प्रभा ऋक्षविद्युतां सत्तास्फुरणमात्रेण सत्त्वम् भूभृतां भूधराणां स्थैर्य्यम् भूमेर्वृत्तिः गिरिसमुद्राद्याधारत्वेन वर्तनम् अर्थतस्तदुपादानत्वेन भवान् नहि उपादानकारणात्कार्यं सर्वथा भिन्नं भवतीत्यर्थः। अनेन न्यायेन चन्द्रादिरूपोपि भवानेव अर्थात् इत्यत्रापि योज्यम् ॥ ७ ॥

किञ्च हे देव! अपां तर्पणं प्राणितृप्तिहेतुत्वं प्राणनं प्राणिजीवनहेतुत्वं ता आपश्च तासां रसश्च त्वमेव एवं वायोः ओजआदिर्वायुश्च त्वमेव ॥ ८ ॥

भाषा टीका।

हे अधोक्षज! अपने आधार मे आप के सृजेभए इस नाना प्रकार के जगत् में निज शरीर जीव द्वारा प्रवेश कर के प्राण के तथा जीव के अन्तरात्मा* होकर इस विश्वका धारण पोषण, आप हि करते हो, ओर इस व्यापार के करने पर भी आप निर्विकार रहते हो ॥ ५ ॥

विश्व के सृजने वारे प्राण तथा पञ्च भूत एकादश इन्द्रिये पञ्च तन्मात्रा ऽअहंकार महत्तत्व प्रधान इस प्रकार महतत्व समूह ओर इन तत्त्वन की ओर शक्ति हैं वे सब आप के आधीन हैं, क्योंकि शक्ति वारे प्राणादिक अब परमात्मा के आधीन हे तो उन की शक्ति स्वतः हि परमात्मा के आधीन हैं, ओर परस्पर मे नियत शक्ति होने से प्राणादिकों का विरुद्ध स्वाभव हे इस कारण निजशक्तियों के निर्वाहक प्राणादिक नहीं हैं और केवल प्राणादिक अचेतनहीं परमात्मा के परतन्त्र नहीं हैं किन्तु जीव भी परमात्मा के पर तन्त्र हैं क्योंकि चेष्टा करने वारे शरीरों की चेष्टा जैसे जीव के आधीन हैं तैसे ही जीव की चेष्टा परमात्मा के आधीन हैं ॥ ६ ॥

चन्द्रमा की चाँदनी अग्नि का तेज सूर्य्य की प्रभा नक्षत्रों की तथा बिजलियों की सत्ता पर्वतों की जो स्थिरता सब का आधार होकर जो भूमि का वर्त्तना तथा भूमि का गन्ध यह सब तत्त्व करके आप ही की शक्ति हैं ॥ ७ ॥

प्राणियों को तृप्त करना तथा प्राण धारण कराना सब वस्तुओं को शुद्ध करना यह जल की शक्ति और उन का रस नाम गुण तथा वे स्वयं जल यह सब। आपके ही आधीन हैं और हे ईश्वर! इन्द्रियों की शक्ति मन की शक्ति शरीर की शक्ति शरीर की चेष्टा तथा जड चेतन का गमन यह सब पवन की शक्ति आप के ही आधीन हैं ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

दिशामुपाधिकृताऽऽकाशप्रदेशानामवकाशो दिशश्च त्वम् खं सामान्याकाशस्तदाश्रयः स्फोटश्च शब्दतन्मात्रं परावस्था वागित्यर्थः। नादः पश्यन्ती ओङ्कारो मध्यमा वर्णश्चाऽऽकृतीनां पादार्थानां पृथक्कृतिः पृथक्करणमभिधानं यस्मात्तत्पदम् वर्णपदाद्यात्मिका वैखरीच त्वमित्यर्थः ॥ ९ ॥

*इन्द्रियाणामिन्द्रियं विषयप्रकाशनशक्तिर्देवाश्चेन्द्रियाधिष्ठातारः

* दीन्द्रियत्वामीन्द्रियाणाम ॥ इति वीर० पाठः।

भूतानामसि भूतादिरिन्द्रियाणां च तैजसः।
वैकारिको विकल्पानां प्रधानमनुशायिनाम् ॥ ११ ॥
नश्वरेष्विह भावेषु तदसि त्वमनश्वरम् ॥
यथा द्रव्यविकारेषु द्रव्यमात्रं निरूपितम् ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तदनुग्रहस्तेषामधिष्ठानशक्तिश्च त्वम् अवबोधोऽध्यवसायशक्तिः अनुस्मृतिः प्रतिसन्धानशक्तिः ॥ १० ॥

भूतानां कारणं भूतादिस्तामसोऽहङ्कारस्त्वमसि इन्द्रियाणां कारणं तैजसोराजसोऽहङ्कारस्त्वं विविधमाधिदैवाध्यात्माधिभूतभेदेन विकल्प्यन्त इति विकल्पा देवा स्तेषां कारणं वैकारिकः सात्त्विकोऽहङ्कारश्च त्वम् अनुशायिनां जीवानां संसारकारणं प्रधानं त्वम् ॥ ११ ॥

अपिच नश्वरेषु नाशशीलेष्विहैतेषु भावेषु यदनश्वरमवशिष्यमाणं रूपं तत्त्वमसि द्रव्यविकारेषु मृत्सुवर्णादिकार्येषु घटकुण्डलादिषु नश्वरेषु च द्रव्यमात्रं मृत्सुवर्णादिमात्रमनश्वरं यथा तद्वत् ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

आश्रयश्च त्वमित्यन्वयः। अयमेव हेतुः सर्वत्र ॥ ९ ॥

जीवस्य जीवाधिष्ठानस्य चित्तस्य या ऽनुस्मृतिः साधारणी या च सती भगवन्निष्ठा सापि ॥ १० ॥

अनुशायिनां प्रकृतौ लयं प्राप्य स्थितानामिति मुक्ताव्यवच्छिन्नाः ॥ ११ ॥

तदिति तत्तदुपादानमिति तच्छाक्तिकं ब्रह्मेत्यर्थः ॥ १२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

स्फोटः शब्दःतदाश्रयभूतं त्वमित्यर्थः। नादः शब्दाभिव्यञ्जकः आकृतीनां शब्दवाच्यानां प्रथक्कृतिः वैविध्यं विविधाकृतय इत्यर्थः ॥ ९ ॥

इन्द्रियाणामिन्द्रियं स्वप्रकाशकत्वं देवा इन्द्रियाणि तदनुग्रहाः अनुग्रहशब्दवाच्याः देवाः इन्द्रियाद्यभिमानिदेवताः तत् सर्वं त्वत्तो जातमित्यर्थः। त्वदनुग्रहप्रभवा देवा इति वार्थः। "यस्य प्रसादजो ब्रह्म" इतिवत् बुद्धेः अवबोधः अध्यवसायः अनुस्मृतिः संस्कारजन्यं ज्ञानं कारणभूतः ॥ १० ॥

भूतादिः तामसाहङ्कारः इन्द्रियाणामनुग्राहकः तैजसः राजसाहङ्कारः विकल्पानामनुग्राहको वैकारिकः सात्त्विकाहङ्कारः विविधकल्पनं जातमनेनेति विकल्पः इन्द्रियं तत्करणमिति वार्थः। अनुशायिनाम् अनुशयवतां कर्मिणां, प्रधानं फलप्रदम् ॥ ११ ॥

कर्मिणां नश्वरभावावस्थाः तासु आगमापायिनीषु अनवरतास्थितं अनवस्थानं आधारभूतं द्रव्यं तदेव विवृणोति यथा द्रव्यविकारेष्विति। एते सर्वे पदार्थाः परे ब्रह्मणि त्वयि योगमायया माया वयुनं ज्ञानमिति सङ्कल्परूपज्ञानयोग कल्पिताः त्वयि कल्पिता धृता इत्यर्थः ॥ १२—१३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

दिशामिति। दिशां सम्बन्धी अवकाशः दिशश्च त्वमेव स्फोटः शब्दः आश्रयः तदाश्रयभूतं च त्वमेवेत्यन्वयः। नादः शब्दाभिव्यञ्जकः वर्णः आकाशादिः अहङ्कारः आकृतीनां शब्दवाच्यानामाकृतीनां पृथक् कृतिः वैविध्यञ्च त्वमेव स्फोटनादोङ्कारशब्दैः परा पश्यन्ती मध्यमाख्या वाग्भेदा उच्यन्ते आकृतीनां पदार्थानां पृथक्करणमभिधानं यस्मात् तत्पदं वर्णपदाद्यात्मिका वैखरीत्वमित्यर्थः इति केचित् ॥ ९ ॥

इन्द्रियत्वानीति। इन्द्रियाणाम् इन्द्रियत्वानि विषयप्रकाशनं सामर्थ्यानि तदनुग्रहास्तेषाम् इन्द्रियाणामनुग्रहा अनुग्राहकाः विषयप्रकाशनरूपसामर्थ्यापादका इति यावत्। ते देवाः दिग्वातार्कादयः इन्द्रियाभिमानिदेवाश्च त्वम् "इन्द्रियाणामिन्द्रियत्वं देवाश्च त्वदनुग्रहाः" इति पाठे ऽनुग्रहाः अनुग्रहशब्दवाच्याः इन्द्रियाद्यभिमानिदेवाश्चेत्येतत्सर्वं त्वत्त्वत्तः जातं त्वदनुग्रहप्रभवा देवा इत्यर्थः। अनुग्रह इत्येकवचनान्तपाठे तदनुग्रहः तेषामधिष्ठानशक्तिश्च त्वमेवेत्यर्थः। बुद्धेरवबोधो ऽध्यवसायः सत्यबाधिता जीवस्यानुस्मृतिः संस्कारजन्यज्ञानं च भवान् ॥ १० ॥

भूतानामिति। भूतानामाकाशादीनां कारणं भूतादिस्तामसाहङ्कारः इन्द्रियाणामनुग्राहकस्तैजसः राजसाहङ्कारः विकल्पानामनुग्राहको वैकारिकः सात्त्विकाहङ्कारः विविधं कल्पनं ज्ञानमनेनेति विकल्पः इन्द्रियं तत्कारणमितिनार्थः। अनुशायिनामनुशयवतां कर्मिणां [ कर्मणां ] भुक्तावशिष्ट कर्मानुशयशब्दार्थः प्रधानं फलदं कर्म च त्वमेवेत्यर्थः ॥ ११ ॥

एवं सर्वकारणत्वनिर्वाहकत्वप्रयुक्तसार्वात्म्यमभिधायाथ सार्वात्म्यप्रयुक्तानित्यत्वादिदोषपरिजिहीर्षयाह—नश्वरेष्विति। भावेष्ववस्थासु नश्वरेषु आगमापायिषु सत्सु यद्भावाश्रयमनश्वरं स्थिरमवस्थारहितमाधारभूतञ्च तत्त्वमसि एतदेव दृष्टान्तमुखेन विवृणोति। यथेति। द्रव्यस्य मृत्सुवर्णादेर्विकारेषु पिण्डत्वघटत्वकुण्डलत्वकटकत्वादिविकारेषु नश्वरेष्वपि द्रव्यमात्रं मृत्सुवर्णादिरूपमनश्वरं सर्वावस्थानुवृत्तं तद्वत् वस्तुतो यद्यपि मृत्सुवर्णादिद्रव्यमपि नश्वरमेव तथापि यावत्स्वविकारमनश्वरत्वमात्राभिप्रायेण दृष्टान्तः ॥ १२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

आकाशस्याह—दिशामिति । प्राग्भागेन तस्य तत्रापि महानवकाशो दृश्यते दिग्भेदश्च तदाह दिशस्त्वमिति प्रसङ्गाद् दिग्धर्मः आकाशः तत उक्तं दिशश्च सर्वत्र नानाविधा भवन्तीति सर्वत्र सर्वं भगवत एव भवन्तीति दिशोपि त्वमेव तत्र यः स्फोटः सोपि अन्यथा शब्दं अर्थस्फुरणं न स्यात् स्फुटत्यर्थोऽस्मादिति आकाशस्य श्रुतावाश्रयः श्रूयते दिशां च पूर्वभागे सः दक्षिणभागे स इति अत आश्रयोपि भगवानेवेत्यर्थः । बाह्यमुक्त्वा आन्तरमाह—नादो वर्णस्त्वमोङ्कारइति अनुरणनात्मकः आन्तरो नादः स एव साकारत्वमापन्नो वर्णः स एवान्तःकरणे आवेष्टित ओङ्कारः ततो वैखरीप्रकारेण निर्गताः पञ्चाशद्वर्णाः तेषामाकृतयः आकारा भिन्नाः तेषां कारणान्यपि भिन्नानि कण्ठादीनि कथमेकस्मात्कारणादनेकप्रकारवर्णाः अनेकस्थानप्रकाराभिन्नाः भवेयुः अतः आकृतीनां वर्णानां पृथक्कृतिः पृथक्क्रिया भवानेवेत्यर्थः ॥ ९ ॥

एवं महाभूतान्युक्त्वा इन्द्रियाण्याह—इन्द्रियमिति । सर्वेषामिन्द्रियाणां यदिन्द्रियं तदेकं सर्वानुस्यूतं वर्त्तत इति यत्कर्येतत्सम्बन्धादेव शरीरावयवविशेषाणामिन्द्रियत्वम् इन्द्रियं वीर्यं पृथिवीमनुव्याचच्छेदिति श्रुतिरपि सङ्गच्छते तद्वानेव अत एतस्य ओषधिवीर्यत्वञ्च सङ्गच्छते इन्द्रियाधिष्ठातृदेवता अपि त्वमेव चकारात्तत्सम्बन्धः तेषामनुग्रहोपीन्द्रियेषु अन्तःकरणस्याह अवबोधो भवान् बुद्धेरिति बुद्धेर्जडाया अपि योऽवबोधः विषयप्रकाशरूपः स भवानेव जीवस्यापि जीवात्मनः या अनुस्मृतिः पूर्वापरानुसन्धानं स भवानेव अनुभवएव ब्रह्मणः स्मृतिर्जीवस्य इन्द्रियद्वारा अनुभवस्तु कृत्रिमः अत एवेन्द्रियैरपि जनितोऽनुभवः आत्मार्थं संस्कारमेव जनयति यथा स्मृत्युद्गमयोग्यो भवत्यात्मा सापि जीवस्य भगवानेवेत्यर्थः । सा दोषवशात् कदाचित् प्रकारान्तरेणापि स्फुरति यथा शुक्तिका रजतत्वेन तां वारयति सतीति ॥ १० ॥

एवं सर्वकार्यधर्माः भगवानिति निरूप्य कारताभगवानेवेति निरूपयति—भूतानामसि भूतादिरिति । पञ्चमहाभूतानां कारणं भूतादिरहङ्कारः इन्द्रियाणामपि तैजसो राजसः विकल्पानां सङ्कल्पविकल्परूपमनसः कारणं वैकारिकः सात्त्विकोऽहङ्कारः अनुशयानां महत्तत्त्वादिजीवानां कारणं प्रकृतिर्भवान् ॥ ११ ॥

एवं कारणस्य कारणतामुक्त्वा कार्यस्यापि कार्यता भवानेवेत्याह—नश्वरेष्विह भावेष्विति । नाशप्रतियोगिकार्ये ततश्च कार्यस्य नाशे कार्यता नोपपद्येत कार्यस्य नष्टत्वात् अतः कश्चन पदार्थो वक्तव्यः यः कार्येषु स्थिरो भवति यस्य नष्टत्वं धर्मः कार्यस्येति सम्बन्धश्च स अनश्वरः सर्वदा स्थिरः स एकः सर्वकार्यानुस्यूतो वक्तव्यः तमेवाश्रित्य कश्चिद्वाह—न ह्यसन् घटादिर्न घटादिरिति ननु नश्वरेषु भावेषु कोऽप्यनश्वरो न दृश्यते कोवा भगवान् भविष्यतीति चेत् तत्र दृष्टान्तमुपपादयति यथा द्रव्यविकारेष्विति द्रव्यविकारेषु घटपटादिषु सोन्यो घटपटादिरूपो वर्तते तत्सर्वेष्वपीत्यर्थः । ननु स एव नास्तिको दृष्टान्तेन साध्यत इति चेत्तत्राह—अन्यदाव्यावहारिक इति घटाभावसमये व्यस्तु घटव्यवहारं साधयति अन्यथा सद्व्यवहारः बाधितार्थविषयकं कथं स्यात् स घटो भग्नः भूतले घटो नास्ति, पश्चघटो भग्ना इति एवं धर्मधर्मिव्यवहारः सद्विषयक एवेति सोऽवश्यमङ्गीकर्तव्यः इति दिशाद्यर्थः ॥ १२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

दिशामुपाधिकृताकाशप्रदेशानामवकाशः दिशश्च त्वं खं च सामान्याकाशः तदाश्रयः स्फोटश्च शब्दतन्मात्रं वाक् परावत्यर्थः । नादः पश्यन्ती मध्यमा च त्वं वर्णः ओङ्कारश्च त्वम् आकृतीनां पदार्थानां पृथक् कृतिः पृथक्करणम् अभिधानं यस्मात् स इति वैखरीच त्वमित्यर्थः । तथा च श्रुतिः "चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः गुहायां त्रीणि निहितानि नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति" इति ॥ ९ ॥

इन्द्रियाणामिन्द्रियं विषयप्रकाशनशक्तिः देवाश्च तदधिष्ठातारः तदनुग्रहः तेषां विषयग्रहणानुकूल्यञ्च अवबोधो व्यवसायशक्तिः जीवस्थानस्मृतिः जीवसम्बन्धिनी अनुस्मृतिः प्रतिसन्धानशक्तिश्च ॥ १० ॥

भूतानां कारणं भूतादिस्तामसोहङ्कारस्त्वमसि इन्द्रियाणां कारणं तैजसराजसाहङ्कारश्च विविधं कल्प्यन्त इति विकल्पा देवास्तेषां कारणं वैकारिकः सात्त्विकाहङ्कारश्च त्वम् अनुशायिनां जीवानां संसारकारणं प्रधानं च त्वम् ॥ ११ ॥

नश्वरेषु भावेषु तत् अनश्वरं प्रधानं त्वमसि यथा द्रव्यविकारेषु मृत्सुवर्णादिकार्येषु घटकुण्डलादिषु नश्वरेषु द्रव्यमात्रं मृत्सुवर्णादिमात्रम् अनश्वरं तद्वत् ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दिशामवकाशः दिशश्च त्वम् आश्रयः शब्दानामाश्रयः खमाकाशः स्फोटनादोङ्कारशब्दैः परा पश्यन्ती मध्यमाख्या वाग्भेदाः उच्यन्ते वर्णश्च आकृतीनां पृथक्कृतिः पृथक्करणमभिधानं यस्मात्तत्पदं वर्णपदात्मिका वैखरीवाक्त्वमेव अत्रानुकरणरूपः प्रणवो ज्ञेयः तत्त्वनादिसिद्धः वैदिकः तस्याकाशगुणत्वाभावात् सर्वस्य वेदस्य प्राकृतसृष्टेः पूर्ववर्तित्वात् ॥ ९ ॥

इन्द्रियाणामिन्द्रियम् विषयप्रकाशनशक्तिः देवाश्चेन्द्रियाधिष्ठातरः तदनुग्रहस्तेषामधिष्ठानशक्तिश्च बुद्धेरवबोधोऽध्यवसायशक्तिः जीवस्य अनुस्मृतिः अनुस्मरणात्मकज्ञानं च त्वमेव ॥ १० ॥

भूतानामाकाशादीनां कारणं भूतादिस्तामसाहङ्कारः इन्द्रियाणां कारणं तैजसो राजसोऽहङ्कारश्च विविधमधिदैवाध्यात्म-

सत्त्वं रजस्तम इति गुणास्तद्वृत्तयश्च याः ।
त्वय्यद्धा ब्रह्मणि परे कल्पिता योगमायया ॥ १३ ॥
तस्मान्न सन्त्यमी भावा यर्हि त्वयि विकल्पिताः ।
त्वं चामीषु विकारेषु ह्यन्यदा व्यावहारिकः ॥ १४ ॥
गुणप्रवाह एतस्मिन्नबुधास्त्वाखिलात्मनः ।
गतिं सूक्ष्मामबोधेन संसरन्तीह कर्मभिः ॥ १५ ॥
यदृच्छया नृतां प्राप्य सुकल्पामिह दुर्लभाम् ।
स्वार्थे प्रमत्तस्य वयो गतं त्वन्माययेश्वर ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भेदेन कल्पते इति विकल्पा देवास्तेषां कारणं वैकारिकः सात्विकोऽहङ्कारश्च अनुशायिनां जीवानां स्वरूपावरणहेतुभूतं प्रधानं च त्वमेव ॥ ११ ॥

अपि च नश्वरेषु आगमापायिषु भावेषु कार्येषु यदनश्वरं रूपं तत्त्वमसि यथा द्रव्यविकारेषु घटकुण्डलादिषु द्रव्यमात्रं मृत्सुवर्णादिमात्रम् अनश्वरं निरूपितं तद्वत् ॥ १२ ॥

———

भाषा टीका ।

दिशा और विशान का अवकाश यह दोनों आप के आधीन है आकाश और आकाश गुणशब्द यह दोनो आप के आधीन है शब्द को प्रकट करने वारा तथा आकार आदि वर्ण और ओंकार, शब्द के अर्थों के जो विविध प्रकार यह सब आप के आधीन है ॥ ९ ॥

एकादश इन्द्रियें और इन्द्रियों की शक्ति इन्द्रियों के देवता बुद्धि और बुद्धि शक्ति जीव और जीव का यथार्थ आत्मानुसन्धान यह सब आप के आधीन है ॥ १० ॥

आकाश आदि पञ्च भूतन को कारण तामसाहङ्कार तथा एकादश इन्द्रियें इन्द्रियन के देवतान को कारण सात्विकाहंकार और, इन्द्रियन की उत्पत्ति का सहाय कर्ता राजसाहंकार कर्म वासना वारे जीवों को फल देने वारा कर्म यह सब आप के आधीन है ॥ ११ ॥

जैसें सुवर्णादि के विकार कटक कुण्डलादि कारण नाशवान् वस्तुओं में सुवर्णादि मात्र कारण वस्तु को अनश्वर करके निरूपण किया गया है तैसे हि इस संसार में नाशवान् वस्तुओं में जो अनश्वर परमार्थ वस्तु है वह आप हि हो ॥ १२ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, त्रिगुणात्मककार्यरूपोऽपि त्वमित्युक्तत्वात्कथमनश्वरत्वं तत्राऽऽह-सत्त्वमिति । तद्गुणत्रयस्तत्परिणामाश्च महदादयः अद्धा साक्षात्त्वयि परे ब्रह्मणि कल्पिताः ॥ १३ ॥

तस्मान्न सन्तीति नन्वमनतां कथं प्रतीतिरत आह यर्हीति । यदा विकल्पितास्तदैव प्रतीतिमात्रेण त्वयि सन्ति त्वं चामीषु तदैव कारणतयाऽनुगतः अन्यदा त्वव्यावहारिको विकल्पकस्त्वमेवावशिष्यस इत्यर्थः ॥ १४ ॥

एवं रूपत्वादज्ञाननिबन्धनश्च संसार इत्याह-इति सूक्ष्मां निष्प्रपञ्चां गतिमबुधाः अविद्वांसः अबुद्धेति वा पाठः अतोऽबोधेन देहाभिमानेन कृतैः कर्मभिः संसरन्तीति ॥ १५ ॥

एवं तथोस्तत्त्वं निरूप्य तदप्राप्त्या शोचति—यदृच्छयेति । नृतां मनुष्यतां सुकल्पां पटुतरेन्द्रियाम् ॥ १६ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, तत्तच्छक्तिशाबल्ये तत्तद्दोषेणाहमपि दुष्येयं तत्राह सत्त्वमिति । योगमायया स्वरूपभूताचिन्त्यशक्त्या कल्पिताः त्वयि तेषां सत्त्वेऽपि स्पर्शो नास्तीत्येवमेव योजिता इत्यर्थः तदुक्तं श्रीगीतासु——

"मया ततमिदं विश्वं जगदव्यक्तमूर्त्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्"

इति ॥ १३ ॥

तस्माद्यर्हि यदा प्रलयसमये कार्यरूपा अमी भावाः विकल्पिताः तदिच्छामय्या योगमायया त्वदृष्टितो वियोजितास्तदा न सन्ति न भवन्ति त्वञ्चामीषु विकारेषु कार्यरूपेषु न भवसि हि निश्चये अन्यदा सृष्टिस्थित्योस्तु तेषु व्यावहारिकः योगमाययैवास्पृष्टोऽपि व्यवहारसत्तासाधकतया वर्त्तस इत्यर्थः ॥ १४ ॥

ईदृशत्वदज्ञाननिबन्धनश्चायं जीवानां संसार इति तान् शोचति—गुणेति । तथा चैकादशे "भयं द्वितीयाभिनिवेशतः स्यात्" इत्यादि अन्यत्तैः । यद्वा एतस्मिन् कथञ्चिदाश्रयणमात्रेण साक्षात्सर्वैरनुभूयमानेऽपि गुणानां त्वत्कारुण्यादीनां प्रवाहे परम्परायां सत्यामपि अखिलस्य सर्वस्यात्मनो जीवस्य गतिं शरणं त्वां प्रत्यबुधा अज्ञाः सन्तः त्वामजानन्त इत्यर्थः । सूक्ष्मामिति स्वशक्त्या दुर्ज्ञेयत्वात् ॥ १५ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ सांसारिकेषु विशेषतो नरं शोचति यदृच्छयेति । अयत्नेनैव प्राप्य पूर्वकर्मणैवाधुनोपसादितत्वात् सुकल्पां स्वार्थसाधने योग्यां सुकल्पामिति पाठेऽपि तथैवार्थः । स्वस्वार्थे पुरुषार्थे त्वयि प्रमत्तस्यानवहितस्य हे ईश्वरेति ! ईश्वरमायाया दुर्लङ्घ्यत्वादिति भावः ॥ १६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तस्मादिति । एते भावाः त्वया सृष्टाः त्वया सृष्टत्वात् न सर्वदा सन्ति किन्तु संहार्यत्वादनित्या इत्यर्थः । विकारेषु अन्तःप्रविश्य स्थितोऽपि सदा सन्निति व्यावहारिकः शास्त्रैर्व्यवह्रियते इत्यर्थः ॥ १४ ॥

अखिलात्मन इति जीवस्येत्यर्थः ॥ १५ ॥

अनृतं शरीरं सुकल्पं वर्णाश्रमानुत्कर्षवत् ॥ १६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमन्तर्याम्यकारिणो मम विकारित्वं दुर्वारमित्यत आह—सत्त्वमिति द्वाभ्याम् । सत्त्वादयः प्रकृतिगुणास्तेषां वृत्तयः परिणामरूपा महदादयश्च परे ब्रह्मणि त्वय्यद्धा त्वय्येव योगमायया सङ्कल्परूपज्ञानेन योगेन कल्पितास्त्वयि कृता इत्यर्थः । ब्रह्मणि परे इत्यस्य प्रधानपुरुषेश्वर इत्यादिः प्रधानपुरुषौ परौ प्रधानपुरुषेश्वर इत्युपक्रमात् एवञ्च सूक्ष्मचिदचिद्विशिष्टे त्वयि कल्पिता इत्यर्थः ॥ १३॥

यत एवं तस्मात्कल्पिताः सृष्टाः अमी भावाः महदादयस्त्वयि चिदचिद्रूपां निकृष्टे त्वयि न सन्त्येव सूक्ष्माश्च सन्त्येव महदादिभावानां प्रकृत्यादिष्वेव साक्षात्सम्भवः त्वयितु प्रकृत्यादिद्वारेति न विकारित्वमिति भावः । यर्हि यदा त्वयि न सन्त्येव तदा विकारेष्वन्तःप्रविश्य सदा सन्निति व्यावहारिकः शास्त्रैर्व्यवह्रियत इत्यर्थः । अस्मदुक्तेष्वर्थेषु शास्त्रमेव प्रमाणमिति तात्पर्यम् ॥ १४ ॥

सर्वेऽपीत्थं किं न विदुरित्यत आह—गुणप्रवाह इति । सत्त्वादिगुणप्रवाहरूपे एतस्मिन् संसारे पतिता इति शेषः सर्वान्तरात्मनस्तव सूक्ष्मां दुर्ज्ञेयां गतिं याथात्म्यमबुधाः अजानन्तः अबोधेन तेनैवाज्ञानेन तन्मूलैः कर्मभिः पुण्यापुण्यात्मकैर्हेतुभिः संसरन्ति ॥ १५ ॥

इत्थं भगवद्याथात्म्यमजानन्तमनुशोचति—यदृच्छयेति । इह लोके दुर्लभां सुकल्पां पटुतरेन्द्रियां नृतां नरत्वं प्राप्यापि हे ईश्वर ! त्वन्मायया स्वार्थे स्वश्रेयस्साधने त्वद्याथात्म्याज्ञाने प्रमत्तस्यानवहितस्य पुंसो वयः आयुर्गतमहो वृथा गतमित्यर्थः ॥ १६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ननु, तत्तद्भक्तिशाबल्ये तत्तद्दोषेणाहमपि दुष्येयं तत्राह—सत्त्वमिति । योगमायया स्वरूपभूताचिन्त्यशक्त्या कल्पिताः तेषां सत्त्वेऽपि स्पर्शो नास्त्येवमेव योजिता इत्यर्थः । तस्माद्यर्हि यत्र प्रलयसमये कार्यरूपा विकल्पिता अमी भावाः योगमायया त्वत्तो वियोजितास्तदा न सन्ति न भवन्ति नश्यन्तीत्यर्थः । त्वञ्चामीषु विकारेषु कार्यरूपेषु न भवसि नात्मसत्तां दर्शयसीत्यर्थः । अन्यदा तु सृष्टिस्थित्योस्तेषु व्यावहारिकः । योगमाययैवास्पृष्टोऽपि व्यवहारसत्तासाधकतया वर्तस इत्यर्थः ॥ १३—१४ ॥

ईदृशत्वदज्ञाननिबन्धनश्चायं जीवानां संसार इति तान् शोचति गुणेति ॥ १५—१८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं कार्यकारणरूपत्वं निरूप्य सर्वाधारत्वं निरूपयन् तत्कृतगुणदोषाभावार्थमाह—सत्त्वमिति । सत्त्वादयो गुणाः सद्वृत्तयः अहिंसाद्याः एकादशस्कन्धोक्ताः ते सर्वे त्वय्येव ब्रह्मणि परे शब्दब्रह्मणाख्ये तवैव योगमायया तत्र कल्पिताः अतस्तदाधारत्वेऽपि न तद्दोषसम्बन्ध इत्यर्थः । ब्रह्मणीत्यपहतपाप्मत्वमुपपत्तिरुक्ता उपपत्त्यन्तरं परमिति नियामकत्वाच्च त्वदाज्ञयैव तत्र स्पृशन्तीत्यर्थः । योगमाया च तादृश्येव यथा योगेन नाधारं स्पृशेयुः ॥ १३ ॥

ननु विद्यमानाः कथं न स्पृशन्तीत्याशङ्कायामाह—तस्मान्न सन्त्यमी भावा इति । यर्हि त्वयि विकल्पिताः त्वत्तो भिन्नतया निरूपिताः तदा तेषां पृथक् सत्त्वाभावात् न सन्त्येव अविकल्पितास्तु सन्ति न तु विकल्पिता इति स्थितिः अतो दोषाभावार्थं तेषां विकल्पो योगमायारब्धत्वञ्च निरूप्यते न हि मायया छिद्यमानः पटः छिन्नो भवति मायिकपटधर्मा वा कदाचित् सम्बन्धिषु भवन्ति ननु तेषामभावे भगवान् कथं सर्वाश्रय इतिचेत्तत्राह—त्वञ्चामीषु विकारेषु न वर्तस इत्यर्थः । विकारित्वमेव हेतुः नन्वेवं सति कथमसद्भिर्व्यवहार इति चेत्तत्राह—येऽन्यदा व्यावहारिका इति । यथा अन्यदा एते व्यावहारिकाः . तथा विद्यमानदशायामपि व्यावहारिकाः भविष्यन्तीति को दोष इत्यर्थः ॥ १४ ॥

एवं भगवतो निर्दोषपूर्णगुणत्वं निरूप्य एतत्सिद्धान्तं ये न जानन्ति तान्निन्दति यतोऽस्य ज्ञानस्य साधकत्वं भविष्यतीत्याशयेनाह—गुणप्रवाह एतस्मिन्निति । गुणानामयं प्रवाहः अनेन मायाकल्पितपक्षो निरुक्तः तत्रत्यबुद्ध्या ये वर्तन्ते ते अबुधाः तुशब्दः तेषां बुधत्वपक्षं सिद्धान्तान्तरसिद्धं वारयति ननु विषयाणामसत्यत्वे यद्यन्यः समीचीनो न भवेत् तदा स आत्मार्थं गृह्णीत तदभावादगत्यागत्याविषयेष्वेव स्थातव्यमिति चेत्तत्राह—अखिलात्मनः गतिं सूक्ष्मां न जानन्तीति भगवान् सर्वात्मा स च पूर्णानन्तगुण इति पूर्वमेवोक्तम् अत आत्मनो भगवत्त्वसिद्धौ तेनैव कृतार्थतेति किं विषयैः किञ्च तस्य च सूक्ष्मा गतिर्वृत्तिः भक्तिमार्गानुसारिणी सा वा ज्ञातव्या उभयाबोधे इह कर्मभिः संसरन्ति अखिलात्मनः अबोधे न संसरन्तीति योजना गतिं सूक्ष्मां वा अबुध्वेति विपरिणामः कर्तव्यः तस्मात्

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सार्धद्वयं निरूपितं भगवानात्मत्वेन ज्ञातव्यो भक्तिर्वा कर्त्तव्येति ॥ १५ ॥

एतदुभयज्ञाने दोषमाह—यदृच्छया नृतां प्राप्येति । अज्ञानाविष्टाः बहून्येव कर्माणि कुर्वन्ति तेन नानाविधेपि संसारे प्रवाहन्यायेन; कदाचिद्दैवगत्या नृतामपि प्राप्नुवन्ति तत्रापि सुकल्यां भगवद्भजनादिषु सामर्थ्येन इहास्मिन् विचारे संसारे दुर्लभाय एवं पुरुषार्थसाधनीभूतं दुर्लभशरीरं प्राप्य स्वार्थे ज्ञाने भक्तौ यः प्रमत्तः विघ्नैराक्रान्तः उभयविरोधिभिराकुल इत्यर्थः । तादृशः स्वल्पपुरुषार्थसाधनीभूतं देहे वय एव प्रयोजकं तस्मिन् गते अग्रतः किं साधयिष्यति एतादृशं वयस्त्वन्मायया गतं भोगेच्छया ईश्वरेति समर्थत्वाज्ञापना ॥१६॥

——

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु, यदि प्रधानमहमेवास्मि तर्हि जगत्कारणस्य तस्य विकारित्वे ममैव विकारित्वं प्रसक्तमत आह—सत्त्वमिति द्वाभ्याम् । गुणास्त्रयो ये प्रधानसंज्ञा याश्च तद्वृत्तयस्तत्परिणामा महदादयश्च ते सर्वे योगमायया त्वत्स्वरूपभूताचिन्त्यशक्त्या त्वयि तेभ्यः परे गुणातीतेऽपि कल्पिताः समर्पिताः अवर्त्तमाना अपि ते वर्त्तितास्त्वद्दृष्टिपथे योजिता इत्यर्थः ॥ १३ ॥

तस्मात् यर्हि महाप्रलये अमी भावा विकल्पिताः त्वदिच्छामय्या योगमायया त्वद्दृष्टितो वियोजितास्तदा त्वयि न सन्ति न भवन्ति त्वञ्च अमीषु विकारेषु कार्यरूपेषु तदा न वर्त्तसे अन्यदा सृष्टिस्थित्योस्तु त्वं तेषु व्यवहारिकः व्यवहारनिर्वाहकः सन् वर्त्तमं तेष्ववर्त्तमानोऽपि व्यवहारसिद्ध्यर्थम् अन्तर्यामित्वाद्यंशमाविष्कृत्य वर्त्तसे इत्यर्थः । यदुक्तं गीतासु—

"मया ततमिदं सर्वं जगदव्यक्तमूर्त्तिना ।
मत्स्थानि सर्वभूतानि नचाहं तेष्ववस्थित ॥
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।"

इति । तस्मात्त्वं स्वरूपेण गुणमयप्रधानरूपो न भवसीति नास्ति ते विकार इति भावः ॥ १४ ॥

अत एव एतस्मिन् गुणप्रवाहे संसारे अखिलात्मनस्तव सूक्ष्मां गतिमुक्तलक्षणाम् अबुधा अजानन्तः अबोधेन तेनैव कर्मभिः संसरन्ति ॥ १५ ॥

एवम्भूतं ज्ञानं त्वद्भक्त्या नृजन्मनि सम्भवेत् तत् यस्य नाभूत् तं शोचति—यदृच्छयेति । सुकल्यां पटुतरेन्द्रियाम् ॥ १६ ॥

——

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु, तर्हि मृत्सुवर्णादिवत् अहमपि स्वरूपत एव विकारित्वादिदोषभागस्मि किमित्यत आह—सत्त्वमिति द्वाभ्याम् । सत्त्वं रजस्तम इति गुणाः त्रिधाकारेण स्थिताः ये च तद्वृत्तयश्च ये तेषु वृत्तिः स्थितिर्येषां देवमनुष्यपश्वादिभावमापन्नानां जीवानां ते तथा तद्वृत्तयश्च याः इति पाठे वा गुणवृत्तयः चकाराज्जीवा बोध्याः सर्वे अचेतनाः तद्गताः सर्वे उत्तममध्यमनिकृष्टाः जीवाश्च युज्यन्ते संयुज्यते मायया इति योगोऽनुशायी परा प्रकृतिसंज्ञो जीवः तेन सहिता माया अपरा प्रकृतिस्तया ब्रह्मणि परे सर्वविकारिपदार्थविलक्षणे निर्विकारस्वरूपे त्वयि कल्पिताः त्वयैव स्वस्मिन् स्वकीयाभ्यां परापराभ्यां प्रकृतिभ्यां रचिता इत्यर्थः ॥ १३ ॥

यर्हि यदा एवं त्वयि त्वयैव स्वप्रकृतिभ्यां विविधतया कल्पिताः रचिताः तदा त्वममीषु विकारेषु परिणामित्वादिव्यवहारशून्यः अन्यत् चिदचिद्विलक्षण एव आव्यावहारिकः ईशनियमादिव्यवहारसाधक एवासि तस्मात् अमी भावाः विकारित्वकर्मवश्यत्वसंसारित्वादयः त्वयि नैव सन्तीत्यर्थः ॥ १४ ॥

ननु, यदि गुणवृत्तयोऽपि जीवाः अस्मदीयशक्तिभूता एव तर्हि कुतः संसरन्तीत्यत्र समाधानमाह—गुणप्रवाहे इति त्रिभिः । अखिलानां चेतनाचेतनपदार्थानां स्वशक्तिभूतानामात्मनां आश्रयस्य सूक्ष्मां गतिम् सर्वात्मताम् अबुध्वा तेनैवाबोधेन तन्मूलकैः कर्मभिश्च संसरन्ति ॥ १५ ॥ १६ ॥

——

भाषा टीका ।

सत्व रज तम ए मायाके तीन गुण तथा इनके वोन महदादि तत्व यह सब सूक्ष्म चेतनाचेतन युक्त परब्रह्म आपके बीच मे आप के सङ्कल्प से साक्षात् रचे भये हैं ॥ १३ ॥

जिस कारण सूक्ष्म चेतनाचेतनविशिष्ट ब्रह्म स्वरूपमें इन उपरोक्त पदार्थों की उत्पत्ति है इसी कारण चेतना चेतनों से बिलक्षण स्वरूपमात्र आप के बीच में उपरोक्त प्रपञ्च साक्षात् नहि है किन्तु चेतनाचेतन के द्वारा है जब सृष्टिदशा में चेतनाचेतनके द्वारा उक्त प्रपञ्च आप में रहता तब सब के भीतर व्याप्त होकर परमात्मा सदा विद्यमान है इस प्रकार का शास्त्रसे व्यवहार है ॥ १४ ॥

माया के गुणों के प्रवाह रूप इस संसार में पडे भए अज्ञानीजन, सर्वान्तर्यामी आपके यथावत् तत्व को नहि जानकर उसी अज्ञान से और उस अज्ञान के कारण पुण्य पाप रूप कर्मों से इस संसार में भ्रमते हैं ॥ १५ ॥

अति दुर्लभ सुन्दर देह इन्द्रियादि सम्पन्न मनुष्य योनि को किसी सुकृत के प्रभाव से इस संसार में प्राप्त होकर भी हे ईश्वर ! आपकी माया से मुक्ति के साधन भक्ति प्रपत्ति के विषय में असावधान इस पुरुष की आयु वृथा हि चली गई ॥ १६ ॥

——

असावहं ममैवैते देहे चास्यान्वयादिषु ।
स्नेहपाशैर्निबध्नाति भवान् सर्वमिदं जगत् ॥ १७ ॥
युवां न नः सुतौ साक्षात् प्रधानपुरुषेश्वरौ ।
भूभारक्षत्रक्षपण अवतीर्णौ तथाऽऽत्थ ह ॥ १८ ॥
तत्ते गतोऽस्म्यरणमद्य पदारविन्दमापन्नसंसृतिभयापहमार्त्तबन्धो ।
एतावताऽलमलमिन्द्रियलालसेन मर्त्यात्मदृक्त्वयि परे यदपत्यबुद्धिः ॥ १९ ॥
सूतीगृहे ननु जगाद भवानजो नौ सञ्जज्ञ इत्यनुयुगं निजधर्मगुप्त्यै ।
नानातनूर्गगनवद्विदधज्जहासि को वेद भूम्न उरुगाय विभूतिमायाम् ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अहो किमिति प्रमत्तोऽसि त्वया बहुभिः पाशैर्निबद्धत्वा- दित्याह—असावहमिति । देहे अस्य देहस्यान्वयादिषु पुत्रा- दिषु च ममैवैत इति ॥ १७ ॥

अहो स्वपुत्रयोरावयोः किमिदमारोप्यते अत आह—युवा- मिति । भूभारक्षत्रक्षपणार्थमवतीर्णौ तथा ह निश्चितमात्थ कथ- यसि ॥ १८ ॥

तत्तस्मादरणं शरणमापन्नानां संसृतिभयमपहन्तीति तथा तत् ननु त्वमति सुखी वृथा किं निर्विद्यसेऽत आह—एता- वतेति । इन्द्रियलालसेनेन्द्रियार्थतृष्णया यद्येनेन्द्रियलालसेन मर्त्ये शरीरे आत्मदृगात्मबुद्धिरहं त्वयि च परमेश्वरे अपत्यबुद्धि- रस्मि तेनालमलं पर्याप्तमिति ॥ १९ ॥

ननु, कुत एतदहं परमेश्वर इति तत्राह—सूतीगृह इति । नौ आवयोः अनुयुगं प्रतियुगम् यदा सुतपाः पृश्निरिति युग्मम् यदा कश्यपो दितिश्चेति युग्मम् अधुना वसुदेवो- देवकीतियुग्मम् एवं हि प्रतियुग्ममज एवाहं सञ्जज्ञे अवतीर्ण इति भवान्नूनं जगाद नन्वन्योऽसौ चतुर्भुजो देव इति तत्रा- ऽह नानातनूरिति गगनवदसङ्ग एव त्वं भूम्नः सर्वगतस्य विभूतिरूपां मायां को वेदेति ॥ २० ॥ २१ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्र प्रपणयरोषमिवाह—असाविति ॥ १७ ॥

नोऽस्माकमिति " अस्मदोद्वयोश्च "(१।२।५९)इति बहुवचनम् आत्थ जन्मसमये कथितवानसीत्यर्थः ॥ १८ ॥

एवं यस्माद्भवानेव मायामयैः स्नेहपाशैर्जीवानां बन्धक- स्तत्तस्मात्तेषां तन्निवृत्त्यर्थमद्य त्वत्कृपया विवेकोदये सति ते तव पदारविन्दं शरणागतोऽस्मि ननु यो बन्धको भवति स कथं मोक्षे प्रवर्त्तेत तत्राह आपन्नेति । आपन्नाः शरणागताः ननु न ते शरणागताः त्वमेव तदर्थं प्रार्थयसे तत्राह हे आर्त्त- बन्धो ! सहजकरुणस्य न तदपेक्षेति तथा तेषां सर्वत आर्त्ति- विधानं पुरुषार्थशिरोमणिप्रसम्मुखीकरणायेति च भावः । एवं संसारिकाणां निवेदनं कृत्वा दैन्येन मर्त्यलीलमप्यात्मानं मर्त्य- मेव मत्वा निजनिर्वेदनमाह—एतावतेति । इन्द्रियलालसेन परमेश्वरे पुत्रे सति मम सम्पत्तिविशेषः स्यादिति तृष्ण- येव ननु श्रीव्रजेश्वरवत् त्वत्प्रेममात्रेणेति भाव अन्यत्तैः ॥ १९ ॥

ननु मयि तवापत्यबुद्धिः कल्पिता न किन्तु वास्तवी यतः स्वप्रतिश्रुतसत्यत्वाय साक्षाद्युवाभ्यां जातस्सन् युवाभ्या- मेव पूर्वपूर्वमपि जन्म स्वयमेवाहमुक्तवान् तदङ्गीकृत्य परिहरति-सूतीति । किं जगादाहं तत्राह अज इति । अजोपि जन्मरहितोपि नौ आवयोः सम्यक् साक्षादेव जज्ञे आवि- र्भावमात्रत्वेपि जन्मप्रकारं स्वीकृतवान् तत्राप्यनुयुगं तत्र कैमुत्येन कारणमपि दर्शयति---निजानां भक्तानां धर्मो भजनलक्षणस्तस्य गुप्त्यै पालनाय किं वक्तव्यमावयोस्तत्पालनायेति यद्वा निज- स्त्वदीयो यो धर्मः स्वभावः भक्तमनोरथपरिपूरणरूपस्तस्य पालना- येति नन्वेवञ्चेत् मत्कृपामयी तर्हि वास्तवी च तर्हि कथं मय्यपत्य- बुद्धिराक्षिप्यते तत्राह गगनवत्तद्दोषास्पृष्ट एव त्वं नाना- तनूः प्राकृतनरादिजीवजातिरूपाः विदधत् तादृशाप्राकृतस्वत- न्त्राविर्भावद्वारा विशेषेण दधत् स्वीकुर्वन् जहासि तत्तावि- र्जाविर्भावास्पदनित्यधामगमनेन त्यजसि तस्मात्तन्मध्यपाति- नावावामपि तादृशाविति नात्यन्तीनत्वादपत्यबुद्धिर्न युक्तैवेति भावः । ननु नित्यावेव युवां प्राप्स्येथे मद्गतिं परामित्युक्त- मेव तर्हि कथमेतावद्दैन्यं कुरुषे तत्राह हे उरुगाय ! वेदगान- मात्रप्रसिद्ध ! भूम्नः अनन्तवैभवपरिपूर्णस्य तव परमगत्याख्यां विभूतिरूपां मायां स्वरूपशक्तिं को वेद जानात्यपि तस्मात् तत्परामर्शोनास्माकं दीनानां किमिति भावः । अथवा ननु यद्येवमपत्यबुद्धिमाक्षिपसि तर्हि कथं तां कुरुषे तत्राह सूतीत्य- र्थेन । यद्यप्येवमघटमानं त्वय्यपत्यत्वं तथापि त्वद्वाक्यप्रा- माण्येनैवाहं तत्र प्रवर्त्ते इति भावः । नन्वहं युष्मद्देहप्रवेशमा- मात्रापेक्षया तथोपदिष्टवान् ननु तेनाहमपत्यं स्यां श्रुतौ मम व्याप्तिसमष्टिजीवदेहमात्रप्रवेशश्रवणेनातिव्याप्तिप्रसङ्गात् "तत्सृष्ट्वा तदेवानुप्राविशत् "इत्यादौ तत्राह गगनवदसङ्ग एव त्वं जीवानां नानातनूरन्तर्यामिरूपेण प्रविश्याङ्गीकुर्वन् जहासि यत् तां तव क्षुद्रैश्वर्यरूपां को वेद बहुमन्यत इत्यर्थः । अयन्तु तवा- वयोश्च प्रवेशो विद्वद्भिरपि स्तूयते तस्माद्विद्वदादयोपि प्रमास्ति प्रमाणं किन्त्वात्मा योग्यतया मम तत्राप्यसम्भावना इति यत इति भावः ॥ २० ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अन्वयादिषु देहान्वयः आदिर्येषां तेषु देहानुबन्धिषु इत्यर्थः ॥ १७—१९ ॥

सूतीगृहे सूतिकागृहे गगनवदिति दोषास्पर्शो उक्तः वैषम्यादिदोषरहित इत्यर्थः ॥ २०–२१ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च असाविति । देहेऽस्य देहस्यान्वयादिष्वनुबन्ध्यादिषु पुत्रदारादिष्वसौ देहोऽहं इमे पुत्रादयो ममेत्येवंरूपैः स्नेहपाशैः सर्वमिदमाब्रह्मपश्वादिपर्यन्तं जगद्भवान् बध्नाति बद्धं करोति ॥ १७ ॥

यदुपक्रान्तं "जाने वामस्य यत्साक्षात्प्रधानपुरुषौ परौ" इति तमुपसंस्मारयति-युवामिति। भूमेर्भारभूतक्षत्रियनिरसनार्थमवतीर्णोऽहमित्येतदात्थ सूतिकागृहे कथितवानसि हीत्यर्थः ॥ १८ ॥

तत्तस्मादशरण्यः उपायान्तरशून्योऽहं हे आर्त्तबन्धो ! आपन्नानां संसृतिभयमपहन्तीति तथा तत्तव पदारविन्दं शरणङ्गतोऽस्मि ननु, त्वमतिसुखी वृथा किमिति निर्विद्यस इत्यत आह—एतावतेति। यद्यस्मात् मर्त्ये शरीरे आत्मदृगात्मबुद्धिरहं त्वयि च प्रधानपुरुषेश्वरेऽपत्यबुद्धिरस्मि अतः इन्द्रियार्थतृष्णयाऽलमलं पर्याप्तमित्यर्थः ॥ १९ ॥

ननु, कुत एतदहं परमेश्वर इति तत्राह—सूतीगृह इति। ननु हे भगवन् ! सूतीगृहे जगाद किं तद्यदजः कर्माद्युत्पत्तिरहितोप्यहं निजधर्माणां स्वकृतधर्ममर्यादानां गुप्त्यै रक्षणायानुयुगं प्रतियुगं जज्ञेऽवतरामीत्येतत् नन्वन्योऽसौ चतुर्भुजो देव इत्यत आह—नानेति। नानातनूर्विदधत्तावद्बिभ्राणः अजहासि गगनवद्यथा गगनं सर्वत्र व्याप्नुवदप्यजहत्स्वभावं तथा भवानपि नानातनूष्ववस्थितोप्यजहत्स्वभाव इति दृष्टान्तार्थः इत्थमहं सम्भावयामि ततस्तव माहात्म्यं को वेदेत्याह हे उरुगाय ! भूम्नः सर्वगतस्य तव विभूतीर्मायाः आश्चर्यशक्तीश्च को वेद न कोपि वेदेत्यर्थः ॥ २० ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथात्मानमपि दैन्येन मर्त्यधर्माणं मत्वा निजनिर्वेदनमाह—एतेति । इन्द्रियलालसेन परमेश्वरे पुत्रे सति मम सम्पत्तिविशेषः स्यादिति तृष्णयैव नतु श्रीव्रजेश्वरवत् त्वत्प्रेममात्रेणेति भावः ॥ १९ ॥

सूतीगृहे अस्थानान्तरप्रघट्टके इदयं श्रीकृष्णस्तु तत्र निजमहिमव्यक्तौ सौशील्येन सङ्कुचित इत्यर्थः ॥ २० ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

न केवलं भोगेच्छा किन्त्वन्ये दोषा जाता इत्याह-असावहमिति । असौ देहः वसुदेववाच्यः अहमित्यस्मिन् या बुद्धिः एते च पुत्रवित्तादयः ममैव नन्वहमेतेषामपीति । एवमहम्ममताभ्यां व्याप्तः नाशं गच्छामीत्येको दोषः द्वितीयमाह देहेचास्यान्वयादिष्विति । अस्य देहस्यान्वयः वंशपुत्रादिः आदिशब्देन स्त्रीश्वशुराद्याः न केवलं तेष्वेव किन्तु देहे च चकारात् तत्सम्बन्धिषु पित्रादिष्वपि स्नेहपाशैरिति बध्नातीति न केवलं मामेव किन्तु सर्वमेव जगत् अत्रैकोऽर्थः सन्दिग्धः अहं किं विषत्वेन त्वां बध्नामि अथ चेश्वरत्वेन ॥ १७ ॥

एवं जगदपि तत्राह—युवां न नः सुताविति । विषयत्वेन चेद्बध्नासि तदोपकारोपि भवेत् वस्तुस्वभावात् परं विषयतैव नास्ति यतो युवां न नः सुतौ एवं विषयत्वेन बन्धनं दूरीकृत्य प्रकारान्तरेण बन्धने सामर्थ्यमाह—साक्षात्प्रधानपुरुषेश्वराविति प्रधानपुरुषयोरीश्वरौ कालपुरुषोत्तमौ तादृशयोः कथमागमनमिति चेत्तत्राह, भूभारक्षत्रक्षपणे अवतीर्णाविति । किमत्र प्रमाणमिति चेत्तत्राह—तथात्थ हेति । यथा ततश्च शौरिः भगवत्प्रचोदित इति ग्रन्थे अनुक्तमपि प्रेरणम् अस्मादेव वाक्यादवगम्यते एवमत्रापि भूभाररूपक्षत्रियहननार्थमवतीर्ण इति भगवतैव कदाचिदुक्तमिति ज्ञातव्यं हेत्वाश्चर्यजनकम् अनेन अत्र कल्पना निवर्त्तिता ॥ १८ ॥

तर्हि किमद्योच्यत इत्याशङ्कायामाह—तत्ते गतोऽस्म्यरणमद्येति। ते पदारविन्दम् अहं शरणं गतोऽस्मि अनेन पूर्वं भवान् बध्नातीति अनिष्टमुक्तं तन्निवृत्तिरर्थात्सूच्यते चरणारविन्दशरणागतेः को विशेष इत्याशङ्कायामाह—आपन्नसंसृतिभयापहमिति । आपन्ना ये शरणागतास्तेषां भयमपहन्तीति तथा अतस्त्वयि विलम्बमानेऽपि चरण एव मां कृतार्थं करिष्यतीति चरणानुस्मृतिः भवतोऽपि यथा स्नेहो भवति तदाह—आर्त्तबन्धो इति । एतावता स्वस्यार्त्तत्वं पूर्वमेवोक्तमित्यध्यवसीयते ननु विषया भुज्यन्तां किं वैराग्येणेत्यत आह—एतावतालमिति । इन्द्रियलालसेन एतावता अलम् इन्द्रियमिन्द्रियलालसा सा पूर्यतामित्यर्थः । इन्द्रियलालसेन वा मया एतावता एवमवस्थां प्रापितेन अलमिति अतःपरमियमवस्था मा भवत्वित्यर्थः । किञ्च मर्त्यात्मदृगिति द्वितीयो दोषः त्वयि परे यदपत्यबुद्धिरिति तृतीयः भोगेच्छादेहाभिमानिनः भगवति चान्यथा बुद्धिरिति अचिकित्स्यस्त्रिदोषः एतं दूरीकुर्वित्यर्थादुक्तं भवति ॥ १९ ॥

नन्वेतत्सर्वं त्वया कुतोऽवगतमिति चेत्तत्राह—अस्मिन्नर्थे त्वमेव गुरुरिति सूतीगृहे ननु जगाद भवानिति किं जगादेत्यत आह, नौ आवयोरज एव सञ्जात इति देवकीवसुदेवयोः पूर्वदृष्ट एवाहं जात इति तत्र मम सन्देहः किमस्मदर्थमेव भगवान् जातः आहोस्विदनुयुगं निजधर्मगुप्त्यै जायमान इति ननु धर्मरक्षार्थं जनने स्वगृहे कथं जायेत अतस्त्वदर्थमेव जात इति चेत्तत्राह—गगनवद्विदधज्जहासीति । आकाशो हि सर्ववस्तुभिः स्वाकारं करोति घटवत् पटवत् पुरुषवच्चेति तस्मात् स्थानात् तस्मिन् चापगते फलान्तरे रूपाणि गृह्णन्नेव पूर्वरूपाणि जहाति एवं भगवानप्यविकृतः देवकीगृहे प्रादुर्भूतः तत्रत्यमायां दूरीकृत्य जातो निश्चल एव ततः प्रदेशान्तरगमने पूर्वस्थाने माया सम्भूता स्थलान्तरस्थापगतेति प्रतिक्षणं रूपान्तराणि भवन्तीतापि देहग्रहणापरित्यागौ इयांस्तु विशेषः उपाधिवशात्तस्य देहग्रहणं भगवतस्तु मायायव-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

निकापगमादिति अत एव किमस्मदर्थमागतः अन्यार्थं वा समागत इति प्रतिक्षणं गृहीतरूपाणां प्रयोजनवत्त्वमेव दुर्लिरूपं प्रयोजनविशेषस्य का वार्त्तेति भावः। तर्हि किमर्थं सिद्धान्तो ज्ञातव्य इति चेत्तत्राह—हे उरुगायेति। सर्वैरेवात्र गीयत इति गानार्थमेवं करोषीत्यर्थः। विशेषतो वक्तव्ये न ज्ञायत इत्याह विभूतिरूपां मायां को वेदेति॥ २०॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

किं कर्त्तव्यं यतस्त्वज्ज्ञानं भवेत्तस्यां त्वन्मायावकाशमेव जनो न प्राप्नोतीत्याह—अलाविति॥ १७॥

तत्रावामेव प्रमाणं यदावयोर्देहपुत्रादिष्वहन्ताममते वर्त्तेते एवेत्याह—युवामिति। नः आवयोर्न सुतौ तदपि सुतबुद्ध्या युवयोर्ममता वर्त्तत एवेति भावः। क्षत्रक्षपणे भूभाररूपक्षत्रियक्षयाय तथैव आत्थ स्वजन्मसमये कथितवानसि॥ १८॥

अरणं शरणं ननु भोगांस्तावद्भुङ्क्ष्व कुतस्ते संसार इत्यत आह—एतावतैव इन्द्रियलालसेनालं यत् येन मर्त्ये देहे आत्मदृक् आत्मबुद्धिरहं त्वयि च परे परमेश्वरे अपत्यबुद्धिरस्मीत्यतोऽज्ञानमूलः संसारो मम नास्त्येवेति भावः॥ १९॥

नन्वहं परमेश्वर एव तस्य पुत्रोऽभूवं यस्य तव कथं संसार इति तत्राह-सूतीगृहे सूतिकागारे ननु भोः भवानेव नौ आवयोरनुयुगं प्रतियुगं (यं) यदा सुतपाः पृश्निरिति युग्मं यदा च कश्यपो दितिश्चेति युग्मम् अधुना वसुदेवो देवकी तस्मात् सर्वस्मादेव आवयोर्युग्मात् सकाशे अवतीर्ण इति जगाद अत एव आवयोर्नानातनूः सुतपःपृश्न्यादिनाम्नीर्विदधत् सृजन् गगनवदलिप्त एवावयोः प्रतिजन्मापि पुत्रो भवन्नप्यनासक्त एव जहासि आवां त्यजसि संसारं च न निवर्त्तयसि अतस्तव भूम्नः परमेश्वरस्य विभूतिरूपां मायां को वेद॥ २०॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अस्य देहस्य अर्थेष्वादिषु अपत्यादिषु॥ १७॥

यदुक्तं "जाने वामस्य यत्साक्षात्प्रधानपुरुषेश्वरौ" इति तदुपसंहरति-युवामिति। भूभारस्य क्षत्रस्य क्षपणे अवतीर्णौ तथैव ह स्फुटम् आत्थ सूतीगृहे कथितवानसि॥ १८॥

तस्मात् हे आर्तबन्धो! तापत्रयपीडितस्वभक्तरक्षक! संसृतिभयभञ्जनं ते पदारविन्दमरणं गतोऽस्मि तापत्रयपीडितं मां संसाराद्विमोचय इति भावः। ननु भवद्विधानां संसारोऽकिञ्चित्करः स्वधर्मार्जितान् भोगान् भुङ्क्ष्वेत्यत आह—एतावतेति। यत् येन व्यामोहकेनेन्द्रियलालसेन हेतुभूतेन मर्त्ये शरीरे आत्मदृक् आत्मदृष्टिः परे प्रधानक्षेत्रज्ञाभ्यां विलक्षणे परमेश्वरे त्वयि अपत्यबुद्धिश्चासि तेनेन्द्रियलालसेन अलमलं पर्याप्तमित्यर्थः॥ १९॥

युवां न नः सुतौ साक्षात्प्रधानपुरुषेश्वरौ भूभारक्षत्रक्षपण अवतीर्णौ तथाऽऽत्थ इति श्लोकार्थं विवृणोति...सूतीति। ननु नौ अनुयुगं युगम्प्रति नौ आवयोः पृश्निगर्भादिरूपः भवान् अनुजगाद तदाह— अजः सञ्जज्ञे इति। अजश्चक्रीमूर्तिरेवाहं सञ्जज्ञे स्वरूपतस्तु जीवोपि अज एवेत्यर्थः। तत्र तत्र च निजधर्मस्य भक्तिलक्षणस्य गुप्त्यै रक्षणाय, नानातनूः निजधर्माधिकारिशरीराणि दधत् रक्षणीयतया बिभ्राणः निजधर्मविरोधिशरीराणि जहासि त्यजयसि तथापि त्वमु गगनवत् निर्मल एवेत्यर्थः। एतत्त्वदुक्त्यैव वयं जानीमः स्वतस्तु हे उरुगाय! भूम्नः तव विभूतिमायां विभूतिभूतां सुरनरादिरूपामपि मायां त्वच्छक्तिलेशरूपामपि को वेद न कोपीत्यर्थः॥ २०—२१॥

---

भाषा टीका।

देह में यह ब्राह्मण क्षत्रिय रूप मै हूं इस प्रकार का अहंकार तथा इस देह के सम्बन्धि स्त्री पुत्रादि को मे प स्त्री पुत्रादिक मेरे हि हैं इस प्रकार का ममकार इस प्रकार के स्नेह रूप फांसीयों से यह सब जगत् आपने बांध राखा है॥ १७॥

आप दोनो हमारे पुत्र नहि हो किन्तु भूमि के भार का नाश करने के निमित्त साक्षात् जीव माया के नियन्ता परमात्म स्वरूप आप ने अवतार लियो है तथा जन्म काल में आपने स्वयं स्पष्ट कहा है॥ १८॥

हे आर्त्तबन्धो! आप के भजन विना मेरा आयु व्यर्थ हि चला गया इसी कारण अब संसार की आपत्तियें को प्राप्त भय शरणागत जनों के संसार के भय को नाश करने वारा आप के चरणारविन्द के शरणि में आयो हो इन्द्रियों की विषयन में लालसा इतनी हि बहुत है इस विषयलालसा से मेरी पूर्ति हे अज्ञान से शरीर में मोको आत्म दृष्टि और आप परमेश्वर के विषयमें पुत्र बुद्धि रही॥ १९॥

हे उरुगाय! जन्म गृह में आपने हम दोनो के प्रति यह निश्चय करके कहा है कि-कर्माधीन जन्म रहित भी मैं हूं तथापि वेदोक्त निज धर्म की रक्षा के अर्थ युग२ में जन्म लेता हूँ इस प्रकार आप अनेक अवतार धारण करते हो और उनका त्याग करते हो तथापि आकाश के सदृश आप निर्मल हि रहतो हो अनन्त माहात्म्य सम्पन्न आप की विभूतीन को और आप के अभिप्राय को कोई भी नहि जानता॥ २०॥

---

श्रीशुक उवाच ।

आकर्ण्येत्थं पितुर्वाक्यं भगवान् सात्वतर्षभः ।
प्रत्याह प्रश्रयानम्रः प्रहसन् श्लक्ष्णया गिरा ॥ २१ ॥

श्रीभगवानुवाच ।

वचो वः समवेतार्थं तातैतदुपमन्महे ।
यन्नः पुत्रान् समुद्दिश्य तत्त्वग्राम उदाहृतः ॥ २२ ॥
अहं यूयमसावार्य इमे च द्वारकौकसः ।
सर्वेऽप्येवं यदुश्रेष्ठ विमृश्याः सचराचरम् ॥ २३ ॥
आत्मा ह्येकः स्वयञ्ज्योतिर्नित्योऽन्यो निर्गुणो गुणैः ।
आत्मसृष्टैस्तत्कृतेषु भूतेषु बहुधेयते ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

उपमन्महे उपमन्यामहे समुद्दिश्य विषयीकृत्य तत्त्वग्रामस्तत्त्वसमूहः उदाहृतः सम्यङ्निरूपितः ॥ २२ ॥

इमामेव दृष्टिं सर्वत्र विधत्स्वेत्याह—अहमिति । एवं विमृश्या ब्रह्मत्वेनैवान्वेषणीयाः किञ्च सचराचरं जगदपि ॥ २३ ॥

ननु, नानाविकारवतां कुतो ब्रह्मत्वमिति चेन्न ब्रह्मण एवोपाधिधर्मैर्बहुधा प्रतीतेरिति सदृष्टान्तमाह द्वाभ्याम्—आत्मा हीति । यथा खादिभूतानि तत्कृतेषु घटादिष्वाविर्भावतिरोभावादि यान्त्येवमसावात्माऽप्यात्मसृष्टैर्गुणैः कृत्वा तत्कृतेषु देहेषु बहुधा ईयते पुनश्च यथाशयं यथोपाध्याविर्भावतिरोभावादिरूपेण प्रतीयते न वस्तुतः कुतः एको बहुधा स्वयञ्ज्योतिर्दृश्यत्वेन नित्योऽनित्यत्वेनानन्योऽन्यत्वेन निर्गुणः सगुणत्वेनेत्यादि बहुधात्वं प्रपञ्चनीयम् ॥ २४-२६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीकृष्णस्तु तत्र निजमहिमव्यक्तौ सौशील्येन सङ्कुचित इत्याह—आकर्ण्येति । सात्वतानामृषभः तद्रूपत्वेन तस्मिन् कृतजन्मलीलः अत एव पितुरिति तादृशव्यवहारे हेतुः प्रहसन्निति । तथा तद्वचनानौचित्याभिप्रायेण प्रहासं व्यक्तीकृत्य तेनैव मोहनेन प्रहसितेन पूर्वसिद्धं तस्य निजैश्वर्यज्ञानं तत्प्रतिपादकवचनञ्च तेनाननुसंहितं कुर्वन्नित्यर्थः । अस्यायं भावः मयाऽयं ब्रह्मादिमनोरथागोचरेण पितृत्वेन सदाङ्गीकृतः साधारणमुन्यादिसुलभमैश्वर्यज्ञानमात्रं नार्हति मां सङ्कोचयति च तत् एतदर्थमेव मया कंसवधान्ते शुद्धपितृभावमयप्रेमैवानयोर्वर्द्धितः तथाप्यहो मुनिवाक्येन तज्ज्ञानांशः पुनर्वर्द्धित इति ॥ २१ ॥

तस्मादात्मनि पुत्रभावमेव दृढीकर्तुमैश्वर्यमपलपन्नाह वच इति । योऽस्मान् आवांगवादींश्च पुत्रान् समुद्दिश्य सहजविनयादिगुणत्वात् स्तुतिव्याजेन "तत्त्वमसि श्वेतकेतो" इत्यादिवदुपदेशास्पदीकृत्य तत्त्वग्रामः परमेश्वरवैभवरूपः ॥ २२ ॥

एवं परमेश्वरादेव सर्वस्य भासमानत्वेन तदन्यतया यथावां विभावितौ भवता तथा सर्वैरेव तज्ज्ञानिभिः सर्वे विभाव्या इति भवदुपदेशेनैव "सर्वं खल्विदं ब्रह्म" इतिवत् ज्ञातमित्याह—अहमिति । सचराचरमिति साकल्ये व्ययीभावः यदुश्रेष्ठेति तव तु तद्युक्तमेवेति तथा त्वद्विधानां प्राकट्यञ्चैतादृशज्ञानप्रकाशेन संसारनिस्तारणार्थमेवेति च भावः । अथवा यथा वयं पुत्राः कृपया विभाव्यन्ते तथा यत्सर्वे जीवा विभावितास्तच्च युक्तमेवेत्याह—अहमिति । एवं कृपाविषयत्वेन कृपालुभिर्विमृग्याः अनुसन्धेयाः विमृश्या इति पाठेऽपि स एवार्थः । ततः संसारिणोपि निस्तरिष्यन्तीति भावः ॥ २३ ॥

तथा विमृग्यतायां हेतुत्वे युग्मकम् आत्मेति तैर्व्याख्यातम् आत्मा परमात्मा अयञ्चान्वयः हि यस्मात् आत्मा परमात्मा एक इत्यादिरूपो जीवभेदरूपैस्तटस्थांशैर्बहुधा प्रतीयते तत्रापि आत्मसृष्टैः आत्मशक्तेर्मायया तदुद्भूतैः सत्त्वादिभिर्गुणैरेव कृतेषु देहेषु बहुधा देवमनुष्यादिरूपैः प्रतीयते ॥ २४ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उपमन्महे अभ्युपगच्छामः ॥ २२ ॥
सर्वेऽप्येवं त्वदुक्तप्रकारेणेत्यर्थः ॥ २३ ॥
ईयते भूतेषु व्याप्त इतिप्रमाणतो ज्ञायते ॥ २४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

निशम्येति । प्रश्रयेण विनयेनानम्रः श्लक्ष्णया मृद्व्या गिरा प्रत्याह ॥ २१ ॥

तदेवाह—वच इति चतुर्भिः । आत्मनः परमात्मत्वं गोपयन्नाह । हे तात! वो युष्माकमेतद्वचो वाक्यं समवेतार्थमुपपन्नार्थम्

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उपमन्महे उपमन्यामहे अभ्युपगच्छाम इति यावत् । यद्वा, समवेतार्थं समवेतः अस्मच्छिक्षागर्भितः अर्थो यस्य तथाभूतम् उपलभामह इत्यर्थः । कुतः किञ्च तद्वच इत्यत आह-यदिति । यद्यतः पुत्रानस्मान् समुद्दिश्य विषयीकृत्य लक्ष्यीकृत्येति यावत् तत्त्वग्रामः तत्त्वसमुदायः उदाहृतः सम्यक् निरूपितो येनेत्येतद्वचः सर्वं ब्रह्मात्मकम् इत्येवमस्मान् ग्राहयितुमस्मानेव विषयीकृत्य उक्तमिति भावः ॥ २२ ॥

तदेवाह—अहमिति । असावार्योऽग्रजः सर्वे द्वारकौकसः किं बहुना हे यदुश्रेष्ठ सचराचरं विश्वं कृत्स्नं जगदेवं परमात्मात्मकं तत्कारणं तन्निर्वाह्यञ्चेत्यर्थः ॥ २३ ॥

कुत इत्यत आह—आत्मेति । हि यस्मादात्मा परमात्मा तावदात्मना स्वेनैव सृष्टैःप्राकृतैर्गुणैर्गुणपरिणामात्मकैर्महदादिभिः तत्कृतेषु महदादिभिः सृष्टेषु भूतेषु देवमनुष्यादिषु बहुधा ईयते व्याप्त इति प्रमाणतो ज्ञायते कथम्भूतः स्वयञ्ज्योतिः स्वयम्प्रकाश स्वरूपः अन्यः देवादिशरीरतदभिमानिजीवोभ्योऽन्यः ॥ २४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आकर्ण्येति । प्रहसन्नित्यत्र प्रेति प्रारम्भे स्मयन्नित्यर्थः । अस्यायं भावः मयायं ब्रह्मादिमनोरथागोचरेण पितृत्वेन सदङ्गीकृत्य इत्यैश्वर्यज्ञानं नार्हति मां सङ्कोचयति च तत् एतदर्थमेव मया कंसवधान्ते शुद्धपितृभावमयप्रेमैवानयोः वर्द्धितः ॥ २१ ॥

तथाप्यहो मुनिवाक्येन तज्ज्ञानांशः पुनरुदित इति तथैवाह वच इति । समुद्दिश्य सहजविनयादिगुणत्वात् श्रुतिव्याजेनो पदेशास्पदीकृत्य तत्त्वग्रामः परमेश्वरस्य वैभवरूपः । यथा वयं पुत्राः कृपया विभाव्यन्ते यथा यत्सर्वे जीवा विभाविताः ॥ २२ ॥

तच्च युक्तमेवेत्याह-अहमिति । एवं कृपाविषयत्वेन कृपालुभिर्विमृग्या अनुसन्धेयाः । ततः संसारिणोऽपि निस्तरिष्यन्तीति भावः ॥ २३ ॥

तथा विमृग्यतायां हेतुत्वे युग्मकम् आत्मेति । आत्मा परमात्मा अस्यार्थान्तरम् ॥ २४—२५ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं स्तुतिप्रपत्ती निरूप्य अचिन्त्यरूपत्वे निरूपिते भगवान् प्रसन्नः अखण्डज्ञानं तस्य जातमिति अखण्डबोधार्थं प्रवृत्त इत्याह—आकर्ण्येत्थमिति । पितृवाक्यत्वात् स्वामिवत् लीलाप्रदर्शनमयुक्तं अतः प्रश्रया नम्रः सन् अग्रेपि मोहार्थं प्रहसन् चित्तसन्तोषार्थं श्लक्ष्णया गिरा सात्वतर्षभो वैष्णवपतिरिति एवं प्रपत्तिकथनेपि तूष्णीं स्थितौ वैष्णवानां दुःखं भविष्यतीति युवां मां पुत्रभावेनैवेति वाक्यनिर्णयस्योक्तत्वात् प्रयोजनाभावाद्वाक्येन बोधं हास्येन मोहञ्च कुर्वन् आहेत्यर्थः ॥ २१ ॥

आदौ तदुक्तमभिनन्दति—वचो वः समवेतार्थमिति । अस्मिन् वाक्ये अर्थः समवेतोऽस्ति एतद्वाक्यं तथा उपमन्महे स कोऽर्थ इति चेत्तत्राह—यन्नः पुत्रान् समुद्दिश्येति । इदं स्तुतिर्न भवति किन्तूपदेशः यथा तत्त्वमस्यादिवाक्यमेवमिदमपि ब्रह्मात्मभावमित्यर्थः । अङ्गीकारे दोषः स्यात् अनङ्गीकारे च अतोऽन्यथा वर्णनम् ॥ २२ ॥

एवमुक्तस्य प्रकारमुक्त्वा तस्य सर्वदुःखनिवृत्त्यर्थं पूर्णबोधितुम् उपदिशति-अहं यूयमिति । यथा मां जानासि तथा सर्वानेव जानीहि अखण्डं कृष्णवत्सर्वं यथा तत् निरूपितमितिवत् सर्वस्य शुद्धभगवत्त्वे ज्ञाते न किञ्चिदवशिष्यत इति भगवांस्तदेवोपदिशति समुदायपर्यवसानव्यावृत्त्यर्थं प्रत्येकमनुवदति अहमिति दृष्टान्तानुवादः यूयमिति पितुरेव बहुवचनम् असावार्यो बलभद्रः इमे च द्वारकावासिनः अन्ये च ब्रह्माण्डस्थाः सर्व एव एवमेव विमृश्याः साक्षाद्भगवानेवेति सचराचरमिति स्थावरजङ्गमेऽपि यथा मयि तथा बुद्धिः कर्तव्येत्यर्थः ॥ २३ ॥

> यथेच्छां भगवान् विष्णुः पुरस्कृत्याभवत्स्वयम् ।
> एवं सर्वत्र तत्तत्स्यामिति जातः स्वयं हरिः ॥

नन्वेवं सति ब्रह्मानन्त्यं स्यात् ब्रह्मबुद्धिपरत्वेतु आरोपितज्ञानविषयत्वेन अनित्यफलसाधकता स्यादिति शङ्कां दूरीकुर्वन् आधाराधेयभावञ्च दूरीकुर्वन् सर्वत्रात्मप्रतीतिसिद्ध्यर्थञ्च अखण्डात्मत्वं बोधयति—आत्मा ह्येकः स्वयञ्ज्योतिरिति । अततिव्याप्नोतीत्यात्मा परिच्छेदे आत्वमेव भज्येत एकेनैव कार्यसिद्धौ द्वितीयकल्पना व्यर्था भोगस्य तु न व्यवस्थापकत्वम् ईश्वरेच्छयैव व्यवस्थासम्भवात् या क्रिया यदीयव्यधिकरणगुणजन्या सा संयोगासमवायकारणिकेऽतिव्याप्तिधितेव ईश्वरेच्छायाः सर्वत्र कारणत्वात् तत्संयोगः जीवात्मसु न सङ्गच्छते अजसंयोगस्यानङ्गीकारात् तद्भागाद्भोगस्यान्यथाप्युपपत्तेरेक एवात्मा युक्तश्चायमर्थः "एकमेवाद्वितीयम्" "अहमात्मा गुडाकेश सर्वभूताशयस्थितः । नित्यः सर्वगतः" इत्यादिवाक्यसहस्रैः आत्मन एकत्वं निर्णीतं नानात्मानो व्यवस्थात इति सूत्रमकारप्रश्लेषेणापि योजनीयम् अव्यवस्था अविचार इति ननु जीवस्य नानात्वे परिहृतेपि जीवब्रह्मणोर्भेदोऽङ्गीकर्तव्यः अन्यथा ज्ञानोपदेष्टृभावात् मोक्षो न स्यात् अत आह—स्वयञ्ज्योतिरिति । स हि स्वप्रकाशः नास्यात्मप्रकाशार्थं कश्चिदपेक्ष्यते मोक्षार्थं वा अन्यथाऽऽत्मवैलक्षण्यं नास्तीत्युक्तमेव पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपीति तस्य नानात्वाज्ञाने अग्रे निरूपयिष्यते वास्तवस्त्वयमर्थः कालेन स्वप्रकाशनिवृत्तिमाशङ्क्याह-नित्य इति । सदैकरूप इत्यर्थः । तर्हि काल एवायं स्यात् तत्राह अन्य इति । कालादन्यः यस्य चेष्टा काल इति चेष्टामाहुरिति वाक्यात् ननु तादृशः परमात्मा पुरुषोत्तमः ननु जीव इति चेत्तत्राह—निर्गुण इति । अयमेव जीवो गुणातीतः ननु ततोऽन्योऽस्तीति कश्चित् नन्वेवं सति नानात्वमुपलभ्यमानत्वं कथं घटत इति चेत्तत्राह—आत्मसृष्टैर्गुणैः तैरेव गुणैः कृतेषु देवतिर्यङ्मनुष्यादिदेहेषु भूतशब्दवाच्येषु आधारवशात् अग्निरिव बहुधा ईयते ॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

प्रश्रयेण आनम्रः प्रहसन्निति वक्ष्यमाणावाचां सुधावर्षि

खं वायुर्ज्योतिरापो भूस्तत्कृतेषु यथाशयम्।
आविस्तिरोऽल्पभूर्य्येको नानात्वं यात्यसावपि ॥ २५ ॥

श्रीशुक उवाच।

एवं भगवता राजन् वसुदेव उदाहृतः।
श्रुत्वा विनष्टनानाधीस्तूष्णीं प्रीतमना अभूत् ॥ २६ ॥
अथ तत्र कुरुश्रेष्ठ देवकी सर्वदेवता।
श्रुत्वाऽऽनीतं गुरोः पुत्रमात्मजाभ्यां सुविस्मिता ॥ २७ ॥
कृष्णरामौ समाश्राव्य पुत्रान् कंसविहिंसितान्।
स्मरन्ती कृपणं प्राह वैक्लव्यादश्रुलोचना ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

प्रत्येवं स्वप्नवाक्यस्य रसाभासाभावार्थं पतिभगवाहमस्य तात्पर्य्य-मन्यथा प्रतिपादयामीति द्योतकः प्रहासः ॥ २१ ॥

समवेतार्थं युक्तार्थम उपमन्महे आधिक्येन मन्यामहे समुद्दिश्य शिक्षणार्थं "तत्त्वमसि श्वेतकेतो" इत्यादिवदुपदेशाङ्गीकृत्य ॥ २२ ॥

न, केवलं पुत्रा एवास्मदादयः एवं परमात्मत्वेन द्रष्टव्याः अपितु सर्वे एवेत्याह–अहमिति। एवं विमृग्याः परमात्मत्वेनैवान्वेषणीयाः विमृश्या इति पाठे द्रष्टव्याः एवञ्च प्राप्तपुंष्मच्छिक्षितैरस्मदाद्यैरपि प्रद्युम्नादिष्वपि सर्वत्रात्मदृष्टिरेव कर्त्तव्येति भावः ॥ २३ ॥

ननु नानाविकारवन्तो बहव एते कुतः परमात्मरूपाः मन्तुं शक्याः सत्यं परमात्मसृष्टानामुपाधीनां धर्म्मैरेव परमात्मा तथा तथा प्रतीतो भवतीति सदृष्टान्तमाह—आत्मा हीति द्वाभ्याम्। आत्मा परमात्मा आत्मसृष्टैः स्वसृष्टैर्गुणैर्बहुधा ईयते प्रतीयते कुत्र तत्कृतेषु भूतेषु देहेषु स्वयञ्ज्योतिरपि दृश्यत्वेन नित्योऽप्यनित्यत्वेन अन्योऽप्यनन्यत्वेन निर्गुणोऽपि सगुणत्वेन यथा खादिभूतानि तत्कृतेषु घटादिषु आविस्तिरोभावादिकं यथाशयम् आशयमनतिक्रम्य याति तथैवासावेकः परमात्मापि याति सर्व्वदैकरसोपि आविर्भावं तिरोभावञ्च व्यापकोपि अल्पत्वं भूरित्वञ्च एकोपि नानात्वम् ॥ २४–२५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

समेवातार्थं सम्पन्नार्थम उपमन्महे सुपपन्नम मन्यामहे ॥२२॥

एवमेव अहं परमेश्वरः आर्यो मदवतारः द्वारकावासिनः जीवाः तत्स्वरूपगुणाश्रितः पृथक् पृथक् विमृश्याः आचार्याश्रयणेनान्वेषणीयाः किंबहुना सचराचरं विश्वञ्च विमृश्यम् ॥ २३ ॥

तत्र स्वं परमेश्वरमात्मानं चेतनमचेतनञ्च संक्षेपतः स्वयमाह–आत्मेति द्वाभ्याम्। आत्मा परमेश्वरोऽहम् एकः सजातीयविजातीयशून्यः स्वयञ्ज्योतिः स्वप्रकाशः हिशब्दात्सर्वकारणत्वसर्वात्मत्वसर्वशक्तित्वादिगुणयोगो ज्ञेयः अन्यो जीवः आत्मेत्येकवचनम् नित्यः अविनाशी एव तद्भेदान् सूचयति निर्गुणः प्राकृतगुणशून्यो मुक्तः कश्चिज्जीवः परमेश्वरस्य जगत्कारणत्वादीन् गुणान् सूचयन् बद्धजीवमाह—तत्कृतेषु परमात्मकृतेषु भूतेषु आत्मसृष्टैः परमात्मकृतैः गुणैः सत्त्वादिभिर्बहुधा देवोऽहं मनुष्योहमित्याद्यनेकधा ईयते ॥ २४ ॥

भाषाटीका।

श्री शुक उवाच। यदूत्तम भगवान् इस प्रकार पिता के वचन सुनकर विनय से नविकर हंसतेभए मधुरवाणी से पिता के प्रति बोले ॥ २१ ॥

श्री भगवानुवाच। हे तात! आप का वचन यथार्थ है इस वचन को हम मान ते हैं क्योंकि हम पुत्रों को लक्ष्य मे कर आपने इस वचन से तत्व समुदाय कहा है ॥ २२ ॥

हे यदुश्रेष्ठ माता पिता आप यह बलदेवजी और ए द्वारका वासी तथा चराचर सहित सबहि इस प्रकार विचारने के योग्य है कि सब का आत्मा परमेश्वर है सब कार्य्य है परमात्मा कारण है सब नियाम्य है परमात्मा नियाम कहै इसी प्रकार विवेक करना चाहिये ॥ २३ ॥

स्वयं परमात्मा के सृजे भए महदादि तत्वन सें रचे भए देव मनुष्यादि प्राणियों में एकहि परमात्मा अन्तर्य्यामी रूपसे अनेक प्रकार प्रतीत हो रहा है और वह स्वयं प्रकाश मान है तथा देवादि शरीरों से तथा शरीर वर्त्ति जीवों से भिन्नहै ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

सुविस्मिता सती ॥ २७ ॥
समाश्राव्य सम्बोध्य ॥ २८—२९ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेव सदृष्टान्तं दर्शयति—खमिति । अपिशब्देन सम- क्रियत्वद्योतनया यथोपमां द्योतयति यथा खादिकं याति तथा असावात्मा स्वकार्य्येषु वाय्वादिषु घटान्तेषु यथाशयं कार्य्या- विर्भावाद्यनुरूपमाविर्भावादिकं याति तथा असावात्मा स्वकार्य्येषु तदनुरूपं तत्तद्यातीति ततश्चिच्छक्त्यैकविलासेषु द्वारका- वैभवेषु किमुतेति तथा दृष्टिस्त्वत्र सुतरामेव कर्त्तव्या यत एव अहं यूयमसावार्य्य इति मयासाम्यमेव दर्शितं तत्र सति तव यदुश्रेष्ठस्य कृपयापि तेषां संसारिणामपि दैन्यं न सम्भवति तव तु दैन्यमयुक्तमेवेति वास्तवो भावः ॥ २५ ॥

एवमात्मैश्वर्य्यगोपनपूर्वकस्वविषयकपुत्रभावनारक्षणाभि— सन्धिप्रकारेण भगवतोदाहृतं श्रुत्वा विनष्टा नानाधीर्मुन्या- द्युपदिष्टैश्वर्य्यादिज्ञानं यस्मात्तथाभूतः प्रीतमनास्तस्मिन् सप्रेम- चित्तस्तूष्णीमेवाभूदिति ॥ २६ ॥

एवं पितुः स्वस्मिन् पुत्रभावस्य विरोधकमैश्वर्य्यज्ञानं शमयित्वा मातुरप्यन्यत्र पुत्रभावमशमयदिति तत्प्रसङ्गमारभते अथेत्यादिना । तत्राथेति युग्मकं गुरोः पुत्रमात्मजाभ्यां श्री- कृष्णरामाभ्यामानीतं श्रुत्वा पूर्वत एव सुष्ठु विस्मितत्वेन स्थितापि तद्वत् स्वाभीष्टलाभार्थं श्रीवसुदेवसहिततादृश- प्रेमसम्वादमयविशेषलाभानन्तरमेव प्राहेत्यादि रामस्यात्मजत्व- निर्देशो गर्भसङ्कर्षणस्यापि तया श्रवणात् सर्वेषां देवतेति श्रीभगवन्मातृत्वलीलशुद्धसत्त्वलीलशुद्धसत्त्वसम्पत्तिरूपत्वात्— अत एवास्या इयं बहिरङ्गा चेष्टा भगवतो लीलाकौतुकार्थमेव लीलाशक्त्या सम्पादितेति ज्ञेयं वक्ष्यते च "मोहिता मायया विष्णोः" इति ॥ २७—२८ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आविस्तृतः आ समन्तात् विस्तृतः व्याप्तः अल्पत्वं विपु- लत्वम् एकत्वं कार्यतया नानात्वं तत्तदन्तरात्मतयाविरित्यर्थः ॥२५॥

विनष्टनानाधीः अब्रह्मात्मकभेदबुद्धिरहितः ॥ २६ ॥

गुरोः पुत्रं सान्दीपिनिपुत्रम् ॥ २७—२९ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र दृष्टान्तमाह खमिति । यथा खादयः तत्कृतेषु आका- शादिभिः कृतेषु यथाशयं व्याप्यानुरूपम् आविष्कृताल्पभूर्येक- नानात्वं यान्ति तद्वदसौ परमात्मापि क्वचिदाविष्कृतत्वम् क्वचि- दल्पत्वं क्वचिद्भूरित्वं विपुलत्वं स्वतस्त्वेकत्वं व्याप्य बहुत्व- प्रयुक्तं नानात्वं च यातीत्यर्थः । एकस्यानेकेषु व्याप्तौ तत- प्रयुक्तनानात्ववस्तुश्चैकत्वे चायं दृष्टान्तः न वस्तुतो व्याप्यव्यापकयोरैकद्रव्यत्वपरमिति ज्ञेयम् ॥ २५ ॥

एवमिति । उदाहृतः उक्तः उदाहृतमिति पाठे तूक्तं वचः श्रुत्वेत्यर्थः । विनष्टनानाधीः अब्रह्मात्मकभेदबुद्धिरहितः अतएव प्रीतमनास्तूष्णीं बभूव ॥ २६ ॥

अथेति । हे कुरुश्रेष्ठ ! सर्वदेवतात्मकभगवदवतारस्थानत्वा- त्तथाभूता देवकी आत्मजाभ्यां रामकृष्णाभ्यां गुरोः सान्दीपनेः पुत्रमानीतं श्रुत्वा अतिविस्मिता सती ॥ २७ ॥

समाभाष्य सम्बोध्य वैक्लव्यादश्रूणि लोचनयोर्यस्याः सा प्राह ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

एवमात्मैश्वर्यगोपनपूर्वकस्वविषयकपुत्रभावनारक्षणाभिसन्धि- प्रकारेण भगवतोदाहृतं श्रुत्वा विनिष्टा नानाधी- र्मुन्याद्युपदिष्टैश्वर्यादिज्ञानं यस्मात्तथाभूतः प्रीतमनास्तस्मिन् सप्रेमचित्तस्तूष्णीमेवाभूदिति ॥ २६ ॥

एवं पितुः तस्मिन् पुत्रभावस्य विरोधकमैश्वर्यज्ञानं शम- यित्वा मातुरप्यन्यत्र पुत्रभावमशमयदिति तत्प्रसङ्गमारभते । तथेत्यादिना सर्वेषां देवतेति श्रीभगवन्मातृलीलत्वशुद्धसत्त्व- सम्पत्तिरूपत्वात् । अत एवास्या इयं बहिरङ्गा चेष्टा भगवतो लीलाकौतुकार्थमेव लीलाशक्तिसम्पादितेति ज्ञेयम् । वक्ष्यते च "मोहिता मायया विष्णोः" इति ॥ २७-४१ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवमेकस्यानेकधा भानप्रकारमुक्त्वा नानात्वमपि व्यव- स्थया आह—खम्वायुरिति । पञ्चमहाभूतानि तत्कृतेषु भौतिकेषु आशयमनुलक्ष्य आविस्तिरोल्पभूर्येक इति तान्येव भूतानि क्वचिद्विस्तारं प्राप्नुवन्ति हस्त्यादिशरीरे क्वचिदल्पत्वं मशकादौ क्वचिद्बहुरूपत्वं विचित्रपक्षमयूरादौ क्वचिदेकत्वं कोकिलादौ धात्वादौ वा एवं परिमाणरूपादिवैलक्षण्यात् पृथिव्यादीनां नानात्वम् एवमात्मनोऽपि तत्तदुपादानोपलम्भकतया नानात्व- मित्यर्थः । उच्चनीचत्वं देहकृतं नानात्वं परिमाणधर्मकृतमिति वस्तुतः स्वरूपमेकमेवेत्यर्थः । यथा सर्वत्र भौतिकेषु पृथिव्यादि- रेक एव ननु कार्यवैलक्षण्येन कारणभूतायाः पृथिव्याः नानात्वं वैलक्षण्यं वा कल्प्यते पृथिवीगुणत्वेनैव तत्सिद्धेः एवं सच्चि- दानन्दधर्मतारतम्येन ऐश्वर्यादितारतम्येन क्रियादितारतम्येन वा नानात्वमात्मन उपपद्यत इति न स्वरूपभेदस्तदनुरोधेन कल्पनीयः उपाधिकृतवैलक्षण्यमिति सर्वं सुस्थम् असावप्यात्मापि अपि- शब्देन भूतानि सङ्गृहीतानि अतः स्वेच्छया स एव सर्व- रूपेण तिष्ठतीति विचारप्रवणं चित्तं कृत्वा यथा मां जानासि तथैव सर्वं वा जानीहि इत्युपदेशः एष एवाक्षरब्रह्माद्वैत- वादः ॥ २५ ॥

एवं भगवता उपदिष्टः ऐश्वर्यभावप्राकट्यात् बोधितार्थं भावान्तरमापन्नोऽपि गृहीतवानित्याह—एवम्भगवतेति । उदाहृतं सिद्धमेव विनष्टा नानाबुद्धिः पञ्चविधा अपि यस्य ततो वक्त- व्याभावात् स्वास्मिन्नपि तथा तथा स्फुरणात् तूष्णीं भूत इत्यर्थः एवमेकस्य ज्ञानोपदेशो निरूपितः ॥ २६ ॥

स्वज्ञानशक्तिप्राकट्येन क्रियाशक्तिप्राकट्यार्थमुपाख्यानान्तर- मारभते—अथ तत्रेति । कुरुश्रेष्ठेति क्रियाधिक्यं तस्य हृदये समायास्यतीति सम्बोधनं वसुदेवः कृतार्थो जात इति स्वस्यापि हृदये भगवता कृतार्थत्वं प्राप्तापि पूर्वसञ्जातदुःख-

देवक्युवाच ।

रामरामाप्रमेयात्मन् कृष्ण योगेश्वरेश्वर ।
वेदाहं वां विश्वसृजामीश्वरावादिपूरुषा ॥ २९ ॥
कालविध्वस्तसत्त्वानां राज्ञामुच्छास्त्रवर्तिनाम् ।
भूमेर्भारायमाणानामवतीर्णौ किलाद्य मे ॥ ३० ॥
यस्यांशांशांशभागेन विश्वोत्पत्तिलयोदयाः ।
भवन्ति किल विश्वात्मंस्तं त्वाऽद्याहं गतिं गता ॥ ३१ ॥
चिरान्मृतसुतादाने गुरुणा कालचोदितौ ।
आनिन्यथुः पितृस्थानाद्गुरवे गुरुदक्षिणाम् ॥ ३२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वासनायाः अनिवृत्तत्वात् तन्निवृत्त्यर्थं भगवन्तं प्रार्थयते वाक्येन तु तन्निवर्त्तते नाद्येन निवर्त्तनेपि तेषां जीवानाम् अमुक्तत्वात् ज्ञानोत्तरं सर्वज्ञत्वेपि सिद्धे भगवता वञ्चितमिति प्रतिभायात् पुनस्तदुद्धारार्थे चिन्तापि स्यादिति तेष्वेव समागतेषु तद्दुःखं गच्छतीति नान्यथेति निश्चित्य तदर्थं भगवतः सामर्थ्यं पुत्राणां स्वरूपप्रतिपत्तिश्च सम्भावितेति दृष्टान्तेनावगता तामाह श्रुत्वानीतं गुरोः पुत्रमिति स्वस्यैवात्मजाभ्यां रामकृष्णाभ्यां स्वरूपं प्रापयित्वा आनीतं श्रुत्वा सुष्ठु विस्मिता जाता ॥ २७ ॥

ततो वस्तुनिर्द्धारं ज्ञात्वा भगवन्तं याचितवतीत्याह—कृष्णरामाविति । सम्यगाश्राव्य सावधानं शृण्वित्युक्त्वा कंसविहिंसितान् पुत्रान् स्मरन्ती कृपणं यथा भवति तथा प्राह तेनैव स्मरणेन वैक्लव्यादश्रुलोचना च जाता ॥ २८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

विनष्टमानाधीः सत्यमेव सर्वं जगदेवैकं ब्रह्मैव किम्पुनरेतौ मत्पुत्राविस्येतत्प्रकारकज्ञानवान् बभूवेत्यर्थः ॥ २६-२९ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एतदेव प्रपञ्चयति—खमिति । यानि खादीनि भूतानि तत्कृतेषु स्वाविकृतेषु शरीरेषु यथाशयम् आशयं वासनामनतिक्रम्य आविस्तिरोऽल्पभूर्य्येको नानात्वमसौ याति एक एव अणुपरिमाणकः जीवः देवादिदेहे आविर्भावं वृक्षादौ तिरोभावं मत्कुणादौ अल्पभावं कश्चित्पुत्रपौत्रादिमत्त्वेन भूरिभावम् अन्यदा एकत्वमेवं नानात्वं यातीत्यर्थः। अपिशब्दान्मङ्गजुत्वेन मङ्गावं यातीति ज्ञेयम् ॥ २५—२६ ॥

भाषा टीका ।

आकाश पवन तेज.जल भूमि पांचों भूत ; इनके कार्य्य घटादि कोंमे व्याप्य वस्तु के अनुरूप आविर्भाव तिरोभाव अल्प भाव बहुत भाव इस प्रकार नानाभाव को प्राप्त होते हैं, तैसेहि वह एकहि परमात्मा चराचर सब वस्तु ओंमे उन वस्तु ओं के अनुरूप आविर्भाव तिरोभाव अल्प भाव बहुभाव इस प्रकार नाना भाव को प्राप्त हो रहाहे वह नाना भाव जीव माया में है परमात्मा में नहि परमात्मा तो एकहि है ॥ २५ ॥

श्री शुक उवाच । हे राजन् ! इस प्रकार भगवान् के कहे भए वचन को सुनकर वसुदेवजी को आत्मा में अब्रह्मात्म देव मनुष्यादि भेद बुद्धि निवृत्त होगई और प्रसन्नमन होकर वसुदेवजी चुप चाप होगए ॥ २६ ॥

हे कुरुश्रेष्ठ अनंतर सर्व देवता रूप देवकी ने यह सुना कि श्रीराम कृष्ण ने सांदीपिनि गुरू का मरा भया पुत्र को लायदिया यह सुनकर देवकी को आश्चर्य भय ॥२७॥

अनंतर जिन पुत्रों का कंसने वध किया रहा उन का स्मरण करते हुई विकल तासे नेत्रो मे आंशू बहा वत् देवकी हे राम कृष्ण इस प्रकार सन्मुख कर उनके प्रति बोली ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

भूमेर्भारायमाणानां राज्ञामर्थे तेषां निधनार्थं मे मयि किलावतीर्णौ ॥ ३० ॥

हे आद्य ! यस्यांशः पुरुषस्तस्यांशो माया तस्या अंशाः गुणास्तेषां भागेन परमाणुमात्रलेशेन विश्वोत्पत्त्यादयो भवन्ति तं त्वा त्वां गतिं शरणं गतास्मि ॥ ३१ ॥

आनिन्यथुरानीतवन्तौ पितृस्थानाद्यमसदनात् ॥ ३२—३४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

रामेति युग्मकम् रामस्यादौ सम्बोधनं ज्येष्ठत्वेन सपत्नीपुत्रत्वांशेन चादरात् अत एव वीप्सा अप्रमेयात्मन्

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

प्रमाणागोचरस्वभाव ! योगेश्वरेश्वर योगेश्वराणां सनकादीनामप्यचिन्त्यमहाप्रभाव यतो विश्वसृजां ब्रह्मादीनामीश्वरौ अत आदिपुरुषौ ॥ २९ ॥

कालेन कलिप्रभृतिना (द्वापरादिना) विशेषतो ध्वस्तं सत्त्वं सत्त्वगुणः साधुत्वं वा येषां तेषाम् अत एव उच्छास्त्रं शास्त्रातिक्रमः तेन वर्त्तितुं शीलं येषाम् अत एव भूमेरिति यथाधुना द्वापरान्त इत्यर्थः ॥ ३० ॥

एवं तौ पृथक् स्तुत्वा पुनरैकमत्यार्थमेकत्वेनैव शरणं याति—यस्येति। किलेति प्रसिद्धमेवेदमित्यर्थः। विश्वात्मन् सर्वमूलस्वरूप ! एतावन्तं कालं नैवं त्वां प्रार्थितवत्यस्मि अधुना च किञ्चित्प्रार्थयितुं शरणं यामीत्याशयेनाह अद्यातीति ॥ ३१ ॥

अतो गुरोरिव ममाप्यभीष्टं परिपूरयतमित्याह—चिरादिति युग्मकेन। चिरकालं मृतस्यापि सुतस्यादाने यमालयाहरणे आनयन इत्यर्थः गुरवे गुर्वर्थं गुरुदक्षिणारूपं तत्सुतं यथा [आनिन्यथुः] तदाकृतिवय आदिसद्भावप्रकारेण आनिन्यथुः तथा कुरुतम् ॥ ३२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

मे असत्तः ॥ ३०—३४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तदेवाह—रामेति पञ्चभिः। हे अप्रमेयात्मन् ! अपरिच्छेद्यस्वरूप योगीश्वराणामाश्चार्यशक्तिमतामपीश्वरौ ! वां युवां विश्वसृजां ब्रह्मादीनामीश्वरावादिपुरुषौ जगत्कारणपुरुषावहं वेद्मि ॥ २९ ॥

तर्ह्येवम्भूतयोरावयोः किमर्थं यदुषु जन्मेत्यत आह—कालेनेति, कालवशेन विध्वस्तं सत्त्वं सत्त्वगुणो येषाम् उच्छास्त्रवर्त्मिनां शास्त्रीयमर्यादातिलङ्घिनामत एव भूमेर्भारायमाणानां राज्ञां क्षयाय मे मयि असत्तो वाऽवतीर्णौ ॥ ३० ॥

यस्य तव अंशांशांशभागेन अयुतायुतशतैककलांशकांशेन विश्वस्योत्पत्त्यादयो भवन्ति किलेति शास्त्रप्रसिद्धिः तं पूर्णब्रह्मरूपं त्वामधुनाऽहं गतिं शरणं गताऽस्मि ॥ ३१ ॥

स्वाभिप्रायमावेदयति—चिरादिति द्वाभ्याम्। मृतसुतादाने निमित्ते गुरुणा सान्दीपनिना चोदितौ भवन्तौ पितृस्थानाद्यमसदनादानिन्यतुरानीतवन्तौ किल गुरुदक्षिणाः विपुलदक्षिणारूपान् पुत्रान् आनिन्यतुरिति सम्बन्धः दक्षिणाम् इति पाठे अर्पयितुमिति शेषः ॥ ३२ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं कायवाङ्मनोवैक्लव्यमुक्तं तन्निराकरणार्थमादौ भगवन्तं स्तौति—रामरामेति त्रिभिः। भगवान् शरणागतानामेव दुःखं दूरीकरोतीति प्रथमतः शरणागतिः कर्त्तव्या तत्र यदि फलं न कीर्त्तयेत तदा मोक्षार्थं सा भवेत् भगवतो वा तन्निवारणे सामर्थ्यं न भवेत् स्वयं वा न जानीयात् तथासर्वं विशकलितं भवेदिति प्रथमतो भगवतः सामर्थ्यं स्वस्य ज्ञानं चाह देवक्या कृष्णरामयोरवान्तरपरिज्ञानमास्तीति ज्येष्ठानुक्रमेण स्तौति वीप्सा आदरे अप्रमेयात्मन्निति त्वं सर्वसमर्थः तथापि लोको न जानातीति साधनान्तरे यतते नहि कश्चिच्चिन्तामणिं प्राप्य पुनरन्यत् साधनमङ्गीकरोति भगवतस्तथात्वाज्ञाने हेतुर्भगवत्स्वरूपमधर्मे एव यथा परमा एव प्रत्यक्षतायाम् एवं ज्ञातुमयोग्यमेव भगवत्स्वरूपमित्यर्थः। कृष्णस्यापि सम्बोधनमाह निकटे शृणोति सावधान इति सकृदेव सम्बोधनं "योगेश्वरेश्वरेति सर्वसाधनसम्पत्तिः एवमुभयोः माहात्म्यमुक्त्वा अध्यारोपवादनिराकरणार्थं स्वस्य याथार्थ्यज्ञानमनुवदति वेदाहं वां विश्वसृजाविति युवामहं जाने केन प्रकारेण जानासीत्याकाङ्क्षायामाह—विश्वसृजामीश्वराविति। ब्रह्मादीनामपि नियन्तृत्वेन कालव्युदासार्थं पुरुषोत्तमत्वेनापि जानामीत्यर्थः तादृशस्य कथमागमनमिति शङ्काव्युदासायाह कालविध्वस्तसत्त्वानामिति भूभाररूपराज्ञां वधार्थं भगवानवतीर्ण इत्यर्थः ॥ २९ ॥

ननु, राजानः सात्त्विकाः कथं भाररूपा जाता इत्याह कालविध्वस्तसत्त्वानामिति। कालो हि पदार्थान् दूरीकरोति कदाचिदसत्यर्थान् यथा पुरुषः शिष्टागमनमालस्य दुष्टागमनं वा तथा कालोपि सर्वेषां सत्त्वगुणं विवेकादिकञ्च हृतवान् अत एव उच्छास्त्रवर्त्तिनो जाताः राजस्येन सामर्थ्यं सत्त्वाभावे सामर्थ्यं सर्वेषां दुःखदमिति भूमेर्भारायमाणा जाताः मशकार्थं धूमवत् तेषामर्थे भगवानवतीर्णः किलेति प्रमाणं मे मत्तः ॥ ३० ॥

ननु भूभारहरणार्थमेव जातः नत्वन्यार्थमिति तत्रैव मम सामर्थ्यमिति चेत्तत्राह—यस्यांशांशभागेनेति। यस्य पुरुषोत्तमस्य अंशः अक्षरं तस्याप्यंशः प्रकृतिः तस्यांशा गुणाः तेषां भागेन विभागेन विश्वस्योत्पत्तिलयोदया भवन्ति किलेति प्रसिद्धे अनेन सामर्थ्यमुक्तं कारणावश्यकत्वायाह विश्वात्मन्निति सर्वस्यापि स्वकृत्यमावश्यकमिति अतस्तादृशं त्वां स्वकार्यसिद्ध्यर्थं शरणं गता ॥ ३१ ॥

तत्कार्यं साधकपूर्वकमाह—चिरादिति द्वाभ्याम्। यथा गुरुवाक्यं कर्त्तव्यम् एवं ममापि यथा गुरोः पुत्रः निरन्वयकृतः तथा प्रकृतेपि यथा दक्षिणा अवश्यं देया एवं सत्कामनापि पूरणीया अतो दृष्टान्तः चिरान्मृतस्य सुतस्यादाने दानार्थं दक्षिणात्वेन गुरुणा प्रेरितौ किलेति प्रमाणं तदा पितृस्थानं गत्वा यत्र पुरुषाणां जीवतां गमनागमने न स्तः तादृशस्थानादपि गुरवे दक्षिणां धर्मार्थम् आनिन्यथुः पदव्यत्ययश्छान्दसः आनीतवन्तौ तथा मे ममापि कामं कुरुतम् अपमृत्युमृतत्वात् प्रायेण तत्रैव गताः सामर्थ्यं सूचयति युवां योगेश्वरेश्वराविति योग एव कामनां पूरयति तत्रापि तस्येश्वरः किं वक्तव्यः भगवांस्तु ततोप्यधिके योगश्चेत् कदाचित् वदेत् मत्प्रवर्त्तको नाज्ञापयतीति सोपि चेद्वदेत् ममान्तर्यामी न प्रेरयेदिति तन्निरासार्थमेतावदुक्तं॥ स्वकामनामाह—भोजराजहतान् पुत्रानिति। आगतान् द्रष्टुं

तथा मे कुरुतं कामं युवां योगेश्वरेश्वरौ।
भोजराजहतान् पुत्रान् कामये द्रष्टुमाहृतान् ॥ ३३ ॥
ऋषिरुवाच।
एवं सञ्चोदितौ मात्रा [१]रामः कृष्णश्च भारत।
[२]सुतलं संविविशतुर्योगमायामुपाश्रितौ ॥ ३४ ॥
तस्मिन् प्रविष्टावुपलभ्य दैत्यराड्विश्वात्मदैवं सुतरां तथाऽऽत्मनः।
तद्दर्शनाह्लादपरिप्लुताशयः सद्यः समुत्थाय ननाम सान्वयः ॥ ३५ ॥
तयोः समानीय वरासनं मुदा निविष्टयोस्तत्र महात्मनोस्तयोः।
दधार पादाववनिज्य तज्जलं सवृन्द आब्रह्म[३] पुनद्यदम्बु ह ॥ ३६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

कामये यस्यामवस्थायां स्थिता मत्तो गताः तादृगवस्थायुक्ता एव द्रष्टव्या इति भावः ॥ ३२—३३ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

विश्वसृतं सत्त्वं सत्त्वगुणः साधुत्वं वा येषां तेषां संहाराय मे मय्यवतीर्णौ ॥ ३० ॥

यस्यांशो महावैकुण्ठनाथस्तस्यांशो महापुरुषस्तस्यांशः प्रकृतिस्तस्या भागेन रज आदिना ॥ ३१ ॥

पितृस्थानात् यमसदनात् गुरुदक्षिणां गुरुदक्षिणारूपं गुरुपुत्रम् आनिन्यथुः ॥ ३२—३४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हे आद्य! मे मयि अवतीर्णौ ॥ ३० ॥

यस्य अंशाः जीवप्रकृतिकालाख्याः तेषामंशाः एकैकदेशास्तेषां भागेन स्वरूपप्रदेशेनेत्यर्थः ॥ ३१ ॥

पुत्रानयने तत्कल्याणार्थं भगवन्तं नियोजयति—चिरादिति द्वाभ्याम्। आनिन्यथुः आनीतवन्तौ पितृस्थानात् यमलोकात् ॥ ३२—३४ ॥

भाषा टीका।

देवकयुवाच ॥ हे राम२ हे अचिन्त्यरूप हे कृष्ण हे योगेश्वरेश्वर ब्रह्मादि कों के ईश्वर जगत्के कारण आप दोनो को मे जानतीहूं ॥ २९ ॥

काल कर के जिन के सत्व गुण का कार्य्य विवेकादि नष्ट होगए इसी से शास्त्रमर्य्याद को छोडकर वर्त्त ने वारे भूमि के भार रूपी राजान के नाश करने के अर्थ इस काल में मेरे गर्भ में आप दोनो अवतरेहो यह निश्चयहै ॥ ३० ॥

हे विश्वात्मन्! हे आदिकारण जिस के अंश का अंश उस के भी अंश के लेश कर के विश्व की उत्पत्ति पालन संहार होतेहैं यह शास्त्र से निश्चित है एतादृश पर ब्रह्म नारायण आप के शरणागति को मे प्राप्तहूं ॥ ३१ ॥

बहुत काल के मरेभए पुत्र के लाने निमित्त सांदीपिनि गुरु ने आप को आज्ञा करी आप, यम राज के लोक ते उस पुत्र को लाए और गुरुजी के अर्थ वह पुत्र रूपहि दक्षिणा आपने दई ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

दैत्यराट् बलिः कथम्भूतौ विश्वस्याऽऽत्मभूतं दैवं सान्वयः सपरिवारः ॥ ३५ ॥

सवृन्दः सपरिजनः कथम्भूतौ पादाववनिज्य यदम्बु ययोरवनेजनोदकमाब्रह्म ब्रह्माणमभिव्याप्य जगत् पुनत् पवित्रयत् वर्तते तौ ॥ ३६—३७ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एवं स्वकामस्य गौरवं मत्वा प्राक् स्पष्टममनिर्दिश्य पुनरुत्कण्ठया स्पष्टमेव निर्दिशति—भोजराजेति। आहृतान् युवाभ्यां यमालयात् आनीतान् सतः ॥ ३३ ॥

सञ्चोदित इति। सञ्चोदिताविति च क्वचित् हे भारत भरतकुलश्रेष्ठेत्याश्चर्य्यान्तरस्मरणोल्लासेन तं श्लाघते ॥ ३४ ॥

उपलभ्य चिरमभीप्सितौ समीप एव लब्ध्वा तस्य चालभ्यलाभोऽभूदित्यभिप्रायेण तौ विशिनष्टि—विश्वस्यात्मा च दैवमाराध्यश्च एकत्वं द्वयोरैक्यापेक्षया स्वयं तथाऽऽत्मनः आत्मनस्तु सुतरामतिशयेनात्मदैवं वामनरूपे तस्मिन् स्वयं सर्वार्पणात् कुलदेवत्वाच्च तस्य ततश्च सम्यक् साञ्जलित्वादिना उत्थाय दैत्यराडिति परमादरात् यद्वा दैत्यानामन्येषामपि तादृशभावं सूचयति अत एव सान्वयः ॥ ३५ ॥

(१) रामकृष्णौ कुरूद्वह। (२) रसातलम्। (३) पुनात्यसौ भुवि इति च श्रीर० पाठः।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तयोस्ताभ्यां मुदा सम्यक् स्वशिरोनिधानादिना द्वयोस्तत्त्वैक्येन स्नेहेन चाभेददृष्ट्या वरासनमेकमेवानीय अतस्तस्मिन् मुदा निविष्टयोरासीनयोः सतोः तयोरिति पुनरुक्तिर्भक्तिभरेण तदेति पाठः क्वचित् बभार शिरसि दधारेति क्वचित् ॥ ३६ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विश्वात्मदैवं विश्वात्मनां दैवमीशम् ॥ ३५—३८ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तयेति । यथा गुरोः कामं कृतवन्तौ तथा ममापि कामम् इष्टं कुरुत नावां शक्तौ इति मावोचतमित्यभिप्रायेण विशिनष्टि-योगीश्वरेश्वरौ निरतिशयाश्चर्यशक्तिमन्तौ कोसौ काम इत्यत आह-भोजेति । भोजराजः कंसस्तेन हतान् ॥ ३३ ॥

एवमिति । योगमायामाश्चर्यशक्तिम् उपाश्रितौ रसातलं (सुतलं) बलिचक्रवर्त्तिनो लोकं विविशतुः ॥ ३४ ॥

तस्मिन्निति । दैत्यराट् बलिः विश्वेषामात्मनां दैवं दैवभूतं तथा नितरामात्मनो दैवतभूतौ तस्मिन् सुतले प्रविष्टौ उपलभ्य दृष्ट्वा तयोर्दर्शनेन य आह्लादस्तेन परिप्लुतः व्याप्तः आशयो मनो यस्य सः सान्वयः सपरिवारः सद्यस्तदैवोत्थाय ननाम ॥ ३५ ॥

तयोरिति । तयोः रामकृष्णयोः श्रेष्ठमासनमानीयादाय समर्प्य तत्र उपगमने पादाववनिज्य प्रक्षाल्य तज्जलं सपरिवारः शिरसा दधार कुतः हि यस्मादिदः अम्बु जलम् आब्रह्म ब्रह्माणमभिव्याप्य कृत्स्नं जगत् पुनाति पुनदधिति पाठे यदम्बु पवित्रयत् वर्त्तत इत्यर्थः ॥ ३६ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो भगवत्कृतमाह—एवं सञ्चोदिताविति । गुर्वर्थेनान्वेषणार्थं गताविति पूर्वमप्युक्तं तथात्रापि सिद्धवत्कारेण जानीत इति सुतलमेव गतौ गमनमार्गमाह—योगमायामुपाश्रिताविति । अष्टाविंशतितत्त्वेभ्यः अधस्ताद्योगमाया तस्यां प्रविष्टः स्वगृहदेशे मध्ये व्यवधायकाभावात् सुतल एव प्रादुर्भूतौ ॥ ३४ ॥

ततो दैत्यः कदाचिदाज्ञां न करिष्यतीत्याशङ्कानिवृत्त्यर्थं बलिकृतां पूजामाह—तस्मिन् प्रविष्टाविति चतुर्भिः । तस्मिन् स्थले प्रवेशमात्र एव दैत्यानां स्वामी शीघ्रनिवेदकैः दैत्यैर्भगवदागमनमुपलभ्य सद्यः समुत्थाय ननामेति सम्बन्धः पूर्वं भगवता बद्ध इति कदाचिद्द्वेषाद्भयाद्वा सम्मुखो न भवेदित्याशङ्क्याह—विश्वात्मदैवमिति । विश्वस्यात्मा दैवञ्च भगवान् ततात्मत्वान्न भयम् आराध्यत्वान्न द्वेष इत्यर्थः । यत्र भगवान् जगत एव एवंविधः साधारणस्यापि भवद्द्वेषसम्भावनारहितः तत्र स्वस्य महतः कथमेवं भविष्यतीत्यर्थः । नच वक्तव्यं विश्वस्य भगवानपकारं करोतीति यतः सर्वस्योत्पत्तिप्रलयकर्त्ता स एव तथा ज्ञानं नास्तीति चेत् तर्हि ज्ञानं गुणो जात इति ज्ञानवतामधिक एव पूज्य इत्याह-सुतरां तथात्मन इति । किञ्च पूर्वं संसारव्याप्तया अनिर्वृतः स्थितः इदानीं सुतले स्वर्गाधिके सुखेन तद्भावनया तिष्ठतीति स्मृतिसञ्जातया भक्त्या पूर्णान्तःकरण एव तद्दर्शनाह्लादेन अधिकेन परिप्लुताशयो जातः अत आलस्यादिधर्मेषु लीनेषु सद्यः समुत्थाय ननाम तत्पुत्रस्य बाणस्य बाहुच्छेदो भगवता कृत इति कदाचिदनमनं स्यात्तत आह-सान्वय इति पुत्रपौत्रादिसहितः ॥ ३५ ॥

ततः पूजामाह-तयोः समानीयेति मुदेत्युभयत्र सम्बन्धः आसनस्याग्रहणे पुनर्भयं सम्भावितं स्यात् अत आह निविष्टयोस्तत्रेति तत्रासने उपविष्टयोः सतोः महात्मत्वात् निःशङ्कतया तत्रोपवेशनम् अन्यथा बद्धस्य गृहे प्रभुः सशङ्को भवति तदा तत्पादाववनिज्य चरणोदकं सकुटुम्बः दधार तस्य माहात्म्यमाह यदम्बु गङ्गारूपमाब्रह्म ब्रह्मलोकमारभ्य पातालपर्यन्तं पुनातीति आब्रह्मपुनत् हेत्वाश्रये कथमन्यस्य शेषमावं प्राप्तम् अन्यस्य शोधकमिति ततः पुष्पादिभिः समर्हयामास महार्हाणि वस्त्राण्याभरणानि च अनुलेपनानि च चतुःसमादीनि तथा स्रग्धूपदीपाः अमृतममृतमन्नानि वा भक्ष्याणि आदिशब्देन ताम्बूलाद्युपचारा गृह्यन्ते नैतावता साधारणधर्मेण भगवांस्तुष्यतीति स्वगोत्रवित्तात्मसमर्पणं च कृतवान् आत्मीयाः धनं देहश्चेति त्रितय एव सर्वानुप्रवेशः ॥ ३६—३७ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

दैत्यराट् बलिः विश्वस्यात्मा च दैवमाराध्यश्च एकत्वमीश्वरत्वेन द्वयोरैक्यात् ॥ ३५ ॥

सवृन्दः सपरिवारः यदम्बु आब्रह्म ब्रह्माणमप्यभिव्याप्य पुनत् पवित्रयद्भवति ॥ ३६-३७ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दैत्यराट् बलिः विश्वात्मनां सर्वेषां जीवानां दैवतम् एकवचनं द्वयोरैक्यात् सान्वयः सपरिवारः ननाम ॥ ३५ ॥

यदम्बु जलम् आब्रह्म ब्रह्माणमभिव्याप्य जगत् पुनत् पवित्रयत्तेन तज्जलं सवृन्दः सपरिजनः दधार शिरसेति शेषः ॥ ३६-३७ ॥

———

भाषा टीका ।

हे योगेश्वरेश्वर! जैसे आपने गुरुजी के मनोरथ की पूर्त्ति करी तैसेहि मेरे मनोरथ की पूर्त्ति भी कीजियेगा, कंसके मारेभए और अब आप के लाए भए अपने उनहि पुत्रों को देखने की मोको कामना है ॥ ३३ ॥

समर्हयामास स तौ विभूतिभिर्महार्हवस्त्राभरणानुलेपनैः।
(१)ताम्बूलदीपामृतभक्षणादिभिः स्वगोत्रवित्तात्मसमर्पणेन च ॥ ३७ ॥
स इन्द्रसेनो भगवत्पदाम्बुजं बिभ्रन्मुहुः प्रेमविभिन्नया धिया।
उवाच ह्यानन्दजलाकुलेक्षणः प्रहृष्टरोमा नृप गद्गदाक्षरम्(२) ॥ ३८ ॥

बलिरुवाच।

नमोऽनन्ताय बृहते नमः कृष्णाय वेधसे।
साङ्ख्ययोगवितानाय ब्रह्मणे परमात्मने ॥ ३९ ॥
दर्शनं वां हि भूतानां दुष्प्रापं चाप्यदुर्लभम्।
रजस्तमस्स्वभावानां यन्नः प्राप्तौ यदृच्छया ॥ ४० ॥

भाषा टीका।

श्री शुक उवाच॥ हे भारत! माता ने इस प्रकार जब आज्ञा करी तब श्री कृष्ण बलदेवजी दोनों निज आश्चर्य शक्तिको अङ्गीकार कर सुतल लोक में चलेगए॥ ३४॥

सुतल लोक में प्रगटभए सब जीवात्माओं के इष्ट देव और जैसे सब जी वों इष्ट देव हैं तैसेहि अपने तो अत्यंतहि इष्ट देव हैं एताद्दश श्री कृष्ण बलदेवजी का दर्शन कर दर्शन से आनन्द भया आनन्द से बलि का अंतःकरण व्याप्त होगया तब तो परिवार सहित दैत्यों के राजा बलिने शीघ्र उठ कर श्री कृष्ण बलदेव जी को प्रणाम किया॥ ३५॥

श्रीकृष्ण बलदेवजी को श्रेष्ठ आसन समर्पण कर उस पर विराज मान उन सर्वज्ञ दोनोन के चरणारविन्दों का प्रक्षालन कर ब्रह्मा लेकर सब जगत्को पवित्र करि उस चरण प्रक्षालन जल को परिवार सहित बलि महाराज ने. मस्तक पर धारण किया॥ ३६॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

इन्द्रसेनो बलिः प्रेमविभिन्नया प्रेमार्द्रया धिया बिभ्रद्धारयन्॥ ३८॥

अनन्ताय शेषाय बृहते फणैकदेशे विश्वधारणाद्बृहत्तस्मै कृष्णाय सदानन्दरूपाय च वेधसे जगद्विधात्रे साङ्ख्ययोगवितानायेत्यादि पदत्रयमैक्यविवक्षया॥ ३९॥

योगेश्वराणामपि दुर्दर्शौ युवामस्माभिर्दृष्टावित्येतदतिचित्रमित्याह—दर्शनमिति। दुष्प्रापमपि युष्मत्कृपया केषाञ्चिददुर्लभं सुलभमपि भवति तदाह—रजस्तमस्स्वभावानामिति। नो दर्शनं प्राप्तौ॥ ४०॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

सम्यगर्हयामास सम्यक्तासाधनान्याह—महाविभूतिरित्यादिना। सतौ विभूतिरिति क्वचित्। ता एवाह महार्हेत्यादिना। अमृतवत् भक्षत इति तथातत् महामिष्टान्नपानादिकमिति यद्वा अमृतं सुधां भक्षणं च फलादिकं ताम्बूलादिकं वा आदिशब्दाद्व्यजनपर्यङ्कादयः पुनरात्मपर्य्यन्तसमर्पणञ्च सर्वं सागरस्थानीयाय वामनरूपाय सम्प्रति तु समुद्रस्थानीयाय स्वयं भगवते श्रीकृष्णायेत्यविशेष एव विशेषाग्रदोषाय तद्धेयं व्यवहारात्तदानीं तद्द्वारदेशविराजमानत्वास्तस्य श्रीवामनस्य च तदवतारसमये तत्रैव प्रवेशो गम्यते॥ ३७॥

इन्द्रस्य सेनेव सेना यस्य सः प्रायः समानचतुरङ्गत्वात् भगवतो युगपत् द्वयोरपि पदाम्बुजम् अभेदेन भावनादेकत्वं मुहुर्बिभ्रत् अतृप्त्या पुनःपुनः शिरसि वक्षसि च धारयन् यद्वा उत्तरोत्तरोद्भूतत्वान्मुहुर्यत्प्रेम तेन विभिन्नया ह हर्षे इत्थमेव सम्बोधयति नृपेति प्रेमलक्षणमाह आनन्देत्यादिना तत्रानन्देति तृतीयायाश्छान्दसो लुक् तस्मात्प्रहृष्टेत्यत्र गद्गदेत्यत्र योज्यं गद्गदाक्षरं यथा स्यात् पाठान्तरेतु गद्गदेत्यक्षरं वर्णोच्चारो यस्य सः॥ ३८॥

अनन्ताय श्रीकृष्णद्वितीयव्यूहरूपाय व्रजगमनन्तसख इति श्रीगोपिकाविलापे तन्नामत्वेन तत्प्रसिद्धेः तत्र शेषाद्यन्तर्भावार्थमाह—बृहत इति। कृष्णाय च स्वयं भगवत्त्वेन प्रसिद्धाय यतो वेधसे सर्वकर्त्रे ननु ज्ञानशास्त्रे मुख्यतया ब्रह्म प्रतिपाद्यते योगशास्त्रे परमात्मा तयोः का गतिस्तत्राह—साङ्ख्येति। साङ्ख्ययोगयोः ज्ञानाष्टाङ्गशास्त्रयोर्वितानो यस्मिन् यदेकनिष्ठो विस्तर इत्यर्थः। तत्तदाख्यतदेकदेशाविर्भावनिरूपणद्वारा स एव ताभ्यामुद्दिश्य इति विवक्षितं यथोक्तं श्रीकपिलदेवेन—

"ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः।
द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः॥
यथेन्द्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः।

---

(१) सम्भूपः इति वीर० पाठः।

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एको नानेयते तद्भगवान् शास्त्रवर्त्मभिः" इति ।

अत एव ब्रह्मणे परमात्मने च तुभ्यमेव ॥ ३९ ॥

हि निश्चितं च अपि दुष्प्रापमपि अपिशब्दस्य अदुर्लभमित्यनेनान्वयः अदुर्लभमपि यदृच्छया तवैव स्वैरितयेत्यर्थः अन्यत्तैः तत्र नो दर्शनं प्राप्ताविति अस्मत्कर्तृकं दर्शनं युवां प्राप्तावङ्गीकृतवन्तावित्यर्थः ॥ ४० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इन्द्रसेनो बलिः ॥३८॥

साङ्ख्ययोगविधानाय साङ्ख्ययोगप्रवर्त्तकाय ॥ ३९—४४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

समर्हयामासेति । स बलिः तौ समर्हयामास विभूतिभिः पुष्कलैः अमृतभक्षणममृततुल्यभक्ष्यद्रव्यं स्वगोत्रं स्वकुलं वित्तमात्मा च तेषां समर्पणेन च समर्हयामासेति सम्बन्धः ॥ ३७ ॥

स इति । इन्द्रसेनो बलिः प्रेमविभिन्नया प्रेमार्द्रया धिया भगवत्पादाम्बुजं धारयन् आनन्दजलैराकुले व्याप्ते अक्षिणी यस्य प्रहृष्टान्युदञ्चितानि रोमाणि यस्य गद्गदानि कुण्ठितानि अक्षराणि यस्य सः हे नृप उवाच ॥ ३८ ॥

तदेवाह—नम इत्यादिना विमुच्यत इत्यन्तेन ग्रन्थेन । अनन्ताय शेषाय वृहते फणैकदेशेन विश्वधारकाय वेधसे जगद्विधात्रे साङ्ख्ययोगविधानाय साङ्ख्ययोगप्रवर्त्तकाय वितानायेति पाठे मत्वर्थीयोऽच् द्रष्टव्यः वितानो यज्ञः स च कर्मयोगोपलक्षकः योगो भक्तियोगः साङ्ख्यं ज्ञानयोगः ते अस्याराधनरूपतया सन्तीति तथा तस्मै कर्मज्ञानयोगानुगृहीतभक्तियोगाराध्यायेत्यर्थः । ब्रह्मणे स्वरूपेण गुणैश्च निरतिशयबृहते परमात्मनेऽन्तःप्रवेशनियमनाभ्यां लोकत्रयस्य भत्रे व्याप्यगतदोषास्पृष्टाय च ॥ ३९ ॥

युवामस्माभिर्दृष्टावित्येतन्नातिचित्रमित्यभिप्रेत्याह — दर्शनमिति । वां युवयोर्दर्शनं केषाञ्चिद्भूतानां दुष्प्रापं दुर्लभञ्चापि केषाञ्चित् युष्मत्कृपया तु सुलभमेव तदुपपादयति रजस्तमःस्वभावानामिति । यद्यस्माद्रजस्तमःप्रचुरस्वभावानामपि नोऽस्माकं युष्मद्दर्शनं प्राप्तम् अतो भवत्कृपैव तत्र निदानमिति भावः ॥४०॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु दैत्योऽयं कथमेवं भगवद्भक्त इति चेत्तत्राह—स इन्द्रसेन इति । इन्द्रस्येव सेना यस्येति इन्द्रः उत्तमसत्त्वांशः तस्येन्द्रियादिसामग्री अत्यन्तं भगवत्परा तथास्यापीत्यर्थः । वाह्यसेनापि तथैवेति ज्ञातव्यं महत्त्वमपि सूच्यते तादृशोपि भगवत्पदाम्बुजं बिभ्रत् हस्तद्वयेन पश्चान्मुहुः प्रेमविभिन्नया धिया च बिभ्रदुवाच वचनस्यान्यानीन्द्रियाणि महाभूतान्याह आनन्दजलाकुलेक्षणः प्रहृष्टरोमा गद्गदाक्षरः इन्द्रियाणां देहस्य वाचश्च वैकल्यं निरूपितम् ॥ ३८ ॥

एवं परमभक्तियुक्तः भगवतः षड्गुणप्रतिपादकैः भगवत्प्रतिपादकेन च स्तुत्वा प्रार्थयते नमोऽनन्तायेत्यष्टभिः श्लोकैः । आदौ भगवतः ऐश्वर्यं स्मृत्वा नमस्यति—नमोऽनन्तायेति । ईश्वरः स एव यो न केनापि परिच्छिद्यते अयश्च देशकालापरिच्छिन्नः किञ्च स एव समर्थो यो महान् भवति तदाह बृहत इति बलभद्रनमस्कारो वा अयं अनन्त इति शेषः प्रादुर्भूतः स एव बृहद्ब्रह्मेति स एवेश्वरो यो नित्यानन्दः स कृष्णः यश्च जगत्कर्त्ता तदाह—वेधस इति जगत्कर्तृमुख्यं ब्रह्मेति भगवत एव विशेषणं शास्त्रयोनित्वमपि ब्रह्मलक्षणमिति विशेषसिद्धान्तप्रतिपादकत्वेन माहात्म्यमाह—साङ्ख्ययोगयोर्वितानाय विस्तारहेतवे तत्र हेतुमिव वदन् सिद्धान्तान्तरकर्तृकत्वमाह—ब्रह्मणे परमात्मन इति । ब्रह्मत्वाद्वेदतदर्थरूपत्वं परमात्मन इति वैष्णवसिद्धान्तप्रवर्त्तकत्वं तदर्थप्रतिपादकत्वञ्च साङ्ख्या ज्ञानप्रधाना इति ब्रह्मपराः योगिनस्तु परमात्मध्यानपराः इति तद्वितानकर्तृत्वं सिध्यति अनेन शास्त्रदृष्ट्या ज्ञानं ध्यानेन च ज्ञानं भगवतः ॥ ३९ ॥

ननु, भगवत्साक्षात्कारः कस्यचिद्भवति स मम जात इति केवलं भगवद्वीर्येणैव तद्भवतीति भगवद्वीर्यं समर्थयन्नाह दर्शनं वां हि भूतानामिति । ये उत्पद्यन्ते प्रवाहे तेषाम् उत्पत्तिविरोधात् भगवद्दर्शनं दुर्लभं वां ब्रह्मपरब्रह्मणोः स्वक्रियाप्राप्यं दुःखेनापि यन्न भवति तद्दुष्प्रापं देवादिवरेणादियन्न लभ्यं तद्दुर्लभं चकारात्सर्वसाधनैरप्यलभ्यता निरूपिता तत्र हेतुः रजस्तमःस्वभावानामिति राजसानां दुष्प्रापं तामसानां दुर्लभं राजसानामपि केषाञ्चित् दुर्लभमिति चकारः एतादृशावपि नोऽस्माकं रजस्तमःस्वभावानां यद्यस्मात्प्राप्तौ तत्र हेतुर्यदृच्छैव ॥ ४० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

इन्द्रसेनो बलिः ॥ ३८ ॥

बृहतेऽनन्ताय अनन्तस्याप्यन्तर्विशतेंऽशिने श्रीबलदेवाय नमः वेधसे विधात्रे सर्वकारणस्वरूपाय कृष्णाय नमः साङ्ख्यवितानाय ज्ञानशास्त्रविस्तारकाय ब्रह्मणे नमः योगवितानाय योगशास्त्रविस्तारकाय परमात्मने नमः ॥३९ ॥

भूतानाम् दुष्प्रापमपि अतिदुर्लभं सुप्रापं केषां रजस्तमस्स्वभावानामप्यसुराणामित्यर्थः । यत् यतः यदृच्छयैव प्राप्तौ ॥ ४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इन्द्रसेनो बलिः बिभ्रत् धारयत् ॥ ३८ ॥

बृहतेऽनन्ताय शेषस्याप्यंशिने बलाय वेधसे विश्वविधात्रे साङ्ख्ययोगवितानाय साङ्ख्ययोगप्रवर्त्तकाय साङ्ख्ययोगे ज्ञान-

दैत्यदानवगन्धर्वाः सिद्धविद्याध्रचारणाः ।
यक्षरक्षःपिशाचाश्च भूतप्रमथनायकाः ॥ ४१ ॥
विशुद्धसत्त्वधाम्न्यद्धा त्वयि शास्त्रशरीरिणि ।
नित्यं निबद्धवैरास्ते वयञ्चान्ये च तादृशाः ॥ ४२ ॥
( प्राप्ताः सालोक्यसामीप्यं सारूप्यमथ सात्मताम् ।
ते सर्वे पुण्डरीकाक्ष भावो हि भवकारणम् ॥ ० ॥)
केचनोद्बद्धवैरेण भक्त्या केचन कामतः ।
न तथा सत्त्वसंरब्धाः सन्निकृष्टाः सुरादयः ॥ ४३ ॥
इदमित्थमिति प्रायस्तव योगेश्वरेश्वर ।
न विदन्त्यपि योगेशा योगमायां कुतो वयम् ॥ ४४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

योगे तत्प्रतिपादके वेदान्ते वितानः स्वरूपगुणादिनिर्णय—विस्तारो यस्य तस्मै इति वा ॥ ३९ ॥

सामान्यतो भूतानां युवयोर्दर्शनं दुर्लभं तत्र केषाञ्चिद्-दुर्लभं भवति अतो नोऽस्माकं रजस्तमःस्वभावानां दर्शनं प्राप्तं ॥ ४० ॥

---

भाषा टीका।

श्रेष्ठ वस्त्र भूषण चन्दन ताम्बूल दीपावलि अमृत तुल्य भोजनादि निज पुत्र पौत्रादि धन निज देह समर्पण इत्यादि ऐश्वर्यों से बलि ने श्रीकृष्ण बलदेवजी का पूजन किया ॥ ३७ ॥

हे नृप ! बलि के नेत्र आनन्द जल से व्याप्त होगए शरीर में रोमावली खडी होगई प्रेमसे आर्द्र बुद्धि के साथ भगवान् के चरणारविन्द को वारंवार मस्तक पर धारण करते जिस प्रकार गद्गदवाणी होजावे उसी प्रकार वह बलि महाराज बोले ॥ ३८ ॥

बलिरुवाच।

सब देश सब काल सब वस्तु में व्याप्त स्वरूपगुण से बडे आपके अर्थ मेरा प्रणाम हो परमानन्द स्वरूप सर्वज्ञ आपके अर्थ मेरा प्रणाम हो आत्मज्ञान और उस ज्ञान का साधन निष्काम काम इन दोनोंन का विस्तार करने वाले परब्रह्म परमात्मा आपके अर्थ मेरा प्रणाम हो ॥ ३९ ॥

रजतम स्वभाव वारे हमको प्रयत्न के विनाहि आपका दर्शन प्राप्त भया यद्यपि अभक्त प्राणियों को आपका दर्शन दुर्लभ है तथापि भक्तजनों को आपकी कृपा से वह दर्शन सुलभ हि है ॥ ४० ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

अहो विशिष्टो वयं सात्विकभक्तेभ्योऽपि सभाग्या इत्याह—दैत्येत्यादित्रिभिः ॥ ४१ ॥ ४२ ॥

उद्बद्धवैरेण या भक्तिस्तया केचनेति चैद्यादयः कामतो भक्त्या गोप्यादयो यथा सन्निकृष्टास्त्वदात्मतां प्राप्ताः नथा च सत्त्वसंरब्धा सत्त्वाविष्टा अपि सुरादयो न सन्निकृष्टा इति ॥ ४३ ॥

ननु, सात्विकेभ्योऽपि राजसादयः सन्निकृष्टा इति चित्रं तत्राह—इदमित्थमिति । इदमिति स्वरूपतः इत्थमिति विशेषतश्च ॥ ४४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

दैत्येति त्रिकम्। दैत्यादयस्त्वयि नितरां बद्धवैरा अपि वैरं कुतः तत्राह—विशेषतः शुद्धं रज आद्यमिश्रितं यत् सत्त्वं तद् धाम आश्रयो यस्य तस्मिन् तदधिष्ठातरीत्यर्थः। अतः शास्त्रस्य शरीरिणि आत्मनि वेदमार्गप्रवर्तक इत्यर्थः। दैत्यादीनां रजस्तमःस्वभावत्वेनोन्मार्गप्रवृत्त्या स्वप्रतिकूलत्वेन मतैः साधुभिः सह द्वेषेण तत्परिपालके त्वयि स्वत एव द्वेषोत्पत्तेरिति भावः। तत्र गन्धर्वादीनां चतुर्णां वैरप्रसिद्ध्यभावेऽपि तदुक्तिः दैत्यानुगानां केषाञ्चिद्रजस्तमस्स्वभावापेक्षया यक्षादयश्च वयं तामसाः सर्वे दैत्यानुगा एव ते दुष्टत्वेन प्रसिद्धा। दैत्यादयो वयमक्रूरादय इत्यर्थः । ममापि तत्पक्षपातित्वान्निबद्धवैरत्वमेवेतिभावः। अन्ये च केचिन्मनुष्यास्तादृशा दैत्यादिसदृशाः यथा कंसादयः चकारद्वयस्तूभयेषामपि प्राधान्यात् नेष्वेव केचित् केवलतमःस्वभावाः पौण्ड्रकादयः उद्बद्धेन वैरेण तत्कृतमनोभिनिवेशेनेत्यर्थः। सन्निकृष्टा मुक्तिपदं प्राप्ताः केचित्तु मिश्रा रजोमिश्राः कामतो यदा आविवाञ्छया या भक्तिस्त्रैलोक्यदानं तया सन्निकृष्टाः सुरादयस्तु न तथा सन्निकृष्टा इति ॥ ४१—४३ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तव योगमायाम् ऐश्वर्य्यविशेषमित्यर्थः । योगेशाः श्रीसनकादयोपि न विदन्ति ज्ञातुं न शक्नुवन्ति तत्र हेतुः हे योगेश्वरेश्वरेति अचिन्त्यानन्तमहैश्वर्य्यादित्यर्थः । प्राय इति भक्तानां केषाञ्चिद्विद्धत्वात् अन्यस्तैः अथवा देवादय एव त्वद्दर्शनमर्हन्ति नतु वयमित्याह—दैत्येति त्रिभिः । यतो दैत्यादयो वयं निबद्धवैराः तादृशत्वे हेतुः केचनेति उद्बद्ध-वैरेण विशिष्टाः कचन कामतः स्वार्थसाधनायैव भक्त्या विशिष्टाः जात्या तु निबद्धवैरा एवेत्यर्थः । सुरादयो न तथा न तादृशाः तत्र हेतुः यतः सत्त्वसंरब्धाः अतस्तव सन्निकृष्टाः साक्षाद्दर्शनादिना त्वत्सन्निकर्षयोग्या इत्यर्थः । तथाप्यस्माभिर्यद्दर्शनं तव तत्र च स्वयं भगवद्रूपेणैवाविर्भूतस्य सामञ्जस्य प्राप्तं तद्धेतुः केन ज्ञेय इत्याह—इदमिति अर्थः स एव यद्वा निजैश्वर्य्यप्रकटनेन तव कृपाविशेषविस्तारणादेवेत्यभिप्रायेण कृपामेव स्तौति—इदमिति । योगः ऐश्वर्य्यविशेषः तद्रूपा या माया कृपा तां इदमित्थमिति ईदृशी अनेन प्रकारेण हेतुना च स्यादिति योगेशा अपि न विदन्ति अपरिच्छिन्नत्वहेतुकाद्यनन्तमाहात्म्यात् तत्रैव च हेतुर्योगेति अन्यत् समानम् ॥ ४४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अहो विद्विषोपि वयं सात्विकभक्तेभ्योऽपि सभाग्या इत्याह-दैत्येति त्रिभिः । दैत्यादयस्त्वयि नित्यं बद्धं वैरं येषां तथाभूताः कथंभूते त्वयि विशुद्धस्य रजस्तमोभ्यामनुविद्धस्य सत्त्वस्य धाम्नि आश्रये अनेन कामक्रोधादिप्राकृतदोषप्रतिभटत्वमभिप्रेतम अद्धा साक्षात् शास्त्रशरीरिणि शास्त्रवेद्यं शरीरं स्वरूपमस्यास्तीति तथा तस्मिन् ते वयमित्थम्भूता वयमित्यर्थः । तथाचान्ये कंसादयश्च तादृशाः नित्यं निबद्धवैरा इत्यर्थः ॥ ४१—४२ ॥

प्राप्त इति । त एते सर्वे सालोक्यादिरूपां मुक्तिं प्राप्ताः तत्र सालोक्यं नाम भगवता सह समानलोकाधिवासित्वं सामीप्यं सान्निध्यं सारूप्यं समानवेषता सात्मता समानात्मगुणत्वं सायुज्यमिति यावत् गुणाष्टकाविर्भावसाम्यं हि सायुज्यं सार्ष्टित्वमथसात्मतामिति पाठे सार्ष्टित्वं समानसमृद्धित्वं सालोक्यादीनि त्रीणि सायुज्यप्रयुक्तानीति न मुक्तितारतम्यशङ्कावकाशः निबद्धवैराणामपि सालोक्यादिप्राप्तिः कुत इत्यत आह—भाव इति । हि यस्माद्भावः चित्तवृत्तिविशेषः भवकारणं फलोदयकारणं त्वयि कोपि वा निरन्तरचित्तवृत्तिविशेषो मुक्तिकारणमित्यर्थः ॥ ० ॥

निदर्शयति-केचनेति । केचन कंसादयः उद्बद्धवैरेण त्वयि निबद्धवैरेण प्राप्ता इत्यनुषज्यते केचन भक्त्या केचन गोपीजनाः कामतः कामात्प्राप्ताः किञ्च यथा सन्निकृष्टास्त्वत्सात्मतां प्राप्ताः तथा सत्त्वसंरब्धाः सत्त्वाविष्टा अपि सुरादयो न प्राप्ताः यद्वा यथोद्बद्धवैरादिना प्राप्तास्तथा सन्निकृष्टा अपि सत्त्वप्रधना अपि नानुप्राप्ता इत्यर्थः ॥ ४३ ॥

त्वत्कृपासनाथो भाव एव भवकारणमन्यथा त्वन्मायायाथात्म्यावेदिनां कुतस्ततो निस्तार इत्याभिप्रायेणात्मनः कैमुत्यनयेन तस्या दुर्ज्ञेयतामाह—इदमिति । हे योगीश्वरेश्वर ! योगीश्वरा अपि प्रायशस्तव योगमायामिदमित्थमिति स्वरूपतः स्वभावतश्च न विदन्ति कुतो वयं विद्मः ॥ ४४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शास्त्रस्य शरीरिणि आत्मानं प्रतिप्रवर्त्तके इत्यर्थः । गन्धर्वादीनां चतुर्णां केषाञ्चिद्दैत्यानुगत्वाद्वैरं यक्षादीनां तामसत्वात् सुतरां वयमिति । ममापि तत्पक्षपातित्वान्निबद्धवैरमेवेति भावः ॥ ४१—४२ ॥

केचित् केवलतमस्स्वभावाः पौण्ड्रादयः उद्बद्धेन वैरेण तत्कृतमनोऽभिनिवेशेनेत्यर्थः । सन्निकृष्टाः मुक्तिपदं प्राप्ताः केचित् मद्विधा रजोमिश्राः कामतो यश आदिवाञ्छया या भक्तिः त्रैलोक्यादिदानं तया सन्निकृष्टाः शुद्धभक्तपदं प्राप्ताः सत्त्वाविष्टाः सुरादयस्तु न तथा सन्निकृष्टाः ॥ ४३—४४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

कथं राजसतामसानां दुर्लभमित्यत्र हेतुमाह—श्लोकद्वयेन । दैत्यदानवगन्धर्वाः राजसगुणभेदाः सिद्धविद्याधरचारणाश्च द्वितीयाः तामसराजसाः यक्षरक्षःपिशाचास्तामसाः भूतप्रमथनायकास्तामसतामसाः प्रमथा महादेवगणाः तयोर्वा नायकास्तृतीयाः ॥ ४१ ॥

एवं सर्वान् गणयित्वा तेषां स्वरूपमाह—विशुद्धसत्त्वधाम्नीति । भगवत आत्मत्वेपि उपाधिगुणेनैव विरोधः किञ्च भगवान् वेदादिशास्त्रं च कृतवान् तेच लोकप्रधानाः अतः उभयेषां विरोधो युक्त इत्याह शास्त्रशरीरिणीति शास्त्रैकसमधिगम्यशरीरयुक्ते अत एव नित्यं निबद्धवैराः ते पूर्वोक्ताः वयञ्च यद्यप्यस्माकमिन्द्रियादिवर्गः सात्त्विकः तथापि देहो राजस एवेति भिन्नतया गणयति । अन्येच तथा ब्राह्मणाः चकारात्तत्सम्बन्धिनश्च ॥ ४२ ॥

ननु ते चेद्द्वेषिणः तदा तेषां नरकपात इति आसुरीं योनिमापन्ना इति वाक्यानुसारेण कदाचिदप्यमुक्तौ कथं भगवान् सर्वात्मेति चेत् तत्र मुख्यं सिद्धान्तमाह केचनोद्बद्धवैरेणेति त्रिविधा लोकाः लौकिकाः तत्र तामसाः उद्बद्धवैरेण त्वां जानन्ति प्राप्नुवन्ति वा सात्विकाः भक्त्या राजसाः कामतः तथा वैदिकाः सात्विकाः सत्त्वेन संरब्धाः सत्वगुणेन साहङ्कारेण कर्मस्वाविष्टचित्ताः सुरादयोपि ॥४३॥

इदमित्थमिति प्रायेण ते योगमायां न विदन्ति कुतो वयं न लौकिका न वैदिकाः निषिद्धभावनयाऽधःपतिताः योगेश्वरेश्वर इति सम्बोधनात् भोगाभिनिविष्टाः देवाः मा जानन्तु योगेश्वराः ज्ञास्यन्तीति तान्निषेधति योगेशा अपि ॥ ४४ ॥

तन्नः प्रसीद निरपेक्षविमृग्ययुष्मत्पादारविन्दधिषणान्यगृहान्धकूपात् ।
निष्क्रम्य विश्वशरणाङ्घ्र्युपलब्धवृत्तिः शान्तो यथैक उत सर्वसखैश्चरामि ॥ ४५ ॥
शाध्यस्मानीशितव्येश निष्पापान् कुरु नः प्रभो ।
पुमान् यच्छ्रद्धया तिष्ठंश्चोदनाया विमुच्यते ॥ ४६ ॥
श्रीभगवानुवाच ।
आसन् मरीचेः षट् पुत्रा ऊर्णायां प्रथमेऽन्तरे ।
देवाः कं जहसुर्वीक्ष्य सुतां यभितुमुद्यतम् ॥ ४७ ॥
तेनासुरीमगन् योनिमधुनाऽवद्यकर्मणा ।
हिरण्यकशिपोर्जाता नीतास्ते योगमायया ॥ ४८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अहो किमाश्चर्यं रजस्तमस्स्वभावा अपि वयं सात्विकेभ्यो देवेभ्योऽपि सभाग्या अभूमेत्याह—दैत्येति त्रिभिः । शास्त्रशरीरिणि "सात्वतशास्त्रविग्रहम्" इति सप्तमोक्तेर्भक्तिशास्त्रोक्त—सच्चिदानन्दमयशरीरे त्वयि यथा वयं सन्निकृष्टाः सन्निकर्षं प्राप्ताः न तथा सत्त्वसंरब्धाः सत्त्वगुणाविष्टाः सुरादयः इत्यन्वयः । ननु यूयं मत्परमभक्ता एव तत्र न हीत्याह—ते प्रसिद्धाः हिरण्यकशिपुवंशा वयं बाणादिपुत्रसहितास्तद्विद्वेषिदैत्यपक्षपातिनो नित्यं नियद्धवैरा एवेति स्वस्मिन् दोषारोपः परमभक्त्यनुभाव एवायं ज्ञेयः अन्ये च दानवराक्षसाद्याः ॥ ४१-४२ ॥

केचनोद्बद्धवैरेण सहिताः केचन गन्धर्वादयः कामतो या भक्तिस्तया सहिताः सकामभक्ता इत्यर्थः । सन्निकृष्टा इति कृपया द्वारि स्थित्वैवास्मभ्यं दर्शनं ददासि अन्येभ्यो हत्वा मुक्तिं ददासि अन्येभ्यो गन्धर्वादिभ्यः स्वयशोगानादिगुणं स्वं स्वभक्तांश्च श्रावयितुं ददासि सुरादिभ्यस्तु स्वविस्मारकं विषयभोगमेव ददासीति न ते सन्निकृष्टा इति भावः ॥ ४३ ॥

ननु, तर्ह्येवमहं कथं करोमीति तत्र कस्ते तत्त्वं जानातीत्याह—इदमिति स्वरूपतः इत्थमिति प्रकारतश्च ॥४४॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सात्विकेभ्यो भक्तेभ्योऽपि रजस्तमस्स्वभावा वयं भाग्यवन्त इत्याह—दैत्येत्यादित्रिभिः ॥ ४१ ॥

विशुद्धसत्त्वमप्राकृतसत्त्वं तदात्मकं धाम मूर्तिर्यस्य तस्मिन् शास्त्रं वेदः शरीरं स्वरूपगुणादिधारकं प्रतिपादकं यस्य तस्मिन् ॥ ४२ ॥

केचन तमस्स्वभावाः चैद्यादयः उद्बद्धवैरेण या भक्तिस्तया केचन रजस्स्वभावाः अस्मदादयः कामतः धार्मिकत्वादिख्यापनसङ्कल्पेन या भक्तिस्तया यथा सन्निकृष्टाः श्रीभगवता सङ्गताः तथा सत्त्वसंरब्धाः सत्त्वगुणे भगवति संरब्धाः तत्पराः सुरादयो न सन्निकृष्टा इत्यन्वयः ॥ ४३ ॥

स्वदैन्यं द्योतयितुं कैमुत्तिकन्यायेन स्वस्य ज्ञानभक्तिहीनत्वं वदन् यद्यपि रजस्तमःप्रकृतयोऽपि स्वसर्वविशेषेण त्वां प्राप्नुवन्ति तथापि सात्विकमार्गे ज्ञानभक्तिसाधनभूते संस्थापयेति प्रार्थयते—इदमिति द्वाभ्याम् । इदमिति स्वरूपतः इत्थमित्यसाधारणधर्मतः तव योगमायाख्यां शक्तिं योगेशा न विदन्ति त्वां न विदन्तीति किमु वक्तव्यम् एवं सति वयं रजस्तमस्स्वभावास्तव योगमायां त्वां च न जानीम इति कुतस्तरां वक्तव्यम् एवं ज्ञानाभावे भक्त्यभावोऽपि सिद्धः ॥४४॥

---

भाषा टीका ।

दैत्य दानव गन्धर्व सिद्ध विद्याधर चारण यक्ष राक्षस पिशाच भूत प्रमथ नायक ॥ ४१ ॥

इस प्रकार दैत्यादिक तथा एतादृश अन्यजाति के प्राणी शुद्ध सत्व प्रचुर वेद शास्त्रोक्त दिव्य मुर्त्ति सम्पन्न आप के विषय में साक्षात् वैर बाँध ने वारे वे सब हम लोग, आप के समीप प्राप्त भए ॥ ४२ ॥

तथा कोई के शिशुपालादिक अत्यन्त बाँधे भए वैर के उत्पन्न भई साक्षात्कार रूप भक्त से आप के समीप में प्राप्त भए कोई एक गोपी आदि काम रूपी भक्ति से आप के समीप मे प्राप्त भए, तथा सत्व गुण सम्पन्न देवता आदि अवतक आप को नहि प्राप्त भए ॥ ४३ ॥

हे योगेश्वरेश्वर ! सनकादिक योगेश्वर भी आप की आश्चर्य शक्ति को स्वरूप सें स्वभाव से यह इतनाहि है ऐसा नहि जान ते' फिर हम लोग क्यों कर जान सकते हैं ॥ ४४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवं यद्यपि वैरभावेन त्वत्प्राप्तिर्भवेत्तथाऽपि मां सात्त्विकं कुर्विति प्रार्थयते-तदिति । तत्तथा नः प्रसीद यथा निरपेक्षैरात्मकामै

श्रीधरस्वामिकृतभावार्थदीपिका ।

रपि विमृग्यं युष्मत्पादारविन्दं तदेव धिषणमाश्रयस्तस्मादन्यद्गृहं तदेवान्धकूपस्तस्मान्निष्क्रम्य निर्गत्य विश्वस्य शरणं रक्षितारो वृक्षास्तेषामङ्घ्रिमूलेषु स्वत एव गलितैः फलादिभिरुपलब्धा प्राप्ता वृत्तिर्जीविका येन सोऽहं शान्तः मन्नेक एव चरामि उत अथवा सर्वेषां सखायो महान्तस्तैः सह यथा चरामीति ॥ ४५ ॥

कथमल्पपुण्यानामेवम्भावः सम्भवतीति चेत्तर्हि यथैतद्भवेत्तथास्माननुशिक्षयेत्याह—शाधीति । हे प्रभो ! ईशितव्याः सर्वे जीवास्तेषामीश ! यत्तवानुशासनमातिष्ठाम भयं चोदनायाः विधिनिषेधलक्षणायाः सकाशाद्विमुच्यते न खलु त्वद्भक्तो विधिकिङ्करः स्यादिति भावः ॥ ४६ ॥

तदुक्तं सर्वमनुमोद्य स्वागमनकारणं सप्रपञ्चं कथयति आसन्निति पञ्चभिः । ऊर्णायां भार्यायां प्रथमेऽन्तरे स्वायम्भुवमन्वन्तरे ते देवाः सुतां वाचं यमितुं यन्धुं मैथुनेन रमयितुमुद्यतमुपुक्तं कं प्रजापतिं जहसुरुपहासितवन्तः ॥ ४७ ॥

तेनावद्यकर्मणा पापेनाऽसुरीं योनिमगच्छगमन् अधुना तत्क्षणमेव हिरण्यकशिपोर्जाता इत्यर्थः ॥ ४८ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

यस्मादेवं कृपालुत्वं तत्तस्मादेव हेतोः नोऽस्मभ्यं प्रसीद प्रसादमेवाह—निरपेक्षेति । मुक्तेरपि विशेषेण शुद्धभक्तजनभावेन मृग्यं ननु सहसा लभ्यं यद्युवयोः पदं तदेव सर्वतापहरत्वेन परमहृद्यत्वादिगुणत्वेन परमामोदवत्त्वेन चारविन्दं तदेव च परमाश्रयत्वाद्धिषणं धिष्ण्यं तस्मादन्यद्धिष्ण्याभासो गृहं तद्वस्तुतोऽन्धकूपः स इव महावरकबन्धहेतुत्वाद्विशेषतश्च सुनलरूपत्वात्तत्सदृशमेवेति तस्मान्निष्क्रम्य विश्वशरणभूतो योऽयमङ्घ्रिः पादारविन्दं तस्य उप समीपे लब्धा वृत्तिर्दासजनोचितवर्त्तनं येन तथाभूतस्सन् उत एकः एकाक्येव च सन् ननु सपरिकरोऽपि सन् सर्वसखैस्त्वदीयजनैः सह चरामि सर्वसखत्वात्तेऽपि न मयि जुगुप्सां करिष्यन्तीति भावः ॥४५॥

अहो तादृशभाग्यहीनानस्मान् प्रति तादृशप्रसादो यदि वाधुना न सम्पाद्यते तदा निजागमनप्रयोजनमप्यादिश्यतां तेनैव कृतार्थाः भवेयमित्याशयेनाह—शाधीति किञ्चिदादिशेत्यर्थः । तत्र श्रीभगवतो योग्यतामाह—हे ईशितव्येश ! ईशितव्याः शासनीयाः ईशा ब्रह्मरुद्रादयोऽपि यस्य हे तादृशेति ! ननु तव तु तदनुष्ठाने योग्यता नास्ति तत्राह—निष्पापान् त्वद्भक्तिविघ्नेभ्यो निर्गतान् कुरु अनुशासनरूपेण तदङ्गीकारेणैव तदपगमात्सम्पत्स्यते सेति भावः । तदेव प्रमाणयति यदिति । यद्वद्रूपं पारम्परिकं साधारणमप्यनुशासनं किमुत साक्षात् आत्मविषयकमित्यर्थः ॥ ४६ ॥

तत्रोत्तरं प्रार्थनमेव सम्प्रति स्वाभीष्टविशेषेणानुमोदितुमुपोद्घातं प्रस्तौति—आसन्निति । देवा अपि जहसुः ॥ ४७ ॥

तेनेति सार्द्धकम् । आसुरयोनिगमनमप्रकारमेवाह—अधुनेति । हिरण्यकशिपोर्जाता इति द्वितीयाध्यायारम्भे व्याख्यातम् ॥४८॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

दुष्प्रापत्वेऽपि सुलभत्वमुपपादयति यद्यतः न अस्माभिः सार्ष्टिः समनर्द्धितां साम्यतां समानगुणत्वं सायुज्यं गुणाष्टकाविर्भाव साम्यं हि सायुज्यं भावश्चित्तवृत्तिः तदेवकारणं लयोदयकरणं निरपेक्षैः विमृग्य युष्मत्पदारविन्दे धिषणा बुद्धिर्यस्य सः निरपेक्षविमृग्यपादारविन्दधिषणः तस्मात् अन्यतायुक्तं गृहं गृहमेवान्धकूपं तस्मात् निष्क्रम्य ॥ ४५ ॥

चोदयनायाः कर्मबन्धात् ॥ ४६ ॥

मरीचिः प्रजापतिः कं प्रजापतिं देवा एत एव षट्पुत्राः ॥ ४७ ॥

उत्तराः अवद्यकर्मणा पापकर्मणा ॥४८ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्मादिति । तत्तस्मात्त्वन्मायास्वरूपस्वभाववेदनतरणयोर्दुष्करत्वात् केवलं प्रसीद प्रसन्ना भव अस्माननुगृहाणेत्यर्थः । कथं यथा निरपेक्षैर्निष्कामैर्विमृग्ये युष्मत्पादारविन्दे धिषणा बुद्धिर्यस्य अद्ययुक्तं गृहमेवान्धकूपः तस्मान्निष्क्रम्य विश्वस्य शरणं रक्षितारो वृक्षास्तेषामङ्घ्रिषु मूलेषु उपलब्धैः स्वत एव गलितैः फलादिभिः वृत्तिः जीवनं यस्य सोऽहं शान्तः सन्नेक एव उताथवा सर्वेषां सखायो ये महान्तः तैः सहितश्चरामि तथाऽनुगृहाणेत्यर्थः । सर्वसह इति पाठे शीतोष्णादिद्वन्द्वसहः ॥ ४५ ॥

प्रकृतागमनप्रयोजनबुभुत्सया स्वविषयकं शासनं प्रार्थयते—शाधीति । हे ईशितव्येश ईशितव्या नियम्यास्तेषामीश ! नोऽस्मान् शाधि कैङ्कर्यज्ञापनेन शिक्षयेत्यर्थः । किं तदित्यत आह—निष्पापानिति । हे प्रभो ! ततोऽपि किमत आह—पुमानिति । तिष्ठन् त्वच्छासनमाश्रयन् चोदनायाः कर्मबन्धाद्विमुच्यते ॥ ४६ ॥

इत्थं प्रार्थितः प्राह भगवान्—आसन्निति । प्रथमान्तरे स्वायम्भुवमन्वन्तरे मरीचेः प्रजापतेरूर्णायां भार्यायां षट्सुताः आसन् ते देवाः सुतां सरस्वतीं यमितुं मैथुनं कर्तुमुद्युक्तं कं ब्रह्माणं वीक्ष्य जहसुर्हसितवन्त इत्यर्थः ॥ ४७ ॥

तेन परिहासात्मकेन दुष्टेन कर्मणा आसुरीं योनिं प्रापुः तथैव हिरण्यकशिपोर्जाताः ते च योगमायया शक्त्या ततो नीताः सन्तः देवक्या उदरे जाताः हे राजन्! तेन कंसेन विहिंसिताः देवकी सुतानात्मजान् मत्वा शोचति ते चेमे तवान्तिकमन्तिके अध्यासते "अधिशीङ्स्थासां कर्म" (१·४·४६) इत्याधारस्य कर्मत्वम् ॥ ४८—४९ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

विश्वशरणभूतोऽयमङ्घ्रिः पादारविन्दं तस्य उप समीपं लब्ध्वा वृत्तिर्दासजनोचितवर्त्तनं येन तथाभूतः स्वसमानदासजनपरिकरसहितः सन् उत एकः एकाक्येव सन् विश्वसखैस्त्वदीयजनैः सह चरामि ॥ ४५ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अहो तादृशभाग्यहीनानस्मान् प्रति तादृशप्रसादो यदि वाऽधुना न सम्पाद्यते तदाऽग्रे आगमनप्रयोजनमप्यादिश्यतां तेनैव कृतार्था भवेमेत्याशयेनाह—शाधीति ॥ ४६—५३॥

—————

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भगवतो माहात्म्यं स्वस्यानधिकारञ्च निरूप्य अनधिकारिणा भगवदाज्ञाव्यतिरेकेण परित्यागः कर्तुमशक्य इत्याज्ञां प्रार्थयते—तन्नः प्रसीदेति । ननु किमिति परित्यागः प्रार्थ्यते तत्राह—हे निरपेक्षविमृग्येति निरपेक्षा ये सर्वतः तेषामेव विमृग्य इति अनेन गृहे स्थितस्य शूद्रस्येव वेदोच्चारणमिव भगवदन्वेषणं निषिद्धमिति ज्ञापितं साक्षादपि भगवदन्वेषणं नास्तीत्याह—युष्मत्पादारविन्दधिषणान्यगृहान्धकूपादिति । युष्मत्पादारविन्दे धिषणा येषां तेभ्यो ये अन्ये तेषामेव गृहं तदन्धकूपप्रायमेव भवति भगवच्चरणारविन्दस्मृतिप्रकाशाभावात् अत एव तस्माद्विनिष्क्रम्य तादृशमस्मद्गृहं दैत्याक्रान्तमिति । चरामीति प्रार्थना नन्ववस्थाभावात् कथं चरणं सेत्स्यतीति चेत् तत्राह—विश्वशरणाङ्घ्र्युपलब्धवृत्तिरिति । विश्वस्यापि शरणभूते अङ्घ्री येषां येषां परिभ्रमणेन सर्व एव संसारिणः गृहं त्यक्त्वा क्षणमप्यन्यत्र गन्तुमशक्ताः तेपि कृतार्था भवन्तीति सन्तो विश्वशरणाङ्घ्रयो भवन्ति तैः कृत्वा लब्धा उपजीविका वृत्तिर्भवति ता ये पिबन्त्यवितृषो नृप गाढकर्णैरिति प्रकारेण सन्निबोधायां निवृत्तायामान्तरदोषोऽपि निवृत्तो भविष्यतीत्याह—शान्त इति । यथावत् एकः परमहंसो यथेति वा तथा भविष्यामीति बाह्याभ्यन्तरदोषस्य निवृत्तत्वात् ॥ ४५ ॥

एवं कियत्कालपरिभ्रमणेन उत सर्वसखोऽपि भविष्यामि यथा सन् एतत्सर्वं परित्यागव्यतिरेकेण न भवतीति गृहे उद्विग्नो भगवन्तं प्रार्थयते एतत्कालान्तरकृत्यं साम्प्रतं किं कर्तव्यमिति विज्ञापयति—शाध्यस्मानिति । ननु यथाशास्त्रमेव कर्तव्यम् अभ्यागता वयं कथमाज्ञापयिष्याम इति चेत्तत्राह—हे ईशितव्येशेति । ईशितव्या एव वयं सर्वे जीवाः तेषां त्वमेवेशः अतस्त्वया आज्ञापनीयाः ननु विशेषतः किमिति प्रार्थ्यते तत्र बीजमाह—पुमान् यच्छ्रद्धया तिष्ठन्निति । चोदनायाः विधिनियोगान्निवर्तत इत्यर्थः ॥ ४६ ॥

प्रथमवाक्ये अनङ्गीकारमिव ज्ञापयन् द्वितीयस्योत्तरं वक्तुं प्रसङ्गमाह—आसन् मरीचेः षट्पुत्रा इति । प्रथमकल्पे अतीतब्रह्मकल्पे मरीचेरूर्णानामपत्नी अभूत् यथैदानीं कला तस्याः षडिन्द्रियदेवा इव पुत्रा जाताः प्रथमकल्पे यदन्तरं मन्वन्तरं त एवैत इति वक्तुं तेषामपराधमाह—देवाः कं जहसुर्वीक्ष्येति । वाचं दुहितरं तन्वीमिति यन्निरूपितं तेन प्रकारेण सुतां यभितुं सम्भोक्तुमुद्यतं कं ब्रह्माणं जहसुः कामो भगवान् तेन प्रेरितः तत्सेवार्थं वा प्रवृत्तो निष्कपटः शुद्ध एव,परं ये तत्सिद्धान्तानभिज्ञाः ते तत्रोपहासं कुर्वन्तः भक्तोपहासका इवासुरीं योनिं प्राप्नुवन्ति । तेनेमामासुरीं योनिं प्राप्ताः तावतापि भगवदपराधो न शान्त इति अधुना आसुरयोनौ उपहासफलत्वेन प्राप्तायामवध्यं कर्म कृतवन्तः तेनावद्यकर्मणा हिरण्यकशिपोर्भगवद्विमुखात् कस्याञ्चिज्जाताः ॥ ४७—४८ ॥

—————

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु भो वरं वृणिष्वेत्यत आह—निरपेक्षैरात्मारामैरपि विमृग्यं युष्मत्पादारविन्दं तदेव धिषणमाश्रयस्तस्मादन्यो यो गृहान्धकूपस्तस्मान्निष्क्रम्य विश्वस्य शरणमुपकारका वृक्षास्तेषामङ्घ्रिमूलेषु स्वत एव गलितैः फलादिभिरुपलब्धा वृत्तिर्जीविका येन सोऽहं शान्तः सन्नेक एव चरामि उत अत्यधिकं कृपयासि चेत् सर्वेषां सखायस्त्वद्भक्तास्तैः सह चरामि ॥ ४५ ॥

किञ्च साम्प्रतं यदर्थमेतादृशं दर्शनं तदाज्ञापयेत्याह—शाधि आदिश ईशितव्यनामस्मदादीनामीश हे प्रभो ! ननु मदाज्ञां निष्पादयितुं तव कोऽधिकारस्तत्राह निष्पापान् कुरु तदसामर्थ्येऽपि तच्छ्रवणेनापि निष्कल्मषा भवेमेति भावः । यत् त्वदादिष्टम् अनुतिष्ठन् कुर्वंस्तु चोदनायाः विधिनिषेधलक्षणायाः सकाशात् विमुच्यते विधिकिङ्करो न स्यादित्यर्थः ॥ ४६ ॥

स्वागमनकारणमाह—आसन्निति पञ्चभिः । ऊर्णायां भार्य्यायाम् अन्तरे मन्वन्तरे स्वायम्भुवे ते देवाः षट् सुतां सरस्वतीं यभितुं सम्भोक्तुम् उद्यतं कं प्रजापतिम् ॥ ४७ ॥

तेनावद्यकर्मणा पापेन अधुना तत्क्षण एव आसुरीं योनिमगमन् हिरण्यकशिपोः सकाशात् कालनेमिक्षेत्रे जाताः तेच योगमायया देवक्याः उदरे कंसहस्तेन घातनार्थं नीताः ॥ ४८ ॥

—————

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यस्मात्त्वद्विषयकज्ञानभक्तिहीनत्वेन अतिदीना वयं तस्मात् नः अस्मान् प्रति प्रसीद प्रसन्नो भव दीनान् त्वां शरणङ्गतान् अनुगृहाणेत्यर्थः । यथा निरपेक्षैः गृहाद्यपेक्षारहितैः विमृग्यं युष्मत्पादारविन्दं तदेव धिषणमाश्रयः तस्मादन्यं तत्प्राप्तौ अन्तरायकारणं गृहं तदेवान्धकूपस्तस्मान्निष्क्रम्य गृहासक्तिं हित्वेत्यर्थः । विश्वशरणं भवान् तस्य अङ्घ्र्योर्लब्धा श्रवणमननध्यानरूपावृत्तिर्येन सः उत अथवा सर्वो विष्णुस्त्वं सखा येषां तैः सह शान्तः सन् चरामि तथा प्रसीदेत्यन्वयः ॥ ४५ ॥

भगवदागमनप्रयोजनं श्रोतुं स्वविषयकं तच्छासनं प्रार्थयते—शाधीति । हे ईशितव्येश ईशितव्यानां प्रकृतिपुरुषादीनां नियम्यानां नियन्तः ! नोऽस्मान् शाधि इदं कर्तव्यमित्येवं शिक्षय यदर्थमागतोऽसि तदाज्ञापयेत्यर्थः । हे प्रभो ! यत् येन शासनेन नोऽस्मान् निष्पापान् कुरु यत्तवानुशासनम् आतिष्ठन् आश्रयन् चोदनायाः कर्मबन्धात् विमुच्यते मुक्तो भवति ॥ ४६ ॥

अक्षिसङ्कोचेन तदुक्तं सर्वमनुमोद्य आगमनप्रयोजनं कथयति—आसन्निति पञ्चभिः । प्रथमेऽन्तरे स्वायम्भुवमन्वन्तरे ऊर्णायां पत्न्यां षट् पुत्राः आसन् ते षट् देवाः सुतां सर्वनिर्गमनस्थानात् ब्रह्मशरीरान्निर्गतामित्यर्थः । यभितुं भोक्तुमुद्यतं कं ब्रह्माणं वीक्ष्य जहसुः उपहसितवन्तः ॥ ४७ ॥

देवक्या उदरे जाता राजन् कंसविहिंसिताः ।
सा तान् शोचत्यात्मजान् स्वांस्त इमेऽध्यासतेऽन्तिके ॥ ४९ ॥
इत एतान् प्रणेष्यामो मातृशोकापनुत्तये ।
ततः शापाद्विनिर्मुक्ता लोकं यास्यन्ति विज्वराः ॥ ५० ॥
स्मरोद्गीथः परिष्वङ्गः पतङ्गः क्षुद्रभृद्घृणी ।
षडिमे मत्प्रसादेन पुनर्यास्यन्ति सद्गतिम् ॥ ५१ ॥
इत्युक्त्वा तान् समादाय इन्द्रसेनेन पूजितौ ।
पुनर्द्वारवतीमेत्य मातुः पुत्रानयच्छताम् ॥ ५२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अधुना सद्य एव आसुरीं योनिमगमन् प्रापुः तानाह—हिरण्यकशिपोर्जाताः ततो योगमाययानीताः ॥ ४८ ॥

—————

भाषा टीका ।

संसार के भोग की वाञ्छा रहित योगिजन जिस को खोज करते हैं उस आप के चरणारविन्द रूप आश्रय ते भिन्न गृह रूप अन्ध कूपते निकस कर विश्व के शरण वृक्षों के मूल में उन से गिरे भए फलादिकों से देह निर्वाह करता भया शान्त स्वभाव होकर जैसे एकेला विचरूं अथवा सर्व सुहृद आप के भक्त जनों के साथ जैसे विचरूं तैसा हमारे उपर आप अनुग्रह करौ ॥ ४५ ॥

हे प्रभो ! नियमनयोग सब जीवों के नियन्ता आप हम को आज्ञा करौ शिक्षा कर के हम को निष्पाप कीजियेगा आप के आज्ञा किये कार्य्य का श्रद्धा पूर्वक आचरण करने वारा पुरुष, ब्रह्म लोकादि प्राकृकर्म की विधि ते छुट जाता है ॥ ४६ ॥

श्रीभगवानुवाच ।

स्वायम्भूमन्वन्तर में मरीचि प्रजापति की उर्णा नाम वाला भार्य्या में (६) छः पुत्र उत्पन्न भए जब सरस्वती के प्रति मैथुन करने के वास्ते ब्रह्मा प्रवृत्त भए तब ब्रह्मा को देखकर मरीचि के पुत्र उन देवों ने हासी करी ॥ ४७ ॥

उस दुष्कर्म से उसी क्षणमें वे आसुरी योनिको प्राप्त होगये वे हिरण्य कशिपु ते उत्पन्न भए उनको वहांसे योग माया ले आई ॥ ४८ ॥

—————

श्रीधरस्वामिकृतभावार्थदीपिका ।

ते च योगमायया ततो नीताः सन्तो देवक्या उदरे जाताः हे राजन् बले ! ते च कंसेन विहिंसिताः सा च तानात्मजान् मत्वा शोचति ते चेमे तवान्तिकेऽध्यासते ॥ ४९ ॥

लोकं देवलोकम् ॥ ५० ॥

स्मरोद्गीथः स्मरसहित उद्गीथः सद्गतिं मोक्षम् स्मरस्यैव पूर्वं कीर्तिमानिति नाम अतः "कीर्तिमन्तं प्रथमजं कंसायानकदुन्दुभिः । अर्पयामास" इत्युक्तम् ॥ ५१ ॥

अयच्छतामर्पयामासतुः ॥ ५२—५४ ॥

—————

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्र प्रस्ताव्यमाह—सार्द्धद्वयेन । तत्रैव सकरुणमाह स्वसर्द्धेकेन यतः स्वान् स्वीयानात्मजान् ते च न गोपनीया इति सनर्माह त इम इति एवं परमभक्तेन सर्वज्ञेन बलिना श्रीभगवद्दर्शनार्थं ते सदा स्वसमीप एव च स्थापिता इति ज्ञेयम् ॥ ४९ ॥

स्वाभीष्टमाह—इत इति द्वाभ्याम् । प्रकर्षेण आवश्यकतया प्रणयेन वा नेष्यामः "अस्मदोद्वयोश्च" इतिबहुवचनम् एषामपि कुशलं भविष्यतीत्याह तत इति । शापेति शापादिति वा पाठः विशेषेण आसुरभावराहित्येन निःशेषेण तच्छरीरराहित्येन मुक्ताः अत एव विज्वराः सर्वसन्तापरहिताः सन्तः प्रथमतस्तावद्देव लोकं यास्यन्ति भोगेच्छावशेषात् ॥ ५० ॥

निश्चयार्थं तानेव नाम्ना निर्दिशन् भोगान्ते नित्यमच्छामापि प्राप्स्यन्तीत्याह—स्मरेति । पुनः पश्चात् सतां यादवानां गतिं ममाप्रकटलीलास्पदम् ॥ ५१ ॥

सम्यक् सपरिच्छदत्वादिना करग्रहणादिना आदाय पूजितौ तर्पणादिना सम्मानितौ सन्तौ मातुः मात्रे ॥ ५२ ॥

—————

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत इति । मातुर्देवक्याः शोकापहरणाय इत एतान् प्रणेष्यामः ततः शोकापनोदनानन्तरं पापात् प्रजापत्यपहासात्मकात् विनिर्मुक्ताः अत एव विज्वराः निर्दुःखाः लोकं तत्प्राप्तपुण्यलोकं यास्यन्ति ततो मत्प्रसादेन मदनुग्रहेण हेतुना इमे स्मरादयः षद् सद्गतिं मुक्तिं यास्यन्ति ॥ ५० ॥

तान् दृष्ट्वा बालकान् देवी पुत्रस्नेहस्नुतस्तनी ।
परिष्वज्याङ्कमारोप्य मूर्ध्न्यजिघ्रदभीक्ष्णशः ॥ ५३ ॥
अपाययत्स्तनं प्रीता सुतस्पर्शपरिप्लुता ।
मोहिता मायया विष्णोर्यया सृष्टिः प्रवर्तते ॥ ५४ ॥
पीत्वाऽमृतं पयस्तस्याः पीतशेषं गदाभृतः ।
नारायणाङ्गसंस्पर्शप्रतिलब्धात्मदर्शनाः ॥ ५५ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्मरोद्गीथ इति सन्धिरार्षः स्मरसहितोद्गीथ इति मध्यमपदलोपिसमासो वा ॥ ५१ ॥

इतीति । अयच्छतामर्पयामासतुः ॥ ५२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततस्ते योगमायया देवक्या उदरे विद्यमानमरिषड्वर्गं दूरीकर्तुं दोषेणैव दोषो हन्तव्य इति योगमायया देवक्या उदरे नीताः राजन्निति राजसत्वात्तथाज्ञानं न दोषाय ततः कंसेन विहिंसिताः विशेषेण मारिताः एवं तेषां वारत्रयं दण्डो जातः त्रिसत्यो भगवानिति इदानीं मन्माता तान् च दोषहारकारकान् अतएव स्वान् आत्मजानिति पुत्रा एते ममेति तान् शोचति ते पुनरत्रैव हिरण्यकशिपुवंशत्वात् ते अन्तिके आसते ॥ ४९ ॥

एवं तेषां वृत्तान्तमुक्त्वा अत्र कर्तव्यमाह—इत एतान् प्रणेष्याम इति । प्रयोजनं मातृशोकापनुत्तिः प्रसङ्गात्तद्गुणकर्तव्या इत्याह ततः शापविनिर्मुक्ता इति अस्मन्मातुः शोकापहरणात् तेषां शापापनोदः ततो विज्वरास्सन्तः ऋषिलोकं यास्यन्ति ॥ ५० ॥

तेषां नामान्याह—स्मरश्च उद्गीथश्चेति एकभावापन्नौ द्वौ स्मरो मानसः उद्गीथो प्राणः परिष्वङ्गः श्रोत्रं पतङ्गो नेत्रं क्षुद्रभृत् जिह्वा घृणिः स्पर्शः ततो घृणा सञ्जायत इति चक्षुषा वा व्यत्यासः षडिमे स्वकर्मणा नष्टा अपि मत्प्रसादेन पुनर्यास्यन्ति सद्गतिम् ॥ ५१ ॥

अत एतान् देहीत्यनुक्त्वैव सेवकत्वं तस्य स्थिरीकृत्य तान् गृहीत्वा स्वयमेव निर्गत इत्याह—इत्युक्त्वेति । इन्द्रसेनत्वात् पूजां कृतवान् येन मार्गेण गतो तेनैव द्वारवतीमेत्य मातुः पुत्रान् तान् मात्रे अयच्छतां ते च गुरुपुत्रन्यायेन पूर्वावस्थां प्रापयित्वा समानीता इति तान् बालकान् दृष्ट्वा मातुः स्नेहेन स्नुतस्तनी जाता ततः परिष्वज्याङ्कमारोप्य मूर्ध्न्यजिघ्रत् अत्यन्तं स्नेहोऽभिव्यक्तः अभीक्ष्णश इति स्नेहविह्वलितत्वं सूचितं ततस्तनमपाययत् बालभावं दृढं कुर्वती प्रीता गतदुःखा न केवलं दुःखनिवृत्तिरेव किन्तु सुखमपि जातमिति ज्ञापयति सुतस्पर्शपरिप्लुतमिति सुतानां स्पर्शेन परितः सर्वाङ्गेभ्यः स्रुतं ननु भगवत्पुत्रायाः कथमेवमन्यत्र स्नेहः तत्राह मोहिता मायया विष्णोरिति । कथमन्यथा सृष्टिः प्रवर्तते केचिदियमेव पूर्वपूर्णेत्याहुः ततः पूर्ववासनया तेषु स्नेहाधिक्यम् ॥ ५२–५४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सा देवकी इमे ते इति तर्जन्या तान् दर्शयन्तीति ते परमभागवतेन बलिना भगवद्दर्शनार्थमानीय स्वदृष्टिपथ एव स्थापिता इति भावः ॥ ४९ ॥

शापात् पिता पुत्रान् वधिष्यतीति हिरण्यकशिपोः शापाद्विमुक्ता एवैते ततः मदयनान्तरं लोकं देवलोकम् ॥ ५० ॥

स्मरसहितउद्गीथ इत्यादीनि नामानि मरीचिपुत्रस्वदशायाम् ॥ ५१—५३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

देवक्या उदरे जाताः कंसेन विहिंसिताः सा देवकी तान् शोचति ते चेमे तवान्तिके अध्यासते ॥ ४९ ॥

लोकं देवलोकम् ॥ ५० ॥

स्मरोद्गीथः स्मरसहितोद्गीथ इति मध्यमपदलोपिसमासः ततो मत्प्रसादेन सद्गतिं मुक्तिं यास्यन्ति ॥ ५१ ॥

अयच्छतामर्पयामासतुः ॥ ५२—५३ ॥

भाषाटीका ।

येहि देवकी के उदरमें जन्मे हे राजन् कंस ने उनका बध किया वह देव की अपने उन पुत्रों का शोच करती है येहि अब आपके समीप में सब स्थित हैं ॥ ४९ ॥

माता के शोक निवृत्ति के वास्ते इनको इहासे लेतो जावेंगे अन्तर ब्रह्मा के शाप ते छूट कर दुःख रहित प्रथम देव लोक में जावेंगे ॥ ५० ॥

स्मर उद्गीथ परिष्वङ्ग पतङ्ग क्षुद्रभृत् घृणी ए छः हो मेरे प्रसाद ते फिर मोक्ष को प्राप्त हो जावेंगे ॥ ५१ ॥

इस प्रकार कह कर उन स्मरादि छहों को लेकर बलि से पूजित हुए फिर द्वारका में आयकर श्रीकृष्ण बलदेव जी ने देव जी ने देव की माता को वे पुत्र देदीये ॥ ५२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

अमृतत्वे हेतुः गदाभृतः पीतशेषमिति नारायणाङ्गसंस्प-

**ते नमस्कृत्य गोविन्दं देवकीं पितरं बलम्।**
**मिषतां सर्वभूतानां ययुर्धाम (१) दिवौकसाम् ॥ ५६ ॥**

श्रीधरस्वामिकृतभावार्थदीपिका।

र्शेन प्रतिलब्धं देवा वयमित्यात्मदर्शनं यैस्ते ॥ ५५ ॥
धाम देवलोकम् ॥ ५६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

बालकानिति मातृसन्तोषार्थं श्रीकृष्णेच्छया बालकरूपेणे वाविर्भूतान् कीर्त्तिमदादीन् श्रीकृष्णरामौ च ॥ ५३ ॥

सुतानां श्रीकृष्णादीनां स्पर्शेनैव परितः स्नुतं प्रस्नुतक्षीरमित्यर्थः। परिप्लुतेति पाठे सुतस्नेहेन व्याप्ता सती तत्र हेतुः मायया स्वलीलाहेतुना योगमायाख्यशक्त्या मोहिता सृष्टिर्लीलानिर्माणं प्रस्तुतत्वात तथापि साधारणतत्तच्छब्दे नोक्तिः प्रसिद्धार्थद्वारा झटिति साधारणलोकबोधनाय ॥ ५४ ॥

पीत्वेति युग्मकम्। स्वत एवामृतं परमानन्दात्मकं तत्रापि गदाभृतः पीतशेषं तत्र गदाभृत इति गदामादाय पातालगमनागमनादिकं बोधयति। पीतशेषमिति मातुः स्वस्य चेच्छया प्रथमं तेन पानात् नारायणः सर्वाश्रयः स्वयं भगवान् तस्याङ्कं श्रीहस्तादि तस्य साक्षात सम्यक् स्पर्शः तेन प्रतिपुनर्लब्धनिजदेवत्वदर्शनाः तद्वासनानुसारेण सम्प्रति तन्मात्रदानस्य भगवतेष्टत्वात अत एव मात्रादावपि स्नेहरहिता देवलोकमेव ययुः मिषतां पश्यतां सर्वभूतानामिति कौतुकविशेषः सूचितः विहायसेति पाठः स्वामिसम्मतः दिवौकसामिति पाठस्तु सर्वत्र ॥ ५५—५६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तानिति। पुत्रस्नेहेन स्नुतौ स्रवन्तौ स्तनौ यस्याः सा भीक्ष्णशः पुनःपुनः मूर्द्ध्नि आजिघ्रत् ॥ ५३ ॥

सुतानां संस्पर्शेन स्नुतं क्षरन्तं स्तनमपाययत् तत्र हेतुः विष्णोर्मायया मोहिता मायां विशिनष्टि यया सृष्टिः प्रवर्त्तते सृष्टिरित्यस्य विश्वेत्यादिः ॥ ५४ ॥

पीत्वेत्यादि। तस्या देवक्याः अमृततुल्यं पयःस्तन्यं तत्र हेतुः गदाभृतः श्रीकृष्णस्य पीतशेषं पीत्वा नारायणस्य श्रीकृष्णस्य अङ्गसंस्पर्शात्प्रतिलब्धमात्मदर्शनं स्वात्मपरमात्मयाथात्म्यज्ञानं यैस्ते बलं बलभद्रं च नमस्कृत्य सर्वभूतानां पश्यतां सतां विहायसा धाम देवलोकं ययुः ॥ ५५–५६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

मायया लीलाहेतुना योगमायया मोहिता सृष्टिलीलानिर्माण प्रस्तुतत्वात् प्रतिलब्धात्मदर्शनाः पुनर्लब्धनिजदेवत्वानुभवाः। तेषां भोगवासनावशेषाद्भगवतस्तदानीं तावन्मात्रदानस्येष्टत्वात् ॥ ५४—५६ ॥

तदेवं स्वस्मिन्नेव श्रीभगवता तस्याः स्नेहो रक्षित इत्याह—तमिति ॥ ५७—५९ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

स्तनपानानन्तरं तेषां विवेकाद्युत्पत्त्या स्वलोकगतिमाह पीत्वाऽमृतमयमिति द्वाभ्याम्। अमृतमयत्वं भगवदर्थं देवैः तत्रामृतं स्थापितमिति पीतशेषं गदाभृत इति पानं तु पूर्वं स्थापितं यदैव भगवन्तं स्मरति तदाऽमृतं भगवानेव पिबतीति एत एव श्वा यदा प्रथमं समागतः एतेषां स्वपदप्राप्तौ ज्ञानं हेतुः तस्य हेतुत्रयं भगवदुच्छिष्टपानम् अमृतपानं नारायणाङ्गसंस्पर्शश्च अत्र नारायणपदं धर्मावतारनारायणांशानिरुद्धचारित्रं स्थापयति तेन प्रतिलब्धमात्मदर्शनं येषाम् ॥ ५५ ॥

ततो ज्ञानशक्तिवत् क्रियाशक्तिरपि तेषामाविर्भूतेत्याह—ते नमस्कृत्य गोविन्दमिति। आदौ स्वामिनं पश्चान्मातापितरौ तदनु बलभद्रं भगवत्साधनभूतम् एवं चतुर्मूर्त्तिमिव भगवन्तं नमस्कृत्य सर्वसाक्षिकं विहायसा स्वधाम ययुः एवं स्वतो गमनं जातमित्यर्थः ॥ ५६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

मायया योगमायया यया विष्णोः सृष्टिरप्राकृती तल्लीलापरिकरप्रादुर्भावमयी प्रवर्त्तते न तु ब्रह्मणः सृष्टिः प्राकृतीत्यर्थः ॥ ५४ ॥

गदाभृतः कृष्णस्य पीतशेषमिति "पित्रोः संपश्यतोः सद्यो बभूव प्राकृतः शिशुः" इत्युक्तेर्देवक्यां प्रादुर्भूय नन्दगृहे गमनसमये यदा शिशुरभूत्तदा दूरगमननिबन्धनोऽस्य कण्ठशोषो माभूदिति स्नेहेन श्रीदेवकी तं स्तनं पाययामासैवेति तत्रानुक्तमप्यत्रोक्तेरवगम्यते नारायणस्य अङ्गसंस्पर्शेन प्रतिलब्धं देवा वयमित्यात्मदर्शनं यैस्ते धाम देवलोकम् ॥ ५५—५८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

मायया वयुनात्मिकया सङ्कल्पेनेत्यर्थः ॥ ५१ ॥
नारायणाङ्गसंस्पर्शेन प्रतिलब्धमात्मदर्शनं येस्ते ॥ ५५–५८ ॥

भाषा टीका।

उन बालकन को देखकर पुत्रों के विषय में स्नेह होने

(१) विहायसा इति वीर० पाठ०।

तं दृष्ट्वा देवकी देवी मृतागमननिर्गमम्।
मेने सुविस्मिता मायां कृष्णस्य रचितां नृप ॥ ५७ ॥
एवंविधान्यद्भुतानि कृष्णस्य परमात्मनः।
वीर्याण्यनन्तवीर्यस्य सन्त्यनन्तानि भारत ॥ ५८ ॥

सूत उवाच।

य इदमनुशृणोति श्रावयेद्वा मुरारेश्चरितममृतकीर्तेर्वर्णितं व्यासपुत्रैः।
जगदघभिदलं तद्भक्तसत्कर्णपूरं भगवति कृतचित्तो याति तत्क्षेमधाम ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे
मृताग्रजानयनं नाम
पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

भाषा टीका।

से दुग्ध से जिस के दोनो स्तन चुचाय रहे हैं उस देव की ने उनकों छाती सें लगाय कर गोदी में वैठाय कर वारंवार उनका मस्तक सूंघा ॥ ५३ ॥

विष्णु की जिस माया से सृष्टि की प्रवृत्ति हो रही है उस से मोह को प्राप्त देवकी प्रसन्न होकर पुत्रों के स्पर्श करने से चुचाते भए स्तनको उने पिवाती भई ॥ ५४ ॥

श्रीकृष्ण के पीने से वचे भए अमृत के तुल्य देवकी के दूध को पीकर श्रीनारायण के अङ्ग स्पर्श होने से आत्म ज्ञान कों प्राप्त होकर ॥ ५५ ॥

वे छः हो श्रीगोविन्द को देवकी को वसुदेव को वलदेवजी को प्रणाम कर वहां के सव प्राणियों के देखतैर देवतान के लोक को चले गए ॥ ५६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

मृतानामागमनं निर्गमनञ्च श्रीकृष्णस्य मायां मेने तेनैवापत्यादिरूपेण रचिताम् ॥ ५७-५८ ॥

अमृतं कीर्तिर्यस्य तस्य व्यासपुत्रैरिति बहुवचनं पूजार्थम् जगतामघं भिनत्तीति तथा तत् अलं निश्शेषं यथा भवति तथा दिनकृच्छ्रादिवदिति तदेवं मोक्षहेतुत्वं चोक्तं तद्भक्तानान्तु सत्कर्णपूरं परमसुखावहं कर्णाभरणमिति सुखरूपतामाह किञ्च भगवति कृतमावेशितं चित्तं येन सः तथाभूत्वा तस्य क्षेमं धाम कालादिभयरहितं लोकं यातीति ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तदेवं स्वस्मिन्नेव श्रीभगवता तस्याः स्नेहो रक्षितः इत्याह—तमिति। आगमनपूर्वकं निर्गमं यद्वा ब्रह्मैक्यपि पुंस्त्वमज्ञस्वदीर्घप्लुत इतिवत् कृष्णस्य रचितां मायां मेने जन्मादिकमागमनादिकं च श्रीकृष्णेनैव कंसवञ्चनादिकार्याय मायया रचितमिति मेन इत्यर्थः। स्नेहाद्यदर्शनादिति भावः। एवं प्राचीनदेहैरेव भ्रूणतया देवक्यां प्रवेशो न तु नवा देहोत्पत्तिस्तेषां मारणानन्तरं च पुनस्तेनैव देहेन गतिरिति प्रकरणादवगतम् ॥ ५७ ॥

अथ राज्ञो मुक्तिकालासत्तिमाशङ्क्य ग्रन्थमाशु समापयितुं श्रीकृष्णकथामुपसंहरन्नाह—एवमिति। अनन्तानि प्रतिक्षणं युगपदेवापरिमितलीलाविष्कारात् श्रीनारदेन तथा दर्शनात् तत्र हेतुः अनन्तं वीर्यं शक्तिर्यस्य तस्येति तत्रैव हेतुः परमात्मनः सर्वमूलस्वरूपस्येति ॥ ५८ ॥

अथ सर्वमहन्महनीयश्रीमन्निजगुरुचरणैर्वर्णितेनैवम्भूतश्रीकृष्णचरितवृन्देनोल्लसितस्सन् श्रीसूतोऽप्युपसंहारानुरूपं श्रोतृनाशीर्वादप्रायेण तच्चरितमाहात्म्यानुवादेन तोषयन् तल्लीलापरिकराणां तत्तत्प्राप्तिर्नाश्चर्या यतस्तच्छ्रोतृणामप्येवं स्यादिति बोधयंश्च गायन्नेवाह—य इति। अधिकारापेक्षा निरस्ता इदं पूर्वपूर्वोक्तं किञ्चिदपि तच्चरितम् अनु निरन्तरमिति सकृच्छ्रवणस्यैव रुच्युत्पादकस्वभावत्वादनुवाद एव सच भाविफलस्य शीघ्रत्वज्ञापनाय सापराधत्व एवतु न तत्तत्सम्पद्यत इति वाशब्दादनुशब्दस्योत्तरत्राप्यन्वयः योग्यता चेत् स्वपरकृतार्थतार्थम् अनु श्रावयेद्वा तत्र सामर्थ्यम् अमृतं परानन्दरसः तद्रूपा कीर्त्तिर्यस्य अमृतकीर्त्तित्वादेव व्यासपुत्रैर्वर्णितं तद्वर्णितत्वेन च विशेषो बोधितः "पिबन्तं त्वन्मुखाम्भोजच्युतं हरिकथामृतम्" इत्यादेः अत एव जगतः सर्वस्यैव यदघं तद्भक्तिविघ्नपर्यन्तं तद्भिनत्तीति यथा तत् अत एव भगवति तत्तच्चरिताश्रये श्रीकृष्णे कृतचित्त इत्यस्मिँल्लोकेऽपि महासुखमुक्त्वा पारलौकिकमप्याह—तस्य श्रीकृष्णस्यैव क्षेमं "स्मृत्याशेषाशुभहरं सर्वमङ्गलमङ्गलम्" इति प्रसिद्धं नित्यं द्वार-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

काव्यमेव धाम एवं तच्चरितश्रवणेन साधकानां फलक्रमो दर्शितः सिद्धानान्तु तस्यैव सद्यः स्वयं फलतामाह—भक्तसत्कर्णपूरमिति ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां
पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मायामाश्चर्यशक्तिम् ॥ ५७ ॥

वीर्याणि पुत्रदानादीनि ॥ ५८ ॥

व्यासपुत्रैरिति बहुवचनं गुरुत्वाभिप्रायं भक्तानां सतां कर्णान् पूरयतीति ॥ ५९ ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तमिति । तं मृतानामागमनपूर्वकं निर्गममवलोक्य सुतरां विस्मिता सती कृष्णस्य मायां मेने सर्वं तन्मायया कृतममन्यत माया आश्चर्यशक्तिः ॥ ५७ ॥

एवमिति । हे भारत ! अनन्तवीर्यस्य अनन्तकल्याणवीर्यसूचकगुणाकरस्य भगवतः इत्थम्भूतानि वीर्याणि प्रभावसूचकचेष्टितान्यनन्तानि सन्ति न साकल्येन वक्तुं श्रोतुं वा शक्यानीति भावः ॥ ५८ ॥

उपवर्णिताख्यानश्रवणादिफलमाह सूतः—य इति । व्यासपुत्रैरिति बहुवचनं गुरुत्वाभिप्रायम् अमला कीर्त्तिर्यस्य मुरारेश्चरितमलं निश्शेषं यथा तथा जगतोऽघं भिनत्तीति तथा न कृच्छ्रादिवद्यत्किञ्चिदघभिदिति भावः । तदेवं पापक्षयहेतुत्वमत एव मोक्षहेतुत्वं चोक्तं किञ्च तद्भक्तानां सत्कर्णपूरं परमसुखावहकर्णाभरणरूपम् इत्थम्भूतं [illegible] यः पुमाननुशृणोति श्रावयेद्वा स भगवति कृतं निहितं चित्तं येन तथाभूतः तद्भगवत्सम्बन्धि क्षेमं कालादिभयरहितं धाम स्थानं याति प्राप्नोति ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

———

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु, देवकीकामनापूर्त्यर्थं भगवता ते समानीताः सा च कामना न क्षणमात्रेण पर्यवस्यति अत एवं शीघ्रं तेषां गमने को हेतुरिति चेत्तत्राह—त इत्येति । तेषां पुत्राणां पूर्वं मृतानाम् आगमनं तदनन्तरमेव च निर्गमं दृष्ट्वा विस्मिता सती सर्वमेव कृष्णचरितं मेने एतत् ज्ञानसिद्ध्यर्थमेव समानीताः । न तु पुत्रतया स्थापयितुम् अन्यथा कंसद्वारा भगवत्कृतवधो व्यर्थः स्यात् भगवच्चरित्रज्ञानेनैव कामनापूर्त्तिर्मोहान्तरानुत्पत्त्यर्थं विशेषणं देवीति तत्रापि मायां मेने तेनासत्यतापि पदार्थानामभिज्ञता नृपेति सम्बोधनमाश्चर्ये मनोभिनिवेशार्थम् ॥ ५७ ॥

एवं चरित्रत्रयमुक्त्वा ऐश्वर्ये एतदेव त्रयमिति कदाचिच्छङ्काभावात् तदर्थमन्यान्यपि सूचयति—एवंविधानीति भगवच्चरित्रत्वे ज्ञापकम् अद्भुतानीति यान्येवाद्भुतानि भगवच्चरित्राणीति तानि भगवानपि किमर्थमेवं करोतीत्याशङ्क्याह—कृष्णस्येति । अवतीर्णत्वात्करोतीत्यर्थः । प्रयोजनान्तरमप्याह—परमात्मन इति । सर्वेषामात्मनामात्मेति तत्सङ्ग्रहार्थं करोतीत्यर्थः । अत एव वीर्याण्यनन्तानि सन्ति तथा करणे सामर्थ्यमनन्तवीर्यस्येति ननु वीर्याणामनन्तत्वात् कथं सर्वसङ्ग्रह इति चेत्तत्राह—सन्तीति सदा सन्तीति नित्यानीत्यर्थः । भारतेति विश्वासार्थं सम्बोधनम् ॥ ५८ ॥

एवं भगवच्चरित्रस्य नित्यतां स्थापयितुं तच्छ्रवणादेः फलमाह— य इदमनुशृणोतीति । अथवा अनुगुरूच्चारणमनु यः शृणोति श्रावयेद्वा ननु किमर्थं शृणोति श्रावयति तदर्थमाह मुरारेरिति मुरो हि विघ्नात्मकः दोषात्मकश्च किञ्च अमृतकीर्त्तेरिति अमृतरूपा कीर्त्तिर्यस्येति चरित्रं श्रवणेपि सुखजनकम् अत एव व्यासपुत्रैर्वर्णितम् इदं चरित्रमनन्तरूपोभूत्वा शुको वर्णितवान् अतो बहुवचनं सर्वैरेव व्यासशिष्यैः पुत्रैश्चेति वा शिष्याणामपि पुत्रत्वात् सर्वैरेव श्रोतव्यमित्येतदर्थं बहून्येव फलान्याह जगदघभिदिति । सर्वपापनाशकं किञ्च अलमत्यर्थं सतां कर्णपूरं कर्णाभरणम् अनेन सतां निरन्तरं सेव्यता निरूपिता अतो य एव नित्यं कर्णे स्थापयति स एव सन्नित्यपि सूचितं प्रयोजनान्तरमप्याह—भगवतिकृतचित्त इति । भगवति तस्य चित्तं स्थितं भवति ऐहिकमुक्त्वा पारलौकिकमाह—याति तत्क्षेमधामेति । धाम यातीत्येव फलं धामप्रशंसार्थं क्षेमेति एवं विघ्ननिवृत्तिमारभ्य भगवत्स्वरूपप्राप्तिपर्यन्तं भगवच्चरित्रश्रवणफलान्युक्तानि भगवत ऐश्वर्यं स्थापयन्ति अतो भगवान् कृष्णः सर्वेश्वर इति स्थितम् ॥ ५९ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धविवरणे
षड्त्रिंशाध्यायविवरणम् ॥ ३६ ॥ ८५ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अमृतमेव कीर्त्तिर्यशो यस्य तस्य अमृतत्वमाह—जगतामेव अघं संसाररोगं भिनत्तीति तत् तद्भक्तानां संसारोत्तीर्णानां तु कर्णपूरं कर्णाभरणम् ॥ ५९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
पंचाशीतितमोऽध्यायो दशमेऽजनि सङ्गतः ॥ ८५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मृतानामागमनपूर्वकं निर्गमम् मायां वयुनात्मिकां सङ्कल्पम् ॥ ५७—५८ ॥

व्यासपुत्रैरितिबहुवचनमादरार्थम् अलमत्यर्थं यथा तथा जगदघभित् तद्भक्तसत्कर्णपूरं मुरारिभक्तानां समीचीनं कर्णाभरणरूपम् ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
पञ्चाशीतितमाध्यायार्थप्रकाशः ॥ ८५ ॥

---

भाषा टीका ।

मरे हुए पुत्रों के आगमन पूर्वक आने को देख कर हे नृप देव की देवी आश्चर्य्य को प्राप्त होत उस को श्री कृष्णकी रची भई माया मान ती भई ॥ ५७ ॥

हे भारत ! अनन्त बल सम्पन्न परमात्मा श्रीकृष्ण के इसी प्रकार के अद्भुत अनन्त चरित्र है ॥ ५८ ॥

सूत उवाच ।

अमृत कीर्त्ति वारे मुरारि के चरित्र को जो पुरुष श्रवण करता हे और श्रवण कराता है वह भगवान् के विषय मे चित्त लगा कर परमात्मा के निर्भय धाम को प्राप्त होता श्री शुकदेव जी ने इस चरित्र को वर्णन किया है तथा इस का श्रवण कीर्त्तन मे परायण जगत्के पापन का भेदन करने वारा यह चरित्र है और श्रीकृष्ण के भक्त सज्जन पुरुषो के कर्णो को आनन्द से पूर्ण करने वारा यह चरित्र है ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धमें पिच्यासी अध्यायकी
भाषाटीका समाप्ता ॥ ८५ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥



## षडशीतितमोऽध्यायः।

---

राजोवाच।

ब्रह्मन् वेदितुमिच्छामः स्वसारं रामकृष्णयोः।
यथोपयेमे विजयो या ममासीत्पितामही ॥ १ ॥

श्रीशुक उवाच।

अर्जुनस्तीर्थयात्रायां पर्यटन्नवनीं प्रभुः।
गतः प्रभासमशृणोन्मातुलेयीं स आत्मनः ॥ २ ॥
दुर्योधनाय रामस्तां दास्यतीति न चापरे।
तल्लिप्सुः स यतिर्भूत्वा त्रिदण्डी द्वारकामगात् ॥ ३ ॥
तत्र वै वार्षिकान् मासानवात्सीत् स्वार्थसाधकः।
पौरैः सभाजितोऽभीक्ष्णं रामेणाजानता च सः ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

षडशीतितमे द्रम्यात्सुभद्रामर्जुनोऽहरत्।
गत्वा च मिथिलां कृष्णो नृपविप्रावनन्दयत् ॥
पित्रोः स्वज्ञानमादिश्य सुभद्रां फाल्गुनाय च।
जगाम मिथिलां कृष्णः स्वभक्तप्रियकृत्ततः ॥

देवक्या मृतपुत्रलाभवदर्जुनस्य सुभद्रालाभोऽपि रामप्रातिकूल्याद्दुर्घट इति मन्यमानः प्रसङ्गात्पृच्छति—ब्रह्मन्निति ॥ १-२ ॥

कथमशृणोत् दुर्योधनायेति अपरे वसुदेवादयो न दास्यन्तीति तल्लिप्सुस्तस्या मातुलेय्या लिप्सुः रामं वञ्चयितुं पूज्यतमं त्रिदण्डिवेषं विधाय गत इत्याह स यतिरिति ॥ ३ ॥

स्वार्थसाधकः कन्यां प्रेप्सुः ॥ ४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अथोपसंहारमुद्रामालक्ष्य श्रीपरीक्षित्तु भीत इव पुनस्तम-मवतारयितुं पृच्छति—तत्रापि श्रीभगवता निजदेहसम्बन्धे मुख्यकारणरूपायाः स्वपितामह्या मूलकथारूपं विवाहं चिरं प्रष्टुमिष्टं पृच्छति—ब्रह्मन्निति। यथा येन प्रकारेणोपयेमे तेन प्रकारेण तदुपयमनं वेदितुमिच्छामः तत्र रामकृष्णयोरिति दुर्लभत्वमभिप्रेतं विजय इति तत्रैव तस्य साम्वय-संज्ञत्वं पर्यवसितमिति भावः। निजोत्कण्ठातिशये कारणं चेति ॥ १ ॥

अर्जुन इति सार्द्धकम् दुर्योधनाय राम एव तां दास्यति दातुमिच्छति न चापर इत्यनेन प्रकारेण मातुलेयीमशृणोदि-त्यन्वयात् प्रभुरिति श्रीकृष्णसख्येन विशेषतश्च श्रीसुभद्रापति-त्वेन परमादरात् आत्मनो मातुलेयीत्वेन तत्परिणयने श्रेष्ठता सूचिता दक्षिणदेशवत्तदानीमन्यत्रापि तद्व्यवहारवृत्तेः ॥ २ ॥

राम इति! श्रीकृष्णक्रीडाकौतुकार्थमेव तस्य तादृशचेष्टा-वेशोऽपि भवतीति पूर्ववदभिप्रायः। तदित्यर्द्धकं। तल्लिप्सुरिति सम्बन्धविवक्षया षष्ठीसमासः तां लिप्सुरित्यर्थः। यतिर्भूत्वेति भिक्षाव्याजेनान्तःपुरप्रवेशाय अभ्यस्तैः तत्र पूज्यतममिति त्रिद-ण्डित्वमेव स्वमतत्वेन स्थापितम् ॥ ३ ॥

अजानतेति श्रीकृष्णलीलाशक्तिमोहितत्वेनैवेति भावः ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

॥ १—१३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

वीर्याण्यनन्तवीर्यस्य सन्तीत्युक्तं तत्रार्जुनस्य सुभद्राप्रदाना-त्मकं भागवतश्चेष्टितं श्रोतुकामः पृच्छति राजा—ब्रह्मन्निति। विजयः अर्जुनः रामकृष्णयोः स्वसारं भगिनीं यथा येन प्रकारेण उप-येमे तं प्रकारं वेदितुम् इच्छामि तां विशिनष्टि या तयोः स्वसा मम पितामही बभूव ॥ १ ॥

तं प्रस्तौति मुनिः—अर्जुन इत्यादिना अथान्यदपि कृष्णस्येत्यतः प्राक्तनेन। अवनीं पृथ्वीं पर्यटन् प्रभासं नाम

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तीर्थं प्रति गतस्तत्र सोऽर्जुनः आत्मनः स्वस्य मातुलेयां मातुलस्य सुतां तां सुभद्रां रामो दुर्योधनाय दास्यति अपरे वसुदेवादयस्तु न च दास्यन्तीत्यशृणोत् वसुदेवाद्यनुमतिमन्तरेणापि रामो दातुमुपचक्रमानित्यशृणोदित्यर्थः ॥ २ ॥

तल्लिप्सुरिति । तां मातुलेयां लिप्सुः तां जिहीर्षुरित्यर्थः । सोऽर्जुनः त्रिदण्डी यतिर्भूत्वा रामं वञ्चयितुं त्रिदण्डियतिवेषं भूत्वा ॥ ३ ॥

स तत्रेति वार्षिकानाषाढाद्याश्विनान्तांश्चतुरो मासानुषितवान् तत्र हेतुः स्वार्थसाधनः सार्थं स्वप्रयोजनं साधयतीति तथा नन्द्यादित्वात्कर्तरि ल्युः पौरैर्महात्मना रामेण चाभीक्ष्णं पुनःपुनः सम्मानितोऽवात्सीदिति सम्बन्धः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

॥ १—१२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १-३ ॥

अजानता इति श्रीकृष्णलीलामोहितत्वेनैवेति भावः ॥ ४-१६ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥ १—५९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सप्तत्रिंशो हरेर्वीर्यं त्रेधा प्राह सुनिश्चितम् ।
सर्वेषां सर्वकार्याणि कृतवानित्युदीर्यते ॥
तदेव भगवद्वीर्यं यन्न शक्यं हि लौकिकैः ।
न ह्यन्यो भगिनीं दातुमेवं शक्तो हरिं विना ॥
नापि स्वयं यस्य कस्य गृहे स्थातुं विभूतये ।
नापि धर्मं स्वहीनार्थमन्यः कथयितुं प्रभुः ॥
अनाहूतः स्वयं क्वापि गच्छतीत्यपि नो मतम् ।
यथा ग्रन्थानुसारेण प्रसङ्गोऽत्र विचारितः ।
क्रमपाठविभेदेषु तथा व्याख्यानमिष्यते ।
उदासीनो हरिर्व्यासः फलसिद्धेरशक्यतः ॥
ग्रन्थारम्भे तथैवास्मान् बोधयामास माधवः ।

राज्ञां परीक्षित् पूर्वाध्यायान्ते भगवद्वीर्याणामुपसंहृतत्वात् स्वसन्दिग्धान्यर्थान् पृच्छति तत्प्रसङ्गाच्छुकोऽन्यदपि वक्ष्यति व्यवहारे भगवद्वीर्यान्यथाभावो यत्र प्रतीयते स प्रष्टव्यः वैदिकविरोधः सोऽपि भजनाय विरोधश्च एतत्क्रमेणाध्यायत्रयेण प्रष्टव्यं यादवश्च प्रसङ्गः शुकोक्तौ हेतुः स एतत्तत्र वक्ष्यते कथापक्षेत्त्वियं सङ्गतिः विचारे तु पूर्वोक्त इति क्षत्रियो हि बलादेव विवाहं करोति गान्धर्वो राक्षसश्चेति वाक्यात् भगवांश्च प्रवर्तयेयः अतो विरुद्धत्वात् सुभद्राया विवाहं पृच्छति—ब्रह्मन् वेदितुमिच्छाम इति । रामकृष्णयोः स्वसारमिति भजयत्वं हेतुः यथा यथावच्च शास्त्रोक्तप्रकारेणोप-

येमे दैन्येन विवाहं कारयति विजय इति । या ममासीत् पितामहीति सैव वंशजननी जाता तादृश्याः विवाहः नान्यथा भवितुमर्हतीति भावः ॥ १ ॥

उभयसमर्थनार्थं शुकः प्रकारमाह—अर्जुनस्तीर्थयात्रायामिति । वस्तुतस्त्वयं नरः जीवकलात्मकः सा च मायाशक्तिः या पूर्वं यशोदायां जाता सा देवकन्या स्नेहात्परिगृहीतेति देवकीस्नेहवशात् कंसहस्ताद्विनिर्मुक्ता आत्माष्टकामिव देवकीमपि प्राप्ता सुभद्रेति व्याख्याता स्त्रीभावेनैव मोहस्सम्भवतीति अर्जुनस्यैव स्त्रीभवितुमर्हति अतएव तया व्यामोहितः कलौ तस्या एव वंशः स्थास्यतीति प्रव्राजं स्वीकृत्य वञ्चयित्वा कन्यां हृतवान् चौर्यधर्मवेषौ क्षत्रियस्य निषिद्धौ तथापि हृतेति पितृभ्यां च दत्तेति तीर्थयात्रायां कृत्रिमवेषो न निषिद्ध इति उभयात्मकत्वात् द्वयं समर्थितं भवति अत्र तीर्थयात्राप्रसङ्गो भारते निरूपितः द्रौपदीविवाहानन्तरं पञ्चानामेको वैषम्यहेतुर्भवतीति प्रत्येकसामिवैक्यभावाभावात् कामो दुर्लङ्घ्यः उद्यतः क्षणमात्रमपि प्रतिबध्नीत प्रतिबन्धककर्तारं हन्तीति नारदः सुन्दोपसुन्दकथामुक्त्वा प्रत्येकं वर्षमात्रभोगाय कालव्यवस्थां निरूपितवान् तन्मध्ये यद्येन भुज्यमानामन्यः पश्येत्तदा स वर्षमात्रं तीर्थयात्रां कुर्यादिति ततः कदाचित् कश्चिद्ब्राह्मणः चौरैरपहृतगोधनः अर्जुनं प्रोवाच मदीया गावः संरक्ष्या इति ततः शस्त्रागारे युधिष्ठिरो द्रौपद्या स्थितः ततः कार्यस्यावश्यकत्वात् विलम्बासहिष्णुत्वाच्च व्यवस्थां जानन्नपि शस्त्रगृहे प्रविष्टः रममाणौ दृष्ट्वापि शस्त्राणि गृहीत्वा चौरान् हत्वा ब्राह्मणाय गाः दत्तवान् ततो युधिष्ठिरेण निवारितोऽपि कामादेव दर्शने दोष इति सत्यवाक्यत्वात् भगवदिच्छया तीर्थयात्रार्थं प्रवृत्तः तदाह अर्जुनस्तीर्थयात्रायामिति ततः अवनीं पर्यटन् प्रभुः समर्थः हरणे एकाकिः पर्यटने वा प्रभासं गतः किञ्चिदशृणोत्तदाह—मातुलेयीमिति । मातुलस्यैव योषा भागस्ते पैतृष्वसेयामिवेतिश्रुतेः स्वभागमन्यो नेष्यतीति आत्मनो मातुलेयीं; रामो दुर्योधनाय दास्यतीति सोऽपि कलित्वात् अधर्महेतुरिति तस्यापि लौकिकएव भविष्यतीति प्रसह्य कन्याहरणत्वं शुद्धधर्मत्वञ्च भविष्यतीति भोगार्थमेव तां लिप्सुः यतिर्भूत्वा यत्र कस्यापि कामसम्भावनैव न भवति पर्वणि क्षौरं विधाय पीठादिवाऽनियतपदार्थपरिग्रहं कृत्वा त्रिदण्डी सन् द्वारकामगात् ॥ २—३ ॥

ततो वर्षाकाले यतेः पर्यटनं निषिद्धमिति वार्षिकान् मासान् अवात्सीत् ननु कृत्रिमवेषे किं धर्मकरणेनेत्यत आह स्वार्थसाधक इति यथैव तस्या हरणं सम्भवति ततः अत्रैव सर्वैः पौरैः सभाजितः अभीक्ष्णं एकएव बहुवारं भिक्षार्थं कथयति रामेण च नरमायया मोहितेन भगवदिच्छया च अजानता सभाजितः लौकिके चक्षुःप्रीतिः कथमिति तदर्थं परिचयार्थं पश्चाद्धरणासिद्ध्यर्थञ्च तस्याज्ञानं निरूप्यते बलभद्रोऽपि परमहंसं तं ज्ञात्वा तत्र हेतुभिः विचारो न कर्तव्य इति शास्त्रमेवावलम्ब्य तूष्णीं स्थितः अतस्तत्राधर्मजिज्ञासा नोत्पन्ना सादृश्यं प्रतिभातमपि धर्मज्ञानस्य बलिष्ठत्वात् न प्रत्यभिज्ञासाधकं जातम् ॥ ४ ॥

---

एकदा गृहमानीय आतिथ्येन निमन्त्र्य तम् ।
श्रद्धयोपहृतं भैक्ष्यं बलेन बुभुजे किल ॥ ५ ॥
सोऽपश्यत्तत्र महतीं कन्यां वीरमनोहराम् ।
प्रीत्युत्फुल्लेक्षणस्तस्यां भावक्षुब्धं मनो दधे ॥ ६ ॥
साऽपि तं चकमे वीक्ष्य नारीणां हृदयङ्गमम् ।
हसन्ती व्रीडितापाङ्गी तन्न्यस्तहृदयेक्षणा ॥ ७ ॥
तां परं समनुध्यायन्नन्तरं प्रेप्सुरर्जुनः ।
न लेभे शं भ्रमच्चित्तः कामेनातिबलीयसा ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यतिवेषोऽर्जुनोऽहार्षीत् सुभद्रां मिथिलामगात् ।
धिन्वन् विप्रनृपौ भक्तौ षडशीतितमे हरिः ॥

अथ कथोपसंहारमुद्रामालक्ष्य ननु भोः प्रभो बलदेवादीनामनिरुद्धपर्य्यन्तानां विवाहाः श्रुता एव किन्तु सुभद्राविवाहो न श्रुत इत्याह—ब्रह्मन्निति । विजयोऽर्जुनः तद्विवाहो मम त्ववश्यपृष्टव्य इत्याह येति ॥ १ ॥

तां प्रसिद्धां मातुलेयीं रामो दुर्योधनाय दास्यतीत्यश्रृणोदित्यन्वयः मच्चापरे वसुदेवकृष्णादयस्तु न दित्सन्तीत्यर्थः ॥ २ ॥

तां लिप्सुः सः स्वप्रियसखकृष्णसाहाय्यमाहत्य रामं वञ्चयितुं पूज्यतमं त्रिदण्डिवेषम् अकरोदित्याह-यतिरिति ॥ ३-४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

षडशीतितमेऽर्जुनबहुलाश्वश्रुतदेवान् स्वभक्तान् वाञ्छितार्थदानेन प्रीणयामासेत्युच्यते रामकृष्णादिविवाहा महर्षिणोक्ताः मम पितामहीविवाहो नोक्त इत्यतः पृच्छति ब्रह्मन्निति ॥ १—४ ॥

---

भाषा टीका ।

हे ब्रह्मन् ! श्रीकृष्ण बलदेवजी की भगिनी सुभद्रा का जिस प्रकार अर्ज्जुन ने विवाह किया इस वृत्तांत के जानिवे की हमको इच्छा है जो कि सुभद्रा मेरे पितामही रही ॥ १ ॥

श्रीशुक उवाच ।

तीर्थयात्रा में पृथिवी का पर्य्यटन करते २ प्रभासतीर्थ में अर्ज्जुन गया वहां निज मामा की पुत्री सुभद्रा को ॥ २ ॥

दुर्योधन के अर्थ बलदेवजी देवेंगे और वसुदेव आदि दुर्योधन के अर्थ नहि दिया चाहते हैं यह वृत्तांत अर्ज्जुनने सुना उस सुभद्रा की प्राप्ति की वांछाकर वह समर्थ अर्ज्जुन त्रिदण्डी सन्यासी का वेष बनाय कर द्वारका में गया ॥ ३ ॥

यह अर्ज्जुन है इस प्रकार नहि जानने वारे बलदेवजी से तथा द्वारका वासियों से निरन्तर पूजा को प्राप्त भया अपने प्रयोजन सिद्ध करने वारा अर्ज्जुन द्वारका में वर्षा के चार मास पर्य्यन्त निवास करता भया ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तमातिथ्येन निमन्त्र्य गृहमानीय बलेन यच्छ्रद्धयोपहृतं परिविष्टं तद्भैक्ष्यं किलार्जुनो बुभुजे इत्यन्वयः ॥ ५ ॥

भावेन रत्यभिप्रायेण क्षुभितं मनो दधे ॥ ६ ॥

व्रीडितापाङ्गी सव्रीडकटाक्षा तस्मिन्नेव न्यस्तं हृदयमीक्षणञ्च यया सा ॥ ७ ॥

अन्तरं हर्तुमवसरं प्रेप्सुः प्राप्तुमिच्छुः कामेन भ्रमच्चित्तं यस्य सः शं रामादिसन्माननिमित्तं सुखम् ॥ ८—९ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एकदा चातुर्मास्यान्ते तन्निर्गमशङ्कया निमन्त्र्यानीय किल प्रसिद्धौ ॥ ५ ॥

महतीं प्रौढां धीरेति वीरेति च पाठे कामादिजयसमर्थस्यार्जुनस्यापि मनोहरां दधे निदधे ॥ ६ ॥

अन्यासामपि नारीणां मनोहरं किं पुनः स्वस्य तं वीक्ष्य विशेषेण दृष्ट्वा नायं यतिः किन्तु कोपि मम पतित्वार्ह इति वैदग्ध्या प्राचीनसंस्कारेणचानुभूय तन्न्यस्तहृदयेक्षणा सती चकमे तत्र भावेन हर्षेण नर्मणा च हसन्ती स्मितविकसितनेत्रगण्डा जाता कुलवतीस्वभावेन व्रीडितापाङ्गा च जातेत्यर्थः ॥ ७ ॥

तामिति । तैर्व्याख्यातं तत्र रामादिपौरजनैर्यः सम्मानः स एव निमित्तं कारणं यस्य ताथाभूतमपि सुखं न लेभे सुखत्वेन न मेन इत्यर्थः । अथवा शं शान्तिलक्षणं सुखं तत्र हेतुर्भ्रमादिति ॥ ८ ॥

---

**महत्यां देवयात्रायां रथस्थां दुर्गनिर्गताम्।**
**जहारानुमतः पित्रोः कृष्णस्य च महारथः॥ ९॥**

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

एकदेति। बलेन रामेणैकदा आतिथ्येन हेत्वर्थे तृतीया आतिथ्यार्थं, निमन्त्रितः श्रद्धयोपहृतं परिविष्टं भैक्षमन्नं बुभुजे॥ ५॥

स इति। सोऽर्जुनः महतीमद्भुतां वीराणां मनो हरतीति तथा तां प्रीत्या उत्फुल्ले विकसिते ईक्षणे यस्य सः तस्यां कन्यायां भावेन रत्यभिप्रायेण क्षुभितं मनो दधे निहितवान् स्मरक्षुब्धमिति पाठान्तरम्॥ ६॥

सापीति। सापि कन्यापि तमर्जुनं वीक्ष्य व्रीडितौ व्रीडायुक्तौ अपाङ्गौ नेत्रान्तौ यस्यास्सा तस्मिन्नेव न्यस्तं हृदयमीक्षणे च यया सा चकमे अकामयत॥ ७॥

तामिति। परं केवलं तां कन्यामेव ध्यायन्नन्तरं हर्तुमवसरं प्राप्तुमिच्छुरतिबलीयसा कामेन भ्रमच्चित्तं यस्य सः शं रामादिसम्मानजं सुखं न लेभे॥ ८॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

अतएव तस्य भक्त्या सभाजनमाह—एकदा गृहमानीयेति। निकटे गच्छन्तं स्वगृहे समानीय पश्चात् आतिथ्येन निमन्त्रणङ्कृत्वा पाकसिद्धिपर्यन्तं बहुकालं स्थापयित्वा यथा निलीय दर्शनं भवति कन्यायाः स्थित इत्यर्थात् तमातिथ्येन निमन्त्र्य स्थित इति ततस्तेनैव बलभद्रेण श्रद्धयोपहृतं भैक्ष्यं बुभुजे अयमर्थो महतः वक्तुमनुचित इति किलेत्युक्तम्॥ ५॥

तत एतस्यापि दर्शनमाह—सोपश्यदिति। महतीं स्थूलाम् अर्जुनाद्वर्षमात्रन्यूनां यस्याः रूपेण वीराः प्राणानपि त्यजन्ति सा वीरमनोहरा ततस्तस्याः दर्शनेन तद्दर्शनसहितेन प्रीत्या कृत्वा उत्फुल्लेक्षणो जातः तावता कामवशङ्गतः भावक्षुब्धमनो दधे॥ ६॥

अकामायाः ग्रहणं न सम्भवतीति तस्या अपि भावो निरूप्यते—सापि तं चकम इति। सौन्दर्येणैव तस्याः मनोहरणं प्रथमतो हसन्ती ततो व्रीडितापाङ्गी तस्मिन्नेव न्यस्तं हृदयमीक्षणञ्च यथा एवं तया वृतः॥ ७॥

ततो भिक्षां विस्मृत्य तामेव ध्यायन् हरणार्थमन्तरं प्रेप्सुर्जातः तादृश्योऽप्यन्तरं न लेभे अप्रमत्तैः संरक्ष्यमाणत्वात् अत्र भारतोक्तमधिकमपि ज्ञातव्यं भगवतानीतो देवकीवसुदेवसमक्षं ततस्ताभ्यां सा कन्या दत्ता ततः अतिबलीयसा कामेन सम्भ्रमाविष्टो जातः ततो भगवान् दयालुः यात्रां कल्पयित्वा पुराद्बहिस्तां निस्सारितवान् ततो महत्यां सर्वेषामुत्सववैयग्र्ये पूर्वोक्तन्यायेन पित्रोरनुमतः कृष्णस्य च ततो महारथः अन्यनिराकरणे समर्थः दुर्गनिर्गतां रथस्थां तामहरत्॥ ८—९॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

एकदा चातुर्मास्यान्ते तं निमन्त्र्यानीय बलदेवेनोपाहृतं भैक्ष्यं स बुभुजे इत्यन्वयः॥ ५॥

वीरेति धीरेति च पाठे तादृशस्याप्यर्जुनस्य मनोहरन्ती॥ ६॥

तं नारीणां हृदयङ्गमं वीक्ष्य तादृशलक्षणैर्निश्चित्य नायं यतिः किन्तु मम प्रेयानेवेति स्वमन एव प्रमाणीकृत्य चकमे॥ ७॥

अन्तरं हर्तुमवसरं शं सुखम्॥ ८॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तमर्जुनमातिथ्येन निमन्त्र्य गृहमानीय बलेनोपहृतं परिवेष्टितं भैक्षमन्नमर्जुनो बुभुजे॥ ५॥

भावेन इयं मम पत्नी भवत्वित्यभिप्रायेण क्षुभितमाकुलम्॥ ६॥

सा सुभद्रा व्रीडितौ सञ्जातलज्जौ अपाङ्गौ नेत्रप्रान्तौ यस्याः सा तस्मिन्नर्जुने न्यस्तं हृदयमीक्षणं च यस्याः तमर्जुनं चकमे अकामयत॥ ७॥

अन्तरं प्रेप्सुः हर्तुमवसरं प्राप्तुमिच्छुः॥ ८—११॥

---

### भाषा टीका।

एक दिन अतिथिभाव से अर्जुन का निमंत्रण कर उस को गृह में लाय कर बलदेवजी ने श्रद्धा के साथ समर्पण किये भिक्षा के अन्नको अर्जुन ने भोजन किया इस प्रकार का इतिहास हे॥ ५॥

उस गृह मे अर्जुन ने वीरन के मन को हरने वारी बड़े रूप वारी कन्या को देखा देख कर प्रीतिसें प्रफुल्लित नेत्र वारा होकर उस कन्या के विषयमे अर्जुन ने रतिभाव सें चलाय मन को धारण किया॥ ६॥

लज्जा युत कटाक्ष वारी तथा अर्जुन के विषयमें जिसने मन और नेत्र लगादिए हें एतादृश वह कन्या नारी ओं के मन को हरने वारे अर्जुन को देख कर पतिभाव सें उसको काम ना करती भई॥ ७॥

उस कन्या का हि केवल चिन्तवन करत उस के हरने को अवर प्राप्ति को वांछा करत् अत्यन्त वलवान् कामदेव सं चलाय मान चित्त वारा अर्जुन, सुख को नहि प्राप्त भया॥ ८॥

रथस्थो धनुरादाय शूरांश्चारुन्धतो भटान् ।
विद्राव्य क्रोशतां स्वानां स्वभागं मृगराडिव ॥ १० ॥
तच्छ्रुत्वा क्षुभितो रामः पर्वणीव महार्णवः ।
गृहीतपादः कृष्णेन सुहृद्भिश्चान्वशाम्यत ॥ ११ ॥
प्राहिणोत्पारिबर्हाणि वरवध्वोर्मुदा बलः ।
महाधनोपस्करेभरथाश्वनरयोषितः ॥ १२ ॥
ः( अभवन् प्रीतिसंहृष्टाः बान्धवा यदुपाण्डवाः ।
अथान्यदपि कृष्णस्य वात्सल्यं भक्तयोः शृणु ॥ ० ॥

श्रीशुक उवाच ।

(१)कृष्णस्यासीद्द्विजश्रेष्ठः श्रुतदेव इति श्रुतः ।
कृष्णैकभक्त्या पूर्णार्थः शान्तः कविरलम्पटः ॥ १३ ॥
स उवास विदेहेषु मिथिलायां गृहाश्रमी ।
अनीहयाऽऽगताहार्यनिर्वर्तितनिजक्रियः ॥ १४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

आ समन्ताद्रुन्धतः आवरणं कुर्वतः ॥ १०—११ ॥

पारिबर्हाणि वरवध्वोः प्रीतिदेयानि ॥ १२—१३ ॥

अनीहयाऽनुद्यमेनैवाऽगतं यदाहार्यं भोज्यं तेन निर्वर्तिताः निजाः क्रियाः येन सः ॥ १४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

महत्यामिति युग्मकम् । देवयात्रायां देवोत्थानलक्षणायां पित्रोः पितृभ्यां श्रीवसुदेवदेवकीभ्यां चातुर्थ्यान् श्रीकृष्णेनैवानुमानिताभ्यामिति ज्ञेयं पश्चात् कृष्णस्य श्रीकृष्णेन चानुमतः अत एव रथस्थां तस्मै स्वयुद्धसामग्रीं दातुं श्रीभगवतैव स्वरथमारोहितामित्यर्थः । तथादिपर्वणि ज्ञेयं ननु तथापि यदुकुलमध्यतस्तत् दुष्करं महारथो वीरश्रेष्ठः श्रीभगवत्प्रियसखत्वात् ॥ ९—१० ॥

अनुसान्त्वितः प्रियोक्त्यानुनीय प्रबोधितः अन्वशाम्यतेति पाठेपि स एवार्थः ॥ ११ ॥

अत एव बलो बलेनाधिक्यात्तन्नामापि मुदा पारिबर्हाणि प्राहिणोदिति सुहृदां श्रीकृष्णस्य चानुमत्यैव तेन सा हृतेति बुद्ध्वेति भावः । पारिबर्हाण्येवाह—महेति । महाधना महामहामूल्याः याः उपस्कारादयस्ताः तत्रोपस्कारा विचित्रालङ्कारपर्यङ्कादयः ॥ १२ ॥

अथ स्वयमेव स्मृतिपथमागतं साक्षात्तत्कृतानुग्रहमयत्वेन स्वसहयोगेन चातिचित्ताकर्षकं तच्चरितविशेषमपृष्टमप्याहेत्याह—श्रीशुक उवाचेति पुनरुक्तिः प्रसङ्गान्तरापेक्षया कृष्णस्येति कृष्णस्वामिको द्विजश्रेष्ठ इत्यर्थः । कृष्ण एवैकस्मिन् किम्वा एका विशुद्धा या भक्तिस्तया परिपूर्णा अनादृता अपि सर्वतः सर्वांशेन वर्तमाना अर्था धर्मादयो यस्य सः स्वयं तु शान्तः श्रीभगवन्निष्ठचित्तः यतः कविः सर्वतत्त्वज्ञः अलम्पटश्च विषयानासक्तः ॥ १३ ॥

विदेहेषु देशेषु मिथिलायां पुर्यां क्रिया श्रीभगवत्पूजालक्षणा यदयाचितं लभ्यते तदपि स्वनाम्नैव यावदर्थमेव च प्रतिगृह्णाति नतु भगवन्नाम्ना नाप्यधिकमित्युत्तरार्धार्थः ॥ १४ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

अनीहया गताहार्यः अनीहया स्वयं मुन्यन्नाहारः ॥१४—२०॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं स्थिते कदाचिन्महारथोऽर्जुनः पित्रोः कृष्णस्यैवोति च कंसारिषष्ठी देवकीवसुदेवाभ्यां कृष्णेन चानुमतः दुर्गाद् प्राकाराद्बहिर्निर्गतां रथस्थां कन्यां जहार ॥ ९ ॥

ततो रथस्थः धनुर्गाण्डीवमादाय समन्ताद्रुन्धतः शूरान् भटान् विद्राव्य पलायितान् कृत्वा स्वानां यदूनां क्रोशतामाक्रोशतां सतां जहारेति पूर्वेण सम्बन्धः । यथा मृगराट् सिंहः स्वबलिं स्वभागं हरति तद्वत् ॥ १० ॥

कृष्णाय इति विज० पाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेति । तद्वचनं श्रुत्वा तावत्पर्वणि महार्णव इव क्षुभितः क्षुब्ध इत्यर्थः । ततः कृष्णेन सुहृद्भिश्च गृहीतौ पादौ यस्य सः अशाम्यत शान्तो बभूव ॥ ११ ॥

किञ्च प्राहिणोदिति । बलो रामः पारिबर्हाणि प्रीत्या देयानि श्रेष्ठवस्तूनि प्राहिणोत् प्रददौ महाधना अनर्घाः उपस्कराः भवत्कूराः येषां तानि इभान् गजान् रथान् अश्वान् नराः श्रेष्ठा योषितो दासीश्च प्राहिणोदिति सम्बन्धः ॥ १२ ॥

तदा यदवः पाण्डवाश्च बान्धवाः प्रीतिसंप्लुताः प्रीतिरसमग्नाः तेन संप्लुताः विकसितमुखा बभूवुः अथ भक्तवात्सल्यप्रयुक्तं भगवतः चेष्टितं प्रस्तौतुं प्रतिजानीते—अथेति । भक्तयोर्विषयभूतयोर्यद्वात्सल्यं तच्छृणु ॥०॥ कावम् भक्तौ कीदृशं वा तयोर्वात्सल्यमित्यतः प्रस्तौति—कृष्णस्येत्यादिना । यावदध्यायसमाप्ति ॥ श्रुतदेव इति । श्रुतः कृष्णस्य भक्त आसीत् स च कृष्णे भगवत्येकया एकान्तया अनन्यप्रयोजनयेति यावत् तया भक्त्या पूर्णार्थः पूर्णमनोरथः अत एव शान्तः कविर्विद्वानलम्पटः चित्तविक्षेपरहितः ॥ १३ ॥

स श्रुतदेवः विदेहेषु देशेषु तत्रापि मिथिलायां पुरि गृहाश्रमी सनुषितवान् अनीहया अनुद्यमेनैवागतं यद्वाहार्यं भोज्यं तेन निर्वर्तिताः निजाः क्रियाः अतिथिपूजनादिकाः येन सः ॥ १४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

"यमेवैषवृणुते तेनलभ्यः" इत्यादिश्रुत्यर्थदृढीकरणाय हरेर्भक्तिप्रियत्वमाहात्म्यं वक्ति, तत्र श्रुतदेवबहुलाश्वविषयमितिहासं शुको वदति—वृष्णिष्विति । भक्तिमन्तरेणान्यमर्थमनाकाङ्क्षमाणः पूर्णार्थ इत्यु[illegible]कृष्णविषयगाथारचनात् कविरलम्पटः शब्दादिविषयेच्छारहितः ॥ १३ ॥

मिथिलायां नगर्यां गृहाश्रमे स्थितः समार्य इत्यर्थः । अनीहयां अप्रयत्नेनागताहार्यः प्राप्तप्राप्तव्यः प्राप्तभोज्यो वा नितरां वर्तिता सहस्रनामादिजपक्रिया येन स तथा "नित्यं नामनिकामयोः" इतियादवः ॥ १४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो हरणार्थं तस्य पराक्रममाह—रथस्थइति । आ समन्तात् उन्धृतः रक्षकभटान् विद्राव्य सह समागतानां बन्धूनाम् आक्रोशतां सतामेव अज्ञानादाक्रोशं कुर्वतामिति सभागत्वा उपेक्षा निषिद्धेति मृगराडिव समर्थः जहारेति पूर्वेणैव सम्बन्धः ॥ १० ॥

ततो हृतायां तस्यां बलभद्रेण श्रुतो वृत्तान्तः पारिबर्हमेषणार्थमयमुद्यमो निरूप्यते ततो रामः तदश्रमादिकं श्रुत्वा क्षुभितः तद्वधार्थमेव प्रवृत्तः दृष्टान्तेन तस्य महत्त्वं समयश्च तादृश इति सूचयति—ततो भगवता परिसान्त्वितः वाक्यैरनेकविधैः—

"अस्माकं सर्वथा देया हृता नान्यैश्च गृह्यते ।
वधे भर्तृविहीना स्यात् योग्यश्चायं विशेषतः ।
कार्यार्थं वञ्चनं तस्य न दोषायेति मे मतिः ।
अज्ञाने स्वस्य दोषोहि कृत्रिमो न हि बाधकः ।
ततो गृहीतपादश्च तेनैवाभूद्बलः स्वयम् ॥

तथा सुहृद्भिरपि गृहीतपादः आन्वशाम्यत ततो भगिन्यां स्नेहातिशयात् पारिबर्हाणि प्राहिणोत् तान्याह महाधनेति गृहोपकरणानि चतुरङ्गिणी सेना दास्यश्च प्रस्थापितवान्—

"भक्ताय भगवान् कृष्णो भगिनीं दत्तवानिति ।
किमाश्चर्यं यतः कर्मज्ञाननिष्ठामवाप्नयोः ।
स्वयं गत्वा ऽतिमहता समाजेन समावृतः ॥
विप्रक्षत्रिययोः प्रीत्या स्वात्मानं दत्तवान् स्वयम् ।
यथाभिलषितं ताभ्यां सुखं प्राप्तं हरेर्महत् ।
कृतार्थावपि सञ्जातौ पुनरागमनं ततः ॥

॥ ११—१२ ॥

अतोपमाननप्रस्तावे भगवान् भक्तार्थमेवागतः ज्ञात्वैव अमानीमानद इति तत्सर्वं करोमीति कैमुत्यन्यायेन मार्गान्तरभक्तयोरपि स्वापमानेनापि हितं करोतीति निरूपयति—कृष्णस्यासीद्द्विजः श्रेष्ठ इति । ब्राह्मणत्वादयं प्रकरणी क्षत्रियस्तु प्रासङ्गिकः अत एव मध्ये निरूपितः अतो नोपक्रान्तक्रमविरोधः कृष्णस्य सम्बन्धी आसीत् भगवदीयः आसीदित्यर्थः । तथा भवने तस्य साधनमाह—द्विजश्रेष्ठ इति । श्रुतदेवः श्रवणे देववत् प्रभावान् तत्त्वेन च विख्यातः ततः कृष्ण एव या भक्तिः तयैव पूर्णार्थः एतत् तस्य दारिद्र्यदोषाभावाय निरूप्यते विद्यमानायामिच्छायां भक्त्या विषयाभावः न युक्तः अत आह—शान्त इति । आन्तरोऽयं गुणः कविर्विचारकश्च स्वभावतोपि तस्येन्द्रियाणि न बहिर्मुखानि इत्याह—अलम्पट इति । भगवत्सम्बन्धे तस्य षड्गुणाः निरूपिताः तत्र द्विजश्रेष्ठत्वमैश्वर्यं नाम कीर्तिः भक्तिः श्रीः शान्तिर्ज्ञानं कविर्बलम् अलम्पटो वैराग्यमिति तदीयस्तत्तुल्यो भवतीति निरूपितम् ॥ १३ ॥

ततस्तादृशस्य सात्त्विकदेशे स्थितिर्युक्तेति मिथिलायां स्थितिमाह—स उवास विदेहेष्विति । विदेहा देशाः यत्र स्थितानां देहाभिमानो न भवति तत्रापि मिथिलायां गतदेहाभिमानकृतायां अभिमानाभावे इतराश्रमेभ्योऽपि गृहस्थाश्रम एव मुख्यः तत्र दोषाणां निराभिमानस्यासम्भवात् अतः गृहाश्रमी तत्र भृत्यभावे धर्मो न फलतीति तस्य मुख्यां वृत्तिमाह—अनीहया ऽऽगताहार्य इति । स्वप्रयत्नव्यतिरेकेण आगतमाहार्यं भैक्ष्यागतं यस्य तेनैव निर्वर्तिताः क्रियाः येन ताश्च क्रियाः निजाः न परधर्माः अत एवायं कर्ममार्गानुसारी भक्तः ॥ १४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

देवयात्रायां देवोत्थानोत्सवविहितरथयात्रायां जहारेत्यत्र हेतुः पित्रोः कृष्णस्य च अनुमतः प्राप्तानुमतिः ॥ ६ ॥

क्रोशतामित्यनादरे षष्ठी ॥ १०—११ ॥

यात्रामात्रं त्वहरहर्दैवादुपनमत्युत ।
नाधिकं तावता तुष्टः क्रियाश्चक्रे यथोचिताः ॥ १५ ॥
तथा तद्राष्ट्रपालोऽङ्ग बहुलाश्व इति श्रुतः ।
मैथिलो निरहम्मान उभावप्यच्युतप्रियौ ॥ १६ ॥
तयोः प्रसन्नो भगवान दारुकेणाहृतं रथम् ।
आरुह्य साकं मुनिभिर्विदेहान् प्रययौ प्रभुः ॥ १७ ॥
नारदो वामदेवोऽत्रिः कृष्णो रामोऽसितोऽरुणिः ।
अहं बृहस्पतिः कण्वो मैत्रेयश्च्यवनादयः ॥ १८ ॥
तत्र तत्र तमायान्तं पौरा जानपदा नृप ।
उपतस्थुः सार्घ्यहस्ता ग्रहैः सूर्यमिवोदितम् ॥ १९ ॥
आनर्त्तधन्वकुरुजाङ्गलकङ्कमत्स्यपाञ्चालकुन्तिमधुकेकयकोसलार्णाः ।
अन्ये च तन्मुखसरोजमुदारहासस्निग्धेक्षणं नृप पपुर्दृशिभिर्नृनार्यः ॥२०॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पारिबर्हाणि प्रीतिदेयानि ॥ १२ ॥

अथ स्वयमेव स्मृतिपथमागतं तच्चरितविशेषं स्वसाक्षात्-दृष्टमपृष्टमप्याह-कृष्णस्येति । कृष्णस्वामिक इत्यर्थः ॥ १३ ॥

विदेहेषु देशेषु मिथिलायां पुर्य्याम् अनीहया अनुद्यमेनैव आगतं यदाहार्य्यं भोज्यं तेनैव निर्वर्त्तिता निजा क्रिया भगवत्परिचर्य्यापि येन सः ॥ १४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पारिबर्हाणि प्रीत्या देयानि वस्तूनि महाधनाः बहुधनशुल्काः उपस्कराः अलङ्काराः येषां तान् इभान् रथान् अश्वान् योषितो दासीश्च प्राहिणोत् ॥ १२—१३ ॥

अनीहया यदृच्छया आगतेन आहार्य्येणान्नादिना निर्वर्त्तिताः निजाः स्वाश्रमोचिताः क्रियाः येन सः ॥ १४ ॥

---

भाषा टीका ।

कदाचित महान् देवयात्रा के निमित्त रथमें बैठ कर वह कन्या किलेसे बाहिर निकसी उस समय वसुदेव देवकी ने तथा श्रीकृष्ण ने महा रथी अर्जुन को कन्या के हरन की अनुमति देदई ॥ ९ ॥

अनन्तर धनुष लेकर रथपर बैठ अर्जुन ने चारो तर्फ से रोकने वारे शूरवीर योधान को भगाय कर जैसे निज भागको सिंह लेजाता है तैसे यादव लोग पुकार ते हि उनका अनादर कर उस कन्या का हरण कर लिया ॥ १० ॥

सुभद्रा के हरण को सुन कर जैसे पर्व मे समुद्र-क्षुभित होता है तैसे हि बलदेव जी को क्षोभ भया, तब तो श्रीकृष्ण ने तथा अन्य सुहृदोंने बलदेव जी के चरण-पकर लिये इसमें बलदेवजी शान्त होगये ॥ ११ ॥

बलदेवजी ने प्रीतसें वर वधू के वास्ते बडे मोलके अलंकार तथा गृह की सामग्री हस्ती रथ अश्व दास दासी आदि दायजा भेजा ॥ १२ ॥

श्रीशुक उवाच ।

श्री कृष्ण कीहि एक भक्ति से पूर्ण मनोरथ वारा तथा शांति संपन्न विवेकी विषयों मे आ[illegible]क्तरहित श्रुतदेव इस नाम से प्रसिद्ध द्विजों मे श्रेष्ठ, इ[illegible]कार का श्री कृष्ण का एक भक्त रहा ॥ १३ ॥

जनकपुर देशों मे मिथिला पुरी मे वह निवास करता रहा; यद्यपि वह गृहस्थ रहा तथापि उद्यम के विनाहि प्राप्त भोजन से देह निर्वाह कर के गृहस्थाश्रम के कर्मों को भी करता रहा ॥ १४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

यात्रामात्रं शरीरादिनिर्वाहमात्रं भोज्यमुपनमति तं प्रत्यागच्छति ॥ १५ ॥

मिथिलस्य जनकस्य वंश्यो मैथिलः ॥ १६ ॥

प्रभुरेव स्वयं विदेहान् देशान् प्रययौ ॥ १७ ॥

कृष्णो व्यासः रामो भार्गवः अहं शुकः एवमादिभिः सह ॥ १८—१९ ॥

आनर्त्ताद्यर्णान्तास्तद्देशवार्तिनो नृनार्यः उदारहासं स्निग्धमीक्षणं यस्मिंस्तत् दृशिभिर्नेत्रैः ॥ २० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्र श्रीभगवदानुकूल्यमप्यस्तीत्याह—यात्रेति । तुः एव यात्रामात्रमेव दैवादीश्वरादुपनतः योगक्षेमं वहाम्यहमिति तदुक्तेः उत वाढम् उपनमत्येव ननु कदाचिदप्यतिष्ठतीत्यर्थः । तावतैव तुष्टः सन् यथोचिता भगवद्भक्त्यनुरूपा इत्यर्थः ॥ १५ ॥

तथेति । तद्राष्ट्रस्य पालो राजाऽपि तादृश एव श्रीकृष्णभक्त्यादिना श्रुतदेवसदृश इत्यर्थः । अतो निरहम्मानः राजा त्वभक्तस्याभिमानशून्यः अत एवोभावपि अविशेषेण अच्युतस्य भक्तानुग्रहादिगुणेऽप्यच्युतिरहितत्वेन तत्राप्यनन्तस्य प्रियौ ॥ १६ ॥

अत एव तयोः प्रसन्न इति युग्मकम् मुनिभिः सहारुह्य तैरेव सह गमनं तयोस्तादृशरुचित्वात् ॥ १७ ॥

मुनीनेव नामभिः निर्दिशति नारदइति ॥ १८ ॥

हे नृपेति ! प्रहर्षात् तथापि महातेजस्विनां मुनीनां भगवत्सान्निध्यात्तेजोहानिः सूच्यत एव ॥ १९ ॥

आनर्त्तादिदेशीयाः अन्ये अन्यदेशीयाश्च जनाः पपुः परमासक्त्या ददृशुरित्यर्थ । ते के तत्राह, नृनार्य्य इति । सर्वएवेत्यर्थः । आनर्त्तादयः श्रीद्वारकातो विदेहप्रयाणे क्रमेण देशाः केचित् पार्श्वस्थाश्च अत्युत्कण्ठया दूरतोपि मिलनात् केषाञ्चिच्च कृपार्थमेव क्रमेण यथाभ्रमणात् तदानन्दनार्थमेव हि अगाच्छनकैर्विदेहानिति वक्ष्यते अत्रापि मधुदेशस्थानां श्रीव्रजवासिनां मिलनावर्णनं पूर्ववत्तेषामप्रकटलीलाप्रवेशेनैवेति ज्ञेयम् ॥ २० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एतदेव प्रपञ्चयति । यात्रामात्रमिति । अयं श्रुतदेवः यात्रामात्रं शरीरनिर्वाहकमात्रोपयुक्तमाहार्यमहरहः दैवादुपनयति उपनयन्तं प्रतीक्षत इत्यर्थः । अधिकं यात्रामात्रादधिकं नोपनयति तावता यात्रामात्रेणैव तुष्टः उचिताः वर्णाश्रमोचिताः क्रियाः पञ्चमहायज्ञादिरूपाक्रियाः यथावच्चक्रे ॥ १५ ॥

तथेति । अङ्ग हे राजन् ! यथाऽयं श्रुतदेवः तथा तद्राष्ट्रपालः विदेहदेशाधिपः बहुलाश्व इति श्रुतः विश्रुतः स मैथिलो जनकवंश्यः निरहम्मानः देहात्माभिमानरहितः उभौ श्रुतदेवबहुलाश्वौ अच्युतस्य प्रियौ भक्तौ ॥ १६ ॥

तयोरिति । प्रसन्नः प्रसन्नो भवितुमित्यर्थः । आहूतमानीतं मुनिभिः साकं मुनिभिस्सह ॥ १७ ॥

केऽमी मुनय इत्यत आह—नारद इति । कृष्णो द्वैपायनः रामो भार्गवः अहं शुकः ॥ १८ ॥

तत्र तत्रेति । पुरेषु भवाः पौराः जनपदेषु देशेषु भवाः जानपदाः अर्घ्यैः हस्ताः येषां ते ग्रहैर्गुरुशुक्रादिभिः सहोदितं सूर्यमिव समायान्तं तं भगवन्तमुपतस्थुः अमृतोपमेयम् ॥ १९ ॥

आनर्त्तेति । हे नृप ! आनर्त्तादिदेशवर्तिनो जनाः तथा अन्येच नराः नार्यश्च उदारो हासः स्निग्धं ईक्षणे च यस्मिंस्तत्तस्य भगवतो मुखसरोजं पपुः मुखसरोजलावण्यरूपं मकरन्दं नेत्रचषकैः पपुरित्यर्थः ॥ २० ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु, प्रयत्नाभावे कथं शरीरयात्रास्यात्यत्राह—यावदिति । अनुदिनं यावन्मात्रमुपनमति दैवात्प्राप्तं भवति अयं ततोऽधिकं नाकाङ्क्षते तर्हि केनालम्बुद्धिरत्राह—तपसेति ॥ १५ ॥

यथा श्रुतदेवः ॥ १६ ॥

ततः किमायातमत्राह—तयोरिति । नियतैकान्तभक्तैः ॥ १७ ॥

मुनीनां नामानि निर्दिशति—नारद इत्यादिना ॥ १८ ॥

त उपतस्थुः निपत्याश्रुः ॥ १९ २० ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ननु कथं परब्रह्मविग्रहं भगवन्तं अज्ञानमयैश्चक्षुभिरपश्यन् कथं वा वायुवेगरथं तमनुवर्त्तन्ते तत्राह तेभ्य इति । स्ववीक्षणं स्वकर्तृका कृपावृष्टिः "पुमान् स्त्रिया" ( १-२ ६७ ) इत्येकशेषत्वान्नृभ्योनारीभ्यश्चेत्यर्थः ॥ २० ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अनीहया कदाचित् अन्नाभावात् क्रियाविच्छेदः स्यादित्याशङ्क्याह—यात्रामात्रमिति । यात्रा शरीरनिर्वाहः सकुटुम्बस्य तथाहरहः तथापि दैवादुपनमति ईश्वरेच्छया कदाचिच्छरीरबले विद्यमाने एकादशी उपवासादौ वा नोपनमतीत्यपि सूचयति उतेति अधिकन्तु नोपनमति कदाचिदपि तावतैव सन्तुष्टः अन्यथा दोषः स्यात् अत एव यथोचिताः क्रियाश्चक्रे ॥ १५ ॥

एवं ब्राह्मणं निरूप्य क्षत्रियं निरूपयति तथा तद्राष्ट्रपालोऽङ्गेति भगवद्भक्तवासात् सोपि भक्ताङ्गं प्रविष्ट इति तथेत्युक्तं यतस्तस्य विदेहराष्ट्रस्य पालः अङ्गेत्यप्रतारणार्थं सम्बोधनं बहुलाः अश्वाः यस्येति क्रियाशक्तिर्निरूपिता सतु मिथिलवंशोद्भवत्वान्मैथिलः अस्य तु षड्गुणाः राज्ञस्त्वभिमानाभाव एव यथा कर्मनिष्ठः प्रियः तथा ज्ञाननिष्ठोऽपि भगवत्प्रियः अत आह—उभावप्यच्युतप्रियाविति । यथा धर्मनिष्ठः प्रियः एवं ज्ञाननिष्ठोऽपि एतावद्वर्णनं भगवता तथाभूतौ स्मृतावितिति भगवन्मानसक्रियाविषयत्वात् भगवच्चरित्रत्वेन निरूपितौ ॥ १६ ॥

अत एव तद्गुणान् स्मृत्वा भगवान् तयोरिष्टसिद्ध्यर्थं तद्गृहं गत इत्याह—तयोः प्रसन्नो भगवान् इति । पूर्वं गमनबोधकाभावात् लौकिकाभावेनात्सवाभावाच्च कदाचित्सभागमनार्थं दारुकेण समानीतं रथमारुह्य विदेहानेव प्रययौ न त्वेकाकी सर्वाननुक्त्वा च कथं प्रस्थित इति चेत् तत्राह—प्रभुरिति । मुनिभिः साकमारुह्य विदेहान् ययौ तौहि भगवन्तं मुनिसहितं भावयतः तत्रापि राजा मुनीनपि भगवद्रूपानेव जानाति ब्राह्मणस्तु मुनिरूपान् अत एव स्वयं मुनिरूपधारी राजगृहं गमिष्यति मुनिभिः सहित-

तेभ्यः स्ववीक्षणविनष्टतमिस्रदृग्भ्यः क्षेमं त्रिलोकगुरुरर्थदृशं च यच्छन्।
शृण्वन् दिगन्तधवलं स्वयशोऽशुभघ्नं गीतं सुरैर्नृभिरगाच्छनकैर्विदेहान् ॥ २१ ॥
तेऽच्युतं प्राप्तमाकर्ण्य पौरा जानपदा नृप।
अभीयुर्मुदितास्तस्मै गृहीतार्हणपाणयः ॥ २२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

स्तु ब्राह्मणगृहे उभावपि कालात् परभूतं भगवन्तं ज्ञात्वा कालावयवभूतान् मुनीन् जानीतः अतो द्वादश-मुनीन् नाम्ना परिगणयति प्रकारपरत्वाय च आदिपदप्रयोगः कृष्णो वेदव्यासः रामः परशुरामः अहं शुकः आदिशब्देन गौतमादयः ॥ १७—१८ ॥

गुप्ततया अलौकिकन्यायेन गमनं व्यावर्त्तयितुं सर्वानुभवार्थं मध्ये पूजामाह—तत्र तत्रेति । सार्घ्यहस्ताः उपतस्थुः प्रत्येकं पूजाग्रहणे कालविलम्बो भवेत् अग्रहणे तु दोषः स्यादित्युभयथापि व्यावर्त्तयितुं दृष्टान्तमाह—सूर्यमिवोदितमिति । ग्रहस्थानीया ऋषयः न हि सूर्यः सर्वेषामर्घ्यं गृह्णाति निरीक्षणेन च गृह्णात्यपि एवं भगवानपीत्यर्थः ॥ १९ ॥

मध्यस्थान् देशान् द्वादश नाम्ना निरूपयति—आनर्त्तेति। अन्ये च अप्रसिद्धाः प्रसिद्धाश्च भगवतो मुखसरोजं पपुरिति तेषामुपासनाफलं निरूपितं सरोजत्वेनामृतपानं दृष्टमेव प्रयोजनं स्यादिति मुखं विशिनष्टि उदारहासस्निग्धेक्षणमिति उदारः सर्वपुरुषार्थदायी हासः स्निग्धं वेक्षणं मायाबहिर्मुखत्वेपि सम्पादिते सर्वपुरुषार्थान् साधयति ज्ञानन्तु भगवत्सम्बन्धिनं करोति अतः अदृष्टमपि फलं प्रयच्छतीति निरूपितम् एतादृशं नरा नार्यश्च सर्वेधिकारिणोऽत्रेति न्यायेन पपुः ॥ २० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तदप्याहार्य्यं दैवाद्भगवदिच्छावशात् यात्रामात्रं सपरिकरस्वशरीरनिर्वाहो यावता भवति तावन्मात्रमेवाहरहरुपनमति मिलति नत्वधिकम् ॥ १५ ॥

मिथिलस्य जनकस्य वंश्यो मैथिलः मिथिलायाम् ईश्वर इति वा निरहम्मानः राजत्वाभिमानशून्यः ॥ १६ ॥

तयोः प्रसन्न इति। तौ स्वेष्टदेवश्रीविग्रहपरिचर्य्यानुरोधवशाद्देवागन्तुमसमर्थौ वा लक्ष्यातिदिदृक्षुभ्यां ताभ्यां स्वयमेव दर्शनं दातुं प्रययौ मुनिभिः सहैवान्यथा तेषां श्रममालक्ष्य बलादेव मुनयः स्वरथमारोहिता इतिभावः। कृष्णो व्यासः रामो भार्गवः अहं शुकः ॥ १७—१९ ॥

आनर्त्तादिदेशीयाः मार्गसन्निकृष्टा एव अन्ये मार्गविप्रकृष्टा अपि जनास्तत्रतत्रागत्य दृशिभिर्नेत्रैर्मुखसरोजं पपुस्तन्माधुर्य्यमास्वादयामासुः ॥ २० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यात्रामात्रं निर्वाहमात्रं दैवादुपनमति तं प्रत्यागच्छति अनाविकमिति शेषः ॥ १५ ॥

मिथिलस्य जनकस्य वंश्यो मैथिलः ॥ १६—१७ ॥

कृष्णः श्रीव्यासः ॥ १८—१९ ॥

आनर्तादिशब्दैस्तत्तद्देशवासिनो जनाः प्रार्ह्याः दृशिभिर्नेत्रैः ॥ २० ॥

भाषा टीका।

जिससे शरीरादिका निर्वाहमात्र होजावे वहतो प्रारब्ध कर्म से प्राप्तहि होजाता है, और उस से अधिक तो उद्यम करने से भी नहि मिलता ऐसा मानि कर उद्यम के बिना हि प्राप्त वस्तु से सन्तुष्ट होकर वह आश्रम के उचित-कर्म करता रहा ॥ १५ ॥

हे राजन् ! उसी प्रकार जनक वंशी निरहंकारी बहुलाश्व नाम से प्रसिद्ध उस देश का राजा रहा वे दोनों हि श्रीकृष्ण के प्यारे रहे ॥ १६ ॥

श्रीकृष्ण भगवान् उन दोनोंन के ऊपर प्रसन्न होकर दारुक सारथि के लाए रथ पर बैठकर मुनिजनों को साथ लेकर प्रभु मिथिला देशन को जाते भए ॥ १७ ॥

नारद वामदेव अत्रि व्यास परशुराम असित अरुणि मै (शुकदेव) बृहस्पति कण्व मैत्रेय च्यवन आदि ऋषिजनों को साथ लेकर श्रीकृष्ण पधारे ॥ १८ ॥

हे नृप ! जहां २ भगवान् पधारे तहां २ हस्तोंमें भेट लिये पुरवासी देश वासी जनों ने भगवान् का पूजन किया उस समय ऋषियों से भगवान् की ऐसी शोभा भई कि गुरु शुक्रादि ग्रहों के साथ जैसे सूर्य्य का उदय होवे ॥ १९ ॥

आनर्त्त धन्व कुरु जाङ्गल कङ्क मत्स्य पांचाल कुन्ति मधु केकय कोसल अर्ण इन देशों के नर नारी तथा अन्य देशों के नर नारी अपनी दृष्टियों से हे नृप उदार हास तथा स्नेह युत नेत्र सम्पन्न श्रीकृष्ण मुखारविन्द का पान करते भए ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

स्ववीक्षणेनैव विनष्टतमिस्रा दृग्येषां तेभ्यः क्षेममभयमर्थदृशं तत्त्वज्ञानं च ॥ २१ ॥

अभीयुः प्रत्युज्जग्मुः ॥ २२ ॥

दृष्ट्वा तमुत्तमश्लोकं प्रीत्युत्फुल्लाननाशयाः ।
कैर्धृताञ्जलिभिर्नेमुः श्रुतपूर्वांस्तथा मुनीन् ॥ २३ ॥
स्वानुग्रहाय संप्राप्तं मन्वानौ तं जगद्गुरुम् ।
मैथिलः श्रुतदेवश्च पादयोः पेततुः प्रभोः ॥ २४ ॥
न्यमन्त्रयेतां दाशार्हमातिथ्येन सह द्विजैः ।
मैथिलः श्रुतदेवश्च युगपत्संहताञ्जली ॥ २५ ॥
भगवांस्तदभिप्रेत्य द्वयोः प्रियचिकीर्षया ।
उभयोराविशद्गेहमुभाभ्यां तदलक्षितः ॥ २६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रीत्योत्फुल्लान्याननान्याशयाः अन्तःकरणानि च येषां ते कैः शिरोभिः ॥ २३—२५ ॥

तदभिप्रेत्याङ्गीकृत्य तत्तदोभाभ्यामपि ताभ्यां मद्गृहादन्यस्य गेहं यातीत्यलक्षितोऽविदितः यद्वा उभाभ्यां रूपाभ्यां तदलक्षितस्ताभ्यामलक्षित इति ॥ २६—२७ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ननु, कथं परब्रह्मविग्रहं श्रीभगवन्तमज्ञानमयैश्चक्षुर्भिरपश्यन् कथं वायुवेगरथं तमन्ववर्त्तन्त तत्राह—तेभ्य इति । स्वर्वीक्षणं स्वविषयककृपादृष्टिः "पुमान् स्त्रिया" इत्येकशेषत्वात् नृभ्यः नारीभ्यश्चेत्यर्थः । तमिस्रमज्ञानं क्षेमं पुनस्तदापातशङ्कानिरासम् अर्थदृशं तत्स्वरूपभूतपरमार्थप्रकाशकचिच्छक्तिं सा चात्र भक्तिरूपा ज्ञेया "भक्त्याहमेकया ग्राह्यः" इत्यादिभ्यः ततश्चक्षुरादितया तयैवापश्यन्नित्यर्थः । अत एवाह—त्रिलोकगुरुरिति वैभवीश्वयैवेति भावः । दिगन्तान् दिशास्तत्रत्यान् धवलयन्ति निर्मलयतीति तथा तत् सुरैराकाशगामिभिः नृभिश्च क्रमशो मिलितैः ॥ २१ ॥

अच्युतं सर्वरूपगुणादिसम्पूर्णं भगवन्तमाकर्ण्यैव मुदिताः आनपदाश्च जनाः तस्मै तदर्थं गृहीतमर्हणमर्घ्यादिपूजोपकरणं यैस्ते पाणयो येषां ते ॥ २२ ॥

उत्तमश्लोकमिति । यस्य दूरतः सद्यशःश्रवणेन चिरं दिदृक्षाऽऽसीत् किम्वा तेनापि कृतार्थता स्यात् तं साक्षाद्दृष्ट्वेत्यर्थः । कैरिति श्रीमुखदर्शनार्थं तथा तेनैव प्रकारेणैव मुनींश्च यतः श्रुतपूर्वानिति तेषां माहात्म्यज्ञानं तेन दर्शने चौत्सुक्यं सूचितम् ॥ २३ ॥

जगतो गुरुं श्रीब्रह्मादीनामपि परमपूज्यं स्वयोरनुग्रहायैव सम्यक् स्वाभीष्टमुनिगणसाहित्यादिना प्राप्तमागतं मन्यमानौ अतो भक्त्युद्रेकेण प्रभोर्निजेश्वरस्य सर्वाभीष्टप्रदानसमर्थस्य वा पादयोः पेततुः द्विजश्रेष्ठस्यापि श्रुतदेवस्य पश्चान्निर्देश अन्तरयोग्यतया सङ्कोचेन पश्चाद्दर्शितत्वात् ॥ २४ ॥

द्विजैर्मुनिभिः सह सहितम् ॥ २५ ॥

...आ सम्यक् मुनिसाहित्यादिनाऽविशत् प्रविवेश अतोऽत्र निजैश्वर्याभावे मुनीनामपि स्वातन्त्र्यं मासीदितिभावः ॥ २६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अर्थदृशं तत्त्वार्थज्ञानम् ॥ २१—२२ ॥

कैः शिरोभिः ॥ २३—३४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तेभ्य इति । त्रिलोकगुरुर्भगवान् स्वदर्शनेन विनष्टा तमिस्रा दृक् येषां तेभ्यः स्वर्वीक्षणमात्रनिरस्ताज्ञानेभ्य इत्यर्थः । क्षेमं श्रेयो यथा भवति तथाऽर्थदृशं प्रयच्छन्नपाङ्गदृष्ट्या तानवलोकयन्नित्यर्थः अतिशुभ्रं निर्मलं दिगन्तधवलं दिगन्तव्याप्तं स्वयशः सुरैर्नृभिश्च गीतं शृण्वन् शनैर्विदेहान् देशानगाद्ययौ ॥ २१ ॥

त इति । ते वैदेहाः पौरा जानपदाश्च गृहीतमर्हणं यैस्ते पाणयो येषां ते तस्मै भगवतेऽभीयुः प्रत्युज्जग्मुः तमभिययुरित्यर्थः । यद्वा तस्मै इत्यनेन सापेक्षस्यापि गृहीतार्हणेत्यस्यार्षत्वात्समासः तं वा इति पाठान्तरम् ॥ २२ ॥

दृष्ट्वेति । प्रीत्योत्फुल्लमाननमाशयश्च येषां ते विदेहदेशवासिनो जनास्तं कृष्णं तथा श्रुतपूर्वान् मुनींश्च ननु दृष्टपूर्वान् निबद्धाञ्जलिभिर्नेमुः कैर्धृताञ्जलिभिरिति पाठे न्यस्ताञ्जलिभिः शिरोभिरित्यर्थः ॥ २३ ॥

स्वानुग्रहायेति । मैथिलः श्रुतदेवश्च जगद्गुरुं भगवन्तं स्वानुग्रहार्थमागतं मन्वानौ प्रभोः श्रीकृष्णस्य पादयोः निष्पेततुः ॥ २४ ॥

न्यमन्त्रयेतामिति । संहतौ नमस्कुर्वन्तावञ्जली ययोस्तौ द्विजैर्मुनिभिः सह सहितमित्यर्थः । दाशार्हं भगवन्तमातिथ्येनातिथ्यार्थं युगपदेव न्यमन्त्रयेतां निमन्त्रितवन्तौ ॥ २५ ॥

भगवांस्त्विति । तन्निमन्त्रणमभिप्रेत्याङ्गीकृत्य द्वयोरपि प्रियं कर्तुमिच्छया तत्तदा उभाभ्यामपि ताभ्यां मद्गृहादन्यस्य गेहं समायातीत्यलक्षितः अविदितः उभयोरपि गृहान् प्राविशत् ॥ २६ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सेवाफलमाह—तेभ्य इति । अवीक्षणेन दर्शनेन विनष्टं तमिस्रं यस्याः सा तथा विनष्टतमिस्रा निरस्ताज्ञाना दृक् ज्ञानं येषां ते तथा तेभ्यः तेभ्यः पौरेभ्यः क्षेमं यच्छन् अर्थदृशमपरोक्षज्ञानं च ददन् एकस्मिन्दिगन्तेऽप्यनन्यथा गीयमानत्वाद्दिगन्तधवलम् ॥ २१—२२ ॥

स्वधृताञ्जलिरिति पाठे के मूर्ध्नि धृताञ्जलिपुटैरित्यर्थः ॥ २३ ॥

सत्यभूतं निर्दोषानन्दज्ञानघनम् ॥ २४ ॥

निमन्त्रयेतां भोजनार्थक्षणं कृतवन्तौ आतिथ्येन अतिथियोग्येन कर्मणा ॥ २५ ॥

तदलक्षितः ताभ्यां रूपाभ्यामलक्षितः अज्ञातरूपश्च इत्यर्थः ॥ २६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तमिस्रमज्ञानं क्षेमं पुनस्तदापातशङ्कानिरासम् अर्थदृशं तत्स्वरूपभूतपरमार्थप्रकाशकचिच्छक्तिं सा चात्र भक्तिरूपा ज्ञेया "भक्त्याहमेकया ग्राह्यः" इत्यादिभ्यः ततश्च तथा चक्षुरदितयैवापश्यन्नित्यर्थः । अतएवाह त्रिलोकगुरुरिति । वैधर्मीयैवेति भावः । दिगन्तान् दिशस्तत्रत्यान् धवलयति निर्मलयतीति तथा तत् ॥२१-३०॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततो भगवान् फलरूपेणापि भजने फलान्तरं प्रयच्छन् ततोऽप्यग्रे फलपरम्परासिद्ध्यर्थम् उपायं कृतवानित्याह—तेभ्य इति । भगवद्वीक्षणेन नष्टं तमः अज्ञानं यस्य तादृशयुक्तदृष्टिभ्यः वस्तुसामर्थ्यादेव दोषे निवृत्ते स्वयमधिकं क्षेमं दत्तवान् लब्धस्य परिपालनं क्षेमः यथेयं मूर्तिः सर्वदा दृष्टौ सन्निहिता भवति तथा वरं दत्तवानित्यर्थः तदैवेदानीं प्राप्तस्य परिपालनं भवति ननु मध्ये विषयान्तरदर्शनस्यावश्यकत्वात् कथमेतस्यैव दर्शनं निरन्तरं भवेदित्याशङ्क्याह—त्रिलोकगुरुरिति त्रिलोकस्य स एव गुरुः यत्रान्तर्यामिप्रेरणया सर्वेषां सद्बुद्धिरुत्पद्यते बहिर्वाक्यं त्वप्रयोजनं व्यभिचारात् अतो यदैवान्यद्दर्शनं प्राप्नोति तदैव तन्निषेधार्थमुपदेशं करोतीत्यर्थः । किञ्च अर्थदृशश्च यच्छन् सर्वत्र ते यथा अर्थरूपं भगवन्तमेव पश्यन्ति सर्ववस्तुषु वस्तुरूपम् अतो यत्किञ्चिदपि ते पश्यन्तः भगवन्तमेव पश्यन्तीति पूर्वदत्तक्षेमस्य न कापि प्रच्युतिः चकारात् सत्र स्थितमपि भगवन्तं द्रष्टुं सामर्थ्यं दत्तवानित्यर्थः । नन्वकस्मात् कथमेतावत्फलं प्रयच्छतीति शङ्कां व्यावर्तयन् तेन दत्तं फलं सर्वदैव स्थास्यतीत्यपि ज्ञापयति शृण्वन् दिगन्तधवलं स्वयशः इति तेषां मुखेभ्य एव शृण्वन् मध्ये कालादिवशात् जातधर्मेण प्रतिबन्धमाशङ्क्याह—अशुभघ्नमिति । कदाचित् तत्कीर्तिविस्मरणे साधनाभावमाशङ्क्याह गीतं सुरैर्नृभिरिति । ये देवरूपाः मनुष्याः तैर्गीतं सुरैर्नृभिरिव गीतमिति वा तेन कीर्तेरक्षयत्वं निरूपितम् एव मध्यस्थेष्वेतावत्प्रयच्छति यदर्थं तु गच्छति तेभ्यः किं दास्यतीति शङ्कामुत्पादयन्नेव उद्देश्यदेशान् गतः शनकैरिति मध्ये तेषु स्नेहो निरूपितः ॥ २१ ॥

उद्देश्यदेशस्थानां भगवति स्नेहादिकमाह—तेऽच्युतं प्राप्तमिति । पुरवासिनो देशवासिनश्च नृपा इति पाठे भगवांस्तत्र गच्छतीति दर्शनार्थं प्रथमत एव सर्वे गताः तेपि भगवति पुरवासिवज्ज्ञाता इति त्रिविधा निरूपिताः तेषां कायिकादिभावमाह आभिमुख्येन ईयुरिति कायिकं मुदिता इति मानसं गृहीताऽर्हणपाणाय इति धनद्वारा ममतास्पदेनापि भजनमुक्तम् ॥ २२ ॥

तत ऐन्द्रियकमाह—दृष्ट्वा तमिति । प्रीत्युत्फुल्लमुखाम्बुजाः इति भगवद्दर्शनं तादृशं येन भगवानन्तःप्रविशति प्रविष्टोऽपि प्रीतिमुत्पाद्य उत्फुल्लान्याननानि बहिः आशयान्तश्च करोति ततः कैर्मस्तकैर्धृताञ्जलिभिः सर्वापराधक्षमापकैः भगवन्तं नेमुः मुनींश्च विशेषानभिज्ञत्वात् तथा नमनमिति शङ्कां वारयति श्रुतपूर्वानिति ॥ २३ ॥

साधारणानां प्रपत्तिमुक्त्वा मुख्ययोराह—स्वानुग्रहाय सम्प्राप्तमिति । ननु सर्वदा भगवान् दृश्यते एव सेव्यते च तथा सति को विशेष इति शङ्कां वारयति—जगद्गुरुमिति । किमस्माभिर्यत् क्रियते तदेव कर्तव्यमाहोस्विदन्यद्वा एतन्निर्णयं भगवानेव करिष्यतीति विशेषतः समागमनमित्यर्थः । अत एव पादयोः पेततुः अनेन ब्राह्मणस्यापि नमस्कारः अनिषिद्ध इति निरूपितं प्रभोः समर्थस्य चरणनमनमात्रेणैव सर्वमेव स्वहितं करिष्यति नाधिकं कार्यमपेक्षते फलदानार्थं चेति सूचितम् ॥ २४ ॥

ततः उभावपि स्वस्वगृहे समानयनार्थं निमन्त्रणं कृतवन्तावित्याह—न्यमन्त्रयेतामिति । स्वगृहे समानयनार्थमिति हेतुः दाशार्हमिति सहद्विजैरिति भागशो निमन्त्रणं वारयति उभयोस्तु कर्तव्यमेव तत् लोके तु वशात्त्वा कालभेदेन भागभेदेन वा लौकिकास्तथा कुर्वन्ति भगवांस्तु प्रभुरिति सर्वं सम्पादयिष्यतीति राजत्वान्मैथिलः प्रथमं निर्दिष्टः चकारः राजसमत्वं बोधयति श्रुतदेवस्य युगपत्प्रहृताञ्जली इति कालभेदव्यावृत्त्यर्थमुक्तं ततो भगवान् तयोरभिप्रायं ज्ञात्वा भगवतो वैषम्यञ्च ज्ञातुं भगवता शक्यं किमपि नास्तीति तत्तथैव सम्पादनीयमिति भगवानुभयोरपि गृहे गतः तत्र प्रकारमाह—उभाभ्यां तदलक्षित इति । भगवान् समूहद्वयं जातः तत उभयोर्गृहे गतः यस्मिन् देशे मार्गभेदोऽस्ति ततो भगवन्माहात्म्ये तथावगते तथा रसो न भविष्यतीति ताभ्यामलक्षित एव गतः मुनीनामपि तथात्वं जातमिति केचित् राजनि मुनीनां विशेषाभावात् सर्वत्र भगवद्बुद्धेस्तुल्यत्वात् "ये यथा मां प्रपद्यन्ते" इति वाक्याच्च श्रुतदेवगृह एव मुनिभिः सहितो गतः राजगृहे तु स्वयमेव गतस्तावन्मात्र इति विमर्शः ॥ २५—२६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, परब्रह्मविग्रहस्य तस्य माधुर्यास्वादनं कथं तेषां

श्रोतुमप्यसतां दूरान् जनकः स्वगृहागतान् ।
आनीतेष्वासनाग्र्येषु सुखासीनान् महामनाः ॥ २७ ॥
प्रवृद्धभक्त्या उद्धर्षहृदयास्राविलेक्षणः ।
नत्वा तदङ्घ्रीन् प्रक्षाल्य तदपो लोकपावनीः २८ ॥
सकुटुम्बो वहन् मूर्ध्ना पूजयाञ्चक्र ईश्वरान् ।
गन्धमाल्याम्बराकल्पधूपदीपार्घ्यगोवृषैः ॥ २९ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

प्रति स्वनेत्रैरत्वाह—तेभ्यः " पुमान् स्त्रिया "इत्येकशेषात् नृभ्यो नारीभ्यश्चेत्यर्थः। स्ववीक्षणं स्वकृपावलोकस्तेन विनष्टं तमिस्रमज्ञानं यासु तथाभूता दृशो नेत्राणि येषां तेभ्यः अर्थदृशां परमार्थतत्त्वमुभयं क्षेमं स्वभक्तियोगञ्च स्वमाधुर्यविशेषग्राहकं यच्छन् " भक्त्याहमेकया ग्राह्यः "इति तदुक्तेः॥ २१ ॥

अभीयुः प्रत्युज्जग्मुः ॥ २२ ॥

कैः शिरोभिः धृता अञ्जलयो येषु तैः ॥ २३—२४ ॥

न्यमन्त्रयेतामित्यार्षम् ॥ २५ ॥

तदभिप्रेत्य मद्गृहमेवायात्विति द्वयोरेव वाञ्छितं ज्ञात्वा उभयोराविवेशेति स्वस्य मुनीनां च प्रकाशद्वयीकरणात् तत्तदा उभाभ्याम् अलक्षित इति ममैव निमन्त्रणमङ्गीकृत्य मद्गृहमेव कृपालुः प्रभुरायाति श्रुतदेवस्तु प्रभुरहित एवायमेकाकी स्वगृहं यातीति राजा यथा विचारयतिस्म तथा श्रुतदेवोपि ततस्तयोरपि द्वौ द्वौ प्रकाशाविवाभूताम् एकः कृष्णसंयुक्तो हृष्टः अन्यः कृष्णवियुक्तो विषण्ण इति कृष्णसंयुक्तराजप्रतिवेशिजनैः श्रुतदेवगृहं गतैः श्रुतदेवः कृष्णवियुक्तो विषण्णो दृश्यते स्म तथैव कृष्णसंयुक्तश्रुतदेवप्रतिवेशिजनैः राजापि कृष्णवियुक्तो विषण्ण इति ॥ २६—२७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तेभ्यः आनतोद्विवासिभ्यः स्ववीक्षणेनैव विनष्टतमिस्रा दृशो येषां तेभ्यः अर्थदृशां यावज्जीवनं तावत् भोगसाधनभूतो मोक्षस्तत्सम्पादनज्ञानं क्षेमं मोक्षोपायं स्वविषयकं ज्ञानं भक्तियोगञ्च दिगन्ताः धवलाः शुद्धाः पवित्रीकृताः येन तत् ॥ २१—२२ ॥

ते वैदेहाः अभीयुः प्रत्युज्जग्मुः धृता अञ्जलयो येषु तैः कैः शिरोभिः ॥ २३—२५ ॥

भगवान् तदभिप्रेत्य मम गृहमायातु इति तयोराशयमङ्गीकृत्य द्वयोः प्रियचिकीर्षया तदलक्षितस्ताभ्यां श्रुतदेवबहुलाश्वाभ्यां रूपान्तरेण स्वेतरगृहे प्रवेष्टुमुद्यतोऽविदितः उभयोर्गेहं द्वाभ्यां रूपाभ्यामाविशदित्यन्वयः एकेन रूपेण विप्रगृहमेकेन राजगृहं युगपत् प्रविष्टोऽभूदित्यर्थः ॥ २६ ॥

---

भाषा टीका।

निज दर्शन कर ने से जिन की बुद्धि का अज्ञान विनष्ट होगया एतादृश उन२ देशवासि नर नारीयों के अर्थ तत्त्व ज्ञान और कल्याण को देते२ तथा देवताओं ने गायो और मनुष्यों ने गायो भयो और पाप को नाश करनेवारो सब दिशा मने व्याप्त शुद्ध एतादृश निज यश को श्रवण करते२ त्रिलोकी के गुरु श्रीकृष्ण महाराज धीरें२ मिथिला देशों को पधार ते भए ॥ २१

हे नृप! श्रीकृष्ण को आए सुन कर मोद को प्राप्त होते और अपने२ हस्त में भेट लिये वे जनक पुर वासी श्रीकृष्ण के सन्मुख आते भए ॥ २२ ॥

श्रीकृष्ण का दर्शन कर के तथा प्रथम सुने भए मुनि जनों का दर्शन कर के प्रीति से जिन के मुख तथा हृदय प्रफुल्लित हो गए हैं एतादृश जनक पुर वासी तथा देश वासी, अञ्जलि धारण किए मस्तकों से श्रीकृष्ण तथा ऋषियों को प्रणाम करते भए ॥ २३ ॥

अपने उपर अनुग्रह कर ने के लिये श्रीकृष्ण पधारे हैं ऐसा मान कर बहुलाश्व राजा और श्रुतदेव दोनो प्रभु के चरणों मे गिर पडे ॥ २४ ॥

अञ्जलि किये राजा और श्रुतदेव दोनो ने एक हि समय मे ऋषियों समेत श्रीकृष्ण का अतिथि पूजन के निमित्त निमन्त्रण किया ॥२५ ॥

उनके निमन्त्रण को अङ्गीकार कर के दोनोन के प्रिय कारण की इच्छा से उन काजसे यहै लिखाई होय कि मेरे गृह ते अन्य के गृह में जाते हैं इस के वास्ते दो रूप धारण कर श्रीकृष्ण भगवान् एक२ रूप से दोनोन के गृह मे पधारे ॥ २६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

उद्धर्षमुद्गतहर्षं हृदयं यस्य अस्रैराविले क्लिन्ने ईक्षणे यस्य सः स एव सच ॥ २८ ॥

ईश्वरान् ईश्वरं तत्तुल्यांश्चेत्यर्थः ॥ २९ ॥

वाचा मधुरया प्रीणन्निदमाहान्नतर्पितान् ।
पादावङ्कगतौ विष्णोः संस्पृशन् शनकैर्मुदा ॥ ३० ॥
राजोवाच ।
भवान्हि सर्वभूतानामात्मा साक्षी स्वदृग्विभो ।
अथ नस्त्वत्पदाम्भोजं स्मरतां दर्शनं गतः ॥ ३१ ॥
स्ववचस्तदृतं कर्तुमस्मद्दृग्गोचरो भवान् ।
यदात्थैकान्तभक्तान् मे नानन्तःश्रीरजः प्रियः ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रीणन् प्रीणयन् संस्पृशन् सम्मर्दयन् ॥ ३० ॥

आत्मा चेतयिता साक्षी प्रकाशकः स्वदृक् स्वप्रकाशः अथातःकारणात् ॥ ३१ ॥

अनन्तो बन्धुरपि श्रीर्भार्याऽपि अजः पुत्रोऽपि ॥ ३२–३३ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्कर्मणैवार्द्रो राज्ञो वृत्तमाह—तत्र श्रोतुमिति सार्द्धद्वयकम् । महामनाः श्रीकृष्णनिष्ठत्वेन महत् सर्वोत्कृष्टं मनो यस्य सः अत एव प्रवृद्धया भक्त्या प्रवृद्धभक्त्या उद्धर्ष इत्यसंहितान्वाद्नलिधः वहन् धारयन् गन्धेति सार्द्धकं गोवृषा बलीवर्दाः गन्धादीनामार्थिक एव क्रमो ज्ञेयः ॥ २७—२९ ॥

अन्नेन तर्पितान् सन्तोषितान् सतः सर्वानेव धन्योऽस्मि कृतकृत्योऽस्मीत्यादि वाचा प्रीणयन् इदं वक्ष्यमाणमाह—श्रीभगवन्तम् अग्रे भवानित्याद्युक्तेः विष्णोः विश्वव्यापकस्यापि भक्तवत्सलस्य कृपया अङ्कं स्वक्रोडं गतौ तत्रापि पर्य्यासाविस्यर्थः अतो मुदा सम्यक् चातुर्य्यविशेषेण स्पृशन् शनकैरिति सुकोमलत्वात् अत एव संस्पृशन्निति संस्पर्शनमात्रमुक्तम् ॥ ३० ॥

अथोऽन्यस्यात्यात्मनो गृहं स्वयमेव श्रीभगवतः साक्षात् समागमनेन निरुपाधिकृपां वर्णयन्स्तौति—भवानिति हि यतः स्वयं प्रकाशो अन्यापेक्ष्यप्रसादोऽपि स्वभावत एव विभिन्नांशरूपजीवानां चेतयिता चित्स्वरूपताश्रयः यथा सूर्य्यमण्डलो निजांशूनां ज्योतीरूपताश्रयः ततस्तदुपाधिनामपि चेतनत्वकर्त्ता त्वमेवेत्यर्थः । अत एव लौकिकः साक्षी यथा स्वयमभासकोऽन्येभ्यो विषयं प्रकाशयति तथा जीवेभ्यस्त्वमपि अथ अस्मादेव जीवानामन्वद्दर्शनशक्त्यभावात् तव कृपालुस्वभावत्वाच्च हेतोर्नोऽस्मत्कर्तृकं दर्शनं गतः स्वयमेव कृपया स्वप्रकाशनाशक्तिप्रकाशनेनेति भावः कीदृशामपि स्मरतामपि यथाकथञ्चित्स्मरणमात्रं कुर्वतामपि ननु तत्र प्रेमसंयुक्तानन्दाश्रुभिः प्रयासं कुर्वतामित्यर्थः अम्भोजरूपकेणाज्ञानगर्हितमन्येनापि प्राप्तमङ्गस्य तस्य तापहरित्वं स्वाभाविकमेवेति व्यञ्जितं जीवानामिति भूतानामिति वा पाठः ॥ ३१ ॥

अथवा स्ववचश्च इति अयमर्थः एकान्तभक्तान्मे मम अनन्तो भ्रातृत्वेनापि श्रीर्जायात्वेनापि अजः पुत्रत्वेनापि न प्रियः किन्तु तेऽप्येकान्तभक्तत्वेनैव मम प्रेष्ठा इत्यर्थः । तदेतद्वादत्य तत्स्ववचः ऋतं सत्यं कर्तुं दर्शयितुं भवानस्मद्दृग्गोचरोऽभूत् तदनुगामितांशेनैवास्मान् प्रत्यपि कृपां कृतवानित्यर्थः । यद्वा यतस्ते सङ्गे समानीता न सन्ति किन्त्वेत एवानीता इति भावः । अत्र शान्तरसमयभक्तत्वादस्य युक्तमेवैतत् यत एव तथैव श्रीभगवदाविर्भाव इति ॥ ३२ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

श्रोतुमिति । असतां श्रोतुमपि दूरान् स्वगृहागतान् आनीय समर्पितेषु श्रेष्ठेष्वासनेषु सुखासीनान् नत्वेत्युपरिष्टात्सम्बन्धः कथम्भूतः ? प्रवृद्धभक्त्या उद्धर्षमुन्नतहर्षं हृदयं यस्य अश्रुरानन्दाश्रुभिः आविले व्याप्ते ईक्षणे यस्य स चासौ स च तेषामङ्घ्री पादौ प्रक्षाल्य ताः लोकपावनीरपः मूर्ध्ना वहन् गन्धादिभिरीश्वरान्पूजयामास आकल्पोऽलङ्कारः तत्रेश्वरशब्दः ईश्वरात्मकपरः ॥ २७—२९ ॥

वाचेति । ततोऽन्नेन तर्पितान् मधुरया वाचा प्रीणयन् अङ्कगतौ विष्णोः कृष्णस्य पादौ संस्पृशन् पादावङ्के निधाय संस्पृशन्नित्यर्थः मुदा हर्षेणेदं वक्ष्यमाणमाह ॥ ३० ॥

तदेवाह— भवानितित्रिभिः । हे विभो ! हि यस्माद्भवानात्मा अन्तरात्मा साक्षाद्द्रष्टा स्वदृक् अनन्याधीनप्रकाशश्च अथातो मदभिप्रायं जानन् त्वत्पदाम्भोजं स्मरतां नोऽस्माकं दर्शनं प्राप्तः ॥ ३१ ॥

किञ्च स्ववच इति । यस्मात् एकान्तभक्तादनन्यप्रयोजनभक्तियुक्तात् ममानन्तः शेषः सखापि श्रीर्लक्ष्मीर्भार्य्यापि अजो ब्रह्मा पुत्रोऽपि न प्रिय इति यत् आत्थ उक्तवानसि तत् स्ववचो दृढीकर्तुं भवानस्माकं दृग्गोचरो दृग्विषयो बभूव ॥ ३२ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अथ बहुलाश्वः ईश्वरं पूजयाञ्चक्र इत्यन्वयः । तानस्वा कीदृशान् श्रोतुमपि दूरान् कर्णाविषयान् ॥ २७ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अतिवृद्धभक्तपुत्कर्षहृदयश्चासाविक्लेक्षणश्च स तथा अश्रु नेत्रजलम् ॥ २८ ॥

कैः साधनैरत्राह—गन्धेति ॥ २९ ॥

आमृजन् संवाहनं कुर्वन् ॥ ३० ॥

सुहृदिति यच्च तस्मात् ॥ ३१ ॥

दर्शनहेतुमाह-स्वयं च इति। भवान् "प्रियोहि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" इति यत्स्ववचस्तदृतङ्कर्तुम् अस्मदृग्गोचरोऽभूदित्यन्वयः भक्तेनापि कृतत्वेन भाव्यमिति भावेनाह—यदेति। आत्मा स्वामी अनन्तः अन्तत्रयहीनः अरजाः सात्विकः त्वमेकान्तभक्तानां प्रिय इति वदा यस्मात्तस्मात् ॥ ३२ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अथ अथापि दर्शनं गतः ॥ ३१ ॥

स्वयं च: अतएव तुभ्यं मम इति तस्मादास्तां तव साक्षाद्रूपेण सा वार्ता ॥ ३२—३४ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततस्तस्मिन् देशे राजा मुख्य इति प्रासङ्गिकत्वाच्च राजवृत्तान्तमाह—श्रोतुमप्यसतामिति। ये असतस्तेषां श्रोतुमपि दूरे एते मुनिभावापन्नाः भगवतः तादृशाः स्वगृहे समागता इति महदन्तरम् असत्त्वं तु देहाभिमानात् सर्वेषामवशिष्टम् अतः स्वगृहागतान् दृष्ट्वा स्वस्य सिंहासनसदृशानि आसनानि स्वमित्रेभ्यः समानीतवान् ततस्तेष्वासनाग्र्येषु सुखासीनान् कृत्वा कथमेतावतीं पूजां करिष्यामीति चिन्तां परित्यज्य महामनाभूत्वा तेषु या प्रवृत्ता भक्तिः तया उत्कर्षम् ऊर्द्धहर्षयुक्तं यत् हृदयं तेनास्रयुक्ते आविले अक्षिणी यस्य तादृशो जातः अनेन देहे पूजा निरूपिता ततो बाह्यद्रव्यैः पूजामाह— नत्वा तदङ्घ्रीन् प्रक्षाल्येति नत्वेति पूर्वेण सम्बध्यते तेन पूजासमाप्तिः आन्तरेण सूचिता बाह्यार्थमनुज्ञाश्च प्रार्थयते आदौ तदङ्घ्रीन् प्रक्षाल्य तदपो लोकपावनीर्गङ्गारूपत्वात् सकुटुम्बो मूर्ध्नि अवहत् ततः पूजायोग्योभूत्वा पूजाञ्चक्रे सर्वानेव ईश्वरान् नतु जीवेश्वरान् पूजासाधनानि गन्धमाल्यादीनि गोवृषैरिति शास्त्रार्थसिद्ध्येय सहि मर्यादया प्रवृत्तो नतु भक्त्या अतो यथा वाक्यमेव करोति गोनिवेदनं च मुख्यं ततो मधुरया वाचा इदमग्रे वक्ष्यमाणमाह- अन्नतर्पितानिति। भोजनताम्बूलाविश्रमशयनान्तं कृत्वा पश्चात् स्तोत्रं कृतवान् अन्नेन तृप्तिस्तदैव भवति यद्यनुद्वेजकं न भवेत् तत्ताम्बूलविश्रामशयनसहितमेव तत्रापि विशेषमाह-,पादावङ्कगताविति। विष्णोर्मुख्यत्वेन समागतस्य सर्वत्र विष्णुबुद्धिरैक्यबुद्धिश्चेति विशेषाभावात् वा करकैः संस्पर्शः अभ्यनुज्ञार्थः जाते स्पर्शे सन्तोषाविर्भावः ॥ २७—३० ॥

स हि यादृशं भावयति तादृशं वदन् भगवत्स्वज्ञापनाय षड्भिः स्तौति—भवानिति। स हि सर्वदा सर्वं भगवत्कार्यमेवेति मन्यते सर्वं च भगवद्रूपमिति तादृशस्य कथमिदानीं विशेषतो वाक्यं सम्भवति विरुद्धञ्च न वक्तव्यम् अतः पूर्वावस्थामनूद्य विशेषं बोधयति यद्यपि भगवान् सर्वरूपेणात्मरूपेण च दृष्टः तथापि भक्तिमार्गानुसारेण यादृशो भाव्यते तादृशोऽद्यैव दृष्ट इति युक्तश्चायमर्थः सर्वभूतानामात्मत्वात् सर्वं भगवानेव साक्षित्वात् आत्मासाक्षिचैतन्यं वा तत्रापि स्वदृक् स्वप्रकाशः अनेन तत्प्रकाशार्थमपि नान्यापेक्षेति निरूपितं विभो इति सम्बोधनं सर्वसामर्थ्यं सूचयति तेनास्माकं हृदयं तथा प्रतीतिजनकं नान्येषामिति सर्वं सम्पद्यते तथापि त्वत्पदाम्भोजं भक्तिमार्गेण स्मरतामद्यैव दर्शनं गतः नन्वस्य दर्शनस्य कोपयोगः न हि दर्शनार्थं चिन्तनं करोति किन्तु स्वतः पुरुषार्थत्वेनैव ॥ ३१ ॥

तत्राह—स्ववचस्तदृतं कर्त्तुमिति। तद्भगवतः प्रसिद्धं वचः ऋतं सत्यं कर्त्तुं भवानस्मदृग्गोचरः ननु किं तद्वच इति चेत्तत्राह—यदात्थेति।

न तथा मे प्रियतमः आत्मयोनिर्न शङ्करः।
नच सङ्कर्षणो न श्रीर्नैवात्मा च यथा भवान्"

इति एतद्भगवद्वाक्यम् अत्र यथा एकान्तभक्तो मम प्रिय इति वक्तव्ये दृष्टान्तार्थं यथा भवानित्युक्तवान् अत्राजशब्देनैव शङ्करोपि गृहीतः गुणावतारत्वेन तस्याप्यजत्वात् आत्मापि तत एव अत एतत्सङ्कुचते एकान्तभक्तादिति प्रियत्वं तदेव भवति यदि गत्वा दृश्यते अतः प्रियत्वान्यथानुपपत्त्या भगवान् स्वयमागत्य दृष्टवानित्यर्थः। एवं भगवद्गुणं ज्ञात्वा आत्मत्वसाक्षित्वयोरसिद्धत्वादधिकमेवं करोतीति सुगमत्वादुत्तमत्वाच्च एवंवित् को वा त्वां विसृजेत् ननु प्रायात्मभावस्य भक्त्या सर्वं सिध्यति यस्य त्वात्मभावो न जातः तस्य तदर्थं परित्याग इति चेत्तत्राह—निष्किञ्चनानां शान्तानामिति। ब्रह्मात्मभावे साधनत्रयम् आदौ निष्किञ्चनत्वं सर्वपरित्यागः तदनन्तरं शमः एवमन्तर्बहिर्विक्षेपरहितः मननं कुर्यात् ततो ब्रह्मभावः तदुक्तं निष्किञ्चनानां शान्तानां मुनीनां च त्वमात्मद इति ॥ ३२—३३ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

अस्राविलेक्षणः अश्रुक्लिन्ननयनः ॥ २८ ॥

ईश्वरः कृष्णश्च ईश्वरतुल्या मुनयश्च तान् ईश्वरान् ॥ २९-३० ॥

आत्मा चेतयिता अतो जडं मां चेतनीकृत्य कृपया स्वभक्तौ प्रवर्त्तयसीति भावः। साक्षी भद्राभद्रकर्मद्रष्टा अतो मदनुष्ठितां स्वभक्तिं स्वयमेव नित्यं पश्यसीति भावः स्वदृगिति त्वयि न कापि विज्ञापनापेक्षेति भावः अथ अत एव स्मरतामिति यदि प्रभुरेव स्वयमागत्य दर्शनं ददाति तदैव दर्शनप्राप्तिरस्माकमन्यथा तु स्वगृहे तदीयश्रीविग्रहप्रात्यहिकपरिचर्य्यां क्षणमात्रमपि त्यक्त्वा क्वापि गन्तुमशक्नुवतामस्माकं न तद्भाग्यसम्भव इति सततं चिन्तयतामित्यर्थः ॥ ३१ ॥

अनन्तो भ्रातापि श्रीः भार्य्यापि अजः पुत्रोपि द्वारकातो

को नु त्वच्चरणाम्भोजमेवंविद्विसृजेत्पुमान्।
निष्किञ्चनानां शान्तानां मुनीनां यस्त्वमात्मदः॥ ३३॥
योऽवतीर्य यदोर्वंशे नृणां संसरतामिह।
यशो वितेने तच्छान्त्यै त्रैलोक्यवृजिनापहम्॥ ३४॥
नमस्तुभ्यं भगवते कृष्णायाकुण्ठमेधसे।
नारायणाय ऋषये सुशान्तं तप ईयुषे॥ ३५॥
दिनानि कतिचिद्भूमन् गृहान्नो निवस द्विजैः।
समेतः पादरजसा पुनीहीदं निमेः कुलम्॥ ३६॥
इत्युपामन्त्रितो राज्ञा भगवाल्लोकभावनः।
उवास कुर्वन् कल्याणं मिथिलानरयोषिताम्॥ ३७॥
श्रुतदेवोऽच्युतं प्राप्तं स्वगृहाञ्जनको यथा।
नत्वा मुनीन सुसंहृष्टो धुन्वन् वासो ननर्त ह॥ ३८॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ऽतिदूरे ऽत्रान्यप्रयोजनासद्भावेपि यदागत्य स्वदर्शनमदाः अतो मम स्वस्य त्वदेकान्तभक्तत्वे यः संशय आसीत् स सञ्छिन्न इति भावः। यद्वा यस्मादेवं तस्मादस्मानपि दृग्गोचरीभूय एकान्तभक्तान् कर्त्तुमिच्छसीति भावः। एवंविदेतत्प्रकारकज्ञानवान्॥ ३२—३३॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

असतां श्रोतुमपि दूरान् दुर्लभान् अत्र हरिवत् हरिदासेष्वपि राज्ञो भक्तिं सूचयितुं बहुवचनेन हरिसहिताः हरिदासाः गृहान्ते॥ २७॥

उद्धर्षमुद्गतं हर्षं हृदयं यस्य अस्राविले अश्रुक्लिन्ने ईक्षणे नेत्रे यस्य सः॥ २८॥

ईश्वरात् उपास्यान् हरिं हरिदासांश्चेत्यर्थः॥ २९॥

हरेः प्राधान्यमाह—पादावित्यादिना॥ ३०—३३॥

भाषा टीका।

दुराचारियों को तो श्रवण करने को भी दूर रहनेवारे और निजगृह में पधारे समर्पण किए श्रेष्ठ आसनों में सुख से विराजमान श्रीकृष्ण और ऋषियों को उदार मन राजा जनक प्रणाम करे॥ २७॥

अत्यन्त बढ़ी भई भक्ति से जिस के हृदय में, हर्षउमंग आयो और आनन्द जनित आंसुन से जिस के दोनों नेत्र भरि गए एतादृश राजा जनक उन के चरणों का प्रक्षालन कर लोकन को पवित्र करने वारे उन के चरण प्रक्षालन जल को॥ २८॥

कुटुम्ब सहित, मस्तक से धारण करत, सुगन्ध पुष्प वस्त्र भूषण धूप दीप अर्घ गौ बैल इत्यादि वस्तुन का निवेदन कर श्रीकृष्ण तथा श्रीकृष्ण के तुल्य ऋषिन का पूजन करता भया॥ २९॥

भोजन से तृप्त भए श्रीकृष्ण प्रभृति ऋषिन को मधुर वाणी से प्रसन्न करत अपनी गोदी में धरे भए श्रीकृष्ण के दोनो चरणों को धीरे२ मीजत् राजा जनक मोद के साथ बोला॥ ३०॥

राजोवाच।

हे विभो! आपहि सब प्राणियों के अन्तरात्मा साक्षी स्वयं प्रकाश हो, तथापि आप के चरणारविन्द के स्मरण कर ने वारे हमारे दर्शन का आप प्राप्त भए॥ ३१॥

अनन्यप्रयोजन भक्तियुत शेष लक्ष्मी ब्रह्मा भी मोको प्यारे नाहि हैं यह जो आप कहते हो उसी वचन को सत्यकरने के लिये हमारी दृष्टि के गोचर आप भये हो॥ ३२॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तच्छान्त्यै संसारोपशमाय॥ ३४—३५॥

गृहान् गृहेष्वित्यर्थः॥ ३६—३७॥

धुन्वन् परिभ्रमयन्॥ ३८॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

नन्वेकान्तभक्तानुगामित्वमपि भवतां दुर्लभं ततस्तत्प्रशस्त्या भवतां किं सत्यं तथाऽपि तव तादृशगुण एव मादृशमात्मं जयतीत्याह—क इति युग्मकेन। एवं वक्ष्यमाणप्रकारं कं गुणं वेत्ति यः स को विसृजेत् मुक्तावमुक्तावपि त्यजेत् तत्रैकान्तभक्तविषयं कृपागुणमनुवदन् त्यागे हेतुमाह—निष्किञ्चनानां त्वदर्थे त्यक्ताशेषपरिग्रहाणां यतः शान्तानां त्वदेकनिष्ठचित्तानां तत्रैव हेतुः मुनीनां शाश्वतस्वाभ्यासवताम् आत्मदः वंदनो भवसीत्यर्थः। अहो यत्सम्बन्धेनैव सम्प्रति प्रकटीभूय, सर्वत्रैव कृपागुणाविर्गलमेव विस्तारयन्नसीति तत्राप्यतिशयमाह —य इति। य एकान्तभक्तकृपालुर्भवान् इह जगति विशेषेण पूर्वतोऽप्याधिक्येन तेने विस्तारयामास ॥ ३३—३४ ॥

अथ किञ्चिदग्रे प्रार्थयितुं प्राक् प्रणमति—नम इति। अकुण्ठमेधसे अपरिच्छिन्नज्ञानायेति किमन्यैर्वाच्यस्त्वमिति भावः। किञ्च सर्वलोकहितार्थमद्यापि बदरिकाश्रमे निजरूपेणैकेन तपोलीलामपि कर्त्रे इत्याह—नारायणायेति। अतोऽस्माकमपि हितं कर्तुमर्हस्येवेति भावः। यद्वा किञ्च नारायणाय सर्वजीवाश्रयाय यतः ऋषये वेदद्रष्ट्रे अतएव शान्ताय निर्विकाराय सुखघनाय वा तथापि लोकशिक्षार्थे तपःशास्त्रगृहिधर्ममीयुषे आचारत इत्यर्थः। सुशान्ततप इति पाठे लोकहितकारितप इत्यर्थः ॥ ३५ ॥

एवं स्तुत्वा सदैन्यं प्रार्थयते—दिनानीति। कतिचिदिति। विनयोक्तिः हे भूमन्निति यद्यपि सर्वपरिपूर्णस्त्वं तथापि कृपयैवेति भावः। तथैवाह—गृहानिति निवसेत्यत्र निवसाम्रेति क्वचित्पाठः निमेस्त्वद्भक्तस्य ॥ ३६ ॥

उप आधिक्येन आमन्त्रितः प्रार्थितः सन् ॥ ३७ ॥

जनको यथोक्त प्रवृत्तभक्त्या सोऽपि असावलक्षण इत्यतिदिशति। मुनींश्चेति मुनीनिति वा पाठः हृ हर्षे ॥ ३८ ॥

——

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

प्रजेत् सुशान्ततपः ऊर्मिषट्कातीतं ज्ञानम् ॥ ३५—४० ॥

——

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तस्मादेवम्विधं त्वच्चरणाम्भोजं पुमान् विसृजेत्किन्तु न त्यजत्येवेत्यर्थः। किञ्च यत् यस्मात् निष्किञ्चनानां नास्ति किञ्च न प्रार्थनीयं येषां तेषां शान्तानां जितान्तःकरणानां मुनीनां त्वमात्मदः—निरतिशयपुरुषार्थभूतमात्मानं ददाति स्ववशीकरोतीति तथा तस्माच्च विसृजेत् कन्विति सम्बन्धः ॥ ३३ ॥

सत्यमित्थम्भूतस्तु ईश्वरो न त्वहमित्यत आह—य इति। इह प्रकृतिमण्डले संसरतां जीवानां तद्धान्त्यै संसारिकतापत्रयोपशमनाय यदोर्वंशे अवतीर्य यखिलोकवृजिनापहत्रैलोक्यपापहरं ईदृं स्याधारणं यशोऽचिनोत्सम्पादितवान् तस्मै भगवते तुभ्यं नमः इत्यन्वयः सर्वेश्वर एव त्वं लोकोज्जिजीविषया अवतीर्ण इति भावः ॥ ३४ ॥

एवम्विधाय तुभ्यं न प्रतिकर्तुं शक्नुमः किन्तु केवलं नमस्कुर्म इत्यभिप्रेत्य नमस्करोति। नम इति। कृष्णाय लोकसुखकरायाकुण्ठमेधसे कृतश्रमाय संशान्तं शान्तिकरं लोकक्षेमावहं तप ईयुषे प्राप्तायाधिकुर्वत इतियावत् नारायणाय ऋषये नररूपेणावस्थिताय तस्मै पूर्वोक्तविधाय भगवते तुभ्यं नमः ॥ ३५ ॥

अभिप्रेतं निवेदयति—दिनानीति। हे भूमन्! द्विजैर्मुनिभिः समेतस्सहितस्त्वं नोऽस्माकं गृहे कतिचिदहनानि निवसन् पादरजसा इदं निमेः कुलं पुनीहि पवित्रीकुरु ॥ ३६ ॥

इतीति। उपामन्त्रितः प्रार्थितः लोकपावन इति हेतुगर्भम् अतो मिथिलायां पुरि नराणां योषितां च कल्याण कुर्वन् कर्तुमित्यर्थः। उवास उषितवान् ॥ ३७ ॥

श्रुतदेव इति। जनकवंश्यत्वाद्बहुलाश्वः यथा तथा श्रुतदेवोऽपि स्वगृहं [प्रति] प्राप्तमच्युतं मुनींश्च नत्वा नितरां हृष्टोऽतएव वासः उत्तरीयं विधुन्वन्नुत्क्षिपन् ननर्त हृति हर्षे ॥ ३८ ॥

——

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

एवंवित् उक्तार्थज्ञः कोनु पुरुषः त्वच्चरणाम्भोजं विसृजेत् कृतश्रमेण मुञ्चतीत्यर्थः। एकान्तभक्तप्रियोऽयं किं ददातीति तत्राह निष्किञ्चनानामिति ॥ ३३ ॥

लोकोपकारायावतारो न स्वार्थायेत्याह—य इति। तच्छ्रावं यै संसारोन्मूलनाय त्रैलोक्यस्य विकृतान् विरोधिनोपहन्तीति त्रैलोक्यविकृतापहः विकृतं दुष्कृतम् ॥ ३४ ॥

शान्तं सुखपूर्तिस्तपः ज्ञानं निर्दोषपूर्णानन्दज्ञानम् ईयुषे प्राप्तवते ॥ ३५ ॥

राजा स्वगृहनिवासाय भगवन्तं प्रार्थयते-दिनानीत्यादिना ॥ ३६ ॥

मिथिलायां विद्यमानानां नरयोषिताम् ॥ ३७ ॥

तत्र श्रुतदेवेन किन्तु कृतमत्राह—श्रुतदेव इति। स्वगृहान् प्राप्तमच्युतं मत्वा ज्ञात्वा ॥ ३८ ॥

——

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अंशरूपेणाप्याह—नारायणायेति ॥ ३९—४३ ॥

——

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

नन्वेतादृशो भगवान् नाहमित्याशङ्क्याह—योऽवतीर्य इति। स एव भगवान् सर्वेषां मोक्षार्थमत्र यदोर्वंशे अवतीर्य संसरतां नृणां संसारदुःखदर्शनेन जातकरुणः तन्निवृत्त्यर्थं यशो वितेने तस्य कथं संसारनिवर्त्तकत्वमित्याशङ्क्य स्पष्टमेव द्वारमाह—त्रैलोक्यवृजिनापहमिति। पापवशाद्बहिर्मुखतादिसर्वे दोषाः संसर्गदोषाद्वा यशस्तु सर्वेषामेव दोषनिवर्त्तकम् अतः स्पृष्टमेव तस्य संसारनिवर्त्तकत्वमित्यर्थः ॥ ३४ ॥

तृणपीठबृसीष्वेतानानीतेषूपवेश्य सः ।
स्वागतेनाभिनन्द्याङ्घ्रीन् सभार्योऽवनिजे मुदा ॥ ३९ ॥
तदम्भसा महाभाग आत्मानं सगृहान्वयम् ।
स्नापयाञ्चक्र उद्धर्षो लब्धसर्वमनोरथः ॥४० ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं जगत्कृतार्थत्वायावतीर्णः स्वकृतार्थत्वाय च समागत इति निरूप्य कर्त्तव्यान्तराभावान्नमस्यति—नमस्तुभ्यमिति । तुभ्यमित्यपरोक्षत्वाय अन्यो भगवान् भविष्यतीत्युपचारव्यावृत्त्यर्थं कृष्णायेति साक्षाद्भगवत्त्वे हेतुः अकुण्ठमेधस इति । न कुण्ठा कुण्ठिता मेधा यस्येति सर्वस्यापि भगवत्त्वे एतेनैव वैलक्षण्येन अस्य तथात्वात् सान्ततं येन रूपेण समागतस्तं निर्दिशति—नारायणाय ऋषय इति । नारायण एवायं तृतीयलीलां करोतीति स एव ऋषिः अनेन ब्रह्माण्डविग्रहो नारायणः तदंशो वेति पक्षो निराकृतः विशेषरूपनिर्वचने योत्कर्षहेतुस्तान्निर्दिशति सुशान्ततप ईयुष इति । सर्वप्राणिनां सुखजनकं स्वस्याप्यक्षोभकम् एतादृशं तपः तन्नारायण एव करोतीति ॥ ३५ ॥

एवं भगवत्स्वरूपमुक्त्वा कर्त्तव्यं च कृत्वा प्रार्थयते दिनानि कतिचिद्भूमन्निति । द्विजैरेतैः सह पादरजसा निमेः कुलं पुनीहि यद्यपि सेवा कापि नास्ति तथापि पादरजः निमिकुलसञ्चारस्थाने पतिष्यतीति कुलपावित्र्यार्थमेतदुच्यते तेन सर्व एव कुलोत्पन्नाः कृतार्था भविष्यन्तीति तद्वंशास स्वव्यभिचारेत्युक्त्यै स्थितिप्रार्थनेति सूचितम् ॥ ३६ ॥

तथैव भगवान् कृतवानित्याह—इत्युपामन्त्रित इति । तत्र हेतुः लोकभावन इति लोकानेवानुभावयति तत्र निमिकुलानुभवने कः प्रयास इत्यर्थः । भगवान् स्वयं स्थितः स्वधर्मं तत्र योजयति अनुभावः सम्पद्यते तदर्थमत्रापि स्थितः प्रयोजनान्तरमप्याह—मिथिलानरयोषितां कल्याणं कुर्वन्निति ज्ञानिनस्तेनात्यन्तमुत्सवं जानन्ति अतस्तेषामुत्सवार्थं कियत्कालं तत्र स्थितः ॥ ३७ ॥

प्रासङ्गिकं निरूप्य प्रस्तुतं निरूपयति—श्रुतदेवोऽच्युतं प्राप्तमिति नन्वहं दरिद्रः कथं भगवन्तं नयामीति न विचारितवान् किन्तु यथा जनकः तथैव जातः किञ्च अधिकोऽपि जात इत्याह—मुनीन् नत्वा मुनींश्च प्राप्तान् दृष्ट्वा वासो धुन्वन् ननर्त आनन्दात् स्वस्याप्युपकारो जात इति ननर्त आगमनेनैवान्तःपरमानन्दश्च वृतः ॥ ३८ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तच्छान्त्यै संसारोपशमाय ॥ ३४ ॥

स्वगृहे कतिचिद्दिनानि वासयितुं स्तौति अकुण्ठा मेधा यत इति तवात्र निवासेनास्माकमपि बुद्धिरकुण्ठाविषयशरैर्भेत्स्यति भावः । ऋषये नारायणायेति यथा बदरिकाश्रमे भारतभूमिभागेन वर्त्तसे तथैवात्र मिथिलाभूमंशं प्रकटयन् कियन्ति दिनानि वर्त्तस्वेति भावः । सुशान्ततपईयुषे इति द्वारका समुचितभोग्यवस्तु वर्जितेऽत्र मम गृहे वसतस्तव तपश्चरणमेव भविष्यतीति भावः ॥ ३५ ॥

समेतः सहितः ॥ ३६—३७ ॥

धुन्वन्नानन्देन वासः कराभ्यां धृत्वा स्वमूर्ध्नोपरि भ्रामयन् ॥ ३८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्य संसरणस्य शान्त्यै निराकरणाय ॥ ३४-३७ ॥
वास उत्तरीयं धुन्वन् परिभ्रामयन् ॥ ३८ ॥

### भाषा टीका ।

आप के सिवाय अन्य प्रयोजन रहित शान्ति युत मुनि जनों को जोकि आप आत्मा पर्य्यन्त देदेते हो इस प्रकार जानने वारा कौनसा पुरुष आप के चरणारविन्द को छोड सकेगा ॥ ३३ ॥

संसार में जन्म मरण आदि मनुष्यों के संसार शमन करने के लिये जोकि आप ने यदु वंश में अवतार लेकर त्रिलोकी के दुःख नाश कर ने वारे यश का विस्तार कियाहै ॥ ३४ ॥

निरवधि निर्दोष ज्ञानादि गुण सम्पन्न परमानन्द मूर्त्ति अखण्डित बुद्धि युत अत्यन्त शान्त तप करने वारे नारायण ऋषिरूप आप के अर्थ मेरा प्रणाम है ॥ ३५ ॥

हेभूमन् ! मुनि जनों के सहित आप कुछ दिन पर्य्यन्त हमारे गृहन मे निवास कीजियेगा अपने चरणारविन्द की रजसे इस निमिके कुलको पवित्र कीजियेगा ॥ ३६ ॥

इस प्रकार बहुलाश्व राजासे प्रार्थित भए श्रीकृष्ण भगवान् जनक पुर निवासी नरनारीयों के कल्याण कर ने के लिये तहां निवास करते भए ॥ ३७ ॥

निज गृहन के प्रति प्राप्त भए श्रीकृष्ण और मुनीन को राजा जनकवत् श्रुतदेव भी प्रणाम कर अत्यन्त हर्षित होकर वस्त्र को चारों तर्फ फिरावत नृत्य करता भया ॥ ३८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अवनिजे अवनिनिजे प्रक्षालितवान् ॥ ३९—४० ॥

फलार्हणोशीरशिवामृताम्बुभिर्मृदा सुरभ्या तुलसीकुशाम्बुजैः ।
आराधयामास यथोपपन्नया सपर्यया सत्त्वविवर्द्धनान्धसा ॥ ४१ ॥
स तर्कयामास कुतो ममान्वभूद्गृहान्धकूपे पतितस्य सङ्गमः ।
यः सर्वतीर्थास्पदपादरेणुभिः कृष्णेन चास्यात्मनिकेतभूसुरैः ॥ ४२ ॥
सूपविष्टान् कृतातिथ्यान्श्रुतदेव उपस्थितः ।
सभार्यस्वजनापत्य उवाचाङ्घ्र्यभिमर्शनः ॥ ४३ ॥
श्रुतदेव उवाच ।
नाद्य नो दर्शनं प्राप्तः परं परमपूरुषः ।
यर्हीदं शक्तिभिः सृष्ट्वा प्रविष्टो ह्यात्मसत्तया ॥ ४४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

फलैरामलकादिभिरर्हणेनोशीरैस्तृणविशेषमूलैः सुवासितैः शिवैस्सुतरस्वादुभिरम्बुभिः सुरभ्या मृदा कस्तूरीप्रमुखया सपर्यया पूजया यथोपपन्नया ऽनायासेन सम्पन्नया भूमानुपद्रवलब्धत्वात् सत्त्वविवर्धनं यदन्धोऽन्नं तेन च ॥ ४१ ॥

अस्य श्रीकृष्णस्याऽऽत्मा मूर्तिस्तस्य निकेतैः स्थानविशेषैर्भूसुरैश्च सर्वतीर्थास्पदपादरेणुभिः कृष्णादिभिर्यः सङ्गमः स मम कुतोऽन्वभूदिति अनु इति विस्मये यद्वा आ इति वितर्के नु इति विस्मये ॥ ४२ ॥

उपस्थितः समीप उपविष्टः भार्या भर्तव्याः स्वजना आपत्यानि च तैः सहितः श्रीकृष्णस्याङ्घ्रिमभिमृशति सम्मर्दयतीत्यङ्घ्र्यभिमर्शनः ॥ ४३ ॥

यर्हीदं प्रविष्टस्तदेव दर्शनं प्राप्त इति स एव सन्मात्रोनाद्यतनीभूतस्त्वमित्यर्थः । यद्वा नोऽस्मानद्यैव प्राप्त इति न किन्तु तदैव प्राप्तो यर्हीदं विश्वं स्वशक्तिभिः सत्त्वादिभिः सृष्ट्वा स्वसत्तयाऽनुप्रविष्टस्त्वम् त्वद्दर्शनं तु परं केवलमद्यैव प्राप्तम् ॥ ४४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एतानच्युतादीन् सर्वान् यतीनामासनं बृसिः पुंलिङ्गोपि आनीतेषु स्वस्य प्रतिवेशिनां च गृहादाहृतेषु नूतनेषु प्रेमवैवश्येन स्वयमेव चरणेषु गृहीत्वोपवेश्य ॥ ३९ ॥

तदम्भसेति श्रीकृष्णस्य चरणाम्भसा तु तदगोचरेणेत्यर्थः । महाभाग इति श्रीमुन्मुनीन्द्रस्य तस्मिन्नादरः उत्कर्षत्वे हेतुर्लभ्येति ॥ ४० ॥

तद्भाग्यविशेषेण सुप्रीतः संस्तमेव दीर्घच्छन्दसा गायन्नाह—फलेति द्वाभ्याम् फलादिभिर्या सपर्या तया आराधयामास तान् सन्तोषितवानित्यन्वयः । तत्र प्रथमतः फलानि मङ्गलोपायनानि, ततोऽर्हणान्यर्घ्यादीनि ततो धूपनार्थमुशीरेण वीरणमूलेन तथा जलमिष्टतादिसम्पादनार्थं शिवया प्रतिघटमेवैकप्रक्षिप्तया पक्वशुष्कामलकया साधितं यदमृततुल्यमम्भस्तेन अम्बुभिरिति तेषां व्याख्या तु न मूलसम्वादिनी तन्मते पाठस्तादृश एव वा ज्ञेयः ततश्च गतश्रमत्वे सति मध्याह्नस्नानाद्यर्थं मृदा मृत्तया सुरभ्या मुद्रितनवघटे केतक्यादिभिः सह चिरस्थापनेन सुष्ठु वासितया अत एव कस्तूरीप्रमुखयेति तैर्व्याख्यातं तदादितुल्ययेत्यर्थः । कस्तूरीप्रमितयेति वा तत्पाठः ततश्च देवपूजाद्यर्थं तुलस्यादिभिः ततश्चायाचितत्वादिगुणैः सत्त्वगुणस्य विवर्द्धनेनान्धसेति उपलक्षणञ्चैतत् आचमनीयादीनाम् ॥ ४१ ॥

एवं निजैकान्तिभिः सह स्वगृहागतेनापि भगवता तस्याभिमानो नाभूत् तत्कारणतयां तस्यैव कृपायाः स्फुरणात् स्वात्मनस्तु दैन्यमात्रस्येत्याह स इति अन्यत्तैः तत्रात्मा मूर्त्तिरिति मनसि सदा प्रस्फुरन्ती मनोमयी ॥ ४२ ॥

उपस्थित । उपेतः सन्नुवाच श्रीभगवन्तमधिकृत्येतिशेषः अङ्घ्र्यभिमर्शन इति मुनीनामितिशेषः ॥ ४३ ॥

अकस्माच्छ्रीभगवद्दर्शनेन सुप्रीतः स्तौति-नेति । नो दर्शनम् अस्मत्कर्तृकं दर्शनं परं केवलमद्य अस्मिन्नेव तव प्राकट्यसमयेन प्राप्तस्त्वं किं स्वात्मसत्तया परमात्मस्वरूपेण यर्हीदं सृष्ट्वाऽनुप्रविष्टस्त्वं तदारभ्यैव न प्राप्तः कदाप्यस्मद्दृष्टिगोचरो न जातस्त्वमित्यर्थः । तथाप्यकस्मात्तदिदं दर्शनं परमया त्वत्कृपयैवेति भावः । तदेवमस्य द्वारकादावपि गमनं नासीदिति गम्यते तच्च दीनं मन्यतयेति लक्ष्यते तदुक्तं स तर्कयामासेत्यत्र ॥ ४४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सत्त्वविवर्द्धनाऽन्धसा सात्त्विकविकारवता अन्धः अन्नम् ॥ ४१—४३ ॥

शक्तिभिः सर्गादिशक्तिभिरुपेतः प्रविष्टः अनुप्रविष्टः आत्मसत्तया सदैकरूपेण ॥ ४४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तृणेति । स श्रुतदेवः आनीतेषु तृणमयेषु पीठेषु आसनेषु

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

च तानुपवेश्य स्वागतप्रश्नपूर्वकमभिवन्द्य सभार्यो मुदा हर्षेण अङ्घ्रीनवनिज्ये अवनिनिज्ये प्रक्षालितवान् अभ्यासलोप आर्षः ॥३९॥

तदम्भसेति । हे महाभाग ! तदम्भसा अङ्घ्रिजलेन स्वयमेवात्मानं देहं स्वगृहांश्च स्नापयामास कथम्भूतः उद्धर्षः उत्कटो हर्षः यस्य सः लब्धः सर्वमनोरथो येन सः ॥ ४० ॥

फलेति । फलानि चार्हणानि च गन्धपुष्पधूपदीपादीनि उशीराणि सुगन्धितृणविशेषमूलानि च शिवानि निर्मलानि अमृततुल्यान्यम्बूनि च तैः सुरभ्या मृदा कस्तूर्या तुलस्या कुशैरम्बुजैश्च सत्त्वविवर्द्धनान्धसा सत्त्ववर्द्धकान्नेन आत्याश्रयनिमित्तादुष्टान्नेन चेत्यर्थः । एभिः कृत्वा यथोपपन्नया ऽनायासेन सम्पन्नया सपर्यया पूजया आराधयामास ॥ ४१ ॥

स इति । स श्रुतदेवः तर्कयामास तर्कमेव दर्शयति–कुत इति । गृहमेवान्धकूपः तस्मिन् पतितस्य मम कृष्णेन तथा अस्य कृष्णस्य आत्मनो मूर्त्तेः निकेतैः स्थानभूतैः भूसुरैश्च कथम्भूतैः सर्वतीर्थानामास्पदाम्याश्रयाः पादरेणवो येषां तथाभूतैः सह यः सङ्गमः स कुतोऽन्वभूत् अभ्यिति विस्मये ॥ ४२ ॥

सूपविष्टानिति । कृतमातिथ्यं यैस्तानुपास्थितः समीप उपविष्टः स्वगृहानापन्नं प्राप्तं भगवन्तम् अङ्घ्र्यभिमर्शनः अङ्घ्री अभिमृशन्नाह उवाच ॥ ४३ ॥

उक्तिमेवाह—सोऽद्येत्यादिना तावत् दर्शनेनात्मनः कृतार्थतामभिप्रयन्नाह—स इति । स तादृशः परः प्रकृतिपुरुषविलक्षणः अत एव परमः पर उत्कृष्टो मा यस्मात् स चासौ पुरुषस्त्वं नोऽस्माकं दर्शनं प्राप्तः कीदृशः यो मायया ऽऽत्मसङ्कल्पेनेदं जगत्सृष्ट्वा आत्मसत्तया आत्मनस्सत्ता सदैकरूपता सदैकरूपेणात्मस्वरूपेणानुप्रविष्टः ॥ ४४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तृणपीठे कटे अवनिजे प्रक्षालयामास ॥ ३९—४० ॥

सिद्धार्हणं सर्षपः उशीरं वालव्यजनं जया वा शिवा श्रेयसी अमृता प्रसिद्धा एताभिर्युक्तेन जलेन सुरभ्या सुगन्धया मृदा सत्त्वेनात्मशक्त्या विवर्धमानया ॥ ४१ ॥

सर्वतीर्थानामास्पदपादरेणुभिः आश्रयचरणरेणुभिः सह कृष्णेन अध्यात्मा परमात्मा निकेतो निलयः आश्रयो येषां ते अध्यात्मनिकेताः तैर्भूसुरैर्ब्राह्मणैश्च यः सङ्गमः स गृहान्धकूपे पतितस्य मम कुतोऽपतत् तस्मात्स्वत्पुण्यादभूदिति तर्कयामास अचिन्तयदित्यन्वयः ॥ ४२ ॥

अङ्घ्र्यभिमर्शनं पादसम्मर्दनं कुर्वन् ॥ ४३ ॥

किमाहेत्याशंक्य कृष्णनामा वेदान्तप्रतिपाद्यः साक्षात् श्रीनारायण एव न देवदत्तादिवत्क इति भावेनाह—अद्येति । यः सत्त्वादिगुणसृष्टाभिः शक्तिभिर्महदादिभिरिदं जगत् सृष्ट्वा आत्मसत्तया ब्रह्माव्यतिरिक्तेन विविधाकारेण विभजति "तत्सृष्ट्वा तदेवानुप्राविशत्" इतिश्रुतेः । स एवं परमपुरुषः श्रीकृष्णः अद्य नो दर्शनं प्राप्तो नान्य इति शेषः ॥ ४४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अकस्माच्छ्रीभगवद्दर्शनेन सुप्रीतः स्तौति । नाद्य न इति अस्मत्कर्तृकं दर्शनं परं केवलमद्यास्मिन्नेव तव प्राकट्यसमये न प्राप्तस्त्वं किं त्वध्यात्मसत्तया परमात्मस्वरूपेण यर्हीदं सृष्ट्वा प्रविष्टस्त्वं तदारभ्यैव न प्राप्तः । अस्मद्दृष्टिविषयः कदापि न जातोऽसीत्यर्थः । अहो अलभ्यलाभ इति भावः ॥ ४४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

इदं भक्तानां कार्यं शास्त्रानुसारिणां ततो यथासम्भवं पूजां कृतवानित्याह—तृणपीठवृसीष्विति । भगवदासनं सहस्रमेव मन्यते मुनीनां च सिंहासनापेक्षया तादृशान्येव प्रियाणि न हि तपोयुक्तानां ग्राम्याः पदार्थाः प्रियहेतवो भवन्ति अतः तृणपीठादिकमेव तेषां प्रियं केषाञ्चिद् तृणान्येव दत्तवान् केषाञ्चित्पीठानि केषाञ्चित् वृसी ऋषीणामासनं वृसीति कोमलकुशैः चतुरस्रं पश्चादुन्नमानपुच्छाकारं क्रियते तेषु आनीतानुपवेश्य ततः स्वागतेनाभिनन्द्य सभार्यः अङ्घ्रीन् अवनिनिज्ये ॥ ३९ ॥

राजवदुपचारं कदाचिन्न करिष्यतीति शङ्कया पुनरुक्त्या ब्राह्मणत्वात् अतः पुनराह—तदम्भसेति । स्त्रीपुत्रादिसहितमात्मानं स्नापयामास तस्य धर्मजनकत्वात् सन्तोषजनकत्वं न भविष्यतीति आशङ्क्याह—उद्धर्ष इति । उद्गतो हर्षो यस्येति फलार्थमेवं करोतीति चेत्तत्राह— लब्धसर्वमनोरथ इति चरणोदकप्राप्त्यैव सर्वे मनोरथाः प्राप्ता इति ॥ ४० ॥

ततः समाराधनमाह—फलार्हणेति । फलान्यर्हणसाधनानि तानि फलार्हणानीत्युच्यन्ते उत्तमानि फलानीत्यर्थः । उशीराणि च सुगन्धानि तत्सहितं शिवामृताम्बु पर्यन्तसामसुखदम् अमृतमिष्टं च ततो हस्तपादप्रक्षालनार्थं मृत्सुरभिः परिमलयुक्ता ततः पूजार्थं तुलसीकुशाम्बुजानि तैः यथायोग्यमाराधयामास पूजां कृतवान् यथोपपन्नया सपर्ययेति एतत् साधनमपि न क्लेशेन कृतवान् किन्त्वनायासेनैव सिद्धा सामग्री किञ्च पूजानन्तरं तादृशमन्धः अन्नं दत्तवान् येन सत्त्वगुणो वर्द्धते शिलोञ्छवृत्त्या सम्पादितमाराधनम् ॥ ४१ ॥

एवं पूजां कृत्वा दुर्लभं भगवद्दर्शनं मम कथं जातमिति मानसिकपूजार्थं तस्यालोचनमाह—स तर्कयामासेति । साधने सति साध्यं भवति गृहान्धकूपे पतितस्य मम साधनसम्पत्तिः सुवर्णशृङ्खलावत् सात्विकमपि गृहमन्धकूपप्रायमेव स्वपरासद्ग्राहात् तदेव निस्तारकं यत्रेदंबुद्धिनिवर्त्तकम् अतो गृहान्धकूपे पतितस्य कृष्णेन मुनिभिर्वा कथं सङ्गमः कृष्णस्य दुर्लभत्वं सर्वत्रादिसम्मतं मुनीनामपि तथात्वमाह—सर्वतीर्थास्पदपादरेणुभिरिति । ब्राह्मणपादरेणुषु सर्वाणि तीर्थानि वसन्तीति न केवलमेतावानेवोत्कर्षः किन्त्वस्य भगवत आत्मनः निकेतरूपाः आश्रयभूताः ये भूसुराः ब्राह्मणाः भूम

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

-देव देवभावं प्राप्ता इति फलं भगवत्स्थानसाध्यत्वेन साध्योत्कर्षः तीर्थत्वेन साधनोत्कर्षश्चेति ॥ ४२ ॥

ततो भगवन्तं स्तोतुम् उपक्रान्तवानित्याह—सुपविष्टानिति सत्त्वबोधकत्वात् अस्याग्रस्याग्रे दुःखजनकत्वाभावात् सम्यक्सुपवेशनमात्रेणैव पूजासमाप्तिः सुखिता तदेवाह—कृतातिथ्यानिति । कृतमातिथ्यं येभ्यः तानुप समीपे स्थितः सभार्यः सर्वथाप्यप्रक्षितसुस्मार्यः स्वजनाः अपत्यानि च यस्येति भार्यास्वजनापत्यसहितः ॥ ४३ ॥

ततो भगवतः अकुण्ठवमर्शनः चरणं स्पृशन् वाचा स्तोत्रं कृतवानित्याह—राजवद्यमपि बहुभिर्भगवन्तं स्तौति अद्य नो दर्शनं प्राप्त इत्यादिभिः षड्भिः । यथा राजा निरूपितवान् तथैव प्रथममयं निरूपयति दर्शनं त्वयैव प्राप्तवानसि माद्यनो दर्शनं प्राप्त इति पाठः क्वचित् अद्यैव दर्शनं प्राप्तः नोऽस्माकं किन्तु यदैवात्मसत्तया सर्वत्र प्रविष्टः तदैव सर्ववस्तुषु दर्शनं प्राप्तवान् हि युक्तश्चायमर्थः एतादृशमेव सर्वत्र त्वां पश्यामीति अथवा दर्शनं चक्षुषा अद्यैव शास्त्रतस्तु यः शक्तिभिः सृष्ट्वा आत्मसत्तया प्रविष्टः स कीदृश इति मनोरथ एव स्थितः ननु कदाचिद्दृष्टः अद्यैव परं सदृष्ट इति नन्वेकस्य सर्वत्र कथमनुप्रवेशः सम्भवति सूर्यकिरणवदनुप्रवेशो वा कथमन्योन्याननुसन्धानम् ॥ ४४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

बृसिर्दर्भासनं केषुचित् स्वगृहाभ्यन्तरात् केषुचित् प्रतिवेशिगृहादानीतेषु अवनिजे अवनिनिजे प्रक्षालयामास ॥ ३९–४० ॥

फलान्यामलकादीनि अर्हणान्यर्घ्यादीनि उशीरेण वीरणमूलेन शिवं सुगन्धं शीतं च यदमृततुल्यमम्भस्तेन यथोपपन्नया अनायासलब्धया सत्त्वविवर्द्धनं यदन्धः पवित्रमन्नं तेन ॥ ४१ ॥

स श्रुतदेवः कृष्णेन सह सङ्गमो मम कुतो हेतोरभूत् इति तर्कयामास आ इति स्मरणे नु इति विस्मये यश्च सङ्गः अस्य श्रीकृष्णस्य आत्मा मूर्त्तिस्तस्या निकेतैर्भूसुरैः सहितः ॥ ४२ ॥

सभार्य्यः भार्य्यया सहितः स्वसुता एव अमात्या यस्य स च स च सः अङ्घ्रिम् अभिमृशति सम्मर्द्दयतीति सः ॥४३ ॥

भो भो भूसुरवर्य्य श्रुतदेव ! युष्मद्दर्शनमहं केनातिभाग्येनैवाद्य प्राप्त इति वदन्तं सवैदग्धीभङ्गीकमाह—नाद्येति । भोः परमपुरुष ! नोऽस्माकं दर्शनं परं केवलं न अद्य प्राप्तः परन्तु इदं जगत् सृष्ट्वा स्वसत्तया यर्हि अनुप्रविष्टस्तदारभ्यापि वयं किल जीवास्त्वदीयचैतन्यशक्तिवृत्तयः स्वकर्मफलभोगिनस्तदारभ्य अद्यपर्य्यन्तं त्वां दृष्ट्वा एव वर्त्तामह एव किन्तु वयमेवाद्यैव त्वद्दर्शनं प्राप्ता इति भावः उत्तरालङ्कारोयं प्रश्नद्वयोन्नयनं यत्र तदुत्तरमुदाहृतमिति तल्लक्षणम् ॥ ४४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तृणमयेषु पीठेषु वृसीषु दर्भासनेषु च अवनिजे प्रक्षालयामास ॥ ३९–४० ॥

फलैरामलकदल्यादिभिः अर्हणैर्गन्धपुष्पादिभिः उशीरैस्तृणविशेषमूलैः शिवानि सुवासितान्यमृतवत्स्वादूनि यान्यम्बूनि तैश्च सत्त्वविवर्द्धनेनान्तःकरणशोधकेनान्धसा अन्नेन च कृत्वा यथोपपन्नया अनायासलब्धया सपर्यया पूजया आराधयामास ॥ ४१ ॥

कृष्णेन सदानन्देन अस्य श्रीकृष्णस्य आत्मनिकेतभूसुरैः श्रीमूर्त्तिध्यातृभूदेवैः सर्वतीर्थानामास्पदमाश्रयः पादरेणुर्येषां तैश्च समागमः मम अनु अहो कुतः अभूत् इति तर्कयामास ॥ ४२ ॥

उपस्थितः समीपे उपविष्टः अङ्घ्रिमभिमृशति सम्मर्दयतीति सः सभार्य्यः भार्यया सहितः स्वजनाः शिष्यादयः अपत्यानि यस्य स च स च सः कृतमातिथ्यं यैस्तान् कृतमर्पितमातिथ्यं येभ्यस्तानुवाच ॥ ४३ ॥

यर्हि यदा इदं विश्वं शक्तिभिश्चेतनाचेतनरूपाभिः सृष्ट्वा अनुप्रविष्टः अन्तर्यामित्वेन जीवसहचरोपि तदा नोऽस्माकं दर्शनं न प्राप्तः अस्माकं त्वदभक्तत्वादितिभावः । परं केवलमद्य प्राप्तः इदानीमस्माकं त्वद्भक्तत्वादिति भावः । "भक्तिरेवैनं दर्शयति "इतिश्रुतेः—

> "भक्त्यात्वनन्यया शक्यो ह्यहमेवम्विधोऽर्जुन ।
> ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥

इतिस्मृतेश्च ॥ ४४ ॥

---

भाषा टीका ।

प्राप्त किए तृण के आसनों पर तथा चटाईओं पर मुनिओंको विराजमान कर कुशल प्रश्न से उनको प्रसन्न कर भार्य्या सहित श्रुतदेव मोद के साथ सव ऋषियों के चरणोंका प्रक्षालन करता भया ॥ ३९ ॥

अति हर्ष युत सर्व मनोरथको प्राप्त महाभाग्य संपन्न श्रुतदेव स्त्री सहित कुटुम्ब सहित अपनेको उस चरण प्रक्षालन जल से स्नान कराता भया ॥ ४० ॥

अनेक भांति के फल गन्ध पुष्प धूप दीपादि सुगन्धि युत उशीरतृण इत्यादि वस्तुओं से सुगन्धित निर्मल अमृत वत्स्वादु जल से कस्तूरी के समान सुगन्धि मृत्तिका से तुलसी से कुशान से कमल के पुष्पन से सत्वगुणको बढायवे वारे सात्विक अन्न से परिश्रम के विना प्राप्त पूजाकी सामग्री से श्रुतदेव सवका पूजन करता भया ॥४१॥

गृह रूप अन्धकूप में पडे भए मोको श्रीकृष्ण के साथ समागम किस कारण से भया और जिनकी चरणकी रज सर्व तीर्थन का निवास एतादृश भूदेव मुनियों के साथ समागम किस कारण से भया इस प्रकार श्रुतदेव तर्कना करता भया ॥ ४२ ॥

श्रीकृष्ण चरणकी सेवा करने वारा भार्या कुटुम्ब

यथा शयानः पुरुषो मनसैवात्ममायया ।
सृष्ट्वा लोकं परं स्वाप्नमनुविश्यावभासते ॥ ४५ ॥
शृण्वतां गदतां शश्वदर्चतां त्वाऽभिवन्दताम् ।
नृणां संवदतामन्तर्हृदि भास्यमलात्मनाम् ॥ ४६ ॥
हृदिस्थोऽप्यतिदूरस्थः कर्मविक्षिप्तचेतसाम् ।
आत्मशक्तिभिरग्राह्योऽप्यन्त्युपेतगुणात्मनाम् ॥ ४७ ॥
नमोऽस्तु तेऽध्यात्मविदां परात्मने अनात्मने स्वात्मविभक्तमृत्यवे ।
सकारणाकारणलिङ्गमीयुषे स्वमायया संवृतरुद्धदृष्टये ॥ ४८ ॥

भाषा टीका ।

सन्तान सहित श्रुतदेव जिनकी पूजा करी गई है तथा सुख से विराजे भए मुनि आदि के समीप में स्थित होकर बोला ॥ ४३ ॥

सृष्टि काल में महदादि शक्तियों सें इस जगत्को उत्पन्न कर अपने निर्विकार स्वरूप से जो इस जगत् में प्रविष्ट भया है वहि चेतनाचेतन विलक्षण परम पुरुष हमको दर्शन देनेको प्राप्त भया है इस वास्ते मनुष्यावतार से जो इस काल में प्रतीत होते हो सोई आप नहिहो किन्तु साक्षात् परब्रह्म हो ॥ ४४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

मायासृष्टिप्रवेशयोरविद्यासृष्टिप्रवेशौ दृष्टान्ततयाऽऽह—यथेति । आत्ममायया स्वाविद्यया यद्वा आत्मनस्तव माययेति ॥ ४५ ॥

किञ्च, शृण्वतामिति । नित्यं श्रवणकीर्तनादिपराणाममलात्मनामपि हृद्येव त्वं भासि मम तु लोचनगोचरस्त्वमहो भाग्यमिति भावः ॥ ४६ ॥

ननु सर्वेषां हृदि स्थितः कथं केषाञ्चिदेव हृदि भासि मेघैः सूर्यवज्जीवोपाधिभिरावृतत्वादिति यद्युच्यते तर्हि न कस्यापि भायादित्यत आह—हृदिस्थोऽपीति कर्मभिर्विक्षिप्तं चेतो येषां तेषामात्मशक्तिभिरहङ्कारादिभिरग्राह्यो व्यवहितोऽप्युपेतगुणः प्राप्तश्रवणकीर्तनादिसंस्कार आत्मा अन्तःकरणं येषां तेषामन्ति समीपे अव्यवहितस्त्वमित्यर्थः ॥ ४७ ॥

एतदेव प्रपञ्चयन्नमस्यति-नमोऽस्त्विति । तुभ्यं नमोऽस्तु अध्यात्मविदां निवृत्तदेहाद्यहङ्काराणां परात्मने परमात्मत्वेन प्रकाशमानाय मोक्षप्रदायेत्यर्थः । अनात्मने देहाद्यभिमानिने जीवाय परत्वेनाप्रकाशमानत्वात् स्वात्मनः सकाशाद्विभक्तः समर्पितो मृत्युः संसारो येन तस्मै कुत एतत्तत्राऽऽह सकारणं महदादिकार्यमकारणं प्रकृतिस्तदुभयलिङ्गमुपाधिं नियम्यतया ईयुषे प्राप्तवते अत उभयनियन्तुः स्वस्मात्सकाशात्तदुभयबद्धाय जीवाय विभक्तमृत्यव इत्यर्थः । नियन्तृनियम्यत्वे कारणं वदन्नाह—हे स्वमायया संवृतेति । अतोऽलुप्तैश्वर्यत्वान्नियन्त्रे तुभ्यं नमः किञ्च रुद्धदृष्टये मायावित्वादेवान्येषां रुद्धा आवृता दृष्टिर्येन तस्मै यद्वा स्वमायया स्वस्यासंवृता अन्येषां रुद्धा दृष्टिर्येन तस्मै इत्येकं पदम् ॥ ४८ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततश्च यथाशयानः पुरुषः आत्मनस्तव मायया हेतुना मनसा कारणेन स्वाप्नं परं लोकं देहादिकं सृष्ट्वा आत्मात्मीयत्वेन कल्पयित्वा तमनुविश्याविश्य चावभासते तथा त्वमवभाससे इमेति शेषः ॥ ४५ ॥

ननु हृदि तु तवाहं स्फुरितवानेवेत्याशङ्क्य तदपि मम न सम्भवतीति सदैन्यमाह—शृण्वतामिति । एवमेवम्भूतानां सताम् अत एवामलात्मनामेव अन्तर्हृदि त्वदन्तर्मुखे मनसि भासि नतु मद्विधानामित्यर्थः । अवशब्दादित्यस्य सर्वैरप्यन्वयः । नित्यमेवेत्यर्थः ॥ ४६ ॥

नन्वन्तर्यामितया सर्वेषामेव हृदि वर्त्ते तत्किमुच्यते श्रवणादिपराणामेवावभासीति तत्राह—हृदिति । ननु सत्कर्मभिर्हृदि विशुद्धे सति तेषामपि मज्ज्ञानं सम्भवेदिति । चेन्नेत्याह—आत्मेति । तादृशोऽपि कथं भामीत्याशङ्क्य शृण्वतामित्युक्तमेव साधयति अन्तीति ॥ ४७ ॥

तस्मात्तदसम्पन्नस्य मम युष्माकं सङ्गमे . कारणं वक्तुं तव कृपयैव पर्य्यवस्यतीत्यानन्देन प्रणमंस्तस्य तादृशत्वमाह नमइति । अस्तु एवं नमस्कारस्य सर्वा सत्तामाशास्ते अध्यात्मविदां त्वत्तत्त्वज्ञानिनां परमात्मने सर्वमूलस्वरूपत्वेन स्फुरते यतः न विद्यते नराकृतिपरब्रह्मरूपेऽस्मिन्नात्माऽन्तरं यस्य तस्मै अत एव स्वेन स्वरूपभूतेनात्मना श्रीविग्रहेण अनेन विभक्तो दूरीकृतोऽन्येषामघासुरादीनामपि मृत्युर्येन तस्मै सर्वनित्यताभवायेत्यर्थः । एवं स्वरूपस्य महिमानमुक्त्वा वैभवस्याप्याह, सकारणम् अनित्यं जगद्रूपम् अकारणं नित्यं स्वलोकरूपं तदुभयमपि लिङ्गं वैभवरूपं ज्ञापकमीयुषे नियम्यत्वेन नित्यं प्राप्तवते "उतामृतत्वस्येशानः" इति श्रुतेः तर्हि कथं जगद्गतैर्भवद्भिर्दुर्लभोऽहं तत्राह स्वमायया स्वलोकसम्बन्धिनामसंवृता जगत्सम्बन्धिनान्तु रुद्धा दृष्टिर्येन तस्मै इति एवमस्माकं त्वदृष्टौ त्वत्कृपैव कारणमितिभावः ॥ ४८ ॥

———

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यथा शयानः कृतकृत्यो निर्भरः शेते तथा मायासहितश्च भवति मैतः शयानः पुरुषः दृष्टान्तः जीवस्य स्वप्नसृष्ट्यायोगात् सुषुप्तवत् स्वाप्नम् \ अनिर्म्यं कार्मजातम् ॥ ४५-४७ ॥

अध्यात्मने व्यापकान्तरशून्याय अस्वात्मविभक्तमूर्तये स्वशिल्पनिवेशितमतिषु प्राणिषु मूर्त्युं संसारं स्थापितासि सकारणम् अनुग्रहकारणं अनुग्रहहेतुकम् अकारणम् अकर्महेतुकं लिङ्गं शरीरं स्वमूर्तये संसारिणामज्ञानसम्वृतत्वान्ते तैर्दुरधिगमा इत्यर्थः ॥ ४८—५२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत्र दृष्टान्तः, यथेति । अत्र पुरुषशब्दो जीवशरीरकपरमात्मपरः जीवस्य स्वाप्नार्थस्रष्टृत्वायोगात् तदयमर्थः यथा शयानः पुरुषः पुरुशरीरकः परमात्मा मनसा स्वशरीरभूतजीवमनोरथानुसारिण्या आत्मनः स्वस्य मायया सङ्कल्पेन परं शयानदेहादन्यं स्वाप्नं सुषुप्तजीवकर्मानुगुणं तदेकानुभाव्यं तत्कालमात्रावस्थायिनं च लोकं देहमनुप्रविश्य तज्जीवमनोरथानुगुणेन सङ्कल्पेनानुप्रविश्यावभासते जीवानुभाव्यदेशान्तरगमनराज्याभिषेकशिरश्छेदनादिभिः साक्षादस्पृष्ट एव प्रकाशते जगत्सर्गतदनुप्रवेशयोः स्वाप्नसर्गतदनुप्रवेशदृष्टान्तौ उभयत्र जीवद्वारकोऽनुप्रवेशो व्याप्यगतदोषास्पर्शश्च तुल्यः ॥ ४५ ॥

ननु, मद्दर्शनं दुर्लभं किमिति मन्यसे इत्यत आह—शृण्वतामिति । शश्वत् सदा श्रवणादिकं कुर्वतामत एवामलात्मनां परिशुद्धान्तःकरणानामन्तर्हृद्येव भासि न तु चक्षुर्विषयो भवसीति ॥ ४६ ॥

हृदिस्थ इति । कर्मणा विक्षिप्तं चेतो येषां तेषां तु हृदिस्थोऽप्यतीव दूरस्थः एवं कस्याप्यचक्षुर्विषयत्वं मदूरस्थविषयोऽस्यतो दुर्लभं त्वद्दर्शनं मया लब्धमिति भावः । ननु हृदिस्थत्वमतिदूरस्थत्वं च परस्परविरुद्धं कथमिव घटते इत्यत आह—आत्मशक्तिभिरिति । उपेताः गुणाः रजस्तमस्तत्कार्यकामक्रोधमोहादयो येन स आत्मा मनो येषां तेषामन्ति समीपस्थोऽप्यात्मशक्तिभिर्देहात्माभिमानस्वतन्त्रात्माभिमानाद्यापादनद्वारा त्वद्याथात्म्यानापादकमायादिशक्तिभिर्हेतुभिरग्राह्यः एतदेवातिदूरस्थत्वमिति न विरोध इति भावः ॥ ४७ ॥

न केवलममलात्मनामन्तर्हृदि भासमान एव कर्मविक्षिप्तचेतसामग्राह्य एवापितु मोचको बन्धकश्चेति वदन्प्रणमति—नमोऽस्तु त इति । अध्यात्मविदां त्वद्याथात्म्यवेदिनां परात्मने अध्यात्मने न विद्यते गुरुस्त्वयि निवेशित आत्मा येषां तेषां स्वात्मविभक्तमूर्तये स्वात्मना स्वसङ्कल्पेन विभक्तः समर्पितः मूर्त्युर्येन तस्मै अनात्मने न इति पाठे व्यापकान्तरशून्यायेत्यर्थः । ननु बन्धमोक्षहेतुत्वं वदन् मयि किं वैषम्यमापादयसीत्यतो विशिनष्टि-सकारणेति । सकारणमनुग्रहहेतुकम् अकारणमकर्महेतुकं लिङ्गं शरीरमीयुषे प्राप्तवते सुर्वलोकाजिजीवयिषया स्वेच्छोपात्ताकर्ममूलादिक्यमङ्गलविग्रहाय अतो न वैषम्यमस्तीति भावः । तर्हि सर्वान् किं न मोचयसीत्यतो विशिनष्टि—स्वमायया सम्वृता मोहिताः येषां दृष्टा दृष्टिर्ज्ञानं यस्मिन् विषयभूते तस्मै स्वमायामोहितानां त्वद्याथात्म्यावेदिनां मुक्तिमप्रयच्छन् त्वं विषमः न भजतां कामानप्रयच्छन् सुरद्रुमो विषमः इति भावः ॥ ४८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ननु, सन् घटः सन्पटः इति सदनुविद्धतया प्रतीतेः ब्रह्मव्यतिरिक्तं जगन्नास्तीत्याशङ्क्य सदृष्टान्तं परिहरति-यथेति । यथा शयानः स्वपन् पुरुषः आत्मनः परमात्मनः मायया इच्छया प्रबोधितेन स्वप्नभोगतकरितुरगादिसंस्कारेणैव परं स्वव्यतिरिक्तं स्वाप्नं लोकं सृष्ट्वा अवरुध्य स्वविषयीकृत्वा अवभासते पृथक् प्रकाशते तथा भगवान् जगति स्थितोऽपि ततो व्यतिरिक्तमात्मानं प्रकाश्य तिष्ठतीत्यर्थः ॥ ४५ ॥

अलौकिकसिद्धवस्तुसत्तायां किं प्रमाणमिति तत्राह-शृण्वतामिति । यः स्वकथां शृण्वतां गदतां हृदि स्थ इत्यनेन श्रवणवचने प्रमाणत्वेन ज्ञातव्य इति दर्शितं शश्वद्दर्शिनामभिनम्रतां संवसताममलात्मनां नृणां नित्यं हृदि स्थ इत्यनेन प्रत्यक्षप्रमाणं दर्शितमिति ॥ ४६ ॥

नन्वेवं तर्हि कस्मान्मादृशानां तज्ज्ञानाभाव इत्याशङ्क्योपासनाभावादुपासनञ्च कर्मप्रतिबद्धमिति भावेनाह—हृदिस्थ इति । उपासकैरपि स्वप्रयत्नेन ज्ञेयः किन्तु स्वप्रसादेनैवेत्याशयेनाह आत्मेति । आत्मनां जीवानां शक्तिभिः प्रयत्नादिलक्षणाभिः अग्राह्यो न ज्ञेयः मुह्यन्ति यं सूरय इत्यादिस्वोक्तिं स्मारयति हिशब्देन देवदत्तवच्छरीरी चेत्कथमग्राह्य इत्यत्राह--अर्थाकार इति अर्थ्यत इत्यर्थः आनन्दः "ऋ गतौ" इति धातुः यद्वा अर्थशब्देन ज्ञानञ्च ज्ञानानन्ददेह इत्यर्थः । अर्थो वस्तु अप्रतिहतं तदाकार इति वा कुत एवमङ्गीकार इत्यत्राह अगुणात्मक इति सत्त्वादिगुणनिर्मितदेहवान्न भवति एवंविधस्त्वमस्माकं दर्शनं प्राप्त इति पूर्वेणान्वयः ॥ ४७ ॥

एवंविधत्वान्मम नमनमन्तरेण त्वदुपासनं दुःसाध्यमिति भावेनाह--नम इति । अध्यात्मविदां परमात्मावितस्वज्ञानिनां परमात्मने अशेषपुरुषार्थदात्रे सर्वात्मने सर्वव्यापिने स्वात्मविभक्तमूर्तये स्वात्मनेव विभक्तस्वरूपाय सकारणं जगत्कारणलिङ्गम् अकारणं कारणान्तरशून्यस्वरूपं प्रधानमेवं द्वे ईयुषे व्याप्तवते स्वमायया स्वसामर्थ्येन असंवृतदृष्टये अव्यवहितज्ञानाय ॥ ४८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ततश्च यथा शयानः पुरुषोऽवभासते तथाहमवभास इति शेषः ॥ ४५—५९ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तादृशस्य वा कथं सत्यत्वमिति शङ्काव्युदासार्थमाह यथाशयानः पुरुष इति । एकं स्वप्नमेक एव पश्यति यानपि जीवतः स्वप्ने पश्यति तेषामप्यनुसन्धानं नास्ति स्वप्नश्च मायिक इति सिद्धं ततश्च स्वप्ने यावन्तो गजतुरगादयो दृश्यन्ते तेषामपि चैतन्यान्तराभावात् द्रष्टुरेव चैतन्य

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सङ्क्रान्तमिति मन्तव्यं श्रुतौ भगवदेवानन्यमित्युक्तं प्रकृते जीवब्रह्मणोर्वैलक्षण्यं न निरूप्यत इति पदार्थनिरूपणे जीववादो वा नातिरिच्यते दोषनिरासगुणाधानभेदेन मतद्वयस्य समर्थितत्वात् अतो जीवः स्वयमेव स्वाप्नं सृष्ट्वा तत्रानुप्रविष्टः स्वात्मानमेकदेशस्थं मन्यते अन्योन्यानभिज्ञश्च भवति परमेतावान् विशेषः तद्ब्रह्मसृष्टं ज्ञानसृष्टमिति । अतो भगवान् जानाति जीवस्तु न जानातीति प्रकारस्तु तुल्य एव तदाह—यथा शयानः पुरुषः आत्ममायया सामग्र्या मनसैव करणेन इमञ्च लोकं परं सृष्ट्वा अस्माल्लोकात्परं भिन्नं स्वाप्नं ततस्तमेवानुप्रविश्य अवभासते देवतिर्यगादिरूपेण अनेनैक एव भगवान् सर्वत्र भासते परं सोऽप्येव दृष्टइति ॥ ४५ ॥

ननु दर्शनसाधनानि बहूनि श्रूयन्ते को विशेष इति चेत्तत्राह—शृण्वतां गृणतामिति । ये पञ्चविधां भक्तिं कुर्वन्ति तेषां हृदये भासते न तु बहिः ममतु बहिरपीत्याधिक्यं सम्वदतामिति स्मरणं सम्यग्वदतामिति कीर्त्तनं वा तदा गृणन् उच्चारयन् सर्वदा भगवन्नामोच्चारणं कर्त्तव्यमिति । शश्वदित्युभयत्र सम्बध्यते नाम्नि द्वयं रूपेच द्वयमिति उभयविधस्य सम्वदनं पञ्चमी तेषां हृदि अन्तः तत्रापि सूक्ष्मतया भासि ननु को विशेषः सर्वत्र वर्त्तसे तथापि तेषामेव हृदये भासीति तत्राह अमलात्मनामिति विद्यमानोपि मलिनदर्पण इव न प्रकाशसे श्रवणादीनान्तु चक्षुःसंस्कारकत्वं चित्तसंस्कारकत्वञ्च यथा केचन गुणाः दर्पणशोधकाः केचन दृष्टिशोधका इति तदुभयमत्रोक्तम् अमलात्मनामितिरूपस्य दृष्टिशोधकत्वं नाम्नोऽन्तःकरणशोधकत्वमिति निर्णयः ॥ ४६ ॥

अन्येषान्तु हृदये वर्त्तमानोपि न भाससे इति आह हृदिस्थोप्यतिदूरस्थ इति । कर्मणा विक्षिप्तं चित्तं येषां न हि जलप्रतिबिम्बो जले चलति दृश्यते यथातिदूरस्थो न दृश्यते तथा न दृश्यत इति धर्मसाम्यार्थं दूरस्थत्वम् अन्यथा दूरस्थोपि दृश्यते इति भगवद्दर्शनमुक्तं स्यात् ननु कर्मविक्षेपे को दोषः सम्पद्यते येन हृदि स्थो न दृश्यत इति चेत्तत्राह—आत्मशक्तिभिरग्राह्य इति । यद्यपि अन्तःकरणादिषु भगवच्छक्तय एव भगवद्ग्राहकाः सन्ति ताश्चेत्स्थिरा भवन्ति तदा भगवन्तं पश्यन्ति कर्मविक्षेपेतु शक्तीनामन्यत्र विनियोगाद्भगवद्दर्शनं बाधितमित्यर्थः । तदा आत्मशक्तिभिरग्राह्यो भवतीति हेतुः शुद्धानामपि कर्मविक्षेपे भगवद्दर्शनमुक्तं नन्वेवं सति जडात्मकर्मविक्षेपरहितानां भगवद्दर्शनं स्यात् इत्यत आह अभ्युपेतगुणात्मनामपीति आभिमुख्येनाभितः सर्वतो वोपेताः स्वीकृताः गुणा एव आत्मा येन भगवान् गुणाश्चेति कोटिद्वयं सम्वादिनामात्मत्वे जडो भवति जडात्मस्वीकारात् भगवत आत्मत्वग्रहणे चेतनो भवति अतो यैर्जडात्मता स्वीकृता तेषामप्यग्राह्य इत्यर्थः ॥ ४७ ॥

एवं भगवतो दुर्लभं दर्शनमिति समर्थयित्वा तस्मिन् जाते प्रत्युपकारार्थं बहुकर्त्तव्यमिति विचार्य अन्यस्याशक्यत्वात् नमस्कारमेव करोति—नमोऽस्तु त इति । कीदृशो भगवानिति नमस्करणीयनिर्द्धारमाह अध्यात्मविदां परात्मन इति । ये अध्यात्मविदः ब्रह्मात्मैकत्वं विदुः तेषामात्मज्ञानमुमुक्षूणां पर उत्कृष्ट आत्मा आत्मनामात्मेति ननु ब्रह्मविदामात्मनामात्मा चेद्भगवान् तदा भगवतोप्यन्य आत्मा स्यात् अत आह अनात्मन इति न विद्यते अन्य आत्मा यस्य एवं ये ज्ञाननिष्ठाः तेषामात्मत्वेन प्रकाशमानाभिमुखस्त्वा ये न ज्ञानिनः तेषामयमेव कालरूपेण मृत्युं प्रयच्छतीत्याह—स्वात्मविभक्तमृत्यव इति । स्वात्मन्येव ये विभक्ताः आत्मभेदं कृत्वा स्थिताः तेषां मृत्युः ब्रह्म तं परादादित्यादि श्रुतिभिः ब्रह्मक्षत्रादिरूपत्वादात्मनः आत्मघाती दण्ड्य इति तादृशस्य वधं करोतीति युक्तमेव ज्ञानिनान्तु ज्ञानोत्तरं पूर्वकृतदोषनिवृत्तिः भक्तावपि भगवत्स्मरणादिना तन्नाशः ननु भेदस्य प्रत्यक्षसिद्धत्वात् तथाङ्गीकर्त्तुः को दोष इति चेत्तत्राह सकारणाकारणलिङ्गमीयुष इति । एक एव भगवान् नित्यमनित्यञ्च जगद्रूपं शरीरं गृह्णाति कालादयो नित्याः घटादयोऽनित्या इति उभयमपि भगवच्छरीरं नन्वेवं सति कथं सर्वो न प्रतिजानीते तत्राह स्वमायया सम्वृतरुद्धदृष्टय इति । स्वमायया कृत्वा उभयशक्तिरूपया कृत्वा आत्मा सम्वृतः ज्ञानशक्तिश्च रुद्धा यथेन्द्रियं पिधत्ते घटमाच्छादयति अन्यथा आत्मप्रकाशेनैवातिपुष्टेन पिहितेपि ज्ञाने प्रकाशः स्यात् ज्ञानापिधाने वा पिहितमप्यात्मानं पश्येत् अत उभयं मायाकार्यम् ॥ ४८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भो भगवंस्त्वं स्वमनःसङ्कल्पमात्रेणैवेदं सृष्ट्वा यत्तदनुप्रविष्टस्तत्राहं जीव एव दृष्टान्त इत्यतः स्वदृष्टान्तस्य जीवस्य मम दर्शनं तवोचितमेवेति पूर्ववत् सवैदग्धीभङ्गिकमेवाह-यथेति । आत्ममायया स्वविद्यया परं लोकं ग्रामनगरादिकम् अवभासते तत्तद्दर्शनादिकमनुभवति तथैव त्वमपीत्यर्थः । तदेव सृष्टिमारभ्याद्यपर्यन्तमस्मद्दर्शनं त्वं प्राप्नोष्येव वयन्तु तामारभ्याद्यपर्य्यन्तं त्वदनुभवस्यापि गन्धमपि नैव प्राप्ताः किं त्वद्यैव त्वत्कृपया त्वद्दर्शनमपि प्राप्ता इति भावः ॥ ४५ ॥

ननु मदीयश्रवणकीर्त्तनादिमन्तो भवद्विधा मद्दर्शनं प्राप्नुवन्त्येव तत्राह—शृण्वतामिति । सम्वदतां त्वद्भक्तैः सह संलापं कुर्वतां भासि स्फुरसि किन्त्वमलः मत्सरादिमालिन्यरहितः आत्मा मनो येषां तेषामेव वयं तु मलिनात्मान एव तदपि यदिदं दर्शनमदास्तदिदं ते विचित्रं कृपाचरित्रमिति भावः ॥ ४६ ॥

किञ्चान्यदपि ते विचित्रं चरित्रं दृष्टम् अभक्तानामपि भक्तानामपि त्वं हृदि तिष्ठस्येव प्रथमैर्नानुभूयसे द्वितीयैरनुभूयस इत्याह—हृदिस्थ इति । ननु मम हृदिस्थत्वे दूरस्थत्वं कुतस्तत्राह आत्मशक्तिभिरविद्यावासितैर्मत्सराहङ्काराद्यैर्व्यवधायकैः हेतुभिरग्राह्यः उपेतगुणस्त्वमेव व्यवहितोऽपि प्राप्तत्वद्गुणाचिन्तन आत्मा अन्तःकरणं येषां तेषां भक्तानान्तु अभितः समीप एव वर्त्तसे तैरनुभूयसे इत्यर्थः ॥ ४७ ॥

उक्तमर्थं प्रपञ्चयन्नमस्यति—नम इति । अध्यात्मविदां ज्ञानभक्तानां ते परः मायातीत आत्मा श्रीविग्रहो यस्य तस्मै अन्येषां

स त्वं शाधि स्वभृत्यान्नः किं देव करवामहे ।
एतदन्तो नृणां क्लेशो यद्भवानक्षगोचरः ॥ ४९ ॥

श्रीशुक उवाच ।

तदुक्तमित्युपाकर्ण्य भगवान् प्रणतार्त्तिहा ।
गृहीत्वा पाणिना पाणिं प्रहसंस्तमुवाच ह ॥ ५० ॥

श्रीभगवानुवाच ।

ब्रह्मंस्तेऽनुग्रहार्थाय संप्राप्तान् विध्यमून् मुनीन् ।
सञ्चरन्ति मया लोकान् पुनन्तः पादरेणुभिः ॥ ५१ ॥
देवाः क्षेत्राणि तीर्थानि दर्शनस्पर्शनार्चनैः ।
शनैः पुनन्ति कालेन तदप्यर्हत्तमेक्षया ॥ ५२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

इतिनाम अनात्मने निराकाराय अन्येषामसुराणां स्वात्मना कालरूपेण विभक्तः विभज्यविभज्य दत्तो मृत्युर्येन तस्मै वस्तुतस्तु सकारणं लिङ्गं विराड्रूपां मूर्त्तिं प्राकृतीम् अकारणं लिङ्गं सच्चिदानन्दमयीं मूर्त्तिमप्राकृतीञ्च ईयुषे स्वमायया असम्वृता भक्तानामनावृता रुद्धा अभक्तानामावृता दृष्टिः येन तस्मै ॥ ४८ ॥

दृष्टिर्यस्मिन् तस्मै ॥ ४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यथा अशयानः नित्यप्रबुद्धः पुरुषः परमेश्वरो भवान् मनसैव सङ्कल्पमात्रेणैव स्वाप्नं लोकं सृष्ट्वा अनुविश्य परं श्रेष्ठं स्वभक्तजनं प्रत्येव आत्ममायया अवभासते नतु सर्वं प्रतीत्यर्थः । स्वप्नसृष्टिः परमेश्वरकृता न तु जीवकृता प्रतिकूलस्वाप्नपदार्थदर्शनानुपपत्तेः विस्तरस्त्वाकरे द्रष्टव्यः ॥ ४५ ॥

भक्तानामेव प्राप्योसि नाभक्तानामित्युक्तम् तदेव दृढीकरोति-शृण्वतामिति द्वाभ्याम् । त्वत्स्वरूपगुणादिश्रवणादिपराणामेवामलात्मनां शुद्धचित्तानां हृदि भासि ॥ ४६ ॥

कर्मभिः ऐहिकामुष्मिकसुखसाधनैर्विक्षिप्तं चेतो येषां तेषामात्मशक्तिभिः स्वसुखार्थकृततपोव्रतादिबलैरपि अग्राह्यः यतः तेषां हृदिस्थोपि अतिदूरस्थः उपेतगुणात्मनान्तु उपेतगुणः लब्धत्वत्स्वरूपगुणादिश्रवणादिसंस्कारः आत्मा मनो येषां तेषाम् अतिदूरस्थोपि अतिसमीपे एवासि ॥ ४७ ॥

तदेव प्रतिपादयन्नमस्यति—नमोऽस्त्विति । ते तुभ्यं नमोऽस्तु अध्यात्मविदामात्मपरमात्मयाथात्म्यवेदिनां परात्मने प्राप्यस्वरूपाय अनात्मने अनीश्वराय स्वविमुखाय जीवाय स्वात्मना स्वसङ्कल्पेन विभक्तो मृत्युः पुनः पुनर्जन्ममरणप्रवाहो येन तस्मै कारणेन भक्तानुग्रहेतरनिग्रहलक्षणेन सहितं सकारणम् अकारणं कर्मकालाद्युत्पादकशून्यम् ईदृशं लिङ्गमप्राकृतं शरीरमीयुषे प्राप्तवते स्वमायया सम्वृतात्मने अनादिभगवान्मायावृतानां रुद्धा

---

भाषा टीका ।

जैसे सोने वारे जीव के अन्तर्य्यामी परम पुरुष उस-जीव के मनोरथानुगुण अपने सङ्कल्प से जाग्रत् शरीर से भिन्न स्वप्न काल के शरीर की सृष्टि कर' उस में जीव के मनोरथानुसारा सङ्कल्प से प्रवेश कर निर्विकार होकर प्रकाश करता है ॥ ४५ ॥

निरन्तर आपका श्रवण करने वारे कीर्तन करने वारे प्रणाम करने वारे संवाद करने वारे निर्मलमन वारे मनुष्यों के हृदय के भीतरहि आप प्रकाश करते हो वाहिर नहि परन्तु मेरे तो नेत्रों के गोचर आप होरहे हो मेरा धन्य भाग्य है ॥ ४६ ॥

कर्म से विक्षिप्त चित्त वारों के हृदय में आप स्थित भी हो, तथापि आप उन के दूर हि स्थित रहते हो, इसी से माया के गुण सम्पन्न मन वारों के समीप मेंभी आप स्थित हो तथा पि अज्ञान सम्पादक माया की शक्तियों से आप गृहीत नहि होते ॥ ४७ ॥

याथात्म्यतत्त्वके ज्ञाताओं के परम पुरुषार्थ आत्मस्वरूप अपना अन्य आत्मारहित अपने सङ्कल्पसे प्राणियों को मृत्युका विभागकरने वारे पुण्यपापकर्म के विना केवल अनुग्रह से अप्राकृतशरीर को प्राप्त होने वारे निजमाया से मोहित प्राणियों को ज्ञान जिसमें रुकरहा है एतादृश आप के अर्थ मेरा प्रणाम होय ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

स एवम्भूतः परमेश्वरस्त्वं नोऽस्मान् स्वभृत्यान् शाध्यनुशिक्षय ॥ ४९—५० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

त्वस्मिन्नादरमित्यधिकं ब्राह्मणेषु मन्दमिवाऽऽलक्ष्य लोकसङ्ग्रहपरो भगवान् मत्तोऽपि ब्राह्मणेषु श्रद्धातिरेकं कुर्वित्येवं तमनुशास्ति ब्रह्मन्निति सप्तभिः मया हृदि स्थितेन ॥ ५१ ॥

देवादिभ्योऽपि ब्राह्मणाः श्रेष्ठा इत्याह–देवा इति । ते शनैः पुनन्ति एते तु सद्यः किञ्च देवादीनि यत्पुनन्ति तदप्यर्हत्तमानामीक्षया ॥ ५२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

शाधीत्यत्र हेतुः--स्वभृत्यानिति । नच नाम्यत्किमपि किन्तु त्वत्प्रीतिकरमेवेत्याशयेनाह–किमिति । ते त्वत्प्रीत्यर्थमित्यर्थः । तत्रैव हेतुः हे देवेति भृत्यैः निजेष्टदेवप्रीणनस्यावश्यकत्वादिति भावः । ननु, संसारक्लेशाभिमानिनः कथं ममानुशासनकर्तृत्वं सम्यक् स्यात्तत्राह— एतदिति । स तु मम त्वद्दर्शनानुषङ्गेणैवापगतः सम्प्रति त्वदनुशासनकर्तृत्वलक्षण एव पुरुषार्थो ममावशिष्ट इति भावः ॥ ४९ ॥

इत्येतत् उप आधिक्येन सावधानत्वेनाकर्ण्य प्रहर्षेण प्रकृष्टं हसन्नुवाच यतः प्रणतानां भक्तानां किं वा सकृत्कृतप्रणामानामपि आर्त्तिहा अत एव गृहीत्वेति ह हर्षे ॥ ५० ॥

स्वस्मिन्नेव स्तुत्यतिशयेन सतां चूडामणित्वात् सङ्कुचंस्तथाभक्तवात्सल्यभरेणात्मभक्तेरपि स्वभक्तभक्तिं बहुमन्यमानस्तत्प्रार्थितसिद्ध्युपायमेव शिक्षयन्नाह— ब्रह्मन्निति । साक्षाद्वेदरूपत्वेन त्वयैतज्ज्ञाय एवेति भावः । ते त्वय्यनुग्रह एवार्थः प्रयोजनं त्वदर्थमेव सम्यक् मत्साहित्यादिना प्राप्तान् स्वयमागतान् विद्धि ननु त्वमेव साक्षादागतोऽसि मुनिभिः किमाश्रित्य कथं तत्राह मयेति हृदिस्थेन कश्चित्साक्षाद्भूतेन च सह "सह*योगेऽप्रधाने" [ २—३—१९ ] इति पाणिनिस्मरणादहमप्येषामधीन इति भावः ॥ ५१ ॥

देवादयस्तु न तादृशास्तादृग्वैभवाश्चेत्याह—देवाः प्रतिमारूपाः साक्षाद्रूपा एव वा क्षेत्राणि स्थलरूपाणि तीर्थानि जलरूपाणि शनैः पुनन्ति तत्रापि कालेन चिरेणैव एते तु पुनन्त एव सञ्चरन्तीत्युक्तं देवादीनां पुनानत्वमप्यर्हत्तमानां तेभ्योऽपि पूज्यानामेतादृशमद्भक्तानामीक्षया देवादित्वसम्पादिन्या दृष्ट्यैव मूलहेतुनेत्यर्थः । ममापि तदधीनत्वादिति भावः ॥ ५२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं प्रणम्य तत्कैङ्कर्यं प्रार्थयते-स त्वमिति । स उक्तविधस्त्वं स्वभृत्यानस्मान् शाधि हे देव ! ते तव किङ्करवाम किञ्चिदिष्टं करवामेति प्रार्थनायां लोट् ननु मुक्तिमयाचित्वा कैङ्कर्यमेव किमिति प्रार्थयस इत्यत आह—एतदिति । नृणां क्लेशमात्रपर्यवसानः एतदन्तः एतदन्तोऽवधिर्यस्य तथाभूतः किं तत् यद्भवानक्षिगोचर इत्येतत् ॥ ४९ ॥

तदुक्तमिति । इतीत्थं तदुक्तं श्रुतदेवोक्तम् उपाकर्ण्य प्रणतार्तिहा आश्रितार्तिहरः ॥ ५० ॥

उक्तिमेवाह—ब्रह्मन्नित्यादिभिः सप्तभिः । इत्थं स्वाभ्यभीष्टकरणानुरूपकैङ्कर्यं प्रार्थयमानं श्रुतदेवं प्रति मद्भक्तानामाराधनमेव निरतिशयं मत्कैङ्कर्यमिति वक्तुं तावद्भक्तान्प्रशंसति ब्रह्मन्निति षड्भिः । मया हृदिस्थेन सह पादरेणुभिर्लोकान्पुनन्तः पावनीकुर्वन्तः सञ्चरन्ति ॥ ५१ ॥

ननु, देवादयोपि पुनन्त्येवेति किं विशेषेणैत एव पुनन्ति इत्यत आह—देवा इति । देवाः भगवत्प्रतिमाः क्षेत्राण्ययोध्यामथुरादीनि तीर्थानि गङ्गादीनि चिरकालेन दीर्घकालेन पुनन्ति किञ्च देवादीनि यत्पुनन्तीति तदप्यर्हत्तमानामीक्षणान्मद्भक्तकर्तृकेक्षाप्रयुक्तमाहात्म्यादित्यर्थः ॥ ५२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यद्यदा भवानक्षगोचरः स्यात् एतदन्तोऽयमवधिर्यस्य स तथा नृणां क्लेशः परिश्रमः ॥ ४९—५० ॥

ब्रह्मन् तपस्विन् ! ॥ ५१ ॥

देवादिभ्यो यच्छुद्धत्वं तदर्हत्तमानां पूज्यानां ब्राह्मणादीनामीक्षया दर्शनेन अपिशब्दोऽवधारणार्थः ॥ ५२—५३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भगवत्स्वरूपमुक्त्वा नमस्कृत्य तादृशं प्रार्थयते स त्वं शाधीति । स्वभृत्यानित्याज्ञापनावश्यकत्वं शास्त्रद्वाराकर्तव्यमुपदिष्टमिति चेत्तत्राह किं देव करवाम त इति तुभ्यं किं करवाम शास्त्रे तु स्वार्थं निरूपितं ननु स्वार्थमेव क्रियतां किं मदर्थनेत्याशङ्क्याह एतदन्तो नृणां क्लेश इति एतादृशदर्शनान्त एव प्राणिनां दुःखानुभवः नहि; प्रसन्ने भगवति दृष्टे कस्यचिद्दुःखं सम्भवति अतः स्वार्थं नापेक्ष्यत इति दासत्वात् स्वामिकार्यमेव कर्तव्यम् । अत आज्ञापयेत्यर्थः ॥ ४९ ॥

भगवांस्तु तस्येच्छालक्षणदुःखदूरीकरणार्थं स्वस्य सेवां निरूपयतीत्याह—तदुक्तमिति । गृहीत्वा पाणिना पाणिर्मत्स्वतुल्यता निरूपिता ततो यत् स्वकर्तव्यं तदेवोपदेक्ष्यति न सेवककर्तव्यमिति लक्ष्यते प्रहसन्निति कृतकृत्यत्वात् न तव किञ्चित् कर्तव्यं येनैतादृशं जातं कर्तव्यं चेत्तदेव कर्तव्यम् इदञ्च फलं तथापि यत्पृच्छति तदा यथा मया लोकसङ्ग्रहार्थं क्रियते व्यामोहार्थं वा तथायमपि करोत्विति भावः । इत्याश्चर्यं एतादृशमपि भगवान् स्वसेवायां न प्रेरयतीति स्वसेवाया दुर्लभत्वं द्योतितम् ॥ ५० ॥

अत्र भगवानिति मन्यते भगता ब्राह्मणाः तांश्चायमात्मतुल्यान्मत्वा तथा न मन्यते तदा समागतानां क्षोभो भवेत् समाश्रवत्विति तेषां सम्बोधयति समता तु स्वस्मिन्नेव स्थापिता अतोहं परं तथा न पूजनीयः किन्त्वेत एव पूजनीया इत्युपदिशति ब्रह्मंस्तेऽनुग्रहार्थायेति सप्तभिः । यावान् धर्मः स्वस्य सर्वश्रुतिप्रतिपाद्यः तावान् ब्राह्मणेषु निरूप्यते

* युक्ते ।

ब्राह्मणो जन्मना श्रेयान् सर्वेषां प्राणिनामिह ।
तपसा विद्यया तुष्ट्या किमु मत्कलया युतः ॥ ५३ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तद्रूपोऽपि भगवान् इतीतिवैरूप्यं न बाधितविषयं इमान् मुनीन् तेऽनुग्रहार्थाय समागतान् विद्धि ननु प्रसङ्गात् अन्यार्थे ते वा समागताः ननूभयोः समागमनं प्राधान्येन कथमेकस्मिन् कार्ये सम्भवतीति चेत्तत्राह—सञ्चरन्ति मया लोकानिति। मया सह एते लोकान् सञ्चरन्ति तेन सहभावो मम प्राधान्यमेतेषामेवेति निरुक्तम् एषां पावनप्रकारमाह—पादरेणुभिरिति ॥ ५१ ॥

ननु अन्यान्यपि लोके पावनानि सन्ति कथमेतेषामेवानुग्रह इति चेत्तत्राह—देवाः क्षेत्राणीति । देवाः क्षेत्राणि तीर्थानि च त्रयो लोके पावनहेतवः कालस्याप्येतच्छुद्धेनैव पावनजनकत्वं आनान्त एव सूतकादपि शुद्धेः द्रव्याणां चैव एवान्तर्भावः कर्तारस्तु प्रकृताः मन्त्रकर्मणोरपि देवतास्वन्तर्भावः तादर्थ्यात् एवं शुद्धिहेतूनां त्रयाणामपि अत्रैवान्तर्भावात् तत्र य एव निरुक्ताः तद्दर्शनस्पर्शनादिभिः पुनन्ति दर्शनं सर्वेषां दर्शनस्पर्शने तीर्थस्य त्रितयं देवतायाः एवमप्येते शनैरेव पुनन्ति तत्र हेतुः कालेनेति। कालो हि पृथक् शुद्धिहेतुः अन्यथा दशाहादर्वागपि तीर्थस्नानादिना पुरुषः शुद्धो भवेत् तस्मात् यावता कालेन शुद्धिर्भवति तावत्कालेनैव तीर्थादिना शुद्धो भवति ब्राह्मणस्तु सद्यश्शुद्धिहेतवः तेषां वाक्यात् अत्यन्तनिकृष्टमपि शुद्धं भवति। आकरस्थं सदाशुचि ब्रह्मपकं न दुष्यति प्रयतेन शूद्रेणाप्याहृतं भोज्यम् इत्यादिवाक्यानि निर्विचिकित्सं सर्वेषां शुद्धिप्रतिपादकानि तस्मात् क्षेत्रादिभ्यो ब्राह्मणाः श्रेष्ठाः किञ्च तदपि तीर्थादिकृतमपि अर्हत्तमस्येच्छया दृष्ट्यैव भवति सर्वत्र ब्रह्मदृष्टं समं भवेत्—

"अभ्यनुज्ञाविहीनं हि ब्राह्मणानां विशेषतः ।
सर्वं निष्फलतां याति व्रतदानार्चनादिकम् ॥

इति ॥ ५२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

शाधि अनुशिक्षय ॥ ४९ ॥

पाणिना पाणिं गृहीत्वेति सवैदग्ध्यतद्वचःश्रवणेन तं स्वसख्यरसे निमज्जयितुमिच्छि भावः। प्रहसन्निति मत्तत्त्वं त्वया अवगतमेव तव तत्त्वमप्यवगच्छता मया त्वं किमुप्युपदेश्योऽसीति भावः ॥ ५० ॥

स्वस्तुतिमाकर्ण्य स्वसङ्गिनां विप्राणां स्तुतिं स्वनाकर्ण्य ब्रह्मण्यदेवो ब्राह्मणभक्त्युपदेशमिषेण स्वयमेव ब्राह्मणान् स्तुवन् तव स्तव्यस्यापि मम ब्राह्मणा स्तव्या इत्यभिव्यञ्जयति ब्रह्मन् हे ब्राह्मण ! स्वस्य ब्राह्मणत्वादेव स्वजातिषु तव नात्या-



दर इति भावः ॥ ५१ ॥

किञ्च देवादिभ्योऽपि ब्राह्मणाः श्रेष्ठा इत्याह—देवा इति। ते शनैः पुनन्ति एते तु सद्य एव तदपि तत्पुनानत्वमपि अर्हत्तमानामीक्षया अर्हत्तमकर्तृकावलोकनं यदि ते प्राप्नुवन्ति तदैव यदुक्तं "तेषां विचरतां पद्भ्यां तीर्थानां पावनेच्छया" इति ॥ ५२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स एवम्भूतस्त्वं नोऽस्मान् शाधि अनुशिक्षय हे देव ! ते तुभ्यं किं कैङ्कर्यं करवाम प्रार्थनायां लोट् ॥ ४९—५० ॥

एवं प्रार्थयमानं तं भक्तेषु विप्रेषु अधिकां प्रीतिं कुर्वित्येतदेव मम कैङ्कर्यमित्यनुशास्ति ब्रह्मन्निति सप्तभिः ॥ ५१ ॥

देवादयः दर्शनादिभिस्तत्रापि शनैः कालेन महता पुनन्ति किञ्च यत्पुनन्ति तदपि अर्हत्तमानां भागवतानामीक्षयैव अर्हत्तमास्तु शीघ्रं पुनन्तीतिभावः ॥ ५२ ॥

---

### भाषा टीका ।

सो आप हम निज दासन को आज्ञा कीजियेगा जब आप नेत्रों के गोचर होते हो, इतने पर्य्यन्तहि मनुष्यों को क्लेश रहता है, अर्थात् जहां तक आप का दर्शन नहि होता तहां तकहि मनुष्यों को क्लेश रहता है ॥ ४९ ॥

#### श्रीशुक उवाच ।

इस प्रकार श्रुतदेव के कहे वचन को सुनकर शरणागत जनों की आर्त्ति के हरने वारे श्रीकृष्ण भगवान् निज हस्त से उस के हस्त को गृहण कर हंसते हुए उसके प्रति बोले ॥ ५० ॥

#### श्रीभगवानुवाच ।

हे ब्रह्मन् ! आप के उपर अनुग्रह के लीये ए मुनिजन, यहाँ पधारे हैं ऐसा आप इन को जानो, मै इन के हृदय में स्थित हुं इस कारण चरणको रेणु ओर्स लोकन को पवित्र करत् ए मुनिजन विचरते हैं ॥ ५१ ॥

प्रतिमारूप देवता, अयोध्या मथुरादि पुण्य क्षेत्र गङ्गा आदि तीर्थ ए सब दर्शन स्नान अर्चन करने से बहुत काल में धीरे२ पवित्र करते हैं वह पवित्र करना भी महत्पुरुषों के दर्शन सेहि होते हैं ॥ ५२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

मम कला परिकलनमुपास्तिस्तया युतः ॥ ५३ ॥

न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम् ।
सर्ववेदमयो विप्रः सर्वदेवमयो ह्यहम् ॥ ५४ ॥
दुष्प्रज्ञा अविदित्वैवमवजानन्त्यसूयवः ।
गुरुं मां विप्रमात्मानमर्चादाविज्यदृष्टयः ॥ ५५ ॥
चराचरमिदं विश्वं भावा ये चास्य हेतवः ।
मद्रूपाणीति चेतस्या धत्ते विप्रो मदीक्षया ॥ ५६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

किञ्च ब्राह्मणाराधनमेव मम प्रेष्ठमित्याह—नेति, हेतुमाह सर्ववेदमयो विप्र इति । प्रमाणाधीनत्वात्प्रमेयस्य वेदमयो विप्रो देवमयादस्माद्रूपात्प्रेष्ठ इत्यर्थः ॥ ५४ ॥

असूयवो दोषदृष्टयः इज्यदृष्टयः पूज्यबुद्धयः ॥ ५५ ॥

अस्य विश्वस्य हेतवो भावा महदादयः मदीक्षया ममेव सर्वत्रेक्षया ॥ ५६—५८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तेषां तादृशत्वमेव कैमुत्येन स्थापयति—जन्मनेति । जन्मना जातिमात्रेणैव तत्र च तप आदिना श्रेयानिति स्थिते तत्रापि मत्कलया श्रेयानिति किं वक्तव्यमित्यर्थः । तपः स्वधर्मः विद्या शास्त्रीयज्ञानं तुष्टिरात्मारामत्वं मत्कला मत्स्फूर्त्तिः एषां यथोत्तरं श्रैष्ठ्यम् ॥ ५३ ॥

अत एवम्भूताद्ब्राह्मणात् ममैतद्भवतां दृश्यमानं श्रीकृष्णाख्यमपि चतुर्भुजं रूपं न प्रियं तत्र हेतुः सर्वेति तत्र सर्ववेदमयत्वं तदुक्तसर्वज्ञानाश्रयत्वं सर्वदेवमयत्वं च तज्ज्ञेयसर्वोपास्यमूलत्वं ततस्तेषां विषयित्वं स्वस्य च विषयत्वं निर्दिश्य विषयिणं विना विषयस्यानुपादेयत्वमिति लौकिकाभाणकेनैव स्वभक्तमहिमा साधितः तथैव नवमे वैकुण्ठनाथवाक्यं "नाहमात्मानमाशासे" इत्यादि ॥ ५४ ॥

एवमविदित्वा अर्चादाविज्यदृष्टयः सन्तो विप्रं जात्यादिनैव पूज्यं तत्रापि गुरुं महाभागवतत्वात् सर्वोपदेष्टारम् अत एव मां मदीयपरमाधिष्ठानत्वान्मदभिन्नम् अत एवात्मानं परमात्मरूपमवजानन्ति यतो दुष्प्रज्ञा दुष्टबुद्धयः अत एवासूयवः मानुषत्वादिस्वसाम्यदृष्ट्या तद्गुणासहिष्णवः ॥ ५५ ॥

अथ तादृशस्य महाभागवतत्वमेव दर्शयन्नात्माभेदव्यपदेशहेतुं दर्शयति—चरेति । मम रूपाणि रूप्यन्ते यत्रेति निरुक्त्या अधिष्ठानानि इति चेतसि धा सम्यक् धत्ते धारयति तत्र हेतुः मदीक्षयेति तत्र तत्र मदेकस्फुरणादित्यर्थः । एकादशे—

"सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः ।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः" ॥ इति

आत्मनोऽभीष्टो यो भगवद्भावस्तत्प्रादुर्भावविशेषस्तमेव यः सर्वभूतेषु पश्यति एवमात्मनि स्फुरन् यो भगवान् तदाश्रयत्वेन च भूतानि पश्यति यः स भागवतोत्तम इत्यर्थः श्रीभगवद्गीतासु—

"मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेपि यान्ति परां गतिम् ॥
किम्पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा" ।

इति ॥ ५६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मत्कलया मद्विषयज्ञानेन ॥ ५३—५९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मद्भक्तात् श्रेष्ठो नास्तीत्याह—ब्राह्मण इति । सर्वेषां प्राणिनां मध्ये इह श्रेष्ठेषु नरेषु ब्राह्मणो जन्मतः श्रेयान् ब्राह्मणेष्वपि तपसा युतः युक्तः श्रेयान् ततोऽपि विद्यया वेदान्तविद्यया युतः ततोऽपि तुष्ट्याऽनायासेन यत्किञ्चित्प्राप्तसन्तोषेण युतः श्रेयान् मत्कलया कला विद्या ( मम ) मदुपासनेतियावत्तया युतस्तु श्रेयान् इति किमुवक्तव्यमित्यर्थः ॥ ५३ ॥

किम्बहुनेत्याह—नैतदिति । एतद्द्विभुजं चतुर्भुजं वा मम रूपं ब्राह्मणात् मत्कलया युतान्न दयितं न प्रियं तत्र हेतुः सर्वेति ब्राह्मणाधीनत्वात्प्रमेयसिद्धेः प्रमाणभूताद्वेदप्रचुराद्विप्रादेवमयं वपुर्न मे दयिततमित्यर्थः ॥ ५४ ॥

एवं कश्चित्त्वद्भक्तान् कुतो वा ऽवमन्यन्ते कुतो वा देवादीन् भजन्ते इत्यत आह—दुष्प्रज्ञा इति । एवमित्थम्भूतान्मद्भक्तानविदित्वा तत्र हेतुः दुष्प्रज्ञाः दुरहङ्काराः देहात्माभिमानिन इति यावत् । अतएवासूयवः सत्स्वपि गुणेषु दोषाविष्करणैकशीलाः अत एवार्चादाविज्यदृष्टयः पूज्यताबुद्धिमन्तो मां मदात्मकं गुरुमात्मानं विप्रं "ज्ञानी त्वात्मैव मे मतम्" इत्युक्तविधं ज्ञानिनं विप्रं चावजानन्ति ॥ ५५ ॥

ज्ञानिनो दृष्टिस्त्वन्यादृशी चेत्याह—चराचरमिति । चराचरात्मकमिदं विश्वम् हेतवो ये भावाः पदार्थाः विश्वं तथा अस्य महदादयः तान्येतानि सर्वाणि विप्रो मदीक्षया "मद्विषयकज्ञानेन मदात्मकत्वबुद्ध्येत्यर्थः । धत्ते विषयीकरोति ५६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ब्राह्मणभक्तिजननार्थम् अर्थवादमाह—न ब्राह्मणादिति । ब्राह्मणस्योत्तमत्वे हेतुमाह—सर्वेति । एवमप्यावयोर्विशेषोऽस्तीति हिशब्देनाह ॥ ५४ ॥

असूयवः गुणेषु दोषाविष्करणशीलाः दुष्प्रज्ञा एवं गुरुं विप्रं मत्सन्निधानपात्रम् अविज्ञाय अवजानन्ति आत्मानं माम् अर्चादौ अवजानन्ति कथम् अर्चैव हरिरिति बुद्धयः ॥ ५५ ॥

ब्राह्मणपूजया सर्वमपि पूजितं स्यादिति भावेनाह—चराचरमिति । इदं चराचरं विश्वं भावये कल्पये ब्राह्मणीति शेषः । अस्य ब्राह्मणस्य दैवतमहमिति शेषः । विप्रस्य सर्ववेदमयत्वमुक्तं स्पष्टयति । मद्रूपाणीति विप्रो मदीक्षया मत्प्रतिपादकत्वज्ञानेन एतस्यां सर्वे वेदा यत्पादमामनन्ति इत्यादिश्रुत्या वायुना वै गौतमसूत्रेणायं च लोकः सर्वाणि च भूतानि सन्दब्धानि भवन्तीति श्रुतिसिद्धैरेभिश्चराचरैः सहमद्रूपाणि धत्ते ॥ ५६ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु ब्राह्मणस्योत्कर्षहेतुर्यः स चेदन्यत्रापि भवेत् किं ब्राह्मणेनेत्याशङ्क्याह—ब्राह्मणो जन्मना श्रेयानिति । उत्पन्न एव ब्राह्मणः सर्वेभ्यो वर्णेभ्योऽतिरिच्यते सर्वेषां प्राणिनां पूज्यो भवति तत्रापि तपसा विद्यया तुष्ट इति तुष्ट्या एवं त्रिभिरेव महत्त्वं सिद्ध्यति तपसा देहमाहात्म्यं विद्यया चेन्द्रियाणां तुष्ट्यात्वन्तःकरणस्येति अनेन गुणत्रयमपगच्छति सर्वोत्कृष्टमपरं हेतुमाह किमुमत्कलयेति मत्कला भगवदीयत्वं भक्तिर्वा तद्युक्तः श्रेयान् भवति इति किं वक्तव्यमित्यर्थः ॥ ५३ ॥

ननु, तथापि त्वत्सेवकाः त्वामेव भजन्ते उत्कर्षापकर्षं न मन्यन्ते यथा स्त्री स्वपतिमेवोत्कृष्टमपकृष्टं मन्यते नान्यं महान्तमपि तस्मात्कथं ब्राह्मणा भक्तानां सेव्या इति चेत्तत्राह—न ब्राह्मणान्मे दयितमिति । मत्सेवकैर्मद्धितं कर्तव्यं मम तु प्रीतिः स्वस्माद्ब्राह्मण एवाधिका तत्र हेतु सर्वदेवमयो विष्णुः सर्वदेवमयो विप्र इति सर्वे वेदा ब्राह्मणे तिष्ठन्ति देवास्तु मयि प्रमेयाच्च प्रमाणमधिकं मानाधीना मेयसिद्धिरिति अनेनान्यद्द्वयमपि ज्ञापितं प्रमेयबलं मया क क प्रकटीकर्तव्यम् अतः प्रमाणभूता एत इत्येतदनुरोधः क्रियत इति युक्तश्चायमर्थः ॥ ५४ ॥

ये तु पुनर्ब्राह्मणातिक्रमं कृत्वा गुरूपदेशं विनैव स्वतः पूजां कर्तुं वाञ्छन्ति ते ऽतिदुर्बुद्धय इत्याह—दुष्प्रज्ञा इति एवं महाभिप्रायं सिद्धान्तं चाविदित्वा ब्राह्मणवाक्येष्वसूयां कृत्वा, तानवजानन्ति तत्रापि मुख्यो गुरुः तदवज्ञानेन पूजा फलति यतः सोऽहमेव अहं च पूजकस्यात्मा स्वरूपं तेनात्मैवावज्ञात इति स्वार्थत्वात् सर्वस्य कः तत्कर्त्तारः इत्यमी अभ्येयुः अर्चादौ अर्चातीर्थक्षेत्रादिषु इज्यदृष्टयः पूज्यदृशः व्यवस्थैवार्चादिषु पूजा कर्तव्या न त्वन्यत्रस्थेति भावः ज्ञानालङ्करणं प्रेममर्यादायामेवेति व्यवस्था ॥ ५५ ॥

ननु तथापि भगवत्साक्षिध्यलक्षणो गुणः अर्चादावेव वर्तते इति जीवान्तरसम्बन्धेनाभिमानश्च नास्तीति दोषाभावसहितगुणस्य विद्यमानत्वादर्चैव ब्राह्मणादुत्कृष्टेति चेत् तत्राह—चराचरमिति । ब्राह्मणे सर्वमस्ति स हि स्वात्मनि सर्वं विश्वं ज्ञानेन मन्यते "मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितं मयि सर्वं लयं याति तद्ब्रह्माद्वयमव्ययम् अणोरणीयानहमेव विष्णुः" इत्यादिश्रुतेः "यावतीर्वै देवतास्ताः सर्वाः वेदविदि ब्राह्मणे वसन्ति" इति च तदाह इदं चराचरं विश्वम् अस्य च मूलभूताः ये भावाः एतत्कार्याणि वा येऽवास्य हेतवः कारणभूतानि तस्याप्येतानि सर्वाण्येव भगवद्रूपाणि इति चेतसि विप्रः आधत्ते अत एव विप्रः विशेषेणात्मानं पूरयतीति "प्रा पूरणे" इति तत्रापि मदीक्षया मम ईक्षा भगवत्साक्षात्कारः भगवन्तं स्थापयित्वा भगवद्रूपाण्यपि स्थापयति अथवा आदौ मत्साक्षात्कारं जाते स्वात्मनि मां पश्यति तत्र मयि चराचरं च पश्यतीति ब्राह्मणे चराचरं सर्वमेव वर्तत इत्यर्थः ॥ ५६ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मम कला परिकलनमुपासनोत्थसाक्षात्कारस्तया युतः ॥ ५३ ॥

सर्ववेदमयो विप्र इति मम सर्वदेवमयत्वात् सर्वेश्वरस्यापि प्रमाणं ये वेदास्तन्मय एव विप्रो भवेत् ॥ ५४ ॥

असूयवः ब्राह्मणेषु दोषदर्शिनः प्रतिमादाविव नतु ब्राह्मणेषु पूज्यबुद्धयः ॥ ५५ ॥

ईदृशस्य ब्राह्मणस्य लक्षणमाह—चरेति । अस्य विश्वस्य हेतवो भावाः पदार्थाः महदादयः मदीक्षयेत्यस्यार्थस्य पौनरुक्त्यान्मदीक्षया मत्साक्षाद्दर्शनेन युक्तो विप्रविशेषो नारदादिरित्यर्थो द्रष्टव्यः ॥ ५६—५७ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मत्कलया मदीयया ध्येयमूर्त्या ॥ ५३—५४ ॥

असूयवः दोषदृष्टयः ॥ ५५ ॥

इदं विश्वम् अस्य हेतवो ये भावाः पदार्था महदादयः एतानि मद्रूपाणि मदीक्षया मदात्मकदृष्ट्या विप्रः चेतसि आ समन्ताद्धत्ते ॥ ५६—५९ ॥

———

भाषा टीका ।

इस संसार में सब प्राणियों के मध्य में जन्म मात्र से ही ब्राह्मण सब से श्रेष्ठ है फिर तप विद्या सन्तोष मेरी उपासना से सम्पन्न ब्राह्मण उत्तरोत्तर श्रेष्ठ है इस में तो कहनाही क्या है ॥ ५३ ॥

ब्राह्मण से अधिक यह चतुर्भुज रूप भी मोकूं प्रिय नहीं है ब्राह्मण का शरीर सब वेदों से भरपूर है और मैं सब देवों से भरपूर हों ॥ ५४ ॥

तस्माद्ब्रह्मऋषीनेतान् ब्रह्मन् मच्छ्रद्धयाऽर्चय ।
एवं चेदर्चितोऽस्म्यद्धा नान्यथा भूरिभूतिभिः ॥ ५७ ॥

श्रीशुक उवाच ।

स इत्थं प्रभुणाऽऽदिष्टः सह कृष्णान् द्विजोत्तमान् ।
आराध्यैकात्मभावेन मैथिलश्चाप सद्गतिम् ॥ ५८ ॥
एवं स्वभक्तयो राजन् भगवान् भक्तभक्तिमान् ।
उषित्वाऽऽदिश्य सन्मार्गं पुनर्द्वारवतीमगात् ॥ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे
श्रुतदेवानुग्रहो नाम
षडशीतितमोऽध्यायः ॥ ८६ ॥

भाषा टीका ।

परन्तु तुच्छ बुद्धि वारे ऐसा नहि जानकर केवल अर्चादि को मैं पूज्य वारे होकर ब्राह्मणों में दोष दर्शी होकर पूज्य आत्मा विप्र रूपी मेरा अपमान करते हैं ॥ ५५ ॥

इस चराचर विश्व को तथा इस के कारण रूप महदादि तत्व पदार्थों को मेरा रूप मानकर मेरे विषय में यथावत् ज्ञान से ब्राह्मण अपने चित्त में धारण करता है ॥५६॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

सतां वेदानां त्रिकाण्डविषयाणां प्रवृत्तिप्रकारमादिश्य ॥५९॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
षडशीतितमोध्यायः ॥ ८६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ब्रह्मऋषीन् ब्राह्मणेषु मत्तत्त्वज्ञान् एतान् मत्प्रियतमान् एतानित्युपलक्षणं सर्वानेव मद्भक्तानित्यर्थः । मच्छ्रद्धया उत्तमप्रीत्या अद्धा साक्षादेवार्चितोस्मि अन्यथा मद्भक्तत्यागेन भूरिभूतिभिर्बहुलसमृद्धिभिरप्यर्चितो न भवामि ॥ ५७ ॥

एतमुपदेशं बहुलाश्वोपि श्रीभगवांश्चकारेत्यतिदिशन्नुभयोरन्तिमं फलमप्याह—स इति । स विप्रश्च मैथिलो नृपश्च प्रभुणा निजेश्वरेणेति तदादेशे विश्वासादिकं बोधयति सह साहित्येन कृष्णाद्द्विजोत्तमान् तं तांश्च एकात्मभावेन एकचित्तत्वेन तुल्यप्रयत्नतया भक्त्या वा आराध्य तस्य तेषां च गतिं नित्यलोकम् ॥ ५८ ॥

सतां सन्तं वा मार्गं स्वभक्तभक्तिप्रधानशुद्धभक्तियोगलक्षणमादिश्य किं कृत्वा उषित्वा तयोः प्रीत्यर्थं चिरं तत्रावस्थाय यतो भक्तेषु भक्तिरादरः प्रेमलक्षणा वा तद्वान् ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां
षडशीतितमोऽध्यायः ॥ ८६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
षडशीतितमोऽध्यायः ॥ ८६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अस्त्वेवं ततः किमत आह—तस्मादिति । तस्मान्मद्भक्तानाम् इत्थम्भूतत्वात् हे ब्रह्मन्नेतान् ब्रह्मर्षीन् श्रद्धयाऽत्यादरेणार्चय एवञ्चोदित्थमर्चयासि चेदद्धा साक्षादहमेवार्चितोऽस्मि अन्यथा मद्भक्तार्चनं विना सुविभूतिभिः पुष्कलोपचारैरर्चितोऽप्यहं नार्चितः ऋषीनेतानिति स्वभक्तमात्रोपलक्षणम् ॥ ५७ ॥

इत्थमिति । प्रभुणा भगवता आदिष्टः स श्रुतदेवः ऐकात्म्यभावेन परमात्म्यबुद्ध्या आराध्य सतां गतिं मुक्तिमवाप ॥ ५८ ॥

एवमिति । भक्तेषु भक्तिः प्रीतिः सा अस्यास्तीति तथा स भगवान् हे राजन् ! स्वभक्तयोः श्रुतदेवबहुलाश्वयोः सन्मार्गं सतां साधूनां मार्गम् अनुष्ठेयधर्मप्रकारमाभिमुख्योपादिश्य कतिपयदिनान्युषित्वा च पुनर्द्वारवतीं ययौ ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
षडशीतितमोऽध्यायः ॥ ८६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

प्रतिपादनच्छलेन फलितमाह तस्मादिति ॥ ५७-५८ ॥
भक्तेषु प्रसादलक्षणमेहवान् ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
षडशीतितमोऽध्यायः ॥ ८६ ॥
( श्रीविजयध्वजतीर्थरीत्या एकनवतितमोऽध्यायः ॥ ९१ ॥ )

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
षडशीतितमोऽध्यायः ॥ ८६ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
षडशीतितमोऽध्यायः ॥ ८६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं ब्राह्मणोत्कर्षमुक्त्वा कर्तव्यमाह—तस्माद्ब्रह्मऋषीनेतानिति। एते च तादृशाः ब्राह्मणाः काण्डरूपनिष्णाता इति ब्रह्मर्षीनिति त्वमपि तादृश एव अतस्त्वया चेदङ्गीक्रियते तदा अन्योऽपि नाङ्गीकरिष्यतीति ज्ञापितं किञ्च एकस्मिन् ब्राह्मणे यथाकथञ्चिदर्चिते अहं नानाविभूतिभिः अर्चितो भविष्यामि एवमुपदिष्टस्तथैव कृतवानित्याह—स इत्थं प्रभुणादिष्ट इति। प्रभुत्वादन्यथाकर्तुं शक्यं ततः सहकृष्णान् भगवत्सहितान् अधिष्ठानरूपान् स्वभावतोऽप्युत्तमान् द्विजोत्तमान् एकान्तभावे अनन्यभक्त्या आराध्य सद्गतिमवाप सतां या गतिस्तां भगवत्सायुज्यं प्राप्तवान् तदानीमेवान्यदा वा मैथिलश्च देहान्ते भगवत्सायुज्यं प्राप्तवान् चकारात्तत्सम्बन्धिनोपि तथा तथा प्रवृत्ताः ॥ ५७—५८ ॥

एवं भगवच्चरित्रमुक्त्वा चरित्रान्तरकथनार्थं पुनर्भगवतः प्रत्यापत्तिमाह—एवं स्वभक्तयोरिति। राजन्निति विश्वासार्थं भक्तेषु भक्तिमानिति स्वतो गत्वा करणे हेतुः मैथिलवाक्यान्मैथिलगृहे उषित्वा श्रुतदेववाक्यात्तस्मै सन्मार्गमादिश्य सतां गतिर्भगवान् तत्र मार्गभूता ब्राह्मणा इति तेषां भजनमादिश्य पुनः प्रस्थानमगत इत्यर्थः ॥ ५९ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धविवरणे सप्तत्रिंशोध्यायविवरणम् ॥ ३७ ॥ ८६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

ऐकात्म्यम एकमनस्त्वं तद्रूपो यो भावस्तेन यद्वा कृष्णतत्साक्षिविप्रयोर्यदैकात्म्यमैक्यं तद्भावनया ॥ ५८ ॥
सन्मार्गं सतां भक्तानां मार्गं भगवद्विषयकं भक्तियोगम् ॥ ५९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
षडशीतितमोऽध्यायो दशमेऽजनिसङ्गतः ॥ ८६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

एवं स्वभक्तयोः श्रुतदेवबहुलाश्वयोः समीपे उषित्वा सन्मार्गं सतां साधूनां मार्गम् अनुष्ठेयं धर्मं स्वभक्तभक्तिं श्रुतदेवायादिश्य पुनर्द्वारवतीमगात् अनेन श्रुतदेवस्य हरिभक्तेषु पूर्वं भक्तिरल्पेति गम्यते ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
षडशीतितमाध्यायार्थप्रकाशः ॥ ८६ ॥

भाषा टीका।

हे ब्रह्मन्! इसी कारण से मेरे विषय में श्रद्धा करके आप इन ब्रह्म ऋषीन का पूजन करियेगा ऐसा किया तो मैं साक्षात् पूजित होता हों और मेरे भक्तन के पूजन के विना, बहुत से ऐश्वर्यों से भी मैं पूजित नहिं होता ॥ ५७ ॥

श्रीशुक उवाच।

इस प्रकार श्रीकृष्ण की आज्ञा पाय कर वह श्रुतदेव और बहुलाश्वराजा एदोनो श्रीकृष्ण सहित ऋषिन का परमात्म बुद्धिसे आराधन कर मुक्ति को प्राप्त होगया ॥ ५८ ॥
हे राजन्! भक्त जनों मे भक्तिमान् भगवान् निज भक्त के अर्थ इस प्रकार समीचीन मार्ग का उपदेश कर कुछ दिन पर्य्यंत मिथिला मे निवास कर पश्चात् द्वारवती को पधार गए ॥ ५९ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धमें छयासी अध्यायकी
भाषाटीका समाप्ता ॥ ८६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे षडशीतितमोऽध्यायः ॥ ८६ ॥

॥ श्रीः ॥

# श्रुतिस्तुतिः ॥

## सप्ताशीतितमोऽध्यायः ।

### परीक्षिदुवाच ।

**ब्रह्मन् ब्रह्मण्यनिर्देश्ये निर्गुणे गुणवृत्तयः ।**
**कथं चरन्ति श्रुतयः साक्षात्सदसतः परे ॥ १ ॥**

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

श्रीनृसिंहाय नमः ॥

सप्ताशीतितमे नारायणनारदवादनः ।
वेदैः स्तुतिर्गुणालम्बा निर्गुणावधि वर्ण्यते ॥
वागीशा यस्य वदने लक्ष्मीर्यस्य च वक्षसि ।
यस्याऽऽस्ते हृदये सम्वित्तं नृसिंहमहं भजे ॥
सम्प्रदायविशुद्ध्यर्थं स्वीयनिर्बन्धयन्त्रितः ।
श्रुतिस्तुतिमितव्याख्यां करिष्यामि यथामति ॥
श्रीमद्भागवतं पूर्वैः सारतः सन्निवेशितम् ।
मया तु तदुपस्पृष्टमुच्छिष्टमुपचीयते ॥

पूर्वाध्यायान्ते—

"एवं स्वभक्तयो राजन् भगवान् भक्तभक्तिभान् ।
उषित्वाऽऽदिश्य सन्मार्गं पुनर्द्वारवतीमगात् ॥"

इत्यत्र सन्मार्गं सतां स्वतः प्रमाणभूतानामप्रामाण्यकारणरहितानां वेदानां मार्गं ब्रह्मपरत्वमुपदिश्य भगवानगादित्युक्तं तत्र वेदानां ब्रह्मपरत्वमघटमानं मन्वानः पृच्छति—ब्रह्मन्निति । तत्र तावत् मुख्यालक्षणागुणभेदेन त्रिधा शब्दप्रवृत्तिः मुख्याऽपि रूढि-योगभेदेन द्विधा रूढिश्च स्वरूपेण जात्या गुणेन वा निर्देशार्हे वस्तुनि संज्ञासंज्ञिसङ्केतेन प्रवर्तते, यथा डित्थो गौः शुक्ल इति लक्षणा च तेनैव सङ्केतनाभिहितार्थसम्बन्धिनि यथा गङ्गायां घोष इति गौणीचाभिहितार्थलक्षितगुणयुक्ते तत्सदृशे यथा सिंहो देवदत्त इति यथाऽऽहुः—

"अभिधेयाविनाभूतप्रवृत्तिर्लक्षणेष्यते ।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टातु गौणता" ॥ इति

योगवृत्तिस्तु एतत्त्रिविधवृत्तिप्रतिपादितपदार्थयोः प्रकृतिप्रत्ययार्थयोर्वा योगेन यथा पङ्कजमौपगवः पाचक इत्यादि तत्र तावद्ब्रह्मणि रूढिवृत्तिर्न सम्भवतीत्याह साक्षात्कथं चरन्तीति तत्र हेतुः अनिर्देश्ये अनिर्देश्यत्वेऽपि हेतुं वदन् गुणवृत्तिं निराकरोति, निर्गुणे गुणवृत्तय इति. गुणैर्वर्तमानाऽपि निर्गुणे कथं चरन्तीत्यर्थः । निर्गुणत्वे च हेतुं वदन् लक्षणां योगञ्च निराकरोति सदसतः पर इति कार्यकारणाभ्यां परस्मिन्नसङ्गे केनचिदपि सम्बन्धाभावान्न लक्षणायोगवृत्ती सम्भवत इत्यर्थः । एवं पदार्थत्वायोगादपदार्थस्य च वाक्यार्थत्वायोगान्न श्रुतिगोचरत्वं ब्रह्मण इत्यभिप्रायः ॥ १ ॥

---

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

श्रीराधारमणो जयति ।

श्रीचैतन्यं श्रीनृसिंहं मुरारिं-
विद्वद्वर्यं श्रीधरं भक्तमुख्यम् ।
मिश्रं चन्द्रं गोकुलोपाधिकञ्च-
नत्वा कुर्वे व्याकृतिं व्याकृतेस्ताम् ॥
र[illegible]दासेन राधारमणसेविना ।
श्रु[illegible]टीकाव्याख्यानं क्रियतेऽद्भुतम् ॥

तत्र तेषामध्य[illegible]के पद्ये नारायणेति नारायणनारदसम्वादं पुरस्कृत्येत्यर्थः । श्रीशुकेन कर्त्रा गुणानां जगत्कर्तृत्वादीनामालम्बः आश्रयणं यस्यां तथाभूता वेदकर्तृका श्रुतिः निर्गुणे अवधिः पर्यवसानं यथा स्यात्तथा निरूप्यते ॥ अधुना निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारानुमितकर्तव्यताकं मङ्गलं निबध्नन् स्वीयसन्यासाश्रयोपास्यं श्रीनृसिंहं वर्णयति— वागीशेति । वाचां वाणीनामीशा वागीशा सरस्वती यस्य नृसिंहस्य वदने आस्ते तिष्ठति यस्य वक्षसि च वक्षःस्थले तु लक्ष्मीर्नित्यकान्ता श्रीर्विहरमाणा आस्ते तिष्ठति यस्य हृदये च सम्वित् स्वपरप्रकाशिका विशुद्धसत्त्वाऽपरपर्याया ज्ञानशक्तिरास्ते तं नृसिंहम्

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

अहं भजे शरणं व्रजामि ॥ स्वीयानां छात्राणां निर्बन्धेन हठेन वशीकृतोऽहं श्रीधरः वेदस्तुतेर्मितां लघ्वक्षरामभिप्रायतो गम्भीरां व्याख्यां यथामति स्वबुद्धिमनतिक्रम्य करिष्यामि किमर्थं सम्प्रदायस्य शेषीयस्य नारणीयस्य च विवेकार्थं ॥ तथाहि–

सम्प्रदायो भागवते द्विविधः परिकीर्त्तितः ।
शेषो नारायणीयश्च तत्र शेषो यथोच्यते ॥
शेषः सनत्कुमाराय श्रीमद्भागवतं जगौ ।
सोऽपि साङ्ख्यायनायाह मुनयं संप्रसादितः ।
पराशराय सोऽप्याह मैत्रेयाय जगौ च सः ।
विदुरायाथ मैत्रेयो द्वितीयोऽपि निगद्यते ।
नारायणस्तु विधयं श्रीमद्भागवतं जगौ ॥
नारदाय विधिः प्राह व्यासायाऽथ कलिप्रियः ।
व्यासः शुकाय मुनये सोऽपि प्राह परीक्षिते ।
तदैव सूतस्तं श्रुत्वा शौनकायाह प्रश्नतः ॥

पूर्वैश्चित्सुकादिभिष्टीकाकर्तृभिः सारतः सारं श्रेष्ठं श्रेष्ठमाख्यानं गृहीत्वा श्रीमद्भागवतं सम्यक् निषेवितम् आस्वादितं मयातु तैरुपस्पृष्टम् उपस्पृश्य आचम्य त्यक्तं प्रसादरूपमुच्छिष्टं भक्त्या सङ्गृह्यते ॥

अप्रामाण्ये कारणानि चत्वारो दोषाः भ्रमप्रमादविप्रलिप्साकरणाऽपाटवरूपास्तैः रहितानां तत्रातस्मिंस्तद्बुद्धिर्भ्रमो यथा स्थाणौ पुरुषइति प्रमादोऽनवधानताऽन्यचित्ततेति यावत् येनान्तिके गीयमानमपि न श्रूयते विप्रलिप्सा वञ्चनेच्छा यथा ज्ञातोऽप्यर्थः शिष्याय न प्रकाश्यते करणापाटवमिन्द्रियमान्द्यं येन यथावद्दत्तमनसा वस्तु न परिचीयते इति तत्रोक्ते वेदब्रह्मणोः प्रमाणप्रमेयभावे तत्र वेदे तावत् साकल्येन साक्षात्सङ्केतितोऽर्थो यया वृत्त्या प्रतीयते सा वृत्तिर्मुख्या साऽपि रूढिर्योगश्चेति द्विधा तत्र रूढित्वं नाम प्रकृतिप्रत्ययार्थरहितत्वे सति अनादिपरम्परागतत्वं योगस्त्वग्रे वक्ष्यते लक्षणाहि सापेक्षत्वात् रूढिश्च त्रिधा स्वरूपरूढिर्जातिरूढिर्गुणरूढिश्चेति संज्ञाशब्दः संज्ञी तदर्थः तयोः सङ्केतेन ईश्वरेच्छारूपेण रूढिवृत्तिः प्रवर्त्तते कुत्र, स्वरूपेण निर्देशार्हे संस्थानेन कथमाहे डित्थादिवस्तुनि डित्थइति पदसंज्ञा शाखापल्लवादिशून्यत्वं तदर्थः संज्ञी तयोस्सङ्केतः डित्थपदात् शाखादिशून्यवृक्षपदार्थो बोद्धव्यः नान्य इति एवं गोपदं संज्ञा गोत्वजातिस्तदर्थः एवं शुक्लपदं संज्ञा श्वेतगुणस्तदर्थस्तत्र तत्र तेनैव सङ्केतेन प्रवर्त्तते अत्र प्रकृतिप्रत्ययार्थकरणे डीङ् विहायसा गतौ इत्यस्मादाकाशे गतिः प्रकृत्यर्थः तत्कर्त्ता च प्रत्ययार्थः प्रतीयते एवं गम धातुः प्रकृतिः डीप्रत्ययः कर्त्तरितदर्थेनागमनकर्त्ता अश्वादिरपि प्रतीयते एवं शुच धातुः प्रकृतिः कर्त्तरिलः प्रत्ययस्तदर्थेन शोककर्त्ता प्रतीयते सच सच प्रकृतेऽनुपपन्न इति रूढिरेव स्वीक्रियते तत्र तत्रेति रूढेः परिष्कारः लक्षणा च तेनैव संज्ञासंज्ञिरूपेण सङ्केतेन तत्र गङ्गेति पदं संज्ञा भगीरथखाताऽवच्छिन्नजलप्रवाहस्तदर्थं एव संज्ञी तयोस्सङ्केतः गङ्गापदाद्भगीरथखातावच्छिन्नजलप्रवाह एवार्थो बोद्धव्यो नान्य इति ईश्वरेच्छारूपस्तेनेत्यर्थः । अभिहितार्थस्य वाच्यार्थस्य प्रवाहस्य सम्बन्धिनि तीरे प्रवर्त्तते यथेति गङ्गाशब्दवाच्यप्रवाहाधिकरणकघोषान्वयानुपपत्त्या तीरे लक्षणा शैत्यपावनत्वादि प्रयोजनमिति प्रयोजनवती लक्षणा गौणीचेति अभिहितार्थे वाच्ये सिंहत्वावच्छिन्ने पिण्डे लक्षिता ये क्रौर्य्यमारकत्वादिगुणास्तैर्युक्ते अत एव तत्सदृशे देवदत्ते गौणी वृत्तिः प्रवर्त्तते इति पूर्वेणान्वयः । अत्रोत्तरपदानुपादाने जलगतसङ्ख्यासंयोगादिगुणान्मग्नावपि सत्त्वात् अग्निरिदं जलमित्यपि प्रयुज्येत ततस्तदुपादानमिति सुधीभिर्विभाव्यं यथाऽऽहुरित्यत्र भट्टा इतिशेषः अभिधेयाऽविनाभूते वाच्यार्थप्रवाहादिसम्बन्धिनि तटादौ गङ्गादिशब्दस्य या प्रवृत्तिः यत् शक्यसम्बन्धरूपवृत्तिः सा लक्षणावृत्तिरिष्यते तथा सिंहादौ लक्ष्यमाणा दृश्यमानाः ये क्रौर्यादयो गुणास्तैर्योगात्सादृश्यसम्बन्धात् तमपेक्ष्य तु वृत्तेश्शब्दव्यापारस्य गौणता इष्टा सा गौणीवृत्तिरित्यर्थः । एतत्त्रिविधेति एताः रूढिलक्षणा गौणीरूपाः यास्त्रिविधा वृत्तयस्ताभिः प्रतिपादितस्सम्पादितोऽर्थोऽभिधेया ययोस्तयोः प्रकृतिप्रत्ययार्थयोर्योगेन सम्बन्धेन योगवृत्तिः प्रवर्त्तते उदाहरणानि वर्णयति यथेति पङ्कजमित्यत्र पङ्कोपपदजनधातुः प्रकृतिः तदर्थस्तु पङ्काज्जनिमात्रं प्रत्ययस्तु जनेर्डस्तदर्थस्तु जनिकर्त्ता एवं मण्डूकशैवालादावतिप्रसक्तस्तद्व्यावृत्त्यर्थं प्रसिद्धिरूपरूढ्या प्रतिपादितपदार्थत्वात्पङ्कजपदं रूढियोगरूपम् एवम् उपगुशब्दः प्रकृतिस्तदर्थस्तु गोसामीप्यसम्बन्धी प्रत्ययस्तु अण् तदर्थस्त्वपत्यरूपस्तत्र समीपगोमात्रवाचिन उपपूर्वकगोपदस्य मुख्यार्थानुपपत्त्या तत्सम्बन्धिनि गोपे लक्षणा बहुव्रीहेरन्यपदार्थप्रधानत्वेन लक्षणयैव प्रवृत्तेः एवञ्च लक्षणया प्रतिपादितपदार्थत्वात् औपगवपदं लक्षणायोगवृत्तिरूप्यम् एवं पचधातुः प्रकृतिस्तदर्थस्तु पाकरूपो णमुल् प्रत्ययः तदर्थः पाककर्त्ता एवञ्च पचतीति पाचक इति निरुक्तौ पचनकाल एव पाचकपदप्रवृत्तौ तदन्यदा तत्पदप्रयोगस्याव्याप्तिस्तदर्थपाचकत्वगुणयोगात् पचनादन्यदापि पाचकपदप्रयोगोपपत्तिः किन्तु सिंहो देवदत्त इत्यत्र व्यक्तिभेदः अत्रतु पचनापचनकालात्मकावस्थाभेद इति गौण्या प्रतिपादितपदार्थत्वात्पाचकपदं गुणयौगिकम् अत्र क्वचित्प्रकृतिप्रत्ययार्थयोर्वेति पाठस्त्वागन्तुकः असम्बद्धार्थत्वात् एवञ्च त्रिविधा रूढिस्त्रिविधा योगवृत्तिः एका लक्षणाऽन्या च गौणीत्येवमष्टविधा शब्दवृत्तिः स्वामिभिर्व्याख्याता तत्र साक्षात्कथं चरन्ति मुख्यया वृत्त्या ब्रह्म कर्मभूतं कर्तृभूताः श्रुतयः कथं प्रतिपादयन्तीत्यर्थः । तत्र चरणानर्हत्वे हेतुः अनिर्देश्य इति । स्वरूपेण गुणेन जात्या च निर्देष्टुमशक्य इति त्रिविधरूढेर्निराकरणं पदार्थत्वायोगात्पदवाच्यत्वाभावात् अपदार्थस्य पदवाच्यत्वरहितस्य ब्रह्मणः वाक्याभिधेयत्वाऽसम्भवाच्च श्रुतिप्रतिपाद्यत्वं ब्रह्मणो घटत इति राज्ञः प्रश्न इति स्वामिचरणानामभिप्रायः ॥ १ ॥

---

श्रीकविचूडामणिचक्रवर्त्तिकृताऽन्वयबोधिनी ।

श्रीकृष्णाय नमः ।

सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥

अथ श्रीवेदस्तुतिव्याख्या श्रीधरपूज्यपादैर्या कृता सैव तद्-नुकूलाधिकपदकदम्बवसंघर्षितव्यक्तार्था यथा स्यात्तथा स्वीयानां सुखबोधाय मयाऽत्र लिख्यते तथाऽत्र श्रीमच्छङ्करपूज्यपादकृत-भाष्यानुमतेन श्रुतीनां व्याख्या क्रियते इति ज्ञातव्यम् अत्रायं क्रमो ज्ञेयः प्रथमाऽभासस्ततः श्लोकस्तस्यान्वयोऽर्थश्च ततः पूर्णाश्रुतिस्तदर्थश्च ततः सिद्धान्तइति स्वामिश्रीचरणां पूर्वाध्याये—

"एवं स्वभक्तयो राजन् भगवान् भक्तभक्तिमान् ।
उषित्वाऽऽदिश्य सन्मार्गं पुनर्द्वारवतीमगात् ॥

इत्यत्र सतां स्वतः प्रमाणभूतानामप्रामाण्ये कारणरहितानां वेदानां मार्गं ब्रह्मपरत्वमुद्दिश्य भगवानगादित्युक्तं तत्र वेदानां ब्रह्मपरत्वमघटमानं मन्वानः पृच्छति—ब्रह्मन्निति । अप्रामाण्ये कारणरहितानामिति पुरुषवाक्यानामप्रामाण्यं भ्रमप्रमाद-विप्रलिप्साकरणापाटवरूपदोषचतुष्टयैः पुरुषबुद्धेर्दूषितत्वात् पौरुषेयत्वाभावाद्वेदस्याप्रामाण्ये कारणाभाव इत्यर्थः । अत्रान्यदपि प्रश्नबीजं ज्ञातव्यं पूर्वाध्याये "सर्ववेदमयो विप्रः सर्व-देवमयो ह्यहम्" इति स्वस्य स्वयं भगवता सर्ववेदप्रमेयत्वमुक्तं विष्णुरातेनापि तस्मिन् श्रीकृष्णाख्ये भगवति परब्रह्मत्वं तत्र तत्रावधारितं तद्यथा गूढं परं ब्रह्म मनुष्यलिङ्गमिति परंब्रह्म नराकृतीति तदभितं ब्रह्माद्वयं शिष्यत इति तत्रोद्वहत्पशुपवंश-शिशुत्वनाट्यं ब्रह्माद्वयमिति यन्मित्रं परमानन्दं पूर्णं ब्रह्मसनातनमि-त्यादिषु अनस्तत्रैव वेदप्रमेयत्वं सान्दिह्य पृच्छति ब्रह्मन्निति हे ब्रह्मन्! अनिर्देश्ये ऽनिर्वचनीये ब्रह्मणि श्रुतयः कथं चरन्ति ब्रह्म प्रतिपादयन्तीत्यर्थः । कथम्भूते ब्रह्मणि निर्गुणे गुणातीते गुण-वृत्तयो गुणैर्वर्त्तमानाः श्रुतयः कथं चरन्ति पुनश्च सदसतः परे कार्यकारणाभ्यां परस्मिन्नसङ्गे केनचिदपि सम्बन्धाभावात्कथं चरन्ति अत्र स्वामिचरणानां तत्रतावत् मुख्यालक्षणागुणभेदेन त्रिधा शब्दप्रवृत्तिः मुख्यापि रूढियोगिभेदेन द्विधा रूढिः स्वरूपेण जात्या गुणेन वा निर्देशार्हे वस्तुनि संज्ञासंज्ञके सङ्केतेनैव प्रवर्त्तते यथा डित्थः गौः शुक्लः इति अस्यार्थः । संज्ञाशब्दः संज्ञीचार्थं सङ्केतः शक्तिः साच अस्माच्छब्दादयमर्थो बोद्धव्य इति ईश्वरेच्छातो भवति शक्तेस्तु शब्दशब्दार्थोभयनिष्ठत्वात् संज्ञासंज्ञिसङ्केतत्वं ततश्च स्वरूपेण रूढस्योदाहरणं डित्थ इति छिन्नवृक्षस्य मूल-भागो डित्थ इत्युच्यते डित्थशब्दः संज्ञा तद्वाच्यछिन्न-वृक्षस्य मूलपिण्डः संज्ञी सङ्केतनायमेव डित्थ इति रूढ्या प्रतीयते तथा डिपित्थोपि ज्ञेयः । वल्मीककीटसमुद्भूतवृहन्मृत्पिण्डो डवित्थः । जातिरूढस्योदाहरणं गौरिति जातेर्लक्षणं नित्यमेकमनेक समवेतत्वं जातित्वं गोशब्दो हि गोजातिविशिष्टस्य गोपिण्डस्य वाचकः सास्नावत्त्वं गोत्वं "सास्ना तु गलकम्बल" इत्यमरः तथा महि-षादिः गुणरूढस्योदाहरणं शुक्लइति शुक्लशब्दस्तु शुक्लगुणवाचकः तथा रक्तपीतादिः रूढिवृत्तिमुक्त्वा लक्षणावृत्तिमाह—लक्षणा च तेनैव सङ्केतेनाभिहितार्थसम्बन्धिनि यथा गङ्गायां घोष इति अस्यार्थः तेनैव संज्ञासंज्ञिसङ्केतेनाभिहितो यो गङ्गादिरूपोऽर्थ-स्तत्सम्बन्धिनि तीरादौ मुख्यार्थबाधे गौणार्थकल्पना लक्षणा अतो गङ्गायां घोषो वसतीत्युक्ते गङ्गाशब्देन लक्षणया तीर-मुच्यते गङ्गातीरे घोषो ऽस्तीत्यर्थः । तथा वटेषु गावो दुह्यन्ते इत्यादिकं ज्ञेयं गुणवृत्तिमाह गौणी चाभिहितार्थ-लक्षितगुणयुक्ते तत्सदृशे यथा सिंहो देवदत्त इति अस्यार्थः । अभिहितोऽर्थः सिंहादिशब्दस्य सिंहादिरूपः पिण्डः तत्र लक्षिता ये विक्रमादिगुणास्तद्युते देवदत्ते तत्सदृशे अभिहितार्थसिंह-सदृशो अयं देवदत्तः सिंहः गुणयोगादिति एवमयं देवोऽयं राक्षस इत्यादिकं ज्ञेयं लक्षणा गौणी इत्येतयोर्लक्षणं वृत्ति-कारभट्टवाक्येनाह—यथाहुरिति—

" अभिधेयाविनाभूतप्रवृत्तिर्लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टातु गौणता ॥" इति

अस्यार्थः अभिधेयं रूपम् अविनाभूतम् अभिधेयाविनाभूतं तेन प्रवृत्तिः अभिधेयाविनाभूतप्रवृत्तिर्लक्षणोच्यते अभिधेयेन मुख्यया वृत्त्या गङ्गादिशब्दवाच्येनार्थेन गङ्गादिस्वरूपेणा-ऽविनाभूतेन सार्द्धं शब्दसम्बन्धिनि तीरादौ गङ्गादिशब्दस्य या प्रवृत्तिर्व्यापारः सा लक्षणेत्यर्थः । यद्वा अभिधेयस्य वाच्यस्यार्थस्य योऽविनाभूतस्तीरादौ सम्बन्धस्तस्य प्रवृत्ति-र्लक्षणेति पूर्वस्यार्थः । परार्द्धस्यायं लक्ष्यमाणं गुणे अभि-धेये सिंहादिरूपे गुणाविक्रमप्रसह्यकारित्वादयो लक्ष्यमाणा-स्तैर्योगात्सम्बन्धात्सादृश्याद्देवदत्तादौ या शब्दप्रवृत्तिः सा गौणता इष्टा इति रूढिवृत्तिमुक्त्वा योगरूढिमाह—योगवृत्ति-स्तु एतान्त्रिविधवृत्तिप्रतिपादितपदपदार्थयोः प्रकृतिप्रत्यययोगेन यथा पङ्कजम् औपगवः पाचक इति अस्यार्थः रूढिर्लक्षणा गौणी चेति वृत्तित्रयम् एतान्त्रिविधवृत्तितया प्रतिपादितयोः पद-पदार्थयोः प्रकृतिप्रत्यययोगेन योगवृत्तिर्भवतीत्यर्थः । उदा-हरणं पङ्कजादियोगरूढस्योदाहरणं पङ्कजमिति पङ्कशब्दोपपद-जनधातुः प्रकृतिः प्रत्ययः जनेर्डः पङ्काज्जायतेऽति पङ्कजं योग-रूढिवृत्तिप्रतिपादितपदार्थत्वं पङ्कजमात्रस्येत्युक्तौ शालादेरप्रतिपत्तेः किन्तु पद्म एव रूढित्वं तथा मण्डप इत्युक्ते वहिर्मन्दिरे रूढिः नतु "मण्डपोऽस्त्रीजनाश्रयः" इत्यमरः । औपगवः उप समीपे गावो यस्य सः उपगुः तस्यापत्यम् औपगवः उपगुशब्दस्तावल्लक्षणया प्रवृत्तः बहुव्रीहेस्तथैव प्रतीतेः उपगोः प्रकृतेः तद्धितप्रत्ययः अतो लक्षणया जातिरूढिवृत्ति-प्रतिपादितपदार्थत्वं पाचक इत्यत्र प्रकृतिः पचधातुः कृत्-प्रत्ययोवत् पचतीतिपाचकः सच पचनादन्यत्रापि पाचक इत्युच्यते इति पाचकत्वगुणयोगात् गुणवृत्तिप्रतिपादितपदा-र्थत्वम् आदिपदेनान्यदपि यथायथमूह्यम् अत्र अष्टधा शब्दप्रवृत्तिरुक्ता सा यथा मुख्या लक्षणा गौणी चेति त्रिधा मुख्या द्विविधा रूढियोगभेदेन लक्षणा गौणी एकविधैव मुख्या रूढेरुदाहरणं मुख्यस्वरूपेण डित्थः जात्या गोगुणेन शुक्ला इति लक्षणाया उदाहरणं गङ्गायां घोष इति गौण्या उदाहरणं सिंहो देवदत्त इति मुख्यायायोगवृत्तेः उदाहरणं योगेन पङ्कजं जात्या औपगवः गुणेन पाचक इत्यष्टधा शब्दप्रवृत्तिः एवं शब्दप्रवृत्तिमुक्त्वा ब्रह्मणि तदभावमाह—तत्रेति तत्रतावत् ब्रह्मणि रूढिवृत्तिर्न सम्भवतीत्याह—साक्षात्कथं चरन्तीति तत्र

श्रीकविचूडामणिचक्रवर्त्तिकृताऽन्वयबोधिनी ।

हेतवः अनिर्देश्य इति अनिर्देश्यत्वेपि हेतुं वदन् गुणवृत्तिं निराकरोति । निर्गुणे गुणवृत्तय इति । गुणैर्वर्त्तमानापि निर्गुणे कथं चरन्तीत्यर्थः । निर्गुणत्वे हेतुं वदन् लक्षणां योगं च निराकरोति सदसतः पर इति कार्यकारणाभ्यां परस्मिन् सङ्गे केनचिदपि सम्बन्धाऽभावात् न लक्षणायोगावृत्तीसम्भवत इत्यर्थः । एवं पदार्थत्वायोगात् अपदार्थत्वस्य वाक्यार्थत्वायोगाच्च श्रुतयो गोचरत्वं ब्रह्मणि इत्याभिप्रायः केनचिदिति लक्षणायाः शक्यसम्बन्धविषयत्वायोगवृत्तेरपि प्रकृतिप्रत्ययार्थयोगयोर्विषयत्वान्न ते वृत्ती असङ्गे ब्रह्मणि प्रवर्त्तन्ते इत्यर्थः । सुगममन्यत् ॥ १ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीराधाकृष्णाभ्यां नमः ।

भूभृतं श्रीहरेर्दासवर्य्यं गोवर्द्धनं भजे ।
श्रुतिस्तुतिवचोव्याख्यां विधित्सामि यदाश्रयी ॥

श्रीमद्भागवतं नौमि यस्यैकस्य प्रसादतः ।
अज्ञातानपि जानाति सर्वः सर्वागमानपि ॥

श्रीधरस्वामिपादांस्तान्प्रपद्ये दीनवत्सलान् ।
यत्प्रसादेन वर्त्मेदं पश्यन् वर्त्तेय वैष्णवम् ॥

वन्दे श्रीकृष्णचैतन्यमन्तर्यामिनमीश्वरम् ।
यत्प्रेरणा हि सर्वस्य कारणस्यापि कारणम् ॥

अत्र ब्रह्मन्नित्यादिद्वये टीकासङ्गतिरियं तत्र प्रथमे पद्ये पङ्कजमित्यत्र प्रकृतिः पङ्कशब्दोपपदजनधातुः प्रत्ययोभूते जनेर्डः कृत् रूढिवृत्तिप्रतिपादितपदार्थत्वं शैवलादावप्रतीतेः किन्तु कमल एवेति औपगव इत्यत्र उपगुशब्दस्तावल्लक्षणया प्रवृत्तः बहुव्रीहेस्तथैव प्रवृत्तेः ततश्चोपगोः प्रकृतेः प्रत्ययस्तद्धितः अतो लक्षणावृत्तिप्रतिपादितपदार्थत्वं च पाचक इत्यत्र प्रकृतिः पचधातुः प्रत्ययो ण्वुल् कृत् स च पचनादन्यदापि पाचक उच्यते इति पाचकत्वगुणयोगाद्गौणीवृत्तिप्रतिपादितपदार्थत्वं किन्तु सिंहदेदत्तयोर्व्यक्तिभेदेन भेदः अत्र त्वतस्याभेदेनेति गम्यं निर्गुणे इति गुणातीते इत्यर्थः । ननु गुणरहिते गुणानामपि गुणरहितत्वादनिर्देश्यत्वं शङ्कतेति अथोत्तरत्र पूर्वोक्तमर्थं क्रमेणाह अयमभिप्राय इति तत्र पूर्वार्द्धस्य तमाह सगुणमेवेति श्रुतौ य इति य उक्तलक्षणोऽक्षराख्य इत्यर्थः । सर्वविदिति सर्वं विन्दत इति निरुक्तेः सर्वशक्तित्वं "यस्य ज्ञानमयं तपः" इति इच्छाप्रधानमैश्वर्य्यमित्यर्थः । सर्वस्य वशी सर्वनियन्तेत्यर्थः । सर्वस्येशानः सर्वोपास्यः सर्वकर्मफलदाता चेत्यर्थः । यः पृथिव्यामित्यादिकं पृथिव्याद्यन्तर्यामिताप्रतिपादकं पूर्वत्र हेतुः प्रतीकदर्शनमेवेदं स ईक्षतेत्यत्राऽऽगमनाभावश्छान्दसः तादिति तच्छब्देन पूर्वोक्तमित्यर्थः सोऽकामयतेत्यादिकं सर्वकल्याणगुणनिलयत्वं दर्शयति सर्वाश्रयत्वेन कथनात् सत्यं ज्ञानमिति सच्चिदानन्दमित्यर्थः । सगुणमेवेत्यारभ्य ब्रह्मेत्याद्या इत्येतदन्तलक्षणपराणां श्रुतीनां तत्परत्वं दर्शितम् एतच्चानुवादमात्रं निर्गुणपरताबोधनार्थं निर्गुणपरत्वञ्च तथेत्यादिना उपसंहरिष्यतीत्येतेनानन्तरग्रन्थेन ज्ञेयं तदेतदकल्पनायेत्यस्याभिप्रायः तत्त्वमसीत्यादीत्यत्रादिपदादहं ब्रह्मास्मि ब्रह्मैवास्मि अयमात्मा ब्रह्मेत्यादिग्रहणम् एकार्थाभिधाने सामानाधिकरण्यमितिशब्दयोरेव सामानाधिकरण्यं नार्थयोरित्यर्थः । पृथगर्थत्वं परिहरति यथोक्तमिति तद्धित एवेत्यन्वयः तस्य तद्धितान्तस्यैवानुपयुक्ताभिधानशक्तितया प्रतीक्षमाणस्योपपदेनाभिधारूपविषयदानमात्रं हि क्रियत इत्यर्थः । अजहत्स्वार्थया न जहत् न त्यजन् स्वार्थो नीलगुणादिरूपो यस्यां तया निरूढलक्षणया नितरां रूढा निरूढा साचासौ लक्षणा च तया अनादिपरम्परासिद्धया न साम्प्रतं रचितयेत्यर्थः । नीलमुत्पलमितिवत्सामानाधिकरण्यमित्यनुषज्यते स्वरूपसत्त्वामात्रेण नहि किञ्चिद्विशेषणमिति स्वबुद्ध्येत्यस्य वार्त्तिकस्य पूर्वार्द्धं येन नीलादिना कर्त्रा स्वबुद्ध्या स्वाकारज्ञानेन करणभूतेन विशेष्यमुत्पलादिव्यज्यते अवभास्यते तद्विशेषणमित्यर्थः अस्थूलादिवाक्यादीनामित्यादिकमप्यकल्पनायेत्यस्यैवाभिप्रायः सामानाधिकरण्येन निषेधावशेषत्वेन चोपाधिपरित्यागात् उपासनादिति मात्रार्थश्चेत्यादित्रयस्याभिप्रायः आदिग्रहणात् सृष्ट्यादिक्रियार्थेति क्रिया यज्ञादिः अन्यार्थेति पाठे अपवादार्थेत्यर्थः ॥ अथ स्वव्याख्या सन्मार्गमादिश्येत्युक्तम् आदेशे च "तत्तु समन्वयात्"(१।१।४)इतिन्यायेन वेदसमन्वयापेक्षा लभ्यते समन्वयपरा काष्ठा च—

"वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥

इत्युक्तलक्षणे परतत्त्व एव तत्र कैश्चिद्वस्तुनो निर्विशेषमेव मन्यमानैर्ब्रह्मेति शब्द्यते स्वाभाविकशक्त्यानन्तविशेषमेव मन्यमानैः श्रीभागवतैस्तु परमात्मेति भगवानिति च तत्रान्तर्यामित्वमात्रशक्त्या भगवानेव परमात्मेति शुद्धपरिपूर्णैश्वर्य्याद्यात्मिकया परमधामादौ स्वयं विलसन्त्या वशीकृतमायाशक्तिकया परमस्वरूपशक्त्या तु भगवानिति अद्वयत्वञ्च शक्तिमात्रं विना शक्तेरभावात् तां च विना कार्य्याभावात् वस्त्वन्तरात्यन्ताभावाच्चेति एवमेव खलु [illegible]द्वितीयं ब्रह्म नेहनानास्ति किञ्चनेत्यनयोर्निषेध्यांस्तद्वांछभूतांश्चार्थान् स्वयमाह मन्त्रवर्णः "न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति तदेवं सति मध्यमं मतं नात्याक्षिप्य सर्वशक्तिविशिष्टपरब्रह्मणि श्रीभगवति देवस्य प्रवृत्तिं सम्मतां निर्विशेषब्रह्मण्यसङ्गतां, मन्यमानः श्रीविष्णुरातत्वेन तद्गुणाद्यपलापनिन्दामसहिष्णुः श्रीमुनीन्द्राभ्युपगमेन स्वमतं पुपुक्षुः केवलतन्मात्रवेदार्थिनं [illegible]क्षिपति ब्रह्मन्निति अथवा पूर्वोक्तसर्ववेदमयो विप्रः स[illegible]वमयो ह्यहमित्येवाक्षेपबीजं मन्तव्यं यतस्तत्र व्याख्यातं वेदानां श्रीभगवत्येव तात्पर्य्यमङ्गीकृत्य पूर्वरीत्या परमताक्षिपति ब्रह्मन्निति तैर्व्याख्यातं तत्र गुणेन तावद्रूढिवृत्तिर्न सम्भवतीति निर्गुणे गुणवृत्तय इत्युक्तं गुणाः सत्त्वादयस्तत्कार्य्यभूताः शुक्लशीतादयश्च तदतीते इत्यर्थः । निर्गुणत्वादेव अनिर्देश्यत्व-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अपि निरस्तं गुणभेदस्यावाज्ञातेः तथा स्वरूपानिर्देश्यत्वञ्च निर्गुणत्वेनैव इदम्भूतविलक्षणस्वरूपत्वात् अत आनन्दादिपदैश्च न तन्निर्देश्यत्वं प्रसिद्धवित्तवृत्तिविशेषादावेव तेषां सङ्केतितत्वादिति तेषां मतमस्तु अतोर्थापत्तिसहितानि वृत्त्यन्तराणि च निर्गुणत्वादिभिर्निरस्तान्येवेति स्वरूपभूतगुणाश्च तेषां मते न सन्तीति निर्विशेषब्रह्मणि तेषां वेदसङ्गतिर्न सम्भवत्येव श्रीभागवतानान्तु श्रीभगवतो विलक्षणस्वरूपत्वेपि विलक्षणस्वरूपपरापौरुषेयशब्दवाच्यतया मायिकगुणासम्बद्धत्वेपि मायातीतानन्तगुणतया सदसद्भ्यां परत्वेपि तेन तयोरनुस्यूततया सर्वा अपि वृत्तयः श्रीभगवति मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते ह्यहमिति "वेदैश्च सर्वैरहमेव वेद्यः" इति च श्रीभगवत्सम्मत्या यथायथं सन्त्येव "यतो वाचो निवर्त्तन्ते" इत्यादिकं त्वानन्त्यादिपरमेव केवलानाप्तौ यत इत्यवधित्वनिर्देशो न घटते कर्मणा ज्ञानेन वा आप्तमेवावधिः क्रियते मत्वनाप्तमिति अन्यथा यच्छब्देनापि निर्देष्टुं न शक्यते अप्राप्येति तु प्रकर्षेणैवाप्तिं निषेधयति न त्वंशेनापि "आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति' मन्त्रशेषे(ण) तु दर्शयिष्यत एव ज्ञानेन तत्प्राप्तिः एतेन यद्वाचानभ्युदितमित्यपि व्याख्यातम् अप्राप्येतिशब्दोस्तीति अभिशब्दप्रयोगात् अवचनेनैव प्रोवाचेत्यपि यतो वाच इत्यभिप्रायमेव अनन्ततया वक्तुमशक्यत्वमेव तस्याः प्रवचनमिति ततश्च "शास्त्रयोनित्वात्" इति "श्रुतेस्तुशब्दमूलत्वात्" इति "तर्काप्रतिष्ठानात्" इत्यादिन्यायेभ्यः तं त्वौपनिषदं पुरुषं पृच्छामीति । नैषा तर्केण मतिरपनेया प्रोक्तान्येन सुज्ञानाय प्रेष्ठेत्यादि श्रुतेश्च शास्त्रैकप्रमाणत्वादस्त्येव सर्ववेदसङ्गतिर्नच प्रमाणान्तरप्रयुक्तदोषगन्धोपीति विवेचनीयं तस्मात्तैः सम्मते निर्विशेषे ब्रह्मणि कथं चरन्ति नैवं चरन्तीत्यर्थः ॥ १ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

श्रीमते रामानुजाय नमः ।

अनिर्देश्ये चेतनाचेतनसजातीयतया निर्देष्टुमशक्ये निर्गुणे त्रिगुणप्रत्यनीके तद्गुणप्रवृत्तिनिमित्ताश्च श्रुतयः कथं प्रवर्त्तन्ते नहि प्रवृत्तिनिमित्तप्रहाणेनशब्दः प्रतिपादयितुमलमिति प्रश्नार्थः ॥ १ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

"सर्ववेदमयो विप्रः सर्वदेवमयोऽस्म्यहम्" इति वेदानां ब्रह्मप्रमापकत्वं भगवदुक्त्यैवावगतं तत्पूर्वाध्यायेपि "विशुद्धसत्त्वधाम्न्यद्धा त्वयि शास्त्रशरीरिणि" इति बलिवचनेनाप्यवगतं तत्पूर्वाध्यायेपि " ब्रह्म ते हृदयं शुद्धम् " इत्यादिना शास्त्रयोनेस्त्वमात्मनः इत्यन्तेन मुनिवचसाप्यवगतम् श्रूयते चैवं " सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति इति । स्मर्यतेच "वेदैश्च सर्वैरहमेववेद्यः" इति ब्रह्मणाश्चिदचिद्वैलक्षण्यं च बहुशः प्रतिपादितं तत्र चिदचिद्विलक्षणब्रह्मस्वरूपस्वभावपराणां ". सत्यं ज्ञानमनन्तम्, यः सर्वज्ञः सर्ववित्" इत्यादिश्रुतिवचसां तत्प्रमापकत्वेपि "अयमात्मा ब्रह्म' तत्त्वमसि ' सर्वं खल्विदं ब्रह्म" इत्यादिना परमात्मशब्दसमानाधिकरणतया श्रुतानां चिदचिद्वाचिनां शब्दानां कथं परमात्मप्रमापकत्वम् ? इति पृच्छति राजा–ब्रह्मन्निति । हे ब्रह्मन् ! गुणवृत्तय इत्यत्र गुणशब्दो विशेषणपरः गुणेन जातिगुणक्रियान्यतमेन द्वारभूतेन वृत्तिर्बोधनं यासां ताः जात्यादिकं प्रवृत्तिनिमित्तीकृत्य तद्विशिष्टाभिधायिन्यः श्रुतयः चिदचित्पराः कथं ब्रह्मणि साक्षाच्चरन्ति प्रवर्त्तन्ते न हि प्रवृत्तिनिमित्तप्रहाणेन शब्दः प्रतिपादयितुमलमिति प्रश्नार्थः न च लक्षणया चरन्तीति वक्तुं युक्तम् उदाहृतश्रुतिस्मृत्यादिभ्योभिधावृत्तेरेवावगमात् न च कतिपयश्रुतीनां तत्र मुख्यवृत्तिः चिदचिदादिपराणां तु लक्षणावृत्तिरिति युक्तं " सर्वे वेदा यत्पदमामनन्ति "वेदैश्च सर्वैरहम्" इतिशब्दस्वारस्यात्सर्वासामपि तस्मिन्नभिधावृत्तेरेवावगमादत एव साक्षादित्युक्तं तावज्जातिशब्दानां वृत्त्यसम्भवं व्यञ्जयन् विशिनष्टि अनिर्देश्ये चेतनाचेतनसजातीयतया निर्देष्टुमशक्ये तत्र हेतुः सदसतः परे सच्चासच्च तयोः समाहारस्तस्मात्परे चिदचिद्भ्यां परे विलक्षणे अन्यास्मिन्निति यावत् न हि चिदचिद्गतजातिप्रवृत्तिनिमित्तकशब्दानां चिदचिद्भ्यामन्यास्मिन्मुख्यवृत्तिः सम्भवतीतिभावः । अथ गुणशब्दानां वृत्त्यसम्भवं द्योतयितुं विशिनष्टि निर्गुण इति । निर्गतत्रैगुण्ये त्रैगुण्यप्रत्यनीके यद्वा गुणशब्दानां ये ये प्रवृत्तिनिमित्तभूताः गुणास्तेभ्यः सर्वेभ्यः निर्गते निर्गुणे इति निष्क्रियत्वाद्युपलक्षणम् ॥ १ ॥

---

श्री श्रीनिवाससूरिकृत तत्त्वदीपिका ।

श्रीमते रामानुजाय नमः ।

श्रीश्रीनिवासदासाख्यो नत्वा श्रीयतिशेखरम् ।
रामानुजं करोत्याढ्यां व्याख्यां वेदस्तुतेर्गुणैः ॥
वेदवेदान्ततत्त्वज्ञैः श्रीसुदर्शनसूरिभिः ।
शुकपक्षानुसारेण कृतं व्याख्यानमुत्तमम् ॥
तद्वाक्यान्येव सङ्गृह्य मया तत्करुणेक्षणात् ।
अन्यान्यपि प्रमाणानि क्रियते तत्सविस्तरम् ॥

तत्र—

"एवं स्वभक्तयो राजन् भगवान् भक्तभक्तिमान् ।
उषित्वादिश्य सन्मार्गं पुनर्द्वारवतीमगात्" ॥

इत्युक्तं शुकार्यैः एवमिति कथम् इत्थं " चराचरमिदं विश्वं भावा येचास्य हेतवः । मद्रूपाणीति चेतस्याधत्ते विप्रो मदीक्षया । तस्माद्ब्रह्मऋषीनेतान् ब्रह्मन्मच्छ्रद्धयार्चय । एवञ्चेदर्चितोस्म्यद्धा नान्यथा भूरिभूतिभिः " । इति पूर्वोक्तप्रकारेण सन्मार्गं सतां भागवतानां श्रुतिस्मृत्याद्युक्तभगवदाराधनरूपमुपदिश्य भगवान् द्वारवतीमगादित्युक्तमिति तत्र एतस्मादपि पूर्वं " भवान् हि सर्वभूतानामात्मा साक्षी स्वदृक् प्रभो इति मैथिलेनोक्तं ।

नाथ नो दर्शनं प्राप्तः परं परमपूरुषः ।
यर्हीदं शक्तिभिः सृष्ट्वा प्रविष्टो ह्यात्मसत्तया ॥

इति च श्रुतदेवेनोक्तं श्रुत्वा विष्णुरातः इत्थम्भूते सदा–

श्रीकविचूडामणिचक्रवर्तिकृताऽन्वयबोधिनी ।

हेतवः अनिर्देश्य इति अनिर्देश्यत्वेपि हेतुं वदन् गुणवृत्तिं निराकरोति । निर्गुणं गुणवृत्तय इति । गुणैर्वर्तमानापि निर्गुणे कथं चरन्तीत्यर्थः । निर्गुणत्वे हेतुं वदन् लक्षणां योगं च निराकरोति सदसतः पर इति कार्यकारणाभ्यां परस्मिन्न सङ्गे केनचिदपि सम्बन्धाऽभावात् न लक्षणायोगावृत्तीसम्भवत इत्यर्थः । एवं पदार्थत्वायोगात् अपदार्थत्वस्य वाक्यार्थत्वायोगाच्च श्रुतयो गोचरत्वं ब्रह्मणि इत्यभिप्रायः केनचिदिति लक्षणायाः शक्यसम्बन्धविषयत्वायोगवृत्तेरपि प्रकृतिप्रत्ययार्थयोगयोर्विषयत्वाच्च ते वृत्ती असङ्गे ब्रह्मणि प्रवर्तन्ते इत्यर्थः । सुगममन्यत् ॥ १ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

श्रीराधाकृष्णाभ्यां नमः ।

भूभृतं श्रीहरेर्दासवर्य्यं गोवर्द्धनं भजे ।
श्रुतिस्तुतिवचोव्याख्यां विधित्सामि यदाश्रयी ॥

श्रीमद्भागवतं नौमि यस्यैकस्य प्रसादतः ।
अज्ञातानपि जानाति सर्वः सर्वागमानपि ॥

श्रीधरस्वामिपादांस्तान्प्रपद्ये दीनवत्सलान् ।
यत्प्रसादेन वर्त्मेदं पश्यन् वर्त्तेय वैष्णवम् ॥

वन्दे श्रीकृष्णचैतन्यमन्तर्यामिनमीश्वरम् ।
यत्प्रेरणा हि सर्वस्य कारणस्यापि कारणम् ॥

अत्र ब्रह्मन्नित्यादिद्वये टीकासङ्गतिरियं तत्र प्रथमे पद्ये पङ्कजमित्यत्र प्रकृतिः पङ्कशब्दोपपदजनधातुः प्रत्ययोभूते अनेडः कृत् रूढिवृत्तिप्रतिपादितपदार्थत्वं शैवलादावप्रतीतेः किन्तु कमल एवेति श्रौपगव इत्यत्र उपगुशब्दस्तावल्लक्षणया प्रवृत्तः बहुव्रीहेस्तथैव प्रवृत्तेः ततश्चोपगोः प्रकृतेः प्रत्ययस्त्वञ्चितः अतो लक्षणावृत्तिप्रतिपादितपदार्थत्वं च पाचक इत्यत्र प्रकृतिः पचधातुः प्रत्ययो ण्वुल् कृत् सच पचनादन्यदापि पाचक उच्यते इति पाचकत्वगुणयोगाद्गौणीवृत्तिप्रतिपादितपदार्थत्वं किन्तु सिंहो देवदत्त इत्यादौ शक्तिभेदेन भेदः अत्र त्वनवस्थाभेदेनेति गम्यं निर्गुण इति गुणातीते इत्यर्थः । ननु गुणरहिते गुणानामपि गुणरहितत्वादनिर्देश्यत्वं शङ्कते ति अथोत्तरत्र पूर्वोक्तमर्थं क्रमेणाह अयमभिप्राय इति तत्र पूर्वार्द्धस्य तमाह सगुणमेवेति श्रुतौ य इति य उक्तलक्षणोऽक्षराख्य इत्यर्थः । सर्वविदिति सर्वं विन्दत इति निरुक्तेः सर्वशक्तित्वं "यस्य ज्ञानमयं तपः" इति इच्छाप्रधानमैश्वर्य्यमित्यर्थः । सर्वस्य वशी सर्वनियन्तेत्यर्थः । सर्वस्येशानः सर्वोपास्यः सर्वकर्मफलदाता चेत्यर्थः । यः पृथिव्यामित्यादिकं पृथिव्याद्यन्तर्यामिताप्रतिपादकं पूर्वत्र हेतुः प्रतीकदर्शनमेवेदं स ईक्षतेत्यत्राऽऽगमाभावश्छान्दसः तादिति तच्छब्देन पूर्वोक्तमित्यर्थः सोऽकामयतेत्यादिकं सर्वकत्व जगुणनिलयत्वं दर्शयति सर्वाश्रयत्वेन कथनात् सत्यं ज्ञानमिति सच्चिदानन्दमित्यर्थः । सगुणमेवेत्यारभ्य ब्रह्मेत्याद्या इत्येतदन्तलक्षणपराणां श्रुतीनां तत्परत्वं दर्शितम् एतच्चानुवादमात्रं निर्गुणपरता... बोधनार्थं निर्गुणपरत्वञ्च तथेत्यादिना उपसंहरिष्यतीत्येतेनानन्तरग्रन्थेन ज्ञेयं तदेतदकल्पनायेत्यस्याभिप्रायः, तत्त्वमसीत्यादीत्यत्रादिपदादहं ब्रह्मास्मि ब्रह्मैवास्मि अयमात्मा ब्रह्मेत्यादिग्रहणम् एकार्थाभिधाने सामानाधिकरण्यमितिशब्दयोरेव सामानाधिकरण्यं नार्थयोरित्यर्थः । पृथगर्थत्वं परिहरति यथोक्तमिति तद्धित एवेत्यन्वयः तस्यैव तद्धितान्तस्यैवानुपयुक्ताभिधानशक्तितया प्रतीक्षमाणस्योपपदेनाभिधारूपविषयदानमात्रं हि क्रियत इत्यर्थः । अजहत्स्वार्थया न जहत् न त्यजन् स्वार्थो नीलगुणादिरूपो यस्यां तया निरूढलक्षणया नितरां रूढा निरूढा साचासौ लक्षणा च तया अनादिपरम्परासिद्धया न साम्प्रतं रचितयेत्यर्थः । नीलमुत्पलमितिवत्सामानाधिकरण्यमित्यनुषज्यते स्वरूपसत्त्वामात्रेण नहि किञ्चिद्विशेषणमिति स्वबुद्ध्येत्यस्य वार्त्तिकस्य पूर्वार्द्धे येन नीलादिना कर्त्रा स्वबुद्ध्या स्वाकारज्ञानेन करणभूतेन विशेष्यमुत्पलादि व्यज्यते अवभास्यते तद्विशेषणमित्यर्थः अस्थूलादिवाक्यादीनामित्यादिकमप्यकल्पनायेत्यस्यैवाभिप्रायः सामानाधिकरण्येन निषेधावशेषत्वेन चोपाधिपरित्यागात् उपासनादिति मात्रार्थं त्यादित्रयस्याभिप्रायः आदिग्रहणात् सृष्ट्यादिक्रियार्थेति क्रिया यज्ञादिः अन्यार्थेति पाठे अपवादार्थेत्यर्थः ॥ अथ स्वव्याख्या सन्मार्गमादिश्येत्युक्तम् आदेशे च "तत्तु समन्वयात्" (१।१।४) इतिन्यायेन वेदसमन्वयापेक्षा लभ्यते समन्वयपरा काष्ठा च—

"वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानितिशब्द्यते ॥

इत्युक्तलक्षणे परतत्त्व एव तच्च कैश्चिद्वस्तुनो निर्विशेषमेव मन्यमानैर्ब्रह्मेति शब्द्यते स्वाभाविकशक्त्यानन्तविशेषमेव मन्यमानैः श्रीभागवतैस्तु परमात्मेति भगवानिति च तत्रान्तर्यामित्वमात्रशक्त्या भगवानेव परमात्मेति शुद्धपरिपूर्णैश्वर्य्याद्यात्मिकया परमधामादौ स्वयं विलसन्त्या वशीकृतमायाशक्तिकया परमस्वरूपशक्त्या तु भगवानिति अद्वयत्वञ्च शक्तिमात्रं विना शक्तेरभावात् तां च विना कार्य्याभावात् वस्त्वन्तरात्यन्ताभावाच्चेति एवमेव खलु ...द्वितीयं ब्रह्म नेहनानास्ति किञ्चनेत्यनयोर्निषेध्यांस्तदवाधभूतांश्चार्थान् स्वयमाह मन्त्रवर्णः "न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति तदेवं सति मध्यमं मतं नास्याक्षिप्य सर्वशक्तिविशिष्टपरब्रह्मणि श्रीभगवति देवस्य प्रवृत्तिं सम्मतां निर्विशेषब्रह्मण्यसङ्गतां मन्यमानः श्रीविष्णुरातत्वेन तद्गुणाद्यपलापनिन्दामसहिष्णुः श्रीमुनिमताभ्युपगमेन स्वमतं पुपुक्षुः केवलतन्मात्रवेदार्थिन ...क्षिपति ब्रह्मन्निति अथवा पूर्वोक्तं सर्ववेदमयो विप्रः स... वमयो ह्यहमित्येवाक्षेपबीजं मन्तव्यं यतस्तत्र व्याख्याते वेदानां श्रीभगवत्येव तात्पर्य्यमङ्गीकृत्य पूर्वरीत्या परमनमाक्षिपति ब्रह्मन्निति तैर्व्याख्यातं तत्र गुणेन तावद्वृत्तिर्न सम्भवतीति निर्गुणे गुणवृत्तय इत्युक्तं गुणाः सत्त्वादयस्तत्कार्य्यभूताः शुक्लशीतादयश्च तद्वतीते इत्यर्थः । निर्गुणत्वादेव आतिनिर्देश्यत्व-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अपि निरस्तं गुणैभेदत्वाज्ञातेः तथा स्वरूपानिर्देश्यत्वञ्च निर्गुणत्वेनैव दृष्टश्रुतविलक्षणस्वरूपत्वात् अत आनन्दादिपदैश्च न तन्निर्देश्यः प्रसिद्धवित्तवृत्तिविशेषादावेव तेषां सङ्केतितत्वादिति तेषां मतम् अतोऽर्थापत्तिसहितानि वृत्त्यन्तराणि च निर्गुणत्वादिभिर्निरस्तान्येवेति स्वरूपभूतगुणाश्च तेषां मते न सन्तीति निर्विशेषब्रह्मणि तेषां वेदसङ्गतिर्न सम्भवत्येव श्रीभागवतानान्तु श्रीभगवतो विलक्षणस्वरूपत्वेऽपि विलक्षणस्वरूपरापौरुषेयशब्दवाच्यतया मायिकगुणासम्बद्धत्वेऽपि मायातीतानन्तगुणतया सदसद्भ्यां परत्वेऽपि तेन तयोरनुस्यूततया सर्वा अपि वृत्तयः श्रीभगवति मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते ह्यहमिति "वेदैश्च सर्वैरहमेव वेद्यः" इति च श्रीभगवत्सम्मत्या यथायथं सन्त्येव "यतो वाचो निवर्त्तन्ते" इत्यादिकं त्वानन्त्यादिपरमेव केवलानासौ यत इत्यवधित्वनिर्देशो न घटते कर्मणा ज्ञानेन वा आत्तमेवावधिः क्रियते नत्वनात्तमिति अन्यथा यच्छब्देनापि निर्देष्टुं न शक्यते अप्राप्येति तु प्रकर्षेणैवाप्तिं निषेधयति न त्वंशेनापि "आनन्दं ब्रह्मणो विद्वान् बिभेति कुतश्चनेति' मन्त्रशेषे(ण) तु दर्शयिष्यत एव ज्ञानेन तत्प्राप्तिः एतेन यद्वाचानभ्युदितमित्यपि व्याख्यातम् अत्राप्यतिशब्दोऽस्तीति अभिशब्दप्रयोगात् अवचनेनैव प्रोवाचेत्यपि यतो वाच इत्यभिप्रायमेव अनन्ततया वक्तुमशक्यत्वमेव तस्याः प्रवचनमिति ततश्च "शास्त्रयोनित्वात्" इति "श्रुतेस्तु शब्दमूलत्वात्" इति "तर्काप्रतिष्ठानात्" इत्यादिन्यायेभ्यः तं त्वौपनिषदं पुरुषं पृच्छामीति । नैषा तर्केण मतिरपनेया प्रोक्तान्येन सुज्ञानाय प्रेष्ठेत्यादि श्रुतेश्च शास्त्रैकप्रमाणत्वादस्त्येव सर्ववेदसङ्गतिर्नच प्रमाणान्तरप्रयुक्तदोषगन्धोऽपीति विवेचनीयं तस्मात्तैः सम्मते निर्विशेषे ब्रह्मणि कथं चरन्ति नैवं चरन्तीत्यर्थः ॥ १ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

श्रीमते रामानुजाय नमः ।

अनिर्देश्ये चेतनाचेतनसजातीयतया निर्देष्टुमशक्ये निर्गुणे त्रिगुणप्रत्यनीके तद्गुणप्रवृत्तिनिमित्ताश्च श्रुतयः कथं प्रवर्त्तन्ते नहि प्रवृत्तिनिमित्तप्रहाणेनशब्दः प्रतिपादयितुमलमिति प्रश्नार्थः ॥ १ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

"सर्ववेदमयो विप्रः सर्वदेवमयोऽस्म्यहम्" इति वेदानां ब्रह्मप्रमापकत्वं भगवदुक्त्यैवावगतं तत्पूर्वाध्यायेऽपि "विशुद्धसत्त्वधाम्न्यद्धा त्वयि शास्त्रशरीरिणि" इति बलिवचनेनाप्यवगतं तत्पूर्वाध्यायेऽपि " ब्रह्म ते हृदयं शुक्लम् " इत्यादिना शास्त्रयोनेस्त्वमात्मनः इत्यन्तेन मुनिवचसाप्यवगतम् श्रूयते चैवं " सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति इति । स्मर्यते च "वेदैश्च सर्वैरहमेव वेद्यः" इति ब्रह्मणश्चिदचिद्वैलक्षण्यं च बहुशः प्रतिपादितं तत्र चिदचिद्विलक्षणब्रह्मस्वरूपस्वभावपराणां ".सत्यं ज्ञानमनन्तम्, यः सर्वज्ञः सर्ववित्" इत्यादिश्रुतिवचसां तत्प्रमापकत्वेऽपि "अयमात्मा ब्रह्म' तत्त्वमसि ' सर्वं खल्विदं ब्रह्म" इत्यादिना परमात्मशब्दसमानाधिकरणतया श्रुतानां चिदचिद्वाचिनां शब्दानां कथं परमात्मप्रमापकत्वम् ? इति पृच्छति राजा-ब्रह्मन्निति । हे ब्रह्मन् ! गुणवृत्तय इत्यत्र गुणशब्दो विशेषणपरः गुणेन जातिगुणक्रियान्यतमेन द्वारभूतेन वृत्तिर्बोधनं यासां ताः जात्यादिकं प्रवृत्तिनिमित्तीकृत्य तद्विशिष्टाभिधायिन्यः श्रुतयः चिदचित्पराः कथं ब्रह्मणि साक्षाच्चरन्ति प्रवर्त्तन्ते न हि प्रवृत्तिनिमित्तप्रहाणेन शब्दः प्रतिपादयितुमलमिति प्रश्नार्थः न च लक्षणया चरन्तीति वक्तुं युक्तम् उदाहृतश्रुतिस्मृत्यादिभ्योऽभिधावृत्तेरेवावगमात् न च कतिपयश्रुतीनां तत्र मुख्यवृत्तिः चिदचिदादिपराणां तु लक्षणावृत्तिरिति युक्तं " सर्वे वेदा यत्पदमामनन्ति "वेदैश्च सर्वैरहम्" इतिशब्दस्वारस्यात्सर्वासामपि तस्मिन्नभिधावृत्तेरेवावगमादत एव साक्षादित्युक्तं तावज्जातिशब्दानां वृत्त्यसम्भवं व्यञ्जयन् विशिनष्टि अनिर्देश्ये चेतनाचेतनसजातीयतया निर्देष्टुमशक्ये तत्र हेतुः सदसतः परे सच्चासच्च तयोः समाहारस्तस्मात्परे चिदचिद्भ्यां परे विलक्षणे अन्यस्मिन्निति यावत् न हि चिदचिद्गतजातिप्रवृत्तिनिमित्तकशब्दानां चिदचिद्भ्यामन्यस्मिन्मुख्यवृत्तिः सम्भवतीति भावः । अथ गुणशब्दानां वृत्त्यसम्भवं द्योतयितुं विशिनष्टि निर्गुण इति । निर्गतत्रैगुण्ये त्रैगुण्यप्रत्यनीके यद्वा गुणशब्दानां ये ये प्रवृत्तिनिमित्तभूताः गुणास्तेभ्यः सर्वेभ्यः निर्गते निर्गुणे इति निष्क्रियत्वाद्युपलक्षणम् ॥ १ ॥

---

श्री श्रीनिवाससूरिकृत तत्त्वदीपिका ।

श्रीमते रामानुजाय नमः ।

श्रीश्रीनिवासदासाख्यो नत्वा श्रीयतिशेखरम् ।
रामानुजं करोत्याख्यां व्याख्यां वेदस्तुतेर्गुणैः ॥
वेदवेदान्ततत्त्वज्ञैः श्रीसुदर्शनसूरिभिः ।
शुकपक्षानुसारेण कृतं व्याख्यानमुत्तमम् ॥
तद्वाक्यान्येव सङ्गृह्य मया तत्करणक्षणात् ।
अन्यान्यपि प्रमाणानि क्रियते तत्सविस्तरम् ॥

तत्र—

"एवं स्वभक्तयो राजन् भगवान् भक्तभक्तिमान् ।
उषित्वादिश्य सन्मार्गं पुनर्द्वारवतीमगात्" ॥

इत्युक्तं शुकार्यैः एवमिति कथम् इत्थं "चराचरमिदं विश्वं भावा ये चास्य हेतवः । मद्रूपाणीति चेतस्याधत्से विप्रो मदीक्षया । तस्माद्ब्रह्मऋषीनेतान् ब्रह्मन्मच्छ्रद्धयार्चय । एवं चेदर्चितोऽस्म्यद्धा नान्यथा भूरिभूतिभिः " । इति पूर्वोक्तप्रकारेण सन्मार्गं सतां भागवतानां श्रुतिस्मृत्याद्युक्तभगवदाराधनरूपमुपदिश्य भगवान् द्वारवतीमगादित्युक्तमिति तत्र एतस्मादपि पूर्वं " भवान् हि सर्वभूतानामात्मा साक्षी स्वदृक् प्रभो इति मैथिलेनोक्तं ।

नाथ नो दर्शनं प्राप्तः परं परमपूरुषः ।
यहींदं शक्तिभिः सृष्ट्वा प्रविष्टो ह्यात्मसत्तया ॥

इति च श्रुतदेवेनोक्तं श्रुत्वा विष्णुरातः इत्थम्भूते सदा--

श्रीश्रीनिवासशूरिकृततत्त्वदीपिका ।

मात्रे ब्रह्मणि श्रुतीनां प्रवृत्तिमघटमानां मन्यानः पृच्छति ब्रह्मन्निति । भो ब्रह्मन् ! ब्रह्मणि निष्णात ! कथं तादृशे ब्रह्मणि श्रुतयः साक्षाच्चरन्ति कथम्भूताः श्रुतयः गुणवृत्तयः गुणेषु सत्त्वादिषु तत्प्रचुरेषु पुरुषेषु वृत्तिर्यासां तादृश्यः तथा चोक्तं श्रीगीतोपनिषदि "त्रैगुण्यविषया वेदाः" इति कथम्भूते ब्रह्मणि अनिर्देश्ये चेतनाचेतनसजातीयतया निर्देष्टुमशक्ये चिदचिद्विलक्षणत्वात् तथा हि अचिद्वस्तुनः स्वप्रकाशज्ञानैकाकारतया तदात्मभूतश्चेतनो विलक्षणः क्षरं प्रधानममृताक्षरो हर एषोणुरात्मा इत्यादिश्रुतेः तस्मादपि परमात्मा चिदचिद्व्यापकतया नियन्तृतया शेषितया सर्वाधारतया अचिन्त्यशक्तितया ज्ञानानन्दैकरूपतया चात्यन्तविलक्षणः "क्षरात्मानावीशते देव एक' अणोरणीयान्" इत्यादि श्रुतेः पुनः कीदृशे निर्गुणे निर्गतत्रिगुणे हेयप्रत्यनीके इत्यर्थः तदुक्तं "सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः" इति अत एवानन्ताप्राकृतगुणाकरे तदप्युक्तं—

"नहि तस्य गुणाः सर्वे सर्वैर्मुनिगणैरपि ।
वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैः ॥
तेजोबलैश्वर्य्यमहावबोधः स्ववीर्यशक्त्यादिगुणैकराशिः ।
परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥

इत्यादि पुनः कीदृशे सदसतः परे चिदचिद्विलक्षणे तयोर्नियन्तरीत्यर्थः "तदनुप्रविश्य । सच्चत्यच्चाभवत् । एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादिश्रुतेः ननु "सदेव सौम्येदमग्र आसीत् 'एकमेवाद्वितीयम्" इत्यादिश्रुतिभिः सजातीयादिभेदराहित्येन हेयाहेयसमस्तगुणदरिद्रे ब्रह्मणि कथं सगुणत्वप्रतिपादनं तथासति ब्रह्मणः श्रुतिगोचरत्वेन कथं चरन्तीति प्रश्नानर्थक्यमेवेति चेन्न सूक्ष्मचिदचिद्विशिष्टवस्तु प्रतिपादनपरत्वात्तादृश्याः श्रुतेः अन्यथा तादृशब्रह्मणः सकाशाज्जगदुत्पत्त्यसम्भवात् ननु सर्वज्ञत्वादय ईश्वरगुणा नतु निर्विशेषे ब्रह्मणि तेषां सम्भवः तस्यापि मायोपाधिकत्वमेव सर्वज्ञत्वादिकं नतु स्वाभाविकम् "अस्मान्मायी सृजते विश्वमेतत्" इत्यादिश्रुतेरिति चेदीदृशं वाक्यम् आस्तिकोभूत्वा कथं ब्रूषे भोः "न तत्समश्चाभ्यधिकश्च दृश्यते 'न त्वत्समोस्त्यभ्यधिकः कुतोऽन्यः" इत्यादि श्रुतिस्मृतिभिस्तस्य समाभ्यधिकदरिद्रत्वेन प्रतिपादनादीश्वरातिरिक्तं गुणदरिद्रं ब्रह्म त्वया कुतोऽवगतम् अस्मान्मायीत्यत्र मायाशब्दो विचित्रकार्यकरत्वज्ञापकः आसुरमायासु तथा दर्शनात् "गौरनाद्यन्तवती नित्या सततविक्रिया" इत्यादिश्रुतिस्मृतिभिस्तस्या नित्यत्वावगमात् ननु "यतो वाचो निवर्त्तन्ते" इत्यादिभिस्तस्य ब्रह्मणः श्रुत्यगोचरत्वं श्रूयते इति चेत्सत्यं तत्तु ब्रह्मणो महिम्न इयत्ता श्रुत्यगोचरा इत्यभिप्रायोऽस्याः श्रुतेः "आनन्दं ब्रह्मणो विद्वान्" इत्युत्तरार्द्धेन तस्य ज्ञानविषयत्वावगमात् तथाचानन्तमहिमत्वमुक्तं भारते—

"वर्षायुतैर्यस्य गुणा न शक्या—
वक्तुं समेतैरपि सर्वदेवैः ॥
महात्मनः शङ्खचक्रासिपाणे—
र्विष्णोर्जिष्णोर्वसुदेवात्मजस्य ॥"

इति अन्यथा स्वरूपेण श्रुत्यगोचरत्वे प्रमाणाविषयत्वेन तादृशस्य ब्रह्मणस्तुच्छत्वमेव स्यात् अतो हेयप्रत्यनीके अपरिच्छिन्नमहिम्नि ब्रह्मणि तत्तद्गुणप्रवृत्तिनिमित्ताश्च श्रुतयः कथं प्रवर्त्तन्ते न हि प्रवृत्तिनिमित्तप्रहाणेन शब्दः प्रतिपादयितुं समर्थ इति प्रश्नार्थ इत्यर्थः ॥ १ ॥

---

योगिरामनुजाचार्यकृतसरलाव्याख्या ।

श्रीमते रामानुजाय नमः ।

श्रीकृष्णाय नमः ।

श्रीकृष्णं शिरसा नत्वा व्याख्यां वेदस्तुतेरिमाम् ।
योगिरामानुजार्योयं तनोति महतां मुदे ॥

श्रीवृन्दावनमाधवाङ्घ्रिसुरजः कुञ्जालिसंसेविना-
रम्या योगिसमाह्वयेन रचिता रामानुजार्येण सा ॥

सद्गूढार्थविबोधिनी सुललिता वेदस्तुतेर्भावुका—
श्रीकृष्णस्य समर्पिताऽङ्घ्रिकमले व्याख्योत्तमा राजते ॥

अथात्र "सर्वे वेदा यत्पदमामनन्ति" वेदैश्च सर्वैरहमेव वेद्यः" इत्यादिवचनैः ब्रह्मणः सर्ववेदप्रतिपाद्यत्वं प्रतीयते तत्र "सत्यं ज्ञानमनन्तं ब्रह्म 'निर्गुणं निर्मलं शान्तं । यत्तदद्रेश्यमग्राह्यम्" इत्यादीनां स्वरूपमात्रप्रतिपादकानां तथा निर्गुणत्वबोधकानाञ्च श्रुतीनां ब्रह्मप्रतिपादकत्वसम्भवेपि "सोऽकामयत । बहुस्याम् । तत्सृष्ट्वा । तदेवानुप्राविशतत् । अन्तः प्रविष्टश्शास्ता जनानाम् इत्यादीनां सगुणत्वप्रतिपादकानां श्रुतीनां निर्गुणस्य ब्रह्मणः कथं प्रतिपादकत्वमिति "केवलो निर्गुणश्च" इत्यादिश्रुतीनामापातज्ञानेन ब्रह्मगुणसामान्यरहितमिति मन्वानः राजा पृच्छति ब्रह्मन्निति । गुणवृत्तयः गुणशब्दोऽत्र जातिगुणक्रियाविशेषणमात्रपरः गुणेषु वृत्तिर्यासां ताः गुणवृत्तयः वृत्तिश्च शक्तिलक्षणागौण्यन्यतमरूपा तथाच गुणप्रतिपादकाः गुणविशिष्टवस्तुप्रतिपादकाः इतिभावः केवलगुणप्रतिपादने तात्पर्य्याभावत्, सोऽकामयत' इत्याद्याः श्रुतयः सदसतः परे चेतनाचेतनाद्विलक्षणे इदञ्च हेतुगर्भविशेषणम् अत एव निर्गुणे जातिगुणक्रियादिविशेषणरहिते अत एवानिर्देश्ये अनिर्वचनीये ब्रह्मणि साक्षात् मुख्यावृत्त्या कथं चरन्ति प्रतिपादयन्तीत्यर्थः । अस्य प्रत्युत्तरन्तु, इत्येतद्वर्णितं राजन् यन्नः प्रश्नः कृतस्त्वया यथा ब्रह्मण्यनिर्देश्ये निर्गुणेपि मनश्चरेत्" इतिश्लोकपर्यन्तेन ग्रन्थेन समर्थितम् तस्य श्लोकस्यायमर्थः इति पूर्वोक्तप्रकारेण जयजयेति श्लोकमारभ्य इत्येतद्वर्णितं राजन्नित्यन्तेन निर्गुणेपि अनिर्देश्ये ब्रह्मणि यथा मनः अत्र मनश्शब्देन मनःपूर्विका वाग् लक्ष्यते "मनःपूर्वो वागुत्तरः" इतिश्रुतेः यथा येन प्रकारेण निर्गुणे अनिर्देश्ये ब्रह्मणि वेदवाक् चरेत् प्रतिपादयेत् अस्यायम्भावः जयजयेत्यारभ्य इत्येतद्वर्णिममित्यन्तं ब्रह्मणः सगुणत्वस्यैव प्रतिपादनात् तादृशसगुणत्वप्रतिपादनस्य कथं चरन्ति श्रुतयः ? इति प्रश्नस्य प्रत्युत्तरत्वेन प्रतिपादनात् प्रश्नस्य प्रतिवचनं सुसङ्गतं प्रत्युत्तरप्रदानपक्षे अनिर्देश्यशब्दस्य साकल्येन निरूपयितुमशक्य इत्यर्थः । "यतो वाचो निवर्त्तन्ते" इति वचनात् निर्गुणशब्दस्तु कर्म्माधीनप्राकृतगुणराहित्यपरः नतु स्वाभाविक;

### योगिरामानुजाचार्यकृतसरलव्याख्या ।

कल्याणगुणराहित्यपरः स्वाभाविककल्याणगुणानां जयजये-त्यारभ्य प्रतिपादनात् तथा च ब्रह्मणः स्वाभाविकदिव्यगुणवत्त्वात् गुणप्रतिपादकानां श्रुतीनां ब्रह्मप्रतिपादने विरोधो नास्तीति भावः एतादृशतात्पर्यज्ञापनायैव द्वितीयश्लोके "बुद्धीन्द्रियमनःप्राणान् लोकानामसृजत्प्रभुः" इत्युक्तम् अत्रापि लोकानामसृजदित्युक्ते सृष्टिकर्तृत्वतदुपयुक्तज्ञानशक्त्यादिगुणानामप्यर्थसिद्धत्वेन ब्रह्म सगुणमेवातः गुणवृत्तीनां श्रुतीनां ब्रह्मप्रतिपादने विरोधो नास्तीति लोकानामसृजत्प्रभुरितिवाक्यस्य तात्पर्यमिति रमणीयम् ननु निर्गुणशब्दस्य कर्मपरतन्त्रप्राकृतगुणराहित्यपरत्वे किम्मानमिति चेदुच्यते निर्गुणत्वप्रतिपादकेष्वेव वाक्येषु सगुणत्वस्यापि प्रतिपादनात् तथा च श्रुतिः "साक्षी चेता केवलो निर्गुणश्च" इति अत्र श्रुतौ साक्षित्वादिगुणानां निर्गुणत्वस्यापि प्रतिपादनात् तथा "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिश्रुतिभिश्च भगवतः अप्राकृतदिव्यगुणगणस्य प्रतिपादनात् निर्गुणशब्दः उत्सर्गापवादन्यायेन प्राकृतौपाधिकगुणनिषेधपरः इतिनिश्चीयते (श्रीधरीव्याख्यायामपि एवमेव प्रतिपादितम् अयमभिप्रायः इत्यारभ्य सगुणमेव गुणैरनभिभूतं सर्वज्ञं सर्वशक्तिम् सर्वेश्वरं सर्वनियन्तारं सर्वोपास्यं सर्वकर्मफलप्रदातारं समस्तकल्याणगुणनिलयं सच्चिदानन्दं भगवन्तं श्रुतयः प्रतिपादयन्ति यथा " यस्सर्वज्ञस्सर्ववित् 'यस्यज्ञानमयन्तपः 'सर्वस्यवशी सर्वस्येशानः ' यः पृथिव्यां तिष्ठन् पृथिव्याः अन्तरः ' सोऽकामयत बहुस्याम्' स ऐक्षत तत्तेजो सृजत सत्यं ज्ञानमनन्तं ब्रह्म "इत्याद्याः इत्यन्तेन अतः सगुणनिर्गुणशब्दयोः स्वाभाविककल्याणगुणगणवत्त्व कर्माधीनप्राकृतगुणराहित्यपरत्वे न कोपि विरोधः सर्वतत्त्वदर्शिसम्मतश्च' हे ब्रह्मन् गुणवृत्तयः श्रुतयः सदसतः परे निर्गुणे अनिर्देश्ये ब्रह्मणि साक्षात् कथं चरन्तीत्यन्वयः) ॥ १ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यदनन्तनिगमनिकरनिरूपितगुणगणाकरं ब्रह्म तदेव कृष्णनाम्नाऽवतीर्णं नान्यदित्यतो मुमुक्षुभिरत्र भक्तिः इतरत्र विरक्तिमूला कर्तव्येति, विधीयते ऽस्मिन्नध्याये तत्र नारदनारायणसम्वादलक्षणमितिहासमुत्थापयितुं शुकं परीक्षित्पृच्छति ब्रह्मन्नित्यादिना । हे ब्रह्मन् ! पूर्णकाम " सर्वे वेदा यत्पदमामनन्ति" इति श्रूयते तत्र श्रुतयः साक्षादामनन्त्युत लक्षणया वा ? तत्र न प्रथम इत्याह—कथमिति । साक्षात् चरन्ति वर्तन्ते वाच्यकत्वेनेति शेषः । तस्य काऽनुपपत्तिरत्राह अनिर्देश्य इति "यत्तदद्रेश्यम्" इति श्रुतेः । न द्वितीय इत्याह निर्गुण इति । "केवलो निर्गुणश्च" इतिश्रुतेः । गुणैः प्रवर्तमानस्य कथं निर्गुणत्वमुपपद्यत इत्यत्राह सदसत इति निर्गुणे गुणसमर्पकत्वेन श्रुतीनां सञ्चरणं कथमिति दौर्घट्यमापादयितुं शक्यन्ते गाढ्यवस्तु तादृशावेदकत्वे न कोपि विरोध इति तत्राह गुणवृत्तय इति । गुणार्पकत्वेन गुणवृत्तियासां तास्तथा "तुविग्रीवोवपोदरः सुबाहुरन्धसोमदे गुणाः श्रुताः सुविदश्च देवे" इत्यादिश्रुतेः । अत एव नः संशयं छिन्द्धीतिवाक्यशेषः ॥१॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ब्रह्मन् ब्रह्मण्यनिर्देश्य इत्यादिकमिति तत्र सूत्र इत्यन्तं अत्र निर्गुण इति शुक्लशीतादितत्कारणसत्त्वादिगुणातीते निर्गुणत्वादेव निर्जातित्वं प्राप्तं गुणभेदत्वाज्जातेस्तथा स्वरूपानिर्देश्यत्वञ्च । तथाच प्रयोगः । ब्रह्मस्वरूपं निर्देश्यं निर्गुणत्वात् यन्नैवं तन्नैवं यथा घटादीति अत्र च त इति नारायणस्वरूपं भगवान् अन्वित उपक्रमोपसंहारादिषु प्रतिपाद्यते नानुगतो यत्र अथैषां पद्यानां शृङ्खला केषाञ्चिद्व्याख्या च क्रियते ॥ १—१३ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अथ श्रुतिस्तवस्याकाङ्क्षप्रसङ्गे सङ्गतिरुच्यते तत्र पूर्वोक्तानां गोपाङ्गनानां त्रैविध्ये नित्यसिद्धाया ऊढानूढारूपास्तास्तु अप्रकट एव वृन्दावने ऽप्रकटमेव विलसता श्रीकृष्णेन सह स्थिताः अप्रकटा एव सत्यः मुनिरूपास्तु कुरुक्षेत्रयात्रायां कृष्णेन सह संयुज्य तमेवापुः ध्वस्तजीवकोशास्तमध्यगामित्युक्तेः । श्रुतिरूपास्तु श्रुतिरूपमेवाश्रित्य निगूढमेव द्वारकाधिनाथमेवाश्रितवत्यः सममेतं स्तुवन्ति चेति तत्स्तवे निरूपयितव्ये सति तत्र पूर्वाध्यायान्ते "न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम्" इत्यादिभिर्भक्तयोः श्रुतदेवबहुलाश्वयोरुपदेशं कृत्वा भगवान् द्वारकां ययौ तत्र भगवदुपदेशे तात्पर्यं चतुर्भुजमिति चतुर्भुजमेव न दयितम पेक्षिककत्वात् द्विभुजत्वं नराकृतिसर्वेभ्यो मम दयितमित्यर्थः तत्र हेतुमाह "सर्ववेदमयो विप्रः सर्वदेवमयो ह्यहम्" अहं द्विभुजः सर्वदेवमयत्वात् द्विभुजं दयितमित्यर्थः । अज्ञास्त्वेतन्न जानन्तीत्याह दुष्प्रज्ञा इत्यादि मां गुरुम् उपदेष्टारं विप्रं विशेषण प्रतिपूरयतीति विप्रं परिपूरकं पोषकमित्यर्थः । आत्मानं सर्वात्मानम् अर्चादौ प्रतिमादौ अविदित्वैव असूयवः सन्तः अवजानन्ति आदिशब्दात् वैष्णवेषु च कुतः इज्यदृष्टयः इज्यं यज्ञियं कर्म तत्रैव दृष्टिर्येषाम् अत एव दुष्प्रज्ञाः विप्रस्य दयितत्वे हेतुमाह चराचरमित्यादि न केवलं चराचरं येचास्य हेतवो भावास्तेच मद्रूपाणीति विप्रज्ञेनस्याधत्ते अत एवंविध एव ब्राह्मणः एवंविध एव ब्रह्मर्षिः तस्माद्ब्रह्मऋषीन् एतान् अर्चय एवञ्चेत् तदा अर्चितोऽस्मि अद्धा साक्षादेव मद्भावभावितानामर्चनमेव मेऽर्चनं नान्यथा एवं स्वभक्तयोः श्रुतदेवबहुलाश्वयोः सन्मार्गं वेदमार्गम् आदिश्य भगवान् द्वारकां ययौ इत्यादिषु वेदप्रतिपाद्यं भगवद्भागवताराधनमेव आराधनं हि सविशेषस्य ब्रह्मण एव नतु निर्विशेषस्य श्रुतयश्च सविशेषब्रह्मप्रतिपादिका "आनन्दं ब्रह्मणो रूपम्" इति ब्रह्मणः सम्बन्धित्वात् षष्ठीरूपमिति स्वस्वामिभावसम्बन्धः अहं बहुस्यां सोऽकामयत इत्यादिषु इच्छावत्त्वात् सविशेषत्वमेव तेन श्रुतीनां शब्दात्मकत्वात् शब्दानाञ्च मुख्यलक्षणागुणभेदेन त्रैवृत्तिकत्वं मुख्या वृत्तिश्च रूढियोग-

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

भेदेन द्विधा रूढिश्च स्वरूपेण जात्या गुणेन चेति त्रिधा डित्थः गौः शुक्ल इति योगस्तु मुख्यलक्षणा गौणीष्वेव क्वचित्पदार्थयोगेन क्वचित् प्रकृतिप्रत्ययार्थयोगेन योगः यथा पङ्कजमिति पदस्य तदर्थस्य च कमलस्याश्रयस्य योगेन मुख्ये पङ्कजनिडप्रत्यययोगासिद्धिः जेपगमन इत्यादौ प्रकृतिप्रत्ययार्थसिद्धिः गङ्गायां घोष इति गमेर्डः घर्णाद्रिकरति गङ्गा घुष्यत इति घोषः आभीरपल्ली उभयोरेव प्रकृतिप्रत्ययसिद्ध्योः योगाभावात् लक्षणागौणीसादृश्यात् सम्बन्धान्तरश्चेति द्विधा सादृश्ये गौर्वाहीकः सम्बन्धान्तरत आयुर्घृतम् अत्रापि प्रकृतिप्रत्ययार्थयोगः गच्छतीति गौः वाहयतीति वाहीकः अयत इति आयुः घृततीति घृतं लक्षणा गौण्यो चानेनैव व्याख्याते एवम्विधशक्तिमच्छब्दकदम्बात्मिकानां श्रुतीनां निर्विशेषे ब्रह्मणि कथं चरणम् अतः सविशेषब्रह्मैव श्रुतिप्रतिपाद्यमिति तदनुकूल्यहेतोः सरस्वतीप्रेरितस्यैव परीक्षितो मनसि विचार आसीत् अहो भगवान् श्रीकृष्ण एव ब्रह्म निर्गुणत्वं चास्य प्राकृतगुणरहितत्वादिपरं नहि सर्वज्ञत्वादिगुणराहित्यपरं तथासति अनीश्वरत्वापत्तेः वस्तुतस्तु " यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः सर्वस्य वशी सर्वस्येशानः" इत्यादिश्रुतिप्रतिपादितास्य सर्वज्ञत्वादिगुणवत्ता तेन ब्रह्मशब्दोऽत्र मुख्यस्तेनैव बृहणत्वात् बृहत्वाच्चेति सविशेषं ब्रह्मैव कृष्णः अतः सविशेषत्वेन श्रुतिस्तूयमानतापि सिद्ध्येत् निर्विशेषं यदि लाक्षणिकेन ब्रह्मशब्देन केवलं चिन्मात्रमेव प्रतिपाद्यं तदा श्रुतेरप्यविषयः स्यादिति तर्क्यं निर्विशेषं ब्रह्मेति परमतमपाकर्तुं पृच्छति—ब्रह्मन्नित्यादि । ब्रह्मन् भोः ब्रह्मरात ! कथम् अनिर्देश्ये निर्विशेषे निर्गुणे ब्रह्मणि श्रुतयश्चरन्ति कथमिति सम्भावनापरं न तु प्रश्न परं कथं चरन्ति न चरन्तीत्यर्थः । तर्हि निर्देश्ये सर्वज्ञत्वादिना सविशेषे निर्गुणेप्राकृतादिगुणरहिते साक्षात्कृतविग्रहे परात्परे कृष्ण एव चरन्ति यतस्ता गुणवृत्तयः गुणेषु सर्वज्ञत्वादिष्वप्राकृतेषु भगवत्त्वादिलक्षणेषु वृत्तिरभिधालक्षणातात्पर्यरूपावृत्तिर्यासां ताः तथाभूतानां निर्विशेषे चरितुमसामर्थ्यात् सविशेषे साक्षाद्ब्रह्मणि चरितुं तात्पर्यादिना कदाचिच्चरितुं समर्था भवन्ति तच्च साक्षाद्ब्रह्म श्रीकृष्ण एवासौ सदसत्परः कार्यकारणयोः परः क्षराक्षरयोः परः उक्तं चैतत्स्वयमेव —

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" ॥इति

तेन निर्विशेषे ब्रह्मणि श्रुतयश्चरितुं न सम्भवतीति मे मतं भवद्भिर्वा किमुच्यत इतिवाक्यार्थः ॥ १ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

श्रीकृष्णाय नमः ।

शब्दार्थयोरुत्तमयोः सम्बन्धो यादृशो मतः ।
तं विवेचयितुं कृष्णः श्रुतिगीतं चकार ह ॥
प्रमाणं ब्राह्मणः प्रोक्तः प्रमेयमपि वै बृहत् ।
स एव भगवान् कृष्णस्ततो भजनमीरितम् ॥
तत्रोपपत्तिः पृष्ट्वा वाच्यवाचकनिर्णये ।
अतो राजा श्रुतीनां वै निर्णयार्थमपृच्छत ॥
सगुणं चेद्ब्रह्मवाच्यं ब्राह्मणास्तत्र कारिकाः ।
ततोऽत्र भगवानेव पूज्यो नान्यः कथञ्चन ॥
मतान्तरोक्तिरेषा हि सिद्धान्ते वैदिके तथा ।
अनन्तगुणपूर्णो हि हरिर्ब्रह्मश्रुतिस्तथा ॥
अयमेकं स्वशक्तिं हि त्रेधा व्यासिविधाय हि ।
फलप्रमेयमाणत्वं सच्चिदानन्दतां गतम् ॥
तथापि साङ्ख्यसिद्धान्ते तथा तदुपजीवके ।
वैष्णवेऽन्यत्र वा वाच्यं श्रुतिसङ्ग्रहणं तथा ॥
अष्टत्रिंशे श्रुतीनां हि यथावाक्यं बृहद्वचेत् ।
तदर्थं पूर्वपक्षादिसिद्धान्तफलमीर्यते ॥

राजा भगवद्गुणाविरोधे परिहृते प्रमाणविरोधमाशङ्कते—ब्रह्मन्निति । ब्रह्मणि साक्षात्कथं श्रुतयश्चरन्तीति प्रश्नः अत्र श्रुतीनामेकवाक्यतामङ्गीकृत्य पृच्छति अर्थैकत्वादेकं वाक्यमिति । तत्र किं बृहद्वेदानां तात्पर्यार्थः आहोस्विद्वाक्यार्थ इति अखण्ड एव वाक्यार्थ इति मतमज्ञात्वा पृच्छति पदार्थाः कारणतामापन्नाः स्वसंसर्गं वाक्यार्थं बोधयन्तीति मन्यते "वेदैश्च सर्वैरहमेव वेद्यः" इति "सर्वे वेदा यत्पदमामनन्ति" इतिच श्रुतिस्मृतिभ्यां सर्ववेदानामेकार्थत्वप्रतिपादकत्वं च श्रूयते, श्रुतयश्च भगवतः क्रियाशक्तिं ज्ञानशक्तिं च प्रतिपादयन्ति नानाविधां शक्तिञ्च गुणमयीं मन्यते अतः सगुणाः श्रुतयः पदानां सङ्केतः लौकिक एवेति अलौकिके सङ्केताभावात् तैर्भगवत्सम्बन्धिनः पदार्थाः अलौकिकाः कथं स्मारयितव्याः लौकिकत्वे ब्रह्मणो लौकिकत्वापत्तिः तत्सम्बन्धात् अतः पूर्वपक्षे साधनपरत्वमेव वेदानाम् अतः स्वप्रकाशमेव ब्रह्मस्वानुभववेद्यं प्रसक्तं सत्कृतार्थतां करिष्यतीति प्रमेयबलेनैव कार्यसिद्धिः न प्रमाणबलेनेति पूर्वः पक्षः ब्रह्मण अलौकिकत्वार्थं हेतुमाह—अनिर्देश्यइति । निर्देशो लौकिकबुद्धिविषयीकरणम् अयं घटोऽयं पट इतिवत् बृहत्वबृंहणत्वयोगोपि विचारे क्रियमाणे लौकिकधर्मातिरिक्तत्वेन ब्रह्मणि फलिष्यतीति न ब्रह्मपदानुपपत्तिः—

"अवाच्यः सर्वशब्दानां बुद्ध्या वाच्यो निगद्यते ।
ततः समानधर्मेण व्यवहारो निरूप्यते " ॥ इति

किञ्च निर्गुणे निर्धर्मके श्रुतयश्च पदशो गुणवृत्तयः धर्मप्रतिपादकत्वात् अन्यथा संसर्गप्रत्यायकत्वं न स्यात् सर्वत्रैकार्थत्वप्रत्यायकत्वात् ब्रह्मणश्च धर्माङ्गीकारे अद्वैतहानिः अतः साक्षान्निर्धर्मके ब्रह्मणि कथं श्रुतयश्चरन्ति ननु कार्यकारणभावं स एवापन्न इति तत्प्रतिपादनद्वारा तत्र पर्यवसितास्तद्द्वारा धर्मिणि पर्यवस्यन्तीति लक्षणया गौण्या तात्पर्यवृत्त्या वा ब्रह्मपरत्वं भविष्यतीत्याशङ्क्याह—सदसतः परं इति । कार्यकारणवार्त्तानभिज्ञे किं तस्य स्वानन्दपूर्णस्य, कार्येण कारणेन वा प्रयोजनम् अतः सम्बन्धाभावात् गुणाभावादज्ञानादेव तात्पर्याभावाच्च न केनापि प्रकारेण श्रुतिप्रतिपाद्यं ब्रह्मेत्यर्थः ॥ १ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

श्रीगोविन्दो जयति ।

सप्ताशीतितमे ब्रह्मणस्वरूपं सर्वतोऽधिकम् ।
वेदैर्निरूपितं ज्ञातं नारदेन गुरोर्मुखात् ॥
मम रत्नवणिग्भावं रत्नान्यपरिचिन्वतः ।
हसन्तु सन्तो जिह्नेमि न स्वस्वान्तविनोदकृत् ॥
न मेऽस्ति वैदुष्यपि नापि भक्तिर्विरक्तिरक्तिर्न तथापि लौल्यात् ।
सुदुर्गमादेव भयामि वेदस्तुत्यर्थचिन्तामणिराशिमुच्चैः ॥
मां भीषितायामविवेकवायुः प्रवर्तते वारयितुं बलाचेत् ।
लिखाम्यतः स्वामिसनातनश्रीकृष्णाङ्घ्रिभास्वद्भक्ताबलम्बः ॥
प्रणम्य श्रीगुरुं भूयः श्रीकृष्णं करुणार्णवम् ।
लोकनाथं जगच्चक्षुः श्रीशुकं तमुपाश्रये ॥

पूर्वाध्यायान्ते सन्मार्गमादिश्य ममधामगादित्युक्तं तत्र सतां भक्तानां मार्गो हि भक्तियोगो भगवद्विषयकोऽवगम्यत एव एवं सतां ज्ञानिनां ज्ञानयोगोऽपि ब्रह्मविषयक एव ज्ञातव्यः किन्तु ब्रह्मणः श्रुतिप्रतिपादितत्वमेतावता बुध्यत इत्यतः पृच्छति ब्रह्मन्निति । ब्रह्मणि श्रुतयः कथं साक्षात् शब्दवृत्त्यानेन अभिधया वृत्त्या चरन्ति यतः अनिर्देश्ये अनिर्देष्टुमशक्ये जातिद्रव्यगुणक्रियासु मध्ये ब्रह्म किमपि न भवतीति तस्यानिर्देश्यत्वं तथाहि निर्गुणे गुणेभ्यः परस्मिन् सदसतः परे सत् पृथिव्यादि द्रव्यम् असत् अनिष्पन्नस्वभावं वस्तु क्रिया ताभ्यां परस्मिन् तथा तत्तदाश्रितत्वाज्जातेरपि परस्मिन् यद्वा सत् द्रव्यम् असत् अद्रव्यं जातिः क्रिया च ततः परस्मिन् गुणवृत्तयः गुणैः प्रवृत्तिनिमित्तैर्जात्यादिभिर्वर्तमानाः श्रुतयो निर्जात्यादिके ब्रह्मणि कथं चरन्ति ॥ १ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

श्रीमन्निम्बार्काय नमः ।

अथ सप्ताशीतितमे वेदैर्भगवत्स्तुतिः कृतेति वर्ण्यते । अत्र आचार्यवादध्वान्तभास्करैः श्रीकश्मीरिकेशवभट्टैः कृता व्याख्या कार्त्स्न्येनोपन्यस्यते—

सनन्दनपदद्वन्द्वं भक्तिनम्रेण चेतसा ।
प्रणम्य क्रियते व्याख्या ब्राह्म्यौपनिषदी मया ॥

तत्र श्रीदशमस्कन्धे पुष्टभूतां निरोधलक्षणं प्रारिं कृत्य सर्वस्य लक्ष्यभूतमाश्रयं श्रीकृष्णं श्रीशुकेन तत्तत् ब्रह्मरुद्रेन्द्रादिदेवानामस्तत्प्रभृतिभिश्चान्यस्कन्धस्थैश्च सर्वेषां विदुषां प्रमाणभूतैः शास्त्रविषयत्वेन प्रतिपादितं ज्ञात्वा तस्यैव सर्वज्ञसर्वशक्तेर्ब्रह्मणो भगवतः स्वरूपगुणशक्तिज्ञानान्मोक्षलक्षणं फलं निश्चित्य अन्येषां च स्वबुद्धिपरिकल्पितवेदविरुद्धकल्पनामालम्ब्य तदसम्भवञ्च निश्चित्यान्येषां तच्छ्रवणोत्सुकानां भक्तानामपि स्वबुद्धिपरामर्शहीनानां श्रीकृष्णे भगवत्यसम्भावनादिनिवृत्तये राजा परीक्षिन्महाभागवतः श्रीशुकं पृच्छति इत्येतदध्यायस्य बीजं श्रीकृष्णस्य शास्त्रविषयत्वं प्रमाणसिद्धं तथा च श्रूयते "तं त्वौपनिषदं पुरुषं पृच्छामः । सर्वे वेदा यत्पदमामनन्ति"

"सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥" इत्यादि

सूत्रितञ्च "शास्त्रयोनित्वात्" (१·१·३) स्मर्यते च भगवता स्वयमेव "वेदैश्च सर्वैरहमेव वेद्यः" इति अन्यत्रापि "नारायणपरा वेदाः" इत्यादि तज्ज्ञानान्मुक्तिरपि प्रमाणसिद्धा "जुष्टं पश्यत्यन्यमीशं यस्य महिमानमिति वीतशोकः यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्म वेति तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति तमेव विदित्वातिमृत्युमेति पृथगात्मानं प्रेरितारञ्च मत्वा संसारबन्धस्थितिमोक्षहेतुरित्याद्याः श्रुतयः—

"भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ।
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥"

इतिस्मृतेः "तन्निष्ठस्य मोक्षोपदेशात्" (१—१—७) इतिन्यायाच्च भगवता पराशरेणापि कैमुत्यन्यायेन श्रीकृष्णस्यैव ज्ञानान्मुक्तिः प्रतिपादिता चतुर्थांशे चैत्रावल्यां "तच्च रूपमुत्फुल्लपद्मदलामलाक्षमत्युज्ज्वलं पीतवस्त्रधार्यमलकिरीटकेयूरकटकोपशोभितमुदारपीवरचतुर्बाहुशङ्खचक्रगदाधरमतिरूढवैरानुभवेन भोजनस्नानाशनशयनादिष्ववस्थान्तरेषु ततस्तमेवाक्रोशोच्चारयंस्तमेव हृदये धारयन्नात्मन्यवधारयन् भगवद्दत्तचक्रांशुमालोज्ज्वलमक्षयतेजःस्वरूपं परमब्रह्मरूपमपगतरागद्वेषादिदोषं भगवन्तमद्राक्षीत् तावच्च भगवच्चक्रेणाशु व्यापादितः तेन तत्स्मरणदग्धाखिलाघसञ्चयो भगवतैवान्तरमुपनीतस्तस्मिन्नेव लयमुपययौ एतत्तवाभिहितं भगवानिहकीर्तितः संस्मृतश्च द्वेषानुबन्धेनाप्यखिलसुरासुरदुर्लभं फलं प्रयच्छति किमुत सम्यक् भक्तिमता" इत्यादिदण्डकैः केचित्तु—

"एवं स्वभक्तयो राजन्भगवान्भक्तभक्तिमान् ।
उषित्वादिश्य सन्मार्गं पुनर्द्वारवतीमगात् ॥"

इत्यत्र सतां स्वतः प्रमाणभूतानामप्रामाण्ये कारणशून्यानां वेदानां मार्गं निर्गुणब्रह्मपरत्वमुपदिश्य द्वारावतीमगादित्येतदध्यायस्योत्थानिकाबीजं कल्पयन्ति तदसत् । पूर्वाध्याये द्वयोर्विप्रराज्ञोरेकतरस्मा अपि तेषां विवक्षितार्थस्य भगवता नोपदिष्टत्वात् ग्रन्थान्तरे च काप्यप्रसिद्धेरतोऽस्मदुक्तस्यैव वरीयस्त्वं पूर्वश्लोकश्चैवमन्वेतव्यः स्वभक्तयोः समीपे उषित्वा विप्राय सन्मार्गं सतां भागवतानां मार्गं भगवतोऽप्याधिक्यपूजार्हत्वमादिश्य द्वारवतीमगादिति तथाच वक्ष्यते मद्भक्तपूजाभ्यधिकेति अत्रापि भक्तभक्तिमानिति विशेषणसार्थक्यमुक्तम् इदानीं प्रकृतं व्याख्यायते शब्दवृत्तिस्तावत् द्विधा मुख्या जघन्या चेति मुख्यानाम सामान्याविशिष्टव्यक्तिविषयाऽस्मात्पदादयमर्थो बोद्धव्य इतीश्वरेच्छारूपसङ्केतः शक्तिरिति तार्किकाः सामान्यमात्रविषयः स्वाभाविकपदार्थप्रतीतिजननसामर्थ्यवल्लक्षणसम्बन्ध इति मीमांसकाः सा च त्रिधा योगो रूढिर्योगरूढिश्चेति तत्रावयवयोगसापेक्षतयार्थज्ञापको योगः यथा माधवः लक्ष्मीकान्तः वासुदेवः नियन्ता शास्तेति सर्वाविप्रतिपन्नयोगेन प्रवृत्तिः जात्यादिविशिष्टवस्तुप्रतिपादिकावयवनिरपेक्षा रूढिः यथा घटः हरिः ब्राह्मणः कपित्थः नीलं पीतं उभयप्रवृत्तिहेतुका तृतीया यथा सोमः पङ्कजः जघन्यापि द्विधा लक्षणा गौणी चेति तत्र शक्यसम्बन्धे लक्षणा यथा गङ्गायां घोष इत्यत्र प्रवाहवाचकस्य गङ्गापदस्य तत्सम्बन्धे तीरवृत्तिः अत्र बोद्धव्यविधेयान्वयानुपपत्तिर्बीजं

श्रीशुक उवाच ।

बुद्धीन्द्रियमनःप्राणान् जनानामसृजत्प्रभुः ।
मात्राऽर्थञ्च भवार्थञ्च आत्मने कल्पनाय च ॥ २ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यथा मञ्चाः क्रोशन्तीत्यत्र मञ्चशक्तस्य मञ्चपदस्य तत्सम्बन्धेषु पुरुषेषु वृत्तिः शक्यवृत्तिलक्ष्यमाणगुणसम्बन्धे गौणी यथा सिंहो माणवक इत्यत्र सिंहवृत्तिशौर्यादिगुणलक्षणया तद्वति माणवके वृत्तिरिति अत एव लक्षणा गौणीतो बलवती गौण्यावृत्तिद्वयात्मकत्वात्सैव लक्षितलक्षणेति केचिदुच्यते तदुक्तम् ।

"अभिधेयाविनाभूतप्रवृत्तिर्लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥ इति

व्यञ्जनाख्याऽपरावृत्तिरित्यालङ्कारिकाः तेतु गौणीं लक्षणामध्ये अन्तर्भाव्य मुख्या लक्षणा व्यञ्जना चेति वृत्तेस्त्रैविध्यमाचक्षते व्यङ्ग्यमार्थज्ञापिका व्यञ्जना तत्र गतोऽस्तमर्क इति वाक्यप्रयोगानन्तरं दूरं मागा इति पण्यान्ययसार्थ्यतामिति सन्ध्योपास्यतामिति बहूनां बहुविधार्थप्रत्ययो भवति तत्र न शक्तिर्न वा लक्षणा किन्तु शब्दस्यैवान्वयव्यतिरेकाभ्यामपरा व्यञ्जनाख्या वृत्तिराश्रयणीयेति तच्चिन्त्यं शास्त्रकृद्भिरुपेक्षितत्वात् यत्तु—

"यौगिकोयोगरूढश्च शब्दः स्यादौपचारिकः ।
मुख्यो लाक्षणिको गौणः शब्दः षोढा निगद्यते ॥ इति

वैयाकरणैः षड्विधत्वमुक्तं तन्मुख्यजघन्ययोरेवान्तर्भेदमादाय योजनीयं तथाहि मुख्यो यौगिको योगरूढ इत्येकं त्रिमुख्यायां लाक्षणिक औपचारिको गौण इत्यपरं त्रिकं जघन्यायामन्तर्भाव्यमिति अवान्तरभेदाश्चाकरे द्रष्टव्याः तत्र पृच्छति हे ब्रह्मन् ! ब्रह्मणि श्रुतयः कथं चरन्ति कया वृत्या ब्रह्म प्रतिपादयन्तीत्यर्थः । का वात्रानुपपत्तिरित्याशङ्कायां योगाद्यनुपपत्तिं दर्शयति—अनिर्देश्य इति । अवयवसंज्ञाजात्यादिशून्ये योगादिवृत्तित्रयाविषयं इत्यर्थः । "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" इतिश्रुतेः गौण्या वृत्तेर्विषयमस्त्विति चेत्तत्राह—निर्गुणे "केवलो निर्गुणश्च" इतिश्रुतेः लक्षणया प्रतिपाद्यत इति चेत्तत्राह—साक्षादिति । सम्बन्धादिशून्ये यत्साक्षादपरोक्षात् ब्रह्मेति श्रुतेः तत्र हेतुः सदसतः परे स्थूलसूक्ष्मादिभावरहिते "अस्थूलमनणु" इत्यादिश्रुतेः व्यतिरेके सर्वत्र हेतुः गुणवृत्तय इति । अवयवजातिसंज्ञादिरूपलक्षणं श्रुतीनां अन्तर्भावेन गुणादिप्रतिपादनपरत्वादिति तात्पर्यार्थः ॥ १ ॥

———

भाषा टीका ।

परीक्षिदुवाच ।

हे ब्रह्मन् ! चेतनाचेतन की जातिगुणक्रियाओंमें किसी एक को प्रवृत्ति का निमित्तकर जाति आदि विशिष्ट चेतनाचेतन को प्रतिपादन करने वारी श्रुति परब्रह्म केविषयमें किस प्रकार साक्षात प्रवृत्त होती है' क्योंकि वह ब्रह्म, चेतनाचेतन के सजातिभाव से निर्देश करने के योग्य नहि है कारण कि चेतनाचेतन की जातिगुणक्रियाओंसे परमात्मारहित है इसी से वह चेतनाचेतन से भिन्न है राजाका अभिप्राय यह है कि—कोई श्रुति परमात्मा का साक्षात् प्रतिपादन करती है तथापि चेतनाचेतन वाचक शब्दों से यह सब ब्रह्म है आत्माब्रह्म है वह जगत्कर्त्ता ब्रह्म तू हि है इस प्रकार ब्रह्मका साक्षात् प्रतिपादन किसप्रकार किया गया है ? क्योंकि, लोक में राजा से भिन्न प्रजाका वाचक प्रजाशब्द से यह प्रजा राजा हि है इस प्रकार राजा का प्रतिपादन नहि किया जाता है। तैसे हि परमात्मा से भिन्न चेतनाचेतन वाचि शब्दों से परमात्मा का साक्षात् प्रतिपादन क्योंकर हो सकता है ॥ १ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

उत्तरमाह—बुद्धीन्द्रियेति । बुद्ध्यादीनुपाधीन् जनानामनुशायिनां जीवानां मात्राद्यर्थे प्रभुरीश्वरोऽसृजत् मीयन्त इति मात्राः विषयास्तदर्थम् भवार्थे भवो जन्मलक्षणं कर्म तत्प्रभृतिकर्मकरणार्थमित्यर्थः । आत्मने लोकान्तरगामिने आत्मनस्तत्तल्लोकभोगायेत्यर्थः । अकल्पनाय कल्पनानिवृत्तये मुक्तय इत्यर्थः । अर्थधर्मकाममोक्षार्थमिति क्रमेण पदचतुष्टयस्यार्थः जनानामिति वदन् जीवार्थमीश्वरस्य सृष्ट्यादिषु प्रवृत्तिरिति दर्शयति प्रभुरितीश्वरस्योपाध्यवश्यताभावेन नित्यमुक्ततां दर्शयति अयमभिप्रायः सगुणमेव गुणैरनभिभूतं सर्वज्ञं सर्वशक्तिं सर्वेश्वरं सर्वनियन्तारं सर्वोपास्यं सर्वकर्मफलप्रदातारं समस्तकल्याणगुणनिलयं सच्चिदानन्दं भगवन्तं श्रुतयः प्रतिपादयन्ति "यः सर्वज्ञः सर्ववित् 'यस्य ज्ञानमयं तपः' सर्वस्य वशी सर्वस्येशानः "यः पृथिव्यां तिष्ठन् पृथिव्या आन्तरः' सोऽकामयत बहुस्याम 'स ऐक्षत तत्तेजोऽसृजत' सत्यं ज्ञानमनन्तं ब्रह्म" इत्याद्याः तथाभूतेश्वरतां तावत्संसारिणो जीवस्य तन्निवृत्तये तत्त्वमसीत्यादिवाक्यानि बोधयन्ति तत्र च तत्त्वंपदयोः सामानाधिकरण्यं प्रतीयते तच्च प्रकारान्तरेणाघटमानं ब्रह्मणि पर्यवसानं गमयति तथाहि न तावद्वैश्वदेव्यामिक्षेतिवदुभयोरेकार्थाभिधानेन सामानाधिकरण्यम् यथोक्तम्—

"आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः ।
आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणम्" ॥ इति.

कुतः ? भिन्नार्थत्वात् न चाजहत्स्वार्थया निरूढलक्षणया विशेषणविशेष्यभावेन नीलमुत्पलमितिवत् यथोक्तम 'सम्बुद्धया रज्यते येन विशेष्यं तद्विशेषणम्" इत्यादि कुतः विरुद्धार्थ-

श्रीकविचूडामणिचक्रवर्तिकृताऽन्वयबोधिनी।

उत्तरमाह—बुद्धीन्द्रियेति। प्रभुरीश्वरः जनानां जीवानां बुद्ध्यादीन्मात्रार्थमसृजत् मीयन्ते इति मात्राः विषयभोगार्थं तथा भवार्थं भवो जन्मलक्षणं कर्म तदर्थं जन्मप्रभृति कर्मकरणार्थमित्यर्थः। आत्मने लोकान्तरगामिने आत्मने तत्तल्लोकभोगार्थमित्यतः तत्क्रमः अकल्पनाय कल्पना माया तन्निवृत्तये मोक्षायेत्यर्थः। अर्थधर्मकाममोक्षा (या) र्थमसृजदिति क्रमेण पदचतुष्टयस्यार्थः अत्र स्वामीचरणाः जनानामिति वदन् जीवार्थमीश्वरस्य बुद्ध्यादिषु प्रवृत्तिरिति दर्शयति प्रभुरितीश्वरस्योपाधिवश्यताभावेन नित्यमुक्ततां दर्शयति अयमभिप्रायः सगुणमेव गुणैरनभिभूतं सर्वज्ञं सर्वशक्तिं सर्वेश्वरं सर्वनियन्तारं सर्वोपास्यं सर्वकर्मफलप्रदातारं समस्तकल्याणगुणनिलयं सच्चिदानन्दं भगवन्तं श्रुतयः प्रतिपादयन्ति "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयन्तपः सर्वस्य वशी सर्वस्येशानः यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः सोकामयत बहुस्यां स ऐक्षत तत्तेजोऽसृजत सत्यं ज्ञानमनन्तं ब्रह्म" इत्याद्या इति अस्यार्थः लक्षणापरैक्यपरानिषेधपरोपासनापरस्तुतिपराणां पञ्चविधानां श्रुतीनां सगुणावलम्बनं निर्गुणे पर्यवसानमिदं दर्शयितुमाह—अयमभिप्राय इति। पञ्चविधानां श्रुतीनाम्मध्ये उक्तन्यायेन कापि श्रुतिर्ब्रह्मणि न सम्भवति तथापि सर्वश्रुतीनां परम्परादिना ब्रह्मपरत्वं घटत एवेत्याह—सगुणमेवेति। सगुणं समस्तगुणाश्रयं तैर्गुणैरनभिभूतमवशीकृतं पूर्वोक्तमर्थं क्रमेणाह—यः सर्वज्ञ इत्यादिश्रुतिभिर्यः [illegible] सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तप इति सर्वतोदाहरणं सामान्येन सर्वं जानातीति सर्वज्ञः विशेषेण सर्वं वेत्तीति सर्ववित् यस्य ज्ञानमयं ज्ञानविकार एव सर्वज्ञतालक्षणं तप अनायासलक्षणमित्यर्थः। सर्वस्य वशीति सर्वस्य ब्रह्मेन्द्रादेर्वशी सर्वोऽस्य वशे वर्तते उक्तञ्च "एतस्य वा अक्षरस्य प्रशासने गार्गि। सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिना भारते च—

"ससुरासुरगन्धर्वं सयक्षोरगराक्षसम्।
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम्"॥

इत्यनेन सर्वशक्तिता दर्शिता न केवलं वशी सर्वस्येशानः ईशिता च अनेन सर्वेश्वरता यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः पृथिवी यस्य शरीरं पृथिवी यन्न वेद यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः" इति अस्यार्थश्च यः पृथिव्यां तिष्ठन् पृथिव्याः प्रथिवीति अन्तरो भवति य अन्तरेऽन्तर्यामी भूत्वा पृथिवीं यमयति नियमयति एष ते तव आत्माऽन्तर्यामीति अनेन सर्वनियन्तृत्वं सर्वोपास्यत्वं सर्वकर्मफलदातृत्वं चोक्तं श्रीभगवद्गीतासु च यो यो यां यां तनुं भक्तः श्रद्धया सीति अनेन सर्वनियन्तृत्वं सर्वोचितमिच्छति तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहं। स तया श्रद्धया युक्तः तस्याराधनमीहते। लभते च ततः कामान्मयैव विहितान् हि तानिति अनेनान्यन्तर्यामिणः श्रीकृष्णस्यैव तत्तद्देवतारूपेणोपास्यत्वं सर्वकर्मफलप्रदातृत्वञ्चोक्तं सकलकल्याणगुणनिलयस्योदाहरणमाह—सो कामयत कामितवान् कथं बहुस्यां बहुतरं यथा भवति तथा भवेयं स आत्मा सर्वेश्वरस्वभावत्वात् एकः स ऐक्षत अद्राक्षीत् ईक्षतेतिपाठे [illegible] स तत्तेजोऽसृजत सृष्टवान् ईश्वरस्य [illegible] [illegible] समस्तकल्याणगुणाभिव्यक्ते सच्चिदानन्दस्वरूपत्वमाह सत्यं ज्ञानमनन्तं ब्रह्म आविद्यादिविकाराभावं [illegible] [illegible] यद्रूपेण यन्निश्चितं तद्रूपं यतो न व्यभिचरति [illegible] कथम्भूतं सत्यम् असत्यनिवृत्त्यर्थं [illegible] [illegible] विकारनिवृत्तिः तन्निवृत्त्या च कारणत्वात् तथा च कारणत्वे [illegible] निवृत्त्या च कारणाभासस्तथा च कारकवस्तु [illegible] तद्विद्रूपताभासा तन्निवृत्त्यर्थं ज्ञानं ब्रह्मेति ज्ञानं [illegible] बोधस्वरूपमित्यर्थः। लौकिकज्ञानस्यान्तवत्त्वादिदर्शन [illegible] रूपस्य ब्रह्मणोऽप्यन्तवत्त्वं तन्निवृत्त्यर्थमनन्तमिति विशेषणम् [illegible] सच्चिदानन्दत्वं स्पष्टमेव दर्शितम् एवं लक्षणापराणां श्रुतीनामपि लक्षणपरत्वं प्रदर्श्य स्वरूपपराणामपि स्वरूपपरत्वं च प्रदर्श्य ऐक्यपरत्वश्रुतीनामपि सगुणप्रतिपादनमुखेन निर्गुणे पर्यवसानं दर्शयन्ति स्वमिथ्यात्वानुभूतेत्यादिना निर्गुणे पर्यवसानमित्यन्तेन। तथाभूतेश्वरतान्तावत्संसारिणो जीवस्य तन्निवृत्तये तत्त्वप्रकारान्तरेण घटमानं ब्रह्मणि पर्यवसानं गमयति तथाहि न तावदैक्यामिति च तदुभयोरेकार्थाभिधायि सामानाधिकरण्यं यथोक्तम्।

"आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः।
आमिक्षापदसान्निध्यात् तस्यैव विषयार्पणम्"

इति कुतः भिन्नार्थत्वात् अस्यार्थः तत्त्वमसीत्यादि [illegible] वाक्यपदेन प्रज्ञानं ब्रह्म अहं ब्रह्मास्मि अयमात्मा ब्रह्मेत्यादीनि गृह्यन्ते तत् ब्रह्म त्वमसि भवसि नान्यः संसारीत्यर्थः। तत्र तत्त्वम्पदयोः सामानाधिकरण्यं प्रतीयते अपर्यायपदानामेकार्थवृत्तित्वं सामानाधिकरण्यं तच्च प्रकारान्तरेणाघटमानं दर्शयति तथाहि इति "आमिक्षा साऽशृतोष्णे या क्षीरे स्याद्दधियोगतः" इत्यमरः शृते स्थाल्यां कृतपाके उष्णे दुग्धे दधि योगतो या विकृतिः स्यात् साऽमिक्षेत्यर्थः ततश्च विश्वदेवस्येयमामिक्षा वैश्वदेवी विश्वदेवस्य सम्बन्धिनी आमिक्षा भवति ननु विश्वेदेवत्वं प्राप्नोति अत आमिक्षाविश्वेदेवपदयोः सामानाधिकरण्यं नार्थयोरिति यथोक्तं भट्टैः।

"आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः।
आमिक्षापदसान्निध्यात् तस्यैव विषयार्पणम्"।

इति अस्यार्थः आमिक्षां देवतायुक्तां विश्वेदेवसम्बन्धां एव तद्धितोऽणप्रत्ययो वदति कथं वदति आमिक्षापदसान्निध्यात् सन्निहितत्वात् तस्यैव तद्धितप्रत्ययान्तस्य वैश्वदेवीपदस्यैव विषये आमिक्षापदस्यार्पणं तद्धितप्रत्ययेन [illegible] इति अनेन प्रकारेणैकार्थत्वाभावं प्रदर्श्य पुनः प्रकारान्तरेण [illegible] यति नवेति नचाजहत्स्वार्थया निरूढलक्षणया विशेषणविशेष्यभावेन नीलमुत्पलमितिवत् यथोक्तं "स्वयुक्ता [illegible] [illegible] विशेष्यं तद्विशेषणमिति कुतः। विरुद्धार्थत्वेन [illegible] [illegible] न जहत् न त्यजन् स्वार्थो नीलपीतादिरूपो या [illegible] [illegible] त्वार्था तत्पाशितिर्यान्तान्यपदार्थबहुव्रीहिः निरूढेत्यत्र [illegible] भावः प्राकट्यं यस्याः सा निरूढा चासौ लक्षणा चेति निरूढलक्षणा तया, यद्वा नितरां रूढा चासौ लक्षणा चेति तथा [illegible] दिपरत्वपराणतया न चात्मत्व एकत्वमित्यर्थः। [illegible]

श्रीकविचूडामणिचक्रवर्तिकृताऽन्वयबोधिनी ।

विशेषणं नीलं नीलमुत्पलमितिवत् सामानाधिकरण्यं न च कुतः विरुद्धार्थत्वेन तदयोगात् तयोः तत्त्वंपदार्थयोर्विरुद्धत्वेन तस्या निरूढलक्षणाया अयोगात् अभावात् यथोक्तं भट्टैः

"स्वरूपसत्त्वमात्रेण नहि किञ्चिद्विशेषणम् ।
स्वबुद्ध्या रज्यते येन विशेष्यं तद्विशेषणम् ।" इति

अयञ्च स्वाकारेण विशेष्यमनवभाष्य किञ्चिदपि वस्तु-स्वरूपसत्त्वमात्रेण स्वाश्रितस्यैव विशेषणं नहि न भवति किन्तु पीतनीलादिना स्वबुद्ध्या स्वाकारज्ञानेन विशेषणविशेष्यभाव-कल्पने भ्रमरादिभ्यो व्यावृत्ताऽवभाष्यते तद्विशेषणमित्यर्थः । अयं भावः नीलगुणोत्पलद्रव्ययोर्गुणगुणिनोरविरुद्ध-स्वभावत्वेन विशेषणविशेष्यभावकल्पने अनुपपत्तेरभावात् भवेत्तत्राजहत्स्वार्थानिरूढलक्षणा अत्र तु परोक्षापरोक्षत्वादि-विरुद्धार्थत्वेन विशेषणविशेष्यभावकल्पनानुपपत्तौ न निरूढ-लक्षणेति अनेन विशेषणविशेष्यभावप्रकारेण चैकार्थत्वं प्रदर्श्य पुनः प्रकारान्तरेण दर्शयति—नचेति । न च जहत्स्वार्थो चासौ लक्षणा चेति जहत्स्वार्थलक्षणा तया कुसुमिताः द्रुमा यस्यां सा कुसुमितद्रुमा गङ्गा इति लक्षणया कुसु-मितद्रुमा गङ्गेतिवत् कुतः एकार्थत्वस्य विवक्षितत्वात् अर्थश्च जहत्यजत्स्वार्थो यासां जहत्स्वार्थवत् सामानाधिक-रण्यं न च कुतः तत्त्वंपदयोरेकार्थत्वस्य विवक्षितत्वात् वक्रमिष्टत्वात् सम्बन्धिलक्षणायान्तु सम्बन्धिनः सम्बन्धस्य च स्फुरणाच्चैकार्थत्वमिति भावः । इति प्रकारान्तरेणाघटमानं प्रदर्श्य येन प्रकारेण ब्रह्मणि पर्यवसानं दर्शयति अत इति अतो जहदजहत्स्वार्थलक्षणया सोयं देवदत्त इतिवद्विरुद्धां-शत्यागेनानुगतचिदंशेनैकार्थत्वेन सामानाधिकरण्येन निर्गुणे पर्यवसानमिति अर्थश्चायं यतः प्रकारान्तरेण सामानाधि-करण्यं न घटते अतः कारणाज्जहती अजहती च स्वार्थौ ये ते तत्त्वंपदे यस्यां सा जहदजहत्स्वार्था सा चासौ लक्षणा चेति तया एकार्थत्वेन निर्गुणे पर्यवसानं सोयं देवदत्त इति यथा कश्चित्काश्यां दृष्टं देवदत्तं यतिर्बहुकालान्तरेण काश्यामपश्यन् देशकालविप्रकर्षात्प्रत्यभिज्ञातुमसमर्थः पूर्व-दृष्टादन्यं पश्चाद्दृष्टं मन्यतेतिमन्यः प्रत्यभिज्ञाकुशलः प्रति-बोधयति सोयं देवदत्त इति तत्र तच्छब्देन विप्रकृष्टदेश-कालविशिष्टोर्थोभिधीयते इदंशब्देन सन्निकृष्टदेशकालविशि-ष्टोऽर्थः तदुक्तम्—

"इदमस्तु सन्निकृष्टं समीपवर्तिचैतदोरूपम् ।
अदमस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात् ॥" इति

विप्रकृष्टं विदूरं सन्निकृष्टं सन्निहितमित्यर्थः नच सन्निकृष्टविप्रकृष्टयो-रैक्यं सम्भवति तस्माद्विरोधिविशेषणसम्बन्धपरित्यागेन भागलक्षणया सोयमिति पदद्वयं देवदत्तस्य स्वरूपमखण्डितं प्रतिपादयति तथा जीवोपि परमार्थतो ब्रह्मैव सन्नविद्या-दोषवशादसंसारिणो ब्रह्मणोत्यन्तभिन्नं संसारिणमात्मानं मन्यते तं श्रुतिर्बोधयति तत्त्वमसीति । तत्र तत्पदेनाप्रति परोक्षं वस्तु अभिधीयते प्रकृतमेकमद्वितीयम् ईक्षितृ जगत्कारणं ब्रह्म त्वंपदेनापि अविद्याद्युपाधिपरिच्छिन्नो नित्यापरोक्षः प्रत्यगा-त्माभिधीयते नच परोक्षापरोक्षापरिच्छिन्नयोरैकत्वं सम्भवति तस्मात्तत्पदार्थगतं परोक्षपरिच्छेदादिकं त्वंपदार्थगतम् अपरोक्ष-परिच्छेदादिकं परित्यज्य जहदजहत्स्वार्थलक्षणया तत्त्वमिति पदद्वयं सच्चिदेकरसमखण्डमात्मतत्त्वं प्रतिपादयति असिपदमपि कृत्यर्थस्य सतः प्रत्ययार्थस्य च प्रतीचः सङ्घट्टनेनानुवदत् आभ्यां सम्बध्यत इति निषेधपरश्रुतीनां तत्परत्वमाह अस्थू-लादिवाक्यानां साक्षादुपाधिनिषेधेन तथाचाशेषोपक्रमे ब्रह्मसृष्ट-मिदमापीयेत्यादिना विशिष्टमालम्बनं वक्ष्यति अन्तेच श्रुतय-स्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः" इत्युपसंहरिष्यति अर्थोयम् अस्थूलमनण्वह्रस्वमदीर्घमित्यादिवाक्यानाम् उपाधि-निषेधेन साक्षाद्ब्रह्मणि पर्यवसानमित्यर्थः । सगुणगतानामिव स्थूलत्वाद्युपाधीनामनुवादाद्विशिष्टालम्बनत्वमस्त्येव उपासना-सृष्टिपरश्रुतीनां तत्परत्वमाह उपासनादिवाक्यानां उपाधिनिषेधेन साक्षाद्ब्रह्मणि पर्यवसानमित्यर्थः । सगुणगतानामिवस्थूलत्वा-द्युपाधीनामनुवादाद्विशिष्टानां लम्बनत्वमस्त्येव उपासनासृष्टि-परश्रुतीनां तत्परत्वमाह उपासनादिवाक्यानां क्रियार्थप्रवृत्त-सृष्ट्यावलम्बनेन ज्ञानसाधनविधानेन तत्परत्वमिति अर्थोयं आदिपदेन सृष्ट्यादिग्रहणं क्रियार्थो यज्ञः यज्ञार्थप्रवृत्तानां सृष्ट्या-दिवाक्यानां आगमापायिसृष्टिस्थितिप्रलयनिरूपणेन यज्ज्ञान-साधनं वैराग्यविधानं तेन तद्द्वारा तत्परत्वं ब्रह्मणि पर्यवसानं उपासनावाक्यैस्तु तदाद्युपाध्यालम्बनं सगुणब्रह्मणि रूपयोगान्तः-करणशुद्धिलक्षणं यत् ज्ञानविधानं तेन ब्रह्मणि पर्यवसानं कर्मादिपराणां श्रुतीनां विविदिषायां विनियोगादनुपादानमिति । अथान्यः सिद्धान्त उच्यते निर्गुणे ब्रह्मणि सगुणाः श्रुतयः कथं चरन्तीति प्रश्नस्य सिद्धान्तः स्वामिचरणैः लक्षणपरादिश्रुतीनां यथा ब्रह्मणि तात्पर्यं तथा प्रदर्शं कृत एव तथाप्यत्राशङ्का वर्तते सा यथा बुद्धीन्द्रियमनःप्राणान् मात्रार्थञ्च भवार्थञ्च आत्मने कल्पनाय च लोकानां प्रभुरसृजदिति कथमुक्तं श्रीशुकेन प्रश्नो-त्तरानुपयोगित्वादिवेति अत्रास्माभिरुच्यते बुद्धिर्हि द्विविधा व्यवसायात्मिका ऽव्यवसायात्मिका च तत्र व्यवसायात्मिका-हि त्रिवर्गसाधने सत्त्वादिगुणभेदेन त्रिधाभूत्वा अनन्ता बुद्धयः स्युः—

"व्यवसायात्मिकाबुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयो व्यवसायिनाम् ॥
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।

इत्युक्तेः अतो बुद्धेः सर्जनं वेदोक्तकर्मप्रतिपादितभोगानन्तरं मोक्षार्थमिति इन्द्रियादिसृष्टेः प्रयोजनं यथा इन्द्रियं वागिन्द्रियं ज्ञेयं तस्य मुख्यत्वात्ततो वाङ्मनः प्राणः ऋग्यजुः साम-वेदा भवन्ति यथा च श्रुतिः "ऋचं वाचं प्रपद्ये मनो यजुः प्रपद्ये सामप्राणं प्रपद्ये वागोजस्सहौजोमयीत्यादि अन्येपि लोकादयः सर्वे वागादय एव भवन्तीत्यत्र सम्यक् प्रबो-धार्थमन्याः श्रुतयो लिख्यन्ते त्रीण्यात्मने कुरुतेति "मनो वाचं प्राणं तान्यात्मने कुरुत एतन्मयोवा आत्मा वाङ्मयो मनोमयः प्राणमयः त्रयो लोका एत एव वागेवायं लोकोमनोन्तरिक्षलोकः प्राणोसौलोकः त्रयो वेदा एतएव वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः देवाः पितरो मनुष्या एत एव वागेव देवाः मनः पितरः प्राणो मनुष्या माता पिता प्रजैत एव वागेवमाता मनः पिता प्राणः प्रजा विज्ञातंविजिज्ञास्यमविज्ञातमेत एव यत-किञ्चिद्विज्ञातं वाचस्तद्रूपं वाग्घिविजिज्ञाता वागेनं तद्भूत्वाऽवति यत्किञ्चिद्विजिज्ञास्यं मनसस्तद्रूपं मन एनंतद्भूत्वा ऽवतियत्कि-

श्रीमद्विश्वनाथचक्रवर्त्तिकृतान्वयबोधिनी ।

आविज्ञानं प्राणस्य तद्रूपं प्राणाद्यविज्ञातः प्राण एवं तद्भूत्वा ऽवति तस्यैव वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निः याव- त्येव वाक्तावती पृथिवी तावानयमग्निः अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसावादित्यः तद्यावदेव मनस्तावती द्यौः तावा- नसावादित्यः अथैतस्य प्राणस्यापः शरीरं ज्योतीरूपमसौ चन्द्रः तद्यावानेव प्राणस्तावत्य आपस्तावानसौ चन्द्रः त एते सर्व एव समाः सर्वे अनन्तास्स यो हैतानन्तवत उपास्ते अनन्त- वन्तं लोकं जयति अथ यो हैताननन्तानुपास्ते नानन्तलोकं जयति" इति सुगमत्वान्न व्याख्यायते इहामुत्रानन्तलोकसुखभोगाय त्रीणि मनो वाचं प्राणम् एतान्यात्मने आत्मार्थं यूयं कुरुत यत एतन्मयोऽयमात्मा यतस्त्रयो वेदा एत एव असौ लोकः पर लोकः विज्ञातमिति यत्किञ्चिद्विज्ञातं विशेषेण ज्ञातं वस्तु- तत्सर्वं वाचो रूपम् अतो वाक् तद्विज्ञानं वस्तु भूत्वा एनं पुरुषं सकदाऽवति रक्षति एवमुत्तरत्रापि ज्ञातव्यं विज- ज्ञास्यमिति ज्ञातुमिच्छा जिज्ञासा यत्र विज्ञासा वर्त्तते तद्विजिज्ञास्यं य एतानन्तवतो विनाशवत्त उपास्ते सस्फुट- मन्तवन्तं लोकं जयति प्राप्नोति स्पष्टमन्यत् अथ कल्पनाये- त्यस्यार्थः एवं धर्मार्थकामान् वेदोक्तमार्गेण संसेव्य विमुक्तये तेभ्यो विरज्य परमात्मानं ज्ञात्वा प्रव्रजेदित्यत्र श्रुतिः "एवं विदित्वा मुनिर्भवत्येतमेव प्रव्राजितो लोकमिच्छन्तः प्रव्र- जन्ति एतद्ध पूर्वे विद्वांसः प्रजाश्च कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्मन् लोकैषणा उभेह्येषणे एव भवतः तस्माल्लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय भिक्षाचर्य्यां चरन्ति याह्येव पुत्रै- षणा सा वित्तैषणा सा ब्राह्मणःपाण्डित्यं निर्विद्य बाल्ये तिष्ठा- सेत बाल्यं च पाण्डित्यं च निर्विद्याथो मुनिरमौनं मौनञ्च निर्विद्याथो ब्राह्मणः स ब्राह्मणः केन स्यात् येन स्यात्तेनेदृश्य एवातोऽन्यदार्त्तम् "इति सुगमं तस्मादिति ब्राह्मणः ब्राह्मणजाति- गुणविशिष्टः बाल्येन बाल्यस्वभावेन तिष्ठासेत् स्थातु- मिच्छेत् तर्हि बाल्येन सदा तिष्ठेत् नेत्याह—बाल्यं च पाण्डित्यं च निर्विद्य त्यक्त्वा मुनिः मननवान्भवेत् तर्हि किम्मौनेन सदा- तिष्ठेत् नेत्याह—मौनं चामौनञ्च हित्वा ब्राह्मणः ब्रह्मनिष्ठः स्यात् स ब्राह्मणः केन स्यादित्यस्योत्तरं येनेति येन ब्राह्मणः स्यात् तेनानिर्वचनीयेन ब्रह्मात्मलाभेन ईदृश उक्तप्रकारेण ब्राह्मण एव स्यात् तद्वस्तु अतः पाण्डित्यादेरसतः अन्यत् पृथगेव आर्त्तं सत्यमिति तस्मादनेन बुद्धीन्द्रियेत्यादि श्लोकेन जनानां चतुर्वर्गप्रतिपादयन्त्यः श्रुतयो ब्रह्मणि यथा चरन्ति तथा प्रदर्श्य श्रीशुकदेवेन राद्धान्तः कृत इति ॥ २ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अत्र ऋषिरुवाचेति तस्य सर्वज्ञत्वात्तत्र प्रावीण्यं दर्शितं श्रीशुक उवाचेति पाठे ब्रह्मवैवर्त्तसंकीर्त्तितां कथां सूचयति— यत्र श्रीकृष्णेनैव तस्य तन्नामकृतं मायाबन्धनतश्चासौ मोचित इति ततः श्रीविष्णुरातवत्तत्कृपाविशेषलाभेन समवासनतया सोऽपि तदनुगुणमेवावाचेत्यर्थः। तथाहि—बुद्धीन्द्रियेति। एतदुक्तं भवति येन स्वरूपलक्षणेन तटस्थलक्षणेन वा परमकारणं तत्त्वं निरूप्यते तदुभयमपि श्रीभगवत्त्वमेव पर्य्यवसाययति न तु निर्विशेषब्रह्मत्वं तत्राद्ये यः सर्वज्ञः सर्वविदित्याद्य- नुसारेण प्रभुरित्यन्यनैरपेक्ष्येणोक्तत्वात्स्वरूपेणैवेश्वरः स च सर्व- व्यापनशीलज्ञानेच्छाक्रियाशक्तिमान् एवमेव प्रभुरितीत्यादिका टीकापि तथाहि "सत्यं ज्ञानमनन्तं ब्रह्मे"ति विज्ञानमानन्दं ब्रह्मे'ति यल्लक्ष्यते तस्यैव खलु "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति "इति "को ह्येवान्यात् कः प्राण्याद्- देष आकाश आनन्दो न स्यात्"इति आनन्दाद्ध्येव खल्वि- मानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्तीति। न तस्य कार्य्यं करणञ्च "विद्यते" इत्यादि श्रुतयः स्वाभाविकशक्तित्वं दर्शयन्ति वक्ष्यन्ति च श्रुतयः "त्वमकरणः स्वराडखिलकारकशक्तिधर" इति उपाधि- सम्बन्धेन तत्तच्छक्तित्वे तूपाधेरेवेश्वरत्वापातात् वक्ष्यन्ति तु श्रुतयः "त्वमसि यदात्मना समवरुद्धसमस्तभगः" इति अथ द्वितीये "तत्तेजो सृजत "इत्याद्यनुसारेण जनानां बुद्धीन्द्रियादी- नसृजदिति सुतरामेव तादृशत्वं परिणामे वा विवर्त्ते वा योग्यस्यैवोपादानात्तन्निमित्तत्वे च स्वीकारौचित्यात् योग्य- त्वमेव हि शक्तिरिति अत्र तु कर्त्तृत्वनिर्देशात् स्वातन्त्र्य- प्राप्तेः सुतराम् अत एव सर्वसुखादिस्पृहत्वेन तदीक्षणात् पूर्वं प्रकृतिक्षोभाभावेन च तस्य हि विलक्षणस्वाभाविकसुखादि- मत्त्वमवगतं स ईक्षत इत्याद्यनुसारेण मात्रार्थश्चेत्यादिना विचारपूर्वकस्रष्टृत्वनिर्णयात्तु सुतरां तथैव मात्रार्थमित्या- दिना तत्तत्सर्वपुरुषार्थपरमाश्रयत्वञ्च "सर्वकामः सर्वगन्धः सर्वरसः अयमात्माऽपहतपाप्मा "इत्यादिश्रुतेः न चारोपितमेव सर्वमिदं (तत्राद्येतावत्) तन्मतेपि तावत् अविषये वस्तुनि आरोपा- सम्भवात् ब्रह्मणः कालत्रयेपि शुद्धत्वेनान्यस्य त्वारोप्यकोटि- प्रवेशेनाज्ञानस्य जडत्वेनारोपकासम्भवे(न) च तदसम्भवात् तस्माच्च जीवरूपस्य स्वस्य स्वाज्ञानेन तदारोपकत्वं वेद- स्यारोपकत्वं चेत्तस्य स्वाज्ञानमयत्वेन स्वप्नप्रलापतुल्यतया स्वकर्त्तृकारोप एव तात्पर्य्ये सत्यविशेषात् तस्य वेदस्य स्वात- न्त्र्येपि आरोप्यस्य हेयतया "प्रक्षालनाद्धि पङ्कस्य दूरतो- ऽस्पर्शनं वरम्"इतिन्यायेन वेदस्य स्वयं तद्बोधयितुमयुक्तत्वात् स्वाभाविकस्यादि श्रुतिविरोधात् "श्रुतेस्तु शब्दमूलत्वात्"इति- न्यायविरोधाच्च आरोपितत्वे सत्यनीश्वरत्वादप्रसङ्गश्च स्थाणौ पुरुषाभिमानिवद्ब्रह्मणीश्वराभिमानिनः कालत्रयेप्यभावापत्तेः स्वाज्ञानकल्पितपुरुषकल्पितत्वभानस्य स्वाज्ञानकल्पितत्व एव पर्य्यवसानात् मध्ये कल्पकान्तरमननवैयर्थ्याच्च संज्ञामूर्तिक्लृप्ति- स्तु त्रिवृत्कुर्वत उपदेशादित्यादिन्यायवृन्दासम्मतं हि तत् निन्दितं च श्रीगीतासु—

"असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत्कामहैतुकम्" ॥ इति

असत्यं मिथ्याभूतं सत्त्वासत्त्वाभ्यामनिर्वचनीयत्वेनाप्रतिष्ठं निर्देश- शून्यं स्वाज्ञानकल्पितत्वादनीश्वरम् अपरस्परसम्भूतमनाद्यज्ञान- परम्पराजातम् अपरस्परः क्रिया सातत्ये अतः कामहैतुकं मनःसङ्कल्पमात्रजातं स्वप्नवदित्यर्थः। अत्र प्रवृत्तिञ्च निवृत्ति- ञ्चेत्यादिना पूर्वं तेषां संस्कारदोष उक्तः "एतां दृष्टिमवष्टभ्य"- इत्यादिना गतिश्च निन्दिष्यत इति ज्ञेयम् एवमेव जनाना-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मित्यादिटीका च तस्मात्सर्ववेदार्थः श्रीभगवानेव "यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च" इति श्रीनृसिंहतापन्यां "वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्" इति श्रीगीतासु "मतः स सर्ववचसां प्रतिष्ठा यत्र शाश्वती" इति श्रीविष्णुपुराणे "मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते ह्यहम्" इत्येकादशे च तथा "सदेव सौम्येदमग्र आसीत्" इति यस्य स्वतः सर्वकारणतया स्थितत्वं निर्गुणं निरञ्जनमिति दोषराहित्यं न तस्य कार्य्यं करणं च विद्यते इत्यादौ स्वभाविकी ज्ञानबलक्रिया चेति तत्तदागन्तुकशक्त्यादिराहित्यानुवादेनैव स्वाभाविकविलक्षणशक्त्याद्यवियुक्तत्वम् एवं निषेधान्तरवाक्येष्वपि तथात्वम् "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् तमात्मस्थं ये तु पश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्" इति तत्तद्विवरणं "तमीश्वराणां परमं महेश्वरं तं देवतानां परमञ्च दैवतं सकारणं करणाधिपाधिपो न तस्य कश्चिज्जनिता न चाधिपः" इतीदृशमाहात्म्येनैव सर्वकारणत्वम् "आनन्दं ब्रह्मणो रूपम्, वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसस्तु पारे" "न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति रूपमस्य" "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति विलक्षणस्वरूपमूर्त्तित्वं दर्शितं तस्य तु "एको ह वै नारायण आसीन्न ब्रह्मा नेशानः" इत्यस्माकमभीष्टरूपत्वमिति तथा "यस्य पृथिवी शरीरं यस्यात्मा शरीरं यस्याव्यक्तं शरीरं यस्याक्षरं शरीरमेष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः" इति श्रुत्यन्तरं सर्वशक्तियुक्तत्वेन प्रकाशकत्वात् पृथिव्यादीनामात्मत्वेन तमेवाह—पुराणेतिहासवचनानि च—

"ह्लादिनी सन्धिनी सम्वित्त्वय्येका सर्वसंश्रये ।
ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते ॥
कलाकाष्ठानिमेषादिकालसूत्रस्य गोचरे ।
यस्य शक्तिर्न शुद्धस्य प्रसीदतु स मे हरिः ॥
ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥
कलामुहूर्त्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः ॥

इति । श्रीविष्णुपुराणे—

न शक्यः स त्वया द्रष्टुमस्माभिर्वा बृहस्पते ।
यस्य प्रसादं कुरुते स वै तं द्रष्टुमर्हति ॥ इति

मोक्षधर्मस्य नारायणीयोपाख्याने—

"एतत्त्वया न विज्ञेयं रूपवानिति दृश्यते ।
इच्छन्मुहूर्त्तान्नश्येयमीशोऽहं जगतो गुरुः ।
माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ।
सर्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि ॥" इति च

नथैव तत्रैव श्वेतद्वीपपतिवाक्यं अस्यार्थः त्वयैतन्न विज्ञेयं किं रूपवानिति हेतोरयं दृश्यत इति यतो मद्दर्शने मदिच्छैव कारणमित्याह—इच्छन्निति नश्येयम् अदर्शनमापद्येय तस्मादिन्द्रियागोचरत्वादभौतिकं स्वेच्छया स्वतः प्रकाशमानत्वात्स्वप्रकाशमेव च मद्रूपमिति भावः यथोक्तं नारायणाध्यात्मे—

"नित्याव्यक्तोऽपि भगवानीक्ष्यते निजशक्तितः ।
तामृते परमात्मानं कः पश्येतामितं प्रभुम् ॥ इति

तदेवमपि मां सर्वभूतगुणैर्युक्तं पश्यसि तद्युक्तत्वेन प्रत्येषि एषा माया मयैव सृष्टा मम माययैव तथाभानमित्यर्थः । तस्मात्त्वमेवं ज्ञातुं नार्हसीति तथा "कूटस्थोऽक्षर उच्यते" अक्षरं परमं ब्रह्म—

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥
माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पते ॥
ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥

इति श्रीगीतासु । वक्ष्यन्ति च श्रुतयः श्रुतयस्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः" इति । "त्वमथ यदेष्ववशेषमृतम्" इति त्वमसि यदात्मना समवरुद्धसमस्तभगः । इति । त्वमुत जहासि तामहिरिवत्वचमात्तभगो महसि महीयसेऽष्टगुणितेऽपरिमेय भगः" इति । भवत उपासतेऽङ्घ्रिमभवं भुवि विश्वसिताः इति । न परिलषन्ति केचिदपवर्गमपीश्वर ते चरणसरोजहंसकुलसङ्गविसृष्टगृहाः" इति अतएव "स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः" इति । व्याख्यास्यते तु तत्र तत्रैव तदेवं सर्ववेदार्थत्वेन सर्वविलक्षणत्वात् सर्वविलक्षणत्वेनैव सर्ववेदार्थत्वाद्वेदैकवेद्यत्वाद्वेदानां च स्वतःप्रमाणभूतत्वादन्यशब्दवाक्यसाधारण्येन दोषा न प्रसञ्जनीयाः श्रुतयोऽपि तथा वक्ष्यन्ति "त्वयि हि फलं त्यतन्निरसनेन भवन्निधनाः" इति तदेवं श्रीभगवत्येव सङ्गतिस्तु सङ्गता तथापि ते तत्त्वमस्यादिलक्षणमैक्यवाक्यम् अस्थूलादिलक्षणनिषेधवाक्यं वा महावाक्यत्वेन मत्वा लक्षणयोपासनादिवाक्यानि तदनुगतत्वेन मत्वा स्वमते ब्रह्मणि यथा कथञ्चिदेव सङ्गतिं कुर्वन्ति तथा हि तत्र तावत्तेषां मते मुख्या गौणी च शब्दवृत्तिर्ब्रह्मणि न सम्भवत्येव लक्षणा च न सम्भवतीत्युक्तम् अत एव तन्निषेधान्यथानुपपत्त्यवगतार्थापत्तिश्च न यादृक्स्वरूपादिभिः साक्षान्निर्देश्यं स्यात् तत्रैव सा सम्भवतीति तथापि तत्र तावज्जहदजहल्लक्षणया मन्यन्ते सा कथं घटेत सा च खलु शब्दवृत्तिसामान्येन पूर्ववद्दोषावहैव शुक्त्यादौ रूप्यारोपेण सम्बन्धाभावेऽप्यारोपेण सम्बन्धो मन्तव्य एव तेन विना कल्पनानर्हत्वात् आरोपस्याप्यारोप्यत्वेऽनवस्थाप्रसङ्गः आरोपश्च वाङ्मनसागोचरे न सम्भवति कथञ्चित्सम्भवे वा शब्दविषयत्व इवारोपविषयत्वेऽपि कथमनित्यत्वादिकं नापतेत् रज्जुशुक्त्यादिवदिति यत्तु औपाधिक आविद्यक एव वा जीवेश्वरविभाग इति मतं तच्च ब्रह्मस्तवव्याख्यायां यथा परिहृतं तथैवात्र द्रष्टव्यं श्रीवैष्णवानां श्रीभाष्यतदीयटीकयोः शतदूषण्यादिषु च तत्त्ववादिनां विष्णुतत्त्वप्रकाशिकादौ न्यायामृतादौ च तथाऽस्माकं तदृष्टिलेशावष्टम्भश्रीभागवतसन्दर्भतट्टीकादौ च विशेषो द्रष्टव्यः किञ्च अज्ञानस्यैव भेदमात्रमूलत्वे सति तत्त्वंपदार्थयोरैक्यज्ञानमात्रेणैक्यं सङ्गच्छते जीवत्वन्तु कस्याज्ञानेन कुत्र कल्पितमिति न युज्यते ब्रह्मणश्चिन्मात्रस्याज्ञानाश्रयत्वविषयत्वयोरसम्भवात् ईश्वरत्वं तु जीवाज्ञानकल्पितं विद्यामयं चेति

## श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नाप्यसौ तदाश्रयविषयः जीवात्मानेन जीवे जीवत्वं कल्पितमिति तु परस्पराश्रयेण स्वाश्रयेण च दुष्टमित्यलमतिप्रसङ्गेन । तस्माद्यत्किञ्चित्सामानाधिकरण्यमुच्यते तत्राप्येषा गतिः लक्षणा हि तत्स्वरूपस्यान्यस्वरूपत्वं न बोधयति किन्तु तत्सम्बन्धे नान्यद्वाचयति यथा नीलमिदमुत्पलमिति तटमिदं गङ्गेति सोयं देवदत्त इत्यत्रतु स इति तत्कालविशिष्टत्वेन स्मर्यमाण इत्यर्थः । अयमिति एतत्कालविशिष्टत्वेन दृश्यमान इत्यर्थः । ततोऽनयोः सामानाधिकरण्ये स्यान्न विरोध इति लक्षणैव न स्यात् ततस्तद्वत्र न लक्षणा गौणीवोभयत्र विवक्षितगुणयोगं स्यादपगत्येव यथा पित्तलमिदं सुवर्णमिति तस्मात् यस्यात्मा शरीरमिति श्रुतेः सूर्यतन्मण्डलगङ्गातत्प्रवाहगोजातितद्व्यक्तिवाच्यनाधिष्ठानाधिष्ठात्रोः प्रसिद्ध एवाभेदप्रयोगः यद्वा हन्ताहमिमास्तिस्रो देवता अनेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति महापुरुषवचनं तौ अनेनेति जीवस्य भेदनिर्देशात् "ममैवांशो जीवलोके जीवभूतः सनातनः" इति "अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूताम्"इति श्रीगीतासु मायाख्यापरप्रकृत्यतीतत्वेन जीवस्य तादृशत्वे व्यक्ते सत्यप्यचिन्त्यशुद्धशक्त्या जीवेश्वरभेदे सूर्यतद्रश्मिपरमाणुवृन्दवदविनाभावेन प्रकाशैकरूप्येण चाभेद उपादिश्यते प्रयोजनं तु मुमुक्षूणां परमेश्वरतादात्म्यानुभवात्स्वशुद्धतानुभवेन देहाद्यावेशनिरसनं भक्तिकाङ्क्षिणां तन्नित्यसम्बन्धज्ञानेन तद्भजनं वक्ष्यन्ति च श्रुतयः "स्वकृतपुरेष्वमीष्वबहिरन्तरसम्वरणं तव पुरुषं वदन्त्यखिलशक्तिधृतोंऽशकृतम्"इति नृगतिं विविच्य कवयो निगमावपनं भवत उपासतेऽङ्घ्रिमभवं भुवि विश्वसिताः "इति येन श्रीभगवति सर्वपुरुषार्थशिरोमणिपरमप्रेमास्पदत्वस्यानुभवश्च स्यात् तदनन्तरं हि दुरवगमेत्यादौ "न परिलषन्ति केचिदपवर्गमपीश्वर ते"इति तथैव श्रीब्रह्मस्तवान्ते राजप्रश्नानन्तरं श्रीमन्मुनीन्द्रेणोत्तरितञ्च । ननु तत्त्वमस्यादिवाक्यानां महावाक्यत्वम् आत्मिकत्वं प्रयोजनत्वं वा युक्तं लक्षणामयवाक्यस्य प्रमाणान्तरसापेक्षत्वेन स्वतःप्रामाण्यहानेर्गौणत्वापातात् तादृशमहावाक्यानुगतानां सर्वासामपि श्रुतीनां तत्प्रसङ्गात् तथानेकेषां वाक्यानां महावाक्यत्वायोगात् तेषां प्रादेशिकत्वाच्च निश्चितञ्च तासां सर्वासामेव गौणार्थत्वमात्रस्वीकरणं यथाहुः—

"एकस्यापि च वाक्यस्य गौणत्वस्वीकृतौ सत्याम् ।
महती जायते लज्जा यत्र यत्राखिलावरा ॥
अत्रमुख्यार्था इति च देष्यस्तन्मार्गानुवर्तिनाम् ।
कथं न जायते लज्जा वक्तुं शाब्दत्वमात्मनः ॥ इति

न च जीवेशयोरैक्यज्ञानं सर्ववेदार्थः तत्सिद्धनिर्विशेषं वा निराकृतत्वात् भगवत एव तदर्थत्वेन दर्शितत्वाच्च तथा अस्थूलमित्यादीनां नेति नेतीत्यादीनां च निषेधवाक्यानां तन्मते यद्वाङ्मनसातीतनिर्विशेषवस्तुवर्धकत्वं तदपि न सम्भवति नहि यन्न ज्ञायते तदर्थाधः कर्तुं शक्यते निर्विशेषं वा ज्ञातुं शक्यते तस्मात्प्राकृतवस्तुमात्रधर्मतानिषेधतात्पर्यत्वमेव तेषामप्राकृतगुणपरिच्छिन्नधर्माश्रयताज्ञापनाय तथा नेह नानास्ति किञ्चन इत्यस्यापि यदिह किञ्चन नास्ति तान्नानास्ति किन्त्वेकात्मकत्वमेव विवक्षितम् अन्यथेह किञ्चन नास्ति नानात्वं नास्तीति इत्येकतरेणैवाभिप्रेतासिद्धिः स्यात् किं द्वयोरुपादानेन तस्मादपि तदीयधर्माणां तदेकात्मकत्वात्पूर्ववदेवाप्राकृतत्वादिकमिति नच निर्विशेषत्वं वक्ष्यमाणस्तुतेः सम्मतं जयजयेत्याद्युपक्रमे स्वरूपशक्तेरहेयत्वावगमात् द्युपतय इत्याद्युपसंहारे च अतएवशब्देन पूर्वश्लोकस्यार्थः कालदेशपरिच्छेद एव लभ्यते निरस्यते चात्र स एव नतु विशेषमात्रम् अप्रस्तुतत्वात् अनन्तकोटिब्रह्माण्डाश्रयत्वेन प्रत्युत नानाशक्तिवैशिष्ट्यमेव लभ्यते यदि च तस्यां स्तुतौ निर्विशेषज्ञानमेव विवक्षितं स्यात्तर्हि तत्पूर्वं ब्रह्मैक्यमेव मध्येमध्ये स्तूयेत प्रत्युत तदतिक्रम्य न परिलषन्तीत्यादिभिः श्रीभगवद्भक्तिरेव स्तुता तस्माद्यद्विधीयते तदेव स्तूयत इति वैदिकन्यायेन श्रीभगवानेव प्रकारणार्थः सम्मतेपि तत्त्वमस्यादिवाक्यैः कथञ्चिदेव तत्तदर्थस्याधर्मसिद्धश्च नतु दुरवगमात्मतत्त्वनिगमाय तवात्ततनोश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः । न परिलषन्ति केचिदपवर्गमपि" इत्यादिवत् परमानन्दनैवोतिहयम् तदेवं तत्त्वमस्यादीनामप्राधान्यं मत्वा स्वतःप्रमाणभूतानां वेदवृक्षाणां प्रादुर्भावकस्य बीजस्य तद्बीजत्वादेव वेदः प्रणव एवाग्रे इत्युक्तत्वात् सर्ववेदवाक्यार्थसमन्वयनिधानत्वेन महत्त्वमकाराद्यक्षरात्मकपरस्परसम्बन्धपदसमुदायत्वाद्वाक्यत्वं ततश्च परमवाक्यस्य साक्षाद्भगवद्वाचकस्य श्रीमत्प्रणवस्यैव प्राधान्यम् अत एव—

" अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ।
ॐकारो विदितो येन स मुनिर्नेतरो जनः ॥ इति

साधारणश्रुत्यन्तरं तदेव निर्धारयति स्वयममात्र एकरूपः क्वचिद्वृत्तिश्रुतिभिरनन्तमात्रः द्वैतस्योपशमः भगवन्मात्रवाचकतया वेदान्तरनिरासकश्चेत्यर्थः । तस्मात्परममहावाक्यस्य साक्षाद्भगवद्वाचकस्य श्रीमत्प्रणवस्यैव प्राधान्यं मत्वा तदभिधेयस्य श्रीभगवत एव सर्वयोग्यताहेतुत्वेन परमयोग्यतां वदन् सर्ववेदाभिधेयत्वमाह—बुद्धीति । अत्र प्रणव स्वसाक्षाद्वाचकत्वादिकम् "ॐमित्येतद्ब्रह्मणो नेदिष्ठं नामे"ति श्रुते नेदिष्ठमतिशयेन निकटं स्वल्पमपि व्यवधानं विनैव वाचकमित्यर्थः तथा "ओं विश्वं विष्णुः"इति सहस्रनामस्तोत्रात् स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः स सर्वोऽपि नेपद्मलवेदबीजं सनातनमिति—

"ततो भूतत्रिवृदोङ्कारो योऽव्यक्तप्रभवः स्वराट् ।
तत्तालिङ्गं भगवतो ब्रह्मणः परमात्मनः ॥ "

इति च द्वादशात् श्रीभगवतः सर्वयोग्यताहेतुत्वंच " दृतय इव श्वसन्त्य सुभृतो यदि तेऽनुविधाः " इत्यादि वक्ष्यमाणात् —

यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ
तस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मनः इति श्रुतेः—
यावे साधनसम्पत्तिः पुरुषार्थचतुष्टये ।
तथा विना तदाप्नोति नरो नारायणाश्रयः ॥

इति मोक्षधर्मात् —

यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ।
योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति ॥ इति

चैकादशात् अतो मोक्षान्यथानुपपत्त्या सामानाधिकरण्यं व्यज्यत इति च निरस्तम् अथ प्रणवार्थानुसारेण बुद्धीन्द्रियेत्यस्यार्थश्च अकाराद्यात्मकपदत्रयप्रणवर्थोहि "सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैः "इत्यादौ स्थित्यादय इतिवत् सृष्टिस्थितिप्रलयकर्तृत्वो·

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एकाकितः प्रणवमेवसर्ववेदैः सर्वभजनीयः परमपुरुष एव समर्पितः अत्रापि तथेति तथाहि जनानां प्रलये निजैकाश्रयाणां जीवानां मायार्थैहिकविषयभोगार्थं जन्मान्तरतद्भोगार्थम् आत्मने शुद्धात्मभावाय आत्यन्तिकप्रलयलक्षणमोक्षाय अकल्पमाय कल्पना सङ्कल्पान्तरं तद्विहिताय प्रेमैकमयशुद्धस्वभजनायेत्यर्थः। तस्मात्

"ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः।
द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः॥
यथेन्द्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः।
एको नानेयते तद्वद्भगवान् शास्त्रवर्त्मभिः॥ इति

श्रीकपिलदेववर्णितः सर्वतः पूर्णाविर्भावः श्रीभगवानेव न निर्विशेषं ब्रह्मेति साधयेवोक्तं भवता अतस्त एव वाञ्छितजनतुल्यवेदस्तुत्यत्वेनोपक्रमोपसंहारादिभिर्दर्शयितव्यः किन्तु ब्रह्मवादिना त्रिविधाः रजततया शुक्तिवदज्ञानेन ब्रह्मैव द्वैततया विवर्त्तत इत्येके नानापदार्थतया चिन्तामणिवदविकृतमेव सदाचिन्त्यशक्त्या ब्रह्मैव द्वैततया परिणमत इत्येके तत्र पूर्वेतु "श्रुतेस्तु शब्दमूलत्वात्" इति श्रीबादरायणमतादूहिर्भूता अनीश्वरवादिन इति पूर्वपूर्वयुक्त्या खण्डिताः उत्तर एव च तदन्तर्भूताः स्वीकृताः उत्तरेचैते खल्वीश्वरवादिनोऽपि शक्तिविशेषं विना सच्चिदानन्दविग्रहत्वादिभिर्भगवत्ताविशेषग्रहणासमर्था भगवन्तमेव निर्विग्रह(ब्रह्म)तया मन्यन्ते उपासते च तथैव बुद्धीन्द्रियत्वाद्यनुसारेण भगवद्दत्तशक्त्यैवानुभवन्ति यथोक्तं श्रीमत्स्यदेवेन—

"मदीयं महिमानञ्च परं ब्रह्मेति शब्दितम्।
वेत्स्यस्यनुगृहीतं मे सम्प्रश्नैर्विवृतं हृदि" ॥ इति।

अत्राभेदेऽपि महिमत्वेन निर्देशस्तदपि स्वस्यैकदेशाविर्भावरूपमिति स्वस्य भगवद्रूपतायां पूर्णप्रकाशकत्वं व्यञ्जितं यथोक्तं श्रीध्रुवेन "या निर्वृतिस्तनुभृतां तव पादपद्मध्यानात्" इत्यादौ सा ब्रह्मणि "स्वमहिमन्यपि नाथ माभूत्" इतिताद्दशब्रह्मोपासनाफलं शुद्धात्मतया तत्तादात्म्यप्राप्तिश्च मारना सालोक्यसार्ष्टिसारूप्येत्यादिना तदेतद् ब्रह्म च सर्वातीतप्रकाशत्वादप्राकृतस्वरूपगुणत्वादनिर्देश्यमेव तदेतच्च यया भगवद्दत्तशक्त्याऽनुभवन्ति सा चाप्राकृतस्वरूपगुणत्वावलम्बकोपनिषदाख्यश्रुतिसम्बन्धादुद्भवति औपनिषदः पुरुषः इति "तन्त्वौपनिषदं पुरुषं पृच्छामि" इति श्रुतेः वक्ष्यमाणोऽपि नृसिंहश्चरतीति वक्ष्यते—

"तदेतद्वर्णितं राजन् यो नः प्रश्नः कृतस्त्वया।
यथा ब्रह्मण्यनिर्देश्ये निर्गुणेऽपि मनश्चरेत्॥ इति

यथा निर्गुणेऽपि अत्रत्रयेस्याद्यष्टाविंशतिप्रकारकश्रुतिमार्गेण प्रकाशितनिजगुणेऽपि किमुत प्रकाशितनिजगुणः इत्यर्थः। अथवा पूर्वं "सर्ववेदमयो विप्रः सर्वदेवमयोह्यहम्" इति स्वस्य स्वयं भगवता सर्ववेदप्रमेयत्वमुक्तं श्रीविष्णुरातेन च तस्मिन् श्रीकृष्णाख्य एव भगवति परब्रह्मत्वं तत्र तत्रावधारितं "गूढं परब्रह्ममनुष्यलिङ्गं" परब्रह्मनराकृति तदमितं ब्रह्माद्वयं शिष्यते यस्मिन् परमानन्दं पूर्णं ब्रह्मसनातनमित्यादिः अतः श्रीगोपालतापन्यां कथमस्यावतारस्य ब्रह्मता भवतीति प्रश्नः ब्रह्मत्वं ह्यनुपचरितवृहत्तमत्वं तच्च स्वरूपेण गुणेन च व्यापकम् अत एव वैकल्ये तदंशहीनत्वादुपचरितत्वप्राप्तेः तदेवं ब्रह्मता कथं स्यादिति प्रसिद्धाशुबोधकैव श्रुतौ श्रीगान्धर्व्यायाः प्रश्नः अत्र च श्रीपरीक्षितः तत्प्रस्ताव एव चानेनात्र कर्तुं युक्तः तदर्थमेव श्रीब्रह्मस्तवकस्य श्रोतुमारब्धत्वात् सर्वविद्वत्परम्परादिगुरूणां श्रुतीनामपि तदेकालम्बकताबाक्येन श्रीमन्मुनीन्द्रोऽपि तथैवाङ्गीकरिष्यति "स्त्रिय उरगेन्द्रभोग भुजदण्ड विषक्तधियो वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः" इति अतः श्रीनारदोऽपि तच्छ्रवणानन्तरं तमेवोद्दिश्य तद्रूपेण श्रीनारायणं नमस्यति—

"नमस्तस्मै भगवते कृष्णायामलकीर्त्तये।
यो धत्ते सर्वभूतानामभवायोशतीः कलाः॥ इति

अत एव श्रीविष्णुरात उवाचेत्युक्त्वा "ब्रह्मन् ब्रह्मण्यनिर्देश्ये" इत्याद्यर्थस्य सूचनात्तस्य ताद्दशाभिप्रायः एव दृढीकृतः ततस्तत्रैव वेदप्रमेयत्वं सन्दिह्य पृच्छति ब्रह्मन्निति श्रीकृष्णस्यास्य साक्षाद्ब्रह्मरूपपदविशेषाप्रयोगस्तु सामान्याकारतयापि प्रश्ने स्वजिज्ञासितं ज्ञास्यते किं विशेषेणेत्यभिप्रायात् अतो जयजयेत्युपक्रमे वीप्सा युक्ता जिघांसोत्कर्षाविष्करणरूपोऽर्थः श्रीकृष्णस्वरूपस्यासाधारणगुणपर्य्यन्त एव ज्ञेयः अतन्निरसनेनेत्युपसंहारेऽपि "अन्तर्भवेऽनन्त भवन्तमेव ह्यतत्त्यजन्तो मृगयन्ति सन्तः" इति श्रीब्रह्मस्तवव्याख्यानुसारेण तत्पर्य्यन्त एवेति ततश्च ब्रह्मणि अनन्तस्वरूपगुणे तत्राप्यनिर्देश्ये सर्वप्रत्यग्रूपत्वादेकांशेनापि निर्देष्टुमशक्ये भूयन्त इति श्रुतयः परिमिताः पराङ्मुखाश्च साक्षान्मुख्यवृत्त्या कथं केन प्रकारेण चरन्ति तं प्रकारं कथयेत्यर्थः। "यतो वाचो निवर्त्तन्ते। विष्णोर्नुकं वीर्य्याणि प्रवोचम। यद्वाचानभ्युदितं येन वागभ्युद्यते" इतिश्रुतेः। "मुकुन्दपदवीं श्रुतिभिर्विमृग्याम्। अद्यापि यत्पदरजः श्रुतिमृग्यमेव" इत्युक्तत्वाच्च यतो निर्गुणं निर्गता गुणेभ्यः सत्त्वादिभ्यो गुणा यस्य तस्मिन् मध्यपदलोपी समासः तथा सदसतः परे तेषां तत्कार्य्याणाञ्च सम्बन्धरहिते तत्तद्रूपत्वाद्दृष्टान्तद्वारा गौण्या सम्बन्धिद्वारा तु लक्षणया च निर्देष्टुमनर्हे इत्यर्थः। कथं तत्राह गुणवृत्तयः सत्त्वादिगुणेषु तत्कार्य्येषु च वृत्तिर्यासां ताः यथोक्तं श्रीगीतासु "त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन" इति श्रीभगवतः प्रकृतिगुणातीतगुणत्वञ्च प्रसिद्धं तथैवात्र वक्ष्यति—

"हरिर्हि निर्गुणः साक्षात्पुरुषः प्रकृतेः परः।
स सर्वदृगुपद्रष्टा तं भजन्निर्गुणो भवेत्" ॥ इति

श्रीविष्णुपुराणे—

"सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः।
स शुद्धः सर्वशुद्धेभ्यः पुमानाद्यः प्रसीदतु" ॥ इति

एकादशे—

"मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम्।
सुहृदं प्रियमात्मानं साम्या सङ्गादयो गुणाः" ॥ इति

अत्र निर्गुणं प्रकृतिगुणैरसंस्पृष्टमेव मां कथम्भूतास्ते अगुणाः गुणपरिणामरूपा न स्युरिति टीकानुसन्धितश्च प्रथमे "एते चान्ये च भगवन्नित्या यत्र महागुणाः" इति अत्र च नित्यत्वादप्राकृतत्वमेव लभ्यते एतदुक्तं भवति पूर्वं भगवति श्रुतीनां प्रमाणत्वं व्यञ्जितं तच्च साक्षात्कारजत्व एव सङ्गच्छते अन्यथा साधकतमकरणमित्यत्र तमवर्थव्याप्तेः तासां तु विशेषतः स्वतः प्रमाणभूतत्वमेवाङ्गीकृतं श्रीभगवतस्तत्वेकप्रमेयत्वञ्च ततः साक्षाच्चरणमेवोभयवादिभिर्मन्तव्यं विशेषतश्च श्रीभगवन्नामादिर्महिमविशेषैर्वाद्धभावयतः अन्यथा

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

चरणमात्र मया पृष्टमेव यथास्थितं पूर्वं कथं साक्षात् चरन्तीति येन प्रकारेण साक्षाच्चरन्ति स प्रकारः कथ्यतामित्यर्थः इति । तत्र समाधत्ते—बुद्धीन्द्रियेति । जनानां मनुष्यत्वबीजनानाजातिजीवानां महाप्रलये प्रकृत्या सह स्वस्मिन् लीनानां मात्रार्थं मीयन्ते गुणाः गुणकार्याणि गुणानीतानि वाभिरिति मात्राः श्रुतयः तदर्थं तद्धारणार्थं बुद्ध्यादीनसृजत् तद्द्वारा च भवार्थमभ्युदयार्थं ब्रह्मलोकादिभोगप्राप्त्यर्थम् आत्मने जीवतत्त्वं ज्ञापयितुम् अकल्पनाय कल्पनाः मायावृत्तयस्तद्राहित्यं भगवत्तत्त्वमकल्पनं यदुक्तं वरुणेन—

"नमस्तस्मै भगवते ब्रह्मणे परमात्मने ।
न यत्र श्रूयते माया लोकसृष्टिविकल्पना" ॥ इति

तदपि ज्ञापयितुं बुद्ध्यादीनसृजत तत्र विचारासम्यक्त्वेन श्रुतिधारणादिकस्य पूर्वद्वयार्थता तत्सम्यक्त्वेन तु भगवदेकार्थतेत्युत्तरोत्तरोपादानप्राप्तपूर्वपूर्वापरितोषप्राप्तमनोत्तरोत्तरोत्कर्षेण लभ्यते तदुक्तं द्वितीये—

"भगवान्ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया ।
तदध्यवस्यत्कूटस्थो रतिरात्मन्यतो भवेत्" ॥ इति

यं सर्वे देवा नमन्तीत्यादिपूर्वोदाहरणेभ्यश्च अयं भावः श्रुतिधारणाद्यर्थं बुद्ध्यादीनसृजदिति तेन बुद्ध्यादयः श्रुत्यादिद्वारा भवादिसाधनानीति बुद्ध्यादिषु श्रुतीष्व तत्तद्योग्यतां न्यस्तवान् अत एव प्रभुपदोपादानं तत्र बुद्ध्यादीनां योग्यता श्रुतिधारणादिषु स्वतः अन्येषु श्रुतिद्वारा बुद्ध्यादिसंस्कर्त्रीणां श्रुतीनां तु सर्वत्र स्वतः यथा मन्त्रादीनां स्वरूपप्रभावमयी उपनिषदादीनां तदंशाभिभवस्वाभिधादिशक्तिमयी कर्मकाण्डादीनां तदंशाद्वयभिभवविधिमात्रबलानुष्ठानमयीति सा सा पुनर्द्विधा मायातद्गुणावलम्बिनी स्वरूपतद्गुणावलम्बिनी च तत्र स्वरूपतो मायागुणानां निष्कर्षः प्रसिद्ध एव स्वरूपेश्वात्मपरमात्मब्रह्मभगवद्रूपेणावस्थितेपि भगवत्येव परमोत्कर्षो ज्ञेयः—

"कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥
ब्रह्मणो हि प्रतिष्ठाऽहम् । यस्मात् क्षरमतीतोऽहम् "

इत्यादिभ्यः तस्मात्परमोत्कृष्टस्वरूपगुणनिर्देशेन चरन्त्यः श्रुतयः साक्षादेव ● श्रीभगवति चरन्ति तदेकवाक्यत्वेन अन्या अपि चरन्तीति "त्रैगुण्यविषया वेदाः" इति तु कर्मोपासनाविषयमेव तथैव परममहावाक्यतयाऽङ्गीकृतं प्रणवमुद्दिश्योक्तं द्वादशे—

"स्वधाम्नो ब्रह्मणः साक्षाद्वाचकः परमात्मनः ।
स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम्" ॥ इति

अतः खण्डवाक्येन क्रमात्तमुद्दिश्यैव मायादिष्वात्मादिष्वपि चरन्ति तथैव वक्ष्यन्ति श्रुतयः "क्वचिदजयात्मना च चरतो नुचरेन्निगम' इति यथैव व्याख्यातं ब्रह्मस्तवे अन्तर्भवेऽनन्त भवन्तमेव ह्यतत्त्यजन्तो मृगयन्ति सन्तः इति तासां च मनोरथान्तं श्रुतयो ययुः एवमेवोक्तं श्रुतिभिर्विमृग्यामित्यादि किञ्च श्रीभगवति श्रुतयस्साक्षाच्चरन्तीति किं वक्तव्यं यत्र भगवन्नामग्रन्थादिरूपाविनाप्यवधानमुच्चारणमात्रेण तमाकर्षन्ति यथोक्तं षष्ठे "नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः" इति टीकायां नामोच्चारकपुरुषविषया मतिर्भवतीत्यादिका "सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात्" इति तत्स्वरूपभूता एव च ताः प्रभासपुराणे—

"मधुरमधुरमेतन्मङ्गलं मङ्गलानां
सकलनिगमवल्लीसत्फलं चित्स्वरूपम् ।
सकृदपि परिगीतं श्रद्धया हेलया वा —
भृगुवर नरमात्रं तारयेत्कृष्णनाम" ॥ इति

नारदपञ्चरात्रे अष्टाक्षरमुद्दिश्य ।

"व्यक्तं हि भगवानेव साक्षान्नारायणः स्वयम् ॥
अष्टाक्षरस्वरूपेण मुखेषु परिवर्त्तते ॥

इति । श्रुतिश्च "नामचिद्धि विवक्त नमस्तेऽस्तु विष्णोस्सुमतिं भजामहे" इति माण्डूकोपनिषच्च प्रणवमुद्दिश्य "प्रणवो ह्यपरं ब्रह्म प्रणवश्च परं स्मृतम्" इत्यादिका अतो 'यतो वाच' इत्यादिकाः श्रुतयश्च अनन्तत्वलोकप्रसिद्धतादि सूचयित्वा तथैव वदन्ति वक्ष्यन्ति च श्रुतयः "द्युपतय एव ते न ययुरन्तमनन्ततया" इत्यादि "क इह नु वेद बता वरजन्मलयोऽग्रसरम्" इत्यादि च ॥ २ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सर्वे शब्दाः चिदचिद्द्वारा तस्मिन् वर्त्तन्त इति, परिहार उच्यते–बुद्धीन्द्रियेति । मात्रार्थे देहोत्पादनार्थे भवार्थम आत्मने आत्मज्ञानार्थे कल्पनाय सृष्ट्याद्यर्थे जगद्व्यापाररूपक्रियार्थमित्यर्थः ॥ २ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अत्र "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि । नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म । सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाभिवदन् यदास्ते । तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत्" इत्यादिश्रुतयः स्वपर्यन्तनामरूपव्याकरणेन तत्तच्चिदचिद्वस्तुशरीरकतया तत्तच्छब्दवाच्योऽभूदिति प्रतिपादयन्त्यः परिहारमाहुरित्यभिप्रेत्य तत्र तत्र बहुशो जगत्सर्गप्रकारवर्णनयैव प्रकृतप्रश्नस्योत्तरमुक्तप्रायमिति चाभिप्रेत्य केवलं सृष्टिमात्रं स्मारयति—बुद्धीन्द्रियेति । जनानां जीवानां बुद्ध्यादीनसृजत प्रभुरध्यक्षः निर्वाहक इति यावत् अयमभिप्रायः स्वयमन्तरात्मतया नामरूपनिर्वाहको भवितुं बुद्ध्यादिशब्दोपलक्षितसमष्टिपरम्परया महाभूतपर्यन्तमात्मानं तत्तच्छरीरकं परिणमय्य तन्मयः पुनः सदसच्छब्दवाच्यचिदचिन्मिश्रदेवादिस्थावरान्तजगद्रूपतत्तच्छब्दवाच्यश्चाभवदिति एवं चिदचित्पदार्थानां सर्वेषां परमात्मशरीरतैकस्वभावत्वात् तत्त्वेनैव तेषां वस्तुत्वादपृथक्सिद्धविशेषणत्वाच्चापृथक्सिद्धविशेषणवाचिशब्दानामाकृत्यधिकरणन्यायेन विशेष्यपर्यन्ताभिधानस्वाभाव्याद्गवादिशब्दानां गोत्वादिकं प्रवृत्तिनिमित्तीकृत्य व्यक्तिपर्यन्ताभिधानस्य मुख्यत्ववत् सर्वेषां लोकव्युत्पत्तिसिद्धस्वस्वार्थाभिधायिनां स्वस्वार्थाद् परमात्मापृथक्सिद्धविशेषणभूताद् प्रवृत्तिनिमित्तीकृत्य परमात्माभिधानं मुख्य-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भवेति विस्तरस्तु भाष्यादिष्वनुसन्धेयः । परमकारुणिकस्य अवाप्तसमस्तकामस्य स्वपरप्रयोजननिरपेक्षस्य ब्रह्मणो जगत्सर्गेण प्रयोजनं किमित्यत आह—मात्रार्थमिति । आत्मने कल्पनाय चेति तादर्थ्यचतुर्थ्यन्तं मात्रार्थं देहार्थं तदुत्पादनार्थमित्यर्थः । असत्प्रायाणां जीवानां स्वाराधनोपयुक्तकरणकलेवरादिप्रदानेनोज्जीवनार्थं जगत्सर्गे प्रवृत्तिरिति परिपूर्णस्यापि परानुजिघृक्षा सङ्गतैवेतिभावः । अत एव गर्भजन्मजरामरणाद्यनेकदुःखावहजगत्सर्गप्रयुक्तनैर्घृण्यशङ्कापि निरस्ता दुःखस्य तत्तज्जीवानादिकर्मप्रयुक्तत्वात् मीयन्त इति मात्राः देहाः भवार्थमभ्युदयार्थमाराधयितृभ्यो निःश्रेयसरूपाभ्युदयप्रदानार्थमित्यर्थः । अनेन देहोत्पादनस्यापि प्रयोजनमुक्तं यद्वा भवार्थं त्रैवर्गिकरूपश्रेयःप्रदानार्थम् आत्मने अध्यात्मज्ञानार्थं मुक्तिसाधनोपासननिष्पत्तये इत्यर्थः । यद्वा आत्मार्थं जीवात्मस्वरूपसत्तालाभार्थं प्रलयावस्थायामसत्प्रायाणां जीवानां परमात्मनः आत्मत्वं शेषशेषिभावज्ञानेनैव ह्यात्मसत्तालाभः अकल्पनाय कल्पनं ज्ञानैकाकारेष्वात्मसु देवमनुष्यादिकल्पनं भेद इति यावत् तदभावाय मुक्तये उपायानुष्ठानेन देवादिभेदनिवृत्तिपूर्वकमुक्त्यर्थञ्चेत्यर्थः । यद्वा सर्वमिदं सङ्कल्पमात्रेणैवोपपद्यतामित्यत आह—कल्पनाय चेति । कल्पनं क्रीडनं तस्मै परिपूर्णस्यापि क्रीडार्थं जगद्व्यापार इति भावः ॥ २ ॥

———

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

सर्वे शब्दाश्चिदचिद्द्वारा तस्मिन्नेव प्रवर्तन्ते इति तस्य परिहार उच्यते—बुद्धीन्द्रियेति । प्रभुः सर्वस्वामी सर्वनियन्ता सर्वशेषी सर्वेश्वरो जनानां जीवानां बुद्ध्यादीनसृजदुत्पादितवान् तथा च वक्ष्यते एकादशे—

"एभिर्भूतानि भूतात्मा महाभूतैर्महाभुजः ।
ससर्जोच्चावचान्याद्यः स्वमात्रात्मप्रसिद्धये" ॥ इति

किमर्थमसृजत्तदाह—मात्रार्थं मीयन्ते शब्दादिविषया येन मात्रो देहस्तदुत्पादनार्थं भवार्थं भव उत्पत्तिस्तत्प्रभृतिभगवदाराधनरूपकर्मकरणमित्यर्थः । आत्मने अध्यात्मज्ञानार्थं जगद्व्यापाररूपलीलार्थमित्यर्थः । सूक्ष्मचिदचिद्विशिष्टकार्यकारणोभयावस्थपरब्रह्मप्रतिपादनेन चिदचिद्वस्तुशरीरतया श्रुतीनां तत्प्रतिपादकत्वमिति प्रत्युत्तरार्थं इत्यर्थः ॥ २ ॥

———

योगिरामानुजाचार्यकृतसरलाख्याव्याख्या ।

एवं पृष्टः शुकः उत्तरमाह—भगवतः जगज्जन्मादिकारणत्वे निरूपिते ब्रह्मणः जगत्कारणत्वस्य तदुपयुक्तज्ञानशक्त्यादिगुणानाञ्च प्रतिपादकानां श्रुतीनां भगवत्प्रतिपादकत्वप्रकारं भगवतश्च तादृशश्रुतिप्रतिपादितकल्याणगुणाकरत्वं निर्गुणशब्दस्य च प्राकृतौपाधिकगुणराहित्यपरत्वञ्च अर्थात् प्रतिपादितं भवति ततश्च निर्गुणे ब्रह्मणि गुणवृत्तयः श्रुतयः कथं चरन्तीति प्रश्नस्य प्रत्युत्तरं सम्यगुक्तं भवतीति तात्पर्येण ब्रह्मणः जगत्कारणत्वप्रतिपादकं श्लोकमवतारयति बुद्धीति । प्रभवति समर्थो भवति सर्वकार्येषु इति प्रभुः सर्वकारणसमर्थो भगवान् जनानां चेतनानां बुद्धीन्द्रियमनः प्राणान् असृजत् सृष्टवान् एतद्विशेषणेन च "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतयः जगज्जन्मादिकारणत्वादि गुणविशिष्टस्वरूपेण ब्रह्म प्रतिपादयन्तीति प्रत्युत्तरं सुसङ्गतमिति भावः । "जन्माद्यस्य यतः" इति सूत्रे च तथा गुणविशिष्टत्वेन ब्रह्मणः निरूपितत्वात् किमर्थमसृजदित्यत आह—मात्रेति । मीयन्त इति मात्राः शब्दादयो विषयाः तदर्थं तद्भोगार्थमित्यर्थः । भवार्थञ्च भवः वारं वारं देवमनुष्यादिशरीरप्राप्तिरूपं जन्म तदर्थमित्यर्थः । बुद्धीन्द्रियादिसम्प्राप्त्या कर्मोत्पत्तिः तादृशकर्मणा च तत्तत्कर्मानुगुणशरीरप्राप्तिरिति भावः—

"शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्" ॥

इति वचनात् प्रयोजनान्तरमाह—आत्मन इति । आत्मने सर्वान्तरात्मभूतभगवदर्थं तदाराधनार्थमिति यावत् भगवदाराधनार्थमेव करणकलेवरदानमिति भावः—

"विचित्रा देहसम्पत्तिरीश्वराय निवेदितुम् ।
पूर्वमेव कृता ब्रह्मन् हस्तपादादिसंयुता ॥

इत्यादिवचनात् यद्वा आत्मने भगवदर्थं तल्लीलार्थं करणकलेवरादिसृष्टेः भगवल्लीलार्थत्वात् "लोकवत्तु लीलाकैवल्यम्" इत्यादिसूत्रादिषु तथा निरूपितत्वात् अकल्पनाय देवमनुष्यादिनानाविधदेहकल्पनानिवृत्तये संसारविमोक्षणायेति यावत् अथवा न कल्पना अकल्पना अकार्यं नित्यमित्यर्थः । मोक्षमिति यावत् तत्पदप्रापणायेत्यर्थः "नास्त्यकृतः कृतेन" इति श्रुतेः । एतेन अर्थपञ्चकमप्युक्तं भवति असृजत्प्रभुरित्युक्ते सिद्धोपायस्य प्राप्यस्वरूपस्य च भगवतः स्वरूपमुक्तं भवति जनानामित्यनेन प्राप्तुः प्रत्यगात्मनः स्वरूपमुक्तं भवति आत्मने इत्यनेन भगवत्सेवार्थमित्यर्थकत्वात् साध्यभूतमोक्षोपायस्वरूपमुक्तं भवति मन्मना भव मद्भक्तो मदर्थमपि कर्माणि कुर्वन्नाप्नोति किल्बिषमित्यादिवचनात् अकल्पनायेत्यनेन मोक्षरूपफलस्वरूपमुक्तं भवति मात्रार्थं च भवार्थञ्चेत्यनेन मोक्षप्रतिबन्धकमाया संसर्गरूपविरोधिस्वरूपमुक्तं भवति तथाच—

"प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः ।
प्राप्त्युपाय फलं प्राप्तेस्तथा प्राप्तिविरोधि च ।
वदन्ति सकला वेदास्सेतिहासपुराणकाः ॥

इतिवचनमत्रानुसन्धेयम् ॥ प्रभुः जनानाम् मात्रार्थं च भवार्थञ्च आत्मने अकल्पनाय च बुद्धीन्द्रियमनःप्राणानसृजत् इत्यन्वयः ॥ २ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रुतयः सत्त्वादिगुणराहित्येन निर्गुणे ज्ञानानन्दादिगुणगणमणिमालालङ्कृतविग्रहे ब्रह्मणि साक्षाद्वर्तन्त इति परिहारमभिप्रेत्य पीठिकामारचयति—बुद्धीति । बुद्ध्यादिसर्जनेन किं

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

प्रयोजनमत्राह—मात्रार्थमिति। मात्रापरिच्छेदे देशे प्रवृत्तौ कर्णभूषण इत्यतो मात्राप्रवृत्तिः शब्दानामितिशेषः। तदर्थं "मनसा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति" इति श्रुतेः किमर्थमत्राह—भवार्थमिति। "भवो भद्रे हरे प्राप्तो" इत्यतो भवो भद्रं कल्याणं पुण्यमिति यावत् तदर्थं "स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः तद्धि तपस्तद्धि तपः" इतिश्रुतिः चशब्दौ समुच्चयार्थौ बुद्ध्यादीन्द्रियपूर्विका शाब्दीप्रवृत्तिरपि न स्वर्गादिविषया किन्तु परमात्मविषयैव पुण्यसाधनमित्यभिप्रायेणाह—आत्मन इति। सन्ध्यकरणात् सदसद्विलक्षणः एवात्मा तमात्मानमुद्दिश्य शब्दराशेः प्रवृत्तिरिति भावः। ततः परमप्रयोजनमाह—कल्पनायेति। कल्पनाय परमात्मज्ञानाय "सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्" इतिश्रुतेः चशब्देन मोक्षायेति सूचयति "तमेव विद्वानमृत इह भवति। ज्ञानेनामृतो भवति" इतिश्रुतेः अनेन वक्तृविवक्षापूर्विका शब्दप्रवृत्तिरित्यतो बुद्धीन्द्रियादिमत एव सुप्रयुक्तशब्देन ज्ञातपरब्रह्मतत्त्वगुणोपसंहारज्ञानप्रसन्नभगवत्प्रसादादिमोक्षप्राप्तेः शब्दानां श्रीहरिविषयत्वं साक्षादङ्गीकर्तव्यमित्युक्तं भवति ॥ २ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

इति राज्ञो निर्णयमाकलय्य स्वीकार्य्यापि तदेवानुमोदमान आह—बुद्धीन्द्रियेत्यादि। प्रभुर्भगवान् श्रीकृष्णः जनानां जीवानां बुद्ध्यादीन्यसृजत् जायन्त इति जनाः जीवाः तेषां बुद्धीन्द्रियाणि मनःप्राणांश्च असृजत् वस्तुतस्तस्यैव स्वांशाश्रितस्वरूपा जीवास्तस्य बुद्ध्यादीनां स्वतोऽसम्भवात् स्वयं स्वेनांशेन जीवान् सृष्ट्वा बुद्ध्यादीनप्यसृजदित्यर्थः। "ममैवांशो जीवलोके जीवभूतः सनातनः" इति तदुक्तेः एकस्यैव ममांशस्य जीवस्यैव महात्मन इति च किमर्थं ससर्ज? मात्रार्थम् इत्यादि मात्रा विषयास्तदर्थं भव ऐश्वर्यं तदर्थम् आत्मने आत्मभजनार्थम् अकल्पनाय अपुनरावृत्तये कैवल्याय कौतुकाद्नानाभावदिदृक्षा नानाकल्पनं हि कौतुकं केचिद्विषयासक्ताः सन्तु केचिद्भक्तिमन्तो मां भजन्तु काश्चित्केवला अपि यतन्तामिति हि कौतुकं तच्च तेषां बुद्ध्यादियोगेनैव भवतीति तत्तत्कल्पनं तेनासौ भगवान् ब्रह्म शब्दवाच्यः स्वयं प्राकृतगुणरहितोऽपि जगत्कर्तृत्वादिसर्वज्ञत्वादिभक्तवात्सल्यत्वादिनित्याप्राकृतगुणोऽचिन्त्यैश्वर्यो ब्रह्मैव सविशेषं तस्मिन्नेव श्रुतयश्चरन्ति इति युक्तमेव वितर्कितं भवता ब्रह्मन् ब्रह्मण्यनिर्देश्य इति यद्यपि भगवानपि अनिर्देश्यः अचिन्त्यमहिमा निर्गुणः प्राकृतगुणरहितः साक्षाद्विग्रहः स च सदसत्परः तथापि श्रुतयस्तमेव चरन्तीत्यर्थः ॥ २ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

सिद्धान्तमाह—बुद्धीन्द्रियेति। अत्र पूर्वपक्षवादी प्रष्टव्यः किं ब्रह्म श्रुतिसिद्धम् श्रुतिद्वारा त्वया अवगतं विचार्यत्वेन निर्दिश्यते आहोस्वित् स्वबुद्ध्या परिकल्पितम् आद्ये प्रतिपाद्यत्वे न सन्देहः प्रकारान्तरचिन्तयिष्यते द्वितीयपक्षस्त्वप्रामाणिकः सद्भिरुपेक्ष्यः ब्रह्म च यादृशं वेदान्तेष्ववगतं तादृशमेव मन्तव्यं तत्र मूलभूतं सर्वव्यवहारातीतमपि स्वयमेव स्वशक्तिरूपेण स्वधर्मेण स्वकार्यरूपेण च जातमिति श्रुतिः प्रतिपादयतीति स्वयमेव च वक्ति अतः सर्वस्यैव श्रुत्येकसमधिगम्यत्वात् सङ्केतश्चादूरविप्रकर्षेण लोकधर्मसाम्येन वैदिकपरम्परयैव जायत इति सर्वस्यैव भगवद्भावस्य खण्डशः प्रतिपादकत्वात् सम्पूर्णवाक्यस्य तादृशं ब्रह्मेति ब्रह्मपरत्वं सेत्स्यति सच वाक्यार्थः अपूर्वः यथा लोके लौकिकबुद्धिविषयः पश्चात्तद्वाक्यविषयः तदभिप्रेप्सोर्ज्ञापकः एवमीश्वरबुद्धिविषयः तद्वाक्यप्रतिपाद्यः तज्ज्ञानेच्छुं बोधयतीत्येवं निश्चित्य शुकः भगवता कृतां चतुर्धा सृष्टिं प्रतिपादयति भगवानादौ बुद्धिमुत्पादयति तत इन्द्रियाणि ततो मनः ततः प्राणानिति सर्वेषां जनानां करणचतुष्टयं जनयति जीवसम्बन्धित्वेन चतुष्टयमुत्पादयतीत्यर्थः। तत्र सामर्थ्ये प्रभुरिति प्रत्येकं चतुर्णामुत्पादने प्रयोजनमाह—तत्र बुद्धेः प्रयोजनं मात्रार्थमिति मीयन्ते ज्ञायन्त इति मात्राः ज्ञानक्रियोपयोगिनो विषयाः सर्वमेव जगत् ते विशकलिताः शब्देनापि बोधिताः पुरुषस्य ज्ञानक्रियाविषयोपभोगिनो न भविष्यन्तीति बुद्धिमुत्पादितवान् सा बुद्धिः सर्वानेव सङ्कलयति यथा चित्रे सर्वपदार्थस्फूर्तिस्तथा बुद्धौ सर्वजगत्स्फूर्तिरिति ततस्तया बुद्ध्या यत्किञ्चित् ज्ञेयं कार्यं वा तत्सर्वं कर्तुं शक्यत इति मात्रार्थं बुद्धिनिर्माणम् अनेन वेदानामपि खण्डशोऽर्थप्रतिपादकानां बुद्ध्या महावाक्यार्थज्ञानं भवति इति तात्पर्यतो ब्रह्मप्रतिपादकत्वं सेत्स्यति चकारादग्रे यत् श्रयं प्रतिपाद्यं फलत्वेन तदर्थश्च बुद्धिनिर्माणं निरूपितं भव उद्भवः सर्वे प्राणिनः बुद्ध्यैवोत्कर्षं प्राप्नुवन्ति तथैवात्मने बुद्ध्यैव भगवन्निष्ठाः आत्मनिष्ठाश्च भवन्ति भगवत्सेवाञ्च कुर्वन्ति अकल्पनाय च बुद्ध्यैव ज्ञाननिष्ठा भवन्ति नानाविधपदार्थध्यानार्थं कल्पनामपि कुर्वन्ति तस्मात्सर्वं यथा सेत्स्यति सर्वा वाऽनुपपत्तिः सर्वेषां परिहृता भवति तदर्थं बुद्धिमुत्पादितवान् अनेनायं पूर्वपक्षोऽपि बुद्ध्यैव परिहर्तव्य इति सूचितं तथा भवार्थमुद्भवार्थं जन्मान्तरसिद्ध्यर्थं वा इन्द्रियाणि कृतवान् बुद्धिसिद्ध्यर्थमिति विमर्शः यथा बुद्धेः उद्भवो भवति तदर्थमिन्द्रियाणि सृष्टवान् इन्द्रियैः कर्मकरणे च तैः कर्मभिरुद्भवो जन्मान्तरञ्च भवति च चकारादन्यान्यपि प्रयोजनानि इन्द्रियाणां सूचयति विषयास्तैरेव ज्ञायन्ते क्रियन्ते च इन्द्रियैरेव भगवत्सेवा भवति इन्द्रियैरेव च नानाविधकल्पना भवति मोक्षश्च योगादिद्वारा तथा आत्मने अकल्पनार्थं मनः सृजति मनसैवानुद्रष्टव्यं "नेह नानास्ति किञ्चन" इति श्रुतेः इन्द्रियाणां च प्रवृत्त्यर्थं मनसः सृष्टिः प्राणानां प्रयोजनमाह—अकल्पनायेति। प्राणा हि कल्पनां दूरीकुर्वन्ति सर्वमेकतामापादयन्ति यदि प्राणा न भवेयुः तदाऽन्नादिपरिणामप्रदर्शनेन सर्वस्यापि जगतः प्रलये एकताबुद्धिर्न स्यात् क्रियाशक्तिश्च तत् एवेति सर्वत्र हेतुभूताश्च "अन्नेन प्राणाः प्राणैर्बलमित्यत्र प्राणैर्मनसश्च विज्ञानादानन्दो ब्रह्मयोनिं विज्ञानं इति निरूपितं स क्रमोऽत्रापि प्राप्तः एवं सर्वोपयोगार्थं यतो

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवांश्चतुष्टयमुत्पादितवान् अनेनैव सर्वानुपपत्तिः परिहर्तव्येति शुकहृदयम् ॥ २ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उत्तरमाह—बुद्धीति । जनानां जीवानां मात्राद्यर्थं बुद्ध्यादीन् प्रभुरीश्वरोऽसृजत् मीयन्त इति मात्रा विषयास्तदर्थं कर्मफलभोगार्थमित्यर्थः । भवः पुनःपुनर्जन्म तदर्थं भवबन्धहेतुकर्मकरणार्थमित्यर्थः । आत्मने ब्रह्मपरमात्मभगवत्स्वरूपिणे स्वस्मै यत् कल्पनं बुद्ध्यादीनां समर्पणं तदर्थं यद्वा आत्मने स्वमुपासयितुं यत्कल्पनं बुद्ध्यादीनां विनियोगस्तदर्थं त्रयाणामेव प्राधान्यबोधकं चकारत्रयं बुद्ध्यादीन् विना न कर्मफलस्वर्गादिभोगः नापि कर्मकरणं नापि शमदमाद्यङ्गज्ञानं नाप्यष्टाङ्गयोगो नापि श्रवणकीर्त्तनादिभक्तियोगः सिध्यतीत्यतस्तानसृजत् ननु त्वं क गच्छसीति प्रश्ने मयाद्य दृष्टम् भुक्तमित्युत्तरं यथा[illegible]व श्रुतयः कथं ब्रह्मणि चरन्ति इति प्रश्ने प्रभुः मात्राद्यर्थं बुद्ध्यादीनसृजदित्युत्तरमभूत् मैवं "परोक्षवादा ऋषयः परोक्षं मम च प्रियम्" इति भगवदुक्तेरत्राभिधया वृत्त्या प्रश्ने व्यञ्जनावृत्त्येदमुत्तरं सङ्गतमेव तथाहि शब्दवाच्यत्वाभावादेव ब्रह्मणः शब्दनिर्देश्यत्वं त्वं ब्रूषे यदीन्द्रियाणि परमेश्वरो नास्रक्ष्यत् तदा शब्दस्पर्शादयोऽप्यनिर्देश्या ब्रह्मतुल्या एवाभविष्यन् अद्यापि जन्मान्धबधिरस्य रूपशब्दौ ब्रह्मवदनिरूप्यौ भवत एव तेनास्मदादिभ्यो येन ग्राहकाणीन्द्रियाणि दत्वा शब्दादयो निर्देश्याः सुगमाः कृतास्तेनैव परमेश्वरेण कस्मैचित् कृपया ब्रह्मणोपि ग्राहकं किमपि सामर्थ्यं दत्वा जातिद्रव्यगुणक्रियातिरिक्तं किमपि शब्दप्रवृत्तिनिमित्तं सृष्ट्वा असृष्ट्वा वा ब्रह्म अपि सन्निर्देश्यं करिष्यते यतः स प्रभुः अनिर्वचनीयमपि निर्वचनीयं कर्तुं समर्थः ततश्च श्रुतयोपि तत्र सुखं चरेयुरिति यदुक्तं भगवता मत्स्यदेवेन—

"मदीयं महिमानञ्च परं ब्रह्मेति शब्दितम् ।
वेत्स्यस्यनुगृहीतं मे सम्प्रश्नैर्विवृतं हृदि" ॥ इति

अस्यार्थः मम महिमानं महत्स्वरूपं सर्वव्यापकत्वलक्षणं यत्ब्रह्म तत् त्वं वेत्स्यसि कथं वेत्स्यामि सम्प्रश्नैः तद्ब्रह्म कीदृशमिति त्वत्प्रश्नैश्च ईदृशमिति मुनिदत्तैरुत्तरैश्च शब्दितं साक्षात् शब्द[ब्रह्म]निर्दिष्टीकृतं ब्रह्म वेत्स्यसि तत्र हेतुः मे मया अनुगृहीतं प्रसादीकृतं मदत्यन्तप्रसादं विना ब्रह्मणः साक्षात् शब्दनिर्दिष्टत्वं न सम्भवेदित्यर्थः । अत्र मदनुकम्पितत्वरूपहेत्वन्यथानुपपत्त्यवधानेन शब्दनिर्दिष्टत्वं न व्याख्येयं तथा एतद्व्याख्यानाभ्युपगमे शब्दितमिति पदस्य वैयर्थ्यं स्यादित्यपि श्रेय स्वामिचरणैर्व्याख्यातं यथा मे मया अनुगृहीतं प्रसादीकृतं परं ब्रह्म हृदि अपरोक्षं वेत्स्यसीति भगवत्कृपया श्रीमदर्जुनेनापि ब्रह्म साक्षात् दृष्टं यथा हरिवंशे विप्रकुमाराहरणप्रसङ्गे तं प्रति भगवद्वाक्यम्—

" ब्रह्म तेजोमयं दिव्यं महत् यद्दृष्टवानसि ।
अहं स भरतश्रेष्ठ मत्तेजस्तत्सनातनम् ॥

प्रकृतिः सा मम परा व्यक्ताव्यक्ता सनातनी ।
तां प्रविश्य भवन्तीह मुक्ता योगविदुत्तमाः ॥

सा सांख्यानां गतिः पार्थ योगिनां च तपस्विनाम् ।
तत्परं परमं ब्रह्म सर्वं विभजते जगत् ॥
ममैव तद्घनं तेजो ज्ञातुमर्हसि भारत " । इति

यद्वा भो राजन् ! निर्विशेषे ब्रह्मणि श्रुतयो नैव चरन्ति "शब्दो न यत्र पुरुकारकवान् क्रियार्थः" इति ब्रह्मोक्तेस्तथा सविशेषे सच्चिदानन्दाकारे ब्रह्मण्यपि श्रुतयो न चरन्ति तस्य प्राकृतजात्यादिपदार्थातीतत्वात् किञ्च "सत्वादयो न सन्तीश यत्र च प्राकृता गुणाः" इति वैष्णवोक्तौ प्राकृताः न सन्तीत्युक्तेः अप्राकृताः सन्तीति लभ्यते "साक्षी चेताः केवलो निर्गुणश्च" इतिश्रुतौ निर्गुणत्वेऽप्यप्राकृतसाक्षित्वादिगुणोक्तेश्च "वेदैश्च सर्वैरहमेव वेद्यः" इत्यादिस्मृतेश्चाप्राकृतानन्तगुणान्वये तास्मिन् शब्दप्रवृत्तिनिमित्तानामप्राकृतजात्यादीनां सत्वात् मात्रादेश्च श्रुतयस्तत्र चरन्तीत्याह—बुद्धीति । बुद्धिपदेन महत्तत्वमिन्द्रियपदेन शब्दाद्याकाशादिकार्य्यजातं च बोध्यते मात्रार्थं शब्दादीनां ब्रह्मण्यपि प्रवृत्त्यर्थं बुद्ध्यादीनसृजत् "मात्रा परिच्छदे देशे प्रवृत्तौ कर्णभूषणे" इत्यनुशासनात् प्राणादिकं विना वचनस्यासम्भवात्मन आदिसृष्टिरपि शब्दप्रवृत्त्यर्था सेवा सृष्टेः फलान्तरमप्याह भवार्थं जीवानां कल्याणार्थं "भवो भद्रे हरे प्राप्तौ" इत्यनुशासनात् तथा आत्मने स्वस्मै बुद्ध्यादीनामप्राकृतानां प्राकृतानाञ्च कल्पनं स्वमुपासयितुं विनियोगस्तस्मै यथा गोपालतापिनी श्रुतिः—

" सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम् ।
द्विभुजं मौनमुद्राढ्यं वनमालिनमीश्वरम् " ॥ इति

अत्र सिद्धभक्तानामप्राकृतबुद्धीन्द्रियैरप्राकृतपुण्डरीकमेघविद्युतां ग्राह्यत्वात्ताभिरुपमितेषु भगवन्नयनवपुर्वसनेष्वप्राकृती तापनी श्रुतिर्भगवन्नयनादिवर्णयित्री सुखेनैव चरति । साधकभक्तानान्तु बुद्ध्यादिभिरग्राह्यत्वेपि तत्र प्राकृतपुण्डरीकादिसादृश्यारोपणेन ते यथा कथञ्चिदेव बुद्धिं प्रवेशयन्तश्चित्तैकाग्र्येणापि वस्तुतोऽस्पृष्टतद्रूपभासा अपि भगवन्तं प्रभुं ध्यायाम इत्यभिमानिनो हृष्यन्ति भगवानप्यपारकृपातरङ्गवशादेव एभिर्भक्तैरहं ध्यात इत्यभिमन्यमानस्तद्भक्तिपरिपाके सति तान् स्वभक्तान् स्वचरणान्तिकं सेवार्थमानयतीति भगवत्स्वरूपस्य श्रुतिगम्यत्वं तत्कृपयैव सिद्धम् ॥ २ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पूर्वमङ्गलश्लोके प्रथमस्कन्धे स्वपितृश्रीव्यासोक्तं ब्रह्मलक्षणं स्मारयन्नुत्तरमाह—प्रभुः परमेश्वरः सर्वशक्तिर्जनानां बुद्धीन्द्रियमनःप्राणान् असृजत् तथाच श्रुतिः "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापश्च पृथिवी विश्वस्य धारिणी" इति तत् ब्रह्म तस्मिन्नेव श्रुतीनां समन्वयः न ततोऽन्यत्तत्वमिति प्रत्यभिज्ञापकः प्रभुशब्दः तैत्तिरीयके स्पष्ट एव प्रत्यभिज्ञापकशब्दः "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्ब्रह्म तद्विजिज्ञासस्व" इति पुनरपि यत्तुल्य-

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सामान्यशङ्कानिरासार्थं तत्रैव स्पष्टितम् "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्तीति तद् ब्रह्म तद्विजिज्ञासस्व "इत्यादिनाऽभ्यस्तं ननु करणभिन्नं किमपि जिज्ञासाविषयत्वेन प्रतिपादितम् एवमेव भगवता सूत्रकृता अपि " अथातो ब्रह्मजिज्ञासा (१ १·१) इति जिज्ञास्यं प्रतिज्ञाय तथाभूतस्य ब्रह्मणः स्वरूपाकाङ्क्षायां तदेवोपनिषदं ब्रह्म जगत्कारणभूतं ज्ञेयत्वेन लक्षणसूत्रे निर्णीतं नान्यत् किमपीति ननु "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह। न चक्षुषा गृह्यते नापि वाचा। अशब्दमस्पर्शमगन्धमरसमपाणिपादोजवनोगृहीतापश्यत्यचक्षुः सशृणोत्यकर्णः। केवलो निर्गुणश्च "इत्यादिवाक्यपुञ्जैः प्रतिपादितं वस्तु कथमपह्नूयते इति चेन्न तेषां वाक्यानां लौकिकवाक्यादिविषयत्वेन मायातद्गुणसत्त्वादिकार्यतत्सम्बन्धनिषेधपरत्वात्सर्वथा विषयत्वेन शशशृङ्गतुल्यतापत्तेः तथा च शास्त्रं "सदा पश्यन्ति सूरयः। सर्वे वेदा यत्पदमामनन्ति। तं त्वौपनिषदं पुरुषं पृच्छामः मनसैवानुद्रष्टव्यः दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मैः सूक्ष्मात्मदर्शिभिः। सर्वरूपः सर्वगन्धः सर्वरसः। विश्वतश्चक्षुः। यः सर्वज्ञः सर्वशक्तिः"इत्यादिश्रुतिविरोधाच्च लौकिकस्थूलबुद्ध्याद्यविषयत्वेन सूक्ष्मा लौकिकास्तदनुगृहीतैर्बुद्ध्यादिकरणैर्ग्राह्यामिति सर्वमनवद्यं ननु तत्त्वमस्यादिवाक्यानां का गतिरिति चेच्छृणु तत्त्वम्पदार्थयोरीश्वरप्रत्यगात्मनोर्गुणाः द्विविधाः प्रतिभासिकस्वाभाविकभेदात् तत्र प्रतिभासिकाश्च मायातद्गुणतत्कार्यजन्मादिविकारसुखदुःखादयः तत्रेश्वरजन्मादीनामाविर्भावमात्रेण दिव्यत्वादौपचारिकत्वं जीवस्याविद्यकत्वादनित्यत्वमत उभयत्रापीश्वरजीवयोरधर्मत्वेन "नेह नानास्ति किञ्चन "इत्यादिनिषेधविषयत्वादसमन्विताः स्वाभाविकाश्च सर्वज्ञत्वसर्वशक्तित्वस्वतन्त्रत्वसर्वनियन्तृत्वादयः ईश्वरासाधारणाः यः सर्वज्ञः सर्ववित् "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च आत्मा हि परमः स्वतन्त्रो ऽधिगुणः अन्तः प्रविष्टः शास्ता जनानाम् एष सर्वेश्वर एष सर्वाधिपतिः "इत्यादिश्रुतयः "अधिकन्तु भेदनिर्देशात्" (२·१·२२) भेदव्यपदेशाच्चान्यः (१·१·२२) विवक्षितगुणोपपत्तेश्च (१·२·२) इत्यादिन्यायाश्च—

"मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय।
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" ॥

इति स्मृतयश्च अल्पज्ञानपारतन्त्र्याल्पशक्तित्वाणुत्वादयो जीवासाधारणाः "जीवोऽल्पशक्तिरस्वतन्त्रोऽवर" इति भाल्लवेयश्रुतिः एषोऽणुरात्मा चेतसा वेदितव्यः वालाग्रशतभागस्य शतधा कल्पितस्य इति श्रुतेः "तद्गुणसारत्वात्०" (२·३·२९) ज्ञोऽत एव (२·३ २८) इत्यादिन्यायाच्च स्वाभाविकत्वे च "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते विनाशित्वान्न नहि श्रोतुः श्रुतेर्विपरिलोपो विद्यते अविनाशित्वान्नहि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न हि विज्ञातुर्विज्ञातेः" इत्याद्यारण्यकेऽभ्यासः प्रमाणम्—

यथोदपानखननात् क्रियते न जलान्तरम्।
सदेवनीयते व्यक्तिमसतः सम्भवः कुतः ॥
तथा हेयगुणध्वंसादवबोधादयो गुणाः।
प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते ॥

यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः।
दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥ इति

स्मरणाच्च साधारणाश्च सत्यज्ञानपापस्पर्शाभावादयः "सत्यं ज्ञानमनन्तं ब्रह्म स आत्मा कतमः योऽयं विज्ञानमयः य आत्मा अपहतपाप्मा" इत्यादि श्रुतेः। तथोभयत्रासाधारणैरुदाहृतैः सर्वज्ञत्वादिभिरल्पज्ञानपारतन्त्र्यादिधर्मैर्भिन्नत्वे सति, उभयसाधारणैः सत्यज्ञानादिधर्मैश्चाभिन्नस्त्वमसीति वाक्यार्थः सिद्धान्तजाह्नव्यां शारीरकमीमांसाचतुरध्यायीव्याख्यायां श्रीभगवन्निम्बार्काचार्यपादैर्निपुणं प्रपञ्चितः ननु जीवेश्वरयोरपि गुणानां मायिकत्वात्सर्वेषां निषेधविषयत्वमेव तथोक्तसिद्धान्तासिद्धिरिति चेन्न किन्तावत्स्वाभाविकत्वं मायाजन्यत्वं वा ब्रह्मविवर्त्ततुल्यत्वं वा स्वाभाविकानां सद्रूपाणामेवात्मद्वारा व्यक्तिकरणं वा! नाद्यः मायायाः जडत्वेन जनकत्वधर्मानधिकरणत्वात्। नापि द्वितीयः सर्वप्रमाणविरोधेन सर्वत्रातिप्रसङ्गात् परिशेषात्। तृतीय एवाकामेनापि त्वयाऽङ्गीकार्यः सच्चास्माकमिष्टापत्तिः आस्तान्तावद्विकल्पप्रसङ्गोऽस्माकं तु वैदिकानां भगवच्छ्रुतेः स्मृतेश्च प्रामाण्यं "स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिश्रुतयः स्मृतिश्च पञ्चमांशे कालियवाक्येन पराशरः—

"तवाष्टगुणमैश्वर्यं नाथ स्वाभाविकं परम्।
निरस्तातिशयं यस्य तस्य तोष्यामि किन्त्वहम् ॥

तत्रैव चतुर्थांशे ब्रह्मवचनं "कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः" इत्यादि तस्मादूष्मोष्णादीनामग्निगुणानामिव ब्रह्मगुणानामप्युभयप्रकारकत्वमविरुद्धं यथाग्नौ धूमो न तद्गुणः किन्तु काष्ठार्द्रत्वेन कृतोऽग्नौ प्रतिभासते औष्ण्यप्रकाशादयस्तु स्वाभाविकास्तस्यैव एवमेव मायागुणाः सत्त्वादयो ब्रह्मणि भासमानाः प्रातिभासिकाः सर्वज्ञत्वादयश्च स्वाभाविका इति अत्रापि न विवादावकाशः तत्र प्रयोजनमाह—आत्मने जीवाय मात्रार्थे च विषयार्थे भवार्थेश्च च भद्रार्थे "भवो भद्रे हरे प्राप्तौ "इति प्रमाणात् कल्याणार्थमिति यावत् कथम्भूताय जीवाय कल्पनाय वासनायुक्ताय तद्भोगमोक्षसिद्ध्य इत्यर्थः चकारो भोगमोक्षसाधनभूतावर्थधर्मौ समुच्चिनोति ॥ २ ॥

---

भाषा टीका।

श्रीशुक उवाच।

उपरोक्त राजा के प्रश्न का प्रत्युत्तर इसप्रकार श्रीशुकदेवजीने दिया है कि सर्वशक्तिमान् परमात्माने प्रलयस्थ जीवोंको शरीर प्राप्ति के अर्थ शरीरसे योगादिकअनुष्ठान द्वारा स्वर्गादि श्रेयःप्राप्तिके अर्थ तथा परमात्मा के उपासना रूप ज्ञान प्राप्तिके अर्थ और ज्ञान से मोक्षप्राप्ति के अर्थ महदादि तत्त्वनकी सृष्टिकर उन से ब्रह्माण्डकी रचना कर उस ब्रह्माण्ड में निजनाभिकमल से ब्रह्माको उत्पन्न कर उसके द्वारा प्रलयस्थजीवोंके शरीर इन्द्रिय प्राणो की सृष्टि करी इस का यह तात्पर्य्य है कि महदादितत्त्वरूपसे मायाका परिणाम और शरीर इन्द्रियप्राण प्रदानपूर्वक ज्ञानप्रकाशरूप करने से जीवों की सृष्टि कर पश्चात् चेतनाचेतनके सद्भाव

सैषा ह्युपनिषद्ब्राह्मी पूर्वेषां पूर्वजैर्धृता ।
श्रद्धया धारयेद्यस्तां क्षेमं गच्छेदकिञ्चनः ॥ ३ ॥
अत्र ते वर्णयिष्यामि गाथां नारायणान्विताम् ।
नारदस्य च संवादमृषेर्नारायणस्य च ॥ ४ ॥
एकदा नारदो लोकान् पर्यटन् भगवत्प्रियः ।
सनातनमृषिं द्रष्टुं ययौ नारायणाश्रमम् ॥ ५ ॥
यो वै भारतवर्षेऽस्मिन् क्षेमाय स्वस्तये नृणाम् ।
धर्मज्ञानशमोपेतमाकल्पादास्थितस्तपः ॥ ६ ॥

भाषा टीका।

रहने के वास्ते परमात्मा उन दोनो में अन्तर्यामि रूपसे निज सङ्कल्पद्वारा व्याप्त भया इस कारण चेतनाचेतन दोनो परमात्मा से जुदे नहि होकर उस के शरीर रूप विशेषण है और परमात्मा उनका शरीरी आत्माहै अत एव गोत्वादि वाचक गौइत्यादिशब्द जैसे साक्षात् गोव्यक्तिपर्य्यन्त के वाची होते है वैसे हि ब्रह्मके शरीरभूत चेतनाचेत वाचि श्रुति साक्षात् ब्रह्म पर्य्यन्त को प्रतिपादन करती है इसी अर्थ को स्पष्ट प्रतिपादन करनेवारी श्रुतियोंको दिखाते है चेतनाचेतन की सृष्टिकर पश्चात् चेतनाचेतनके नाम रूपका मार्गीभी आपहि भया जिसका जीवात्मा शरीर है जिसका माया शरीर है गीतामेंभी इनहि श्रुतियो को लेके कहाहै हेभगवान् आप सब चेतनाचेतन मे व्याप्तहोरहेहो इसीकारण से सबचेतनाचेतन रूपी आपहिहो मे शरीर भूत चेतना चेतन और शरीरी परमात्मा तथा व्याप्य भूत चेतना चेतन और व्यापक परमात्मा इनका परस्पर मैं भेदहि है ॥ २ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

अत्र चानादिशिष्टपरम्परागतत्वान्न सन्देहो युक्त इत्याह—सैषेति । सैषा यथोक्तालम्बना ब्राह्मी ब्रह्मपरा श्रद्धया आदरेण वैतण्डिकतर्कानभिनिवेशेन यः श्रवणादिना धारयेत् सः अकिञ्चनो निरस्तदेहाद्युपाधिः सन् परं पदं प्राप्नुयादिति ॥ ३ ॥

एतदेव सर्वश्रुत्यर्थनिरूपणेन प्रपञ्चयितुमितिहासमवतारयति—अत्रेति । नारायणान्वितां नारायणः प्रवक्तृत्वेनान्वितो यस्यां ताम् गाथामितिहासम् ॥ ४—८ ॥

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी।

अत्र चेति । सर्वासामपि श्रुतीनां पूर्वोक्त्या ब्रह्मणि पर्य्यवसानलक्षणे उत्तरे वेदप्रामाण्याभ्युपगन्तृत्वं शिष्टत्वं सैषा श्रद्धा बुद्धीन्द्रियेत्यादिश्लोकरूपा निर्गुणे पर्यवसानं यथा स्यात्तथा सगुणलाभमित्यर्थः ब्रह्मपरा उपाधिनिरसनद्वारा ब्रह्मप्रतिपादनपरा वितण्डा स्वपक्षस्थापनहीना तामर्हन्तीति वैतण्डिकाः तार्किकादयस्तेषां ये तर्काः कुयुक्तयः तद्ग्रहराहित्येन ॥ ३ ॥

एतदेवं बुद्धीन्द्रियेत्यादिश्लोकेन प्रतिपादितमुत्तरमेव इतिहासं पुरावृत्तम् अवतारयति आरभते अत्र बुद्धीन्द्रियेत्यादिश्लोकोक्तोत्तरप्रसङ्गे वर्णयिष्यामीत्यत्र वर्णयिष्यामीति सभ्यः पाठः क्वचित् गतिसामान्येन वर्णनं सम्वादस्तद्रूपामित्यर्थः गाथासम्वादशब्दयोः नियतलिङ्गत्वात्सामानाधिकरण्यम् ॥ ४ ॥

नारायणाश्रमं वदरिकाश्रमम् ॥ ५ ॥

क्षेमाय ऐहिकाय स्वस्तये आमुष्मिकाय मङ्गलाय आकल्पात् ब्रह्मदिनप्रथमांशमारभ्य ॥ ६ ॥

श्रीकविचूडामणिचक्रवर्त्तिकृताऽन्वयबोधिनी।

अत्राऽनादिशिष्टपरम्परागतत्वान्न सन्देहो युक्त इत्याह—सैषेति । सा एषा यथोक्तालम्बना ब्राह्मी ब्रह्मपरा उपनिषत् । पूर्वेषां पूर्वजैस्सनकादिभिर्धृतां श्रद्धया श्रवणादिभिर्धारयेत् अकिञ्चनः निरस्तदेहाद्युपाधिः सन् क्षेमं परं पदं गच्छेत प्राप्नुयादिति या त्रिवर्गसाधनपरा सा उपनिषत् त्रिवर्गनिष्ठैर्मरीच्यादिभिर्धृता एषा तु । ब्रह्मपरा अत एव ब्रह्मनिष्ठैः सनकादिभिर्धृतेति भावः ॥ ३ ॥

एतदेव सर्वश्रुत्यर्थनिरूपणेन प्रपञ्चयितुमितिहासम् अवतारयति- अत्रेति । अत्र ते तव प्रश्ने गाथामितिहासं वर्णयिष्यामि कथम्भूतां गाथां नारायणान्वितां श्रीनारायणः प्रवक्तृत्वेनान्वितो यस्यां तां पुनः नारदस्य ऋषेर्नारायणस्य सम्वादं च प्रवर्त्तयिष्यामि एतेन स्वर्गादिसाधनः श्रीनारायणात् श्रुत्वा सनन्दनादिभिर्निर्णीतं तदेव श्रीनारायणोऽपि नारदाय कथितवानिति अवगम्यते यद्वा नियतलिङ्गत्वाद्गाथामित्यस्य विशेषणं नारदस्य श्रीनारायणस्य सम्वादमिति ॥ ४ ॥

एकदा एकस्मिन् काले नारदो लोकान् पर्यटन् सनातनमृषिं द्रष्टुं नारायणाश्रमं कलापग्रामं ययौ ॥ ५ ॥

कोऽसावृषिस्तमाह- अस्मिन् भारतवर्षे नृणां स्वस्तये सुस्थितये क्षेमाय समृद्धये य आकल्पात्कल्पमभिव्याप्य आस्थितः

श्रीकविचूडामणिचक्रवर्त्तिकृताऽन्वयबोधिनी ।

भूतवान तं द्रष्टुं किम्भूतं तपः धर्मज्ञानसमेकपेतं युक्तम ॥ ६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पूर्णाराकयं प्रमाणयति स्मोति च । सा प्रसिद्धा एषा युञ्जीत्यादिश्लोकरूपा ब्राह्मी परब्रह्मणि भगवति चरन्ती यद्वा तत्रावाहारिष्यमाणप्रकरणं प्रशंसति सैषेति सैषा जयजयेत्यादि वक्ष्यमाणा क्षेमं "मर्त्योमृत्युव्यालभीतः पलायन् "इत्याद्यनुसारेण श्रीभगवच्चरणारविन्दरूपम ॥ ३ ॥

अत्र एतत्प्रसङ्गे गाथां च वर्त्तयिष्यामि चिरमतीतामपि प्रवर्त्तयिष्ये वर्णयिष्यामीत्यर्थः । नारायणो महत्स्रष्ट्रादिपुरुषत्रयाश्रयः सर्वजीवाश्रयश्च सन् " नारायणस्त्वं नाह सर्वदेहिनाम् "इत्याद्यनुसारेण स्वयं भगवान् श्रीकृष्णः स एवाभिमतः उपक्रमोपसंहारादिष्वनुगतो यस्यां तां गथामेव विशिषन् तस्याः प्राकट्यप्रकारमाह—नारदस्येति । अस्य परमभागवतत्वात् श्रीभगवन्माहात्म्यमेवोद्देश्यमिति पूर्वमित्राम्न एव सूचितः अतो भगवत्प्रिय इति वक्ष्यते च सम्वादं तद्रूपम ऋष्योरिति क्षीरोदशायिपरव्योमेश्वरयोर्व्यावृत्त्यर्थम् ॥ ४ ॥

सनातनमाद्यमृषिं यद्वा सनातनं श्रीभगवन्तं नारायणाश्रमे तस्मान्नैव प्रसिद्धं बदरिकाश्रमप्रदेशविशेषमित्यर्थः ॥ ५ ॥

ऋषित्वे कारणं धर्मस्तदीयकारुण्यमयलीलामाह—य इति । क्षेमाय ऐहिकाय स्वस्तये आमुष्मिकाय मङ्गलाय अतो धर्मादिभिरुपेतं युक्तं शमो भगवन्निष्ठचित्तता लोकशिक्षार्थं तानि स्वयमेवास्थित इत्यर्थः । आकल्पात् ब्रह्मदिनप्रथमांशमारभ्य ॥ ६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम ।

ब्राह्मी वेदसम्बन्धिनी उपनिषद्रहस्यमित्यर्थः ॥ ३—५ ॥
क्षेमाय अभयरूपमोक्षाय ॥ ६—८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नन्वित्थं सर्वशब्दानां ब्रह्मणि मुख्यवृत्तिर्न लौकिकैर्गृहीता अपितु तत्तदर्थेष्वेव तत्कथं सार्वजनीनव्युत्पत्तिभञ्जनेन ब्रह्मणि व्युत्पत्तिः साध्यत इत्यत आह—सैषेति । सैवोपपादिता ब्राह्मी ब्रह्मसम्बन्धिनी सर्वशब्दानां ब्रह्मण्यभिधावृत्तिरित्यर्थः उपनिषद्रहस्यतमा उपनिषदर्थविचारेणावगन्तव्येति वार्थः । अनधीतवेदान्तशास्त्राणां तत्तदर्थमात्रपर्यवसितव्युत्पत्त्यावच्छिन्नवेदान्तार्थतदनुष्ठाननिष्ठैर्ब्रह्मण्येव व्युत्पत्तिर्गृहीता नहि घटशब्दव्युत्पत्तिमगृहीतवतः कस्यचित्पुंसो घटशब्दात्तदर्थावगतावपि तस्य तद्वाचकत्वशक्तिर्विहितेति भावः । तथा हि

पूर्वेषामपि पूर्वजैर्वामदेवप्रभृतिभिरेवा व्युत्पत्तिर्धृताऽवधृता निश्चितेति यावत् वामदेवप्रह्लादादयो हि परस्य ब्रह्मणः सर्वान्तरात्मत्वं सर्वस्य तच्छरीरकत्वं शरीरवाचिनां शब्दानां शरीरिणि पर्यवसानञ्च पश्यन्तः अहमिति स्वात्मशरीरकं परं ब्रह्म निर्दिश्य तत्सामानाधिकरण्येन मनुसूर्यादीन् "अहं मनुरभवं सूर्यश्च कक्षीवानृषिरस्मि विप्रः" इति—

"सर्वगत्वादनन्तस्य स एवाहमवस्थितः ।
मत्तः सर्वमहं सर्वं मयि सर्वं सनातने ॥

इति निर्दिशन्तः सर्वबुद्धिशब्दान् परमात्मपर्यन्तान् प्रदर्शयन्तस्सर्वशब्दानां परमात्मन्येव व्युत्पत्तिमध्यवसितवन्त इति भावः । इत्थं गृह्यमाणाया व्युत्पत्तेः फलमाह—भक्त्येति । तामुक्तविधां व्युत्पत्तिं यः पुमान् भक्त्या धारयेत् सोऽकिञ्चनः नास्ति किञ्चन प्रार्थनीयं यस्य सः क्षेमं मुक्तिं गच्छति प्राप्नोति ॥ ३ ॥

इत्थं परस्य ब्रह्मणः स्वपर्यन्तसर्वबुद्धिशब्दत्वं सर्वान्तरात्मत्वं जगत्कारणत्वं परमकारुणिकत्वं मोक्षप्रदत्वं चोक्तं अथोक्तार्थस्य स्वमनीषोत्प्रेक्षितत्वशङ्कानिरासाय मूर्तिधरा वेदा एवोक्तानुक्तगुणविशिष्टं भगवन्तं तुष्टुवुरिति वक्तुं तौवास्वप्रश्नपरिहारावितिहासान्तरेण सम्वादयति–अत्र ते –इत्यादिना । अत्र त्वत्प्रश्ने मदुत्तरे च सम्वादरूपां नारायणेन प्रवर्तकेन अन्वितां गाथां ते तुभ्यं वर्णयिष्यामि शृण्विति शेषः कोसौ नारायणः किं परमव्योमनिलयः किंवा अवतारविशेषः कथ तस्याः श्रोतेत्यत आह—नारदस्येति । ऋषेः ऋषिवेषधरस्य बदर्याश्रमवासिनो नारायणस्य नारदस्य च सम्वादं प्रश्नोत्तररूपम् इतिहासं कथयिष्यामीति सम्बन्धः ॥ ४ ॥

सम्वादमेव प्रस्तोतुं तावन्नारदस्य नारयणोपसत्तिमाह—एकदेति । सनातनं पुरातनमृषिं नाराणं द्रष्टुं तस्याश्रमं बदर्याख्यं ययौ ॥ ५ ॥

ऋषिं विशिनष्टि–योवा इति । नृणां क्षेमायाभयरूपाय स्वस्तये मोक्षार्थं चाकल्पात् कल्पावधि तपः स्वात्मोपासनात्मकमास्थितः अधिकृतवानित्यर्थः । कथम्भूतः धर्मः वर्णोचितः ज्ञानमात्मनः प्रकृतिपुरुषाभ्यां विलक्षणेनावलोकनं शमः रागद्वेषादिराहित्यम एभिरुपेतः ॥ ६ ॥

---

श्रीनिवाससूरिकृततत्त्वदीपिका ।

अस्यार्थस्य दृढीकरणार्थं माहात्म्यकथनपूर्वकमितिहासमवतारयति—सैषेत्यादिभिर्नवभिः श्लोकैः । ब्राह्मी वेदसम्बन्धिनी उपनिषत् रहस्यमित्यर्थः । पूर्वेषां पूर्वजैः ब्रह्मादीनामपि पूर्वजैः सनकादिभिर्धृतेयं श्रवणादिभिरित्यर्थः । एवं तत् भक्त्या धारयेत् सोऽकिञ्चनो देहाद्यभिमानरहितः सन् क्षेमं मोक्षं गच्छेदित्यर्थः ॥ ३ ॥

नारायणान्वितां तत्सम्बन्धिनीं स्पष्टमन्यत् ॥ ४—५ ॥

क्षेमाय अभयरूपमोक्षाय स्पष्टमन्यत् ॥ ६—७ ॥

---

### योगिरामानुजाचार्यकृतसरलाव्याख्या ।

भगवत्स्वाप्रायर्थपञ्चकप्रतिपादनेनास्य श्लोकस्य अर्थपञ्चकप्रतिपादकोपनिषत्समानार्थकत्वेनोपनिषद्रूपत्वं प्रमाणतमार्थं महत्परिगृहीतत्वञ्च प्रतिपादयितुमुत्तरश्लोकमवतारयति । अनादिशिष्टपरम्परागतत्वादत्र न सन्देहो युक्त इत्याह—सैषेति । सा एषा यथोक्तालम्बना ब्राह्मी ब्रह्मप्रतिपादिका उपनिषत् तत्समानार्थकत्वात्तद्रूपा पूर्वेषां पूर्वजैरतिवृद्धैस्सनकादिभिः धृता अभ्यासेन धृता यो धीमान् तामुपनिषदं श्रद्धया आदरेण श्रवणादिभिः धारयेत् सः अकिञ्चनस्सन् देहादिसर्वोपाधिरहितस्सन् क्षेममकुतोभयं परमपदं गच्छेत् सैषा उपनिषत् ब्राह्मी पूर्वेषां पूर्वजैर्धृता हि यः श्रद्धया धारयेत् सः अकिञ्चनस्सन् क्षेमं गच्छेत् इत्यन्वयः ॥ ३ ॥

एतदेव सर्वश्रुत्यर्थनिरूपणेन प्रपञ्चयितुमितिहासमवतारयति—अत्रेति । नारायणान्विताम् नारायणः प्रवक्तृत्वेनान्वितो यस्यां गाथामितिहासम् ॥ ४—८ ॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

शब्दमात्रस्य ह्यैकविषयत्वमुक्त्वा अधुना "वेदान्तविज्ञानसुनिश्चितार्थाः" इति वचनादुपनिषद्भागस्य तद्गुणगणावेदकत्वेन मुख्यवृत्त्या विषयत्वमिति भावेनाह—सैषेति । हिशब्दो हेतौ ईशबुद्धिस्थिताः सदेतिवचनात् या श्रीमन्नारायणबुद्धिस्थिता सैषोपनिषद्वेदान्तापरपर्याया पूर्वेषां पूर्वजैः ब्रह्मादिभिः धृता अध्ययनरूपेण न तु कृता नित्यवाक्यत्वात् नित्ययानित्यया स्तौमीत्यादेः । हि यस्मात्तस्मात् यस्तां श्रद्धया धारयेत्स क्षेमं मोक्षं गच्छेत् ब्रह्मज्ञानलभ्यस्य मोक्षस्य कथं श्रुतिधारणया मोक्षः स्यादित्यत्राह—ब्राह्मीति । अथ कस्मादुच्यते ब्रह्मेति "बृहन्तो ह्यस्मिन् गुणाः" इति श्रुतेः । ब्रह्मगुणावेदकत्वेन तज्ज्ञानद्वारा मुक्तिहेतुत्वोपपत्तेः ज्ञानञ्च विरक्त्यादिमत एव स्यादिति भावेनाह अकिञ्चन इति ॥ ३ ॥

भवच्छिष्यत्वेन मम भवदुक्तिः प्रमाणमस्तु इतरेषां कथमिति शङ्का माभूदिति भावेनाह—अत्रेति । अत्र श्रुतयः कथं चरन्तीत्यस्मिन्नर्थे गाथां त्रिषट्पादलक्षणप्रबद्धां कथां नारायणोदितां नारायणेन कथिताम् ॥ ४ ॥

नारायणस्य सङ्गमः कथमभून्नारदस्येत्यत्राह एकदेति ॥ ५ ॥

कस्मिन् खण्डे नारायणाश्रमः तत्र किं कुर्वन् किं प्रयोजन आस्त इति तत्राह-योसाविति । तपसोऽङ्गवैकल्यपरिहाराय साकल्यादित्युक्तं धर्मैः सुकृतं विहिताचारो वा ज्ञानं स्वपरपदार्थावगाहि शमो निष्ठा एतैः उपेतः लोकद्वयैतदुक्तम् ॥ ६ ॥

———

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

न केवलमिदं मयैवोच्यते नाप्येतदप्रमाणमित्याह—सैषेत्यादि । सा एषा ब्राह्मी सविशेषब्रह्मपरा उपनिषत् जगत्कर्त्ता सर्वज्ञः सर्वशक्तिर्भगवान् ब्रह्म इत्यादिरूपी पूर्वेषामपि पूर्वजैर्महात्मभिर्धृताम् एतां श्रद्धया धारयेत् निर्विशेषत्वं परित्यज्य सविशेषत्वेन तदर्थं यो धारयेत् स अकिञ्चनः अनन्यो भक्त इत्यर्थः । क्षेमं तत्पादाब्जं गच्छतीत्यर्थः ॥ ३ ॥

परीक्षितकृतप्रश्नं पूर्वमप्यन्यत्र जातत्वेन दर्शयन्नितिहासमाह-अत्रेत्यादि बहुभिः ॥ ४—७ ॥

———

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अयमर्थः अनेनैव परिहृत इति कदाचित् शङ्का स्यात् तत्परिहारार्थमाह—सैषा ह्युपनिषद्ब्राह्मीति । इयमुपनिषत् ब्रह्मविद्याप्रतिपादिका श्रुतिः ब्राह्मी ब्रह्मणैव सम्पादिता अत्र प्रमाणं सा प्रसिद्धा युक्तश्चायमर्थः । न ह्यन्यः इममर्थं परब्रह्मणो निर्वक्तुं शक्नोति उपनिषच्छब्देन च ब्रह्मविद्या निरूप्यते उपोपसर्गः सामीप्ये तत्प्रतीतिसमाप्यते त्रिविधस्य सदर्थस्य निशब्दोपि विशेषणं "षद्लृ विशरणगत्यवसादनेषु" इत्यनुशासनात् : जीवात्मानं परब्रह्मनयनार्थं पूर्वभावाद्विशीर्णं कृत्वा ततः सङ्घातात्केवलमुद्धृत्य ब्रह्म प्रापयित्वा तत्रैव तमवसादयतीति यथा सर्वोप्यंशः विशीर्णो भवति यथा वा सर्वभावेन तं प्राप्नोति यथा वा कदाचिदपि ततो न निवर्त्तेत इति निशब्दार्थः एतादृशी ब्रह्मविद्यैव भवति तथापि सर्वानुपपत्तिपरिहारं कृत्वा वेदान् ब्रह्मप्रतिपादकान् कृत्वा ब्रह्मणि संयोज्य तत्रैव पर्यवसितान् करोतीति इदं वाक्यं तादृशार्थप्रतिपादकत्वेनानुपपत्तिं परिहृत्य सिद्धान्तं स्थापयतीत्युपनिषत्प्रतिपादकत्वादुपनिषत् तर्हि सदन्तःकरणस्थिता । यमनुपपत्तिः कथं गच्छतीत्याकाङ्क्षायामाह—पूर्वेषां पूर्वजैर्धृतेति । साधारणे सम्मतिः एतादृशीं श्रद्धया यो धारयेत् सत्वकिञ्चनः सन् क्षेमं गच्छेत् सर्वसन्देहनिवृत्त्या भगवन्तं प्राप्नुयात् अतः सर्वे सन्देहाः उपनिषदर्थविचारेणैव निराकर्त्तव्या इति सिद्धान्त उक्तः ॥ ३ ॥

स विचारो राज्ञा कर्तुमशक्य इति सर्वं श्रुत्यालोडनं महतामपि दुर्घटमिति कृपया स्वयमेव पूर्वं विस्तारेण निर्णीतमिममर्थं वक्तुं प्रतिजानीते अत्र ते वर्णयिष्यामीति । गाथा पूर्ववृत्तान्तप्रतिपादिका वाक्यपरम्परा सा श्रुतिगीतारूपा तत्रापि प्रमाणमाह नारायणान्वितामिति आदिनारायणेन लक्ष्मीभुजान्तरगेन उदारगुणवारिनिधिना संस्थापितोदरजगता, शयानेनान्विता तत्प्रबोधनार्थमेव प्रवृत्तेति अयमप्यर्थः कुतो जात इत्याकाङ्क्षायामाह—नारदस्य च सम्वादमृषेर्नारायणस्य चेति । अत्र ते वर्णयिष्यामीति पूर्वेणैव सम्बन्धः महता कृते निर्णये निरुक्ते च सर्वेषां सन्देहनिवृत्तिर्भवति न तु येन केनचिदुदाहृते अत एतदर्थं सम्वादं च कथयिष्यामि चकारात्तेन प्रोक्तं जनलोकसम्वादं चोदाहरिष्यामीति ज्ञापितम् ॥ ४ ॥

सम्वादार्थं कथाप्रस्तावमाह—एकदा नारदो लोकानिति । लोकपर्यटनेनास्याः श्रवणं अधिकारिनिरूपिका शुद्धिर्भवतीति सूचितम् एकदेति कालस्तत्र नियामकः नारदस्य पर्यटने हेतुमाह भगवत्प्रिय इति क भगवतो माहात्म्यज्ञानं भवति क भगवानिति प्रियान्वेषणार्थं परिभ्रमतीत्यर्थः । एवमेव च परिभ्रमणं कर्त्तव्यं यथा कौण्डिन्येन कृतं ततो भगवद्रूपं

तत्रोपविष्टमृषिभिः कलापग्रामवासिभिः ।
परीतं प्रणतोऽपृच्छदिदमेव कुरूद्वह ॥ ७ ॥
तस्मै ह्यवोचद्भगवानृषीणां शृण्वतामिदम् ।
यो ब्रह्मवादः पूर्वेषां जनलोकनिवासिनाम् ॥ ८ ॥

श्रीभगवानुवाच ।

(१) स्वायम्भुव ब्रह्मसत्रं जनलोकेऽभवत् पुरा ।
तत्रस्थानां मानसानां मुनीनामूर्ध्वरेतसाम् ॥ ९ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवत्प्रतिपादकं च नारायणमृषिं बदरीनाथं द्रष्टुं नारायणाश्रमं ययौ बदरीस्थाने गतः ॥ ५ ॥

स्थानस्याप्युत्कर्षमाह—योवै भारतवर्षेऽस्मिन्निति । अस्मिन् भारते कर्मभूमौ एकेनापि तादृशं कर्म क्रियते येन जगदेव प्रलयं याति अतस्तस्य रक्षा दुर्लभेति अयं तत्क्षेमाय उत्तरोत्तरकल्याणसिद्धये च सर्वेषामेव नृणाम् आकल्पात् कल्पप्रभृति तप आस्थितः तत्रापि तपः कुर्वाणां कार्यान्तरव्यग्रम् ॥ ६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

सा प्रसिद्धा एषा श्लोकत्रयी प्रश्नोत्तरमयी ब्राह्मी उपनिषद्भवति आवाभ्यामाविर्भूतैव नत्वावाभ्यामेव कृतेत्यर्थः । यतः पूर्वेषां श्रीनारदादीनां पूर्वजैः सनकादिभिः स्वान्तःकरणेषु धृता ॥ ३ ॥

उक्तमर्थं दृढयितुमितिहासमवतारयति । अत्र अस्मिन्नर्थे गाथामितिहासं नारायणः प्रतिपाद्यत्वेनान्वितो यस्यां तां सम्वादरूपाम् ॥ ४ ॥

सनातनं नित्यमूर्तिम् ऋषिं धर्मपुत्रं श्रीनारायणम् ॥ ५ ॥

क्षेमाय ऐहिकाय स्वस्तये आमुष्मिकाय मङ्गलाय आकल्पात् ब्रह्मप्रथमदिनप्रथमभागमारभ्य ॥ ६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवं राजप्रश्नस्योत्तरं सङ्क्षेपतः कथितं विस्तरत उत्तरं दातुं ब्राह्मोपनिषदः माहात्म्यमाह—सेति । सैषा वर्ण्यमाना उपनिषत् रहस्यविद्या ब्राह्मी ब्रह्मनारायणादिपदवाच्यभगवत्सम्बन्धिनी का या पूर्वेषां पूर्वजैः सनन्दनादिभिर्धृता यस्तां श्रद्धया धारयेत् सः अकिञ्चनः निर्मत्सरः सन् क्षेमं अपवर्गाख्यापरिलक्षणं मोक्षं गच्छेत् ॥ ३ ॥

अत्र अस्मिन् तव संशयनिराकरणे तामेव गाथां ब्राह्मयोपनिषल्लक्षणां वर्णयिष्यामि नारायणेन विषयभूतेन भगवता अन्विताम् तत्रादौ नारदस्य नारायणस्य ऋषेः सम्वादश्च वर्णयिष्यामि ॥ ४ ॥

तयोः सम्वादमाह—एकदेति ॥ ५ ॥

क्षेमाय मोक्षार्थं स्वस्तये भोगार्थं च आकल्पान्तमवधि तपः आस्थितः ॥ ६ ॥

भाषा टीका ।

इसप्रकार चेतनाचेतनके वाचक सब शब्दों की परमात्माके साक्षात् प्रतिपादन करने में शक्तिका प्रतिपादन किया सो यह ब्रह्मके प्रतिपादन करने वारी शक्ति अत्यन्त रहस्यहै इसीसे आचार्य्य द्वारा उपनिषद्के अर्थ विचार करनेसे इसका ज्ञान होता है और पहले ब्रह्म ज्ञानियोंकेभी पहले उत्पन्न भए ज्ञानियोंने उपरोक्त शक्तिका धारण किया है परमात्माके बिना जिसको स्वर्गादि किसी फलकी चाहना नहि है एतादृश जो प्राणी उपरोक्त शक्तिका श्रद्धा के साथ धारण करेगा वह मोक्षको प्राप्त होगा ॥ ३ ॥

आप के प्रश्न और उसके उत्तर के विषय में नारायण से युक्त कथा वर्णन मै करूंगा तुम उस का श्रवण करो ऋषि वेषधारी बदरिकाश्रम निवासी नारायण का और नारद का प्रश्नोत्तर रूप इतिहास को मै कहूंगा ॥ ४ ॥

एक समय भगवान्के प्रिय नारद मुनि लोकन में भ्रमण करतेर सनातन नारायण ऋषि के दर्शन करने को उनके बदरिकाश्रम को गए ॥ ५ ॥

वर्ण के उचित धर्म संपन्न चेतनाचेतन से विलक्षण आत्मज्ञान सम्पन्न शमदमादि सम्पन्न जो नारायण ऋषि है उसने इस भरत खण्ड में मनुष्यों को निर्भय होने के अर्थ, तथा मोक्ष के अर्थ निज आत्मस्वरूप के उपासनारूप तप में अधिकार किया है ॥ ६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ब्रह्मसत्रमिति । यथा यजमाना एव समाना ऋत्विगादिरूपेण यत्र कर्म कुर्वन्ति तत्कर्मसत्रं प्रसिद्धं तथा यत्र समाना

(१) स्वायम्भुवम् इति शुक० सम्ब० विज० पाठः ॥

श्वेतद्वीपं गतवति त्वयि द्रष्टुं तदीश्वरम्।
ब्रह्मवादः सुसंवृत्तः श्रुतयो यत्र शेरते।
तत्र ह्ययमभूत्प्रश्नस्त्वं मां यमनु पृच्छसि ॥ १० ॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

एव वक्तृश्रोतृभावेन ब्रह्म मीमांसन्ते तद्ब्रह्मसत्रम् ॥ ९ ॥

अहो तर्हि मया कथं तन्न ज्ञातमित्यत आह—श्वेतद्वीपमिति। तदीश्वरं तत्रत्यं मामेवानिरुद्धमूर्तिम् ॥ १० ॥

### श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी।

तत्र निजाश्रमे ॥ ७ ॥

ब्रह्मणि वेदे वादस्तत्त्वबुभुत्सार्थकथारूपः ॥ ८—९ ॥

यत्र ब्रह्मवादे श्रुतयः शेरते समन्विता भवन्ति तत्र जनलोके ॥ १०—११ ॥

### श्रीकविचूडामणिचक्रवर्तिकृताऽन्वयबोधिनी।

हे कुरूद्वह! तत्र कलापग्रामे स्वाश्रमे उपविष्टं नारायणं नारदः प्रणतो भूत्वा इदमेवाप्रच्छत् कथम्भूतं कलापग्रामवासिभिः परीतमावृतं, निजाश्रमे उपविष्टमिति वैराग्यराहित्येन पृष्टावसरः श्रेष्ठ उक्तः ऋषिभिः परीतमिति सर्वसम्मतत्वेन तत्पृष्टार्थमाहात्म्यं श्रेष्ठमभिप्रेतम् ॥ ७ ॥

शृण्वताम् ऋषीणां मध्ये तस्मै नारदाय इदमवोचत् इदं किं जनलोकनिवासिनां पूर्वेषां सनन्दनादीनां यो ब्रह्मवादोऽभूत् तदिदमुद्देश्यविधेयभावत्वात् लिङ्गवैषम्यदोषः शृण्वतामित्यनेन सावधानत्वमुक्तं जनलोकनिवासीनामित्यकारान्तोपि भुवनवाची जनशब्दोऽयमुक्तः सकारान्तोपि वर्तते तृतीयस्कन्धे "जनस्तपःसत्यनिवासिनो जनाः" इति ॥ ८ ॥

हे स्वायम्भुव स्वयम्भूपुत्र! पुरा कल्पादौ जनलोके मुनीनां ब्रह्मसत्रमभवत्, कथम्भूतानां तत्रस्थानां जनलोके स्थितानां पुनश्च मानसानां ब्रह्मणो मनसो जातानाम् ऊर्द्ध्वरेतसां नैष्ठिकब्रह्मचारिणां कर्मसत्रब्रह्मसत्रयोर्लक्षणमाहुः स्वामिचरणाः यजमाना एव समाना ऋत्विगादिरूपेण यत्र कर्म कुर्वन्ति तत्कर्मसत्रं प्रसिद्धं तथा यत्र समाना एव वक्तृश्रोतृभावेन ब्रह्म मीमांसन्ते तद्ब्रह्मसत्रमिति ॥ ९ ॥

अहो तर्हि मया कथं तन्न ज्ञातमित्यत आह—तदीश्वरं तत्रत्यम् अनिरुद्धमूर्तिं द्रष्टुं त्वयि श्वेतद्वीपं गतवति सति तत्र जनलोकेऽयं प्रश्नोऽभूत् कोऽसौ त्वं यं प्रश्नं मामनुपृच्छसि अनु सनन्दनादिभिः पश्चात्पृच्छसि तत्पश्चादयं प्रश्नः त्वां विना न केनापि कृतोऽस्तीति श्लाघा सूचिता कचित्पुस्तके "ब्रह्मवादः सुसम्वृत्तः श्रुतयो यत्र शेरते" इत्यधिकं श्लोकार्द्धमस्ति ॥ १० ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तत्र निजाश्रमे उपविष्टमिति वैराग्यराहित्येन वरः प्रश्नावसर उक्तः ऋषिभिः परीतमिति सर्वसम्मतत्वेन तत्प्रश्नार्थमाहात्म्यमभिप्रेतम् ॥ ७ ॥

शृण्वतां शृण्वत्सु सत्स्विति सावधानत्वं ब्रह्मणि वेदविषये वादः तत्त्वबुभुत्सार्थकथारूपः न तु जल्पवितण्डारूपः जनलोक इत्यकारान्तोपि भुवनवाची जनशब्दोऽस्तीति "जनस्तपस्सत्यनिवासिनो जनाः" इत्याद्युक्त्या सकारान्तोपि क्वचित् ॥ ८ ॥

हे स्वायम्भुवेति ब्रह्मसत्रे तवापि योग्यताऽस्तीति ध्वनितः पुरा कल्पादौ मानसानां श्रीब्रह्ममनोजातानामिति, महाविशुद्धत्वं व्यक्तम् अतो मुनीनां श्रीभगवन्मननशीलानाम् अत एवोर्द्धरेतसां नैष्ठिकब्रह्मचारिणामित्यर्थः। इति तेषां ब्रह्मसत्रयोग्यता दर्शिता ॥ ९ ॥

तत्र जनलोके ह स्फुटम् अनु तेभ्यः पश्चात्पृच्छसि इति तत्पश्चादयं प्रश्नस्त्वां विना न केनापि कृतोऽस्तीति श्लाघा सूचिता अत्र पद्ये मध्यत एव पद्यार्द्धमधिकं क्वचिदस्ति "ब्रह्मवादः सुसम्वृत्तः श्रुतयो यत्र शेरते" इति शेरते समन्विता भवन्तीत्यर्थः ॥ १० ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

स्वायम्भुवं स्वयम्भुवाऽनुष्ठितं ब्रह्मसत्रं वेदसिद्धभगवदाराधनरूपं मन्त्रम् ॥ ९ ॥

ब्रह्मवादः ब्रह्मणां वादः ॥ १० ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तत्रेति। तत्र नारायणाश्रमे कलापग्रामवासिभिः परमात्मस्वरूपध्याननिष्ठैर्ऋषिभिः परीतं परिवृतं नारायणं प्रणतो भूत्वा इदमपृच्छत् ॥ ७ ॥

तस्मा इति। तस्मै पृष्टवते नारदाय ऋषीणां शृण्वतां सतामिमं मदुक्तपरिहारगर्भं परिहारमवोचत् तदुक्तपरिहारस्यापि साम्प्रदायिकत्वं वदन् तं विशिनष्टि—य इति। जनलोकनिवासिनां पूर्वेषामग्रजानां सनन्दनादीनां यः सम्वादः प्रश्नोत्तररूपः तमिममवोचदिति सम्बन्धः ॥ ८ ॥

उक्तिमेवाह—स्वायम्भुवेति। हे स्वायम्भुव नारद! तस्य स्वयम्भुवः पुत्रत्वादेवं सम्बोधनं पुरा जनलोके तत्रस्थानां जनलोकस्थानां मानसानां ब्रह्ममानसपुत्राणाम् ऊर्द्ध्वरेतसां जन्म-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रभृति जितेन्द्रियाणां मुनीनां सनकादीनां सम्बन्धि ब्रह्मसत्रं परब्रह्मगुणानुभवात्मकं सत्रमभूत् ॥ ९ ॥

तर्हि तदाहं क गतः कथं मया न श्रुतमित्यत आह—श्वेतद्वीपमिति । तं श्वेतद्वीपवासिनम् ईश्वरं (तत्रस्थं मामेवानिरुद्धमूर्त्तिमित्यर्थः) । द्रष्टुं त्वयि गतवति सति तदा ब्रह्मवादः ब्रह्मणां वादः सम्प्रवृत्तः तं विशिनष्टि यत्र ब्रह्मवादे श्रुतयः शेरते प्रतारणभयरहिताः ऐककण्ठ्यं प्राप्ताः सुखेनासत इत्यर्थः । तत्रेति हेति हर्षे आश्चर्ये वा ऋषिभिः कृत एष प्रश्नः त्वया कृतः अहो तव बुद्धिकौशलमिति मां प्रति यं प्रष्टव्यमर्थं पृच्छसि स तदर्थविषयकः प्रश्न अभूत्प्रवृत्तः ॥ १० ॥

———

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

ब्रह्मवादो ब्रह्मनिरूपणं ब्राह्मणानां वादो वा वादः प्रवदतामहमिति स्मृतेः स्पष्टमन्यत् ॥ ८ ॥

स्वायम्भुवं स्वयम्भुवा अनुष्ठितं ब्रह्मसत्रं भगवदाराधनरूपं सत्रं स्वायम्भुवेति पाठे नारदसम्बोधनं स्पष्टमन्यत् नन्वहं कुत्र गतस्तदानीमित्यत आह—श्वेतद्वीपमिति । तदीश्वरं तत्रस्थमनिरुद्धस्वामिनं स्पष्टम् ॥ ९—१० ॥

———

योगिरामानुजाचार्यकृतसरलाऽव्याख्या ।

ब्रह्मसत्रमिति यत्र समाना एव वक्तृश्रोतृभावेन ब्रह्म मीमांसन्ते तत् ब्रह्मसत्रम् ॥ ९-११ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तत्राऽऽश्रमे उपविष्टं तम् ॥ ७ ॥

तस्मै नारदायेमां गाथामवोचत् गाथां विशिनष्टि—य इति । ब्रह्मवादः ब्रह्मविषया गाथा ॥ ८ ॥

पुरा तत्रस्थानां जनलोकाश्रितानां मानसानामूर्ध्वरेतसां मुनीनां स्वायम्भुवं स्वयंभूपुत्रैः क्रियमाणं ब्रह्मसत्रं ब्रह्मयज्ञं ब्रह्मविचारलक्षणो यज्ञो जनलोके ऽभवदित्यर्थः ॥ ९ ॥

यत्र श्वेतद्वीपे ब्रह्मणि श्रुतयः शेरते अन्यबोधकत्वव्यापारमन्तरेण तद्गुणबोधनपरा एव सन्ति तं श्वेतद्वीपं त्वयि गतवति ब्रह्मवादः सम्प्रवृत्त इत्यन्वयः । कथमत्राह—तत्रेति । मुनयः कीदृशा इत्यत्राह तुल्येति अरिः शत्रुः एकं प्रवचनं प्रकृष्टवचनं यस्य स तथा प्रवक्ता व्याख्यातेत्यर्थः । तम् अपरे शुश्रूषवः श्रोतारः योऽत्र प्रवक्ता स श्रेष्ठ इत्यत्र तात्पर्यं ज्ञातव्यं "सनकाद्याः समाः सर्वे तत्र श्रेष्ठः कुमारकः" इतिवचनात् ॥ १०—११ ॥

———

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तस्मा अवोचदित्यादि ब्रह्मसम्वादः; सविशेषस्य ब्रह्मणो विचारः श्रुतिनिरुक्तिः मुख्यार्थतया ब्रह्मशब्दव्युत्पत्तिः ॥ ८ ॥

स्वायम्भुवेत्यादि । हे स्वायम्भुव नारद ! ब्रह्मसत्रमिति ब्रह्मशब्दो मुख्यो वाच्यार्थिको वेदः मीमांसनं ब्रह्मसत्रं प्रकरणबलात् सविशेषतया मुख्य एवेति मीमांसितमितिभावः ॥ ९ ॥

त्वं तदा तत्र नासीः त्वं श्वेतद्वीपङ्गत इत्याह—श्वेतद्वीपमित्यादि ॥ १०—११ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एकान्तस्थितं प्रष्टमयक इति सुगमावस्थां निरूपयति तत्रोपविष्टमृषिभिरिति । उपविष्टत्वादवैय्यग्र्यं कलापग्रामः सर्वविद्याभिधानभूतः कलाः पान्तीति ग्रामस्तेषामपि समूहरूपः सर्व एव कलापा इति तैर्वेष्टित इति बहिः सत्त्वावस्थाप्रतिपादिता ततः स्वयं प्रणत सन्नपृच्छत इदमेव यत् त्वया पृष्टं कुरूद्वहेति विश्वासार्थं माहात्म्यम् अत एव तस्मै नारायणः वृत्तान्तमवोचत् ऋषीणां शृण्वतामिति अतिप्राकट्यात् निःसन्दिग्धता निरूपिता तस्मा अपि भगवानिदमेवं पूर्वं निरूपितवान् ॥ ७—८ ॥

ततः संक्षिप्तत्वात् यदा नारदस्यापि सन्देहो नः गतः तदा नारायणः पुरावृत्तमाह—स्वायंभुवेति । पूर्वं जनलोके ब्रह्मसत्रमासीत् यथा कर्मसत्रं सप्तदशावरास्तुल्यफलास्तुल्यसाधनाश्च अहमहमिकया प्रधानगुणभावमाश्रित्य कर्म कुर्वन्ति एवं निस्सन्दिग्धब्रह्मज्ञानार्थं सर्व एव निर्णयार्थं प्रवृत्ताः तेषां विचारो ब्रह्मसत्रं तज्जनलोके आसीत् महःपर्यन्तं कर्मफलमेवेति शुद्धब्रह्मविचारो न भवतीति जनलोकग्रहणं स्वायंभुवेति सम्बोधनं विश्वासार्थं न स्थानोत्कर्षमात्रेण विचारः समीचीनो भवतीति विचारकाणां जन्मकर्माद्युत्कर्षमाह—तत्रस्थानामिति । तत्रैव तिष्ठन्तीति कर्मसम्बन्धिदोषाभावस्तेषामुक्तः । मानसानामिति ब्रह्मणो मनसोत्पन्नानां सनकादीनाम् अनेन जन्मोत्कर्षः सूचितः तेषां कर्माह मुनीनामिति मननशीलानाम् ऊर्ध्वरेतसामिति ब्रह्मविद्याया अधिकारः ॥ ९ ॥

नन्वहं कथमिममर्थं न ज्ञातवान् तत्राह—श्वेतद्वीपं गतवतीति । क्षीरोदस्थाने भगवतो ऽनिरुद्धस्य क्रीडासाधनं तत्र श्वेतद्वीपपार्ति द्रष्टुं त्वयि गते ब्रह्मवादः सुसंवृत्त इति सम्बन्धः अनेन सर्वे स्वस्वस्थाने यदा स्थिताः तेदा ब्रह्मवादो जायत इत्यपि सूचितं पूर्वलोकानां स्थितत्वात् कार्मिणः सुखिनः भक्ता अपि भगवद्दर्शनं कुर्वाणाः यदा सुखिनः तदा ब्रह्मवादः सुसंवृत्तः ब्रह्मनिरूपणार्थं वादे वीतरागा कथा यत्र तादृशो विचारः सम्यङ्निष्पन्न इत्यर्थः । ननु तदपि स्थानं स्थानान्तरतुल्यमिति कथं तत्र निर्णय इति चेत्तत्राह श्रुतयो यत्र शेरत इति । श्रुतयः सर्वत्र भ्रमणं कृत्वा शयनार्थं यत्र गच्छन्ति अतस्तासामपि विश्रामस्थानमिति तत्र स्थिताः श्रुतयः स्वाभिप्रायं निवेदयन्तीति श्रुत्यभिमानिनीनां देवतानां मूर्तिधराणां श्रुतीनां वा विचारे वाक्यं सम्वादीति तत्रत्यो निर्णयः अबाधितः ननु तत्रत्यानां श्रुत्यभिप्रायपरिज्ञानानां निःसंदेहानां विचार एव कथं घटत इति चेत्तत्राह—तत्र ह्यय-

वीर०पाठः॥( परिहारांश्च तान् सर्वान् वक्ष्येऽहं शृणु तेऽनघ । )
तुल्यश्रुततपःशीलास्तुल्यस्वीयारिमध्यमाः ।
अपि चक्रुः प्रवचनमेकं शुश्रूषवोऽपरे ॥ ११ ॥
सनन्दन उवाच ।
स्वसृष्टमिदमापीय शयानं सह शक्तिभिः ।
तदन्ते बोधयाञ्चक्रुस्तल्लिङ्गैः श्रुतयः परम् ॥ १२ ॥
यथा शयानं सम्राजं वन्दिनस्तत्पराक्रमैः ।
प्रत्यूषेऽभ्येत्य सुश्लोकैर्बोधयन्त्यनुजीविनः ॥ १३ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

नभूत्नवन इति । तत्रैव ह निश्चयेन अयं प्रश्नोऽभूत् तत्राप्ययं विचारः अपेक्षित इति विचारस्योत्तमत्वम् उक्तं यन्मां त्वं परिपृच्छसि कथं चरन्ति श्रुतय इति अत एव प्रश्नो न निरूपितः ॥ १० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

उपविष्टं श्रीनारायणम् इदमेव ब्रह्मन् ब्रह्मण्यनिर्देश्य इत्येव वदन्नित्यर्थः ॥ ७ ॥

यो ब्रह्मवादो जनलोकनिवासिनामासीत् इममेव ऋषीणां मध्यस्थितो भगवांस्तस्मै नारदाय ह्यवोचदित्यन्वयः ॥ ८ ॥

स्वायम्भुव हे स्वयम्भुपुत्र ! ब्रह्मसत्रमिति यजमाना एव समानाः ऋत्विगादिरूपेण यत्र कर्म कुर्वन्ति तत् कर्मसत्रमिति प्रसिद्धम् तथा यत्र समाना एव वक्तृश्रोतृभावेन ब्रह्म मीमांसन्ते तत् ब्रह्मसत्रम् ॥ ९ ॥

महो तर्हि क्वाहमगमं कथं तन्नावगतवांस्तत्राह—श्वेतद्वीपमिति । ह स्पष्टम् ॥ १० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तत्र नारायणाश्रमे ॥ ७ ॥

पूर्वेषां सनन्दनादीनां ब्रह्मवादः ब्रह्मनिर्णयः ब्राह्म्युपनिषद्रूपः तमवोऽवत ॥ ८ ॥

तत्रस्थानां जनलोकस्थानां मानसानां ब्रह्मणो मनस आविर्भूतानां सनन्दनादीनां ब्रह्मसत्रं ब्रह्मनिर्णयरूपो यज्ञ अभूत् यत्र ब्रह्मवादे श्रुतयः अपूहे जना यथासुखं यथा स्वपन्ति तथा स्वविषये ब्रह्मणि शेरते ॥ ९ ॥

अहं तच्छिष्यस्तदा क्व गतः इत्यत्राह श्वेतद्वीपमिति ॥ १० ॥

भाषा टीका ।

शुकदेव ! उसी आश्रम में कालपग्राम निवासी ऋषियों से चारों तरफ से युक्त विराजमान नारायण ऋषिको प्रणामकर नारदजी ने तुम्हारे पूछे प्रश्न को हि पूछा ॥ ७ ॥

जनलोक निवासि वृद्ध सनकादिक ज्ञानियोंका ब्रह्म के विषय में जो संवाद भया है इसीको ऋषियों के श्रवण करते २ नारदजी के अर्थ भगवान् नारायण ऋषि ने कहा ॥ ८ ॥

श्रीभगवानुवाच ।

हे स्वायम्भुव ! ब्रह्मा के मन से उत्पन्न जन्म से लेकर इन्द्रियजित जनलोक में रहने वारे सनकादिक मुनिजनों का जनलोक में पहले परब्रह्म के कल्याण गुणोंका अनुभव रूप यज्ञ प्रवृत्त भया रहा ॥ ९ ॥

उस समय श्वेतद्वीप में विराजमान अनिरुद्धरूपी मेरा दर्शन करनेको तुम श्वेतद्वीप में गए रहो तब वह सनकादिको का संवाद प्रवृत्त भया रहा जिस ब्रह्म संवाद मे सबहि श्रुति एक होकर ब्रह्म के विषय में सुख पूर्वक वर्त्तत भई मेरे प्रति जिस प्रष्टव्य अर्थको तुम पूछते हो उसी अर्थ के विषय में वहां ऋषियों का यह प्रसिद्ध प्रश्न होता भया तथा उसका प्रत्युत्तरभी इसी प्रकारका भया ( अबके प्रश्न और प्रत्युत्तर उन ऋषियों को हे अनघ ! तुम्हारे अर्थ में कहताहों तुम श्रवण करो ) ॥ १० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु सर्वज्ञत्वे कतत्र वक्ता प्रष्टा वा तत्राऽऽह—तुल्यश्रुतेति । श्रुतादिभिरविशेषा अरिमित्रोदासीनहीनत्वेन निरुपमकरुणा अतः सर्वे प्रवचनयोग्या अपि केनापि कौतुकेनैकं प्रवक्तारं कृत्वाऽन्ये पप्रच्छुरित्यर्थः ॥ ११ ॥

स्वसृष्टमिति स्वयं निर्मितमिदं विश्वं प्रलयसमये आपीय संहृत्य शयानं योगेन निद्राणमिव वर्तमानं तदन्ते प्रलयान्ते तल्लिङ्गैस्तत्प्रतिपादकैर्वाक्यैः परमीश्वरं सृष्टिसमये प्रथम निःश्वासभूताः श्रुतयः प्रबोधयामासुः ॥ १२ ॥

## श्रीधरस्वामिकृतभावार्थदीपिका।

सुश्लोकैः शोभनाः श्लोकाः कीर्तयो येषु तैः पराक्रमैः॥ १३॥

---

## श्रीकविचूडामणिचक्रवर्त्तिकृतऽन्वयबोधिनी।

ननु, सर्वज्ञास्ते कोऽत्र वक्ता प्रष्टा वा तत्राह—ते मुनयः सर्वे प्रवचनयोग्या अपि केनापि कौतुकेन एकं प्रवचनं प्रवक्तारं चक्रुः अपरे शुश्रूषवो बभूवुः कथम्भूताः तुल्यश्रुततपःशीलाः तुल्यानि श्रुतानि तपांसि शीलानि च येषां ते पुनश्च तुल्यस्वीयारिमध्यमाः तुल्याः स्वीया अरयो मध्यमा येषां ते अरिमित्रोदासीनहीनत्वेन निरुपमकरुणाः एवम्भूताअपि सनन्दनं प्रवक्तारं कृत्वा ऽन्ये पप्रच्छुरित्यर्थः॥ ११॥

इदं स्वसृष्टं विश्वं प्रलयसमये आपीय संहृत्य शक्तिभिः सह शयानं परमेश्वरं तदन्ते प्रलयान्ते श्रुतयस्तल्लिङ्गैस्तत्प्रतिपादकैर्वाक्यैर्बोधयाञ्चक्रुः प्रबोधयामासुः शयानमिति योगेन निद्राणमिव वर्त्तमानमित्यर्थः। सृष्टिसमये श्रीनारायणस्य प्रथमनिश्वासात् विनिर्गताः श्रुतयः स्तुवन्ति॥ १२॥

दृष्टान्तमाह—सम्राजं चक्रवर्त्तिराजानं शयानं बन्दिनः स्तावकाः प्रत्यूषे अभ्येत्य तत्पराक्रमैर्यथा बोधयन्ति तथा परमेश्वरं बोधयन्ति कथम्भूतैस्तत्पराक्रमैः सुश्लोकैः शोभनाः श्लोकाः कीर्त्तयो येषु तैः॥ १३॥

---

## श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तपश्चित्तैकाग्रता प्रवचनमिति कर्त्तरि ल्युः॥ ११॥

पूर्वं यथा न निर्विशेषं ब्रह्म सर्ववेदाभिधेयं सविशेषत्वेपि तत्र मायाविभूत्यासक्तमिति व्यञ्जितं यथैव च वोस्योत्प्रेक्षक आदिमध्यनिधन इत्यादिकमुपसंहरिष्यति तथैवोपक्रमते स्वसृष्टमिति। स्वशब्देन विश्वस्य तदुपादानकत्वं तदधीनत्वञ्चोक्तं महदादिपृथिव्यन्तमिदं विश्वम् आ सम्यक् तत्कारणेन प्रकृत्या तद्भोक्त्रा जीववृन्देन च संयुक्तं यथा स्यात्तथा पीत्वा सूर्य्य इव रसान् विलाप्य शक्तिभिः तत्तच्छक्तिमय पुरुषादिनिजावतारैः सह मिलित्वा एकीभूयेत्यर्थः—

"अनन्तानि तथोक्तानि यान्यण्डानि मया पुरा।
सर्वाणि तानि संहृत्य समकालं जगत्पतिः॥
प्रकृतौ तिष्ठति तदा सा रात्रिस्तस्य कीर्त्तिता॥ इति

श्रीविष्णुधर्मोत्तरादौ महापुरुषस्य स्वप्रकृतौ श्रीभगवति प्रवेशश्रवणात् शयानं जगत्कार्य्यं प्रति निद्राणमिव कृतानवधानं सन्तं परम् आद्योऽवतारः पुरुषः परस्येति द्वितीयोक्तेः। स्वयं भगवन्तं श्रीकृष्णं स्वलोकवासिनं तदन्ते तादृशशयनान्ते बहिरावरणगताः श्रुतयस्तदधिष्ठातृदेवताः तल्लिङ्गैः साक्षाद्वा परम्परया वा स्वयं भगवत्ताबोधकैर्वाक्यैर्बोधयाञ्चक्रुः पुनर्विश्वसृष्ट्याम अवधापयाञ्चक्रुः अयं भावः यद्यपि तस्य बोधनं नाम मायावैभवं प्रत्यवधापनमेव तच्च तदीयस्वरूपवैभवमात्रतत्परेभ्यः स्वेभ्यो न रोचते तथापि बोधनस्य स्वाधिकारप्राप्तत्वेनावश्यकर्त्तव्यत्वात् तत्तिरस्कारपूर्वकस्वरूपवैभवपुरस्कारेणैव तच्चक्रुरिति तथैव जयजयेत्यादौ व्यक्तं भावि तदित्थं प्राकृतप्रलयेपि तदधिष्ठानवैकुण्ठस्य तैः सम्मतं यत्रासौ शेत इति तदुक्तं द्वितीये—

प्रवर्त्तते यत्र रजस्तमस्तयोः—
सत्त्वं च मिश्रं न च कालविक्रमः॥
न यत्र माया किमुतापरे हरे—
रनुव्रता यत्र सुरासुरार्चिताः॥

इति॥ १२॥

तच्च प्रबोधनं तासां सर्वपरावरगुरूणां सहजतद्दास्येनैवेति दृष्टान्तेन प्राचीनसिद्धान्तमेव दृढयति—यथेति। शोभनैः श्लोकैः पद्यैः तस्य पराक्रमः प्रभावो यत्र तैरिति सर्वैश्वर्य्यं सर्ववलक्षण्यं च सूचयित्वा अन्येन साम्यमपि नास्मिन् सन्दर्भे विवक्षितं किं पुनरैक्यमिति पूर्वं एव सिद्धान्तः स्थापितः एवं सर्ववेदसम्मतार्थत्वेन स्वयं भगवत्त्वेव स्तुत्यतया लब्धे श्रीकृष्ण एव स इति लभ्यते कृष्णस्तु भगवान् स्वयमिति निर्णीतत्वात् स्तवस्यास्य तल्लीलामहाप्रकरणान्तःपातात् 'निभृतमरुन्मनोक्ष'त्यादि तल्लिङ्गात् "कृष्णं च तत्र छन्दोभिः स्तूयमानं सुविस्मिताः" इत्यादि साक्षिकत्वात् "योसौ सर्वेषु वेदेषु तिष्ठति योसौ सर्वैर्वेदैर्गीयते" इति गोपालतापनी श्रुतेः नमस्तस्मै इत्यादिना एतच्छ्रवणानन्तरं श्रीनारदेन तस्यैव नमस्कृतत्वाच्च अत एव सर्वत्रैव पद्ये साक्षात् श्रीकृष्णताव्यञ्जकमर्थान्तरं ग्रन्थान्ते लिखितमस्ति कौतुकञ्चेत्तदपि द्रष्टव्यम्॥ १३॥

---

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

प्रवचनम् एकञ्चक्रुः सनन्दनं प्रतिवक्तारं चक्रुः॥ ११-१३॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तथा परिहारांश्च तान् तत्र प्रवृत्तान् प्रश्नपरिहारान् सर्वानहं हे अनघ! ते तुभ्यं वक्ष्ये शृणु॥ ०॥

ननु कस्तत्र वक्ता बभूव के वा श्रोतारः किं वा ब्रह्मसत्रस्य लक्षणम् इत्यत आह—तुल्येति। यद्यपि सर्वे श्रुतं शास्त्रजन्यं ज्ञानं तपोऽनशनादि यद्वा "तप आलोचने" इति धातुरूपं तप इति ब्रह्मोपासनात्मकं ज्ञानमित्यर्थः। शीलं तदुपयुक्ता सद्वृत्तिराधनाद्यात्मकस्वभावश्च तुल्यान्येतानि येषां ते तुल्याः स्वीयाः अरयो मध्यमा उपेक्ष्याश्च येषां ते "सर्वं खल्विदं ब्रह्म तज्जलानि शान्त उपासीत" इत्युक्तविधसार्वात्म्यब्रह्मोपासननिष्ठत्वात् स्वीयादिरहिता इत्यर्थः। अनेन सर्वेषामपि प्रवचनसामर्थ्यं सूच्यते अपि तथापि प्रवचने एकं चक्रुः सनन्दनं प्रतिवक्तारं चक्रुरित्यर्थः। अपरे सनकादयः सर्वे शुश्रूषवो बभूवुरिति शेषः। एतदेव ब्रह्मसत्रं नाम यत्सर्वेष्वधिगतपरमार्थयाथात्म्याष्वेकं प्रवक्तारं कृत्वा अन्येतु तूष्णीं शृणुयुरिति भावः॥ ११॥

प्रश्नस्तु स्वत्कृत एवेत्यभिप्रेत्य तमनुक्त्वैव सनन्दनोक्तमुत्तरमाह—स्वसृष्टमित्यादिभिः। तत्र स्वविवक्षितमुत्तरं श्रुतिगीत्या सम्वादयितुं प्रस्तौति सनन्दनः—स्वसृष्टमिति द्वाभ्याम्। स्वेनात्मना सृष्टमिदं चिदचिदात्मकं जगत्

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आपीय संहृत्य शक्तिभिः सूक्ष्मावस्थामापन्नाभिः प्रकृतिपुरुषकालात्मिकाभिः सह शयानं निद्राणमिव वर्तमानं प्रकृतिपुरुषादीन् स्वस्मिन् विभागानर्हान् कृत्वा निरवधिकस्वानन्दानुभवपरं ( सन्तं परं ) परमपुरुषं तदन्ते प्रलयान्ते सृष्ट्यादौ इत्यर्थः । श्रुतयः तन्निश्वासरूपाः मूर्त्तिधराः वेदाः यद्वा वेदाभिमानिनो देवाः तल्लिङ्गैः परमपुरुषासाधारणधर्मप्रकाशकैः वचोभिर्बोधयाञ्चक्रुः प्रबोधयन्त्य इव तुष्टुवुरित्यर्थः ॥ १२ ॥

तत्र दृष्टान्तमाह यथेति । अनुजीविनो भृत्याः वन्दिनः स्तुतिकारकाः प्रत्यूषे प्रभाते अभ्येत्य आगत्य शोभनाः श्लोकाः येषु तैः तस्य सम्राजः पराक्रमैः पराक्रमप्रकाशकैः स्तोत्रैर्बोधयन्ति तद्वदित्यर्थः ॥ १३ ॥

---

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

ननु, ते सर्वेपि तत्त्वज्ञाः कस्तत्र प्रवक्तृत्वे स्थितः को वा श्रोता इत्यत आह—तुल्येति । श्रुतादिभिस्तुल्या अपि तथापि भगवच्चरित्रास्वादनहेतुना प्रवचने एकं सनन्दनं चक्रुः अपरे श्रोतारो बभूवुरित्यर्थः ॥ ११ ॥

स्वसृष्टं स्वेनैव रचितमिदं विश्वं प्रलयावसरे आपीय संहृत्य शयानं योगनिद्रया वर्त्तमानं तदन्ते प्रलयान्ते तल्लिङ्गैस्तत्पारमार्थिकचरित्रप्रतिपादकस्ववाक्यैः परं परमेश्वरं तन्निश्वासरूपाः श्रुतयः " तस्य वा एतस्य महतो भूतस्य निश्वासितमेतदृग्वेदः" इति श्रुतेः ॥ १२ ॥

तत्र दृष्टान्तमाह—यथेति । सुश्लोकैः सुश्लोकाः दिग्विजयादिरूपाः कीर्त्तयो येषु तैः पराक्रमैस्तच्चरित्रैस्तमुपजीव्यं स्पष्टम् ॥१३॥

---

### योगिरामानुजाचार्यकृतसरलाव्याख्या ।

स्वसृष्टमिति । स्वयं निर्मितमिदं विश्वं प्रलयसमये आपीय संहृत्य शयानं योगनिद्राणमिव वर्त्तमानं तदन्ते प्रलयान्ते तल्लिङ्गैस्तदसाधारणधर्मगुणाक्रियाप्रतिपादकैः वाक्यैः परमीश्वरं सृष्टिसमये प्रथमनिश्वासभूताः श्रुतयः प्रबोधयामासुः ॥ १२ ॥

तत्पराक्रमैः तस्य पराक्रमाः येषु तैः तस्य शत्रुजयादिपराक्रमप्रतिपादकैः सुश्लोकैः शोभना श्लोकाः " पाठ्ये गेये च मधुरम्"इतिवत् अर्थालङ्कारशब्दालङ्कारसहितैः पद्यैः ॥ १३ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स एकः कथं प्राबोध्यदत्राह—स्वसृष्टमिति । प्रलये स्वसृष्टमिदं जगदापीय संहृत्य शक्तिभिः श्रीभूदुर्गाख्याभिर्विभक्तप्रकृतिमूर्तिभिः सह शयानं योगनिद्रां कुर्वाणं परं परमात्मानं तदन्ते प्रलयावसाने श्रुतयस्तल्लिङ्गैः संसारनिर्मूलनादिब्रह्मलक्षणैर्बोधयाञ्चक्रुरित्यन्वयः । अत्रेदं तात्पर्यं मूलप्रकृतिः श्रीभूरूपाभ्यां विष्णुना सह शेते श्रुतिनाम्ना दुर्गारूपेण विष्णुं स्तौति—जयजयेति पुंशक्तिविषयबोधनवचनं दुर्गाख्याया अपि तादृक्शक्तिमत्त्वात्तदंशत्वेन भगवदाज्ञया गृहीतविग्रहत्वाच्च श्रुतीनामनन्तत्वेनाधिगन्तुमशक्यत्वात् दुर्गानाम्नापि तथात्वाच्च काली भद्रेत्यादि बहुरूपत्वप्रतीतेश्च श्रुतेश्चानन्तत्वेन वाक्ये भेदाच्छ्रुतय इति बहुवचनं च युज्यते तदुक्तम्—

" श्रीभूमिरितिरूपाभ्यां प्रकृतिर्विष्णुना सह ।
शेते श्रुतिस्वरूपेण स्तौति प्रलये हरिम् ॥
एकाप्यनन्तरूपा सा वाक्यभेदात् सरस्वती ।
अनादिनिधना नित्या स्तौति नारायणं प्रभुम् " ॥इति

अनेनेदं पौरुषेयं वाक्यत्वादितरवाक्यवदिति प्रत्युक्तं वाचस्तम्भ विष्णुं तावती वागिति श्रुतेः त्रिरूपायाः रमायाः शक्तिशब्दाभिधेयत्वं वेदापरपर्यायाः शक्तेश्चानन्ताभिधेयत्वं विष्णोः स्वरूपभूतशक्तेः शक्यत्वगुणयोगेन युज्यते नित्याव्यवधानादिति विशेषशक्तित्वाच्च—

" विष्णोः स्वरूपशक्तेः सा शक्यत्वाच्छक्तिरेव तु ।
नित्या व्यवहितत्वात्तु विशेषाच्छक्तिनामिका ॥"

इति वचनात्सामान्यवाचिनोपि शक्तिशब्दस्य विशेषनिष्ठत्वं पङ्कजादिशब्दवद्युज्यते पङ्काज्जातं पङ्कजमिति शैवलादिषु वृत्तिसम्भवेपि पद्म एव वर्तते विप्रादावपि ब्रह्मशब्दस्य वृत्तियोगेपि चतुर्मुख एव रुद्रशब्दस्य रौद्रगुणयोगनातपि वृत्तावपि शङ्कर एव आदित्यशब्दस्यादितिपुत्रसामान्यवाचित्वसम्भवेपि सूर्य एवेत्यादयुक्तं"यथैव पङ्कजं ब्रह्मा रुद्र इत्यादिकं पदम्"इति वचनात् उमादीनामपि प्रकृतिशब्दवाच्यत्वेन प्रसिद्धेः कथं उच्यते अपरप्रकृतित्वं तासां लक्ष्म्या एव परमप्रकृतित्वं तदुक्तम्—

" श्रीः परा प्रकृतिः प्रोक्ता ब्रह्माणी त्वपरा ततः ।
उमा शचीमुखास्तस्या अवराः सम्प्रकीर्तिताः ॥"

इति ॥ १२ ॥

नित्यबुद्धस्य हरेः कादाचित्कबोधनं विडम्बनमात्रं न तु सत्यमिति हृदि कृत्वा लौकिकमतमनुसरति—यथेति । अनुजीविन इत्यनेन वेदान्तानां तदेकनिष्ठत्वं सूच्यते राजवज्जयशब्दाद्या नित्यबुद्धस्य बोधनं " विडम्बमात्रं केवास्य निद्रा नित्यप्रतेर्हरेः" इति च ॥ १३ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

एवञ्चेतिहासकथनपूर्वकं सविशेषमेव ब्रह्माणि श्रुतयश्चरन्तीति दर्शयन् जगत्संहार्यर्योगनिद्रामुपेतं भगवन्तं यथा श्रुतयश्चेदस्तत्कथनद्वारा द्वारकालीलाप्रकरणं तत्कथायामपि तथा श्रुतिरूपा गोप्यः श्रुतिरूपेण परिचरन्तीति दर्शयितुमेकेनैव पद्येन श्लेषालङ्कारेणोभयं प्रस्तौति—स्वसृष्टमित्यादि । तत्र योगनिद्राशायिपक्षे योऽर्थः स पूर्वैरेव व्याख्यातः द्वारकेन्द्रपक्षे तु यः स इह व्याख्यायते स्वैः प्रियजनैः सृष्टं कल्पितम् इदं कामदम् अस्यास्त्यस इः कामः तं ददातीति तथा मधु तावत् कामदं भवति विशेषणमर्य्यादया पानक्रियाशक्त्या मधुरूपं विशेष्यमाक्षिप्यते यथा " अयमुदयति मुद्रा-

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भञ्जनः पद्मिनीनाम्" इत्यादि । स्वसृष्टम् इदं मधु आपीय सम्यक् पीत्वा शक्तिभिः श्रीरुक्मिण्यादिभिः प्रियाभिः सह शयानं तदन्ते निशान्ते शयनं हि निशायामेवेति शयानशब्दश्रुत्या तत्परस्तदन्तशब्दो निशामाक्षिपति तल्लिङ्गैर्बोधनगमकैर्वचनैः श्रुतयः परं श्रीकृष्णं बोधयाञ्चक्रुः ॥ १२ ॥

तत्र दृष्टान्तमाह यथा शयानं सम्राजमित्यादि । उभयत्र समानम् अतः पूर्वस्मिन्नपि पक्षे दृष्टान्तेनापि सविशेषे ब्रह्मण्येव श्रुतिपरिचरणमिति सिद्धान्तः इह परस्मिंस्तु भवत्येव श्रीकृष्णस्य परब्रह्मत्वात् ॥ १३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु प्रश्ने अज्ञोऽधिकारी उत्तरे च सर्वज्ञ इति कथं तत्र सम्वाद इति चेत्तत्राह—तुल्यश्रुततपःशीला इति । तुल्यमेव श्रुतम् अध्ययनं तपः शीलं च येषां त्रयं समानमदृष्टजनकम् एकतरमात्रेऽपि शिष्टमप्रयोजकं स्यात् तुल्यस्वीयारिमध्यमा इति अन्तःकरणशुद्धिः ब्रह्मज्ञानौपयिकी एवं दृष्टादृष्टप्रकारेण येऽधिकारिणः तेषां मध्ये एकं प्रवचनकर्त्तारं वक्तुः प्रकर्षेण वचनं सिद्धान्तनिरूपणरूपं वचनं यस्येति अपरे शुश्रूषवो जाताः "आवृत्तिरसकृदुपदेशात्" [४-१-१ ] इति न्यायेन ब्रह्मविचारावृत्तिं कुर्वन्तो जाता इत्यर्थः । तत्र सनन्दनो वक्ता सनकादयः श्रोतार इति सनन्दन आह सन्दिग्धार्थनिर्णयार्थं श्रुतीनां वचानि तत्तत्त्व च प्रसङ्गार्थं स्वयमाह—द्वाभ्यां वेदवाक्यैरेव वेदार्थनिर्णय इति मतं सन्दिग्धेषु वाक्यशेषादितिन्यायात् सर्वेषु वेदेषु तत्त्वनिरूपणप्रकारेण अष्टाविंशतिधा भिन्नेषु तत्तत्सन्देहनिवृत्त्यर्थं वाक्यशेषरूपाः एते ऽष्टाविंशतिश्लोकाः तेषां प्रकरणं नास्तीति तत्तत्प्रकारेषु न पठिता इति अनारभ्याधीतानामपि निर्णायकत्वात् सर्वतत्त्वरूपे भगवति शयाने शुद्धरूपेण स्फुरणदशायां मुख्यस्फुरणार्थं तत्त्वभेदनिर्णयान्वदन्तः प्रकृते तात्पर्यरहिताः बोधनमेव तात्पर्यविषयं ज्ञातवन्तः नटा इव रसाभिनयेन अर्थनिरूपकौ शब्दार्थरूपौ वेदभगवन्तौ यथोचतुः तन्निरूपयितुं मादृशीमवस्थां निरूपयति नाप्येतावता सर्ववेदसन्देहनिवृत्तिः किन्तु केषाञ्चिदेव परार्थं प्रवृत्तानां वेदानां बोधकमेतदिति ज्ञापनार्थं वेदानां वैतालिकत्वं भगवतो राजत्वञ्च दृष्टान्तेन निरूप्यते तेन निर्णायका अपि अदूरविप्रकर्षेणैव स्वप्रकरणसन्देहं वारयन्ति न तु भगवन्तं स्तुवन्तीति सूचितम् ॥ ११ ॥

वेदनस्थानां निवृत्तिरूपत्वं वक्तुं भगवतः पूर्वावस्था निरूप्यते—स्वसृष्टमिदमापीयेति । सृष्टेरमादित्वं वक्तुं स्वसृष्टमिति इदं जगत् परिदृश्यमानं तस्य सर्वतः पानं पूर्वसृष्टान् सर्वान् मुक्तान् विधायाग्रे स्वस्य कर्त्तव्यताभावमिव ज्ञापयन् शयान एव भगवान् स्थितः ततो वेदाः सृष्टौ तत्त्वभेदं विस्मृत्य तिष्ठन्तीति सत्शक्तिभिः निःसन्देहप्रतिपादकैः बोधयन्त इव जाताः ननु काचात्मिकैव शक्तिः प्रबोधिका वर्त्तते किं वेदैरिति चेत्तत्राह शक्तिभिः सहेति ततस्तदन्ते शयानान्ते प्रबोधसमये : अन्यथाबोधनमपराधायेति तल्लिङ्गैः तस्यान्येव भगवतो लिङ्गानि तानि वीर्यापरनामानि भगवन्तं लीनमर्थं गमयन्तीति तैरेव बोधयाञ्चक्रुः यत एताः श्रुतयः श्रवणमात्ररूपाः न तु प्रत्यक्षदर्शिन्यः तत्र न साक्षाद्बोधनं किन्तु बोधकमेवोपस्थापयन्ति ॥ १२ ॥

एतासां श्रुतीनां पुनः स्वतन्त्रतयाऽन्यार्थप्रतिपादकत्वे एतद्विचारोऽपि कर्त्तव्यो भवेदिति नैषां प्रकरणरूपेण बोधनमिति ज्ञापयितुं दृष्टान्तमाह—यथाशयानमिति । तेषामनुवादकत्वात् न स्वातन्त्र्येण प्रतिपादकत्वं तथैताः श्रुतयो भगवन्तमेव तत्कृतान् पराक्रमान् श्रावयन्ति तत्र हेतुमाह [illegible] इति प्रबोधनाधिकारिणस्ते विद्योपजीविनश्च तत्र विद्या उपजीव्येव अधिकफलनिर्णयार्थं प्रवृत्ताः प्रबुद्धे भगवान् कदाचित्साक्षात्कृतो भवेत् कदाचित्स्वानन्दं वा प्रयच्छेदिति तासामप्यभिलाषा ताः पूर्ववृत्तान्तमेव जानन्ति नाग्रिमवृत्तान्तमिति ज्ञापयितुं निशान्मुहूर्त्ते अहोरात्रे मुहूर्त्तद्वयात्पूर्वमेव समागताः तावदेव बोधयन्ति यतस्ते अनुजीविनः सेवकाः तदप्रबोधे तासां स्वरूपनाश एव स्यादिति सूचितं श्रुतयश्च प्रथमनिश्वासोद्गता इति केचित् तत् दृष्टान्तादिना विरुध्यते परं ताः पृथगेव तिष्ठन्ति दृष्टान्तानुरोधेन निरूप्यते ॥ १३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ननु, सर्वज्ञा एव ते तत्र कः प्रष्टा को वा वक्ता तत्राह तुल्येति । श्रुतादिभिरविशेषाः स्वपक्षविपक्षतटस्थपक्षरहिताः अतः सर्वेऽपि वक्तृत्वे योग्या अपि केनापि कौतुकेनैकं प्रवचनं प्रवक्तारं चक्रुः कर्त्तारिल्युः ॥ ११ ॥

एतेन प्रणतोऽपृच्छदिदमेव कुरूद्वहेति श्रीशुकोक्तेस्तत्र ह्यायमभूत् प्रश्नस्त्वं मां यमनुपृच्छसीति श्रीनारायणोक्तेश्च सनकादयः सनन्दनं प्रति ब्रह्मन् ब्रह्मण्यनिर्देश्य इति वदन्तः प्रथमं पप्रच्छुः ततश्च श्रीसनन्दनस्तदुत्तरत्वेन बुद्धीन्द्रियमनःप्राणानिति ब्रह्मोपनिषदुत्तरभागमुक्त्वा अत्रार्थे ता एव श्रुतयः स्वयं प्रमाणमिति प्रपञ्चयितुमितिहासमवतारयति—स्वसृष्टमिति । स्वयं निर्मितं विश्वं प्रलयसमये आपीय संहृत्य शयानं योगेन निद्राणमिव वर्त्तमानं तदन्ते प्रलयान्ते तल्लिङ्गैस्तत्प्रतिपादकैर्वाक्यैः परं परमेश्वरं तदा सृष्टिसमये प्रथमनिश्वासप्रसूताः श्रुतयः प्रबोधयामासुः सर्वज्ञमपि तं स्वीयस्तुत्यर्थकौत्साहवशादेवावबोधयामासुः ॥ १२—१३ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यद्यपि लोकशिक्षार्थमुपादेयतया तुल्यानि श्रुतादीनि येषां ते तुल्याः स्वीयादयः अनुपादेयतया येषां तेऽपि तथापि एकं प्रवचनं प्रवक्तारं चक्रुः अपरे शुश्रूषवः बभूवुः ॥ ११ ॥

प्रश्नस्तु स्वकृत एव तत्र ह्यायमभूत् प्रश्न इत्युक्तत्वात्

श्रुतय ऊचुः।

जय जय जह्यजामजितदोषगृभीत (१) गुणां त्वमसि यदात्मना समवरुद्धसमस्तभगः।
अगजगदोकसामखिलशक्त्यवबोधक ते क्वचिदजयाऽऽत्मना च चरतोऽनुचरेन्निगमः॥ १४॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अतस्तमनुकृत्यैव सनन्दनोक्तमुत्तरमाह—स्वसृष्टमित्यादिभिः। स्वसृष्टमिदं विश्वं प्रलयसमये आपीय संहृत्य शक्तिभिः सूक्ष्मरूपाभिः प्रकृतिपुरुषकालादिभिः सह शयानं निद्राणमिव स्थितं तद्वत्ते प्रलयान्ते श्रुतयो भगवन्निश्वसिताः वेदाः तल्लिङ्गैः मंगलस्वरूपगुणादिपरैर्वचनैर्बोधयाञ्चक्रुः बोधयन्त्य इव तुष्टुवुरित्यर्थः॥ १२॥

यथा सुश्लोकैः शोभनाः श्लोकाः प्रतिपादकानि पद्यानि येषां तैस्तस्य पराक्रमैर्वन्दिनः सम्राजं बोधयन्ति तद्वत्॥ १३॥

—

भाषा टीका।

यद्यपि वेदशास्त्रका श्रवण तप शीलस्वभाव इतने गुण सब के समान हि रहे और अपनो तथा वैरि उदासीन यहभी उनके समान हि रहे तथापि एक सनन्दन को तो उनोंने उपदेष्टा करलिया और सनकादिक श्रवण करनेकी इच्छा वारे होकर श्रोता होगए इसीकानाम ब्रह्मसत्र है कि सबहि तत्त्व वेत्ता होकर परमात्मा के गुणानुभव करने के लिये एक को उपदेशक कर अन्य लोग चुपचाप होकर श्रवण करैं॥ ११॥

सनन्दन उवाच।

आपके सृजे भए इस चेतनाचेतन जगतका संहारकर सुक्ष्म माया जीव काल रूप शक्तियों सहित प्रलय काल में शेषशय्यापर मानो शयन करने वारे अर्थात् निरवधिक निज आनन्द का अनुभव कर वर्त्तमान परमात्मा के असाधारण पराक्रमके प्रकाश करने वारे वचनोंसे मानो जगावत स्तुति करती भई॥ १२॥

जैसे चक्रवर्त्ति राजा के भृत्य और स्तुति पाठ करने वारे प्रातः काल में आय कर उस चक्रवर्त्ति के पराक्रम को प्रकाश करने वारे स्तोत्रों से बस सोते भए चक्रवर्त्ति राजा को जगाते हैं तैसे ही श्रुतियों ने परमात्मा को जगाया॥ १३॥

—

श्रीधरस्वामिकृतभावार्थदीपिका।

जयजयेति। भो अजित! जयजय उत्कर्षमाविष्कुरु आदरे वीप्सा केन व्यापारेण अगजगदोकसाम् अगानि स्थावराणि जगन्ति जङ्गमानि च ओकांसि शरीराणि येषां जीवानां तेषामजामविद्यां जहि नाशय किमिति गुणवती इत्यपेक्ष्यत आह—दोषगृभीतगुणाम्। दोषायानन्दाद्यावरणाय गृहीता गुणा यया ताम् "हृग्रहोर्भश्छन्दसि" इति भकारः इयं हि स्वैरिणीव परप्रतारणाय गुणान् गृह्णात्यतो हन्तव्येति नहि मय्यपि दोषमावहेदिति ममापि तत्र का शक्तिः स्यादत आह—त्वमिति। यद्यस्मात्त्वमात्मना स्वरूपेणैव समवरुद्धसमस्तभगः सम्प्राप्तसमस्तैश्वर्योऽसि वशीकृतमायत्वादिति भावः। ननु स्वयमेव ते ज्ञानवैराग्यादिना किं न हन्युरित्यत आह—अखिलशक्त्यवबोधकेति। तेषां त्वमेवान्तर्यामी सर्वशक्त्युद्बोधकः अतो न ते ज्ञानादौ स्वतन्त्रा इति भावः। नन्वहमकुण्ठज्ञानैश्वर्यादिगुणो जीवानां कर्मज्ञानादिशक्त्यवबोधनेनाविद्याहन्तेत्यत्र किं प्रमाणमिति वेदएव प्रमाणमित्याह, निगमो वेदः नन्वेवम्भूते मयि कथं श्रुतीनां प्रवृत्तिस्तत्राह—क्वचिदिति। कदाचित्सर्गादिसमये ऽजया मायया चरतः क्रीडतो नित्यं चात्मरतया सत्यज्ञानानन्तानन्दैकरसेनाऽऽत्मना च चरतो वर्त्तमानस्य निगमोऽनुचरेत् प्रतिपादयेत् कर्मणि षष्ठी 'यतो वा इमानि भूतानि जायन्ते। यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये य आत्मनि तिष्ठन् सत्यं ज्ञानमनन्तं ब्रह्म। यः सर्वज्ञः स सर्ववित्' इत्यादिनिगमकदम्बस्त्वामेवम्भूतं प्रतिपादयतीत्यर्थः॥ १४॥

जयजयाजित जह्यगजङ्गमावृतिमजामुपनीतमृषागुणाम्।
न हि भवन्तमृते प्रभवन्त्यमी निगमगीतगुणार्णवता तव॥ १॥

—

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी।

स्वैरिणीवेत्यत्राभिप्रायप्रवरपद्यम्—

कयाचित्स्वैरिण्या वलययुगलं याचितमथो-
तथोक्ते तन्मित्रं किमिति परवश्यं न हि भवेत्॥
प्रदेयं स्वर्भुग्या लघुपयसि भक्ष्मि जननी—
सुते त्वं धन्यासीत्यवददथ दूती सुरसरित्॥ इति

तत्र हनने अतः अन्तर्यामिण एव शक्त्युद्बोधकत्वात् शरणमहं प्रपद्य इत्यन्ता श्रुतिरजया चरत इत्यस्योदाहरणम् अवशिष्टात्वात्मन इत्यस्य विदधाति सृजति प्रहिणोति ददाति सङ्कल्पमात्रेणाध्यापयतीत्यर्थः य आत्मनि स्वस्वरूप एव तिष्ठन् आत्मानं जीवं नियमयति ननु जीववत् देहलिप्तो भवति इत्यादि सत्यज्ञानान्तादि स्वरूपबोधने प्रमाणं यः सर्वज्ञः इत्याद्या गुणभक्त्वे प्रमाणम् सत्यं त्रिकालाबाध्यम् ज्ञानं जडप्रतियोगि अनन्तं त्रिविधपरिच्छेदशून्यं ब्रह्म यो वेद सोऽश्नुते सर्वान् कामान् सहेति॥ १४॥

(१) दृष्टः इति वीर० शुक-सम्प्र० पाठः।

श्रीकविचूडामणिचक्रवर्त्तिकृताऽन्वयबोधिनी ।

अथ यद्यपि श्रुतयस्त्रिकाण्डविषयत्वात्त्रिविधा एव तथापि तत्तदवान्तरफलसाधनपरत्वेन बहुधा भवन्ति तत्राप्यष्टाविंशतिभेदास्ताः सपरिकराः पृथक् पृथक् स्तुवन्तीति तत्तत्प्रसङ्गे दर्शयिष्यामः तासां नामानि लक्षणाशरणान्तर्यामिभेदाज्ञाननिन्दोपदेशोपासनाभक्त्यनुक्रोशदुर्विज्ञेयत्वानिर्वचनीयत्वाऽसद्वादादिखण्डनस्वतस्त्वैकात्म्यसृष्टिबन्धमोक्षाऽतर्कशक्तित्वसर्वेश्वरत्वलोपाधिलयनिरुपाधिलयवैराग्यगुरूपसदनब्रह्मानन्दाऽतत्त्वरसनानन्तत्वप्रतिपादनपराः क्रमेण ज्ञेयाः अत्र यावत्सर्वाः श्रुतयः सगुणं गुणैरभिभूतं श्रीनारायणमवलम्ब्य निर्गुणं परं ब्रह्म श्रीकृष्णाख्यं स्तुवन्ति इति तात्पर्यं तथापि गोपालतापिन्यां "योऽसौ सर्वेषु वेदेषु तिष्ठति यो सौ सर्वैर्वेदैर्गीयते असौ श्रीकृष्णः" पूर्णतोऽनुवर्त्तते दशमे कृष्णं च तत्र छन्दोभिः स्तूयमानं शुचिस्मिताः इति एकादशस्कन्धे एकविंशाध्याये श्रीकृष्णवाक्यम्—

"किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् ।
इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चन ॥
मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते त्वहम् ।
एतावान् सर्ववेदार्थः शब्द आस्थाय मां भिदाम् ॥
मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदति ।"

व्याख्या स्वामिचरणैः इयं बृहती श्रुतिः कर्मकाण्डे मन्त्रवाक्यैः किमाचष्टे किं प्रकाशयति ज्ञानकाण्डे किमनूद्य निषेधार्थं किं कल्पयेत इत्येवं हृदयं ये तात्पर्यं मत्तोन्यः कश्चिदपि न वेद स्वयमेव कथयति मांविधत्ते इति मामेव यज्ञरूपं विधत्ते मामेव तत्तद्देवतारूपमभिधत्ते न मत्तः पृथक् यच्चाकाशादिप्रपञ्चजातं "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्यादिना विकल्प्यापोह्यते तदप्यहमेव न मत्तः पृथगस्ति एतावान् इति शब्दो वेदः मां परमार्थरूपम् आस्थायाश्रित्य भिदां भेदं मायामात्रमित्यनूद्य "नेह नानास्ति किञ्चन" इति प्रतिषिध्य प्रसीदति निवृत्तव्यापारो भवति एतावान्सर्ववेदार्थः । श्रीगीतासु "वेदैश्च सर्वैरहमेव वेद्यः" "वेदान्तकृद्वेदविदेव चाहम्" इति तस्मात्सर्वाः श्रुतयः श्रीकृष्णस्य माहात्म्यमुदीर्य तमेव स्तुवन्तीति ग्रन्थबाहुल्यभयादधिकं न लिख्यते अथ प्रस्तुतमनुसरामि प्रथमं स्वमनोरथं निवेदयन्त्याहुः । नर्दटकं नामच्छन्दः भो अजित । जय जय उत्कर्षमाविष्कुरु आदरे वीप्सा केन व्यापारेण अगजगदोकसां स्थावरजङ्गमशरीराणां जीवानामजामविद्यां जहि नाशय अगानि स्थावराणि जङ्गमानि ओकांसि शरीराणि येषां तेषां किमिति गुणवती हन्तव्येत्यत आह—दोषगृभीतगुणां दोषायानन्दाद्यावरणाय गृहीता गुणा यया तां "हृग्रहोर्भश्छन्दसि" ति भकारः तद्धननादौ का मम शक्तिस्तत्राह—त्वमसि यदात्मना समवरुद्धसमस्तभगः । यद्यस्मात्त्वम् आत्मना स्वरूपेणैव समवरुद्धः सम्प्राप्तः समस्तभगो येन सः सम्प्राप्तपरमैश्वर्योऽपि वशी वशीकृतमायत्वादजां जहीति भावः ते ज्ञानवैराग्यादिना किं न हन्युरित्यत आहुः हे अखिलशक्त्यवबोधक ! तेषां सर्वशक्त्यवबोधक त्वमन्तर्यामित्वात् अतो न ते ज्ञानादौ स्वतन्त्रा इति भावः । अत्र किं प्रमाणं निगम एव प्रमाणं निगमो वेदोऽहं प्रमाणमित्यर्थः । एवम्भूते मयि कथं श्रुतीनां प्रवृत्तिस्तत्राह— क्वचिदजयात्मना विचरतोऽनुचरेन्निगमः क्वचित्कदाचित् सृष्ट्यादिलीलया अजया मायया सह पुरुषरूपेण चरतः क्रीडतस्तथा क्वचिन्नित्यं स्वात्मसुखमग्नतया सत्यज्ञानानन्दैकरसेनात्मना भगवदादिरूपेण स्वयोगमायया विच्छुरताऽन्तर्याम्यवतारादिविशुद्धलीलायां चरतो वर्त्तमानस्य तव निगमः वेदसमूहः अनुचरेत्सेवेत तदात्वा प्रतिपादयेत्यर्थः । कर्माणि षष्ठ्यौ अत्र श्रुतयो भृगुणा ब्रह्मणः किं लक्षणमिति पृष्टो वरुणः प्राह "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्तीति तद्ब्रह्म विजिज्ञासस्व" इति व्याख्येयं प्रसिद्धा यतो यस्मात् इमानि भूतानि ब्रह्मादिस्तम्बपर्यन्तानि जायन्ते येन हेतुना जातानि जीवन्ति प्राणान् धारयन्ति वर्द्धन्ते च नाशकाले यत्प्रत्ययन्ति गच्छन्ति यत् अभिसंविशन्ति तादात्म्यमेव प्रतिपद्यन्ते तद्ब्रह्म विजिज्ञासस्व विशेषेण ज्ञातुमिच्छेति उत्पत्तिस्थितिनाशकाले यदात्मतां न जहति भूतानि तद्ब्रह्मणो लक्षणमित्यर्थः । तटस्थलक्षणपरेयं श्रुतिः "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै 'तं देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' यः परमेश्वरः पूर्वसर्गादौ ब्रह्माणं विदधाति ससर्ज एतस्मै ब्रह्मणे वेदांश्च प्रहिणोति प्रददौ तं देवं द्योतमानम् आत्मबुद्धिप्रकाशं स्वविषयां बुद्धिं प्रकाशयन्तं मुमुक्षुरहं शरणं प्रपद्ये मोक्षसिद्ध्यर्थम् आश्रयं प्राप्तोऽस्मि शरणपरेयं श्रुतिः इत्युभे श्रुती अजया चरत इत्यस्योदाहरणम् अगजगदोकसामित्यस्योदाहरणं दर्शयति—य आत्मनीति । अन्तर्यामिणं ब्रूहीति उद्दालकेन मुनिना पृष्टः प्राह याज्ञवल्क्यः "य आत्मनि तिष्ठन्नात्मनोऽन्तरोऽयमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः "अर्थश्च आत्मपदेन जीवात्मा गृह्यते य आत्मनि जीवात्मनि तिष्ठन् आत्मनः सकाशादन्तरः दूरस्थ आत्मा यं न वेद न जानाति कुतः यस्य शरीरमात्मा भवति य आत्मानम् अन्तरः अभ्यन्तरस्थसन् यमयति नियमयति एष ते तव अन्तर्यामी आत्मा अमृत इत्यर्थः । इत्यादीनां श्रुतीनां बोद्धव्यः तथा यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरः यं सर्वाणि भूतानि विदुः यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष ते आत्मान्तर्याम्यमृतः इति नियमनलीलापरेयं श्रुतिः आत्मना चरत इत्यस्योदाहरणं दर्शयति—सत्यमिति । "सत्यं ज्ञानमनन्तं ब्रह्म । यः सर्वज्ञः सर्ववित्" इत्यादि निगमकदम्बस्त्वामेवम्भूतं प्रतिपादयतीत्यर्थः सत्यमित्यस्यार्थः प्रागेव लिखितः स्वरूपलक्षणपरेयं श्रुतिः ॥ अथ स्वामिश्लोकः—

जय जयाजितजह्यगजङ्गमावृतिमजामुपनीतमृषागुणाम् ।
न हि भवन्तमृते प्रभवन्त्यमी निगमगीतगुणार्णवता तव ॥

हे अजित ! जय जय जीवानाम् अगजङ्गमावृतिमजां जहि अमी जीवा भवन्तमृते विना न प्रभवन्ति न समर्थाः हे निगमगीतगुणार्णव ! निगमैर्गीतो गुणानामर्णवः समुद्रो यस्य सः तान् जीवानव रक्ष ॥ १४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पूर्वं बुद्धीन्द्रियेत्यादिना प्रणवस्य साक्षाद्भगवद्वाचित्वं दर्शं-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

चित्वा तां श्रुतिरूपाः श्रुतयः तथाष्टविंशतिधा चरन्तीति वक्तुं तत्तद्गुणभेदेनैकैकं पद्यं दर्शयितुं तत्राप्येकैकप्रकरणान्ते शुद्धतद्भक्तिप्रतिपादकश्रुतीनामुत्कर्षं दर्शयितुमाह श्रुतय ऊचुरिति। जय जयेति टीकायां अहमेव प्रमाणमित्याह—वेद इति। निगमोऽनुचरेदिति मात्रस्यार्थः क्वचिदित्यादि सर्वार्थस्त्वग्रे ज्ञेयः तथा शरणमहं प्रपद्ये इत्यन्ता श्रुतिरजया चरत इत्यस्योदाहरणं अन्या च त्वात्मना चरत इत्यस्योदाहणं तत्रैव य आत्मनीत्यादिस्वरूपबोधिका यः सर्वज्ञ इत्यादिनाऽलुप्तभगवत्ताबोधकेति ज्ञेयं अथ स्वव्याख्यात्विदं तत्र च याः सर्वाभ्यस्ता महोपनिषदः सर्वश्रुति समन्वयार्थे श्रुत्यन्तरानुदिता तन्निरसनपूर्वकस्वरूपगुणामहर्शेन तत्र चरन्ति प्रथमं ता एव वन्दिजनोचितपरिहासपूर्वकं प्रथमं स्वमनोरथं निवेदयन्ति-जयजयेति। नदटकंनामेदं छन्दः हे अजित! मायाद्यनभिभूत! जयजय निजोत्कर्षमवश्यमाविष्कुरु कथं वा न करोषीति वीप्सार्थः केन प्रकारेण तमाहुः अजां मायां जहि नाशय यथा पुनरेषा सृष्ट्यादौ प्रवृत्य जीवान्न धुनोतीति भावः। ननु—

“विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम्।
बन्धमोक्षकरी आद्ये मायया मे विनिर्मिते” ॥

इत्येकादशस्य मदुक्त्यनुसारेण विद्यालक्षणगुणांशेन कृपाविषयापि भवत्येषा तत्राहुः दोष एव विषये गृहीतो गुणो यया तां स्ववृत्तिरूपयैवाविद्यया जीवान् बद्ध्वा तद्रूपयैव विद्यया मोचयतीति गुणोऽप्यस्या दोष एव पर्य्यवस्यतीति ननु मम जगद्वैभवहेतुभूताया अस्याः हनने ममैव हानिः स्यात्तत्राहुः त्वमसीति। आत्मना स्वरूपभूतेन परमानन्देनैव तदभिन्नयैव शक्त्येत्यर्थः सम्यक् निरवशेषं प्राप्तपूर्णैश्वर्य्यादिरसि किं तुच्छया तयेति भावः। तथाच वक्ष्यते टीकाकृद्भिः नहि निरन्तराह्लादिसच्चित्कामधेनुवृन्दपतेरजया कृत्यमस्तीति भगवता देवर्षिणा चोक्तं विशुद्धविज्ञानघनं स्वसंस्थयासमाप्तसर्वार्थम”इत्यादि ननु मम तादृशस्वरूपशक्तेरस्तित्वे किं प्रमाणं तत्राहुः—अगेति। अगानि सर्वदा स्थिराणि वैकुण्ठानि जगन्ति चास्थिराणि ब्रह्माण्डानि ओकांसि येषां तेषां जीवानां या अखिला अप्राकृत्यः प्राकृत्यो वा शक्तयः सन्ति हे तदवबोधक! तच्छक्तीनामपि शक्तित्वदायकेति तत्र प्रकृतेर्जडत्वात्तद्वृत्तीनां तच्छक्तीनामपि तादृशत्वादुद्बोधे तव स्वरूपशक्तिश्चिद्रूपैव कारणं लभ्यतेति स्पष्टमेव अप्राकृतीनां चिच्छक्तिवृत्तीनामप्युद्बोधस्तस्या एव स्यात् सर्वाश्रयत्वादिति च गम्यतेवेति भावः। ननु युक्तिमात्रज्ञातार्थाः साक्षिणो न भवन्ति किन्तु साक्षाद्द्रष्टार एव किञ्च मच्चिकटस्था अपि मत्तत्त्वं न जानन्ति किन्तु मत्सेवका एवेति नैतावता युष्मद्वचनेभि प्रामाण्यन्तत्राहुः ते क्वचिदिति सृष्टिलीलायां पूर्वोक्तया अजया मायया पुरुषरूपेण चरन्तं क्वचित् विशुद्धानन्दलीलायां आत्मना पूर्वोक्तया स्वरूपानन्दशक्त्या स्वयं भगवदादिरूपेण चरन्तं त्वां निगमोऽस्मल्लक्षणो वेदकदम्बः अनुचरेत सेवत इति नस्मादेनां जहि तदेवं स्तुतः श्रुतयो गुणवृत्तय एव न भवन्ति किन्तु तन्निषेधार्थमेव तदनुवादित्यः स्वरूपैश्वर्य्यादिमति भगवति तत्तदालम्बनेनैव साक्षाच्चरेयुः तथापि अजितसम्बोधनेनैव चरेयुरिति किं वक्तव्यं यासां श्रुतीनां अत्यन्तान्तरङ्गभूतेन तत्तन्नामरूपेण। शब्दविशेषेण सोऽप्यभिमुखीक्रियत इति तत्राप्यनुचरेदिति तत्रतत्र मूलं कारणं भक्तिरेवेति सिद्धान्तोपक्रमः श्रुतयस्तु“सत्यं ज्ञानमनन्तं ब्रह्म विज्ञानमानन्दं ब्रह्म न तस्य कार्य्यं करणं च विद्यते” इत्यादि। “तमेव भान्तमनुभाति सर्वम्”इत्यादिका “सर्वे वेदा यत्पदमामनन्ति यस्य देवे पराभक्तिः इत्यादिकाश्च ज्ञेयाः ॥ १४ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

श्रुतय ऊचुः ॥ जयजयेति। अजां प्रकृतिं जहि विध्वंसय संसरतां चेतनानां प्रकृतिसम्बन्धं निराकुर्याः इत्यर्थः। दोषगृभीतगुणः दोषेभ्यो गृहीतगुणः सत्स्वपि दोषगुणानां गृहीतेत्यर्थः। यद्वा, अजितदोषेषु सापराधेष्वपि जनेषु गुणलवोऽस्ति चेत् तद्ग्राहीत्यर्थः। आत्मना समवरुद्धसमस्तभगः अत एव स्वीकृताऽसङ्कुचितज्ञानैश्वर्यादिगुणकस्त्वमसि यत् यस्मादजां जहि आश्रितवत्सलत्वात् निरङ्कुशैश्वर्यत्वाच्च त्वमेव मोक्षं दातुं क्षमः तस्मात् अजां विध्वंसयेत्यर्थः अगजगदोकसां स्थावरजङ्गमशरीराश्रयाणां जीवात्मनामखिलचिदचिच्छक्तिशक्त्यवबन्धकशक्त्यामवबोधक! अजया आत्मना च प्रकृतिपुरुषाभ्यां विशिष्टस्य चरतः जगत्सर्गादिलीलां कुर्वतः ते ते इति सम्बन्धसामान्ये कर्मणि षष्ठी निगमोऽप्यनुचरेत चिदचिच्छरीरकस्य जगतः कारणत्वं वेदः प्रतिपादयेदित्यर्थः एवं जगत्कारणत्वं मोक्षप्रदत्वं तदौपयिकगुणपूर्णत्वं शास्त्रप्रमाणकत्वञ्चोक्तम् ॥ १४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

वेदपुरुषमुखनिर्गलितानष्टाविंशतिसङ्ख्याकान् श्लोकानाह जयजयेत्यादि। जयजयेत्यत्रादरे द्विर्भावः। जय उत्कर्षं प्राप्नुहीत्यर्थः। ननु स्वभावत एव निरस्तसमाभ्यधिकस्यानवाप्तः को वा प्राप्य उत्कर्ष इत्यत आहुः—अजाम् इति। अजां प्रकृतिं जहि नाशय त्याजयेत्यर्थः। त्वयि प्रलीनानां सर्वेषां जीवानां संसृतिनिदानभूतप्रकृतिसम्बन्धं त्याजयता त्वया कारुण्यातिशयावहः कश्चिदुत्कर्षोऽभूतपूर्व एव प्राप्यत इति भावः। नन्वहमपि प्रकृतिवश्यस्तत्कथमजां त्याजयामीत्यतः सम्बोधयन्ति—अजितेति। सर्वान् जितवत्या प्रकृत्याऽप्यजित वशीकृतप्रकृते इति भावः नन्वनादितया सा आश्रितानां जीवानां सा कथं त्याजयितव्येत्यतः सम्बोधयन्ति दोषगृभीतगुणेति सत्स्वपि दोषेषु गृभीतो गृहीतः गुणः यादृच्छिकप्रासङ्गिकानुषङ्गिकान्यतमो येन तथाभूत सापराधजनेष्वपि कश्चिद्गुणलेशोऽस्ति चेत्तमपेक्ष्यानुग्रहशीलस्त्वम्। इत्यर्थः। गृभीतेत्यत्र गृहेर्भश्छन्दसीति भकारादेशः दोषगृहीतगुणां इति पाठान्तरं तदा ननु कुतः प्रकृतेर्भोग्यभोगोपकरणादिरूपायाः महागुणवत्यास्त्याजनं प्रार्थ्यते इत्यतस्तां विशिंषन्ति दोषाः जीवानां दोषावहाः गृहीताः गुणाः सत्त्वरजस्तमोरूपाः यया तां निष्ठां तस्य पूर्वनिपाताभाव आर्षः जीवानां संसृतिनिदानभूतगुणाश्रयत्वात्तां जहीत्यर्थः। ननु त्याजने प्रकृ-

## श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अपि बहुत्वादेकार्थपर्यवसानासिद्धेः नहि गन्तव्यग्रामभेदे गमनक्रियाया भेदः सम्भवतीति नन्वसत्यव्यावृत्तिरेव जडव्यावृत्तिः सैव परिच्छिन्नव्यावृत्तिरिति व्यावृत्तिबहुत्वं नास्तीति चेन्न असत्यव्यावृत्तिरित्यनेनैव जडव्यावृत्तिपरिच्छिन्नव्यावृत्तितत्त्वस्वरूपस्य प्रतिपन्नतया पदान्तरवैयर्थ्यप्रसङ्गात् ननु सत्यत्वाद्यनेकविशेषणविवक्षायां विशेषणानां भेदकत्वेन विशेषणभेदाद्विशेष्यभूतब्रह्मणोऽप्यनेकत्वं स्यात् नतु तदाप्यनिष्टमिति चेन्न सत्यत्वादीनां स्वविरोध्यवच्छिन्नात्माश्रयं व्यावर्तयतामन्योन्यविरोधाभावात् अरुणयैकहायन्या पिङ्गाक्ष्या गवाक्ष्या सोमं क्रीणातीत्यादावनेकविशेषणविवक्षायामपि क्रयसाधनभूतविशेष्यत्वाङ्गीकारात्तत्रापि विशेषणैर्विशेष्यभेदाभावादिति अतः यथोक्त एवार्थः अत्राजितदोषगृभीतगुण इत्येव शुकपाठः अर्थस्वारस्यात् प्रमाणसद्भावाच्च नत्वजाविशेषणम् अर्थानौचित्यात् प्रमाणाभावाच्च कथमिति चेदित्थं दोषगृभीतगुणामित्यस्य दोषायानन्दाद्यावरणाय गृहीता गुणा यया सा तामिति केवलाद्वैतवादिना व्याख्या कृता स प्रष्टव्यः अजाया जडत्वात् गृहीतृत्वस्य चेतनधर्मत्वाच्च तस्याः दोषगृहीतगुणत्वं कथमिति किञ्च गृहीता गुणा इति बहुवचनेन सत्त्वादीनां सर्वेषां दोषरूपत्वाभ्युपगमे—

"सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च" ॥

इतिभगवद्वचनविरोधः स्यात् अपिच सा अजा परमार्था अपरमार्था वा न तावत् परमार्था अनभ्युपगमात् नाप्यपरमार्था तथा सत्यपरमार्थशब्देन किं विवक्षितं काल्पनिकत्वमिति चेन्न मूलदोषान्तरापेक्षया अनवस्थापत्तेः किञ्चेयमजा केन कल्पिता जीवेन ब्रह्मणा वा न तावज्जीवेन तस्यैव कल्पितत्वात् नापि ब्रह्मणा तस्याज्ञानविरोधित्वात् ज्ञानबाध्या अभिमता त्वया सा इत्यादयो दोषाः श्रीभाष्यादौ प्रपञ्चिता इत्यलमतिविस्तरेणेति अतो यथोक्त एवार्थः समीचीन इति ॥ १४ ॥

---

## योगिरामानुजाचार्यकृतसरलाव्याख्या ।

जयेति । हे अज ! जयति सर्वमिति जयः । "जी जये" इति धातोः पचाद्यच् सर्ववशीत्यर्थः जितेन्द्रिय इत्यस्य वश्येन्द्रियः इत्यर्थवत् ॥ "जितं ते पुण्डरीकाक्ष" इत्यादिवचनात् भगवतः सर्वजयित्वं प्रसिद्धम् ॥ "विनयो जयस्सत्यसन्धः" इतिसहस्रनामसु जयशब्दस्य भगवद्वाचकत्वेन पठितत्वात् अयमपि जयशब्दो भगवद्वाचकः सर्वविजयी त्वं जय । स्वोत्कर्षं प्रकाशयेत्यर्थः । निर्गुणेन मया कथं जेतव्यमित्यत आहुः—जयेति । भगवतः निर्गुणत्वेऽपि स्वभावतस्सर्वज्ञत्वसर्वशक्त्यादिमत्त्वात् अत एव सर्वजयित्वस्वभाववत्त्वात् स्वोत्कर्षं प्रकाशयेति भावः । जयशब्दस्यार्थभेदान्न पौनरुक्त्यं जयेत्यनेन भगवतः आशीरात्मकमङ्गलमुक्तं भवति अवाप्तसर्वकामस्यापि भगवतः भक्तैः प्रेमातिशयेन क्रियमाणमङ्गलं तत्र तत्र दृश्यते यथा वा "स्वस्त्यस्तु रामाय स लक्ष्मणाय" इत्यादौ केन व्यापारेण स्वोत्कर्षप्रकाशनं भवतीत्यत आहुः अगेति अगानि स्थावराणि जगन्ति जङ्गमानि च ओकांसि शरीराणि येषां तेषां जीवानामजाम् बुद्धेर्विक्षेपणकारिणीमविद्यां "अजगतिक्षेपणयो"रिति धातोः तां जहि विमोचय तस्याः मोचनमीश्वरं विना अन्येन न शक्यमित्यर्थः "तेषामहं समुद्धर्ता मृत्युसंसारसागरात्" इत्यादिवचनात् कथम्भूतामजां अजितदोषगृभीतगुणाम् अजिताः अनिर्जिताः दोषाः कामक्रोधादिदोषाः यैस्ते अजितदोषाः अज्ञानिनः "काम एषः क्रोध एषः" "जहि शत्रुं महाबाहो कामरूपं दुरासदम्" इत्यादिवचनैः कामादयोऽत्र दोषशब्देन बोध्याः तैः कामादिदोषयुक्तैश्चेतनैर्गृहीता भोग्यत्वेन स्वीकृताः गुणाः शब्दादयः यस्याः सा अज्ञैर्निषेव्यमाणशब्दादिगुणवतीमित्यर्थः "पिबन्त्येनामविषमामविज्ञाताः कुमारकाः" "अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इत्यादिवचनमत्रानुसन्धेयम् चेतनानां बुद्धीन्द्रियाणि भगवत्सकाशादपकृष्य शब्दादिप्रवणानि कृत्वा अधः पतनकारिणीमित्यर्थः । श्रीधरस्वामिभिरेवं व्याख्यातम् दोषाय चेतनानां ज्ञानानन्दाद्यावरणाय स्वीकृतसत्त्वादिगुणवतीमिति एतच्च न रुचिरम् रजस्तमसोर्ज्ञानावरकत्वेऽपि सत्त्वस्य ज्ञानावरकत्वाऽभावात् गृहीतगुणामित्यत्र गुणशब्दस्य सत्त्वादिगुणसामान्यवाचकत्वात् "सत्त्वात्सञ्जायते ज्ञानं" "ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत" इत्यादिवचनैः विवृद्धस्य सत्त्वस्य ज्ञानजनकत्वप्रतिपादनात् किञ्च मूलप्रकृतेः त्रिगुणात्मिकत्वेन प्रकृतेर्गुणसम्बन्धस्याऽनादित्वेन गृहीतगुणामित्यपि न युक्तम् मध्ये प्राप्तस्यैव गृहीतत्वव्यवहारात् अत एव गृहीतप्रकाशो रविरित्यादयो न प्रयोगाः सूर्यस्य च प्रकाशसम्बन्धस्याऽऽगन्तुकत्वाभावात् इदमेवरमणीयम् अज्ञानाम्मोहजनकशब्दादिगुणवतीम्मायां जहीतिभावः ईश्वर इवाविद्यायाः अपि अनादित्वात्तस्याः हननं मम का शक्तिरित्यत आहुः—त्वामिति । यद्यस्मात्त्वमात्मना स्वरूपेणैव समवरुद्धसमस्तभगः सम्प्राप्तसमस्तज्ञानशक्त्यादिषड्गुणैश्वर्यः तादृशाणिमाद्यैश्वर्यो वा—

ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥

वशित्वञ्चाष्टभूतयः इत्यादिवचनोक्तैश्वर्यवानासि ननु ते ज्ञानकर्मादिना स्वयमेव मायां हनिष्यन्ति मया किमित्यत आहुः हे अखिलशक्त्यवबोधक अखिलानां नानाविधानां चेतनगतशक्तीनामवबोधक प्रकाशक अतः ज्ञानादौ न स्वतन्त्रा इति भावः उपद्रष्टानुमन्ता च कर्ता भोक्ता महेश्वरः मत्तस्स्मृतिर्ज्ञानमपोहनञ्च इत्यादिवचनात् सदसतः परस्य निस्पृहस्य मम कथं तादृशशक्त्युद्बोधकत्वमित्यत आहुः क्वचिदिति । क्वचित् सृष्टिसमयादौ अजया मायया चरतः विहरतः सर्वचेतनानां ज्ञानशक्त्यादिप्रदानार्थमेव मायया सहैव भगवतो विहार इति भावः । नन्वुक्तम् पूर्वमेव "बुद्धीन्द्रियमनःप्राणान् लोकानामसृजत्प्रभुः" इत्यादिना "लोकवत्तु लीलाकैवल्य" मिति सूत्रेपि भगवतः सृष्ट्यादिव्यापारः क्रीडार्थमित्युक्तत्वात् "अन्तः प्रविष्टश्शास्ता जनानां" "आत्मानमन्तरो यमयति" इत्यादिश्रुतिभिश्च अखिलचेतनानां प्रेरणार्थमेव मायया सह विहार इति सिद्धम् क्वचिदात्मना च चरतः

### योगिरामानुजाचार्यकृतसरलाव्याख्या ।

आनन्दरूपेण स्वात्मना, स्वस्वरूपेणेत्यर्थः । चरतः विहरतः । "रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती" त्यादि-श्रुतिभिः स्वानन्दानुभवैकपरितुष्टस्य ब्रह्मणः आनन्दार्थं प्रकृत्यादिनिरपेक्षत्वात् आत्मना सह विहारो युक्त एव तथा च मायया विहरतः इत्युक्तेः "सो कामयत" तत्सृष्ट्वा "तदेवानुप्राविशत्" "अन्तःप्रविष्टश्शास्ता जनानाम्" इत्यादि-श्रुतिप्रतिपादितजगज्जन्मादिकारणत्वोपयुक्त ज्ञानशक्त्यादि गुणविशिष्टत्वम ब्रह्मणः प्रतिपादितं भवति तथा आत्मना चरतः इत्युक्ते "सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दं ब्रह्मे" त्यादि-श्रुतिप्रतिपादितब्रह्मणः स्वरूपलक्षणीभूतसत्यज्ञानानन्दादिगुणविशिष्टत्वं प्रतिपादितम् एतादृशविहारविशिष्टत्वे ब्रह्मणः किंप्रमाणमित्यत आहुः निगमइति निगमः वेदः अनुचरेत् प्रतिपादयेत् चरत् इति कर्मणिषष्ठी तथा च निर्गुणे गुणवृत्तयः कथं चरन्तीति प्रश्नस्य एतदुत्तरमुक्तम् भवति निर्गुणशब्दस्य प्राकृतगुणराहित्यपरत्वात् ब्रह्मणः जगज्जन्मादिकारणत्वोपयुक्तानन्तकल्याणगुणविशिष्टत्वात् सत्यज्ञानानन्दादिगुणविशिष्टत्वाच्च सगुणश्रुतीनां ब्रह्मप्रतिपादने न कोपि विरोधः इति अन्वयः हे जय त्वं जय अजितदोषगृभीतगुणामजां जहि यद्यस्मात्स्वमात्मनां समवरुद्धसमस्तभोगोऽसि हे अगजगदोकसामाखिलशक्त्यवबोधक कचिदजया चरतः कचिदात्मना च चरतः ते निगमः अनुचरेत इत्यन्वयः ॥ १४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रुतयोपि लक्ष्मीविभूतयः पुराणस्य श्रीशब्दादिश्रुतिगोचरत्वेन श्रुत्यर्थ एव गृह्यते नतु शब्द इत्यभिप्रेत्य कथितं श्रुतय ऊचुरिति । जयजयेति नित्यविजयाधिकरणस्य हरेर्लौकिकत्वकालविजयो नाशास्यते किन्तु विजयप्रकाशनं भक्तानुकम्पित्वेन जयं प्रकाशयेत्यर्थः । सर्वदा जयतो विष्णोर्जयस्तस्य प्रकाशनमित्यादि अत्र राजवद्दिशां जयो न प्रार्थ्यते किन्तु दुस्तरं प्रकृत्यादेरित्याशयेनाह—जहीति । हे अजित दोषैर्जन्मदुःखाज्ञानादिभिरानन्दज्ञानादयो जीवगुणा गृहीताः संवृता यया सा दोषगृहीतगुणा तामजां "अज गतिक्षेपणयो"रिति धातोः जीवगुणाक्षेपिकां जहि हन तथा परमाच्छादिकां जहि गमय अपसारयेति यावत् एते अपि प्रकृतिशब्दव्याख्ये "अथान्ये प्रकृतीदुष्टे नृषु प्रातिस्विकं स्थितम" इत्यादेः एतेन जयजयेत्यारभ्य संवृताधिसंवृतेत्यन्ता श्रुतिर्गृहीता अरतिं तन्द्रीं प्रकृत्याच्छन्नत्वाविशेषाज्जीवात्मनोः को विशेष इति तत्राह त्वमसीति—त्वं यद्यस्मादात्मना स्वत एव से अभिप्रात एवावरुद्धः अनपगतः समस्तः पूर्णो भग ऐश्वर्यादिगुणो यस्य स तथा अनपगतपूर्णैश्वर्यादिगुणोसीत्यर्थः—

> "भगो योन्यां भगोऽपरस्थे यशो वीर्यार्कभूतिषु ।
> कान्तीच्छाज्ञानवैराग्यधर्मैश्वर्यतपस्सु च" ॥ इति

इति यादवः अतस्त्वत्प्रतिबिम्बभूतस्य जीवस्य प्रकृत्याच्छादितत्वात् त्वत्प्रसादमन्तरेणैश्वर्याद्या गुणाः न प्रकाशन्ते अनेन श्रेयआमन्द इत्यारभ्य स्वतोसि त्वमित्यन्ता गृहीता इतोपि विशेषोस्तीत्याह अजेति अज हे विष्णो जगदोकसां जगदाश्रयभूतानां श्रीब्रह्मादीनां सृष्ट्याद्यखिलशक्त्यवबोधक रमायुग इत्यारभ्य अनन्तोऽसीत्यन्ताऽनेन सूचिता इदानीं गुणवृत्तयः श्रुतयः निर्गुणे ब्रह्मणि कथं चरन्तीत्यस्य परिहारमाह कचिदजयेति निगमस्तत्वनिश्चायको वेदः कचित्सृष्टिकाले आत्मना जीवेन अजया प्रकृत्या च अनुचरतः प्रवर्तमानस्य ते तवानुवर्तितचित्तानुवर्तित्वेन विधिनिषेधरूपेण वर्तते हरेस्तदगोचरत्वाल्लये केवलं स्तुतिरूपेण जीवानां निर्देहकत्वेन तत्प्रयोजनकोनेतिशेषः—

> "लयस्य त्वष्टमो भागः सृष्टिकाल उदाहृतः ।
> तत्रैव वेदसञ्चारो ह्यन्यदा स्तुतिमात्रकः" ॥

इतिस्मृतिः यस्माद्विधिनिषेधविषयोजीवस्तस्मात्सृष्टिं कृत्वा वेदैर्जीवान्बोधयित्वा तदुक्तमनुष्ठाय स्वज्ञानमुत्पाद्य त्वं प्रसन्नः तत्स्थां पिशाचवद्वर्तमानां अजां प्रकृतिं जहीति अनेन सृष्टिकाल एव गुणमये जगति वर्तमानाः सदा निर्गुणे परमेश्वर एव वर्तन्त इति प्रश्नपरिहारो दर्शितः यजेत न हन्तव्य इत्यादिविधिनिषेधानां स्तुतिपरत्वं युक्तं कथं यत्प्राप्त्यर्थं यन्नियमाद्विधिनिषेधा वर्तन्ते स त्वमजां जहीति योजनोपपत्तेः—

> "विध्यादीनां नियन्ता यः पूज्यः प्राप्यश्च तद्वताम् ।
> इत्यादिस्तुतिरूपेण विध्यादिश्रुतयोपि तु ।
> हरिं वदन्ति सर्वेषां तन्नामत्वात्तथापि च ॥

इतिस्मृतेः । अस्य सृजतो हित इति प्रभृति मातेक्षणोत्थगादिति पर्यन्तं मूलश्रुतिरियं "हन हिंसाया"मिति धातुः पृथक् श्रुतित्वाच्च पूर्वापरसम्बन्धः उपलक्षणत्वादनन्तत्वाच्छ्रुतीनां सर्वश्रुत्यर्थोपबृंहितत्वाच्च तेषां श्लोकानां न सर्वश्रुतीनां पृथगुक्तिः—

> "सर्वश्रुत्यर्थसम्पन्नान् श्लोकान् सत्यवतीसुतः ।
> एकैकशाखाश्रुत्यर्थान् जगौ सर्वोपलक्षणान् ।
> बबन्ध तान् भागवते प्रतिश्लोकं पृथक्श्रुतीः" ॥

इत्याचार्यैरेवोक्तत्वाच्चास्माभिर्मिथः सम्बन्धार्थं प्रपञ्च्यते ॥ १४ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तत्राद्यार्थविधिधा श्रुतयस्तत्र तत्र चरन्तीति वक्तुं तत्तद्वर्गभेदेनैकैकं पद्यं दर्शयितुं तत्राप्येकैकप्रकरणान्ते शुद्धतत्त्वक्रिप्रतिपादकश्रुतीनामुत्कर्षं दर्शयितुमाह—श्रुतय ऊचुरिति । तत्र च याः सर्वाध्यक्षा महोपनिषदः सर्वश्रुतिसमन्वयार्थं श्रुत्यन्तरानुदिता तन्निरसनपूर्वकस्वरूपनिर्देशेन श्रीभगवति चरन्ति । प्रथमां ता एवं वन्दिजनोचितपरिहासपूर्वकं प्रथमं स्वमनोरथं निवेदयति जय जय ॥ १४ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

प्रकृते तदस्तवमाह-जयजयेत्यादि । हे अजित श्रीकृष्ण ! जय जय अजितस्य सर्वदा जय एव ननु किमर्थोयं जयध्वनिः

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

अपि किञ्चिदभिलषितमस्ति बाढमित्याह—अजां जहि जहीत्यर्थः। निद्रां त्यज निद्रा तु योगनिद्रा सा तु अजा अतः त्वयैव सा स्वीकर्तुं त्यक्तुं च शक्यते तेन नान्यैस्त्वन्निद्रा दूरयितुमर्हा कीदृशी दोषगृहीतगुणां दोषाय परिचारकाणां सेवाकलापहानाय गृहीतो गुणः स्वगुणो यया अथवा अजिता दोषा यैर्निद्रालुभिस्तैर्गृहीता गुणा यस्याः निद्रालुभिरेव निद्रागुणो गृह्यते अस्मिन् हे जय श्रीकृष्ण जयेति व्याख्येयं त्वं तु न निद्रालुर्लीलागृहीतनिद्रात्वात् इच्छाधीनामेनां जहीतिभावः नन्वियं मादृशा न भवति कथं मया हातव्येत्याशङ्क्याह त्वमसीत्यादि यत् यस्मात् त्वम आत्मना स्वयमेव समवरुद्धं वशीकृतं समस्तभगं समस्तैश्वर्यं येन सर्वेश्वरत्वात् सर्वनियामकः तत्र केयं निद्रा वराकी समवरुद्धभगत्वं स्पष्टयति अगजगदित्यादि। अगजगदोकसाम् अगाः स्थावराः जगन्तः जङ्गमाः ओकांसि चतुर्दशलोकाः तेषाम् अथवा हे अग अगम्य जगदोकसां स्थावरजङ्गमानाम् अखिला याः शक्तयः तासाम् अवबोधक प्रकाशक त्वत्तश्चैव सर्वे शक्तिमन्त इत्यर्थः। अतो नेयं स्वतन्त्रा नन्वियं योगमायैव तावत्तु सामान्यानिद्रेव तत्कथं युष्माकं वाक्यमात्रेणैव त्यक्तुं शक्यते तत्राह ते कचिदित्यादि। कचित् कुत्राप्यवतारे जगत्सृष्ट्यादिलीलायां वा अजया मायया आत्मना च स्वान्तर्येण च चरतस्ते चरन्तं त्वां निगमो वेदः अनुचरेत् अनुचरति निरूपयति नत्वहं सर्वेश्वरे सर्वकारणे वा य अजासम्बन्धः त्वं स्वयं भगवत्त्वात् स्वतन्त्र एव आत्मनैव स्वान्तर्येणैव चरसीतिभावः। तदिदं तवैतत्करं निद्रारूपाजाहानमिति अथवा हे अजय दुर्जय! आत्मना स्वातन्त्र्येण चरतस्तव स्वैश्वर्येण विलसन्तं त्वां निगमोऽस्मद्विधः कचित् कुत्रचिदेव अनुचरेत् न सर्वदा तेनायमेवास्माकं सेवासमयस्तदवश्यं प्रबोधयितव्य एव भवान् अथ मा कोपं कार्षीरिति भावः॥ १४॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं प्रसङ्गमुक्त्वा वाक्यशेषरूपेषु प्रथमं प्रकृतिप्रतिपादिकाः श्रुतयः किं स्वतन्त्रतया प्रकृतिं प्रतिपादयन्ति तथा सति शक्तेर्देवतायां वा प्राधान्यं स्यात् आहोस्विद्भगवद्रूपां भगवत्त्वं निरूपयन्ति आहोस्विज्जीवधर्मरूपेयं प्रकृतिरिति तेनात्मेव प्रयत्नेन स्वरूपज्ञानेन वा निवर्त्तनीयेति निरूपयन्ति आहोस्विन्निःस्वभावाः शशविषाणवत् प्रतिभासत इति आहोस्विद्भगवच्छक्तिर्लक्ष्मीरूपा सत्या अतस्तस्यामेव स्थितिः युक्तेति प्रपञ्चनिःप्रपञ्चयोस्तुल्यतया प्रतिपादयन्ति एवमनेकविधसन्देहोत्पत्तौ प्रकृतिप्रतिपादकानां मुनीनां निर्णयार्थमाह—जयजयेति। यथा शर्करा भक्ता उपदध्यात् तेजो घृतमिति घृतपदश्रवणेनैव तैलमधुक्षीरादिनिवृत्तिः एवं भगवत्समीपे मायास्वरूपगुणप्रतिपादनश्रवणेनैव सन्देहो निवृत्त इति न पुनरेतत्पक्षनिराकरणार्थं युक्तयो वक्तव्याः आदौ प्रकृतिनिराकरणार्थं भगवतः स्वरूपेणार्थ्यन्ते जयजय सर्वोत्कर्षेण वर्तस्वेति वीप्सया सर्वदा सर्वोत्कर्षप्रार्थना। अन्यथा अस्मत्तत्सम्बन्धिनो हन्युः अन्यदपि प्रार्थयन्ते अजामिति निद्रां त्यज ततस्तां मूलतो नाशय येन सम्यक् प्रबोधो भवतादिति भावः। ननु तथैवाहम् एतावत्कालं वशो नीतः कथं हन्तुं शक्येतिचेत् तत्राहुः हे अजितेति त्वं न केनापि जितः योगनिद्रा त्वया लीलयैव गृहीता नतु जीव इव निद्रया अभिभूतः भगवन्निद्रा माया सैव प्रकृतिरिति स्वरूपत्रयम् एकमेव अत एव मार्कण्डेयपुराणे ब्रह्मणा योगनिद्रा स्तुता अनेन तस्या जगत्कर्तृत्वं सुतरामेव निवारितं स्वप्नदृष्टिः परं तया सृज्यते न तु सत्या अग्रे सत्यदृष्टेः उत्पत्तिप्रकारं वक्ष्यति नन्वेषा कथं हन्तव्या यतो गुणवती सुषुप्तौ परमानन्दलक्षणं गुणं प्रयच्छतीति चेत्तत्राह दोषगृभीतगुणामिति दोषार्थमेव स्वरूपार्थज्ञानार्थमेव गृहीता गुणा यया इयमेव स्वशक्तिद्वारा जीवान् व्यामोहयति तेषामपि निद्रालस्यादिरूपेण व्यामोहिका वर्त्तते अत आह—अगजगदोकसामिति। स्थावरजङ्गमदेहस्थितानां जीवानामर्थे जीवानां सम्बन्धिनी वा ननु ममाप्येषा सुखदायिनी अतस्तिष्ठत्विति चेत्तत्राहुः त्वमसीति यद्यस्मात् कारणात् त्वमात्मनैव समवरुद्धसमस्तभगोऽसि स एव क्षुद्रादिसुखमपेक्षते निद्रालस्यप्रमादोत्थं यस्य स्वरूपानन्दः सात्त्विकानन्दो न सम्भवति बाधकत्वन्तु तस्या निवर्त्तितमेव अजितेतिपदेन इष्टसाधकत्वन्तु निराक्रियते। त्वमात्मनैव तदपेक्षाव्यतिरेकेणैव सम्यगवरुद्धाः समस्तभगा अणिमादिसुखानि स्वरूपानन्दाश्च यस्य अत एतदपेक्षा केत्यर्थः। ननु सेवार्थं जीवा अपेक्ष्यन्ते तेषाञ्चेन्द्रियवर्गः प्रकृतौ भवति तत्प्रकृतिविनाशे सर्वमेव विनश्येतेति बाधकामितिचेत्तत्राह– अगजगदोकसामिति। स्थावरजङ्गमानामखिलेन्द्रियाणां शक्त्यवबोधकस्त्वमेव न प्रकृतिरिति किञ्च सुतरां य ते स्थावरजङ्गमास्त्वदीयाः तेषां त्वमेवाद्बोधकः प्राकृतानां तु विचारोऽप्यस्ति ननु प्रकृतेर्नाशे तत्पुरःसरतया वेदा मद्बोधने प्रवृत्ताः कथं प्रवर्तिष्यन्त इति चेत्तत्राह—कचिदिति। निगमो वेदः त्वामनुचरेदेव कचिदेवाजया चरतः सर्वदा आत्मनैव चरतः चकारादजया चरणदशायामपि आत्मनैव चरसीति सूचितम् अत एतदर्थमपि अज्ञानसंरक्ष्या निगम इत्येकवचनात् कश्चिदेव वेदः अजासम्बन्धपुरःसरं बोधयति तत्रापि स्वरूपस्थितस्यैव नन्वेतादृशमेव वेदा बोधयतीति कुतो नोच्यते नैवम् "अरूपमस्पर्श" मित्यादिश्रुतयः तत्सम्बन्धाभावमेव प्रतिपादयन्ति तथान्या अपि श्रुतयः स्वरूपानन्दबोधिकाः सृष्टिप्रतिपादिकाश्च केवलब्रह्मपरा इत्यग्रे वक्ष्यते अतो मोहिकां शक्तिं नाशयेतिप्रार्थना—

प्राकृत्यः श्रुतयः सर्वा भगवन्मम बोधजम्।
स्तुवन्ति दोषनाशाय तत्राविघ्नं भवेद्यथा॥

॥ १४॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

जयजयेति। भो अजित जयजय सर्वोत्कर्षेण वर्त्तस्व स्वीयसर्वोत्कर्षमाविष्कुर्वित्यर्थः द्विरुक्तिरादरेण हर्षेण वा केन प्रकारेणोत्कर्षमाविष्कुर्यामितिचेज्जीवेषु करुणया स्वचरणमाधुर्यप्रापणेनैवेत्याहुः

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अगजगदोकसाम् अगानि स्थावराणि जगन्ति जङ्गमानि ओकांसि शरीराणि येषां तेषां जीवानामजामविद्यां त्वत्प्राप्तिप्रतिकूलां जहि नाशय ननु गुणवती सा कथं मत्प्राप्तिप्रतिकूलेत्यत आहुः दोषगृभीतगुणां दोषाय ज्ञानाद्यावरणाय देहादिषु दुरभिमानप्रापणाय च गृभीता गुणा यया तां यद्वा दोषैस्त्वदस्फूर्त्तीरूपैर्गृभीता ग्रस्ता गुणा सत्त्वरजस्तमांसि यस्यास्तां छन्दसि भकारः नन्वा गुणा एवानर्थकारणत्वत्प्राप्तिप्रतिकूला इति भावः अजितेति त्वमेवैकस्तया जेतुमशक्यः अन्ये तु ब्रह्माद्या अपि तया स्वगुणैर्जिता एवेति भावः ननु तथा अहमजित इत्यत्र किं प्रमाणमित्यत आहुः त्वमिति यत् यस्मात्त्वं आत्मना स्वरूपेणैव समवरुद्धसमस्तभगः सम्प्राप्तसमस्तैश्वर्योऽसि वशीकृतमायात्वादिति भावः नन्वविद्योपरामे सत्यपि भक्त्याविना ममप्राप्ति र्भवेत् भक्त्याहमेकया ग्राह्य इतिमदुक्तेस्तत्राहुः हे अखिलशक्त्यवबोधक बुद्धीन्द्रियादीन् सृष्ट्वा जीवानां अखिलाः शक्तीः कर्मकरणशक्तीः कर्मफलभोगशक्तीश्च यथोद्बोधयसि तथैव ब्रह्मपरमात्माभगवत्स्वरूपिणं स्वस्वप्रापयितुं ज्ञानयोगभक्तिकारणशक्तीः कृपया त्वमेव उद्बोधयसि तत्तत्परिपाके सति ब्रह्मपरमात्मभगवदनुभवञ्चोद्बोधयसीत्यर्थः अत्र किं प्रमाणमिति वेदद्वयमेवेति सविनयमाहुः क्वचिदजया कदाचित्सृष्ट्यादिसमये मायया बहिरङ्गशक्त्या सह आत्मना च सर्वकालमेव स्वरूपशक्त्या च सहचरत इति कर्मणि षष्ठ्यार्थो चरन्तं क्रीडन्तं त्वां निगमोऽस्मल्लक्षणः श्रुतिकदम्बः अनुचरेत् परिचरेत् तत्तत्प्रतिपादकरूपप्रमाणीभवनमेवास्माकं त्वत्परिचरणमित्यर्थः तेन सृष्ट्यादिसमयभवं कर्मादिकं सार्वकालिकं त्वदनुभवं च वयमेव प्रतिपादयाम इत्यतः साधूक्तं बुद्धीन्द्रियमनःप्राणानिति ब्रह्मोपनिषद्वाक्यम् अत्र प्रमाणानि नित्यं विज्ञानमानन्दं ब्रह्मेति एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेताः केवलो निर्गुणश्च इति यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः सर्वस्य वशी सर्वस्येशानः यः पृथिव्यां तिष्ठन् पृथिव्यामन्तरः सोऽकामयत बहुस्यां स ईक्षत तत्तेजोऽसृजत सत्यं विज्ञानमानन्दं ब्रह्म इतिसर्वज्ञ इति सम्पूर्णज्ञानं सर्वविदित्यखिलशक्त्युद्बोधकत्वलक्षणस्वचित्‌छक्तिः स्वतः एव लाभः ज्ञानमयं तप इति ज्ञानं परामर्शस्तन्मयं तपः प्रतापात्मकमैश्वर्यं वशीति सर्वनियन्तृत्वम् ईशान इति सर्वकर्मफलदातृत्वं सर्वोपास्यत्वं पृथिव्यां तिष्ठन्निति सर्वव्यापकत्वम् अन्तरः अन्तर्भूतः तेन पृथिवी न जनातीति सर्वदुर्ज्ञेयत्वं सोऽकामयतेति प्रकृतिक्षोभात् पूर्वस्य कामस्य प्राकृतत्वात् कल्याणगुणमयत्वं ईक्षतेत्यज्ञानाभावश्छान्दसः तत्तेज इति तदंशरूपस्य तेजसः पुरुषस्यैव जगत्स्रष्टृत्वं तथैव तत्तेज एव व्यापकं सत्येत्यादिलक्षणं ब्रह्म यस्य प्रभा प्रभवत इति ब्रह्मसंहितोक्तेः मदीयं महिमानञ्च परं ब्रह्मेत्यग्रमोक्तेः ब्रह्मज्योतिः सनातनमिति दशमोक्तेः ब्रह्मणो हि प्रतिष्ठाहमिति गीतोक्तेश्चेत्येवमेता ब्रह्मत्वपरमात्मत्वभगवत्त्वप्रतिपादिकाः यतो वा इमानि भूतानि जायन्त इत्याद्याः सृष्ट्यादिप्रतिपादिकाः अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवतीति कर्मप्रतिपादिकाः ब्रह्मविदाप्नोति परमिति तमेव विदित्वा ऽतिमृत्युमेतीत्याद्याः ज्ञानप्रतिपादिकाः " यदा चैकाच हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका तयोर्ध्वमायन्नमृतत्वमेती"त्याद्या योगप्रतिपादिका "भक्तिरेवैनं नयति सच्चिदानन्दैकरसे भक्तियोगे तिष्ठतीत्याद्याभक्तिप्रतिपादिकाः श्रुतयः ॥१४॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे अजित ! त्वं जय स्वोत्कर्षमाविष्कुरु आदरे द्विरुक्तिः ननु सिद्धे पदार्थे विधिर्विज्ञातेन स्वाभाविकोत्कर्षादौ अन्यथा नित्यत्वहानिरिति चेत्तत्र स्वाभाविकस्यापि वस्तुनः आविष्कारमात्रेणाग्नेरौष्ण्यादिवत्तत्र अन्यत्वादिदोषमाकृत्वं तथा भूतस्यापि स्वाभाविकस्योत्कर्षादेर्जीवानां बहिर्मार्यिकाज्ञानं वारयित्वा तज्ज्ञापनमात्रेण न क्षतिरित्यर्थः । उत्कर्षाद्याविष्कारे क्रियाकारणमित्यपेक्षायामाह " अजां जहि त्याजयेति फलितार्थः कथम्भूतां दोषगृभीतगुणां जीवानां तव भजनविमुखत्वार्थं गृहीता गुणा यया तां गृभ्णहोर्भश्छन्दसि इति भगवत्पाणिनिः यथा गृभ्णामि ते दक्षिणामित्यादि वैदिकप्रयोगः उक्तार्थे शक्तिं द्योतयन्नाह यद्यत आत्मना समवरुद्धसमस्तभग इति स्वतः एवावरुद्धमनपगतं स्वाभाविकं समस्तैश्वर्यं यस्येति तथाभूतस्त्वमसि स्वतःसिद्धैकरसैश्वर्योऽसीत्यर्थः "स्वाभाविकी ज्ञानबलक्रिया चे"ति श्रुतेः तत्र हेतुः 'हे अगजगदोकसामखिलशक्त्यवबोधक चेतनाचेतनानां शक्तिप्रवर्तकप्रधानक्षेत्रज्ञपतिर्गुणेश इति श्रुतेः कारणावस्थं ब्रह्मस्वरूपं निरूप्य तस्यैव त्रिविधं कार्य्यावस्थं रूपं निरूपयन् "भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वम्प्रोक्तं त्रिविधं ब्रह्ममेतत्" इत्यादिश्रुतीनामर्थमाह—क्वचिदिति । अजया जडात्मिकया ऽपरा प्रकृति[illegible]दवाच्यया आत्मना जीवेन परा प्रकृतिशब्दवाच्येन च रममाणस्य ते तवेति कर्मणिषष्ठी त्वां निगमोऽनुचरेत् उभयात्मकं त्वां भिन्नाभिन्नत्वेन प्रतिपादयेदित्यर्थः "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहुस्यां प्रजायेये" त्यादिश्रुतयः ॥ १४ ॥

---

भाषा टीका ।

[illegible]य ऊचुः हे अजित आप उन्नति को प्राप्त हूजियेगा जीवों को अनेक दोष संपादन करने वारी सत्वरजतम गुणों का ग्रहण करने वारी माया का नाश कीजियेगा क्योंकि स्वतः हि आपने समस्त ऐश्वर्य्य का स्वीकार किया है अर्थात् स्वतः स्वाभाविक समस्त ऐश्वर्य्य सम्पन्न आप हो स्थावर जंगम शरीर धारि जीवों की समस्त शक्तियों का उद्बोधन करने वारे आप हो इसी लिये सूक्ष्म चेतना चेतन विशिष्ट होकर सृष्टिकाल में जगदाकार रूपसे परिणाम को प्राप्त और उन दोनों के अधिष्ठाता आप को चेतना चेतन वाचि शब्द समुदाय रूप वेद मुख्य वृत्तिमे प्रतिपादन करता है ॥ १४ ॥

---

(१) बृहदुपलब्धमेतदवयन्त्यवशेषतया यत उदयास्तमयौ विकृतेर्मृदिवाऽविकृतात् ।
अत ऋषयो दधुस्त्वयि मनोवचनाचरितं कथमयथाभवन्ति भुवि दत्तपदानि नृणाम् ॥ १५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

ननु कथं मामेवं प्रति पादयन्ति 'यत इन्द्रो यातोऽवसितस्य राजा' इत्यादिभिरिन्द्रो यातो जङ्गमस्यावसितस्य स्थावरस्य च राजेति प्रतिपाद्यते तथा "अग्निर्मूर्धा दिवः" इत्यादिभिश्चैवमेवान्येऽप्यग्न्यादयः प्रतिपाद्यन्ते तत्राह बृहदुपलब्धमेतदिति अयमर्थः एतदुपलब्धं दृष्टमिन्द्रादिसर्वं बृहद्ब्रह्म त्वमित्येवाचयन्ति जानन्ति कथम् बृहत एवावशेषतयाऽवशिष्यमाणत्वेन कुतः यतो बृहतः सर्वस्योदयास्तमयावुत्पत्तिलयौ सर्वोपादानत्वात् तर्हि किं विकारित्वं बृहतः न अविकृतात् विवर्ताधिष्ठानत्वेनाविकारादित्यर्थः। वाशब्द उपमार्थः यथा घटादेर्विकृतेर्मृदि उदयास्तमयौ तद्वत् 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् सर्वं खल्विदं ब्रह्म' इत्यादिभिस्तथा प्रतिपादनादित्यर्थः । अतः कारणादृषयो मन्त्रास्तद्द्रष्टारो वा त्वय्येव मनोवचनाचरितं दधुः मनसा आचरितं तात्पर्यं वचनाचरितमभिधानं च धृतवन्तः न पृथग्विकारेष्वित्यर्थः। अत्र निदर्शनम् कथमयथेति । नृणां भूचराणां यत्रकुत्रापि दत्तानि निक्षिप्तानि पदानि भुवि कथमयथाभवन्त्यदत्तानि भवन्ति अतो यथा मृत्पाषाणेष्टकादिषु दत्तानि पदानि भुवं न व्यभिचरन्ति तथा यत्किमपि विकारजातं वदन्तो वेदास्त्वामेव सर्वकारणं परमार्थभूतं प्रतिपादयन्तीत्यर्थः ॥ १५ ॥

द्रुहिणवह्निरवीन्द्रमुखामरा जगदिदं न भवेत्पृथगुत्थितम् ।
बहुमुखैरपि मन्त्रगणैरजस्त्वमुरुमूर्तिरतो विनिगद्यसे ॥ २ ॥

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

यात इति "या प्रापणे" इत्यस्य शतृप्रत्ययात् षष्ठ्यन्तम् अवसितस्येति अवपूर्वस्य षिञ् बन्धनइत्यस्य क्तप्रत्यायान्तरूपं "अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्" इति अयमग्निरादित्यरूपेण दिवसो द्युलोकस्य मूर्धा भवति ककुत् श्रेष्ठः पृथिव्याः पतिः जाठरादिरूपेण भूर्लोकस्य पालक इत्यर्थः। एवम्भूतत्वेन स्वर्गपृथिव्यादीनां शिरस्त्वपालकत्वादिरूपेण अतात्त्विको ऽन्यथाभावो विवर्तः यथा रज्ज्वां भुजग इति वाचारम्भणं वाचारभ्यमाणम् उच्चार्यमाणं वागालम्बनमिति यावत् तत्सर्वं नामधेयमेव केवलं ननु विकारो नाम वस्त्वस्ति परमार्थतो मृत्तिकेत्येव सत्यं वस्तु इति परमकारणब्रह्ममात्रसत्यत्वं बोधयति सर्वं खल्विदं ब्रह्मेत्यस्य तज्जलानिति शान्त उपासीतेति वाक्यशेषः सर्वमिदं विश्वं खलु निश्चये ब्रह्मैव तत्र हेतुः तज्जलानिति तस्माद्ब्रह्मणो जातं तज्जं तस्मिन्नेव लीयत इति तल्लं तस्मिन्नेव अनितीति जीवतीति तदन इति हेतोः शान्तः सन् स्वरूपमात्रनिरूपणैः सर्वज्ञत्वादिभिरुपासीतेत्यर्थः । तात्पर्यं निखिलकार्यस्य कारणे पर्यवसानात् इन्द्रादिनिर्देशस्यापि ब्रह्मणि पर्यवसानरूपम् अभिधानं मुख्यां योगवृत्तिं इन्दति परमैश्वर्यं प्राप्नोतीति इन्द्रः अग्रे नयतीत्यग्निः आवृणोतीति वरुणः इत्यादिरूपां अत्र कार्यवर्णनस्य कारणपर्यवसाने ॥ १५ ॥

श्रीकविचूडामणिचक्रवर्तिकृतऽन्वयबोधिनी ।

ननु कथं श्रुतयः मामेव प्रतिपादयन्ति यतो बहीन्द्रादीनीश्वरत्वेन प्रतिपादयन्ति तत्राह एत दुपलब्धं दृष्टं किं तत् अवशेषतया विशिष्यमाणत्वेन एतदिन्द्रादि सर्वं बृहत् ब्रह्मैव भवतीति अवयन्ति जानन्ति श्रुतयः कुतः यतो विकृतेः सर्वस्य उदयास्तमयौ उत्पत्तिप्रलयौ अविकृताद्बृहतः सकाशात् भवतः सर्वोपादानत्वात् वाशब्द उपमार्थः मृदिवायथा घटादिविकृतेरुदयास्तमयौ मृदि मृत्तिकायां भवतः तद्वत् अतः कारणादृषयो मन्त्राः मन्त्रदर्शिनो वा मनोवचनाचरितं त्वय्येव दधुः न पृथग्विकारेषु मनसा आचरितं तात्पर्यं वचनाचरितं त्वयि चात्मनीत्यर्थः अत्र निदर्शनं कथमिति नृणां भूचराणां यत्र क्वापि दत्तानि पदानि कथं किं भुवि अयथा अदत्तानि भवन्ति अतो यथा मृत्पाषाणादिषु दत्तानि पदानि भुवि भुवं न व्यभिचरन्ति तथा किं मयि विकारजातं वदन्तो वेदास्त्वामेव सर्वकार्यं कारणं परमार्थभूतं वदन्तीत्यर्थः। अत्र श्रुतयः "इन्द्रो यातो वसितस्य राजे"ति अयञ्च यातः सङ्गमस्य या प्रापणे इत्यस्य शतृप्रत्ययान्तरूपं अवासे तस्य स्थावरस्य अवपूर्वषिञ्बन्धन इत्यस्य रूपं तथा अग्निर्मूर्धा दिवः ककुत्पतिपृथिव्या अयमपां रेतांसि जिन्वतीति अयं परावररूपेणावस्थितोऽग्निर्दिवो मूर्धा अहञ्च सूर्यात्मना द्युलोकस्य मूर्धा भवति ककुभापतिः तथा पृथिव्याः पतिः पालकः कुतः अपां पयसा रेतांसि वीर्याणि कृण्वति उद्भिज्जभाव नयति तथासूर्यात्मे जगतस्तस्थुषश्चेति सोमोऽस्माकं ब्राह्मणानां राजेत्यादिभिश्चैवम्भूतत्वेनेन्द्रादयः प्रतिपाद्यन्ते भेदप्रतिपादनपरेयं श्रुतिः यद्यप्येवम्भूतास्तथापि सर्वान्तर्यामित्वात् त्वामेव प्रतिपादयन्तीत्यर्थः । मृद्विमत्यस्योदाहरणमाह वाचारम्भणं विकारो नामधेयं मृत्तिकत्येवसत्यं सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेति अर्थः वाचारम्भणं वचनालम्बनमिति यावत् कुतस्सर्वं नामधेयमेव केवलं न विकारो नाम वस्त्वन्तरमस्ति परमार्थतो मृत्तिकेत्येवसत्यं तत्रोत्पत्तिविषयत्वात् तथा कार्यस्य प्रपञ्चस्य परमकारणं ब्रह्ममात्रत्वं बोधयति सर्वं खल्विति खलु निश्चये इदं सर्वं जगत् नाम रूपविकृतप्रत्यक्षादिविषयं ब्रह्मैव भवति कथं तज्जलानिति तस्माद्ब्रह्मणो जातत्वं तस्मिन् ब्रह्मणि लीयत इति तल्लं तस्मिन्नेव स्थिते काले अनिति प्राणिति चेष्टते इति अन इति तज्जलात् इदं जगदित्यस्य विशेषणं यस्मात्त्रिष्वपि कालेषु ब्रह्मात्मतयाऽविशिष्टं तद्व्यतिरिक्तं किञ्चिन्नास्ति तस्मात्सर्वमिदं ब्रह्म अत शान्तः रागद्वेषादिरहितः उपासीत वाचारम्भणं नरदेवविषयमादि-

(१) बृहदुपलब्धमेतदवशेषतया यत उदयास्तमस्यविकृते विकृतः ॥ इति विज० पाठः ॥

### श्रीकविचूडामणिचक्रवर्त्तिकृताऽन्वयबोधिनी ।

नामधेयं मात्रपरमकारकं ब्रह्म सत्यमिति ज्ञात्वा उपासनां कुर्वीत अभेदोपासनापरेयं श्रुतिः स्वामिचरणानां द्रुहिणवह्निरवीन्द्रमुखामराजगदिदं न भवेत्पृथगुत्थितं । बहुमुखैरपि मन्त्रगणैरजस्त्वमुरुमूर्त्तिरतो विनिगद्यसे ॥ द्रुहिण वह्निरवीन्द्रमुखा अमरा जगदिदं न पृथगुत्थितं भवेत् किन्तु त्वत्त एव उद्देश्यविधेयभावत्यादिकवचनप् अतः कारणान्मन्त्रगणैरपि बहुमुखैरजोऽपि बहुमूर्त्तिस्त्वं निगद्यसे ब्रह्मेन्द्रादिरूपेण त्वमेव प्रतिपाद्यसे इत्यर्थः ॥ १५ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वृहदित्यादि टीकायां यातो जङ्गमस्येति "या प्रापणे" इत्यस्य शतृप्रत्ययात् अवसितस्येति अवपूर्वस्य षिञ्बन्धने इत्यस्य क्तप्रत्ययाद्रूपं " अग्निर्मूर्द्धा दिवः" इति योयमहन्यादित्यात्मना द्युलोकस्य मूर्द्धा भवतीत्यर्थः । वाचारम्भणमिति वाचारम्भणं वागालम्बनमिति यावत् तत्सर्वं नामधेयमेव केवलं ननु विकारो नाम वस्त्विति परमार्थतो मृत्तिकेत्येव सत्यं वस्त्विति परमकारणब्रह्ममात्रसत्यत्वं बोधयति सर्वं खल्विदं ब्रह्मेति तज्जलानिति शान्त उपासीतेति श्रुतिशेषः कथं सर्वस्यैव ब्रह्मत्वं तत्राह—तज्जलानिति तस्माज्जातं तज्जन्तस्मिल्लीयते तल्लं तस्मिन्नेव अनिति तिष्ठति तदन् इति तद्व्यतिरेकेण व्यतिरेकादिति भावः यस्मात्सर्वमिदं ब्रह्म तस्माच्छान्तः सन् वक्ष्यमाणैस्तद्गुणैरेवोपासीतेत्यर्थः ॥ अथ स्वव्याख्या तदेवमस्वरूपगुणनिरसनपूर्वकसाक्षात्स्वरूपगुणनिर्द्देशेनान्यश्रुतिभ्योऽपक्षपातशून्यासु श्रुतिषु स्तुतवतीषु तत्तत्पक्षपातिभ्यः काश्चिदन्यास्तत्रविवेकेन तन्निर्देशिकाः श्रुतयः सलज्जा इव स्वेषां स्वापेक्षणीयानाञ्च तत्रैव लक्षणामयमपि चरणं साक्षादेव घटयितुं स्तुवन्ति—बृहदिति । उपलब्धं दृष्टानुमितं यत्किञ्चित्तदेतज्जगत्सर्वं बृहत् ब्रह्मस्वरूपत्वमेवेत्यर्थः । तद्व्यतिरिक्तस्याप्यस्तित्वे बृहत्त्वहानेरिति भावः । ननु बृहज्जगतोर्वैलक्षण्यं महदेव सत्यं तथाप्येवं घटत इत्याहुः—अवशेषतया प्रलये तस्यैवावशिष्यमाणत्वेन तदनतिरिक्तत्वप्राप्तेः तत्र दृष्टान्तः विकृतेर्घटादेः कारणं मृदिवेति ननु घटादेरुत्पत्त्यादिकं मृदो दृश्यते ननु जगतो बृहतः तत्राहुः—यतो बृहतः सकाशादुदयास्तमयौ जगतो वदन्ति श्रुतिविशेषाः कथं तर्हि तस्या इव तस्यापि विकारित्वं नहि नहीत्याहुः—अविकृतात् विकारशून्यादेव तस्मादेव तस्मात्तौ वदन्ति "श्रुतेस्तु शब्दमूलत्वात्" इतिन्यायेन चिन्तामण्यादिदृष्टान्तेन च श्रुतिभिस्तथैवाचिन्त्यशक्तितया तत्प्रतिपादनादितिभावः । विवक्षितमाहुः—अत इति अस्मादेव हेतोर्ऋषयो वेदाः केचिद्दस्मदनुवर्त्तिनस्तत्तज्जगदेकदेशस्तावका इवापि तथास्मद्विधास्तवच्छुद्धस्वरूपगुणाविवेकिन इवापि त्वय्येव बृहति मनोवचनाचरितं तात्पर्य्याभिधारूपं धृतवन्तः तत्र तात्पर्य्यं सर्वस्य कार्य्यस्य कारणपर्य्यवसायित्वे स्थिते तन्निर्देशस्यापि तत्पर्य्यवसानात् अभिधाच परमकारणं त्वां विना तेषामत्यन्ताभावादिति भावः तदेव स्पष्टयितुमर्थान्तरन्यासमाहुः—कथमयथेति । तिर्य्यक्त्वात् यद्वा पदानि पदार्था घटादिवस्तूनि तस्मात्स्वामेकमुद्दिश्य प्रवृत्तास्वस्मासु अज्ञानामेवान्यथाचारित्वं भाति ननु विज्ञानामिति भावः अत्र मुख्याः श्रुतयः सर्वं खल्विदं ब्रह्मेत्यादिकाः अथ तत्पक्षस्था "इन्द्रो यातोऽवसितस्य राजा" इत्यादिकाः तास्वेव दृष्टान्तदर्शिकाः वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य मित्यादिकाः अत्रेति शब्देन सर्वमेव वाक्यं व्याख्यायते ननु मृत्तिकैव तस्यैव मुख्यत्वात् विनापीतिशब्दं विवक्षितार्थसिद्धेः तस्माद्वाचारभ्यते प्राकृतेन्द्रियैर्यत्किञ्चिद्घटादिकं व्यवहारास्पदीक्रियते तत्सर्वं विकारसंज्ञं मृत्तिकातस्तदन्यभूतामित्यर्थः इत्येव सत्यं ननु गौतममतादिवत्ततो भिन्नमित्यर्थः । "तदनन्यत्वमारम्भणशब्दादिभ्यः" इतिन्यायात् ॥ १५ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उपरितनश्लोकैरयमेवार्थः प्रपञ्च्यते—बृहदित्यादिना सृष्टेः पूर्वकाले यतः त्वत्तः सृष्टिकाले आविर्भूतम् उत्पन्नम् प्रभवदेतज्जगत् भवान् स्थितिकाले संरक्षति वा तत्काले अपि संहरति एवम्भूतस्य विकृतेर्विकारं प्राप्तस्य कार्यभूतस्य जगतः सृष्टेः पूर्वकाले एवम्भूतस्य उदयास्तमयौ यतस्त्वत्तः तत्कालगं बृहत् अनन्तगुणयुक्तं ब्रह्म त्वामेव ऋषयो ऽवयन्ति जानन्ति इत्यन्वयः किम्भूतं ब्रह्म अवशेषतया सर्वोपसंहारे व्यवस्थिततया जगत्कारणत्वादुपलब्धज्ञानं कस्मात् केवलघटाद्युत्पत्तेः पूर्वं मृदिव घटाद्यवस्थारहिता मृदिव भवदिति ब्रह्म प्रलयकाले कार्यावस्थाविधुरमित्यर्थः । एवमप्येतत्कारणावस्थाप्रपञ्चनेन सह सर्गरक्षणसंहारहेतुत्वमुक्तम् जगत्कारणत्वान्मुमुक्षुभिः सेव्यत्वमाह—अत इति । अतः कारणत्वात् ऋषयो ज्ञानिनो मनोवचनाचरितं ध्यानस्तुतिचेष्टितानि त्वयि दधुः तत्र दृष्टान्तः कथमिति आकाशे निहितानि पदानि मोघानि पतनस्यावर्जनीयत्वात् भुवि निहितानि पदानि अमोघानि पश्चात् पतनाभावात् एवं मनोवाक्कायचेष्टितानि त्वदाराधनरूपाणि अमोघानि संसारगर्त्तपतननिवारणानीत्यर्थः ॥ १५ ॥

---

### श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

अथ कार्यकारणयोरनन्यत्वं दृष्टान्तमुखेनोपपाद्य कारणत्वनियतमुमुक्षूपास्यत्वमाहुः—बृहदिति । अवशेषतया ब्रह्मणः सर्वोपसंहारेण व्यवस्थिततया जगत्कारणत्वादुपलब्धं सृष्टिकाले आविर्भूतमुत्पन्नमेतज्जगद्बृहत् ब्रह्मेत्यवयन्त्यामनन्ति "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" ऐतदात्म्यमिदं सर्वं सर्वं खल्विदं ब्रह्म" इत्यादयो वेदान्ताः अवगमयन्तीत्यर्थः । अवत्यस्यवशेषतयेति पाठान्तरं तदोपलब्धमुत्पन्नमेतज्जगत् स्थितिकाले ऽवति रक्षत्यन्तकालेऽस्ति संहरति ततोऽवशेषतया कारणत्वाद्बृहदेवेदं जगदिति सर्वं खल्विदं ब्रह्म तज्जलानि" इति वत्सहेतुको(ऽनन्यत्व)निर्देशः एतदुपपादयन्ति यत इति विकृतेः कार्यस्य यत इति तन्त्रेण पञ्चमीसप्तम्यर्थयोः सार्वविभक्तिकस्तसिः यत उदयः उत्पत्तिः यस्मिंश्च लयः सा विकृतिस्तत्

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कारणात्मिका ततोऽनन्या मृदिवाविकृता यथा तावत् अविकृता पिण्डाकारा मृत् ततो घटशरावादिरूपाविकृता तदनन्या तद्वत् अविकृतादिति पाठान्तरं तदाऽविकृतात् यतो यस्माद्विकृतेः कार्यस्योदयास्तमयौ सा विकृतिस्तदनन्या मृदिव यथा तावदविकृता मृत्पिण्डादुदिता घटशरावादिरूपा मृत्तदनन्या तद्वदित्यर्थः "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्" इत्यादिका श्रुतिरिहानुसन्धेया तत्र हि घटेन जलमाहरेत्यादिवाक्यव्यवहारपूर्वकजलाहरणादिकार्यार्थं मृत्पिण्डस्य घटादिनाम कम्बुग्रीवादिरूपाविकारसंस्पर्शमभिप्राय मृत्पिण्डस्य तद्विकारघटादेश्चानन्यत्वमुक्तम् अतः सर्वकारणत्वात्त्वयि ऋषयो मनोवचनाचरितानि ध्यानस्तुतिचेष्टितान्यदधुः त्वामेव निदधुः जुहुवुः त्वदर्थं ऽचेष्टन्तवेत्यर्थः । तत्र सदृष्टान्तं हेतुमाहुः—कथमिति आकाशे निहितानि पदानि यथा मोघानि भवन्ति पतनस्यावर्जनीयत्वात् भुवि निहितानि नृणां पदानि तु कथमयथाभवन्ति कथं मोघानि भवन्ति मोघानि न भवन्त्येव पश्चात्पतनाभावात् एवं मनोवाक्कायचेष्टितानि त्वदाराधनरूपाणि अमोघानि सांसारिकतापनिवारकाण्यन्यविषयाणि ध्यानादीनि तु न तन्निवारकाणि प्रत्युत पतनावहानि अतस्त्वय्येवादधुरित्यर्थः । यद्वा एवं जग(तस्स)त्कारणत्वेन त्वदनन्यत्वाज्जगद्विषयाः सर्वे वैदिकाः शब्दास्तात्पर्यतः शक्त्या च त्वय्येव वर्तन्त इत्याहुः अत इति ऋषयो वेदाः तदुक्तमृषिणेत्यादौ ऋषिशब्दस्य वेदप्रयोगान्मनोवचनाचरितं मनश्च आचरितं तात्पर्यं वचनाचरितमभिधानञ्च त्वय्येव दधुः धृतवन्तः ननु तत्तदर्थविषयाणां कथमभिधायकत्वमित्याशङ्कायां दृष्टान्तमुखेन तदुपपादयन्ति कथमिति प्रासादपर्यङ्कादिषु दत्तानि निहितानि नृणां पदानि कथं भुव्यथाऽदत्तानि भवन्ति प्रासादपर्यङ्कादिधारकत्वात्तस्यामेव यथा दत्तानि भवन्त्येवं प्रतिपुरुषान्तरात्मतया तद्गतनामरूपनिर्वाहकत्वात्त्वय्येव तत्तदर्थशरीरके निर्वाहके च वेदा वर्तन्त इत्यर्थः । अपृथक्सिद्धविशेषणवाचिशब्दानामाकृत्यधिकरणन्यायेन विशेष्यपर्यन्ताभिधानं मुख्यमेवेत्यभिप्रायः ॥ १५ ॥

---

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

एवं जगत्कारणत्वं मोक्षप्रदत्वं तदुपायिकगुणपूर्णत्वं शास्त्रप्रमाणकत्वं चोक्तम् उपरितनश्लोकैरप्ययमेवार्थः प्रपञ्च्यते बृहदित्यादिना अवशेषतया सर्वोपसंहारे व्यवस्थिततया जगत्कारणत्वादुपलब्धं सृष्टिकाले आविर्भूतमुत्पन्नं प्रभवदेतज्जगत् स्थितिकाले भवानवति अन्तकाले संहरति विकृतेः कार्यभूतस्य जगत उदयास्तमयौ सृष्टिप्रलयौ यतस्तत्कारणं बृहत् अनन्तगुणयुक्तं ब्रह्म त्वामेव ऋषय अवयन्ति जानन्ति सृष्टेः पूर्वकाले घटाद्युत्पत्तेः पूर्वं घटाद्यवस्थारहिता मृदिव भवति ब्रह्मप्रलयकाले कार्यावस्थाविधुरमित्यर्थः सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य"मित्यादिश्रुतेः नन्वेवं सति घटशरावादिकारणभूतमृत्पिण्ड इव मय्यपि सवि-

कारत्वं किमित्यत्राह अविकृतात् निरवद्यं निरञ्जनं "सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्य" इत्यादिश्रुतेः विभक्तनामरूपावस्थानर्हसूक्ष्मचिदचिद्वस्तुभिर्विशिष्टं ब्रह्मैव कारणमित्यर्थः तथा चोक्तं गीतोपनिषदि—

अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।
मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ! ॥
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव इति

एवमेतत्कारणावस्थाप्रपञ्चनेन सह सर्गरक्षणसंहारहेतुत्वमुक्तं जगत्कारणत्वान्मुमुक्षुभिः सेव्यत्वमप्याह—अत इति । अतः कारणात् मनोवचनाचरितं ध्यानस्तुतिचेष्टितानि त्वयि दधुः कथमिति यत आकाशे निहितानि पदानि मोघानि पतनस्यावर्जनीयत्वात् पाद्मे उत्तरखण्डे—

यथा धृत्वा शुनः पुच्छमुत्तर्तुमिच्छेत्सरित्पतिम् ।
तथान्यरत्वा हरिं सेव्यमन्योपासनया भवेत् ॥

भुवि निहितानि पदानि अमोघानि पश्चात्पतनाभावात् एवं मनोवाक्कायचेष्टितानि त्वदाराधनरूपाणि अमोघानीति संसारपतननिवारणानीत्यर्थः उक्तञ्च भगवता—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ इति

अन्ये तु त्वदवज्ञानात्संसारे पतन्तीति तदप्युक्तं तेनैव—

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीञ्चैव प्रकृतिं मोहिनीं श्रिता ॥ इति ॥

॥ १५ ॥

---

योगिरामानुजाचार्यकृतसरलव्याख्या ।

जगत्कारणत्वेन मुमुक्षूपास्यत्वमेवेत्याहुः । बृहदिति । एतत्परिदृश्यमानं प्रपञ्चं मृदिवावशेषतयोपलब्धम् घटशरावादिविकाराणाम् नाशे अन्ते यथा मृण्मात्रमवशिष्यते तथा सर्वप्रपञ्चस्य नाशे अवशिष्टत्वेन रूपेण ब्रह्ममात्रमुपलब्धं ज्ञातं श्रुतिभिरित्यर्थः अवशिष्यत इत्यवशेषः, तस्य भावः अवशेषता तया उपलब्धमित्यनेनान्वयः । अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते तमःपरे देव एकीभवती"त्यादिवचनमत्रानुसन्धेयम् एवं रूपं बृहत् परब्रह्म बृहन्ति बृंहन्ति तस्मादुच्यते परं ब्रह्मेति निरुक्त्या अनन्तज्ञानशक्त्यादिविशिष्टमपारिच्छिन्नं त्वमेव ब्रह्मपदवाच्यमिति ऋषयः अवयन्ति जानन्ति ब्रह्मणः अवशिष्टत्वेन हेतुना प्रपञ्चं ब्रह्मस्वरूपमेवेति जानन्तीत्यर्थः । यथा मृज्जन्यं घटशरावादिकं मृत्स्वरूपं मृदः अवशिष्टत्वात् तद्वदिति भावः । अवशिष्टत्वे हेतुमाह—यतः इति यतः उपादानभूतात् ब्रह्मणस्सकाशात् विकृतेः विकाररूपस्य कार्यमात्रस्य उदयास्तमयौ उत्पत्तिप्रलयौ भवतः अत्र यतः इति तसेः सार्वविभक्तिकत्वात् तन्त्रेण पञ्चमीसप्तम्योरुभयोः प्रयोगो ज्ञेयः यस्मादुत्पत्तिः यस्मिंश्च लयो भवतीत्यर्थः । तथा च ब्रह्मोपादानकत्वात् ब्रह्मावशेषकत्वाच्च एतज्जगत् ब्रह्म-

योगिरामानुजाचार्यकृततत्त्वव्याख्या।

स्वरूपमेवेत्यर्थः। यथा मृदुपादानकं मृदवशेषकञ्च घटशरावादिकं मृत्स्वरूपादनातिरिक्तम् तद्वदिति भावः। तथा च श्रुतिः वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् सर्वं खिल्विदं ब्रह्म" इत्यादिः ननु। तर्हि पाकादिना मृदो यथा विकारित्वं भवति तथा ब्रह्मणोपि विकारित्वं स्यादित्याशङ्क्याहुः अविकृतादिति विकाररहितात् यथा मणिमन्त्रकल्पकामधेनुयोग्यादिभ्यः पदार्थाः जायन्ते मण्यादयः न विकृताः भवन्ति तद्वदिति भावः "कारणन्तु ध्येयम्" इत्यादिश्रुत्युक्तरीत्या जगत्कारणभूतं त्वामेव ऋषयः मोक्षार्थम् मनोवाक्कायैरुपासन्ते इत्याहुः अतः इति। अतः जगत्कारणत्वाद्धेतोः ऋषयः मनोवचनाचरितं। ध्यानस्तुतिचेष्टितानि त्वयि ईश्वरे दधुः समर्पितवन्तः मनोदधुरित्युक्ते ध्यानमुक्तं भवति। वचनं दधुरित्यनेन कीर्तनमुक्तं भवति आचरितं दधुरित्यनेन भगवदर्चनमुक्तं भवति मनोवचनाचरितमिति समाहारैकवचनम्। एतेन मनोवाक्कायैर्मुमुक्षुभिराराधनीयत्वं भगवतः उक्तं भवति—

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय! तत्कुरुष्व मदर्पणम्"॥ इति
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
मामेवैष्यसि कौन्तेय सदा मद्भावभावितः॥

इतिवचनात् भगवन्तं विहाय इन्द्रादीनामुपासनन्तु अयथार्थफलं भगवदुपासनन्तु अयथार्थफलं न भवतीति पृथिवीनिहितपदृष्टान्तेनाहुः यथा दृढाधारताशून्ये आकाशजलादौ निहितानि पदानि अयथाभवन्त्येव निहितदेशात् पतितानि भवन्ति आकाशजलादौ दृढाधारत्वाभावात् भुवि निहितानि पदानि तु भूमेः दृढाधाररूपत्वेन भूमिसकाशात् आकाशादिव न पतिष्यन्तीति भावेनाहु—कथमिति। नृणां भुवि धरायां दत्तानि स्थापितानि पदानि अयथा मोघानि व्यर्थव्यापाराणीति यावत् कथं भवन्ति कथमिति काकुः अमोघप्रयोजनान्येव भवन्तीत्यर्थः। तथा दार्ष्टान्ते परमात्मनि समर्पितानि मननकीर्तनार्चनादीनि अयथा निष्फलानि न भवन्तीत्यर्थः। भगवद्व्यतिरिक्ते निहितानि मननादीनि यथार्थसमीचीनफलशून्यान्येवेत्यर्थः। भगवदुपासनं तु पतनहेतुकत्वाभावाद् मोघं भवति भगवद्व्यतिरिक्तोपासनन्तु पतनहेतुकत्वात् मोघमेव भवतीति पूर्वमप्युक्तम् यथा—

येऽन्येऽरविन्दाक्ष विमुक्तमानिन-
स्त्वय्यस्तभावादविशुद्धबुद्धयः॥
आरुह्य कृच्छ्रेण परं पदं ततः—
पतन्त्यधो नादृत युष्मदङ्घ्रयः॥

इति श्रीमद्गीतोपनिषदि च तथैवोक्तम् अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसा मिति कौन्तेयप्रतिजानीहि न मेभक्तः प्रणश्यतीति च॥ १५॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

"बृहदि इहमपरोक्षितं यत्स्वरूपमीदृश तमोऽधिकत्व सर्वाधिकत्वेन तमोहि दुर्गो ततस्तथैनं विदुषा यथाऽगुः" इत्योदाकालकायनश्रुत्यर्थनिबद्धोऽयं श्लोकः बृहदुपलब्धमिति तथाहि अविकृते तमसि तम आसीत्तमसा गूढमग्र इति श्रुतेः नित्यतमोविषये त्वमुदगा उत्कृष्टत्वं गतः मूलप्रकृतेरपि त्वमधिकोऽसि यतः अतो बृहत्त्वेन बृह बृद्धाविति धातोः पूर्णत्वेन एतादृशरूपमुपलब्धं वेदेषु दृष्टं कथमत्राह अवशेषतयेति इत इदमधिकमितोऽपीदमधिकमिति सर्वाधिकत्वेन परिशेषप्रमाणसिद्धत्वेनेत्यर्थः "स एष रसानां रसतमः परमपरार्ध्योऽष्टमो यदुद्गीथः" इति श्रुतिः—

द्वितीयार्थे तृतीयार्थे पञ्चम्यर्थे च सप्तमी।
चतुर्थ्यर्थेच सम्प्रोक्ता विषयेऽपि च तां विदुः"॥ इति

महाव्याकरणवचनात् विषयपञ्चम्यौ युज्येते "कीदृशस्त्वं अविकृतः विकाररहितः अत ऋषयो ब्रह्मादिज्ञानिनस्त्वं सर्वोत्तम इत्येतदर्थपराणि त्वयि तानि मनोवचनाचरितमित्येकवद्भावविवक्षयैकवचनं मनोवचनाचरितानि दधतामिति दधुः शिरसा धृतवन्तः पुंसां त्वयि तानि मन आदीनि कथमयथा अतद्विषयाणि भवन्तीति दधुः तत्र दृष्टान्तः नृणां पदं भूमौ निक्षिपामीति प्रवर्तमानानां दत्तानि निहितानि यथा भूमेरन्यत्र न भवन्ति तथेत्यर्थः। जलवृक्षादेराधारशक्तिमत्त्वेऽपि भूम्यन्तर्भावाच्च पृथगुक्तिः अतस्तथा बृहत्त्वेन दधुरिति वा—

अतः शब्दश्च हेत्वर्थे तथेत्यर्थेच वर्तते।
उभयार्थे च भवति यथाशब्दविदो विदुः इति॥

वचनात् अनिर्देश्यमप्येकदेशेन निर्दिष्टं भवतीत्युक्तं कथमयथाभवन्तीत्यनेन यथा सर्वो भूमिमसञ्चरन्नप्येकदेशसञ्चारेण भूसञ्चारी भवति तथेति

निरपेक्षबृहत्त्वस्य ज्ञानाज्ज्ञानं भवेत्परम्।
बृहत्त्वमेव तु गुणैः सर्वैरुद्दिश्यते बत"

इति सामान्यसंहितायाम्॥ १५॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तत्र केवलब्रह्मनिर्देशपरा अपि श्रुतयः स्वतात्पर्यं श्रीभगवत्येवं निर्दिशन्ति—बृहदिति॥ १५॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

ननु भोः श्रुतयः! वसुदेवपुत्रोऽहं कुत एवं मामसदृशां स्तुथेत्याहुः—बृहदुपलब्धमेतदित्यादि। एतत्तव उपलब्धम् अनुभूतम् ऐश्वर्यमिति यावत् ब्रह्म तवैश्वर्यमेव ब्रह्म अतो ब्रह्मवैभवत्वात् त्वं ब्रह्मैव न तावद्वसुदेवसुतत्वेन यादव एव इति अवन्ति जानन्ति मनीषिण इत्यर्थः। किं रूपेण जानन्ति अवशेषतया अवशिष्यमाणत्वेन इदं वैभवं तव सार्वकालिकं सदैकरूपत्वात् यतो वैभवात् विकृतेः उदयास्तमयौ ब्रह्माण्डमण्डलानामुत्पत्तिप्रलयौ कीदृशात् अविकृतात् सदैकरूपात् तत्र दृष्टान्तः मृदिवा मृद इव पञ्चम्यर्थे सप्तमी वा इवार्थः यथा मृदो विकृतेर्मृदिव मृत्तिकेव सत्यमित्युक्तेः अत्र नः केवलमस्माकमेव वचनमेव प्रमाणं ब्रह्मादिव्यवहारोऽपि प्रमाणमित्याहुः—अत ऋषय इत्यादि। ऋषयो ब्रह्माद्यास्त्वयि श्रीकृष्णे मननं वचनं च आचरितं प्रभुना विदधुः त्वदतिरिक्तमप्रभुः त्वयोन

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

सर्वतोभावेन भक्ता इत्यर्थः। ननु, तर्हि कथमेवमहं नृलोके नृलोकवदाचरन् स्यामित्याशङ्क्याहुरर्थान्तरन्यासेन कथमित्यादि। नृणां मध्ये भुवि दत्तपदानि कृतव्यवसायानि वस्तूनि अयथाभवन्ति स्वभावं त्यजन्ति बहुमानाद्बहुवचनं भुवो भाग्यात् भक्तानुकम्पनाच्च भुवि क्रीडसि तेन ते कृपा विशेष एव न तु ते महिमाहानिरित्यर्थः ॥ १५ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततो ब्रह्मप्रतिपादनार्थं प्रवृत्ताः श्रुतयः "यतो वा इमानि भूतानि जायन्ते तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इति मध्ये भूतभौतिकसृष्टिं सम्पादयन्ति ब्रह्मनिरूपणार्थं तासां किं ब्रह्मपरत्वं सृष्टिपरत्वं जगतो वा ब्रह्मत्वप्रतिपादकत्वम् अध्यारोपापवादेन ब्रह्मावबोधस्थिरीकरणार्थं माहात्म्यप्रतिपादनार्थं वेत्यादिना सन्देहे तन्निर्द्धारार्थमाह—बृहदुपलब्धमेतदिति। यदा विश्वस्य ब्रह्मत्वं सिद्धं श्रुत्यनुभावाभ्यां तदा अन्या श्रुतयः तदेकवाक्यतया योजिता एव भवन्तीति भगवन्माहात्म्यप्रतिपादनद्वारा सिद्धार्थप्रामाण्याः साक्षाद्भगवत्प्रतिपादिका इति फलिष्यति तदर्थं प्रथमं जगतो ब्रह्मत्वं प्रतिपाद्यते एतदुपलब्धं चराचरं जगत् बृहदित्येवावयन्ति ब्रह्मविदो वेदाश्च नन्वेतदनित्यानात्मदुःखात्मकं ब्रह्म तु तद्विपरीतमिति युक्त्या बाधात् प्रत्यक्षविरोधाच्च कथं ब्रह्मत्वमितिचेत् तत्राह अवशेषतयेति अवशिष्यत इत्यवशेषः तस्य भावः तत्ता लोके यदवशिष्यते तत्तस्यैव व्यपदेशः यथा काचादिसहिते सुवर्णे यदेवावशिष्यते तस्यैव मूल्यादौ व्यपदेशः यथा वा घृतार्थिनः तण्डुलार्थिनो वा दुग्धधान्यादिषु यदेवावशिष्यते तत्त्वेनैव व्यवहारः क्रयविक्रयादिः तथा विकारसहिते जगति विकारेष्वपगतेषु ब्रह्मैवावशिष्यत इति ब्रह्मत्वेनैव व्यपदिशन्ति धान्यमन्नत्वेनैव नन्ववशेष एव कथं ब्रह्मणः निरवशेषतयापि नाशसम्भवात् यथाग्निना जले आवर्त्यमाने सर्वशोषे किञ्चिदवशिष्यते तस्मात्कथं ब्रह्मेतिचेत् तत्राह यत उदयास्तमयाविति यतो वा इमानी"त्यादि श्रुतिषु ब्रह्मण एव जगदुत्पद्यते ब्रह्मणि च लीयते अतो मृदादिदृष्टान्तेन ब्रह्मावशेषोऽङ्गीकर्त्तव्यः यथा सुवर्णे च लीने अवश्यं सुवर्णमेवावशिष्यते अतः सुवर्णमेव कुण्डलमिति लोका जानन्ति ननु जगत उदयास्तमयावेव न स्तः "जनी प्रादुर्भावे" इति जननस्याविर्भावात्मकत्वात् "णश अदर्शने" इति नाशस्यादर्शनरूपत्वाच्च दर्शनादर्शनरूपत्वमाविर्भावतिरोभावरूपत्वं वा जगतोऽवगन्तव्यम् उत्पत्तिप्रलययोः न त्वसतः सत्ताध्वंसोऽवाङ्गीकर्त्तुं शक्य इति चेत्तत्राह—विकृतेरिति। अस्तु धर्मिणो वार्त्ताविकाराः सर्वे पूर्वमविद्यमाना एव आश्रयमाश्रित्य उत्पद्यन्त इत्यवगन्तव्यम् अन्यथा ते अविकृता एव स्युः ब्रह्मत्वात् अत उदयास्तमयावेव विकारजातस्याङ्गीकर्त्तव्यौ तथा विकारेषु गतेषु ब्रह्मैवावशिष्यत इति तत्र दृष्टान्तमाह—मृदिवेति। यथा मृदवशिष्यते यथा वा पार्थिवमुपलब्धं मृदेव ननु मृदेव कथमवशिष्यते कपालादीनामवशेषदर्शनादिति चेत्तत्राह अविकृतादिति। अविकाराद्धेतोः नहि विकृतं स्थिरं भवति ततः कपालस्यापि विकृतत्वादविकृता मृदेवावशिष्यते इत्यर्थः। कुण्डले द्रव्यान्तरसम्बन्धोऽपि कदाचिद्भवेदिति मृदेव दृष्टान्ती कृता ननु, किमतो यद्येवम् एवमेतदित्याह—अत ऋषयो दधुरिति। ऋषयो वेदाः तद्द्रष्टारो वा त्वय्येव मनोवचनाचरितं दधुः यत्किञ्चिन्मनसा विभाव्यं यत्किञ्चिद्वाचा अनूद्य तत्सर्वं त्वय्येव विषये भवतीति त्वय्येव दधुः मनस्तु मनोरथं भावयतीति मिथ्याविषयमेव भवति तथा वागपि अत्यन्तासत्यमपि ज्ञानमर्थं शब्दः करोतीति अनृतं वै वाचा वदति अनृतं मनसा ध्यायतीति श्रुतेः यत्र वाङ्मनोविषयस्यापि ब्रह्मत्वं तत्र कार्त्स्न्येनाभिव्यक्तस्य जगतः ब्रह्मत्वेकः संदेह इत्यर्थः। तेन ब्रह्मविदा सर्वव्यवहारा ब्रह्मपरा एवेति न केनापि कर्मणा तेषां लोप इति सिध्यति नन्वसत्यस्य कथं ब्रह्मत्वमिति चेत्तत्राह—कथमयथा भवन्ति इति यत्र क्वचित् स्थापितानि पदानि भुवि कथमयथाभवन्ति भूमिं न व्यभिचरन्तीत्यर्थः। भूमावेव पतन्ति भ्रमदपि स्वीकृतो विषयः परमार्थतो भगवानेव भवतीत्यर्थः। भ्रमप्रतीतिपदार्थानामपि ब्रह्मत्वात् तत्त्वेनैव तस्य भानात् नहि ब्रह्मातिरिक्तो भासते तन्तुभ्यः पटरूपेणाविर्भावे शुक्तिकायां वा रजतरूपेणाविर्भावे भगवदिच्छायां कश्चन विशेषोऽस्ति कार्यस्यापि प्रावरणादेः सुखस्य वा तुल्यत्वात् अतो मूलभूतस्य सत्यत्वादन्यथा बुद्ध्यापि मनोवचनस्थापनं ब्रह्मविषयमेव भवतीत्यर्थः—

सत्यो हरिः समस्तेषु भ्रमभातेष्वपि स्थिरः।
अतः सन्तः समस्तार्थे कृष्णमेव विजानते ॥ १५ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ननु च यूयं न केवलं मामेव परमेश्वरं ब्रूथ अपि तु इन्द्रो वातोऽवसितस्य राजेति वातो जङ्गमस्य अवसितस्य स्थावरस्य च इन्द्र एव राजेन्द्रमपि अग्निमूर्द्धादिनस्याग्निमपीति च तस्य जगत्कारणस्यैव परमेश्वरत्वनियमनादिन्द्रादीनां च जगत्कारणत्वदर्शनात् त्वमेव सर्वजगत्कारणं परमेश्वर इन्द्रादयस्तु त्वद्दत्तयत्किञ्चिदैश्वर्या एवेत्याहुः। बृहदिति। एतदुपलब्धं श्रोत्रनेत्रादिभिरवगतमिन्द्रादिकं सर्वं बृहद्ब्रह्मैव अवयन्ति जानन्ति कुतः? अवशेषतया ब्रह्मणस्तत्रैवावशिष्यमाणत्वेनेत्यर्थः अत्र दृष्टान्तः यावदर्थः उपमार्थः। विकृतेर्घटादेर्यथा मृदि उदयास्तमयौ तथैव यतस्त्वत्त एवोपादानकारणादस्य विश्वस्य उदयास्तमयौ भवतः तर्हि मम विकारित्वमायातं न अविकृतात् विकारशून्यात् एतदद्भुतमेव यत्त्वदुपादानत्वेऽपि विकाराभावः यदुक्तं गजेन्द्रेण "नमो नमस्तेऽखिलकारणाय निष्कारणायाद्भुतकारणाये"ति व्याख्यास्यते च श्रीधरस्वामिभिः उपादानत्वेऽपि मृदादिवद्विकाराभाव इति अत एवेदमविक्रियमाण एव सृजसि हरसि पासीति देवैरप्युक्तं वयमपि ब्रूमः। यद्वा, प्रकृतेस्त्वच्छक्तित्वात्तस्या जगदुपादानत्वादेव तव जगदुपादानत्वं यदुक्तं त्वयैव प्रकृतिर्यस्योपादानमाधारः पुरुषः परः सतोऽभिव्यञ्जकः कालो ब्रह्म तत्रितयं त्वहमिति किन्तु तस्या विकारित्वेऽपि न ते विकारित्वं तस्यास्त्वत्स्वरूपशक्तित्वाभावात् त्वत्स्वरूपस्य मायातीतत्वेन सर्वशास्त्रप्रसिद्धेः

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अतः कारणात्त्वय्यस्त्वय्येव मनोवचनाचरितं ध्यानकीर्त्तनपरिचर्य्यां दधुः ननु पृथग्विकारेष्विन्द्रादिष्वित्यर्थः । अत्र सत्यर्थान्तरन्यासः कथमयथेति नृणां भूतलवर्त्तिनां पदानि यत्र कुत्रापि दत्तानि निक्षिप्तानि भुवि कथमयथा भवन्ति अदत्तानि भवन्ति अतो यथा मृत्पाषाणेष्टकादिषु दत्तानि पदानि भुवं न व्यभिचरन्ति तथैव यत् किमपि विकारजातं वदन्तो वेदास्त्वामेव सर्वकारणं परमेश्वरं प्रतिपादयन्तीत्यर्थः । अत्र वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं सर्वं खल्विदं ब्रह्मेत्याद्याः श्रुतयः अत्र सत्यशब्देन कारणमेव व्याख्यातं यदुक्तं भगवता—

"यदुपादाय पूर्वस्तुभावो विकुरुते परम् ।
आदिरन्तो यदा यस्य तत्सत्यमभिधीयते" इति ॥

तत्रश्चास्याः श्रुतेरयमर्थः आरम्भणं विकारः कार्य्यो भवति वाचा यस्य नामधेयं घटादिकं भवति मृत्तिकेत्येव सत्यं कारणं भवतीति ॥ १५ ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एवमनुचरन्निगम इत्यनेन "तत्तुसमन्वयात्" इति सूत्रार्थ त्युक्तस्तत्रानुपपत्तिशङ्कायां समाधत्त उत्तरश्लोकेन । ननु, वायुर्वैक्षेपिष्ठादेवता आकाशो नामरूपयोर्निर्वहिता "हिरण्यगर्भः समवर्त्तताग्रे शिव एव केवलम्" इत्यादिना वेदस्य विश्वतो मुखत्वं प्रसिद्धं कथं मदेकपरत्वमितिचेन्न तत्तच्छब्दयोगवृत्त्या तदन्तर्य्यामितया वा त्वमेव प्रतिपाद्यस इत्याह, एतदुपलब्धं वाक्यैरूढिवृत्त्यान्यपरत्वेन प्रसिद्धं वाय्वाकाशब्रह्मरुद्रेन्द्रादिमर्वं शब्दजातं बृहत् ब्रह्म त्वामेव श्रुतयोऽवयान्ति निश्चिन्वन्ति । कुतः ? अवशेषतया अवगतः शेषो यस्मात् तस्य भावस्तत्ता तया पूर्णतया निरतिशयबृहत्त्वेनेति यावत् अनेन ब्रह्मशब्दस्य निरुक्तिरुक्ता बृहि "बृहि वृद्धौ" इत्यस्माद्धातोः अथ कस्मादुच्यते परं ब्रह्म बृहति बृंहयति चेतिश्रुतेः स्वरूपगुणशक्तिभिर्निरतिशयबृहत्तयेत्यर्थः । तदपेक्षया वस्तुजातस्य सातिशयत्वेनापूर्णत्वात् तथाच श्रुतयः "यो वायौ तिष्ठन् य आकाशे तिष्ठन् एको ह वै नारायण आसीन्न ब्रह्मा नेशानः" तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति, अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् यमिन्द्रमाहुर्वरुणं यमाहुः" इत्याद्याः समन्वयाध्याये स्पष्टमेतत् व्याख्यातं निरुक्तिमुखेन प्रतिपाद्य लक्षणमुखेन द्रढयति यतो विकृतेरुदयास्तमयौ यतः कारणाद्विकृतेः कार्यस्याकाशादेः ब्रह्मरुद्रेन्द्रादेश्च जन्मप्रलयौ भवतः उपलक्षणञ्चैतत् जन्मस्थितिभङ्गा भवन्तीत्यर्थः "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतेः नारायणात् ब्रह्मा जायते नारायणाद्रुद्र इत्यादेश्च—

"यतः सर्वाणि भूतानि प्रभवन्ति युगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥
अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
एष प्रकृतिरव्यक्तः कर्ता चैव सनातनः ॥
परश्च सर्वभूतेभ्यस्तस्माद्वृद्धतमोऽच्युतः ।
बुद्धिर्मनो महद्वायुस्तेजोऽम्भः खं महीश्च या ॥
चतुर्विधश्च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम् ।
चतुर्विधानां भूतानां त्रिषु लोकेषु माधवः ॥
प्रभवश्चैव सर्वेषां निधनश्च युधिष्ठिर ! ।

इत्यादिस्मृतेश्च "जन्माद्यस्ययत" इत्यादिन्यायाच्च । ननु, कथं ब्रह्मणः सृष्ट्यादेरभ्युपगमः न तावदारम्भवादेन न्यायमतप्रवेशात् नापि सङ्घातादिवौद्धसिद्धान्तापत्तेः नापि परिणामः कृत्स्ननाशनिरवयवश्रुतिव्याकोपप्रसङ्गात् परिशेषाद्विवर्त्तवादक्रमेणापि त्वया अङ्गीकरणीयस्तथाचास्माकमिष्टापत्तिरित्याशङ्कायां स्वयमात्माभिमुकुरुत "आत्मकृतेः परिणामात्" इत्यादिशास्त्रोक्त एवास्माकं वैदिकानां सिद्धान्तः । ननु, तथाप्युक्तदोषस्तदवस्थ एवेति चेत् ब्राह, अविकृतात् विकारशून्यात् अप्रच्युतस्वरूपात् परिणामे कथं निर्विकारतेति चेच्छृणु परिणामोऽत्र शक्तिविशेषः शक्तिविशेषेणैव तद्गतं विश्वं विस्तारयति तदुपसंहारेण च संहरति ऊर्णनाभिरिव तन्तुसन्तानोपसंहारः तथा च श्रुतिः "यथोर्णनाभिः सृजते गृह्णते च यथा सतः पुरुषात्केशलोमानि यथा पृथिव्या ओषधयः सम्भवन्ति तथाक्षरात्सम्भवतीह विश्वम्" इति "सन्मूलाः सौम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इति वाक्यानि विवर्तवादस्य निर्मूलतां द्योतयन्तीति भावः । नच "वाचारम्भणं विकारो नामधेय" मित्यादिश्रुतिमूलत्वात् विवर्त्तवादः प्रामाणिकोऽयं न निषेद्धुं शक्य इति वाच्यं तत्रैव विकारशब्दप्रयोगेण तस्य निरस्तत्वात् नहि विवर्तकार्य्यस्य विकारत्वं भवताभ्युपगम्यतेऽपितु भ्रान्तत्वं तथाभूतप्रयोगस्य क्वाप्यदर्शनान्निर्मूलत्वमेव सिद्ध्यति विवर्तवादस्य अस्मत्पक्षेतु—

"प्रकृतिं पुरुषं चापि प्रविश्यात्मेच्छया हरिः ।
क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ" ॥

इति विक्षेपपर्यायान्तरं क्षोभशब्दं कण्ठरवेणोच्चारितवान्भगवान् पराशरः तत्र दृष्टान्तः मृदिव घटादिवदित्यर्थः । अत एव ऋषयो मन्त्राभिमानिनो देवतास्त्वयि मनोवचनाचरितं दधुः ध्यानपूर्वकं तव कीर्तनं चक्रुः ध्येयत्वेन ज्ञेयत्वेन च प्रतिपादयामासुः एको देव इत्यादिमन्त्राश्च युक्तमेवैतत् यतो यत्र कुत्रापि दृषत्कुड्यप्रेङ्गनादिषु जनैर्दत्तानि पदानि पृथिव्यामदत्तानि कथं भवन्ति अत आकाशादीनपि कयाचिद्विवक्षया प्रतिपादयन्तो वेदास्तत्तद्द्वारा मुख्यविषयं सर्वान्तर्यामिणं सर्वाधिष्ठानं सर्वधीप्रवर्तकं त्वामेव प्रतिपादयन्ति सर्वेषां तवैव कार्य्यत्वात् नियम्यत्वादाश्रितत्वात् पारतन्त्र्याच्च अनेन तत्तुसमन्वयाधिकरणं व्याख्यातम् ॥ १५ ॥

---

## भाषा टीका ।

प्रलयकालमें सूक्ष्मचेतनाचेतन विशिष्ट एक कारण ब्रह्म ही अवशेष रहता है इसीसे सृष्टिकाल में वहि ब्रह्म देव मनुष्यादि नाम रूप सम्पन्न स्थूल चेतनाचेतन विशिष्ट रूप से प्रकाशित होता है इसी कारण इससमय में चेतनाचेतन रूप से जो यह जगत् प्रतीत होता है सो ब्रह्म हि

**इति तव सूरयस्त्र्यधिपतेऽखिललोकमलक्षपणकथाऽमृताब्धिमवगाह्य तपांसि जहुः।**
**किमुत पुनः स्वधाम विधुताशयकालगुणाः परम! भजन्ति ये पदमजस्रसुखानुभवम् ॥ १६ ॥**

### भाषाटीका।

है इस प्रकार श्रुति प्रतिपादन करती है क्योंकि जिस कार्य की जिससे उत्पत्ति होती है जिस में लय होता है वह कार्य्य कारण रूप हि देखा जाता है जैसे विकार शून्य मृत्पिण्ड से उत्पन्न और उसी में लय होने वारी घटादि रूप मृत्तिका मृत्पिण्ड हि है उस से भिन्न नाहि इसी प्रकार प्रलय काल में देव मनुष्यादि नाम रूप शून्य चेतनाचेतन विशिष्ट कारण रूप ब्रह्म से सृष्टि कालमें देव मनुष्यादि नाम रूप विभाग सम्पन्न स्थूल चेतनाचेतन विशिष्ट कार्य्य रूप ब्रह्म की उत्पत्ति होती है और प्रलय काल में उसी कारण रूप ब्रह्म में इस कार्य्य रूप प्रपञ्च शरीरक ब्रह्म का लय होता है इसी कारण उक्त कार्य्य रूपी उक्त कारण रूप ब्रह्म हि है उससे भिन्न नहिं। अर्थात् प्रलयस्थ सूक्ष्म चेतनाचेतन विशिष्ट ब्रह्म हि सृष्टिस्थ स्थूल चेतनाचेतन विशिष्ट होकर प्रकाशित होरहा है इसी लिये परम कारण स्वरूप आपही के विषय में ऋषियों ने मन वचन चेष्टाओं को धारण किया है, अर्थात् ऋषियों ने आपका हि ध्यान आप की हि स्तुति और आपके हि अर्थ कर्म किया है क्योंकि आकाश में पांव रखने पर पतन होनेसे निष्फल होजाता है और पृथिवी में पांव रखने पर पतन की सम्भावना नहि इस लिये पांव का धरना निष्फल नहि होता है इसी प्रकार संसार के विषयन के ध्यानादिक पतन के हेतु होने से निष्फल होते हैं और आप के विषय में ध्यानादिक संसार के निवृत्ति के हेतु होने से निष्फल नहीं होते। अथवा आप परम कारण हो इसी लिये वे दोनों मनके तात्पर्य्य का और चेतनाचेतन प्रतिपादक वचनों की प्रतिपादन रूप शक्ति का आप के हि विषयमे निश्चय किया है जैसे महल अथवा शय्या पर धरे भए मनुष्यों के पांव पृथिवी पर नाहि धरे भए कैसे होसकते हैं कदापि नहिं होसकते क्योंकि महल का तथा शय्या का धारक तो पृथिवी हि है इस वास्ते कहूं भी पांव धरा जावे परन्तु वह पृथिवी पर हि धरा कहा जाता है, इसी प्रकार सब चेतनाचेतनके आप परम कारण और अन्तरात्मा शरीरी हो इस वास्ते "सर्वं खल्विदं ब्रह्म" इत्यादि वेद वचन आप का हि प्रतिपादन करते हैं ॥ १५ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

त्वमेव सर्वनिगमगोचर इति सतां प्रवृत्त्या द्रढयति;— इति तवेति। त्वमेव सर्वकारणत्वेन परमार्थ इति कृत्वा भो ऽयधिपते! त्रिगुणमायामृगीनर्तक! सूरयो विवेकिनस्तवाखिललोकमलक्षपणकथामृताब्धि सकलजनवृजिननिरसनहेतुं कीर्तिसुधासिन्धुमवगाह्य निषेव्य तपांसि तपन्तीति तपांसि पापानि दुःखानि वा जहुस्त्यक्तवन्तः त्वदीयकथामात्रेण यदा पापत्यागस्तदा किमु वक्तव्यं ये पुनः स्वधामविधुताशयकालगुणाः स्वधाम्ना स्वरूपस्फुरणेनैव विधुतास्त्यक्ता आशयगुणा अन्तःकरणधर्मा रागादयः कालगुणा जरादयश्च यैस्ते तथा हे परम! तवाजस्रसुखानुभवमखण्डानन्दानुभवं पदं स्वरूपं भजन्ति सेवन्ते तथाभूता दुःखानि त्यजन्तीति "तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते न कर्मणा लिप्यते पापकेन तत्सुकृतदुष्कृते विधुनुते एतं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरवम्" इत्यादिश्रुतेरित्यर्थः—

सकलवेदगणेरितसद्गुणस्त्वमिति सर्वमनीषिजना रताः।
त्वयि सुभद्रगुणश्रवणादिभिस्तव पदस्मरणेन गतक्लमाः॥

॥ १६ ॥

---

### श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी।

सतां प्रवृत्त्या सदाचारेण उपकोशलं प्रति जाबालवचनं तद्यथेति एवम्विदि यथोक्तब्रह्मज्ञानवति पापकेन धर्माधर्मलक्षणेन संसृतिहेतुत्वादुभयमेव पापकं विदुष इति तत्तदोपास्यात्मसाक्षात्कारकाले विधुनुते तयोः परिपाकं त्यजतीत्यर्थः। एतं यथोक्तात्मविदं न तपति न सन्तापयति ह स्फुटं वावेत्यवधारणं ॥ १६ ॥

---

### श्रीकविचूडामणिचक्रवर्तिकृतान्वयबोधिनी।

त्वमेव सर्वनिगमगोचर इति सतां प्रवृत्त्या द्रढयति, इतीति। भो ऽयधिपते। त्रिगुणमायामृगीनर्तक! त्वमेव सर्वकारणत्वेन परमार्थ इति कृत्वा सूरयो विवेकिनः तवाखिललोकमलक्षपणकथामृताब्धिमवगाह्य निषेव्य तपांसि पापानि दुःखानि वा जहुः त्यक्तवन्तः हे परम! ये पुनः स्वधामविधुताशयकालगुणाः सन्तस्तव पदं स्वरूपं भजन्ति ते तथाभूता दुःखानि त्यजन्ति इति किमु वक्तव्यम्। स्वधाम्ना स्वरूपस्फुरणेन विधुतास्त्यक्ता आशयगुणा अन्तःकरणधर्मा रागादयः कालगुणा जरादयश्च यैस्ते तथा कथम्भूतं पदम् अजस्रसुखानुभवम् अत्र श्रुतिः शृणु तस्य ब्रह्मणो ज्ञानमाहात्म्यमित्युपकोशलं प्रति याबालस्य वचनं यथा पुष्करपलाशे आपो न श्लिष्यन्ते एवमेवं विदि पापं कर्म न श्लिष्यते न कर्मणा लिप्यते पापकेन तत्सुकृतदुष्कृते विधुनुते एवं ह वाव न तपति किमहं पापमकरवमिति अर्थश्च यथा पुष्करपलाशे पद्मपत्रे आपो जलानि न श्लिष्यन्ति न लगन्ति एवमेवं विदि यथोक्तब्रह्मविदि पापं कर्म न श्लिष्यते तन्महिमानमाह पापकेन धर्माधर्मलक्षणेन

### श्रीकविचूडामणिचक्रवर्त्तिकृतान्वयबोधिनी ।

कर्मणा न श्लिष्यते सम्बध्यते संसारहेतुत्वादुभयमेव पापपुण्ययोः परिपाकं ज्ञानेन परित्यजतीत्यर्थः । इवावशब्दौ अवधारणार्थौ आसन्नमरणकाले अविदुषां नरकपातादिभयं भवति तद्द्वयम् एनं यथाक्रमात्मविदं न तपति मोऽत्रजयति किं तद्द्वयं तदाह किं कस्मात्साधु शोभनं कर्म अहं नाकरवं न कृतवानस्मि किं तस्मात्पापं निषिद्धं कर्माकरवमकृतवानस्मीत्यादि भयमेनं न तपतीति श्रुतिः त्रिविधा कर्ममयी प्रेममयीति ज्ञानमयीति भक्तिपरेयं श्रुतिः स्वामिनां"सकलवेदगणेरितसद्गुणस्त्वमिति सर्वमनीषिजनारताः । त्वयि सुभद्रगुणश्रवणादिभिस्तव पदस्मरणेन गतक्लमाः" सकलवेदगणैरीरिताः कथिताः सद्गुणा यस्य स त्वं इति हेतोः हे सुभद्र ! सर्वमनीषिजना विवेकिः त्वयि रता अनुरागयुक्ताः भवन्ति कथं भूताः तव पदमुभयत्र सम्बध्यते तव गुणश्रवणादिभिः तव पदस्मरणेन गतक्लमाः गतपरिश्रमादिदुःखा इत्यर्थः ॥ १९ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इतीत्यस्य टीकायां श्रुतिव्याख्या शृणु तस्य मयोच्यमानस्य ब्रह्मज्ञानस्य माहात्म्यमित्युपकोशलं प्रति जाबालस्य वचनं तद्यथेति पापकेन धर्माधर्मलक्षणेन संसारहेतुत्वादुभयमेव पापकं विदुष इति पूर्वं साधनान्तरनैरपेक्ष्येणैव विरजां नदीं मनसैवात्येतीत्युक्तं तत्राशङ्कते । ननु, सुकृतमप्यस्ति साहाय्यमस्य विरजोत्तारे इत्यत आह—तत्तत्र उपास्यात्मसाक्षात्कारावसरे सुकृतदुष्कृते विधुनुते तयोः परिपाकं ज्ञानेन त्यजतीत्यर्थः । स्वव्याख्यातु अथ शुद्धलीलातात्पर्येतैन तत्रैव केवलं चरन्त्यः श्रुतयः तदेवमासां सर्वासां तत्रैव तात्पर्यं श्रुत्वा लब्धसमयाः स्तुवन्ति इतीति हे ऽध्यधिपते ! ऊर्ध्वाधोमध्यवर्त्तमानानां सर्वेषामधीश्वर यत एवं सर्वासामेव श्रुतीनां त्वामेव प्रतिपादयितुं तत्तद्विचारप्रयास इति हेतोस्तं परित्यज्य सूरयो विवेकिनः अखिलमलस्य वासनापर्य्यन्तकर्मदोषस्य निरसनी या कथा सैवामृताब्धिः "अपारपरमानन्दः तव तमवगाह्य आविश्य तपांसि सर्वसांसारिकदुःखानि जहुः तदेवं सति परम हे सर्वोत्कृष्ट ! किमुत वक्तव्यं ये पुनः स्वधामविधुताशयकालगुणाः आत्मारामतया जीवन्मुक्ता अपि अजस्रसुखानुभवं प्रतिक्षणं सुखानुभवोल्लासरूपं पदं त्वच्चरणारविन्दं भजन्ति ते तमवगाह्य तानि जहुरिति अपितु तत्सुखेनात्मारामतासुखावेशमपि जहुरित्यर्थः । तदेवं स्वाभाविक एवातिशयित एव च लीलाप्रतिपादिकानां श्रुतीनां भगवत्सम्बन्धो विवक्षितः अन्यथा तत्तत्स्यादिति अत्र मुख्याः श्रुतयः "नैवाभ्यसेद्बहून् शब्दान् वाचो विग्लापनं हि तत् यस्य नाम महद्यशः विष्णोर्नुकं वीर्य्याणि प्रवोचं यः पार्थिवानि विममे रजांसि" इत्यादिकाः कमिति क इत्यर्थः प्रवोचमित्यडागमाभावश्छान्दसः प्रकर्षेणावादीदित्यर्थः । अथ तत्पक्षकाः यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्चेत्याद्या ज्ञेयाः लीलाश्रुतीनां सर्वोत्तमत्वं च—

यस्यां न मे पावनमङ्गकर्म
स्थित्युद्भवप्राणनिरोधमस्य ॥
लीलावतारोऽस्तितजन्म वा स्या
द्वन्ध्यां गिरन्तां विभृयान्न धीरः ॥

इत्येकादशात् सृष्ट्याद्यपि कर्म साक्षादीक्षणादिलीलेत्यर्थः ॥ १९ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भगवत्कथाश्रवणादीनां पापहरत्वमाह—इतीति । हे त्र्यधिपते ! जन्मस्थितिविनाशनिर्वाहक ! लोकस्य मलं पापं तत्क्षपणकथामृताब्धिम् अवगाह्य तपांसि जहुः आध्यात्मिकादितापानि जहुः त्यक्तवन्तः किम्पुनर्ध्यानपरा इत्याहुः—किमुतेति स्वधाम तेजः स्वज्ञानं तेन विधुताः आशयगुणा रागादिमनोवृत्तयः कालगुणा जरामरणादयश्च यैस्ते पद्यत इति पदं स्वरूपम् अजस्रसुखानुभवं नित्यज्ञानानन्दरूपं भजन्ति समाधिना साक्षात्कुर्वन्ति ॥ १९ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अत ऋषय इत्यादेः पूर्वयोजनायां कैमुत्यन्यायेन भगवद्ध्यानस्य सांसारिकतापनिवर्तकत्वमाहुः—इति तद्वेति । द्वितीययोजनायांतु कारणत्वसमनियतं मुमुक्षूपास्यत्वं कैमुत्यन्यायेनाहुः । इतीति । त्र्यधिपते ! इति सम्बोधनं जगज्जन्मस्थितिनाशनिर्वाहक इति हेतोरतः सूरयो विवेकिनः तवाखिललोकमलक्षपणकथामृताब्धि मखिलानां लोकानां जनानां श्रृण्वतां वदतां च मलं पापं क्षपयतीति नाशयतीति तथा सा कथैवामृतं तस्याब्धिमवगाह्यैव तपांस्याध्यात्मिकादितापान् जहुः तत्यजुः किं पुनर्ध्यानपरा इत्याहुः । किमुतेति । हे परम ये स्वधाम स्वतेजः स्वविषयकं ज्ञानं स्वशब्दः परमात्मपरस्तेन विधुता आशयगुणा रागादिमनोवृत्तयः कालगुणा जरामरणादयश्च यैस्तेऽजस्रसुखानुभवं नित्यज्ञानानन्दात्मकं पद्यत इति पदं स्वरूपं भजन्ति समाधिना साक्षात्कुर्वन्ति ते तपांसि विजहुरिति किंपुनर्वक्तव्यमित्यर्थः ॥ १९ ॥

---

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथ भगवत्कथाश्रवणादीनामेव पापापहत्वं यदि तदा किं वक्तव्यं तद्ध्यानपराः पापानि विधुन्वन्तीत्याह—इतीति । हे त्र्यधिपते ! जन्मस्थितिविनाशनिर्वाहक तथा चोक्तं गीतायाम्

"गतिर्भर्त्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम्" ॥

इतिलोकस्य मलं पापं तत्क्षपणरूपा तव कथैवामृताब्धिस्तमवगाह्य अत्यादरेण श्रुत्वा तपांसि आध्यात्मिकादितापानि जहुस्त्यक्तवन्तो यदिति तदा किम्पुनर्ध्यानपरा इत्याह—किमुतेति । स्वधाम तेजः स्वज्ञानं तेन विधुता दूरीकृता आशय-

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

गुणा रागादिमनोवृत्तयः कालगुणा जरामरणादयश्च यैस्ते हे परम ! मा परो यस्मात्स परमस्तत्सम्बुद्धौ हे परम ! पद्यते इति पदं स्वरूपम अजस्रसुखं नित्यज्ञानानन्दैकरूपं भजन्ति समाधिना साक्षात्कुर्वन्ति ते संसारं तिरस्कुर्वन्तीति किं वक्तव्यं तदुक्तम्

"स्वरूपम्बुजाक्षाखिलमत्त्वधाम्नि ।
समाधिनावेशितचेतसैके ॥
त्वत्पादपोतेन महत्कृतेन ।
कुर्वन्ति गोवत्सपदं भवाब्धिम्" ॥

इति ॥ १९ ॥

———

योगिरामानुजाचार्यकृतसरलाव्याख्या ।

शिष्टाचारेणापि मुमुक्षूपास्यत्वं भगवतः द्रढीकुर्वन्ति, दृतीति । इति पूर्वोक्तप्रकारेण सर्वजगत्कारणत्वेन त्वमेव मुमुक्षूपास्य इति कृत्वा हे त्र्यधिपते ! उत्पत्तिस्थितिविनाशानां निर्वाहक ! अथवा भूर्भुवस्स्वर्लोकानां निर्वाहकेति वा सप्तलोकानामुपलक्षणमेतत् अथवा त्रिगुणमायानियामक, सूरयः ज्ञानिनः तव अखिलानां लोकानां मलस्य पापस्य क्षपणा विनाशिका या कथा सैवा ऽमृताब्धिस्तमवगाह्य अत्यादरेण श्रुत्वेत्यर्थः । तपांसि आध्यात्मिकाधिभौतिकाधिदैविकाख्यानि तापत्रयाणि जहुः त्यक्तवन्तः अथवा कायक्लेशसाध्यानि तपांसि जहुः भगवत्कथाश्रवणकीर्तनस्य सर्वोत्कृष्टधर्मत्वेन सुकरत्वेन च तदितरेषां तपसां तस्मान्न्यूनत्वेन दुस्साध्यत्वेन च त्यक्तवन्त इत्यर्थः तदुक्तं सर्वधर्मज्ञेन श्रीभीष्मेण—

एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरस्सदा ॥

इति तैत्तरीयोपनिषदि च भगवद्गुणप्रतिपादकस्य तदाराधनविधिप्रतिपादकस्य वेदस्य च श्रवणकीर्तनस्य परमं तपोरूपत्वं प्रतिपादितं यथा स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः तद्धि तपस्तद्धि तपः इति हे परम ! सर्वाधिक ! ये भक्ताः विधुनाशयकालगुणाः सन्तः विधुताः दूरीकृताः आशयस्यान्तःकरणस्य गुणाः कामक्रोधादयः मानावमानादयः कालगुणाः शीतोष्णादयः यैस्ते तेषां शीतोष्णादीनां दूरीकरणं नाम तेषु प्राप्तेषु मनसि विकाराहित्यमेव एवम्भूतस्यैव भगवद्भजनाधिकारित्वात् तस्यैव परमात्मा प्रसन्नो भवति तदुक्तं श्रीगीतासु—

"जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानावमानयोः" ॥ इति

शीतोष्णसुखदुःखेषु मानावमानयोः जितात्मनः निर्विकारमनसः परमात्मा समाहितो भवति मनसि सम्यक्स्थितो भवतीत्यर्थः तथाच विधुताशयकालगुणाः सन्तः अजस्रसुखानुभवम अखण्डानन्दज्ञानाकारं तव पदं ये भजन्ति सेवन्ते—

"अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्" ॥

इत्युक्तरीत्या ये उपासते ते पुनः स्वधाम स्वस्य परमात्मनः धाम तेजो रूपं भजन्तीति प्राप्नुवन्तीति किं पुनः किं वक्तव्यमित्यन्वयः । भजन्तीत्यस्य उभयत्रान्वयः प्राप्नुवन्तीत्यस्याध्याहारो वा अजस्रसुखानुभवं ते पदं विधुताशयकालगुणास्सन्तः ये भजन्ति प्राप्नुवन्तीति किम्पुनर्वक्तव्यमित्यन्वयः । स्वधाम प्राप्नुवन्तीत्युक्ते मोक्षदशायां जायमानभगवत्स्वरूपप्राप्तिरुच्यते तदुक्तं श्रीगीतोपनिषदि—

"यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' इति ।
मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ॥
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः" ॥

इतिच एतद्व्याख्याने अन्वयसौकर्यमर्थसौष्ठवञ्च वर्तते श्रीधरीयादिषु तु बहुपदाध्याहारः क्लिष्टान्वयः अर्थासौन्दर्यञ्चास्ति तत् सहृदयसम्वेद्य अ० हे त्र्यधिपते ! इति सूरयः तवाखिललोकमलक्षपणकथामृताब्धिमवगाह्य तपांसि जहुः, हे परम ! ये विधुताशयकालगुणास्सन्तः अजस्रसुखानुभवन्ते पदं भजन्ति ते स्वधाम भजन्तीति किमुत पुनः किं वक्तव्यम इत्यन्वयः ॥ १९ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

त्यजन्ति तापं य उते भवत्कथा इति स्म मुक्ताः किमुते स्वरूपगाः परावरेशे इपद भजन्तः परं परानन्दमनारतम्म इतोऽद्भुतसुखभूमिप्रापिणस्य इति श्लोकस्यायमर्थः इति शब्दो हेत्वर्थः । पुनरवधारणार्थः पुनरप्रथमे प्रश्ने व्यावृत्तावधारणे इति हे परम ! परावरेशेश त्वदजस्रसुखानुभवम अनारतमजस्रसुखरूपानन्दः अनुभवः ज्ञानं यस्य तत्तथा तत्पदं स्वरूपं भजन्ति अनन्याश्रयत्वात्स्वधामापरमः तेन विधुताः आशयगुणा दुःखाद्याः कालगुणा उत्पत्त्यादयो यैस्ते मुक्ताः तपांसि तापाञ्जहुरिति किमुत पुनःवक्तव्यमेव हे त्र्यधिपते ! त्रिलोकीनाथ ! सूरयः दर्शनादिभाषाविचक्षणाः अखिललोकस्य मलङ्क्षपयतीति अखिललोकमलक्षपणः तं तव कथामृताब्धिम् अवगाह्यापि तपांसि जहुरिति यस्मादिति शेषः ॥ ३ ॥ १९ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ शुद्धलीलातात्पर्य्येण श्रीभगवत्येव केवलं परमश्रुतयस्तदेवमासां सर्वासां तत्रैव तात्पर्य्यं श्रुत्वा लब्धसमयाः स्तुवन्ति इति तव ॥ १९ ॥

———

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इममेवार्थं पुनर्द्रढयन्त्य आहुः । दृति तवेत्यादि । इति सर्वेश्वरत्वादिमाहिमवत्त्वेऽपि भूमि कृतानिर्भावतया परमकृपालुत्वहेतोः सूरयः परममहानुभावा मुनयः हे अधिपते ! त्रयाणां ब्रह्म विष्णुमहेशानां पुरुषाणां गुणानां वा गोकुलमथुराद्वारकाणां वा अधिपते सर्वेश्वरेश्वरत्वम अखिलमलक्षपणायाः कथायास्ता एवामृताब्धिस्तम अवगाह्य तपांसि जहुः त्वत्कथां शृण्वन्त एव सन्ति तत्कृतानन्देन, तपःसु जुगुप्सैव तेषां

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

जायते न तु तेषु पुनः प्रवृत्तिः हे परम ! भजत्सुखानुभवं तव पदं चरणारविन्दं ये भजन्ति ते पुनः तत्र तपआदिषु यज्जुगुप्सां करिष्यन्ति तत् किमुतेति भावः । कीदृशाः स्वधाम्नि स्वशरीरे विधुता आशयः कालो गुणा रजआदयश्च यैस्ते नैव शरीरेण प्राकृता इत्यर्थः ॥ १६ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं प्रकृतिप्रतिपादिकाः पुरुषप्रतिपादिकाश्च श्रुतयो निरूपिताः साधनप्रतिपादिकास्तु शान्त उपासीतेत्याद्याः किमहङ्कारप्रतिपादिकाः तद्द्वारा आत्मप्रतिपादिकावेत्याविसन्देहे निर्णयमाह—इति तव सूरय इति । "शान्तो दान्त उपरतस्तितिक्षुः आत्मन्येवात्मानं पश्येत्" इत्यादिश्रुतयः अहङ्कारमेव प्रतिपादयन्ति अन्यथा जीवस्याकर्तृत्वाभावात् एकस्य कर्मकर्तृभावात् आत्मनः स्वप्रकाशकत्वाच्च यो ब्रह्मविदमात्मानं मन्यते तस्याहङ्काराविष्टस्य वाक्यार्थध्यानकर्तुः मनोव्यापारोऽनूद्यते शान्त इत्यत्रापि मनश्चाञ्चल्यनिराकरणं प्रयत्नसाध्यमपि साहङ्कारस्यैव तत्कृत्यं न हि निरहङ्कारः शान्तो भवति दान्तो वा अन्तःकरणाद्यध्यासाभावात् नहि पुत्ररहितः पण्डितपुत्रवान् भवति, तस्मादेतासां श्रुतीनां न शमादिविधौ तात्पर्यं किन्तु साहङ्कारस्य महान् क्लेश इति तत्क्लेशमनूद्य निरभिमानस्य स्वत एवात्मस्फूर्त्तिरिति साधनश्रुतीनामपि भगवत्परत्वमेव अस्मिन्नर्थे हेतुमाह, इत्येवं विनिश्चित्य सूरयस्तपांसि जहुरिति साधनक्लेशांस्त्यक्तवन्त इत्यर्थः तर्हि कथं मोक्षसिद्धिरिति चेत्तत्राह, अखिललोकमलक्षपणकथामृताब्धिमवगाह्येति । ननु, कथावगाहनमात्रेणैव कथं कार्यसिद्धिस्तत्तदंशभागिनां देवानां प्रीत्यभावात् अतो विघ्नाभावाय तेषां प्रीत्यर्थं साधनानुष्ठानमपि कर्त्तव्यमिति चेत्तत्राह । त्र्यधिपत इति । त्रयाणां लोकानामधिपतित्वेन तत्तत्कथावगाहनमात्रेणैव तत्तत्कार्यसिद्धिरित्यर्थः । ननु, वेदे न शमादिविधयः प्रतिपादिता इति अपेक्षाभावेऽपि विधिबलादपि शमादयः कर्त्तव्या इतिचेत्तत्राह, सूरय इति । ये अविद्यावन्तस्तानेवोद्दिश्य श्रुतिः शमादिकं विधत्ते न तु सूरीन् अतः सूरयः परमानन्दरूपं साधनं गृहीत्वा साधनदशायामेव कृतार्थाः सन्तः दुःखसाधनेभ्यो निवर्त्तन्त इति । ननु, विद्वांसोऽपि साधनेषु प्रवर्त्तन्त इति चेत्तत्राह । तव सूरय इति । त्वदीयास्तु न प्रवर्त्तन्त इत्यर्थः । इतीति पूर्वोक्तसर्वब्रह्मत्वपक्षेऽपि साधनादीनां ब्रह्मत्वात् यदि सर्वमात्मैवाभूदितिन्यायेन साधननिवृत्तिर्युक्ता तस्मिन् पक्षे दूरतरत्रासङ्गतिः तापाभावात् तव च पण्डिताः त्वञ्च त्रिलोकाधिपतिरिति तेषां निर्भयत्वमुक्तं भगवत्सम्बन्धिनामपहतपाप्मत्वात् य एव कथासु सम्बध्यते तस्यैव पापं दूरीकरोतीत्यखिललोकमलक्षपणत्वं तवेत्यत्रापि सम्बध्यते, कथैव अमृताब्धिः कथाया अमृतत्वं तव कथामृतमित्यत्र निरूपितं कथायास्त्वब्धित्वम् एकस्यां कथायां विवक्षितायां ततो भगवदीयाः कथाः सहस्रं भवन्ति तत एवोत्पद्यन्ते यथैकस्य वाक्यस्य बुद्धिमतां सहस्रार्थस्य स्फूर्त्तिः यथा कस्यचिद्वचनम्—

यस्य कस्यापि पद्यस्य शतमर्थान् प्रचक्ष्महे ।
हठादुक्तस्य तस्यैव सहस्रं सम्प्रचक्ष्महे ॥

एवं यस्य हृदये सहस्रशो भगवत्कथास्फूर्त्तिः स समुद्रो विवक्षितः तत्रावगाहनं निरन्तरं येषां हृदये भगवत्कथानन्त्यं स्फुरति तथैव निर्वृत्या पूर्णाः क्लेशान् जहुरित्युक्तम् एतादृशा एव गुरवो भवन्तीति अथ इवाव तव महिमा समुद्रविप्रुषेत्यत्रापि गुरूपदेशलक्षणाविप्रुड्वर्णिता अत्र तु कथामात्रमिति समुद्रावगाहनोक्तिर्न विरुध्यते सिद्धान्तान्तरात् अत्र तापनिवृत्तिरात्यन्तिकी ततोऽपि क्लेशोक्तिर्हि दोषाय ततः प्रभृति साधनानीति विमर्शः अयं भगवत्परोक्षस्थितस्य साधनविचार उक्तः यः पुनः अपरोक्षे तिष्ठति वैकुण्ठस्थ इव उद्धव इव वा तस्य किं वक्तव्यमित्याह' किमुतेति प्रसङ्गादनगतमाहात्म्याः यथा यादवाः समागताः ते चरणसेवका अपि पुष्टिविचारेण कृतार्थाः मर्यादायामकृतार्था उच्यन्ते । यथा यादवो नितरामिति तद्व्यावृत्त्यर्थमाह' स्वधामविधुताशयकालगुणा इति । स्वस्यैव धाम स्फूर्त्तिः तेनैव विधुताः दूरीकृताः आशयगुणाः कालगुणाश्च यैः आशयगुणाः कामादयः कालगुणाः जरादयः यथा ' भगवत्कृपया कालगुणाभावो निरूपितः तथा स्वस्फूर्त्यैव येषामाशयकालगुणानिवृत्तिः ते मुख्याः भगवत्सेवकाः मुक्तोपसृप्यो भगवान् इति । ननु' किं तेषां भजनेनेत्याशङ्क्याह परमेति तेषामप्युपशमः यथा तेषामपि फलं भवति तादृश इत्यर्थः । अत एव ते भजत्सुखानुभवरूपं फलं भजन्ति अन्तर्याम्यवतारादिरूपे पादपत्वमित्यन्तरेव तं ब्रह्मानन्दमनुभवन्तीत्यर्थः—

कथानन्त्योक्तिहृद्याः साधनानि न कुर्वते ।
साक्षात्तो पादसंश्लिष्टास्ते किं वाच्या महाशयाः ॥

॥ १६ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सर्वेश्वरत्वात्तवैवोपास्यत्वमिति सतां प्रवृत्त्या निश्चिन्वन्ति, इतीति । हे त्र्यधिपते ! ऊर्द्ध्वाधोमध्यवर्त्तिनां सर्वेषामपीश्वर इत्यतो हेतोः सूरयो विवेकिनो अखिललोकमलस्य वासनापर्यन्तकर्मदोषस्य निरसनी कथैवामृताब्धिस्तमवगाह्य तपांसि ज्ञानाकृतयः कृच्छ्राणि संसारिकसर्वदुःखानि वा जहुरिति साधका उक्ताः किमुत किं पुनर्वक्तव्यं ये स्वधाम्ना स्वप्रभावेनैव विधुता विध्वस्ता आशयगुणा अन्तःकरणधर्मा रागादयः कालगुणा जरादयश्च यैस्ते सिद्धभक्ताः हे परम ! ते एवं भजत्सुखानुभवं यथा स्यात्तथा भजन्ति ते तपांसि जहतीति अत्र "विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि" इत्याद्यालीलाप्रतिपादिकाः कमिति क इत्यर्थः । प्रवोचं प्रावोचदित्यर्थः "एको वशी सर्वगः कृष्ण ईड्य एकोऽपि सन् बहुधा योऽवभाति । तं पीठगं येऽनु यजन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्" इत्याद्या भजनप्रतिपादिकाः श्रुतयः ॥ १६ ॥

———

दृतय इव श्वसन्त्यसुभृतो यदि तेऽनुविधा महदहमादयोऽण्डमसृजन् यदनुग्रहतः ।
पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः सदसतःपरं त्वमथ यदेष्ववशेषमृतम् ॥ १७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

"त्यजन्ति तापं य उते भवत् कथा इति स्म मुक्ताः किमुत स्वरूपगाः। परावरेशेशपदं भजन्तः पररूपरानन्दमना-रजन्तः" इतीन्द्रपुत्रश्लुत्यर्थमाह—स्पष्टोऽन्वयः कैमुत्यन्यायश्च यतः त्वद्युगमविषयत्वमसत्यितः सूरयो विवेकिनः हे त्रिगुणनियन्तः! अखिललोकानां जनानां मलनाशकास्तव कथास्तदेवामृताब्धिस्तमवगाह्य तपांसि अध्यात्मादीनि जहुः स्वधामविधुताशयकालगुणाः स्वस्य तव धामाधिष्ठानं मन्दिरं प्रत्यगात्मस्वरूपं तद्विचारेण विधुताः कालगुणा जराद्य आशयगुणा रागाद्यो यैस्ते जराद्यो रागाद्यश्च प्रत्यगात्मनो भवदीयांशस्य सत्यज्ञानात्मनो ममैते न भवन्ति प्रकृतिकार्यत्वादिति परामर्शपरायणाः आविष्कृतसत्यज्ञानापहतपाप्मत्वादिगुणा इति भावः। यद्वा, स्वस्य जीवात्मनो धामाधिष्ठानं भगवत्स्वरूपं तद्ध्यानेन विधुता इत्यादि पूर्ववत् हे परम! क्षराक्षराभ्यामुत्कृष्टं पदं प्राप्यम् अजस्रसुखः सदानन्दः श्रीकृष्णः स एवानुभवस्तन्तथा भगवद्वाक्यं "मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति विदुषामनुभवज्ञापिकाः श्रुतयश्च "यथापुष्करपलाशे आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते न कर्मणा लिप्यते पापकेन तत्सुकृतदुष्कृते विधुनुते एवं ह वा न तपति किमहं साधुनाकरवम्" इत्यादि ॥ १६ ॥

---

भाषा टीका।

हे अधिपते! जगत्के उत्पत्ति पालन संहारक निर्वाह करने वारे परेश्वर! इसी कारण से विवेकीजनोंने आप के अखिल लोकों के पापको नाश करने वारे कथा रूप अमृत के समुद्र में स्नान कर संसार के तापनका त्याग कर दिया है हे परम! सर्वोत्तम निखिल कल्याण गुण संपन्न सर्व व्यापक आपके स्वरूप के तत्व ज्ञान से जिन के मन के राग लोभादि नष्ट होगए हैं और जिन के काल कृत जरामरणादि नष्ट होगए हैं एतादृश ज्ञानीजन जो आपके नित्यज्ञानानन्द स्वरूपको समाधि में साक्षात्कार करते हैं वे संसार के तापनको त्याग करते हैं इस में तो कहनाहि कहा है ॥ १६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

"असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः। तांस्ते प्रेत्याभिगच्छन्ति ये के चाऽऽत्महनो जनाः" तथा 'न चेदवेदीन्महती विनष्टिः ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्ती' त्याद्याः श्रुतयः पूर्वश्लोकोक्तोभयविधभजनहीनान्निन्दन्ति, दृतय इवेति। असुभृतो नरा यदि ते अनुविधा अनुविदधतीत्यनुविधा अनुवर्तिनो भक्ता इति यावत् तर्हि श्वसन्ति जीवन्ति सफलजीवना भवन्ति इतरथा दृतय इव भस्त्रा इव वृथाश्वासा इत्यर्थः। नन्वभक्तानामपि कामादिफलमस्त्येव न कार्यकारणानुग्राहकत्वेन जीवनहेतोस्तवाभजने कृतघ्नानां तदपि न सिध्येदित्याशयेनाह, महदहमादय इति। महानहङ्कारश्चादिर्येषां ते यदनुग्रहतो यस्यानुप्रवेशेन लब्धसामर्थ्याः सन्तोऽण्डं देहं समष्टिव्यष्टिरूपं सृष्टवन्तस्तत्र च पञ्चापि कोशानन्नमयादीनाविश्य तत्तदाकारः सन्यश्चेतयते स त्वं तदाह पुरुषविध इति पुरुषस्यान्नमयादेर्विधेव विधा आकारो यस्य स तथा ननु, चिदेकरसस्य कथं तत्तदाकारतात आह—अन्वयोऽत्रेति अत्र एष्वन्नमयादिष्वन्वेतीत्यन्वयः अतस्तत्तदाकारतेति एवं तर्हि सत्यत्वमसङ्गत्वञ्च कथं तत्राऽऽह चरमोऽन्नमयादिषु य इति अन्नमयादिषूपदिश्यमानेषु यश्चरमो ब्रह्मपुच्छं प्रतिष्ठेति पुच्छत्वेनोक्तः स त्वमिति सम्बन्धः। ननु, तथाऽप्यन्नमयादिष्वन्वितत्वेऽसङ्गत्वव्याहतिरेव तत्राऽऽह सदसतःपरं त्वमथ यदेष्ववशेषमृतमिति सदसतः स्थूलसूक्ष्माद्न्नमयादेः परं व्यतिरिक्तं तत्साक्षिभूतम् अवशेषमवशिष्यत इत्यवशेषमबाध्यम् अथात एव ऋतं सत्यम् तर्हि किमर्थं तेष्वन्वय उक्तः शाखाचन्द्रवच्छुद्धस्वरूपलक्षणार्थम् तथाहि 'स वा एष पुरुषोऽन्नरसमयस्तस्येदमेव शिरः' इत्यादिना स्थूलसूक्ष्मक्रमेण पञ्चकोशानुपदिश्य तस्य पुरुषविधताऽन्वयं पुरुषविध इति पुनः पुनस्तदन्वितत्वेनाऽऽलक्ष्य ब्रह्मपुच्छं प्रतिष्ठेति सर्वसाक्षिशुद्धस्वरूपनिरूपणमित्यनवद्यम्।

नरवपुःप्रतिपद्य यदि त्वयि श्रवणवर्णनसंस्मरणादिभिः।
नरहरे! न भजन्ति नृणामिदं दृतिवदुच्छ्वसितं विफलन्ततः ॥४॥
॥ १७ ॥

---

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी।

असुनावसुर्या इति श्रीभगवद्वहिर्मुखाः सर्वे एवासुरास्तेषां स्वभूतामेते असुर्याः सांसारिकाः लोकाः कर्मफलानि तथा चोक्तमाग्नेयविष्णुधर्मोत्तरयोः—

"द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च।
विष्णुभक्तिपरो दैव आसुरस्तद्विपर्ययः" इति ॥

अन्धेन निबिडेन तमसाऽज्ञानेन तान् लोकान् प्रेत्य मृत्वा आत्महनो भगवद्विमुखा अभिगच्छन्ति चेयदि त्वं नावेदीर्नाज्ञासीस्तदा ते महती जन्ममरणलक्षणा विनष्टिः हानिर्भविष्यति उभयविधभजनं गुणश्रवणकीर्तनरूपं भजनं अखण्डानुभवस्वरूपभजनं च तेन हीनान् इतरथा भक्त्यभावे तदपि कामादिफलमपि तत्र च समष्टिव्यष्ट्यात्मकदेहेऽपि तत्तदाकार अन्नमयप्राणमयाद्याकारः तदाह—तत्तदाकारेण चेतयितृत्वमाह—पुरुषेति। तैत्तिरीयोपनिषदि "ब्रह्मविदाप्नोति

### श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

परम्"इत्याधिकृत्य श्रूयते "स वा एष पुरुषोऽन्नरसमयस्तस्येदमेव शिरः अयं दक्षिणः पक्षः अयमुत्तरः पक्षः अयमात्मा इदं पुच्छं प्रतिष्ठा तदप्येष श्लोको भवति अन्नाद्वै प्रजाः प्रजायन्ते" इत्यादि अत्रान्नरसशब्देनान्नविकारत्वगादिरूपो वक्ष्यते तन्मयस्तद्विकप्रचुरः पुरुषो देहरूपोऽन्नमयकोशः जलादिकार्यस्य स्वमात्रपेक्षया पृथिवीकार्यस्य देहे आधिक्यात् प्राचुर्ये एव मयट् "विकारार्थादिति चेन्नप्राचुर्यात्"इति न्यायात् एवं प्राणादिवायुप्रचुरः प्राणमयः पुरुषो प्राणमयकोशः एवं सङ्कल्पाद्यात्मकान्तःकरणवाचकमनःप्रचुरः पुरुषः मनोमयः कोषः एवं विज्ञानं चैतन्यं तत्प्रचुरो विज्ञानमयः पुरुषो विज्ञानमयः कोषः एवमानन्दप्रचुरः श्रीभगवानानन्दमयकोषः एवं कोषपञ्चकं वैष्णवाः व्याचक्षते परस्य व्याख्यानं तु तद्भाष्य एव द्रष्टव्यं तत्र श्रीवैष्णवैः सर्वैस्तत्पोषणीकृतमत्र बहुतरमेवाक्षिप्तमित्यलं तन्मत रजोबहुतया प्रकृतमनुसरामः निर्विकारस्य चिन्मात्रानन्दरूपस्य ब्रह्मणः तत्तदाकारता अन्नमयाद्याकारता अन्वेति अन्नमयादि प्रतीतौ अधिष्ठानतया नुगतोऽनुस्यूतो भवतीत्यर्थः । अतः अन्नमयादिष्वन्वितत्वात् पुच्छत्वेन सर्वाधारत्वेनोक्त इति अन्नमयाद्याकारत्ववर्णनस्य निराकारपुच्छरूपब्रह्मबोधनपरत्वात्तत्प्रतीत्यधिष्ठानतिरस्कारेण एव वास्तवत्वादसत्यत्वमव्याहतमिति भावः । तथा ऽपि व्यापकत्वेन सत्यत्वे सत्यपि अत एव बाध्यत्वादेव ऋतं सत्यमित्यत्राविरोधेन तत्तत्कल्पन इति शेषः । अतस्तेषां मिथ्यात्वेन वस्तुतस्तत्सङ्गाभावान्ना सङ्गत्वव्याहतिरिति भावः तस्यान्नमयादेः पुरुषविधतां पुरुषाकारतामनुलक्ष्यीकृत्य अयं प्राणमयादि पुरुषविधः पुरुषाकारः इत्येवं पुनःपुनः प्रतिकोषङ्कोषादिष्वित्यम आलक्ष्य प्रदर्श्य तेषां निष्कृष्टार्थप्रदर्शक तत्पुरिति पद्ये त्वयि विषये श्रवणादिभिः साधनैः त्वां न भजन्तीति व्याख्येयम् न रमन्तीति पाठः सुगमः अनुदात्तत्वलक्षणमात्मनेपदमनित्यं चक्षिङोऽङित्करणात् ज्ञापकात् विशेषजिज्ञासा वैष्णवतोषणी द्रष्टव्या ॥ २७ ॥

---

### श्रीकविचूडामणिचक्रवर्तिकृताऽन्वयबोधिनी ।

पूर्वश्लोकोक्तमुभयविधभजनं कथामृतश्रवणादिकम् भजनसुखानुभवरूपभजनम् इत्युभयविधभजनहीनान्निन्दन्ति दृतय, इति । मद्भृतो जीवा यदि ते तवानुविधा अनुवर्तिनो भक्ता भवन्ति सफलजीवना भवन्ति इतरथा दृतय इव भस्त्रा इव वृथा श्वसन्ति अभक्तानां कामादिकमपि न सिध्येदित्याशयेनाह' महदहमिति । महदहमाद्यैर्यो यदनुप्रहत अयडमसमपि रूपं वाससृजन् सृष्टवन्तः महानहङ्कारश्च आदिर्येषां ते अत्र अन्नरसमयप्राणमय मनोमयविज्ञानमयानन्दमयानिति पञ्चकोशान् स्थूलसूक्ष्मत्वेनाविश्य तदाकारः सन् यः चेतयते स त्वमित्याह— पुरुषविधइति यः पुरुषविधः अन्नमयादि पुरुषाकारः यद्वात्र अन्नमयादिपुरुषेष्वन्वयः सदन्वयः अन्नमयादिषु चरमः ब्रह्म पुच्छत्वेनोक्तः सत्यं ननु' अन्नमयादिषु अन्वितत्वेऽसङ्गत्वव्याहतिरेव तत्राह ऋतमिति सदसतः स्थूलसूक्ष्माद्यन्नमयादेः परं व्यतिरिक्तं तत्साक्षिभूतम् एवम् [illegible]मवाध्यम् अथ अत एव ऋतं सत्यं यद्भवति तत्त्वम इति तर्हि कथं तेष्वन्वयः उक्तं शाखाचन्द्रवच्छुद्धस्वरूपलक्षणार्थमित्याह— वालकं कश्चिद्दर्शयति वृक्षस्य शाखायां चन्द्रोऽस्तीति तद्वत् उभयविधभजनहीनान्निन्दयति । श्रुतिः जनकं प्रति याज्ञवल्क्यः "असुर्या नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्ति ये केचात्मनो जनाः"। इहैव सन्तोथ विद्म स्तद्वयं न चेदवेदीर्महती विनष्टिः ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेव यन्तीयाः अर्थः भगवद्विमुखाः सर्वे ऽसुराः तथा चोक्तमाग्नेये—

"द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।
विष्णुभक्तिपरो दैव आसुरस्तद्विपर्ययः "इति ॥

तेषाम् असुर्यानाम लोकाः कर्मफलानि अन्धेन तमसा परमात्माज्ञानेनावृताः ये केचन आत्महनो भगवद्विमुखाः प्रेत्य मृत्वा तान् लोकानभिगच्छन्ति अभक्तनिन्दापरेयं श्रुतिः इहैवेति वयं हे इवसन्तस्तद्विद्मः जानीमः त्वं चेद्यदि नावेदीः तत्परमात्मतत्त्वं न विदितवान्, तर्हि तव महती विनष्टिः हानिजन्ममरणादिरूपा महती संसृतिः स्यात्कुतः ये तद्विदुः ते अमृताः जन्ममरणादिदुःखाद्विमुक्ताः परमानन्दरूपा भवन्ति इतरे अज्ञाः दुःखमेव यन्ति प्राप्नुवन्ति इत्यर्थः । उपदेशपरेयं श्रुतिः अथ अन्नरसमयादिषु पुरुषविधाः पञ्च क्रमेण लिख्यन्ते तैत्तिरीयोपनिषदि "ब्रह्मविदाप्नोतिपरम्"इत्यभिकृत्याम्नायते प्रथममन्नरसमयपुरुषविधमाह स वा एष पुरुषोऽन्नरसमयस्तस्येदमेव शिरः अयं दक्षिणपक्षः अयमात्माइदं पुच्छं प्रतिष्ठेतिअस्यार्थः अन्नाद्वै प्रजाः प्रजायन्ते अन्नाद्धि पुरुषः सम्भूत इत्याद्युक्तः अन्नरसविकारः एष पुरुषो देहः स वै अन्नरसमयः अन्नरसविकारः तस्य इदं प्रसिद्धं शिर एव शिरः नतु प्राणमयादिष्विव कल्पनामयम् एवं पक्षादिषु योजना अयं दक्षिणो बाहुः दक्षिणः पक्षः अयं वामो बाहुरुत्तरः पक्षः अयं मध्यमो देहभागआत्मा अङ्गानां मध्ये ह्येष आत्मेति श्रुतेः । इदं नाभेरधस्ताद्यदङ्गं तत्पुच्छमिव पुच्छम् अधोलम्बनसाम्यात् तदेव प्रकर्षेण तिष्ठत्यस्मामिति प्रतिष्ठा आश्रयम इति १ अथ प्राणमयं पुरुषमाह तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमयस्तेनैष पूर्ण स वा एष पुरुषविधस्तस्य पुरुषविधता मन्वयं पुरुषविधस्तस्य प्राण एव शिरः व्यानो दक्षिणः पक्षः अपान उत्तरः पक्षः आकाश आत्मा पृथिवीपुच्छंप्रतिष्ठा तत्तस्यैष शारीर आत्मा यः पूर्वस्येति अर्थः तस्मादन्नरसमयात्पुरुषादन्य अन्तरः तदभ्यन्तरस्थ आत्मा प्राणमयो वर्तते प्राणो वायुस्तन्मयः तेन प्राणमयेन एषोऽन्नरसमयः पूर्णः वायुना दृतिरिव दृतिश्चर्मभस्त्रं सवै एष प्राणमय आत्मा पुरुषविधः पुरुषाकारः कुतः तस्यान्नरसमयस्यात्मन पुरुषविधतामनुलक्ष्यी कृत्वा अयं प्राणमयोऽपि पुरुषविधो भवति तदन्तर्वर्तित्वात् मूषा यत्रासिक्तधातुप्रतिमावत् तस्य प्राणमयस्य वायुविकारस्य प्राणशिरः मुखनासिकाभिः सरणवृत्तिविशेषः प्राणव्यानोव्यानवायुवृत्तिविशेषः दक्षिणपक्षः अपानोऽधो वायुः उत्तरः पक्षः आकाश आत्मा आकाशस्थो वायुवृत्तिविशेषः समानाख्यो वायुः स आत्मा मध्यभागः पृथिवी तदभिमानिनी देवता तस्य पुच्छं प्रतिष्ठा आध्यात्मिकस्य

श्रीकविचक्रचूडामणिचक्रवर्त्तिकृतऽन्वयबोधिनी।

प्राणस्य धारयित्री स्थितिहेतुत्वात् "सैषा पुरुषस्यापानमवष्टभ्ये"ति श्रुतेः। अन्यथा उदानवृत्त्योर्द्ध्वगमनं गुरुत्वात्पतनं वा स्यात् शरीरस्य तस्मात्पृथिवीपुच्छं प्रतिष्ठेति तस्येति शरीरे अन्नमये भवः शारीरः य एष प्राणमयस्तस्यान्नमयस्य शारीर आत्मा भवति अन्नमयात्प्राणमयः श्रेष्ठश्च प्राणं देवो अनुप्राणन्ति इति श्रुतेः। प्राणबलेन सेन्द्रियस्य देहस्य बलमिति अथ मनोमयस्तेनैष पूर्णः सवा एष पुरुषविधः तस्य पुरुषविधतामन्वयं पुरुषविधः तस्य यजुरेव शिरः ऋग्दक्षिणः पक्षः सामोत्तरपक्षः आदेश आत्मा अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा तस्यैष शारीर आत्मा यः पूर्वस्येति अर्थः. तस्मात्प्राणमयादेतस्मादन्य अन्तरः आत्मा मनोमयः मनः सङ्कल्पविकल्पात्मकं अन्तःकरणं तन्मय मनोमयः सोयं प्राणमयस्याऽभ्यन्तरः आत्मा तेन मनोमयेन प्राणमयः पूर्णः स एष पुरुषविधो भवति तस्य प्राणमयस्य पुरुषविधतामनुलक्षीकृत्यायमपि पुरुषविधः तस्य यजुरेव शिरः यजुर्वेदमन्त्रविशेषः तस्य शिरःप्रधानत्वात् यजुषां हि हविर्दीयते स्वाहाकारादिना तथा ऋग्वेदमन्त्रविशेषः तस्य दक्षिणः पक्षः सामवेदमंत्रविशेषः उत्तरो वामपक्षः आदेशोऽत्रब्राह्मणं वेदमन्त्रविशेष आत्मा अथर्वणा आङ्गिरसा दृष्टा मन्त्रा ब्राह्मणं च पुच्छं शान्तिपौष्टिकादिप्रतिष्ठा हेतुः कर्म प्रधानत्वात् प्रतिष्ठा "य एषमनोमयः तस्य पूर्वऽस्य प्राणमयस्य शारीर आत्मा भवति प्राणमयादस्य श्रेष्ठत्वं ज्ञानसम्बन्धात् मनसा पश्यति मनसा शृणोति" इत्यादि श्रुतेः (३) अथ विज्ञानमयपुरुषमाह— "तस्माद्वा एतस्मान्मनोमयादन्योऽभ्यन्तर आत्मा विज्ञानमयः तेनैष पूर्णः सवा एष पुरुषविधएव तस्य पुरुषविधतामन्वयं पुरुषविधः तस्य श्रद्धैव शिरः ऋतं दक्षिणः पक्षः सत्यमुत्तरः पक्षः योग आत्मा मह पुच्छं प्रतिष्ठा तस्यैव शारीर आत्मा यः पूर्वस्ये"ति। अर्थः तस्मान्मनोमयादन्योऽन्तरश्च आत्मा विज्ञानमयो भवति निश्चयात्मिका बुद्धिर्विज्ञानं तन्मयः "बुद्धिर्विज्ञानरूपिणी" इत्युक्तेः। एष मनोमयस्तेन विज्ञानमयेन पूर्णः सएव विज्ञानमयः पुरुषविधः तस्य मनोमयस्य पुरुषविधतामनुलक्षीकृत्यायमपि पुरुषविधो भवति तस्य विज्ञानमयस्य श्रद्धा एव शिरः ऋतं सूनृता वाणीदक्षिणपक्षः सत्यं यथार्थभाषणमुत्तरः पक्षः योगो युक्तिः समाधानं तस्यात्मा महः महत्तत्वं पुच्छं प्रतिष्ठा सर्वेषां कारणत्वात् "कारणं हि कार्याणां प्रतिष्ठा" इत्युक्तेः। य एष विज्ञानमयः श्रेष्ठः पूर्वमुक्त मनोमयोहि वेदात्मक उक्तः वेदार्थनिश्चयात्मिका बुद्धिर्विज्ञानं तन्मयः आत्मा विज्ञानमयः प्रमाणविज्ञानपूर्वकोहि यज्ञादिर्वितन्यते "विज्ञानं यज्ञं तनुते" इतिश्रुतेः। निश्चयविज्ञानमतोहि पुंसः कर्त्तव्येष्वर्थेषु अपूर्वश्रद्धोत्पद्यते सा श्रद्धा सर्वकर्त्तव्यानां प्राथम्यात्तस्य शिर इव शिर इति ४ अथानन्दमयं पुरुषमाह—"तस्माद्वा एतस्माद्विज्ञानमयादन्योन्तर आत्माऽऽनन्दमयस्तेनैष पूर्णः सवा एष पुरुषविधएव तस्य पुरुषविधतामन्वयं पुरुषः तस्य प्रियमेव शिरः मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठा तस्यैष एव शारीर आत्मा यः पूर्वस्येति। अर्थः तस्माद्विज्ञानमयादन्य अन्तर अभ्यन्तर आत्मा आनन्दमयः अन्नमयादीनां कार्यात्मना अधिकारात् मयट् प्रत्ययाच्च आनन्दमयोपि कार्यात्मा वेदितव्यः आनन्दस्य विकार आनन्दमयः शुद्धजीवः तेनानन्दमयेन एष विज्ञानमयः पूर्णसवै आनन्दमयः पुरुषविधः पुरुषाकारः कुतः? तस्यविज्ञानमयस्य पुरुषविधतामनुलक्षीकृत्य पुरुषविधः तस्यानन्दमयस्य प्रियमेव शिरःप्रियं इष्टस्त्रीपुत्रादिसन्दर्शनं प्राधान्यात् शिरइवशिरः मोदः प्रियवस्तु लाभनिमित्तो हर्षः मुखप्रसादरूपः दक्षिणः पक्षः प्रमोदः स एव प्रकृष्टो हर्षः प्रहास्ययुक्तः उत्तरो वामपक्षः आनन्दं सुखसामान्यं तस्यात्मा प्रियादीनां सुखावयवानां तेषु तस्यानुस्यूतत्वात् आनन्द आत्मा एवं चोत्कृष्यमाणस्यानन्दमयस्यात्मनः ब्रह्मपुच्छं प्रतिष्ठा आश्रयः यस्य शाखाचन्द्रवदन्तरतमत्वज्ञानार्थं अन्नमयादिपञ्चकोशाः उपन्यस्ताः तद्ब्रह्म सर्वेषामाश्रय इति पञ्चकोशाः (५) अथान्तर्यामिब्राह्मणं "यः प्राणमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः यो मनसि तिष्ठन्मनसोऽन्तरोयं मनो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरोयमयत्येषत आत्मान्तर्याम्यमृतः" इति "य आत्मनि तिष्ठन्नात्मनोऽन्तरोयं आत्मा न वेद यस्यात्मा शरीरं यः आत्मानमन्तरो यमयत्येषत आत्मान्तर्याम्यमृतः" इति अर्थस्तु प्रागेव लिखित अत्र तु अन्नमयादिषु यः चरमः सत्वमित्यनेन श्रीकृष्ण एवोक्तः यतोन्तर्यामी स एव यथोक्तं ब्रह्मस्तुतौ श्रीशुकेन—

> "कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम।
> जगद्धिताय सोप्यत्र देहीवा भाति मायया॥
> सर्वेषामपि भूतानां भावार्थो भवति स्थितः।
> तस्यापि भगवान्कृष्णः किमतद्वस्तु रूप्यताम॥

इति रासक्रीडायां च गोपीनां च सर्वेषामपि देहिनां "योन्तरश्चरति सोऽध्यक्षः क्रीडनेनेह देहभाक्" इति तस्मात्गुणश्रवणकीर्तनार्चनादिभिर्निर्दग्धपञ्चकोशस्य सुखेन तत्प्राप्तिः सर्वत्रैवोक्ता

> "अनिमित्ता भागवती भक्तिः सिद्धिर्गरीयसी।
> जरयत्याशु या कोशं निगीर्णमनलो यथा"॥

इत्यादिभिः अथ ज्ञानेन तत्प्राप्तिप्रकारमुच्यते जीवात्मा द्विविधः यस्तु विद्यायुक्तः सतु नित्यमुक्तः आनन्दमयः शुद्धः यस्त्वविद्यायुक्तः शुद्धस्य प्रतिबिम्बरूपः सतु नित्यबद्धो शुद्धश्चेति अयमेवान्नमयादिपञ्चकोशात्मकः सन् तत्तत्कोशोत्थसुखदुःखरागद्वेषजराक्षुत्पिपासाशोकमोहादिकमनुभवति यद्यानन्दमयत्वस्याविर्भवति तदपि स्वाभीष्टस्त्रीपुत्रादि दर्शनलाभाद्युपाधिनैव नत्वात्मलाभेन सर्वेषामानन्दानुभूयस्थमेकं परमायनमिति श्रुतेः अत एवात्माज्ञानाभावात्संसरतोस्य प्रबोधस्तत्त्वमसीत्यादि वाक्यैः क्रियते यदा दैवादहं ब्रह्मास्मीति प्रतिबुद्धस्तर्हि शुद्धात्मना सहैकीभूयानन्दमयो भूत्वा पञ्चकोशादविद्याकार्यादसङ्गः सन् विद्योपाधितोपि निर्मुक्तो ब्रह्मैव भवतीति तदर्थपञ्चकोशा उपन्यस्ता इति दिक् अथ स्वामिचरणानां श्लोकः

> नरवपुः प्रतिपद्य यदि त्वयि श्रवणवर्णनसंस्मरणादिभिः।
> नरहरे! न रमन्त इदं नृणां श्वसितवदुच्छ्वसितं विफलन्ततः॥

हे नरहरे! ये नरा नरवपुः प्रतिपद्य प्राप्य यदि श्रवणादिभिः त्वयि न रमन्ते ततः तर्हि तेषां नृणां उच्छ्वसितं जीवनं दृतिवद्विफलं भवति इत्यर्थः। न भजन्ति नृणामिति पाठः लेखकप्रमादः तथापि तस्य योजकेयं त्वयि त्वां न भजन्ति

### श्रीकविचूडामणिचक्रवर्त्तिकृतान्वयबोधिनी ।

किन्तु सप्तम्यां द्वितीयाकल्पनापौरुषेयत्वाद्दयोग्यं चेति वा पाठः नरहरे न रमन्ति नृणामिदमिति विपूर्वस्य रमेः परस्मै यदि त्वं तथा न पूर्वादपि श्रेयम् अर्थस्य साम्यात् तथाहि अधर्माद्विरमति अधर्मं न करोति इत्यर्थः तद्वदत्रापि ज्ञेयम् ॥ १७ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

इतय इत्यस्य टीकायामसूर्य्या इति श्रीभगवद्बहिर्मुखाः सर्व एवासुरास्तेषामेते असूर्य्याः सांसारिका लोकाः कर्मफलानि तथाचोक्तमाग्नेयविष्णुधर्मोत्तरयोः—

"द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।
विष्णुभक्तिपरो दैव आसुरस्तद्विपर्ययः" ॥ इति

"अन्धेन तमसा परमाज्ञानेन तान् लोकान् प्रेत्य मृत्वाभिगच्छन्ति, आत्महनो भगवद्विमुखा इति अथ एष ऋतं सत्यमित्यत्र अविद्ययैव तत्तत्कल्प्यत इति शेषः । अथ व्याख्या तदेवं सामान्याकारेण सर्वश्रुतीनां समन्वयस्तच्छुद्धभक्तिप्रतिपादनपर्य्यन्तो दर्शितः अथ तद्विशेषाणामपि दर्श्यते तत्र काश्चित्पूर्वोक्तशुद्धभक्तिप्रतिपादकश्रुत्यनुगामिन्यः श्रुतयोऽन्वयव्यतिरेकाभ्यां तद्वाक्यं पुष्णन्त्यस्तेनैव तत्र चरन्त्यः काश्चित्स्वानुगतश्रुतीश्चान्यास्तत्पर्य्यवसानत्वेन दर्शयन्त्यः स्तुवन्ति इतय इति असुभृतो जीवा यदि ते तवानुविधा भक्ता भवन्ति तदैव श्वसन्ति प्राणन्ति अन्यदा इतयो भस्त्रा इव श्वसदाभासा एव समष्टिव्यष्टिजीवकरणानां महदादीनामनुग्राहकस्यापि तवोपेक्षणात् सर्वोपचितत्वेन मृततुल्यत्वप्राप्तेरित्यर्थः । न केवलं सृष्टावेव तवानुग्राहकत्वं किन्तु स्थितावपीत्याहुः, पुरुषेति । अत्र तैत्तिरीयकोपनिषदि "ब्रह्मविदाप्नोति परम्" इत्यधिकृत्य श्रूयते "स वा एष पुरुषोऽन्नरसमयस्तस्येदमेव शिरः अयं दक्षिणः पक्षः अयमुत्तरः पक्षः अयमात्मा इदं पुच्छं प्रतिष्ठा तदप्येष श्लोको भवति "अन्नाद्वै प्रजाः प्रजायन्ते" इत्यादि "तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमयस्तेनैष पूर्णः स वा एष पुरुषविधस्तस्य पुरुषविधतामन्वयं पुरुषविधस्तस्य प्राणमेव शिरो व्यानो दक्षिणः पक्षः अपान उत्तरः पक्षः आकाश आत्मा पृथिवी पुच्छं प्रतिष्ठा तदप्येष श्लोको भवति "प्राणं देवा अनुप्राणन्तीत्यादि "तस्यैष शारीर आत्मा यः पूर्वस्य तस्माद्वा एतस्मात्प्राणमयादन्योऽन्तर आत्मा मनोमयस्तेनैष पूर्णः स वा एष पुरुषविध एव" इत्यादि पूर्ववत् "तस्य यजुरेव शिरः ऋग्दक्षिणः पक्षः सामोत्तरः पक्षः आदेश आत्मा अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा तदप्येष श्लोको भवति, यतो वाचः" इत्यादि तस्यैष इत्यादि पूर्ववत् "तस्माद्वा एतस्मान्मनोमयादन्योऽन्तर आत्मा विज्ञानमयस्तेनैष पूर्णः स वा एष" इत्यादि "तस्य श्रद्धैव शिरः ऋतं दक्षिणः पक्षः सत्यमुत्तरः पक्षः योग आत्मा महः पुच्छं प्रतिष्ठा तदप्येष श्लोको भवति "विज्ञानं यज्ञं तनुते" इत्यादि तस्यैष इत्यादि "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मा आनन्दमयस्तेनैष पूर्णः स वा एषः" इत्यादि तस्य प्रियमेव शिरो मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः आनन्द आत्मा ब्रह्मपुच्छं प्रतिष्ठा "तदप्येष श्लोको भवति असन्नेव स भवति असद्ब्रह्मेति वेद चेत्" इत्यादि "तस्यैष एव शारीर आत्मा यः पूर्वस्य" इत्यादि श्रीवैष्णवभाष्यमतेन व्याख्या चेयं वैशब्दः प्रसिद्धौ निश्चये वा एष मृज्जलादिपिण्डलक्षणः पुरुषः अन्नरसमयः अन्नरसो नामान्नस्यान्नरसविकारस्तेन त्वगादिरूपः सर्वोपि तद्विकारो लभ्यते तन्मयत्वं जलादिविकारश्लेष्माद्यपेक्षया तस्याधिक्यात् तत्प्राचुर्य्य एव । मयट् मयड् वै तयोर्भाषायामित्यनेन भाषायामेव विकारावयवयोर्थे मयड्विधानात् छन्दसि तु द्वयच् एव तद्विधानात् तत्प्रकृतत्वेन मयडितितु प्राचुर्य्य एव सर्वतस्तद्विधानात् विकारार्थोऽत्र न प्रकृति इति इदं प्रसिद्धं शिर एव शिरः नतूत्तरोत्तरत्रेव कल्पनामयम् एवं पक्षादिष्वपि व्याख्येयं पक्षो बाहुरुत्तरो वामः अयं मध्यमो देहभाग आत्मा अङ्गानां मध्यं ह्येषामात्मेति श्रुतेः । इदमिति नाभेरधस्ताद्यदङ्गं तत्पुच्छमिव पुच्छम् अधो लम्बनसाम्यात् तदेव प्रकर्षेण तिष्ठत्यस्यामिति प्रतिष्ठा आश्रयः तदेवं शाखाचन्द्रवदन्नरतमत्वज्ञानार्थं लोकप्रसिद्धमात्मानमनूद्य तस्यान्तरमन्तरमात्मानं शास्त्रप्रसिद्धसाधनादिक्रमेण प्रवेशयन्प्राणमयादीनप्याह—तत्र मनसो धारणार्थं तदाधारप्राणो धार्य्य इति प्रथमं प्राणमयमाह—तस्मादिति । अन्तरस्तदपगमादन्नरसमयस्य मृतेः एषोऽन्नरसमयस्तेन पूर्णो वायुनेव दृतिः स वै पुरुषविधः पुरुषाकारः कथं तस्य पूर्वस्यान्नरसमयस्य पुरुषविधतामेव लक्ष्यीकृत्य विशेषं बोधयितुमयमपि रूपककल्पितैः शिरः पक्षादिभिः पुरुषाकार एव वर्ण्यते इति तदेवं रूपकं दर्शयति तस्य प्राणमयस्य हृदिस्थप्राणवायुप्रचुरस्य प्राणं प्राणवायुरेव प्रथमधार्य्यत्वेन शिरः कल्प्यते एवं साधनक्रमेणैव दक्षिणपक्षत्वादिकमो ज्ञेयः । उदानानिर्देशः प्राणेनाभेदोपासनात् आकाशः आकाशस्थः वायुवृत्तिविशेषस्समानाख्यो वायुः प्राणवृत्त्यधिकारात् मध्यस्थत्वादितराः पर्य्यन्तवृत्तीरपेक्ष्यात्मा अध्यक्षः पृथिवी तदभिमानिनी देवता आध्यात्मिकस्य प्राणस्य धारयित्री स्थितिहेतुत्वात् सैषा पुरुषस्यापानमवष्टभ्येति श्रुत्यन्तरात् तस्य प्राणमयस्य एषः "तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः" इत्यत्रोपक्रमे प्रोक्त एवात्मा शारीर आत्मा तच्छरीरशरीरान्तर्यामी कथम्भूतः यः पूर्वस्यान्नमयरसस्यापि शारीर आत्मा एवं यः पूर्वस्य" प्राणमयस्येत्यादिकमुत्तरत्रापि योज्यं "यश्चानन्दमयान्तेपि तस्यैष एव शारीर आत्मा" इति श्रूयते । तत्र तस्योपचारिकभेदनिर्देशो नानन्यात्मत्वमेव बोधयति, नात्मान्तरं विज्ञानमयादन्योऽन्तर आत्मेति वदन्याप्रस्तावात् प्राणमयान्तोक्तेर्यः पूर्वस्येत्यत्रापरैरपि तथाभ्युपगमनीयत्वात् ततश्च तत्रैव पूर्वोक्त आनन्दमयतात्पर्य्यावसानविवेक आत्मैव तस्य शारीर आत्मेति योज्यम् एवं प्राणधारणया मनो वशीकृत्य तच्च मनो निष्कामकर्मात्मकतया धारणीयमित्याशयेन मनोमयमाह—मनः सङ्कल्पाद्यात्मकमन्तःकरणं अस्य पूर्वस्मादन्तरत्वं ज्ञानसम्बन्धेन जडरूपात्प्राणमयात् श्रेष्ठतया यजुरित्यनियताक्षरपादावशेषो मन्त्रविशेषः तज्जातिवचनो यजुःशब्दः तस्य शिरस्त्वं प्राधान्यात् यजुषाहि हविर्दीयते एवं ऋक्सामयोरपि वैशिष्ट्यं

श्रीजीवगोस्वामिकृतवैष्णवतोषिणी।

ह्येयम्। आदेशोऽत्र ब्राह्मणं आदेष्टव्यविशेषान्निर्दिशति अथर्वणा अङ्गिरसा दृष्टा मन्त्रा ब्राह्मणं च शान्त्यादिप्रतिष्ठाहेतुकर्मप्रधानत्वात्पुच्छरूपप्रतिष्ठा मनोमयाकृत्वं चैषां मनोवृत्त्याविर्भावित्वेन तत्र प्राचुर्यात् तद्विकारत्वेतु पौरुषेयत्वापातः स्यात् अत्र पारमार्थिकपथस्यैव प्रकृतत्वात् व्यावहारिकसङ्कल्पाद्यात्मकमनोमयत्वं न प्रयुज्यते प्राणधारणायाः पूर्वमेवहि त्यक्तत्वात् अत एव मनुष्याधिकारत्वान्मनुष्यशरीरमेवोक्रान्तम् एव मुत्तरत्रापि तथैव विज्ञानमयमाह–अस्य पूर्वस्मादन्तरत्वं करणरूपात्तस्मात्कर्तृरूपत्वेन श्रेष्ठत्वात् श्रद्धा अध्यात्मशास्त्रयाथार्थ्यप्रतीतिः ऋतं शास्त्रार्थनिश्चिता बुद्धिः सत्यं तदर्थानुभवप्रयत्नः योगो युक्तिः समाधानम् आत्मा श्रद्धादीनामेतत्साक्षात्काराकृतत्वात् महः तत्तत्सर्वप्रकाशहेतुत्वेनोत्तमतरं शुद्धजीवरूपं यस्यैव प्रसिद्धेन विज्ञानमयत्वमुच्यते "यो विज्ञाने तिष्ठन् विज्ञानादन्तरोयं यस्य विज्ञानं शरीर"मिति जीवान्तर्यामिप्रतिपादकश्रुतेः। अत्र स्थान एव यत्रात्मनि तिष्ठन्नित्यादिश्रुत्यन्तरात् प्रतिष्ठा तेषां सर्वेषामाश्रयः तदेवं शुद्धजीवपर्यन्तमुपदिश्य तथा, तथा लब्धान्तराणां पुनः सर्वान्तरतमत्वेन तत्रैव पूर्वोपक्रान्तमुख्यात्मत्वं पर्य्यवसाययन् आनन्दमय—मुपदिशति अस्य सर्वस्मादन्तरत्वं सर्वान्तर्यामित्वात् अत्र पूर्वपूर्वशास्त्रीयपरमार्थप्रक्रियैव लब्धा नतु व्यावहारिकी ततो नेष्टपुत्रदर्शनजानन्दादिकं। प्रियादिशब्दैर्व्याख्येयं किन्त्वेकस्यैव परमानन्दरूपस्य ब्रह्मण उत्तरोत्तरोदयोत्कर्षतारतम्यात् प्रियादीनां। चतुर्णां तत्तन्नामभेदः। आनन्दस्य तु सामान्यत्वेन प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे इति न्यायेन ब्रह्मण आनन्दादिषु गुणेषु सर्वत्रोपासनायामादीयमानेषु प्रियशिरस्त्वादीनामप्राप्तिः तेहि न गुणाः किन्त्वेकस्यान्नमयादि क्रमेणोपासनाभूमिकारोहावस्थानां भेदे खलु प्रियादिशब्दैस्तस्यैवानन्दमयस्य ब्रह्मण उदयोपचयापचयौ विवक्षिताविति हि तत्रार्थं आनन्दस्य पूर्वपूर्वक्रमानुसाराद्‌आत्मस्थानपतितत्वेनात्मस्वरूपकं ब्राह्मणस्तु सर्वोत्तरोदितत्वेनपुच्छस्वरूपकं सर्वबृहत्तमत्वेन ब्रह्मत्वमुक्तं पूर्ववत्सुप्रपर्यायशब्दानुक्तिरनन्तरोक्तानन्दशब्दव्यपदेश्यत्वमेवाभिप्रैति एतदेव च परकाष्ठारूपत्वात् प्रियादिलक्षणोत्तरोत्तराधिकगुणस्वप्रकाशविशेषाणामाश्रयत्वेन प्रतिष्ठा इदमेव च प्रियाद्याश्रयत्वेन "सोकामयत बहुस्याम"इत्याद्यनन्तरोक्तेस्तत्सदेशोषशक्तिविशेषाश्रयत्वेन च आनन्दमय आत्मेत्युच्यते। यत एव च ब्रह्मेति व्यपदिश्यते एष च "सोऽकामयत बहुस्यां प्रजायेयेति सतपो तप्यत स तपस्तप्त्वा इदं सर्वमसृजत रसो वै सः"इत्यादिभिरभ्यस्तः आत्मतया पुच्छतया च परिभावितस्यानन्दस्य प्राचुर्यान्मयट् सोऽखण्डोपि परब्रह्मैव स्वप्रकाशविशेषणां स्वशक्तीनां चापृथग्वस्तुत्वात्प्रत्युत तत्तत्प्रकाशे प्रकाशाधिक्यात् श्रुतौ च "ब्रह्मविदाप्नोति परम्"इति यद्ब्रह्मोपक्रान्तं तस्यैवात्मत्वं "तस्माद्वा एतस्मात् , आत्मन आकाशः सम्भूतः" इत्यनेन दर्शयित्वा तस्यात्मत्वस्य पर्यवसानमानन्दमय एव दर्शितम् अन्यानुक्तेः ततश्च प्रकरणप्राप्तं यत्तस्य ब्रह्मत्वं तदभ्यासेन निर्णीयते ततो जीवस्तु सुतरां नासौ तदुक्तम् "आनन्दमयोभ्यासात्" (१-१-१३)

इत्यादिकमारभ्य "नेतरोनुपपत्तेः"(१-१-१७)इत्यन्तेन विवृतिदर्शिना सूत्राणां श्रीरामानुजाचार्यादिमतेन श्रीभागवतसन्दर्भस्य टीकायां कृतास्ति तदलमतिप्रसङ्गेन तदेतावति तत्स्वरूपे श्रुति प्रतिपादिते स्थिते "यस्मात्क्षरमतीतोहम्" इत्यादि निजोक्ति सम्वादेन स्वयं भगवदाख्यमूर्त्तब्रह्मण एवाखण्डस्वरूपशक्तिगुणरूपलीलादिपूर्णतया प्रतिष्ठापरकाष्ठात्वं स्वयमेव तु दर्शितं श्रीगीतोपनिषत्सु—

"मां च यो ऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान् समतीत्यैतान्ब्रह्मभूयाय कल्पते॥
ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च"॥

इति अस्यार्थः हि शब्दः प्राचीनार्थस्य हेतुता विवक्षया अतो गुणातीतब्रह्मभवलक्षणप्राचीनार्थहेतुवचनं अस्मिन् उपचारेण तच्छब्दस्यान्यार्थत्वमप्राकरणिकत्वात्कल्प्यत्वेन न्यूनत्वादयोग्यत्वेन चायुक्तं किन्त्वेवमेव युक्तम्। ननु, त्वद्भक्त्या कथं निर्गुणधर्मत्वप्राप्तिः सातु सर्वोत्कृष्टतदेकानुभवेन भवेत् तत्राह- ब्रह्मणोहीति हि यस्मात्परमप्रतिष्ठात्वेन प्रसिद्धं श्रुतौ यद्ब्रह्म यदेव चानन्दमयः तस्यापि स्वयं भगवदाख्यपरब्रह्ममूर्त्तिरयमहं प्रतिष्ठा अत एवामृतस्य परमपुरुषार्थस्य मोक्षस्याहं प्रतिष्ठा तस्य लक्षणया स्वर्गादिपरत्वं वारयति अव्ययस्येति तथा—

"कालेन नष्टा वाणीयं प्रलये वेदसंज्ञिता।
मयाऽऽदौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः"॥

इत्येकादशोक्तेः शाश्वतस्य धर्मस्य भगवद्धर्मोपरस्य सर्वपुरुषार्थैकमूलस्य परमसाधनस्याप्यहं प्रतिष्ठा तथा "नात्यन्तिकं विगणयन्त्यपि ते प्रसादम्" इत्यादितृतीयोक्तेः एकान्तिकस्य सुखस्य मत्प्रेमरसलक्षणस्य परमातिपरमसाध्यस्याप्यहं प्रतिष्ठा अत एव "रसो वै सः रसं ह्येवायं लब्ध्वानन्दीभवति"इति यदानन्दमयमभिकृत्योक्तं तदेतदपेक्षयैव ज्ञेयं "मल्लानामशनिः"इत्यादिदर्शितप्रेमपात्रविशेषेण रस्यमानत्वादिति। अतः सर्वस्यापि मदधीनत्वात्कैवल्यकामनया कृतेन मद्भजनेन ब्रह्मणि लीयमानो ब्रह्मधर्ममपि प्राप्नोति इत्यर्थः "यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिं तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति"इति श्रुतेः। अत्र श्रीविष्णुपुराणमपि सङ्गच्छते "शुभाश्रयः सचित्तस्य सर्वगस्य तथात्मनः"इति व्याख्यानं च तत्रापि स्वामिभिः सर्वगस्यात्मनः परब्रह्मणोप्याश्रयः प्रतिष्ठा तदुक्तं श्रीभगवता "ब्रह्मणोहि प्रतिष्ठाहम्"इति तथा विष्णुधर्मोत्तरे नरकद्वादशीप्रसङ्गे श्रीविष्णुस्तवे—

"आकाशादिषु शब्दाद्यो श्रोत्रादौ महदादिषु।
प्रकृतौ पुरुषे चैव ब्रह्मण्यपि च सप्रभुः॥
यथैक एव सर्वात्मा वासुदेवो व्यवस्थितः।
तेन सत्येन मे पापं नरकार्त्तिप्रदं भयम्॥
प्रणाशु सुकृतस्यास्तु ममानुदिवसक्षयः"। इति

अत्र सर्वात्मशब्देन पुरुषसमाधानान्तरं च निरस्तं तत्रैव मासर्क्षपूजाप्रसङ्गे—

"यथाच्युतस्त्वं परतः परस्मात्स ब्रह्मभूतात्परतः परात्मा।
तथाच्युतस्त्वं कुरु वाञ्छितं तन्ममापदं चापहराप्रमेय"॥ इति

उत्तरक्षत्रबन्धूपाख्याने च—

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

"यन्मयं ब्रह्मपरमं तदव्यक्तं च यन्मयम् ।
यन्मयं व्यक्तमप्येतज्ज्ञविष्यामि हि तन्मय ॥ इति

श्रुतिश्च पूर्वमुदाहृता "यस्य पृथिवीशरीरम्"इत्यादिः तस्मात् पुरुषविध इत्यस्य प्रकृतपद्यार्द्धस्यायमर्थः अत्र महदादिपरिणामरूपे समष्टिव्यष्टिजीवदेहे जीवानामनुग्रहार्थमन्वयः प्रविष्टस्त्वं कथम्भूतः अन्नमयादिषु यश्चरमः पुरुषविधः पूर्वपूर्वपुरुषरूपकेनानिरूपित आनन्दमयस्तद्रूपः प्राणनादिचेष्टानां परमानन्दात्मक एव समुद्भव इति प्रसिद्धेस्तथानुग्राहकत्वं "कोह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्"इति श्रुतेः । नन्वानन्दमयाख्यं ब्रह्म भवतु तादृशं नचाहं तत् तस्य कल्पितशिर आदिरूपत्वान्ममतु साक्षात्तद्रूपत्वात् तत्राहुः एषु प्रतिष्ठान्तवाक्येषु यदवशेषं वाक्यशेषावगम्यं रसो वै स इत्यादिना पञ्चविधभक्तिरसाश्रयत्वेन सूचितं "ब्रह्मणोहि प्रतिष्ठाहम्"इति "यस्मात् क्षरमतीतोहम"इति च श्रीगीतोपनिषदादौ प्रसिद्धं सतः प्रियादेरसतोऽन्नमयादेश्च परं श्रेष्ठं यत एव ऋतं तत्तत्सर्वाश्रयरूपं तत्तत्त्वमिति । ऋगती "इत्यस्माद्धिकरणार्थे क्तप्रत्ययेन तच्छब्दस्य तदर्थत्वं गीतादिवाक्यैकवाक्यत्वाद्गम्यम् अत्र मुख्याः श्रुतयः "असन्नेव स भवति असद्ब्रह्मेति वेद चेदस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति"इति उत् उत अल्पमपि अन्तरं व्यवधानं स्मरणविच्छेदमित्यर्थः—

"सा हानिस्तन्महच्छिद्रं स मोहः स च विभ्रमः ।
यन्मुहूर्त्तं क्षणं वापि वासुदेवं न चिन्तयेत् ॥ इति

श्रीविष्णुपुराणानुसारादित्यर्थः । अथ अन्याः श्रुतयः—

"एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् "॥

इत्याद्याः "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् तत्पीठगं येनु यजन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्"इति श्रीगोपालतापन्याद्याश्च तदनुगताः श्रुतयस्तु दर्शिताः ॥ १७ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अथ भगवद्भजनविमुखानां जन्मवैयर्थ्यमाह—दृतय इति । ते अनुविधाः तवानुविधायिनः त्वदाश्रयणयोग्यजन्मभाजोपि जीवाः असुभृतः असुतृपो यदि प्राणेन्द्रियतर्पणपराः शब्दादिविषयचपलाश्चेत् दृतय इव श्वसन्ति ते सकलपुरुषार्थहीनाः भवन्तीत्यर्थः । तच्छब्दनिर्दिष्टं भगवन्तं कारणत्वेन विशिनष्टि । महदहमादय इति । महदहङ्कारादयः पदार्थाः यदनुग्रहतः यत्सङ्कल्पानुगृहीतास्सन्तोऽण्डं ब्रह्माण्डगोलकमसृजन् त्वत्कटाक्षेण निर्माणकरणसमर्था भवन्ति इति भावः यद्वा, तस्य तेऽनुविधायिन इत्यर्थः । अथ सर्वान्तरात्मत्वेन विशिनष्टि—पुरुषविधोऽन्वय इति । अन्नमयादिषु यः चरमः आनन्दमयः अन्नमयप्राणमयमनोमयविज्ञानमयानां मध्ये यः चरमः अन्तिमः स आनन्दमयः "तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः" इति श्रूयते । स पुरुषविधोऽन्वयः "स वा एष पुरुषविध एव" इत्यादिप्रकारेण शिरःपक्षपुच्छादिरूप पुरुषप्रकारान्वयवान् पक्षपुच्छादिरूपनामसम्बन्धवान् तस्य पुरुषप्रकारान्वयवतः "प्रियमेव शिरः मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः आनन्द आत्मा ब्रह्मपुच्छं प्रतिष्ठा" इति पुरुषविधत्वविधत्वं हि निरूप्यते एष्वन्नमयादिषु अवशेषं पश्चान्निर्दिष्टम् एषु संहृतेषु अवस्थितं वा अतः परं चिदचिदात्मकप्रपञ्चलक्षणं सदसत् चिदचिदनुप्रवेशात् चिदचिद्व्याविसदसच्छब्दवाच्यम् ऋतं निर्विकारं "तदनुप्रविश्य सच्च त्यच्च सत्यमभवत्" इति हि श्रूयते । एवम्भूतं यत्तस्य तेऽनुविधाः भक्ताः ते जीवन्ति सफलजन्मानो भवन्तीत्यन्वयः ॥ १७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ भगवद्भजनविमुखानां जन्मवैयर्थ्यमाहुः—दृतय इति । ते तवानुविधाः अनुविधायिनः त्वदाश्रयणयोग्यजन्मभाजोपीत्यर्थः । असुतृपः त्वां विहाय केवलं यदि प्राणेन्द्रियसन्तर्पणपराः शब्दादिविषयचपलाश्चेत्तर्हि दृतय इव उच्छ्वसन्ति दृतयश्चर्मभस्त्रिकाः ता यथा वायुपूरिता उच्छ्वसन्ति तद्वद्वृथोच्छ्वासा इत्यर्थः । अनेनातदृत्यो दधुरित्यादेरायतोजनानां कथमयथाभवन्नीत्यादिसूचितमन्यविषयध्यानादिमोघत्वं स्पष्टीकृतम् । ननु, सति मम कारणत्वे तत्समनियतमुमुक्षूपास्यत्वसिद्धिः कारणत्वमेव त्वनुपपन्नमचेतनस्य प्रधानस्यैव महदहङ्कारादिरूपेण परिणामस्वभावस्य कारणत्वात् तथाहि चेतनभोग्यभूतस्य सत्त्वरजस्तमोमयस्य विकारावस्थितस्य जगद्रूपस्य वस्तुनः कारणभूतं वस्तु तत्स्वभावमेवेति युक्तं गुणसाम्यावस्थम् प्रधानं कारणमिष्यत एव कार्यकारणयोरनन्यत्वोपपादकमृदादिदृष्टान्तोपपत्तिरितीक्षत्यधिकरणपूर्वपक्षानुसारिणामाशङ्कामभिप्रेत्य परिहारमाहुः महदित्यादिना यदनुग्रहत इत्यन्तेन यस्य तवानुग्रहतः "तदैक्षत बहु स्याम्" इतीक्षात्मकसङ्कल्पाल्लब्धसत्ताकाः येनानुप्रविष्टाश्च महदहङ्कारादयः अण्डमसृजन् अचेतनस्येक्षात्मकानुग्रहासम्भवान्न तस्य कारणत्वमिति भावः । नच दृष्टिप्रतीक्षाः शाक्य इतिवद्गौणानुग्रहसम्भवः "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा"इति कारणस्यात्मत्वश्रवणात्स्यादेतत् माभूत्प्रधानं कारणं जीवस्तु भवितुमर्हत्येव तस्येक्षासङ्कल्पापरपर्यायानुग्रहसम्भवात् तथाहि "आत्मन आकाशः सम्भूतः"इत्यात्मशब्देन कारणत्वं प्रक्रम्य तस्यात्मशब्दवाच्यस्य जीवातिरिक्तत्वशङ्काव्युदासाय प्रतिपर्यायं "तस्यैष एव शारीर आत्मा"इतिशरीरसम्बन्धमभिधायानन्दमयशब्देन स्वार्थकमयडन्तेन तस्यानन्दरूपताऽभिधाय सोऽकामयतेति तस्येक्षापूर्वकसृष्टिराम्नायते इत्यानन्दमयाधिकरणपूर्वपक्षानुसारिणामाशङ्कामभिप्रेत्य परिजह्रुः पुरुषविध इत्यादिना । अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेषु यश्चरम आनन्दमयः पुरुषविधः "स वा एष पुरुषविध एव "इत्यादिना पुरुषाकारत्वेन निरूपितः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अन्वयः "तस्य प्रियमेव शिरः मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः आनन्द आत्मा ब्रह्म पुच्छं प्रतिष्ठा" इत्युक्तशिरःपक्षपुच्छादिरूपपुरुषप्रकाराम्वयवान् स त्वमेव ननु ब्रह्मणात्मेत्यर्थः। कुत इत्यतो विशिषन्ति यत् सदसदिति सदसत् चिदचिदात्मकप्रपञ्चाकारं यदित्यर्थः तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य 'सच्च त्यच्चाभवत्' इति श्रुतचिदचिदनुप्रवेशेन तदुभयात्मकजगद्रूपेण भवनस्य चिदचिद्वाचिशब्दाभिधेयत्वस्य च श्रूयमाणस्य वक्ष्यमुक्तोभयवाच्यजीवात्ममात्मवितस्य त्वय्येव सम्भवादिति भावः। किञ्च यतः चिदचिदात्मकप्रपञ्चरूपं विलक्षणं निरुक्तानिरुक्तनिलयनानिलयनविज्ञानाविज्ञानसत्यानृतशब्दैः प्रक्रान्तपुरुषो निर्दिश्य तदन्तरात्मतया तदनुप्रवेष्टृतया श्रूयमाणं यत्तज्जीवातिरिक्तत्वमेव अथ यदोऽन्नमयादिषु चतुर्षु संहृत्यनन्यशेषमवस्थितमानन्दमयरूपम् अतं निर्विकारं तत् त्वमेव एवमुक्तधर्मसमानाधिकरणतया श्रूयमाणमीशितृत्वात्मकानुगृहीतृत्वं जीवात्मन्यात्मवित् त्वय्येवोपपन्नमिति मनुष्यावाभिप्रायः शारीरात्मत्वं च सर्वशारीरके त्वय्येवोपपन्नमिति च भावः अत्र केचिदन्नमयादिपूपदिश्यमानेषु यदन्तरमो ब्रह्मपुच्छं प्रतिष्ठेति पुच्छत्वेनोक्तः स त्वमिति सम्बन्धमाहुः तथा हि—

तस्येदं ब्रह्मपुच्छं स्यात्प्रतिष्ठा हेतुरित्यतः।
व्यतिरेकश्रुतेर्ब्रह्मविषयत्वप्रतीतितः॥
श्लोकस्य वक्ष्यमाणस्य ब्रह्मप्राधान्यनिश्चयात्।
प्रियमोदादिरूपेण विदितस्य जनैः समैः॥
इहानन्दमयस्यास्य शङ्कायाश्चात्र सङ्गतेः।
सदसद्भावयोर्ज्ञानाज्ञानयोश्च निरंशिनः॥
अंशित्वासङ्गतेर्निर्विकारस्य मयटात्र वै।
विकारित्वावबोधनाच्च मयटो ह्यत्र सङ्गतेः॥
तस्यैष एव शारीर आत्मेति च तदन्तरम्।
आत्मान्तरं कीर्त्यमानमानन्दमयवस्तुनः॥
ब्रह्मत्वं नावगमयेदित्यतः पुनरस्य हि।
परे तस्मिंश्चित्यशुद्धे शोध्यत्वानुपपत्तितः॥
नानन्दमयशब्देन वाच्यं ब्रह्मेति निश्चितम्।
पुच्छत्वेनैव यत्तत्र रूपितं तु तदिष्यते॥

इति तदुक्तम्—

कृत्स्ने प्रकरणे ह्यत्र पूर्वमन्नमयादिषु।
स्वस्मादनतिरिक्तैः स्वावयवैर्वस्तु निरूपणात्॥
शिरः पक्षादिरूपेण पुरुषत्वस्य निश्चितम्।
प्रियमोदादिभिः स्वस्मादभिन्नैरेव रूपितः॥
न भिद्यते ब्रह्मणोऽत्र ह्यानन्दमयशब्दितः।
तदनन्तरभूतस्य वस्तुनो बोधकस्य वै॥
तस्यैष एव शारीर आत्मेत्यात्मपदस्य हि।
व्याख्यानन्दमये पर्यवसाना कीर्तनात् पुनः॥
अन्यस्य ब्रह्मपर्यायस्यानन्दमयतस्ततः।
अन्नादिमयपर्यायेषूक्तानां श्लोकरूपिणाम्॥
वाक्यानां पक्षपुच्छादिमदर्थपरतः पुनः।
पुच्छमात्रपरत्वास्य श्लोकस्याव्याप्त्यसङ्गतेः॥
अनन्तरे सोऽकामयतेति वाक्याच्छ्रुतेस्ततः।
इतिशब्देन पूर्ववस्तुबोधकेन तथा पुनः।
प्रधानप्रकृतार्थस्य परामर्शनसाधुना॥
अनन्तरस्यानन्दमयस्यात्राबोधनसङ्गतेः।
ब्रह्मणो व्यवधानेन तदुपस्थापनच्युतेः॥
ब्रह्मण्यानन्दशब्दस्य आनन्दो ब्रह्म इत्यतः।
श्रुतेः सम्प्रतिपन्नत्वादानन्दव्यापने क्षमात्॥
आनन्दमयमात्मानमुपसंक्रम्य वाक्यतः।
आनन्दानन्दमययोरैकार्थस्य प्रतीतितः॥
आनन्दमयशब्देन परब्रह्मावबोधनात्।
आनन्दो ब्रह्मेति व्यजनादिनि पर्यायतुल्यतः॥
आनन्दमयतुल्यार्थाच्छब्दादानन्दतः परम्।
प्रतीतार्थश्रुतेः पश्चादुपपत्तेरभावतः॥
न पुच्छमेव ब्रह्मेति किन्तु पुच्छवदिष्यते।
अभिन्नपक्षपुच्छादिपरप्रकरणस्य वै॥
आनुगुण्येन पञ्चधा च निर्देशस्य तथा पुनः।
अंशांशित्वेनोपपत्तेर्व्यतिरेकस्य निश्चयात्॥
आत्माब्रह्मानन्दमयशब्दैरेकार्थबोधनात्।
तेषामन्यतमेनापि श्लोकस्य ह्युपपत्तितः॥
आनन्दस्यापरिच्छित्तेः पुच्छब्रह्मपदस्य हि।
आनन्दमयवाच्यस्य प्रसिद्धेरप्यभावतः।
सदसद्भावयोर्ज्ञानाज्ञानयोश्च तथा पुनः।
शङ्कायाः सम्भवादस्य रूपद्वयस्योपपत्तितः॥
अंशांशिभ्यां तदानन्दमयशब्दगतस्य वै।
मयटः स्वार्थिकत्वेन प्राचुर्यार्थेऽपि वा पुनः॥
उपपत्तेर्विकारार्थकत्वाभावाच्च ब्रह्मणः।
निर्विकारित्वानिर्वाहादनन्यात्मत्ववादिनः॥
तस्यैष एव शारीर आत्मेत्यस्याविरोधतः।
तद्वस्त्वनुगुणत्वेन शोधनस्य विधेः पुनः॥
प्रत्यगर्थस्य शोध्यत्वं संसृतेर्निह्नुतेस्तथा॥
आनन्दमयशब्देन वाच्यस्य ब्रह्मणः तथा॥
शोध्यत्वस्य प्रपत्त्या च साध्यस्य ह्युपपत्तितः।
कालुष्यशान्तिरूपस्य न पुच्छं ब्रह्म वै मतम्॥
अन्यदाऽऽनन्दमयतः स एव ब्रह्म तु स्थितम्।
इति पुच्छब्रह्मवादिरूपयोरादरिष्यते॥

॥ १७ ॥

---

श्रीनिवाससूरिकृततत्त्वदीपिका।

अथ भगवद्भजनविमुखानां जन्मवैयर्थ्यमाह—दृतय इति। तेऽनुविधाः त्वदनुविधायिनः त्वदाश्रयणयोग्यजन्मभाजोऽपि असुभृतो यदि जन्तव इति शेषः। असुतृपः प्राणेन्द्रियतर्पणपराः शब्दादिविषयचपलाश्चेत् दृतय इव श्वसन्ति ते सकलपुरुषार्थहीना भवन्तीत्यर्थः। तदुक्तं शौनकेन—

"तरवः किं न जीवन्ति भस्त्राः किं न श्वसन्त्युत।
न खादन्ति न मेहन्ति किं ग्रामपशवोऽपरे॥
श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः।
न यत्कर्णपथोपेतो जातु नाम गदाग्रजः॥" इति

किञ्चास्तामिदं बहिर्विषयपरा व्यर्थश्वासा इति यतः केवलज्ञानयज्ञपरास्तेऽपि व्यर्थश्रमाः तथोक्तं ब्रह्मणा—

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका।

श्रेयःसृतिं भक्तिमुदस्य ते विभो –
क्लिश्यन्ति ये केवलबोधलब्धये।
तेषामसौ क्लेशल एव शिष्यते-
नान्यद्यथा स्थूलतुषावघातिनाम्॥ इति॥

तच्छब्दनिर्दिष्टं भगवन्तं कारणत्वेन विशिनष्टि—महदहमादय इति। महदहङ्कारादयः पदार्थाः यदनुग्रहतः यत्सङ्कल्पानुगृहीताः सन्तोऽण्डं ब्रह्माण्डगोलकमसृजन्नुत्पादितवन्तः यद्भूतं तस्य तेनुविधायिन इत्यर्थः। पुनः सर्वात्मत्वेन विशिनष्टि—पुरुषविधान्वय इति। अन्नमयादिषु चरमः अन्नमयप्राणमयमनोमयविज्ञानमयानां चरमः स आनन्दमयः "तस्माद्वा एतस्माद्विज्ञानमयादन्योन्तर आत्मानन्दमयः"इति श्रूयते अन्नमयादिकोशाकारः सन् चेतयितापि त्वमेवेत्याह—पुरुषविधान्वय इति। "सवा एष पुरुषविधएव" इत्यादिप्रकारेण शिरःपक्षपुच्छादिरूपपुरुषप्रकारान्वयवान् "तस्य प्रियमेव शिरः मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्षः आनन्द आत्मा ब्रह्मपुच्छं प्रतिष्ठा"इति पुरुषविधत्वं हि निरूप्यते अथशब्द आनन्तर्ये यत् एषु अन्नमयादिषूपदिष्टेषु अवशेषं पश्चान्निर्दिष्टं एषूपसंहृतेष्वप्यवस्थितम् अतः परं चिदचिदात्मकप्रपञ्चविलक्षणं सदसदपि चिदचिदनुप्रवेशात् चिदचिद्वाचिसदसच्छब्दवाच्यं तर्हि विकारि किं नेत्याह ऋतं निर्विकारं "तदनुप्रविश्य सच्च त्यच्चाभवत्" एष सर्वभूतान्तरात्मापहतपाप्मा"इत्यादिश्रुतेः एवम्भूतं यत्तस्य तेनुविधायिनोपि असुतृपश्चेत् दृतय इव श्वसन्तीत्यर्थः॥ १७॥

---

### योगिरामानुजाचारीकृतसरलव्याख्या।

अथ भगवद्भजनविमुखानां जन्मवैयर्थ्यमित्याहुः—दृतय इवेति। महदहमादयः महदहङ्कारादिरूपाः प्रकृतिविकाराः यदनुग्रहतः यस्यानुप्रवेशेन लब्धसामर्थ्याः सन्तः अण्डमसृजन् ब्रह्माण्डमसृजन् यः परमपुरुषः अन्नमयादिषु अन्नमयप्राणमयमनोमयविज्ञानमयआनन्दमयाख्येषु पञ्चसु कोशेषु अन्वयः अन्वेतीत्यन्वयः सर्वान्तरात्मत्वाकारेणानुप्रविष्टः अत्र अन्नमयादिपञ्चकोशेषु यः चरमः पञ्चमः आनन्दमयाख्यः पुरुषविधः पुरुषस्य विधा इव विधा यस्य सः पुरुषप्रकारः आनन्दमयाख्यस्य स्वभावतो पुरुषसदृशशिराः पक्षाद्याकाररहितत्वेपि अन्नमयादीनां पुरुषाकारस्योक्तत्वेन तत् प्रकरणात् आनन्दमयस्य निरवयवस्यापि पुरुषाकृतिमत्त्वं रूपितं नतु वास्तविकं आनन्दमयाधिकरणे शाङ्करभाष्येपि तथैवोक्तम् तथा च पुरुषविध इत्युक्ते श्रुत्या पुरुषाकारत्वेन रूपित इत्यर्थः श्रीधरीव्याख्याने तु अन्नमयादिषु यश्चरमः इत्युक्ते ब्रह्मपुच्छं प्रतिष्ठा इति श्रुत्युक्तरीत्या पुच्छत्वाकारेण रूपितः परमात्मा आनन्दमयादन्यः इति व्याख्यातं तदत्यन्तासङ्गतं ब्रह्मणः आनन्दमयादन्यत्वस्य प्रकरणविरुद्धत्वात् प्रमाणविरुद्धत्वाच्च अतः आनन्दमयाख्यस्यैव ब्रह्मत्वं परमपुरुषविधत्वञ्च एवमेव शाङ्कररामानुजभाष्यादिषु व्याख्यातं अतो विस्तरभयादधिकं न लिख्यते यत् परं ब्रह्म सदसत् कार्यकारणरूपं चिदचिदात्मकं वा "तत्सृष्ट्वा तदेवानुप्राविशत्' तदनुप्रविश्य सच्च त्यच्चाभवत्" इति श्रुतेः यत् ब्रह्म अतः परं चिदचिद्विलक्षणं—

"यस्मात्क्षरमतीतोहमक्षरादपि चोत्तमः।
अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥

इत्युक्तरीत्या चिदचिद्विलक्षणपुरुषोत्तमस्वरूपमित्यर्थः। 'अनेन " इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् " इत्युक्तरीत्या जगद्विशिष्टशुद्धब्रह्मस्वरूपमुक्तं भवति इहैकस्थमित्युक्ते यस्मिन् प्रदेशे जगन्नास्ति तत् शुद्धब्रह्मचिदचिदित्यनेन तदनुप्रविश्य सच्च त्यच्चाभवदिति श्रुत्युक्तसदसदनुप्रविष्टब्रह्मस्वरूपमुक्तं भवति अथ प्रलयादनन्तरम् एषु चिदचिदात्मकसर्वपदार्थेषु अन्नमयादिषु वा अवशेषम् अवशिष्टं सर्वेषु नश्यत्सु अविनाशित्वेन स्थितमित्यर्थः—

"समं सर्वेषु भूतेषु समवस्थितमीश्वरम्।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति॥

इति भगवद्वचनात् अविनाशित्वादेव ऋतम् सत्यस्वरूपं एवम्भूतम् यद्ब्रह्मस्वरूपं तस्य ते असुभृतः प्राणिनः अनुविधाः अनुविदधतीत्यनुविधाः अनुशरणशीलाः भक्ता इति यावत् अयदि न यदि ते भक्ताः न भवन्ति यदीत्यर्थः तदा दृतय इव, श्वसन्ति भस्त्रा इव श्वसन्ति निरर्थक् श्वासाः भवन्तीत्यर्थः अन्यथा त्वद्भजनशीलाः यदि तदा सफलजीवना एवेत्यर्थसिद्धम् असुभृतोऽयदि तेऽनुविधाः इत्यत्र असुभृतः अयदीति पदच्छेदः असुभृतोऽअयदीत्यत्र अकारस्य असुभृतो इत्यत्र तकारोत्तरे ओकारस्य पूर्वरूपस्यैकदेशो बोध्यः "अस्यादभावे स्वल्पार्थे" इति विश्वः। श्रीधर्यान्तु एतद्वाक्यस्य क्लिष्टान्वयः लक्षणा अध्याहारश्च कृतः अस्य श्लोकस्य चतुर्थपादे श्रीधरीव्याख्यायामेवं पाठः प्रक्षिप्तः सदसतः परं त्वमथेति अत्र सदसतः इति पदम् त्वमथेत्यत्र त्वमितिपदं च प्रक्षिप्तमसङ्गतं च अस्य श्लोकस्य पादचतुष्टयेपि नगणजगणभगणाः आदितः क्रमशः सन्ति-अतः सदसतः परं त्वमथेति पाठे जगणभगणयोर्हानिर्भवति अतः छन्दोभङ्गो दोषः अस्य श्लोकस्यैवमन्वयः महदहमादयः यदनुग्रहतः अण्डमसृजन् अन्नमयादिषु यः चरमः पुरुषविधः अत्र यः अन्वयः अन्नान्नमयादिषु अन्तर्यामितयानुगत इत्यर्थः। यत् ब्रह्मसदसत् सदसत्स्वरूपमित्यर्थः। यत् अतः परं यत् ब्रह्म प्रपञ्चाद्विलक्षणमित्यर्थः। अथ यत् एष्ववशेषम् अतः एतादृशस्य ते असुभृतः अनुविधाः अयदि अनुसरणशीलाः न यदीत्यर्थः तदा दृतय इव श्वसन्ति निरर्थकश्वासाभवन्ति अन्यथातु अनुसरणशीलाः यदि सफलजीवना एवेति भावः इत्यन्वयार्थः॥ १७॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

"अनिशमनुश्वसन्त्यसुभृतोन्तरितास्तव रिपवो हृतिवत्तमसि प्रविष्टाः तव गुणप्रथमाः परिहाय तमः पर्यान्ति ते पदमजस्रमनन्तसुखम्"इति पैङ्गिश्रुत्यर्थरूपस्य दृतय इवेत्यस्य श्लोकस्यायं भावः। महदहमादयः ब्रह्मरुद्राद्यभिमन्यमानानि महदहङ्कारादितत्त्वानि यस्यानुप्रवेशलक्षणानुग्रहतो ब्रह्माण्ड-

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

मत्सृजन् तस्यात्यन्तोपकारकस्य ते तव यथासुहृदः सर्वमित्रत्वादिनः तर्हि ते दृतयः कारुशालायामग्निधमननिर्मितचर्मविशेषा इवोच्छ्वसन्ति तमसि प्रविष्टाः दुःखभराक्रान्तत्वाच्छिन्नप्राणबला दीर्घश्वासं कुर्वन्ति अत्र चरमोत्तममध्यमादिषु चरमा मानुष्योत्तमाः उत्तमा इन्द्रादिदेवाः मध्यमाः ऋषिगन्धर्वाः आदिः मुक्तसमुदाये प्रथमो ब्रह्मा एषु पुरुषेषु वक्ष्यमाणम् ऋतमेकप्रकारं नित्यमिति यावत् अनन्तसुखम् अविशेषं विषयविशेषनिमित्तक्षणभङ्गुरसुखमन्तरेण स्वरूपभूता परिमितानन्दपूर्णा सदसतः परं प्रथयेत् जानाति शिष्यादिषूपदिश्य प्रख्यापयति च सः पुरुषविधस्य जीवदेहगतत्वेन तदाकारस्य तवान्वयः अनुकूला प्राप्तिर्यस्य तथा—

असक्तो देहपुरुषजीवदेहगोऽपि यत्
अथवा पुम्भिर्व्याप्तत्वात्पुम्विधः पुरुषोत्तमः॥ इति

वचनात् तादृशं त्वामाप्नोतीत्यर्थः प्रथयतीति प्रथनः॥ १७॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तदेवं सामान्याकारेण सर्वश्रुतीनां समन्वयस्तच्छुद्धभक्तिप्रतिपादनपर्यन्तो दर्शितः। अथ तद्विशेषाणामपि दर्श्यते। तत्र काश्चित् पूर्वोक्तशुद्धभक्तिप्रतिपादकश्रुत्यनुगामिन्यः श्रुतयोऽन्वयव्यतिरेकाभ्यां द्वाभ्यां पुष्णन्त्यस्तेनैव तत्र चरमत्वः स्वानुगतश्रुतिश्रान्त्यास्तत्पर्य्यवसानत्वेन ¦ दर्शयन्त्यः स्तुवन्ति दृतय इति॥ १७॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

अतस्त्वत्पदाब्जं ये न भजन्ति ते केवलं जीवच्छवा इत्याहुः—दृतय इवेत्यादि। यदि ते तव अनुविधा अनुक्षणं सेवां विदधत इत्यनुविधाः तदा असुभृतः सार्थकमसून् बिभ्रतीत्यर्थः अन्यथा दृतय इव भस्त्रा इव श्वसन्ति जीवच्छवा इत्यर्थः। यदनुग्रहतः यस्यानुग्रहात् महदहमादयः अण्डं असृजन् सच पुरुषविधः पुरुष इति विधा संज्ञा यस्य स नारायणोऽपि अत्र त्वयि अन्वयः अनुअयन इति अनुगत इत्यर्थः त्वयि विषये अनुगतवत् यः पुरुषविधो नारायणः अन्नमयादिषु पञ्चकोशेषु चरमः न केवलं तथा सदसतः परं स्थूलसूक्ष्मतः कार्य्यकारणतः परम्पारे इत्यर्थः अथ अतो नारायणादपि त्वमिति यद्वस्तु तदेषु नारायणादिषु पुरुषेषु प्रतिपाद्येषु अवशेषं अवशिष्यत इत्यवशेषः तत् अत एव ऋतं सत्यं यद्ब्रह्म इति यदुक्तं तदृतं सत्यम्॥ १७॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं साधनविधीनां निर्णयमुक्त्वा ये देवान्तरोपासनादिविधयः कर्मविधयो वा तेषां निर्णयो निरूप्यते, सूत्रात्मको महानिति तेषां किङ्करणं विधिसामर्थ्यात् नियोगन्यायेनाहोस्वित्कामनायां सत्यामभ्यनुज्ञामात्रं क्रियते आहोस्विन्निषेधार्थमनुवाद इति अथ योऽन्यां देवतामुपास्त इत्यादिषु तेषां निर्णयार्थमाह—दृतय इव श्वसन्तीति। ये लौकिकाः कामनया प्रवृत्ताः तदर्थे श्रुतिर्व्यर्थेतिसाधनसम्बन्धमात्रसार्थकत्वेऽपि इतरवैयर्थ्यापत्तेः नियोगपरतया तत्करणं मन्यन्ते ते उभयेऽपि दृतय इव श्वसन्ति एके प्राणपोषकाः तत्पोषार्थे श्रुत्युक्तं कुर्वन्ति अत्र केवललौकिकाः प्रकरणेनैव निषिद्धाः अत एव नोच्यन्ते ब्रह्मविद्यामेव विचारविषयत्वात् वैदिकाः सर्वे एव ब्रह्मवादिनो भवन्तीति कामनापरत्वं विधिपरत्वं वा ये मन्यन्ते वेदानां ते निन्द्यन्ते प्राणपोषका इति प्राणोपाधिग्रस्ता इति च दृतयो हि अतप्तानेव सर्वानेव धातून् तप्तान् कुर्वन्ति अतस्ते परतापकर्त्तारः बहिर्मुखाः समर्थाः सन्तः अन्यानेव पीडयन्तीति सुतरां पशुघातकाः "यो नः शपादशपतः" यो नः सपत्नः "यो मां द्वेष्टि जातवेदः" इत्यादिश्रुतिभिः अलौकिकप्रकारेणापि सर्वोपद्रवकर्त्तारः ते मृतप्राया एव इहामुत्रार्थफलरहिताः परोपद्रवार्थमेव जीवन्तीत्यर्थः। ये पुनः "यज्ञेन यज्ञमयजन्त" इति प्रकारेण यज्ञादिभिः त्वदावरणत्वेन देवतान्तरोपासनां च कुर्वन्ति ते त्वदनुविधाः ये त्वदनुविधाः अनुविदधतीत्यनुविधाः अनुवर्त्तिनो भक्ताः ते एवासुभृतः सफलप्राणाः न तैः परोपद्रवः सम्भवतीति किञ्च ये पूर्वोक्ताः तेषां दूषणान्तरमुच्यते महदहमादय इति "कृतघ्ने नास्ति निष्कृतिः" इति भगवदाज्ञया महदादिभिः कृते ब्रह्माण्डे तत्र स्थित्वा तैरेव निष्पादितं शरीरम्परिगृह्य तेषां तत्स्वामिनो वा ये अनुविधानं न कुर्वन्ति ते कृतघ्नाः अथ च ये भगवत्सेवकाः तेषां सर्वभावेन भजनं युक्तमिति वक्तुं महदादयोऽपि भगवत्सेवार्थं भगवत्क्रीडाभाण्डं ब्रह्माण्डं ससृजुरिति निरूपितं करणेऽपि तेषां न स्वतः सामर्थ्यं किन्तु यदनुग्रहादेव अतो भगवच्छेषतया देवान्तरभजने न कोऽपि दोष इत्यपि सूचितं प्रकारान्तरेणाप्युभयेषां निन्दास्तुती निरूप्येते— पुरुषविधोन्वयोऽत्र चरमोऽन्नमयादिषु य इति। अत्र देहे पुरुषविधोऽन्वयः यश्च भगवान् अन्नमयादिषु चरमः यथा भाण्डकर्त्तारः प्रथमतः आकृतिं कृत्वा पश्चात्तान् पूरयन्ति अन्यथा पूरितभाण्डनिर्माणं न भवति तादृशो देहः अन्ये तु घटादयः कृतिसाध्याः ततोऽत्र देहे कश्चित् आन्तरो वर्त्तते य एवम्विधः यदुपरि समागताः अन्नरसादयो भवन्ति अन्यथा भस्मोत्कर इव राशीभूताः स्युः अतो योऽन्तः स्थितः प्रत्यहं तादृग्भावं सम्पादयति सोऽत्यन्तं मान्यो भवति "तस्य पुरुषविधतां अन्वयं पुरुषविधः" इति श्रुतौ तस्य भगवतः पुरुषप्रकारमेव लक्षीकृत्य अयमन्नमयादिः पुरुषविध इति अस्य पुरुषविधत्वं भगवदन्वयेनैव निरूपितं पुरुषविधस्त्वन्वयः वंशन्यायेन समागत इत्यर्थः तन्त्वन्नमयान्वय एव भगवतो भवतु को विशेष इति चेत्तत्राह—अत्रान्नमयादिषु यश्चरम इति। अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेषु चरमानन्दमयः स तु सर्वान्तरः आनन्दमयत्वादेव न तस्य प्रयोजनमयन्दास्ति। अन्यं च नापेक्ष्यत इति सूचितं श्रुतस्थितो ह्याकारसमर्पको

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भवति तस्य पुरुषविधतामित्यत्र प्रकृतः षष्ठ्या तेनोच्यते तस्यैव पूर्वोक्तत्वात् पूर्वोक्त एव हि परामृश्यते सदा एष पुरुषविध एवेति पूर्ववाक्य अयमिति सर्वत्रान्नमय एव ग्राह्यः अनन्तरोक्तो वा नतु पूर्वपुरुषविधत्वेनोत्तरस्य पुरुषविधत्वमिति कदाचिदपि मन्तव्यं भगवांश्चानन्दमयः अत्र कश्चित् कोशप्रतिपादकाः स्वार्थे शाकप्रतिपादका एव आनन्दमयस्य त्यागे त्वोकत्वेनावशेषात् मयट्प्रत्ययानुपपत्तिश्च सूत्रकारेणैव परिहृता प्राचुर्यादिति "द्व्यचश्छन्दसि"(४·३·१५०)इति व्याकरणेऽपि विकारे आनन्दशब्दात् ऽयचः मयड्विधानाभावः तस्मात्साकारब्रह्मद्वेषादेव कश्चित्तथा व्याख्याता ब्रह्मपदश्रुत्या वा ब्रह्मपुच्छं प्रतिष्ठेति आनन्दमयस्य पुच्छत्वेन ब्रह्मनिरूपणात् हंसाकृतित्वकथने पुच्छत्वं परमात्मन इति सिद्धान्तापरिज्ञानात् अन्यथा ज्ञानभक्तिमार्गयोरेकफलत्वं न स्यात् भगवच्चरणस्याब्रह्मत्वात् इत्यलं विस्तरेण भाष्ये विस्तरस्योक्तत्वात् अतः योऽन्तः स्थित आनन्दं सम्पादयति पुरुषत्वं चैतादृशं ये न मन्यन्ते ते कृतघ्ना इति किं वक्तव्यम् ये वा भजन्ते तेषां युक्तमिति वा किं वक्तव्यमित्यर्थः किञ्च यत्किञ्चिज्जगति कार्यं तस्य सर्वस्य त्वमेव नियन्ता तदाह सदसतः परं त्वमिति तस्य सदसतः कार्यकारणयोः परं नियन्तृत्वेन विचारितं ब्रह्म त्वमेवेत्यर्थः किञ्च न केवलं नियामकत्वमात्रं किन्तु भिन्नप्रक्रमेण भेदं परिहृत्य एतद्रूपत्वेनैवोत्तरमुच्यते यदेष्ववशेषमिति अवशिष्यत इत्यवशेषः एतत्पूर्वमुपपादितं यथा सर्ववस्तुष्वयं भगवानवशिष्यत इति अतः पर्यवसानन्यायेन तस्यैवानुसरणं कर्तव्यं सर्वत्र नान्यस्य नश्वरस्येति हेतुरुक्तः उभयत्रापि किञ्च यदेषु ऋतं तद्भगवानेवेत्यर्थः अवशेषमात्रेण न कार्यं सेत्स्यति तस्यापि कालान्तरे नाशसम्भवात् घृतादिवत् अतो हेत्वन्तरमुच्यते ऋतमिति एवं पञ्चहेतवो निरूपिताः स्तुतौ निन्दां च—

"कृष्ण एव सदा सेव्यो निर्णीतः पञ्चधा बुधैः
सारविद्भिः प्रेरकश्च सुखदः शेषसत्यदः" ॥

॥४॥ १७ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पूर्वश्लोकोक्तभजनव्यतिरेके जनाः कीदृशाः स्युरित्यपेक्षायामाहुः—दृतय इवेति । ते जनाः दृतय इव श्वसन्ति त्वद्भक्तिहीनत्वेन मृतकल्पाधर्माश्च प्राणत्वेऽपि भस्त्रा इव वृथाश्वासा इत्यर्थः । यदि तु ते तव अनुविधा अनु विदधत्यानुकूल्यं कुर्वन्तीत्यनुचरा भक्ता इति यावत् तदैवासुभृतः प्राणधारिणो जीवन्तो नरा उच्यन्त इत्यर्थः नन्वभजतामपि सूक्ष्मः स्थूलश्च देहो जीवन्नेव दृश्यते नतु म्रियमाणस्तत्राहुः महदहमादयश्चित्ताहङ्कारबुद्धिमनःश्रोत्रचक्षुरादयो देहद्वयारम्भकाः यदनुग्रहतः यदीक्षणप्राप्तानुग्रहादेव अण्डवत्समष्टिव्यष्टिशरीरम् असृजन् "नमाम ते देव पदारविन्दं प्रपन्नतापोपशमातपत्रम्" इत्यादि तृतीयोक्तेस्ते चित्ताहङ्कारादयो भजन्त प्रवृत्ता एव दृष्टाः अतो येषां चित्तश्रोत्रादयो नैव भजने प्रवर्तन्ते ते देहा नैव चित्तश्रोत्रादिमन्तोऽत एव देहा भस्त्रा एव मृता एवेति भावः । नन्वहं कीदृशाकारः यं मां ते भजेरन्नित्यत आहुः—पुरुषविधः पुरुषस्य विधेव विधा आकारो यस्य सः तस्मादेवम्भूतो भगवानेव त्वं सर्वभूतेषु परमात्मा सर्वबृहत्तमानन्दरूपं ब्रह्म च भवसीत्याहुः, अन्नमयादिषु अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाः स्थूलदेहप्राणान्तःकरणजीवपरमात्मानः क्रमेण वस्तिपुच्छपृथिवीपुच्छाथर्वाङ्गिरःपुच्छमहःपुच्छब्रह्मपुच्छा ये पञ्च पुरुषाः श्रुतावुक्तास्तेषु मध्ये यश्चरमः आनन्दमयः सत्वमिति सम्बन्धः । ननु तर्ह्यन्नमयाद्याः किमहं न भवामि तत्र विशिंषन्ति अन्नमयोऽत्र अत्र येष्वन्नमयादिषु अन्वेति अनुप्रविशतीत्यन्वर्थः सत्वं तव कारणत्वादन्नमयादीनां तु त्वत्कार्यत्वादेतेऽपि त्वमेव भवसि किन्तु न स्वरूपेण स्वरूपेण तु त्वमानन्दमय एव सर्वकारणं परमात्मेत्यर्थः । किञ्च यत् येषु सर्वेष्वपि मध्ये अवशेषं परमचरमं रसो वै स इति श्रुत्या रसत्वेन प्रतिपादितं श्रीमान् स्मरो मूर्तिमानिति श्रीभागवते विवृतं सदसतः परम् अन्नमयादिस्थूलसूक्ष्मसर्वविलक्षणं यद्वा सतः सर्वश्रेष्ठादानन्दमयाद् असतस्ततोऽपि निकृष्टाद्विज्ञानमयाच्च परमन्यत् योऽसौ जाग्रत्स्वप्नसुषुप्तिमतीत्य तुर्यातीतो गोपाल इति श्रीगोपालतापनीश्रुत्युक्तं ब्रह्मणोहि प्रतिष्ठाहमिति गीतास्पष्टीकृतं सर्वोत्कृष्टं कृष्णस्वरूपं वस्तु तदपि ऋतं अस्माभिः श्रुतिभिस्तपः प्राप्तगोपीस्वरूपाभिः प्राप्तमनुभूतं वा अर्त्तेर्गत्यर्थत्वाद्गत्यर्थानां च प्राप्त्यर्थत्वज्ञानार्थत्वाच्च अत्र—

असूर्य्यानामतेलोका अन्धेन तमसावृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥

इत्याद्याः भक्त्यभावे दोषप्रतिपादिकाः असूर्या—

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
विष्णुभक्तिपरो दैव आसुरस्तद्विपर्य्ययः ॥

इत्याग्नेयविष्णुधर्मोक्तेरसुराणां विष्णुभक्तिहीनानां प्राप्य इत्यर्थः "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तं पीठगं येतु यजन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्" इत्याद्या भक्तिसत्त्वे गुणप्रतिपादिकाः श्रुतयः स वा एष पुरुषोऽन्नरसमयस्तस्येदमेव शिरः अयं दक्षिणः पक्षः अयमुत्तरः पक्षः अयमात्मा इदं पुच्छं प्रतिष्ठा" इत्येवमन्नमयप्राणमयमनोमयविज्ञानमयपुरुषनिरूपणानन्तरं पञ्चम आनन्दमयो निरूपितो यथा "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तरात्मा आनन्दमयस्तस्य प्रियमेव शिरो मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्ष आनन्द आत्मा ब्रह्मपुच्छं प्रतिष्ठा" इति तैत्तिरीयकश्रुतिर्जीवात्मपरमात्मब्रह्मप्रतिपादिकाः अत्र "यो विज्ञाने तिष्ठन् विज्ञानान्तरो यस्य विज्ञानं शरीरमिति जीवान्तर्यामिप्रतिपादकश्रुतेरात्मनि तिष्ठन्निति श्रुत्यन्तरवाचा विज्ञानमयो जीवात्मैवोक्तस्तदनन्तरोक्त आनन्दमयः सर्वान्तर्यामी परमात्मैव परमोपास्य इति वैष्णवमते व्याख्या ततोऽत्र पुत्रदर्शनजानन्दादिकं प्रियादिकं प्रियादिशब्दैर्न व्याख्येयं किन्त्वेकस्यैव परमानन्दरूपस्य परमात्मन आनन्दोदयोत्कर्षतारतम्यादेव प्रियादीनां चतुर्णां तत्तन्नामभेदः ब्रह्मणस्तु सर्वतोऽपि बृहत्तमानन्दत्वादानन्दप्रतिष्ठात्वं प्रतिष्ठीयतेऽस्यामिति प्रतिष्ठा आश्रयः "ब्रह्मणोहि प्रतिष्ठाहं" इत्युक्तेः "रसो वै सः" इति सर्वोत्तमश्रुत्युक्तेश्चास्यापि प्रतिष्ठात्वात् कृष्णः सर्वबृहत्तमानन्दस्तदवाभिरूपो

उदरमुपासते य ऋषिवर्त्मसु कूर्पदृशः परिसरपद्धतिं हृदयमारुणयो दहरम् ।
तत उदगादनन्त तव धाम शिरः परमं पुनरिह यत्समेत्य न पतन्ति कृतान्तमुखे ॥ १८ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

गोपालतापनीश्रुत्या तुरीयादपि विलक्षणत्वेन प्रतिपादितः प्रेमरसमयवपुरुषाख्येषु परमावधिरूढकः "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इत्युक्तेरन्तर्याम्यानन्दमयः खलु यस्यैक एवांशः अत एव प्रेक्षावच्छिरोमणीनां श्रुतीनां कृष्णस्यैवोपासना वृहद्वामनं दृष्टा प्राप्तिश्च गोपीत्वेन "स्त्रिय उरगेन्द्रभोगभुजदण्ड" इति पद्येन वक्ष्यते अतो भगवत्स्वरूपेष्वपि मध्ये कृष्णमेव सर्वोत्कृष्टतया श्रुतिभिः प्रतिपादितमवधार्य नारदः श्रीनारायणस्यापि पुरःस्थितो "नमस्तस्मै भगवते कृष्णायामलकीर्त्तये" इत्युच्चारयन् कृष्णमेव नमस्करिष्यते ॥ १७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

एतदेवान्वयव्यतिरेकेण द्रढयति-यदि तेऽनुविधान्तव गुणत्रयकारिणा तवानुयायिनस्तर्हि असुभृतः प्राणवन्त इत्यन्वयोक्तिः व्यतिरेकमाह—अन्यथा दृतय इव श्वसन्ति अग्निज्वालनसाधनभूतचर्मैव प्राणहीना इव श्वसन्ति यथा तच्छ्वसनमपि परतापायैव तद्वत्तेषां जीवनमपीति जीवन्मृता इत्यर्थः । तथा च पैङ्गी श्रुतिः " अनिशमनुश्वसन्त्यसुखोद्धारितास्तव रिपवो इति यत्तमसि प्रतिष्ठाः तव गुणपूषनाः परिहाय तमः प्रयान्ति परमअक्षमनन्तसुखम्" इति । भारते सभापर्वणि नारदवचनम्—

"कृष्णं कमलपत्राक्षं नार्चयिष्यन्ति ये नराः ।
जीवन्मृतास्तु ते ज्ञेया न सम्भाष्याः कदाचन ॥

इति अनेन तेषां सम्भाषणादिकर्ता तद् गतिं व्रजतीत्यर्थः सूचितः चेतनाचेतनवस्तुजातं त्वच्छक्त्यैव कार्यकरणे सामर्थ्यवदित्याह—महदहमादयस्तदभिमानिन्यो देवताः यदनुग्रहतः यस्य तव तेषां तत्त्वानां तृतीयस्कन्धोक्तेन स्तोत्रेण प्रसन्नस्य अनुग्रहोन्मुखस्यानुग्रहतः शक्तिप्रदानेनाण्डमसृजन् उपलक्षणं चैतत् कामीष्टमप्राप्नुवन्नित्यर्थः । शक्तिप्रदातृत्वेनोक्ता सर्वोत्कृष्टत्वेन स्तौति योऽन्नमयादिषु अन्नमयो भूत्वा चरमः आनन्दमयस्त्वमासि मयट्प्रत्ययकथनेन प्रतीतं विकारार्थं वारयति यस्सतः परं स्थूलसूक्ष्मादन्नमयादेः परमत्यन्तोत्कृष्टं घनीभूतानन्दमिति यावत् यस्मादेष्वहङ्कारादिषु लीयमानेषु अवशेषं तेषामधिभूतम् अत एव ऋतं सत्यम अप्रच्युतस्वरूपं तथाच श्रुत्याभ्यासः "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्ति" इत्यादि अनेन आनन्दमयोऽभ्यासात्" इत्यधिकरणं व्याख्यातम ॥ १७ ॥ ४ ॥

---

भाषा टीका ।

आपके आश्रय के योग्य मनुष्यादि जन्म पाय कर भी जो आपको छोड़कर यदि विषय भोगसे प्राण इन्द्रियों की तृप्ति करने में लगरहे हैं, वे तो प्राणी, चर्म की धौंकनी के समान वृथाहि श्वास लेते हैं जिस आपके अनुग्रह से महत्तत्त्व अहंकार तत्त्व से आदि लेकर आकाशादि पञ्चभूत तथा उनके सूक्ष्म प्रपञ्चरूप और एकादश इन्द्रिय इन सबने मिलकर ब्रह्माण्ड को उत्पन्न किया शरीर प्राण मन विज्ञान आनन्द मय इनमें पुरुषाकार रूपसे जिसका निरूपण किया गया है और पुरुषस्याकार धर्म का जिसमें सम्बन्ध है एतादृश जो सत्य का आनन्द मय स्वरूप है वह आपहि हो जीवात्मा नहिं और जो जड़ चेतन से परे हैं सो भी आपहि हो जीवात्मा नहि है और शरीर प्राण मन विज्ञान मय जीव स्वरूप इन सब के लय होनेपर जो निर्विकार आनन्द स्वरूपी अवशिष्ट रहजाता है वह भी आपहि हो जीवात्मा नहि है ॥ १७ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं तावत्सर्वात्मके परमेश्वरे सर्वश्रुतिसमन्वयेन सङ्गजनीयत्वमुक्त्वाऽभक्तनिन्दया च तदेव द्रढीकृत्येदानीमनन्तगाम्भमहिमनि प्रथमं तावदुपाध्यालम्बनमुपासनमुदरं ब्रह्मेति शार्कराक्षा उपासते हृदयं ब्रह्मेत्यारुणयो ब्रह्मा हैवैता इत ऊर्ध्वन्त्वेवोदसर्पत्तच्छिरोऽश्रयत "इत्याद्याः श्रुतयो विदधतीत्याह—उदरमुपासत इति । ऋषिवर्त्मसु ऋषीणां सम्प्रदायमार्गेषु ये कूर्पदृशस्ते उदरालम्बनं मणिपूरकस्थं ब्रह्मोपासते ध्यायन्ति शार्कराक्षा इति श्रुतिपदस्य प्रतिपदं कूर्पदृश इति कूर्पं शर्करा रजो विद्यते दृक्ष्वक्षिषु येषां ते तथा रजःपिहितदृष्टयः स्थूलदृष्टयः इति यावत् उदरस्य हृदयापेक्षया स्थूलत्वात् यद्वा कूर्पं सूक्ष्मं सूक्ष्मदृशा इत्यर्थः । तदा हृदयस्थं सूक्ष्ममेवाऽऽलक्ष्य तत्प्रवेशाय प्रथममुदरमुपासत इति भावः । आरुणयस्तु साक्षाद्धृदयस्थं दहरं सूक्ष्ममेवोपासते हृदयविशेषणं परिसरपद्धतिमिति परितः सरन्ति प्रसर्पन्तीति परिसरा नाड्यस्तासां पद्धतिं मार्गं प्रसरणस्थानमित्यर्थः विशेषणस्य फलमाह—तत इति । ततो हृदयात् भो अनन्त ! तव धामोपलब्धिस्थानं सुषुम्नाख्यं परमं श्रेष्ठं ज्योतिर्मयं शिरो मूर्द्धानं प्रत्युदगादुदसर्पत् मूलाधारादारभ्य हृदयमध्याद्ब्रह्मरन्ध्रं प्रत्युद्गतमित्यर्थः । कथम्भूतं धाम यत्समेत्य प्राप्य पुनरिह कृतान्तमुखे मृत्युमुखे संसारे न पतन्ति तथा च श्रुतिः ' शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति ॥ १८ ॥

उदरादिषु यः पुंसां चिन्तितो मुनिवर्त्मभिः ।
हन्ति मृत्युभयं देवो हृद्गतं तमुपास्महे ॥ ५ ॥

---

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी।

अथ पूर्व्वोक्तश्लोकचतुष्टयस्यार्थमनुवदन् उदरमित्यस्याभासं रचयति—एवं तावदिति। तत्र सर्व्वात्मके इति बृहदुपलब्धस्यानुवादः परमेश्वर इति जयजयेत्यस्य सर्वश्रुतिसमन्वयेनेति निगमोनुचरेदित्यस्य अत ऋषयो दधुरित्यस्य च सम्भजनीयत्वमिति इति तत्र सुरय इत्यस्यानुवादः अभक्तनिन्दयेति इतय इवेत्यस्येति। तथाप्यत्र किञ्चिदपि तत्रैव सम्भजनीयत्वमेव उदरं वैश्वानररूपेण ब्रह्मणाधिष्ठितत्वाल्लक्षणया वैश्वानरोपाधिकं ब्रह्मेत्यर्थः। शार्कराक्षस्यापत्यानि शार्कराक्षा ऋषय हृदयं तत्स्थं दहराकाशाख्यं ब्रह्म अरुणस्यापत्यान्यारुणय ऋषय उपासते ता ते उदर हृदये ब्रह्मा ब्रह्मणी एव ह स्फुटं निपातरूपहशब्दो वाक्पूरणे उभयत्र औ स्थाने डादेशश्छान्दसः ता ह ऊर्द्धत्वं चेत्येव पाठः। इत इति तु लेखकप्रमाद एव तत्र ब्रह्म पुनः सुषुम्नानाडीरूपेणोर्द्धभागे चोदसर्पद्गच्छन् तद्ब्रह्मोर्द्धमुद्गम्य शिरोऽश्रयत आश्रितवत् तत्र चक्षुरादिज्ञानेन्द्रियाणां प्रकाशात् ब्रह्मप्राप्तिसाधनब्रह्मरन्ध्राधारत्वाच्च ब्रह्मोपासकानां स्थूलदृष्टित्वकथनमश्लीलमित्यस्वरसाद्यद्वेति पद्धतिमित्यजहल्लिङ्गमिति हृदयविशेषणत्वेऽपि न यत्तत्वं परिसरपद्धतिमिति वाच्ये ह्रस्वोऽच्यागो संज्ञाच्छन्दसो बहुलमिति सूत्रेण ह्रस्वश्छान्दसः शतं चैका एकोत्तरं शतमित्यर्थः। तासां मध्ये एका सुषुम्नाख्या मूर्द्धानं ब्रह्मरन्ध्रङ्गता विष्वङ्नानागतयः अन्या नाड्यः उत्क्रमणे प्राणोत्क्रमणे संसारगमनद्वारभूता भवन्तीत्यर्थः॥ १८॥

---

श्रीकविचूडामणिचक्रवर्त्तिकृतान्वयबोधिनी।

एवं तावत्सर्वात्मके परमेश्वरे सर्वश्रुतिसमन्वयेन सद्भजनीयत्वमुक्त्वा अभक्तनिन्दया च तदेव दृढीकृत्येदानीमनवगाह्य महिमनि प्रथमं तावदुपाध्यात्मलम्बनमुपासनं श्रुतयो विदधतीत्याह— उदरमिति। ये कूर्पदृशः स्थूलदृष्टयः ते ऋषिवर्त्मसु ऋषीणां सम्प्रदायमार्गेषु उदरं उदरालम्बनमणिपूरस्थं ब्रह्म उपासते ध्यायन्ति आरुणयस्तु हृदयं साक्षात्कृदयस्थं दहरं सूक्ष्ममेव ब्रह्म उपासते कथम्भूतं हृदयं परिसरपद्धतिः परितः सरन्ति प्रसराः नाड्यः तासां पद्धतिं मार्गप्रसरणस्थानमित्यर्थः विशेषणफलमाह— तत इति। हे अनन्त तव धाम त्वदुपलब्धिस्थानं सुषुम्नाख्यं परमं श्रेष्ठं ज्योतिर्मयं ततो हृदयाच्छिरो मूर्द्धानं प्रति उदगात् उदसर्पत मूलाधारमारभ्य हृदयमध्याद्ब्रह्मरन्ध्रं प्रत्युद्गतमित्यर्थः। किन्तत् यद्धाम समेत्य प्राप्य पुनरिह कृतान्तमुखं संसारेणापतन्तीतिवत् उपाध्यालम्बनमुपासनमाह श्रुतिः उदरं ब्रह्मेति शार्कराक्षा उपासते हृदयं ब्रह्मेत्यारुणयो ब्रह्मा हैव त ऊर्द्धत्वाचोदसर्पत तच्छिरोऽश्रयतेत्यादि अर्थः वैश्वानरभूतेन ब्रह्मणाधिष्ठितत्वादुदरं ब्रह्मेति शार्कराक्षस्यापत्यानि शार्कराक्षाः ऋषय उपासते अरुणस्यापत्यानि आरुणय ऋषयः हृदयं उदरादूर्द्ध्वप्रदेशं एव ब्रह्मोपलब्धिस्थानत्वात् ब्रह्मेत्युपासते ब्रह्मा हैवता ह स्फुटं ताते उदरोरसी ब्रह्मा ब्रह्मणी एव ते उदरोरसी एव भवतः इत्यर्थः ब्रह्मा ता इति प्रथमाद्विवचनान्तं पदं छान्दसत्वदाकारः तद्ब्रह्म ऊर्द्धत्वेचोदसर्पत ऊर्द्धमुत्क्रम्य गच्छत् शिरो श्रयते अभजत् शिरसि चक्षुः श्रोत्रा-

त्रीणि करणानि स्वस्वस्थाने पृथक् निविश्य [illegible] दर्शनादिव्यापारं कारयित्वाचास्त इत्यर्थः तत उदगादनन्तेत्यत्र श्रुतिः" शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका तयोर्द्धमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवन्ति" इति अर्थः एकोत्तरशतं नाड्यो हृदयस्य सम्बन्धिनो भवन्ति तासां मध्ये, एका नाडी उर्द्धमभिनिःसृता तया ऊर्द्ध्व आ समन्तादयन् गच्छन् उपासक अमृतत्वं मोक्षमवेति अन्या नाड्यः विष्वङ्नाना गतयस्तिर्यक्सर्पिण्यः उत्क्रमणे संसारभ्रमणद्वारं भवन्ति वर्त्तन्ते इति॥ श्रीस्वामिनां श्लोकः॥ उदरादिषु यः पुंसां चिन्तितो मुनिवर्त्मभिः। हन्ति मृत्युभयं देवो हृद्गतं तमुपास्महे॥ सुगमम्॥ १८॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

उदरमित्यादि टीकायामुदरं ब्रह्मेत्यादिश्रुतौ वैश्वानरभूतेन ब्रह्मणाधिष्ठितत्वादिति भावः। हृदयं ब्रह्मेति ब्रह्मण उपलब्धिस्थानत्वात् ब्रह्मा हैवेति ब्रह्मा ह एवेति च्छेदः ब्रह्मा ब्रह्मणी एवेति समुदायार्थः ह स्फुटं ता ह इति शब्दो य वाक्पूरणे ता ते इत्यर्थः उभयत्र औ स्थाने डादेशश्छान्दसः उदरोरसी ते ब्रह्मणी एवेति समुदायार्थः पुनरपि ऊर्द्ध्वत्वेच उदसर्पत् तद्ब्रह्म ऊर्द्धमुत्थिप्य शिरोऽश्रयत आश्रितवत् तत्र चक्षुःश्रोत्रादीनां महेन्द्रियाणां प्रकाशात् शतमिति विष्वङ्नाना गतयः अन्याः संसारगमनद्वारभूता इत्यर्थः अथ स्वव्याख्यया तदेवं तासु श्रुतिषु तत्र समन्वितासु ताभिः स्पष्टमप्रस्तुताः काश्चिदन्याः श्रुतयोऽपि तेषां तदनुगतिमेव दर्शयन्ति तत्र च प्रथमं क्रमसोपानतया पाञ्चात्मवर्णनमयं पूर्वोक्तश्रुतिसाम्याल्लब्धावसराः क्रममुक्तिवर्त्मदर्शकयोगोपदेष्ट्रृश्रुतयः स्तुवन्ति उदरमिति उदरं तत्स्थितवैश्वानरान्तर्यामिणमन्नरसादिप्रवर्त्तनया क्रियाशक्तिदायकं—

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्॥

इति श्रीगीतोपनिषद्भ्यः हृदयं तत्स्थितजीवान्तर्यामिणं बुद्ध्यादिप्रवर्त्तनया ज्ञानशक्तिदायकं "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्त्तकः अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः इतिश्रुतेः अन्यस्तैः क्रमस्तु द्वितीयस्कन्धोक्तो ज्ञेयः एवं व्यष्टिमारभ्य व्याख्यातं समष्टिमारभ्यत्वेवं ज्ञेयं उदरं नभस्तलं वैराजस्य नाभिविशिष्टोदरं नभस्तलं नाभिसरो गृणन्तीति द्वितीयोक्तेः हृदयं स्वर्गरूपं वैराजस्योरःस्थलं उरःस्थलं ज्योतिरनीकमाशुरिति तत्रैवोक्तेः किम्भूतं परिसरपद्धतिं त्वन्निकटप्रापकमित्यर्थः, दहरं दुर्गमं ततस्तस्मादुपासनद्वयात् तव धाम सुषुम्णाख्यं करणभूतं सुषुम्णया ब्रह्मपथेन शोधितवेति द्वितीयोक्तेराधिदैविकी च सुषुम्णा ज्योतिर्मयी वर्त्तते शिरः परमकूर्मभूतमुदसर्पत् शिरो ब्रह्मलोकः सत्यञ्च शीर्षाणि सहस्रशीर्ष्णः इति तत्रैवोक्तेः ततोऽपि परमं श्रेष्ठं वैकुण्ठपुरं प्रविशन्तीत्यर्थः। तथा सुषुम्णयोपासकाः श्रीवैकुण्ठं व्रजन्तीति भावः यद्वैकुण्ठपुरं समेत्य नावर्त्तन्ते' उपासकाः श्रुतयस्तु दर्शिता एव॥ १८॥

---

…सुदर्शनसूरिकृतशुकपक्षीयम्।

शरीरान्तस्स्थानभेदेन उपासनाभेदान् विवक्षन् भगवदुपासकानां मोक्षफलमाह—उदरमिति । ऋषिवर्त्मसु ज्ञानमार्गेषु निष्ठिताः आरुणयः अरुणवंश्याः ऋषयस्तु साक्षात् हृदयस्थं त्वाम् उपासते कूर्पदृशः सूक्ष्मदृशः उदरमुपासते उदरस्थं वैश्वानररूपं त्वामुपासते परिसरत्यस्याम् आत्मेति परिसरपद्धतिः सुषुम्नामार्गोन्तः उपासते अनुसन्दधते हृदयं हृदयगतं दहरं दहरपरिमाणत्वात् दहराकाशशब्दवाच्यं त्वाम् उपासते । हे अनन्त ! ततः पद्धतेः शिर उदगात् भ्रूमध्यगतं त्वामुपासने पुनरिह यत् सङ्गं कृत्वा कृतान्तमुखे मृत्युमुखे न पतन्तीत्यर्थः । "शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभि निस्सृतैका तयोर्द्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवन्ति" इति श्रुतिः ॥ १८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अस्तु कारणत्वेन उपास्यत्वं के के कुत्र कुत्र कथं कथमुपासते कीदृशं च फलमित्यपेक्षायामुपासनभेदानभिधाय सर्वेषामप्युपासकानां मोक्षैकफलत्वमाहुः—उदरमिति । ऋषिवर्त्मसु वेदान्तविहितेषु उपासनामार्गेषु ये कूर्पदृशः सूक्ष्ममतयः तत्र केचिदारुणयः अरुणवंश्यास्तदनुयायिनो दहरविद्यानिष्ठाः इति यावत् हृदयं हृदयगतं दहरं दहरशब्दवाच्यं हृदयपुण्डरीकान्तर्गताकाशरूपं त्वामुपासते केचित्तु वैश्वानरविद्यानिष्ठाः उदरं उदरस्थंजाठराग्निशरीरकं त्वाम् उपासते केचित्तु परिसरपद्धतिं परितः सरति व्याप्नोतीति तथा सुषुम्णाख्या नाडी सैव पद्धतिर्मार्गस्तं सुषुम्णामार्गस्थं त्वाम् उपासत इत्यर्थः । सुषुम्णायाः हृदयादारभ्य शिरःपर्यन्तव्याप्तेः तदभिप्रायेण परिसरपद्धतिमित्युक्तं तदेव स्पष्टयितुं परिसरवर्त्मं विशिषन्ति ततः हृदयादारभ्येत्यर्थः । हे अनन्त ! यत् तव परमं धाम उपासनस्थानं शिरोभ्रूमध्यं तत्पर्यन्तं व्यतुदगादूर्ध्वमाक्रमत् " शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका "इति श्रुत्यर्थोऽत्राभिसंहितः तव धाम शिरः परमं इत्यनेन शिरोपि त्वदुपासनस्थानमित्युक्तं भवति "एष देवपथो ब्रह्मपथः तयोर्ध्वमायन्नमृतत्वमेति " । एतेन प्रतिपाद्यमाना इमं मानवमावर्त्तं नावर्त्तन्त "इत्यादि श्रुत्यर्थमभिप्रेत्य विशिषन्ति यन्मध्यनाडीवर्त्म शिरो वा सर्वेप्युपासकाः समेत्य प्राप्य पुनरिह प्रकृतिमण्डले कृतान्तमुखे मृत्युमुखे संसारे न पतन्ति यदिति वर्त्माभिप्रायको नपुंसकनिर्देशः ॥ १८ ॥

---

श्रीनिवाससूरकृततत्त्वदीपिका।

अथ शरीरान्तःस्थानभेदेनोपासनाभेदान् विवक्ष्यन् भगवदुपासकानां मोक्षफलमाह—उदरमिति । ऋषिवर्त्मसु ज्ञानमार्गेषु निष्ठा आरुणयः अरुणवंश्या ऋषयः कूर्पदृशः सूक्ष्मदृशः उदरमुपासते उदरस्थं वैश्वानररूपं त्वामुपासते तथा च सूत्रकारः 'वैश्वानरः साधारणशब्दविशेषात् (१-२-२५) तदुक्तं भगवतैव—

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् "॥ इति

हृदयं हृदयायतनं त्वामुपासते दहरपरिमाणत्वाद्दहराकाशशब्दवाच्यं तथा च सूत्रं "दहर उत्तरेभ्यः(१ ३-१३)इति दहराकाशः परं ब्रह्म कुतः उत्तरेभ्योपहतपाप्मत्वादिपरमात्मासाधारणधर्मेभ्यो हेतुभ्य इति सूत्रार्थः पारं सरत्यस्यामात्मेति परिसरपद्धतिः सुषुम्नामार्गस्तामुपासते अनुसन्दधते तदो हृदयायतनतात् तव धाम प्राप्तिस्थानं शिरो मूर्द्धानं प्रति उदगात् उदक्रमत् कीदृशः सुषुम्नामार्गः पुनरिह यत्समेत्य यत्सङ्गं कृत्वा कृतान्तमुखं मृत्युमुखं न पतन्तीत्यर्थः तथा च श्रुतिः " शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिस्सृतैका तयोर्द्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवन्ति "इति । स्मृतिरपि—

"ऊर्द्ध्वमेकं स्थितं तेषां यो भित्वा सूर्यमण्डलम् ।
ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम् ॥

इति ॥ १८ ॥

---

योगिरामानुजाचार्यकृतसरलाख्याख्या।

अथ उपासना भेदानाहुः—उदरमिति । ऋषिवर्त्मसु ऋषीणां सम्प्रदायमार्गेषु ये कूर्पदृशः कूर्पेण शर्करया रजसा युक्ताः दृशः दृष्टयः येषां ते स्थूलदृष्टयः इत्यर्थः । ते उदरं उदरे मणिपूरकाख्यचक्रस्थं ब्रह्मोपासनं ध्यायन्ति उदरस्य हृदयापेक्षया स्थूलत्वात् तदुपासकानां स्थूलदृष्टित्वम् आरुणस्य सूर्यस्य ऋषयो सम्प्रदायोपदेशसम्बन्धिनः विवस्वान् मनवे प्राहेति गीतावचनात् तत्सम्प्रदायवंशजा इत्यर्थः । " अथवा योगिनामेव कुले भवति धीमता " मिति च भगवदुक्तेः परिसरपद्धतिं परिसरस्य समीपदेशस्य पद्धतिः परिसरपद्धतिः समीपदेशसम्बन्धिमार्गः एवंरूपं हृदयस्थं दहरं दहराख्यं परमात्मानं " दहर उत्तरेभ्यः "इति सूत्रप्रतिपादितं उपासते भजन्ति परिसरपद्धतिमिति दहराख्यस्य भगवतः विशेषणं परिसरः समीपः पद्धतिर्मार्गरूप इत्यर्थः । " सर्वस्य चाहं हृदि सन्निविष्टः " इत्युक्तत्वात् भगवतः समीपवर्त्तित्वं बोध्यं पर्यन्तभूः परिसरः इत्यमरः हृदये उपास्यमानस्य परमात्मनः शीघ्रं मोक्षप्रापकत्वात् समीपमार्गत्वेन कथितः " अहं स्मरामि मद्भक्तं नयामि परमां गतिम् " इति वराहवचनात् उदराद्युपासनस्य स्थूलत्वेन दूरमार्गः विलम्बेन कार्यजनकत्वात् हे उत् सर्वदोषरहित भगवन् स सर्वेभ्यः पाप्मभ्यः उदितः तस्योदिति नाम इति श्रुतेः अगात् न गच्छतीत्यगः तस्मात् निश्चलादित्यर्थः । एवम्भूतात् ततः पूर्वोक्तहृदयस्थभगवदुपासनाद्धेतोः उदित्यस्य अगादित्यस्य विशेषणत्वं वा तदा उद्गगात् अत्यन्तनिश्चलादुपासनादित्यर्थः । यद्वा उत् अगात् उन्नतसंसारवृक्षात् हे अनन्त ! त्रिविधपरिच्छेदरहित ! हे भगवन् तव धाम शिरः तव धाम्नां वासुदेवसङ्कर्षणप्रद्युम्ना-

### योगिरामानुजाचार्यकृतसरलाख्याख्या।

ऽनिरुद्धरूपचतुर्विधव्यूहमूर्त्यादीनां यानि धामानि वास-स्थानानि क्षीराब्ध्यादीनि तेषां शिरः शिरोभूतं सर्वधाम्ना-मुपरि स्थितमित्यर्थः। अत एव परमं परं उत्कृष्टं नास्ति यस्मात्तत् परमं सर्वस्मादुत्कृष्टं वैकुण्ठाख्यं समेत्य प्राप्य अथवा तव धाम शिरः तव धाम्नां स्वरूपाणां वासुदेव-सङ्कर्षणप्रद्युम्नानिरुद्धादिस्वरूपाणां शिरःप्रधानरूपं सर्वोपरि-स्थितमिति यावत् "आदित्यवर्णं तमसः परस्तात्" इति श्रुतेः एवम्भूतं परमं सर्वोत्कृष्टं सर्वकारणकारणं भगवत्स्वरूपं "शिरोऽग्रं शिखरं धाम" इत्यमरः "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीव चक्षुराततम्" इति श्रुतेः तथा च एतादृशं भगवतः स्थानं भगवतः स्वरूपं वा परमं धाम शिरः इति प्रतिपादितं समेत्य प्राप्य पूर्वोक्तदहराद्युपास-नात् भगवन्तं प्राप्येत्यर्थः "एष सम्प्रसादोऽस्माच्छरीरात्समु-त्थाय परं ज्योतिरूपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति श्रुतेः मुमुक्षूपासकानां प्राप्यं भगवत्स्वरूपमुक्तं भवति यत् प्रसिद्धं पूर्वोक्तं परमं धाम शिरः उपेत्य पुनः कृतान्तमुखे कालस्य मुखे मृत्युमुखे वा न पतन्ति "मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" "यद्गत्वा न निवर्तन्ते तद्धाम परमं मम" इति भगवदुक्तेः अस्यैवमन्वयसङ्ग्रहार्थः ऋषिवर्त्मसु ऋषीणां सम्प्रदायमार्गेषु ये कूर्पदृशः रजोयुक्तदृष्टयः ते उदरमुपासते मणिपूरकाख्यचक्रस्थपरमात्मानमुपासते अरु-णयः तद्वंशजाः हृदयस्थं परिसरपद्धतिं समीपमार्गभूतं मोक्षप्रापकं दहरं दहराख्यं परमात्मानमुपासते हे अनन्त उद् गात् अत्यन्तोन्नितत्वात् ततः दहरोपासनात् यद्वा उदगात् उत् उत्कृष्टात् अगात् संसाररूपवृक्षात् शरीररूपवृक्षाद्वा परमं धाम उपेत्य अस्माच्छरीरात्समुत्थाय "परं ज्योतिरुपसम्पद्य" इति श्रुतेः "समानं वृक्षं परिषस्वजाते" इति श्रुतेश्च यत् परमं सर्वाधिकं तव धाम शिरः स्थानश्रेष्ठं वा उपेत्य प्राप्य पुनः कृतान्तमुखे न पतन्तीत्यन्वयार्थः॥ १८॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

"तं प्रपदाभ्यां प्रापयत ब्रह्मेमं पुरुषं यत्प्रपदाभ्यां प्राप-यत ब्रह्मेमं पुरुषं तस्मात्प्रपदे तस्मात्प्रपदे इत्याचक्षते शफाः खुरा इत्यन्येषां पशूनां तदूर्ध्वमुदसर्पत्ता ऊरू अभवतामुरु-गृणीहीत्यब्रवीत्तदुदरमभवदुर्वेवमे कुर्वित्यब्रवीत्तदुदरोऽभवदुदरं ब्रह्मेति शार्कराक्षा उपासते हृदयं ब्रह्मेत्यारुणयो ब्रह्मा हैव ता ई ऊर्ध्वं स्वेवोदसर्पत्तच्छिरो ऽभवत यच्छिरो ऽभवत तच्छिरो भवत्तच्छिरसः शिरस्त्वं ता एताः शीर्षञ्छ्रियः श्रिताश्चक्षुःश्रोत्रं मनोवाक्प्राणः श्रयन्तेऽस्मिञ्छ्रियो य एवमेतच्छिरसः शिरस्त्वं वेद" इत्यादिश्रुतेः। कस्मिन् वहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत इति श्रुतेः "प्राण एवैनमनुप्रविशति प्राणमितरा देवता न प्राणात्परः परमनुप्रविशति प्राण एवैनमनु-भुक्ते प्रविशति प्राणमितरा देवता न प्राणात्परः परम-नुभुङ्क्ते प्राणमितरा देवता प्राणात्परः परमनुप्रविशति प्राण एवैन-मनुप्रविशति प्राण एवैनमन्वानन्दी भवति प्राणमितरा देवता न प्राणात्परः परमन्वानन्दी भवति तस्मादाहुः प्राणः पद्धतिः" इति हिरण्यनाभश्रुतेश्चार्थप्रतिनिधिरुदरमुपासत इति तस्याभिप्रायः शर्करा क्षुद्रपाषाणे सुसूक्ष्मे खण्डिते गुडे" इति—

शर्करा तु शिलाभेदे कुम्भेदाल्पकपालयोः।
शर्करं तत्र देशेषु सितायां शकले गुडे॥

इति च। अतः शर्कराक्षाः सूक्ष्मदृष्टयः तेषु ख्याताः शार्क-राक्षाः त एव वर्त्मनि ब्रह्मणि सूक्ष्मदृष्टयः हरेर्विशेषात् विज्ञान-स्तोऽर्हि यस्मात् प्राणे प्रत्युत्पत्तिर्णास्यब्रवीदिति वचनादुदरनामक ब्रह्मोपासते उदरं पूर्णं ब्रह्म अतः अरः पद्धिर्बदो यस्मा-त्तदुदरं पूर्णमित्येकार्थत्वात् यस्मादारुणयो हृदयनाम हृदय-नामकं ब्रह्मोपासते तस्मादेतरे माण्डूकेयादयो दहर-माकाशादप्यतिसूक्ष्मं परिसरो मुख्यप्राणः पद्धतिर्मार्गो यस्य स तथा परिसरस्य पद्धतिर्वा तदुपासने तद्ब्रह्म ततः हृदः नन्दनपथा ब्रह्मनाडीद्वारा शिरःप्रत्युदगात अथ यत्प-रमं ब्रह्म पुनरिह हृदयादिषु स्थितं उपास्य तत्समीपमु-पेत्य कृतान्तमुखे संसारे न पतन्तीत्यन्वयः॥ १८॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तदेवं तासु श्रुतिषु ताभिः स्वपक्षमप्रस्तुताः श्रुतयोऽपि स्वेषां तदनुगतिमेव दर्शयन्ति। तत्र प्रथमं क्रमलोपासनया पञ्चात्मवर्णनमयक्रमसाम्याल्लब्धावसराः क्रममुक्तिर्वर्त्मदर्शयोगा-पदेशुः श्रुतयः स्तुवन्ति उदरमिति॥ १८॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

एवं भजनाभजनयोरभिनन्दानिन्दे निरूप्य भजनस्याब्रह्म-कत्वे किं ब्रह्म उपासितव्यं किं श्रीकृष्णो भगवानिति सन्देहे निस्सन्देहतां दर्शयन्त्य आहुः—उदरमित्यादि। हे अनन्त! ऋषयो भक्तास्तेषां वर्त्मसु ये कूर्पदृशः सूक्ष्मदृशः ते तव परिसरपद्धतिं क्रीडास्थानम् उपासते अस्तु दूरतस्तव विग्रहः यद्वा ऋषिवर्त्मसु ऋषीणां ज्ञानिनां वर्त्मसु अध्यात्ममार्गेषु ये कूर्पाः कर्परांशास्तानिव पश्यन्तीति तथा तत्रापि केचित् उदरं मध्यवर्तित्वात् तव जन्मस्थलत्वात् वा उदरं मथुरा-मित्यर्थः। केचित् हृदयं वृन्दावनं तत्कीदृशं अरुणयोऽत्र अरुणो रागस्तस्य समूहः आरुणं तस्य या प्राप्तिः तथा उदन्तीति आरुणयोऽत अनुरागवृन्दप्राप्तिमेदुरमित्यर्थः। पुनः कीदृशं अहरं न ह्रियते न प्राप्यते इति अहरं दुराप-मित्यर्थः यद्वा न विद्यते हरो हरणं यस्य शाश्वतमित्यर्थः केचित् शिरः द्वारकारूपं कीदृशं परा मा लक्ष्मीर्यत्र अतः कारणात्तव धाम स्थानं क्रीडास्थानं उदगात् उपासकानामुपा-सनार्थमुदगादित्यर्थः। यद्धाम समेत्य पुनः इह कृतान्त-मुखे न पतन्ति यत्र हे अनन्त! ऋषिवर्त्मसु कूर्पदृशः इति पक्षद्वयमेव पूर्ववत् ते तदुदरमुपासते मध्ये यत्र जितवान्-श्रयः यत्र च सा त्वां बबन्ध येन बन्धेन दामोदरत्वमाप्तवान् अत ऐश्वर्यकारुण्यप्रकाशकत्वादुदरमेव उपासते महान्तो

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

आरुणयो ऽनुरक्ताः परिसरपद्धतिं परिसरे वृन्दावने पर्यन्ते पद्धतिश्चिह्नं यस्य तं चरणमित्यर्थः तत्रापि केचित् हृदयं वक्षःस्थलं कीदृशं अदहरं उच्चैस्तरं विस्तारि वा अरुणो रागः तस्यापत्यमिव अरुणिः ते भक्तस्ते धाम श्रीविग्रहं उदगात् प्रादुर्बभूव उपासकानामिति पूर्ववत् कीदृशं धाम परमं शिरः प्रायं यदूर्द्ध्वं किञ्चिन्नास्ति यत्समेत्य पुनरिह कृतान्तमुखे न पतन्तीत्यर्थः अथवा तव धाम तव श्रीविग्रहम् उपासते तत्र केचित् उदरं केचित् हृदयमित्यादि अत एव उदगात् प्रादुर्बभूव उपासनार्थमेव स्वदाविर्भाव इत्यर्थः ॥ १८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं देवतान्तरकर्मान्तरविधीनां निर्णयमुक्त्वा भगवदुपासकानामेव बहुविधानां तारतम्येन फलनिर्णयमाह—उदरमुपासत इति। भगवदुपासकास्त्रिविधाः कर्मिणो योगिनो ज्ञानिनश्चेति तत्र ज्ञानिनः श्रेष्ठाः अन्ये तु अधममध्यमा इति एकत्वेन पृथक्त्वेन बहुविधा विश्वतोमुखमिति वाक्याज्जगच्च जनं बहुधा सम्भवति केचिदिदं पद्यं योगपरत्वेनैव योजयन्ति तच्छ्रुति निर्णये विरुद्धमिव प्रतिभाति ऋषिवर्त्मसु वेदोक्तमार्गेषु ये उदरमुपासते कर्मोपासत इत्यर्थः। वेदस्योदरं कर्मेति उदरपर्यवसानाच्च उदरशब्दस्योभयथापि लक्षणा मणिपूरचक्रपरत्वे कर्मपरत्वे वा षण्णां चक्राणामत्र निरूपणात् प्राप्त्यभावश्च पश्चात्मकविचारेति उदरं सोमो भवति निन्दार्थं चोदरपदं शिश्नोदरपरायणा लोके निन्दिता भवन्तीति ते कूर्पदृशः स्थूलदृष्टयः शर्कराः कूर्पशब्देनोच्यते अतिस्थूलदृष्टय इति अर्थः कूर्पापेक्षया न्यूनं न पश्यन्ति अथवा कच्छपपृष्ठं कूर्पं तत्र रेखाकारा भवन्ति ता दृष्टिवन्निरूप्यन्ते तेन किमपि न पश्यन्तीत्युक्तं भवति एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्त इति वचनात् निन्दा श्रूयत इति एवं प्रथमस्थितानुक्त्वा मध्यमानाह—परिसरपद्धतिं हृदयमिति। परितः सरन्ति इति परिसरा नाड्यः तासां पद्धतिर्मार्गो हृदयं अनेन तत्र स्थिताः योगाभ्यासेनाद्यश्चोर्द्ध्वं च सर्वानेव मार्गान् शोधयन्ति एव योगिनः हृदये भगवच्चिन्तकाः निरुक्ताः ते आरुणयः अरुणवदल्पप्रकाशयुक्ताः अरुणस्य पुत्र आरुणिः दहरमिति अल्पच्छिद्रमिति केचित् दहरशब्दोऽल्पवाचको वेदे निरुक्तः दहरं वै सापराभ्यां दोहाभ्यां दुह इति अल्पप्रकाशाः स्वल्पं चोपासत इत्यर्थः एवं सर्वात्मकस्य भगवतः केचन उदरं केचन हृदयं चोपासते कर्मयोगी गीतायां योगप्रशंसानुयोगज्ञानत्वात् बहिर्मुखोऽहेयत्वाद्वा तर्हि मुख्याः क इति जिज्ञासायामाह–तत उदगादिति। तव धाम शिरः परमं "तदक्षरं ब्रह्म सर्वकारणकारणं विष्णोर्धाम" इति वाक्यात् भगवतो बहूनि स्थानानि तेष्वप्यक्षरं परमं अक्षरपदप्रयोगादेव परमत्वं ज्ञातव्यम् अतश्चैलोक्यात् कालादपि शिरः ऊर्द्ध्वमधो दृष्टात् तस्यैवाधिभौतिकं रूपं ब्रह्मलोक इति तस्य शिरस्त्वं पूर्वोक्तकतस्तस्योत्कर्षमाह—पुनरिहयत्समेत्येति। यद् भगवत्स्वरूपं प्राप्य प्राणिनः कृतान्तमुखे न पतन्ति "मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति अतो ज्ञानिन एवोत्कृष्टा इत्यर्थः—

> कर्मरूपं हरिं केचित्सेवन्ते योगरूपिणम्।
> तेभ्योऽप्यक्षररूपस्य सेवकाः सम्मताः सताम् ॥ १८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तदेवमिति तव सूरय इति श्लोकद्वयेन भक्तानां भगवद्विषयिकां भक्तिमुक्त्वा योगिनां परमात्मविषयकं योगमाहुः उदरमिति—

> "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
> प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥

इति श्रीगीतोक्तेरुदरम् उदरस्थवैश्वानरान्तर्यामिणं क्रियाशक्तिदायकं ये उपासते ते ऋषिवर्त्मसु ऋषीणां सम्प्रदायमार्गेषु कूर्पदृशः कूर्पं शर्करा रजो दृक्षु अक्षिषु येषां ते रजःपिहितदृष्टयः स्थूलदृष्टय इति यावत् उदरस्य हृदयापेक्षया स्थूलत्वात् यद्वा कूर्पं सूक्ष्मं सूक्ष्मदृश इत्यर्थः। तदा हृदयस्थं सूक्ष्ममेवालक्ष्य तत्प्रवेशाय प्रथममुदरस्थमुपासत इति भावः। आरुणयस्तु हृदयं हृदयस्थितजीवान्तर्यामिणं बुद्ध्यादिप्रवर्त्तनया ज्ञानशक्तिदायकं दहरं दुर्ज्ञेयत्वात् सूक्ष्मं परितः सरन्ति प्रसर्पन्तीति परिसरा नाड्यस्तासां; पद्धतिं मार्गं प्रसरणस्थानमिति हृदयविशेषणं विशेषणस्य फलमाहुः–तत इति। ततो हृदयात् भो अनन्त! तव परमात्मनो धाम उपलब्धिस्थानं ज्योतिर्मयं शिरः प्रति उदगात् उदसर्पत् मूलाधारादारभ्य हृदयमध्याद्ब्रह्मरन्ध्रं प्रत्युद्गतमित्यर्थः। धामैव स्थलत्रयगतं बभूवेति वस्त्वर्थः यत् समेत्य शिरस्थं परमं धाम प्राप्य पुनरिह कृतान्तमुखे संसारे न पतन्ति अत्र उदरं ब्रह्मेति शार्कराक्षा उपासते इति हृदयं ब्रह्मेत्यारुणय इति "महान् प्रभुर्वै पुरुषः सत्त्वस्यैव प्रवर्त्तकः। अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः" इति "शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका तयोर्द्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इति श्रुतयः ॥ १८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तत्साधनमाह–ऋषिवर्त्मसु ऋष्युपासनसम्प्रदायेषु ये कूर्पदृशः शर्कराख्याः "शर्कराः क्षुद्रपाषाणे सूक्ष्मे च खण्डिते गुडे" इति कोशात् सूक्ष्मदृष्टयः ते उदरं उद्गत अरः परिच्छेदो यस्मात्तदुदरम् अपरिच्छिन्नं ब्रह्म उपासते "उदरं ब्रह्मेति शार्कराख्याः" इति श्रुतेः ये आरुणयस्ते हृदयं हृदयते इति हृदयं हृदयवच्छिन्नं ब्रह्मोपासते हृदयं ब्रह्मेत्यारुणय इति श्रुतेः कथम्भूतं दहराख्यम् इत ऊर्द्ध्वत्वेनोदसर्पत् तच्छिरोऽभवत इति शेषवाक्यार्थमाह हे अनन्त! तव धाम ततो हृदयादेरुदगात् ऊर्द्ध्वमुदसर्पत् ब्रह्मरन्ध्रं प्राप्तमित्यर्थः। कथम्भूतं परिसरपद्धतिं परिसरन्ति पद्धतयः सम्प-

स्वकृतविचित्रयोनिषु विशन्निव हेतुतया तरतमतश्चकास्स्यनलवत्स्वकृतानुकृतिः ।
अथ वितथास्वमूष्ववितथं तव धाम समं विरजधियोऽन्वयन्त्यभिविपण्यव एकरसम् ॥१९॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

दायाः यस्मात्तथा सर्वसम्प्रदायमूलं सम्प्रदायप्राप्यं फलं तत्र हेतुः यत्समुपेत्य कृतान्तमुखे संसारे न पतन्तीति न पुनरावर्तेत इत्यर्थः । "तयोर्ध्वमायन्नमृतत्वमेति 'नसपुनरावर्त्तते" इत्यादिश्रुतेः ॥ १८ ॥

---

भाषा टीका ।

वेदान्त मे जिनका विधान किया गया एतादृश उपासना मार्गोंमे जिनकी सूक्ष्म बुद्धिहै ऐसे अरुण ऋषि के वंशके जो उपासक जनहै वे निज हृदय कमल के मध्य अतिसूक्ष्म प्रकाशमान आकाशरूप आपकी उपासना करते हैं, और कोइ एक उपासकजन निज उदरस्थ जाठराग्नि रूप को उपसना करते हैं' तथा कोइ एक उपासकजन' व्यापक सुषुम्णा नाडी रूपमार्ग में स्थित आपकी उपासना करते हैं वह सुषुम्णा नाडी रूपमार्ग हृदय से लेकर शिर पर्य्यन्त व्याप्त होरहा है हे अनन्त आपकी उपासना का धाम उक्त नाडी रूप मार्ग को अथवा मस्तक कोउपासक अनन्त समय मे प्राप्त होकर फिर इस मृत्यु मुख संसार मे नहि पडते हैं ॥ १८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

नन्वीश्वरस्यापि तर्हि जीववदुदरादिसम्बन्धे तदनुप्रविष्टस्य च तारतम्ये सति केन विशेषेणोपास्यत्वमितीमामाशङ्कां परिहरन्त्यः "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च"इत्याद्याः श्रुतयः स्तुवन्तीत्याह—स्वकृतविचित्रयोनिष्विति। स्वयङ्कृतासूच्चनीचमध्यमासु योनिष्वभिव्यक्तिस्थानेषु कार्येषु देहादिषु हेतुतयोपादानतया प्रागेव विद्यमानत्वेन मुख्यप्रवेशासम्भवाद्विशन्निव वर्तमानस्तरतमतो न्यूनाधिकभावेन चकास्सि अवभाससे स्वकृता योनीरनुकरोतीति स्वकृतानुकृतिरनलवत् अग्निर्यथा स्वतस्तारतम्यहीनोऽपि काष्ठानुसारेण तथा तथा प्रकाशते तद्वत् अथातो वितथासु मिथ्याभूतास्वमूषु योनिष्ववितथं सत्यं यतः स मम विशेषमतः सत्यं तव धाम स्वरूपं विरजधियो निर्मलमतयोऽन्वयन्ति जानन्ति नु इति पृथक्पदं वा अत्र हेतुः अभिविपण्यव इति अभितो विगतव्यवहाराः "पण व्यवहारे" इत्यस्य रूपं पण्युरिति ऐहिकामुष्मिककर्मफलरहिता इत्यर्थः । अविशेषत्वादेवैकरसं सन्मात्रमतस्तवोपाधिकृततारतम्याभावादप्रच्युतैश्वर्यस्योपास्यत्वमितिभावः ॥ १९ ॥

स्वनिर्मितेषु कार्येषु तारतम्यविवर्जितम् ।
सर्वानुस्यूतसन्मात्रं भगवन्तं भजामहे ॥ ९ ॥

---

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

तदनुप्रविष्टस्य हृदयोदरादिप्रविष्टस्य । तारतम्ये हृदयाद्युपाधिगतन्यूनाधिकतयोपहितस्य ब्रह्मणोऽपि न्यूनाधिकत्वे सतीत्यर्थः । एक उपाधिभेदेऽपि स्वाचिन्त्यशक्त्या भेदशून्यः अतो देवः सर्व्वोपास्यभूतत्वे हेतुः आकाशवत् सर्व्वव्यापी साक्षीसाक्षाद्द्रष्टा स्वतो जडस्यापीश्वरस्य नित्यज्ञानयोगाद्द्रष्टृत्वमिति तार्किकमतं निराचष्टे चेता ज्ञानस्वरूपः केवलः शुद्धो यतो निर्गुणः प्राकृतगुणशून्यः अतो वस्तुतस्तारतम्यशून्यस्यैव तथा भानादेवं यथाधिष्ठानरज्जुसत्तया सद्रूपासमानासु मिथ्याभूतासु सर्पभूदलनाम्बुधारासु अनुगता रज्जुरेव सत्या तथा मिथ्याभूतास्वमूषु सत्यमित्यर्थः । अत्र निर्म्मलमतित्वे ज्ञाने वा अतो व्यापकत्वेन सर्व्वत्र सत्वात् ॥ १९ ॥

---

श्रीकविचूडामणिचक्रवर्त्तिकृतान्वयबोधिनी ।

नन्वीश्वरस्यापि तर्हि जीववदुदरादिसम्बन्धे तदनुप्रविष्टस्य च तारतम्ये सति केन विशेषेणोपास्यत्वमितीमां शङ्कां परिहरन्त्य आहुः—स्वकृतेति । पूर्वतोऽनन्त इति पदं प्रवर्त्तते भो अनन्त ! स्वकृतविचित्रयोनिषु स्वयं कृतासु उच्चनीचमध्यमासु योनिषु देहेषु हेतुतया उपादानतया विशन्निव तरतमतो न्यूनाधिकभावेन त्वं चकास्सि अवभाससे कथंभूतः स्वकृतानुकृतीः स्वकृता योनीश्च मध्यमासु योनिरनुकरोतीति तथा इत्यर्थः । कथनं समासस्तु स्वकृतासु योनिषु अनुकृतिः अनुकरणं यस्य अनलवत् अग्निर्यथा स्वतस्तारतम्यहीनोपि काष्ठानुसारेण तथा भासते तद्वत् अथ अतःकारणाद्विरजधियः निर्मलमतयः वितथासु मिथ्याभूतासु अमूषु तव धाम स्वरूपम् अन्वयन्ति जानन्तीति नु इति पृथक् पदं वा नु यन्तीति भवन्ति कथम्भूतं धाम अवितथं सत्यं समम् अविशेषणम् 'एकरसं सन्मात्रं विरजधियः कथभूताः ? अभिपण्यवः अभितो विगता पण्यवो व्यवहारा येषां ते "पण व्यवहारे" इत्यस्यरूपं पण्युरिति ऐहिकामुष्मिककर्मफलरहिता इत्यर्थः । अविशेषत्वादेवैकरसं सन्मात्रं अतस्तवोपाधिकृततारताम्याभावादप्रच्युतैश्वर्यस्योपास्यत्वमिति भावः श्रुतिः एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभुतान्तरात्मा कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च"इति स्वरूपनिरूपणपरेयं सुगमं स्वामिनां स्वनिर्मितेषु कार्येषु तारतम्यविवर्जितं सर्वानुस्यूतं सन्मात्रं भगवन्तं भजामहे भगवन्तं वयं भजामहे कथम्भूतं कार्येषु देहेषु तारतम्यविवर्जितं तरतमस्य भावस्तारतम्यं न्यूनातिरिक्तत्वं तेन विव-

श्रीकवि कवार्तिकृताऽन्वयबोधिनी।

र्जितं अत एव सर्वानुस्यूतं सन्मात्रं सर्वानभिव्याप्य स्थितं सन्मात्रमेकरसं सर्वानुस्यूतञ्च सन्मात्रं चेति ॥ १६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स्वकृतेति तैरवतारितमेव स्वेनैव कृताः अचिन्त्यशक्त्या स्वस्याविष्कृतस्यापि परिणामरूपा निष्पादितरूपाश्चेत्यर्थः विचित्रयोनयो ब्रह्मादिस्थावरान्ताः हेतुतया प्रयोजकतया अन्तर्यामितयेत्यर्थः । तत्सृष्ट्वा तदेवानुप्राविशदित्यादि श्रुतेः अत्र च शब्दप्रयोगो विभोर्मुख्यप्रवेशासम्भवात तरतमतश्चकास्सि तारतम्येन स्वशक्तिं तत्र तत्र प्रकाशयसि तत्र हेतुः स्वकृतानुकृतिः यावत्कार्य्यमुपादत्से तावतीमेव तत्र शक्तिं प्रकाशयसीत्यर्थः अनलो यथा यावत्स्फुलिङ्गादिकमुपादत्ते तावतीमेव तत्र शक्तिं प्रकाशयति तद्वत् स्वतस्तु तत्राप्यनन्तशक्तिताऽस्त्येवेति भावः । तथैवाहुः—अथेति । "विकारावर्त्ति च तथाहि दर्शयति"इति न्यायात् वितथत्वं नश्वरत्वम् अन्यत्तैः श्रुतयश्च तद्दर्शिता एव ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

कार्यान्तःप्रविष्टस्यापि निर्दोषतया परमप्राप्यत्वमाह—स्वकृतेति । स्वकृतविचित्रयोनिषु हेतुतया विशन्निव तरतमतश्चकास्सीत्यन्वयः । विचित्रयोनिषु विचित्रा उत्पत्तयो येषां तेषु देवादियोनिषु विशन् जीवान्तरात्मतया तिष्ठन् तरतमतः अल्पत्वमहत्त्वादियुक्तत्वेन चकास्सि प्रकाशसे किम्भूतस्त्वं स्वकृतानुकृतिः स्वेन त्वया कृतेषु महदादिकार्येषु अनु पश्चात् कृतिः प्रेरणा यस्य असौ कार्यपरिणामानुकारी अथ वितथासु संहृतास्वमूषु योनिषु तव धामावितथम् असंहृतं समम् एकरसम् कार्यानुप्रवेशतारतम्यरहितम् अविच्छिन्नानन्दं तव धाम स्वरूप विरजधियः निर्मलधियः अन्वयन्ति उपासते अभिविपन्ति प्राप्नुवन्ति चेत्यर्थः । "पण व्यवहारे" इत्यस्य रूपं पण्युरिति तारतम्याभावे दृष्टान्तः अनलवत् यथा अनलः अग्निः काष्ठगतह्रस्वत्वदीर्घत्वतारतम्यरहितः ॥ १६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमुपासनस्थानमुपासनस्थापनप्रसङ्गात्परमात्मनोऽशुचिदेहसम्बन्धः उक्तः अथैवं कार्यान्तःप्रविष्टस्यापि तस्य निर्दोषतया परमप्राप्यत्वमाहुः—स्वकृतेति हेतुतया सर्वोपादानत्वेन स्वेन त्वया कृताः निर्मिताः विचित्राः योनयो, देहाः येषां तेषु देवमनुष्यादिविचित्रभवत्कृतशरीरकेषु जीवेष्वित्यर्थः विशन् अनन्तरात्मतया विशन् यद्वा देवादिशरीरेष्वेव उपासकानुग्रहेणोपासनार्थं विशन् तिष्ठन्निवशब्दोऽनतिरिक्तार्थः विशन्नेवेत्यर्थः । तरतमः ज्ञानाल्पत्वमहत्त्वादिभावेन स्वकृतानुकृतिः स्वकृताः योनीरनुकरोतीति तथा ह्रस्वादिकार्यपरिमाणोत्पत्तिविनाशाद्यनुकारी चकास्सीत्यर्थः अनलवत् यथाऽग्निः स्वतः तारतम्यहीनोऽपि तृणकाष्ठाद्यनुसारेण तथा प्रकाशते तद्वत् अथ यद्यप्येवमथापीत्यर्थः । अमूषु योनिषु वितथास्वविद्यमानासु उपसंहृतासु इत्यर्थः अवितथमनुपसंहृतं कुतः सममेकरूपं कार्यानुप्रवेशकृतकार्यगतदोषसंस्पर्शरहितं अत एव एकरसम् अविच्छिन्नानन्दं तव धाम स्वरूपं विरजधियो निर्मलमतयः अनुनयन्ति उपासते अभियन्ति प्राप्नुवन्ति चेत्यर्थः अन्वयन्त्यभिविपन्यव एकरसम् इति पाठान्तरं तदा अभिविपन्यवः विविधत्वद्गुणवादात्मकस्तुतियुक्ताः अन्वयन्ति अवगच्छन्ति प्राप्नुवन्तीति यावत् अत्र—

> सर्वज्ञः सर्वदृक् सर्वज्ञानशक्तिबलर्द्धिमान् ।
> अन्यूनश्चाप्यवृद्धिश्च स्वाधीनो ऽनादिमान्वशी ॥
> क्लमतन्द्रीभयक्रोधकामादिभिरसंयुतः ।
> निरवद्यः परः प्राप्तेर्निरधिष्ठोक्षरक्रमः ॥

इत्यादि स्मृत्यर्थोऽनुसन्धेयः ॥ १९ ॥

---

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथ कार्यान्तःप्रविष्टस्यापि निर्दोषतया परमप्राप्यत्वमाह स्वकृतेति । स्वकृतविचित्रयोनिषु स्वेनैव कृता विचित्रयोनयः उत्पत्तयो येषां तेषु देवादिशरीरेषु विशन्निव पूर्वमेव सर्वान्तरात्मतया विद्यमानत्वात्कार्यरूपचिदचिन्नियन्तृतया अनुप्रवेशात् विशन्निवेत्युक्तं तदनुप्रविश्य सच्च त्यच्चाभवदिति श्रुतेः हेतुतया जीवान्तरात्मतया तिष्ठन् तरतमतः अल्पत्वमहत्त्वादियुक्तश्चकास्सि प्रकाससे कीदृशस्त्वं स्वकृतानुकृतिः स्वकार्यमनुकरोतीति स्वकृतानुकृतिः स्वकार्यपरिणामानुकारीत्यर्थः । अथ तासु वितथासु उपसंहृतासु अवितथम असंहृतं समं कार्यानुप्रवेशतारतम्यरहितम् एकरसम् अनवच्छिन्नानन्दं तव धाम स्वरूपं विरजधियः अन्वयन्ति उपासते अभिविपन्यवन्ति प्राप्नुवन्ति चेत्यर्थः । "पण व्यवहारे"इत्यस्य रूपं पन्युरिति ॥ १६ ॥

---

योगिरामानुजाचार्यकृतसरलाव्याख्या ।

ईश्वरस्य सर्वानुप्रवेशेऽपि तत्तद्दोषैरसंस्पृष्टत्वमाहुः—स्वकृतेति । स्वकृतेषु स्वेनैव निर्मितेषु विचित्रेषु उच्चनीचादिभावेन नानारूपेषु योनिषु देवमनुष्यादिशरीरेषु हेतुतया उपादानकारणत्वेन हेतुना विशन्निव प्रवेशं कुर्वन्निव पूर्वमेव स्थितस्य यथार्थानुप्रवेशासंभवात् विशन्निवेत्युक्तम् अनलवत् स्वकृतानुकृतिः स्वकृता देवमनुष्यादियोनीरनुकरोतीति अनुकृतिः एवंभूतस्सन् तरतमतः उत्कृष्टापकृष्टभावेन चकास्सि भाससे यथा वह्नेः स्वभावतः स्थूलदीर्घवक्रवर्तुलत्वाद्यभावेऽपि स्वाश्रयद्रव्योपाधिना स्थूलदीर्घवक्रवर्तुलादिरूपत्वं तथा ईश्वरस्यापि स्वनिर्मितदेवमनुष्यादिशरीरानुप्रवेशकृतं देवमनुष्याद्याकाररूपतारतम्यापत्तिरिति भावः । अथ अनन्तरं अमूषु देवमनुष्यादियोनिषु वितथासु पूर्वाकारं परित्यज्योत्तरोत्तरविकारं प्राप्तवतीषु विनष्टास्वित्यर्थः । अवितथं विकाररहितं पूर्वाकारं परित्यज्य आकारान्तरप्राप्तिशून्यमित्यर्थः । अत एव समं न्यूना-

योगिरामानुजाचार्यकृतसरलाव्याख्या।

धिकभावराहित्यम् एकरूपं तव धाम स्वरूपं अभिविपण्यवः। अभितः सर्वदेशकालावस्थासु विपण्यवः विशेषेण भगवत्स्तोत्रपराः सन्तः "पणव्यवहारे स्तुतौ च" इति धातोः रूपं अथवा अभितः सर्वतः विगतः पण्युर्व्यवहारः येषां ते भगवद्भजनानुपयुक्तसर्वव्यवहाररहिताः इत्यर्थः—

"सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी।
नवद्वारे पुरे देही नैव कुर्वन्नकारयन्" ॥ इति

भगवदुक्तेः एवम्भूताः विरजधियो निर्मलज्ञानाः अन्वयन्ति जानन्ति भजन्तीति भावः। ज्ञानस्य भक्तिप्रधानकत्वात् भक्तिरिहाभिधीयते "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति श्रुतेः स्वकृतविचित्रयोनिषु हेतुतया विशन्निव अनलवत् स्वकृतानुकृतिः तरतमतश्चकास्सि अथामूषु वितथासु अवितथं समं एकरसं तव धाम विरजधियः अभिविपण्यवः सन्तः अन्वयन्तीत्यन्वयः ॥ १९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

"यो जीववद्योनिषु भात्यनन्तो मूढैस्तमोगैर्भरताधिगम्यः निचाय्य तं शाश्वतमात्मसंस्थं तद्दिक्षवोऽमन्यवधुर्महान्तः" इति कमठश्रुत्यर्थग्राहिणः स्वकृतविचित्रेतिश्लोकस्यार्थ उच्यते स्वकृतविचित्रयोनिषु स्वनिर्मितसुरनरादिनानाविधशरीरेषु विशन्निव विशन् जीवस्तद्वद्ज्ञानां यस्त्वं चकास्सि कथमिव अनलवत् स्वकृतानुकृतिः यथाऽनलः स्वकृतस्यानुकृतिर्यस्य स तथा स्वकृतदार्वादेरपनयने गच्छन् तत्स्थापने तिष्ठन् अनुवर्तते एवं स्वकृतशरीरादिष्वनुवर्तसे तन्नतः स्थितमित्यर्थः। ज्ञानिमतमाह—हेतुतयेति। सर्वहेतुतया भरतेन भे ज्ञानात्मके विष्णौ रतेन वायुना मतः ज्ञातः—

"रतत्वाज्ज्ञात्मके विष्णावथवापि जगद्भृतेः।
भरतो वायुरुद्दिष्टो भारती तत्सरस्वती ॥

इतिस्मृतेः वितथासु अन्यथा भवन्तीषु अशाश्वतीष्वपि सम्भावितास्वसम्भावितास्वपि अमूषु योनिषु अवितथात्वेन अनन्यथा भूत्वैव शाश्वतत्वेन उरुविधं बहुविधं तिष्ठन्तं निकटधियः त्वत्समीपस्थबुद्धयः महान्तस्ते तव त्वामभिविपत्य मनसा ऽभिगम्य मनसि नयन्ति ध्यायन्तीत्यर्थः—

या निवेश्याक्षयो जीवस्त्वज्ञाना तद्वदेव तु।
प्रकाशते परो देवस्तेन यात्यधरं तमः ॥
सर्वहेतुतयैवेशं प्राणो जानाति तत्त्वतः।
तेन चासौ परो देवस्तत्परं याति केशवम् ॥
इन्धनानयनेष्वग्निर्यथैवानीयते सह।
एवं गेहगतो विष्णुः सह गच्छेन्निजेच्छया ॥
अशाश्वतेषु देहेषु शाश्वतं बहुधा स्थितम्।
निचाय्यमनसा सन्तो जानन्ति निकटेक्षवः ॥

इत्यादितन्त्रभागवते सिद्धोऽयमर्थः ॥ १९ ॥

---

श्रीमद्[illegible]गोस्वामिकृतक्रमसन्दर्भः।

स्वकृतेति अत्र टीकानुसारेणैव गम्या ॥ १९ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

ननु, भोः ममाप्युदरादिसम्भव[illegible] जीवेन सह को भेद इत्याशङ्क्याहुः—स्वकृतविचित्रेत्यादि अथ भो भगवन्! सर्वकारणकारणं तव धाम मूर्तिः वित[illegible]षु अमुषु विचित्रासु योनिषु वितथासु प्राकृतत्वात् अव[illegible]त्वेन ज्ञायमानासु अवितथं वस्तुभूतं समं सर्वदा तुल्यावस्थं [illegible] वयसि कैशोरे इत्युक्तेः विरजधियो निर्मलबुद्धयो [illegible]का अनुयन्ति अनुभजन्ते यतोऽमी अभिविपण्यवः सर्वतो [illegible] विशेषेण पण्यवः स्तुत्याः "पण व्यवहारे स्तुतौ च" इ[illegible] औणादिको युग्मन्युप्रभृतिवत् कीदृशी धाम एकरसं सान्द्रानन्दं नराकृतिब्रह्मत्वात् ननु मां सर्वान्तर्यामिणमाहुः—सर्वान्तर्यामित्वे कथं मूर्तिमत्त्वं मे इत्याशङ्क्याहुः—स्वकृतेत्यर्द्धं। तरतमतो मध्यमोत्तमादिभावेन स्वेन त्वयैव कृतासु विचित्रासु नानाप्रकारासु योनिषु स्वकृतानुकृतिर्नारायणोविशन्नवचेत इति शेषः स्वस्य तव कृतेऽनुकृतिरनुकारो यस्य [illegible]दावतारः तथाचोक्तम् "अवाप नारायण आदिदेवः" इति तर्हि कस्तावदहं किं वा करोमीत्याशङ्क्याहुः—हेतुतया सर्वकारणकारणत्वेन चकास्सि भ्राजसे न तु त्वं तासु [illegible]शन्निववर्त्तसे अनलवत्सर्वप्रकाशक इत्यर्थः ॥ १९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवमुपासनाभेदे निर्णयमुक्त्वा अनुप्रवेशश्रुतीनां निर्णयमाह स्वकृतविचित्रयोनिष्विति "तत्सृष्ट्वा तदेवानुप्राविशत्" "सएष इह प्रविष्ट आनखाग्रेभ्यः" इत्यादिश्रुतिषु प्रवेशः श्रूयते "गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्" (१·२·११) इति न्यायेनापि निर्णीतः स च प्रवेशः सर्वथा बहिः स्थितस्य आहोस्विदन्तरेऽवस्थितस्य प्रकाशे लोकास्तत्र पश्यन्तीति लोकप्रतीतिमाश्रित्य प्रवेशोनूद्यत इति भवति विचारः तत्र बहिःस्थितस्यैव प्रवेशे आत्मस्वर्गविरोधः अद्वैतविरोधश्च निरवयवत्वाद्व्यापकत्वाच्च प्रवेशेपि उभयो प्रवेशोन्यायेन निरूपितः कश्चित् प्रविष्टस्य जीवब्रह्मभावः पूर्वं तु भेदे कारणाभावादतो नैव निर्णेतव्यं किं बहिःस्थितः प्रविशति उभौ वा प्रविशत इति एतदत्र क्रमेण श्लोकद्वयेन निर्णयं करिष्यति स्वेनैव कृतेषु विचित्रयोनिषु भगवान् हेतुतया तत्र स्थित एव विशन्निव चकास्ति अनेन दृष्टानुवादिका प्रवेशश्रुतिरिति निरूपितं कार्ये कारणस्यानुप्रवेशः पृथक् वर्तत इति कोचित् अन्यथा तत्र प्रतीतिर्न स्यात् इति अत उभयं सङ्ग्रहार्थं इवेत्युक्तवान् परस्य दृश्यते धर्मो ह्यपरस्मिन् समन्वयादिति भागवतोपि कारणस्य कार्यप्रवेश उक्तः अतो हेतुतया उपादानत्वेन स्थितोपि पुनः प्रविशति एवं प्रवेशमुक्त्वा "सच्च त्यच्चाभवत्" इत्यादिभिः प्रविष्टस्य वैलक्षण्यश्रुतेः तत्रापि

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

निर्णयमाह तरतमभ्रकास्सीति देवतिर्यङ्मनुष्यादिभावेन राजसादिभावेन च नन्वेक एवान्तःकरणप्रविष्टः कथं नाना भासते तत्राह—अनलवदिति । अनेन जीवकृतं वैलक्षण्यमिति पक्षो निराकृतः भगवांस्त्वन्तर्यामी सर्वत्रैकाविध एव जीववैलक्षण्येन देवादिभेद इति यथाग्निः सर्वत्र काष्ठेषु स्थित एव पुनस्तत्र प्रविशन् वर्णभेदं स्थूलसूक्ष्मभेदं दीर्घवक्रादिकं च तनुते तत्सम्बन्धेन तस्य वैलक्षण्यमित्यर्थः । ननु दृष्टान्तमात्रमुक्तं नतूपपत्तिरिति चेत्तत्राह स्वकृतानुकृतिरिति सर्वत्र भगवान् स्वकृतमनुकरोति यथा शिक्षकः शिष्यविद्यामनुकरोति एवं जगद्रूपेण भगवान् क्रीडितुं सर्वत्रानुप्रविष्टः तत्तद्रूपो जात इत्युक्तं तथा सति ये दोषास्तान् वारयति—अथेति । अमूषु वितथास्वपि अवितथं तव धाम पाञ्चभौतिकानां वितथत्वे स्वस्य चावितथत्वे हेतुमाह—सममिति विषमाः पृथिव्यादयः उत्तरोत्तरदशगुणत्वात् प्रवेशे तेषां न समता सम्भवति कठिनविरलाभ्यन्तरत्वेन वैषम्यावश्यं भावात् आकाशस्याप्यनित्यत्वात् वैषम्यमेव परं सूक्ष्मत्वात् तथा कलयितुं न शक्यते भगवांस्तु सम एव सर्वत्र प्रविष्टः निर्दोषं हि समं ब्रह्मेति ज्ञानादितारतम्यं तु जीवनिष्ठमित्युत्तरश्लोके वक्ष्यते सर्वसमत्वमत्र विवक्षितं यत्र प्रविशति तत्समो भूत्वा तत्र प्रविशति “समः प्लुषिनसमो नागेन समो मशकेन” इत्यादिश्रुतेः भगवतस्तुल्यांशप्रवेशे तु सर्वसमत्वं नोपपद्येत नन्वेवं सति कथं समता न प्रतीयते अन्यथा भगवत्कार्येषु अपि वैषम्यप्रतीतिर्न स्यात् भगवत्कार्याणि च योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तामित्यादिना निरूपितानि तत्राह विरजधियोऽन्वयन्तीति ये विरजधियः रजोगुणरहिताः ब्रह्मदृष्टयः त एव तद्वैलक्षण्यं जानन्ति यथा यो रत्नपरीक्षकः स एव कृत्रिमं सहजं च जानाति अनु भगवत्स्वरूपमन्वयन्ति जानन्तीत्यर्थः । ननु तेषामेव तदभिज्ञाने को हेतुस्तत्राह—अभिविपण्यव इति । अभितः सर्वतः इह लोके परलोके च गतविपणयुक्ताः सर्वव्यवहारातीताः यो हि यदभ्यासं करोति स तं पश्यति यथा व्यवहारनिपुणाः तैलादिना पदार्थसमतां विषमतां वा जानन्ति तथा ये व्यवहारं परित्यज्य सर्वथा ब्रह्मानुचिन्तकाः ते सर्वत्र ब्रह्मैव पश्यन्ति ननु निकारजातं तत्र सममेव ननु ब्रह्मैव पश्यन्तु नाम सममेव पश्यन्तीत्यत्र को हेतुः ब्रह्मसममेवेति चेत् एतदेव विचार्यते समं विषमं वेति यस्मात् समतायां हेतुरतिरिक्तो वक्तव्य इति चेत्तत्राह—एकरसमिति । रसस्त्वनुभवगम्यः सर्वत्रैव तेषां रतिः समा अन्यथा अनुभवविरोधे दृष्टिः समा न स्यात् लोके रसवैलक्षण्याभिज्ञाः विलक्षणरसेषु पदार्थेषु तुल्यरूपेष्वपि विषमदृश एव भवन्ति ब्राह्मणे पुल्कसे स्तेन इति वाक्ये समदृष्टेर्निरूपितत्वात् अतो भगवान् सर्वसम एव सर्वानुस्यूतः प्रविष्ट इति जगद्रूपेण प्रविश्य क्रीडन्नपि निर्दुष्ट इति निरूपितम् ॥ १९ ॥

सर्वत्र भगवांस्तुल्यः सर्वदोषविवर्जितः ।
क्रीडार्थमनुकुर्वन् हि सर्वत्रैव विराजते ॥ ६ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु परमात्मनः प्रतिदेहगतत्वेन बहुत्वाद्देहतारतम्येन तारतम्याच्च जीवसाम्ये सति कथमुपास्यत्वमित्यत आहुः—स्वकृतासु स्वसृष्टासु विचित्रासु विविधासु योनिषु स्वाभिव्यक्तिस्थानेषु देवादिदेहेषु हेतुतया प्रयोजकतया अन्तर्यामितयेत्यर्थः । तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः विशन्निवेति मुख्यप्रवेशासम्भवादिवशब्दः तरतमतभ्रकास्सि तारतम्येन तत्र तत्र स्वशक्तिं प्रकाशयसि तदेवाहुः—स्वकृतासु ब्रह्मादिस्थावरान्तयोनिषु अनुकृतिस्तदनुरूपशक्तिप्रकाशो यस्य सः अनलवत् अग्निर्यथा उल्मुकादिषु तदनुरूपामेव स्वशक्तिमुपादत्ते तद्वत् अथ वितथासु विनष्टासु अमूषु योनिषु अवितथमनश्वरं परमसत्यं तव धाम स्वरूपं सममविशेषं विरजधियो निर्मलमतयः अनुयन्ति जानन्ति ते एव के अभि सर्वतो भावेन विपण्यवो विगतव्यवहाराः “पण व्यवहारे” इत्यस्य रूपं पण्युरिति ऐहिकामुष्मिककर्मफलशून्या इत्यर्थः । एकरसं केवलानन्दास्वादस्वरूपम् अतस्तव सर्वकारणत्वात् स्वातन्त्र्यादुपाधिकृततारतम्याभावादप्रच्युतैश्वर्यादुपास्यत्वमिति भावः । अत्र तत्सृष्ट्वा तदेवानुप्राविशत्” इति “एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेताः केवलो निर्गुणश्च” इत्याद्याः श्रुतयः ॥ १९ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

द्वितत्वेन तत्सम्बन्धप्रतीतिं वारयन्नीश्वरं स्तौति—
“एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च” इति अथर्वणमन्त्रः स्वकृतविचित्रयोनिषु स्वीयया ऽचिन्त्यया स्वाभाविकया शक्त्या रचितासु विचित्रासु नानाविधासु ब्रह्मादिस्थावरान्तासु योनिषु विशन्निव तारतम्यहीनोऽपि सर्वान्तर्यामी स्वकृतानुकृतिः सन् तरतमतभ्रकास्सि अतः प्रतीयसे स्वेन कृता योनीरनुकरोतीति तथा तत्र दृष्टान्तः अनलवत् काष्ठादिसम्बद्धाग्निरिवेति विशन्निवेत्यत्रेवशब्दस्य सार्थकतामाह—हेतुतया कारणत्वेन विद्यमानतया तथा च द्वितीयेऽप्युक्तिः—

यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु ।
प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ॥ इति

अथ अतो हेतोः वितथासु च्युतस्वभावास्वस्थिरास्वमूषु तव धामावितथम् अप्रच्युतस्वभावं यथार्थं वस्तु अत एव समं समत्वादेवैकरसं निर्विकारं विरजधियः शुद्धसत्त्वान्तःत्राप्यभिविपण्यवः सर्वतो निर्वेदतः यन्ति प्राप्नुवन्ति नु निश्चितम् ॥ १९ ॥

———

भाषा टीका ।

निर्मल बुद्धियुत ज्ञानी जन आपके स्वरूपको अविनाशि

**स्वकृतपुरेष्वमीष्वबहिरन्तरसंवरणं तव पुरुषं वदन्त्यखिलशक्तिधृतोंऽशकृतम् ।**
**इति नृगतिं विविच्य कवयो निगमावपनं भवत उपासतेऽङ्घ्रिमभवं भुवि विश्वसिताः ॥ २० ॥**

भाषा टीका ।

दोषरहित विच्छेद शून्य आनन्द रूप से उपासना करते हैं और प्राप्त होते हैं ॥ यदि अन्वयंत्यभिविपण्यवपकरसं इस प्रकार का पाठ होयतो सर्व प्रकार नाना भांति से आपकी स्तुति करने वारे निर्मल बुद्धि युत ज्ञानी जन, जन आपके उक्त स्वरूप को प्राप्त होते हैं ऐसा अर्थ जानना ॥ १९ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अपि च कुतोन्वियमाशङ्का स्याद्भगवतो देहाद्युपाधिकृतदोषप्रसङ्ग इति यतोऽविद्याकामकर्मभिः संसरतो जीवस्यापि भगवद्भावं लक्षणया बोधयन्त्यस्तं दोषं निषेधयन्ति "स यश्चायं पुरुषे यश्चासावादित्ये स एकः तत्त्वमसि" इत्याद्याः श्रुतयः ननु कृतवंशस्याऽऽत्मनः स्तुतिरियमीश्वरत्वेन क्रियते न तु तस्येश्वरत्वं बोध्यते नैतद्युज्यते यतस्तत्र "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इत्याद्याः श्रुतयः कृतावतारस्य भगवतश्चरणभजनमुपायं वदन्तीत्याह—स्वकृतपुरेष्विति । स्वकर्मोपार्जितेषु पुरेषु देहेष्वमीषु नरादिषु भोक्तृत्वेन वर्तमानं पुरुषमखिलशक्तिधृतः सर्वशक्त्याश्रयस्य पूर्णस्य तवांशकृतं वदन्ति अंश इवांशः कृत इव कृतः त्वद्रूपं वदन्तीत्यर्थः । ननु कार्यकारणसंवृतस्य कुत एवम्भूतत्वं तत्राह अबहिरन्तरसंवरणमिति । बहिः कार्यमन्तरं कारणम् वस्तुतस्तदावरणशून्यम् तयोरसत्त्वादित्यर्थः । इत्येवं नृगतिं नुर्जीवस्य गतिं तत्त्वं विविच्य विशोध्य कवयोन्यथेदं न प्राप्यत इति जानन्तो निगमावपनं निगमोक्तकर्मणामावपनमासमन्तादुप्यतेऽस्मिन्नित्यावपनं क्षेत्रं सर्वकर्मार्पणविषयमित्यर्थः । यत्रार्पितानि कर्माणि मुक्तिफलं फलन्ति तं भवतोऽङ्घ्रिमभवं भवनिवर्तकं विश्वसिताः कृतविश्वासाः उपासतेऽर्चनवन्दनादिभिः सेवन्ते भुवीति मर्त्यलोके इदमेवोचितमिति दर्शयन्ति ॥ २० ॥

स्वदंशस्य ममेशान त्वन्मायाकृतबन्धनम् ।
त्वदङ्घ्रिसेवामादिश्य परानन्द निवर्तय ॥ ७ ॥

---

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

लक्षणया पूर्वोक्तजहदजहल्लक्षणया तं देहाद्युपाधिकृतं दोषं यश्चायं पुरुषे देहे प्रत्यगात्मा जीवः यश्चासावादित्ये ध्येयः सदा सवितृमण्डलमध्यवर्त्तीत्यादिनोपास्यत्वेनोक्तः परमेश्वरः सच्चिन्मात्रस्वरूपलक्षणया एकः एवं तत्त्वमसीत्यस्यैवार्थ उक्तः । तत्र मीमांसकः शङ्कते-नन्विति । कर्त्तव्यंस्य यज्ञाङ्गरूपस्य यजमानात्मनः इयं ईश्वराभेदरूपा स्तुतिरर्थवादवेदेन क्रियते न तु तस्य वास्तवेश्वरत्वं बोध्यते यथा आदित्यो यूपः प्रस्तरोऽयं यजमानः इत्यादिगुणवादरूपार्थवादेन यूपादीनामादित्यादिरूपत्वेन स्तुतिरित्येतत्पर्यन्तं पूर्वपक्षः, समाधत्ते नैतदिति । एतद् उपनिषदा अर्थवादत्वेन स्तुतिमात्रपरत्वं न युज्यते न सङ्गच्छते यतो हेतोस्तत्र जीवस्येश्वराभेदेन ब्रह्मात्मैक्यज्ञाने एते तत्त्वमसीत्याद्युक्ता अर्था जीवब्रह्मैक्यादयः जीवब्रह्माभेदोक्तेः स्तुतिमात्रत्वे तदभेदज्ञानार्थं उपायोक्तिः न सङ्गच्छते नहि यूपमादित्यभेदोक्तौ कश्चन उपायः कैश्चिदुक्तः तस्मादुपनिषद्वाक्यानि नार्थवादरूपाणि किन्तु स्वार्थपरत्वेनैक्यबोधकान्येव विधिशेषत्वाभावादिति भावः । अन्यथा भगवद्भजनं विना इदमैक्यज्ञानं "सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम्" इत्युक्तेः ॥ २० ॥

---

श्रीकविचूडामणिचक्रवर्त्तिकृतान्वयबोधिनी ।

अपि च कुतोन्वियमाशङ्का स्यात् भगवतो देहाद्युपाधिकृतदोषप्रसङ्ग इति यतो विद्याकामकर्मभिः संसरतो जीवस्यापि भगवद्भावं लक्षणया बोधयन्त्यस्तं दोषं निषेधयन्ति अतः कृतावतारस्य भगवतश्चरणभजन उपायं वदन्तीत्याहुः स्वकृतपुरेष्विति । अमीषु स्वकृतपुरेषु स्वकर्मोपार्जितेषु देहेषु भोक्तृत्वेन वर्त्तमानं पुरुषं जीवम् अखिलशक्तिधृतः सर्वशक्त्याश्रयस्य पूर्णस्य तव अंशकृतं त्वत्स्वरूपं वदन्ति अंश इवांशः कृत इव कृतः मायोपाधिः तया सम्पादितं त्वत्स्वरूपं इत्यर्थः । ननु कार्यकारणसम्भृतस्य तस्य कुत एवम्भूतत्वं तत्राह—अबहिरन्तरसम्वरणं बहिः कार्यम् अन्तरं कारणं वस्तुतस्तदावरणं शून्यं तयोरसत्त्वादित्यर्थः । इति एवं नृगतिं नुः जीवस्य गतिं विविच्य विशोध्य कवयो विश्वसिताः कृतविश्वासाः सन्तः भुवि भवतोऽङ्घ्रिं चरणमुपासते अर्चनवन्दनादिभिः सेवन्ते कथम्भूतमङ्घ्रिम् अभवं भवनिवर्त्तकं पुनश्च निगमावपनं आ समन्तादुप्यतेऽस्मिन्नित्यावपनं क्षेत्रं सर्वकर्मार्पणविषयमित्यर्थः । यत्रार्पितानि कर्माणि मोक्षफलं फलन्तीति तात्पर्यार्थः । भुवीति मर्त्यलोके इदमेवोचितमिति भावः । भगवद्भावं बोधयन्त्यस्तं दोषं निषेधयन्तीत्यत्र श्रुतयः "स यश्चायं पुरुषे यश्चासावादित्ये स एकः अरे अयमात्माऽनन्तरो बाह्यः कृत्स्नः प्रज्ञानघन एवेति तत्त्वमसीत्याद्याः अर्थः परमे व्योम्नि आकाशादिअन्नमयान्तं कार्यं सृष्ट्वा तदेवानुप्रविष्टो यः स एवायं पुरुषः अर्कः यश्चासावादित्ये वर्त्तते स एव भवति अयमात्मा अनन्तरः अन्तःशून्यः अबाह्यः बाह्यशून्यः कृत्स्नः पूर्णः ज्ञानघनः ज्ञानस्वरूप इति तत्त्वमसीति पूर्वमेव व्याख्यातं ननु कृत्स्वर्थस्यात्मनः स्तुतिरियमीश्वरत्वेन क्रियते न तु तस्य ईश्वरत्वं बोध्यते नैतद्युज्यते यतो भगवद्भक्तियुक्तस्यैव कथिता ह्यर्थाः पदार्थाः तस्यैव महात्मनः प्रकाशन्ते यथावत्स्फुरन्ति नान्यस्येत्यर्थः

श्रीकविचूडामणिचक्रवर्त्तिकृताऽन्वयबोधिनी ।

यस्मादेवं तस्माद्ब्रह्मविद्यार्थिभिर्देवतागुरुविषया निरुपाधिभक्तिः कर्तव्येति दर्शितं पुरुषम् अंशकृतमित्यत्र श्रुतिः गोपालतापनीये "ब्रह्मणोंऽशभूतस्तथेतरो भोक्ते"ति नारदपञ्चरात्रे प्राधानिकसर्गमुक्त्वा शुद्धसर्गकथने "यत्तटस्थन्तु चिद्रूपं स्वसंवेद्याद्विनिर्गतं । रञ्जितं गुणरागेण स जीव इति कथ्यते । इति श्रीगीतासु "ममैवांशो' जीवलोके जीवभूतः सनातनः" इत्यादिकं सुगमं भवतोऽङ्घ्रिमुपासत इत्यत्र श्रुतिः "चरणं पवित्रं विततं पुराणं तेन पूतस्तरति दुष्कृतानि तेन पवित्रेण शुद्धेन पूताः अतिपाप्मानमरातिं तरेम लोकस्य द्वारमर्चिमत्पवित्रं ज्योतिष्मद्भ्राजमानं महस्तदमृतस्य धारा बहुधा दोहमानं चरणं नोलोके सुधितां दधातु"इति अर्थः श्रीकृष्णस्य कृतत्रिविक्रमरूपस्य चरणं याचमाना(गुहुः) येन पातक्यपि पूतः पवित्रः स न दुष्कृतानि पापानि तरति तच्चरणं पवित्रं पवित्रकरं विततं विस्तीर्णं भूर्भुवःस्वरतिक्रम्य वर्त्तमानं पुराणं सनातनं तेन चरणेनारातिं वैरिणं पाप्मानं वयमतिशयेन तरेम कथम्भूतेन शुद्धेन स्वयम्भूदत्तार्घ्यजलधौतेन पुनश्च पवित्रेण पवित्रकारकेण पूतेन निर्मलेन तच्चरणं लोके सुधितां सुधाधारां दधातु तारकादित्वादितच् प्रत्ययः कथम्भूतं लोकस्य वैकुण्ठलोकस्य अर्चिष्मद्दीपवद्द्वारं भ्राजमानं न केवलमेतावत् अपिच महस्वत्महः ब्रह्मतेजो मण्डलगतम्युक्तं अत एव लोके बहुधा प्रकाराः । अमृतस्य धाराः धर्मार्थकाममोक्षरूपं भक्तिकामधेनुरिव भक्तेभ्यो दोहमानम् एवम्भूतं चरणं भजाम इत्यर्थः । भक्तिपरेयं श्रुतिः अथ स्वामिनां—

तवांशस्य ममेशान त्वन्मायाकृतबन्धनम् ।
त्वदङ्घ्रिसेवामादिश्य परानन्दनिवर्त्तय ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स्वकृतपुरेष्वित्यस्य टीकायां तस्येश्वरत्वं बोध्यते इत्यस्यायं विशेषः अतो जीव एव तदीश्वरत्वेन स्तूयते इति स यश्चायमित्यादिवाक्येनेश्वराख्यं पदार्थान्तरं न कल्पनीयमिति तत्राह नैतदुज्यत इति कृतावतारस्येत्युत्तरश्लोकाभिप्रायेण कृतावतारत्वेन शास्त्रप्रसिद्धस्तदानीन्तनानुभवसिद्धश्चैष इति भावः । अत्र त्वन्ये वदन्ति यदि सेश्वरो नाम कश्चित्स्वतः सिद्धः स्यात्तदा जीवस्य स्तवायैव तदभेदनिर्देशो घटते यदितु जीवाविद्याकल्पितः स्यात्तदा जीवैः कथं नोपलभ्यते सत्याञ्चानुपलब्धौ तस्य किं निर्देशेनाभेदनिर्देशेन चेति अथ स्वव्याख्या तदेवमन्तर्यामित्वांशेऽपि भगवतः शुद्धत्ववर्णनेन तत्पराणां श्रुतीनां वचनं श्रुत्वा स्वानुगृहीतानां जीवतत्त्वानुवादिनीनां श्रुतीनामपि तत्रैव तात्पर्यं काङ्क्षन्त्याः श्रुतयो दर्शयन्ति स्वकृतपुरेषु पूर्वोक्तेष्वेव वर्त्तमानं पुरुषं जीवसमूहं त्वत्तो भिन्नत्वेनाभिन्नत्वेन वा या वदन्ति तास्तवांशेनैव कृतं सिद्धं वदन्ति तथाभिप्रायेणैव वर्णयन्ति नान्यथेत्यर्थः । ब्रह्मणोंऽशभूतस्तथेतरो भोक्ता भवतीति श्रीगोपालतापनीश्रुतेः ननु कथमपरिच्छेद्यस्यांशत्वं तथा ममैवांशो जीवलोके जीवभूतः सनातनः" इति श्रीगीतोपनिषदुक्तं "द्वा सुपर्णा सयुजा सखाया" इत्यादिश्रुत्युक्तं च नित्यत्वं स्यात् अत्राहुः अखिलशक्तिधृत इति विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथा परा । अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते" ॥ इति श्रीविष्णुपुराणोक्तानुसारेण—

"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्य्यते जगत् ॥
एतद्योनीनि भूतानि सर्वाणीत्युपधारय ॥
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥
मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ॥
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" ॥ इति

श्रीभगवतः प्रकृतिद्वयतत्कार्य्यसाधकत्वसूचनया दर्शितस्वरूपशक्तिपर्य्यन्तश्रीगीतोपनिषदनुसारेण च या अखिलास्त्रिविधाः शक्तयः कार्य्यमात्रगम्याचिन्त्यप्रभावाः ताः धरसि यस्त्वं तस्य तव तादृश्यः शक्तयः एव तत्तद्बिना विनैव तत्तद्दुर्घटं सम्पादयन्त्यो नित्यमेव वर्त्तन्त इति स्थिते तव तादृशशक्त्यात्मकजीववृन्दरूपांशो नित्यमेव वर्त्तत इत्यर्थः । ननु तर्हि श्रीमत्स्यदेवादिवदैश्वर्य्यमेवास्य युज्येत तदभावे महदादिवन्मायिकत्वमेव वा तत्राहुः-अबहिरन्तरसम्वरणमिति । न विद्यते बहिर्मायिकत्वे अन्तस्तथान्तरङ्गस्वरूपत्वे च असम्वरणं व्याप्तिर्यस्य तथाभूतमित्यर्थः । श्रीविष्णुपुराणाद्यन्तरालपाठात् मार्त्तण्डमण्डलच्छाययोरन्तरालवर्त्तिमयूखपरमाणुवृन्दाभिवेति भावः । अतो मण्डलस्थानीयस्य भगवत एव स्वल्पशक्तिव्यक्तिमयाविर्भावविशेषत्वात्स्वांशत्वं श्रीमत्स्यदेवादीनां रश्मिस्थानीयत्वाद्विभिन्नांशत्वं जीवानामिति तत्त्ववादिनः अत्र तदुदाहृतं महावाराहवचनञ्च—

"स्वांशश्चाथ विभिन्नांश इति द्वेधांश इष्यते ।
अंशिनो यत्तु सामर्थ्यं यत्स्वरूपं यथास्थितिः ॥
तदेव नाणुमात्रोऽपि भेदः स्वांशांशिनोः क्वचित् ।
विभिन्नांशोऽल्पशक्तिः स्यात्किञ्चित्सामर्थ्यमात्रयुक्" ॥ इति

अत इदमेवं व्याचक्षेत न विद्यते बहिः क्रियाशक्तिः अतर्ज्ञानशक्तिर्वाऽसम्वरणमसङ्क्षिप्तत्वं सर्वव्यापकत्वं यस्य तामिति अतश्छायया सूर्य्यमण्डलमिव भगवत्स्वांशश्रीमत्स्यदेवादिर्मायया व्रियते रश्मिस्थानीयो विभिन्नांशो जीवस्त्वाव्रियते यथोक्तं श्रीविष्णुपुराणे शक्तित्रयकथनानन्तरमेव "यया क्षेत्रज्ञशक्तिः सा तारतम्येन वर्त्तते" इति यया पूर्वोक्ताविद्याकर्मसंज्ञया अविद्याकर्मवृत्तिर्यस्यास्सा अविद्याकर्मातत्राज्ञीमायेत्यर्थः यथोक्तं श्रीनारदपञ्चरात्रे प्राधानिकसर्गमुक्त्वा शुद्धसर्गकथने—

"यत्तटस्थन्तु चिद्रूपं स्वसंवेद्याद्विनिर्गतम् ।
रञ्जितं गुणरागेण स जीव इति कथ्यते ॥ इति ॥

अतः एवांशकृतमिति अंशश्चासौ कृतः मायोपाधितया सम्पादितश्चेति तमित्ययमेवार्थः । विवक्षितमेवाहुः-इतीति । पूर्वोक्तप्रकारान्तरेण जीवस्य गतिं त्वदंशलक्षणं तत्त्वं विविच्य विश्वसिता जातविश्वासा ये कवयो विवेकिनस्ते भ(ग)वतोऽङ्घ्रिकमलपद्याङ्घ्रिमुपासते विनाशिभजनमंशस्य तुच्छतापत्तेः नन्वन्येऽपि सन्ति केचाश्चित्केऽप्यंशिनस्तेऽप्युपास्यन्तां' तत्राहुः निगमाः सर्वे-

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वेदाः आ समन्तादुप्यन्ते समर्पिताः क्रियन्ते यस्मिंस्तादृशत्वात् सर्ववेदार्थत्वात्त्वमेव सर्वोत्तमभजनीयः सर्वोत्तमपुरुषार्थश्चेत्यर्थः । ननु सावयवत्वेनान्यतुल्यत्वात्कथं तादृशत्वं तत्राहुः निगमावपनत्वादेव न विद्यते भवो जन्म यस्य तं नित्यमित्यर्थः । न विद्यते भवो यस्मादिति विग्रहेऽपि कैमुत्येन तत्सिद्ध्यति भुवीति पृथिव्यां तादृशसाधकप्राचुर्याद्विलक्षणयोक्तम् अत्र मुख्याः श्रुतयः—

> मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
> अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥

यो योनिं योनिमधितिष्ठत्येको यस्मिन्निदं सञ्चरति विचरति सर्वं तमीशानं वरदं देवमीड्यं विचार्येमां शान्तिमत्यन्तमेति" इत्याद्याः तदनुगताश्च सर्वे वेदा यत्पदमामनन्तीत्याद्याः चरणं पवित्रं विततं पुराणमित्याद्याश्च ॥ २० ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

तावदुपासकस्य जीवस्य परेण सम्बन्धमाह—स्वकृतेति । स्वशब्दो भगवद्वाची पुरेषु शरीरेषु बहिरन्तरसम्वरणं स्वरूपतो धर्मतश्च ज्ञानस्वरूपं । यद्वा शरीरेष्वन्तर्बहिश्च प्रसृतज्ञानं पुरुषं नाम जीवम् अखिलशक्तिधृतस्तव अंशकृतं विशेषणतया अंशकृतं पुरुषसमष्टेर्विभक्तं वदन्ति । यद्वा तदधीनत्वे सति तत्सदृशत्वं ज्ञानानन्दाकारत्वेन किम्भूतं बहिरन्तरसम्वरणं स्वेन भगवता कृतेषु पुरेषु रचितेषु बहिरन्तरसम्वरणं धर्मभूतज्ञानेन अन्तर्बहिरसम्वरणं सर्वत्र प्रसृतज्ञानमिति पूर्वोक्तप्रकारेण नृगतिं नुः जीवस्य गतिं तत्त्वं विविच्याविच्य विचार्य भवतोऽङ्घ्रिं चरणम् उपासते सेवन्ते किम्भूतमङ्घ्रिम् ? निगमावपनं ज्ञानोत्पादकम् अतः अभवं भवनिवर्तकं किम्भूताः कवयः भुवि संसारे निश्वसिताः प्राणायामपराः उपासका इत्यर्थः । विश्वसिता इति पाठे कृतविश्वासाः अनन्यपराः उपासत इत्यर्थः ॥ २० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

"परम भजन्ति ये पदमजस्रसुखानुभवम् उदरमुपासते भवितथं तव धाम समम् एकरसम्"इत्युदरादिस्थानविशेषाधिष्ठानकदिव्यात्मस्वरूपोपासकानां तत्प्राप्तिरुक्ता अथ दिव्यविग्रहोपासकानामपि तत्सारूप्यापत्तिरूपं फलमित्यभिप्रेत्य तदुपासकाश्च केचित्सन्तीत्याहुः— स्वकृतपुरेष्विति । अमूषु देवमनुष्यादिषु स्वेन त्वया कृतेषु पुरेषु त्वाश्रयाप्तभूतेषु देहेषु सन्तमिति शेषः अखिलशक्तिधृतः आखिलाः शक्तीः आश्चर्यशक्तीः भरतीति तथा तस्य तवांशकृतमंशेन सङ्कल्पात्मकज्ञानेन कृतं कल्पितमुपात्तमबहिरन्तः अन्तर्बहिरिति गराहितमन्तर्बहिश्च व्याप्तिवमित्यर्थः । अनेन विग्रहस्यापि पुरान्तरवस्थानप्रयुक्तपरिच्छिन्नत्वशङ्काव्यावृत्तिः असम्वरणं सङ्कोचकहेतुरहितं पुरुषं पुरुषाकारं विग्रहं वदन्ति वेदान्ता इति शेषः । "अङ्गुष्ठमात्रो रवितुल्यरूपः अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः" इत्याद्याः वेदान्ताः प्रतिपादयन्तीत्यर्थः । इतीत्थम्भूतं तव पुरुषं तथा नृगतिं नरजन्मत्वदाराधनोपयुक्तमिदं नृजन्मेति च विविच्य विचारपूर्वकं निश्चित्य भुवि भूमौ केचित्कवयो विवेकिनः निश्श्वसिताः प्राणायामपराः जितप्राणेन्द्रिया इत्यर्थः । तवाङ्घ्रिमुपासते कथम्भूतं निगमावपनं निगमानां वेदानामावपनं क्षेत्रं प्रतिपाद्यविषयमिति यावत् यद्वा निगमस्य ज्ञानस्यावपनम् आसमन्तादुप्यतेऽनेनेत्यावपनम् उत्पादकं "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकं । ददामि बुद्धियोगं तम्" इति भगवदुक्तेः अभवं न भवः संसारो यस्मात्सेव्यमानात् भुवि विश्वसिता इति पाठान्तरं तदा मोचयिष्यतीति दृढविश्वासयुक्ताः उपासत इत्यर्थः ॥ २० ॥

---

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथ तावदुपासकस्य परेण सम्बन्धमाह-स्वकृतेति । स्वशब्दो भगवद्वाची स्वकृतपुरेषु शरीरेषु बहिरन्तरसम्वरणं स्वरूपतो धर्मतश्च ज्ञानस्वरूपं यद्वा शरीरस्यान्तर्बहिश्च प्रसृतज्ञानं पुरुषं जीवम् अखिलशक्तिभृतस्तव अंशकृतं विशेषणतया अंशकृतं पुरुषसमष्टेर्विभक्तं वदन्तीति तथाच सूत्रं "अंशो नानाव्यपदेशादन्यथाचापि दासकितवादित्वमधीयत एके" इति व्याख्यातमिदं सूत्रं वेदान्तदीपे श्रीभाष्यकारैः तथा हि नानात्वव्यपदेशादेकत्वव्यपदेशाच्च परमात्मनः सत्यसङ्कल्पत्वसर्वज्ञत्वनिरवद्यत्वश्रुतेरज्ञत्वोपाधिसम्बन्धाद्यनुपपत्तेर्जीवशब्दस्य जीवशरीरकपरमात्मवाचित्वेन तत्त्वमस्ययमात्मा ब्रह्मेत्यादिसामानाधिकरण्यमुख्यत्वात् शरीरशरीरिणोर्विशेषणविशेष्यभूतयोः स्वरूपभावभेदेनच भेदश्रुतेर्मुख्यत्वाच्च परमात्मांशो जीवः जीवशरीरत्वञ्च परमात्मनो यस्यात्मा शरीरमित्यादिश्रुतिसिद्धं ब्रह्मदासा ब्रह्मदाशा इत्यादि दासकितवादित्वमप्यधीयत एके" शाखिनः सर्वजीवव्यापित्वाद्भेदोपदेशस्य तत्रत्यादरः" प्रतीयते इत्यर्थः इति तथा च भगवताप्युक्तं "ममैवांशो जीवलोके जीवभूतः सनातनः" इति अतएव जीवस्य सोपाधिकब्रह्मांशत्वं न सम्भवतीति इति नृगतिं नुर्जीवस्य गतिं तत्त्वं विविच्य अन्विष्य निगमावपनं निगमस्तत्त्वज्ञानं तदुत्पादकं भवतोऽङ्घ्रिं निश्वसिताः प्राणायामपराः उपासते ध्यायन्तीत्यर्थः । विश्वसिता इतिपाठे कृष्णे विश्वासा अनन्यपराः उपासत इत्यर्थः ॥ १९ ॥

---

### योगिरामानुजाचार्यकृतसरलाव्याख्या ।

त्वच्चरणकमलभजनेनैव मुक्तिरिति निश्चित्य ज्ञानिनः त्वच्चरणावुपासन्ते इत्याहुः-स्वकृतेति । अमीषु बुद्धीन्द्रियमनःप्राणान् लोकानामसृजत्प्रभुरित्युक्तरीत्या चेतनानां तत्तत्कर्मानुगुणं भगवता निर्मितेषु देवमनुष्यादिशरीरेषु स्थितमिति शेषः । अबहिरन्तरसम्वरणं बाह्ये अन्तरे च आवरणरहितं ज्ञानैकाकारत्वेन बाह्याभ्यन्तरे एकरूपमित्यर्थः । विज्ञानघन एव प्रज्ञानघनः

### योगिराजगोस्वामिरामानुजाचार्यकृतसरलाख्यव्याख्या ।

अन्तरे, बाह्ये च कृत्स्नोरसघन एवेतिश्रुतेः अखिलशक्तिभृतः सर्वशक्तिधारिणः तव ईश्वरस्यांशकृतम् अंशस्वरूपं वदन्ति पुरुष इति एवम्प्रकारेण नृगतिं पुरुषस्य गतिं भवाब्धौ देवमनुष्यादिशरीरेषु संसरणं विविच्य विचार्य ज्ञानस्वरूपस्य चेतनस्य ज्ञानावरणेन तापत्रयावाप्तिः भगवद्रचितमायानिबन्धना मायानिवृत्तिरूपमोक्षप्राप्तिश्च भगवच्चरणोपासनासाध्या इति निश्चित्याथवा इति नृगतिं पूर्वोक्तमायायोनिषु भ्रमतः भगवदंशभूतस्य चेतनस्य गतिं संसारबन्धं दूरीकृत्य मोक्षप्राप्तिसाधकमुपायं विविच्य विचार्य उपासनानुगृहीतः भगवानेव मोक्षप्रापकोपायदानविधायेत्यर्थः आस्थितस्सहि युक्तात्मा मामेवानुत्तमाङ्गतिम् इति भगवदुक्तेः भुवि कवयः ज्ञानिनः विश्वसितास्सन्तः भगवदङ्घ्रिभजनेनैव संसारनिवृत्तिर्नान्यथेति विश्वासवन्तः "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति भगवदुक्तेः निगमावपनं निगमोक्तकर्मणां "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादिनिगमोक्तश्रवणादीनां भगवदाराधनरूपयज्ञादीनां "यज्ञेन यज्ञमयजन्त देवाः यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्" इत्यादिश्रुतिस्मृत्यादिभिः भगवतः सर्वकर्माराध्यत्वेन प्रतिपादनात् निगमोक्तकर्मणां मोक्षफलप्राप्त्यर्थं समर्पणविषयम् अतएवाभवं नास्ति भवो यस्मादुपास्यमानादित्यभवं भवतः मोक्षप्रदस्य तवाङ्घ्रिमुपासते अर्चनवन्दनादिभिः सेवन्ते इत्यर्थः अमीषु स्वकृतपुरेषु स्थितम् अबहिरन्तरसम्वरणं पुरुषम् अखिलशक्तिभृतः तव वेदाः इति शेषः वदन्ति इति नृगतिं विविच्य भुवि कवयः विश्वसितास्सन्तः निगमावपनम् अभवं भवतः अङ्घ्रिमुपासते इत्यन्वयः ॥ २० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मू० ॥ प्रक्रमवरस्वसत्कृतं सर्वेषु पुरुषेषु सर्वासु मुधीषु स्थित्वा त्वां तु बहिरन्तरसञ्चरणेपि । तव पुरुष वदन्त्यखिलशक्तिभृतः स्वकृतम् ॥ ७—२०।२१ ॥

निषुसीदगणपते गणेषु त्वामाहुर्विप्रतमं कवीनां न ऋते त्वत्क्रियते किञ्चनारेमहामर्कं मघवं चित्रमर्चेत्यादिश्रुत्यभिप्रायगर्भस्य प्रक्रमवदित्यस्य श्लोकस्यायमर्थः सर्वेषु पुरुषेषु सर्वधीषु सर्वेन्द्रियेषु च स्थित्वा श्रीब्रह्मादिषु प्रक्रमवदुत्कृष्टक्रमयुक्तत्वेन स्वसत्कृतं स्वात्मनैव सत्कृतं त्वां वदन्ति किञ्च हे पुरुष अण्डाद्यन्तर्बहिश्च असञ्चरणे असदमङ्गलं चरणं कर्म यस्यासावसञ्चरणः तस्मिन् पापाचारे स्थित्वा पापाचारमपि स्वात्मनः पूजात्वेनैव कारयन्तं त्वां वदन्ति तुशब्देन यथाकरणं तस्याधोगत्यर्थमिति सूचयति किम्बहुना तत्सर्वं तव स्वकृतम् अनन्यापेक्षया स्वयैव कृतं वदन्ति कुत इति तत्राह—अखिलेति । सर्वपुरुषेन्द्रियशक्तिप्रेरकत्वात् श्रुतिश्लोकयोः सर्वैककार्यत्वाभावानैकत्वान्नियतत्वद्योतनाय ज्ञायते—

श्रीब्रह्मरुद्रपूर्वेषु क्रमात्स्थित्वा जनार्दनः ।
स्वात्मानमर्चयत्यस्मा बहिरन्तरसत्सु च ॥

अमतामधमाचारो हरिदुर्यातमपूजनम् ।
तस्याऽधोगमनायेति श्रुतिराहाखिलक्रियम् ॥

इत्यादिना त्रिपाद्रोयं श्लोकः ॥ २१-२० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवमन्तर्यामित्वांशेऽपि भगवः शुक्लवर्णनेन तत्पराणां श्रुतीनां वचनं श्रुत्वा स्वानुगृहीतानां श्रुतीनामपि तत्रैव तात्पर्यं काचिदन्या दर्शयति । स्वकृतपुरेष्विति ॥ २० ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

ननु सर्वान्तर्यामी नारायण एव "अवाप नारायण आदिदेवः" इत्युक्तेरिति सत्यमेव किन्त्वसावादिदेवत्वात् कथं तस्य हेतुरहमित्याशङ्क्याहुः—स्वकृतपुरेष्वित्यादि । स्वकृतानि स्वतःसिद्धानि यानि पुराणि गोकुलमथुराद्वारकाख्यानि पुराणि तेषु अमीषु अबहिरन्तरं सम्वरणं यथा भवति बाह्यान्तरसङ्गोपनाभावपूर्वकम् अखिलशक्तिधृतः अखिलाः श्रीराधाप्रभृतयो गोप्यः श्रीरुक्मिणीप्रभृतयो महिष्यश्च याः शक्तयस्ताः धरतीति तस्य तव श्रीकृष्णस्य अंशकृतं पुरुषं नारायणं वदन्ति ब्रह्मादयो सुरादयश्च नारायणोऽङ्ग नरभूजलायनादित्युक्तेः इति विविच्य विचार्य कवयो ब्रह्मादयो भवतोऽङ्घ्रिमुपासते किम्भूताः निगमावपनं यथा भवति तथा विश्वसिताः सन्तः निगमेषु वेदेषु आ सम्यक् वपनं यथा भवतीति निगमानामयमेवार्थ इति कृत्वा कृतविश्वासा इत्यर्थः कीदृशम् अङ्घ्रिं नृगतिं सर्वलोकैकशरणम् ॥ २० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं प्रवेशप्रसङ्गेन भगवतो दोषान् परिहृत्य द्वयोः प्रविश्य श्रुतत्वात् द्वितीयस्य का वार्त्तेति शङ्कां वारयितुमाह स्वकृतपुरेष्विति । भगवत्कृतेष्वेव देवतिर्यङ्मनुष्यादिशरीरेषु भगवदंशः पुरुषो जीवः बहिरन्तः संवरणरहित एव तत्कृतगुणदोषरहित एव अंशेन कृत इति विषमा भवति अयमर्थः जीवो नाम भगवतोऽंशः अत्यन्त चिरलात्मा स सर्वेषु पुरेषु प्रविशन् अन्तर्बहिश्चानन्यगुणपूर्ण एव तिष्ठति तेन स्वभावतः सोऽप्यविषम एव तथाप्यंशेन विषमभावापन्नेन तिरोहितानन्देन कृत इति स्वानन्दापेक्षार्थं पुरेषु प्रवर्तते तत्र च सुखमप्राप्नुवन् विषम इव भवति इत्यनेनार्थोऽत्र निर्णीतो भगवति जीवे च वैलक्षण्यहेतुः भगवान् स्वानन्दपूर्णः कस्मादप्यानन्दं न वाञ्छति जीवस्तु तिरोहितानन्द इति यतः कुतश्चिदानन्दमपेक्षते तेन विषम इव भवतीति अंशकृतपदेन चायमर्थः सूचितः एवं जीववैलक्षण्यं ये न जानन्ति ते न भगवन्तं भजन्ते न त्वन्यः इत्याह इति नृगतिं विविच्येति । आनन्दार्थमेव जीवस्य प्रवृत्तिः आनन्दश्च भगवत्येवास्ति नान्यत्र "को ह्येवान्यात् कः प्राण्यात् यदेष आकाश

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

आनन्दो न स्यात् एष ह्येवानन्दयाति" इति श्रुतेः यत्र जीवाना मेवानन्दस्तिरोहितः तत्र जडानामानन्दगन्धोऽपि नास्ति परं मरीचिकावत् अत्यन्तनिर्जलभूमौ यथा जलप्रतीतिभ्रान्तानाम् एव स्रक्चन्दनादिष्वपि आनन्दोऽस्तीति भ्राम्यति लोकः सर्वो हि स्वस्मिन् विद्यमानं प्रयच्छति न त्वविद्यमानम् अतः पण्डिता इममर्थं ज्ञात्वा भगवत एवाङ्घ्रिमुपासते आनन्दार्थं ननु परमानन्दो भगवान् भवतु नाम स्वर्गाद्यानन्दस्त्वन्यत्रापि भविष्यतीत्याशङ्क्याह निगमाः आ समन्तादुप्यन्ते अस्मिन्नङ्घ्राविति "सर्वे वेदा यत्पदमामनन्तीति श्रुतेः वेदानां प्रतिपाद्यो भगवद्भक्तिरेव स च फलसाधनरूपः अतो यागा अपि चरणरूपाः स्वर्गोऽपीति मुख्यः सिद्धान्तः अस्यैवानन्दस्यान्यानि मात्रामुपजीवन्तीति श्रुतेः तथा सत्येव एवानन्दयतीत्येवकारोऽपि सङ्गच्छते अतो वेदोक्तस्यापि भगवच्चरणारविन्दादन्यत्र नानन्द इत्यर्थः नन्वस्याप्युत्पत्त्यादिविनाशविरुद्धधर्मसमवायात् जीववदानन्दतिरोभावोभविष्यतीति चेत्तत्राह अभवमिति कदाचिदुत्पत्त्यादिरहितं प्रत्युत अन्येषामपि तन्निवर्त्तकमित्यर्थः। स्वर्गादौ सामग्रीदर्शनात् विशेषादर्शनाच्च आनन्दशङ्कापि भवेद् भुवितु सम्भावनापि नास्तीत्याह भुवि विश्वसिता इति। तीर्थादिसम्भावनया वा शुद्धान्तःकरणाः सन्तः भूमौ भगवति विश्वासं कुर्वन्ति अन्यत्र भोगाभिनिवेशात् न विश्वासो जायत इत्यर्थः ॥ २० ॥

गुप्तानन्दा यतो जीवा निरानन्दं जगद्यतः।
पूर्णानन्दो हरिस्तस्माज्जीवैः सेव्यः सुखार्थिभिः ॥ ७ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

परमात्मानमुपास्यं निरूप्य जीवात्मानं तदुपासकं च तदंशतुल्यत्वेन निरूपयन्ति—स्वकृतेति। स्वकर्मोपार्जितेषु पुरेषु अमीषु नरदेहादिषु पुरुषं भोक्तृत्वेन वर्तमानं जीवं जात्या एकवचनम् अखिलशक्तिधृतस्तव अंशकृतं अंशमिव कृतं वदन्ति वस्तुतस्तटस्थशक्तित्वेन प्रसिद्धमपि ते अंशतुल्यं वदन्तीत्यर्थः यदुक्तं श्रीविष्णुपुराणे "विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथा परा" इति गीतासु च "प्रकृतिं विद्धि मे परां जीवभूताम्" इति ॥ श्रीनारदपञ्चरात्रे—

यत्तटस्थं तु चिद्रूपं स्वसंवेद्याद्विनिर्गतम्।
रञ्जितं गुणरागेण स जीव इति कथ्यते ॥

इत्थं तस्य तटस्थशक्तित्वेपि "ममैवांशो जीवलोके जीवभूतः सनातनः" इति भगवद्वचनात्—

स्वांशश्चाथ विभिन्नांश इति द्वेधांश इष्यते।
अंशिनो यत्तु सामर्थ्यं यत्स्वरूपं यथा स्थितिः ॥
तदेव नाणुमात्रोऽपि भेदः स्वांशांशिनोः क्वचित्।
विभिन्नांशोऽल्पशक्तिस्स्यात् किञ्चित् सामर्थ्यमात्रयुक् ।

इति महावराहवचनाच्चांशतुल्यत्वं कीदृशं न विद्यते बहिर्बहिरङ्ग मायाशक्त्या अन्तरेणान्तरङ्गचिच्छक्त्या च सम्यग्वरणं सर्वथा स्वीयत्वेन स्वीकारो यस्य तं यद्वा न विद्यते बहिरन्तश्च असम्वरणमनावरणं यस्य तं स्थूलसूक्ष्मोपाधिभ्यां मायया बहिरन्तरावृतमित्यर्थः। इति एवं नृगतिं नुर्जीवस्य गतिं ताटस्थ्यं मायाबन्धनावश्यत्वं वा विविच्य विज्ञाय्य निगमावपनं निगमो वेदस्तद्रूपे क्षेत्रे आ सम्यक्तया वपनं यस्य तथाभूतम् अंघ्रिं भगवच्चरणकल्पतरुम् अभयं भवबन्धनिवर्तकं भुवि स्थित्वा उपासते विश्वसिताः "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति भगवद्वाचि कृतविश्वासाः अत्र ब्रह्मणोंऽशभूतस्त्वेतरो भोक्ता भवतीति द्वौ सुपर्णौ भवतो ब्रह्मणोंऽशभूतस्त्वेतरो भोक्ता भवति अन्योहि साक्षी भवतीति भोक्तारो वृक्षधर्मे तिष्ठत इति मथुरामण्डले यस्तु जम्बूद्वीपे स्थितो ऽथवायोऽर्चयेत् प्रतिमां प्रति स मे प्रियतरो भुर्वीति गोपालतापन्याद्याः श्रुतयः प्रतिमां प्रति प्रतिमायामित्यर्थः ॥ २० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

ईश्वरस्वरूपमनूद्य जीवस्वरूपं कथयन् वैदिकनिष्ठां निरूपयति–स्वकृतपुरेष्वमीषु बहिरन्तसम्वरणं श्रुतयो वदन्ति प्रतिपादयन्ति अन्तर्यामित्वेनान्तः सर्वाधिष्ठानत्वेन च बहिस्तथाप्यसम्वरणं तत्सम्बन्धाद्यनावृतं तत्र हेतुः पुरुषं पूर्णम् "यो जीववद्योनिषु भात्यनन्तो मूढैस्तमोहैर्भरताधिगम्य निचाप्य तं शाश्वतमात्मसंस्थं तद्विरुद्धयात्मन्यद्भुमहान्तः" इति कमठश्रुतिः अन्तः प्रविष्टः शास्ता जनानाम् एष त आत्माऽन्तर्य्याम्यमृतः" इत्यारण्यकेन नियम्यः सः कस्यापि स सर्वस्य नियामकः इति कमठश्रुतिः। एको देव इत्यादिमानुवादः एवम्भूतस्याखिलशक्तिधृतस्तवांशकृतम् अंशेन शक्तिरूपेण कृतं भिन्नं "कृति छेदने" इत्यस्माद्धातोः विज्ञानात्मानं वदन्तीति सम्बन्धः तथाच श्रुतयः अंशो ह्येष परस्य योयं पुमानुत्पद्यते च म्रियते च नाना ह्येनं व्यपदिशन्तीति पाराशर्य्यायणश्रुतिः अंशो ह्येष परस्य भिन्नं ह्येनमभिधीयत इत्यग्निवेश्मकाश्रुतिः। "अंशो नाना व्यपदेशात्" इति पारमार्षं सूत्रं "ममैवांशो जीवलोके" इत्यादिभगवदुक्तेश्च अन्यत्र चाभेदेनापि श्रुतयः प्रतिपादयन्ति। "ब्रह्मदाशा ब्रह्मदासा ब्रह्मकितवाः" इत्यादिका यापणश्रुतिः तत्वमसीत्यादिश्च "क्षेत्रज्ञञ्चापि मां विद्धि" इत्यादिस्मृतिश्च इति हेतोरुभयविधवाक्यप्रामाण्यात् उक्तप्रकारेण भिन्नाभिन्नरूपां नृगतिं प्रत्यगात्मरूपां विविच्य देहादिभ्यो विभक्तीकृत्य कतयां विवेकिनो विवेचनकुशलाः नतु कुतर्कनिष्ठा भगवत्पराङ्मुखाः तत्प्राप्तये भवतोऽङ्घ्रिमुपासते। किं व्यवहारदृष्ट्या न भुवि विश्वसिताः इदमेव प्राप्यं प्रापकं चेति विश्वासयुक्ताः सन्तः निगमावपनं निगमोक्तपुरुषार्थानां क्षेत्रं पुरुषार्थचतुष्टयदातारमित्यर्थः अत एव अभवं भवानिवर्त्तकं भवसम्बन्धशून्यमित्यर्थः ॥ २० ॥

---

### भाषा टीका।

आप के रचे भए आपके निवासरूप शरीरों में विराजमान अखिल शक्ति धारि आपने अपने सङ्कल्पसे जिसका स्वीकार किया सर्वत्र व्याप्त होने में समर्थ आवरण

**दुरवगमात्मतत्त्वनिगमाय तवात्ततनोश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः।**
**न परिलषन्ति केचिदपवर्गमपीश्वर ते चरणसरोजहंसकुलसङ्गविसृष्टगृहाः॥ २१॥**

भाषा टीका

रचित एतादृश पुरुषाकार दिव्य रूप को वेदान्त गण प्रतिपादन करते हैं आप के उस दिव्यरूप को आराधनीय भाव से चिन्तवन कर तथा इसी प्रकार आपके आराधन के योग्य मनुष्य जन्म है इस का भि विचार कर इस भूमि में कोइ एक विवेकी जन जितेन्द्रिय होकर आपके चरणारविन्दकी उपासना करतेहैं वह चरणारविन्द वेदोंके प्रति पादन करने का भूमि रूपहै अर्थात् वह चरणारविन्द वेद प्रति पादित है अथवा वह चरणार विन्द उपासक जनो को ज्ञानका उत्पादक है और संसार का निवर्त्तकहै यदि विश्वसिताः ऐसा पाठ होयतो विश्वास युत विवेकी जन इस प्रकार का अर्थ जानना॥ २०॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

भक्तिरल्पसाधनमिति वचनमनुचितमिव मन्वानो भक्तिं गुरूकरोति–दुरवगमेति। भो ईश्वर! दुरवगमं दुर्बोधं यदात्मतत्त्वं तस्य निगमाय ज्ञापनाय तवात्ततनोराविष्कृतमूर्तेश्चरितमहामृताब्धिपरिवर्तपरिश्रमणाः चरितमेव महामृताब्धिस्तस्मिन् परिवर्तो विगाहस्तेन परिश्रमणाः परिवर्जनार्थः श्रमणं श्रमः गतश्रमा इत्यर्थः। अपवर्गमपि केचिन्न परिलषन्ति नेच्छन्ति कुतोऽन्यादिन्द्रपदादि केचिदित्येवम्भूता भक्तिरसिका विरला इति दर्शयन्ति न केवलमन्यन्नेच्छन्ति किन्तु तेनैव सुखेन पूर्णाः सन्तः पूर्वसिद्धं गृहादिसुखमप्युपेक्षन्त इत्याह—तव चरणसरोजहंसकुलसङ्गविसृष्टगृहा इति। तव चरणसरोजहंसा इव रममाणा ये भक्तास्तेषां कुलं तेन सङ्गस्तेन विसृष्टा गृहास्ते तथा अनेन श्रवणकीर्तनं दर्शितं श्रुतिश्च मुक्तेरप्याधिक्यं भक्तेर्दर्शयति यथाऽऽह "यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च" इतिव्याख्यानं च सर्वज्ञभाष्यकृद्भिः मुक्ता अपि लीलया विग्रहं कृत्वा भजन्त इति॥ २१॥

त्वत्कथामृतपाथोधौ विहरन्तो महामुदः।
कुर्वन्ति कृतिनः केचिच्चतुर्वर्गं तृणोपमम्॥ ८॥

---

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी।

अन्यस्यैक्यज्ञानस्य साधनमेव भक्तिर्नतु स्वतः परमपुरुषार्थफलरूपा इति वचनं पूर्वश्लोकरूपं प्रतीतमनुचितमेव मन्वानो विचारयन् श्रुतिगणो भक्तिं गुरूकरोति मोक्षादप्यधिकपञ्चमपुरुषार्थरूपत्वेन स्थापयतीत्यर्थः। अल्पसाधनमिति तु लेशकष्ट एव महानिति सालोक्यादीनां तत्रान्तर्भावात् तेनैव चरितामृतावगाहनरूपेणैव सुखेन अनेन श्लोकेन श्रवणकीर्तन इति चतुष्षष्ट्यङ्गानामुपलक्षणं श्रुतिर्नृसिंहतापनीरूपा तत्र देवा विषयिणः ब्रह्मणि वदन्ते प्रकाशन्ते इति मुक्ता व्याख्याताः इति विषयिमुमुक्षुमुक्तसेव्यत्वं दर्शितम्॥ २१॥

---

श्रीकविचूडामणिचक्रवर्तिकृताऽन्वयबोधिनी॥

भक्तेरन्यसाधनमनुचितमिव मन्वानो भक्तिं गुरूकरोति दुरवगमेति। भो ईश्वर! केचिद्विरलाः भक्तिरसिकाः दुरवगमात्मतत्त्वनिगमाय दुर्बोधात्मतत्त्वस्य ज्ञापनाय आत्ततनोराविष्कृतमूर्तेस्तव चरितमहामृताब्धिपरिश्रमणाः सन्तः अपवर्गमपि न परिलषन्ति नेच्छन्ति। कुतोऽन्यदिन्द्रपदादिकं चरितमेव महाऽमृताब्धिस्तस्मिन् परिवर्तो विगाहस्तेन परिश्रमणाः गतश्रमाः परिवर्जनार्थः श्रमणं श्रमः न केवलमन्यन्नेच्छन्ति किन्तु गृहादिसुखमप्युपेक्षन्ते इत्याह–ते चरणसरोजहंसकुलसङ्गविसृष्टगृहाः तव चरणसरोजहंसा इव रममाणा ये भक्तास्तेषां कुलेन सह यः सङ्गस्तेन विसृष्टास्त्यक्तगृहा यैस्ते अनेन श्रवणकीर्तने दर्शिते श्रुतिश्च मुक्तेरप्याधिक्यं भक्तेर्दर्शयति यथाह "यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च" इति अर्थः सर्वे देवाः यं परमेश्वरं नमन्ति तथा मुमुक्षवो ब्रह्मवादिनश्च यं नमन्ति अत्र देवाः पृथिव्यन्तरिक्षनाकब्रह्मलोकनिवासिनः ये भगवद्भक्ताः ते सर्वे देवाः संसाराधिजिगीषुत्वात् मोक्षशालित्वाच्च तेषां मध्ये द्विविधा उपासकाः मुमुक्षवः संसारान्मोक्षकामाः ब्रह्मवादनशीलाः ब्रह्मवादिनः मुक्ताः इत्यर्थः। एते सर्वे नमन्ति भजन्त इति व्याख्यानं च सर्वज्ञभाष्यकृद्भिर्नृसिंहतापिन्यां मुक्ता अपि लीलया विग्रहं कृत्वा भजन्ते। इति स्वामिनां—

त्वत्कथामृतपाथोधौ विहरन्तो महामुदः।
कुर्वन्ति कृतिनः केचित् चतुर्वर्गं तृणोपमम्॥ २१॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तच्छ्रुत्वा लब्धनिजभावोद्दीपनाः श्रवणार्पितपदाब्जाः साक्षादेव तन्माधुरीं वर्णयन्ति–दुरवगमेति। हे ईश्वर! सर्वोपरि विराजमानवैभव! केचिद्विरलप्रचाराः अपवर्गमपि परि सर्वतोभावेनैकांशेनापि न लषन्ति किमुतान्यत् कथम्भूतास्ते तत्राहुः दुरवगमं सर्वागोचरपरमगोलोकादिवैकुण्ठविहारित्वेन दुर्बोधं यत् आत्मनस्तव तत्त्वं स्वरूपगुणलीलादियाथार्थ्यं तस्य निगमाय निगमनाय अनुभावनाय आत्ततनोः प्रपञ्चे समानीतनिजविग्रहस्य तव चरितरूपे महामृताब्धौ यद्वि महामृताब्धिः कश्चिद्भवति तदा साधारणजनबोधनाय तेन रूप्येत श्रैष्ठ्यात् स्वतस्त्वमृतानां सालोक्यादिमोक्षानन्दानां तदन्तर्भावित्वात्तदीयमहासमुद्रतुल्ये यः परिवर्तः मुहुरवगाहोऽनुभवः तेनानुषङ्गिकतयैव गतसंसारश्रमाय इत्यर्थः। ननु बहवोऽपि तच्चरितं शृण्वन्ति तथापि न तादृशत्वमिति केषाञ्चित्तादृशत्वे किङ्कारण-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मिथ्याशङ्क्य परमरहस्यतया सर्वान्त एव तद्व्यञ्जयन्ति—चरणेति । हंसाः परमतत्त्वानुभाविनस्तेष्वपि चरणसम्बन्धिनो मुक्तानामपि सिद्धानामित्यादिशास्त्रे तच्चरणसम्बन्धेन लोकेऽपि सरोजसम्बन्धेन हंसानामुत्कर्षो वर्ण्यत इति परमोत्कृष्टाः ये तन्माधुरीसमास्वादतिरस्कृतमोक्षानन्दाः तेषां कुलं शिष्योपशिष्यादिरूपं तदेकस्यापि प्रसङ्गेन विसृष्टं त्यक्तमात्रं गृहं यैस्तेपि किमुत तत्र चिरं प्रवृत्ताः किमुततरां तादृशहंसानां शिष्यादयः किमुततमां स्वयमेव तादृशहंसा इत्यर्थः । अत्र मुख्याः श्रुतयः "चरणं पवित्रं विततं पुराणं तेन पूतस्तरति दुष्कृतानि तेन पवित्रेण शुद्धेन पूताः अतिपाप्मानमरातिं तरेम लोकस्य द्वारमार्चिमत्पावमानं महद्वत् अमृतस्य धारा बहुधा दोहमानं चरणं लोके सुधितां दधातु मौतत्सत्"इत्याद्याः अमृतस्य धारा बहुधा दोहमानामिति चरितमहामृताब्धिमत्त्वमुक्तं भक्त्या चरणवर्णनं तदुपलक्षणत्वेन श्रीभगवन्तमेव बोधयन्तीति श्रुत्यैकार्थ्ये तदनुगताः श्रुतयस्तु यं सर्वे देवा नमन्तीत्याद्याः अत्र देवा विषयिणः ततश्च मुमुक्षव इत्यत उत्तरपाठात्तथाविधशब्देन क्रमोत्कृष्टतया तदुपदेष्टारो मुक्ता एव लभ्यन्ते ब्रह्माणि वदन्ति प्रकाशन्ते इति अत्र श्रीमध्वाचार्यधृताः श्रुतयश्च मुक्ताश्चैनमुपासते मुक्तानामपि भक्तिर्हि परमानन्दरूपिणीत्याद्याः तथा च ब्रह्मसूत्रं "मुक्तोपसृप्यव्यपदेशात्"इति ॥ २१ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अवताराणां भक्तिवर्द्धकत्वमाह—दुरवगमेति । भो ईश्वर ! सर्वनियन्तः ! दुरवगमात्मतत्त्वनिगमाय दुरवगमं दुर्बोधं यदात्मतत्त्वं तस्य निगमाय ज्ञानप्रवर्त्तनाय आत्ततनोः आविष्कृता मूर्त्तिः येन तस्य तव चरितमेव महामृताब्धिः महासमुद्रः तस्मिन् परिवर्त्तेन आवर्त्तेन परिवर्जने गतः परिश्रमो येषां ते तथोक्ताः अपवर्गमपि कैवल्यं मोक्षमपि भक्तिरसिका न वाञ्छन्ति कुतोऽन्यान् कालविधुतम् इन्द्रादिपदमिति भावः । कीदृशास्त्वच्चरणसरोजहंसकुलसङ्गविसृष्टगृहाः त्वच्चरणकमले हंसा इव रममाणा ये भक्ताः तेषां कुलं वृन्दं तेन यः समागमः तेन विसृष्टाः त्यक्ताः गृहाः यैः तथाभूताः त्यक्तगार्हस्थ्याः ॥ २१ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

केचित्तूभयविधमप्युपासनं विहाय केवलं त्वद्गुणानुभवामृतपानसुखिताः मोक्षमपि नेच्छन्तीत्याहुः—दुरवगमेति । दुरवगमं दुःखेनाप्यवगन्तुमशक्यं यदात्मनस्तव तत्त्वं याथात्म्यं तस्य निगमाय प्रकाशनायात्ता उपात्ता तनुः रामकृष्णादिरूपा येन तस्य तव चरितमेव महानमृताब्धिः तस्मिन् परिवर्तेनावगाहनेन परिश्रमणः परितस्त्र वर्जने परिविधूताः श्रमाः आध्यात्मिकादितापाः येषां ते हे ईश्वर ! ते तव चरणसरोजसम्बन्धिनो हंसाः भागवताः तत्कुलसङ्गेन विसृष्टाः त्यक्ताः गृहाः देहाद्यनुरागाः यैस्तेऽपवर्गं मोक्षसुखमपि न परिलषन्ति न काङ्क्षन्ति ॥२१॥८॥

---

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथ भगवदवताराणां भगवद्भक्तिवर्द्धकत्वमाह—दुरवगमेति । हे ईश्वर चिदचिन्नियन्तः ! दुरवगमं दुर्बोधं यदात्मतत्त्वं तस्य निगमाय ज्ञानप्रवर्त्तनाय आत्ततनोः स्वीकृतमत्स्यादिमूर्त्तेस्तव चरितमेव महामृताब्धिः सुधानिधिस्तस्मिन् परिवर्त्तोऽवगाहस्तेन परिश्रमणा विगतश्रमाः ईदृशास्त्वद्भक्ताः केचिद्विरलाः अपवर्गं मोक्षमपि न परिलषन्ति नेच्छन्ति तथा च भगवद्वचनं—

"नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः ।
येऽन्योन्यतो भागवताः प्रसज्य सभाजयन्ते मम पौरुषाणि ॥ इति

कथम्भूतास्ते चरणसरोजयोर्हंसा इव रममाणा यतयस्तेषां कुलं तस्य सङ्गेन विसृष्टगृहाः त्यक्तगार्हस्थ्याः तथाच वक्ष्यते श्रुतिः "दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरावसथ"इति ॥ २१ ॥

---

योगिरामानुजाचार्यकृतसरलाख्या व्याख्या ।

त्वदीयपरमभक्ताः त्वत्कथामृतसेवनपराः मुक्तिमपि नाभिलषन्तीत्याहुः—दुरवगमेति । भो ईश्वर शास्त्रोपदेशादिना सर्वचेतननियमनकारिन् ! दुःखेनाप्यवगन्तुमशक्यं दुरवगमं दुर्बोधं यदात्मतत्त्वम् आत्मनः भगवतस्तत्त्वं स्वरूपं तस्य निगमाय बोधाय चेतनानामितियावत् आत्ततनोः स्वीकृतरामकृष्णाद्यवतारस्य तव ज्ञानशक्त्याद्यनन्तकल्याणगुणाकरस्य चरितमहामृताब्धिपरिवर्त्तपरिश्रमणाः चरितमेव महामृताब्धिः तस्मिन् परिवर्त्तः सर्वतस्स्थितिः साच श्रवणमनननिदिध्यासनरूपा अधीतिबोधाचरणप्रचारणरूपा च ब्रह्मवित् ब्रह्मणि स्थितः इत्युक्ते यथा तच्छ्रवणादिकारीत्यर्थो भवति तद्वत् तथा च तत्तत्परिवृत्ते तच्छ्रवणादौ या स्थितिः तत्र परिश्रमणाः कृतपरिश्रमाः महाविश्वासश्रद्धाभ्यां भगवच्चरित्ते एकैकाक्षरस्य विचित्रनानार्थकानां श्रवणमननादौ परिवृत्ते स्थितौ कृतपरिश्रमा इत्यर्थः । अथवा परिवर्त्तः अवगाहः प्रत्यक्षरस्य सम्यगर्थविचाररूपः तस्मिन् कृतपरिश्रमा इत्यर्थः । ननु भगवच्चरितामृतस्यानुभवे प्रयासश्चेत् प्रयासस्य दुःखहेतुत्वेन तत्र प्रवृत्तिः कस्यापि न भवेदिति चेन्न सुखरूपाणामर्थानामनुभवे जायमानस्य परिश्रमस्यापि सुखवत् प्रियत्वेन तादृशपरिश्रमविशिष्टसुखपदार्थानुभवेषु प्रवृत्तेर्बाधकाभावात् अत एव पुरुषार्थप्रयोजकं परिश्रममर्थयन्ति श्लाघयन्ति च महाकवयः यथावा गुरुकुलक्लिष्टो मुरारिः कविरित्यत्रापि क्लेशः श्लाघितः श्रीजयदेवेनापि श्रीकृष्णस्य शृङ्गाररसानुभवे परिश्रमश्श्लाघितः यथा गीतगोविन्दे "व्यक्तानुरागमिव खेलदनङ्गखेदस्वेदाम्बुपूर"मित्यनेन भगवतः शृङ्गाररसानुभवे परिश्रमो वर्णितः तथा तत्रैव अथ कान्तरतिक्लान्तमपि मण्डनवाञ्छया इत्यत्रापि शृङ्गारे परिश्रमो वर्णितः तथा प्रकृतेपि भगवत्कथामृतरसानुभवे परिश्रमस्य सुखरूपः

### श्रीमद्रामानुजाचार्यकृतसारव्याख्या।

रसेन प्रार्थनीयस्य श्लाघनीयस्य शृङ्गारानुभवं परिभ्रमथेत् इत्यनं विस्तरेण किञ्च चरितमहामृताब्धिपरिभ्रमणाः इत्यस्यार्थः पर- मश्लाघ्यो भावः भगवच्चरितामृतस्य महाब्धिरूपत्वेन तस्या- परिमितत्वात् वाङ्मनसागोचरानन्तादिभगवद्गुणवर्णनविशि- ष्टस्य तादृशभगवच्चरितस्य सम्पूर्णानुभव ब्रह्मादीनामप्यश- क्यत्वात् ब्रह्मादिभिरपि यावच्छक्ति यावत्परिश्रमं तावदनु- भवनीयत्वेन सूरिभिः प्रतिपादितत्वेन सर्वेषामपि भगवद्- गुणानां चरितानां चानुभवं परिभ्रमा भवत्यव तथापि याव- च्छक्ति यावत्परिश्रममभक्ताः आदरेणानुभवन्त्येव तथापि याव- च्छक्ति भगवच्चरित्रस्य लेशस्याप्यनुभवो महानन्दजनकत्वेन परमपुरुषार्थरूपाण्यवेति बोद्धव्यं एतदभिप्रायेणैव परिवृत्तपरि- भ्रमणाः इत्युक्तम् अस्मिन्नर्थे प्रमाणानि वक्ष्यन्ते तदुक्तं श्रीया- मुनाचार्यैः—

> "यद्वाश्रमावधि यथामति वाप्यशक्तः,
> स्तौम्येवमेव खलु तेपि सदा स्तुवन्तः।
> वेदाश्चतुर्मुखमुखाश्च महार्णवान्तः-
> कोमज्जतोरणुकुलाचलयोर्विशेषः॥

इति श्रीरामायणे च—

> "चरितं रघुनाथस्य शतकोटिप्रविस्तरम्।
> एकैकमक्षरं प्रोक्तं महापातकनाशनम्॥

इति. वेदे च "यतो वाचो निवर्त्तन्ते अप्राप्यमनसा सह आनन्दं ब्रह्मणो विद्वान्न बिभेति कदाचनेति" इत्यादिप्रमाणैर्भगवद्गुण- चरितानाञ्च वर्णने वेदानामप्यशक्यत्वात् अतः भक्तैरपि याव- च्छक्ति यावत्परिश्रमं वर्णनीयं भवतीत्यर्थः सूचितः परि- वृत्तपरिभ्रमणाः इत्यनेनेति मन्तव्यं इममर्थमविचार्यान्येषु व्या- ख्यानेषु परिभ्रमणाः इत्यस्य क्लिष्टकल्पनयार्थः कृतः स च सहृदयसंवेद्यः अत एव विचित्रमहदानन्दकरचरितस्य तव चरणसरोजहंसकुलसङ्गविसृष्टगृहाः चरणसरोजयोः हंसाः चरणसरोजयोः हंसवद्रममाणा भक्ता इत्यर्थः। तेषां कुलं समूहः तेन सङ्गः कथाश्रवणकीर्तनादिना सह स्थितिरूपः सम्बन्धः तेन विसृष्टाः गृहाः यैस्ते त्यक्तगृहाः एवम्भूता- स्सन्तः एकस्स्वादु न भुञ्जीतेतिरीत्या भगवत्कथामृतानुभवे एकस्य विशेषस्वारस्याभावात्। बोधयन्तः परस्परमित्युक्त- प्रकारेण परस्परबोधनादिना कथामृतानुभवस्य महदानन्द- करत्वात् तदर्थं महतां सङ्गकरणे गृहादीनां प्रतिबन्धकत्वात् गृहादीन् परित्यजन्तीति भावः। एवम्भूताः केचन कतिपयाः भक्ताः एवंविधाः तव बहवस्सन्ति किन्तु कतिपया एवातः एतादृशाः भक्ताः दुर्लभाः इत्यर्थः। तदुक्तं भगवता—

> "बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
> वासुदेवस्सर्वमिति समहात्मा सुदुर्लभः॥ इति

कश्चिन्मां वेत्ति तत्वतः इति च तथा च एवम्भूताः भक्ताः अप- वर्गमपि न परिलषन्ति नेच्छन्ति स्वर्गादिकं नेच्छन्तीति किं वक्तव्यमिति भावः। हे ईश्वर दुरवगमात्मतत्त्वनिगमायात्ततनो- श्चरितमहामृताब्धिपरिवर्त्तपरिभ्रमणाः ते चरणसरोजहंस- कुलसङ्गविसृष्टगृहाः केचित् अपवर्गमपि न परिलषन्तीत्य- न्वयः॥ २१॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

मू०॥ इति विमृशन्ति कवयो निगमावपनं यजन्त उपासते भव- मध्यविनिश्वसिताः। दुरवगमात्मतत्त्वनिगमायतवात्ततनोश्चरित महामृताब्धिपरिवर्त्तपरिश्रमणाः॥ ८॥ २२॥

"विमथ्यं वेदाब्धिमतिश्रमेण ज्ञात्वा परेशं मुनयो विमुक्ताः स्मृषन्ति यज्ञैश्च यजन्ति नित्यमुपासते वेदफलप्रदं तम्" इति कुशिकश्रुतिरूपस्य इति विमृशन्तीति श्लोकस्यायमर्थः प्राणिनो भवमध्ये निनिश्वसिता इति यतोऽतः कवयो विमृशन्तीति सामान्येनोक्तं विशिनष्टि—निगमेति। हे दुरवगमात्मतत्त्व दुर्ज्ञेय- निजस्वरूप! चरितलक्षणामहामृताब्धेः परिवर्त्तनेन मथनेन परि- श्रमणाः "चर गतिभक्षणयोः" इत्यतस्त्वत्स्वरूपगतिहेतुर्वेदश्चरित- शब्देनोच्यते स एव महामृतसमुद्रः तस्य परिवर्त्तनं परिलोडनं मथनमितियावत् तेन परिश्रान्ता इति यतः अतो भवमध्या- द्विनिश्वसिताः मुक्ताः निगमानामावपनं स्थानं निगमानां ततो- भिव्यक्तेस्तत एव फलप्रदस्याद्विषयत्वाच्च निगमावपनं त्वां विमृश्य यज्ञादिभिर्यजन्ते उपासते सजातीयविजातीयप्रत्य- यानन्तरितत्वेन ध्यायन्ति कीदृशाः निगमविषयेषु आवन- वात्मनसः विस्मृतवाङ्मनोव्यापार इत्यनेन वेदेनैव विज्ञातभगव- त्तत्वा इत्युक्तं भवति॥ २१॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तच्छ्रुत्वा लब्धनिजभावोद्दीपनाश्रण्योपनिषदाद्याः साक्षादेव तन्माधुर्यं वर्णयन्ति—दुरवगमेति। आत्मतत्त्वं स्वीयस्वरूपगुणलीला- रहस्यम् आत्ता जगत्याकृष्टा प्रकटिता तनुर्येन तस्य। परिभ्रमणाः श्रमवर्जिताः चरणसरोजयोर्ये हंसाः श्रीशुकादयस्तेषां कुलं शिष्योपशिष्यपरम्परा तस्य सङ्गमात्रेण विसृष्टमात्रं गृहं यैस्ते- ऽपि। किमुत तेषां हंसानां कुलं ते वा स्वयमित्यर्थः॥ २१॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

ननु, अङ्घ्रिभजनं नाम किं अङ्घ्रिगतिज्ञानं किं वा अङ्घ्रिमेव चरणारविन्दम् अधिगतावित्यस्मादृशामसाधनः करणसाधनो वाङ्घ्रिशब्द इत्याशङ्क्य स्पष्टमाहुः दुरवगमात्मतत्त्वेत्यादि। हे ईश्वर! केचिदिह खला अपवर्गं कैवल्यमपि न परिलषन्ति ते के इत्याहुः। चरणसरोजेति ते तव चरणसरोजयोर्ये हंसास्तन्निवासिनो महाभागवतास्तेषां यत् कुलं समूहस्तस्य सङ्गेन विसृष्टा गृहाः यैर्महदुपदेशेन त्यक्तसंसाराः ननु तेषामुपदेशमात्रत्यक्तगृहत्व- मेव पुरुषार्थः किंवा तत्रान्यत् किञ्चिदस्तीत्याशङ्क्याहुः—चरि- तेत्यादि। तव यच्चरितं वृन्दावनविलासादिलीला तदेवापरा- ऽमृताब्धिः तत्र यः परिवर्त्तो घनावर्तस्तत्र परिगतं भ्रमणं भ्रमः

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

संसारक्लेशो येषां परिवर्जनार्थः तव कीदृशस्य दुरवगमं दुर्बोधं यत् आत्मतत्त्वं सच्चिदानन्दघनत्वनित्यलीलादिकम् तस्य निगमाय सुखबोधाय आत्ता आविर्भाविता तनुर्मूर्त्तिर्येन अथवा हे दुरधिगमात्मतत्त्व हे निगमाय निगमानां वेदानां अय शुभावहाविधे आयश्चाथर्ववेदाश्रयइति वा तव कीदृशस्य आत्ता दोर्भ्यामालिङ्गनेन गृहीताः तनवः श्रीरुक्मिणीप्रभृतीनां शरीराणि येन शयानं सह शक्तिभिरित्युक्तेः एवम्भूतस्य तवेत्यर्थः ॥ २१ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं प्रवेशश्रुतिप्रसङ्गविचारेण जीवानां स्वरूपमुक्त्वा तेषामानन्दाकाङ्क्षायां भगवत्सेवैव कर्त्तव्येति विनिश्चित्य तत्रासम्भावनाविपरीतभावनाव्युदासार्थं भगवत्यपि कदाचिदानन्दो न भवेदिति को वा भगवान् यः पूर्णानन्द इति च सन्देहद्वयं वारयितुमाह—दुरवगमात्मतत्त्वनिगमायेति । भगवत्यानन्दोऽस्ति नवेति शङ्कापि न कर्त्तव्या नापि को वा भगवानिति नापि जीववत् जनने आनन्दतिरोभावः शङ्कनीयः यतोऽवतीर्णस्य कृष्णस्य चरित्रमात्रश्रवणेपि तादृश आनन्दो जायते येन विचारकाः अपवर्गमपि परमानन्दप्रापकं न परिलषन्ति कदाचिदपि न वाञ्छन्ति न हि दृष्टे अनुपपन्नं नाम व्याघातात् एतस्याप्यभिज्ञापकमन्यदस्तीत्याह चरणसरोजहंसकुलसङ्गविसृष्टगृहा इति । गृहे हि महत्सुखं भवति तत्सिद्धं विद्यमानं तदपि परित्यजन्ति यदि भगवति सहस्रांशेनाप्यानन्दसन्देहो भवेत् तर्हि विद्यमानं कोवा त्यजेत् अतो भगवति आनन्दे कोपि सन्देहो न कर्त्तव्य इत्यर्थः । अवतारोपि भगवतो ज्ञानार्थं इति विपरीतार्थतां वदन् संव्यवहार्यस्यापि पूर्णानन्दत्वमिति स्थापयति दुरवगमो यः आत्मा केनापि ज्ञातुमशक्यः यः चक्षुष्मान्न पश्यति तत्रोपायः कठिनः यः स्वात्मानमेव न जानाति तं कोवा बोधयेत् तथापि न बुध्यते स्वात्मा एवं सति कीदृशोऽयमात्मेति भगवति सन्देहः तस्य च तत्त्वमतिदुर्ज्ञेयं किं रूपं तस्य परमार्थभूतमिति एतादृशस्य ज्ञानं यदि लोके प्रसिद्धं स्यात् तदैतावता कालेन सर्वे मुक्ताः स्युः अत आत्मतत्त्वज्ञानार्थं लोकावगतं कारणं नास्तीति भगवानाविर्भूतःनितरां गमोज्ञानं देहग्रहणमज्ञानकार्यं भगवतश्चाद्भुतचरितम् अज्ञानकार्यसदृशं गृह्णन् प्रकटीकुर्वन् सर्वेषां ज्ञानं सम्पादयतीति अतोऽद्भुतकर्मणो भगवतश्चरित्रमेव महानमृताब्धिर्महत्त्वं लोकसिद्धसमुद्रापेक्षयाप्याधिक्यमिति अयं समुद्रः कथञ्चित् शोषणं बन्धनमुल्लङ्घनं वा प्राप्नोति सतु न केनाप्येतत्कर्त्तुं शक्य इति अब्धित्वं तृणपादिनेव अमृतत्वं च तत्र परिवर्त्तनं परिवर्त्तः बहुधा आलोडनं तदर्थं परितः श्रमो येषां तेषां तादृशचरित्रालोडने सामर्थ्यं भवति ते महारसपानमत्ता इव स्वयं प्राप्तं केनचिद्दीयमानं वा अपवर्गं न गृह्णन्तीति किं वक्तव्यं बहुधा प्ररोचनायामपि तेषामिच्छा नोत्पद्यत इत्यर्थः ईश्वरेति सम्बोधनात् त्वया दीयमानमपि न गृह्णन्ति इति सूचितं ननु परमानन्दस्योभयत्रापि तुल्यत्वात् कथासमुद्रे अवगाहनक्लेशाधिक्यात् किमित्यपवर्गं न वाञ्छतीति चेत्तत्राह—ते चरणेति । यथा लोके एकाकी यथा रसानुभवं करोति तदपेक्षया सर्वैर्योग्यैः सह रसानुभवः सुखाधिक्यहेतुर्भवति एवं परमानन्दोपि ते ते चरणसरोजैकाश्रयाः ये हंसाः तेषां कुलं समूहः तेषां सङ्गार्थं विसृष्टं गृहं यैः तैः सह परमानन्दः बहुधा भोक्तव्य इति मोक्षापेक्षयापि भगवत्कथाश्रवणरसोऽधिको निरूपितः गृहस्य प्रतिबन्धकत्वात् भगवत्सेवकानाञ्च सम्मत्यभावात्त्यागः॥ २१ ॥

कृष्णे हरौ भगवति परमानन्दसागरः ।
वर्त्तते नात्र सन्देहः कथा तत्र नियामिका ॥८॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भगवद्विषयकस्य भक्तियोगस्य सर्वोत्कर्षं स्वाभिधेयत्वञ्च द्योतयितुं तमेव पुनरप्यभ्यस्यन्ति—दुरवगमेति चतुर्भिः । हे ईश्वर ! दुरवगमं जीवैर्ज्ञातुमशक्यं यदात्मतत्त्वं स्वीयरूपगुणलीलारूपैश्वर्य्यमाधुर्य्यं तस्य निगमाय ज्ञापनायात्ततनोराविष्कृतश्रीमूर्त्तेस्तव चरितान्येव महामृताब्धयस्तेषु ये परिवर्त्तास्तरङ्गभ्रमिपुञ्जास्तेषु निमज्जनोन्मज्जनोत्थं परिश्रमणमतिश्रमो येषां ते केचिद्विरलप्रचारा भक्ताः अपवर्गे मोक्षसुखमपि नेच्छन्ति किमुत त्रैवर्गिकसुखं किन्तु तदेव" त्वच्चरितमहामृताब्धितरङ्गेषु "निमज्जनोन्मज्जनपरिश्रमसुखमेवेति भावः यथा विषयलम्पटाः परमसुकुमाराः श्रमलेशासहना अपि साम्प्रयोगिकं परिश्रममेव सर्वसुखाधिकं सुखं मन्यन्ते तथैव . त्वद्भक्तास्त्वल्लीलाकथामाधुर्य्यपानोत्थं नर्त्तनकीर्त्तनक्रोशनमिथःपादतलप्रपतनमूर्च्छनप्रबोधनहाहाकरणरोदनद्रवणादिपरिश्रममेव परमं सुखं मानयन्तो ब्रह्मास्वादसुखं पशूनां तृणचर्वणसुखमिव मन्यन्ते तदुक्तं श्रीस्वामिचरणैरपि "त्वत्कथामृतपाथोधौ विहरन्तो महामुदः । कुर्वन्ति कृतिनः केचिच्चतुर्वर्गं तृणोपमम्" ॥ इति तत्सुखप्राप्तिकारणं वदन्त्यो विशिंषन्ति ते तव चरणसरोजमाधुर्य्यास्वादिनो हंसा ये परमभागवतास्तेषां कुलस्य सङ्गेन विसृष्टं गृहं स्त्रीपुत्रादिसङ्गसुखं यैस्ते श्रुतिश्च मुक्तेरप्याधिक्यं भक्तेर्दर्शयति यथाह—यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च व्याख्यातं च सर्वैर्भाष्यकृद्भिः मुक्ता अपि लीलया विग्रहं कृत्वा भगवन्तं . भजन्ते इति अत्र मध्वाचार्य्यधृताः अन्याः श्रुतयश्च मुक्ताशतमुपासते मुक्तानामपि भक्तिर्हि परमानन्दरूपिणीत्याद्याः अमृतस्य धारा बहुधा दोहमानं चरणं लोके सुधितां दधातु ॐतत्सत्"इत्याद्याश्च ॥ २१ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भक्तिरेवैनं, नयति भक्तिरेवैनं दर्शयति । "भक्तिवशः पुरुषो भक्तिरेव भूयसी "इति माठरश्रुतिर्भक्तेर्गरीयस्त्वं तन्निष्ठानां च निःस्पृहत्वं द्योतयन्ती स्तौति—हे दुरवगम ! दुष्प्राप आत्मतत्त्वनिगमाय आत्मनः स्वस्य भगवतः स्वरूपज्ञापनाय आत्ततनोराविष्कृतसदानन्दविग्रहस्य चरितकथा एव महामृताब्धि-

त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियवच्चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च ।
न बत रमन्त्यहो असदुपासनयाऽऽत्महनो यदनुशया भ्रमन्त्युरुभये कुशरीरभृतः ॥ २२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स्तदावर्तोऽवगाहनं स्नानपानस्थानीभूतेन श्रवणादिना सेवनं तेन परिश्रमणं येषां ते तथाभूतश्रवणाद्यभिनिवेशेन त्यक्तव्यवहारतत्फलरागादिदोषात्मकश्रमा इति यावत् यद्वा परिश्रमणाः परिकर्षेण तदनुध्यानरूपं श्रवणं येषां ते यद्वा अन्यसाधनानि जन्मकोटिभिः कृत्वा चरमजन्मनि तव कथामृताब्धिमवगाहनं प्राप्य विश्रामवन्तः निवृत्तसाधना इत्यर्थः । तदुक्तम्—

" जन्मान्तरसहस्रेषु तपोदानसमाधिभिः ।
नाराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥ "इति

एतदेव फलेच्छाभावेन दृढयति । न परिलषन्तीति । अपिशब्देन कैमुत्यन्यायमाह-यद्यपवर्गमपि नेच्छन्ति त्रिवर्गस्य का वार्तेत्यर्थः । ननु नैतन्नियमो विषयिणां मुमुक्षामात्रेऽपि भोगाभिलाषदर्शनादित्याशङ्क्याह—तव चरणसरोजहंसकुलसङ्गविसृष्टगृहा इति । तव चरणसरोजाश्च ते हंसाश्च यथा सरसो वियोगे पद्मानि शुष्यन्ति, तथा तव चरणवियोगे तेषां प्राणधारणं दुष्करमित्येतत्तात्पर्यात्मकोपमागर्भितविशेषणं तेषां कुलं समूहस्तत्सङ्गेन विसृष्टास्त्यक्ताः स्वतः प्राप्तभोगसम्पन्ना गृहाश्च यैस्ते एवम्भूतानां भगवच्चरणशरणैकाश्रयाणामत्यन्तदौर्लभ्यं दर्शयति कश्चिदिति तथाचोक्तं षष्ठे—

"मुक्तानामपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने " ॥

इति ॥ २१ ॥

भाषा टीका ।

दुःखसे भी अनिर्वचनीय अशक्य एतादृश आपने तत्त्व के अर्थ राम कृष्णादि दिव्यावतार तनुधारि आप के प्रति मानुष चरित्र रूप अगाध अमृत समुद्र में स्नान करने से जिन के संसार तापनि प्रशान्त होगए हैं हे ईश्वर आप के चरणारविन्द के मकरन्द को लेने वारे हंस रूपी भागवतन के समूह के सङ्ग करनेमे जिनोने देह गेहादि कोंका त्यागकर दिया है एतादृश कोई क ज्ञानी जन अप ने स्वार्थ के लिये मोक्ष सुख की कांक्षाभी न हि करते हैं ॥ २१ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

"आराममस्य पश्यन्ति न तं पश्यति कश्चन न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति" इत्याद्याः श्रुतयोऽनुक्रोशन्त्यो जगदात्मनीश्वरे रतिमुपदिशन्तीत्याह—त्वदनुपथमिति । त्वदनुवर्तित्वात्स्वतत्सेवोपायिकमिदं कुलायं कौ पृथिव्यां लीयत इति कुलायं शरीरमात्मसुहृत्प्रियवत् आत्मा च सुहृच्च प्रियश्च तद्वच्चरति स्वाधीनतया वर्तत इत्यर्थः । तथाऽपि त्वयि उन्मुखे हिते प्रिये आत्मनि च अप्यर्थे चकारः एवम्भूते सुसेव्येऽपि त्वयि बताहो कष्टं न रमन्ति न सख्यादिना भजन्ति असदुपासनया देहाद्युपलालनयाऽऽत्महनः प्रमादिनः कुतः यदनुशयाः यस्यामसदुपासनायामनुशयो वासना येषां ते कुशरीरभृतः सन्त उरुभये संसारे भ्रमन्ति परिवर्तन्ते अत आत्महन इति भावः ॥ २२ ॥

त्वय्यात्मनि जगन्नाथे मन्मनो रमतामिह ।
कदा ममेदृशं जन्म मानुषं सम्भविष्यति ॥ ९ ॥

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

श्रुतौ अस्य परमात्मनः आराममधिष्ठानं जगद्रूपं सर्वे पश्यन्ति तमारामकर्त्तारं परमात्मानं कश्चन कोपि न पश्यति न विदाथ न जानीथ इमा इमानि भूतानि जजान जनयति अतः कारणादन्यद्युष्माकमन्तरं व्यवधानं बभूव यतो भवन्तो नीहारेणाविद्यया प्रावृता अवगुण्ठिताः जल्प्याः जल्पप्रवृत्तास्तार्किका इत्यर्थः । असुतृपः प्राणतर्पणपराः विषयिणश्च उक्थानां शासितारः कर्मोपदेशकाः यज्वानः चरन्ति संसरन्तीत्यर्थः । रमन्ति रमन्ते ॥ २२ ॥

श्रीकविचूडामणिचक्रवर्त्तिकृताऽन्वयबोधिनी।

विषयिणो बहिर्मुखान्प्रत्यनुक्रोशन्त्यो जगदात्मनि ईश्वरे रतिमुपदिशन्ति इत्याह—त्वदनुपथमिति । कौ पृथिव्यां लीयते इति कुलायं शरीरं त्वदनुपथं तव सेवायोग्यम आत्मसुहृत्प्रियवच्चरति स्वाधीनतया वर्त्तते तथापि असदुपासनया देहाद्युपलालनेन आत्महनः प्रमादिनो जना आत्मनि त्वयि न रमन्ति सख्यात्मनिवेदनादिना न भजन्ति बत अहो कष्टं पन्थानमनुगतम् अनुपथम् आत्मवत् अहङ्कारास्पदत्वात् सुहृद्वत् विषयार्पणहितकारित्वात् प्रियवत् इतस्ततः प्रीतिविषयत्वात् देहस्त्वेवमाचरति तथापि त्वयि न रमन्त इति कष्टं कुतः यदनुशयाः कुशरीरभृतः सन्तः उरुभये संसारे भ्रमन्ति अत एवात्महन इति भावः । अस्यामसदुपासनायां यः अनुशयो वासना येषां ते यदनुशयाः त्वयि कथंभूते उन्मुखे भजनमात्रेण संसारादुद्धर्त्तुमुद्यते हिते पितृवत्कारिणि प्रिये मनोनुकूले सख्यौ एवम्भूते सुखसेव्ये आत्मनि त्वयि न रमन्त इति कष्टं आहुः श्रुतयः ता यथा "आराममस्य पश्यन्ति न तं पश्यति कश्चन न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव

### श्रीकविचूडामणिचक्रवर्त्तिकृतान्वयबोधिनी ।

नीहारेण प्रावृता जल्प्याश्चासुतृप उक्थशासश्चरन्ति" इति अर्थः अस्यात्मन आरामं आरमनं ग्रामं नगरं स्त्रियं पुत्रमन्नाद्य-मित्यादिवासनारूढं आक्रीडनं सर्वे पश्यन्ति तमात्मानं कश्चन कश्चिदपि न पश्यति अहो भाग्यहीनता लोकस्येति लोकं प्रत्यनुक्रोशनं दर्शितं अत्यन्तविविक्तस्वप्रकाशोऽपि निरात्मा स्वप्नादौ भवतीत्यर्थः । अनुक्रोशपरेयं विश्वकर्मामनुष्यणां हितमुपदिशति न तमिति तं यूयं न विदाथ न जानीथ य इमाः इमानि भूतानि जजान जनयामास अतो युष्माकं तस्य च अन्यत् महदन्तरं बभूव स पुरुषो जनकः यूयं जन्याः यदि ज्ञात्वाऽऽत्मतत्त्वं मत्यैनोपास्थ तदा न संसृतिः स्यादित्यभिप्रायः उपदेशपरेयं श्रुतिः एवं प्रत्यक्ष-मुक्त्वा परोक्षमभिनयेन दर्शयन्नाह—नीहारेण ये च जल्प्याः जल्पप्रवृत्ताः तार्किकाः येचासुतृपः असूनेव तर्पयन्त्यसुतृपो विषयिणः येच उक्थशास उक्थानां शासितारो यज्वानः नीहारेणाऽविद्यया आवृताः सम्भ्रमरन्ति संसारे भ्रमन्तीति सनिन्दोपदेशपरेयम् "असूर्यानामते लोकाः" इत्यपि ज्ञातव्यम् अथ-स्वामिनां—

त्वय्यात्मनि जगन्नाथे मन्मनो रमतामिह ।
कदा ममेदृशं जन्म मानुषं सम्भविष्यति ॥

सुगमम् ॥ २२ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

त्वदनुपथमित्यस्य टीकायां श्रुतौ आराममधिष्ठानं जगद्रूपं विदाथ जानीथ इमा इमानि भूतानि जजान जनयति अन्यद्युष्माक-मन्तरं बभूव अतः कारणाद्युष्माकं तस्य च महदन्तर-मित्यर्थः । नीहारेणाविद्यया जल्प्याः जल्पप्रवृत्तास्तार्किकाः इत्यर्थः असुतृपः विषयिणश्च उक्थशासो • यज्वानः उक्थानि हि यज्ञे शस्यन्ते चरन्ति संसरन्तीति अथ स्वव्याख्यातदेवं पूर्ववत्तदीयशुद्धरतेरेव सर्वतः प्रकर्षं ताभ्यः श्रुत्वाऽऽरात्त-दनुगताः श्रुतयो व्यतिरेकेण पुष्णन्त्यः स्तुवन्ति त्वदिति पन्थानमनुगतम् अनुपथं जीवरूपत्वदंशसम्बन्धपरंपराया-मनुगतमित्यर्थः । तथाभूतमेव भातीति परमात्मनस्तत्र सम्बन्धपरम्परयैव इदं जडं कुलायं नश्वरं शरीरमात्मा-दिवद्वरति भाति तत्तद्रूपतया स्फुरणेन रतिविषयतया प्रती-यत इत्यर्थः । मृतशरीरे तत्तज्ज्ञानाभावादिति भावः । तत्रा-त्मवत्त्वमहङ्कारास्पदत्वात् सुहृत्त्वं तस्मिन् विषयसमर्पणलक्षण हितकारित्वात् प्रियवत्त्वं ततस्ततः प्रीतिविषयत्वात् किं वात्म-वत्त्वादेव तद्युगलवत्त्वमिति ज्ञेयम् एवं यत्सम्बन्धपरं परयैव तस्मिंस्तत्तज्ज्ञानाद्रतिविषयत्वं तस्मिन्परमात्मत्वान्-साक्षात्स्वयमेव तत्तद्रूपं विशेषतः उन्मुखे स्वप्रकाशत्वात् स्वत एव तत्तदनुसन्धानस्य कर्त्तरि कारयितरि च ननु जडत्वा-दहंत्वस्तदभाववति त्वयि तथा तत्तुल्यतयापि न रमन्ति रतिं न कुर्वन्तीत्यहो आश्चर्यं बत कष्टं चेत्यर्थः । नाप्याश्चर्यमिद-मिति स्वयं हेतुं च विन्यस्यन्ति अतस्तस्य कुलायस्य तत्सम्बन्धिनां चासनापुपासनया शुश्रूषयेति तस्माद्युक्तमेवैत-दित्याहुः—यदिति । तेरेव व्याख्यातं । तत्र श्रुतयस्तद्दर्शिता एव ज्ञेयाः अन्याश्च "असूर्य्या नाम ते लोकाः" इत्याद्याः ॥ २२ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भगवदाश्रयणं शरीरस्य फलम् अन्यथा कुत्सितभगव-द्विमुखदेहयोगात् संसरन्तीत्याह—त्वदनुपथमिति । "कुलायो नीडमाश्रयाम " इति कोशात् कुलायं नीडतुल्यं शरीरं त्वद-नुपथं त्वदाराधनादिप्रवणं चेत् आत्मान्त्र सुहृच्च प्रियश्च तद्वद्वरति आत्मादितुल्यरूपात् स्वाधीनतया वर्त्तत इत्यर्थः तथापि असदुपासनया शब्दादिविषयसेवया आत्महनः आत्म-घातिनः पुरुषास्त्वयि न रमन्ति न रमन्ते इत्यन्वयः कीदृशे त्वयीत्यत्राह, तथोत्सुखे यथावस्थितानुकूलानन्दे प्रिये हित-रूपे आत्मनि एवम्भूते सुसेव्ये त्वयि बत कष्टम अहो आश्चर्यं विषयादिसेवनया शिश्नोदराद्युपासनया स्वतन्त्रा-भिमानेन आत्मानं नरके पातयन्तीत्यर्थः । कुतो यदनुशयाः यस्मिन् शब्दादौ विषयेऽनुशयवन्तः सन्तापवन्तः उरुभये संसारे बहुदुःखपूर्णे संसारे भ्रमन्ति मात्मानं कुशरीरभृतः नश्वरे शरीरे देहे अहमित्यभिभाववन्तः तारयन्तीत्यर्थः । अतः शब्दादेः उपासनयैव त्वयि न रमन्ते इत्यन्वयः ॥ २२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नृगतिं विविच्येत्यनेन नृदेहस्य भगवत्सेवोपयुक्तत्वमभि-प्रेतं तदेव स्पष्टयन्त्यस्तथैव सति तस्य साफल्यम अन्यथा तु न साफल्यं प्रत्युतानर्थहेतुत्वं चेत्याहुः—त्वदनुपथमिति । कुलायं नीडतुल्यम् इदं नृशरीरं त्वदनुपथं त्वदनुवर्ति त्वदाराधनप्रवणं चेत्यर्थः । तर्ह्यात्मादिवद्वरति आत्मादिभिस्तुल्यं स्यादित्यर्थः । तथा-प्यसदुपासनया शब्दादिविषयसेवया हेतुभूतया आत्महनः आत्म-घातिनः विषयसेवायाः अन्ततः स्वात्मस्वापादकतयाऽऽत्मनोऽसत्प्रा-यतापादकत्वात् तत्सेवापराः आत्मघातिन एवेति भावः । त्वय्यहो न रमन्ते अहो निरतिशयगुणवदिदं शरीरं प्राप्यापि त्वां न भजन्त इति खेदः कथम्भूते यथोन्मुखे यथावस्थितोत्कूला-नन्देऽत एव प्रियेऽत एव च हिते उन्मुखे इति पाठे ईषदा-नुकूल्यं ...त्यभिमुखीभवितुम् उद्युक्त इत्यर्थः । कुतस्तान्प्रति खिद्यध्वे इत्यत आहुः—यद्यस्मादनुशयाः प्रतिजन्म भुक्तावशिष्टोत्त-रोत्तरदेहनिमित्तकर्मयुक्ताः उरु बहु भयं यस्मिंस्तस्मिन्संसारे भ्रमन्ति अतस्ते कुशरीरभृतः कुत्सितदेहभाजः केवलं शोच्या एवेति भावः । भुक्तावशिष्टं कर्मानुशयः स एषामस्तीत्यर्थे आच् ॥ २२ ॥

---

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथ भगवदाश्रयणमेव शरीरफलं अन्यथा कुत्सितदेह-योगात्संसरन्तीत्याह—त्वदनुपथमिति । कुलायं नीडतुल्यं शरीरं त्वदनुपथं त्वदाराधनादिप्रवणं चेदात्मसुहृत्प्रियवद्वरति आत्मादितुल्यं स्यादित्यर्थः । अहो बत इति खेदे तथापि

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका।

असदुपासनया शब्दादिसेवया आत्महनः आत्मघातिनः पुरुषाः त्वयि ये न रमन्ति न रमन्ते परमैपदमार्गं त्वदाराधनादिकं न कुर्वन्तीत्यर्थः। कीदृशे त्वयीत्यत आह—यथोन्मुखे यथावस्थितोऽनुकूलानन्दे प्रिये हितरूपे यदनुशयाः यस्मिन् शब्दादावनुशयवन्तः अनुशयो भुक्तशेषस्तद्वन्तः सन्तापवन्त इतियावत् अत एव कुशरीरभृतः उरुभये संसारे भ्रमन्ति तथाचैकादशे वक्ष्यते—.

य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम्।
न भजन्त्यवजानन्ति स्थानात् भ्रष्टाः पतन्त्यधः॥ इति

अत्र शब्दादौ तैरुपासनं ये च त्वयि रमन्ते इत्यन्वयः॥ २२॥

---

योगिरामानुजाचार्यकृतसरलाख्याख्या।

सर्वाधिकं सर्वप्रदमपि भगवन्तं ये न भजन्ति ते अधः पतन्तीत्याहुः—त्वदनुपथमिति। अनुसृतः पन्था येन तदनुपथं तवानुपथम्त्वदनुपथं त्वदनुवर्त्तित्वत्सेवोपयिकमित्यर्थः कुलायं पक्षिणां गृहमिव स्वेच्छानुरूपम् आत्मनः नीडरूपमित्यर्थः। इदं शरीरं कर्तृपदमेतत् आत्मसुहृत्प्रियवत् आत्मसुहृत् प्रियाणामिवात्मसुहृत्प्रियवत् स्वस्यात्मा जीवात्मा सुहृत् मित्रं प्रियाः हिताश्च यथा स्वस्यात्यन्तानुकूलाःस्ववशे वर्त्तन्ते तथा शरीरमपि स्वानुकूलं स्वाधीनं सत् चरति वर्त्तते इत्यर्थः। भगवदुपासनार्थं सर्वानुकूलं शरीरं वर्त्तत इति भावः। यथा शरीरं सर्वानुकूलं तथा भगवानपि सर्वानुकूलोऽस्तीति सूचयति हिते यथा मातृपित्रादयः हितकर्त्तारः तथा हि तस्य श्रेयसः कर्त्ता भगवानित्यर्थः प्रिये प्रियः यथा आपद्ग्रिस्तायामापन्निवारको भवति तथेश्वरोपि चेतनानामापन्निवारकइत्यर्थः। आत्मनि आत्मा यथा शरीरस्य धारकः पोषको भवति तथा भगवानपि सर्वचेतनानामन्तरात्मत्वेन सर्वेषां धारकपोषकः इत्यर्थः। एवं सर्वोपकारके त्वयि परमात्मनि वर्त्तमानं सति सर्वरक्षकं सर्वप्रदं सुलभं भगवन्तं परित्यज्य असदुपासनया असतां दुष्टानां धनिनां देहेन्द्रियादीनां वा विषयाणां वा अथवा रजस्तमोगुणप्रचुराणामिन्द्रादिदेवतान्तराणां चोपासनया करणेनात्महनः आत्मानं घ्नन्तीत्यात्महनः स्वात्मघातिनः आत्मनोऽधःपतनकारिणः इत्यर्थः तैस्तैः कामैर्हृतज्ञानाः प्रपद्यन्ते न्यदेवताः। न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः॥ अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्"। इत्यादिवचनैर्भगवन्तं विहायेतरोपासकानामन्ते दुर्गतिप्राप्तिकथनात् ये जनाः न रमन्ति पूर्वोक्तप्रियादिरूपे त्वयि नरमन्ति अथवा नाचिन्ता न भजन्तीत्यर्थः। अहो बतात्यन्ताद्भुतमिदं यतः भगवद्भजनाय सर्वानुकूलं शरीरमपि वर्त्तते सर्वेश्वरः सर्वरक्षकः सर्वविधोपकारकः, सर्वफलप्रदः यज्ञाद्यर्थमिवद्रव्यार्जनादिकायक्लेशमन्तरा श्रवणादिमात्राराध्यः एतादृशम्भगवन्तं परित्यज्याधोगतिहेतुभूतं बहुक्लेशसाध्यं बहुप्रमादयुक्तम् असदुपासनं कुर्वन्ति यथा वा उत्तमाङ्गना मनोरमं सर्वगुणोपेतं शरीरं प्राप्य सर्वगुणोपेतं सर्वसुखदं सार्वभौमं पतिं परित्यज्य दुर्भगं किरातं यथा भजति तथेति भावः। तदुक्तं मुकुन्दमालायां॥ "नाथे नः पुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा सेव्ये स्वस्य पदस्य दातरि परे नारायणे तिष्ठति। यं कञ्चित्पुरुषाधमं कतिपयग्रामेशमल्पार्थदं सेवायै मृगयामहे नरमहो मूका वराका वयम्"इति आत्महननप्रकारं दर्शयन्ति यदिति यदनुशयाः यस्यामसदुपासनायामनु वारम्वारं शयः शयनं निद्रारूपेण स्थितिः येषां ते यदनुशयाः यथाशयानस्य सदसद्विवेकं नास्ति तथा सदसद्विवेकं विना निरन्तरमसदुपासनायामेव वर्त्तमानाः इति भावः यद्वा यदनुशयाः यस्याः असदुपासनायाः अनुशयः वासना येषां असदुपासनायुक्ता इत्यर्थः कुशरीरभृतः भगवद्भजनहीनत्वात् कुशरीरमेव बिभ्रतीति कुशरीरभृतः इतथइवथसन्तापयुक्तत्वात् उरुभये महाभये संसारे जन्ममरणादिदुःखप्रदे इत्यर्थः भ्रमन्ति कृमिकीटखगमृगनरादियोनिष्वित्यर्थः। त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियवच्चरति तथाहि ते प्रिये आत्मनि त्वयि उन्मुखे सति असदुपासनयाऽऽत्महनः त्वयि न रमन्ति अहो बत यदनुशयाः कुशरीरभृतः उरुभये भ्रमन्तीत्यन्वयः॥ २२॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

मू०॥ न परिलषन्ति केचिदपवर्गमपीश्वर ते चरणसरोजहंस कुलसङ्गविसृष्टगृहाः। त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियवच्चरन्ति तथोन्मुखास्त्वयि हिते प्रिय आत्मनि च॥१०—२३।

"न किञ्चिदभिवाञ्छन्ति यतयः सुखदाश्रयाः प्रेष्ठस्य रमणस्यान्यै प्रियवद्देह इष्यः"इत्यर्थद्योतकस्य न परिलषन्तीत्यस्यायमभावः ईश्वरेत्यनेन अत्यन्तरमत्राप्यनुकूलं लक्षयति केचिज्जनाः किञ्चिदपवर्गलक्षणमुपासनाफलमपि न परिलषन्ति न वाञ्छन्ति तत्र निमित्तमाह—चरणेति। चरणसरोजसेविनां हंसानां सन्यासिनां कुलस्य समूहस्य सङ्गेन सेवालक्षणेन विसृष्टगृहाः गृह्णन्ति त्यक्तुं न मुञ्चन्तीति गृहाः भार्यापुत्रादयो विसृष्टाः सन्त्यक्ताः यैस्ते अनेन सुखदाश्रया इति विवृतं किञ्च त्वदनुपथं त्वन्मार्गानुकूलमार्गं त्वत्प्राप्त्यनुसारित्वादिदमात्मनः अस्य सुहृदनिमित्तबन्धुभूतं कुलायं शरीरं प्रियवत्किञ्चरीरवच्चरन्ति पश्यन्ति प्रियं सर्वतः प्रियतमे आत्मनि सर्वादानकर्तरि त्वयि तथा हिते तत्तत्प्रामापत्परिहारेण उन्मुखाः अभिमुखाः॥ २३॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तदेव पूर्ववत् तदीयरतेरेव सर्वतः प्रकर्षं ताभ्यः श्रुत्वा अपरास्तदनुगतश्रुतयो व्यतिरेकेण पुष्णन्त्यः स्तुवन्ति त्वदिति॥ २२॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

एवं मोक्षनैरपेक्ष्येण चरणारविन्दं भजतो ऽभिनन्द्य भजनविमुखान् निन्दन्त्य आहुः—त्वदनुपथमित्यादि। हे भगवन्! इदं

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

कुलायं शरीरं कुलायं नीडं तदाकारत्वाच्चव्यपदेशः यद्वा इदं शरीरं कीदृशं कुलं परम्परा तेन अयति संसरति कुलायं तत् यथा आत्मवत् सुहृद्वत् प्रियवत् चरति भजति अर्थाज्जनः जातावेकवचनं तथा त्वयि शरीरभृतो जना न रमन्ति न रमन्ते बत खेदे अहो आश्चर्ये त्वयि कीदृशे त्वदनुपथं यथा स्यात् तथा उन्मुखे त्वयि अनुगतः पन्था यथा भवति तथा उन्मुखे मयि सर्वे चरन्तु अहमेवानुगतः स्वयमुपगतः पन्था इति उन्मुखे अथवा इदं कीदृशं त्वदनुपथं त्वद्भजनमकृत्वा तदेव भजतीत्यर्थः । पुनः कीदृशे हिते अनुकूले अतः प्रिये यतः आत्मनि यत् हितं प्रियम् आत्मा च न भवति तत् हितादि चन्द्रजति यत् हितादि भजति तच्च भजतीत्यहो आश्चर्यं ननु तदेवं कुतः इत्याहुः—आत्महनः आत्मघ्नाः तदेव कुतः तत्राहुः असदुपासनया असतः संसारस्य कुजनस्य वा कीदृशाः यदनुशयाः यस्यामसदुपासनायाम् अनुशयो वासना येषां तथाभूताः सन्तः उरुभये संसारचक्रे भ्रमन्ति अतएव कुशरीरभृतः ॥ २२ ॥

———

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं जीवानां परमानन्देच्छूनां भगवानेव सेव्य इति निरूप्य तत्सिद्ध्यर्थं तत्प्रतिबन्धकं विशेषतो निर्दिशति—त्वदनुपथमिति । स्वाभिलषितस्यैव प्रतिबन्धकत्वं नान्येषामिति वक्तुम् अन्येषां प्रतिबन्धकतां निराकरोति तत्र प्रथमं शरीरप्रतिबन्धकता निराक्रियते शरीरं हि सर्वदोषदुष्टम् असमर्थं आलस्ययुक्तञ्च अतो भगवद्भजने इदं प्रतिबन्धकं भविष्यतीति शङ्का निराक्रियते तव अनुपथम् अनुगुणं सेवकरूपं सर्वेन्द्रिययुक्तं बलविवेकादियुक्तञ्च इन्द्रियवत्त्वमेवाधिकारिविशेषणमिति तादृशे चेत् अहन्ताममता दृढा वा स्यात् तदा भगवदर्थं व्यापृतं न कुर्यादिति तदर्थमाह—कुलायमिति । कुलायः पक्षिणां नीडं पक्ष्योः समागतयोः तत्र ते न तिष्ठन्ति शरीरं पुत्रादिभ्यश्च भिन्नं तथा यैः स्वशरीरं ज्ञातमस्ति केवलमिदं गृहरूपं तत्राप्यविवेकिनामेव हितकारीन्द्रियादिभ्योऽपि भिन्नं विवेके जाते सर्वदा त्यक्तव्यमिति यैरवगतं तत्रापि स्त्रीदेहश्चेत् सेवकदेहो वा भिन्नस्वभावेन द्वेषिदेहो वा भवेत् तदा कार्यं न सिध्यतीत्यत आह आत्मसुहृत्प्रियवच्चरतीति आत्मवत् सुहृद्वत् प्रियवच्चेति आत्मा स्वाधीनो भवति तेनास्य स्त्रीदेहवत् सेवकदेहवद्वा न भवतीति निरूपितं तत्तु पराधीनं तथापि धर्मकार्येष्वदसदसहिष्णुः न क्षमं भवेत् तथापि कार्यं न सेत्स्यति तदर्थमाह सुहृद्वत् मित्रवत् मित्रं हि स्वस्य हितमेव करोति तथेदमपि धर्मकार्यादिसमर्थं किञ्च प्रियो यथा स्नेहविषयो भवति एवं स्नेहमात्रं न तु महापातकयुक्तमिव द्विष्टं चण्डालादिदेहवत् मनःपीडाजनकम् एवं देहस्य प्रतिबन्धकता निवारिता कदाचिद्भजनीयो भगवान् प्रतिबन्धं कुर्यात् तदा का गतिरिति चेत्तत्राह—तथोन्मुखे त्वयि हिते प्रिय आत्मनि चेति भगवानपि ब्राह्मणादिदेहमुत्पाद्य स्वसेवार्थं कदा मत्सेवां करिष्यतीत्युन्मुखोऽस्ति किञ्च हितकारी यदा तस्य देहस्य विघातकं किञ्चिदापतति [illegible] तदा पालयति सुहृत्कृत्यमेतत् तथा भगवान् प्रियः प्रीतिविषयः बहिः प्रियकार्यं कुर्वन् कश्चित् खिन्नो भवति आत्मा चास्य देहस्य सर्वेषामात्मा आह्लादक इति एवं साधने सेव्ये चानुगुणे यो न सेवते तत्र हेतुः असदुपासनयेति । असतामुपासनया दुष्टसङ्गाश्च भजन्तीत्यर्थः । उपासनापदेन च बाह्यदेवताः परिगृहीताः तेषामपि संकल्पसङ्गे भगवद्भजनं नश्यतीति ज्ञाहितं ,नन्वसत्सङ्गं सर्वपुरुषार्थनाशकं किमिति कुर्वन्ति इत्याशङ्क्याह—आत्महन इति । ते पूर्वकृतपापात् आत्महनो जाताः यद्वशात् असत्सङ्गः तेषां जात इति असतामिन्द्रियाणां वा उपासना ततः किमत आह यदनुशयाः यस्मिन्नसत्सङ्गे अनुशययुक्ताः वासनायुक्ताः उरुभये संसारे कुशरीरं प्राप्य अनेकजन्मसु परिभ्रमन्ति न तु कदाचिदपि सुखलेशं प्राप्नुवन्तीत्यर्थः—

> " असत्सङ्गो न कर्त्तव्यो भक्तिमार्गस्य बाधकः ।
> देहे ह्यनुगुणे कृष्णे नेन्द्रियाणां प्रियं चरेत् " ॥

एवं भगवद्भजनमेव जीवानामवश्यं कर्त्तव्यमिति निरूपितम् ॥ २२ ॥

———

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

विसृष्टगृहा इत्युक्तमतो गृहासक्तान् भक्तियोगमकुर्वतो जीवान् शोचन्ति त्वदनुपथं तव पन्थानं भक्तियोगमनुगतं श्रोत्ररसनादिमत्त्वात् त्वच्छ्रवणकीर्त्तनाद्युपयोगि कुलायं जीवात्मपक्षिणो नीडं यद्वा कुं पृथिवीं लीयते श्लिष्यतीति कर्मण्यण् कुलायं शरीरमिदम् आत्मा च सुहृच्च प्रियश्च तद्वत् चरति भाति मृतशरीरे आत्माद्यभिमानादर्शनात्, तत्सम्बन्धेनैव आत्मादिवदिदं भाति तस्मिंस्त्वयि कृपालुत्वादुन्मुखे सौहार्दयत्वादेव हिते हितकारिणि देहजीवाभ्यां सकाशादप्यतिप्रीतिविषयत्वात् प्रिये आत्मनि परमात्मनि परमसुसेव्येऽपि बत अहो कष्टं न रमन्ति दास्यादिना न भजन्ति असदुपासनया असच्छास्त्राध्ययनाध्यापनादिलक्षणाभ्यासेन यद्वा पुत्रकलत्रदेहगेहाद्युपलालनेन आत्महनः आत्मघातिनः कुतः यदनुशयाः यस्यामसदुपासनायाम् अनुशयो वासना येषां ते कुशरीरभृतः शृगालादियोनिगताः सन्तः उरुभये संसारे भ्रमन्ति परिवर्तन्ते अत आत्महनः इतिभावः अत्र आरामस्य पञ्चम्ति न तं पश्यति कश्चन न तं विदाथ य इमा जजानान्यद् युष्माकमन्तरं बभूव नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति" इति अर्थश्च अस्य परमेश्वरस्य आराममभिज्ञानं घटपटादिमयं जगदेव प्रपश्यन्ति अरे जल्प्या जल्पपरास्तार्किकाः न तं विदाथ यूयं तं न जानीध्वे य इमा इमानि भूतानि जजान ससर्ज अन्यत् सृज्येभ्यो भूतेभ्योऽन्यः युष्माकमन्तरं बभूव अथवा परमाणुकारणवादिभ्यः सकाशादन्तर्भूतो बभूव यतो यूयं नीहारेण अविद्यया प्रकर्षेणैवावृता अत एवासुतृपः स्वप्राणास्तर्पयन्तः इतस्ततः उक्थशासः कर्मप्रवर्त्तकाः भ्रमन्तीति असुर्या नाम ते लोका अन्धेन तमसा वृताः तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः"इत्याद्याः ॥ २२ ॥

———

निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यन्मुनय उपासते तदरयोऽपि ययुः स्मरणात् ।
स्त्रिय उरगेन्द्रभोगभुजदण्डविषक्तधियो वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाः ॥ २३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पूर्वोक्तमेव भक्तेरुत्कर्षं व्यतिरेकमुखेन दृढीकर्तुं तद्विमुखान्निन्दन्ति, यद्यपीदं कुलायम् आत्मनः स्वस्य सुहृत् प्रियवच्चरति बन्धहेतुर्भवति तथापि त्वदुन्मुखे आत्मनि जीवे "सकृदेव प्रपन्नाय तवास्मी"त्यादि मामेकं शरणं व्रज तेषामहं समुद्धर्तेत्यादि स्वप्रतिज्ञापालनाय त्वयि श्रीभगवति प्रिये प्रसन्ने सति त्वदनुमतं तदनुकूलं चरति कथम्भूते त्वयि हिते सुहृदि "सर्वस्य शरणं सुहृत्"इति श्रुतेः अहो बत इति करुणया खेदं प्रकाशयन्ती श्रुतिराह न रमन्ति त्वत्कथने न प्रवर्तन्त इति तत्र हेतुगर्भितविशेषणम् आत्महनः आत्मनो घ्नतः संसरणं तत्पराङ्मुखाः सन्तः विषयोन्मुखा इत्यर्थः । वक्ष्यति चैकादशे श्रीभगवान् स्वयमेव–

" नृदेहमाद्यं सुलभं सुदुर्लभं-
प्लवं सुकल्पं गुरुकर्णधारम् ।
मयाऽनुकूलेन नभस्वतेरितं
पुमान्भवाब्धिं न तरेत्स आत्महा" ॥ इति

तत्र हेतुमाह असदुपासनयेति असतामसत्प्राणामनीश्वराणां मायां कृतैश्वर्यवताम् उपासनया तथाच श्रुतिः "योऽन्यां देवतामुपास्ते अन्यो सावन्योऽहमस्मीति न सवेद यथा पशुः" इत्यादिछान्दोग्ये अस्यार्थः यः पुमान् श्रीभगवतः सर्वेश्वराच्छास्त्रयोनेः सकाशादन्यां देवतां ब्रह्मरुद्रादिरूपाम् उपास्ते असौ ब्रह्मरुद्रादिः अन्य ईश्वरो ऽहमन्यो जीव इति भावनया स न वेद तेषां सर्वेश्वरत्वशास्त्रयोनित्वमायानियन्तृत्वाद्यभावेन मायिकैश्वर्यवत्वेपि मोक्षदातृत्वाभावात् मायानिवारणस्य च मायानियन्त्रधीनत्वादिति "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इतिवचनात् भगवतो निरतिशयैश्वर्यादौ शास्त्रमेव प्रमाणं "तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतं । पतिं पतीनां परमं परस्माद्विदाम देवं भुवनेशमीड्यं । न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते, स्वाभाविकी ज्ञानबलक्रिया च । सकारणं कारणाधिपाधिपः न तस्य कश्चिज्जनिता न चाधिपः । एको ह वै नारायण आसीन्न ब्रह्मा नेशानः । नारायणात् ब्रह्मा जायते नारायणाद्रुद्रः"इत्यादिश्रुतिकदम्बः अन्येषां मायिकैश्वर्ये सातिशयत्वेचापि तदेव प्रमाणं "जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति" इत्यादिश्रुतेः अस्या अयमर्थः क्षेत्रज्ञानां सर्वेषामपि अमलानां ब्रह्मणश्चित्स्वरूपत्वेनाविशेषत्वेपि ज्ञानादितारतम्यप्रकाशात्मकेन मायाभासेन पुण्यादिरूपकर्मलक्षणाभासेन च स्वभावेन जीवेशौ जीवं मनुष्यादिं ईशं ब्रह्मरुद्रेन्द्रादिं करोति भासयति ज्ञानशक्त्या ऐश्वर्योपचारेण तच्च श्रुत्यैवोच्यते "आत्मनि श्रुते अश्रुतं श्रुतं भवति"इत्यादि ऐश्वर्यतारतम्येनापीश्वरत्वमुपचर्यते जीवानामेव पुण्यतारतम्येन ब्रह्माद्यष्टलोकपदवीं प्राप्तानां श्रुत्येश्वराविशब्देरुच्यमानत्वात् अन्यथा "अजोह्येको जुषमाणोऽनुशेते" इत्यादि"प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि"इत्यादिशास्त्रविरोधात् तस्माज्जीवानामेव मायिकैश्वर्यादितारतम्यविभागः मायाविद्ये स्वयमेव भवत इति ब्रह्मणोऽनादित्वेन तच्छक्तीनामप्यनादित्वात् नचेश्वराभावे मायासत्तासम्भवः "सदेव सोम्येदमग्र आसीत्तदैक्षत बहुस्यां प्रजायेय"त्यादिसर्ववेदविरुद्धत्वात् केचित्तु जीवेशशब्दौ व्यष्टिसमष्टिवाचकौ इति वदन्ति तच्चिन्त्यं तथाचेश्वरोपासनाभावे मोक्षाभावः । शिवेनैव हरिवंशे घण्टाकर्णं प्रति स्वयमेवोपदिष्टः तदेवाह चानुभवं घण्टाकर्णः—

" अहं कैलासनिलयमासाद्य वृषभध्वजम् ।
आराध्य तं महादेवमस्तुवं सततं शिवम् ॥
ततः प्रसन्नो मामाह वृणीष्वेति वरं हरः ।
ततो मुक्तिर्मया तत्र प्रार्थिता देवसन्निधौ ॥
मुक्तिं प्रार्थयमानं मां पुनराह त्रिलोचनः ।
मुक्तिप्रदाता सर्वेषां विष्णुरेव न संशयः ॥
तस्माद्गत्वा च बदरीं तत्राराध्य जनार्दनम् ।
मुक्तिं प्राप्नुहि गोविन्दान्नरनारायणाश्रमे ॥

इत्यादि । एतच्च भारतसन्दर्भे निपुणमुक्तं रुद्रादीनां मायिकैश्वर्ये राजधर्मे देवस्थानवाक्यमपि प्रमाणम्—
"महादेवः सर्वयज्ञे महात्मा हुत्वाऽऽत्मानं देवदेवो बभूव ।
विश्वांलोकान्व्याप्याविष्टभ्य कीर्त्या विराजते द्युतिमान् कृत्तिवासाः ॥
इत्यादि । असदुपासनस्य फलमाह—यदनुशया इति । यस्यामसदुपासनायाम् अनुशयो वासना येषां ते उरुभये संसारे भ्रमन्ति कथम्भूताः कुशरीरभृतः श्वानशूकरखरोष्ट्रगणादियोनिं गच्छतः सन्तस्तस्मान्निरतिशयस्वाभाविकीज्ञानक्रियादिशक्तिमतो भगवतोऽन्यस्योपासनया न संसारनिवृत्तिरिति सिद्धान्तः ॥ २२ ॥

—————

भाषा टीका ।

जीवरूप पक्षी के घुसला तुल्य यह मनुष्य शरीर यदि आपके आराधन रूप सन्मार्ग के अनुकूल होजावे अर्थात् आप के आराधन में लगजावे तो यहि शरीर अनुकूल आत्मा के सुहृद के प्रिय के तुल्य होजावेगा तथापि यथा कथञ्चित् किसी निमित्त मात्र लेकर जीव के सम्मुख होने वाले जीवके हित कारी जीवके प्रिय जीव के आत्मा आप के विषय मे संसार के विषय सेवा करने से आत्म घाती संसारी जीवन हि रमण करते हैं यह अतिखेद की वार्त्ता है प्रतिजन्म में कर्म के भोग को भोग करने से अवशेष कर्म से सम्पन्न होकर श्वान सूकरादि निन्दित शरीर धारी होकर वे संसारी जीव बहु भयंकर इस संसार मैं भ्रमते हैं ॥ २२ ॥

—————

श्रीधरस्वामिकृतभावार्थदीपिका ।

इदानीम् "आत्मा वा आरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदि-

श्रीधरस्वामिकृतभावार्थदीपिका ।

ध्यासितव्यः" इत्याद्याः श्रुतयो ध्यानमङ्गत्वेनोपदिशन्तीत्याह निभृतमरुन्मनोऽक्षदृढयोगयुज इति । मरुत्प्राणो मनश्चाक्षाणि इन्द्रियाणि च निभृतानि संयमितानि यैस्ते च दृढं योगं युञ्जन्ति ते दृढयोगयुजस्ते तथाभूताः मुनयो हृदि यत्तत्त्वमुपासते तदेवारयोऽपि तव स्मरणाद्ययुः प्रापुः स्त्रियोऽपि कामतः उरगेन्द्रभोगभुजदण्डविषक्तधियः अहीन्द्रदेहसदृशयोर्भुजदण्डयोर्विषक्ता धीर्यासां ताः परिच्छिन्नदृष्टयः समदृशः सममपरिच्छिन्नं त्वां पश्यन्त्यो वयं श्रुत्यभिमानिन्यो देवता अपि ते समा एव कृपाविषयतया अङ्घ्रिसरोजसुधाः अङ्घ्रिसरोजं सुष्ठु धारयन्त्यः अयं भावः इत्थम्भूतस्तव स्मरणानुभावः योगिनस्त्वां हृद्यालम्बनमुपासते याश्च वयं त्वां समं पश्यामो याश्च स्त्रियः कामतः परिच्छिन्नं ध्यायन्ति येच द्वेषेण सर्वानपि तांस्त्वामेव प्रापयतीति ॥२३॥

चरणस्मरणं प्रेम्णा तव देव सुदुर्लभम् ।
यथाकथञ्चिन्नृहरे मम भूयादहर्निशम् ॥ १० ॥

---

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

आत्मा वा अरे इति वै निश्चये अरे मैत्रेयि आत्मा श्रीभगवान् द्रष्टव्यस्साक्षात्कर्त्तव्यः आत्मसाक्षात्कारस्य साधनान्याह श्रोतव्य इति श्रीगुरोस्सकाशात् उपक्रमोपसंहारादिभिस्तात्पर्यलिङ्गैस्तात्पर्येणावधारयितव्यः मन्तव्यस्तदनुकूलेनानुमानेनासम्भावना विपरीतभावनानिवृत्तये स्वयं पुनर्विचारणीयः निदिध्यासितव्यो निश्चयेन ध्येय इति यत्तत्त्वमसम्यगाविर्भावलक्षणं निर्विशेषं ब्रह्म हृदि मुनय उपासते तदेवारयोऽपि तव श्रीकृष्णरूपस्य भयद्वेषाभ्यां स्मरणमात्रप्रभावात्क्षयद्वेषजनिताघं हित्वा ययुः प्रापुरित्यर्थः । कामात् द्वेषादित्यादश्यावेश्य तदघं हित्वा बहवस्तद्गतिं गताः इत्युक्तेः स्वामिटीकायामेव तद्गुणद्वयस्य विशेषजिज्ञासावैचक्षण्येणवतोषणी द्रष्टव्या ॥ २३ ॥

---

श्रीकविचूडामणिचक्रवर्त्तिकृताऽन्वयबोधिनी ॥

इदानीं ध्यानमङ्गत्वेनोपदिशन्तीत्याह—निभृतेति । मुनयो यत्परं तत्त्वं हृदि उपासते तदरयोऽपि स्मरणाद्ययुः स्त्रियो गोपिकाद्यास्तदेव ययुः वयमपि तदेव यास्यामः अतो वयं च ते च सर्वे तव समाः कृपाविषयतया इत्यन्वयः । मुनयः कथम्भूताः निभृतमरुन्मनोऽक्षाणि यैस्ते निभृतमरुन्मनोक्षाश्च ते दृढयोगयुजश्चेति ते दृढयोगं युञ्जन्तीति दृढयोगयुजः स्त्रियः कथम्भूताः उरगेन्द्रभोगभुजदण्डविषक्तधियः उरगेन्द्रोऽनन्तस्तस्य भोगसदृशयोर्भुजदण्डयोर्मध्ये विषक्ता धीर्यासां ताः वयं कीदृशाः समदृशः सममपरिच्छिन्नं पश्यन्तीति तथा पुनश्च अङ्घ्रिसरोजसुधाः अङ्घ्रिसरोजं सुष्ठु दधति धरन्ति "डुधाञ् धारणपोषणयोः" इत्यस्मात् सुधा इति अत्र स्वामिचरणाः अयं भावः इत्थंभूतस्तव स्मरणानुभावः ये योगिनस्त्वां हृद्यालम्बनमुपासते याश्च स्त्रियः कामतः परिच्छिन्नं ध्यायन्ति ये च वैरिणो द्वेषेण ध्यायन्ति याश्च श्रुत्यभिमानिन्यो देवताः वयं त्वां समं पश्यामः सर्वानपि तांस्त्वामेव प्रापयति तव स्मरणानुभावः इति ध्यानविषये श्रुतिः भार्यां मैत्रेयीं प्रत्याह याज्ञवल्क्यः "नवा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम् इति अर्थः अरे मैत्रेयि ! सर्वस्य पतिस्त्रीपुत्रधनादिवस्तुमात्रस्य कामाय सर्वं प्रियं भवति स आत्मा त्वया द्रष्टव्यः साक्षात्कर्तव्यः श्रोतव्यः पूर्वमाचार्यतः आगमतश्च पश्चान्मन्तव्यः तर्कादिना ततो निदिध्यासितव्यः निश्चयेन ध्यातव्यः एवमात्मनो दर्शनेन सर्वस्य दर्शनं भवति एवं योऽयं मत्या मननेन इयमपि उपदेशपरा एतदुक्तं द्वितीये शुकेन तस्यात्मनो दर्शनेन सर्वस्य दर्शनं भवति एवं योज्यम्—

"तस्माद् भारत सर्वात्मा भगवान् हरिरीश्वरः ।
श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यश्चेच्छता ऽभयम्" ॥

इति तथा पाद्मे शिववाक्यं "स्मर्त्तव्यः सततं विष्णुर्विस्मर्त्तव्यो न जातु चित् । सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः" इति । अत्रेदं ज्ञातव्यं यद्यपि भगवत्प्रसादो गोपीनामसाधारणोऽस्ति—

"नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः
स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः ।
रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठ-
लब्धाशिषां य उदगाद्व्रजवल्लवीनाम् ॥

इत्यादिभिरुक्तः तथाप्यत्र तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति न्यायात् मुन्यादीनां मध्ये कथितानां गोपीनामपि श्रीकृष्णस्मरणजन्यब्रह्मानन्दसुखसाम्यं भवतु नाम किन्तु भजनानन्दसुखाधिक्यमस्त्येव निदर्शनञ्च—

"अहल्या द्रौपदी सीता तारा मन्दोदरी तथा ।
पञ्चकन्याः स्मरेन्नित्यं सुप्रभातं दिनेदिने ॥

एताः पञ्चकन्याः नित्यं दिनेदिने स्मरेत्तर्हि तद्दिनं सुप्रभातं भवतीत्यर्थः । अहल्यादीनां मध्ये श्रीसीतापि पठिता एताभिः सह सीतायाः किं साम्यं भवति किन्तु कन्यास्मरणफलप्रदातृत्वेन साम्यमुक्तं सीता तु साक्षाल्लक्ष्मीः अहल्याद्यास्तदंशा एवेति तथा कर्मादौ पञ्चदेवतापूजाविधौ गणेशादीनां मध्ये विष्णुरप्येको उक्तः एतावता विष्णुना तेषां किं साम्यं मन्तव्यं किन्तु कर्मफलदातृत्वेन कर्माङ्गत्वात् समत्वमन्यथा तु विष्णुरीश्वरः गणेशाद्यास्तदंशा एवेति दिक् अथ स्वामिना—

चरणस्मरणं प्रेम्णा तव देव सुदुर्लभम् ।
यथाकथञ्चिन्नृहरे मम भूयादहर्निशम् ॥

सुगमम् ॥ २३ ॥

---

श्रीकृष्णगोस्वामिकृतवैष्णवतोषिणी।

निभृतेत्यस्य टीकादर्शितश्रुतौ द्रष्टव्यः साक्षात्कर्त्तव्यः अस्य साधनमन्याह—श्रोतव्य इति। श्रोतव्यो गुरोः सकाशादुपक्रमादिभिस्तात्पर्य्येणावधारयितव्यः मन्तव्यस्तदनुकूलतर्केणासम्भावनाविपरीतभावनानिवारणाय स्वयं पुनर्विचारणीयः निदिध्यासितव्यो निश्चयेन ध्यातव्य इति अत्राऽखण्डब्रह्मवादिमयं तत्र सामान्याकारनिदिध्यासनमहिमातिशयदर्शिन्यां टीकायां चैवं विवेचनीयं यत्र पूर्वोत्तराभ्यामर्द्धाभ्यां वाक्यभेदः समर्थितः यत्रैकं वाक्यं ययुरिति पर्य्यन्तमासमन्यत्तु समा इति पर्य्यवसानं तत्र वाक्यार्थयोजनायामरयोऽपि इत्यपिशब्दो मुन्यादियुगले द्वितीयस्यायोग्यत्वविवक्षया लब्धः तत्रापिशब्दसम्बन्धानुक्तेश्च स्त्र्यादियुगले वयमपीत्यपिशब्दस्तु तथा लब्धुं न युज्यते अत एव श्रुतिस्थाद्विशेषतस्समत्वकत्वाच तस्मादध्याहृत्य स्त्रिय इत्यत्राप्यसौ योजितः तत्र स्त्रीशब्दसम्बन्धानुक्तमेव श्रुतीनां तत्रापिशब्दः श्रुत्यादिस्त्रायोग्यतामेव व्यनक्ति इति तेषामभिप्रायः किन्तु वयमपीति वन्मुनयोऽपि इत्यध्याहृत्यापि नायोऽयं पूर्वार्द्धक्रमरीत्या तस्या एव योग्यतया च वयमपि स्त्रियोपीत्येव वक्तव्यम अरयोऽपि स्त्रियोपीत्येतावतैव योग्यायोग्यत्वे लब्धे पुनरधिकमपि द्वयं वयमपीत्यत्रापरस्थानपतितत्वं च सोढव्यं भावार्थे तु स्वार्थ एवापिशब्दौ योजितौ युगलभङ्गश्च कृतः स्वदर्शितक्रमेणैवायोग्यता च दर्शिता किन्तु तत्रापि योगिनां प्रागेव वयमिति योऽयं तत्राप्यन्येनैवापिशब्देन तत्तत्सिद्धौ द्वितीयस्त्वार्थत्वात्सोढव्यः किञ्च भावार्थे चतुर्णामपि साम्यं वस्तुप्रभावज्ञानया समतत्त्वप्राप्त्या दर्शितं वाक्यार्थेतूत्तरयुगलस्य कृपाविषयतया यदि च कृपाविषयतयैवस्योत्तरणान्वयः तत्र च "चरणस्मरणं प्रेम्णा तव देवसुदुर्लभम्" इत्यनेन श्रीभगवदाकारनिदिध्यासनमहिमातिशयं दर्शयिष्यमाणायां टीकायां वाक्यार्थस्तावद्विशेष्य विविच्यते निभृतेत्यादिलक्षणा मुनयः श्रुतिमननशीलत्वादपरिच्छिन्नहृदयो हृदि यद्ब्रह्माख्यं तत्त्वरूपं त्वामुपासते तद्रूपान्योऽपि श्रीभगवदाकारस्य तव स्मरणप्रभावाद्ययुः अपीति यद्यपि ते परिच्छिन्नहृदयः श्रुतिविमुखाः श्रीभगवद्रूपत्वद्विरोधिनश्च तथापि ब्रह्मणि लयं प्रापुर्मुनयस्तु तदुपासीना एवासत इत्यर्थः। किन्त्वत्र प्रतिकल्पं तादृशलीलामयतद्वतारसमयस्य न् भूतान् भविष्यतश्च मुनिरिपुरूपानन्यानन्यान् जीवान्सर्वानेवोद्दिश्य श्रुतीनां प्रलयान्ते स्तुवतीनां वचनमिदं ततश्च तदा तदा ते ते मुनयो यावद्ब्रह्माख्यं तत्त्वमुपासीनास्तिष्ठन्ति तावत्तेऽरयः स्वेन तत्प्राप्तिमतीनां कुर्वन्तीति पर्य्यवसितं तदेवमेकं वाक्यं साश्चर्य्यतया समाप्य वाक्यान्तरमाश्चर्य्यान्तरं दर्शयन्त्य आहुः—उरगेन्द्र इत्यादिलक्षणस्वाल्पपरिच्छिन्नहृदयः स्त्रियोऽपि सुष्ठु चरणसरोजधारयितृत्वेऽपि समत्वकृत्वादपरिच्छिन्नहृदयो वयमपि कृपाविषयतया समा जाता इति शेषः। अत्र स्त्रियोपीत्यपिरध्याह्रियते तत्र पूर्वोपिरयोग्यताय मुत्तरोऽपिः योग्यतायामिति गम्यते पूर्वोसामयोग्यताव्यञ्जनार्थमेव ह्यपिरध्याहृतः यद्यपि स्त्रियो न योग्या वयन्तु यं स्याः तथापि श्रीभगवदाकारस्य तव स्मरणप्रभावेण अस्माकं परमयोग्यानामपि साम्यं प्राप्ता इत्यर्थः। अरिवदत्रापि श्रुत्यभिमानिनीनां ब्रह्मण्यलयाययुरिति नान्वेतीति वाक्यभेद एवात्र मतः किन्त्वत्र पूर्वार्द्धगतयोग्यताऽयोग्यतयोः क्रमवैपरीत्यं स्त्रिय इत्यत्राप्यनेरध्याहरणं पूर्वापरार्द्धयोर्वाक्यद्वयतया भेदनञ्च स्वमिद्धान्तानुरोधेन सोढव्यम आत्मा वा इत्यत्र श्रुतौ तु निदिध्यासनं श्रीभगवदाकारविषयमेव मतं तथा श्रुत्या वाक्यस्याऽपैकार्थ्यमवश्यमभ्युपगन्तव्यमिति तदेवं वाक्यार्थेऽवगते भावार्थश्च विविच्यते यद्यपि वाक्यार्थो योग्यतायोग्यतयोरेवापिशब्दाः प्रतिपद्यन्ते ततोऽस्मिन्प्राप्तिश्च मुन्यादीनां न प्रतिपद्यते तथापि प्राप्स्यन्त्येवेति सम्भाव्य तव स्मरणानुभावो मुन्यादीनप्यरीनिव स्वां प्रापयतीत्युक्तम एतदर्थमेव पुनस्त एवापिशब्दाश्च शब्दार्थत्वेन विपरिणमिताः अनन्यतया वा त एते चशब्दा निर्द्दिष्टाः किन्तु सर्वगुरूणां श्रुतीनामेव प्रथमपाठो गम्यते श्रुतीनामपरिच्छिन्नहृदित्वात्प्रधारणेव मुख्या चरणसरोजधारणा तु तदङ्गत्वेनेति मुनीनां तदनुगतानामपि प्रतीकानिष्टत्वादप्रतः पाठो युक्त इत्यासामेशास्तां तथेति तदा तया हेतुना अङ्घ्रिसरोजं सुष्ठु धारयन्त्य इति नाः सकामाः वयं भक्ता अत एव कृपापात्राणि वेत्यत्रांशेऽप्यस्माकं योग्यतैवेति भावः। किन्तु अङ्घ्रिधारणायामपरिच्छिन्नत्वं कथमिति विचार्य्यं भुजदण्डविषक्तधीभिः साम्यात तत्र चार्द्धद्वयैकवाक्यत्वाय समाः सत्यः स्त्रियो वयञ्च तदेव तत्वं ययिमेति योज्यं समाशब्दस्य चावैयर्थ्यमपिशब्दवदेव ज्ञेयं कृपाविषयतया समा इत्यर्थस्त्वेतु भिद्यत एव वाक्यं तावतैवाकाङ्क्षापरिसमाप्तेः तदेवं यद्वाक्यार्थाद्भावार्थो विलक्षणो दर्शितस्तदभीष्टसिद्धान्तानुरोधेनैवेति ज्ञेयं स्वव्याख्यायान्तु अथ श्रीगोपालतापनीप्रभृतयः श्रीकृष्णैकपरा गाम्भीर्य्येण सर्वान्ते स्तोतुकामतया स्थिता अपि तासां नानान्यप्रकारेणैव तत्पर्य्यवसानतां श्रुत्वा समुत्कण्ठां सम्वरीतुमशक्ताः सेर्ष्यमिव साक्षात्तदीयमहिमानं सर्वं तदाविर्भावोत्कृष्टतया वर्णयन्ति तत्राप्यनन्तरोक्तमवलम्ब्येदमुद्भावयन्ति कथमहो साधारणं वर्ण्यते तदिदमसाधारणं श्रूयतां यतो निभृतेति। अत्र चत्वारो गणा वर्ण्यन्ते तत्र च प्रत्यर्द्धं प्रतियुग्ममपिशब्दान्तं तेन च युग्मयोः पार्थक्यं स्वस्वयुग्मे च पूर्वेभ्य उत्तरेषां न्यूनत्वं बोधयन्ति स्पष्टतया प्राप्तञ्च तत्पूर्वयुग्मात् तस्मादयमर्थः स्वतो मुनयः यततो निभृतेत्यादिलक्षणयोग्यताऽतो हृदि शुद्धान्तःकरणे यन्निर्विशेषाविर्भावरूपं सविशेषाविर्भावब्रह्माख्यं तत्त्वमुपासते अनुभवन्ति प्राप्स्यन्ति तु चिरादेव तदवारयः पूर्वोक्ततद्विपरीतस्वभावतया नित्यमेव महानरकयोग्या अपि स्मरणात् महापराधमयादपि स्मरणमात्रात्तेभ्यः प्रथममेव ययुः प्रापुः तत्र लीना बभूवुरित्यर्थः। अहो अस्तु तावत्तव सर्वावतारावतारिभ्यो विलक्षणः स्वद्वेष्टृभ्योऽपि मुक्तिदानलक्षणो महिमा तत्प्रेयसीनामप्यसमुद्धत्वलक्षणः श्रूयतामित्याहुः—स्त्रिय इति। स्त्रियस्तव नित्यप्रेयस्यः श्रीराधाद्या यत् यास्तवाङ्घ्रिसरोजसुधास्तदीयस्पर्शमाधुर्य्याणि हृदि यत्ते सुजातचरणाम्बुरुहमित्यादिरीत्या साक्षाद्धृदयस्थेवोपासते भजन्ते बहुत्वमपरिच्छिन्नवैशिष्ट्यापेक्षया तथाचोक्तं बादरायणिनाप्यनुमोद्यस्वयमनूदिते गोप्यस्तपः किमचरन्नित्यादौ मधुरसौन्दर्यं असमोर्द्धं अनुसवाभिनवमिति ता एव सुधा वयमपि आसामहो इत्यादौ भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्यामित्यायेन तादृशत्वायोग्या अपि ययिम तत्रापि समाः श्रीमन्नन्दव्रजगोपीत्वप्राप्त्या कायव्यूहेन तत्तुल्यरूपाः सत्यः

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स्त्रियः कण्ठभूताः उरगेन्द्रत्वादिलक्षणाः गोप्यस्तपः किमचरन्नित्यादेः एताः परं तनुभृत इत्यादौ नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसाद इत्यादेश्चानुसारेण सर्वदुर्लभमाधुर्यानुभवोद्दीपितमहाभावा इत्यर्थः । तस्य मन्वन्तरावतारः श्रीविकुण्ठासुतोऽपि परमहंसमहामुनीनामन्वेषणीयचरण इति तृतीयस्कन्धे दर्शित इति भावः । तर्हि कथं ययिथ तत्राहुः समदृशः तद्भावानुगतभावाः सत्य इत्यर्थः तदेवमहो अस्मदिष्टदैवतस्यास्य सर्वोत्कृष्टस्वभावता तादृक्परिकरताच दृश्यतामिति भावः । अत्र भुजशब्दस्तासां रागविशेषप्राधान्यविवक्षया आङ्घ्रिशब्दस्तु स्वेषां भक्तिमात्रविवक्षया दैन्येनोक्त इत्युपलक्षणमेव श्रीमन्नराकृतिपरब्रह्मविग्रहस्येति ज्ञेयम् इतिहासश्चात्र बृहद्वामने—

> "ब्रह्मानन्दमयो लोको व्यापी वैकुण्ठसंज्ञितः ।
> तल्लोकवासी तत्रस्थैः स्तुतो वेदैः परात्परः ॥
> चिरं स्तुत्या ततस्तुष्टः परोक्षं प्राह तान् गिरा ।
> तुष्टोऽस्मि ब्रूत भोः प्राज्ञा वरं यन्मनसेप्सितम् ॥

श्रुतय ऊचुः ।

> कन्दर्पकोटिलावण्ये त्वयि दृष्टे मनांसि नः ।
> कामिनीभावमासाद्य स्मरक्षुब्धा न संशयः ॥
> यथा त्वल्लोकवासिन्यः कामतत्त्वेन गोपिकाः ।
> भजन्ति रमणं मत्वा चिकीर्षाजनि नस्तथा ।

श्रीभगवानुवाच ।

> आगामिनि विरिञ्चौ तु जाते सृष्ट्यर्थमुद्यते ।
> कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ ॥ इति

तास्वेव परममुख्याया गायत्र्या अपि तद्रूपेण तत्प्राप्तिः पाद्मसम्मत्या रासपञ्चाध्याय्यां दर्शितास्ति अत्र मुख्याः श्रुतयः अपूतः पूतो भवति यं मां स्मृत्वा अव्रती व्रती भवति यं मां स्मृत्वा निष्कामः सकामो भवति यं मां स्मृत्वा अश्रोत्री श्रोत्री भवति यं मां स्मृत्वेति साक्षाच्छ्रीकृष्णवचनरूपाः ॥ २३ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रतिकूलानामपि भगवत्स्मरणमुत्तारकमिति कथयन्ति इदयं इत्यं त्वामनु य उपासते तान् विशिनष्टि—निभृतमरुन्मनोऽक्षदृढयोगयुजः मरुत् प्राणवायुश्च मनश्चाक्षाणि इन्द्रियाणि च तानि निभृतानि यैस्ते निभृतमरुन्मनोऽक्षाः ते दृढं स्थिरतरयोगं युञ्जन्तीति स्मरणात् स्वत्स्मरणात् अरयोऽपि त्वां ययुरिति यद्यस्मात् त्वां मुनयः उपासते इत्यन्वयः स्त्रियः गोप्यः कामतः कमनीयमूर्तिं त्वां मनसि निधाय त्वां प्रापुः किम्भूताः उरगेन्द्रभोगभुजदण्डविषक्तधियः उरगेन्द्रभोगतुल्ये तव भुजदण्डे विशेषेण सक्तधियः त्वां प्रापुः वयं देवाः समाः पक्षपातरहिततया प्रमाणभूताः परमकृपालोस्तव समा तुल्या समाना दृष्टिर्येषां ते तव अङ्घ्रिसरोजमेव सुधा येषां ते तावकाङ्घ्रिमेव भोग्यतया प्रकाशयाम इत्यर्थः ॥ २३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

आस्तां त्वयि न रमन्त इत्यहो बत त्वयि द्वेषादिकमपि न कुर्युर्यतस्त्वयि विलक्षणविषये तस्यापि त्वत्प्राप्तिसाधनत्वादिति सदृष्टान्तं सोदाहरणं सोपपादनं चाहुः निभृतेति । मरुतः प्राणाः मनश्चाक्षाणि इन्द्रियाणि च निभृतानि संयमितानि मरुदादीनि यैस्ते च दृढमविचाल्यं योगमुपासनात्मकं युञ्जत इति तथा ते मुनयः हृदि यत्त्वत्स्वरूपमुपासते तदेवारयः शत्रवोऽपि स्मरणाद्वीतिपूर्वकस्मरणाद्ययुः प्रापुः तथा स्त्रियः गोप्योऽपि उरगेन्द्रस्य अहीन्द्रस्य देहसदृशयोर्भुजदण्डयोर्विशेषेण सक्ता धीर्यासां तास्तदेव ययुरित्यन्वयः । विषयद्वय विलक्षणत्वादिति भावः । किं बहुना वयं वेदाभिमानिनो देवा अभ्यङ्घ्रिसरोजमेव सुधा तद्रङ्गाग्र्यं येषां ते त्वच्चरणसरोजप्रकाशका वयमपीत्यर्थः । यद्वा अङ्घ्रिसरोजं सुष्ठु धयन्ति पिबन्ति अनुभवन्तीति यावत् "धेट् पाने" इति धातोरूपमिदं त्वयि प्रमाणतया त्वदन्तरङ्गभूतास्त्वत्स्वरूपादिप्रकाशका वयमपीत्यर्थः । ते तव समास्तुल्याः मुनिप्रभृतय इव त्वामेव विषयभूतं तात्पर्यतोऽर्थंतश्च प्राप्नुम इत्यर्थः । तत्र हेतुत्वेन विशिंषन्ति—समदृश इति । समा दृग्यस्य अनादृतनिम्नोन्नतभावस्य वैषम्यनैर्घृण्यादिपरिहाराय व्याजमात्रावलम्बिनः सर्वानुजिघृक्षोस्तव सर्वेऽपि तुल्यकक्ष्या इतिभावः ॥ २३ ॥

---

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथ भगवत्प्रतिकूलानामपि भगवत्स्मरणं संसारोत्तारकमित्याह—निभृतेति । इदयं इत्थं त्वां मुनयः उपासते तान् विशिनष्टि—निभृतानि वशीकृतानि मरुत्प्राणः मनश्च अक्षाणीन्द्रियाणि च यैस्ते च ते दृढयोगं युञ्जन्ति दृढयोगयुजः वशीकृतप्राणमनइन्द्रियत्वात् दृढयोगयुज इत्यर्थः । स्मरणात् द्वेषबुद्ध्या तत्स्मरणादरयोऽपि त्वां ययुरिति यत् यस्मात्तस्मात्त्वां मुनय उपासते इत्यन्वयः । स्त्रियो गोप्य अपि कामेन उरगेन्द्रभोगभुजदण्डविषक्तधियः भोगीन्द्रशरीरतुल्ययोर्भुजदण्डयोर्विषक्ता धीर्यासां ता अपि त्वां ययुरिति तथाचोक्तं सप्तमे नारदेन—

> "गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः ।
> सम्बन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो ॥ इति

वयं वेदाः समाः पक्षपातरहिततया प्रमाणभूताः समदृशः समाना दृष्टिर्यासां श्रुतीनां ता अपि तवाङ्घ्रिसरोजमेव सुधाभोग्यं; यासां तास्तवाङ्घ्रिमेव भोग्यतया प्रकाशयाम इत्यर्थः ॥ २३ ॥

---

### योगिरामानुजाचार्यकृतसरलाव्याख्या ।

ज्ञानभक्तिरागद्वेषादिष्वन्यतमेनापि भगवन्तं स्मरंतो भगवन्तमेव प्राप्नुवन्तीत्याह—निभृतेति । निभृतमरुन्मनोऽक्षदृढयोगयुजः । मरुत्प्राणा मनः अक्षाणीन्द्रियाणि च निभृतानि संयमितानि निश्चलीकृतानि यैस्ते च ते दृढं दृढीभूतं योगं

योविदृरामानुजाचार्यकृतसरलाव्याख्या।

युञ्जन्तीति दृढयोगयुजः एवंभूताः मुनयः यत् भगवत्स्वरूपं हृदि उपासते ध्यायन्ति तदेव भगवत्स्वरूपं हृदि उपासते ध्यायन्ति तदेव भगवत्स्वरूपं अरयोपि तव स्मरणात् ययुः प्रापुः अरयोपीत्यनेन मुनयोपि प्रापुरित्यर्थः तथा उरगेन्द्रशेषः तस्य भोगः कायः तत्सदृशभुजदण्डयोर्विषक्ताऽऽसक्ता धीर्यासां ताः स्त्रियः गोप्यः विज्ञानशून्या इत्यर्थः तथा अङ्घ्रिसरोजे भगवच्चरणकमले सुष्ठु धारयन्ति वर्णयन्तीति वाऽङ्घ्रिसरोजसुधाः ध्यानादिना धारयन्त्यो वयमपि श्रुत्यभिमानिन्यः विशेषज्ञाः देवताः अपि अपीत्यनेन विज्ञानरहिता गोप्योऽपि इत्यर्थः समदृशः समदर्शिनस्ते समाः स्त्रियः गोप्यः श्रुतयश्च समाः तुल्यकृपाविषया यथा मुनयः अरयश्च समाः तथा गोप्यः श्रुतयश्च तव समाः इतिभावः निभृतमरुन्मनोक्षदृढयोगयुजो मुनयः हृदि यदुपासते तदरयोपि स्मरणाद्ययुः उरगेन्द्रभोगभुजदण्डविषक्तधियः स्त्रियः अङ्घ्रिसरोजसुधाः वयमपि समदृशः ते समाः इत्यन्वयः ॥ २३ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

मू० ॥ न च रमन्त्यहो असदुपासनयाऽऽत्महनो यदनुशयाः भ्रमन्त्यभवाः कुशरीरभृतः। निभृतमोक्षहृदययोगयुजो हृदयं मुनय उपासते तदरयोपि ययुः स्मरणात् ॥ १०—२४ ॥

असुर्यानाम ते लोका अन्धेन तमसा वृताः तांस्ते प्रेत्याभिगच्छन्ति ये केचात्महनो जनाः" इति श्रुतिसूचिताभिप्रायस्य न च रमन्त्यस्यायमर्थः असदुपासनयाऽन्यथोपासनया ब्रह्माहमित्याद्युपासनया आत्महनः आत्मानं घ्नन्तो जनाः असुर्यान् सुष्ठ्वरमणरूपत्वादसुरप्राप्तत्वाच्च नित्यनिरतिशयदुःखाभिरस्तसमस्तसुखान् लोकानाप्नुवन्तीत्येतच्च रमन्त्यहो इत्यनेन लक्ष्यते सुखलक्षणा रतिरेव नास्तीति न किन्तु नित्यदुःखमनुभवन्ति च अहो आश्चर्यम् अन्यथोपासकानामनर्थपरम्परा किञ्च यदनुशयाः यस्मिन्ननुशयो येषां ते तथा यत्रानुशयानास्तमस्येव भ्रमन्तीत्यर्थः। कुतोत्राह—अभवा इति। तत उत्थाय पुनर्जन्मवर्जिताः जन्माभावेन देहाभावे दुःखभोगाभाव इति तत्राह कुशरीरभृत इति। नित्यदुःखभोगसाधनं कुत्सितं निन्द्यं शरीरं बिभ्रतीति न केवलं भगवद्द्वेषिणामेतादृशलोकप्राप्तिः अपितु तद्भक्तद्वेषिणामपि तल्लोकावाप्तिरिति भावेनाह-निभृतेत्यादिना। निभृतं परिपूर्णं मोक्षार्थं हृदयं ज्ञानं यस्य स निभृतमोक्षहृदयः वायुः तेन योगेन नियोगेन युजो युक्ताः नियमिताः सन्तः ये मुनयो ज्ञानिनः हृदयनात् हृदयं भगवन्तमुपासते तेषां मुनीनामरयो द्वेषिणोपि तदेव श्रीनारायणद्वेषिप्राप्यन्तमो ययुरित्यन्वयः—

नित्यदुःखसुसम्पूर्णं निरस्तानन्दमव्ययम्।
तमो यान्त्यन्यथा ज्ञानात् द्वेषाद्वा हरिसंश्रये ॥इति

हरिसंश्रये हरिभक्तजने-

निभृतो मोक्षविरप्राणस्तद्योगात्तत्प्रसादतः।
जानन्ति परमं देवं नान्यथा तु कथञ्चन ॥ इति

स्मरणादित्युत्तरश्लोकान्वयि ॥ १०—२४ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अथ श्रीगोपालतापन्यां श्रुतयः श्रीकृष्णैकपरा गान्धर्वेण सर्वास्ते स्तोतुकामनया स्थिता एतासां नान्यप्रकारेणैव तत्पर्यवसाना श्रुत्वा सम्वर्णितुमशक्ताः सेर्ष्यमिव साक्षात्तदीयमहिमानं सर्वाद्याविर्भावोत्कृष्टतया वर्णयति तत्राप्यनन्तरोक्तमवलम्ब्येव मुद्राययन्ति। कथमहो साधारण वर्ण्यते। तावदमसाधारणां श्रुयतां यतो निभृता। इतिहाससमाज बृहद्वामने "ब्रह्मानन्दमयो लोको व्यापी वैकुण्ठसंज्ञितः। तल्लोकवासी तत्रस्थैः स्तुतो वेदैः परात्परः। चिरं स्तुत्वा ततस्तुष्टः परोक्षं प्राह तान् गिरा। तुष्टोऽस्मि ब्रूत भोः प्राज्ञा वरं यं मनसेप्सितं। श्रुतय ऊचुः। यथा त्वल्लोकवासिन्यः कामतत्त्वेन गोपिकाः। भजन्ति रमणं मत्वा चिकीर्षाजनि नस्तथा। श्रीभगवानुवाच। आगामिनि विरिञ्चौ तु जाते सृष्टयर्थमादरात्। कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ" इति एवं गायत्र्या अपि गोपिकात्वप्राप्तिः पाद्मे सृष्टिखण्डे कथितास्ति अत्र गोपालतापनी श्रुतयः। अपूतः पूतो भवति यं मां स्मृत्वा अव्रती व्रती भवति यं मां स्मृत्वा निष्कामः सकामो भवति यं मां स्मृत्वा अश्रोत्री श्रोत्री भवति यं मां स्मृत्वेति ॥ २३ ॥

———

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

ननु मोक्ष एव पुरुषार्थः तन्निरपेक्षतया भवच्चरणभजनमेव कार्य्यं तदकरणे कुशरीरिभूत्वाऽऽत्महत्यादिना निन्दा च कृता पूर्वपूर्वश्लोकाभ्यां तदयमतिस्तवः नैवम् अनुभववाधादित्याहुः—निभृतेत्यादि। निभृतानि यमितानि मरुतः प्राणाः मनः अक्षाणि इन्द्रियाणि यैस्ते च ते दृढयोगयुजश्चेति बहुव्रीहिगर्भः कर्मधारयः एवम्भूता ये मुनयः ते यत्कैवल्यम् उपासते आकाङ्क्षन्ति तत् अरयः शिशुपालादयोपि वैरानुबन्धेन यत्स्मरणं तस्मादपि हेतोर्ययुः प्रापुः अतः कैवल्यं तावत न दुर्लभं यद्विप्रहद्वेषिण एव प्राप्नुवन्ति तव चरणारविन्दरतिरेव दुर्लभा तत्र वयमेव प्रमाणं यतो ब्रह्मोपासनामवहेलयन्त्यस्त्वच्चरणरत्यर्थं श्रुतिरूपमपहाय व्रजे गोपाङ्गनाभावमासादिता इत्याहुः स्त्रिय इत्यादि वयमपि श्रुतयोपि तव उरगेन्द्रभोगवत् वृत्तः कोमलो यो भुजदण्डस्तत्र विषक्तधियः सत्यः स्त्रियो भूत्वा अङ्घ्रिसरोजं सुष्ठु दधतीति अङ्घ्रिसरोजसुधा अभवाः इत्यर्थः। ते इत्युभयत्र योज्यं कथम्भूतस्य समदृशः नित्यसिद्धासु गोपाङ्गनासु यथा अनुरक्त आसीः तथा ॥ २३—२४ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तत्र केन प्रकारेण भगवान् भजनीय इति विशेषजिज्ञासायां निर्णयार्थमाह-निभृतमरुन्मनोक्षदृढयोगयुज इति। तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेदिति भगवच्चरणपरतैव प्रयोजिका न तु प्राकरविशेषः प्रयोजक इति वक्तुं मर्यादामार्गेण निषिद्धमार्गेण पुष्टिमार्गेण प्रवर्तकमार्गेण वा ये भगवदुपासकाः ते सर्वे भगवद्विचारेण समा एव साधारणधर्मस्य प्रयोजकस्य सर्वत्र

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

विद्यमानत्वात् तत्र विहितमर्यादामार्गेण ये यमन्ते तान् प्रथमतो निर्दिशति निभृतं भृतः मरुद्वायुः मनः अक्षाणि च प्राणायाम-प्रत्याहारध्यानक्रमेण एवं त्रिभिः कृत्वा दृढयोगयुजः योगेन निरन्तरभगवच्चिन्तकाः हृदि भगवन्तं मानसपूजादिना उपासते भगवति दृढं मनः स्थापयन्ति तदेव भगवत्स्वरूपं तद्वरयोऽपि स्मरणाद्ययुः सर्वात्मना यत्रैव मनो निविशति तदेव प्राप्नुवन्तीति विहितानां निषिद्धानां च तुल्यैव गतिरुक्ता अनेन भगवति प्रमेयबलमेव मुख्यं न प्रमाणबलमित्यपि सूचितम् उभयेषामेषाम् अन्तर्मुखता वर्तत इति बहिर्मुखानप्याह - स्त्रिय इति। उरगेन्द्रस्य शेषस्य भोग इव काय इव यौ बाहू तत्र च विषक्ता धीर्यासां तादृश्यो गोप्यः अतिबहिर्मुखाः वयं च श्रुतयः अन्तर्मुखाः सर्वादरणीयाः एवं पुरुषाः स्त्रियश्च सर्वे एव ते समाः यतो भगवान् समदृक् सर्वानेव स्वकीयान् समत्वेन मन्यते साधारणं तेषां धर्ममाह अङ्घ्रिसरोजं सुष्ठु धारयन्तीति मुनीनां चरणधारणं स्पष्टं द्वेषिणां तु मारणार्थं समायातीति भावनया चरणदर्शनमेव दृढं भवति समागमनमेव तेषां मावनीयमिति गोपिकानामपि तथा अभिसारप्रेप्सूनां वयञ्च श्रुतयः सर्वे वेदा यत्पदमामनन्तीति—

सर्व एव हरेर्भक्तास्तुल्या यान्मन्यते हरिः।
अतः कृष्णो यथास्मीयान् मन्यते भजनन्तथा ॥ २३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

भगवत्स्वरूपेष्वपि मध्ये श्रीकृष्णस्य तद्विषयकसर्वविलक्षणभक्तियोगस्य च सर्वोत्कर्षं वक्तुं प्रथमं ब्रह्मविषयकं ज्ञानयोगमपकर्षकक्षायां निक्षिपन्त्य आहुः—निभृतैः संयमितैर्मरुन्मनोऽक्षैर्यो दृढो निश्चलो योगस्तं युञ्जन्तीति ते तथाभूता मुनयो हृदि परमशुद्धे ब्रह्माकारीभूते यद्ब्रह्मस्वरूपमुपासते तदरयः कृष्णावतारसमयगताः असुरा अपि अरिभावमयादपि स्मरणात् ययुः अहो कृष्णाकारस्य माहात्म्यं तादृशा अपि मुनयोऽपरिच्छिन्नदृष्टयोऽपि यावद्ब्रह्मकैवल्यमुपासीना एव तिष्ठन्ति तन्मध्य एव कंसाद्योऽसुराः परिच्छिन्नदर्शिनः पापात्मत्वाद्दुष्टचित्ता अपि अरिभावावेशात् कृष्णाङ्गसङ्गमाधुर्यस्यापरोक्षानुभवरहिता अपि केवलतदाकारमात्रस्मरणात् तदेव ब्रह्म प्राप्यैव स्थिताः मुनयस्तु न जानीमहे कियता कालेन तत्प्राप्स्यन्तीति भावः एवञ्च तच्छत्रुगणप्राप्तं ब्रह्मरसास्वादं मुनयो यत्नेन प्राप्नुवन्तीति पूर्वार्द्धेनोक्त्वा तन्मित्रगणप्राप्तं प्रेमरसास्वादं वयं श्रुतयो यत्नेन प्राप्नुम इत्याहुः—स्त्रियो व्रजदेव्य उरगेन्द्रस्य भोगो देहस्तत्सदृशयोस्त्वदीयभुजदण्डयोरतिरागेणैव विषक्ता धीर्यासां ताः हृदि स्ववक्षःस्थले वक्षसि स्तनोपरि तव चरणाम्बुरुहं स्तनेष्वित्युक्तिरीत्या अङ्घ्रिसरोजयोर्याः सुधा उपासते सेवन्ते अनुभवन्तीति यावत् ता एव वयं श्रुतयोऽपि यथिमः समाः तपसा गोपीत्वप्राप्त्या तत्तुल्यरूपाः सत्यः कथं प्राप्नुमेति तत्राहुः समदृशः समदृष्टेः तासां यस्मिन् कर्मणि दृष्टिस्तस्मिन्नेव कर्मणि तद्वद्गत्या दृष्टिं ददाना इत्यर्थः। अत्र चत्वारो गणा वर्णितास्तत्र पूर्वार्द्धगतौ मुनिगणदैत्यगणौ यथा समप्राप्यौ तथैवोत्तरार्द्धगतौ गोपीगणश्रुतिगणौ समप्राप्यौ पृथक् पृथगविशङ्क्याभ्यामवगम्यते इतिहासश्चात्र बृहद्वामने उत्तरस्थाने खिले—

"ब्रह्मानन्दमयो लोको व्यापी वैकुण्ठसंज्ञितः।
तल्लोकवासी तत्रस्थैः स्तुतो वेदैः परात्परः ॥
चिरं स्तुत्या ततस्तुष्टः परोक्षं प्राह तान् गिरा।
तुष्टोऽस्मि ब्रूत भोः प्राज्ञा वरं यन्मनसीप्सितम् ॥

श्रुतय ऊचुः।

यथा तल्लोकवासिन्यः कामतत्त्वेन गोपिकाः।
भजन्ति रमणं मत्वा चिकीर्षाऽजनि नस्तथा ॥

श्रीभगवानुवाच।

दुर्लभो दुर्घटश्चैव युष्माकं स मनोरथः।
मयानुमोदितः सम्यक् सत्यो भवितुमर्हति ॥
आगामिनि विरिञ्चौ तु जाते सृष्ट्यर्थमुद्यते।
कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ ॥
पृथिव्यां भारते क्षेत्रे माथुरे मम मण्डले।
वृन्दावने भविष्यामि प्रेयान्वो रासमण्डले ॥
जारधर्मेण सुस्नेहं सुदृढं सर्वतोऽधिकम्।
मयि सम्प्राप्य सर्वा अपि कृतकृत्या भविष्यथ ॥

ब्रह्मोवाच।

श्रुत्वैतच्चिन्तयन्त्यस्ता रूपं भगवतश्चिरम्।
उक्तकालं समासाद्य गोप्यो भूत्वा हरिं गताः" ॥ इति

अत्र आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति अर्थश्च द्रष्टव्यः साक्षात्कर्तव्यः तस्य साधनान्याह श्रोतव्यः श्रीगुरोर्मुखादुपक्रमादिभिस्तात्पर्येणावधारयितव्यः मन्तव्यः असम्भावनाविपरीतभावनानिवारणाय स्वयं पुनर्विचारणीयः निदिध्यासितव्यो निश्चयेन ध्यातव्य इति अत्र ज्ञानिनां मते सविशेषनिर्विशेषभेदेऽपि निर्विशेष एव तात्पर्यं वैष्णवानां मते तु अप्राकृतविचित्रविविधविशेषवति श्रीभगवदाकार एव "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्" इति श्रुतेः कल्याणगुणमयतनुमानात्मा श्रीभगवान् द्रष्टव्यः तस्य साधनान्याह—श्रोतव्य इति। श्रीगुरोर्मुखात् तन्मन्त्रश्रवणं मन्त्रमयवपुष इति क्रमदीपिकाद्युक्तेस्तन्मन्त्रस्य तत्स्वरूपत्वोक्तेः मन्तव्य इति मन्त्रशब्दार्थयोः सम्यग्मननलक्षणं स्मरणं निदिध्यासितव्य इति निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरोक्तेः निध्यानं दर्शनं तस्येच्छा निदिध्यासनं मन्त्रार्थसम्यङ्मननपूर्वकजपाभ्यासात् स्वप्रेष्ठः स दिदृक्षितव्य इत्यर्थः। दिदृक्षाभ्यासात् द्रष्टव्यः इति वेदानां कामभावेच्छायां तु यं मां स्मृत्वा निष्कामः सकामो भवतीति कृष्णोक्तिरूपा गोपालतापनीश्रुतिः व्रजस्त्रीजनसम्भूतश्रुतिभ्यो ब्रह्मसङ्गतः इति च अर्थश्च व्रजस्त्रीजनेषु सम्भूता बृहद्वामनपुराणदृष्टतपोभिर्लब्धा याः श्रुतयस्ताभ्यो हेतुभ्यः ताः प्राप्येति वा कृष्णो ब्रह्मसङ्गतः प्राप्तवराङ्गसङ्गोऽभूत् ॥ २३ ॥

---

क इह नु वेद बतावरजन्मलयोऽग्रसरं यत उदगादृषिर्यमनु देवगणा उभये ।
तर्हि न सन्न चासदुभयं न च कालजवः किमपि न तत्र शास्त्रमवकृष्य शयीत यदा ॥ २४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अनीश्वरोपासनया संसरन्तीत्युक्तम् इदानीमात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः सोऽन्वेष्टव्यः स विजिज्ञासितव्य इति "अथातो ब्रह्मजिज्ञासा" इत्यादिशास्त्रं भगवत्ध्यानस्यैव संसारनिवृत्तयेऽसाधारणकारणत्वं प्रतिपादयत् वाक्यज्ञानान्मोक्षं प्रलपतां पक्षस्य निष्प्रमाणत्वं दर्शयति निभृतानि मरुदादीनि हठयोगेन समाधौ युक्तानि च यैस्ते विषयेभ्यः उपरम्य परमात्मप्रवणमन आदिकरणका मुनयो हृदि यत् वस्तु ध्यायन्ति तदेवारयोऽपि मिथ्यावासुदेवशिशुपालादयोऽपि तव स्मरणाद्ययुः प्रापुः अहो ध्यानस्य माहात्म्यमिति दृष्टवत्नूरुहः पराशरोऽप्याह चतुर्थांशे तव रूपमुत्फुल्लपद्मदलामलाक्षमित्यारभ्य भगवानिह कीर्तितः संस्मृतश्च द्वेषानुबन्धेनाप्यखिलसुरासुरदुर्लभं फलं प्रयच्छति किमुत सम्यग्भक्तिमतेति वचनेन तथाच स्त्रियः उरगेन्द्रभोगसदृशयोर्भुजदण्डयोर्विषक्ता धीर्यासां तास्तदेव तत्त्वं कामदृष्ट्या प्रापुः एतेन सर्वज्ञत्वादिसाविद्यानन्दादिगुणस्वरूपादिज्ञानाभावेऽपि भगवत एकदेशध्यानमात्रस्यापि संसारनिवारणे भगवत्प्राप्तौ च निरपेक्षत्वं दर्शितं तथा च वक्ष्यति "मत्कामा रमणं जारमस्वरूपविदोऽबलाः । ब्रह्म मां परमं प्रापुरिति तथा वयमपि मन्त्राभिमानिन्यो देवताः समदृशस्तव सर्वेऽपि चतुःप्रकारेणोक्ताः अधिकारिणः समाः मोक्षानन्दभाज इत्यर्थः । कथम्भूताः तवाङ्घ्रिसरोजं सुष्ठु धारयन्त्यो ध्यायमाना इत्यर्थः । वाक्यज्ञानान्मोक्षाङ्गीकारेति प्रसङ्गो दुर्वारः तथाहि जन्मदरिद्रिणः पुंसो भोजनाच्छादनादिविहीनस्य वाक्यात्कल्पतरुकामधेनुचिन्तामण्यादिभिर्दारिद्र्यनिवृत्तिः निगाढं कुहूशर्वर्यास्तमो वाग्विसर्जितभानोर्निवृत्तं च स्यात् तथाच क्षुधया पीडितस्य चतुर्विधभोजनकथनात् क्षुधाहानिश्चेत्यलं विस्तरेण तस्मात्सर्वशक्तेर्मायातद्गुणतत्सम्बन्धगन्धशून्यस्य ब्रह्मणस्तथैव ज्ञानाख्यानान्यपर्यायाच्चवानुग्रहयुक्तात् संसारनिवृत्तिरिति सिद्धान्तः ॥ २३ ॥

---

### भाषा टीका ।

जिनों ने प्राण मन इन्द्रियों को विषयन ते रोके हैं और दृढ उपासना को करने वारे हैं ऐसे मुनि जन निज हृदय में जिस आपके स्वरूप की असुर राक्षस शत्रु जन भी प्रेम के विना स्मरण करने से प्राप्त हो गए हैं, तथा आपके श्रेष्ठ भुजङ्ग देह सदृश भुज दण्डों में जिन की बुद्धि अत्यन्त आसक्त हुई एतादृश गोपी जन भी आप के उसी स्वरूप को प्राप्त हो गईं तथा आप के चरणारविंद को अमृत के तुल्य मानने वारे अथवा आपके चरणारविन्द को सम्यक् प्रकार अनुभव करने वारे मूर्तिमान हम वेद रूपी देवता भी आप को मुनि जन आदि के समान है, अर्थात् जैसे मुनि जन आदि आप को प्राप्त भए हैं। तैसे हि हम सब मूर्तिमान वेद भी, तात्पर्य्य से तथा वास्तविक अर्थ से आप को हि प्राप्त भए हैं, क्योंकि अपनी प्राप्ति में आप नीच ऊंच भाव का आदर नहि करते हो, विषमता और निर्दय भाव के केवल व्याज मात्र का अवलम्बन कर आप समदर्शी हो इस वास्ते सब के ऊपर अनुग्रह करने की ही आप को इच्छा रहती है इस लिये आप की दृष्टि में सब हि तुल्य हैं ॥ २३ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

"यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्शत् तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति" इत्याद्याः श्रुतयो भगवत्तत्त्वं दुर्ज्ञेयं वदन्त्यो भक्तिमेवोररीकृत्य स्तुवन्तीत्याह—क इह नु वेदेति । बत अहो भगवन्निह जगत्यग्रसरं पूर्वसिद्धं त्वामवरजन्मलयोऽर्वाचीनोत्पत्तिनाशवान् को नु पुमान्वेद जानाति ईश्वरस्य पूर्वसिद्धावन्यस्य चार्वाचीनत्वे प्रमाणं वदन् ज्ञानकारणाभावमाह—यत उदगादिति । यतस्त्वत्त ऋषिर्ब्रह्मा उदगात् यं ब्रह्माणमनु उभये आध्यात्मिकाधिदैविकाः देवगणा उत्पन्नास्ततोऽप्यर्वाचीनाः सर्वे यदा तु भवान् सर्वमवकृष्योपसंहृत्य शयीत तर्हि तदा अनुशायिनां जीवानां ज्ञानसाधनं नास्ति यतस्तदा न सत्स्थूलमाकाशादि न चासत् सूक्ष्मं महदादि न चोभयं सदसद्भ्यामारब्धं शरीरम् न च कालजवस्तन्निमित्तभूतं कालवैषम्यम् एवंसति तत्र तदा न किमपीन्द्रियप्राणाद्यपि न च ज्ञापकं शास्त्रमपि अयमभिप्रायः अर्वाक्सृष्टिगतानां देहाद्युपाधिकृतान्तराणां न कालवशेन च मलिनसत्त्वानां तावद्भगवज्ज्ञानसामर्थ्यं तथाच श्रुतिः "न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव" इत्याद्याः यदा तु प्रलयसमये न बहुन्तरमस्ति तदाऽपि साधनाभावान्न भगवज्ज्ञानसामर्थ्यम् अतस्त्वदेकशरणतया श्रवणकीर्तनादिभक्तिरेव सुकरेति ॥ २४ ॥

क्वाऽहं बुद्ध्यादिसंरुद्धः क्व च भूमन्महस्तव ।
दीनबन्धो दयासिन्धो भक्तिं मे नृहरे दिश ॥ ११ ॥

---

### श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

यतो निर्विशेषब्रह्मणः सकाशाद्वाचो वाचकशब्दा अप्राप्य मुख्यया वृत्त्या ऽप्रकाश्यैव निवर्त्तन्ते अद्धा सम्यक्तः प्रवोचत प्रावोचत् इयं विविधा आकाशादिरूपा सृष्टिः कुतः कस्मादाजाता कुतः कस्मादायाता स्थितिं प्राप्तैत्यपि को वेद न कोऽपीत्यर्थः

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

अस्य सर्वस्यैव देवादिपर्यन्तस्य विश्वस्य विसर्जनेन सृष्ट्या हेतुना देवा अपि अर्वाक् अर्वाचीनाः अथेत्यर्थे अथाशब्दः आकारान्तः अतं इत्यर्थः । अनेजत् स्वस्वरूपाच्चलनरहितं मनसोपि वेगवत्तरं मनः प्राप्यस्थाने पूर्वमेव सत्त्वात्तद्गोचरमित्यर्थः । देवा इन्द्रियाणि नाशन् पूर्वमेव गतमित्यर्थः । सर्वागोचरत्वादेवेति भावः । तिष्ठत् स्थिरमपि तस्मिन् परमात्मचैतन्ये इति तदाश्रयत्वेन वर्त्तमानः सन्नित्यर्थः । स मातरिश्वा सूत्राख्यो वायुः अपस्तद्वत् प्रवाहापन्नाः सर्वेषां जीवानां भोजनगमनादिलक्षणाः सर्वचेष्टा दधाति सम्पादयतीत्यर्थः आध्यात्मिका इन्द्रियाधिष्ठातारः आधिदैविकाः लोकाधिष्ठातारः ते विद्याथेत्यादिश्रुति-व्याख्यातचरी यतो ज्ञानं दुर्घटम् अतः ॥ २४ ॥

श्रीकविचूडामणिचक्रवर्त्तिकृतान्वयबोधिनी ।

यतो ध्यानज्ञानद्वेषभयकामसम्बन्धस्नेहभक्तिपराणां विषमं स्वभावकर्मणां सर्वेषां त्वत्सायुज्यमेकमेव फलं स्यादतस्तव तत्त्वं दुर्विज्ञेयं वदन्त्यो भक्तिमेवोररीकुर्वन्ति इत्याह—क इहेति । वत अहो भगवन्निह जगति अग्रसरं पूर्वसिद्धं त्वाम् अवरजन्मलयः अर्वाचीनोत्पत्तिविनाशवान् को नु पुमान् वेद जानाति न कोपि ईश्वरस्य पूर्वसिद्धावन्यथास्यार्वाचीनत्वे प्रमाणं वदन् ज्ञानकारणाभावमाह यत इति यतस्त्वत्तः ऋषिर्ब्रह्मा उदगादुत्पन्नः यं ब्रह्माणमनु पश्चादुभये आध्यात्मिकाऽऽधिदैविका देवगणाः उत्पन्नाः अतः सर्वे अर्वाचीनाः यदातु भवान् सर्वमवकृष्य उपसंहृत्य शयीत तर्हि तदा न सत्स्थूलमाकाशादि नचासत्सूक्ष्मं महदादि न च उभयं सदसद्रूपमारब्धं शरीरं न च कालजवः तन्निमित्तभूतकालवैषम्यम् एवं सति तत्र तदा किमपि इन्द्रियप्राणादिकमपि न च ज्ञापकं शास्त्रमपि एतत् सर्वे किमपि न स्यात् स्वामिचरणाः अयमभिप्रायः अर्वाक्सृष्टिगतानां देहाद्युपाधिकृतान्तराणां कालवशेन मलिनसत्त्वानां नतावद्भगवज्ज्ञानसामर्थ्यं यदातु प्रलयसमये न बहिरन्तरमस्ति तदापि ज्ञानसाधनाभावाच्च भगवज्ज्ञानम् अतस्त्वदेकशरणतया श्रवणकीर्त्तनादिभक्तिरेव सुकरेति । भगवत्तत्त्वं दुर्विज्ञेयमाहुः श्रुतयः "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति 'को अद्धा वेद इह प्रावोचत्कुत आयाता इयं विसृष्टिः अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्शत् तद्धावतोऽन्यान् अत्येति तिष्ठत् तस्मिन्नपो मातरिश्वा दधाति"इत्याद्याः आसामर्थः ब्रह्मप्रकाशनाय सर्वथा प्रयोक्तृभिः प्रयुज्यमाना अपि वाचः मनसा सह यत् अप्राप्य यतो, यस्मान्निर्विकल्पात् श्री अद्वयानन्दात्मनो निवर्त्तन्ते तद्ब्रह्म आनन्दं विद्वान्, जानन् कुतश्चन निमित्तात् न बिभेतीति । अतस्तल्लाभमाहात्म्यपरेयं परमात्मनो दुर्विज्ञेयत्वे श्रुत्यन्तरमुदाहरति को अद्धा वेदेति तं परमात्मानं अद्धा साक्षात् को वेद को जानाति इह कः प्रावोचत् वदति इयं विसृष्टिः विविधा सृष्टिः कुतो जाता कुतः कस्मादायाता ननु हि हिरण्यगर्भादेः सकाशात्सृष्टिरुत्पद्यते नैत्याह अर्वाग्देवाः अर्वाचीना ब्रह्मादिदेवाः अस्य जगतो विसर्जने न समर्थाः इत्यर्थः । तदर्थं तेत्तैः अथा इत्याकारान्तो अथेत्यर्थे निपातः अद्धा तं को वेद यत एतत्सर्वं आबभूवेति दुर्विज्ञेयप्रतिपादनपरेयं ननु यदि कोपि न वेद कथं तर्हि संसारनिवृत्तिः तदर्थं तत्स्वरूपमनिर्वचनीयत्वेनाह—अनेजदिति । तत्परमात्मतत्त्वमनेजत् स्वरूपाच्चलनरहितम् एकमद्वितीयं मनसो जवीयः मनसोपि वेगवत्तमं यत्र मनो धावति तत्र तस्य पूर्वमेव तद्वर्तते इत्यर्थः । एतत्परमात्मतत्त्वं देवाश्चक्षुरादीनि इन्द्रियाणि तदधिष्ठातारो वा नाप्नुवन् प्राप्ताः तत्र हेतुः यस्मात् मनसोपि पूर्वमर्शत् पूर्वमेव गच्छत् तत्तिष्ठत् स्थिरतरमपि धावतोऽन्यान् वागिन्द्रियादीनत्येति अतिक्रम्य गच्छति मातरिश्वा वायुः तस्मिन्नपः प्राणिनां चेष्टालक्षणानि कर्माणि दधाति धारयतीति यः सर्वप्राणभृत् क्रियात्मकः यदाश्रयाणि कार्यकारणजातानि यस्मिन्नोतानि प्रोतानि च यः सूत्रसंज्ञः वायुर्वै गौतमसूत्रम् इत्यादिभिरुक्तः सर्वस्य जगतो विधारयिता स मातरिश्वा वायुरिति ज्ञातव्यम् अनिर्वचनपरेयम् अथ स्वामिनो

काहं बुद्ध्यादि संरुद्धः क्व च भूमन्महस्तव ।
दीनबन्धो दयासिन्धो भक्तिं मे नृहरे दिश ॥

अत्यन्ताघटने क्व हौ हे भूमन् परिच्छिन्नः पञ्चबुद्ध्यादिसंरुद्धः अहं क्व तव महः स्वरूपे वागाद्यगोचरं क्व तत्त्वज्ञाने अत्यन्तासम्भावना अतो हे नृहरे मह्यं भक्तिं दिश देहि ॥ २४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

क इह न्वित्यस्य टीकायां श्रुतौ प्रवोचत् प्रावोचत् अथेत्यर्थे अथाशब्दमाकारान्तः अनेजत् स्वस्वरूपाच्चलनरहितं मनसोपि जववत्तरं यत्र यत्र तद्धावति तत्र तत्र तद्गोचरत्वात् देवा इन्द्रियाणि नाशन् पूर्वमेव गतमित्यर्थः । सर्वागोचरत्वादेवेति भावः । तिष्ठत् स्थिरमपि तस्मिन्परमात्मचैतन्य इति तदाश्रयत्वेनैव वर्त्तमानः सन्नित्यर्थः । स मातरिश्वा सूत्राख्यो वायुः अपस्तद्वत्प्रवाहापन्नाः सर्वेषां सर्वचेष्टा दधाति सम्पादयतीति ॥ स्वव्याख्यायां तु अथ काश्चिच्छ्रुतयस्तदेवानुमोदमानास्तदज्ञाने स्वदोषं परिहरन्ति—क इह जमतीति । इह जगति तदानीं तदभावेपीदं शब्देनोक्तिः पूर्वसंस्कारात् ता हि तदाधिष्ठिता एव श्रुतय इति नु सम्भ्रमे वितर्के न कोपि वेदेत्यर्थः । तत्र हेतुः अग्रसरं सर्वेषां जन्मादेर्ज्ञानादेश्चागोचर एव वर्त्तमानं तत्र च हेतुः यत ऋषिर्निश्वासेन सर्ववेदप्रवर्त्तकः कारणार्णवशायी उदगात् "आद्योऽवतारः पुरुषः परस्य"इति द्वितीयाद् "यस्यांशांशांशभागेन विश्वस्थित्यप्ययोदयाः"इति श्रीकृष्णं लक्ष्यीकृत्य दशमादेव च यमृषिमनु उभये इन्द्रियाधिष्ठातारो ब्रह्मलोकाद्यधिष्ठातारश्च देवगणा ब्रह्मादयो जाता इति "एको ह वै नारायण आसीन्न ब्रह्मा नेशानः तस्मादेवैते व्यजायन्त" इतिश्रुतेः तस्मात्तेभ्योप्यवरजन्मलयस्तु को वेद सुतरामेव कश्चन न वेदेत्यर्थः । एवं स्थितिसमये शास्त्रे प्रवर्त्तमानेप्यभक्तशक्तिभ्यां त्वदज्ञानं यदा तु प्रलयसमये त्वत्स्तावकं शास्त्रं स्वलोक एव नीत्वा भवान् जगत्कार्ये प्रयत्नवर्ज्जनं करोति तर्हि ज्ञानमात्राभावात्सुतरामेव तेषां त्वदज्ञानमित्याहुः—तर्हीति । कालजवस्तद्व्यापारः सृष्ट्यादिरूपः अत्र श्रुतयस्तेन दर्शिताः ॥ २४ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

शास्त्रेण विना भगवतो दुरधिगमत्वमाहुः—क इहेति । अवरजन्मलयः आदिसृष्टेः पश्चात् जन्मलयभागी कः अत्र प्रथमसृष्टेः पूर्वभाविनं त्वां वेद ऋषिः ब्रह्मा उभये प्रवृत्तिनिवृत्तिनिष्ठाः प्रवृत्तिनिष्ठाः मरीच्यादयः निवृत्तिनिष्ठाः सनकादयश्च तर्हि तदा सृष्टेः पूर्वकाले सत्कार्यावस्थं चिद्वस्तु असत्कार्यावस्थमचिद्वस्तु उभयं मिश्ररूपं कार्यं नेत्यर्थः । कालजवः कालप्रवृत्तिः सर्गविषया यदा शास्त्रमनुकृष्य स्वहृदये भवान् शयीत तदा न सन्तीत्यर्थः ॥ २४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अङ्घ्रिसरोजसुधा इत्यनेन भगवत्स्वरूपस्वभावादिप्रकाशकं वेदाख्यं शास्त्रमेवेत्यभिप्रेतम् अतः तेन विना भगवतो दुरवगमत्वं लयहेतुकमाहुः—क इहेति । अवरजन्मलयः अर्वाचीनोत्पत्तिनाशवान् इह लोके को नु पुमान् अग्रसरं सृष्टेः पूर्वभाविनं ब्रह्मचिदचिद्विशिष्टत्वेन कारणतयाऽवस्थितं त्वां वेद शास्त्रेण विना न कोऽपि वेदेत्यर्थः । बतेति विस्मये "यतो वाचो निवर्तन्ते" इत्युक्तरीत्या वाङ्मनसापरिच्छेद्यस्वरूपस्वभावं तं वेत्तुमुद्युक्तोऽविस्मीयते सर्वेषामवरजन्मलयत्वम् उपपादयन्ति यतः त्वत्तः ऋषिर्ब्रह्मा उदगादुद्भूय यमनु पश्चादनुमुखोत्पत्त्यनन्तरमित्यर्थः उभये निवृत्तिनिष्ठाः सनकादयः प्रवृत्तिनिष्ठाः मरीच्यादयश्च देवाः उदगुर्मन्वादयस्तेभ्योऽप्यर्वाचीना इति किमु वक्तव्यम् इति भावः । अग्रसरत्वमुपपादयन्ति तर्हीति यदा भवान् शास्त्रमपकृष्य स्वहृदये निधाय शयीत शयितवान् तर्हि तदा सृष्टेः पूर्वकाले सत्कार्यावस्थं चिद्वस्तु असत्कार्यावस्थमचिद्वस्तु उभयं मिश्ररूपं कार्यं च कालजवः कालप्रवृत्तिः सर्गादिविषया नासीत्किमधुना तत्र तदा न किमप्यासीदित्यर्थः । अत्र "नासदासीन्नोसदासीत् । एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी" इत्यादिश्रुत्यर्थोऽनुसंहितः अवरजन्मलयोऽग्रसरम् इति च हेतुगर्भं यथाप्यवरजन्मा पुत्रादिः अग्रसरं पित्रादिकमयमित्थंभूत इति जानात्येव तथाप्यत्र भगवतो वाङ्मनसापरिच्छेद्यस्वरूपस्वभावत्वेऽवरजन्मलयानां त्वन्मायामोहितत्वेन तदनुग्राह्यज्ञानत्वेन च तद्वेदनाक्षमत्वेव तात्पर्यं तर्हि न सन्नचासदिति सृष्टेः पूर्वं सच्छब्दवाच्यकार्यावस्थचिदचिद्विशेषेण नामरूपविभागानर्हकारणावस्थचिदचिद्विशिष्टस्य ब्रह्मणोऽग्रसरत्वोक्त्या सूक्ष्मचिदचिद्विशिष्टब्रह्मात्मकस्य सत एव द्रव्यस्य स्थूलचिदचिद्विशिष्टतारूपकार्यावस्थायोगित्वलाभात् सत्कार्यवादः फलितः ॥ २४ ॥

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथ शास्त्रं विना भगवतो दुरधिगमत्वमाह—क इहेति । बत इत्याश्चर्ये हे भगवन् अवरजन्मलयः आविर्भावः पश्चाज्जन्मलयभागी, क इह लोके प्रथमसृष्टेः पूर्वभाविनं त्वां वेद जानाति यतः सकाशात् ऋषिर्ब्रह्मा उदगाज्जातः यमनु उभये देवगणाः प्रवृत्तिनिष्ठाः कर्मभावना इन्द्रादयः निवृत्तिनिष्ठा ब्रह्मभावनाः सनकादयश्च उत्पन्नाः नहि पितुरुत्पत्तिं पुत्रो जानाति तर्हि तदा सृष्टेः पूर्वकाले सत्कार्यावस्थं चिद्वस्तु असत्कार्यावस्थमचिद्वस्तु उभयं मिश्ररूपं कार्यं नेत्यर्थः । कालजवः कालवेगः सर्गविषया प्रवृत्तिरिति यावत् किमपि नामरूपावस्थं नेत्यन्वयः । कदेत्याकाङ्क्षायामाह—यदा शास्त्रमनुकृष्य स्वहृदये आकृष्य भवान् शयीत तदा न सन्तीत्यन्वयः । "तद्धेदं तर्ह्यव्याकृतमासीन्नामरूपाभ्यां व्याक्रियत" इत्यादिश्रुतेः । तथाच मनुराह—

"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥
ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः ॥
योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः ।
सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ ॥
सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु वीर्यमुपासृजत् ॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥

इति ॥ २४ ॥

योगिरामानुजाचार्यकृतसरलाव्याख्या ।

भगवद्ज्ञानस्य दुर्ज्ञेयत्वात् भक्तिरेव समाश्रयणीयेत्याहुः क इहेति । यदा तु यस्मिन् काले भवान् सर्वं प्रपञ्चमपकृष्य उपसंहृत्य शयीत शयनं कुर्वीत तर्हि तदा तत्र सत् चेतनः न आसीत् न चासदासीत् अचेतनं नासीत् नचोभयं सदसदात्मकप्रपञ्चो वा नासीत् न च कालस्य जवो निमेषकलामुहूर्तादिः न च शास्त्रं वेदपुराणादि न किमपि अन्यद्वस्तु नासीत् "नासदासीन्नो सदासीत्तदानीम्" इतिश्रुतेः "तदनु प्रविश्य सच्च त्यच्चाभवत्" इतिश्रुतेश्च भगवदनुप्रवेशानन्तरमेव सदसच्छब्दवाच्यस्य वस्तुनोऽभिव्यक्तिः सृष्टेरादौ तु यतः परमात्मनः सकाशात् ऋषिः ब्रह्मा उदागादुत्पन्नः यमनु ब्रह्मानन्तरम् उभये निवृत्तिनिष्ठाः सनकादयः प्रवृत्तिनिष्ठाः मरीच्यादयश्च देवाः उत्पन्नाः अतः तं ब्रह्मादिजगत्कारणं अग्रसरं सृष्टेःपूर्वसिद्धं त्वां इह जगति अवरजन्मलयः अर्वाचीनोत्पत्तिविनाशवान् पुरुषः कोनु वेद जानाति नु इति वितर्के न कोऽपि जानातीत्यर्थः । बत इति आश्चर्ये अतः भगवतः ज्ञानस्य दुष्प्राप्यत्वात् भक्तिरेव समाश्रयणीयेतिभावः । इह लोके यतः ऋषिरुदगात् यमनु उभये देवगणाः उदगुः अग्रसरं तं कोनु वेद बत यदा, भवान् सर्वमवकृष्य शयीत तर्हि सत् नासीत् असच्च नासीत्, उभयं च नासीत् कालजवश्च नासीत् तत्र किमपि नासीत् इत्यन्वयः ॥ २४ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मू० ॥ स्वनुरागतस्त्वनुरगेन्द्रभोगभुजदण्डविषक्तधियो वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधाम् । क इह वेद नु बतावरजन्मलयो यत उदगादृषिरनु देवगणा उभये ॥ ११—२५ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

"त्वं वेत्थ नापरस्ते स्वरूपं न नित्यवाङ्नागभोगप्रियस्य कुतो ब्रह्मा प्राप्तलोकश्च देवास्तथा प्राप्ता जनिमन्तो यतोऽस्मात्" इति साङ्कृतिश्रुत्यर्थभूतस्यायमर्थः हे स्मरणात् स्वनुराग ! सुष्ठु अनुरागः स्नेहो यस्य स तथा तस्य सम्बुद्धिः स्वनुरागेति स्मरणादेव अनुरक्त इत्यर्थः यत्तव सच्चिदानन्दलक्षणं तत्ते स्वरूपं भवानेव नान्यो वेत्ति अनेन त्वं वेत्थ नापरस्ते स्वरूपमिति विवृतं भवन्तो मत्स्वरूपं विदन्ति हीति तत्राहुः उरगेन्द्रेति । उरसा गच्छन्तीत्युरगाः तेषामिन्द्रः उरगेन्द्रस्तस्य भोग एव दण्डस्तादृ - निर्वक्ता धीयस्य स तथा तस्य ते तव अखिलसरोजसुधा- मुद्दिश्य वयं नित्यवाचोऽपि समा एमदृशः सर्वमाहात्म्यस्य वेदैरपि वक्तुमशक्यत्वादसमदृशः न ह्यात्म्योपमितज्ञानाभावात् वेदागम्यमाहात्म्यस्यापि वेदैरेव गम्यत्वात्समदृशः तुल्यज्ञानाः अत इह जगति अन्यः कोनु पुमान् माहात्म्यं वक्तुं वेद अमुना नित्यवाङ्नागभोगप्रियस्य कुत इत्येतद्विवृतं को ह्यस्मान् वेदान् त्वां च ते अपेतजन्मलयः उत्पत्तिनाशरहितः यतस्त्वत्तः ऋषिर्ब्रह्मा उदगादुत्पन्नः अतो जन्मादिरहितो न भवति देवगणा अपि उक्तगुणा नेत्याहुः ब्रह्मणोऽप्यनन्तरम् उभये प्राप्तपदाः प्राप्यपदाश्च देवगणाः अनेन कुतो न ब्रह्मा- प्राप्तलोकाश्च देवास्तथाप्राप्ताजनिमन्तो यतोऽस्मादिति श्रुतिर्व्याख्याता—

> महिम्नः सर्वशोऽनुक्तेर्वेदाश्चासमदर्शिनः ।
> तस्यापि वेदगम्यत्वात्तथैव समदर्शिनः ॥

इति वाक्यञ्चानुगृहीतम् ॥ ११ ॥ २५ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ काश्चित् श्रुतयस्तदेवानुमोदमानाः तज्ज्ञाने स्वदोषं परिहरन्ति क इह नु वेदेति । ऋषिरत्र नारायणः कारणार्णव- शायी उभये देवगणाः इन्द्रियाधिष्ठातारो ब्रह्मलोकाद्यधिष्ठातारश्च "एको ह वै नारायण आसीन्न ब्रह्मा नेशानस्तस्माद्देवेते व्यजायन्त" इतिश्रुतेः ॥ २४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भक्तानां तुल्यता निरूपिता तत्र शास्त्रविरोध- माशङ्क्य परिहरति—क इह नु वेदेति । ननु "ज्ञानीप्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति मां चतुर्विधा भजन्ते मामित्युपक्रम्य तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यत इति ज्ञानिनः प्रशंसाश्रवणान्मुनीनां स्त्रीणां द्विजानां श्रुतीनाञ्च कथं तुल्यतेति चेत्तत्राह - क इह नु वेदेति । इयं ज्ञानप्रशंसा यो जानामीति मन्यते तद्बुद्धिमाश्रित्य निरूपिता न तु परमार्थतः कश्चिज्जानाति तत्र हेतुः इहास्मिन् संसारे कोवा भगवन्तं जानाति यतो वयमपि न जानीमः अत एव श्रुतिः "यस्यामतं तस्य मतं यस्य न वेद सः" इति ननु कथमज्ञानं प्रमाणस्य विद्यमानत्वादित्याशङ्क्याह—अग्रसरं सर्वप्रमाणात् पूर्वमेव सिद्धं ज्ञाता च, अवरजन्मलयः मध्यम एवोत्पद्य गतः भगवान् प्रथमत एव सृष्टिमुत्पाद्य तिरोहितो जातः मध्ये सृष्टौ जीवा उत्पन्नाः भ्रान्ताश्च पश्चात्प्रलयार्थं समायास्यति यदि वा अयं प्रथमत एव स्थितः स्यात् प्रलयपर्यन्तं वा तिष्ठेत् तदा सृष्टेर्व्यवधायकत्वाभावात् भगवन्तं जानीयात् "न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव" इति श्रुतेः अतः सृष्टेः व्यवधायकत्वान्न कश्चित् सृष्ट्युत्पन्नो भगवन्तं ज्ञातुं शक्यः ननु प्रलयानन्तरं व्यवधायकत्वाभावात् कथं न ज्ञायत इति चेत् तत्राह तर्हि न सन्न चासदिति यर्हि भगवान् सर्वमेवाकृष्य शयीत तर्हि ज्ञानसामग्री कापि नास्ति प्रथमतो न सत् सत्त्वाज्ज्ञाता नासत् ज्ञापकमिन्द्रियादिकार्यं वा हेतुभूतं नाप्युभयम् इन्द्रियसन्निकर्षः व्यापारो वा उभौ यार्तात्युभयं सदसदात्मकं मनो वा "नासदासीन्नो सदासीत्तदानीम्" इति मन्त्रव्याख्याने उभयात्मकं मनो निरूपितं तथैवाग्निरहस्ये उभयात्मकं मनो निरूपितं केचिदुभयात्मकं जगदित्याहुः मनसैवानुद्रष्टव्यमिति प्रयोजकस्य मनसो निषेधः कालवेगोऽपि मात्रक्षरादिनियामकः सत्त्वगुणप्रेरको वा यो ज्ञानमुत्पादयति नवा किमपि शास्त्रं वेदपुराणादि यतः सर्वमवकृष्य शयनं करोति अतो ज्ञानसामग्र्याः सर्वस्या एवाभावात् कस्यापि नापरोक्षं भगवज्ज्ञानमित्यर्थः । कदाचिद्भगवत्साक्षात्कारस्तु तावन्मात्रा ज्ञापको नाशेषविशेषकं बोधयति अवतारे तु मर्यादावादी आनन्दमयं देहं मन्यते आत्मसाक्षात्कारं तु न भगवद्वैभवपरिज्ञानं योगजधर्मजनितत्वाच्च स्वप्नवत्तत्त्व वस्तुनियामकत्वं प्रमाणसंवादस्तु नानाविधानुभवात् न निर्विचिकित्सं ज्ञानमुपपादयति तस्मात्सृष्टिदशायां प्रलयदशायां वा सर्वथा ज्ञानसामग्र्यभावान्न कोपि ज्ञाता प्रशंसा तु प्रवर्तिका यथाकथञ्चित् चित्तशुद्ध्यर्थं प्रवर्तयति ततः शुद्धो भगवद्भजनं कुर्यादितिभावः ॥

> ज्ञानमानौ भ्रान्तिमूलस्ततः कृष्णं भजेद्बुधः ।
> प्रवर्तकं ज्ञानकाण्डं चित्तशुद्ध्यै यतो भवेत् ॥

॥ २४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तस्माद्भक्तिरेव सर्वश्रेष्ठा सुघटा च भक्तिविषयस्य तव ज्ञानन्तु सदैव दुर्घटमित्याहुः—क इहेति । बत अहो भगवन् ! इह जगति अग्रसरं पूर्वसिद्धं त्वाम् अवरजन्मलयः अर्वाचीनोत्पत्तिनाशवान् को नु पुमान् वेद सम्यक्तया जानाति यतस्त्वत्तः ऋषिर्वेदः वेदपुञ्जानि इत्यर्थतरिति श्रुतिद्वयमेवेत्याद्युक्तेस्तव यत् किञ्चिन्मात्रतत्त्वज्ञापकं प्रथममुदगात् प्रादुर्बभूव यं देवम् हु उभये देवाः इन्द्रियाधिष्ठातारो दिग्वातार्कादयः ब्रह्मलोकाद्यधिष्ठातारो ब्रह्मादयश्च उदगुः तस्मात्तेभ्योऽप्यवरजन्मलयस्तु सुतरामेव न वेदेत्यर्थः । यदा तु भवान् सर्वमवकृष्य उपसंहृत्य शयीत तदा न सत् स्थूलमाकाशादि न चासत् सूक्ष्मं महदादि न चोभयं सदसज्जगत् प्रारब्धं शरीरं न च कालजवः तन्निमित्तभूतं कालवैषम्यं न किमपि

**जनिमसतः सतो मृतिमुतात्मनि ये च भिदां विपणमृतं स्मरन्त्युपदिशन्ति त आरुपितैः।**
**त्रिगुणमयः पुमानिति भिदा यदबोधकृता त्वयि न ततः परत्र स भवेदवबोधरसे ॥ २५ ॥**

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

इन्द्रियप्राणाद्यपि नच ज्ञापकं शास्त्रमपि अयमभिप्रायः सृष्टि-समये देहाद्युपाधिकृतबहुव्यवधाने सत्यपि ज्ञापकशास्त्रसत्त्वात् साधनसम्भवाच्च वरं यत् किञ्चित्त्वज्ज्ञानं सम्भवेदपि प्रलयसमयेषु बहुतरव्यवधानाभावेपि शास्त्राभावात् साधनाभावाच्च न किञ्चिन्मात्रमपि त्वज्ज्ञानमतस्त्वज्ज्ञानाग्रहं परित्यज्य त्वद्भक्तिरेव कर्तुं युज्यत इति अत्र को अद्धा वेद क इह प्रवोचत कुत आयाताः कुत इयं विसृष्टिः अर्वाग्देवाः अस्य विसर्जनेनाथा को वेद यत आबभूवेत्याद्याः अर्थश्च अद्धा साक्षात् को जानाति नापि कश्चित ज्ञापयितेत्याहुः—कः प्रवोचत् (प्रावोचत्) अस्य विसर्जनेन एतत्कर्तृक-विविधसृष्ट्या एव देवा अर्वाक् अभवन्निति [अर्थत्यर्थे अथा आदन्तः तस्मात् य इदं विश्वमाबभूव तं को वेदेति ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तस्य भगवतः सविशेषनिर्विशेषलक्षणं ज्ञानं दुर्ज्ञानरूप्यं तत् स्वरूपगुणशक्तीनामियत्ताशून्यत्वादित्याह— "यतो वाचो निवर्तन्ते अप्राप्यमनसा सह को अद्धा वेद क इह प्रवोचत कुत आयाता कुत इयं विसृष्टिः 'विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि" "न ते विष्णोर्जायमानो न जातः" इत्यादिश्रुतिगुम्फः बत इति हर्षे सम्बोधनं वा इह लोके अग्रसरम् अनाद्यनन्तमीश्वरेश्वरं देवदेवं त्वां को वेद न कोपीत्यर्थः। तस्य स्वतःसिद्धौ अन्येषामर्वाचीनत्वे प्रमाणमाह-यतस्त्वत्तः ऋषिर्ब्रह्मा जातः "यो ब्रह्माणं विदधाति पूर्वम्" इति श्रुतेः "वेदो वा एतस्य निःश्वसितं यदृग्वेदः" इति श्रुतेः यं ब्रह्माणम् अनु पश्चादुभये आध्यात्मिकाधिदैविका देवगणा जाताः संहारकाले अत्यन्तसूक्ष्मावरणं गता अपि त्वां न विदुरित्याह—यदा त्वमिदं सर्वमवकृष्य शयीत तदा न सत्स्थूलं न चासत्सूक्ष्मं न च कालजवः क्षोभकारणम् उभयमिन्द्रियगणं किमिति शास्त्रं ज्ञापकं न आस कुतो ज्ञानमित्यर्थः ॥ २४ ॥

---

भाषा टीका।

सृष्टि के पहले सूक्ष्म जीवमाया युत होकर कारण रूप से वर्त्तमान आप को वेद शास्त्र के बिना कोनसा पुरुष इस लोक में जानताहै कोई भी नहीं जानता क्योंकि आप सब के पहले रहने वारे और इस संसार में जो जीवमात्र हैं वह आपके पश्चात उत्पत्ति नाश वारा इस कारण पश्चात होने वारा जीव सब से पहले रहने वाले आप को कैसे जानसकता है लोकमें भी यह प्रत्यक्ष है कि जो जिस के पश्चात उत्पन्न होकर मरनेवारा है वह अपने जन्म के पहले रहने को नहि जानसकता यदि जानेगा तो उसके इतिहास को श्रवण कर जानेगा इसी प्रकार सब के पहले रहने वार परामात्मा को पश्चात होने वारे जीव नहि जान सकते यदि जानेगे तो वेद शास्त्र के श्रवण करने सेहि जान सकते है आगे इस बात का प्रति पादन करते हैं कि सबहि जीव परमात्मा के पश्चात् जन्म मरण भागी हैं हे परमेश्वर! आप से ब्रह्मा उत्पन्न भया उस के पश्चात् निवृत्तिधर्मनिष्ठ सनकादिक और प्रवृत्ति मार्ग निष्ठ मरीच आदि प्रजापति यह दो प्रकार के देव गण उत्पन्न भए और मनुष्यादिक तो उन से भी पश्चात् उत्पन्न भए हैं आगे श्रुति इस बातको प्रति पादन करती हैं कि परमात्मा सब से प्रथम रहता है हे परमेश्वर! जिस काल में आप वेद शास्त्र को समेट कर निज हृदय में स्थापन कर के शयन करते हो तब सृष्टि के पूर्वकाल में यह देव मनुष्यादि शरीर धारी चेतन नहि रहा और महदादि तत्व रूप अचेतनभी नहि रहा तथा चेतना चेतन मिश्रित यह प्रपंचभी नहि रहा और कालका वेगभी नहि रहा बहुत कहने से क्या हैं उस काल में कुछभी नहि रहा ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

इतोऽपि ज्ञानं न सुशकम् उपदिशतामपि भ्रमबाहुल्यादित्याह—जनिमसत इति। असतो जगतो जनिमुत्पत्तिं ये वैशेषिकादयो वदन्ति असत एव ब्रह्मत्वस्यांतर्गतिं ये च पातञ्जलादयः सत एकैकविंशतिप्रकारस्य दुःखस्य नाशं मोक्षं वदन्ति ये नैयायिकाः उतापि येच सांख्यादयः आत्मनि भिदां भेदञ्च ये मीमांसका विपणं कर्मफलव्यवहारमृतं सत्यं स्मरन्ति वदन्ति ते सर्वे आरुपितैरारोपितैर्भ्रमैरेवोपदिशन्ति न तत्त्वदृष्ट्या 'सदेव सौम्येदमग्र आसीत् ब्रह्मैव सन् ब्रह्माप्येति' अनीशया शोचति मुह्यमानः अविद्यायान्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः। एकमेवाद्वितीयं ब्रह्म "एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इत्यादिश्रुतिविरोधात् किञ्च वस्तुतः पुरुषस्य त्रिगुणमयत्वे सर्वमिदं सङ्गच्छेत ननु तदस्तीत्याह-त्रिगुणमयः पुमानिति। भिदा यदबोधकृता त्वयीति त्रिगुणमयः पुमानित्यनेन हेतुना या भिदा उपलक्षणमेतत्त्रित्वादि सा यस्मात्त्वयि विषयं अबोधकृता त्वद्विषयाज्ञानविजृम्भिता तर्हि किमज्ञानमस्ति वस्तुनः पुंसि नेत्याह ततः अबोधात्परत्र परे सङ्केऽवबोधरसे ज्ञानघने सः अबोधो न भवेन्न सम्भवतीत्यर्थः ॥ २५ ॥

"मिथ्यातर्कसुकर्कशेरितमहावादान्धकारान्तर—
भ्राम्यन्मन्दमतेरमन्दमहिमंस्त्वज्ज्ञानवर्त्मास्फुटम्।
श्रीमन्माधव वामन त्रिनयन श्रीशङ्कर श्रीपते—
गोविन्देति मुदावदन्मधुपते मुक्तः कदा स्यामहम् ॥ १२ ॥

### श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

वैशेषिकाः काणादाः परमाण्वादिभ्योऽसत एव द्व्यणुकादेरुत्पत्तिं वदन्ति तेषां मते प्रागभावस्य निमित्तकारणत्वाभ्युपगमात् साङ्ख्यवेदान्तिनौ सत्कार्यवादिनौ तु उत्पत्तेः पूर्वमपि सूक्ष्मरूपत्वेन कार्यस्य कारणे सत्त्वमुपगच्छन्ति कुलालादिकारकेण तु कार्यस्य स्थूलतयोत्पादनमात्रं क्रियत इति यथा ताम्रेऽसदेव सुवर्णं चमत्काररसायनप्रयोगेणोत्पद्यते तथा जीवेऽसत एव ब्रह्मत्वस्य योगादिनोत्पत्तिं येच पातञ्जलादयः स्मरन्ति पातञ्जला योगतन्त्रवेत्तारः एकविंशतीति षडिन्द्रियाणि षड्बुद्धयः षड्विषयाः सुखदुःखे शरीरञ्चेति येच सांख्यादयः आत्मनि भेदं पञ्चविंशतितत्त्वानां प्रतिक्षेत्रज्ञं पुरुषस्य बहुत्वं वदन्ति तथोक्तं तैरेव जन्ममरणकरणानां प्रतिनियमादयुगपत्प्रवृत्तेश्च पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्ययाच्चैवेति । सत्यं नित्यं मीमांसकमते कर्मफलस्य नित्यत्वोपगमात् सृष्टिप्रलयानुपगमाच्च एवं पञ्चानामपि शास्त्राणामनुवादं कृत्वा षष्ठेन वेदान्तशास्त्रेणापवदति ते सर्वं इत्यादिना अग्रे सृष्टेः पूर्वं इदं नामरूपात्मकं जगत् सदेव सूक्ष्मरूपेण सत्तादात्म्यात् सदेवासीदित्यसत्कार्यवादिनो वैशेषिका निरस्ताः ब्रह्मैवसन्नित्यज्ञानस्वरूपस्यैवाज्ञानेनावरणमात्रं तस्माज्ज्ञानात्पूर्वमपि सदेव ब्रह्म आवरणापगमे स्वस्वरूपं ब्रह्मैवाप्नोति इति ब्रह्मत्वासत्त्ववादिनो निरस्ताः अनीशा माया तया मुह्यमानः शोचति दुःखी भवति इति मायिकमज्ञानकल्पितमेकमेव दुःखं न वस्तुतस्सदिति दुःखसत्यत्ववादिनो गौतमीया निरस्ताः अविद्यायां कर्मरूपायाम् अन्तरे मध्ये वर्त्तमानाः धीरा इति स्वयमात्मानं पण्डितं मन्यमानाः जङ्घन्यमानाः दुःखैरत्यर्थं पीड्यमानाः मूढाः कर्मजडाः परियन्ति संसारे परिभ्रमन्ति जङ्घन्यमाना इति हन्तेर्यङ् अभ्यासस्य नुक् अभ्यासाच्चेत्युत्तरखण्डे कुत्वं यङ् ततः शानच् यलोपश्चेत्येवं साधुः एवं कर्मफलस्य सत्यत्ववादिनो मीमांसका निरस्ताः एकमेवाद्वितीयं ब्रह्मेत्यादिना भेदवादिनो निरीश्वरसांख्यादयो निरस्ताः आत्मभेदस्य सर्वमतसम्मतत्वादन्ते तत्परिहार इति क्रमभङ्गे विनिगमकं सर्वमिदं मतपञ्चकं पुरुषस्य वस्तुतस्त्रिगुणमयत्वे सङ्गच्छेत अयम्भावः त्रिगुणमये हि जीवे गुणपरिणामरूपा दृष्टवशादेवासतोऽपि वस्तुनः उत्पत्तिः इति कणादमतं सङ्गच्छेत वस्तुतस्त्रिगुणमये हि ब्रह्मत्वासत्त्वसम्भवात् पातञ्जलमतमपि तथा वस्तुतस्त्रिगुणमयस्यैवैकविंशतिदुःखसद्भाव इति नैयायिकमतं सङ्गच्छेत एवं सांख्यमतेऽपि प्रकृतिगुणसन्निधानादेव पुरुषस्य कर्त्तृत्वं गुणपरिणामरूपादृष्टवशादेव पुरुषस्य नानात्वसाध्यासिद्धिरिति तस्य त्रिगुणमयत्व एव तन्मतसङ्गतिस्तदुक्तं तैरेव तस्मात्तत्संयोगादचेतनं चेतनावदिवलिङ्गं गुणकर्तृत्वे च तथा कर्त्तेव भवत्युदासीन इति एवं त्रिगुणमयस्यैव जीवस्य वास्तवकर्मफलभोगस्सम्भवति न निर्गुणस्येति तस्य त्रिगुणमयत्वे सत्येव मीमांसकमतसङ्गतिरिति ननु तदस्ति वस्तुतस्त्रिगुणमयत्वन्तु नास्ति एतन्निर्देति पदं मतचतुष्टयस्योपलक्षणम् हे त्रिनयन त्रिलोक्याः नयनवत्प्रकाशक हे त्रिलोकनायकेति वा षष्ठे तथा सम्बुद्ध्योक्तेः श्रिया प्रेमसम्पत्त्या भक्तानां शं सुखं करोतीति तथा ॥ २५ ॥

### श्रीकविचूडामणिचक्रवर्तिकृताऽन्वयबोधिनी ॥

इतोऽपि ज्ञानं न सुशकं उपदिशतामपि भ्रमबाहुल्यादित्याह—जनिमसत इति । ये वैशेषिकादयः असतो जगतः जनिमुत्पत्तिं वदन्ति ये च पातञ्जलादयः असत एव ब्रह्मत्वस्योत्पत्तिं वदन्ति ये च नैयायिकः सत एकविंशतिप्रकारस्य दुःखस्य नाशं मोक्षं वदन्ति उत अपि ये च सांख्यादयः आत्मनि भिदां भेदं वदन्ति येच मीमांसकाः विपणं कर्मफलव्यवहारम् ऋतं सत्यं स्मरन्ति ते सर्वे आरूपितैरारोपितैर्भ्रमैरेवोपदिशन्ति न तत्त्वदृष्ट्या सर्वश्रुतिविरोधात् किञ्च पुरुषस्य त्रिगुणमयत्वे सति सर्वमिदं सङ्गच्छते ननु तदस्तीत्याह—त्रिगुणमय इति । त्रिगुणमयः पुमानीत्यनेन हेतुना या भिदा सा यस्माच्च त्वयि विषये अबाधकृता त्वद्विषयाज्ञानविजृम्भिता तर्हि किमज्ञानमस्ति वस्तुतः पुंसि नैवेत्याह ततः प्रबोधात्परत्र परे असङ्गे अवबोधरसे ज्ञानघने पुंसि अबभो न भवेत् न सम्भवतीत्यर्थः । एकविंशति दुःखानि यथा षडिन्द्रियाणि षड्विषयाः षडूर्मयः सुखं दुःखं शरीरं च तत्र श्रोत्रं चक्षुर्घ्राणां त्वक्रसना मनः एतानीन्द्रियाणि शब्दो रूपङ्गन्धः स्पर्शो रसः सङ्कल्पादिरेते विषयाः

> बुभुक्षाच पिपासा च प्राणस्य मनसस्तथा ।
> शोकमोहौ शरीरस्य जरामृत्युः षडूर्मयः ॥

एते ऊर्मयः सुखं शरीरमित्येकविंशतिदुःखानि एतेषां मतं सर्वश्रुतिविरुद्धं तद्यथा श्रुतिः "सदेव सौम्येदमग्र आसीत्" व्याख्यातं भाष्यकृद्भिः हे सौम्य श्वेतकेतो इदं नामरूपविकृतं जगत् अग्रे जगदुत्पत्तेः प्राक् सत् एवासीत सत् अस्तिनामात्रं वस्तु सूक्ष्मं निर्विशेषं सर्वगतं एकं निरञ्जनं नित्यं निरवयवं यतो वेदान्तेभ्यः अवगम्य तत्तदात्म्यापन्नमित्यर्थः । अनेन असद्वादः परिहृतः सतोमृतिमित्यत्र श्रुतिः "अथ यो ह्यात्मकामो निष्कामः प्राप्तकामः आप्तकामो ब्रह्मैव सन् ब्रह्माप्येति यदा सर्वे प्रमुच्यन्ते कामायेऽस्य हृदि स्थिताः अथ मर्त्योऽमृतो भवत्यत्र ब्रह्मसमश्नुते इति अर्थः सकामस्य गतिमुक्त्वा निष्कामस्य गतिमाह यस्तु अकामः नास्ति कामो यस्य सः निष्कामः निर्गताः सर्वे कामाः यस्मात् सः आप्तकामः प्राप्ताः कामाः येन सः पूर्णकामः इत्यर्थः आत्मकामः आत्मैव कामो यस्य सः एवम्भूतः सन् ह्यात्मानं निर्विशेषम् अद्वैतं चिद्रूपं ज्योतिः स्वभावं पश्यति स यद्यपि देहवानिव लक्ष्यते तथापि इह ब्रह्मैव सन् शरीरपातोत्तरकालं ब्रह्माप्येति प्राप्नोति अस्यार्थद्योतकं यदा सर्वे इति पद्यं सुगमं अनेन एकविंशतिदुःखनाशो मोक्षः इति मतं निरस्तं मीमांसामतं निराकरोति श्रुतिः "समानवृक्षे पुरुषो निमग्नो ह्यनीशया शोचति मुह्यमानः अविद्यायामन्तरे वर्त्तमानाः वयं धीराः पण्डितम्मन्यमानाः जङ्घन्यमानाः परियन्ति मूढाः अन्धेनैव नीयमाना यथान्धाः अस्यार्थः समानवृक्षे देहे निमग्नो निरूढाभिमानः पुरुषः अनीशा माया तया मुह्यमानः शोचति सन्तप्यते अनेकैरनर्थप्रकारैश्चिन्तामाप्नोति इत्यर्थः । किञ्च अविद्यायामिति अविद्यायामन्तरं मध्ये वर्त्तमानाः अविवेकप्रायाः स्वयं वयमेव धीराः श्रीमन्तः पण्डिताः इति मन्यमानाः जरारोगाद्यनेकानर्थैः जङ्घन्यमानाः अत्यर्थं हन्यमानाः परियन्ति

श्रीकविचूडामणिचक्रवर्तिकृताऽन्वयबोधिनी।

भ्रमन्ति अयं मूढाः मूढैरेवोपदिष्टाः भ्रमन्तीत्यत्र दृष्टान्तः अन्धेनेति कर्मफलनिन्दापरेयं इदानीं नाना आत्मपक्षं निराकरोति श्रुतिः एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन "एक एवाहि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ अर्थः एकं सजातीयचेतनवस्त्वन्तररहितम् अद्वितीयं विजातीयाऽचेतनद्रव्यान्तररहितं इह किञ्चन नानावस्तु नास्ति एकं ब्रह्मैव नन्वेकत्वप्रतिभाष इत्यत आह—एक इति । एक एव परमेश्वरः भूतेभूते सर्वेषु भूतेषु व्यवस्थितः तत्र उपाधेरेकत्वे एकधैव दृश्यते तत्र दृष्टान्तः जलचन्द्रवत्. अयथाबहुयोजनव्यापके जलह्रदे उपाधेर्बहुत्वे बहुधेव दृश्यते प्रतिबिम्बितश्चन्द्रः एकधैव दृश्यते घटशरावादिषु प्रतिबिम्बितस्तु बहुधा तद्वत् एतावता सांख्यादिमतं स्पष्टमेव निराकृतमिति अद्वैतप्रतिपादनपरेयम अथ स्वामिनाम्—

" मिथ्यातर्कसुकर्कशेरितमहा वादान्धकारान्तरे—
भ्राम्यन्मन्दमतेरमन्दमहिमंस्त्वद्ज्ञानवर्त्मास्फुटम् ॥
श्रीमन्माधववामनत्रिनयनश्रीशङ्करश्रीपते—
गोविन्देति मुदा वदन्मधुपते मुक्तः कदा स्यामहम् ॥

मिथ्या तर्केण सुकर्कशं यथास्यात्तथेति यो महावादान्धकारस्तस्यान्तरे भ्राम्यतो मन्दमतेः हे अमन्दमहिमन् त्वज्ज्ञानस्य वर्त्म स्फुटं भवति अत्र श्रीमन्माधवेत्यादीनि नामानि वदन् संसारात् कदाऽहं मुक्तः स्यां भवेयं शिवनामान्यपि विष्णोर्नामानि भवन्तीति वर्णाश्रमधर्मपरान् ज्ञापयतुमत्र त्रिनयनादिना प्रोक्तं नामापराधश्रवणाच्च यथोक्तं श्रीसनत्कुमारेण—

" सतां निन्दा नाम्नः प्रथममपराधं वितनुते—
यतः ख्यातिं यातं कथमु स सहते तद्विगर्हाम् ॥
शिवस्य श्रीविष्णोर्य इह गुणनामादिसकलम् ।
धिया भिन्नं पश्येत् स खलु हरिनामाहितकरः ।

इत्यादिकं वर्णाश्रमाचारधर्मपराणां ब्रह्ममपराधः भगवदेकशरणानां नामपराणां तु नास्तीति तेनैवोक्तं नानापराधांस्तरति नाम्न एव सदा जयादिति श्रीगोविन्दपदारविन्दशरणाः शुद्धा भवन्तीति दिक् ॥ २५ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

जनिमसत इत्यस्य टीकायाम् एकविंशतीति षडिन्द्रियाणि षड्बुद्धयः षड्विषयाः सुखं दुःखं शरीरञ्चेति श्रुतौ सदेवेति· सत्तादात्म्येनैवेत्यर्थः । ब्रह्मेव सच्चित्यज्ञानरूपतदावरणापयमात् अनीशया मायया जङ्घन्यमानाः परियन्ति दुःखैरत्यन्तं पीड्यमाना भ्रमन्ति-

एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥

इति पूर्णवाक्यमिति ॥ स्वव्याख्यायां तु अथ तदेवानुमोदमानाः काञ्चित्पारिशेष्यप्रमाणेनैव तत्र चरन्त्यः सर्वगुरुं मन्यानामपि तद्ज्ञानं दर्शयन्ति जनिमिति आत्मनि सर्वास्मिन् जीवे भिदां स्वतन्त्रस्थितिं परमात्मन एकस्याममनात् . किञ्च त्वयि परमात्मनि येनावबोधेन त्वय्यन्यथाज्ञानेन कृता त्रिगुणमयः पुमान् जीव इति भिदा भेदः केनचिन्मन्यते स एव स्वयमबोधस्त्वयि न सम्भवति किमुत तद्भिदेत्यर्थः । यस्मात्ततः परत्र प्रत्यग्रूपे तद्विषयत्वाश्रयत्वयोरयोग्यत्वादित्यर्थः । तत्र हेतुः अवबोधरसे सम्यक्त्वबोधरूपं पुनरवबोधैकरसः कथमिव यस्यान्तिमिरमिव तेजोमालिनं विषयमाश्रयं वा करोत्वित्यर्थः । तस्मात्तवाचिन्त्यशक्तिवैभवस्याज्ञानादेव ते तथोत्प्रेक्षन्त इति भावः । शेषं टीकाभिप्रायम् अत्र जनिमसत इत्यस्य परिहाराय सदेवसौम्येदमग्र आसीदिति सतो मृतिरित्यस्य यत्प्रयन्त्यभिसंविशन्तीति यथोदकं शुद्धमुदकमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतमेति समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः इति च आत्मनि भिदामित्यस्य एको देव इत्यादौ सर्वभूतान्तरात्मेति एकधा बहुधा चैव दृश्यते जलचन्द्रवदिति च विपणमृतं स्मरन्तीत्यस्य यथेह कर्म (चि) जितो लोकः क्षीयते एवमेवामुत्र पुण्य (चि) जितो लोकः क्षीयत इति त्रिगुणमय इत्यादेः आदित्यवर्णं तमसः परस्तादिति अचिन्त्यशक्तित्वस्य परास्य शक्तिर्विविधैव श्रूयते मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमित्यादि श्रुतीरवलम्ब्य धृतयोऽयेनाः नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ अविद्यायामन्तरे वर्तमाना स्वयं धीराः पण्डितं मन्यमानाः जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः इत्याद्याः जलचन्द्रवत्त्वदृष्टान्तो ऽयमनेकधात्वमात्रांशे प्रतिबिम्बतुल्यत्वाच्च तु प्रतिबिम्बत्वादेव अम्बुवदग्रहणात् ० " ( ३-२-१९. ) वृद्धिह्रासभाक्त्वामन्तर्भावादुभयसामञ्जस्यादेव दर्शनाच्च " ( ३-२-२० ) इति न्यायेन ॥ २५ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उक्तार्थविरुद्धतार्किकसिद्धान्तानामज्ञानमूलत्वं भगवज्ज्ञानवतां तादृशभ्रमाभावं चाह—जनिमिति । असतो द्रव्यस्य जनिं सत्तायोगं सतश्च द्रव्यस्य पश्चान्मृतिं नाशं स्मरन्तीत्यसत्यार्थवाद उक्तः । आत्मनि ये च भिदां स्थूलत्वकृशत्वमनुष्यत्वादिरूपां स्मरन्ति कर्मफलस्यैव नित्यत्वाद्वा इदमुक्तं विपणं कर्मफलं पुत्रादिव्यवहारम् ऋतं नित्यं स्वाभाविकं च ये वदन्ति तैः आहतैः युक्त्याभासैः उपदिशन्ति इति मतान्तराण्युपदिशन्तीत्यनुषङ्गः । त्रिगुणमयः गुणैः सत्त्वादिभिः कार्यप्रायमिति त्रिगुणगणः प्रकृतिः पुमान् जीवः इति भिदा अब्रह्मात्मकतया स्वनिष्ठभेद इति साङ्ख्यमतमुक्तम् । ततः परत्र प्रकृतिपुरुषाभ्यां परस्मिन् ज्ञानस्वरूपे त्वयि साक्षात्कृते तर्काभासमूला न भवन्तीत्यर्थः ॥ २५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथ तद्विरुद्धमसत्कार्यवादं विरुद्धत्वप्रसङ्गान्मतान्तराणि चानूद्य दूषयन्ति—जनिमिति । असतो द्रव्यस्य जनिमुत्पत्तिं सत्तायोगमिति यावत् सतश्च द्रव्यस्य पश्चान्मृतिं नाशञ्च ये तार्किकाः स्मरन्ति इत्यसत्कार्यवादो ऽनूदितः उक्तेति पक्षान्तरे आत्मनि भिदां स्थूलत्वकृशत्वमनुष्यत्वमृगत्वादिरूपां

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भिदां येकेचित्स्मरन्तीति चार्वाकमतानुवादः ते हि देहमेवात्मानं मन्यन्ते विपणं देवमनुष्ययोरन्योन्योपकारभावजनितं वाणिज्यफलतुल्यं स्वर्गादिफलम् ऋतं सत्यं ये मीमांसकाः स्मरन्तीति कर्मफलानित्यत्ववादानुवादः न केवलं स्मरन्ति किन्तु ते तार्किकादयः आरोपितैरारोपितैर्युक्त्याभासैरुपदिशन्ति च तमारोपितैः-इतिपाठे तं स्वमनःसिद्धं युक्त्याभासैरुपदिशन्ति चेत्यर्थः तथा पुमान् त्रिगुणमयः सत्त्वादिगुणत्रयप्रचुरो जीव एव न तु तद्व्यतिरिक्तईश्वराख्य इति निरीश्वरसाङ्ख्यमतानुवादः तत्र साधारणं दूषणमाहुः—इतीत्यादिना । इति भिदा इत्थम्भूतो मतभेद इत्यर्थः । यदवबोधकृता यस्य तवावबोधकृता याथात्म्याज्ञानप्रयुक्ता चिदचिद्विशिष्टत्वरूपस्य सत एव द्रव्यस्य जगदात्मकस्थूलावस्थारूपकार्यतायोगित्वं पूर्वपूर्वसंस्थानत्यागात्मिकां मृतिमावृत्तिविधादिभिः कर्मफलस्य तारतम्यमत एवानित्यत्वं ब्रह्म ज्ञानफलस्य नित्यत्वं जीवासम्भावितसार्वज्ञसत्यसङ्कल्पत्वकरणाधिपत्वादिस्वभावं परमात्मानं देवमनुष्यादिदेहविलक्षणं प्रत्यगात्मानं चाजानताम् इत्थं मतभेदः प्रवृत्त इत्यर्थः । ननु बुद्धिशब्दान्तरादिभेदात्कार्यकारणयोर्भेदः अत एवासदेव कार्यमपूर्वमुत्पद्यत इति युक्तं किञ्च कारणमेवचेत्कार्यं कारकव्यापारवैयर्थ्यं सर्वस्य सर्वदा सत्त्वेन कार्यस्य नित्यानित्यविभागश्च न स्यात् अथ कार्यं सदेव पूर्वमनभिव्यक्तं कारकव्यापारेण अभिव्यज्यते अतः कारकव्यापारार्थवत्त्वं नित्यानित्यविभागश्चोक्येन तदसत् अभिव्यक्तेरभिव्यक्त्यन्तरापेक्षत्वे ऽनवस्थानादनपेक्षत्वे कार्यस्य नित्योपलब्धिप्रसङ्गात् तदुभयस्याभ्युपगमे ऽसत्कार्यवादप्रसङ्गात् अतोऽसतः कार्यस्य उत्पत्तिहेतुत्वेनैव कारकव्यापारार्थवत्त्वमतश्च सत्कार्यवादासिद्धिः नन्वसत्कार्यवादिनोऽपि कारकव्यापारो नोपपद्यते प्रागुत्पत्तेः कार्यस्यासत्त्वात्कार्यादन्यत्र कारकव्यापारेण भवितव्यं तत्राभ्यत्वाविशेषात्तन्तुगतकारकव्यापारेण घटोत्पत्तिरपि प्रसज्येत नैवं यत्कार्योत्पादनशक्तं यत्कारणं तद्गतकारकव्यापारेण तत्कार्योत्पत्तिसिद्धेः अत्रोच्यते सत एव मृद्धिरण्यादेर्द्रव्यस्य संस्थानान्तरभाक्त्वमात्रेण बुद्धिशब्दान्तराद्युपपत्तेर्न तावन्मात्रेणासत्कार्यवादप्रसङ्गः तत्तदवस्थस्य तस्यैव द्रव्यस्य ते ते शब्दास्तानि तानि च कार्याणीति द्रव्यस्य तत्तदवस्थतायाः कारकव्यापारायत्तत्वेन तस्यार्थवत्त्वोपपत्तिः अभिव्यक्त्यनुबन्धीनि चोद्यानि तस्या अनभ्युपगमादेव परिहृतानि उत्पत्त्यभ्युपगमेऽपि सत्कार्यवादो न विरुध्यते सत एवोत्पत्तेः ननु विप्रतिषिद्धमिदमभिधीयते पूर्वमेव सदुत्पद्यते चेति चेन्न द्रव्यस्योत्तरसंस्थानयोगो हि पूर्वपूर्वसंस्थानसंस्थितस्य विनाशः स्वावस्थितस्य तूत्पत्तिः अतः सर्वावस्थस्य द्रव्यस्य सत्त्वात्सत्कार्यवादो न विरुध्यते संस्थानस्यासतः उत्पत्तावसत्कार्यवादप्रसङ्ग इति चेन् असत्कार्यवादिनोऽप्युत्पत्तेरनुत्पत्तिमत्त्वे सत्कार्यवादप्रसङ्गः उत्पत्तिमत्त्वेऽनवस्था अस्माकं त्ववस्थानाम् उत्पत्तिस्थानीयानां पृथक्प्रतिपत्तिकार्ययोगानर्हत्वादवस्थावत एव उत्पत्त्यादिकं सर्वं निरवद्यमिति एवं ममायं देहः शिरसि मे दुःखं पादे मे वेदनेत्यपरोक्षमेव देहात्मनो व्यतिरेकप्रतीतेः "नित्यो नित्यानां चेतनश्चेतनानाम्" इत्यादिशास्त्राच्च तदवगतेः "पुमान्न देवो न नरः" इत्यादिना देवत्वादिप्रतिषेधत्वात्मना भिदावादो ऽज्ञानमूलः "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते नास्त्यकृतः कृतेन" इत्यादि श्रुतेः "दाक्षायणयज्ञेन सुवर्गकामो यजेत" इत्यावृत्तिविधानाच्च कर्मफलानित्यत्वावगतेस्तन्नित्यत्ववादोऽप्यज्ञानमूलः "यः सर्वज्ञः सर्ववित् । सत्यकामः सत्यसङ्कल्पः । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च "करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" इत्यादीनि बहुप्रमाणानीश्वरेऽवगन्तव्यानि इत्थमेषां वादानामज्ञानमूलत्वमुक्तम् अथ भगवज्ज्ञानवतां तादृशभ्रमाभावमाहुः—त्वयीति । ततः पूर्वप्रस्तुतमदसच्छब्दवाच्यप्रकृतिपुरुषाभ्यां परत्र परस्मिन्विलक्षण इतियावत् । अवबोधरसे ज्ञानस्वरूपे त्वयि यथावद्विज्ञाते सतीति शेषः । स अबोधः तन्मूलो वादभेदश्च नास्तीत्यर्थः ॥ २५ ॥

---

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथोक्तार्थविरुद्धतार्किकादिसिद्धान्तानामज्ञानमूलत्वं भगवज्ज्ञानवतां तादृशभ्रमाभावञ्चाह-जनिमिति । असतो द्रव्यस्य जनिं सत्तायोगं सतश्च द्रव्यस्य पश्चान्मृतिं नाशं स्मरन्तीत्यसत्कार्यवाद उक्तः सचाज्ञानमूलः सूत्रकारव्यासादिसिद्धान्तविरोधात् "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत" इत्यादिश्रुतिवाक्यैरव्याकृतद्रव्यस्यैव नामरूपमात्रव्याकरणात्—

"नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टान्तस्त्वनयोस्तत्त्वदर्शिभिः ॥

इति गीतास्मृतिविरोधाच्च तथा च सूत्रं "तदनन्यत्वमारम्भणशब्दादिभ्यः" (२—१—१६) इति तस्मात्कारणाद्ब्रह्मणोऽनन्यत्वं कार्यस्य जगतः कुतः आरम्भणशब्दादिभ्यः वाचारम्भणं विकारो नामधेयमित्यादिवाक्येभ्य इतिसूत्रार्थः अतः कारणभूतमृद्द्रव्यस्यैव घटाद्यवस्थाप्राप्तिः कार्यमिति व्यपदिश्यते कार्यावस्थाप्रहाणमेव कारणावस्थं द्रव्यमिति ये च चार्वाकाः आत्मनि भिदां स्थूलत्वकृशत्वमनुष्यत्वादिरूपां स्मरन्ति तदप्यज्ञानमूलं कुतः आत्मनः स्वप्रकाशज्ञानस्वरूपत्वात् स्थूलत्वादीनां जडपदार्थधर्मत्वाच्च "क्षरं प्रधानममृताक्षरं हरः" इत्यादिश्रुतेः कर्मफलस्यैव नित्यत्वाद्वा इदमुक्तविपणं व्यवहारादिकं कर्मफलम् ऋतं सत्यमिति स्मरन्ति तेऽप्यज्ञाः "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते इत्यादि श्रुतेस्तस्यानित्यत्वश्रवणात् अतस्ते सर्वे आरोपितैर्युक्त्याभासैरुपदिशन्तीति । मतान्तरेष्वप्युपदिशन्तीत्यनुषङ्गः त्रिगुणमयः पुमानिति भिदा त्रिगुणमयः प्रकृतिपदार्थः पुमान् जीव इति भिदा अब्रह्मात्मकतया स्वनिष्ठभेद इति साङ्ख्यमतमुक्तं तदपि भ्रममूलं कुतः "ऐतदात्म्यमिदं सर्वं तत्सर्वं वै हरेस्तनुः" इत्यादि श्रुतिस्मृतिभिस्तयोर्ब्रह्मात्मकत्वप्रतिपादनात् अतस्ततः परत्र प्रकृतिपुरुषाभ्यां परस्मिन् अवबोधैकरसे ज्ञानस्वरूपे त्वयि साक्षात्कृते सति तर्काभासमूला एता न सम्भवन्तीत्यर्थः २५॥

---

### योगिरामानुजाचार्यकृतसरलाव्याख्या ।

शास्त्रविरुद्धवादिनां मतानि दूरीकरोति—जनिमिति । असतः अविद्यमानस्य पदार्थस्य जनिमुत्पत्तिं तथा सतः

योगिरामानुजाचार्यकृतसरलाव्याख्या ।

विद्यमानस्य मृतिं विनाशञ्च ये नैय्यायिकाः स्मरन्ति तथा आत्मनि जीवेषु जात्यैकत्ववन्तं भिदां भेदं जीवेषु प्रत्येकं न्यूनाधिकाकृतिमत्त्वं तत्तत् शरीरसमपरिणामरूपं ये चार्वाकाः स्मरन्ति तथा ये मीमांसकाः विपणं देवमनुष्याणां परस्पर-व्यवहाररूपं "देवान् भावयतानेन ते देवा भावयन्तु वः" इत्युक्तत्वात् तादृशकर्मफलव्यवहारम् ऋतं सत्यं नित्यमिति यावत् स्मरन्ति जानन्तीत्यर्थः । ते पूर्वोक्ताः नैय्यायिक-चार्वाकमीमांसकाः आरुपितैर्भ्रमैरेवोपदिशन्ति ते स्वयं यथा जानन्ति तथैवोपदिशन्तीत्यर्थः । सदेव सौम्येदमग्र आसीत् नासतो विद्यते भावो नाऽभावो विद्यते सतः इत्यादिवचनैः । असतः उत्पत्तेः सतः विनाशस्य च निराकृतत्वात् असतः उत्पत्तिं सतः विनाशञ्च वदतां नैय्यायिकानां भ्रान्तत्वं बोध्यं समस्तसर्वेषु भूतेषु न शस्तु न विनश्यति" इत्यादिवचनैः न्यूनाधिकदेहेषु वर्त्तमानस्यापि जीवस्य न्यूनाधिक-भावस्य निराकृतत्वाच्च जीवस्य न्यूनाधिकरूपत्ववादिनां चार्वाकाणां भ्रान्तत्वं बोध्यं तथा क्षीणे पुण्ये मर्त्यलोके विशन्तीत्यादिवचनैः कर्मफलस्य नित्यत्वस्य निराकृतत्वात् कर्मफलस्य नित्यत्ववादिनां मीमांसकानां भ्रम-त्वं बोध्यं तथा पुमान् ब्रह्माण्डाभिमानी परमपुरुषो नारायणः त्रिगुणमयः सत्त्वरजस्तमोगुणयुक्तः इति हेतोः या भिदा भेदः सा अबोधकृता भगवत्स्वरूपज्ञानाभावकल्पितः भगवान् त्रिगुणाश्रयस्सन् रजोगुणविशिष्टः सृष्टिं करोति सत्त्वगुणविशिष्टः रक्षणं करोति तमोगुणविशिष्टः विनाशं करोतीति सत्त्वादिगुणभेदेन भेदः यः हरिहरब्रह्मरूपभेदः स्मार्तादिभिः प्रतिपादितः यद्वा पुमानीश्वरोपि त्रिगुणमयः त्रिगुणप्रचुरः , जीवसजातीयः नातिरिक्तः इति निरीश्वर-साङ्ख्यैः या भिदा भेदः उपनिषत्प्रतिपाद्यमानेश्वराद्भेदरूपः प्रतिपादिता सेत्यर्थः । यत् यस्मात्कारणात् अबोधकृता सा अज्ञानकृतेत्यर्थः —

"यस्मात् क्षरमतीतोहमक्षरादपि चोत्तमः ।
ततो ऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" ॥

इत्यादिवचनैः भगवतः प्रकृतिपुरुषविलक्षणत्वेन त्रिगुणातीतत्वात् निस्त्रैगुण्यो भवार्जुनेत्युक्तेश्च अतः सगुणत्रयप्रयुक्तः इतिभेदः ततः गुणत्रययुक्तप्रकृतेः परस्य "आदित्यवर्णं तमसः परस्तात्" इतिश्रुतेः । अवबोधरसे ज्ञानस्वरूपे यस्सर्वज्ञस्सर्ववित् इतिवचनात् त्वयि एतादृशपरमात्मनि सः त्रिगुणमयः इतिभेदः न भवेत् ये असतः जनिं सतः मृतिं च स्मरन्ति उत ये आत्मनि भिदाञ्च ये स्मरन्ति ये विपणमृतं स्मरन्ति ते आरुपितैरुपदिशन्ति पुमान् त्रिगुणमय इति या भिदा तदबोधकृता ततः परत्रावबोधरसे त्वयि सः न भवेत् इत्यन्वयः ॥ २५ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मू० ॥ तर्हि न सन्न चासदुभयं न च कालजवः किमपि न तत्र शास्त्रमपकृष्य शयीत यदा । जनिमसतः सतो मृतिमुतात्मनि ये च भिदां विपणमृतं स्मरन्त्युपदिशन्ति त आरुपितैः ॥ १२—२६ ॥

"नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमापरो यत् किमावरीवः कुहकस्य शर्मन्नम्भः किमासीद्गहनं गभीरम्" इत्यादिश्रुत्यर्थानुरूपस्य तर्हि न सन्न चासदित्यस्य श्लोकस्य भावः कथ्यते यदा भवान् प्रलये शास्त्रम् अध्यापकपरम्परा-प्राप्तं वेदमपकृष्य आत्मनि निधाय शयीत अध्येत्रभावे शास्त्रप्रवृत्त्यभावात् तर्हि तदा सत्स्थूलमण्डादिकं नासीत् असत्सूक्ष्मं महदादिकञ्च नासीत् उभयम् अभिरापश्च नच कालजवः जराद्यापादकलक्षणः किं बहुना तत्र किमपि वस्तु नासीदित्यर्थः । हे अज ! असतः सूक्ष्मरूपात् स्वतः सतः स्थूलरूपस्य जगतः परमेश्वरपर्यन्तं यथाक्रमं जनिं मृतिं च सर्वस्मात्परमात्मनि भिदां भेदं च विपणो व्यवहारः त्वत्सेवालक्षणधने दत्ते सुखपदार्थलक्षणफलं देयमिति सङ्कल्प-लक्षण इत्यतः फलं लक्ष्यते — विशिष्टफलापेक्षामृतं ये स्मरन्ति तेषां ध्वनिम् उपाविश वाचि सन्निहितत्वेन तदुक्त-विषया ज्ञातुं शक्यासीत्यर्थः । तत्रेत्थं भावमाहुः आरुपतः वेदादिभिः स्तुवतो वायोः प्रसादात्तथा स्मरन्ति नान्यथे-त्यर्थः —

"सर्ववेदादिरूपेण प्राणस्यारुवतः सदा ।
प्रसादाद्य विजानन्ति सूक्ष्मात्स्थूलजनिं क्रमात् ॥
मृतिञ्च सर्वजीवादेरीशस्य व्यतिरिक्तताम् ।
जानन्ति ये निराकाङ्क्षास्तेषां वाचि जनार्दनः ॥

इति ।

"सूक्ष्माणि महदादीनि स्थूलान्यण्डादिकानि च ।
उभयञ्चाभिरापश्च न किञ्चित्प्रलयेऽभवत् ॥

इतिवचनादस्य श्लोकस्यायमेवार्थः । न स्वसद्वैलक्षण्यार्थं इति ॥ २६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ देवानुमोदमानाः काश्चित् पारिशेष्यप्रमाणे नत्र चरन्त्यः सर्वगुरुं मन्यानामपि तदज्ञानं दर्शयन्ति—जनिमिति । आत्मनि सर्वस्मिन् भिदां स्वतन्त्रां स्थितिं परमात्मन एक-स्यामननात् । किञ्च त्वयि परमात्मनि येनावबोधेनान्यथा-ज्ञानेन कृता त्रिगुणमयः पुमान् जीव इति भिदा भेदः कैश्चि-न्मन्यते स एव स्वयमबोधस्त्वयि न सम्भवति किमुत तत्कृ-तेत्यर्थः । ये यस्मात्ततः पर एतद्विषयत्वाश्रयत्वयोरयोग्य इत्यर्थः । तत्र हेतुः अवबोधरसे ॥ २५ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

उत अपि केचित्साङ्ख्या आत्मभिदां स्मरन्ति विपणं कर्मफलम् ऋतं सत्यमिति केचिन्मीमांसकाः स्मरन्ति ते सर्वे आरुपितैः स्वस्वमत्यनुसारेण कृतैरारोपैर्वोपदिशन्ति न तु तत्त्वतः किमपि केपि निर्णेतुं शक्नुवन्ति अतस्तत्र तत्त्वविचारणे ते भ्रान्ता एव ननु कथममी भ्रान्ताः पुरुषममी जानन्त्येव तज्ज्ञा-नेनैव मज्ज्ञानमित्याहुः—त्रिगुणमयः पुमानित्यादि । यत् यद्यपि पुरुष इतिभिदा अबोधकृता अज्ञानकृता पुरुषोपि स्वदंश एव अतस्तदभिन्न एव तथापि स त्रिगुणमयः ब्रह्मविष्णुरुद्रात्मक-

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

त्वात् एक एव स्वन्तु निर्गुण एव तेन ततः पुरुषात्परे त्वयि शास्त्रकृताम् अबोधो वादे न भवेत् न भवितुमर्हति कीदृशे त्वयि अवबोधरसे ज्ञानानन्दघने ॥ २५ ॥

———

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं ज्ञानकाण्डस्यापि भगवद्भजनपरत्वं निरूप्य येऽन्ये वादिनः भगवद्भजनं न सहन्ते अन्यथा च शास्त्रं वदन्ति तान्निषेधति-जनिमसत इति द्वाभ्याम् । ते प्रतिकूलाः द्विविधाः अर्द्धवैनाशिकाः सर्ववैनाशिकाश्च तत्र प्रथममर्द्धवैनाशिकान्निराकरोति ते चत्वारो वादिनः नैयायिकाः वैशेषिकाः मीमांसकाः साङ्ख्यैकदेशिनश्चेति तन्मतं हसन्त्य इव श्रुतयो निरूपयन्ति तत्र नैयायिकाः असत एव घटादेः जनिं वदन्ति असन्नेव पश्चाज्जननेन सद्भवतीति एतदसङ्गतं सत्तायाः सम्बन्धस्य च नित्यत्वे कथं घटस्यासत्त्वं स्यात् सत्त्वासत्त्वयोर्विरोधात् नाप्यसत्त्वस्य जातित्वं तत्समवायोऽङ्गीक्रियते येन कालव्यवस्थया घट उभयं प्राप्नुयात् अतः केवलमदर्शनमात्रेणासत्त्वं वदन्तो भ्रान्ता एव नैयायिकाः एवं सति भक्तिमार्गो विरुध्यते भगवत्कृपादीनां नित्यत्वे भजनेन कृपा न स्यात् इच्छादीनामपि नित्यत्वादिच्छया ऽवतारो न स्यात् परमानन्दस्य च सुखत्वेनानित्यत्वात् पूर्णानन्दो भगवान्न स्यात् अत इदं मतं निराक्रियते वैशेषिकादयस्तु सतो मृतिमाहुः—सङ्घातेः सन्नेव पश्चान्म्रियते तथा सति तस्याग्रे परलोकचिन्ता न कर्त्तव्या सङ्घातस्यैव देवदत्तशब्दवाच्यत्वात् बाह्यानां मुख्योऽयं सिद्धान्तः भोगव्यवस्था तु तादृशान्येव तानि भूतानि स्वभावादेव भवन्ति एतत्पक्षे तु ज्ञानशक्त्यादिमार्गाः सर्व एव तिलापःकृताः अत एतन्निराकर्त्तव्यं सङ्घातादिन्द्रियवर्गसहित आत्मा उत्क्रामति उत्क्रामन्तं स्थितं वापीति वाक्यात् ब्रह्मविदामनुभवोऽस्त्येव जातिस्मराणामपि लोके सम्भवात् अन्यथा तेषामप्यहिंसादिविधिर्व्यर्थः स्यात् ज्योतिःशास्त्रप्रामाण्याच्च सम्वादित्वेनापि तन्मतं व्यर्थं स्यात् अनन्तं नामेनिश्रुतेः अर्थाश्रयत्वश्रवणाच्च नित्यसिद्धोर्थः देवतारूपो वा आधिदैविको वा देवदत्तशब्दवाच्यः एतदुपपादितं चतुर्थे कर्मनिर्णये देहस्योपलक्षकत्वमेव नतु विशेषणत्वमिति यथाऽवस्थान्तरेण पाकादिसाधनमुत्पाद्य पुनरन्यावस्थापन्नः पुनरन्यद्भोगं करोतीति सिद्धं नामकरणञ्च तत्रत्यात्मन एव नतु देहसहितस्यैव शास्त्रीयत्वात् केशादिवद्वस्त्रादिवद्वा देहस्यापि सहभावमात्रत्वात् अतः सतः आत्मनः मुख्यसङ्घातस्य वा परलोकाद्यन्यथानुपपत्त्या न मृतिः तस्मिन् सति पूर्वोक्तन्यायेन भक्तिमार्गः सेत्स्यति मीमांसकादयः आत्मनां जीवानां भेदमङ्गीकुर्वन्ति आत्मनि ईश्वरे यज्ञादिरूपे वा तथा सत्येक ईश्वरपक्षो न सङ्गच्छते अन्यथा एकश्चेदीश्वरः कर्तुमकर्तुमन्यथाकर्तुं समर्थः स कथं विषमं जीवेभ्यः फलं दद्यात् कुतो वा विषमं कर्म कारयेत् कारयिष्यन्वा वैषम्यनैर्घृण्ये वा कथं न प्राप्नुयात् तस्मादीश्वर एव नास्ति कर्मातिरिक्तः सचानेक इति प्रतिनियतं कर्मैव कर्त्तव्यमिति मन्यन्ते तन्मतमपि निराकर्त्तव्यं अन्यथेश्वराभावे कस्य प्रणिधानं न स्यात् तेप्यारोपादेव तथा मन्यन्ते कर्मकुर्वाणाः फलं प्राप्नुवन्ति दातारन्तु न पश्यन्तीति अन्याधीने फले अवश्यं दातुरपेक्षा साक्षादन्यफलेषु राजभित्तिनिर्माणादिषु तथा दर्शनात् न हि यागः स्वर्गे पाक ओदनमिव साधयति येनेश्वरापेक्षा न स्यात् स्वर्गश्च ब्रह्माण्डाधिपत्यधीनो लोकात्मकः सुखसाधनान्यपि तदधीनानि अन्यथा तदानीमेव स्वर्गः कुतो न भवेत् अत ईश्वरे अवश्याङ्गीकर्त्तव्ये एकेनैव महाराजवत् कार्यसिद्धौ प्रतिनियतेश्वरकल्पना व्यर्थागौरवात् जीवानान्तु भेदः नात्रोद्दिष्ट इति प्रतिभाति एकवचनप्रयोगात् प्रकृतानुपयोगाच्च जीवभेदः प्रत्युत भक्तिसाधकः नतु बाधकः सोपि बहुधा निराकृतो निराकरिष्यते च अन्ये पुनः साङ्ख्यैकदेशिनो योगिनश्च कर्मफलं नित्यं मन्यन्ते—

> योगेन साधितो योर्थः स नित्यो हि निगद्यते ।
> वैदिकेनाप्यक्षय्यात्मा लोकः स्यान्नित्यकर्मणा ॥

तस्मिन्नपि पक्षे नेश्वरप्रयोजनं स्वसाध्येनैव कार्यसिद्धेः तदपि निराकर्त्तव्यम् आरोपैरेव प्रशंसावाचकशब्दानां सत्यत्वारोपकबुद्ध्यैव तत्सम्भवात् अपामसोमममृता अभूमेति सोमप्रशंसा वाक्यम् अक्षय्यं ह चातुर्मास्ययाजिनः सुकृतमिति तु सुकृतप्रशंसा तस्मान्नमसिद्धान्ता एत इति नैतद्वाक्यानुरोधेन पूर्वोक्तसिद्धान्ते दूषणमाशङ्कनीयमितिभावः । ननु भक्तिमार्गोपि त्वदुक्तन्यायेन न सङ्गच्छते विष्णुर्हि सेव्यः शिवो ब्रह्मा वा एते गुणाभिमानिनः प्रतिनियतकार्यकर्त्तारः स्वस्वाधीनमेव स्वभक्ताय कार्यं कुर्वन्ति अतस्त्रिगुणमयोऽयं पुरुषः नारायणो ब्रह्माण्डाभिमानी गुणैः कृत्वा सत्त्वरजस्तमोभिः भिन्नस्वस्वोपाधिभेदेन जीवेन वा स्थित्यादिकं करोतीति अल्पदातृत्वात् किं भक्तिमार्गेणापि गुणमयत्वाच्च सोपि तिरोहितानन्द इति राजसेवकवदन्योपधावनमपेक्षते दृश्यते च तथा पुराणे लोके चेति यत्स्मार्त्तानां मतं तदपि निराकर्त्तव्यम् अन्यथा पूर्वोक्तमार्गो न सिद्ध्येदिति त्रिगुणमयः पुमानिति यो भजनीयभेदः सोपि यदवबोधकृतः भगवत्स्वरूपाज्ञानादेव जायते ये इमे प्रसिद्धा आर्त्ताः स्मार्त्तशब्दवाच्याः ते यमाचक्षते सात्त्विका भगवद्विभूतिः नतु तावन्मात्रो भगवान् भक्तिमार्गप्रतिपाद्यः किन्तु पुरुषोत्तम इति बहुधा निरूपितं ननु पुरुषोत्तमत्वपक्षेपि यद्यज्ञानं स्यात् मूलभूतस्य तदा स दोषस्तदवस्थः अत एव केचिन्मूलभूतमेव ब्रह्म अज्ञानाश्रयो विषयश्चेत्याहुः—आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचर इति अयमपि पक्षो निराकर्त्तव्यः अन्यथा भक्तिमार्गः परमार्थपर्यवसायी न स्यात् अतो निषेधति—त्वयि न ततः परत्र स भवेदवबोधरस इति । त्वयि पुरुषोत्तमे स अवबोधः कथमपि न प्रवर्त्तते तत्र हेतुद्वयं ततः परत्रेति अवबोधरस इति च "आदित्यवर्णं तमसः परस्तात् । यः सर्वज्ञः सर्वशक्तिरिति सत्यं ज्ञानमनन्तं ब्रह्म" इति स्वप्रकाशश्चिदात्मैश्वर्यादिभुतिसहस्रैः अज्ञानसम्बन्धः निराक्रियते ज्ञानस्यापि यो रसः परमानुभवरूपः स एवात्मा स्वरूपं यस्येति अतो मतान्तराणां भ्रान्तिमूलत्वात् निर्दुष्टत्वाच्च भगवन्मार्गस्य भगवान् सेव्य इति सिद्धम् ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भ्रान्तिमूलतया सर्वसमयानामयुक्तितः ।
न तद्विरोधात्कृष्णाख्यं परं ब्रह्म त्यजेद्बुधः ॥ २५ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

न केवलं भगवतस्तवैव तत्त्वं दुर्ज्ञेयमपितु विदुषामेकमत्याभावात् परमपुरुषार्थतया जीवात्मनोऽपि तत्त्वतो ज्ञानं प्रायो दुःशकमित्याहुः—जनिमसत इति । असत एव ब्रह्मत्वस्यात्पत्तिं मोक्षं ये पातञ्जलादयो वदन्ति षडिन्द्रियाणि षड्बुद्धयः षड्विषयाः सुखं दुःखं शरीरञ्चेत्येकविंशतिप्रकारस्य दुःखस्य सत एव मृतिं नाशं मोक्षं वदन्ति ये नैयायिकाः उत अपि आत्मनि गुणमयात्मनि भिदां तस्य अगुणमयात्मवतामेव मोक्षं वदन्ति ये साङ्ख्यादयः विपणं व्यवहारं कर्मफलं स्वर्गादेव ऋतं सत्यं परमपुरुषार्थं स्मरन्ति वदन्ति ये च मीमांसकास्ते सर्वे आरुपितैः आरोपितैरेवोपदिशन्ति न तत्त्वदृष्ट्या यतः पुरुषस्य जीवात्मनस्त्रिगुणमयत्वे सर्वमिदं सङ्गच्छेत नतु तदास्ति सतु वस्तुतो निर्गुण एवेति द्योतयन्त्यः आहुः—त्रिगुणमयः पुमान् जीव इति । या भिदा जीवस्य त्रिगुणमयत्वरूपो यो भेद इत्यर्थः । सा यत् यस्मात् अबोधकृता या त्वदीया अविद्याशक्तिस्तत्कल्पितैव नतु वस्तुत इत्यर्थः साच जीवात्मन्येव प्रभवति नतु त्वयि परमात्मनीत्याहुः—स अबोधस्त्वयि न जीवस्येवाविद्यया आवरणं प्रतीत नतु तथेत्यर्थः । कुतः ततः परत्र तव मायातीतत्वादविद्यायाश्च मायावृत्तित्वात्त्वन्नियम्यत्वाच्चेति भावः । कीदृशे अवबोधरसे सम्पूर्णचिदेकरसे , यथान्धकारस्तेजःपुञ्जं सूर्यमावरीतुमसमर्थस्तेजःकणं स्वर्णरजतादिकं स्वभ्यासं करोत्येवेति भावः "अत्र अविद्यायामन्तरे वर्त्तमानाः स्वयं धीराः पण्डितम्मन्यमानाः जङ्घन्यमानाः परियान्ति मूढाः अन्धेनैव नीयमाना यथान्धाः" इत्याद्याः अर्थश्च पण्डितं मन्यमानाः पण्डितं मन्याः जङ्घन्यमानावादविवादैरित्यर्थः पीड्यमानाः परियन्ति भ्रमन्ति ॥ २५ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवतीतिश्रुतेः ईश्वरकल्पानां ब्रह्मरुद्रादीनां चेश्वराणां सातिशयत्वजन्यत्वादिप्रतिपादनपरत्वमविज्ञाय भ्रान्तिवशान्यथाकल्पमानानां कलौ भविष्यतां स्वबुध्द्योत्प्रेक्षितं सिद्धान्तमनूद्य निरस्यति ये केचित् असत ईश्वरस्य जीवस्य चेति तन्त्रपाठेनोभयपरत्वं मायाविद्याभ्यां जनिं स्मरन्ति सतस्तस्यैवापि तत्र एव ज्ञानकाले मृतिं अभावं स्मरन्तीति सर्वत्रानुषज्जते आत्मनि ब्रह्मणि भिदां सगुणनिर्गुणाध्यस्तोपहितध्येयज्ञेयादिलक्षणाञ्च विपणं पद्यते निर्णीयतेऽनेनेति व्युत्पत्त्या पणं प्रमाणं विगतं पणं वेदलक्षणं यस्मात्तद्विपणं प्रमाणशून्यं ते सर्वे जगत्सृष्ट्यादिव्यापारशून्यं वा वस्तु ऋतं परमार्थं स्मरन्ति आरुपितैः भ्रान्तिभिरेवोपदिशन्ति न तत्त्वं जानन्ति कुतोऽघटनात् तथाहि न तावज्जीवेशयोर्जन्मनाशौ सम्भवतः अजत्वादनन्तत्वाच्च तथाच श्रुतयः "ज्ञाज्ञौ द्वावजावीशनीशौ अजं ध्रुवं । सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्याम वेदाहमेतमजरं पुराणं त एते धाविद्रात्मानोऽविनष्टाः परंज्योतिर्निर्विशन्त्यविनष्टा एवोत्पद्यन्ते न विनश्यन्ति कदाचन" इत्यादिकाः—

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतःपरम् ॥

इति भगवदुक्तेः ईश्वरस्य सर्वजनकत्वं सुप्रसिद्धं स एवैक उद्भवे सम्भवे च एष देवो विश्वकर्मामहात्माविद्याविद्ये ईशते यस्तु सोऽन्यः न तस्य कश्चित्पतिरस्ति लोके न तस्य कश्चिज्जनिता न चाधिपः सकारणं करणाधिपाधिप" इत्यादिश्रुतिभिः सर्वकारणत्वसर्वानियन्तृत्वसर्वकर्तृत्वसर्वाधिपत्वादिप्रतिपादनपूर्वकान्यकार्यत्वान्यनियम्यत्वान्यकर्मत्वान्यपाल्यत्वादीनां डिण्डिमघोषेण निषेधात् इदमत्र चिन्तनीयं जीवेश्वरौ अनादीवाऽर्वाचीनौ वा ? आद्ये तव सिद्धान्तहानिः आभासेन करोतीत्यत्र कृञो धातोः कर्मत्वासिद्धेः अनाद्योर्जन्मानुपपत्तेश्च नञ्ञकारे वाक्यमूकत्वप्रसङ्गात् द्वितीये अजत्वप्रतिपादकशास्त्रव्याकोपात्—

जीवो ब्रह्मविशुद्धाच्चिद्विभागस्तयनयोर्द्वयोः ।
अविद्यातच्चितोर्योगः षडस्माकमनादयः ॥

इति सम्प्रदायविरोधेनाप्रसिद्धान्ताच्च किञ्च जीवस्य जन्मनाशाभ्युपगमे कृतनाशाकृताभ्यागमप्रसङ्गः अपिच मायाऽविद्ययोः स्वयमेव भवतीति प्रमाणादनादित्वस्यात्यन्तसर्वनियन्तृत्वादीनामप्यवश्यं स्वीकार्ये तथात्वे च ब्रह्मण्यतिप्रसङ्गेन जडत्वादि स्वरूपहानिप्रसक्तेः जडत्वादीनां स्वानन्त्यादिसामानाधिकरण्याभ्युपगमे च घटादावतिव्याप्तिर्भेदाश्चापि जडत्वाविशेषात् कालकर्मसंस्कारप्रागभावादयोऽपीश्वराद्युत्पादकाः स्युरितिभावः मायाऽविद्याभ्यामीश्वरादेर्जन्मसनिमित्तं वा निर्मित्तं वा आद्ये तत्र निमित्तस्याप्रसिद्धत्वात् द्वितीये मुक्तानामपि तत्प्रसङ्गात् निर्निमित्तत्वस्य च तत्रापि सत्त्वात् तस्माच्च कथमपीश्वरजीवयोर्जन्मनाशकथनावकाश इति नापि सर्वेषु स्वाभाविकाचिन्त्यानन्तशक्तौ जगज्जन्मादिकारणे ब्रह्मणि भेदकथनावकाशः नेह नानास्ति किञ्चन मृत्योः समृत्युमाप्नोति य इह नानेव पश्यति द्वितीयाद्वै भयं भवति" इत्यादिना कारणान्तरनिषेधात् नापि वैदिकप्रमाणशून्यत्वं तत्त्वं शशशृङ्गतुल्यत्वात् सर्वे वेदा यत्पदमामनन्ति तन्त्वौपनिषदं पुरुषं पृच्छामः तस्य पदं सङ्ग्रहेण ब्रवीमीत्यादिश्रुतिव्याकोपात् इत्यादिदूषणकदम्बविवक्षया आह त्रिगुणमयः पुमानिति त्रिगुणाया मायाया विकारभूतः पुरुष इति उपलक्षणं चैतत् उक्तपरामर्शस्य इति भेदात्पूर्वोक्तपक्षस्य भेदप्रकारः त्वयि पुरुषोत्तमे मायानियन्तरि अबोधकृता तेषां नास्तिकानां स्वोत्प्रेक्षितसिद्धान्तवादिनामबोधनाज्ञानेन भ्रान्त्या कृता कल्पिता भास्करे उलूकतमोवत् आरोपितेत्यर्थः । अतस्त्वयि स न भवेत् तेषामारोपो न सम्भवति तत्र हेतुगर्भितं विशेषणं ततः परत्रेति ततो मायाविद्या तत्कार्यजन्मादितत्सम्बन्धेभ्यः परस्मिन् अत्यन्तवैलक्षण्यवति अत एवावबोधरसे अवबोधश्चासौ रसश्च तस्मिन् न हि सूर्ये

सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजात्सदभिमृशन्त्यशेषमिदमात्मतयाऽऽत्मविदः।
न हि विकृतिं त्यजन्ति कनकस्य तदात्मतया स्वकृतमनुप्रविष्टमिदमात्मतयाऽवसितम्॥ २६॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तमस्तत्कार्य्यावरणं तत्सम्बन्धश्च सम्भवति तथाच श्रुतिः यः सर्वज्ञः सर्ववित् यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः नत्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव इति भगवद्गीतायाञ्च ॥ २५॥

भाषा टीका।

शशा के शींगके तथा आकाश पुष्पके समान अविद्यमान कार्य्य की उत्पत्ति और विद्यमान वस्तु के नाश को जो न्यायमतवादी मानते हैं और देह को ही आत्मा मानने वारे नास्तिकजन आत्मा में स्थूलपना कृशपना मनुष्यपना पशुपना आदि भेद मानते हैं तथा देवता और मनुष्यों के परस्पर उपकार भाव से उत्पन्न व्यापार फल के तुल्य स्वर्गादि फल को जो मीमांसक मतवादी नित्य मानते हैं केवल मानते हि नहिं किन्तु वेद विरुद्ध कुतर्कों से अपने शिष्यनके अर्थ उपदेश भी करते हैं इसी प्रकार सत्वरज तम इन तीनगुणों से प्रचुर जीवहि चेतनस्वरूप है इससे भिन्न कोई ईश्वर नहि है इस प्रकार जो कपिलमत वादी मानते हैं आपके विषय में जीवों को यथावत् ज्ञान के न होने से इस प्रकार के मत भेद लोक में प्रवृत्त होरहे हैं जीवमाया से परें ज्ञानानन्द स्वरूप आपको यथावत् जानने पर उपरोक्त अज्ञान और अज्ञान से आया जो मत भेद यह दोनों हि नहि ठहर सकते ॥ २५॥

श्रीधरस्वामिकृतभावार्थदीपिका।

ननु, यद्यसन्नोत्पद्यते यदि च त्रिगुणमयः पुरुषो न भवति तर्हीदं प्रपञ्चजातं पुरुषश्च पृथङ्नास्तीत्युक्तं स्यात् कथं तर्हि तयोः सत्त्वेन प्रतीतिरत आह—सदिव मन इति। मनो मनोमात्रविलासितमिदं त्रिवृत्त्रिगुणात्मकं प्रपञ्चजातमसदेव सदिव विभाति कथमिति चेत्तत्राह—त्वयीति। त्वय्यधिष्ठाने अधिष्ठानसत्तया सद्रूपतीयत इत्यर्थः। न केवलमिदन्तारास्पदं किन्त्वामनुजात् मनुजः पुरुषः अभिविधावाकारः पुरुषमभिव्याप्येति पुरुषस्यापि पृथक् सत्त्वप्रतीतिर्मनोमात्रविलसितेत्यर्थः तथा च श्रुतिः "असतोऽधिमनोऽसृजत मनः प्रजापतिमसृजत प्रजापतिः प्रजा असृजत तद्वा इदं मनस्येव परमं प्रतिष्ठितं यदिदाङ्किञ्च' इति मन्यात्मविदामपि विश्वं सदेव स्फुरत्यतः कथमसत्स्यादत आह—सदभिमृशन्तीति। आत्मविदस्त्वशेषमिदं भोक्तृभोग्यात्मकं विश्वमात्मतयैव सदभिमृशन्ति सदिति जानन्ति आत्मकार्यत्वान्न पृथगित्यर्थः। तथाहि यदुपादानकं यत्कार्यं भवति तत्तेनैव रूपेण प्रतीयते उपादीयते चेति लोकाचारेण दर्शयति—नहि विकृतिमिति। कनकस्य विकृतिं कुण्डलादिकं कनकार्थिनो न त्यजन्ति अत्र हेतुः तदात्मतया कनकरूपत्वेनेत्यर्थः। अतः स्वकृतमिदं विश्वमनुप्रविष्टं च पुरुषरूपमात्मतयैवावसितं निश्चितम् ॥ २६॥

यत्सत्त्वतः सदा भाति जगदेतदसत्स्वतः।
सदाभासमसत्यस्मिन् भगवन्तं भजाम तम् ॥ १३॥

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी।

प्रपञ्चजातं प्रपञ्चसमूहः तथा च श्रुतिः प्रपञ्चपुरुषयोः पृथक् प्रतीतेर्मायिकत्वे प्रमाणं श्रुतिः असत इति "असद्वा इदमग्र आसीदिति श्रुतेरसतो ब्रह्मणो निमित्तात् अधि न विद्यते धीर्यस्मादित्यज्ञानमेव मनोरूपेण व्यवर्त्ततेत्यर्थः। तच्च समष्ट्यात्मकं मनः प्रजापतिं तदभिमानिनं ब्रह्माणं व्यक्तमकरोदित्यर्थः। तत्तस्माद्यदिदं दृश्यमानं किञ्च किञ्चन तदिदं सर्वं मनस्येव समष्ट्यात्मके परमं यथा स्यात्तथा प्रतिष्ठितं प्रकर्षेण स्थितं मनोमात्रविलासितमित्यर्थः। तेनैव रूपेण उपादानकारणरूपेणैव अत्र त्यागाभावे हेतुः असतीति मिथ्याभूते प्रपञ्चे सद्रूपेण भासमानम् ॥ २६॥

श्रीकविचूडामणिचक्रवर्त्तिकृतान्वयबोधिनी।

ननु, यद्यसन्नोत्पद्यते यदि च त्रिगुणमयः पुरुषो न भवति तर्हि इदं प्रपञ्चजातं पुरुषश्च पृथक् नास्तीत्युक्तं स्यात् कथं तर्हि तयोः सत्त्वेन प्रतीतिरत आह—सदिव मनइति। इदन्त्रिवृत् त्रिगुणात्मकं प्रपञ्चजातं मनः मनोमात्रविलसितम् असदेव त्वयि सदिव भाति आमनुजात् मनुजं पुरुषमभिव्याप्य पुरुषस्य पृथक् सत्त्वप्रतीतिर्मनोमात्रविलसितेत्यर्थः। आत्मविदस्त्वशेषमिदं भोक्तृभोग्यात्मकं विश्वम् आत्मतया सदभिमृशन्ति सदिति जानन्ति आत्मकार्यत्वान्न पृथगित्यर्थः। तथाहि यदुपादानकं यत्कार्यं भवति तत्तेनैव रूपेण प्रतीयते उपादीयते चेति लोकाचारेण दर्शयति नहि विकृतिमिति कनकार्थिनः कनकस्य विकृतिं कुण्डलादिकं न हि त्यजन्ति कुतः तदात्मतया कनकरूपत्वेन अतः स्वकृतमिदं विश्वम् अनुप्रविष्टञ्च पुरुषरूपम् आत्मतयैवावसितं निश्चितम् इदं विश्वं मनोविलसितमित्यत्र श्रुतिः "असतोऽधिमनोऽसृजत मनः प्रजापतिमसृजत प्रजापतिः प्रजा असृजत तद्वा इदं मनस्येव परमं प्रतिष्ठितं यदिदं किञ्च" इति अर्थः असतः अव्याकृतात्परमेश्वरात् अधि अधिकं समष्टिरूपं मन असृजत असृजत् कर्मकर्तरि प्रयोगः अनायासेन सृज्यमानत्वात्स्वयमेवाभूदित्यर्थः। पच्यते ओदनः स्वयमेवेत्यादितवत् तच्च मनः प्रजापतिं ब्रह्माणमसृजत् स च प्रजा असृजत् तत्तस्मात् यदिदं दृश्यमानं किञ्च किञ्चन तन्मनस्येव मनोमात्रापत्ते अव्याकृते एव परमं

श्रीकविचूडामणिचक्रवर्तिकृताऽन्वयबोधिनी ।

यथा भवति तथा प्रतिष्ठितं प्रकर्षेण स्थितमित्यर्थः । स्तुतिपरेयं व्याख्या —

यत्सत्त्वतः सदा भाति जगदेतदसत्स्वतः ।
सदाभासमसत्यस्मिन् भगवन्तं भजाम तम् ।

एतत् जगत्स्वत असत् यत अस्य सत्त्वतः सत्तां प्राप्य सत्सत्यमाभाति तं भगवन्तं वयं भजाम कथम्भूतम् अस्मिन्नसति जगति सदाभासं प्रकाशमानम् ॥ २६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सदिवेत्यस्य टीकायां श्रुतौ "असद्वा इदमग्र आसीत्" इतिश्रुतेरसतो ब्रह्मणो निमित्तत्वात् अधि न विद्यते धीर्यस्मादित्यज्ञानमेव मनोरूपेण व्यवर्त्ततेत्यर्थः । तच्च समष्ट्यात्मकं मनः प्रजापतिं तदभिमानिनं ब्रह्माणं व्यक्तमकरोदित्यर्थः स्वमते त्वियं व्याख्या । अत्रासतोऽधिमनोऽसृज्यतेत्यादिश्रुतिरस्ति तत्रासच्छब्देन सच्छब्दप्रसिद्धकार्य्यपरम्परातिरिक्तं सर्वकारणं श्रीभगवानुच्यते असद्व्यपदेशादितिचेन्न धर्मान्तरेण वाक्यशेषादिति न्यायात् अधि मनःशब्देन सर्वाधिकारितद्वियमेव मनः ततश्चासत इत्यसता तेन असृज्यतेति तदर्थे व्यापारयामास इत्यर्थः । अथ पुनरेव नारायणः सोऽन्यं कामं मनसा ध्यायेत तस्य ध्यानान्तःस्थस्य ललाटात्स्वेदोऽपतत् ता इमाः प्रततापः तासु तेजो हिरण्मयमण्डं तत्र ब्रह्मा चतुर्मुखोऽजायते"इतिश्रुतेः एतमर्थमज्ञातुः कस्यचित्पूर्वपक्षमाशङ्क्य समादधते तत्राशङ्का ननु श्रुत्या शून्यमेव प्रथममुपदिष्टं तदनन्तरं मनो विज्ञानपरम्परा ततोऽसत एव पर्यवसानेऽपि स्थितिः स्यात् तथा मनसः प्रधानत्वात्तर्क एव सर्वत्र ज्ञाने हेतुः श्रुतेस्तु तत्कल्पितत्वात्तदनन्तरमेव कथं पुनः श्रुत्या तत्तदूह्यते इति समाधानन्तु सदिवेति त्रिवृत् उत्पत्तितो गुणत्रये वर्त्तमानं मनस्त्वयि असत् प्रवर्त्तमानञ्चेत् तदा सदिव यथार्थदर्शीव प्रतीयते वस्तुविचारे त्वयथार्थदर्श्येवेत्यर्थः । तर्काप्रतिष्ठानादितिभावः । यत एवात्मविदः सर्वमूलस्वरूपस्य तव वेत्तारो ये तु जीवमभिव्याप्याशेषमिदं सद्रूपत्वेनानुगतं त्वामेव पश्यन्ति तच्चात्मतया सर्वमूलस्वरूपतया यथा पाद्मे—

"चेतना तु द्विधा प्रोक्ता जीव आत्मेति च प्रभो ।
जीवा ब्रह्मादयः प्रोक्ता आत्मैकस्तु जनार्दनः ।
इतरेष्वात्मशब्दस्तु सोपचारोऽभिधीयते ॥ इति

तदेवार्थान्तरन्यायेन बोधयन्ति—न हीति । कनकस्य विकृतिं कटककुण्डलादिकं कनकवणिजो हि न त्यजन्ति तत्र हेतुः तदात्मतया तदनुगततन्मात्रदृष्ट्येति उभयत्र साम्यं योजयन्ति—स्वकृतमिति । स्वेन कृतं स्वेनाप्यनुगतञ्चेति उपसंहरन्ति त(दा)दात्मतया तत्स्वरूपतयैव निश्चितमिति तस्मान्न शून्यस्य कारणत्वं न वा मनसः प्राधान्यं किन्तु तवैव तत्तदिति स्ववचनरूपायाः श्रुतेरेव मुख्यं प्रामाण्यमितिभावः । अत्र श्रुतयश्च "यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इवसारथेः । यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः । यस्त्वविज्ञानवान्भवत्यमनस्कः सदाऽशुचिः । न स तत्पदमाप्नोति संसारं चाधिगच्छति । यस्तु विज्ञानवान्भवति समनस्कः सदा शुचिः स तु तत्पदमाप्नोति यस्माद्भूयो न जायते । विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः सोऽध्वनः पारमाप्नोति तद्विष्णोः परमम्पदम् । इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः पुरुषान्न परं । किञ्चित्सा काष्ठा सा परागतिः "इत्याद्याः औपनिषदः पुरुषः इत्याद्याश्च ॥ २६ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विश्वस्य भगवदात्मकत्वाग्रहणं मनोदोषात् मनसि शुद्धे भगवदात्मकतया प्रतीयमानं विश्वमुपादेयं स्यादित्याह—सदिवेति । आमनुजात् मनुष्यपर्यन्तात् मनुष्यपर्यन्तानां देहिनां त्रिवृत् त्रिगुणात्मकं सदिव सत्त्वमर्थक्रियाकारित्वं मनसि कार्यकरमिव प्रतीयमानमपि त्वयि असद्भाति कार्यकरं न भाति त्वां न प्रकाशयति अथशब्दः पक्षान्तरे विशुद्धेवत्प्रकाशनक्षमे मनसीत्यर्थः । आत्मविदः अशेषं न जगदिति परमात्मतया विमृशन्ति हि आत्मशब्दः परमात्मपरः अजयात्मना च चरत इत्युक्तप्रकारेण चिदचिद्विशिष्टं कारणं परं ब्रह्मैव कार्यावस्थं जगद्रूपेण स्थितमिति विमृशन्ति ब्रह्मात्मकत्वेन; जगतो हेयत्वाभावे दृष्टान्तमाह—नहि त्यजन्ति कार्यावस्थायापि कनकस्य न व्यतिरेकात् जगदुपादेयत्वमित्याह—स्वकृतमिति । स्वकृतं जगत्तेन परमात्मनानुप्रविष्टं व्याप्तं "तत् सृष्ट्वा तदेवानुप्राविशत् "इति श्रुतिः । अतः इदं जगदात्मतया रूपितं परमात्मशब्दवाच्यं वस्त्वन्तरगते तया सुखरूपमित्यर्थः । " तदात्मानं स्वयमकुरुत यद्वै तत्सुकृतं रसो वै सः"इति श्रुतिः ॥ २६ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किमबोधनिदानमित्यपेक्षायां मनोदोष एवेति किं तन्निवृत्तिनिदानमित्यपेक्षायां भगवदुपासनात्मकयोग एवेति विशुद्धान्तःकरणास्तु सर्वमिदं जगद्भगवदात्मतया सूक्ष्म चिदचिद्विशिष्टभगवत्कार्यतया च तदन्यदेव पश्यन्ति इति वदन्त्यः सत्कारणवादकपदूषणपरिहारपूर्वकमसत्कारणवादासाधारणानुपपत्तिमाहुः—सदिवेति । आमनुजान्मनुजपर्यन्तान्मनुष्यपर्यन्तानां देहिनामित्यर्थः । त्रिवृत्त्रिगुणात्मकं मनः सदिव सत्त्वमर्थक्रियाकारित्वं कार्यकरमिव प्रतीयमानमपि त्वय्यसद्भाति कार्यकरं न भवति चिदचिदात्मकजगद्विशिष्टं तदात्मानं त्वां न प्रकाशयतीत्यर्थः । आत्मानं त्वां विदन्त्युपासत इत्यात्मविदः त्वदुपासनात्मकयोगपरिशुद्धान्तःकरणास्तु अशेषं कृत्स्नमिदं जगदात्मतया आत्मशब्दः परमात्मपरः "अजयाऽऽत्मना च चरतः" इत्युक्तप्रकारेण सदभिमृशन्ति सच्छब्दवाच्यसूक्ष्मचिदचिद्विशिष्टं कारणं ब्रह्मैव कार्यजगद्रूपेणावस्थितमतस्ततोऽनन्यादित्येवमुपास्यपरब्रह्मविशेषणतया उपास्यकोट्यन्तर्गतत्वाज्जगदुपादेयमेव पश्यन्तीत्यर्थः । ब्रह्मात्मकत्वेन

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

जगतो हेयत्वाभावे दृष्टान्तमाहुः—नहीति । कनकस्य विकृतिं विकारं कटकमुकुटादिकं न हि त्यजन्ति किन्तु तदात्मकतया प्रकृतिभूतकनकानन्यतया उपाददत एवेति शेषः । कार्यावस्थायामपि कनकाव्यतिरेकादिति भावः । यदि कार्यं कारणादन्यत् तदा कनकस्य विकृतिं त्यजेयुरिति असत्कार्यवादेऽनुपपत्तिरभिसंहिता एवं जगदुपादेयमेवेत्याहुः—स्वकृतमिति । स्वरूपपरिणामशङ्काव्यावृत्त्यर्थमनुप्रवेशोक्तिः अनेन स्वपदेनद्रूपणोद्धारः स्वशब्दः परमात्मपरः स्वकृतं जगत् तेन परमात्मनाऽनुप्रविष्टं व्याप्तं "तत्सृष्ट्वा तदेवानुप्राविशत्" इति हि श्रुतिः अत इदं जगदात्मतयाऽवसितमुपास्यपरमात्मशब्दवाच्यवस्त्वन्तर्गततया सुखरूपं निश्चितमित्यर्थः । तदात्मानं स्वयमकुरुत यद्वैतत्सुकृतं रसो वै रसः" इतिश्रुतिः । यद्वा आत्मतयाऽन्तःप्रविश्य धारकतया अन्तः प्रविश्य धारकत्वं हि आत्मशब्दार्थः तेन अवसितं व्याप्तम् अनेनाकाशवत् तूष्णीं व्याप्तिः किन्तु धारकतयेत्युक्तम् अनेनेदं सदभिमृशन्तीत्युक्तं सामानाधिकरण्यं शरीरात्मभावनिबन्धनमिति फलितम् ॥ २९ ॥

---

## श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथ विश्वस्य भगवदात्मकत्वाग्रहणं मनोदोषाद्भवति मनसि शुद्धे तु भगवदात्मतया प्रतीयमानं विश्वमुपादेयं स्यादित्याह—सदिवेति । आमनुजात् मनुजमभिव्याप्य मनुष्यपर्यन्तानां देहिनां त्रिवृत् त्रिगुणात्मकं मनः सदिव सत्त्वमर्थक्रियाकारित्वं कार्यकरमिव प्रतीयमानमपि त्वयि असद्भाति कार्यकरं न भाति विषयाविष्टत्वात्त्वां न प्रकाशयतीत्यर्थः । तदुक्तं "विषयाविष्टचित्तानां विष्ण्वावेशः सुदूरतः । वारुणी दिग्गतं वस्तु व्रजन्नैन्द्रीं किमाप्नुयात्" इति अथशब्दः पक्षान्तरे विशुद्धे तत्प्रकाशनक्षमे मनसीत्यर्थः । मनसा तु विशुद्धेन दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरिति श्रुतेः आत्मविदस्तु अशेषं जगदात्मतया अत्रात्मशब्दः परमात्मपरः परमात्मतया विमृशन्ति अजया आत्मना च चरत इत्युक्तप्रकारेण चिदचिद्विशिष्टं कारणं परं ब्रह्मैव कार्यावस्थमिति निश्चिन्वन्ति चिदचिच्छरीरकतयाऽवस्थितं त्वामेवाध्यवस्यन्तीत्यर्थः । परमात्मात्मकत्वेन जगतो हेयत्वाभावे दृष्टान्तमाह न हि विकृतिमिति कटकमुकुटादिभिः कार्यावस्थमपि कनकं न त्यजन्ति कुतः तदात्मकतया कनकात्मकत्वात्कटकादेः कार्यावस्थायामपि कनकस्य न व्यतिरेकाज्जगदुपादेयत्वमित्याह स्वकृतमिति । स्वशब्दोऽपि परमात्मपरः स्वकृतं जगदिदं तेन परमात्मनानुप्रविष्टं व्याप्तं स्वरूपपरिणामादिव्यावृत्त्यर्थं प्रवेशोक्तिः तत्सृष्ट्वा तदेवानुप्राविशदिति श्रुतेः अतइदं जगदात्मतया रूपितं परमात्मशब्दवाच्यवस्त्वन्तरगततया सुखरूपं चिदचिदात्मकं जगत् भगवच्छरीरत्वेनोपादेयमित्यर्थः । भगवच्छरीरत्वन्तु यस्यात्मा शरीरं य आत्मानमन्तरो यमयति यस्याव्यक्तं शरीरं तत्सर्वं वै हरेस्तनुः इतिश्रुतिस्मृतिसिद्धम् अतस्तदात्मकत्वेन सुखरूपम् अब्रह्मात्मकत्वेन दुःखरूपमित्यर्थः । तदात्मानं स्वयमकुरुत तद्वैतत्सुकृतं रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति" इतिश्रुतिरपि तदानन्दलाभेनानन्दित्वं प्रतिपादयतीति॥२९॥

---

## योगिरामानुजाचार्यकृतसरलव्याख्या ।

जगदुपादानत्वेन जगत्स्वरूपस्त्वमेवेत्याहुः—आमनुजात् मनुजपर्यन्तं त्रिवृत् गुणत्रयवेष्टितम् अत एवासत् असाधुपक्षकत्वात् विषयाभिनिविष्टत्वात् असत्यावेत्यर्थः । एवम्भूतं मनः त्वयि स्थितं यदि सदिव चेतनसदृशं चेतनवत् त्रिगुणरहितं रागादिरहितं सत् विभाति प्रकाशते निर्मलं सत् मोक्षोपयोगज्ञानजनकं भवतीत्यर्थः । भवति स्थितस्य मनसः मोक्षकारणत्वं दृश्यते बन्धाय विषयासङ्गिमोक्षाय परमात्मनः इत्यादिवचनात् आत्मविदः ज्ञानिनः अशेषमिदं प्रपञ्चम् आत्मतया परमात्मस्वरूपत्वेन आत्मोपादानकत्वादित्यर्थः । सदभिमृशन्ति सदिति जानन्ति सच्छब्दवाच्यमर्थस्वरूपं जानन्तीत्यर्थः तत्र दृष्टान्तमाहुः यथा कनकार्थिनो जनाः कनकस्य विकृतिं कटककुण्डलादिकं तदात्मतया कनकस्वरूपत्वेन हेतुना न त्यजन्ति हि न परित्यजन्ति किन्तु परिगृह्णन्त्येव तथा स्वकृतं उपादानभूतेन स्वेन कृतं इदं विश्वं आत्मतयोपादानभूतभगवत्स्वरूपत्वेन प्रकारेणानुप्रविष्टं भगवता व्याप्तं यथा घटशरावादिकार्ये स्वोपादानभूतमृदानुप्रविष्टं तथा उपादानभूतेन भगवता कारणत्वाकारेणैव जगदनुप्रविष्टमित्यर्थः इदं विधेयविशेषणम् एवं प्रकारेणावस्थितं ज्ञातं ज्ञानिभिरित्यर्थः "सदेव सोम्येदमग्र आसीत्" इत्यादिभिः जगतः ईश्वराभिन्नत्वं सर्वसम्मतमेव अत्र हि आत्मतयाऽऽत्मविदः इत्यत्र कनकस्य तदात्मतये त्यत्र आत्मतयावसितमित्यत्र चात्मतयेतस्य स्थानत्रयोक्तस्य समानप्रकरणदृष्टान्तादियुक्तत्वेन स्थानत्रयेऽपि आत्यतयेत्यस्य समानार्थः उचितः आमनुजात् त्रिवृत् असत् मनः त्वयि सदिव विभाति आत्मविदः अशेषमिदं आत्मतया सदभिमृशन्ति तदात्मतया कनकस्य विकृतिं न त्यजसि हि स्वकृतमिदमात्मतयानुप्रविष्टमवसितं इत्यन्वयः ॥ २९ ॥

---

## श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मू० ॥ त्रिगुणमयः पुमानिति यदबोधकृता त्वयि न खलु भवेत्सदवबोधरसे । सदिवमनास्त्रिवृत्त्वयि मवत्यसतां मनुजाद्यो विमृशन्त्यशेषमिदमात्मतयाऽऽत्मविदः ॥ २९—१३ ॥

सत्त्वादिकं देहमथो मनश्च सत्त्वादिबद्धं च ददन्त्यसन्तः परं पुमांसं न सुरास्तु तेऽपि जीवाः सुदृशाः परमार्थरूपाः इति श्रुत्यर्थोपनिबद्धस्य त्रिगुणमय इत्यस्यायमर्थः । पुमान् जीवस्त्रिगुणमयः सत्त्वादिगुणबद्ध इति जीवस्यापि त्रिगुणबद्धता अबोधकृता अज्ञानकृता यतस्तस्मादवबोधरसे त्वयीति सप्तमी षष्ठ्यर्थे त्रिवृत् त्रिगुणात्मकं मनः त्वयि तथापि सदिव विद्यत इत्यर्थः । असतां पक्षो भवति ननु सतां सतां पक्षस्त्वयमित्याहु—मनुजाद्य इति । आत्मविदः सम्यक् परमात्मतत्त्वज्ञानिनः मनुजनामाद्यो देवाः भवतस्त्रिगुणातीतत्वाज्ज्ञानेव परमानन्दत्वादत्यादिदमशेषं जीवजातं स्वाधीनतया स्थितमित्येव विमृशन्ति जानन्ति—

"त्रैगुण्यदेहेन्द्रियमानसा तु सत्त्वात्मके हरिस्तु
त्रिगुणातीतमीशोऽमनःपूर्णं सुखं सुरा ।

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

जानन्ति गुणवत्त्वात्त्वाजीवानार्तांश्च कृत्स्नशः ।
अनार्तस्य प्रसादेन तेषामार्त्तिविनाशनम् ॥

इतिचैतन्यविवेके ॥ ११ ॥ २७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स खलु बोधस्त्वं पुनरवबोधैकरसः कथमिव सन्तो तिमिरमिव तेजोमलिनं विषयमाश्रयं वा करोत्वित्यर्थः । तस्मात्तथाविम्बशक्तिवैभवस्याज्ञानादेव तथोत्प्रेक्षन्त इति भावः शेषं टीकाभिप्राये । यथासतोऽभिमतोऽसृज्यतेत्यादि श्रुतिरास्ति । तत्रासच्छब्देन सच्छब्दप्रसिद्धकार्य्यपरम्परातिरिक्तं सर्व्वकारणं श्रीभगवानुच्यते असद्व्यपदेशादितिचेन्न धर्म्मान्तरेण वाक्यशेषादिति न्यायात् । अधिमनदशब्देन समष्टिमनोऽधिकारी अनिरुद्ध एवोच्यते तस्य सृष्टिश्च प्रादुर्भावनमेव तदभेदविवक्षायां तु सर्व्वाधिकाधिकारी तदीयमन एवैतेनोच्यते असृज्यत तदर्थे व्यापारयामासेत्यर्थः । अथ पुनरेव नारायण सोऽन्यं कामं मनसा ध्यायेत् तस्य ध्यानान्तःस्थस्य ललाटात् स्वेदोऽपतत् ता इमा प्रततापः तास्तु तेजो हिरण्मयमण्डं तत्र ब्रह्मा चतुर्मुखोऽजायतेति श्रुतेः । एतदर्थमज्ञातुः कस्यचित् पूर्व्वपक्षमाशङ्क्य समादधते । तत्राङ्कुशाः । ननु श्रुत्या शून्यमेव प्रथममुपदिष्टं तदनन्तरं मनोविज्ञानपरम्परा । ततोऽसत एव पर्य्यवसाने स्थितिः स्यात् । तथा मनसः प्रधानत्वात्तर्कं एव सर्व्वत्र ज्ञाने हेतुः श्रुतिस्तु तत्कल्पितत्वात् तदनन्तरमेव कथं पुनः श्रुत्या तत्तदूष्यत इति समाधानन्तु सदिव ॥ २६ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

न केवलं त्वमेव निर्गुणः अपितु तव धाम पार्षदादयश्च निर्गुणाः यतः स्वयमेवोक्तं निर्गुणं मदपाश्रयमित्यादि अतस्तदेव सत्यमिति तत्प्रकारमाहुः—सदिव मन इत्यादि । इदं विश्वं मनः मनःकल्पितत्वात् अत आमनुजात् आपुरुषात् पुरुषं मर्य्यादीकृत्य आब्रह्मर्य्यादाविध्योः पुरुषं त्यक्त्वा सर्वमिदं त्रिवृत् त्रिगुणात्मकम् अतोऽसदपि सदिव भाति सदेव भाति इव एवार्थः कथं भवतीत्याहुः—त्वयि त्वद्विषयकं यदि भवतीत्यर्थः त्वत्सम्बन्धेन असदपि विश्वं सदिव भाति किम्पुनः सत् नित्यभूतं यत्तव लोकादि तस्य नित्यत्वे कारणमाहुः—अशेषं न विद्यते शेषो यस्य ननु, क एवं मम लोकादेः सत्यतां वदन्तीत्याहुः- आत्मानं भवन्तं विदन्तीत्यात्मविदः कया युक्त्या वदन्तीत्याहुः आत्मतया त्वत्स्वरूपतया त्वल्लोकादिकं त्वत्स्वरूपमेव येमं विन्दन्ति मत्स्थानं यद्ब्रह्म परमं विदुरिति तवैवोक्तेः अत उक्तं न यत्र कालोऽनिमिषां परप्रभुरित्यादि आत्मतयेति यदुक्तं तद्दृष्टान्तेन रूपयन्ति महीत्यादि कनकविकृतिं कुण्डलादिकनकार्थिनो न त्यजन्ति कुत इत्याहुः तदात्मतया तदपि कुण्डलादिकनकमेव आकारमात्रेणैव विकृतत्वं नतु विकृतिः एतेन त्वं कृष्णरूपेण नित्याविकृत एव मनानन्दत्वात् तव लोकाञ्च मनागमनान्दत्वेन न विकृतम् अपितु पार्षदादितच्छुभमङ्गलमृगाद्याकारेणैव अतः त्वत्सम्बन्धादसदपि सदिव भासते यत्तु नित्यसत् तत्सदेवेति तात्पर्य्यार्थः ॥ २६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं सिद्धान्तमन्तराणि परिहृत्य भक्तिमार्गे स्थापितेपि जगत्कर्तृत्वसर्वाश्रयत्वादिधर्माणां माहात्म्यार्थमङ्गीकरणे तद्गतो दोषः प्रसज्येत तत्र परस्सहस्रदूषणानां सम्भवेपि दूषणद्वयं मुख्यं जगदाश्रयत्वेन जगत्सम्बन्धिदोषसंस्पृहः उपादानत्वाच्च भगवत्येव भवति जीवस्य च भगवत्त्वं कामक्रोधादिसर्वे दोषाः भगवति भवन्ति एतदुभयपरिहारार्थमाह—सदिव मन इति । आदौ जीवभावे यानि दूषणानि तानि परिह्रियन्ते मनस एव ते दोषाः ननु जीवस्य तथात्वेव विशेषतो निरूपयितुं न शक्यत इति नासदासीन्नो सदासीदिति मनसस्तादृशं रूपं सदसदात्मकमिति तत्रापि तस्यासत्वं सहजं सत्वन्तु आगन्तुकमिति श्रुत्यादिना आयत इति सद्विवेत्युपमया निरूपितं तस्योभयात्मकत्वे हेतुमाह—त्रिवृदिति । गुणत्रयवेष्टितं तत्र सत्वांशे सत्वं भवति अंशद्वये त्वसत्वमिति एतादृशस्य प्रकाशः न जीवसम्बन्धात् किन्तु स्वस्येव विभाति मनसो वशे सर्वमिदं बभूव नान्यस्य मनो वशमन्वियाय भीष्मोपि देवः सहसः सहीयानिति श्रुतिः मनसो माहात्म्यमाह—न ह्येतन्माहात्म्यं जीवाश्रयत्वे घटते किन्तु भगवदाश्रयत्वेनैव तस्य माहात्म्यं तथापि तद्दोषसम्बन्धः स्यादेवेति चेत्तत्राह—आमनुजादिति । मनुष्यपर्यन्तमेव परिभ्रमणे तस्य मनसः स स्वभावः तृणस्तम्बमारभ्य महत्तत्त्वपर्यन्तं जीवगणाः तत्र मनुष्यो मध्यस्थः मनश्च सर्वेषामर्थे भगवता नियुक्तं सर्वत्र परिभ्रमति यथा तस्य परिभ्रमणं सम्भवति तथांशभेदाः सामर्थ्यं वा कल्पनीयम् उत्पत्तौ तस्यैकत्वप्रतिपादनात् अतो मनुष्यपर्यन्तमेव यावत् परिभ्रमति तावत् असत् सदेव प्रतिभाति । अग्रतु सदिव कश्चिदसदिव प्रतिभाति तस्मात्कामादिदोषाणां मनोमूलत्वात् मनसश्च तत्स्वाभाविकं न भवतीति न तद्दोषेण भगवति दोषः द्वितीयं परिहरति सदभिमृशन्तीति अभिमर्शो ज्ञानम् आत्मविदोऽत्यन्तं प्रमाणभूताः इदमशेषं जगत् सर्वं नानाप्रकारेण भ्रान्तदृष्ट्या भासमानमपि आत्मतयैव सदेवेत्यभिमृशन्ति सर्वं ब्रह्मेत्येव जानन्ति मनसोऽप्यत्र दोषः परिहृतः यथेन्द्रजालिकस्य अन्यथाप्रदर्शनसामर्थ्यं गुणः नतु दोषो भवति तथापि मनसोऽपि कामादिभासनं गुण एव कौतुकार्थत्वात् वस्तुतस्तु ब्रह्मैव आत्मविद् इति वचनात् तेषां ज्ञानमात्मनि पर्यवसितम् अत आत्मा परमार्थसत्यः स एव यदि सर्वं कथमसत्यता आशङ्क्येतेत्यर्थः । तथापि युक्तिर्वक्तव्येति चेत्तत्राह—नहि विकृतिं त्यजन्ति कनकस्य तदात्मतयेति । कनकस्य विकृतिं कुण्डलादिकं कनकार्थिनो वणिजः किं त्यजन्ति अपितु गृह्णन्त्येव तत्रापि हेतुस्तदात्मतयेति । कनकात्मतया नतु कनकमुपादानमिति मध्ये द्रव्यान्तरापूरिते

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

विकृते कनकतया ग्रहणं युक्तं जगत्तु जडोपादानकं जीवसामग्र्या पूरितं कथं भगवानिति चेत्तत्राह—स्वकृतमनुप्रविष्टमिदमिति । स्वेनैव कृतम् आत्मोपादानकं स आत्मानं स्वयमकुरुतेति श्रुतेः स्वेनैव चानुप्रविष्टं तत् सृष्ट्वा तदेवानुप्राविशत् इति श्रुतेः जगत्तत्रस्थिता च सामग्री भगवानिति । इदं सर्वमात्मनैवावसितं ततः सर्वस्यापि ब्रह्मत्वात् कस्य दोषः कुत्र भवेत् मतान्तर एव दोषाणां दोषत्वं ब्रह्मवादे तु ब्रह्मत्वमेवेति सर्वमविरुद्धम् ॥ २६ ॥

जीवानां ब्रह्मरूपत्वाद्दोषा अपिच मानसाः ।
जगच्च सकलं ब्रह्म ततो दोषः कथं हरौ ॥ १३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अत्र त्रिगुणमयः पुमानिति भिदेत्यत्र ज्ञानिनां मते जीवात्मनि त्रिगुणमयत्वेन भिदा परमात्मनः सकाशाद्भेदो ऽज्ञानकल्पित एव ज्ञानेन तु तस्मिन्नज्ञाने नष्टे सति भेदे च तिरोहिते स परमात्मैव भवति अतो जीवात्मा नाम परमात्मनो न पृथग्वस्तुरूप इति तत्त्वं बन्धमोक्षावस्याज्ञानविजृम्भितावेव किञ्चैवमिदङ्कारास्पदं विश्वमपि ततः पृथक्प्रतीतमज्ञानादेवेत्याहुः—सदिवेति । इदमशेषं त्रिवृत् त्रिगुणात्मकं प्रपञ्चजातम् आमनुजात् मनुजः पुरुषो जीवस्तमप्यभिव्याप्य सदिव नतु सत् यतो मनः मनोमात्रविलसितमित्यर्थः । तथाच श्रुतिः "असतोऽधिमनोऽसृज्यत मनः प्रजापतिमसृजत् प्रजापतिः प्रजा असृजत् तद्वा इदं मनस्येव परमं प्रतिष्ठितं यदिदङ्किञ्च" इति अर्थश्च असद्वा इदमग्र आसीदिति श्रुतेरसतो ब्रह्मणो निमित्तात् अधि न विद्यते धीर्यस्मादित्यज्ञानमेव मनोरूपेण व्यवर्त्ततेत्यर्थः तच्च समष्ट्यात्मकं मनः प्रजापतिं तदभिमानिनम् असृजत् । व्यक्तमकरोदित्यर्थः न त्वात्मविदामपि विश्वं सदेव स्फुरति अतः कथमसत्त्वादत आहुः सत अभिमृशन्ति सदिति जानन्ति आत्मकार्य्यत्वाच्च ततः पृथगित्यर्थः । तथाहि यदुपादानकं यतः कार्य्यं भवति तत्तेनैव रूपेण प्रतीयते उपादीयते चेति लोकाचारेण दर्शयन्ति नहि विकृतमिति । कनकस्य विकृतिं कुण्डलादिकं कनकार्थिनो न त्यजन्ति तत्र हेतुः तदात्मतया कनकरूपत्वेनेत्यर्थः । अतः स्वकृतमिदं विश्वं तदनुप्रविष्टं पुरुषस्वरूपञ्च आत्मतयैव अवसितं निश्चितं ज्ञानिभिः एतदेवापरोक्षज्ञानं संसारबन्धमोचकमितिभावः ॥२६॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शक्तिशक्तिमतोः कार्य्यकारणयोश्च भिन्नाभिन्नत्वं स्पष्टयति आमनुजात् मनुर्मन्त्रोमनुः स्वायम्भुवो वा जायतेऽस्मादिति मनुजो ब्रह्मा चतुर्मुखपर्यन्तं क्षेत्रज्ञजातपर्यन्तं प्रति त्रिवृत् गुणमयं मनः सदिव स्वतन्त्रतुल्यमपि त्वयि विषये असत् । अस्वतन्त्रं विभाति क्षेत्रज्ञानां वशीकरणे सामर्थ्यवदपि त्वद्वशीकरणेऽसामर्थ्यवत् त्वन्नियम्यमायाकार्य्यत्वादिति भावः । आत्मविदस्तु त्वयि मनः त्वद्विषयकं मनः सदेवाभिमृशन्ति तव प्राप्तिसाधनत्वात् सत्कार्य्यत्वाद्वा न केवलमेतावदेव सदभिमृशन्ति किं त्विदमशेषं वस्तुजातमपि कुतः आत्मतया सद्रूपतया । तथाच श्रुतिः सन्मूलाः सौम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः सर्वं खल्विदं ब्रह्म" इत्यादि तत्र दृष्टान्तमाह—कनकार्थिनः कनकस्य विकृतिं कटककुण्डलादिम् अन्यत्वेन नहि त्यजन्ति तत्र हेतुः तदात्मतया कनकात्मकत्वात् किञ्च युक्तमेवैतत् यतः स्वकृतं स्वेन सृष्टम् इदं जडजातं तदनुप्रविष्टञ्च विज्ञानात्मस्वरूपं च तदात्मतयाऽवसितं शास्त्रेण व्यासादिभिरिति शेषः तथाच श्रुतिः भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् तत्त्वमसीत्यादि असाधारणधर्मैर्भिन्नमपि साधारणैरभिन्नमिति निश्चितमिति भावः ॥ २६ ॥

---

### भाषा टीका ।

मनुष्य पर्य्यन्त देहधारी जीवों का सत्वरजतम तीनगुण युत मन संसार के वस्तुओं का प्रकाश करने से सफल कार्य्य करने वारे के समान प्रतीत होताभी है तथापि आप के विषयमें तो यह मन असत हि प्रतीत होता है क्योंकि जीवमाया विशिष्ट आप को प्रकाश नहि करता यह भावहै मलीनमन संसार के मलीन वस्तुओं का हि प्रकाश करता है आपका प्रकाश नहि करता आप का प्रकाश तो शुद्धमन करताहै और आप की उपासना से जिनके मन शुद्ध हो गए हैं ऐसे आत्मज्ञानी पुरुष तो चेतना चेतन मिश्रित इस निखिल जगत्को परमात्म भाव से सत् हि देखते है क्योंकि सूक्ष्म चेतना चेतन विशिष्ट कारण ब्रह्महि स्थूल चेतना चेतन कार्य रूप प्रपञ्च का आत्मा होकर स्थित है इस वास्ते परमात्मा से पृथक होकर कुछ भी नहीं है किन्तु यावत चेतना चेतन सब जगत परमात्मा का शरीर होने से उपासनीय परमात्मा के अन्तर्गत है इस रीति से इस प्रपञ्च को परमात्म रूप देखते हैं लोक में भी सुवर्ण के कार्य्य कटक मुकुटादि भूषणों का त्याग नहि करते किन्तु कारण स्वरूप सुवर्ण रूप होने से उस का स्वीकार हि करते हैं इसी प्रकार परमात्मा का रचा भया जगत परमात्म भाव से निश्चित किया गया है क्योंकि प्रलय काल में सूक्ष्म चेतना चेतन विशिष्ट कारण ब्रह्महि सृष्टि काल में स्थूल चेतना चेतन कार्य्य रूप जगत का आत्मा होकर स्थित है सब जगत उस के अन्तर्गत है इस वास्ते कार्य्य, कारण रूप निखिल प्रपञ्च का आत्मा ब्रह्महि है इस प्रकार इस प्रपञ्च में ब्रह्म भाव निश्चय किया गया है ॥ २६ ॥

---

तव परि ये चरन्त्यखिलसत्त्वनिकेततया त उत पदाक्रमन्त्यविगणय्य शिरो निर्ऋतेः ।
परिवयसे पशूनिव गिरा विबुधानपि तांस्त्वयि कृतसौहृदाः खलु पुनन्ति न ये विमुखाः ॥ २७ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, "सत्यं ज्ञानमनन्तं ब्रह्म नेह नानास्ति किञ्चन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यादिश्रुतिभिरेवम्भूतस्य भगवतः प्रतिपादनात्तज्ज्ञानं सुकरमेवेति कृतं भक्त्या अत आह—तव परि ये चरन्तीति तवेति कर्मणि षष्ठी त्वां ये परिचरन्ति "छन्दसि व्यवहिताश्च" इति यच्छब्देन व्यवधानमदोषः केन रूपेण अखिलसत्त्वनिकेततया अखिलानि सत्त्वानि निकेतो यस्य स तथा तस्य भावस्तत्ता तया सर्वभूतावासतयेत्यर्थः । उत एव अविगणय्य तिरस्कृत्य त एव निर्ऋतेर्मृत्योः शिरो मूर्धानं पदा पादेनाक्रमन्ति मृत्योर्मूर्ध्नि पदं दधति तं तरन्ति मुच्यन्त इत्यर्थः । ये पुनर्विमुखा अभक्तास्तान् गिरा वाचा पशूनिव विबुधान्विदुषोऽपि परिवयसे बध्नासि कुतः त्वयि कृतसौहृदाः त्वयि कृतं सौहृदं प्रेम यैस्ते खलु निश्चितं पुनन्ति पवित्रयन्ति आत्मानमन्यानपीति शेषः । नेतरे तथाच श्रुतिः 'तस्य वाक् तन्तिर्नामानि दामानि तस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितमिति अयमभिप्रायः सत्यमेवम्भूतमात्मानं श्रुतयः प्रतिपादयन्ति तत्र च यद्यपि वस्तुनोऽपरोक्षत्वादपरोक्षमेव ज्ञानमुत्पद्यते तथाऽप्यसम्भावनाविपरीतभावनातिरस्कृतत्वान्मालिन्यवशेन तु परोक्षमिव भवतीति नापरोक्षसंसारभ्रमनिवृत्तिसमर्थम् भगवत्परिचर्यया तु सम्यगमलचित्तानां तत्प्रसादेन लब्धापरोक्षज्ञानानामयत्नत एव करकलितो मोक्ष इति तथाच श्रुतयः ' देहान्ते देवः परं ब्रह्म तारकं व्याचष्टे 'यमेवैष वृणुते तेन लभ्यः' 'यस्य देवे परा भक्तिः" इत्यादयः ॥ २७ ॥

तपन्तु तापैः प्रपतन्तु पर्वतादटन्तु तीर्थानि पठन्तु चागमान् ।
यजन्तु यागैर्विवदन्तु वादैर्हरिं विना नैव मृतिं तरन्ति ॥ १४ ॥

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

नेहेति पूर्वं मनसैवानुद्रष्टव्यमित्युक्तं तत्र इह दर्शनविषये ब्रह्मणि सजातीयविजातीयभेदयुक्तं यन्नानावस्तु भासते तत् किञ्चनकिमपि वस्तुतो नास्ति किन्तु कल्पितमेव सर्वं भासत इत्यर्थः इह ब्रह्मणि नानेव भेदयुक्तमिव यश्चेतनाचेतनयुक्तं विश्वं तयो वस्तुभक्त्या पश्यति स मृत्योरनन्तरं मृत्युं जन्ममरणाविच्छेदपरम्परारूपं संसारं प्राप्नोतीत्यर्थः । एवम्भूतस्य निर्विशेषब्रह्मरूपस्य तज्ज्ञानं ब्रह्मज्ञानं सुकरमेवेति हेतोः कृतम् अलं भक्त्येत्यतः साकूतात आह वेदः तव परीतिवाक्यं तन्तीति वागेव वेदरूपा तन्तिर्महारज्जुः सत्संयुक्तानि ब्राह्मणक्षत्रियनामानि दामानीव अल्परज्जवः यथा वणिजां वृषाः तन्त्या दामभिश्च बध्यन्ते तथेश्वरस्य विधिनिषेधरूपया दीर्घरज्जुतुल्यया वेदवाचा अल्परज्जुतुल्यैर्ब्राह्मणादिनामभिश्चेदं सर्वं जगत् सितं बद्धं ब्राह्मणस्त्वमेवं वर्ममाणि कुरु क्षत्रियस्त्वं यजनादिकमित्यादिरूपया सम्बद्धमित्यर्थः । एवम्भूतं निर्विशेषब्रह्मरूपं तत्र च प्रतिपादनेतु तथापि ज्ञानस्यापरोक्षतयोत्पन्नस्यापि असम्भावनासन्देहरूपा विपरीतभावना गुरुपदिष्टार्थविपरीतत्वचिन्तनं ताभ्यां तिरस्कृतत्वाद्वाक्यजन्यस्य ज्ञानस्येति शेषः । नापरोक्षज्ञानसमर्थमित्यस्यायमर्थः यथोत्पन्नोऽपि वह्निर्मणिमन्त्रादिभिस्तिरस्कृतश्चेन्न दाहसमर्थो भवति सति तु तन्नाशे भवत्येव तथा वेदान्तवाक्यैर्जातमपि ज्ञानम् असम्भावनादिभिस्तिरस्कृतं सन्नापरोक्षभ्रमनिवृत्तिसमर्थं भवति सत्यान्तु तेजःस्थानीयायां भगवत्परिचर्यायां तत्प्रसादेन भ्रमनिवृत्तिसमर्थं भवत्येवेति वाचस्पत्यादिसम्मत्या शुष्कज्ञानिनः परास्ता इति । देहान्त इति य इह स्वातुमपेक्षते सर्वैश्वर्यं ददाति यत्र कुत्रापि म्रियेत देहान्ते देवः परब्रह्मतारकं व्याचष्टे येनामृतीभूत्वा सोऽमृतत्वञ्च गच्छतीति श्रीनृसिंहपूर्वतापन्यां श्रुतम् अयमर्थः यस्तु श्रीनृसिंहोपासकः सर्वोत्कर्षेणात्र स्वातुमपेक्षते तस्मै स नृसिंहः सर्वैश्वर्यं ददाति स च यत्र कुत्रापि मगधमरुदेशेऽपि म्रियेत तस्मै देवो नृसिंहो देहान्त एव तारकमोङ्कारप्रतिपाद्यं परब्रह्म व्याचष्टे उपदिशति अत्राद्वैतगुरूणां भाष्यम् कामिनं प्रकृत्य देहान्त इति विशेषणोपादानं कामित्वेन प्रागनधिकारात् निष्कामस्य त्वर्वागपि देवः परब्रह्म तारकं व्याचष्टे इति येनोपदिष्टेनोङ्कारप्रतिपाद्येन भगवताऽधिगतेनामृतीभूत्वा देहाद्युपाधेर्विमुच्य स श्रोता कैवल्यमाप्नोतीति ॥ २७ ॥

श्रीकविच्यूडामणिचक्रवर्तिकृताऽन्वयबोधिनी ॥

ननु "सत्यं ज्ञानमनन्तं ब्रह्म मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यादिश्रुतिभिः एवम्भूतस्य भगवतः प्रतिपादनात्तज्ज्ञानं सुकरमेवेति कृतं किम्भक्त्या अत आह—तव परीति । येऽखिलसत्त्वनिकेततया सर्वभूतावासतया तव त्वां परिचरन्ति त एवाविगणय्य तिरस्कृत्य शिरः पदा पादेन क्रमन्ति मृत्युमतितुच्छं कृत्वा तरन्तीत्यर्थः । ये पुनर्विमुखास्ते नात्मा अभक्तास्तान् विबुधानपि विदुषोऽपि गिरा वाचा परिवयसे बध्नासि कुतः त्वयि कृतसौहृदाः भक्ताः खलु निश्चितम् आत्मानं अन्यांश्च पुनन्ति ये विमुखास्ते नात्मानमपि पुनन्तीति उत एवार्थः तवेति कर्मणि षष्ठी परि ये चरन्तीति "छन्दसि व्यवहिताश्च" इति यच्छब्देन व्यवधानमदोषः स्वामिचरणाः अयमभिप्रायः सत्यमेवम्भूतमात्मानं श्रुतयः प्रतिपादयन्ति इति तत्र च यद्यपि वस्तुनोऽपरोक्षत्वादपरोक्षमेव ज्ञानमुत्पद्यते तथाप्यसम्भावनाविपरीतभावनातिरस्कृतत्वान्मालिन्यवशेन तु परोक्षमिव भवति इति नापरोक्षसंसारभ्रमनिवृत्तिसामर्थ्यं भगवत्परिचर्यया तु सम्यक् अमलचित्तानां तत्प्रसादेन लब्धापरोक्षज्ञानानाम् अयत्नत एव करकलितो मोक्ष इति अभक्तान् बध्नातीत्यत्र श्रुतिः "तस्य वाक् तन्तिर्नामानि दामानि तदस्येदं वाचा तन्त्या नामभिर्दामभि." अर्थः

### श्रीकविचूडामणिचक्रवर्तिकृतान्वयबोधिनी ।

तन्तिः रज्जुः वागेव तन्तिरेव तन्तिः तत्संयुक्तानि नामानि दामानीव ततः अस्येश्वरस्य वाचा तस्या नामभिर्दामस्थानीयैः सर्वमशेषं सितं बद्धम् अमुकस्त्वमेव कुर्वित्याज्ञया बद्धमित्यर्थः अभक्तबन्धनपरेयं भक्तानामयन्ततः संसारतणमित्यत्र श्रुतिः श्रीनृसिंहतापिन्यां य इह ह्यातुमपेक्षते सर्वैश्वर्यं ददाति यत्र कुत्रापि म्रियेत देहान्ते देवः परमं ब्रह्म तारकं व्याचष्टे येनामृतीभूत्वा सोऽमृतत्वं गच्छतीति अर्थश्च य उपासक इह लोके ह्यातुमपेक्षते इच्छति तस्मै सर्वैश्वर्यं ददाति देवः श्रीनृसिंहः स यत्र कुत्रापि कीकटम्लेच्छदेशादावपि म्रियेत तस्य देहान्ते तु तारकं व्याचष्टे परमं ब्रह्म तारः प्रणवः तत्रस्थं तारकं साम्प्रतं प्रणवे व्याख्यातं परं ब्रह्म कथयतीत्यर्थः येन परब्रह्मकथनेन अमृती भूत्वा सश्रोता अमृतत्वं कैवल्यं प्राप्नोति श्रुत्यन्तरं "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यः" इति अर्थः अयमात्मा प्रवचनादिभिः न लभ्यः न लभ्यते किन्तु यमात्मानमेव उपासकोवृणुते ऽनन्यभावेन भजते तेन शरणेनैव स आत्मा लभ्यो नान्यसाधनान्तरेण यद्वा यमेव भक्तं भक्त्या परितुष्ट एष आत्मा वृणुते आत्मसात्कर्तुमिच्छति तेनैव एष लभ्यते नान्यैरिति भक्तमोक्षपरेयं स्वामिनां—

तपन्तु तापैः प्रपतन्तु पर्वता—<br>
दटन्तु तीर्थानि पठन्तु चागमान् ॥<br>
यजन्तु यागैर्विवदन्तु योगै—<br>
र्हरिं विना नैव मृतिं तरन्ति ॥

सुगमम् ॥ २७—१४ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्र परीत्यस्य टीकायां श्रुतिव्याख्या नेहेति पूर्वं मनसैवानुद्रष्टव्यामित्युक्तं; तत्राहुः—दर्शनविषये ब्रह्मणि नाना नास्ति किञ्चन किञ्चिदपीत्यर्थः वाक्तन्तीति तन्ती रज्जुः वागेव तन्तिरिव तान्तिः तत्संयुक्तानि नामानि दामानीव सितम् अमुकस्त्वमेवं करिष्यसीत्याज्ञया बद्धामित्यर्थः । देहान्त इति य इह ख्यातुमपेक्षते सर्वैश्वर्यं ददाति यत्र कुत्रापि म्रियेत देहान्ते देवः परं ब्रह्मतारकं व्याचष्टे येनामृतीभूत्वा सोऽमृतत्वं गच्छतीति श्रीनृसिंहतापन्यां सुक्तम् अथ स्वव्याख्या तच्छ्रुत्वा काश्चिदन्याः श्रुतयः भक्तिपराः आहुः किन्तेन कृच्छ्रसाध्येन त्वत्प्रेमशून्येन ज्ञानेन तत्फलभूतं परमप्रेममयं त्वत्परिचरणमेव श्रेयः यतस्तवेति अखिलसत्त्वनिकेततया सर्वाश्रयतया सर्वगुणाकराखण्डशुद्धसत्त्वाश्रयतया वा सर्वान्तःकरणाभिनिवेशास्पदतया वा हेतुना ततः परमप्रेम्णा कृतत्वात् तदेव तेषां यद्यपि परमपुरुषार्थः तथाप्यपवर्गश्चानुषङ्गिकतया त्वत्प्रसादेन निर्बोध एव स्यात् पूर्वोक्तज्ञानसाधकानां तु त्वन्मायामयविधिनिषेधलक्षणगिरा स्वाभाविकबन्धो नापयात्येवेत्याहुः—त उतेति पादद्वयेन । उत अपि ते मृत्योः शिरोऽप्यविगणय्य अननुसन्धायैव पदा क्रामन्ति मुच्यन्त इत्यर्थः । अवगणय्येति पाठः क्वचित् विबुधानपि श्रुतिविनिर्णीतपूर्वोक्तज्ञानानपि तान् परिवयसे यतस्त्वयि कृतं सौहृदं तादृशप्रेमसेवेच्छा तद्युक्ता एवात्मानं परञ्च पुनाति न तु ये ततो विमुखास्त

इति तदुक्तं श्रेयःसृतिं भक्तिमुदस्येत्यादि श्रुतयश्च जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ऋचोऽक्षरे परमे व्योमन् यस्मिन्देवा अधिविश्वे निषेदुः यस्तं न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासत इत्याद्याः जुष्टं प्रीत्या सेव्यमानं सन्तं पश्यति तदास्य महिमानं च पश्यन्ननुभवति इति अनेन प्रकारेण वीतशोको भवति ऋच० परमे व्योमन् परव्योमाभिधे महावैकुण्ठे कीदृशे अक्षरे नित्यरूपे यत ऋच इति ऋचःसम्बन्धिनि तत्प्रतिपाद्य इत्यर्थः यस्मिन् परमव्योम्नि देवाः पार्षदादयः इत् इत्थमिति श्रुतिपदार्थः अग्रे च जुष्टत्वमेव दर्शयति यो देवानामधिपो यस्मिँल्लोका अधिश्रिताः य ईशेऽस्य द्विपदश्चतुष्पदस्तस्मै देवाय हविषा विधेम" इति ॥ २७ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एवं भगवत्पराणां प्रभावं भगवद्विमुखानामपकर्षं चाहतवेति । अखिलसत्त्वानां जन्तूनां निकेततया तथाविधसम्बन्धानुसन्धानेन ये तव त्वां परिचरन्ति सेवन्ति जानन्ति ते निर्ऋतेः मृत्योरपि शिरः अविगणय्य अनादृत्य पदा क्रमन्ति पादेनाक्रमन्ति अविबुधान् अज्ञानविवशान् पशूनिव परिचरसे कृपाया रक्षसि गिरा उपदेशेनामानित्वादिना रक्षसीत्यर्थः । पुनन्ति लोकमिति शेषः परिवयसे इतिपाठे तान् गिरा वाचा पशूनिव विबुधान् पण्डितानपि परिवयसे बध्नासीत्यर्थः ॥ २७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नन्विदमात्मविदः सदभिमृशन्तु ततः किमत आहुः—तव परीति । इत्थमिदं सदभिमृशन्त एव मृत्युं तरन्तीति भावः तथा हि अखिलसत्त्वानां सर्वेषां जन्तूनां निकेततया ये तव परिचरणि अखिलान्तरात्मत्वेन त्वां सेवन्ते उपासत इति यावत् त उत त एव निर्ऋतेर्मृत्योः शिरो मूर्द्धानमविगणय्य अनादृत्य पदा पादेन आक्रमन्ति मृत्योर्मूर्ध्नि पदं दधति (तरन्ति) ततो मुच्यन्त इत्यर्थः तर्हीत्थमनभिमृशतां का गतिरित्यत आहुः परिवयस इति अविबुधानितिच्छेदः अविदुषः सार्वात्म्यब्रह्मोपासनरहितान् गिरा शास्त्रात्मकसम्यगुपदेशेन परिवयसे "अयपये" त्यादिदण्डकपरितस्य वयतेर्गतिव्याप्त्योरित्यस्य णयन्तस्य वा इदं रूपं (गत्यर्था बुद्ध्यर्थाः बोधयसीत्यर्थः) अस्य गत्यर्थस्य ज्ञानार्थकत्वात् बोधयसीत्यर्थः । यद्वा परिवयसे गमयसि सन्मार्गं नयसीत्यर्थः । पशूनिव यथा दुर्दमान् पशून्नासिकासूत्रादिभिः सम्यक् शिक्षयन्ति तद्वत् शास्त्रात् त्वामित्थम्भूतं ज्ञात्वा क्रमेणोपासीनाः मुच्यन्त इतिभावः परिवयस इति लट्मध्यमपुरुषेण निरतिशयकृपावत्त्वं सर्वानुजिघृक्षुत्वञ्च सूचितं तर्हि शास्त्रानधिकारिणां का गतिरित्यत आहुः—तानिति । ये त्वयि न विमुखाः वैमुख्यरहिताः अत एव कृतं सौहृदं येस्ते त्वद्भक्तास्तान् अज्ञान् शास्त्राधिकाररहितानपि पुनन्ति भागवतसेवया तेपि मुच्यन्त इति भावः । येषां सत्सेवापि न रोचते तेषामधोगतिरेवेति तात्पर्यम् ॥ २७ ॥

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथैवं भगवत्पराणां प्रभावं भगवद्विमुखानामपकर्षमाह तवेति । अखिलसत्त्वानां जन्तूनां निकेततया तथाविधानुसन्धानेन ये तव त्वां कर्मणिषष्ठी परिचरन्ति सेवन्ते जानन्तीति यावत् "छन्दांसि व्यवहिताश्च" इतिसूत्रेण यच्छब्दव्यवधानेपि दोषः तथाच गीतायां ईश्वरः सर्वभूतानां हृद्देशेऽर्जुनतिष्ठति सर्वस्य चाहं हृदि सन्निविष्टः इति ते उताप्यर्थे मृत्योरपि शिरः अविगणय्य अनादृत्य पदा क्रमन्तिपादेनाक्रमन्ति तथा च वक्ष्यति शुको देवानां भृत्यगण वाक्येन—

"त्वां सेवतां सुरकृता बहवोन्तरायाः—
स्वौको विलङ्घ्य परमं व्रजतां पदं ते ।
नान्यस्य बर्हिषि बलीन् ददतः स्वभागान्—
धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि । इति ॥

अविबुधान् अज्ञान् पशूनिव परिचयसे कृपया रक्षसि गिरा अमानित्वमदम्भित्वमहिंसाक्षान्तिरार्जवमित्याद्युपदेशेन रक्षसीत्यर्थः । त्वयि कृतसौहृदाः खलु पुनन्ति लोकमितिशेषः तथाच भगवद्वाक्यमेकादशे "वाग्गद्गदाद्रवते यस्य चित्तं रुदत्यभीक्ष्णं हसति क्वचिच्च । विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति" इति न ये विमुखा आत्मानमपि पुनन्ति कुतो लोकमिति तदुक्तं सप्तमे प्रह्लादेन—

विप्राद्द्विषड्गुणयुतादरविन्दनाभ—
पादारविन्दविमुखात् श्वपचं वरिष्ठम् ॥
मन्ये तदर्पितमनोवचनेहितार्थः—
प्राणं पुनाति सकुलं न तु भूरिमानः । इति ॥ २७ ॥

---

योगिरामानुजाचार्यकृतसरलाव्याख्या ।

ज्ञानिभ्योपि भगवद्भक्ताः एव परमोत्कृष्टाः इत्याहुः—ये भक्ताः अखिलसत्त्वनिकेततया अखिलानि देवमनुष्यपशुपक्ष्यादीनि सत्त्वानि प्राणिनो निकेतः वासस्थानं यस्य सः तस्य भावः निकेतता तया सर्वप्राणिनां हृदयवर्तित्वप्रकारेण ते इति कर्मणिषष्ठी त्वां परिचरन्ति भजन्ति सर्वप्राणिनां भगवद्वासस्थानत्वेन तेषु द्वेषरहिताः सर्वव्यापकं त्वां ये भजन्तीत्यर्थः । ते भक्ताः अविगणय्य तिरस्कृत्य निर्ऋतेः मृत्योः शिरः मस्तकं पदा पादेनाक्रमन्ति मृत्युं तरन्तीत्यर्थः । उतेति निश्चयार्थः त्वयि कृतं सौहृदं प्रेम यैस्ते खलु इति निश्चये पुनन्ति तादृशभक्ताः खलु स्वानुवर्तिनोपि भक्तिमार्गमुपदिश्य सर्वपापं दूरीकृत्य मुक्तियोग्यान् कुर्वन्तीत्यर्थः । ये तु परमात्मनि विमुखाः ते न पुनन्त्येव स्वयं तरितुमक्षमः इति न्यायेन स्वयमेव मलिनाः कथमन्यान् पुनन्तीत्यर्थः तान् त्वद्भजनविमुखान् विबुधानपि सर्वशास्त्रज्ञानपि त्वद्गिरा वेदरूपवाण्या पशूनिव वयसे तत्तत्कर्मस्वेव बध्नासि यथा पशवः यत्र निबद्धाः तस्मादन्यत्र गन्तुं न शक्नुवन्ति तथा भगवद्विमुखाः अपि त्रैगुण्यविषयवेदवाक्यैः स्वस्वप्रकृत्यनुगुणराजसतामसकर्मस्वेव विश्वासवन्तो तत्रैव निबद्धाः भवन्तीति भावः यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः इत्यादिवचनमत्रानुसन्धेयं भगवद्भजनं विनान्यत्कर्मादिकं मोक्षसाधनं न भवतीति भावः

तदुक्तं यथा—

तपन्तु तापैः प्रपतन्तु पर्वता-
दटन्तु तीर्थानि पठन्तु चागमान् ।
यजन्तु यागैर्विवदन्तु वादै—
र्हरिं विना नैव मृतिं तरन्ति ॥

ये अखिलसत्त्वनिकेततया तव परिचरन्ति ते निर्ऋतेः शिरः अविगणय्य पदा क्रमन्त्युत त्वयि कृतसौहृदाः खलु पुनन्ति ये विमुखाः ते न पुनन्ति विबुधानपि तान् पशूनिव गिरा परिचयसे इत्यन्वयः ॥ २७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मू० ॥ न हि विकृतं त्यजन्ति कनकस्य तदात्मतया स्वकृतमनुप्रविष्ट इदमात्मतया रसितम् । तव ये परिचरन्त्यखिलतत्त्वनिकेततया ननु ते पदाक्रमन्त्यविगणय्य शिरो निर्ऋतेः ॥

"सर्वग ये प्रपश्यन्ति ब्रह्मानन्दमजाक्षरम् एकमेवाद्वयं नित्यं निर्ऋतेस्ते शिरोगताः" इतिश्रुत्यर्थेन प्रथितस्य न हि विकृतमित्यस्य श्लोकस्यायं भावः । यथा कनकस्य विकृतं विविधकृतं कुण्डलादिरूपं कनकं विना परित्यक्तुं न शक्यते नेदं कनकं सर्वमिति तत्र हेतुः तदात्मतयेति । कनकस्वरूपत्वेन प्रमाणसिद्धत्वात् तथा स्वकृतमिदं जगदनुप्रविष्टो भगवान्मूलरूपं विना परित्यक्तुं न शक्यः तत्र हेतुरात्मतयेति एकस्वरूपत्वात् कीदृशं जगत्प्रविष्टः रसितं लसितम् आत्मना प्रकाशितं जगत्प्रविष्टस्तस्मात्सर्वगतो विष्णुरिति ज्ञातव्य इति तात्पर्यार्थः एवंविधज्ञानेन किं प्रयोजनं तदाह तवेति ये तव अखिलतत्त्वानि सर्वपदार्थाः अधिष्ठानतया निकेतनानि अधिष्ठानतया आश्रयो यस्य स तथा तस्य भावस्तत्ता तया स्वरूपं ज्ञात्वा परिचरन्ति पूजयन्ति यद्वा अखिलतत्त्वानां निकेततया ते ज्ञानिनः श्रुतात्मकब्रह्मप्राप्तिविरुद्धत्वान्निर्ऋताख्यस्य संसारस्य शिरः स्फुटं पदाक्रमन्ति ननु किङ्कृत्वा अविगणय्य संसारमिति शेषः आचार्यैरत्र या याः श्रुतयोऽप्यतृपरम्परासिद्धास्तास्ता एवोदाहियन्ते न त्वन्याः स्वाकप्रत्ययार्थं तत्र श्रुत्युक्ताधिकार्थे पुराणानि चोपात्तानि —

"यथैव कुण्डलं त्यक्त्वा नादातुं कनकांशकम् ।
तस्यैव तद्वस्थत्वात्केवलाभेदतः स्फुटम् ।
एवं सुरासुरनरेष्वास्थितो भगवान् हरिः ।
नैव भेदेन मन्तव्यो जीवभेदे तु सत्यपि ॥
ये तथाभिन्नमीशेशं पश्यन्ति परमर्षयः ।
श्रुतप्राप्तिविरुद्धत्वात्संसारनिर्ऋतेः शिरः ॥
अगणय्य पदाक्रम्य वैष्णवं निलयं ययुः । इति ॥

गारुडे ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तच्छ्रुत्वा काश्चिदन्या भक्तिपराः श्रुतय आहुः किन्तेन कृच्छ्रसाध्येन त्वत्प्रेमशून्येन ज्ञानेन तत्फलभूतं परमप्रेममयं त्वत्परिचराणामेव श्रेयः यतस्तव परिचरन्तीति ॥ २७ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

त्वदीयस्य सख्यमुक्त्वा त्वदीयतायां एकान्तभक्तपरत्वे प्रतिपादिते त्वद्भजनमेव सर्वोत्तममिति निर्णीय पुनर्भजनमेवाभिनन्दन्त्य आहुः—तव परीत्यादि । तव चरणारविन्दं ये परिचरन्ति तवेति द्वितीयार्थे षष्ठी ते उत निखिलम् अखिलसत्त्वनिकेततया अखिलप्राण्याश्रयतया विशिष्टाः सन्तः विशेषणे तृतीया ते अविगणय्य अविचारेणैव निर्ऋतेर्मृत्योः शिरः पदा आक्रमन्ति ये पुनर्न भजन्ति त्वयि विमुखास्तान् विबुधानपि देवानपि किम्पुनर्मनुजान् गिरा स्वर्गकामोऽग्निष्टोमेन यजेदित्यादिरूपया वेदरूपया वाचा पाशभूतया परिचयसे ; सर्वतोभावेन बध्नाति वेदतन्तुसन्ताने पशूनिव पशवो; यथा पाशेन बध्यन्ते त्वयि कृतसौहृदास्तु खलु निखिलं पुनन्ति परानपि पवित्रयन्ति भजन्तस्तु मृत्युशिर आक्रमन्ति कृतप्रेमानस्तु सर्वानेव पवित्रयन्ति ननु तदभजतोपि पवित्रयेयुर्नेत्याहुः—स्वयं विमुखाः ये त्वयि विमुखास्ताद् तेपि न पवित्रयन्तीत्यर्थः ॥ २७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भगवति दोषान् परिहृत्य भक्तिमार्गे भगवान् निर्दुष्टो निरूपितः इदानीं फलतो दोषं परिहरन्त्यः भक्तानां दोषं निराकुर्वन्ति तव ये परिचरन्ति उत त एव निर्ऋतेर्मृत्योः शिरः पदा आक्रमन्ति तत्रापि नाज्ञानात् किन्तु ज्ञात्वैवावगणय्य अनेन भगवतो दानं तिष्ठतु सेवामात्रेणैव मृत्योर्जयो भवतीति उक्तं सर्वस्यापि द्वयमभीष्टं दुःखहानिः सुखावाप्तिश्चेति तत्र सुखं भगवतैव सिद्ध्यति नान्यथेति निरूपितं दुःखहानिरपि भगवत्सेवयैव नान्यथेति निरूप्यते दुःखानामवधिर्मृत्युः स कर्मानुसारेण प्राणिभ्यो दुःखं प्रयच्छति सर्वकर्मापेक्षयापि दुःखदातुरयं महांश्चातिक्रमः शिरोमर्दनरूपः बह्वेव दुःखं प्रयच्छति तदपि चैतेषां भगवद्भजनसाधनं ततः कुतस्तेषां दुःखं स्पष्टमेव मृत्योर्मूर्ध्नि पददानं ध्रुवं निरूपितं ये हि निरन्तरं सेवां कुर्वन्ति ते सेवार्थं वैकुण्ठेऽप्यपेक्ष्यन्त इति देहान्तरादिनिर्माणे कदाचित् संस्कारनाशो विलम्बश्च भवेदिति तदेव शरीरं गृहीत्वा ते सेवार्थं द्रुतं गच्छन्ति तदा मध्ये प्रतिबन्धकत्वेन मृत्युश्चेदायाति तदा तं दृष्ट्वा अभीता एव तस्यावगणनां कृत्वा आरोहणं निःश्रेणिकामिव तच्छिरस आक्रमणं कुर्वन्ति मृत्योः शिरो महासाहसानि तेषां करणं शिरसोऽधिरोहणम् आधिभौतिकव्यवस्थैषा आध्यात्मिके तु देहदैहिकवैदिकादिधर्मान् सर्वानुल्लङ्घ्य विरुद्धानपि कृत्वा भगवत्सेवां कुर्वन्ति इत्यर्थः । सेवायां विशेषमाह–अखिलसत्त्वनिकेततयेति । बहिर्मुखानां सेवा निवारिता अखिलसत्त्वेषु निकेतः स्थानं यस्य सर्वत्र भगवानस्तीति ज्ञात्वा सर्वाविरोधेन ये परिचरन्तीत्यर्थः सर्वे तद्धिरण्यमीक्ष्यध्वमेवं वस्तोषितां धाम्नाधिति वाक्यात् तथा दर्शनमपि तोषहेतुर्भवति अन्यथा दोषश्रवणाच्च कुरुतेऽविधिज्ञयजनं भस्मन्येव जुहोति स इत्यादिवत् तवेति षष्ठ्या त्वत्सम्बन्धिनं पदार्थं यं कञ्चन परिचरन्ति परं सर्वात्मभावोपेक्ष्यते मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति इति भेददर्शन एव मृत्युप्राप्तिकथनात् ननु सर्वातिक्रमे कथं दोषो न स्यात् तेषां वा कोऽर्थः धर्मरक्षकाणां तत्राहुः परिचयस इति तान् प्रनिष्ठानपि विबुधान् पशूनिव परिचयसे बध्नासि यत्र स्वस्वामी मृत्योरपि श्रेष्ठान् देवान् बध्नाति तत्र तत्सेवकानां मृत्योरवगणनायां का शङ्केत्यर्थः किञ्च गिरा भगवान् बध्नाति साक्षात्तु बन्धनं तत्सेवका एव कुर्वन्ति यथा राजाज्ञया राजसेवका बध्नन्ति तेषां तदतिक्रमः अभ्यासप्राप्त इति न शङ्कामुत्पादयति किञ्च पशूनिवेति यथा पशवः शकटादिषु योजनार्थं निरूप्यन्ते तत्र सेवका एव निरूपकाः तान् भगवत्सेवायां योजयन्ति अतः सेवां प्राप्य कृतार्था एव ते भविष्यन्तीति न तेषाङ्कोपि मनःक्लेशः अतः सेवकानां देवापेक्षयाप्युत्कर्षो निरूपितः ननु तथापि सेवकानाममर्यादत्वात् निन्दितत्वमशुद्धत्वं च स्यादित्याशङ्क्याह—त्वयि कृतसौहृदा इति त्वय्येव च कृतसौहृदाः जगत्पुनन्ति न तु तपस्विनोऽन्ये वा धार्मिकाः यतस्त्वयि विमुखाः अयमर्थः शुद्धिर्द्विधा दोषनिर्हरणात्मिका गुणाधानकर्त्री च तत्र गुणानामुत्कर्षः भगवत्सेवावधिः "यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्वैर्गुणैस्तत्र समासते सुराः" इत्यत्र निरूपितं दोषाणामवधिर्भगवद्द्वेषिता—

"ब्रह्महत्यासहस्रस्य पापं शाम्येत्कथञ्चन ।
न पुनस्तद्द्वेषजाते कल्पकोटिशतैरपि ॥

इति वाक्यात् ततश्च ये गुणवन्तो भवन्ति तैरेव गुणलेशैः निवर्तितदोषाभासाश्च त एवान्येषां दोषान् दूरीकृत्य गुणाधाने समर्था भवन्ति ननु ये दोषपूर्णास्तदंशैरेव निवर्तित सर्वगुणाः ते शुद्धिं कर्तुं शक्नुवन्तीत्यर्थः । जडिवति प्रमाणम् ॥ २७ ॥

सर्वथा सर्वतः शुद्धा भक्ता एव न चापरे ।
अतः शुद्धिमभीप्सद्भिः सेव्या भक्ता न चापरे ॥१४॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पूर्वस्मिन् श्लोकद्वये परमपुरुषार्थनिरूपणमधिकृत्य 'असदुत्पत्तिवादिनः सद्विनाशवादिनः सत्त्वभेदवादिनः 'विपणवादिनः विवर्त्तवादिनः इत्येवं पञ्चवादिन उक्ताः अत्र श्लोके तु परिचर्यावादिन उच्यन्ते एषां वैष्णवानां मते जीवाः खलु चित्कणः अल्पज्ञोऽल्पव्यापीऽस्वतन्त्रो निर्गुण एव ; तस्य संसारदुःखनिवृत्तये भगवत्प्राप्तये च भक्तिरेव स्वतो नान्यो ज्ञानादिकः कोऽप्युपायः—

"दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति ॥

भक्त्याहमेकया ग्राह्य इति च भगवदुक्तेस्तद्भक्तिरेवोपायो दुरवगमात्मेत्याद्यस्मदुक्तेश्च सैवोपेयः परमपुरुषार्थ इति वैष्णवमतस्यैव सर्वमतेषु मध्ये श्रेष्ठत्वं प्रतिपादयन्त्यो वैष्णवानेवोत्कर्षयन्त्योऽन्यान् सर्वानेव वादिन आक्षिपन्ति—तवेति । द्वितीयार्थे त्वां ये परिचरन्ति "कस्य सि व्यवहिताश्च" इतिवत्सर्वेषामखिलानां लोकानां सत्त्वं निकेतनमेव निकेत आश्रयो येषां तेऽखिलसत्त्वनिकेतास्तेषां भावस्तया तत्रोक्त

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

कल्पिताः सत्यं ह्येवं विश्वमसृजतेति माध्वभाष्यप्रमाणितश्रुतेः प्रधानपुरुष्यां नरदेव सत्यकादिति सप्तमोकेश्च द्वैतप्रपञ्चस्य सत्यत्व-मिति मतमाश्रित्य वर्त्तमाना इत्यर्थः। श्लेषेण खिलं निकृष्ट-मशुद्धम् अखिलं श्रेष्ठं शुद्धं यत् सत्त्वं तदेव निकेतो वैकुण्ठादि धाम यस्य तत्तया उपलक्षितं त्वामित्यर्थः। ते उत ते एव अविगणय्य तिरस्कृत्य निर्ऋतेर्मृत्योः शिरः पदा स्वपादेन आक्रमन्ति अवहेलामात्रेणैव संसारं तरन्तीत्यर्थः। ननु पूर्वे वादिनोऽपि श्रुत्युक्तज्ञानाद्युपायेन तरन्त्येव तत्र नेत्याहुः परिवयसे इति। गिरा तत्तन्मतप्रतिपादकया वेदवाचैव "असतो मनोऽधि-सृज्यत मनः प्रजापतिमसृजत" इत्यादिकया रज्वा तान् विशिष्टबुधान् दार्शनिकानपि पशूनिव बध्नासि न च सोप-पत्तिकं वक्तुमपारयन्तो वैष्णवा एव न ज्ञानवन्त इति वाच्यम् यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इति श्रुतेस्त एव सम्यक् ज्ञानवन्तो ज्ञेयाः तस्मात्त्वयि कृतं सौहृदं प्रेम यैस्ते खलु निश्चितं पुनन्ति स्वयं पूताः अन्यानपि स्वोपदेश्यान् पवित्रयन्तीत्यर्थः ये विमुखाः अभक्तास्ते तु न तत्र "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् तं पीठगं येनु यजन्ति विप्रा-स्तेषां सिद्धिः शाश्वती नेतरेषाम्" इति "जुष्टं यदापश्यत्यन्यमीश-महिमानमिति वीत शोकः ऋचोऽक्षरे परमे व्योमन् यस्मिन् देवा अधिविश्वे निषेदुः" इत्याद्याः अर्थश्च यदा स्वेन जुष्टं प्रीत्या सेव्य-मानं पश्यति तदास्य महिमानं च पश्यत्यनुभवति इति अनेन प्रकारेण वीतशोको जितमृत्युर्भवति कुत्र परमे व्योमन् परमव्योमाभिधे महावैकुण्ठे अक्षरे नित्यरूपे ऋच इति ऋच-स्तस्सम्बन्धिधाम तत्प्रतिपाद्य इत्यर्थः यस्मिन् देवाः पार्षदाः विश्वे सर्वे अधिनिषेदुरधिरूढाः ॥ २७ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

भगवद्भक्ता ह्यनन्यशरणा एव तत्प्रसादेन तरन्तीत्यन्वयव्यति-रेकाभ्यां प्रतिपादयन्त्यो वाक्यश्रवणान्मुक्तिं जल्पन्त्योऽज्ञान परि-हसन्ति श्रुतयः शृण्वन्तोऽपि बहवो यं न विद्युः यमेवैष वृणुते तेन लभ्यः तमक्रतुं पश्यति वीतशोको धातुः प्रसा-दान्महिमानमीशं तपःप्रभावाद्देव प्रसादाच्च ब्रह्म ह श्वेताश्व-तरो ऽथ विद्वानित्यादयः ये जनास्तवेति कर्मणि षष्ठी त्वां परिचरन्ति सेवन्ते अखिलसत्त्वनिकेततया सर्वसत्त्वाधिष्ठानतया वस्त्रा अखिलसत्त्वान्तर्यामितया उभयथापि नारायणं त्वां ये पूजयन्ति ते एव निर्ऋतेः शिरः पदा आक्रमन्ति ताडयन्ति तुच्छीकुर्वन्तीत्यर्थः तथा च श्रुतिः सर्वगेयं प्रपश्यन्ति ब्रह्मा-नन्दमजाक्षरम् एकमेवाद्वयं नित्यं निर्ऋतेस्ते शिरोगताः" इति अन्वयमुक्त्वा व्यतिरेकमाह अभक्तांस्तु विबुधानपि श्रवणादौ कुशलानपि कालरूपस्त्वं गिरा वयं कुशला इति तेषां गिरा बध्नासि अत्र दृष्टान्तः पशूनिव यथा क्रोशतोऽपि पशून् पशुघ्राः बध्नन्ति तथा वेदवाक्योच्चारणकुशलानपि परिवयसे इत्यर्थः तथा च श्रुतिः वयति गा इव यः सुरादिकांस्तन्मनसो जगद्-गुरुम् श्रेयो न परे इत्यादि ननु तर्हि श्रोतव्य इत्यादि श्रुते-र्वैयर्थ्यापत्तिरिति चेन्न श्रुत्वापि भगवत् पराङ्मुखस्य तत्‌ कृपा-कटाक्षेणानवलोकितस्य भगवत्स्वरूपादिप्रकाशाभावेन संसारा-निवृत्तेर्हेतोः तत्रैव निदिध्यासितव्य इति वाक्यशेषे ध्यानात् श्रव-णादेश्च ध्यानसापेक्षत्वेन सार्थक्यमेव अत्र तु शृण्वन्तोऽपि बहव इत्यस्मिन् वाक्ये स्पष्ट एव कण्ठरवेण पठित इत्यर्थः एतदेव स्पष्टयति त्वयि कृतसौहृदाः खल्वित्यवधारणे पुनन्ति ये विमुखाः श्रवणादिसाधनैर्लोकदृष्टौ युक्ता अपि न पुनन्त्या-त्मानं कुतोऽन्यमिति अनेन भगवत्प्रसादस्य निरपेक्षत्वं तदन्य-साधनजातस्य तत्प्रसादसापेक्षत्वं च दर्शितं मन्तव्यम् आह च भगवान् सनत्सुजातः—

नैनं सामान्यृचो वापि न यजूंष्यविचक्षणम्।
त्रायन्ते कर्मणः पापान्न ते मिथ्या ब्रवीम्यहम्॥

न छन्दांसि वृजिनात्तारयन्ति मायाविनं मायया वर्तमानं नीडं शकुन्ता इव जातपक्षाः छन्दांस्येनं प्रजहन्त्यन्तकाले अविचक्षणं वाक्यार्थादौ कुशलमपि भगवत्पराङ्मुखं एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम्। यत्सत्यमनृतेनेह मर्त्येनाप्नोति मामृतम्। व्यवसायात्मिका बुद्धिरेकेह कुरुन-न्दन" इत्यादि भगवदुक्तं प्रज्ञाहीनं अत एव मायाविनं भगवति कप-टाचारिणं ममाविद्याकल्पितेनियन्ता भगवानीश्वरः ननु वस्तुतो मदन्योऽस्ति किञ्चाहमेवेश्वर इति निष्ठालक्षणा माया विद्यते तस्य तं तथा च श्रीभगवानाह स्वयमेव—

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।
ईश्वरोऽहमहम्भोगी सिद्धोऽहं बलवान् सुखी॥

इत्यादिना एवम्भूतं स्वतन्त्रवादिनं वेदचतुष्टयवाक्यानि न हि पुनन्ति अर्थवादशङ्कां निरासयति नतं मिथ्येति किन्तु अन्त-काले प्राणत्यागसमये एवं वाक्यकौशल्यज्ञापकं त्यजन्ति तत्र दृष्टान्तः नीडमित्यादि इति स्मृत्यर्थः ॥ २७—१४ ॥

———

भाषा टीका।

अन्तरात्मा होने से परमात्मा अखिल प्राणियों का आधार है इस भावना से जो आपकी उपासना करते हैं वे हि मृत्यु के मस्तक का अनादर कर निज चरण से उसके शिरको दवाय देते हैं अर्थात् मृत्यु के शिर पर चरण धरकर संसार समुद्र को तिरजाते हैं और उप-रोक्त भावना से जो उपासना नहि करते उनको जैसे बैलों की नासिका में नाथ डालकर उनकी शिक्षा करते हैं तैसे हि आप वेद वाणी से बोध कराते हो इस वास्ते वे शास्त्राधिकारी जन आपको शास्त्र द्वारा जानकर क्रमसे उपासना करते भए संसार से छूटजाते हैं और जो आपसे विमुख नहि हैं आपके विषय में जिन्होंने भक्ति करी है एतादृश उपासक जन जिनको वेदशास्त्र में अधिकार नहि है उनके भी अपने सहवास से पवित्र कर-देते हैं अर्थात् वेदशास्त्र के अधिकार शून्य स्त्री शुद्र आदि कभी वेद शास्त्राधिकारि परमात्मा के भक्त की सेवा करने से संसार से छूटजाते हैं ॥ २७ ॥

———

(१) त्वमकरणः स्वराडखिलकारकशक्तिधरस्तव बलिमुद्वहन्ति समदन्त्यजयाऽनिमिषाः ।
वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो विदधति यत्र ये त्वधिकृता भवतश्चकिताः ॥ २८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका

ननु यद्यखिलसत्त्वनिकेतनत्वेन भवतः सेव्यत्वमुच्यते तर्हि तत्करणसम्बन्धात्कर्तृत्वभोक्तृत्वे प्रसज्येयाताम् न वस्तुतस्तथात्वमिति चेत्तर्हि जीवानामपि तत्तुल्यत्वमिति केन विशेषेण पुनः सेव्यसेवकत्वमितीमामाशङ्कां परिहरन्त्यः 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्य वेत्ता तमाहुरग्र्यं पुरुषं पुराणम्' ॥ इत्याद्याः श्रुतयः स्तुवन्तीत्याह—त्वमकरण इति । करणसम्बन्धरहित एवाखिलकारकशक्तिधरः अखिलानां प्राणिनां यानि कारकाणीन्द्रियाणि तेषां शक्तीर्धारयतीति तथा कुतः स्वराट् यतः स्वेनैव राजसे दीप्यसे नहि स्वतःसिद्धज्ञानशक्तेरिन्द्रियापेक्षेत्यर्थः अतस्तव बलिमुद्वहन्ति पूजां कुर्वन्ति अजया अविद्यया सहितास्तया वृता इत्यर्थः । अनिमिषा देवा इन्द्रादयस्तत्पूज्या विश्वसृजो ब्रह्मादयोऽपि यथा सस्त्रीका एव किङ्कराः स्वामिनं सेवन्ते तथाऽविद्यायुक्ता देवादयस्त्वामिति लोकोक्तिः समदन्ति च मनुष्यैर्दत्तं हव्यकव्यादिलक्षणं बलिं भक्षयन्ति अत्र दृष्टान्तः वर्षभुजोऽखिलक्षितिपतेरिवेति यथा वर्षभुजः खण्डमण्डलपतयोऽखिलक्षितिपतेर्महामण्डलेश्वरस्य स्वप्रजादत्तबलिभुजो बलिमुद्वहन्ति तद्वदिति कथं बलिं वहन्ति तत्राह विदधति यत्र ये त्वधिकृता भवतश्चकिता इति त्वत्तो भीताः सन्तो यस्मिन् कर्मणि नियुक्तास्ते तत्कुर्वन्तीति त्वदाज्ञापालनमेव बल्युद्वहनमित्यर्थः । तथाच श्रुतिः "भीषास्माद्वातः पवते भीषोदेति सूर्यः भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम इति । २८॥

अनिन्द्रियोऽपि यो देवः सर्वकारकशक्तिधृक् ।
सर्वज्ञः सर्वकर्ता च सर्वसेव्यं नमामि तम् ॥ १५ ॥

---

### श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

तथात्वं कर्तृत्वभोक्तृत्वं तद्वास्तवकर्तृत्वभोक्तृत्वराहित्यं जीवानामपि तुल्यमीश्वरसममेवेति हेतोः केनोत्कर्षेणेश्वरस्य सेव्यत्वं केन चापकर्षेण जीवस्य सेवकत्वमित्यर्थः । अपाणीति यथा जीवः पाणिपाद्युपाध्याद्यासक्तस्तथान्तर्यामिरूपेण पाण्याद्युपाधौ प्रविष्टोऽप्यनासक्त इत्यर्थः । जवनः वेगवान् व्यापकत्वाद्वेगसम्भवेऽपि अन्येषां वेगशक्तिसम्पादकत्वाद्वेगशक्तिमानित्यर्थः । गृहीता सर्वस्य धारकः अन्येषां धारणशक्तिप्रदश्चेति इतरकर्मेन्द्रियोपलक्षणं तथा चक्षुरादि ज्ञानेन्द्रियशून्योऽपि पश्यति स्वरूपज्ञानेन साार्वत्रिकं सार्वकालिकमपि वस्तु पश्यतीत्यर्थः । एवं शृणोतीत्यपि वेद्यं ज्ञेयं सार्वत्रिकं सार्वकालिकमपि सर्वं जडवस्तु स ईश्वरो वेत्ति स्वरूपज्ञानेन पश्यतीत्यर्थः । सर्वस्य जडत्वाज्जीवस्य च तत्प्रकाश्यत्वात्तस्य वेत्ता नास्ति तं पुराणं पुरापि नवं सनातनमित्यर्थः "अग्र्यं श्रेष्ठं पुरुषं पुरुषोत्तममित्यर्थः । तदुक्तं गीतायां । यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम इति । यतस्तवोपास्यत्वप्रयोजकोऽन्तर्यामित्वस्वप्रकाशत्वादिलक्षणो महान् विशेषोऽस्ति अतः उपासकास्तव बलिमुद्वहन्ति । अत्र इन्द्रादीनामीश्वरबलिवहने स्वप्रजादत्तबल्यदने च दृष्टान्त इति तदाह । तस्मिन् बलिवहने प्रकारमाहेत्यर्थः । तथाच श्रुतिः । आज्ञापालने प्रमाणं स्तुतिरित्यर्थः । भीषेति भीत्येत्यर्थः पवते वातीति ॥ २८ ॥

---

### श्रीकविचूडामणिचक्रवर्त्तिकृतान्वयबोधिनी ।

ननु, यद्यखिलसत्त्वनिकेतनत्वेन भगवतः सेव्यत्वमुच्यते तर्हि तत्तत्करणसम्बधात् कर्तृत्वभोक्तृत्वे प्रसज्येयातां न वस्तुतः तथात्वमिति चेत् तर्हि जीवानामपि तत्तुल्यत्वमिति केन विशेषेण पुनः सेव्यसेवकत्वमितीमामाशङ्कां परिहरन्त्यः स्तुवन्तीत्याह त्वमकरण इति । करणानीन्द्रियाणि करणसम्बन्धरहितोऽपि अखिलकारकशक्तिधरोऽसि अखिलानां प्राणिनां यानि कारकाणि इन्द्रियाणि तेषां शक्तीर्धारयति प्रवर्तयतीति तथा कुतः स्वराट् स्वेनैव राजते नहि स्वतः सिद्धज्ञानशक्तेरिन्द्रियापेक्षेत्यर्थः अतो हेतोरनिमिषा इन्द्रादिदेवाः विश्वसृजो ब्रह्मादयोऽपि अजया अविद्यया युक्ताः सन्तः तव बलिमुद्वहन्ति पूजां कुर्वन्ति मनुष्यैर्दत्तं हव्यकव्यादिलक्षणं बलिं स्वयं समदन्ति भक्षयन्ति च अत्र दृष्टान्तः वर्षभुज इति । यथा वर्षभुजः खण्डमण्डलपतयः अखिलक्षितिपतेः महामण्डलेश्वरस्य प्रजादत्तं बलिं करमुद्वहन्ति स्वयमदन्ति च तद्वत् कथं बलिं वहन्ति च तत्राह विदधतीति । यत्र कर्मणि येऽधिकृता नियुक्ताः तत्र ते स्थिताः भवतश्चकितास्त्वत्तो भीताः सन्तस्तत्कर्म विदधति कुर्वन्ति त्वदाज्ञापालनमेव बलिवहनमित्यर्थः त्वमकरण इत्यत्र श्रुतिः "अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः स वेत्ति वेद्यं न च तस्य वेत्ता तमाहुरग्र्यं पुरुषं पुराणमिति सुगमं अखिलकारकशक्तिधर इत्यस्य श्रुतिः "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुस्ते निचिक्युर्ब्रह्मपुराणमग्र्यम्" इति पुरुषस्यातर्क्यशक्तित्वकथनपरेयं भवतश्चकिता इत्यस्य श्रुतिः 'भीषास्माद्वातः पवते भीषोदेति सूर्यः भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम इति" अर्थः अस्मादीश्वराद्भीषा भीत्या वायुः पवते वातीत्यर्थः तथा सूर्य उदेति अग्निर्ज्वलति इन्द्रो वृष्ट्यादिना पालयति मृत्युः स्वकालवशं प्राप्तानेव प्राणिनो नयन् सर्वत्र धावति यद्यपि पञ्चानामग्रहणं तथापि तत्तदधिनानेव ब्रह्मादीनामपि ग्रहणं ज्ञेयं सर्वेश्वरत्वकथनपरेयं स्वामिनां—

अनिन्द्रियोऽपि यो देवः सर्वकारकशक्तिधृक् ।
सर्वज्ञः सर्वकर्त्ता च सर्वसेव्यो नमामि तम् ॥

तं नमामि सः कः अनिन्द्रियोऽपि यः सर्वकारकशक्तिधृक् सर्वेषां कारकाणामिन्द्रियाणां शक्तीर्धरतीति तथा तम् ॥ २८—१५ ॥

---

(१) त्वमकरणः इति वीर० पाठः ।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

त्वमकरण इत्यस्य टीकायां अपाणीति यथा जीवस्त्वङ्गुपाद्यावासकस्तथा अन्तर्यामित्वेन तत्र प्रविश्याप्यनामक इत्यर्थः एवमुत्तरत्रापि जवनः विभुत्वाज्जवासम्भवेपि तच्छक्तिधारकत्वात् तच्छक्तिमानित्यर्थः । ग्रहीता सर्वधारकत्वात् धारणाशक्तिहेतुत्वाच्च पश्यति स्वरूपज्ञानेन सार्वविदं सार्वत्रिकमपि पश्यतीत्यर्थः। एवं शृणोतीत्यपि भीषेमि भीत्यर्थः पवते वातीति स्वव्याख्यायान्तु अन्यास्तदेव पुष्णन्त्य आहुः—त्वमिति । अकरणः सूत्रधारो कुलालादिवत्पृथक्कसाधनरहितो ऽत एव क्रियारहितश्च ब्रह्मादिजीवेन्द्रियप्रवर्त्तनलीलायां तदिन्द्रियसम्बन्धरहितः स्वतः स्थितौ तत्तत्पृथगिन्द्रियरहितोपि त्वं स्वरूपतत्तत्करणपराद्यतिक्रमिपरमातिपरमशक्तितया प्रादुर्भावभेदेन सङ्ख्यातश्चानन्ततया अखिलानि यानि कारकाणि करणानि तानि तथा सर्वतः पाणिपादं तदितिन्यायेन कदाचित्तत्र तत्र तादृशानिजकरणप्राकट्यरहितोपि तत्तदर्थं तत्तच्छक्तीर्धरसि बिभर्षि तथा यथा योग्यांस्तत्तद्दशाभासांस्तत्र तत्र प्रापयसि चेति तथाभूत इत्यर्थः। कथं स्वराट् अचिन्त्यशक्तिमत्त्वेन स्वेनैव तथा तथा राजसे इति अतो जीवकरणानामिव तव करणानां तदधीनप्रकाशत्वाभावात् प्रत्युत तत्करणानां तदधीनत्वादनिमिषा ब्रह्मादयस्तव बलिमुद्वहन्ति सन्तुष्ट से तेषामधिकारिणी माया च तथेत्याहुः अजयेति सहार्थे तृतीया शेषं तैर्व्याख्यातम अतः साधूक्तं पूर्वाभिः तव परिचरन्तीति भावः श्रुतयश्चात्र न तस्य कार्य्यमित्याद्यनुगता एव अपाणिपाद इत्याद्याः ॥ २८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

भगवतः सर्वप्रशास्तृत्वमुच्यते-त्वमकरण इति। त्वरकरण इति पाठे हे विभो! त्वरं शीघ्रं सङ्कल्पमात्रेण करोतीति त्वरकरणः स्वराट् स्वतन्त्रः अखिलकारकशक्तिधर निमित्तोपादानादिसर्वकारकशक्तिधरः शमदाऽया दुःखप्रशामदायिन्या अजाशब्दाभिहतया प्रकृत्या परतन्त्रा अनिमिषाः देवास्तव बलिमुद्वहन्ति, वर्षभुजः भारतादिवर्षभोक्तारः विश्वसृजः प्राजापत्यादयो देवाः यत्र पदे येऽधिकृताः तत्र स्थिता त भवदाज्ञाभीताः बलिमुद्वहन्तीत्यन्वयः ॥ २८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

ननु, सर्वकारणत्वाभ्मदनन्यत्वेनाभिमृशन्त एव मृत्योः शिरः पादेनाक्रमन्तीति सत्यं यदि कारणत्वोपास्यत्वनियतसार्वज्ञसर्वशक्तित्वपरत्वादिगुणपौष्कल्यं स्यादित्यपेक्षायां तत्पौष्कल्यमाहुः-त्वमिति। अरं शीघ्रं सङ्कल्पमात्रेण करोतीत्यरकरः सङ्कल्पमात्रपरिक्लृप्तविश्वः जगत्सर्गोपादकसङ्कल्पात्मकज्ञानाश्रय इति यावत् अनेन सार्वज्ञ्यं फलितं त्वमकरण इति पाठे करणाद्यत्तज्ञानरहति;"पश्यत्यचक्षुः स शृणोत्यकर्णः न तस्य कार्यं करणं च विद्यते इति हि श्रुतिः कार्यं शरीरं करणम् इन्द्रियञ्च न विद्यते प्राकृतशरीरेन्द्रियतदायत्तज्ञानरहितः नित्यनिरुपाधिकसार्वज्ञ्याश्रय इति तदर्थः सार्वज्ञ्यस्य निरुपाधिकत्वस्फुरणाय स्वराडित्युक्तं स्वराट् स्वतन्त्रः अकर्मवश्यः कर्मवश्यानां प्रेरकश्च स्वातन्त्र्यस्य सप्रतियोगिकत्वात् अखिलकारकशक्तिधरः निमित्तोपादानकारणसम्प्रदानोपादानाधिकरणात्मकानि कारकाणि तच्छक्तीश्च धरतीति तथा सकलकारकतच्छक्तिनिर्वाहक इत्यर्थः। अथ परत्वमाहुः-तवेत्यादिना। अजया अजाशब्दाभिधया प्रकृत्या सहिता इति शेषः प्रकृतिपरतन्त्राः अनिमिषा देवाः वायुसूर्याग्नीन्द्रादयः विश्वसृजः प्रजापतयश्च ये ये यत्र यत्र व्यपाश्रयेऽधिकृतास्ते सर्वे भवतश्चकिताः भीताः सन्तः तव बलिं स्वस्वाधिकारानुवर्त्तनात्मिकां पूजामुद्वहन्ति विदधति समर्पयन्ति त्वया दत्तान भोगाननुभवन्ति च यथा वर्षभुजो भारतादिवर्षभोक्तारः अखिलक्षितिपतेः सार्वभौमस्य बलिं विदधति तद्वत् "अत्र भीषास्माद्वातः पवते भीषोदेति सूर्यः भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः' इति 'भयादस्याग्निस्तपति भयात्तपति सूर्यः भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतं महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति" इति श्रुत्यर्थोऽनुसन्धेयः प्राणशब्दनिर्दिष्टे परमात्मनि स्थितानां सर्वेषां ततो निःसृतानां तस्मात्सञ्जात महाभयनिमित्तमेजनं कम्पनमस्ति तच्छासनानिवृत्तौ किं भविष्यतीति महतो भयाद्वज्रादिवोद्यतात् कृत्स्नं जगत्कम्पते इति तदर्थः महद्भयं वज्रमुद्यतमिति पञ्चम्यर्थे प्रथमा ॥ २८ ॥

---

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका।

अथ भगवतः सर्वप्रशासितृत्वमाह— त्वरकरणइति विवस्वातः कारकाणि भवन्तीति न्यायादतिसौकर्यात्कर्तर्यपि ल्युट् अथवा कृत्यल्युटोबहुलमिति बहुलग्रहणात्कर्त्तरि ल्युट् हे विभो त्वरं शीघ्रं सङ्कल्पमात्रेण करोतीति त्वरकरणः तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजतेत्यादिश्रुतेः तथा च वैष्णवे पुराणे पराशरेणोक्तं—

"समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशोद्धृतभूतसर्गः।

इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥

इति त्वमकरण इतिपाठे तु प्राकृतकरणरहितः "आदित्यवर्णं तमसः परस्तादिति श्रुतेः सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः" इति स्मृतेश्च स्वराट् स्वतन्त्रः सर्वस्य वशी सर्वस्येशानः इत्यादिश्रुतेः अखिलकारकशक्तिधरः निमित्तोपादानादिसर्वकारकशक्तिधरः अनन्तशक्तित्वात् "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी"इत्यादिश्रुतेः। शमदाऽया दुःखप्रशमदायिन्या अजाशब्दाभिहितया प्रकृत्या परतन्त्राः दुःखप्रशमदायित्वं तु प्रकृतिपरिणामभूतशरीरद्वारा भगवदाराधनोपयोगितया इति तया परवशा अनिमिषा देवास्तव बलिमुद्वहन्ति त्वदाज्ञां परिपालयन्ति अखिलक्षितिपतेश्चक्रवर्तिनः वर्षभुजः भारतादिवर्षभोक्तार इव विश्वसृजः प्राजापत्यादयो देवाः यत्र यस्मिन् पदे ये अधिकृताः स्थापितास्तत्र स्थितास्ते भवदाज्ञाभीता बलिमुद्वहन्तीत्यन्वयः त्वदाज्ञापरिपालनमेव बल्युद्वहनं न त्वन्यत् अवाप्तसमस्तकामत्वात् "भीषास्माद्वातः पवते भीषोदेति सूर्यः भीषादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः "इत्यादिश्रुतेः उपबृंहिता चेयं श्रुतिस्तृतीये भगवता कपिलेन—

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

मद्भयाद्वाति वातोयं सूर्यस्तपति मद्भयात् ।
वर्षतीन्द्रो दहत्यग्निर्मृत्युर्धावति मद्भयात् ॥

इति ॥ २८ ॥

---

### योगिरामानुजाचार्यकृतसरलाख्याख्या ।

ब्रह्मादयोपि त्वां भजन्ति त्वदाज्ञां पालयन्ति चेत्याहुः त्वमिति—त्वमकरणः देहेन्द्रियादिरहितः अखिलकारकशक्तिधरः देहेन्द्रियादिरहितत्वेपि सर्वकार्यकरणसमर्थः इत्यर्थः अपाणिपादो जवनो गृहीता पश्यत्यचक्षुस्सशृणोत्यकर्णः स वेत्ति वेद्यं न च तस्य वेत्ता तमाहुरग्र्यं पुरुषं पुराण" मिति श्रुतेः परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञान बलक्रियाच्च तिच श्रुतिः यतः स्वराट् स्वेनैव राजते दीप्यते इति स्वराट् स्वतस्सिद्धज्ञानशक्तिमान् अतः इन्द्रियादीनां नापेक्षत्यर्थः । अतः अजया प्रकृत्या दारपुत्रादिविभवादिरूपया सहिता अनिमिषाः देवाः इन्द्रादयः विश्वसृजः ब्रह्मादयोपि वर्षभुजः मण्डलाधिपतयः अखिलक्षितिपतेरिव सर्वभूमीश्वरस्यैव तव सर्वनियामकस्य तव बलिं आज्ञापरिपालनरूपां पूजां उद्वहन्ति शिरसि धारयन्ति आदरेण कुर्वन्तीत्यर्थः समदन्ति च मनुजैर्दत्तं हव्यकव्यादिरूपं बलिं स्वयमपि भक्षयन्ति कथं बलिमुद्वहन्ति तत्स्वरूपमाह यत्रेति यत्र यस्मिन् कर्मणि ये इन्द्रादयः अधिकृताः नियुक्ताः भवतस्सकाशात् चकिता भीतास्सन्तः तदाज्ञप्तं कार्यं कुर्वन्ति त्वदाज्ञापालनमेव बल्युद्वहनमित्यर्थः तथाच श्रुतिः भीषास्माद्वातः पवते भीषोदेति सूर्यः भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः इति त्वमकरणः अखिलकारकशक्तिधरः स्वराट् अजया सहिताः अनिमिषाः विश्वसृजश्च वर्षभुजः अखिलक्षितिपतेरिव तव बलिमुद्वहन्ति समदन्ति च येतु यत्राधिकृताः ते भवतश्चकितास्सन्तः तत्विदधति इत्यन्वयः ॥ २८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मू० ॥ परिवयसे पशूनिव गिरा विबुधानपि तांस्त्वयि दृढसौहृदा ननु पुनन्ति न ते विमुखाः । त्वमेकः स्वराडखिलकारकशक्तिधरस्तव बलिमुद्वहन्ति समदन्ति च येऽनिमिषाः ॥ १५ ॥ २९ ॥

परिवयस इति श्लोकस्यार्थ भावः ये ते देवास्त्वत्पादैकाश्रयास्तान्विबुधानपि गिरा वैदिकवाचा परिवयसे परितो बध्नासि वेदोक्तकर्मानुष्ठानेन प्रवर्त्तयस इत्यर्थः । " वय बन्धने " इति धातोः कानिव दाम्ना पशूनिव त्वयि दृढसौहृदाः गाढबद्धस्नेहपाशाः पुरुषाः पुनन्ति ननु जगदिति शेषः ते तव विमुखाः द्वेषिणो न पुनन्ति प्रत्युत मलीमसं कुर्वन्तीति शेषः । अनेन वयति गा इव यः सुरादिकांस्तन्मनसो जगत्पुनन् शुचयो न परे इति विवृतं कुतः शुद्धिरपि त्वन्नियतेत्यत्राहुः—त्वमिति । अखिलकारकशक्तिधरः परिपूर्णकर्तृकारयितृशक्तिधरस्त्वमेक एव नान्यः कुतः स्वराट् चक्रवर्ती अस्मत्स्वामी किमस्मानाज्ञापयसीति प्रतीक्ष्य सर्वदा विवृतनयनत्वात् ये अनिमिषाः देवास्ते तव बलिमुद्वहन्ति मनुजैर्दीयमानं सम्यगदन्ति च अनेन स एव ईशः परिपूर्णशक्तिर्बलिहरा इतरे स्युः सुराः सुखिन इत्येतद्व्याख्यातं समभेदे समीचीनसुष्ठु पूजासुखेषु चेति चाव्ययः तत्रतत्र पुराणवाक्योदाहरणेनैतच्छ्रुत्यर्थत्वेन श्लोको प्रवृत्त इति निश्चीयते सा श्रुतिरपि प्रमाणीक्रियते ॥ २९ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रुतयश्च "जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ऋचोऽक्षरे परमेव्योमन् यस्मिन् देवा अधिविश्वे निषेदुः । यस्तं वेद किमृचा करिष्यति य इत् तद्विदुस्त इमे समासते इत्याद्याः अन्यं स्वस्माज्जीवान्महाविलक्षणं जुष्टं प्रीत्या सेव्यमानमीशं पश्यति तदास्य महिमानञ्च पश्यत्यनुभवति । इति अनेन प्रकारेण वीतशोको भवति कुत्र परमे व्योमन् परव्योमाभिधे महावैकुण्ठे । कीदृशे अक्षरे नित्यरूपे यत् ऋच इति ऋक्सम्बन्धिनि तत्प्रतिपाद्ये इत्यर्थः । यस्मिन् परमव्योम्नि देवाः पार्षदादयः इत् इत्थमिति श्रुतिपदार्थः । अग्रे च जुष्टत्वमेव दर्शयति । यो देवानामधिपो यस्मिंल्लोका अधिश्रिताः । य ईशो द्विपदश्चतुष्पदस्तस्मै देवाय हविषा विधेमेति अन्यास्तदेव पुष्णन्त्य आहुः त्वमकरणः ॥ २८ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

त्वयि बद्धसौहृदा इति त्वच्छब्दार्थं विवृण्वते त्वमकरण इत्यादि । त्वं अकृष्णः अकरणः करणं कृतिः क्रिया अक्रिय इत्यर्थः तर्हि जगत्कर्त्ता क इत्याहुः—आत्ममः कारकशक्तिधरः अखिलेषु ब्रह्मादिषु या कारिकाशक्तिस्तां धरतीति तथा जगत्कर्तृत्वादिशक्तिं तेषु प्रकाशयन् स्वयमुदास्स इत्यर्थः । ननु तेषु स्वकर्तृतादिनिक्षिप्य स्वयमुदासीनदशाया स्थितस्य किं सुखमधिकमित्याहुः—स्वराट् स्वैः प्रियगोष्ठीगरिष्ठैः सह राजत इति स्वराट् उक्तं पुरैव "जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्" इति आनन्दलीलामन्तरङ्गां हित्वा बहिरङ्गां सृष्ट्यादि लीलां किमिति स्वयं करिष्यसि सा तु परद्वारापि कारयितुं शक्यते ननु ते यदि जगत्कर्तृत्वादिमन्तस्तदा किमीशित्वं ममेत्याहुः—तव बलिमित्यादि । ते अनिमिषा देवाः ब्रह्मादयो विश्वसृजः तव बलिं उद्वहन्ति तुभ्यं पूजां प्रापयन्ति अन्यैर्दत्तं बलिं च अदन्ति अजया तवैव मायया विशिष्टाः त्वन्तु तया ऽस्पृष्टः तत्र दृष्टान्तमाहुः—वर्षभुज इत्यादि यथा अखिलक्षितिपतेः सार्वभौममहाराजस्य बलिम् वर्षभुजः खण्डमण्डलेश्वराः ब्रह्माद्याः कथम्भूताः भवतः सकाशाच्चकिताः भीताः तथापि ये यत्र अधिकृतास्ते तद्विदधति त्वदाज्ञा एव तत्कुर्वते इत्यर्थः । मद्भयाद्वाति वातोऽयमित्यादि ॥ २८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं भजनीयदोषान् भक्तदोषान् परिहृत्य भजने स्थिरीकृतेऽपि प्रातीतिकदोषैरभजनमाशङ्क्य निराकरोति—त्वमकरण इति। ननु भगवानवतारे इन्द्रियवान् प्रतीयते तानि चेन्द्रियाणि नान्यार्थं कृतानि भवन्ति तथा सत्यधमत्वं तत्कार्यबाधश्च स्यात् नापि मुक्तानां जीवानां न्यायसिद्धान्त इव तानि स्वीकर्तुं शक्यानि वाङ्मनसि सम्पद्यत इत्यादिश्रुतिभिः लयश्रवणात् वागग्निरभवदिति आधिदैविकभावाच्च तस्माद्वैदिकैरेव तादृशः सिद्धान्तः श्रोतुं शक्यः अतः ईश्वरस्य इन्द्रियाणि नियतानि नित्यानि जीवानामदृष्टैर्वा कृतानि सर्वथा तानीन्द्रियाणि भगवदीयानि भगवदर्थमेव कृतानि प्रतिनियतानीति मन्तव्यं ततस्तैः सह स्वाभाविको वा आध्यात्मिको वा सम्बन्धो वक्तव्यः ततस्तद्द्वारा दोषसम्भव इति चेत्तत्राह—त्वमकरण इति। तव करणानीन्द्रियाणि कथमपि न सन्तीत्यर्थः। ननु, तथा सति कथमिन्द्रियकार्याणि इति चेत्तत्राह—स्वराडिति। स्वेनैव राजते सर्वसमर्थं स्वरूपमेव तस्य अन्यथेन्द्रियाणां तत्सामर्थ्यं कुतः आगच्छेत् मूलभूतेन्द्रियकल्पनायां त्वद्वैतविरोधः किञ्च अखिलकारकशक्तिधरस्त्वं सर्वेषां कारकाणां षण्णामप्याधारादिशक्तयः तेषां शब्दाश्रयत्वात् अनित्यत्वात् जातिवन्नियतशक्तिमत्त्वे कार्यान्तरानुदयात् सर्वशक्तिमत्त्वे एकेनैव सर्वकार्यसम्भवात् शुद्धब्रह्मत्वापत्तेः अनेककृतिवैयर्थ्याच्च सर्वाः शक्तीः कारकाणां भगवानेव सर्वदा बिभर्ति तत्तदवसरे तां तां तत्र स्थापयतीति च मन्तव्यम्। अस्मिन्नर्थेऽन्यथानुपपत्तिरूपं हेतुमाह—तव बलिमुद्वहन्ति समदन्त्यजयानिमिषा इति। यदि अनिमिषाणां स्वतः शक्तिः स्यात् स्वाधीना वा तदा भगवते बलिं दत्वा तदुच्छिष्टं स्वयं न गृह्णीयुः सृष्टौ तथा प्रार्थना च श्रूयते यावद्बलिं तेऽजहराम काल इति वाक्ये किञ्च अजया व्याप्तास्ते प्रकृत्या वशीकृताः कथं स्वतन्त्रा भवेयुः लोके हि अजारक्षका अपि स्वामिने सेवां कुर्वन्ति अजामात्रपरिग्रहा वा एते अल्परूपाः चक्षुरिन्द्रियस्वामिनामप्येषा गतिः तथेन्द्रियशक्तयः कथमिन्द्रियेषु स्वास्यन्तीत्यर्थः। एतदल्पानां कृतमित्याशङ्क्य विश्वसृजां महतामप्येतदिति ज्ञापयितुम् अल्पान्तररूपं दृष्टान्तमाहुः वर्षभुजोऽखिलक्षितिपतेरिवेति नववर्षाणि जम्बूद्वीपे तथान्येषु सप्त सप्तवर्षाणि तत्रैकैकोऽधिपतिर्भवति ते सार्वभौमस्य सेवां कुर्वन्ति स्वनिर्वाहार्थं तथैकैकेन्द्रियस्वामिनः सर्वसङ्घाताधिपतेः सेवां कुर्वन्ति नान्येते अप्रयोजकाः किन्तु विश्वसृजः किञ्च वर्षाधिपतयः कदाचित्स्वतन्त्रा अपि भवन्ति एते तु केवलं त्वदधीना एवेत्याहुः—विदधतीति। यत्र येऽधिकृता इति सुतरां भगवतः सकाशाद्भीताः सन्तः तथा तथा कुर्वन्ति अन्यथा अनभिप्रेतेन वर्तेरन्—

दुर्गन्धे दुष्टशब्दे च विरसे च भयानके।
खरस्पर्शे दुःखपुंजे वर्तन्ते स्वामि यन्त्रणात्॥
सुतरां मलोत्सर्गादौ लोकनिन्दिते अधिकारं न गृह्णीयुः॥
सुवर्णप्रतिमेवासौ सर्वानन्दमयोऽखिलराट्।
सर्वसेव्यो नियन्ता च निर्दुष्टः सर्वथैव हि॥२८॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

तस्मादस्वतन्त्रैरीशितव्यैर्जीवैस्त्वमेव स्वतन्त्र ईश्वरः सेव्य इति चेन्मैवं नेत्रश्रोत्रभुजादिमत्त्वादहमपि जीव इव करणपरतन्त्र इत्यतः कुतो मे स्वातन्त्र्यमैश्वर्यं चेत्यत आहुः—त्वम् अकरणः आहङ्कारिकमनोनेत्रश्रोत्रादिरहितः तर्हीमानि मन्नेत्रश्रोत्रादीनि कुतस्त्यानि तत्राहुः स्वराट् स्वैः स्वस्वरूपभूतैरेव नेत्रश्रोत्रादीन्द्रियैः राजसे इति स्वराट् अत एव अखिलकारकशक्तिधरः खिलानि तुच्छानि प्राकृतानीत्यर्थः। अखिलानि खिलभिन्नानि चिदानन्दमयस्वस्वरूपभूतानीन्द्रियाणि शक्तीः चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम् इतिश्रुतेः प्राकृतेन्द्रियशक्तीश्च धरतीति तथा सः न त्वं प्राकृतेन्द्रियः नाप्यनिन्द्रियः किन्तु पराख्यस्वरूपशक्तिमयेन्द्रियः प्रत्युत शक्तिमयेन्द्रियः प्रत्युत प्राकृतेन्द्रियेष्वपि श्रवणादिशक्त्याधायक इत्यर्थः "न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतेः महैश्वर्य्यमाहुः तव बलिं पूजोपहारम् अनिमिषाः ब्रह्माद्या देवा उद्वहन्ति प्रापयन्ति तुभ्यं समर्पयन्तीत्यर्थः अजया सहेति या तेषामधिकारिणी अल्पज्ञा माया सापि बलिहारिणीत्यर्थः समदन्ति च मनुष्यैर्दत्तं हव्यकव्यादिलक्षणं त्वत्प्रसादात्भक्षयन्ति च अत्र दृष्टान्तः वर्षभुजोऽखिलक्षितिपतेरिवेति। यथा वर्षभुजः खण्डमण्डलपतयः अखिलक्षितिपतेः समस्तमण्डलेश्वरस्य बलिमुद्वहन्ति प्रजाभिर्दत्तं बलिमदन्ति च तद्वत् कीदृशाभूत्वेत्यत आहुः—यत्र कर्मणि ये अधिकृता नियुक्तास्ते तत्कर्मणि त्वत्तश्चकिता भीता एव सन्तो विदधति अत्र "भीषास्माद्वातः पवते भीषोदेति सूर्य्यः भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" इत्याद्याः भीषा भीत्या पवते वाति॥ २८॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तव परिचारका मृत्युं तरन्तीत्युक्तम् इदानीं भगवतः करणपारतन्त्र्यशून्यत्वं स्वाभाविकशक्तिमत्त्वं सर्वनियन्तृत्वञ्चाह—त्वं पूर्वोक्तलक्षणः सर्वकारणभूतोऽकरणः करणैर्मायाकार्यैः प्राकृतैः शून्यः तथाच श्रुतिः "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं पुराणम्" इति स्वराट् स्वैः स्वाभाविकैः शक्तिज्ञानानन्दादिभिर्गुणैः राजते इति स्वराट् "स्वाभाविकी ज्ञानबलक्रिया च 'विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात्" इतिश्रुतेः तत्र हेतुगर्भितविशेषणम् अखिलकारकशक्तिधरः अखिलस्य क्षेत्रज्ञजातस्य कारकाणां शक्तिं धारयति प्रवर्तयति तथा सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितं सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुहृत वशी सर्वस्य लोकस्य स्थावरस्य च" इत्यादिश्रुतेः हे अजय! वैदिकैरपि भक्तिपराङ्मुखैः साधनैस्त्वत्सम्पर्कैः साधकैर्वा न जीयसे इति तथा नाहं वेदैर्न तपसा भक्त्या त्वमन्यया शक्य! इत्यन्वयव्यतिरेकमुखेन भगवदुक्तेः अनिमिषा इन्द्रादयस्तेषामपि पूज्या विश्वसृजो ब्रह्मादयः तव बलिमुद्वहन्ति तेऽपि प्रजया दत्तं भागं स्वयमदन्ति

**स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजो विहर उदीक्षया यदि परस्य विमुक्त ततः ।**
**न हि परमस्य कश्चिदपरो न परश्च भवेद्वियत इवापदस्य तव शून्यतुलां दधतः ॥२९॥**

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तथाच श्रुतिः "स एक ईशः परिपूर्णशक्तिर्बलिहरा इतरे स्युः" इत्यादि तत्र दृष्टान्तः अखिलक्षितिपतेश्चक्रवर्तिनो वर्षभुजः मण्डलेश्वरा इव खण्डाधीशाः सार्वभौमस्य यद्वन्नेशाद्याः कुर्वते तेनु शास्ति त्वं मुक्तिदो बन्धदोतो मत्तो नत्त्वं ज्ञानदो ऽज्ञानदश्चासि विष्णो इति श्रुतेः बलिवहनप्रकारमाह यत्र यस्मिन् अधिकारे भवताऽधिकृतास्तदेव विदधति सम्पादयन्ति तत्रापि न तेषां स्वातन्त्र्यमित्याह भवतश्चकिताः भीताः सन्तस्तव नियोगं पालयन्तीत्यर्थः ॥ २८—१५ ॥

---

भाषा टीका ।

जगत् की सृष्टि आदि करने में स्वतः सिद्धज्ञान के सिवाय अन्य साधन रहित कर्म पारवश्य रहित अखिल कारकन की शक्ति के धारक आप हो और माया के परवश होकर माया सहित वर्त्तमान पवन सूर्य अग्नि इन्द्रादि देवता तथा ब्रह्मादिक प्रजापति जिनका जिस कार्य करने में अधिकार है वे सब आपते भयभीत होकर अपने अधिकार के अनुगुण वर्त्ताव करने से आपकी पूजा करते हैं जैसे एक २ खण्ड के राजा लोग चक्रवर्त्ति महाराजते भयभीत होकर अपने २ अधिकार के अनुगुण वर्त्ताव करने से चक्रवर्त्ति महाराज की पूजा करते हैं ॥ २८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवं करणप्रवर्तकमीश्वरं करणपरतन्त्रा नरा भजन्तीत्युक्तम् न केवलमियदेव कारणं तत उत्पन्नत्वेनापि तत्परतन्त्रत्वादिति वदन्ति "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एत आत्मनो व्युच्चरन्ति" इत्याद्याः श्रुतय इत्याह—स्थिरचरजातय इति । हे विमुक्त नित्यमुक्त ! यदि तवाजया मायया विहरो विहारः क्रीडा भवति तदा स्थिरचरजातयः स्थिराश्च चराश्च जातयो जात्या लिङ्गिता देहा येषां ते जीवाः स्युर्भवेयुः कथंभूतस्य ततोऽजातः परस्य दूरे वर्तमानस्यासङ्गस्येत्यर्थः । कथं विहारः उदीक्षया ईक्षणलेशेन ननु, मयि लीनानां जीवानां कथं जन्म स्यात्तत्राऽऽह-उत्थनिमित्तयुज इति । ईक्षयैवोत्थान्युत्थितान्याविर्भूतानि निमित्तानि कर्माणि तद्युक्तानि लिङ्गशरीराणि वा तैर्युज्यन्त इति तथा ननु, किं निमित्तोत्थानेन मदिच्छयैव भवन्तु न त्वयि वैषम्याभावाद्विषमसृष्टेरयोगादित्याह-परमस्येति । तव परमस्योत्तमस्य परमकारुणिकस्य, वियत इवाकाशसदृशस्य समस्येत्यर्थः । कश्चिदपरः स्वीयः परोऽस्वीयश्च न भवेत् न सम्भवतीत्यर्थः " असद्वा इदमग्र आसीत् ततो वै सदजायत' इत्यादिश्रुत्या शून्यपूर्वकत्वमिव प्रतीयते तदर्थं पुनर्विशिनष्टि-शून्यतुलां दधतः शून्यसाम्यं भजतः तदेव दर्शयितुं पुनर्विशिनष्टि-अपदस्येति । नः पद्यत इत्यपदस्य वाङ्मनसयोरगोचरस्येत्यर्थः ॥ २९ ॥

स्वदीक्षणवशक्षोभमायाबोधितकर्मभिः ।
जातान् संसरतः खिन्नान्नृहरे पाहि नः पितः ॥२९॥

---

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

तदेवं पूर्वोक्तार्थप्रकारेण इयदेव करणप्रवर्तकत्वमेव ततः ईश्वरात् तत्परतन्त्रत्वादीश्वराधीनत्वादपि ईश्वरं भजन्तीति यथाग्नेरित्याद्याः श्रुतयो वदन्तीत्याह—वेद इति योजना श्रुतौ प्राणा इन्द्रियाणि लोकाः कर्मफलानि देवा इन्द्रियाणां लोकानाञ्चाधिष्ठातारः भूतानि ब्रह्मादिस्थावरान्तशरीराणि आत्मा न उपाधिसम्बन्धेन जनितो यः कर्तृत्वादिविशेषस्तेन ज्ञायमानस्वरूपाः जीवा व्युच्चरन्ति जायन्ते ईक्षणलेशेन सृष्टीच्छारूपेण असद्वेत्यत्र पूर्वपक्षे सृष्टेः पूर्वं शून्यमेवासीत्ततः शून्यादेव सज्जगदजायत इत्यर्थेन शून्यपूर्वकत्वं प्रतीयते तदर्थं शून्यपूर्वकत्वप्रतीतिनिवृत्त्यर्थं मशकार्थो धूम इतिवत् अर्थशब्दो निवृत्तिपरः सिद्धान्ते तु सृष्टेः पूर्वं इदं विश्वम् असद्व्याकृतनामरूपं ब्रह्मैवासीत्ततो ब्रह्मणः सद्व्याकृतनामरूपं जगदजायतेत्यर्थः ॥ २९ ॥

---

श्रीकविचूडामणिचक्रवर्तिकृताऽन्वयबोधिनी ॥

तदेवं करणप्रवर्त्तकमीश्वरं करणपरतन्त्रा नरा भजन्तीत्युक्तं न केवलमियदेव कारणं तत उत्पन्नत्वेनापि तत्परतन्त्रत्वादिति वदन्तीत्याह—स्थिरचरजातय इति । हे विमुक्त नित्यमुक्त यदि यदा अजया मायया सह उदीक्षया कटाक्षेण तव विहरः विहारो भवति तदा स्थिरचरजातयो जीवाः स्युर्भवेयुः स्थिरजातयश्चरजातयः जातिसंस्कारैः का लिङ्गता देहा येषां कथम्भूताः उत्थनिमित्तयुजः ईक्षयैव उत्थानि आविर्भूतानि निमित्तानि कर्माणि तद्युक्तानि लिङ्गशरीराणि वा तैर्युज्यन्त इति उत्थनिमित्तयुजः तव कथम्भूतस्य ततः परस्य अजातः परस्य दूरे वर्त्तमानस्य अत ईक्षया विहारः ननु किं निमित्तोत्थानेन मदिच्छयैव भवन्तु नन्वपि वैषम्यभावाद्विषमसृष्टेरयोगादित्याह—नहीति । हि यस्मात्परमस्य परमकारुणिकस्य वियत इव आकाशसदृशस्य समस्येत्यर्थः । तव कश्चिदपरः आत्मीयः पर अनात्मीयश्च न भवेत् न सम्भवतीत्यर्थः "असद्वा इदमग्र आसीत्ततो वै सदजायत" इत्यादिश्रुत्या शून्यपूर्वकत्वमिव प्रतीयते तदर्थं पुनर्विशिनष्टि पुनः कथम्भूतस्य शून्यतुलां दधतः शून्यसाम्यं भजतः पुनश्च अपदस्य न पद्यते इति अपदः तस्य वाङ्मनसयोरगोचरस्य एवम्भूतस्य

श्रीमद्विश्वनाथचक्रवर्तिकृतान्वयबोधिनी ।

तव वैषम्याभावात् इच्छयैव उत्थनिमित्तयुजो जीवाः भवन्तीति स्थिरचरजातयः स्युरित्यस्य श्रुतिः "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे देवाः सर्वाणि भूतानि एत आत्मनो व्युच्चरन्ति अर्थः पूर्वमात्मातिरिक्तं वस्त्वन्तरं नासीत् स्युरुक्त तदुत्पत्तश्रवणात् तत्र दृष्टान्तः यथा एकरूपादेकस्मादग्नेः सकाशात् क्षुद्राः अल्पप्रमाणा विस्फुलिङ्गा अग्निकणा विविधाः उच्चरन्ति उत्तिष्ठन्ति एवमस्मादात्मनः विज्ञानमयस्य प्राक् प्रतिबोधात् यत्स्वरूपं तस्मादेव आत्मनो जीवा व्युच्चरन्ति उपाधिसम्पर्कजनितविशेषप्रतिबुध्यमाना आत्मन इत्यर्थः । इयमपि केवलात्मसृष्टिपरा स्वामिनां—

त्वदीक्षणवशक्षोभमायाबोधितकर्मभिः ।
जातान् संसरतः खिन्नान्नृहरे पाहि नः पितः ॥

भो नृहरे पितः नो ऽस्मान् पाहि कथम्भूतान् तव ईक्षणवशेन सिसृक्षारूपेण यः क्षोभस्तेन मायया बोधितैः कर्मभिः जातान् ॥ २९ ॥

—————

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स्थिरेत्यस्य टीकायां श्रुतौ प्राणा इन्द्रियाणि लोकाः कर्मफलानि देवा इन्द्रियाणां लोकानां चाधिष्ठातारः भूतानि ब्रह्मादिस्थावरान्तानि आत्मन उपाधिसम्पर्कजनितविशेषप्रतिबुद्ध्या नानात्मान इति । स्वव्याख्यायान्तु तदेवं करणप्रवर्त्तकः परमोत्कृष्टगुणः श्रीभगवांस्तदधीनकरणपरतन्त्रैः स्वल्पगुणैर्जीवैर्भजनीय इति सदाचारेण पूर्वाभिरङ्गीकृतं तत्र परा शक्तिश्च वर्णिता तथैवान्याः श्रुतयोऽभिप्रयन्ति यतो न केवलमियदेव कारणं तत उत्पन्नत्वमपीत्याहुः—स्थिरेति । हे विमुक्त प्रकृत्यादिसङ्गातीत यदि तव विहारः प्रपञ्चगतभक्तवृन्दसुखार्थे प्रपञ्चे तत्तदवतारैर्विहारो दृष्टः स्यात्ततस्तदनन्तरम् उदीक्षया प्रकृतिलीलासिद्धभक्तोद्देशित्वेनोत्कृष्टया त्वदुदीक्षया उत्थानि प्रकृतिक्षोभेणोत्थितानि यानि निमित्तानि कर्मादीनि तैर्युक्ताः स्थिरचरजातयः उद्बुद्धतत्तज्जातिसंस्कारसूक्ष्मदेहाः सर्व एव जीवाः भवन्ति स्वाविर्भावमाप्नुवन्ति कीदृश्योदीक्षया अजया प्रकृतिक्षोभात् प्राचीनत्वात् स्वभावसिद्धयैवेत्यर्थः । तथैव व्याख्यातं भाष्यकृद्भिः "ईक्षतेर्नाशब्दम्"(१-१-५)इत्यत्र कथम्भूतस्य तव परस्य सर्वविलक्षणस्वरूपतत्तच्छक्तिकस्य ननु, यैः सह विहारेच्छा तेषामेवोद्बोधो यथा स्यात्तथैव कुतो नेक्षेत तत्राहुः नहीति । परमस्येति परमत्वात् प्राकृतधर्मेष्वादरानादररहितस्येत्यर्थः । अत एव न कश्चिदपरः परश्च भवेत् अन्यत्र रागद्वेषाभावेन तदसम्बन्धादित्यर्थः ।

"समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्" ॥

इति श्रीगीतोक्तेः मद्भक्तानां विनोदार्थं करोमि विविधाः क्रियाः इति पाद्मोक्तेश्च तर्हि कथं तेऽपि न भजन्ति येन तव विहारहेतवः स्युः तत्राहुः शून्यतुलां दधतो वियत इवापदस्येति सर्वगोचरस्येत्यर्थः । अयं भावः यद्यपि वियत्खलु वस्त्वेव तथापि न केनापि तद्ग्रहीतुं शक्यते तद्ग्रहणशक्त्यभावात् एवं सर्वागोचरस्वरूपगुणो भवानपि भक्त्यभावादिति तस्माद्भक्तेभ्यो भक्तिर्माप्नोतीति च श्रुतयश्च स एवेतेति यथाग्नेः क्षुद्राः इत्यादि अक्षरात्परतः पर इति असद्वा इदमग्र आसीदिति न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् इति "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्" इति

अरूपमव्ययं ब्रह्म मध्याद्यन्तविवर्जितम् ।
स्वप्रभं सच्चिदानन्दं भक्त्या जानाति चाव्ययम् ॥

इत्याद्याः ॥ २९ ॥

—————

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

सर्वचेतनैरवर्जनीयसम्बन्धविशेषानुभावेन हेयप्रत्यनीकतया च तव कटाक्षादेव मोक्ष इत्याह—स्थिरचरेति । स्थावरजङ्गमसंस्थानाः सर्वे प्राणिनः अजयोत्थनिमित्तयुजः प्रकृतिकार्यदुःखनिमित्तयुजः प्रकृतिकार्यदुःखनिमित्तशरीरयुक्ताः विरहो यदि कदाचित् प्रकृतिमोक्षः सम्भवति चेत् परमस्य तव उदीक्षया त्वत्कटाक्षान्मोक्षः सिद्ध्यतीत्यर्थः । ततो विमुक्त प्रकृतेर्हेयात् विशेषेण मुक्त मोक्षप्रदाने हेतुमाह—नहि कश्चित् तवापरोऽस्तीति सर्वात्मनां स्वशरीरभूतत्वात् अन्यो नास्ति अतः सर्वरक्षकस्त्वमित्यर्थः । कीदृशस्य तवेत्यत्राह—परस्येति । परत्वम् उत्पत्तिकालात् पूर्वत्वम् अपरत्वं पश्चाद्भावित्वं परमस्येति परमः अत एव स्वयं कस्यचिदपरः पश्चाद्भावी न भवतीत्यर्थः।अत्रयस्येवं कालाकाशयत्वाजन्मादिवत्त्वात्रयरहितस्य तव सर्वव्यापिनोऽपि वियत इव आकाशस्यैव शून्यतुलां दधतः धारयतः व्याप्यगतदोषस्पर्शाभावेनाविद्यमानतुल्यस्येत्यर्थः ॥ २९ ॥

—————

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं कल्याणगुणपौष्कल्यमुक्तं तर्हि किं हेया अपि गुणाः सन्तीत्यपेक्षायां नेन सन्तीति वदन्त्यः कथमवर्जनीयप्रकृतिसम्बन्धनिवृत्तिरित्यपेक्षायां हेयप्रत्यनीकभगवत्कटाक्षादेवेत्याहुः—स्थिरेति । स्थावरजङ्गमसंस्थानाः सर्वे प्राणिनः अजयोत्थनिमित्तयुजः प्रकृतिकार्यदुःखनिमित्तशरीरयुक्ताः स्युः सर्वेषामजासम्बन्धोऽवर्जनीय इति भावः । ततस्तत्र केषाञ्चिद्देवकभूतानां विरहो यदि कदाचित्प्रकृतिमोक्षः सम्भवति चेत्परस्य तव उदीक्षया कटाक्षादेव मोक्षः स्यादित्यर्थः । उपायनिष्पत्तिस्त्वत्कटाक्षमूलैवेति भावः । नन्ववर्जनीयप्रकृतिसम्बन्धेषु काञ्चित्तत्स्याजयन् अहं किं वैषम्यनैर्घृण्यादिहेयगुण इत्यतः सम्बोधयन्ति—विमुक्तेति । हेयाद्विशेषेण मुक्तहेयप्रतिभट इत्यर्थः । एतदेव विशदीकुर्वन्ति—नहीति । परमस्य पर उत्कृष्टः कारुणिको मा न विद्यते यस्मात्तस्य परमकारुणिकस्य तव कश्चिदपरः करुणाविषयः परस्तदविषयश्च नास्ति सर्वात्मनां शरीरभूतत्वाद्रक्षणीयो नान्यतः सर्वरक्षकत्वमतो न वैषम्यादिहेयसम्भावनापि तथापि व्याजमात्रावलम्बित्वान्न सर्वान्मोचयसीति भावः । न केवलं वैषम्यनैर्घृण्यरूपहेयाभाव एवापितु सर्वे हेयगुणा न सन्तीत्यभिप्रायेण सदृष्टान्तं विशिंषन्ति—वियत इत्यादिना । वियत इवाकाशस्येवापदस्यास्थानस्य हेयानाश्रयस्य यथा सर्वत्र व्याप्य स्थितस्याप्याकाशस्यैव व्याप्यगतदोषानाश्रयत्वं तद्वद्धेयानाश्रयस्येत्यर्थः । अत एव शून्यतुलां शून्योपमां दधतः

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सर्वव्यापिनोऽपि व्याप्यगतदोषस्पर्शाभावेनाविद्यमानतुल्यस्येत्यर्थः विहर उदीक्षयेति पाठान्तरं तदाऽयमर्थः ननु यद्यहमकरणस्तर्हि जगत्स्रष्टृत्वाद्यनुपपत्तिः स्वराजो जगद्व्यापारानुपपत्तिश्च सकरणानां कर्मवश्यानाञ्च कर्तृत्वव्यापारवत्त्वादिदर्शनादित्यत आहु—स्थिरेति । यदि यदा विहरः विहारः विक्रीडितं तदेति इत्यर्थः तदा परस्य प्रकृतिपुरुषाभ्यां विलक्षणस्य तवोदीक्षया "बहु स्याम्" इत्युक्तसङ्कल्पमात्रेणैवाजायाः प्रकृतेः सकाशादुत्थान्युत्थितानि निमित्तानि देहनिमित्तानि बुद्धीन्द्रियादीनि तैर्युज्यन्त इति तथा स्थिरचरजातयः स्थावरजङ्गमसंस्थानाः सर्वे प्राणिनः स्युः उदीक्षयेत्यनेन करणयत्नकर्तृत्वव्युदासः विहर इत्यनेन कर्मायत्तव्यापारवत्त्वव्युदासः अत एव जगत्सर्गरूपव्यापारस्य जीवव्यापारवत्सुखदुःखनिमित्तार्थत्वव्युदासश्च फलितः तत्र हेतुत्वेन सम्बोधयन्ति—विमुक्तेति । अस्य यथोक्त एवार्थः जीवानान्तु असर्वज्ञत्वात्सर्गशक्तिराहित्यसङ्कल्पत्वादिहेयावत्त्वाच्च सङ्कल्पमात्रेण घटादिकर्तृत्वमिति भावः । कस्तर्हि ममोदीक्षिता इत्यत आहुः—ततः यतएवं ततः परमस्य सर्वोत्कृष्टस्य परः पूर्वभावी उदीक्षिता नास्ति परमकारणत्वादिति भावः । अत एवापरः कार्यभूतः कश्चिदपि नास्ति सर्वस्य त्वत्कार्यत्वादिति भावः । यद्वाऽपरोऽन्योऽशरीरभूतः कश्चिदपि नास्ति सर्वस्य त्वदात्मकत्वादितिभावः तर्हि व्याप्यगतदोषप्रसक्तिरित्यतः · सदृष्टान्तं विशिंषन्ति । वियत इवेत्यादि यथोक्त एवार्थः ॥ २९ ॥

---

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथ सर्वचेतनैरवर्जनीयं सम्बन्धविशेषानुभवेन हेयप्रत्यनीकतयाच तव कटाक्षादेव मोक्ष इत्याहु—स्थिरचरेति । स्थिरचरजातयः स्थावरजङ्गमसंस्थानाः सर्वे जन्तवः अजयोत्थनिमित्तयुजः प्रकृतिकार्यसुखदुःखनिमित्तयुजः प्रकृतिकार्यसुखदुःखनिमित्तशरीरयुक्ताः स्युः एवमजयोत्थनिमित्तयुजां तेषां विरहो यदि कदाचित्प्रकृतिमोक्षः सम्भवति चेत् परस्य वोदीक्षयस्त्वत्कटाक्षान्मोक्षः तथा च श्रुतिः नायमात्माप्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन"इति यमेवैष वृणुते तेन लभ्य इतितदुक्तं मोक्षधर्मे—

"जायमानं तु पुरुषं यं पश्येन्मधुसूदनः ।

सात्विकः स तु विज्ञेयो भवेन्मोक्षार्थचिन्तकः " ॥ इति

अन्ये ब्रह्मादयस्तु कर्मवश्या अतस्ते मोक्षप्रदाने असमर्थाः तथाचोक्तं देवैर्मुचुकुन्दं प्रति—

" वरं वृणीष्व भद्रन्ते ऋते कैवल्यमद्य नः ।

एक एवेश्वरस्तस्य भगवान् विष्णुरव्ययः " ॥इति

ब्रह्मादीनां कर्मवश्यत्वमुक्तं शौनकेन—

"आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः ।

प्राणिनः कर्मजनितसंसारवशवर्त्तिनः ॥इति

त्वन्तु ततोऽज्ञानो विमुक्त एव तन्नियामकत्वात् नन्वहं यदि कस्यचिन्मोक्षं ददामि कस्यचिन्नेति तदा मम वैषम्यादिदोषप्रसक्तिः स्यादत आहु न हि परमस्येति अयमाशयः सत्यं त्वं सर्वत्र समोऽपि न हि ते चापरोऽस्तीति प्रवृत्तिमतां सशरीरभूतत्वादन्यो नास्ति अतः सर्वरक्षकत्वमित्यर्थस्तथापि आनुकूल्यमात्रेणाज्ञातसुकृतलेशं व्याजीकृत्य मोक्षं ददासीति अतस्तव वैषम्यादिदोषो नास्त्येवेति कीदृशस्य तवेत्यत्राह परस्येति परत्वं कालपूर्वत्वम् अपरत्वं पश्चाद्भावित्वं परमस्येति मा परो यस्मात्सः परमः सर्वोत्कृष्टस्येत्यर्थः । तथा च भगवद्वाक्यम्—

"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।

अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः " ॥ इति

अतस्त्वत्तः परः पूर्वभावी नास्त्येव अत एव त्वयं कस्यचित् परः पश्चाद्भावी न भवतीत्यर्थः । वियत इवापदस्येति व्योमेव स्पर्शरहितस्य अत्र यस्य एवं कालकल्पत्वाज्जन्माद्यवस्थात्रयरहितस्य सर्वव्यापिनोऽपि व्याप्यगतदोषस्पर्शाभावेनाविद्यमानतुल्यस्येत्यर्थः तथाच गीतोपनिषदि—

"यथा ऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।

तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥

इति ॥ २९ ॥

---

योगिरामानुजाचार्यकृतसरलाव्याख्या ।

भगवतस्सर्वकारणत्वेपि तद्दोषैरसंस्पृष्टत्वमाहुः—स्थिरेति । हे विमुक्त मायावशवर्त्तित्वरहित परस्य चेतनाचेतनाद्विलक्षणस्य तव यदि सृष्टिसमये ततः मायया सह तत्तेत्सार्वविभक्तिकत्वादत्र तृतीयाबोध्या विहरः विहारः ईप्सितः तदा उदीक्षया तवेक्षणमात्रेण अजया मायया कारणीभूतया उत्थनिमित्तयुजः उत्थमुत्पन्नं यन्निमित्तं त्रिगुणसंसर्गरूपं तेन युज्यन्ते इति उत्थनिमित्तयुजः एवंभूताः स्थिरचरजातयः स्थिरचरयोर्जातिर्येषां ते स्थिरत्वचरत्वजातिविशिष्टशरीरिणः इत्यर्थः स्युः जायन्ते चेतनानामुच्चनीचरूपस्थावरजङ्गमयोनिप्राप्तौ मायां जन्यत्रिगुणसम्बन्ध एव कारणमित्यर्थः कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु इति भगवद्वचनात् अतः चेतनानां विषमसृष्टौ भगवतः कारणत्वाभावात् न वैषम्यनैर्घृण्यादि दोष इत्यर्थः । अत्र योगिनः एवं वर्णयन्ति आत्मारामस्यापि भगवतः यदा मायया सह विहारेच्छा भवति तदा स्थावरजङ्गमभेदाः स्वयमेवोत्पद्यन्ते यथा वर्षाकाले जीवाः नहि पर्जन्य वर्षणादधिकं किमपि कार्यं जीवानामुत्पत्त्यर्थं करोति तथापि विचित्राः जीवाः तत्कालवशात्स्वयमेवोत्पद्यन्ते तथा भगवानपि केवल एव विहरति ततः विहारेच्छायामुद्भूतायां सः काल इति तेन कालेन प्रकृत्यादिशक्तयः प्रेरिता भवन्ति यथा राजनि निर्गते सेवकाः अप्रेरिता अपि तत्तत्कार्येषु प्रवर्तन्ते तत्समयानुसारेण तथा ईश्वरे क्रीडायां प्रवृत्ते स्वविहारकाल एव गुणक्षोभं कृतवान् भवति तेन विचित्रसृष्टिः यथा प्रज्वलाग्नेरुद्गते स्फुलिङ्गा इव जीवाः भगवत्सकाशान्निस्सरन्ति ततः कालेन क्षुब्धाः गुणाः साक्षात्परम्परया वा सर्वकार्यजातमुत्पादयन्ति ततः ते जीवाः भगवत्सकाशान्निर्गताः प्रकृतिमुपगूह्य यत्र कुत्र चिरकामवशाद्वासनं वा कर्म वा निमित्तं समाश्रित्य नानाविधयोनीन् प्राप्नुवन्ति यथा विस्फुलिङ्ग

श्रीमद्गिरिधरकृतबालप्रबोधिनी ॥

महद्विनिर्गता वायुमाश्रित्य ते न यतः कुत्रचिज्जीयमानाः तृणादिषु पतिताः महत्त्वरूपं प्राप्नुवन्ति जले पतिताः निर्वीर्या भवन्ति भूमौ पतिताः मध्यममात्रेण तिष्ठन्ति तत्रत्र मूलभूतो वायुः कमपि विस्फुलिङ्गं क्वचिद्योजयति तथा भगवानपि जीवं न नियोजयतीति निरूपयन्ति अतः मायया दत्ताः जीवाः स्वत एवानन्तकर्मादिनिमित्तं भुञ्जन्त इति विहार एव तव निमित्तमात्रं नत्वीश्वरप्रेरणं तत्र निमित्तमिति तत्त्वम् सृष्टेः भगवान एव निमित्तत्वाङ्गीकारे भगवतः वैषम्याभावात् विषमसृष्टिरूपं कार्यं न स्यात् "कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु" इति च भगवद्गीतोक्तत्वात् अतः प्रकृतिसंक्षुब्धगुणवैषम्यमेव विषमसृष्टेः निमित्तमित्याशयेनाहुः नहीति । परमस्य परमकारुणिकस्य तव कश्चित्परः स्वीयः परः अस्वीयश्च न भवेत् नास्ति येन विषमसृष्टिः स्यादिति शेषः ननु तर्हि व्यापकस्य ब्रह्मणः सृष्टिगतदोषसम्बन्धः स्यादिति दोषमाशङ्क्य परिहरति वियत इवेति आकाशस्येवापदस्य व्याप्यगतदोषानाश्रयस्य तत्र हेतुः शून्यतुलां दधतः शून्यसाम्यं दधतः अतिसूक्ष्मस्येत्यर्थः । यथाऽग्नेः क्षुद्राः विस्फुलिङ्गाः व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एत आत्मानो व्युच्चरन्तीत्याद्याः श्रुतयोऽत्रानुसन्धेयाः हे विमुक्त परस्य यदि ततः विहरः तदा उदीक्षया अजयोरनिमित्तयुजः स्थिरचरजातयः स्युः हि परमस्य वियत इवापदस्य शून्यतुलां दधतः तवापरः परश्च न भवेदित्यन्वयः ॥ २९ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मू० ॥ वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो विदधति यत्र ये त्वधिकृता भवतश्चकिताः । स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजो विहर उदीक्षया यदि परस्य विमुक्त ततः ॥१९॥३०॥

वर्षभुज इत्यस्य श्लोकस्यायं भावः ये यत्र यस्मिन् पदे त्वधिकृताः अधिकारं प्राप्ताः विश्वसृजस्ते भवतश्चकिताः भीताः तव स्थित्या भवतो विदधति बलिमिति शेषः कस्मै के इव वर्षभुजः खण्डेशाः अखिलक्षितिपतेश्चक्रवर्तिन इव यदि पुरुषो विमुक्तः सन्नेः यस्मात्स विमुक्तः नन्तु तस्य विमुक्ततः परस्य सकाशात् विरहे मुक्तौ उदीक्षयेत् परमात्मन एव मुक्तिरिति पश्येत् "तमेव विद्वानमृत इह भवति नान्यः पन्था ऽयनाय विद्यते "इति श्रुतेः । हे अज ! तर्हि ये स्थिरचरजातयः स्थिरत्वञ्च चरत्वञ्च जातिर्येषां ते तथा ते अनिमित्तयुजः स्युः अः परमात्मा निमित्तं युक्त योगी संसारस्य येषां ते तथा भगवद्वियोगादेव संसारभाज इत्यर्थः मुक्तेरनियतत्वाद्बन्धोऽपि तदधीन इति भावः । खण्डाधीशाः सार्वभौमस्य यथा क्लेशाद्याः दृश्यते तेऽनुयान्ति त्वं मुक्तिदो बन्धदो ऽतो मतो भवत्वं बन्धोऽज्ञानदश्चासि विष्णो "इति शाण्डिल्यश्रुतेः—

आत्मानं मुक्तिदं विष्णुं यदि पुंस उदीक्षयेत् ।
मुक्तश्चेत्तथा बन्धस्तत एवेति सेत्स्यते ॥



इति स्मृत्यनुगृहीतश्लोकस्यार्थमनुवदतीति ॥ १९—३० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अतः साधूक्तं पूर्वाभिस्तव परि ये चरन्तीति भावः । ध्रुवयश्चात्र न तस्य कार्यमित्यादिनागता एव "अपाणिपादः" इत्याद्याः तदेवं करणपूर्वकः परमोत्कृष्टगुणः श्रीभगवांस्तदधीनकरणः परतत्त्वः अगुणैर्जीवैर्भजनीय इति सदाचारेण पूर्वाभिरुद्दीकृतं तव परा शक्तिश्च दर्शिता । तत्रैवान्याः श्रुतयोऽभिप्रयन्ति । यतो न केवलमियमेव कारणं तत् उत्पत्तावमर्पात्याहुः—स्थिरचरेति ॥ २९ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

सर्व एव त्वदधिकृताः सर्व एव तुभ्यं बलिमुद्वहन्ति सर्व एव भवतो भयं बिभ्रति एषु स्वपरभावस्तव नास्तीत्याहुः-स्थिरचरजातय इत्यादि । स्थिरचरजातयश्चरजातयश्च आब्रह्मस्तम्बपर्यन्ताः प्राणिनः अजया अजयैव सरूपादिना अजैव तेषां कारणमितित्यर्थः । ननु अजा तावज्जडा कथमस्यास्तदुत्पादने कर्तृत्वमित्याहुः हे ततो विमुक्त अजातो विमुक्त ! विहरे विहारे तां प्रति या ते उदीक्षा दृक्पातः तया ते इत्यर्थापत्त्या ज्ञेयं कथम्भूतस्य तव उत्थनिमित्तयुजः उत्तिष्ठतीति उत्थं यन्निमित्तं सर्वकारणता तद्युजः अत एव परस्परास्परस्य यदि एवं तदा परमस्य सर्वोत्कृष्टस्य तव न हि कश्चित्परः आत्मीयः न कश्चित्परः अनात्मीयः भवेत् परम्परया सर्वेषां स्वद्रुद्भवत्वात् कस्यैव शून्यतुलां शून्योपमां दधतः अपदस्य निरालम्बनस्य वियत आकाशस्य यथा दूरं दूरतरं दूरतमम् अल्पमल्पतरमल्पतमञ्च समुत्पतन्तं खगसमूहं प्रति साम्यं सर्वस्यैव निरालम्बनत्वादिना साम्यं तथा तवापि यथाशक्ति भजतः प्रतिसाम्यमेव न वैषम्यमिति भावः ॥ २९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं धर्मधर्मिप्रकारेण भजनार्थं दोषाभावमुक्त्वा कार्यद्वारा प्राप्तं दोषं निराकुर्वन्ति—स्थिरचरजातयः स्युरिति ननु, यदि भगवान् पूर्णानन्दः सर्वदोषविवर्जितः तर्हि किमर्थं तदंशाः नानाविधां योनिं प्राप्नुवन्ति अतो ज्ञायते भगवानेव तानुत्पादयति स्वहितार्थम् अन्यथा तेषामुत्पत्तिर्न घटेतेति चेत् तत्रोच्यते यदि तव विहरः विहारः आनन्देन क्रीडा यथा राज्ञः स्वगृहे रममाणस्यापि तदानन्दोद्रेकात् बहिर्गमनेच्छा भवति तथा भगवतोऽपि कदाचिद्विहारः तदा स्थिरचरजातयः स्थावरजङ्गमभेदाः स्वयमेवोत्पद्यन्ते यथा वर्षाकाले जीवाः नहि पर्जन्यः वर्षणादधिकं किञ्चित्कार्यं करोति जीवानामुत्पत्त्यर्थं तथा भगवानपि केवल एव विहरति ततश्चेच्छायामुद्गतायां स काल इति तेन प्रकृत्यादिशक्तयः प्रेरिता भवन्ति यथा राजनि निर्गते सेवका अप्रेरिता अपि कार्येषु प्रवर्तन्ते तथा कालो गुणक्षोभं कृतवान् तथा प्रबलाग्नेः उद्गतं विस्फुलिङ्गा इव जीवाः अपि निस्सरन्ति ततः, कालेन क्षुब्धाः गुणाः

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

साक्षात्परंपरया च सर्वमेव कार्यजातमुत्पादयन्ति ततस्ते जीवा भगवतः सकाशात् निर्गताः प्रकृतिमुपगूह्य यत्र क्वचित् कामवशात् निमित्तं कर्म अज्ञानं वा समाश्रित्य नानाविधयोनीः प्रादुर्भवन्ति यथा विस्फुलिङ्गाः अग्नेर्निर्गताः वायुमालिङ्ग्य तेन यतः कुत्रचित् नीयमानाः तृणादिषु पतिता उद्भवं प्राप्नुवन्ति जले पतिताः निर्वीर्या भवन्ति भूमौ पतिताः मध्यभावेन तिष्ठन्ति अन्यत्र मूलभूतो वह्निः कमपि विस्फुलिङ्गं क्वचिदाज्ञयति तथेदमपि निरूपयन्ति अजया प्रकृत्या उत्थिताः सत्यः तथोत्थितं कर्मादिनिमित्तं युञ्जन इति विहार एव तत्र निमित्तं केवलक्रियाशक्तेर्निमित्तत्वमाशङ्क्य ज्ञानशक्तित्वमप्याहुः उदीक्षयेति यदा उद्गता ईक्षा भवति तया सहितश्च विहारः ज्ञानपूर्विका क्रीडेत्यर्थः ननु, विहारोऽप्यजया भवतु तथा सति प्रकारान्तरेणापि दोषः स्यादत आह—परस्येति । अजायाः परो नियामकः ननु, भार्यैव तथा मोहोऽस्तु आसक्तिर्वा तस्यां हेतवो विमुक्तेति तया सह सम्बन्ध एव नास्ति यतः सा किञ्चिदपि कार्यं कुर्यात् यथा राज्ञः प्रेरकाः क्षुद्राः दास्यो न भवन्ति क्वापि विहारे ननु, मा भवतु प्रकृतिः गुणाः कालो वा अन्या एवान्तरङ्गाः शक्तयस्तत्प्रेरिका भवन्तु ताभिरेव दोष सम्बन्धः स्यादत आह—न हि परमस्येति । परमस्यातिपरस्य अक्षरादप्यग्रे स्थितस्य लोकवार्तानभिज्ञस्य कश्चिदपि पदार्थः अपरः हीनः पर उत्कृष्टो वा न भवेत् विहारार्थमेव राजदृष्टान्तः ननु प्रेरणार्थः तं प्रेरयति कस्यचित् यस्य प्रेर्यो विषयो भवति यथान्तःकरणं चक्षुःश्रोत्रे बोधनार्थं ततोऽप्यवाक्यादिक्रियार्थं तत्रान्तरङ्गः सामग्रीसम्पादकः प्रेरको वा भवति यस्तु केवल एवानन्दकः सर्वसम्बन्धरहितो भवति तं कथञ्चित्प्रेरको भवेत् तत्र भगवतः सामन्यभावमाह सामग्री पञ्चविधा स्वरूपं स्थानं विशेषाकृतिः उत्कर्षापकर्षभावापन्नाः पदार्थाश्च ते केऽपि भगवति न सन्ति यतः सर्वेभ्यः परमः उत्कर्षापकर्षभावरहितः सर्वविलक्षणः अत एव तस्य कोऽपि नावरः न परश्च नकारद्वयं पृथगेव निर्दिशति सर्वनिषेधानां स्वर्गादिसङ्ग्रहार्थं अपरश्च स्थानरहितोऽपि भवति चकारात्तत्सामग्रीरहितश्च ननु पदार्थः सर्वोऽपि साधारो भवतीति कथमयं निराधार इति चेत्तत्र दृष्टान्तमाह—वियत इवेति । आकाशसदृशस्य कयापि क्रियया अव्यापृतस्य अनेन सर्वविशेषरहित उक्तः स्वरूपमपि न कस्यचित्प्रत्यक्षमित्याह—शून्यतुलां दधत इति । शून्यवादिभ्युदासाय तुलापदम् एतदेवाहुः असङ्गोऽयं पुरुषः अरूपमस्पर्शमित्यादि श्रुतयः केवलमस्तीत्येवोपलब्धव्यः अत एतादृशं कोवा जानीयात् यतः प्रेरयेत्—

> सर्वभावविनिर्मुक्तः पूर्णः क्रीडार्थमुद्गतः ।
> निमित्तं तं समाश्रित्य जायन्ते जीवराशयः ॥

एवं जीवानां नानाविधयोनिसम्बन्धेन प्राप्तो दोषः परिहृतः॥२९॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

परमेश्वरत्वोपास्यत्वे स्वातन्त्र्यमैश्वर्यञ्च कारणमुक्त्वा जीवानामपि तदुपासकत्वे तदुत्पन्नत्वात् तत्पारतन्त्र्यममैश्वर्यं च कारणमाहुः—स्थिरेति । हे विमुक्त ! यदि तव अजया मायया सह उदीक्षया उद्गमेन ईक्षणेनैव कौतुकेन विहरः विहारः क्रीडा भवति तदा स्थिरचरजातयः स्थिराश्च चराश्च जातयः जात्यालिङ्गिता देहा येषां ते जीवाः स्युः कथम्भूतस्य ततोऽजातः परस्य दूरे वर्तमानस्य असङ्गस्येत्यर्थः । ननु मयि लीनानां पुनः कथं जन्म स्यात्तत्राहुः—उत्थनिमित्तयुजः ईक्षणेनैव उत्थानि उत्थितानि निमित्तानि कर्माणि तैस्तत्प्रयुक्तानि लिङ्गशरीराणि च तैर्युज्यन्त इति ते तथेति कार्योपाधीनां लयादेव जीवानां लीनत्वं तेषां जन्मैव जन्म व्यवह्रियत इति भावः । एवं च कर्मनैयम्यत्ववचनमनैश्वर्यत्वमुक्तं ननु किं निमित्तोत्थानेन मदिच्छयैव भवन्तु न त्वयि वैषम्याभावाद्विषमसृष्टेरयोगादित्याहुः—परमस्य निर्दोषपुरुषोत्तमस्य कश्चिदपरः आत्मीयः परोऽनात्मीयश्च न भवेत् न सम्भवेदित्यर्थः । तत्र दृष्टान्तः वियत इवापदस्य आकाशवन्निर्लेपत्वाद्वैषम्यानास्पदस्येत्यर्थः । नचात्र आकाशतुल्यस्त्वम् अपि त्वाकाशमेव त्वत्तुल्यमित्याहुः—शून्यस्याकाशस्यापि तुलामुपमान्दधतः अत्र श्रुतयः "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एत आत्मनो व्युच्चरन्ती"त्याद्याः ॥ २९ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

भगवतः करणापारतन्त्र्यादिमुक्त्वा भोग्यात्मकस्य कृत्स्नस्य जगतः कारणत्वमपि तस्यैवेत्याहुः–हे विमुक्त नित्यमुक्त ! यदि यत्र सृष्टिसमये अजया मायया सह तव उदीक्षया ईक्षणेनैव कृत्वा विहरः क्रीडा स्यात् "तदैक्षत बहुस्याम्"इति श्रुतेः तत ईक्षणत एव हेतोः स्थिरचरजातयः स्युः भवेयुः स्थावरजङ्गमा जायन्त इत्यर्थः । मायासम्बन्धवारणार्थं विशिनष्टि परस्य चराचरेभ्यायुत्कृष्टस्यासङ्गस्यैवेत्यर्थः । अक्षरात्परतः परः "इति श्रुतेः। वैषम्यं वारयति उत्थनिमित्तयुजः आविर्भूतैर्निमित्तैरनादिकर्मसंस्कारादिभिर्युक्ताः कर्मसापेक्षमेव तेषां जन्म भवत ईक्षणं चेत्यर्थः । किं कर्मपारतन्त्र्यं ममेति चेन्न परमस्य परान् कर्मादीनतीतेति तथा तस्य स्वातन्त्र्यस्येशानः "संसारबन्धस्थितिमोक्षहेतुः न तस्य कश्चिज्जनिता न चाधिपः देवस्यैष महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्रम "इत्यादिश्रुतेः एवम्भूतस्य तव परः उत्कृष्टः अपरो निकृष्टश्च न भवेत् वियत् इव ब्राह्मणचाण्डालयोर्बाह्याभ्यन्तरे वर्तमानस्याप्याकाशस्य यथा न तयोरुत्कर्षापकर्षाभ्यां सम्बन्धस्तद्वत्तथापि यथा मेघो वर्षन् उत्कृष्टापकृष्टबीजानुसारेणाङ्कुरमुत्पादयन् वैषम्यं भजते तथा तत्कर्मानुसारेण तेषां कर्मफलात्मकजन्मादिभोगदानेन तथापि न वैषम्यमित्यर्थः । अनेन "फलमत उपपत्तेः[३-२-३७]इत्यधिकरणं व्याख्यातं दृष्टान्तसाम्ये विशेषणम् अपदस्य इयत्ताद्याऽविषयस्य तत्र हेतुः शून्यतुलां दधतः निरतिशयसूक्ष्मस्येत्यर्थः । "अणोरणीयान् "इति श्रुतेः ॥ २९—१६ ॥

---

अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगतास्तर्हि न शास्यतेति नियमो ध्रुव नेतरथा।
अजनि च यन्मयं तदविमुच्य नियन्तृ भवेत्समनुजानतां यदमतं मतदुष्टतया ॥ ३० ॥

भाषा टीका।

स्थावर जङ्गम जाति युत सबहि प्राणी माया से उत्पन्न सुख दुःख भोग के निमित्त शरीर युक्त होते हैं उन प्राणियों के मध्य में किसी प्राणी का यदि माया से मोक्ष होवे तो हे विमुक्त आप के कृपा कटाक्ष से हि मोक्ष होता है अथवा जब आप को विहार करने की इच्छा होती है तब आप के सङ्कल्प मात्र से माया से उत्पन्न सुख दुःख भोग के निमित्त देह बुद्धि इन्द्रियों से युक्त हो जाते हैं सबहि प्राणी परम करुणा सम्पन्न आप को अपनो परायो कोई भी नहीं है क्योंकि सबहि जीव आप के शरीर होने से आप की दृष्टि में सबहि समान है इसी से आप की कृपा के पात्र सबहि प्राणी हैं और जीव माया के दोष भी आप में नहीं हैं जैसे आकाश सर्वत्र व्याप्त हो रहा है तथापि व्याप्य वस्तु के दोषों का आधार आकाश नहीं होता तैसे ही आप सर्वत्र व्याप्त हो रहे हो तथापि व्याप्य रूप चेतना चेतन के दोषों का आश्रय आप नहीं हो इसी कारण चेतना चेतन में अविद्यमान उपमा को आप धारण करते हो कि मानों आप चेतना चेतन में व्याप्त हि नहीं हो ॥ २९ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका।

एवं तावत्परमात्मनः सकाशादविद्याकृतकार्योपाधयस्तदंशा एव जीवा जाताः संसरन्तो भजन्तीत्युक्तम् तत्र यद्येकाऽविद्या तदा जीवस्याप्येकत्वादेकमुक्तौ सर्वमुक्तिप्रसङ्गः अथ नानाविद्यास्तर्हि तस्यैवांशान्तरेण संसारानपगमादनिर्मोक्ष इत्यादितर्कबलेन वस्तुत एव नानात्मानस्तत्र च तेषामणुत्वे देहव्यापिचैतन्यं न स्यात् देहपरिमाणत्वे च मध्यमपरिमाणानां सावयवत्वेनानित्यत्वं स्यात् अतः सर्वगता नित्याश्चेति केचन मन्यन्ते तत्र न तावदुक्तदोषप्रसङ्गः अविद्याभेदेन तच्छक्तिभेदेन वा बद्धमुक्तव्यवस्थासम्भवात् ईश्वरस्य तु न केनाप्यंशेन संसारशङ्केत्युक्तमेव प्रसिद्धं चात्मैक्यं सर्वश्रुतिषु किञ्च इमं पक्षमन्तर्यामिब्राह्मणमपि न सहत इत्याह अपरिमिता इति। वस्तुत एवानन्ता ध्रुवास्तेनैव रूपेण नित्याः सर्वगताश्च तनुभृतो जीवा यदि स्युस्तर्हि तेषां समत्वाच्छास्यता न घटत इति कृत्वा हे ध्रुव नियमो नियमनं त्वया न स्यादितरथा तु घटेत कथम् यन्मयमुपाधितो विकारप्रायं यज्जीवाख्यमजनि जातं तत्तस्य स्वविकारस्य नियन्तृ नियामकं भवेत् अविमुच्य कारणतयाऽपरित्यज्य किं तत् सममनुस्यूतम् ननु किं यत्तत्कर्तृत्वेनायं प्रत्युच्यतामिदं तदित्यत आह अनुजानतां यदमतमिति जानीम इति वदतां यदमतमविज्ञातप्रायम् अविषयत्वात् तथा च श्रुतिः 'यस्यामतं तस्य मतं मतं यस्य न वेद सः अविज्ञातं विजानतां विज्ञातमविजानताम्' अवचनेनैव प्रोवाच स ह तूष्णीं बभूव' इत्यादिः किञ्च मतस्य ज्ञातस्य दुष्टतया दोषश्रवणात् तथा च श्रुतिः "यदि मन्यसे सुवेदेति दहरमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपं यदस्य त्वं यदस्य देवेषु" इत्यादि तस्मादपरिच्छिन्नत्वाच्चात्यमतर्क्यं किमपि सर्वानुस्यूतत्वेन समं नियन्तृ भवेदित्यर्थः ॥ ३० ॥

अन्तर्यन्ता सर्वलोकस्य गीतः श्रुत्या युक्त्या चैवमेवावसेयः।
यः सर्वज्ञः सर्वशक्तिर्नृसिंहः श्रीमन्तं तं चेतसैवावलम्बे ॥ १७ ॥

———

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी।

तदंशा एव परमांशा एव संसरतो भजन्ति संसारात् मोक्षार्थं भजन्तीत्यर्थः। तत्र पूर्वोक्तार्थे सर्वमोक्षप्रसङ्गः कश्चिद्बद्धः कश्चिन्मुक्त इति व्यवस्था न स्यादित्यर्थः। अथ यदि तथैव समष्ट्युपाधेरीश्वरस्यैव बद्धजीवरूपेणांशेन अनिर्मोक्षप्रसङ्ग इत्यस्यायमर्थः। यथा अनेकघटावच्छिन्न एक एवाकाशो एकघटनाशेन तद्गताकाशस्य एकोऽपि अन्येन घटोपाधिनावच्छिन्न एव तिष्ठति तथा एकजीवमुक्तौ जीवान्तरासङ्गबद्धत्वेन समष्ट्युपाधिरीश्वरोऽपि बद्ध एव तिष्ठतीति सर्वांशेऽप्यनिर्मोक्षप्रसङ्गः न हि पटैकदेशस्य दग्धत्वे पटो न दग्ध इति व्यवस्थीयते न च हस्तपादादौ बद्ध निगडैर्निबद्धः एकदेशान्मुक्तत्वेऽपि मुक्त इति व्यवस्थीयते इति तर्कबलेन तर्कोऽसिद्धप्रसङ्गः युक्त्यात्मकस्तद्बलेन तत्र च नानात्वपक्षे च केचन काणादयः तत्र काणादमते तावदिति वाक्यालङ्कारे उक्तौ यौ वेदान्तदूषकौ सर्वमुक्तिप्रसङ्गानिर्मोक्षरूपौ दोषौ तयोः प्रसङ्गः प्राप्तिर्नास्तीत्यर्थः तत्र सर्वमुक्तिप्रसङ्गदोषं द्विधा व्यवस्थया परिहरति—अविद्याभेदेनेति। अविद्याशब्देन विद्याकार्यं देहेन्द्रियादिकं लक्ष्यते तेन देहाद्युपाधिभेदेन ब्रह्मप्रतिबिम्बानां नानात्वात् यस्योपाधिनाशेन नष्टस्तस्यैव प्रतिबिम्बस्य बिम्बेन सहैक्यं नान्यस्येति तस्यैव मोक्षो नान्येषां प्रतिबिम्बसजातीयानां जीवानामिति न सर्वमुक्तिप्रसङ्गः तदुक्तमभियुक्तैः।

"यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते।
न सर्वे सम्प्रयुज्यन्ते तथा जीवाः सुखादिभिः" ॥ इति

अस्याश्च व्यवस्थायाम् अविद्यायाः नानात्वमननगौरवमतः पक्षान्तरमाह—तच्छक्तिभेदेनेति। तथा च यत्र सत्त्वात्मिका शक्तिरविद्या या प्रकाशते तत्र मोक्षः स्फुरति यत्र राजसी तामसी च शक्तिस्तु उद्भवति तत्र बन्धः प्रवर्तते तदुक्तं गीतायां "दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता" इत्यादि इति सर्वमुक्तिप्रसङ्गदोषं परिहृत्यानिर्मोक्षप्रसङ्गं परिहरति ईश्वरस्येति। समष्ट्युपाधेः ब्रह्माण्डनियन्तुरीश्वरत्वात्तस्य च विद्याशक्तिप्रधानत्वाच्च केनाप्यंशेन संसारशङ्केत्यर्थः। इत्युक्तमेव स्वकृतावविद्याविभेदेति त्यादौ त्वमकरणः स्वराडित्यादौ चेत्युपपादितमेवेत्यर्थः। पूर्वोक्तव्यवस्थाचात्मन ऐक्य एव सम्भवतीत्याशङ्क्य तत्र प्रमाणमाह—प्रसिद्धं चेति सर्वश्रुतिषु "एको देवः सर्वभूतेषु गूढः नेह नानास्ति किञ्चन यथा ह्ययं ज्योतिरात्मा विवस्वान् अपो भिन्ना बहुधैकोऽनु-

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी।

भवन् उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इत्यादिश्रुतिषु एवं श्लोकाद्बहिरेव स्वसिद्धान्तेन तार्किकदूषणं परिहृत्य प्रत्युत तार्किकमतं दूषयन् स्वसिद्धान्तं श्लोकारूढं व्यञ्जयति किञ्चेति इमं पक्षं तार्किकाद्युक्तं जीवानामनन्तत्वनित्यत्वव्यापकत्वं पक्षं कर्म-मूलम् अन्तर्यामिब्राह्मणं कर्तृ अन्तर्यामिप्रतिपादकः प्रयोगात् ब्रह्मेतरनुष्ठानविधायकममुदायो न सहत इति तेषां जीवानाम् असमत्वाद्व्यापकत्वेन चेश्वरतुल्यत्वात् शास्यता तत्कर्तृक नियम्यता इतरथा अस्मदभिमतपक्षान्तरे तु यद्विकारप्रायं वस्त्वेश्वरबिम्बाधिष्ठानस्थानीयस्य कार्यप्रायं तस्मिन् तस्य प्रतीतत्वे न वस्तुतः कार्यत्वाभावात्प्रायमित्युक्तम् तदीश्वराख्यं ब्रह्म वह्निस्थानीयं तस्य विस्फुलिङ्गस्थानीयस्य स्वविकारस्य स्वकार्यस्य जीवस्य तथात्व श्रुतिनिर्दिष्टत्वे प्रमाणं श्रुतिः यस्येति। यस्यानुभवज्ञानिनः ब्रह्माऽमतं ज्ञातं न भवतीति मति र्भवति तस्यैव मतं अविषयत्वेनैव ज्ञानस्य सिद्धान्तितत्वात् यस्य तु ब्रह्म मतं ज्ञातं भवतीति निश्चयः सतु नैव वेद। विजानतां जानीम इति वदतां यद्ब्रह्माविज्ञातम् अवचनेनेति वेदान्तमधीत्यागतं पुत्रं पिता पृष्टवान् प्रत्यक् ब्रह्म त्वं ज्ञात-वानसीति तत्रोत्तरमिदमिति ज्ञेयं वक्ता पुत्रोऽवचनेनैव वचना-भावेनैवोत्तरं लक्षणया ददौ वाङ्मनसोऽगोचरं ब्रह्मेतीति स पिता ब्रह्मानुभवसूचकमुखनेत्रविकासादिलिङ्गेन तुष्टः तूष्णीं बभूवेति यदि अहं सुवेदेति त्वं मन्यसे तर्हि अस्याध्यात्मो-पाधिपरिच्छिन्नस्य ब्रह्मणोरूपं त्वं न्यूनं दहरम् अल्पमेव वेत्थ। यच्च देवेष्वस्याधिदैवतोपाधिपरिच्छिन्नं रूपं तदपि त्वं दहरमल्पमेव वेत्थेत्याह मन्ये इति यस्मात् सर्वथा दुर्ज्ञेयं ज्ञानं च दोषदस्तस्मादित्यर्थः। श्लोके युक्त्या तार्किकमतखण्डन-मप्यासूचयतीति ॥ ३० ॥

---

श्रीकविचूडामणिचक्रवर्त्तिकृताऽन्वयबोधिनी।

स्वामिचरणानाम् एवं तावत् परमात्मनः सकाशादविद्याकृत-कार्योपाधयः तदंशा एव जीवा जाताः संसरन्तो भजन्तीत्युक्तं तत्र यद्येका ऽविद्या तदा जीवस्याप्येकत्वादेकमुक्तौ सर्वमुक्ति-प्रसङ्गः अथ नानाऽविद्यास्तर्हि तस्यैवांशान्तरेण संसारान-पगमादनिर्मोक्ष इत्यादि तर्कबलेन वस्तुत एव नानात्मनः तत्र च तेषामणुत्वे देहव्यापिचैतन्यं न स्यात् देहपरि-माणत्वेच मध्यमपरिमाणानां सावयवत्वेनानित्यत्वं स्यात् अतो (नाना) सर्वगता नित्याश्चेति केचन मन्यन्ते तत्र मतावत्युक्त दोषप्रसङ्गः अविद्याभेदेन तच्छक्तिभेदेन वा बद्धमुक्तव्यवस्थासम्भवात् ईश्वरस्य तु न केना—प्यंशेन संसारशङ्कायुक्तमेव प्रसिद्धं चात्मैक्यं सर्वश्रुतिषु किञ्च एवमन्तर्यामिब्राह्मणमपि न सहत इत्याह अपरि मिता इति। अस्यार्थः संक्षेपेण लिख्यते अत्र तार्किका दूष-यन्ति यद्येका अविद्या जीवोऽप्येकविधः तया बद्धोऽस्ति तर्हि तस्यैव ईश्वरस्यैव अंशान्तरेण जीवरूपांशेन कृत्स्ना संसारा-नपगमात् संसारनिवृत्त्यभावादनिर्मोक्षः स्यात् एकया अविद्यया मुक्तो जीवः पुनरन्यया बद्धः इत्थं निर्मोक्षः एवं च सति चतुर्थपुरुषार्थो भावः स्यादित्यादितर्कबलेन नाना आत्मान उच्यते सर्वगतत्वमाह—तेषाम् आत्मनामणुत्वं सूक्ष्मत्वे देहस्य स्थूलत्वे सर्वव्यापि चैतन्यं न स्यात् जीवपरि-माणमुक्तं श्रुत्या "आराग्रमात्रो ह्यपरो हि दृष्टः" इति। श्रुत्य-न्तरे "बालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेयः सुखदुःखफलैकभुक्" इति सूक्ष्माणामप्यहं जीवः इत्येकादशे भगवदुक्तेः एवम्भूतसूक्ष्मस्थूलदेहकप्रदेशे पिपी-लिकादिस्पर्शज्ञानं कथं स्यात् तस्मात्सर्वगता इति नित्यत्वं साधयन्ति—देहे इति। देहपरिमाणत्वे च देहस्य मध्यमं हृदयं दशाङ्गुलपरिमाणम् "अत्यतिष्ठद्दशाङ्गुलम्" इति श्रुतेः हृदयपरिमाणानाम् आत्मनां सावयवत्वादनित्यत्वं स्यात् तस्मात्परिमाणाभावान्नित्या इति अत एवात्मनो नाना सर्वगता जीवरूपेणैव नित्याश्चेति केचन तार्किका मन्यन्ते एतन्मतं निराकुर्वन् सिद्धान्तं करोति तत्र न तावदित्यादिना तत्र बन्धमोक्षप्रसङ्गे उक्तदोषप्रसङ्गो नास्ति कुतः अविद्याभेदेन अविद्यया बन्धः विद्यया मोक्षः अविद्यया मृत्युं तीर्त्वा विद्यया-ऽमृतमश्नुते" इति श्रुतेः एकादशे च—

"विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम्।
बन्धमोक्षकरी आद्ये मायया मे विनिर्मिते ॥" इति

तच्छक्तिभेदेन भवती अविद्यायाः क्रियाशक्त्या बन्धः विद्यायाः ज्ञानशक्त्या मोक्षः श्रुतिश्च काममयोऽयं पुरुषः सत्यकामो भवति यत्क्रतुर्भवति तत्कर्म करोति यत्कर्म कुरुते तदभि-सम्पद्यते" इति "तमेव विदित्वा ऽतिमृत्युमेति नान्यः पन्था विद्यते ऽयनाय" इति इतीश्वरस्य बन्धमोक्षव्यवस्थामुक्त्वा अंशेनस्तु बन्धशङ्कां निराकरोति ईश्वरस्येति समग्रगुणाधे-रखण्डितत्वस्यैश्वरत्वात् तस्य विद्याशक्तिप्रधानत्वात् केनाप्यं-शेन न संसारशङ्केत्यर्थः। एक एव हि भूतात्मा भूतेभूते व्यवस्थितः एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इत्यादि सर्वश्रुतिषु आत्मैक्यं प्रसिद्धमस्त्येव कुतो नानात्वे किञ्च जीवस्य कुतः स्वातन्त्र्यम् अन्तर्यामिसम्भवात् अत इमं तार्किकाणां पक्षं नाना जीवाः स्वतन्त्राः नित्याः सर्वगता इति मतम् अन्तर्यामिब्राह्मणाख्यो वेदो न सहत इत्याह अपरिमिता इति हे ध्रुव। तनुभृतो जीवाः यदि अपरिमिताः अनन्ताः ध्रुवाः तेनैव रूपेण नित्याः सर्वगताश्च स्युः तर्हि तेषां सम-त्वात् शास्यता न घटते इति कृत्वा त्वया नियमो नियमनं न स्यात् इतरथा घटते कथम् अजनि च यन्मयं तदविमुच्य नियन्तृभवेदिति यन्मयम् उपाधितो यद्विकारप्रायं जीवाख्यम् अजनि जातं तदविमुच्य कारणतया अपरित्यज्य तस्य स्व-विकारस्य नियन्तृनियमकं भवेत् तथा यत् अग्निमयं विस्फु-लिङ्गं जातं तदग्नित्वं कर्तृ विस्फुलिङ्गं स्वकार्यं अपरित्यज्य स्वरूपांशेन शक्त्यंशेन च सर्वांशे व्याप्यैव नियन्तृप्रवर्तकं भवेत् कार्याभावे कारणस्य प्रवृत्त्यभावात्तद्वत् किं तत् समम् अनु-स्यूतं तद्दर्शयति समं कालदेशांशेन तुल्यं वस्त्वन्तरं ज्ञात्वा तद्ब्रह्म अनुजानतां जानीम इति वदतां यत् अन्तर्याम्याख्यं तद्ब्रह्म परमकारणं वस्तु अमतं अविज्ञानप्रायम् अविषयत्वात् मतदुष्टतया मतस्य ज्ञातस्य दुष्टतया दोषश्रवणात् तस्मात् परलोकयोर्मध्ये मतकर्तृ किमपि सर्वानुस्यूतत्वेन विचन्त्य

## श्रीकविचूडामणिचक्रवर्तिकृताऽन्वयबोधिनी ॥

अवेदित्यर्थः। तथा च श्रुतिः "यस्यामतं मतं यस्य मतं यस्य न वेद सः अविज्ञातं विजानतां विज्ञातमविजानताम् अवचनेनैव प्रोवाच स ह तूष्णीं बभूव" इत्यादि अर्थः यस्य ब्रह्मविदः अमतमविज्ञातम् अविदितं ब्रह्मेति मतं तस्य मतं ब्रह्म सम्यक् ज्ञातमिति यस्य पुनर्मतं मया ब्रह्मज्ञानमिति स न वेदैव अत एव विजानतां जानीम इति वदताम् अविज्ञातमज्ञातमेव अविजानतां न जानीम इति वदतां विज्ञातमिति निदर्शनवचनेनेति वेदान्तशास्त्रमधीत्य गुरुकुलादागतं पुत्रं पिता पृष्टवान् प्रत्यक् ब्रह्म त्वं ज्ञातवानवेति। अविशेषे प्रत्यक् ब्रह्मणि शब्दप्रवृत्तिहेतुजातिगुणादेरभावात् ब्रह्मविदस्वप्रद्योतकमुखकान्त्यादिना तदभिनयं कृत्वा अवचनेनैव प्रोवाच प्रत्यक् ब्रह्म मयाऽनुभूतमिति सूचितवान् स पिता तूष्णीं बभूव ब्रह्मात्मतत्त्वमयं ज्ञातवानिति निश्चयं जगामेत्यर्थः। मतदुष्टत्वे श्रुतिः "यदि मन्यसे सुवेदेति दहमेवापि नूनं वेत्थ ब्रह्मणो रूपं यदस्य वेदेषु इति अर्थः यदि कदाचिदस्य ब्रह्मणो यद्रूपम् अहं सुवेदेति मन्यसे तर्हि दहं स्वल्पमेवापित्वं न वेत्थ न ज्ञानीयेत केवलमेतावत् अपितु अध्यात्मोपाधिपरिच्छिन्नस्यास्य ब्रह्मणो वेदेषु यद्रूपं गीतं तदपि त्वं दहमेवं वेत्थेति मन्येऽहं यत्तु निरुपाधिभूयाख्यं ब्रह्म न तत् सुवेद्यमित्यभिप्रायः मतखण्डनपरेयं श्रुतिः अन्तर्यामिब्राह्मणं "यः पृथिव्यां तिष्ठन्नित्यादिकं प्रागेव लिखितम् अथ स्वामिनाम्—

> अन्तर्यन्तासर्वलोकस्य गीतः श्रुत्याप्युक्त्या चैव मेवावसेयः।
> यः सर्वज्ञः सर्वशक्तिर्नृसिंहः श्रीमन्तं तं चेतसैवावलम्बे ॥

आश्रयामि तं कं यः सर्वलोकस्य अन्तर्यन्ता अन्तर्यामी श्रुत्या गीतः युक्त्या च एवमेवावसेयो निश्चितः तम् ॥३०-१७॥

---

## श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अपरिमिता इत्यस्य टीकायामेकैकांशस्य बन्धमोक्षौ स्थापयित्वा सर्वांशेप्यनिर्मोक्षप्रसङ्गस्य सिद्धान्तमाह—ईश्वरस्य त्विति। समष्टयुपाधेरखण्डतत्त्वस्येश्वरत्वात्तस्य च विद्याशक्तिप्रधानत्वादित्यर्थः। श्रुतौ तु अवचनेनेति वेदान्तमधीत्यागतं पुत्रं पिता पृष्टवान् प्रत्यक् ब्रह्म त्वं ज्ञातवान् नवेति तत्रोत्तरमिदमिति श्रेयं दहमित्यल्पमेवेत्यर्थः। यदस्य ब्रह्मणो रूपमिति पूर्वेण सम्बन्धः न केवलमध्यात्मोपाधिपरिच्छिन्नस्यास्य ब्रह्मणोरूपं त्वं दभ्रमल्पं वेत्थ तदप्याधिदैवतोपाधिपरिच्छिन्नस्यास्य ब्रह्मणोरूपं तदपि त्वं दभ्रमल्पं वेत्थेति मन्येऽहमिति अथ स्व—व्याख्यायां तदेवं भगवद्भक्तिप्रतिपादनोपयोगार्थमेव वयमप्येवं जीवस्वरूपं निरूपयाम इत्यन्या आहुः अपरीति। अत्रैके वदन्ति एकमेव सर्वव्यापि चैतन्यमेकस्या एवाविद्याया रजस्तमःप्रधानवृत्तिभेदोपाधित्वेनानन्तजीवायते सत्त्वप्रधानमूलाविद्योपाधित्वेन तु परमेश्वरायते इति अपरेतु वदन्ति तदसत् अविद्यायाः शुद्धचैतन्याश्रयत्वासम्भवात् तन्मूलपक्षान्तराणाञ्च तत एव निरस्तत्वात् तस्मादेवं मन्तव्यम् ईश्वरवत् स्वत एव सिद्धा अनन्ता नित्या विभवश्च जीवा इति तत्राग्रे स्वतः सिद्धत्वं वर्णयिष्याम इति मनसि कृत्वानन्तत्वं नित्यत्वं यदि सम्प्रदाय पूर्वपाठेन स्वीकुर्वत्यस्तदुत्तर—पाठेन विभुत्वं परि हरन्ति हे ध्रुव सर्वाश्रय उभयसम्मतावनन्ता नित्याश्च जीवा यदि सर्वगता विभवो भवन्ति तर्हि जीवानां त्वच्छास्यतेति यो नियमः शास्त्रनिर्णयः स न स्यात् व्याप्यत्वाभावात् इतरथा विभुत्वाभावेन तु तन्नियमो न स्यादिति न किन्तु स्यादेवेत्यर्थः। व्याप्यत्वात् किञ्च त्वत्तो न कश्चित् पदार्थः स्वतन्त्रोऽस्ति सर्वेषां त्वय्यैकात्म्यश्रवणात् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानाच्च विशेषतो जीवानां त्वत्तो जन्मापि श्रूयते तत एव त्वद्व्याप्यत्वात्त्वच्छास्यत्वं तेषामित्याहु:—अजनिचेति यदग्न्यादिमयं स्फुलिङ्गादिकमजनि जातं तदग्न्यादिकमेव कर्तृस्फुलिङ्गादि(क)स्वकार्यमावृत्य स्वरूपांशेन शक्त्यंशेनैव वा सर्वांशं व्याप्यैव नियन्तृप्रवर्तकं भवेत् तदभावे तत्प्रवृत्त्यभावात् किञ्च समं कश्चिदप्यंशे तुल्यं वस्त्वन्तरमनुजानतां यत्किञ्चित्तथा वदति तथानुज्ञामपि ददतां यदन्तर्याम्याख्यं तद्रूपं परमकारणं वस्तु अमतमज्ञातं तत्र हेतुः मतस्य तस्य दुष्टतया दर्शयिष्यमाणश्रुतिव्यक्तमेवेति तस्माद्ब्रवितद्ब्रह्मपरमाणुवृन्दवत्सूक्ष्मत्वनित्यतदंशांशरूपादिव्यपरमाणवोऽप्ययस्कान्तादिवत्स्वप्रभावविशेषरूपेण गुणेन गुणाद्वेति न्यायसिद्धेन स्वशरीरमखण्डमपि चेतयन्ति तस्य महानज आत्मेति महद्व्यपदेशश्च प्राचुर्येण यत्किञ्चित्तद्गुणसारत्वादेव लोके महाराजादिशब्दप्रयोगवत् तदेवमेव शास्यशासकत्वे सिद्धे सेवकत्वमपि सिद्ध्यतीति पूर्वापरदर्शिता भक्तिः सिद्ध्यतीति भावः। अत्र श्रीगीतोपनिषदः—

> "यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः।
> क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत" ॥ इति

श्रीभगवदुक्तत्वस्याद्य महतां च महानहमिति महत्त्वस्य स्वरूपपरिमाणानन्तर्येणोक्तत्वात् तथैव जीवस्यापि परिमाणोक्तौ सूक्ष्माणामप्यहं जीव इति अत एव विष्णुधर्मोत्तरं वालाग्रशतशो भागः कल्पितो यः सहस्रधा तस्यापि शतशो भागो जीव इत्यभिधीयते" इति श्रुतयश्च वालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेय इत्याद्याः एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मेत्याद्याः न तत्समश्चाभ्यधिकश्च दृश्यते इत्याद्याश्च अत्र विशेषविस्तारस्तु श्रीभागवतसन्दर्भे परमात्मसन्दर्भतट्टीकयोर्दृश्यः ॥ ३० ॥

---

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अथ जीवानाम् अणुत्वं परस्य तदन्तः प्रविश्य नियन्तृत्वञ्चाह—अपरिमिता इति । अपरिमिताः असङ्ख्येयाः जीवाः सर्वगताश्चेत् ध्रुवाः अस्पन्दाः स्युः उत्क्रान्तिगत्या गतिः श्रुतिविरोधः स्यात् तनुभृत इति सर्वेषां शरीरसम्बन्धेन सर्वशरीराचरितपुण्यपापानां सर्वसाधारणत्वेन व्यवस्थितफलदानायोगात् शासनं नोपपद्यते इतरथा असर्वगतत्वे अध्रुवत्वे स्पन्दनवत्त्वे अणुत्वे अध्रुवतास्पन्दनवत्त्वम् उत्क्रान्तिगत्या गतयश्चोपपद्यन्ते इत्यर्थः । शासनोपपत्तिः स्फुटत्वादनभिहिता यद्वा इतरथा शासनीयत्वे अध्रुवतास्पन्दनवत्त्वम् अणुत्वं स्वीकार्यमित्यर्थः । प्रशासनं चान्तःप्रविश्येत्याह—अजनिचेति । यन्मयम् अजनि व्यापकेन प्रचुरं जग-

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यजनि तद्ब्रह्म अविमुच्य नियाम्यत्वमविमुच्य अन्तःस्थितत्वेन नियन्तृत्वमिति समजानतां सम्यगजानतां यन्मतं मतदुष्टतया दुष्टमतत्वात् अमतम् अनभिमतमित्यर्थः ॥ ३० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स्थिरचरजातयः स्युरित्यनेन चराचरात्मकस्थूलसूक्ष्मशरीरान्तःप्रवेशयोग्यं जीवानां स्वाभाविकमणुस्वरूपत्वं सूचितं तद्विरुद्धं जीवस्वरूपविभुत्ववादं दूषयन्ति—अपरिमिता इति । हे ध्रुव ! तनुभृतो जीवाः अपरिमिताः असङ्ख्येयाः ध्रुवाः नित्याश्च ते यदि सर्वगतास्तर्हि न शास्यता सर्वेषां तुल्यत्वात्परमात्मना जीवान्तरेण वा शास्यता नियाम्यता नोपपद्यते इतीत्थं नियमः उत्क्रान्तिगत्या गत्यादिविषयः नित्यं श्रूयमाणो नोपपद्यते उत्क्रान्तिस्तावच्छ्रूयते "तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः" इति गतिरपि "ये वै केचास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" इति आगतिरपि "तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे" इति इतरथा अणुत्वे तु शास्यता नियमादय उपपद्यन्त इत्यर्थः । यद्यपि शरीरवियोगरूपत्वेन उत्क्रान्तिः शरीरस्थितस्याप्यात्मनः कथञ्चिदुपपद्यते गत्या गतीतु न कथञ्चिदुपपद्यते अनस्ते स्वात्मनैव सम्पाद्ये इत्यभिप्रायेण नियमशब्दः प्रयुक्तः तथाच शारीरकं सूत्रं "स्वात्मना चोत्तरयोः" इति चशब्दोऽवधारणे तनुभृत इत्यनेन सर्वेषां सर्वशरीरसम्बन्धाविशेषात्सर्वशरीरानुचरपुण्यपापानां सर्वसाधारणत्वेन व्यवस्थितफलादानायोगाच्छासनं नोपपद्यत इत्यात्मविभुत्ववादेऽनुपपत्तिरुद्भाविता अपरिमिता इत्यनेन जीवैक्यवादव्युदासः तत्र बन्धमोक्षशिष्याचार्यबद्धमुक्तत्वादिव्यवस्थानुपपत्तिदूषणमभिप्रेतं नन्वणुत्वपक्षेऽपि जीवानां परमात्मशास्यता किं भृत्यादीनां राजा शास्यते वेत्यपेक्षायामन्तः प्रविश्यैवेत्याहुः—अजनिचेति । यन्मयमजनि व्यापकेन येन प्रचुरं जगदजनि जातं तद्ब्रह्म अविमुच्यान्तःस्थित्वैव नियन्तृ (न्ता) इति सम्यगजानतां यन्मतं तस्य मतस्य दुष्टत्वादमतमनभिमतं प्रामाणिकानामिति शेषः । सममनुजानतामिति पाठान्तरं तदा समशब्दः सर्वपर्यायः समं सर्वं तज्जगदविमुच्य अन्तःस्थित्वैव नियन्तृ इत्यनुजानतां प्रामाणिकानां यदमतमनभिमतं तदनादरणीयम् इत्यध्याहारः कुतस्तस्य मतस्य दुष्टतया प्रमाणविरुद्धतयेत्यर्थः अजनीति प्रकृतिपुरुषात्मकजगदुत्पत्तिरुक्ता ॥ ३० ॥

---

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथ जीवानामणुत्वं परमात्मनस्तदन्तः प्रविश्य नियन्तृत्वं चाह—अपरिमिता इति । अपरिमिता असंख्येयास्तनुभृतो जीवाः यदिचेत् सर्वगता ध्रुवा अल्पन्ताः स्युस्तर्हि उत्क्रान्तिगत्या गतश्रुतिविरोधापत्तिः स्यात् तथा च सूत्रकारः "उत्क्रान्ति गत्या गतीनाम्" [ २-३-२० ] इतिश्रुतेरित्यर्थः तेन प्रद्योतेनैष आत्मा निष्क्रामति येवैकेचास्माल्लोकात्प्रयान्ति चन्द्रमसमेव सर्वे गच्छन्ति तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे इत्यादिगत्या गतीनां श्रुतेरणुरेव जीवः प्रतिपादितः तनुभृत इति सर्वेषां शरीरसम्बन्धेन सर्वशरीरानुचारिपुण्यपापानां सर्वसाधारणत्वेन व्यवस्थितफलदानायोगात् शासनमपि नोपपद्यते इत्याह—तर्हि न शासितेति कथा नियमो नियमनं न स्यात् हे ध्रुव हेयप्रतिभट इतरथाऽल्पत्वमवस्थे अणुत्वे उत्क्रान्तिगत्या गतयश्चोपपद्यन्ते शासनमपि उपपद्यते इत्यर्थः । यद्वा इतरथा शासनीयत्वे उत्क्रान्तिगत्या गत्यविरोधाय अध्रुवताल्पत्वमत्वं अणुत्वञ्च स्वीकार्यमित्यर्थः । शासनञ्चान्तःप्रविश्यैवेत्याह अजनिचेति । यन्मयमजनि व्यापकेन येन प्रचुरं जगदजनि जातं तद्ब्रह्म अविमुच्य नियाम्यम् अविमुच्य अन्तःस्थितत्वेन नियन्तृ भवेत् " अन्तः प्रविष्टः शास्ता जनानामित्यादि श्रुतेर्नियन्तृत्वं स्यादित्यर्थः: इति समजानतां सम्यगजानतां यन्मतं निश्चितं तन्मतदुष्टतया दुष्टमतत्वादमतं अनभिमतं अस्माकमिति शेष इत्यर्थः ॥ ३० ॥

---

### योगिरामानुजाचार्यकृतसरलाव्याख्या ।

जीवानां नियाम्यस्वरूपत्वमीश्वरस्य नियन्तृत्वं चाहुः—हे ध्रुव नित्यस्वरूप नित्यो नित्यानां चेतनश्चेतनानामिति श्रुतेः अपरिमिताः असङ्ख्येयाः ध्रुवाः नित्याः एवम्भूतास्तनुभृतो जीवाः सर्वगताः सर्वव्यापका यदि तर्हि तदा न शास्यता नियाम्यत्वं नोपपद्यते न नियमः उत्क्रान्तिगत्या गतादिविषयः नियमश्च श्रूयमाणः नोपपद्यते जीवस्य विभुत्वे ईश्वरसाम्यत्वेन तस्य नियाम्यत्वासम्भवात् जीवस्य सर्वगतत्वेन उत्क्रान्तिगत्या गतादीनाञ्चासम्भवादित्यर्थः ॥ इति पूर्वोक्तं शास्यत्वाभावनियमाभावद्वयं इतरथा जीवानामणुत्वे शास्यत्वाभावदोषः नियमाभावदोषश्च न भवति शास्यत्वाभावनियमाभावरूपदोषवारणाय जीवानामणुत्वमेवाङ्गीकार्यमित्यर्थः मतदुष्टतया मतस्य सामान्यबुद्धिविषयस्य दुष्टतया दुष्टत्वश्रवणात् तथाच श्रुतिः यदि मन्यसे सुवेदेति दहरमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपमिति अनुजानतामपि वयं जानीम एव ब्रह्मेति वदतामपि यत् ब्रह्म स्वरूपं अमतं अविज्ञातप्रायं याथार्थ्यस्वरूपस्य दुर्ज्ञेयत्वात् यन्मयं यद्विकारप्रायं यत्प्रचुरं वा व्यापकेन येन प्रचुरं विकारप्राचुर्यार्थयोश्च मयटः विधानात् समं सर्वजगत् अत्र सममितिसर्वपर्यायकं अजनि जातं तत् जगदुपादानभूतं जगद्व्यापकरूपं वा ब्रह्म तदन्तःस्थितिमविमुच्यापरित्यज्य अन्तःस्थित्वैवेत्यर्थः नियन्तृनियामकं भवेत् अन्तः प्रविष्टःशास्ता 'जनानामिति श्रुतेः हे ध्रुव अपरिमिताः ध्रुवास्तनुभृतस्सर्वगता यदि तर्हि शास्यता न नियमः इति इतरथा न मतदुष्टतया अनुजानतां यदमतं यन्मयं सममजनि तदविमुच्य नियन्तृ भवेदित्यन्वयः ॥ ३० ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मू० न हि परमस्य कश्चिदपरो न परस्य भवेद्व्ययत इव यस्य च शून्यतुच्छत्वधतः । अपरिमिताध्रुवास्तनुभृतो यदि सर्वगतो नहि न शास्यतेति नियमो ध्रुवते च तथा ॥१७॥३१॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

न हि परमस्येति श्लोकस्यायं भावः अनादिप्राणात् परस्य उत्तमस्य सर्वं सम्बधतः यस्य परमस्य ते तव कश्चिदपरः स्वतन्त्रो न भवेत् हे सुन्यमूल ! समानवार्जित यस्य अत्र जीव समुद्यपि व्ययतः सर्वं जानतः सर्वज्ञस्येत्यर्थः "अय गतौ" इति धातोः गत्यर्थानां ज्ञानार्थत्वात् इव यथा प्राणस्य नापरः स्वतन्त्रो नास्ति त्वमेव स्वतन्त्रः हे सर्वपूर्ण यदि ततः तस्मात् स्वतन्त्रः तदा प्राणश्रीरन्यो या त्वां विना प्राणास्तनुभृतो जीवाः ध्रुवा प्राणाधीनाः जीवाः कियन्तः सन्तीत्यर्थः । तर्हि सत्यं ते अपरिमिताः असङ्ख्याताः नन्वेवं चेत् "एकमेवाद्वितीयम्" इत्यादि श्रुतिवाक्यविरोध इति तत्राह—नहीति । श्रुतेरयं नियमार्थो जीवानां शाश्वता अधीनता-मेत्यवार्थे न हि किन्तु स्वगतभेदस्य ईश्वरान्तरस्यानन्तरस्य च निषेधो नियमः तत्र किं प्रमाणमत्राह—ध्रुवतइति अतोऽन्यदार्त्त नेह नानास्ति किञ्चन न तत्समश्चाभ्यधिकश्च दृश्यते" इत्यादि श्रुतिस्मृतयस्तथा ध्रुवते च तव स्वतन्त्रो नापरो यद्वदत्र प्राणा-सान्यस्तुल्यशून्यस्य सन्धिन् प्राणाधीना अमिता जीवसङ्घाः प्राणोऽवशेते प्रकृतिश्च भूमन् इति श्रुतिरनेन गृहीता "स्वतन्त्रो नापरः कश्चिद्विष्णोः प्राणपतेः प्रभोः" इत्यादिस्मृतेः श्रुतिरपि सत्यार्थेत्यर्थः ॥१७॥ ३१ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवं भगवद्भक्तिप्रतिपादनोपयोगार्थमेवं वयमप्येव जीव-स्वरूपं निरूपयाम इत्यन्या आहुः—अपरिमिताः ॥ ३० ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

ननु स्थिरचरजातीनां माविहारे मदीक्षया अजया निमित्त-भूतयोत्पन्नत्वमुक्तं तत्कथं सङ्गच्छतां यतोऽपरिमिताः जीवाः सर्वे ध्रुवाः अतः स्वतन्त्राश्च कुतो वा तेषां मदंशत्वं मदधीनत्वञ्चेत्याशङ्क्याहुः—अपरिमिता इत्यादि । हे ध्रुव नित्या यदि तनुभृतो ध्रुवास्तदा तव ध्रुवत्वे तेषामपि च ध्रुवत्वे साम्यात् शाश्वताः न घटते इति कृत्वा नियमो नियमनं न स्यात् येऽपरिमिता अनन्ताः सर्वगताः व्यापका ध्रुवा नित्या भवन्ति तेषां को नियन्ता इतरथा अन्यथा यदि अपरिमितादयो न भवन्ति तदैव नियमनं स्यात् केवलमित्येव न अपितु अपरिमितया एव जीवास्त्वदंशत्वात् अहं बहुस्यामिति बहुशब्दोऽपरिमितपरः तेन त्वदंशाः ध्रुवाः सर्वगताश्च तथापि तेषां शाश्वतैव ततो नियमनं चेत्याहुः—अजनीत्यादि चकारः पक्षान्तरं सूचयति यज्जी-वाख्यं वस्तु यन्मयम् अजनि यदंशत्वेन यन्मयं जातं तत् अंशिरूपं वस्तु नियन्तृ भवेत् अविमुच्य कारणत्वमविहाय यतः समं अंशत्वेन समं अविसदृशमित्यर्थः अतो अंशाना-मंशी नियन्ता भवतीति भावः । ननु स एवताधत कल्पितकल्पतामित्याहुः—अनुजानतां जानीम इति वदतां यत् अमतं अनिर्वचनीयं वस्तु ममतम् अविज्ञातमतं चेत्को दोष इत्याहुः मतदुष्टतया मतं यत् तद्दुष्टम् मतत्वं ज्ञेयो न भवसि यो ज्ञेयो न भवति स एवांशीति त्वदंशाश्च जीवा नवैतद्रूपत्वं मदंशा न भवन्ति जीवाः यतः "ममै-वांशो जीवलोके जीवलोकः सनातनः" इति तवैवोक्तेः अत-स्त्वमेवामतः त्वमेवांशी अतो नियन्ता च ननु जीवः उक्त-प्रकारा परिमित ध्रुवादिमन्तोऽपि न स्वतन्त्रा इति वाक्यार्थः ॥३०॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अधुना प्रसङ्गात् भगवतो माहात्म्यसिद्ध्यर्थं जीवानां भग-वदधीनत्वं स्थापयितुं स्वातन्त्र्यपक्षमनूद्य निराकुर्वन्ति—अपरि-मिता ध्रुवा इति । जीवानां व्यापकत्वं स्वरूपतो भगवद्विषया न भवेयुः भोगमोक्षदुःखाभावार्थं तदपेक्षाव्यापकत्वेन भवि-ष्यतीत्यपि वक्तव्यम् अतो यदि जीव एव न्यायः विस्फु-लिङ्गरूपः अङ्गीक्रियते तदैव नियम्यनियामकभावो भवति न त्वात्मपक्षे व्यापकत्वं तदर्थं व्यापकता निराक्रियते केवल नैय्यायिकादयः जीवं व्यापकं मन्यन्ते तेषामयमा-शयः नित्यः अणुर्व्यापको वा भवति मध्यावान्तरपरिमाण-वान् अवान्तरपरिमाणमनित्यत्वेन व्याप्तम् अणुपरिमाणत्वे सर्व-शरीरव्यापिचैतन्योपलम्भो न स्यात् किञ्च देशान्तरे यत् द्रव्यमस्मद्भोगायोत्पद्यते तत्रास्मददृष्टकारणत्वेन वक्तव्यम् अत उत्पत्तिदेशे अदृष्टवदात्मसंयोगः कारणं वर्तते इत्यात्मनो व्यापकत्वसिद्धिः तेन आत्मनो देशपरिच्छेदरहिताः ध्रुवा इति कालपरिच्छेदरहिताः यद्यात्मा अनित्यः स्यात् अनि-र्मोक्षः स्यात् व्यापकस्यानित्यत्वमसिद्धं किञ्च सर्वगतास्ते सर्वत्र तेषां सकलमूर्तद्रव्यसंयोगो वक्तव्यः अन्यथा भोग-साधना यतो निद्रव्याणि न भवेयुः न ज्ञानादिः संसारे-कश्चित्पदार्थः कस्यचिन्न भवतीति सिद्धम् एवमात्मनः परिच्छेदद्वयाभावः सकलमूर्तद्रव्यसंयोगश्च अवश्यमङ्गीकर्तव्य इति तन्मतमनूद्य परिहरति तनुभृतो यदि सर्वगतास्तर्हि न शास्यतेति नियमः अत्र शासनं न कर्मानिमित्तं ततु यमादिकार्यं किन्तु दासस्वामिवत् नियामकभावः व्यापकत्वे जीवानां दासत्वं न स्यादित्यर्थः । तथा सति नेश्वरश्च सेत्स्यति इति प्रयोजनाभावात् सर्वत्रात्मनः कारणत्वेन विद्य-मानत्वात् स्वभोगस्तेनैव सम्पादयितुं शक्यते अदृष्टनियाम-कन्तु कर्मैव भोगस्त्वदृष्टनियम्यः कर्मप्रयत्ननियम्यम् अतो जीवार्थ-मीश्वरापेक्षाभात् नेश्वरोपि सेत्स्यतीति नियम्यनियामक-भावो दूरे यच्चानय एवमाहुः नियम्यनियामकभावो न सेत्स्यतीति तासामयमभिप्रायः भोगनियामकः परमेश्वर एव अन्यथा भोगनियमो न स्यात् दृश्यते च भोगनियमः बहुषु विद्यमानेषु एकस्मिन् शरीरे सर्वेषामेव सम्बन्धस्य तुल्यत्वात् एकशरीरे आम्रफले भक्षिते कथमेकस्यैव सुखं भवेत तददृष्टेन जनितामिति चेत्तस्यैव तददृष्टं नान्यस्येऽत्यत्र को नियमः आत्मसंयोगस्य तुल्यत्वात् ज्ञानेच्छाप्रयत्नाना-मपि तुल्यत्वापत्तिः नचेश्वरव्यतिरेकेण कश्चिदन्यो नियाम-कोऽस्ति येन प्रतिनियतभोगदर्शनस्य नियमः सिद्ध्यत् ईश्वरे तु नियामकेऽङ्गीक्रियमाणे तु एकएव भुङ्क्ते नान्य इति ईश्वरनियमनात् नियमः सङ्गच्छते तथा अदृष्टेऽपि अतोऽवश्यं भोगनियमार्थम् ईश्वरो नियामको वक्तव्यः तच्च व्यापक-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तेन सङ्कोचने महत्त्वेन तस्याभिमानात् तुल्यत्वाच्च न भगवन्तं मन्यते ईश्वरेणैव चेद् ज्ञानः सेत्स्यति प्रतिनियतः तर्हि व्यापकता न वक्तव्या अणुपरिमाणस्य आदेहव्यापि चैतन्य गुणः सम्भवति गन्धवत् आश्रयाविच्छेद एव गन्धस्य युक्तो दूरत्वात् यत्र निरन्तरोत्पत्तिर्मृग्यते अन्यथा आश्रयमपि परित्यज्य पत्रपुष्पादिवद्गन्धस्य गच्छतीत्येव मन्तव्यं वायोर्गन्धवाहत्वासम्भवे "यथा वृक्षस्य सम्पुष्पितस्य दूराद्गन्धोवातीति" श्रुतेश्च अवयवगतिकल्पना तु योजनगन्धायां बाधिता—

"यादृशः प्रकटो गन्धः पुष्पाणां सन्निधौ भवेत् ।
एकस्मिन्नपि तत्पुष्पे तथा घ्राणगतेन हि ॥

तस्मादुगन्धवच्चैतन्यमपि सर्वदेहव्यापि तिष्ठति लोके च परिच्छिन्न एव नियम्यनियामकभावः ननु नियामकोऽप्यपरिच्छिन्नोऽस्तु को दोष इति चेत्तत्राह हे ध्रुवेति यो निश्चलः स व्यापक एव भवति प्रकारान्तरेण ध्रुवत्वन्तु भूमादावपि न दृश्यते इति ईश्वरो व्यापक एव "तस्मिन्नाकाश ओतप्रोतश्च" इतिश्रुतेः आराग्रमात्रोह्यपरोऽपि दृष्ट इति नाणुरेतच्छ्रुतेरिति चेन्न इतराधिकारात् इतिन्यायाच्च इतरथा जीवस्य व्यापकत्वे भगवतः अणुत्वे एकदेशस्याप्यन्यथात्वे वा नियम्यनियामकभावो नोपपद्यत इति भावः । अन्यत्र न काचित् दृष्टोपपत्तिः व्यापकत्वमप्यस्तु नियम्यत्वमप्यस्तु को दोषः अल्पेनापि बालकानां सिंहेन महागजो नियम्यते सूक्ष्मेणापि राज्ञा सर्वलोका नियम्यन्ते सूक्ष्मेणाप्यग्निकणेन सर्वे गृहा दह्यन्त इति न स्थूलपरिमाणत्वात् नियामकः नापि सूक्ष्मपरिमाणत्वात् नियम्य इति अतो व्यर्थ आग्रह अजनि च यन्मयं तदविमुच्य नियन्तृभवेदिति यत् यन्मयमजनि तदविमुच्य तदत्यक्त्वा नियन्तृ किं भवेत् अपितु न भवेदेवेत्यर्थः । बाध्यबाधकभावो दाह्यदाहकभावश्चान्यः नियम्यनियामकभावस्त्वन्यः राज्योत्पन्नाः प्रजाः राज्यमया भवन्ति राज्यं च राज्ञोऽङ्गमिति राजमया एव प्रजाः तथा जीवा अपि भगवन्मया व्यापकाश्चेत् कथमपि न तन्मया भवन्ति निरताश्चेत् विद्यमानेऽपि अप्रयोजकत्वं वदन् साहसी भवति तस्मात्तन्मयत्वान्यथानुपपत्त्या न व्यापकत्वं जीवस्येति सिद्धं ननु वेदान्तिनोऽपि आत्मैकत्वं वदन्तः नियम्यनियामकभावं नाङ्गीकुर्वन्ति सर्वत्र तुल्यदर्शनात् अतो वेदान्ते नियम्यनियामकभावो नास्तीति ये वदन्ति तदनूद्य परिहरन्ति सममनुजानतां यदमतमिति ये सर्वत्र ब्रह्म सममनुजानन्ति—

ब्राह्मणे पुल्कसे स्तेने ब्रह्मण्येऽर्के स्फुलिङ्गके ।
अक्रूरे क्रूरके चैव समदृक् पण्डितो मतः ॥ इति

ब्रह्मविदः समदृश इति तेषामप्येतदननुमतं तेऽपि नियम्यनियामकभावमङ्गीकुर्वन्त्येव अन्यथा भगवान् मुक्तोपसृप्यो न स्यात् चतुर्विधा भजन्ते मामिति ज्ञानिनोऽपि भजनश्रवणाच्च तन्मतस्यानियम्यता ज्ञानमार्गे को दोष इति चेत्तत्राह— मतदुष्टतयेति । मते ब्रह्मवादे अयमर्थो दुष्ट इति "एष सर्वेश्वरः एष लोकपालः एष भूताधिपतिः" इति सर्वश्रोत्रियस्तु भगवतो नियामकत्वश्रवणात् "एतस्यैवाक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठतः" इत्यादिभिः श्रुतिभिः स्पष्टमेव प्रशासनं दृश्यते "[illegible]" [१-३-१०] इति न्यायेन च निर्णीतः नतमज्ञानवतः प्रशासनं सर्ववादिसम्मतं तच्च व्यापकत्वेन घटते अतस्तत्त्वमनङ्गीकृतमिति ॥२०॥

नियन्ता जीवजातस्य हरिस्तेनाणवो मताः ।
जीवा न व्यापकाः क्वापि चिन्मया ज्ञानिनां मताः ॥२०॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अत्र स्थिरचरजातिजीवतत्त्वविचारवादिनां नानाविधान्येव मतानि तत्र यद्येकैवाविद्या एक एव जीव इति मतं तदैकमुक्तौ सर्वमुक्तिप्रसङ्गः यदि च नाना अविद्यास्तर्हि तस्यैवांशान्तरेण संसारानपगमादनिर्मोक्षस्तस्मादृहश्च एवात्मनस्तत्र तेषामणुपरिमाणत्वे देहव्यापिचैतन्यं न स्यात् देहमात्रव्यापित्वे मध्यमपरिमाणत्वे नानित्यत्वं स्यात् तस्मात्ते सर्वगता नित्याश्च ननु अन्यास्तत्र न तावदुक्तदोषप्रसङ्गः अविद्याभेदेन तच्छक्तिभेदेन वा बद्धमुक्तव्यवस्थासम्भवादित्येतन्मतमप्यन्ये न सहन्त इति तन्मतमनुवदन्ति अपरिमिताः असङ्ख्या एव तनुभृतो जीवाः यदि ध्रुवा नित्या एव ननु त्वदन्या सर्वगता एव च स्युस्तर्हि तेषां त्वत्साम्यादेव शास्यतेति नियमो न स्यात् जीवास्त्वच्छासनीया एवेत्यवधारणं सर्वशास्त्रप्रतिपादितं न घटत इत्यर्थः । हे ध्रुव हे नित्यस्वरूप ! नेतरथा इतरथा तेषां त्वदन्यत्वे सति अन्यत्वादेवासर्वगतत्वेन सति त्वच्छास्यत्वाभावो न स्यात् किन्तु त्वच्छास्यतैव घटत इत्यर्थः । कथं यन्मयं यत्कार्यं जीवात्मकं यस्मादजनि तत् किञ्च ब्रह्म तेषां जीवानां नियन्तृशास्तृ भवेदेव किं कृत्वा तदविमुच्य कारणतया तान् जीवान् अपरित्यज्य तत्रैव किं तत्राहुः समं यत् सर्वान् जीवान् प्रति अन्तर्यामित्वांशेन समं तुल्यमित्यर्थः । ननु किं यत्तच्छब्दैर्बोध्यते चेदुच्यतामिदं तदिति तत्राहुः अनुजानतां यदमतमिति जानीम इति वदतां यत् ब्रह्म अमतं अज्ञातप्रायं किञ्च मतस्य ज्ञातस्य दुष्टतया दोषश्रवणाच्च अत्र श्रुतयः यस्यामतं तस्य मतं मतं यस्य न वेद सः अविज्ञातं विजानतां विज्ञातमविजानता "मिति अवचनेनैव प्रोवाचेति सह तूष्णीं बभूवेति यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपं यदस्य त्वं तदस्य देवेष्विस्याद्याः अयं च अस्य ब्रह्मणो यद्रूपं तत् यदि सुवेद सुवेदेति मन्यसे तर्हि त्वं दभ्रमेव वेत्थेत्यन्वयः । यदस्य देवेष्वधिदेवादिषु रूपं त्वं मन्यसे तदप्यल्पमेवेति पूर्वेणैवान्वयः ॥ ३० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इदानीं विज्ञानात्मनः सङ्ख्यापरिमाणयोर्विवादं परिहरन्ति श्रुतयः हे ध्रुव ! शाश्वत षाड्गुण्यपक्षे तनुभृतोऽपरिमिताः असङ्ख्याका अनेकजीववादिमुखं पिधाय तेन स्वौपाधिकभेदेन व्यवहारेऽनेकत्वमिष्टमेवेति चेत्तत्राहुः—ध्रुवा इति । स्वाभाविकाल्पज्ञत्वादिधर्मवतोऽनाद्यनन्ताः अनेकोपाधिकभेदवादिनां जिह्वा त्रोटिता तथा च श्रुतयः "ज्ञाज्ञौ द्वावजावीशानीशावजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः नित्यो नित्यानां चेतनश्चेतनानाम्" "[illegible] नानाव्यपदेशाच्च" [२-३-४२] इति न्यायाच्च सङ्ख्याविवादं [illegible]

न घटत उद्भवः प्रकृतिपूरुषयोरजयोरुभययुजा भवन्त्यसुभृतो जलबुद्बुदवत्।
त्वयि त इमे ततो विविधनामगुणैः परमे सरित इवार्णवे मधुनि लिल्युरशेषरसाः॥ ३१॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

परिच्छिन्नं निर्धारयन्त्यः साङ्ख्यनैयायिकादीनां बके घूर्णीः कुर्वन्ति श्रुतयः यदि सर्वगता इति यदि विभुपरिमाणकाः स्युः तर्हि तव शास्यता नेति कृत्वा नियमो नियमनं शासनं न स्यात् अन्तःप्रविष्टः शास्ता जनानां य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः "इत्यादिनियमो न घटेदित्यर्थः। इतरथाऽणुपरिमाणकत्वे तु समञ्जसं तथा "अणुरेष आत्मा चेतसा वेदितव्यः बालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयस्सचानन्त्याय कल्पते इतिश्रुतिप्रोक्तस्य जीवस्य शास्यत्वं भगवतः शास्तृत्वं घटेत नु तर्हि देहव्यापिचैतन्यं न स्यान्नितरां शिरः पादादिगतसुखाद्यनुभव इति चेन्न स्वासाधारणधर्मभूतज्ञानव्याप्त्या न विरोधः प्रकाशः न च प्रकाशस्याश्रयं विहायान्यत्र गमनासम्भव इति वाच्यं प्रदीपप्रभायाः प्रदीपं विना वह्नि विनौष्ण्यादेः पुष्पं विना गन्धादेः धर्मिणं विना जातिसमवायादेर्वर्तमानस्य सुप्रसिद्धत्वात् नात्र तर्कमात्रस्य प्रमाणत्वम् अपितु श्रुतिरपि अणुतश्चक्षुषः प्रकाशो व्याप्त एवमेवास्य पुरुषस्य प्रकाशो व्याप्तो वै पुरुष इत्यादि दृष्टान्तसहकृतभगवद्वाक्यमपि—

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत॥

इति मणिद्युमण्यादौ परिच्छिन्नेऽपि विभुपरिमाणकप्रभालक्षणगुणवत्त्वस्य प्रत्यक्षप्रमाणगोचरत्वात् न च मण्यादीनामवयवा एव प्रभात्वेनोच्यन्ते इति शङ्कनीयं तथात्वे द्रव्यनाशप्रसङ्गात् तथा च वाल्मीकिनापि प्रभाप्रभावतोर्भेदो दर्शितः "रामेण सङ्गता सीता भास्करेण प्रभा यथा" इति सुन्दरकाण्डे एतच्च सिद्धान्तजाह्नव्यां विस्तृतं व्याख्यातं भगवच्चरणैर्दैवाचार्यैः एतदेवस्पष्टयति यन्मयं यद्विकारम् अजनि तत्कारणत्वमविमृश्य नियन्तृभवेदिति व्याप्तिः किं तन्नियन्तृस्वरूपं तत्राह—समं सर्वस्य ब्रह्मादिस्थावरान्तर्यामित्वेऽप्यच्युतषाड्गुण्यं तर्हि बहिरभावत्वादियत्तायुक्तमिति चेत्तत्राहुः—अनुजानतां ब्रह्माभिमानिनां भगवतः स्वरूपगुणशक्त्यादिषु तर्कबलेनेयत्तां परिभाष्यमाणानाममतम् अज्ञातं कुतः मतदुष्टतया मतस्येयत्ताज्ञानस्य ज्ञातुर्वा दोषश्रवणेन तथाहि यस्यामतं मतं तस्य मतं यस्य न वेद सः अविज्ञातं विजानतां विज्ञातमविजानतामित्यादिश्रुतयः॥ ३०—१७॥

भाषा टीका।

हे ध्रुव! निश्चल स्वरूप असंख्यात नित्य शरीरधारी जीव यदि विभुस्वरूप होंइ तो विभुस्वरूप परमात्मा के तुल्य होने से उन को परमात्मा से नियमन करना नहि घटिसकता तथा जीवन का शरीर ते निकसना परलोक मे जाना वहां से आना यह श्रुतियों में सुना जाता है विभुमान यह नियम भी नांह घटिसकता है और जीवन को अणुमान में उनका परमात्मा से नियम न करना शरीर ते निकसना परलोक जाना वहां से आना यह नियम घटि सकता है और सबव्यापक परमात्मा से प्रचुर यह जगत् इस ते उत्पन्न भया है वह परब्रह्म इस सब जगत को नहि छांडकर अन्तर्यामि रूप से सब के भीतर स्थित होकर सबका नियन्ता होता है इस प्रकार तत्व ज्ञानियों के मत से जो विरुद्ध मत है यह दुष्ट है इस वास्ते अनादरणीय है॥ ३०॥

श्रीधरस्वामिकृतभावार्थदीपिका।

ननु, यदि च परमात्मनो जीवा जायन्त इति नियन्तृनियम्यभाव उच्यते तथा सति जीवानामनित्यत्वप्रसङ्गेन प्रतिदिनं कृतनाशाकृताभ्यागमप्रसङ्गः स्यात् किञ्च तदा मोक्षो नाम जीवस्य स्वरूपहानिरेव स्यात् न चैतद्युक्तम् स्वप्रकाशानन्दात्मनोऽविद्याकृतानर्थनिवृत्तिमात्रस्य मोक्षत्वाभ्युपगमादित्याशङ्क्योपाधिजन्मनैव जीवानां जन्मोच्यते न स्वतः अघटनादित्याह—न घटत इति। तत्र किं प्रकृतेर्जीवरूपेणोद्भवः स्यात् पुरुषस्य वा उभयोर्वा आद्ये जीवानां जडत्वापत्तिः द्वितीये पुरुषस्य विकारित्वप्रसङ्गः अत एव न तृतीय इत्याशयेनोक्तं प्रकृतिपुरुषयोरुद्भवो न घटत इति श्रुत्याऽजत्वप्रतिपादनादपीत्याह—अजयोरिति। तथा च श्रुतिः 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः जनयन्तीं सरूपाम् अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इति उभययुजा तु भवन्ति उभयस्य तद्युज्यत इति युक्तसम्बन्धं परस्पराध्यासमिति यावत् तेनासुभृतः प्राणाद्युपाधयो जीवा जायन्त इत्यर्थः। जलबुद्बुदवदिति यथा केवलेन जलेनानिलेन वा जलबुद्बुदा न भवन्ति किन्तु मिलिताभ्यां तद्वत् तत्र यथाऽनिलो निमित्तं जलमुपादानमेवमत्रापि प्रकृतिर्निमित्तं पुरुष उपादानम् 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः। सोऽकामयत बहुस्यां प्रजायेयेति यथाऽग्नेः क्षुद्राः विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एवाऽऽत्मानो व्युच्चरन्ति' इत्यादिश्रुतिषु चेतनाचेतनप्रपञ्चस्य परमात्मोपादानत्वश्रवणात् न च विकारित्वम् परिणामानङ्गीकारात् केचित्पुनः परिणाममङ्गीकृत्याऽऽत्मनोऽविकारभिया विपरीतं निमित्तोपादानभावमिच्छन्ति सर्वथा तावत्प्रकृतिपुरुषयात् भवतीति सिद्धम् 'तदेकमेवाद्वितीयं ब्रह्म अजोऽमरोऽकामविनाशीवारेऽयमात्मा' इत्यादिश्रुतिबलादुत्पत्तिश्रवणाच्च जीवानामौपाधिकमेव जन्म न वस्तुत इत्युक्तम् उपाधिलयेन परमात्मनि पुनर्लयश्रवणादपि न वास्तवं जन्मेत्याह—त्वयि त इति। त्वयि कारणात्मनि त इमे जीवाः तत इति यतो न वास्तवं जन्म तस्माद्विविधनामगुणैरनेकप्रकारकार्योपाधिभिः सह निलि-

श्रीधरस्वामिकृतभावार्थदीपिका।

लीना बभूवुः तत्र सुषुप्तिप्रलययोर्मधुन्यशेषरसा इव लीयन्ते यथा मधुनि सकलकुसुमरसा विशेषतोऽनुपलक्ष्यमाणा अपि सामान्येनोपलक्ष्यन्ते एवं स्वापादौ विशेषमात्रलयात्कारणस्य विद्यमानत्वात्सामान्यतो वर्तन्ते मुक्तौ तु कारणस्यापि लयात्त्वयि परमे निरुपाधौ सरित इवार्णवे लीयन्त इति विवेकः तथाच श्रुतयः'यथा सौम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान्समवहारमेकतां सङ्गमयन्ति ते यथा तत्र न विवेकं लभन्ते अमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सौम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पद्यामहे'इति "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय तथाविद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इत्याद्याः ॥ ३१ ॥

अस्मिन्नुद्यद्विलयमपि यद्भाति विश्वं लयादौ—
जीवोपेतं गुरुकरुणया केवलात्मावबोधे ॥
अत्यन्तान्तं व्रजति सहसा सिन्धुवत्सिन्धुमध्ये—
मध्ये चित्तं त्रिभुवनगुरुं भावये तं नृसिंहम् ॥ १८ ॥

---

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

नन्वित्याद्याभासे तथा सति जीवानां जन्माङ्गीकारे सति प्रतिदिनं प्रलय इति शेषः । कृतनाशाकृताभ्यागमप्रसङ्ग इति पूर्वकल्पे जातानां जीवानां मुक्तत्वेन तत्कृतपुण्यपापयोर्भोगाभावात्कृतयोः पुण्यपापयोर्नाशः भाविकल्पे जनिष्यमाणानां नवीनानां जीवानां तैरकृतयोः पुण्यपापयोर्भोगरूपेणाभ्यागमः प्राप्तिस्तल्लक्षणस्य दोषस्य प्रसङ्गः प्राप्तिरित्यर्थः । तदा यदा जीवानां वास्तवे जन्ममरणे तदेत्यर्थः । एतत् स्वरूपहानेर्मोक्षत्वम् उपाधिजन्मनाऽनादिजन्मप्रवाहवतान्तःकरणोपाधिजन्मना तत्कृतस्वरूपतत्त्वजन्म न सङ्गच्छते इति तत्र जीवानां जन्माङ्गीकारमते आद्ये प्रकृतेर्जीवरूपेणोत्पत्तिपक्षे द्वितीये पुरुषस्य जीवरूपेणोत्पत्तिपक्षे अत एव पक्षद्वये जीवजडत्वपुरुषविकारित्वप्रसङ्गादेव न तृतीयः प्रकृतिपुरुषयोर्द्वयोर्मिलित्वापि न जीवरूपेणोद्भवः तथाच श्रुतिः प्रकृतिपुरुषयोरजन्मे प्रमाणं श्रुतिः अजामेव जायत इति मूलप्रकृतिं लोहितशुक्लकृष्णां रजस्तमःसत्त्वात्मिकां बह्वीः नानाप्रकाराः स्वरूपाः रजः आद्यात्मिकाः प्रजाः जनयन्तीं सृजन्तीं तामेकोऽजो जीवरूपः जुषमाणः शब्दादितत्कार्यविषयभोगेन सेवमानोऽनुशेते निरन्तरं भुङ्क्ते अन्योऽजः परमात्मा तु भुक्तभोगां भुक्तो जीवरूपेणाजेन भोगो यस्यां तामेनां जहाति कदाप्यस्यां नासक्तमित्यर्थः "मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि" इत्युक्तेः उभयं प्रकृतिपुरुषरूपं परस्परान्यस्तं अविद्यया परस्परमारोपितमित्यर्थः । तेन कारणोपाधिना जीवेन असुभृतः प्राणादिकार्योपाधयो जीवा जायन्त इत्यर्थः । कार्यकारणोपाधिद्वारैव जीवानां जन्माङ्गीकारात् न वस्तुतो विकारित्वमिति तात्पर्यं बुद्बुदाद्दृष्टान्तस्तु योगमात्रांशेन तथाच प्राणाद्युपाधिरूपस्य लिङ्गस्य प्रलयेऽपि संस्काररूपेण सत एव प्रादुर्भावात् तत्र पुण्यपापादेः सत्त्वात् कृतनाशाऽकृताभ्यागमप्रसङ्गादिदोष

इति भावः तत्र सुषुप्त्यादिलयत्रयमध्ये कारणस्थितिरावाः तथाच श्रुतयः पूर्वोक्तमद्दृष्टान्तलयाविवेके प्रमाणं श्रुतयः मधुकृतो मधुमक्षिकाः निस्तिष्ठन्ति निष्पादयन्ति नानात्ययानां नानाजातीयानां नानादिक्कालभवानाञ्च समवहारमेकीकृत्य एकतां मधुरूपतां सङ्गमयन्ति प्रापयन्ति तत्र मधुरूपावस्थायां कथं विवेकं न लभन्ते इत्यपेक्षायां प्रकारमाह—अमुष्येत्यादि । न लभन्ते न जानन्ति मधुनि पृथक् पृथक् रसानामहमिति पुरुषनिष्ठं वृक्षरसेष्वारोपितमित्युपचारोक्तिरियं सम्पद्येति सुषुप्तिप्रलययोः सति ब्रह्मणि सम्पद्य एकीभूय सति ब्रह्मणि सम्पद्यामहे वयम् ऐक्यं प्राप्ता इति न विदुरिति यथा नद्य इति मुक्त्यवस्थाविषया श्रुतिः स्यन्दमानाः स्रवन्त्यः परात्पूर्वोक्तादक्षरात्परं दिव्यं पुरुषं यथोक्तलक्षणमिति लयादौ कथे सुषुप्तौ च विश्वं सजीवं लिङ्गं देहादि यस्मिन् ब्रह्मणि विश्वं यद्यपि प्रायुद्यदपि भाति सूक्ष्मरूपेण भात्येव सूक्ष्मतया प्रलये सुषुप्तौ च ब्रह्मणि विश्वस्य सद्भावे हेतुः उद्यदिति सृष्टिकाले जागरणकाले च पुनरपि स्थूलतयोत्पन्नं भवेदित्यर्थः । सर्वथा लये तु पुनर्नोत्पद्येत इति भावः । गुरुकरुणया तु केवले शुद्धे आत्मनि ज्ञानस्वरूपं अत्यन्तान्तं निरवशेषं लयं व्रजति प्राप्नोति निरुपाधिब्रह्मैव भवति इत्यर्थः । मध्ये चित्तमिति "पारे मध्ये षष्ठ्या वा" ( २-१-१८ ) इत्यव्ययीभावसमासः ॥ ३१ ॥

---

श्रीकविचूडामणिचक्रवर्तिकृतान्वयबोधिनी ।

ननु, यदि च परमात्मनो जीवाः जायन्ते इति नित्यत्वनियम्यभाव उच्यते तथा सति जीवानामनित्यत्वप्रसङ्गेन प्रतिदिनं कृतनाशाकृताभ्यागमप्रसङ्गः स्यात् किञ्च तदा मोक्षो नाम जीवस्य स्वरूपहानिरेव स्यात् न चैतत् युक्तं स्वप्रकाशानन्दात्मनोऽविद्याकृतानर्थनिवृत्तिमात्रस्य मोक्षत्वाभ्युपगमादित्याशङ्क्य उपाधिजन्मनैव जीवानां जन्म उच्यते, न स्वतः अघटमानादित्याह—न घटत इति । अजयोरुत्पत्तिः तयोः प्रकृतिपुरुषयोरुद्भवो जन्म न विद्यते उभययुक्ता तु परस्परान्यस्तेनासुभृतः प्राणधारणाभ्यां जीवा भवन्ति जायन्ते जलबुद्बुदवत् यथा जलवायुभ्यां मिलिताभ्यां बुद्बुदाः जायन्ते तद्वत् उभययुक्तं तद्युज्यते इति उभययुक्त उभयकार्यं परस्परान्यस्तमिति यावत् प्रकृतिर्निमित्तं पुरुष उपादानं, कश्चित् प्रकृतिरुपादानं पुरुषो निमित्तकारणम्" इति प्रकृतिसर्वथा तावत् प्रकृतिपुरुषैक्यात् भवतीति सिद्धं प्रकृतिश्रवणात् जीवानामौपाधिकं जन्म न स्वतः इत्युक्तम् अनादितयैव परमात्मनि पुनर्लयश्रवणादपि न वास्तवं जन्मेत्याह त्वयीति न इति यतो न वास्तवं जन्म ततः तस्मात् त इमे वा विविधनामगुणैरनेकप्रकारकार्योपाधिभिः सह हि स्वनिकारणात्मनि लिल्युः लीनाबभूवुः तत्र सुषुप्तिप्रलययोर्दृष्टान्तः अशेषरसा मधुनि यथा लिल्युस्तथा यथा मधुनि सकलकुसुमरसाः विशेषतोऽनुपलक्ष्यमाणापि सामान्येन मधुत्वेनोपलक्ष्यते एवं स्वापादौ विशेषमात्रस्य लयात् कारणस्य विद्यमानत्वात्सामान्यतो वर्तन्ते मुक्तौ तु कारणस्यापि लयं दृष्टान्तः सरित इति यथा सरितो नद्यः अर्णवे लिल्युः तथा त्वयि परमे निरुपाधौ लिल्युरिति विवेकः अत्र

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तीत्युभययुक् त्वदंशः परमपुरुषः तेन तच्छक्तिद्वयविशिष्टेन हेतुना असुभृतः सोपाधिकावस्थतया ते जीवा जायन्ते यथा जलवायुविशिष्टेनाकाशेन बुद्बुदा इत्यर्थः तथापि त्वदुपादानत्वं—

प्रकृतिर्यस्योपादानमाधारः पुरुषः परः ।
सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहम् ॥

इत्येकादशीयश्रीभगवदुक्तन्यायेन लब्धशक्तिमतः सकाशाच्छक्तेरनन्यत्वेन एवं स्वरूपतोऽपि त्वद्व्यत्वमेव तेषां स्थितमिति तथात्र श्रीविष्णुपुराणे—

प्रधानञ्च पुमांश्चैव सर्वभूतात्मभूतया ।
विष्णुशक्त्या महाबुद्धे वृतौ संश्रयधर्मिणः ॥

इति यत एवं तत आत्यन्तिकाख्येपि किमुत प्राकृताख्ये प्रलये तेषां त्वयि प्रवेश एवेत्याहुः त्वयीति अत्र यथा सरितामशेषरसानाञ्च तत्तद्गुणनाम्नामेव नाशः नतु तत्तत्स्वरूपस्य नाप्यभेदत्वं पृथक् तत्तदंशासम्भवात् तथा तेषामपि त्वयीत्यपि भणितम् अत्र पूर्वोक्तं श्रुतयः हन्तेमास्तिस्रो देवता अनेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इत्याद्याः उत्तराञ्च यथासौम्य मधुकृत इत्याद्याः ॥ ३१ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एवं नियमात् तदनुपपत्तिः परिहृता नित्यस्योत्पत्त्यनुपपत्तिं परिहरति । न घटत इति । यद्यपि अजत्वात् प्रकृति पुरुषस्य च नोत्पत्तिस्तथापि विद्यमानानामेवाप्यवयवानां परस्परसंयोगात् बुद्बुदोत्पत्तिवत् उभययुजात् प्रकृतिपुरुषयोः संयोगात् तनुभृतो भवन्ति देवमनुष्यादिशरीरविशिष्टरूपेणोत्पत्तिर्युज्यत इत्यर्थः । तर्हि कथं ब्रह्मणः कार्यत्वमित्यत्राह – त्वयीति । विविधनामगुणः विविधनामरूपभाजः सर्वे पदार्थाः ततः परमे सर्वान्तरात्मनि त्वयि वसन्ते अर्णवे सरित इव रससङ्कुलसम्पादिते मधुनि तत्तत्पुष्पगतमकरन्दलेशा इव त्वयि प्रलयकाले निलिल्युरित्यर्थः । चिदचिच्छरीरब्रह्मस्थाने अर्णवो मधु च ॥ ३१ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

ननु, प्रकृतिपुरुषयोर्नित्ययोः उत्पत्त्यनुपपत्तिरत आहुः— न घटत इति । यद्यप्यजत्वात्प्रकृतेः पुरुषस्य च नोत्पत्तिः तथाऽपि विद्यमानानामेवाप्या[नाम]वयवानां वायुप्रेरितानां परस्परं संयोगाज्जले बुद्बुदोत्पत्तिवत् उभययुजा प्रकृतिपुरुषयोः संयोगेनासुभृतः प्राणिनः विविधैर्नामभिः रूपैश्चोपलक्षिताः त्वय्याधारभूते भवन्ति देवमनुष्यादिशरीरविशिष्टरूपेणोत्पत्तिर्युज्यत इत्यर्थः । ततस्त इमेऽसुभृतः परमे त्वयि निलिल्युः प्रलयदशायां नामरूपे विहाय त्वच्छरीरभूततामापुरित्यर्थः । यथा सरितः अर्णवे यथा च मधुनि माक्षिकेऽशेषा रसाः मकरन्दास्तद्वत् द्रव्यस्यावस्थोत्तरसंस्थानयोगो हि पूर्वपूर्वसंस्थानसंस्थितस्य विनाशः स्वावस्था वह्रिपरस्य तूत्पत्तिः अतोऽवस्थानामनित्यत्वेऽपि अवस्थाश्रयस्य द्रव्यस्य नित्यत्वात्तस्य(एव)पूर्वोत्तरावस्थात्यागोपादानात्मकविनाशोत्पत्त्यविरोध इति भावः । अत्रार्णवादिस्थानीयं चिदचिद्विशिष्टं ब्रह्म ॥ ३१ ॥

---

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

एवं नियमात्तदनुपपत्तिः परिहृता अथ नित्यस्योत्पत्त्यनुपपत्तिं परिहरति—न घटत इति । यद्यपि प्रकृतिपुरुषयोः अत उद्भवः उत्पत्तिर्न घटते नोपपद्यते कुतः तयोरजत्वश्रवणात् अजामेकामजो ह्येक इत्यादिश्रुतेस्तथापि विद्यमानानामेवावयवानां परस्परसंयोगात् बुद्बुदोत्पत्तिवदुभययुजा प्रकृतिपुरुषयोः संयोगात् असुभृतस्तनुभृतो भवन्ति देवमनुष्यशरीरविशिष्टरूपेणोत्पत्तिर्युज्यत इत्यर्थः । तदुक्तं वैष्णवे "यथा सक्ता जले वातो बिभर्ति कणिका इति । शक्तिः सापि तथा विष्णोः प्रधानपुरुषात्मनः "इति अत्राभेदवादिना उभयं च तद्युज्यते इति उभययुक्सम्बन्धं परस्पराध्यस्तमिति तेनासुभृतः प्राणाद्युपाधयो जीवा जायन्त इत्युक्तं तदयुक्तं कथमित्युक्ते अध्यासो नाम तस्मिन् तज्ज्ञानं यथा शुक्तिरजतादि तत्र चेतनस्यैवाध्यासो दृष्टो नतु जडस्य अतः परस्पराध्यस्तमित्यसङ्गतं किञ्च स अध्यास अज्ञानोपाधिना भवतीति उपाधिः कस्येति वक्तव्यं किं निर्विशेषचिन्मात्रस्वप्रकाशस्वरूपस्य ब्रह्मणः उत जीवस्येति न तावज्जीवस्य तस्याध्यासकार्यत्वात् न हि शुक्तौ रजताध्यासो रजतस्यैवेति वक्तुं शक्यं किन्तु द्रष्टुरेवेति अतो रजतस्थानीयस्य जीवस्याध्यासो न सम्भवति नापि ब्रह्मणस्तस्य प्रकाशैकस्वरूपस्याध्यासासम्भवात् तथा च भगवत्पादैः शेषावताररूपश्रीभाष्यकारैर्यदि मन्वीत उपाध्युपहितं ब्रह्म जीवः स चाणुपरिमाणः अणुत्वं चावच्छेदकस्य मनसोऽणुत्वात् सचावच्छेदोऽनादिरेवमुपाध्युपहितेंऽशे सम्बध्यमाना दोषा अनुपहिते ब्रह्मणि न सम्बध्यन्ते इति मिथ्यावादिभिः पक्षमुपन्यस्य अयं प्रष्टव्यः किमुपाधिना छिन्नो ब्रह्मखण्डो जीव उताछिन्न एवाणुरूपोपाधिसंयुक्तो ब्रह्मप्रदेशविशेषः अथोपाधिसंयुक्तं ब्रह्मस्वरूपमुतोपाधिसंयुक्तं चेतनान्तरमथोपाधिरेवेति पञ्चविकल्पान् कृत्वा अच्छेद्यत्वाद्ब्रह्मणः प्रथमः कल्पो न कल्पते आदिमत्त्वं च जीवस्य स्यात् एकस्य सतो द्वैधीकरणं हि छेदनं द्वितीये कल्पे ब्रह्मण एव प्रदेशविशेषे उपाधिसम्बन्धादौपाधिका दोषास्तस्यैव स्युः उपाधौ गच्छत्युपाधिना असंयुक्तब्रह्मप्रदेशाकर्षणायोगादनुक्षणमुपाधिसंयुक्तब्रह्मप्रदेशभेदात् क्षणेक्षणे बन्धमोक्षौ च स्याताम् आकर्षणेऽच्छिन्नत्वात्कृत्स्नस्य ब्रह्मण आकर्षणं स्यात् निरंशस्य व्यापिन आकर्षणं न सम्भवतीति चेत्तदुपाधिरेव गच्छतीति पूर्वोक्त एव दोषः स्यात् अच्छिन्नब्रह्मप्रदेशेषु सर्वोपाधिसंसर्गे सर्वेषां जीवानां ब्रह्मण एव प्रदेशत्वेनैकत्वप्रतिसन्धानं स्यात् प्रदेशभेदादप्रतिसन्धानेऽपि एकस्यापि स्वोपाधौ गच्छति सति प्रतिसन्धानं न स्यात् तृतीयेतु कल्पे ब्रह्मस्वरूपस्यैवोपाधिसम्बन्धेन जीवत्वापातात् तदतिरिक्तानुपहितब्रह्मासिद्धिः स्यात् सर्वेषु च देहेष्वेक एव जीवः स्यात् तुर्ये तु कल्पे ब्रह्मणोऽन्य एव जीव इति जीवभेदस्यौपाधिकत्वं परित्यक्तं स्यात् चरमे तु चार्वाकपक्ष एव परिगृहीतः स्यादित्यादिना तिलशः खण्डितमिति किञ्च

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका।

सृष्टेः पूर्वं सन्मात्रं ब्रह्मैव सृष्ट्युत्तरकाले नानाजीवरूपेण जातमिति भवतोऽभिमतं तथासति मृत्पिण्डस्य घटशरावादिरूपेण परिणतस्येव ब्रह्मैव जीवरूपेण परिणतमिति जीवस्योत्पत्तिमत्त्वमनित्यत्वं स्वरूपहानिश्चेत्येवंरूपा दोषाः परपक्षे उद्घाटितास्त्वन्मतेपि प्रसक्तास्तेषां परिहारो दुःशक इति अतः पूर्वकर्मापेक्षेश्वरेच्छया प्रकृतिपुरुषयोः संयोगादसुभृतो जायन्त इत्यभ्युपगन्तव्यमिति तथाच भगवद्वाक्यम्—

"मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
सम्भवः सर्वभूतानां ततो भवति भारत।

इतिजगद्योनिभूता प्रकृतिर्ब्रह्मशब्दवाच्या तस्यां चेतनाख्यं गर्भं दधामि संयोजयामि ततो भूतानामुद्भव इत्यर्थः इति प्रकृतिपुरुषसंयोगादेव जगदुद्भवश्चेत्तर्हि कथं ब्रह्मणः कारणत्वमित्यत्राह—त्वयीति। विविधनामगुणाः विविधनामरूपभाजः सर्वे पदार्थास्ततः परमे प्रकृतिपुरुषाभ्यां परस्मिन् सर्वान्तरात्मनि त्वयि वर्त्तन्ते अर्णवे सरित इव रससङ्कसम्पादिते मधुनि तत्कृतपुष्पगतमकरन्दलेशा इव च त्वयि प्रलयकाले निलिल्युरित्यर्थः। चिदचिच्छरीरब्रह्मस्थाने अर्णवो मधु च अत्रापि मुक्तौ तु कारणस्यापि चयास्त्वयि परमे निरुपाधौ सरित इवार्णवे लीयन्ते इति विवेकः यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इतिश्रुतिरपि मोक्षविषया उपन्यस्ता तदप्ययुक्तं कथमितिचेदित्थं श्रुतिस्तावत् जीवब्रह्मणोर्मोक्षे स्वरूपैक्यं न वदति तस्याः परब्रह्मसाम्यविषयत्वात् निरञ्जनः परमं साम्यमुपैति मम साधर्म्यमागताः "इत्यादिश्रुतिस्मृत्यनुरोधाच्च अन्यच्च नदीदृष्टान्तोपि न सङ्गच्छते स्वरूपैक्ये तत्र नदीजलसमुद्रजलयोरैक्याभावात् किन्तु तत्र इयं गङ्गा इयं यमुना इति नामरूपे न स्तः जलस्य तु क्षारमधुररूपेण भेद एवेति अत एव साम्ये स्वरसतया दृष्टान्तानुकूल्यादिति तथा च पूर्णानन्दचक्रवर्त्तिकारिकाः—

नानारसा मधुनि भिन्नतया तरूणां–
सन्ति त्रिदोषहरणं कथमन्यथा स्यात्।
जीवास्तथा भगवति प्रलये विलीना·
नैक्यं गताः खलु यतः पृथगेव सृष्टौ॥
नदीसमुद्रयोर्भेदः शुद्धोदलवणोदयोः।
तथा जीवेश्वरौ भिन्नौ विलक्षणगुणान्वितौ॥
नद्यः समुद्रे मिलिताः समन्तान्नैक्यं गता भिन्नतया न भान्ति।
क्षारोदशुद्धोदकयोर्विभेदादास्ते तयोर्वास्तव एव भेदः।

इति श्रुतौ नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि इत्यादिश्रुतिस्मृतिभिर्नित्यत्वादिप्रतिपादनात् चिदचिदीश्वराणां स्वरूपभेद एवेति 'अभेदश्रुतीनां सर्वं खल्विदं ब्रह्म तत्त्वमसीत्यादीनां तु सर्वस्य चिदचिदात्मकस्य परमात्मशरीरतया, सामानाधिकरण्यतया च सर्वस्य ब्रह्मात्मकत्वप्रतिपादनादविरोध इत्यलं द्वैतमुद्गरविघातेनेति॥ ३१॥

---

### योगिरामानुजाचार्यकृतसरलाव्याख्या।

अजयोः प्रकृतिपुरुषयोः कथमुत्पत्तिरित्यत्राह—न घटत इति। अजयोः न जायेते इत्यजौ तयोः जन्मरहितयोः प्रकृतिपुरुषयोरुद्भवः जन्म न घटते तथापि उभययुजा उभययोर्युक् उभययुक् तेन उभययोगेन जलबुद्बुदवत् असुभृतः प्राणिनः विविधनामगुणैर्विविधैर्नामभिः रूपैश्चोपलक्षिताः त्वयि आधारभूते त्वयि भवन्ति जायन्ते शुद्धयोः प्रकृतिपुरुषयोरुत्पत्त्यसम्भवेपि देवमनुष्यादिशरीरविशिष्टत्वरूपेणोत्पत्तिरविरुद्धेत्यर्थः ते पूर्वोक्ताः इमे प्राणिनः ततः प्रलयदशायां परमे प्रकृतिपुरुषाभ्यां परे ब्रह्मणि अर्णवे सागरे सरित इव मधुनि अशेषरसा इव तत्तत्पुष्पगतमकरन्दलेशा इव निलिल्युः नामरूपे विहाय साम्यमापुरित्यर्थः अत्राचार्याः एवं वदन्ति अर्णवसरितदृष्टान्तेन च जीवानां ब्रह्मणि नैकस्वरूपतापत्तिरूपो लयः प्रतिपादितो भवति किन्तु नामरूपविभागानर्हसाम्यतापत्तिरूप एव लयः प्रतिपादितो भवतीति तथा च—

नद्यस्समुद्रे मिलितास्समन्तान्नैक्यङ्गता भिन्नतयैव भान्ति।
क्षारोदशुद्धोदकयोर्विभेदादास्ते तयोर्वास्तव एव भेदः॥

इत्यादि यथा निरञ्जनः परमं साम्यमुपैति मम साधर्म्यमागताः इत्यादि श्रुतिस्मृतिभिः मोक्षदशायां जीवानामीश्वरसाम्यतापत्तेरेव प्रतिपादनात् अजयोः प्रकृतिपुरुषयोः उद्भवः न घटते तथापि उभययुजा जलबुद्बुदवत् असुभृतः विविधनामगुणैस्त्वयि भवन्ति ततः ते इमे परमे सरितः अर्णवे इव अशेषरसाः मधुनि इव लिल्युः इत्यन्वयः॥ ३१॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अजन परिमुच्यतेऽत्र भवान्सततात्सममनुजानता ततमनन्त मदुष्टतया। न घटत उद्भवः प्रकृतिपूरुषयोरजयोरुभय युजोर्भवन्त्यसुभृतो जलबुद्बुदवत्॥ १८—३२॥

मुच्यते तत्त्वसम्बुद्धादाचार्यात् पुरुषो भवात् एतावेव स्वतो वशौ परमः प्रकृतिस्तथेति कलापश्रुत्यर्थं तया—

देशतः कालतश्चैव समव्याप्तावजावुभौ।
ताभ्यामुभययोगाभ्यां जायन्ते पुरुषाः परे॥ इति

कौटल्यश्रुत्यर्थतया च प्रथितत्वाजनपरिमुच्यते इत्यस्यायं भावः। हे अजन लोकविलक्षण! जन्मरहितेति वा समम् एकप्रकारतया ततं व्याप्तम् अनन्तमदुष्टतया निर्दोषत्वेन अनुजानता सम्यक् ज्ञानवताऽऽचार्येण उपदिष्टमार्गेण अत्र जगति ज्ञानवान् पुरुषः सततात्सन्ततमज्ञानकल्पिताद्भवात्संसारात्परिमुच्यते सम्यक् मुक्तो भवति कथमनुजानतेति तत्राह—नेति। अजशब्दस्य अनेकवृत्तित्वेनानिश्चय इत्यतः प्रकृति—पूरुषयोरिति तयोरुद्भव उत्पत्तिर्न घटत इति यतस्ततः प्रकृतिपूरुषौ विनाऽन्यौ बन्धरहितौ न विद्येते मुख्यतोऽजशब्दप्रवृत्तिनिमित्तान्यथानुपपत्त्या न घटत इत्युक्तं भवति तदुभययोः प्रकृतिपूरुषयोर्युजोर्योगयोरसुभृतो जीवा भवन्ति देशतः कालतश्च यत्र परमस्तत्र प्रकृतिर्यत्र प्रकृतिस्तत्र परमः इत्युभययुजोः तत्र दृष्टान्तः जलबुद्बुदवत् जलबुद्बुदानि यथोत्पद्यन्ते तथेति—

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सम्यग्ज्ञानवदाचार्यान्मुच्यते पुरुषो भवात् ।
द्वावेव नित्यमुक्तौ तु परमः प्रकृतिस्तथा ॥ इति स्मृतेः ॥ १८—३२ ॥

——

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ पूर्वोक्तमजनि च यत् । यमिति व्याचक्षाणा जीवानां तद्याप्यत्वमेव व्यापयन्त्यस्तदनुगताः काश्चिदन्याः श्रुतयस्तात् पर्य्येणैव स्वतात्पर्यं ज्ञापयन्ति न घटते ॥ ३१ ॥

——

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः

ननु, प्रकृतिपुरुषाभ्यां जीवानां समुद्भवः कथं तेषां मदंशत्वं भवतु वा तेषां मदंशत्वं मत्पार्षदैः सह वा तेषां कथं न साम्यं तेऽपि मदंशा इत्याशङ्क्याहुः—न घटत उद्भवः इत्यादिप्रकृतिपूरुषयोरिति पञ्चम्यर्थेषष्ठी ताभ्यां सकाशात् तव पार्षदादीनाम् उद्भवो न घटते कीदृशयोः अजयोः पुरुषश्च तवांशत्वादेव अजः प्रकृतिश्च अजा "अजामेकाम्" इत्यादिनोक्तेः एवम्भूतयोरपि पुरुष उपादानकारणं अजा निमित्तकारणम् अयं तु प्रकारः खलु जीवानामेव यत उभययुजा प्रकृतिपुरुषयोगेन असुभृतो जीवा एव भवन्ति ये जीवाः जलबुद्बुदवत् क्षणभङ्गुराः त्वत्परिकरास्तु नित्यभूतास्तेन तैः समं कथं जीवानां साम्यं यतः प्रकृतिपुरुषयोगस्य प्रागपि तेषां ते परिजनानामस्तित्वश्रवणात् "न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः" इति मायायाः प्रकृतेस्तत्राभावात् तर्हि कुतो तेषां ह्याविर्भाव इति पुनराहुः—त्वयि त इम इति । त इमे तव परिजनास्ततो हेतोस्त्वय्येव कीदृशे त्वयि परमे परा उत्कृष्टा मा शोभा यस्य तस्मिन् पुनः कीदृशे मधुनि मधुवन्मधुरे ते कीदृशाः अशेषरसा अशेषां रसोऽनुरागो येषां तर्हि किं मयि कैवल्यं प्राप्ता एव ते वर्त्तन्ते नेत्याहुः—सरित इवार्णव इति । विविधनामगुणैर्युक्ताः सत्योऽहि सरितोऽर्णवे निलिल्युस्तथा सरितो हि इयं गङ्गा इयं यमुना इयं नर्मदा इत्यादि नामानि न त्यजन्ति अस्या अयं गुण एतस्यायं गुण इत्यादिगुणांश्च न त्यजन्ति अथ च एकदेशेनैवार्णवे लीयन्ते लीनतायां च तत्तदाकारेण पृथग्विधा एव तथा ते परिजना इन्द्रियवृत्तिभिस्त्वयि प्रविशन्ति नामगुणाकारैः पृथक् वर्त्तन्त एव अतस्त्वय्येत्युच्यते त्वदेकनिष्ठत्वादिना त्वय्येत्युपचर्य्यते तेनामी प्रकृतिपुरुषोद्भवा न भवन्ति न चानित्या भवन्ति अतो नैषां जीवसाम्यमिति स्थितम् ॥ ३१ ॥

——

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

न घटत उद्भवः प्रकृतिपूरुषयोरजयोरिति तदात्मकता तदा घटते यत् यद्रूपेणाविर्भवितुमर्हति जीवास्तु विस्फुलिङ्गन्यायेन भवन्तीति तदात्मकता युक्ता सङ्घातस्तु न प्रकृत्यात्मको नापि पुरुषात्मकः नाप्युभयात्मकः उभयोरप्यजनत्वेन कार्याविर्भावभावात् तदाह न घटत उद्भवः प्रकृतिपुरुषयोरिति तर्हि कथं सङ्घातोत्पत्तिरिति चेत्तत्राह उभययुजा भवन्त्यसुभृत इति उभययुजा उभययोगेन प्रकृतिपुरुषसम्बन्धेनासुभृतः सङ्घाताः देवतिर्यगादयः भवन्ति ननु यत् केवलाभ्यां न जायते तत्तत्संयोगेसति कथं जायते इति तत्राह जलबुद्बुदवदिति न केवलं जलेन वायुना वा बुद्बुदा जायन्ते उभययोगेन जायन्त इति तथा प्रकृतिपुरुषसंयोगेन सङ्घाता जायन्ते इति न काप्यनुपपत्तिः किमतो यद्येवं एवमेतदित्याह त्वयि त इम इति । ते असुभृतः इमे परिदृश्यमानाः सर्वे कारणाः त्वय्येव अयमभिप्रायः अजयोः संयोगो नेष्यते उभयोरप्यजत्वेन व्यापकत्वेन च क्रियावत्त्वाभावात् संयोगाभावः तादृशयोः संयोगः अघटमानः सन् भगवद्रूपो वा भगवता वा सिद्धो भवति अद्भुतकर्मा भगवानेव भवतीति अतो भगवदात्मकतैव सर्वेषां सङ्घातानां अतो भगवत्येव ते सर्वे पर्यवसिता भवन्ति नान्यत्रेति निर्णयः किञ्च विविधनामगुणैरिति एकरूपाश्चेत्सङ्घाता भवेयुः तदा कथञ्चित् प्रकृतिपुरुषात्मकतापि कल्पेत तत्तु नास्ति किन्तु विविधानि नामानि रूपाणि गुणाश्च परस्परविलक्षणाः सर्वेषां भवन्ति अतस्तैर्ज्ञायते भगवत एव भवन्ति अचिन्त्यशक्तिरनन्तमूर्त्तिश्च भगवानेवेति नन्वर्वाचीनयोरपि प्रकृतिपुरुषयोः कथं नानन्तशक्तितेत्याशङ्क्याह—परस्येति । परस्यैव ते धर्मा नान्यस्येति सिद्धान्तादित्यर्थः किञ्च त एव तदात्मका भवन्ति ये यत्रैकतामापद्यन्ते यथा सर्वाः सरितः अर्णवे भवन्ति अर्णवादेव मेघद्वारा उत्पद्यन्ते अर्णवे च प्रविशन्ति ततोऽर्णवस्य जलात्मकस्य नद्योऽपि जलात्मिकास्तदात्मिका भवन्ति नतु पर्वतात्मिका भूम्यात्मिका वा अतः सच्चिदात्मिका एते सच्चिदात्मके भगवति एव प्रतिष्ठिता भवितुमर्हन्ति नान्यत्रेत्यर्थः ननु यदि भगवदात्मकत्वं विश्वं भवेत् तर्हि भगवति विश्वं प्रतीयेत यस्य यस्य भगवत्साक्षात्कारो भवति तस्य तस्यानुभवे विश्वस्फूर्त्तिः स्यात् ततश्चानीक्षापि प्रसज्येतेति चेत्तत्राह—मधुनिलिल्युरशेषरसा इति यथा अशेषरसाः मधुनि लीना भवन्ति तथापि भिन्नतया न प्रतीयन्ते अयममुकः पुष्पस्य रसोऽयममुकः पुरुषस्य रस इति किन्त्वेकतामापन्ना मधुरत्वेनैव प्रतीयन्ते तथा भगवत्यपि सर्वे सूक्ष्मरूपेण तिष्ठन्ति नतु भिन्नतया प्रतीयन्त इत्यर्थः ॥

नामरूपप्रपञ्चं हि देवतिर्यङ्नरात्मकम् ।
कृष्णादेव समुद्भूतं लीनं तत्रैव तन्मयम् ॥ ३१ ॥

——

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एतन्मतमप्यन्ये दूषयन्तो दृष्टाः तथाहि ननु यदि परमात्मनो जीवा जायन्त इत्युच्यते तथासति जीवानामनित्यत्वप्रसङ्गेन प्रतिदिनं कृतनाशाकृताभ्यागमप्रसङ्गः स्यात् किञ्च तदा मोक्षो नाम जीवस्य स्वरूपहानिरेव स्यात् तस्य स्वरूपं तु ब्रह्मैव तस्मात् यथा अनवच्छिन्नमाकाशमेव घटावच्छिन्नं भवेत् घटभङ्गे सति तन्महाकाशमेव एवं मेघाविद्यकोपाधेर्भङ्ग एव मोक्षस्तज्जन्मत्वेव सति जन्म जीवानामुच्यते नतु स्वत इति ये वदन्ति तन्मतमनुवदन्त्यः स्तुवन्ति न घटत इति तत्र किं प्रकृतेर्जीवरूपेणोद्भवः स्यात्

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

पुरुषस्य वा उभयोर्वा आद्ये जीवानां जडत्वापातः द्वितीये पुरुषस्य विकारित्वप्रसङ्गः अतएव न तृतीयः इत्याशयेनोक्तं प्रकृतिपुरुषयोरुद्भवो न घटत इति श्रुत्या अजत्वप्रतिपादनादपीत्याहुः-अजयोरिति तथाच श्रुतिः "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति अर्थश्च लोहितशुक्लकृष्णां रजःसत्त्वतमःस्वरूपां सरूपाः रज आद्यात्मिकाः अनुशेते निरन्तरं भुङ्क्ते • जहात्येनाम् अस्यां नासज्जतीत्यर्थः भुक्तभोगां भुक्तो भोगो यस्यां जीवरूपेणाजेन ताम् अन्यः परमात्मेति तस्मादुभयस्य प्रकृतेः पुरुषस्य च युजा योगेनैव तनुभृतः प्राणादिमहदुपाधयो जायन्ते इत्यर्थः । जलबुद्बुदवदिति यथा केवलेन जलेनानिलेन वा जलबुद्बुदा न भवन्ति किन्तु ताभ्यां मिलिताभ्यामेव तद्वत् तस्माज्जीवानामुपाधिजन्मनैव जन्म न स्वत इत्युक्तं उपाधिलयेनैव पुनर्ब्रह्मणि लयश्रवणादपि न वास्तवं जन्मेत्याहुः—त्वयीति । त इमे जीवाः तत इति यतो न वास्तवं जन्म तस्माद्विविधनामगुणैः सहितास्त्वयि लिल्युर्लीना बभूवुः तेषां लयो द्विविधः तत्र मुक्तौ स्थूलसूक्ष्माणां कार्योपाधीनामविद्यायाः कारणोपाधेश्च लयदात्यन्तिको लयः तत्र दृष्टान्तः सरितो नद्यः अर्णवे लीना इव सुषुप्तिप्रलययोस्तु कार्य्योपाधीनामेव लयः नतु कारणस्याविद्यायाः अतस्तत्र विशेषमात्रस्यैव लयः सामान्यन्तु वर्त्तत एव तत्र दृष्टान्तः मधुनि अशेषरसाः सकलकुसुमरसाः विशेषतोऽनुपलक्ष्यमाणा अपि सामान्यतः उपलक्ष्यन्त एव अत्र श्रुतयः यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् इति यथा सौम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान् समवहारमेकतां रसं गमयन्ति ते यथा न तत्र विवेकं लभन्ते अमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सौम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पद्यामहे इत्याद्याः अर्थश्च निस्तिष्ठन्ति निष्पादयन्ति नानात्ययानां नानाविधपरिणतिमतां रसान् समवहारं समाहृत्य एकतां रसम् एकरसतामित्यर्थः यथा नद्य इत्याद्या मुक्तिव्यञ्जिका यथा सौम्येत्याद्या श्रुतिः प्रलयव्यञ्जिका ॥ ३१ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ननु भुवा इत्यादिनाऽनाद्यनन्तत्वं प्रतिपादितं स्थिरचरजातयः स्युरित्यादिना जन्माप्युक्तमेव उभयथात्वाभ्युपगमे वदतो व्याघातः स्यात् न केवलमेतावदेव दूषणं किन्तु जन्माङ्गीकारेऽजत्वनाशेन कृतनाशाकृताभ्यागमप्रसङ्गोऽपीति चेत्त भगवतोऽशभूतानां क्षेत्रज्ञानामनाद्यनन्तत्वेऽपि देहजन्मना जन्मोक्तेरप्यविरुद्धत्वादित्याहुः— प्रकृतिपुरुषयोरुद्भवो जन्म न घटते न सम्भवति कुतः उभयोरजत्वादित्यर्थः अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इत्यादिश्रुतेः तर्हि तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः इत्यादिना "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एवैतस्मादात्मनो व्युच्चरन्ति" इत्यादिना च कथमुभयोरपि जन्मोक्तिरत आहुः उभययुजेति उभयस्यानादिसिद्धलिङ्गस्य प्रत्यक्चेतनस्य च योगेन हेतुना असुभृतो भवन्ति स्थूलशरीरयोग एव जन्मेत्युपचर्यत इत्यर्थः । तत्र दृष्टान्तः जलबुद्बुदवत् यथा जलमात्रस्य न बुद्बुदरूपेण जन्म किन्तु वायुसंयोगादेव बुद्बुदा भवन्ति तद्वदत्रापि जीवात्मनो जन्माभावेऽपि देहयोगाज्जन्मोक्तिरिति भावः । किञ्च कर्मात्मिकाविद्यानिवृत्त्या पुनरपि भगवत्प्राप्तिमाहुः—त्वयि सर्वज्ञे सर्वशक्तौ भगवति इमे तनुभृतो जडवर्गश्चाकाशादयः विविधनामगुणैः सह देवदत्तादिनामानि गुणा वर्णाश्रमधर्माः शमादमस्तपश्शौचमित्यादिनाष्टादशाध्याये भगवतोक्तास्तैः सह लिल्युः पृथक्त्वेऽपि पृथग्ग्रहणानर्हतां प्रापुरित्यर्थः । तत्र दृष्टान्तः सरित इवार्णवे अशेषरसा इव मधुनि यथा सरितः समुद्रं प्राप्य पृथग्ग्रहणानर्हाः तिष्ठन्ति यथाचाशेषवृक्षाणां रसाः मधु प्राप्य तथैव तिष्ठन्ति तथा तनुभृतोऽपि भगवन्तं प्राप्यात्यन्तपृथग्ग्रहणानर्हतां भजन्तीति भावः । ननु यदि पृथग्ग्रहणं नास्ति तर्हि कुतो भेदसम्भावनेति चेत्त मधुनि रसविशेषवैचित्र्यस्य दृश्यमानत्वात् जलेऽपि जलान्तरसंयोगवृद्धिदर्शनात् ननु समुद्रे वृद्धिर्न दृश्यते इति चेत्सत्यं तस्य निरतिशयत्वेन नैवं सामान्याद्वृद्धिर्दृश्यतेऽल्पेन तत्राप्यनुमानात् समुद्रस्याप्यल्पजलानां तरङ्गात्मनान्यत्र नदीषु संयुक्तानां रसभेदस्य दर्शनात् तत्रापि भेदस्य वर्त्तमानत्वात् तथाहि श्रुतयः । "यथा सौम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान् समवहारमेकतां सङ्गमयन्ति ते तथा न विवेकं लभन्ते अमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवं खलु सौम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पद्यामहे" इति यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इति अयमर्थः यथाशेषवृक्षाणां रसा मधु प्राप्य स्वस्य नामरूपाभ्यां विमुक्ताः मधुनो नामरूपे साधारणे भजन्ति यथाच नद्यः समुद्रं प्राप्य स्वनामरूपाभ्यां अमुका नदी चर्मण्वतीत्यादिनामनीलजला इत्यादिरूपं ताभ्यां विमुक्ताः वियुक्ताः सत्यः समुद्रसाधारणनामरूपे भजन्ति तथा विद्वानपि स्वस्य देहाद्यभिमतस्य नामरूपाभ्यां देवदत्तादिदेवतिर्य्यगादिभ्यां विमुक्तो भगवतो ब्रह्मणः साधारणनामरूपे सत्यं ज्ञानमिति श्रुत्युक्तं सत्यज्ञानादिनाम आदित्यवर्णं तमसः परस्तादित्यादि श्रुत्युक्ताप्राकृतरूपञ्च प्राप्नोतीत्यर्थः । तदेवाह —दिव्यमिति प्रकाशात्मकमित्यर्थः । एतच्च प्रश्नोपनिषदि स्पष्टमेव यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवोच्यते एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते चासां नामरूपे पुरुष एवोच्यते" इत्यादि कथम्भूते त्वयि परमे परैर्वेदमन्त्रैर्मीयते इति परमस्तस्मिन् अनेन वेदस्यापि जन्मादिकारणत्वं व्याख्यातम् एतेन जीवसाहचर्य्योक्तेन प्रकृतेरपि स्वरूपतोऽजत्वं कार्य्यात्मना प्रपञ्चरूपेण जन्मादिमत्त्वं ज्ञातव्यम् अजामेकामित्युक्तत्वादिति भावः ॥ ३१ ॥ १८ ॥

**नृषु तव मायया भ्रमममीष्ववगत्य भृशं त्वयि सुधियोऽभवे दधति भावमनुप्रभवम् ।
कथमनुवर्त्ततां भवभयं तव यद्भ्रुकुटिः सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयम् ॥३२॥**

भाषा टीका ।

यद्यपि जीव माया दोनो अत्मा हैं इस कारण इनकी स्वतः उत्पत्ति नहि घटिसकती तथापि जैसे विद्यमान जलके भागों का पवनकी प्रेरणा से परस्परमें संयोग होकर बुदबुदा उत्पन्न होजाता है तैसेहि जीवों कर्म को निमित्त कर परमात्माके सङ्कल्पसे जीव माया के परस्पर संयोग से प्रलयकालिक जीव माय विशिष्ट सदा धार आप के बीचमे देव मनुष्यादि विविधनाम और आकार सम्पन्न प्राणी उत्पन्न होजाते है अर्थात महदादितत्व रूपसे परिणाम होनाहि माया की उत्पत्ति है और देव मनुष्यादि नामरूप की प्राप्ति हि जीव की उत्पत्ति है और जीव माया दोनो स्वतः स्वरूप से नित्य हैं और जैसे समुद्र में अनेक नदीं मिल रहीं हैं तथा मधु में जैसे अनेक वनस्पति के रस मिल रहें हैं तैसे हि प्रलय काल में देव मनुष्यादि स्थूल नामरूप का परित्याग कर जीव और महदादि स्थूल नामरूप का परित्याग कर माया ए दोनो सूक्ष्म रूपसे आपके बीच में लय को प्राप्त होजाते हैं ॥ ३१ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वेवं तावत्परमेश्वराज्जीवा जायन्ते तद्वशेन च कर्माणि कुर्वन्ति पुनस्तत्र लीयन्त इति संसारचक्रे परिभ्रमणमुक्तमिदानीं तन्निवृत्तये "परीत्य भूतानि परीत्य लोकान्परीत्य सर्वाः प्रदिशो दिशश्च उपस्थाय प्रथमजामृतस्याऽऽत्मनात्मानमभिसंविवेश" इत्याद्याः भगवदनुवृत्तिं विदधतीत्याह—नृषु तव माययेति । नृषु जीवेष्वमीषु तव मायया भ्रममुक्तलक्षणमवगत्य ज्ञात्वा सुधियो भृशं त्वय्यभवे भवनिवर्त्तके भावं स्वभावमनुवृत्तिं दधति कुर्वन्ति कीदृशं भ्रमम् अनुप्रभवं अन्वनुप्रभवो यस्मिन्भ्रमं ततः किमत आह कथमिति अनुवर्त्ततामनुवर्त्तमानानां त्वामेव शरणं भजतां भवभयं संसारभयं कथं भवेत् न कथञ्चिदपीत्यर्थः । कुतः यद्यस्मात्तव भ्रुकुटिर्भ्रूभङ्गरूपस्त्रिणेमिस्त्रिणेमिस्त्रयो नेमय इवावच्छेदाः शीतोष्णवर्षाः काला यस्य सम्वत्सरात्मकस्य कालस्य सः अभवच्छरणेषु न भवान् शरणं रक्षिता येषां तेष्वेव भयं जन्ममरणादिलक्षणं सृजति करोति अत एवम्भूतं संसारमाकलय्य तन्निवृत्तये सुधियस्त्वयि भावं दधतीति ॥ ३२ ॥

संसारचक्रक्रकचैर्विदीर्णमुदीर्णनानाभवतापतप्तम् ।
कथञ्चिदापन्नमिह प्रपन्नं त्वमुद्धर श्रीनृहरे नृलोकम् ॥१९॥

———

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

भूतानि परीत्य चराचरशरीराणि अनित्यत्वेन ज्ञात्वा एवं लोकान् स्वर्गादीनपि कर्म्मकृतत्वेनानित्यतया ज्ञात्वा दिशः प्रदिश इति ऐहिकभोगा एवोक्ताः तानप्यनित्यान् ज्ञात्वा प्रथमजां प्रथमं जातां प्रथमप्रश्वासोद्भवां त्रयीलक्षणाम् उपस्थाय विचार्य्य विश्वस्य वा ऋतस्य श्रीविष्णोः आत्मानं स्वरूपम् आत्मना मनसाऽभिसम्विवेश आश्रितवानिति उक्तलक्षणं जन्मादिरूपसंसारप्रदम् अनात्मन्यात्मबुद्धिरूपं तत अनुवृत्तिकरणात् किं तदीयपदे आपन्नं विपद्ग्रस्तम् ॥ ३२ ॥

———

श्रीकविचूडामणिचक्रवर्त्तिकृताऽन्वयबोधिनी ॥

एवं तावत् परमेश्वरात् जीवा जायन्ते तद्वशेन च कर्माणि कुर्वन्ति पुनस्तत्र लीयन्ते इति संसारचक्रे भ्रमणम् उक्तम् इदानीं तन्निवृत्तये भवदनुवृत्तिं विदधतीत्याह—नृषु तवेति । अमीषु नृषु तव मायया भ्रमं भ्रमणम् अवगत्य ज्ञात्वा सुधियः त्वयि भावमनुवृत्तिं विदधति कुर्वन्ति त्वयि कथम्भूते अभवे भवनिवर्त्तके भ्रमं कथम्भूतम् अनुप्रभवं अनुप्रभवो जन्म यस्मिन् तं ततः किमत आह-कथमिति । अनुवर्त्ततां त्वमेव शरणं गतानां भवभयं संसारभयं कथम्भवेत् न कथञ्चिदपि कुतः यत् यस्मात्तव भ्रुकुटिः भ्रूभङ्गरूपस्त्रिणेमिः कालः अभवच्छरणेषु भयं जन्ममरणादिलक्षणं सृजति करोति ननु त्वच्छरणागतेषु न भवान् शरणं रक्षिता येषां ते अभवच्छरणाः त्रिणेमिरिति त्रिस्रो नेमय इवावच्छेदाः शीतोष्णवर्षकालाः यस्य सम्वत्सरात्मकस्य कालस्य सः अत एवम्भूतं संसारमाकलय्य तन्निवृत्तये सुधियस्त्वयि भावं दधतीति अत्र श्रुतिः "परीत्य भूतानि परीत्य लोकान्परीत्य सर्वाः प्रदिशोदिशश्च उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसम्विवेश" इति अर्थः स मुनिः भूतानि प्राणिनः परीत्य संसारचक्रे भ्रमन्तीति ज्ञात्वा लोकान् स्वर्गादीन् क्षयिष्णुत्वेन परीत्य ज्ञात्वा सर्वा दिशो विदिशश्च दुःखमयत्वेन परीत्य ऋतस्य विष्णोः प्रथमजां वाचं त्रयीलक्षणां उपस्थाय त्र्ययुक्तनैष्कर्म्यमासेव्य आत्मना सर्वतो विरक्तेन मनसा आत्मनं परमात्मानं भगवन्तम् अभिसम्विवेश गतवान् व्याख्यान्तरं पूर्वैः कृतं सर्वेषु भूतेषु अहमास्मि सर्वाणि भूतानि मयि सन्तीति ज्ञात्वा ऋतस्य प्रथमजां वाचं उपस्थाय वाक्यज्ञानोत्पत्तिं तावत् आत्मना शुद्धेन त्वंपदार्थेन आत्मानं तत्पदार्थं परमात्मानम् अभिसम्विवेश ऐक्यं गतवानिति स्वामिनां —

संसारचक्र क्रकचैर्विदीर्ण—
मुदीर्णनानाभवतापतप्तम् ।
कथञ्चिदापन्नमिह प्रपन्नं
त्वमुद्धर श्रीनृहरे नृलोकम् ॥

भो नृहरे ! नृलोकं त्वं समुद्धर कथम्भूतं संसारचक्रक्रकचैः विदीर्णम् संसारचक्रमेव क्रकचं करपत्रं काष्ठविदीर्णसाधनविशेष स्तेन विदीर्णं अत एव उदीर्णनानाभवतापतप्तं उदीर्णैरुद्भूतै र्नानाध्यात्मादिभवतापैस्तप्तम् अत आपन्नमापद्ग्रस्तं इह संसारे

श्रीकविचूडामणिचक्रवर्त्तिकृताऽन्वयबोधिनी ।

त्वद्भक्तिरूपेणापि भाव्योदयेन त्वां प्रपन्नं शरणागतम् नृषु ॥ ३२ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नृष्वित्यस्य टीकायां, श्रुतौ परीत्य ज्ञात्वा प्रथमजां वाचं प्रतीक्षणाम् ऋतस्य श्रीविष्णोः आत्मना मनसा आत्मानं स्वरूपम् अभिसंविवेश आश्रितवानिति ॥ अथ सद्व्याख्या तदेवं पूर्वोक्तानुसारेण लब्धावसराः भवभयनिवर्त्तकता-कथने तस्मिन् भक्तितात्पर्यकाः काश्चिदन्याः श्रुतयः स्तुवन्ति नृष्विति । साधारणजीवानां यथा मायया भ्रमो भवति सैव त्वद्भक्तसङ्गजातसद्बुद्धीनां भक्तिमाधुर्यानुभवेन तां त्यक्तुं न शक्नुवन्तीत्यर्थः । हेतुर्भवति भ्रममध्यात्मत्वां भयहेतुत्वं त्वयि तु तन्निवर्त्तकत्वं बुद्ध्वेतिभावः । तत्रापि तु अनु वा प्रभव त्वत्प्रभवो यस्य तादृशं भावं यद्वा प्रतिजन्म च ते दृष्टान् पर्यटत्स्वपि परममाधुर्यानुभवेन तां त्यक्तुं न शक्नुवन्तीत्यर्थः । यथोक्तं श्रीविष्णुपुराणे "सा हानिस्तन्महच्छिद्रम्" इति नाथ योनिसहस्रेष्वित्यादि नैवं जनो जातु कथञ्चन त्वत्सेवी विहातुमिच्छेदपर सम्प्रदो जन इति श्रीमद्भागवते च तर्हि किं यस्मात्तस्मादभयाद्भक्तिर्जातेः तदापि तिष्ठतु नहीत्याहुः—कथमिति । संसारदशायां तन्माधुर्यावेशेन तदनवधानात् भयहेतूनां किञ्चित्कर्तुमशक्तत्वाद्वा तदनीनदशायान्तु भव-कारणानामपि नाशादितिभावः । तत्र कैमुत्येनाहुः—तवेति ।—

> सकृदेव प्रपन्नो यस्तवास्मीति च याचते ।
> अभयं सर्वदा तस्मै ददाम्येतद्व्रतं मम ॥

इति श्रीरामायणे श्रीराघवेन्द्रप्रतिज्ञानुसारेण ददाम्येतद्व्रतं हरेरित्यत्र तादृशगरुडपुराणोक्तानुसारेण च, शरणागतमात्रेऽपि भयाभावादित्यर्थः । त्रिनेमिरिति भूतभविष्यद्वर्त्तमानात्मककालरूपेणेति अत्र श्रुतयः परीत्येत्याद्या एव तत्र प्रथमजा—

> कालेन नष्टा वाणीयं प्रलये वेदसंज्ञिता ।
> मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥

इत्येकादशानुसारेण भक्तिप्रतिपादिकाम् ऋतस्य स्वयं भगवतो वाणीमिति व्याख्येयं यद्वा तादृशमोक्षप्रस्तावमसहिष्णवः काश्चिदन्या आहुः—नृष्विति । अमीषु पूर्वोक्तेषु मुक्तिसाधकेषु त्वद्भक्तिसुखानवधानरूपं त्वन्मायाहेतुकभ्रममवगत्येत्यादि व्याख्येयं श्रुतयस्तु पूर्वपूर्वानुसारेणान्वेषणीयाः ॥ ३२ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

एवं जगत्कारणे त्वयि भक्तिमतां न भयमित्याह—नृषु तवेति । तव मायया त्वदीयया प्रकृत्या भ्रमम् अहङ्कारमम-काररूपं भावं भक्तिं प्रपत्तिं वा अनुवर्त्ततां त्वामनुवर्त्त-मानानां कालः स तवैव भ्रुकुटीस्थानीयः अभयचरणेषु त्वच्चर-णाश्रितेषु ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तर्हि उत्पत्तिविनाशाद्यात्मकसंसारनिवृत्त्यनुवृत्त्योः किं निदान-मित्यपेक्षायां त्वद्भक्तितदभावावेवेत्याहुः—नृष्विति । अनुपूर्वकः प्रभवः संसरो यस्मात्तममीषु नृषु तव मायया त्वदीयया प्रकृत्या भ्रमं देहात्माभिमानस्वतन्त्रात्माभिमानादिरूपमवमृश्य अयमेव संसृतिहेतुरिति निश्चित्य सुधियः त्वयि भृशं भावभक्तिं विदधति अनुवर्त्ततां त्वां भजतां भवभयं संसृतिभयं कथं भवेत न भवेदेवेत्यर्थः । कुतः यत् यस्मादभयच-रणेषु न भवान् शरणं येषां ते तेष्वेव तव भ्रूकुटिः भ्रूभङ्गरूपः त्रिणेमिः तिस्रो नेमयः शीतोष्णवर्षकालात्मिकाः यस्य सः सम्वत्सरात्मकः कालः (इत्यर्थः) भयं संसृतिभयं सृजति अभयचरणेषु इतिपाठे न भवतश्चरणं येषां तेषु उपायो-पेयभावेन भवच्चरणमनाश्रितेषु इत्यर्थः ॥ ३२ ॥

---

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथैवं जगत्कारणे त्वयि भक्तिमतां न भयमित्याह—नृषु तवेति । हे भगवन् गुरोः सकाशात्—

> गुकारस्त्वन्धकारः स्यात् रुकारस्तन्निरोधकः ।
> अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते ॥

इत्युक्तप्रकारेण शब्दब्रह्मणि परब्रह्मणि निष्णात् तत्त्वबोधा-भिज्ञाद्गुरोस्तव मायया त्वदीयया प्रकृत्या अमीषु नृषु मनु-ष्येषु भ्रमं स्वतन्त्रात्मभ्रमं देहात्मभ्रमं तत्प्रयुक्ताहङ्कारममकार-रूपश्चावगम्य ज्ञात्वा सुधियो विवेकिनस्त्वयि सर्वस्वामिनि सर्वाधारे सर्वनियन्तरि हेयप्रत्यनीके कल्याणगुणाकरे भव-निवर्त्तके भावम् अनुपमभवम् अनुक्षणं प्रीतिरूपां भक्तिं विदधति कुर्वन्तीत्यर्थः तथा चैकादशे भगवद्वचनं—

> निष्किञ्चना मय्यनुरक्तचेतसः
> शान्ता महान्तोऽखिलजीववत्सलाः ।
> कामैरनालब्धधियो जुषन्ति य-
> त्ते नैरपेक्ष्यं न विदुः सुखं मम ।

इति इत्थम्भूता मद्भक्ता एव मम नैरपेक्ष्यं सुखं विदुर्नान्ये इत्यर्थः । अत एव त्वय्यनुवर्त्ततां त्वामनुवर्त्तमानानां सेवमानानां भवभयं संसारभयं कथं भवति तदुक्तं सिद्धैश्चतुर्थे अयं त्वत्क-थामृतपीयूषनद्यां मनोवारणः क्लेशदावाग्निदग्धः तृषार्तो ऽवगाढो न सस्मार दावं न निष्क्रामति ब्रह्मसम्पन्नवन्न इति त्रिणेमिः कालः स तवैव भ्रुकुटीस्थानीयः अभयच-रणेषु त्वच्चरणानाश्रितेषु स्वतन्त्रात्मभ्रमदेहात्मभ्रमयुक्तेषु—

> ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ।
> आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ॥

इत्युक्तासुरस्वभावेषु भयं सृजति तथा च रुद्रगीतं चतुर्थे—

> प्रमत्तमुच्चैरितिकृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम् ।
> त्वमप्रमत्तः सहसाभिपद्यसे क्षुल्लेलिहानोऽहिरिवाखुमन्तकः ।

इति ॥ ३२ ॥

---

[illegible]सम्बन्धः ।
सृजति न तु भवच्छरणेषु तत्रापि मुहुः कीदृशः त्रिणेमिः [illegible]वर्तमानाक्यः ॥ ३२ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं निष्प्रत्यूहाय भगवद्दास्यकला प्रत्येकसमुदायाभ्यां जीव सुखानयोर्निरूपिता तेनावश्यं भजनीयत्वं निरूपितम् एवं भजनीयत्वे ज्ञातेपि भजनार्थं प्रवृत्तावपि भक्त्युन्मुखान् कालश्चेन्नाशयेत तदा भजनं कथं सिद्ध्येदिति शङ्कां निराकर्तुमाह—नृषु तव माययेति । भगवान् सृष्ट्यादौ कालं मायाञ्च सृष्टवान् ये मायया मुग्धा भविष्यन्ति तान् कालो ग्रसिष्यति तेषु लोकान् भगवन्मायाग्रस्तान् ततः कालेन ग्रस्तानालोक्य मायापगमे निस्तारे च भगवद्भजनमेव गतिरिति ये भगवन्तं सेवन्ते तेषां पुनर्मायामोहः सर्वथा सङ्गच्छते ततः कालग्रसनाभावोपि सिद्धः यदि कथंचिद्भक्तिमार्गे विषयाणां विद्यमानत्वात् कदाचिन्मोहः स्यादपि तथापि कालग्रासो न भवेत् तत्र हेतुः कथमनुवर्ततां भवभयमिति तत्रापि हेतुः यस्मात् कारणात् तवैव भ्रुकुटिः अभवच्छरणेषु भयं सृजति अतो भक्तिमार्गस्य सर्वथा कालनाशकत्वं मनुष्याधिकारित्वाच्छास्त्रस्य कर्माधिकारादन्येषां भोगदेहित्वात् मनुष्यशरीरानन्तरमेव पुनर्नानाविधयोनिसम्बन्धः " स्वर्गापवर्गयोर्द्वारं तिरश्चां पुनरस्य च" इतिवाक्यात् अतो नृणां भ्रममित्युक्तम् अतो ये सुधियः स्वयमपि नरत्वं प्राप्ताः यदि प्रमत्ता भवेयुः तदा पुनः कालचक्रेण हीनमुत्तमत्वं वा प्राप्ताः कृतार्था न भविष्याम इति निस्तारार्थं यतमानाः तादृशं गुरुमेव भजन्ते स च गुरुर्भगवानेव भगवानेव वा गुरुः शास्त्रिद्वयं तत्रैव ज्ञातमिति प्रवर्तकत्वं भजनीयत्वं च ननु, यो यच्छ्रद्धः स एव स इति न्यायेन कालान्तरे तत्त्वं सिद्ध्यति सोपि चेत्पुनरुत्पद्यते तदा को विशेष इति शङ्कायामाह—अभव इति । भिन्नगुरुपक्षेति भगवदीयत्वञ्च तस्यापि भवः ननु कियत्प्रभृतिभगवद्भजनं कर्तव्यमिति चेत्तत्राह—अनुप्रभवमिति प्रकृष्टोभवोबुद्धिसहितं जन्म यदैव भगवति सद्बुद्धिर्भवति तत आरभ्यैव भगवति भावः कर्तव्य इत्यर्थः अनुवृत्तिश्च कर्तव्या कालो हि बाह्यः न केवलमान्तरेण भावेन पीडातो निवर्तते अपितु पीडयत्येव अत एव ज्ञानिनामान्तरभक्तानां बहिर्मुखत्वात् क्लेशः स च जडभरते वर्णितः तेन क्लिष्टाः कदाचिन्मुग्धा अपि भवेयुरिति प्रथमत एव बाह्याप्यनुवृत्तिः कर्तव्या एवं बाह्याभ्यन्तरभेदेनानुवर्तमानान् वस्तुतः सेवकभूतान् जीवान् कामात्सेवामकुर्वतः शिक्षार्थमेव दण्डं कुर्वाणः कालः कथं भयं तेषां कुर्यात् इत्याद्या कालस्य भ्रूरूपत्वं पूर्वं वर्णितं ननु कालेन महान् दण्डः कर्तव्यः ततो लौकिकभयवत्सोप्यल्पमिति कथं भजनं सिध्येदित्याशङ्क्याह—मुहुरिति । ननु कालो न दृश्यते ऋतव एव हि लोको बिभ्यति अत आह—त्रिणेमिरिति संवत्सरात्मकः प्रत्यक्ष एव कालः यस्य शीतातपवर्षाख्यास्त्रयो नेमयः सल्लोके प्रकटीकुर्वन् स्वपराक्रमं ज्ञापयतीत्यर्थः । न विद्यते भवान् शरणं येषां ये यथा मां प्रपद्यन्ते इति शरणत्वेन न स्वीकृतवन्तः इत्यर्थः ।

> दृष्ट्वा दुर्गतिमालोक्य ये सेवन्ते दृढव्रताः ।
> कृष्णं तद्भ्रुकुटिः कालो न तान् हन्ति कदाचन ॥३२॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एवं नानामतान्यनूद्य दूषयन्त्यो वैष्णवमतमेव स्थापयन्ति नृषु विद्यमानेषु अमीषु पूर्वश्लोकद्वयार्थावगमितेषु नानावादिषु भ्रममवगत्य भ्रान्त्यैव नानामतकल्पनं ज्ञात्वा त्वयि अभवे भवनिवर्तके भावं दास्यसख्यादिकमेव केवलम् अनुभवं अनु प्रतिक्षणं प्रभवमुल्लासो यस्य तं यद्वा प्रतिजन्मैव दधति कुर्वन्ति यथोक्तं वैष्णवे—

> नाथयोनिसहस्रेषु येषु येषु व्रजाम्यहम् ।
> तेषु तेष्वच्युता भक्तिरच्युतास्तु सदा त्वयि" ॥ इति

ननु तर्हि त्वंपदार्थतत्पदार्थयोर्ज्ञानाभावात् संसारे क्लेशाभावाच्च तेषां संसारस्तु नैव निवर्तेत तत्राहुः कथमिति भवभयं तेषां कथमनुवर्तताम् अनुवृत्तं भवतु त्वद्दास्यारम्भदशायामेव तस्यापगमात् किन्तु निष्कामत्वातिशयात् भजनांत्यक्त्वैव स्वेषु तेषां संसारित्वाभिमानः यत् यस्मात्तव भ्रुकुटिर्भ्रूभङ्गरूपः त्रिनेमिस्त्रिगुणः तीक्ष्णधारः कालः अभवच्छरणेषु त्वच्चरणापरिहितेष्वेव भयं जन्ममरणादिलक्षणं सृजति यदुक्तं त्वयैव—

> सकृदेव प्रपन्नो यस्तवास्मीति च याचते ।
> अभयं सर्वदा तस्मै ददाम्येतद्व्रतं मम ॥ इति
> दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
> मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ इति

अयं भावः अन्येषां वादिनामिव परमतखण्डनेन स्वमतस्थापने च नास्याग्रहः अत्याग्रहस्तु त्वद्भजन एव वैष्णवानां तत्र च न केषामपि वादिनां विप्रतिपत्तिरिति तन्मतमेव सर्ववादार्थसारं विचित्ररूपगुणलीलामहोदधौ त्वयि कृष्णरामादिस्वरूपे उपास्यबुद्धिं स्वेषूपासकबुद्धिरित्येव तेषां तत्पदार्थत्वंपदार्थयोर्ज्ञानं सूर्योपमस्य भगवतो बाह्यप्रभोपमाः जीवाः अत एव ततो भिन्नत्वेनाभिन्नत्वेनापि व्यपदिश्यन्ते सूक्ष्माणामप्यहं जीव इति भगवदुक्तेः "एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश" इति वालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेयः इति आराग्रमात्रो ह्यवरोपि दृष्ट इत्यादिश्रुतिभ्यश्च तेषां परमाणुपरिमाणत्वमेव तदपि सम्पूर्णदेहव्यापिशक्तिमत्त्वं तु अचिन्त्यस्य महामणेर्महौषधखण्डस्य च शिरस्युरसि वा धृतस्य सम्पूर्णदेहपुष्टीकरिष्णुशक्तिमत्त्वमिव नातमञ्जसं स्वर्गनरकनानायोनिषु गमनं च तेषामुपाधिपारवश्यादेव यदुक्तं प्राणमधिकृत्यवक्ता त्रयेण येन संसरते पुमानिति तेषां बहुत्वं नित्यत्वं च नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामानितिश्रुत्या प्रतिपादितं समुदितानां तेषां भगवत्तटस्थशक्तित्वेनैकत्वञ्च ज्ञेयं तेत्र मेघोपमया अविद्यया आवृता बद्धजीवा एके अन्ये भक्तिमज्ज्ञानेन तदावरणोन्मुक्ता मुक्तजीवाः अन्ये केवलया प्रधानीभूतया वा भक्त्या

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तदावरणोन्मोचितप्रापितचिदानन्दमयमजनोपयोगिशरीराः सिद्धभक्ताः अन्ये अविद्यायोगरहिता एव नित्यपार्षदाः इति चतुर्विधाः तल्लक्षणञ्च नारदपञ्चरात्रे—

> यत्तटस्थं तु चिद्रूपं स्वसम्वेद्याद्विनिर्गतम् ।
> रञ्जितं गुणरागेण स जीव इति कथ्यते ॥

अस्यार्थः यत्तटस्थं विशेषतो ज्ञेयं चिद्वस्तु स जीवः यथाग्नेः क्षुद्राः विस्फुलिङ्गा व्युच्चरन्तीति श्रुतेः स्वसम्वेद्याच्चित्पुञ्जाद्भगवतः सकाशाद्विनिर्गतं चेत्तदा तु गुणरागेण रञ्जितं बहिरङ्गया मायाशक्त्या स्वीयानां गुणानां रागेण रञ्जितं मायिकाकारं स्यादित्यर्थः यदा तु केवलया प्रधानीभूतया वा भक्त्या मायोत्तीर्णं स्यात्तदा अन्तरङ्गया चिच्छक्त्या स्वीयकल्याणगुणेन रञ्जितं भगवत्यनुरक्तीकृतं चिन्मयाकारयुक्तं स्यादित्यर्थः एवञ्च मायाचिच्छक्त्योस्तटस्थत्वात्तटस्थमिति तन्नामकृतं यदा तु भक्तिमज्ज्ञानेन मुक्तं स्यात्तदा तु ब्रह्मण्यपृथग्भूय स्थितं नैव गुणरागेण रञ्जितमित्युपासकनिरूपणम् अत एव राजकीयः पुरुषोपि राजपुरुष इति वत्तत्पदार्थस्यैवांशी त्वंपदार्थ इति तत्त्वमसीति महावाक्यार्थं केचित्तु तस्य त्वमिति षष्ठीतत्पुरुषेणापि वदन्ति अथोपास्यनिरूपणं सूर्य्योपमस्य भगवतः प्रद्युम्नरसान्द्रज्योतिःपुञ्जोपमं ब्रह्म ब्रह्मसंज्ञमभूदेकं ज्योतिर्यत् सर्वकारणमितिनारसिंहोक्तेः ममैव तद्घनं तेजो ज्ञातुमर्हसि भारत इति । हरिवंशोक्तेश्च तद्यान्तर्मण्डलोपमः परमात्मा रथसारथ्यादिपरिकरविशिष्टवदनमयनपाणिपादादिसुन्दरसूर्य्योपमः सपरिकरः श्रीभगवान् यथा नगरस्यातिदूरस्थाः जना विशेषमनुपलभमाना इदमग्रे स्थितं कान्तिमयं वस्तु मात्रमिति तदेव नगरं पश्यन्ति अनतिदूरस्था ध्वजपताकादिविशिष्टं वृक्षषण्डमिति । अतिसमीपस्थाः तु पुरगोपुरनिष्कुटरथ्याप्रासादादियुक्तं नगरमिति तथैवातिदूरस्था भगवन्तमेव ज्योतिर्मयं ब्रह्मेति अनतिदूरस्थाः अनतिचिद्विशेषमयः परमात्मेति अतिसमीपस्थाः नानन्तचिद्विशेषमयो भगवानिति तत्राप्यन्तःप्रविष्टाः अपारमाधुर्य्यानुभाविनः कृष्ण इति मन्यन्ति यथाहुः प्राञ्चोपि च यत्तित्वषामित्यवधारितं पुरा ततः शरीरीति विभावितावृति चिदुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः" इत्येषमेतावन्मात्रमपि स्वमतं वैष्णवाः केपि ज्ञातुमपेक्षन्ते केपि नापेक्षन्ते च सर्वेप्यपेक्षते भजनप्रकारमेवेति अत्र श्रुतयः एतद्विष्णोः परमं पदं ये नित्योद्युक्ताः संयजन्ते न कामात् तेषामसौ गोपरूपः प्रयत्नात् प्रकाशयेदात्मपदं तदैव इत्याद्याः ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

भगवद्भजने सदाचारं प्रमाणयन्ति श्रुतयः अमीष्विति अमीषु पाण्डित्याभिमानिषु स्वोत्प्रेक्षिततर्कनिष्ठेषु तथाच मुण्डकश्रुतिः अविद्यायां बहुधा वर्त्तमाना वयं कृतार्था इत्यभिमन्यन्ते बालाः इत्यादि भृशं भ्रममवगत्य निश्चित्य सुधियो निर्मलमतयस्त्वयि भावं विदधति [illegible] प्रेम कुर्वन्ति विश्वम्भरं महाविष्णुं नारायणमनामयं; पूर्णानन्दैकविज्ञानं परं ज्योतिः स्वरूपिणं मनसा संस्मरन् ब्रह्मा तुताव परमेश्वरम् इति रामतापन्युपनिषदि यस्मात्स्वभक्तानां स्वयं एव मृत्युमपमृत्युं च मारयति तस्मादुच्यते मृत्युमृत्युरिति यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्चेत्यादि नृसिंहतापिन्यां सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरं द्विभुजं ज्ञानमुद्राढ्यं वनमालिनमीश्वरं कालिन्दीजलकल्लोलसाङ्गिमारुतसेवितं चिन्तयंश्चेतसा कृष्णं मुक्तो भवति संसृतेः" इति गोपालतापन्युपनिषदि कथम्भूते त्वयि अभवे संसारनिवर्तके "संसारबन्धस्थितिमोक्षहेतुः" इतिश्रुतेः कथम्भूतं प्रेम अनु प्रभवं निरन्तरप्रवर्द्धमानं यद्वा अनु अनन्तरं भवतः प्रभवः प्रादुर्भावो यस्मात्तथा अचिरं स्वत्प्रापकमित्यर्थः अत एव तवानुवर्तिनां भक्तानां भवभयं कथं स्यान्न कथञ्चिदपीति युक्तमेवैतत् यतस्तव भ्रुकुटिः कालरूपा त्रिनेमिः अभवच्चरणेष्वेव न भवान् शरणं यासां आश्रयो येषां तेष्वेव तव पराङ्मुखेष्वेव अन्ययोगव्यवच्छेदेऽवधारणशब्दः भयं सृजति मुहुर्निरन्तरं तथाच श्रुतिः एको वशी सर्वगः कृष्णः ईड्य इत्यारभ्य तेषां सुखं शाश्वतं नेतरेषामित्यन्तं अन्यत्रापि एको वशी सर्वभूतान्तरात्मेत्यादि येनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषामिति कठवल्लीषु ॥ ३२—१९ ॥

---

### भाषा टीका।

इन जीवों में आपकी माया से देह में आत्मभ्रम और आत्मा में स्वतन्त्र पने का भ्रम यह दो प्रकार का भ्रम हि संसार का हेतु है इसी के होने के पश्चात् संसार होता है इस प्रकार का निश्चय कर विवेकी जन आप के विषय में अति भक्ति करते हैं इसी से आप के भजन करने वारेन को किसी प्रकार संसार ते भय नहि होता क्योंकि आप का भ्रकुटि विलास रूप और शीत उष्ण वर्षा तीन पूठी युत एतादृश यह कालक्र आप का भजन नहि करने वारे प्राणियो में हि वारंवार भय उत्पन्न करता है आप के शरणागत सज्जन पुरुषों को भय नहि करता कारण कि आप के भक्तजन संसार से मुक्त होजाते हैं मुक्ति भुमि पर मपद में काल का कुछ वश नहि चलता ॥ ३२ ॥

---

**विजितहृषीकवायुभिरदान्तमनस्तुरगं य इह यतन्ति यन्तुमतिलोलमुपायखिदः ।**
**व्यसनशतान्विताः समवहाय गुरोश्चरणं वणिज[1]इवाज सन्त्यकृतकर्णधरा जलधौ ॥ ३३ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

स च भगवति भावो मनोनियमे सति भवति सोऽपि गुरूपसदनादिति गुरूपसदनं विदधाति "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्। आचार्यवान् पुरुषो वेद नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ" इत्याद्याः श्रुतय इत्याह—विजितहृषीकवायुभिरिति । विजितानि हृषीकाणि इन्द्रियाणि वायुश्च प्राणो यैस्तैरप्यदान्तमनस्तुरगमदान्तमशमितं मन एव तुरगो दुर्दमत्वसाम्यात्तं ये यन्तुं नियन्तुं यतन्ति प्रयतन्ते अतिलोलमतिचञ्चलं गुरोश्चरणं समवहाय अनाश्रित्य ते उपायेषु खिद्यन्ते क्लिश्यन्तीत्युपायखिदः सन्तो व्यसनशतान्विताः बहुव्यसनाकुलाः इह संसारसमुद्रे सन्ति तिष्ठन्ति दुःखमेव प्राप्नुवन्तीत्यर्थः । हे अज अकृतकर्णधरा अस्वीकृतनाविका वणिजो यथा तद्वत् गुरुणोपदर्शितभगवद्भजनसुखानुभूतौ तु स्वत एव मनो निश्चलं भवति नान्यथेति भावः ॥३३॥

यदा परानन्दगुरो भवत्पदे पदं मनो मे भगवँल्लभेत ।
तदा निरस्ताखिलसाधनश्रमः श्रयेय सौख्यं भवतः कृपातः॥२०॥

---

### श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

भावो ऽनुवृत्तिः सोऽपि मनोनियमोऽपि तद्विज्ञानार्थं तत्त्वात्मतत्त्वस्याभवार्थं समित्पाणिः गृहीतकाष्ठभारहस्तः श्रोत्रियमध्ययनश्रुतार्थसम्पन्नम् अन्यथा शिष्यस्य सन्देहव्युदासो न स्यात् ब्रह्मनिष्ठम् अनुभवेन ब्रह्मणि पारङ्गतम् अन्यथा शिष्ये सञ्चारशक्तिर्न स्यादिति एषा उपनिषत्प्रभवा तर्केण स्वोत्प्रेक्षितकुयुक्त्या नापनेया न बाधनीया अन्येनौपनिषदेन आचार्येण प्रोक्तोपदिष्टा सुज्ञानाय शोभनानुभवायैव भवति हे प्रेष्ठेति । नाचिकेतं प्रति यमस्य सम्बोधनं प्राकृतैः नाटके तद्भाषारूपगद्यपद्याक्षरैः काव्यं तु संस्कृतैस्तैरेव देशभाषा काश्मीरादिदेशभाषा आदिनाभिनयाचारादिग्रहः ॥ ३३ ॥

---

### श्रीकविचूडामणिचक्रवर्त्तिकृतान्वयबोधिनी ।

स च भगवति भावो मनोनियमे सति भवति सोपि गुरूपसदनादिति गुरूपसदनं विदधाति इत्याह—विजितेति भो अज ये गुरोश्चरणं समवहाय त्यक्त्वा विजितहृषीकवायुभिः साधकतमैः अतिलोलं चञ्चलं अदान्तं मनस्तुरगं यन्तुं नियमयितुं यतन्ति यत्नं कुर्वन्ति ते उपायखिदः सन्तः इह संसारसमुद्रे सन्ति तिष्ठन्ति दुःखमेव प्राप्नुवन्ति इत्यर्थः कथम्भूताः व्यसनशतान्विताः बहुव्यसनाकुलाः अकृतकर्णधरा वणिजो यथा जलधौ सन्ति विजितानि हृषीकाणि इन्द्रियाणि विजितो वायुश्च प्राणो यैस्ते उपायेषु खिद्यन्ति क्लिश्यन्ति इत्युपायखिदः अदान्तमदमितं मन एव तुरगस्तं दुर्दमत्वसाम्यात् गुरुणोपदर्शितभगवद्भजनसुखानुभूतौ तु स्वत एव मनो निश्चलं भवति नान्यथेति भावः वैराग्यपूर्वकं गुरूपसदनं विदधाति श्रुतिः "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् आचार्य्यवान् पुरुषो वेद नैषा तर्केण मतिरापनेया प्रोक्ता अन्येनैव सुज्ञानाय प्रेष्ठेति अर्थः ब्राह्मणजातिविशिष्टः कर्मचितान् संसारगतिभूतान् लोकान् परीक्ष्य प्रत्यक्षानुमानागमैः सर्वतो याथात्म्येनावधार्य्य निर्वेदं वैराग्यमायान् कुर्य्यात् ब्राह्मणग्रहणं ब्रह्मविद्याधिकारिषु प्राधान्यात् वैराग्यप्रकारं दर्शयति इह संसारे कश्चिदपि पदार्थः अकृतो नास्ति अतः किं कृतेन कर्मणा आयासबहुलेन इत्येव निर्विण्णो विद्वज्जनप्रार्थ्यं नित्यं पदं यत्तद्विज्ञानार्थं स ब्राह्मणः समित्पाणिः गृहीतकाष्ठभारहस्तो गुरुमेवाभिगच्छेत् कथम्भूतं गुरुं श्रोत्रियम् अध्ययनश्रुतार्थसम्पन्नं ब्रह्मनिष्ठं हित्वा सर्वाणि कर्माणि केवले ब्रह्मणि निष्ठा यस्य तं ननु विद्वान् स्वयमेव जानातु नेत्याह "आचार्य्यवान् पुरुषो वेद नान्य इति यदा तु आत्मनि उत्पन्ना आगमप्रतिपाद्यात्ममतिः एषा तर्केण स्वबुद्ध्या अभ्यूहनमात्रेण नापनेया न हन्तव्या किन्तु सेयं मतिः अन्येनैवागमाभिज्ञेनाचार्य्येण प्रोक्ता सती सुज्ञानाय भवति हे प्रेष्ठ प्रियतमेति नाचिकेतसम्प्रति यमस्य सम्बोधनं तस्मात् गुरूपदेशप्रभावेन भक्तिमाहात्म्यावगतेर्या सुखानुभूतिस्तस्यां स्वत एव मनोनिश्चलं भवति" इति गुरूपसदनपरेयं श्रुतिः स्वामिनां—

यदा परानन्दगुरो भवत्पदे पदं मनो मे भगवँल्लभेत ।
तदा निरस्ताखिलसाधनश्रमः श्रयेय सौख्यं भवतः कृपातः ॥

भो भगवन् परानन्दगुरो मे मम मनो भवत्पदे यदा पदं स्थानं लभेत तदा भवतः कृपातः निरस्ताऽखिलसाधनश्रमः सन् सौख्यं श्रयेय प्राप्नुयां निरस्तो त्यक्तो अखिलानां साधनानां श्रमो येन सः ॥ ३३ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

विजितेत्यस्य टीकायां श्रुतौ समित्पाणिः गृहीतकाष्ठभारहस्तः श्रोत्रियमध्ययनश्रुतार्थसम्पन्नम् एषा उपनिषत्प्रभवा अन्येन औपनिषदेनाचार्य्येण हे प्रेष्ठ प्रियतमेति नाचिकेतं संलक्ष्यीकृत्य यमसम्बोधनं तद्व्याख्यायां गुरुणोपदर्शितेत्यादौ गुरूपदेशप्रभावेन भक्तिमाहात्म्यावगतेर्या सुखानुभूतिस्तस्यां सत्यां स्वत एव मनो निश्चलं भवति ततो ऽवतारिकोक्ताभावपर्य्याय-

---

(१) इवाविष त्यकृत इति वीर० पाठः

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पूर्वोक्तानुवृत्तिः स्वत एव प्रवर्तत इत्यर्थः । स्वव्याख्यायां तु तत्कुत्वाऽन्याः श्रुतयः आहुः—वयमित्यत एव श्रीगुरुचरणाश्रयं प्रशंसामः सर्वगुरुत्वस्य त्वदुपदेष्टृगुरुत्व एव विश्रान्तेः तत्प्रभावं विना त्वज्ज्ञानासिद्धेश्च साध्यस्तु संसारध्वंसनिदानं केवलमनोनिरोधोऽपि न स्यात् युञ्जानानामभक्तानां प्राणायामादिभिर्मनः अक्षीणमासनं राजन्दृश्यते कञ्चिदुत्थितमिति न्यायेन त्वद्भक्त्यभावात्तदसिद्धेः यतो विजितेति हे अज ! जीवत्वजन्ममात्रेण सुकरं यत्प्रत्यक्षत्वं तद्वतीत्यर्थः ये तादृशस्य गुरोश्चरणं समवहाय ईषदप्यनाश्रित्य यतः स्वत एवातिलोलं तदनाश्रयेणादान्तं दमनाशक्यञ्च मन एव तुरगस्तं विजितहृषीकवायुभिः प्राणैरिन्द्रियैश्च विजितैः क्रियमाणैर्नियन्तुं प्रयतन्ते ते तु तद्विजयोपायेषु खिद्यमाना एव भवन्ति यतस्तत्प्रभावं विना व्यसनशतान्विता भवन्ति अतः साधनबाहुल्ये सत्यपि वणिजः सांयात्रिकाः अलब्धकर्णधारा इव संसारजलधावेव तिष्ठन्ति न तु तत्पारपरमानन्दद्वीपायमानं त्वां प्राप्नुवन्तीत्यर्थः श्रुतयस्तु तद्विज्ञानार्थमित्याद्या एव ॥ ३३ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आचार्यसेवाविरहितानामुक्तभगवद्भजनालाभमाह—विजितेति । हृषीकं बाह्यमिन्द्रियं यतन्ति यतन्ते येऽकृतकर्णधराः अलब्धकर्णधराः ॥ ३३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कुतस्तर्हि मयि भाव इत्यपेक्षायां मनोनिग्रहादेव वैराग्यात्मकात् स च गुरूपासनादेव न तूपायान्तरेभ्य इत्यभिप्रेत्याहुः—विजितेति । अतिचञ्चलमत एव विजितानि हृषीकाणीन्द्रियाणि वायवः प्राणाश्च यैस्तैरप्यदान्तं दुर्निग्रहं मन एव तुरगमश्वं ये पुरुषाः यन्तुं नियन्तुं गुरोश्चरणं विहाय उपायान्तरेषु क्लिश्यन्तो यतन्ते यत्नं कुर्वन्ति ते व्यसनशतान्विताः बहुव्यसनाकुलाः इह संसारसागरे मज्जन्ति सङ्गच्छन्ते संनिविशन्ते दुःखमेव प्राप्नुवन्तीत्यर्थः । हे अज अकृतकर्णधराः अलब्धकर्णधरा वणिजो यथा जलधौ मज्जन्ति तद्वत् ॥ ३३ ॥

---

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथाचार्यसेवारहितानामुक्तभगवद्भजनालाभमाह— अजित इति । गुरोश्चरणं अपहाय अनाश्रित्य तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् आचार्यवान् पुरुषो वेद इत्यादिश्रुत्युक्ताचार्यसमाश्रयणमकृत्वा गुरुशब्दार्थं उक्त आचार्यशब्दार्थस्तु—

> आचिनोति हि शास्त्रार्थानाचारे स्थापयत्यपि।
> स्वयमाचरते यस्मात्तस्मादाचार्य उच्यते ॥

इति अजितहृषीकवायुभिः न जितानि हृषीकाणीन्द्रियाणि वायुः प्राणश्च यैस्ते तैरदान्तं दुर्दमत्वसाम्यान्मन एव तुरगस्तमिह संसारे यन्तुं नियमयितुं यतन्ति यतन्ते कामयन्ते अतिलोलं चञ्चलं तदुक्तं गीतायां "चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्" इति हे अज ते व्यसनशतान्विताः गुरूपदिष्टबाह्येन्द्रियनियमनोपायभूतशमादिसम्पदभावादनेकव्यसनैराकुलाः तन्नियमने असमर्थाः केवलमुपायखिदः उत्तरोत्तरक्लेशभाजः सन्तः इह संसारे एव सन्ति तिष्ठन्ति के इव जलधौ अकृतकर्णधरा अलब्धकर्णधारा वणिजः कर्णधारं विना स्वयमेव समुद्रपारं न लभन्ते तथा आचार्यसमाश्रयणं विना संसारसमुद्रपाररूपं मोक्षं न लभन्त इत्यर्थः । तथाचोक्तं भगवता एकादशे—

> नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् ।
> मयानुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत्स आत्महा ॥

इति विजितहृषीकवायुभिरित्यपि पाठस्तत्र हृषीकैरिन्द्रियादिभिरित्यर्थः ॥ ३३ ॥

---

### योगिरामानुजाचार्यकृतसरलाव्याख्या ।

सेवा भगवति भावो मनसः निरोधेन भवति तन्निरोधश्च गुरूपसदनादेव भवति तद्विनातु सुदुष्कर एवेत्याहुः—विजितेति । हे अज ! जन्मादिरहित हे भगवन् ! विजित हृषीकवायुभिः विजितानि वशीकृतानि हृषीकाणि इन्द्रियाणि वायुः प्राणश्च यैस्ते योगिभिरपि अदान्तमनस्तुरगम् अदान्तमदमितं वशीकर्तुमशक्यमित्यर्थः । मनस्तुरगं मन एव तुरगं दुर्दमत्वसाम्यात् अदान्तत्वे हेतुमाहुः अतिलोलमिति अतिचञ्चलं गुरोश्चरणमवहायाचार्यचरणाननाश्रित्य ये जनाः तं यन्तुं वशीकर्तुं यतन्ति प्रयतन्ते ते जनाः उपायखिदः उपायेषु खिद्यन्ते क्लिश्यन्तीति उपायखिदः तथा व्यसनशतान्विताः दुःखशतेन युक्ताः सन्तः तिष्ठन्ति संसारदुःखे निमग्ना भवन्तीत्यर्थः । तत्र दृष्टान्तमाहुः अकृतकर्णधराः अस्वीकृतनाविकाः वणिजो यथा जलधौ निमग्ना भवन्ति तथेति सद्गुरूपदर्शितभगवद्भजनसुखानुभवे सत एव मनो निश्चलं भवति नान्यथेति भावः । अत्रैव श्रीछान्दोग्ये— देवविद्याविदितासाविष्टं प्राप आचार्यवान् पुरुषो वेद नैषा तर्केण मतिरपनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ इत्याद्याः श्रुतयः अनुसन्धेयाः हे अज ! अतिलोलम् अत एव विजितहृषीकवायुभिरप्यदान्तमनस्तुरगं ये गुरोश्चरणं विहाय यन्तुं यतन्ति । ते उपायखिदः व्यसनशतान्विताः सन्तः इह जलधौ अकृतकर्णधराः वणिज इव सन्ति इत्यन्वयः ॥ ३३ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इह भवार्णवेषु सुजातभुवो जितहृषीकवायुभिरदान्तमनस्तुरगैः । य इह यन्तुमतिलोलमुपायविदो व्यसनशतान्विताः अपहाय गुरोश्चरणम् ॥ २० – ३४ ॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन इति श्रुतेः —

> देवा अपि सुयोगाद्या यतन्ते सर्वसाधनैः ।
> पुत्रदारादिभिः सार्धं मोक्षसन्तानसन्ततौ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

गुरोरनुग्रहादृते साधनं न हरेः प्रियम् ।
गुरूपदेशात्तु हरिं प्राप्नोत्येव न संशयः ॥

इति स्मृत्यनुगृहीतायाः श्रुतेः अभिप्रायगर्भस्य इह भवचरणेत्यादिश्लोकद्वयस्य अयमभिसन्धिः हेऽजित भक्तभक्त्या वशीकृत —

जयो विष्णोश्च वायोश्च भक्त्या तत्प्रीतिसाधनम् ।
अनयोरीशयोः कुतोऽन्येषां सर्वथा सर्वबलाश्रय ॥

इति वचनात् भक्तिलक्षणसाधनसामग्र्या विष्णोः प्रसादो जयो नाम हे हरे य इह संसारे व्यसनशताब्धितारं गुरोश्चरणमपहाय हृषीकवायुभिरुद्दामतुरगैः कर्मणि यतन्तीत्यन्वयः व्यसनानां शतमब्धिर्व्यसनशताब्धिः तं तारयतीति यः तं वर्णधर्मकुलीनत्वविद्यादिलक्षणोपेतस्य गुरोश्चरणमिति सेवैव लक्ष्यते तां सेवां त्यक्त्वा उद्दामः सारथिः रथोपरि अकर्णधारः सारथिर्मतः" इतिवचनात् वायुरेवोद्दामो येषां ते तथा पृथक्पदत्वं छान्दसं हृषीकाण्येव महान्तस्तुरगाः महातुरगाः महादेशाभावश्छान्दसः ॥ ३४ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तमुक्त्वाऽन्याः श्रुतय आहुः—वयमित एव श्रीगुरुचरणाश्रयं प्रशंसामः सर्वगुरुत्वस्य त्वदुपदेष्टृगुरुत्व एव विश्रान्तेः तत्प्रभावं विनाप्रभावासिद्धेश्च । साध्यस्तु संसारध्वंसनिदानं केवलमनोनिरोधोऽपि न स्यात् । युञ्जानानामभक्तानां प्राणायामादिभिर्मनः । अक्षीणवासनं राजन् दृश्यते कचिदुत्थितम् इति न्यायेन स्वतन्त्रत्वमभावात्तदसिद्धेः यतो विजितेति ॥ ३३ ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

तच्च त्वयि भावो विना गुरूपसत्तिं न परिणामसुरसः स्यादित्याहुः—विजितहृषीकेत्यादि । गुरोस्त्वत्कथोपदेशकस्य चरणं समवहाय स्वतन्त्रकं गुरुमकृत्वा स्वयमेव यथा श्रुतं विजितैर्हृषीकैः वायुभिः प्राणैश्च ये अदान्तं मनस्तुरगम् अतिलोलं यन्तुं नियन्तुं यतन्ते व्यसनशतान्विताः सन्त उपायखिदः सन्ति इह संसारे क इव अकृतकर्णधारा इव कुत्र जलधौ सुगमम् ॥ ३३ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं भजनमुपपाद्य योगादिना भजनं न कार्यसाधकं योगस्य दोषत्वादिति स्वतन्त्रमेव भक्तिमार्गानुसारेण भजनं कर्तव्यमित्यभिप्रायेण योगपक्षं निन्दन्ति—विजितहृषीकवायुभिरिति पूर्वश्लोके गुरुद्वारा भजनं निरूपितं तदेव फलपर्यवसायि योगस्तु सर्वथा न कस्यापि सेत्स्यति स्वतः प्रवृत्तस्य मनसः प्रतिबन्धकत्वात् मनो ह्यसत् भगवता [illegible]कृतिः श्रीभगवत्प्रसादयुक्तस्यैव किं योगेन साधनेनैव कृतार्थत्वात् अतो लौकिका इव योगिनोऽपि संसार एव परिभ्रमन्ति न कृतार्था भवन्तीति निरूप्यते ननु योगमार्गः कथं कृत इति चेदुच्यते—

"अणिमादिसुखार्था ये ये चात्यन्तबहिर्मुखाः ।
क्लेशकार्यरता ये च तदर्थं योग उच्यते ॥
परम्परासाधनं वा फलार्थं वा निरूपितः ।
योगः साक्षान्न मोक्षाय निषेधाभ्याससूत्रतः ॥
एतेन योगः प्रत्युक्तः प्रशंसार्था फलश्रुतिः ।
अतः स्वतन्त्रयोगस्य निषेधायेदमुच्यते ॥

विशेषेण जितानि हृषीकाणीन्द्रियाणि वायुश्च यैः अनेन प्रत्याहारपर्यन्तं सिध्यतीति निरूपितम् अन्यथा योगाङ्गेषु प्राथमिकेषु सिध्यमानेषु प्रवर्तमानस्य शङ्का स्यात् अतो बोध्यते पञ्चाङ्गान्येव सेत्स्यन्तीति नाधिकानीति बोधयति मनसो निग्रहाशक्यत्वे हेतुमाह—अदान्तेति । स्वभावत एव अदान्तं प्रतिनियतेन्द्रियपक्षे येषां मनः स्वभावतो दान्तं सात्त्विकप्रकृतिः तेषां योगः सिद्ध्येदपीति ज्ञापितं येषां त्वदान्तमेव मनः तदपि तुरगरूपं तस्मिन्नारूढो जीवो भवति मनोविलासाकाङ्क्षी तस्य स्वभावस्य एव निग्रह इति ज्ञापितं स्वयं च इह लोकानुसारेणैव स्थिताः यन्तुं वाञ्छन्ति ननु तुरगोऽपि कथं विजेष्यते तद्वन्मनोनियमनमपि भविष्यतीति । चेत्तत्राह—अतिलोलमिति । प्रयत्नेन गृहीतुमेवाशक्यं ननूक्तं यतो यतो निश्चरति मनश्चञ्चलमस्थिरमिति चञ्चलस्यापि निग्रहे साधनमुक्तमिति चेत्तत्राह—उपायखिद इति उपाय एव खेदं प्राप्नुवन्ति योगशास्त्रे ततः पूर्वं पञ्चाङ्गानि निरूपितानि तान्येव मनसोऽतिचाञ्चल्यं साधयितुमशक्यानि न हि विक्षिप्ते मनस्यासनं सिध्यति यमादिकं वा अतः सर्वथाऽदान्ते योगारम्भ एव न कर्तव्यः किञ्च महता कालेन यमादिसाधनानुष्ठानेन चित्तशुद्धौ सत्यां कदाचित्साधनान्तरं सिध्येदपि तदपि नास्तीत्याह—व्यसनशतान्विता इति । उत्पन्नस्य प्राणिनो विक्षिप्तमनसः प्रतिक्षणमनेकानि व्यसनानि भवन्ति ननु प्रथमं व्यसननिराकरणाय साधनान्तरं कर्तव्यमिति चेत्तत्राह—समवहाय गुरोश्चरणमिति आदौ व्यसनापगमे गुरुरेवैकं साधनं एतत्सर्वं गुरौ भक्त्येति वाक्यात् सम्यक् त्यागः साधनत्वेनापि गुरुसेवायां तु तेनैव कृतार्थत्वात् यागो व्यर्थ इति भावः । ततस्तेषामुभयभ्रंशमाह—वणिज इवाजसन्तीति सांयात्रिकाः कर्णधारमप्यकृत्वा जलधावेव क्लिश्यमाना भवन्ति न तु कार्यपर्यवसितं गृहमागच्छन्ति जलधिरत्रापि महान् क्लेशः सूचितः तथा योगे शरीरशोधनं कृत्वा स्थितः महान्तं क्लेशमेव प्राप्नोतीत्यर्थः ॥

अदान्ते मनसि ज्ञाते योगार्थं न यतेद्बुधः ।
गुरुसेवापरो भूत्वा भक्तिमेव समाश्रयेत् ॥ ३३ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु च तैरपि भक्तजनैः मनोनिश्चलीकरणार्थमष्टाङ्गयोगः कर्तव्य एव नैवं तेषां श्रीगुरुचरणदृढभक्त्यैव मनोनैश्चल्यमनायासेनैव भवेत् यदुक्तं एतत्सर्वं गुरौ भक्त्या पुरुषो

स्वजनसुतात्मदारधनधामधरासुरथैस्त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे ।
इति सदजानतां मिथुनतो रतये चरतां सुखयति कोन्विह स्वविहते स्वनिरस्तभगे ॥ ३४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अञ्जसा जयेदिति गुरुभक्तिं विना तु मनोजयार्थका अपि योगा अकिञ्चित्करा एवेत्याहुः विजितैरपि हृषीकैरिन्द्रियैर्वायुभिः प्राणैः अदान्तः अप्राप्तदमनः मन एव तुरगस्तं यन्तुं नियन्तुं ये यतन्ति प्रयतन्ते ते गुरोश्चरणं चरणपरिचरणं समवहाय विहाय उपायखिदः अन्येषूपायेषु खिद्यमानाः सन्तः व्यसनशतान्विता बहुविपद्व्याकुला इह संसारसिन्धौ सन्ति तिष्ठन्ति हे अज अकृतकर्णधरा अस्वीकृतनाविकाः वणिज इव अत्र श्रुतयः तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं आचार्य्यवान् पुरुषो वेद" इति यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ तस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मनः" इत्याद्याः ॥ ३३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पूर्वोक्तो भगवति भावो गुर्वनुग्रहमृते न सम्भवति तदर्थं गुरूपसदनं विदधाति तद्विज्ञानार्थं सगुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् आचार्य्यवान् पुरुषो वेद नैषामतिस्तर्केणापनेया प्रोक्ता ऽन्येनैव सुज्ञानायप्रेष्ठा आचार्य्यदेवो भव तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय येनाक्षरं परमं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्यां यस्य देवे पराभक्तिर्यथादेवे तथागुरौ तस्यैते कथिताह्यर्थाः प्रकाशन्ते महात्मनः इत्याद्याः श्रुतयः विजितानि नियमितानि हृषीकाणि इन्द्रियाणि वायुश्च प्राणो यैस्तेप्यदान्तमनस्तुरगम् अवश्यं मनोरूपमश्वं निरतिशयचाञ्चल्ये उपमानं नियन्तुं यतन्ति वशीकर्तुं यत्नपरायणा भवन्ति गुरोश्चरणं समवहाय अनाश्रित्य असाधारणं साधनं विहाय साधारणसाधनपरा इत्यर्थः । कीदृशं मनः अतिलोलं अत्यन्तचञ्चलं ते उपायखिदः उपायेषु श्रान्ताः सन्तो व्यसनानां शतैर्व्याता इह जन्मादिदुःखात्मके संसारे सन्ति वर्तन्ते नित्यसंसारिणो भवन्ति हे अज ! अकृतकर्णधरा अस्वीकृतनाविका वणिज इवेति मज्जने दृष्टान्तः ॥ ३३ ॥

भाषा टीका ।

प्राण इन्द्रियन के जीतने वारे योगि जनो से जिसका दमन नहि होसकता एतादृश अतिचञ्चल मनरूपी तुरङ्ग के नियमन करने को जो गुरून के चरण को छोडकर अन्य साधनो में क्लेश करते हुए यत्न करते हैं हे अज वे अनेक दुःखों से व्याकुल होकर संसार में हि डूबते हैं जैसे नाव के खेवट मलाह को छोड कर समुद्र के तिरने को यत्न करने वारे समुद्र में डूब जाते हैं तैसे हिं उपरोक्त प्राणी भी संसार समुद्र में डूब जाते हैं ॥ ३३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

'परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन' तथा 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः अथमर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' इत्याद्या वैराग्यमङ्गं विदधतीत्याह—स्वजनसुतेति । आत्मा देहः धाम गृहम् असुः प्राणः स्वजनादिभिः किम् 'सर्वरसे सर्वे रसाः सुखानि विद्यन्ते यस्मिंस्तस्मिंस्त्वयि परमानन्दे एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः । श्रयतस्त्वां सेवमानस्य पुंस आत्मनि सति नृणां तुच्छैरेतैः किं क उपयोग इति सत् सत्यं परमार्थसुखमजानतामत एव मिथुनतः स्त्रिया मिथुनीभूय रतये मायासुखाय चरतां प्रवर्तमानानाम् कर्मणि षष्ठ्यौ अजानतश्चरतः पुरुषान् कोन्वर्थः सुखयत्यानन्दयति न कोपीत्यर्थः । इह संसारे कथम्भूते स्वविहते स्वत एव नश्वरे स्वनिरस्तभगे स्वत एव गतसारे पाठान्तरे तु कोन्विस्त्यस्यैतद्विशेषणद्वयम् अतस्त्वद्भजनमेवोचितमित्यर्थः ॥ ३४ ॥

भजतो हि भवान् साक्षात्परमानन्दचिद्घनः ।
आत्मैव किमतः कृत्यं तुच्छदारसुतादिभिः ॥ २१ ॥

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

लोकान् भोगान् परीत्यानित्यतया ज्ञात्वा परीक्ष्येति पाठेपि स एवार्थः निर्वेदं वैराग्यम् अकृतो नित्यो मोक्षः कृतेन कर्मणा न स्यात् अस्य विदुषः प्रमुच्यन्ते नश्यन्ति अथ तदा मर्त्योऽमृतो मुक्तो भवति अत्रैव जन्मनि ब्रह्म प्राप्नोति अत ब्रह्मैव भवति एव परमार्थसुखाज्ञानादेव स्वविहतः स्वनिरस्तभग इति पाठान्तरम् अतः यतो विषयसेवनेन किमपि सुखमतः ॥ ३४ ॥

श्रीकविचूडामणिचक्रवर्त्तिकृताऽन्वयबोधिनी ॥

भक्तेर्वैराग्यमङ्गं विदधतीत्याह—स्वजनेति । इह संसारे त्वयि सति स्वजनसुतादिभिः एतैस्तुच्छैर्नृणां किं कः उपयोगः कथम्भूते त्वयि सर्वरसे सर्वे रसाः सुखानि विद्यन्ते यस्मिन् परमानन्दे पुनश्च श्रयत आत्मनि श्रयतस्त्वां सेवमानस्य पुंसः आत्मनि आत्मरूपे एवम्भूते त्वयि स्थिते स्वजनादिभिः किं इति सत् सत्यमजानतां अत एव मिथुनतो रतये चरतां नृणां को नु अर्थः सुखयति न कोपि स्त्रिया मिथुनीभूय रतये मायासुखाय चरतां प्रवर्त्तमानानामित्यर्थः कर्मणि षष्ठी इह कथम्भूते स्वविहिते स्वत एव गतसारे अतस्त्वद्भजनमेवोचितमिति स्वजनेति आत्मा देहः धाम गृहं असुः प्राणः इति स्वयं स्वविहतः स्वनिरस्तभगः इति पाठे को नु इत्यस्य विशेषणं वैराग्यप्रतिपादनत्वे श्रुतिः " परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो

श्रीकविचूडामणिचक्रवर्तिकृताऽन्वयबोधिनी ।

निवेदनाभावात् नास्त्यकृतः कृतेन" पूर्वलिखितायाः श्रुतेः पूर्वाङ्गमिदं ज्ञेयं तथा "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिता अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति अर्थः अस्य विदुषो ज्ञानात्प्राक् ये कामाः वासनारूपेण हृदि मनसि श्रिताः ते सर्वे यदा प्रमुच्यन्ते अथानन्तरं मर्त्यः अमृतो भवति, तत्र अत्रैव दीपनिर्वाणवत्सर्वबन्धनोपशमात् ब्रह्म समश्नुते ब्रह्मैव भवतीति कामास्तु मनस्येव श्रिता नत्वात्मनि तथा च श्रुतिः कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवेति त्वयि सर्वरसे परमानन्दे इत्यत्र पूर्णा श्रुतिर्लिख्यते "स यो मनुष्याणां राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः सम्पन्नतमः स मनुष्याणां परम आनन्दो ये शतं मनुष्याणामानन्दाः स एकः पितृलोक आनन्दोऽथ ये शतं पितॄणां जितलोकानामानन्दाः स एको गन्धर्वलोक आनन्दोऽथ ये शतं गन्धर्वलोकानामानन्दाः स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसम्पद्यन्तेऽथ ये शतं कर्मदेवानामानन्दाः स एकः आजानदेवानामानन्दोऽथ ये शतमाजानदेवानामानन्दाः स एकः प्रजापतिलोक आनन्दोऽथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मण आनन्दोऽथैष एव परम आनन्दो यो ह्यस्य परमानन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति अर्थस्तु सुगमः अथ स्वामिना—

> भजतो हि भवान्साक्षात्परमानन्दचिद्घनः ।
> आत्मैव किमतः कृत्यं तुच्छदारसुतादिभिः ॥

परमानन्दचिद्घनो भवानिह यस्माद्भजतो जनस्य साक्षादात्मैव भवति अतः तुच्छदारादिभिः किं कृत्यं भवति ॥ ३४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अत एव वयमन्यासक्तिं निन्दाम इत्यपरा आहुः—भजतेति । भजतो भजत आत्मनि सर्वेषां परमस्वरूपत्वेनावगतत्वान्निरुपाधिपरमप्रेष्ठत्वेन स्फुरतीत्यर्थः । न केवलं सामान्यतस्तादृशी स्फूर्तिः, किन्तु विशेषतः सर्वे परमप्रेममया रसाः शान्तादयो यस्मात् तस्मिन् मिथुनत इति ल्यब्लोपे पञ्चमी मिथुनीभूयेत्यर्थः । अन्यत्रैः श्रुतयस्तु अमृतत्वस्य तु नाशाऽस्ति वित्तेनेत्यारभ्य न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवतीत्युपक्रम्य न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेदं ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद क्षेत्रं तं परादित्याद्याः तदेवं साधारणात्मनो निरुपाधिप्रियत्वेन परमात्मैव परमनिरुपाधिप्रिय इति स एव द्रष्टव्य इति श्रुतिवाक्यार्थः सर्वविज्ञानस्य प्रतिज्ञायमानत्वात् कृष्णमेनमवेहि त्वमात्मानमखिलात्मनामिति श्रीशुकोक्तेश्च ॥ ३४ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भगवत्प्रवणानां सुखान्तरनैरपेक्ष्यं भगवदभिमुखानां सुखदुर्लभत्वञ्चाह—भजतेति । धाम गृहं धरा भूमिः सर्वरसे सर्वविधसुखमये तदज्ञाननाम अर्थनस्वमजानतां अपिहिते प्रकृतिसम्बन्धेन तिरोहिते अत एव निरस्तभगे ज्ञानैश्वर्यादिहीने स्वरूपे सति इह संसारेऽस्वरूपे मतिः कः सुखयतीत्यन्वयः । क्वचित् स्वपिहिते इति पाठे सर्वात्मा चिदानन्दरूपः तर्हि विपर्यासवपि किं तथा न प्रतीयते तत्राह—स्वापिहिते अज्ञानेनावृते अत एवं सुनिरस्तभगे सुष्ठु निरस्तो भगो आनन्दस्वरूपो यस्य तस्मिन् अतस्त्वद्भजनमेवोचितमित्यर्थः ॥ ३४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु, मयि भृशं भावं विदधतु ततः किमित्यपेक्षायां निरतिशयानन्दजलधिमग्नानां । वैषयिकसुखान्तरनैरपेक्ष्यमितरेषान्तु सुखं विषमिश्रपयःपानतुल्यमित्यभिप्रेत्याहुः—भजतेति । सर्वरसे सर्वविधसुखमये आत्मनि च त्वयि "रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्" इत्युक्तरीत्या निरतिशयसुखस्वरूपे तदाश्रये च प्रियतमे त्वयि सति विद्यमाने नृणां भजतः नृणां मध्ये कश्चिदुक्तविधं त्वां भजतः पुंसः स्वजनादिभिः किं न किञ्चिदपि सुखं इत्यर्थः आत्मा देहः धाम गृहं धरा भूमिः असुः प्राणः रथशब्दो वाहनोपलक्षकः इतीत्थं सन् निरतिशयपुरुषार्थभूतत्वत्स्वरूपमजानताम् अत एव रतये रतिसुखार्थं मिथुनतश्चरतां मिथुनीभूय वर्तमानानां स्वपिहिते स्वप्रकृतिसम्बन्धेन पिहिते ऽत एव स्वनिरस्तभगे स्वयमात्मना निरस्तो भगः ज्ञानैश्वर्यादिः यस्य तस्मिन् स्वरूपे सतीह लोके कोऽन्यु अर्थकामेषु सुखयति अर्थकामान्यतरो न कोऽपि सुखयतीत्यर्थः । स्वविहितनिरस्तभगे इति पाठान्तरं तदा स्वविहितिः स्वयाथात्म्यानुभवविधानस्तेन स्वनिरस्तज्ञानाविकज्ञानभगवत्स्वस्वरूपं सतीत्यर्थः ॥ ३४ ॥

---

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथ भगवत्प्रवणानां सुखान्तरनैरपेक्ष्यं भगवदभिमुखानां सुखदुर्लभत्वमाह—भजतेति । आत्मा देहः धाम गृहं धरा भूमिः असुः प्राणः हे भगवन् ! आत्मनि सर्वरसे सर्वविधसुखमये आनन्दकन्दे भजतः पुरुषस्य स्वव्यात्मभूते सति स्वजनादिभिः किं प्रयोजनं न किमपीत्यर्थः । नृणामिति द्वितीयार्थे षष्ठी नृन् कोऽर्थः सुखयति न कोपीत्यर्थः । कथम्भूतानां नृणां निजात्मैव सुखरूप इत्येवमजानतां तत्त्वज्ञानमजानतामित्यर्थः । अत एव मिथुनतो योषिता मिथुनीभूय रतये चरतां दुःखात्मके विषयसुखे वर्तमानानां तापत्रयदग्धदेहानां अन्ते कालाजगरामलिनोत्तमाक्रान्ताम आधिव्याधिकुटकोटिमहाव्रजविचित्राक्रान्तां विषयपाशशतैरबध्यमकरकेतनेततस्ततो विकृष्यमाणानां कोऽपीति तु वितर्के इह संसारे नरकरूपे कोऽर्थः

### श्रीनिवाससूरिकृततत्त्वदीपिका।

सुखयति अत्राप्यजानतां चरतामिति द्वितीयार्थे षष्ठ्यौ अजानतश्चरतो नॄन् कः सुखयतीति तथा भगवद्वाक्य-मेकादशे—

मय्यर्पितात्मनः सभ्यनिरपेक्षस्य सर्वतः।
मयात्मना सुखं यत्तत्कुतः स्याद्विषयात्मनाम् ॥

इति कीदृशे संसारे स्वविहते स्वत एव नश्वरे स्वनिहते इति पाठेतु नन्वात्मा चिदानन्दरूपस्तर्हि विषयासक्तोपि किं तथा न प्रतीयते तत्राह स्वपिहिते अज्ञानेनावृते तदुक्तं भगवता अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव इति अत एव सुनिरस्तभगे सुष्ठु अतिशयेन निरस्तो भग आत्मनो ज्ञानानन्दैश्वर्यो यस्मिन् तथाभूते अतस्त्वद्भजनमेव निरूपाधिक-सुखकरं अतस्तदेवम् कर्तुमुचितमित्यर्थः ॥ ३४ ॥

---

### योगिरामानुजाचार्यकृतसरलाव्याख्या।

भगवत्समाश्रितस्य संसारस्य तुच्छत्वेनानुपादेयत्वमाहुः स्वजनेति। सर्वरसे सर्वे रसाः विद्यन्ते यस्मिन् सः परमानन्दरूपे नृणामात्मनि सर्वेषामन्तरात्मभूते त्वयि परमात्मनि विद्यमाने सति भजतः एवंभूतं त्वां सेवमानस्य पुंसः स्वजनसुतात्मदारधनधामधरासुरथैः स्वजनाः बन्धुमित्रादयः सुताः आत्मा देहः दाराः कलत्राणि धनं धाम गृहं धरा भूमिः असुः प्राणः रथः यानाद्युपलक्षणम् एतैः किं तुच्छैः किं प्रयोजनं इति इत्थं सत्त्वजानतां निरतिशयपुरुषार्थरूपं त्वत्स्वरूपमजानतां अत एव मिथुनतः स्त्रिया मिथुनीभूय रतये सुखाय चरतां गृहेषु वर्तमानानां इति कर्मणि षष्ठ्यौ वर्तमानान् इह संसारे स्वविहतः स्वत एव नश्वरः स्वनिरस्तभगः स्वत एव निरस्तः गतः भगः ज्ञानैश्वर्यादिर्यस्य सः एवंभूतः कोनु स्वजनादिः को वा सुखयति न कोपीत्यर्थः। स्वविहते स्वनिरस्तभगे इति सप्तम्यन्तपाठेतु एतद्द्वयं इहेत्यस्य संसारस्य विशेषणं सर्वरसे नृणामात्मनि त्वयि सति भजतः स्वजनसुतात्मदारधनधामधरासुरथैः किं इति सदजानतां मिथुनतो रतये चरतां इह स्वविहतः स्वनिरस्तभगः कोनु सुखयतीत्यन्वयः ॥ ३४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

मू० ॥ वणिज इवोच्छ्लसत्यकृतकर्णधरा जलधौ स्वजनसुतात्मदारधनधामधराः। सुखशान्तिमति त्वयि हि सन्ति न तानि नृणां विभव उद्यति भवत आत्मनि सर्वरसे ॥ ३५ ॥

तैस्त उच्छ्लसन्ति निःश्वसन्तीत्यन्वयः अत्र दृष्टान्तः जलधावकृतकर्णधराः अकृतकर्णधरः कर्णधारो यस्ते तथा वणिजः सांयात्रिका इवेत्यर्थः यतमानाः कीदृशाः स्वजनसुतात्मदारधनधामधराः स्वजनसुताद्याभरणोपेताः आत्मा देहः धाम गृहं जितहृषीक इत्येकं वा पदम् उक्तमेव विवरणं ये च देवकलाः पुरुषाः भवचरणेषु भवद्विषयसु कर्मसु सुज्ञानभुजः सुष्ठु ज्ञातवन्तः उत्तमयोग्यतायुक्ताः हृषीकलक्षणवायुसारथियुक्ततुरगैरसितकोणं बुद्धिचाञ्चल्यं विना निष्कामत्वे वर्तन्ति ते स्वजनादियुक्ता उच्छ्लसन्ति उत्कृष्टं श्वसन्ति प्राणन्ति जीवन्तीत्यर्थः। श्वसप्राणने इतिधातुः किं कृत्वा गुर्वाश्रयणमपहाय हानं त्यागमपाकृत्य गुरुचरणनिषेवां कृत्वेत्यर्थः। नास्त्यकृतः कृतेनेति भक्तकृतो भगवानेव कर्णधारो येषां ते तथा दैवानुकूलकर्णधारा इत्यर्थः। ते अपायविदः सुयोगज्ञाः किन्तु नृणां यानि विहितानि साधनानि सुखशान्तिमति त्वयि सुखस्यापि सुखे सुखदे दुःखविरहितसुखमित्यर्थः। तस्यान्तिमति पूर्तिमति पूर्णसुखे इत्यर्थः यस्मिंस्त्वयि न सन्ति हि गुर्वभावात् तस्माद्विभवे विगत संसारे देहाभिमानरहिते अविमुक्ते गुरावुद्यति उपदिशति साधनज्ञानमुपदिशति सति सर्वरसे सर्वसारसारभूते आत्मनि परमात्मनि भवत एव तत्साधनत्वेन तत्प्रीतिजनकत्वेन श्रीहरिं विषयीकरोतीत्यर्थः—

"वर्णवत्सकुलो यस्तु तालास्योदशतालकः।
दशमादेशकः सत्पदो हस्तचतुष्टयः ॥
कमलत्रयाङ्कुलश्चैव वाग्मी सन्देहवर्जितः।
वासुदेवैकशरणो गुरुरित्युच्यते बुधैः ॥
गुरुलक्षणसम्पूर्णः मात्रादिकश्चतुर्मुखः।
ततःशेषेन्द्रवहुपाद्याः क्रमादेव प्रकीर्तिताः ॥

इत्यादिवाक्यमत्र प्रमाणम्—

देवा योग्यतया ज्ञाता विष्णुनात्मसुखाभयाः।
तथापि साधनैस्तेषां तत्प्राप्तिर्गुर्वनुग्रहात् ॥

इतिच ॥ ३५ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

अत एव वयमप्यभ्यासक्तिं निन्दाम इत्यपरा आहुः स्वजनेति ॥ ३४ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

गुरूपदेशो हि संसारे वैराग्यं जनयित्वा त्वयि भावमुत्पादयतीत्याहु—स्वजनसुतेत्यादि। भजतः सेवमानस्य जनस्य आत्मनि परमसुहृदि सर्वरसे सर्वसुखस्वरूपे त्वयि सति नृणां स्वजनादिभिः किं न किमपीत्यर्थः। त्वयि सति नित्य इति वा स्वजनादयस्तु अनित्याः इति हि सत्यमेव तदेतदजानताम् एतत्सत्यत्वेनाज्ञात्वा मिथुनतो मिथुनीभूय रतये चरतां इह लोके कोनु सुखयति सुखं करोति न कोपीत्यर्थः। येतु सत्यमिति ज्ञात्वा त्वां भजन्ते तान् सर्वे सुखयन्तीत्यर्थः इह किंभूते स्वविहते स्वेनैव विहते स्वेनैव निरस्तभगे सप्तम्यन्तपाठे क इत्यस्य विशेषणम् ॥ ३४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं भजने प्रकारान्तरं निराकृत्य वैराग्यमोहापगमाय भावे भक्तिर्न सेत्स्यतीति वैराग्यमुपदिशन्त्य आहुः—स्वजनसुतात्मेति। स्वजनानां प्रयोजनमावश्यकं तदर्थं स्वजनानामपेक्षा

**भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदास्त उत भवत्पदाम्बुजहृदोऽघभिदङ्घ्रिजलाः ।**
**दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरावसथान् ॥ ३५ ॥**

### भाषा टीका ।

सर्व प्रकार निरवधिक आनन्द स्वरूप सब के अन्तरात्मा आप के विद्यमान रहने पर मनुष्यों के मध्य जो कोई आप का भजन करने वारा मनुष्य है उसको अपने कुटुम्बी पुत्र देह स्त्री धन गृह भूमि प्राण रथ आदि वाहन इत्यादि संसार के पदार्थों से कुछ भी सुख नहि होता इस प्रकार निरवधिक परमानन्द स्वरूप अन्य को नहि जानते हैं इसी सें स्त्री सुख के अर्थ स्त्री पुरुष रूप मिथुन होकर वर्तमान संसारि जीवों को अपने यथावत् अनुभव के विघात होने से आत्मा के स्वाभाविक ऐश्वर्य का निरास होने पर असत् आप आत्मा के विद्यमान रहने पर भी संसार के पदार्थों के मध्य में कोई भी पदार्थ सुखी नहि कर-सकता ॥ ३४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं गुरूपदेशेन तत्त्वमवगम्य सारासारविवेकेन च सर्वतो निर्विद्य तदेव महत्सङ्गेनोपपत्तिभिः सम्यगवधारयितुं तीर्थसदनानि मुनयः पर्यटन्तीति श्रोतव्यो मन्तव्य इत्यादि श्रुत्यर्थमाह—भुवि पुरुपुण्यतीर्थसदनानीति । ते उक्तलक्षणा ऋषयो विमदा निरहङ्कारा यतो भवत्पदाम्बुजहृदः भवतः पदाम्बुजं हृदि येषां तेऽतः अयमेवाघभिदङ्घ्रिजलं येषां ते उत अपि तथाविधा अपि पुरूणि बहूनि पुण्यानि तीर्थानि सदनानि च क्षेत्राणि तान्येवोपासते सेवन्ते प्रायस्तत्रैव महत्सङ्गो भवतीति अथवा पुरु अधिकं भगवत्सङ्गमलक्षणं पुण्यं येषां तानि च तानि तीर्थानि च गुरवो महान्त इत्यर्थः । तेषां सदनान्याश्रमान् यथाहामरसिंहः "निपानागमयोस्तीर्थमृषिजुष्टे जले गुरौ" इति न पुनः पुरुषसारहरावसथानुपासते पुरुषाणां सारं विवेकस्थैर्यधैर्यश्च शान्तिप्रमुखं हरन्तीति तथा ते च ते आवसथा गृहास्तान् न च तेषां गृहादिभवकुत्सितसुखापेक्षेत्याह दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे इति । सकृदपि त्वयि ये मनो दधतीति तेऽपि गृहाद्यासक्ता न भवन्ति किम्पुनरेवम्भूता इत्यर्थः ॥ ३५ ॥

मुक्तसङ्गतद्भक्तसङ्गमभिप्रायं स्वामेव सूचितयन्—

सन्तः सन्ति यतो यतो गतमदास्तानाश्रमानावसन् ।
नित्यं तन्मुखपङ्कजाद्विगलितत्वत्पुण्यगाथामृत-
स्रोतःसंप्लवसंप्लुतो नरहरे न स्यामहं देहभृत् ॥ ४२ ॥

---

### श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

तीर्थानि नद्यादीनि सदनानि वृन्दावनादीनि क्षेत्राणि तत्रैव तीर्थसदनेष्वेव पूर्वार्धे प्रकृतमहत्सङ्गस्योपायत्वोपलब्धिर्मत्त्वमित्ययातोऽयमेव तेषां महत्सङ्गवतामेवम्भूताः विमदत्वादिविशेषणविशिष्टाः अङ्गं शरीरं तदङ्गानि सुतकलत्रादीनि तेषु सङ्गमासक्तिं मुञ्चन्तीति विमदशब्दस्याभिप्रायः यतो यत इत्यादि पुण्यतीर्थसदनानीत्यस्याभिप्रायः निर्यत्तन्मुखेत्यादिकमुपासत इत्यस्य शिष्टं फलोपदेशपरमित्यनुसन्धेयम् ॥ ३५ ॥

---

### श्रीकविचूडामणिचक्रवर्तिकृताऽन्वयबोधिनी ।

एवं गुरूपदेशेन तत्त्वमवगम्य सारासारविवेकेन सर्वतो निर्विद्य तदेव महत्सङ्गेनोपपत्तिभिः सम्यगवधारयितुं तीर्थसदनानि मुनयः पर्यटन्तीत्याहुः भुवीति । ये मुनयः पुरुपुण्यतीर्थसदनानि भुवि उपासते सेवन्ते ते न पुनः पुरुषसारहरावसथान् उपासते पुरुषाणां सारं विवेकधैर्यशान्तिप्रमुखं हरन्तीति तथा ते च आवसथा गृहास्तान् पुरूणि बहूनि तीर्थानि सदनानि क्षेत्राणि तानि यद्वा तीर्थानि गुरवो महान्तस्तेषां सदनानि आश्रमान् "निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ" इत्यमरः तीर्थपदेन गुरुरुच्यते कथम्भूता ऋषयः विमदा निरहङ्काराः यतो भवत्पदाम्बुजहृदः भवत्पदाम्बुजं हृदि येषां ते अतः स्वयमेव अघभिदङ्घ्रिजलाः अघभित् अङ्घ्रिजलं येषां ते उत अपि तथाविधा अपि तीर्थानि उपासते न च तेषां गृहादिभवकुत्सितसुखापेक्षास्तीत्याह दधतीति नित्यसुखे आत्मनि त्वयि सकृदपि मनो ये दधति तेपि पुरुषसारहरावसथान् उपासते किमुत मुनयः इति यदर्थमनना ये मुनयः पर्यटन्ति तथाह श्रुतिः "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः" इत्यादि तथा "तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ श्रुतं श्रोतृ अमतं मन्तृ अविज्ञातं विज्ञातृ नान्यदस्ति" इत्यादि अर्थः हे गार्गि तदेतदक्षरं ब्रह्म अन्यैरदृष्टं स्वयं सर्वेषां द्रष्टृ तथा अश्रुतं श्रोतृ अमतं अमतिविषयं स्वयं मन्तृ अविज्ञातं स्वयं विज्ञातृ अतोऽन्यत् किञ्चदपि वस्तु द्रष्टृश्रोत्रादि नास्तीति एतन्मननार्थं पर्यटन्तीति स्वामिना मुक्तसङ्गतद्भक्तसङ्गमभिप्रायं स्वामेव सूचितयन्सन्तः सन्ति यतो यतो गतमदास्तानाश्रमानावसन् । नित्यं तन्मुखपङ्कजाद्विगलितत्वत्पुण्यगाथामृतस्रोतःसम्प्लवसम्प्लुतो नरहरे न स्यामहं देहभृत् ॥ अङ्गं तदङ्गानीति तत्तेषां पुरुषसारहरावसथानां जायापत्यादीनाम् अङ्गसङ्गं स्वाङ्गेन मुञ्चन्तीत्यर्थः । तन्मुखपङ्कजात्तेषां सतां मुखपङ्कजात् अभ्यत्सुगमम् ॥ ३५ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेवाभ्याः सदाचारेण दर्शयन्ति—भुवीति । ये ऋषयः सर्ववेदार्थतत्त्वज्ञानन्तः त्वयि सकृदपि मनो दधति ते पुनः [illegible] नादिमयान् पुरुषसारहरावसथान् नोपासते तेषु क [illegible] कीदृशे त्वयि आत्मनि परमात्मनि अत एव नित्यावि[illegible]

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रेमास्पदत्वान्नित्यसुखे निरवधिसुखस्वरूपे कथम्भूताः सन्तः भवत्पदाम्बुजहृदः तदवधानवशिकृततत्स्फूर्त्तयः सन्तः ततः अघभिदङ्घ्रिजलाः सन्तः ततः स्वयमेव भुवि पुरुपुण्यतीर्थसद्मानि सन्तः उत अपि तथापि विमदा विगतगर्वाः सन्तः इति यद्वा तादृशा अपि विगतगर्वाः सन्तः तादृशावसथान् नोपासते 'सत्सम्बन्धेनैतेपि तीर्थत्वमापन्ना इति तत्रैव न तिष्ठन्ति किन्तु भुवि वर्त्तमानानि पुरुपुण्यतीर्थसद्मान्येवोपासते इति उभयथापि तीर्थपादत्वान्नेति भावः । एवं तीर्थमहिमश्रुतीरपि तन्महिमप्रतिपादकेषु पर्य्यवसाययन्ति श्रुतयश्च—

"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥

[illegible]भ्यो नमः परमर्षिभ्य इत्याद्याः ॥ ३५ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भगवद्भक्तानां प्रभावमाह—भुवीति । पुरुपुण्यतीर्थसद्मानि उपासते इत्याकृष्यान्वयः । भवत्पदाम्बुजहृदः भवत्पदाम्बुजन्यस्तहृदयाः अघभिदङ्घ्रिजलाः भगवद्भक्तानां पादोदकमपि पावनमित्यर्थः । दधति विदधति नित्यसुखे नित्यानन्दनिधौ पुरुषसारहरावसथान् न उ ते पुरुषाणां सारो ज्ञानवैराग्यादिस्तदपहरान् गृहान् न सेवन्त इत्यर्थः ॥ ३५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

नन्वित्थमात्मानं सर्वरसं मामाश्रयन्ते ते किं मिथुनतो न चरन्तीत्याहुः—भुवीति । ये त्वयि नित्यसुखस्वरूपे आत्मनि च सकृदपि मनो दधति ते पुनः पुरुषाणां सारं ज्ञानवैराग्यादिरूपं हरन्तीति तथा तानावसथान् गृहान् नोपासते न सेवन्ते न गृहेषु मिथुनतश्चरन्तीत्यर्थः । अपितु भुवि पृथ्व्यां पुण्यानि तीर्थानि गङ्गादीनि सद्मानि क्षेत्राणि च उपासते तीर्थान्यपि तीर्थीकर्तुं पुण्यक्षेत्राण्यपि निरतिशयपुण्यावहानि कर्तुं तान्युपासत इति भावः तत्र हेतुत्वेन तान् विशिंषन्ति ऋषयः द्रष्टारः स्वात्मपरमात्मयाथात्म्यविद इत्यर्थः । अत एव विमदाः देहाभिमानस्वतन्त्राभिमानादिकमदरहिताः उतापिच भवतः पदाम्बुजं हृदि येषां ते भवतः पदाम्बुजे हृदि येषां ते भवतः पदाम्बुजे हृत् येषां ते इति वा अत एवाघं भिन्दन्तीति तथा तान्यङ्घ्रिजलानि येषां ते अनेन भगवद्भक्तानां पादस्पर्शोपि पावन इत्यभिप्रेतम् आत्मनीत्यनेन [illegible] चिदचिदात्मकप्रपञ्चरूपकार्यस्य तच्छरीरत्वमतएव परमार्थत्वञ्चाभिप्रेतं ' नहि मिथ्याभूतं किञ्चित्कस्यचिच्छरीरभूतं दृष्टमित्यर्थः ॥ ३५ ॥

---

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथ भगवद्भक्तानां प्रभावमाह—भुवीति । ये ऋषयः सूक्ष्मदर्शिनो विमदा देहादिष्वहङ्काररहितास्ते उत तेपि भुवि पुरुपुण्यतीर्थसद्मान्युपासते इत्याकृष्यान्वयः पुरुपुण्यतीर्थसद्मानीति पुरुपुण्यरूपं पादतीर्थं गङ्गादि यस्य स पुरुपुण्यतीर्थो हरिः तदुक्तं "यच्छौचनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिधृतेन शिवः शिवोभूत्" इति तस्य सद्मानि मन्दिराणि भगवद्भक्तास्तानित्यर्थः तथाचोक्तं भगीरथेन गङ्गां प्रति

साधवो न्यासिनः शान्ता ब्रह्मिष्ठा लोकपावनाः ।
हरन्त्यघं तेऽङ्गसङ्गात्तेष्वास्ते ह्यघभिद्धरिः । इति

तथा भगवद्वाक्यं दुर्वासं प्रति "ये दारागारपुत्राप्तान् प्राणान् वित्तमिमं परं । हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे" इति ये त्वयि नित्यसुखे नित्यानन्दनिधौ आत्मनि जीवान्तरात्मनि सकृदपि मनो दधति निदधति तेपि पुरुषसारहरावसथान् पुरुषाणां सारो ज्ञानवैराग्यादि तदपहरान् न उपासते न सेवन्ते किं पुनः सर्वकाले तन्निष्ठा ऋषय इत्यर्थः कथम्भूतास्ते भवत्पदाम्बुजहृदः भवत्पदाम्बुजे हृदि येषां ते भवत्पदाम्बुजन्यस्तहृदया इति यावत् पुनः कीदृशाः अघभिदङ्घ्रिजलाः अघभिदङ्घ्रिजले येषां तेषां भगवद्भक्तानां पादोदकमपि पावनमित्यर्थः । ईदृशप्रभावयुक्तानामेव सङ्गः संसारनिवर्त्तक इति तथाच तृतीये भगवद्वाक्यं देवहूतिं प्रति—

प्रसङ्गमजरं पाशमात्मनः कवयो विदुः ।
स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥

इति ॥ ३५ ॥

---

योगिरामानुजाचार्यकृतसरलाव्याख्या ।

भगवद्भजनपराः भजनप्रतिबन्धकान् गृहान्न सेवन्ते तदनुकूलान् पुण्यतीर्थादीनेव सेवन्ते इत्याहुः—भुवीति । ते भगवद्भजनमाहात्म्येन प्रसिद्धाः ऋषयः ज्ञानिनः भवत्पदाम्बुजहृदो भवतः मोक्षप्रदस्य पदाम्बुजं चरणकमलं हृदि येषां ते अत एवाघभिदङ्घ्रिजलाः स्वयमेवाघभित् चेतनानां पापहरम् अङ्घ्रिजलं चरणोदकं येषां ते उत इत्यप्यर्थे उत तथापि स्वयमेव जगत्पावना अपि विमदाः कुलधनविद्यासम्बन्धिमदत्रयरहिताः सन्तः भुवि धरायां पुरुपुण्यतीर्थसद्मानि पुरूणि बहूनि पुण्यानि पुण्योत्पादकानि, तीर्थानि गङ्गादीनि सद्मानि भगवद्धामानि बदर्य्यादीनि क्षेत्राणि तान्येवोपासते सेवन्ते प्रायः तत्रैव महत्सङ्गप्राप्तेः पुनः भगवति मनोनिवेशनानन्तरं पुरुषसारहरावसथान् पुरुषाणां सारं सारभूतं विज्ञानं "तद्गुणसारत्वात्तद्व्यपदेशः" इति सूत्रवचनात् तं हरन्तीति तथा ते आवसथाः गृहाः तान् नोपासते नैव सेवन्ते ते गृहान्नोपासन्ते इत्यत्र किम्पुनर्न्यायेन दृष्टान्तमाहुः दधतीति ये किञ्चित् किञ्चित् भगवदुपासनाभ्यासपराः आत्मनि अन्तरात्मभूते नित्यसुखे नित्यानन्दरूपे त्वयि भगवति सकृदपि सकृत्कालेपि ये मनो निवेशयन्ति तेपि पुरुषसारहरावसथान् न सेवन्ते किम्पुनः ऋषयः न सेवन्ते इत्यत्र वक्तव्यमित्यर्थः । ते ऋषयः भवत्पदाम्बुजहृदो अत एवाघभिदङ्घ्रिजला उत विमदाः भुवि पुरुपुण्यतीर्थसद्मानि उपासते पुनः पुरुषसारहरावसथान् नोपासते ये आत्मनि

श्रीश्रीनिवासस्रूरिकृततत्त्वदीपिका।

नित्यसुखे, त्वयि सकृदपि मनो दधति तेऽपि पुरुषसारहरावसथान् नोपासते ऋषयः नोपासते इति किम्पुनः इत्यन्वयः॥ ३५॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इति सदजानतां मिथुनतोरतये चरतां सुखयति कोन्विह विजने स्वनिरस्तभगे। भुवि पुण्यतीर्थसदनान्यृषयो विमदास्त्वत्तत्त्वानुभवतः पदाम्बुजं हृदाघभिदं दधति। सकृन्मनस्त्वयि चिदात्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरावसथम्॥ १६—२२॥

ब्रह्मा ज्ञात्वेति लोकप्रवृत्तिप्रवर्त्ततां कोनु मोक्षं ददाति अतो ब्रह्मोपास्यते साधुधीरा नाहम्भावस्तेषु रुद्राधिवासः" इति श्रुतेः। "महाभाग्यं तु कैवल्यमज्ञानां क प्रदास्यति। अतः सन्तो विजानन्ति हरिं नेत्थमहङ्कृताः। इतिस्मृत्यर्थसङ्ग्राहिण्या अर्थरूपस्य इतिसदजानतामित्यस्य श्लोकस्यायमर्थः इतिशब्दः प्रकारवचनः इति लोके दृश्यमानप्रकारेण सद्ब्रह्म अजानतां ब्रह्माज्ञानिनां मिथुनतः स्त्रीपुंसभावेन रतये ग्राम्यधर्माय चरतां प्रवर्त्तमानानां कोनु पुरुषः अत्र इह विजने मोक्षविषये सुखयति न कोपि मोक्षं ददातीत्यर्थः। कीदृशे विजने स्वनिरस्तभगे सुष्ठु अनिरस्तः भग ऐश्वर्यादिगुणो यस्मिन् स तथा तस्मिन् यतस्त्वदज्ञानिनां परमानन्दलक्षणमोक्षभावः अतः भुवि स्थाने पुण्यं शुद्धिकरं तीर्थं शास्त्रमेव सदनं शरणं येषां ते तथा ते ऋषयो देवादयः त्वामेव सन्तं ज्ञात्वा भवतः पदाम्बुजं हृदा निविशन्ति। कीदृशं अघभिदं पापनाशनं किञ्च मनोमननसमर्थमन्तःकरणं नित्यसुखे चिदात्मनि त्वयि दधाति च अत्र प्रधानसाधनमाहुः हे पुरुषसार पुरुषोत्तम पुनश्च पश्चात् हरस्य रुद्रस्यावसथम् अहङ्कारं सकृदपि नोपासते न कुर्वन्ति इत्यर्थः॥ २२॥ ३६॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

तदेवाभ्याः सदाचारेण द्रढयन्ति भुवि—पुरुपुण्येति॥ ३५॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

गुरवस्तु द्वेधा भवन्ति दीक्षागुरवः शिक्षागुरवश्च आद्यास्तु मदभिज्ञं गुरुम् इत्यादिनावक्ष्यमाणाः द्वितीये तु भागवतास्तेषामुपासनैव प्रथमं कार्य्येति सदाचारं दर्शयन्ति—भुवि पुर्वित्यादि। ऋषयोपि विमदाः सन्तः पुरुपुण्यतीर्थसदनानि क्षेत्राणि उपासते सन्तु तावत्प्रवृत्तमात्राः पुरुपुण्या भगवद्भक्ता एव तीर्थानि गुरवः तीर्थं त्वृषिजुष्टजल गुराविस्यनुशासनं तेषां सदनानि यद्वा पुरूणि पुण्यानि तीर्थानि सदनानि क्षेत्राणि यद्वा पुरुपुण्यतीर्थानां सदनं गतियेषु तानि वृन्दावनमथुराद्वारकादीनि तेषु तेषु महाभागवताः प्रायशः सन्तीति तान्युपास्यानीत्यर्थः। ते प्रसिद्धा अपि उत्तराद्धोक्त्यर्थः ते के इत्याहुः—ये भवत्पादाम्बुजसुहृदः षष्ठीतत्पुरुषो बहुव्रीहिर्वा अघभिदङ्घ्रिजलं येषाम् एवम्भूतास्त्वयि मनो दधति अथवा ये त्वयि सकृत् एकवारमपि मनो दधति ते अघभिदङ्घ्रिजलाः त्वयि कीदृशे आत्मनि परमसुहृदि नित्यसुखे नित्यं सुखं यस्मात् तेन पुनः पुरुषसारहरावसथान् न उपासत इति द्विरावर्त्तनीयम् अथवा सकृदपि ये त्वयि मनो दधति ते पुरुषसारहरान् गृहान् न उपासते किम्पुनर्भवत्पदाम्बुजसुहृदोऽघभिदङ्घ्रिजलाः ते तु पुरुपुण्यतीर्थानि तानि स्वतत्स्वरूपाणि यत ऋषयः ऋषिरिति ख्याताः अन्येतु ऋषयो न भवन्ति विमदाः विगतो मदो येभ्यः यद्दर्शनादन्येषामपि मदो यातीति भावः॥ ३५॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एव सर्वपरित्यागेन भगवद्भजनं कर्त्तव्यमिति निरूपितं तत्र प्रथमं किं कर्त्तव्यमित्याकाङ्क्षायां क्रमं निरूपयन्त आहुः—भुवि पुरुपुण्यतीर्थसदनानीति। आदौ भूमिसमाश्रयणं कर्त्तव्यं भूमिर्हि भगवच्चरणारविन्दरूपा तत्र मञ्चकपादुकादिपरित्यागेन भूमावेव निरन्तरं तिष्ठेत् अनेन सर्व एव भोगा व्यावर्त्तिताः ततस्तीर्थाश्रयणं कर्त्तव्यं विशेषतश्चरणारविन्दस्फूर्त्यर्थं गङ्गा सर्वतीर्थानां मुख्या चरणारविन्द एव तिष्ठतीति गङ्गातीरे चरणारविन्दे स्फूर्तिः आधिदैविकपक्षे आवेशपक्षे च स्फुटा तत्रापि पुरुपुण्यानि तीर्थानि सेव्यानि कुरुक्षेत्रादीनि न केवलं तान्येव तीर्थानि सेव्यानि किन्तु गुरुरूपाण्यपीत्याह तीर्थसदनानीति तीर्थानां गुरूणां सदनानि गृहाणि भुवि वर्त्तन्ते अतस्तानि सेव्यानीत्यर्थः। ननु के ते इत्याकाङ्क्षायामाह ऋषय इति ते हि मन्त्रद्रष्टारः तदुद्धारका लौकिकप्रकारं जानन्ति अतस्तेषु गत्वा मन्त्राद्यलौकिकं भगवद्भजनसाधनं शिक्षणीयमित्यर्थः। ननु तेषु को विशेष इति चेत्तत्राह—विमदा इति। मदो गर्वः येन स्वपरज्ञानं न भवति अनेन ऋषीणामभिज्ञानमपि निरूपितं ननु केवलं मदाभावे सात्त्विकाः कर्मिणोपि सेव्या भवेयुः देवतान्तरोपासका वा तत्राह ते पुनः भवत्पदाम्बुजहृदो भवन्ति तेषामन्तर्बहिर्माहात्म्यं निरूप्यते अन्तस्तेषां हृदये भगवान् भवति भक्तिमार्गप्रकारेण बहिश्च ते भगवदाज्ञाकारिणो भवन्ति—

सर्वलोकोपकारार्थं कृष्णेन सहितास्तु ते।
परिभ्रमन्ति लोकानां निस्ताराय महायशाः॥

अत एव सर्वेषामघं भिनत्ति यदङ्घ्रिजलं तादृशं येषां तत्तच्चरणारविन्दजलेन पापक्षयः तदुपदेशेन तद्धृदयस्थभगवच्चरणारविन्दं सङ्क्रामतीति सूचितं ननु तत्सेवायां कृतायां भगवति च हृदये निविष्टे यदि शीघ्रमेव देहपातो भवेत् तदा न काचिच्चिन्ता यदि विलम्बस्तदा कालादिना बुद्धिभ्रंशे पुनर्गृहासक्तिः स्यात् ततः कृतं सर्वं व्यर्थं भवेदित्याशङ्क्याह—दधति सकृन्मन इति। ये गुरूपदेशादिना त्वयि सकृदपि मनो दधति यथा कामिनां स्त्रीविशेषे सङ्क्रान्तं सर्वथा अननुभूय न निवर्त्तते तथा स्नेहे जाते भगवद्रसाभिनिवेशो यदा भगवति चित्तं भवति तादृशाः कदाचिदपि गृहं न सेवते अदृष्टपूर्वः सेवेतापि दृष्टपूर्वस्तु न

सत इदमुत्थितं सदिति चेन्ननु तर्कहतं व्यभिचरति क्व च क्व च मृषा न तथोभययुक् ।
व्यवहृतये विकल्प इषितोऽन्धपरम्परया भ्रमयति भारती त उरुवृत्तिभिरुक्थजडान् ॥ ३६ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सेवन्त एवेत्यर्थः । ननु, तादृशाः पूर्णार्थाः गृहेपि समागतः भगवन्तं न त्यजति गृहे समागते को दोष इति चेत्तत्राह— पुरुषसारहरावसथानिति विवेकधैर्यादिकं पूर्वावस्थां च सर्वमेव गृहा हरन्तीत्यर्थः ॥

परिभ्रमन् तीर्थनिष्ठो गुरुलब्धहरिस्मृतिः ।
न सेवते गृहान् दुष्टान् सद्धर्मात्यन्तनाशकान् ॥ ३५ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

— अत एव स्वजनसुतात्मदारगृहांस्त्यक्त्वा साधवो भजनानुकूलेषु तीर्थेषु वसन्तीत्याहुः—भुवि पुरुपुण्यानि तीर्थानि च सदनानि भगवद्धामानि च ऋषयो भक्ता अधिवसन्तीतिशेषः। विमदाः विगतगर्वाः उत यतस्ते भवत्पदाम्बुजहृदः मनसि त्वत्पदाम्बुजं दधानाः अत एव अघं भिन्दन्ति अङ्घ्रिजलानि येषां ते तादृशाः कदापि स्वजनसुतात्मदारगृहान्नोपासन्ते इति किं वक्तव्यं ये जनाः सकृदपि त्वयि नित्यसुखमयस्वरूपे मनो दधति तेपि पुनः पुरुषाणां सारं विवेकधैर्यशान्त्यादिकं हरन्तीति तथाभूतान् आवसथान् गृहान् नोपासते अत्र श्रुतयः सकाम्या मेरोः शृङ्गे यथा सप्तपुर्यो भवन्ति तथा निष्काम्याः सकाम्याश्च भूगोलचक्रे सप्तपुर्यो भवन्ति तासां मध्ये साक्षाद्ब्रह्मगोपालपुरीहीति-

मथुरायां स्थितिर्ब्रह्मन् सर्वदा मे भविष्यति ।
चित्स्वरूपं परञ्ज्योतिः स्वरूपं रूपवर्जितम् ॥
इदा मां संस्मरन् ब्रह्मन् मत्पदं याति निश्चितम् ॥

इति श्रीगोपालतापन्यः ॥ ३५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तीर्थवासादेरपि परम्परया परमार्थपरत्वात्तदेव प्रतिपादयन्ति "मथुरायां विशेषेण मां ध्यायन्मोक्षमश्नुते" इत्यादिश्रुतयः। ऋषयः पुरीः पुण्यतीर्थसदनानि उपासते सेवन्ते पुरीः श्रीमथुरादीः पुण्यतीर्थानि गङ्गादीनि सदनानि वृन्दावनादीनि कथम्भूताः विमदाः जातिविद्याद्यहङ्काररहिताः तत्र हेतुः भवत्पदाम्बुजहृदः भवतश्चरणाम्बुजं हृदि येषाम् अनन्यचरणाश्रयाः एतत्फलगर्भितविशेषणमाह अघाभिदाङ्घ्रिजलाः अघनाशकमङ्घ्रिजलं, येषां ते मद्भक्तियुक्तो भुवनं पुनातीति भगवद्वाक्यात् युक्तमेवैतत् इत्याहुः य आत्मनि भगवति त्वयि सकृदपि मनो दधते ते हरावसथान् कन्द्राधिष्ठितांस्तमःकार्यभूतान् क्रोधाहङ्कारादीन् नोपासते न सेवन्ते तद्वशो न भवन्तीत्यर्थः। हे पुरुषसार हे पुरुषोत्तम कथम्भूते नित्यसुखे शरीराख्ये श्रीकृष्ण इतियावत्-

कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥

इति निर्वचनात् सदानन्दं प्राप्तानां न पुनर्दुःखरूपे गृहादौ प्रवृत्तिसम्भावनापीत्यर्थः ॥ ३५ ॥

भाषा टीका ।

नित्यसुख स्वरूप सर्वान्तरात्मा आप के विषय में जो एक बार भी मनकी धारणा करते हैं वे विवेकी जन फिर पुरुष के ज्ञान वैराग्यादि सार धनको नाश करने वारे गृहन का सेवन नहि करते हैं, किन्तु पृथिवी में अनेक गंगादि तीर्थन का तथा अयोध्या मथुरा आदि पुण्य क्षेत्रों का सेवन करते हैं वे महात्मा जन जीवात्मा और परमात्मा के तत्व का साक्षात् करने वारे होते हैं और देह में आत्माभिमान आदि मद रहित होते हैं और आप के चरणारविन्द को सदा निज हृदय में धारण करते हैं और उन के चरण के जल संसारि जीवों के पापन का नाश करते हैं ॥ ३५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नन्वाम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम् तद्भूतानां क्रियार्थेन समन्वय इति तत्र तत्र जैमिनिना वेदस्य क्रियापरत्वाभिधानादुपनिषदामपि तदेव युक्तम् यथोक्तं तन्त्रवार्तिककृता 'एतेन कर्मार्थकर्तृप्रतिपादनेनोपनिषदां नैराकाङ्क्ष्यं व्याख्यातम्' इति न "एकमेवाद्वितीयं ब्रह्म विज्ञानमानन्दं ब्रह्म अचक्षुरश्रोत्रम्" इत्येवमादिपरीतात्मप्रतिपादनात् न ह्यद्वितीयपरमानन्दरूपस्य कर्माङ्गत्वं युज्यते अननुमतश्चैतद्वार्तिककृतः कथम्—

सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते ।
पराङ्गञ्चात्मविज्ञानादन्यत्रेत्यवधार्यताम् ॥

इति तेनैवोक्तत्वात् एतदर्थमेव मननाय मुनयः पर्यटन्तीत्युक्तम् तत्र तावत्। द्वैतस्य सत्यत्वे भेदस्यैव तत्त्वं तु न सम्भवतीति प्रश्नोत्तराभ्यां मननेन तत्त्वावधारणप्रकारमाह सत इदमुत्थितं सदिति। चेदिति इदं विश्वं धर्मि सदिति साध्यो धर्मः सत उत्पन्नत्वाद्धेतुः यद्यत् उत्पन्नं तत्तदात्मकमेव दृष्टम् यथा कनकादुत्पन्नं कुण्डलादि तदात्मकं। तद्वदिति तत्र यदि सद्भेदः साध्यते तदाऽपादानत्वनिर्देशेनैव भेदप्रतीतेर्विरुद्धो हेतुरित्याह ननु तर्कहतमिति ननु नाभेदं साधयामः किन्तु तदुत्पन्नत्वेन कुण्डलादिवदभेदं प्रतिबध्यामः तत्राभेद एव स्यादित्याशङ्क्यानैकान्तिकत्वेन दूषयति व्यभिचरति क्वचेति। पितृपुत्रादिषु सुहृदयमध्यसंसारादिषु च तथा

श्रीधरस्वामिकृतभावार्थदीपिका।

दर्शनादिति भावः । ननु तदुत्पन्नत्वं नाम तदुपादानत्वं नतु तद्धर्मित्वमतो नानैकान्तिकत्वमित्याशङ्क्य दूषयति कच मृषेति गुणोपादानस्यापि फणिनो न गुणत्वं किन्तु मिथ्यात्वम् अन्यथा कुण्डलादिवदबाधप्रसङ्गात् अतः पुनरप्यनैकान्तिकत्वमेवेति भावः । ननु न तत्र केवलं गुणमात्रं फणिन उपादानं किन्त्वविद्यायुक्तं तथाभूतस्यावस्तुत्वाद्युक्तं फणिनो मिथ्यात्वमित्याशङ्क्य तत्तुल्यमत्रापीति दूषयति न तथोभययुगिति अयमर्थः अत्राप्यविद्यायुक्तस्यैव सत उपादानत्वम् एवम्भूतस्य च न वस्तुसत्त्वम् अतः सदुपादानत्वमसिद्धमिति न वस्तुसत्त्वं प्रपञ्चस्येति ननु माऽभूदनेन हेतुना प्रपञ्चस्य सत्त्वं हेत्वन्तरेण तु साधयामः तथाहि सदिदमर्थक्रियाकारित्वात् न यदेवं न तदेवं यथा शुक्तिरजतमिति तत्राह—व्यवहृतये विकल्प इषित इति । व्यवहारायार्थक्रियार्थे विकल्पो भ्रम इषित इष्ट एव कूटकार्षापणादिनाऽपि क्वचिद्व्यवहारदर्शनात् नन्वेकत्र सतोऽन्यत्रारोपो भ्रमः प्रसिद्धोऽत्यन्तासत्त्वे कथं प्रपञ्चो भ्रमः स्यात् सत्त्वे वा नाद्वैतसिद्धिः उक्तं च भट्टैः —

'अभ्यस्यते खपुष्पत्वमसत्कथमवस्तुनि।
प्रज्ञातगुणसत्ताकमध्यारोप्येत वा मया ॥

तत्राह अन्धपरम्परयेति । अन्धपरम्परया यो विकल्प इत्यन्वयः अयं भावः संस्कारजन्यो भ्रमः संस्कारसिद्धये पूर्वप्रतीतिमात्रमपेक्षते न वस्तुसत्त्वम् प्रतीतौ सत्यां वस्तुसत्त्वाभावेन भ्रमव्यतिरेकादर्शनात् अतोऽनादित्वात्पूर्वपूर्वभ्रमदृष्टस्योत्तरोत्तर आरोपो भविष्यति अन्धपरम्परान्यायेन व्यवहारः सेत्स्यतीत्यप्रयोजको हेतुरिति 'नन्वक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति अपाम सोममममृता अभूम' इत्यादिभिः कर्मफलस्य नित्यत्वप्रतिपादनादसत्त्वं न घटते न हि नित्यं वस्त्वसद्भवति तस्माद्वेदप्रतिपादितत्वाद्द्वैतं सदेवेत्याशङ्क्याह—भ्रमयन्तीति । हे भगवंस्ते भारती वेदलक्षणा उरुवृत्तिभिर्बह्वीभिर्गौणलक्षणादिवृत्तिभिरुक्थजडान् कर्मश्रद्धामराक्रान्तमन्दमतीन् भ्रमयति मोहयति अयं भावः न हि वेदः कर्मफलं नित्यमभिप्रैति किन्तु लक्षणया प्राशस्त्यमात्रम् विध्येकवाक्यत्वात् अन्यथा वाक्यभेदप्रसङ्गात् 'तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते' इति न्यायोपबृंहितश्रुत्यन्तरविरोधाच्च अतः कर्मजडानामिदं भ्रममात्रमिति एतेनैव तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्यादीनामप्यन्यपरत्वं दर्शितं भवति ॥ ३६ ॥

उद्भूतं भवतः सतोऽपि भुवनं सन्नैव सर्पः स्रजः-
कुर्वत्कार्यमपीह कूटकनकं वेदापि नैवं परः ॥
अद्वैतं तव सत्परं तु परमानन्दं पदं तन्मुदा ।
वन्दे सुन्दरमिन्दिरानुत हरे मामुज्झ मामानतम् ॥२३॥

---

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी।

पूर्वं महत्सङ्गादिभिर्भगवद्भजनमुपपादितं तत्तु तदैव सम्भवेत यदि वेदानां तत्परत्वं स्यात्तेषान्तु क्रियापरत्वं दृश्यत इति पूर्वोक्तं सर्वं हास्तिस्नानं जातम् इत्याभिप्रेत्याह नन्वित्यादि आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यत इति हि परिपूर्णं पूर्वपक्षसूत्रं तस्यायमर्थः आम्नायस्य वेदस्य क्रियार्थत्वाद्यागादिविधानमात्रप्रतिपादकत्वात् तस्यैव प्रयोजनवत्त्वावगमादित्यर्थः । अतदर्थानां न सांग्रत्यवती भावना अर्थः प्रतिपाद्या एषां पुरुषस्वाधीनत्वेन विधौ पर्यवसाययितुमशक्यानामित्यर्थः तेषां सोरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं यच्छयित तद्रजतमभूत् प्रजापतिरात्मनो वपामुदखिदत् देवा वै देवयजनमध्यवसाय दिशो न प्राजानन् इत्यादीनाम् अर्थवादादीनाम आनर्थक्यं स्यात् निष्फलत्वं भवेत् क्रियार्थत्वमन्तराफलासिद्धेः तस्मादेवं जातीयं वाक्यमनित्यं लौकिकवाक्यतुल्यमुच्यते धर्माधर्मज्ञानरूपानित्यकार्यकर्तृत्वाऽभावात् ननु स्वतोऽप्यनित्यं अपौरुषेयत्वात् अथ तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वादिति सम्पूर्णं सिद्धान्तसूत्रम् तस्यायमर्थः तेषु रोदनवपोत्खननादिज्ञानात्रिषु भूतानां वर्त्तमानानां सिद्धार्थप्रतिपादकानां विधिप्रत्ययशून्यानां सोरोदीदित्यादिवाक्यानां क्रियार्थेन क्रियाप्रतिपादकेन बर्हिषि रजतं न देयं पशुना यजेत वायव्यं श्वेतमालभेत इत्यादिना समाम्नायः समुच्चारणं सम्बन्ध इत्यर्थः कर्मपरवाक्येन सम्बन्धेऽयं प्रकारः यतो रोदनरूपाश्रुजन्यं तद्रजतम् अतो बर्हिषि रजतं न देयमिति यतो वायुः क्षिप्रकार्यकारी देवोऽतो वायव्यं श्वेतमालभेत इति यतो ब्रह्मणा वपया निर्मितत्वाद्विशिष्टफलदः पशुरतः पशुना यजेत इति यतो देवानामपि देवयजनाधिष्ठाने दिग्ज्ञानमन्यतोऽन्यत्राप्राप्तत्वाद्यजेतेत्येवं विधिनिषेधवाक्यापेक्षितप्राशस्त्यनिन्दाध्याहारपूरणेनाम्वयं कृते सर्वस्य वेदस्य क्रियापरत्वसिद्धौ निरर्थकत्वनिरासेन प्रामाण्यं सिद्धं स्वाध्यायोऽध्येतव्य इत्यध्ययनविध्युपात्ते सर्वस्मिन्नपि वेदे कस्यापि वाक्यस्यानर्थक्यासम्भवान्निरर्थकाध्ययनविध्यनुपपत्तेरित्यर्थः । कथितसिद्धान्तसूत्रस्यार्थं श्रीधरमाह— अर्थस्येति । अर्थस्य रोदनादेस्तन्निमित्तत्वात् सा क्रियैवार्थो निमित्तं फलं यस्य तस्य भावस्तत्त्वं तस्मात् यस्मात्स रोदनादिरूपोऽर्थो निन्दाप्राशस्त्यद्वारा क्रिययैव तथा तथान्वितो बभूव तस्मादस्माभिरपि यथाशास्त्रादेशेन क्रियैव कर्त्तव्येति तत्र तत्र यत्र यत्र वेदस्य क्रियापरत्वं न दृश्यते तत्र तत्र उपनिषदामपि तत्त्वमसीत्यादिवाक्यानामपि तदेवं क्रियापरत्वमेव एतेन विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युरिति द्वितीयपादोक्तसूत्रसिद्धान्तेनोपनिषदां तत्त्वमसीत्यादिवाक्यानां भेदाकाङ्क्षं वयं कर्मपराः कथं स्याम इत्याकाङ्क्षारहितक्रियापरत्वेन सार्थकत्वमिति यावत् केन प्रकारेण व्याख्यातमित्यपेक्षायां प्रकारमाह—कर्त्रर्थकर्तृप्रतिपादनेनेति कर्त्रर्थो यज्ञाङ्गरूपो यः कर्त्ता यजमानस्तस्य यत्प्रतिपादनं ईश्वराऽभेदेन स्तुत्या वर्णनं तेन प्रकारेण यथादित्यो यूपः प्रस्तरो यजमान इत्यादौ यूपः स्तुत्या पशुनियोजनादिक्रियाङ्गमन्वेति प्रस्तरश्च कुशपुत्तलं स्तुत्या क्रियानिष्पादकमन्वेति तथोपनिषद्वाक्यैरीश्वराभेदेन स्तुत्या यजमानोऽपि कर्तृत्वेन क्रियाङ्गमन्वेतीति भावः । पूर्वोक्तसूत्रस्यायमर्थः तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः वक्ष्यमाणेनैकवाक्यत्वमर्थवादानामस्ति विधिना सहप्रयोजनवदर्थपर्यवसायित्वं गमयता सह एकवाक्यत्वमर्थ-

श्रीरामचन्द्रब्रह्मचारिकृतदीपिकादीपिनी ।

यजमानवाक्यानि स्तुत्यर्थेन स्तुत्यङ्गत्वेन विधीनां स्युः विधिशेषाणि भवन्तीति सङ्क्षेपः एवं मीमांसकपूर्वपक्षे श्लोकात् बहिरेव सिद्धान्तमाह—नेति । तत्त्वमसीत्यादिवाक्यानां यजमानस्तुतिद्वारा क्रियापरत्वं न सङ्गच्छते एकमेवेत्यादिश्रुत्यैव तद्विपरीतात्मप्रतिपादनात् तस्मात्त्वदभिमतयजमानात्मनः सकाशाद्विपरीतस्य शुद्धात्मनः प्रतिपादनाद्धेतोः वैपरीत्यमेव स्फुटीकरोति ब्रह्म एकं सजातीयभेदशून्यं यजमानस्य हि सजातीया बहवो यजमानास्तिष्ठन्ति अद्वितीयं विजातीयभेदशून्यं यजमानस्य हि विजातीयाः शूद्रादयो बहवस्तिष्ठन्ति ब्रह्म व्यापकं यजमानो हि परिच्छिन्नः ब्रह्म विज्ञानं चिन्मात्रं यजमानो हि चिज्जडग्रन्थ्यहङ्काररूपत्वेन ज्ञाता न ज्ञानमात्रं ब्रह्म हि आनन्दमात्रं यजमानो हि दुःखात्मककर्मकरणानुष्ठायी ब्रह्म हि चक्षुःश्रोत्रादिशून्यं तस्य हि तच्छून्यत्वे अन्धबधिरत्वादिदोषापत्त्या यज्ञानधिकारात् यजमानत्वमेव हीयते एवं वैपरीत्यमनुसन्धेयम् न ह्यद्वितीयेतिभेदशून्यपरमानन्दरूपस्यात्मनः क्षुद्रसुखफलककर्माङ्गत्वं न युज्यते आत्मनः पूर्णानन्दरूपत्वबोधे क्षुद्रस्वर्गाद्यानन्दार्थं प्रवृत्त्यसम्भवादित्यर्थः नतु भवतु वेदान्ते विपरीतात्मप्रतिपादनं अस्माभिस्तु आचार्यस्य तन्त्रवार्तिककृत आत्मनः कर्माङ्गत्वप्रतिपादनरूपाज्ञा पालनीयैवेत्याशङ्कयाह—ननु मतमिति । एतदात्मनः कर्माङ्गत्वं सर्वत्रैव हीति सर्वस्मिन्नेव हि वेदे विविधं द्रव्यदेवताऽवघातादिविषयं ज्ञानं व्रीहिभिर्यजेत वैश्वदेव्यामिक्षा व्रीहीनवहन्यादित्यादिवाक्यजन्यं । संस्कारत्वेन संस्काररूपत्वेन गम्यते ज्ञायते यथा प्रोक्षणादिसंस्कारादेवापूर्वोत्पत्तिर्नान्यथा तथा वेदवाक्यजन्ये एव व्रीह्यादिज्ञाने कश्चन संस्कारः फलप्रापको भवति नतु पौरुषवाक्यजन्ये तदेव संस्काररूपं विज्ञानं परस्य यागादिकर्मणोऽङ्गं संस्कारस्य स्वतः फलवत्त्वाभावात् किन्त्वात्मज्ञानादन्यत्रोपनिषज्जन्यात्मज्ञानं विना आत्मज्ञानन्तु न संस्काररूपं न च कस्यापि कर्मणोऽङ्गं तस्य स्वयं प्रकाशत्वात् परमानन्दरूपत्वेन परमाङ्गित्वाच्चेत्यर्थः । व्याख्यान्तरन्तु चूडामणिचक्रवर्तिटीकायां द्रष्टव्यं तच्च वार्तिकाशयानभिज्ञानविलसितत्वात् प्रकृतानुपयोगित्वाच्च हेयम् एतदर्थमेव पराभिमतस्योपनिषद्वाक्यानां क्रियापरत्वस्य निवर्तनार्थमेव यन्मननं विधिनिषेधप्रत्ययरहितानामेवोपनिषद्वाक्यानां युक्तिभिः सिद्धे ब्रह्मणि तात्पर्यावधारणं तदर्थं तत्र मीमांसकमते एवं भवेदात्मनः कर्माङ्गत्वं भवेत् तदेव तु द्वैतस्य सत्यत्वमेव प्रश्नोत्तराभ्यामिति मीमांसकानां पक्षो वेदान्तिनामुत्तरं ताभ्यां यन्मननं श्रुतस्यार्थस्य युक्तिभिः भवेदेवसापत्ते तेनेत्यर्थः । धर्मिपक्षः सत उचितमितिहेतुगर्भविशेषणं तेन सत उत्पन्नत्वादितिहेतुः फलति यद्यपि मीमांसकमते आकाशादेः स्वर्गादेश्चोत्पत्तिर्नास्ति तथापि परवादिप्रोक्तहेतोरङ्गीकारेण पूर्वपक्षोत्थापनमित्यनुसन्धेयम् यद्यत उत्पन्नमिति व्याप्तिनिर्देशेन तत्र विश्वस्मिन् सता ब्रह्मणा भेदः साध्यते भेदे सत इत्यपादानपञ्चम्या निर्देशेनैव भेदप्रतीतेः यथा भूमेरुत्पतति गङ्गा वृक्षात्पत्रम्पततीत्यादौ पञ्चमीनिर्देशेन भेदः प्रतीयते तथा अत्रापि भेदः प्रतीयते इति विरुद्धो हेतुः [illegible] यत्र साध्याभावव्याप्तिहेतुर्विरुद्धः यथा शब्दो नित्यः कृतकत्वात् इत्यत्र कृतकत्वं नित्यत्वाभावेनानित्यत्वेन व्याप्तं तथा सत उत्पन्नत्वं अभेदाभावेन भेदेन व्याप्तं यत्र अपादाननिर्देशस्तत्र भेद इति व्याप्तेः तर्कहेतुमितिभेदसाधकेन हेतुना अभेदसाधनं युक्तिबाधितमित्यर्थः । असुरा धर्मादिपदेषु यथा नञो विरोधार्थता सुरविरोधी असुरो धर्मविरोधी चाधर्म इति तथा भेदविरोधी अभेदः कश्चन स्वरूपसम्बन्धविशेष इति मीमांसकः शङ्कते नन्विति अभेदं भेदविरोधिनं स्वरूपसम्बन्धविशेषं वयं न साधयामः सर्वथा द्वैतस्यात्यन्ताभावं न साधयाम इत्यर्थः । किन्तु यथा कार्यकारणावस्थया भिन्नयोरपि स्वर्णकुण्डलयोः स्वर्णत्वेन भेदो नास्ति तथा विश्वब्रह्मणोः कार्यकारणावस्थया भेदेऽपि सत्त्वेनांशेन भेदं प्रतिषेधामः नन्न सद्भेदनिषेधे अभेद एव स्याज्जगति सत्यत्वमेव सिद्धमित्यर्थः । एवञ्चापादाननिर्देशेन ज्ञातापि कार्यकारणावस्थारूपा भेदप्रतीतिः सत्यत्वांशेन भेदनिषेधविरोधिनी नास्त्येवेति न विरुद्धो हेतुरित्याशङ्क्य नैकान्तिकत्वेन दूषयति सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धबाधिताः ये पञ्च हेत्वाभासास्तेषां मध्ये प्रथमो यः सव्यभिचारहेतुः स अनेकान्तिक इत्युच्यते तेष्वपि त्रिविधेषु सधारणासाधारणानुपसंहारिषु मध्ये साधारणैकान्तिकोऽत्र ग्राह्यः तस्य भावः तत्त्वं तेन दूषयति तल्लक्षणे साध्याभाववद्वृत्तिः साधारणैकान्तिकः यथा पर्वतो वह्निमान्प्रमेयत्वादिति तथाच विश्वं पक्षीकृत्य सदभेदः साध्यते सत उत्पन्नत्वादिति हेतुः एवञ्च साध्यो भेदस्तदभावो भेदस्तद्वान्पुत्रो घटप्रध्वंसश्च तत्रापि पितुरुत्पन्नत्वं मुद्गराच्चोत्पन्नत्वं वर्तत एवेति उत्पन्नत्वादिति हेतुर्व्यभिचरति साध्याभावस्थलेपि गच्छति पितृपुत्रयोस्तु भेदः प्रत्यक्ष एव पितुर्ब्राह्मणत्वाद्गौरत्वात् पुष्टत्वात्पुत्रस्य तद्वैपरीत्यात् एवं मुद्गरस्य भावरूपत्वाद्घटप्रध्वंसस्याभावरूपत्वाद्भावाभावयोरैक्यानुपपत्तेश्चेति तथादर्शनाद्व्यभिचारदर्शनात् अतो नानैकान्तिकत्वमिति यत्तत्तदुपादानत्वादिति हेतुः ननु तन्निमित्तत्वादिति अतस्तदुपादानत्वहेतोर्न व्यभिचारित्वमित्यर्थः । पुत्रस्य पितुरुपादानकत्वाभावाद्घटप्रध्वंसस्य च मुद्गरोपादानकत्वाभावाद्विश्वस्य तु ब्रह्मोपादानकत्वादभेद एवेति भावः । तथाच तदुपादानत्वलक्षणस्य हेतोरभेदरूपसाध्याभाववति पुत्रे घटप्रध्वंसे च वृत्तेरभावाद्व्यभिचारलक्षणासम्भवेन न हेतोर्व्यभिचारित्वमिति पुनरपि जगतः सत्यत्वमिति मीमांसकपूर्वपक्षमाशङ्क्य दूषयति वेदः कथमृषेति । कश्चिदुपादानकार्यं मृषापि भवतीत्यन्वयः गुणोपादानस्य रज्जूपादानकस्यापि फणिनस्सर्पस्य न गुणत्वं न रज्जुत्वं अन्यथा गुणत्वे मिथ्यात्वाभावे च सति अधिष्ठानज्ञानोत्तरकालनायं सर्प इति बाधो न स्यात् अत उपादानकार्यस्यापि कस्यचिन्मिथ्यात्वात् अनेकान्तिकत्वमेवेति रज्ज्वाद्यभेदरूपसाध्याभाववत्यपि सर्पे तदसत्त्वात्पुनरपि व्यभिचारित्वमित्यर्थः । ननु तदुपादानत्वादिति हेतोस्तन्मात्रोपादानकत्वादित्यर्थस्य विवक्षितत्वात् यद्यतन्मात्रोपादानकं तत्ततो न भिन्नमिति व्याप्तेर्न रज्जुसर्पे व्यभिचारः रज्जुसर्पस्याज्ञानयुक्तरज्जूपादानत्वेन रज्जुमात्रोपादानकत्वाभावात्तस्यैव मिथ्यात्वमिति ननु तत्रेति तत्र रज्जुसर्पदृष्टान्ते तथाभूतस्याज्ञानयुक्तोपादानकारणस्य कार्यत्वस्याऽवस्तुत्वाद्भ्रान्तिमात्रविलसितत्वेन मिथ्यात्वात् तद्वदत्रापीति अत्रापि विश्वस्मिन्नपि तत् अज्ञानयुक्तोपादानकार्यत्वं तुल्यं यथा प्रातीतिके सर्पे तथैवेत्यर्थः । अविद्यासम्वलि-

### श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

तस्यैव ब्रह्मणो जगदुपादानत्वात्सन्मात्रोपादानकत्वरूपो हेतुर्जगति स्वरूपासिद्ध इति । जगतो मिथ्यात्वमेव युक्तमिति भावः अत्रापि विश्वस्मिन्नपि एवम्भूतस्याज्ञानयुक्तोपादानजातस्य अतः अज्ञानयुक्तोपादानकार्यस्य मिथ्यात्वात् सदुपादानत्वं सन्मात्रोपादानत्वमसिद्धं स्वरूपासिद्धं जगति पक्षे सन्मात्रोपादानकत्वस्य हेतोरसत्वाज्जगतो मिथ्यात्वमेवेत्यर्थः मूलेन तथोभययुक् इत्यस्यायमन्वयः उभाभ्यां सदविद्याकारणाभ्यां युक्तमिदं विश्वं तथा रज्जुसर्पादेव तस्मान्न सत्यं नेति निगमनम् पुनर्मीमांसकः शङ्कते नन्विति अनेन सदुपादानकत्वेन हेतुना अर्थक्रियाकारित्वादिति अर्थः प्रयोजनम् उदकाहरणादि तस्य क्रियानिर्वाहकारित्वात् न वदेवमित्यादि व्यतिरेकव्याप्तिनिदर्शनं न यत् सत्यं न तत् एवमर्थक्रियाकारि व्यवहारापादकमपि न यथा शुक्तिरजतादि व्यतिरेकस्य चेदं लक्षणं साध्याभावे हेत्वभावो व्यतिरेकः अन्वयव्याप्तिश्चेयं यदर्थक्रियाकारि तत्सत्यं यथाह-दृष्टरजतं तत्राह-तस्मिन् पूर्वपक्षे वेदः समाधानमाह-कूटं छलेनान्तः पिहितमपि सत्त्वं कार्ष्यं दशमासादिपरिमितम् आपणं रजतस्वर्णमुद्रादि आदिना स्वप्राङ्गणादिपरिग्रहः तेनापि व्यवहारदर्शनात् पुनर्मीमांसकः शङ्कते नन्विति एकत्र हट्टविलादौ सतो वर्तमानस्य रजतसर्पादेः अन्यत्र शुक्तिरज्ज्वादौ आरोपोऽध्यवसायो भ्रमः अत्यन्तासत्त्वे सर्वथा मिथ्यात्वे भट्टवार्तिकस्यायमर्थः असत् सर्वथा मिथ्याभूतं कापट्यदृष्टं खपुष्पत्वं अत्र स्तुति शशशृङ्गादौ अधिष्ठाने कथमध्यस्यते आरोपयितुं शक्यते न कथमपीत्यर्थः । तर्हि कथमध्यस्यते तत्राह-प्रज्ञातेति प्रज्ञातोऽनुभूतो गुणो रूपादिः सत्ता च सद्भावो यस्य रजतादेस्तत्प्रज्ञातगुणसत्ताकमेव शुक्त्यादौ दोषसद्भावेऽध्यारोप्यते दूरत्वादिदोषाभावे तु नाध्यारोप्यते प्रज्ञातगुणसत्ताकमेव वस्तु तथाभूते वस्तुन्येवारोप्यते इति नियममद्वयं आरोप्यते एवेति तु नियमो नास्तीत्यर्थः । संस्कारजन्यो भ्रम इति संस्कारो हि स्वोत्पत्त्यर्थं पूर्वमनुभवमात्रमपेक्षते न त्वनुभवस्य सत्यत्वमसत्यत्वं वा तस्मादेव हेतोः संस्कारजन्यो भ्रमः स्वजनकसंस्कारनिष्पत्तये । पूर्वानुभवस्मृतिरूपज्ञानमात्रमपेक्षते न तु वस्तुनः पूर्वप्रतीतिविषयस्य सत्यत्वमपेक्षते प्रतीतौ सत्यां भ्रमात्मके ज्ञाने सति वस्तुनो भ्रमविषयस्य सत्यत्वाभावेन भ्रमव्यतिरेकस्य भ्रमाभावस्यादर्शनाद्यतः संस्कारमात्रस्यैव भ्रमजनकत्वं न वस्तु सत्त्वस्य अतो भ्रमस्यानादित्वात् तेन च मिथ्याभूतेनापि विश्वेन व्यवहारः सेत्स्यतीत्यप्रयोजको हेतुः अर्थक्रियाकारित्वादिति हेतुस्तावद्विश्वासिद्धमस्ति सत्यत्वं साध्यं मास्तु इत्यस्य तर्कस्यानुकूलत्वाभावादप्रयोजकः साध्यनिश्चयस्य प्रयोजककारणं न भवतीत्यर्थः । पुनः शङ्कते नन्विति चतुर्षु चतुर्षु मासेषु क्रियन्ते इति चातुर्मास्यानि प्रागुक्तानि वैश्वदेवादीनि तैरिष्टवानिति चातुर्मास्ययाजी तस्य चातुर्मास्ययाजिनः सुकृतं तत्कर्मजं स्वर्गादिफलं भोगकालाभ्यां हेतुमशक्यं प्रलयाऽनभ्युपगमादिति भावः अपामेति सोमरसं यज्ञेषु पिबाम पानेन चामृताः नाशरहिताः जातास्स्मेति क्रमेण भोग्यभोक्तृत्वनित्यत्वप्रतिपादिके श्रुती लक्षणयेति चातुर्मास्ययाजिनस्सुकृतमक्षय्यमिति वाक्येऽक्षयपदस्यामृतपदस्य च यागप्राशस्त्येऽजहल्लक्षणतया प्राशस्त्यमात्रं वेदोऽभिप्रैति कुतो विध्येकवाक्यत्वात् चातुर्मास्येन यजेतेत्येवं रूपेण विधिनैकवाक्यत्वात् यतश्चातुर्मास्ययागः प्रशस्तोऽतश्चातुर्मास्ययागेनेष्टं भावयेदित्येवं विध्येकवाक्यताहेतुहेतुमद्वाक्येन गम्या अर्थवादानां प्राशस्त्ये लक्षणस्वार्थपरित्यागेनैव विधिवाक्यान्वयस्य मीमांसकैरभ्युपेतत्वात् अन्यथा स्वार्थत्यागेन प्राशस्त्यमात्रे लक्षणया विध्येकवाक्यत्वानङ्गीकारे वाक्यभेदसंज्ञकदोषप्रसङ्गात् कुतो-द्देशनानेकविधाने वाक्यभेदः एकं चातुर्मास्ययागजनितस्वर्गादिफलमुद्दिश्य तन्नामा यागो विधीयते तस्य फलस्य नित्यत्वं विधीयते इत्युभयविधाने सुदृढो वाक्यभेदः स च वाक्यभेदत्वान्महान् दोषः लक्षणं तु पदगतत्वादल्पदोषरूपा तत्परमक्षयपदस्य प्राशस्त्यमात्रलक्षणया प्रशस्तयागमात्रम् एककर्मफलोद्देशेन विधीयते इत्येकस्यैव विधानान्न वाक्यभेदः तदुक्तं भगवता जैमिनिना विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युरिति व्याख्यातमिदं पूर्वं ननु वेदान्ते मन्त्रार्थवादानां देवताधिकरणे "भावन्तु बादरायणः (१-३ ३२) इत्यत्र स्वार्थेप्रामाण्यमुपपादितमित्याशङ्क्याह-तद्यथेति । तयोर्द्वयोर्लोकयोर्मध्ये कर्मणा" चितः सम्पादितः ऐहिको लोको भोगो यथा क्षीयते एवममुत्र स्वर्गोऽपि पुण्येनापूर्वेण चितः साधितो भोगः क्षीयत इति दृष्टान्तपोषितानुमानगर्भितश्रुत्यन्तरविरोधात् अयं प्रयोगः स्वर्गः क्षयिष्णुः पुण्यकर्मसम्पादितत्वात् कृष्यादिकर्मसम्पादितसस्यादिवत् यतः कर्मफलनित्यत्वप्रतिपादकं वाक्यं स्तुतिमात्रमतः इदं स्वर्गादिफलस्य नित्यत्वमप्येतेनैव विश्वस्य मिथ्यात्वप्रतिपादनेनैव अन्यपरत्वम् अध्यारोपपरत्वं सतोऽपि भवतः उद्भूतं जातं भुवनं विश्वं 'सत्येव सत्यायाः स्रजः उत्पन्नः सर्प इव कूटकनकं कृत्रिमस्वर्णमपि कार्यं कुर्वत् व्यवहारापादकं भवत्येव वेदोऽपि एवं परः मुख्यार्थपरो न भवति शिष्टं स्पष्टम् ॥ ३६ ॥

---

### श्रीकविचूडामणिचक्रवर्तिकृताऽन्वयबोधिनी ।

अत्रादौ स्वामिचरणलिखितं मीमांसासूत्रादिकं लिख्यते नन्वाम्नायस्य क्रियापरत्वादानर्थक्यमतदर्थानां तद्भूतानां क्रियार्थेन समाम्नाय इति तत्र तत्र जैमिनिना वेदस्य क्रियापरत्वाभिधानादुपनिषदामपि तदेव युक्तं यथोक्तं तन्त्रवार्तिककृता एतेन क्रत्वर्थकर्तृप्रतिपादनेनोपनिषदां नैराकांक्ष्यं व्याख्यातमिति न एकेन एकमेवाद्वितीयं ब्रह्म विज्ञानमानन्दम् अचक्षुरश्रोत्रम् इत्येवं तद्विपरीतात्मप्रतिपादनात् न ह्यद्वितीयपरमानन्दरूपस्य कर्माङ्गत्वं युज्यते अनुमतं चैतत् वार्तिककृतः कथं सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते पराक्च आत्मविज्ञानादन्यत्रेत्यवधार्यतामिति तेनैवोक्तत्वात् एतदर्थमेव मननाय मुनयः पर्यटन्तीत्युक्तं तत्र तावत् द्वैतस्य सत्यत्वे भवेदप्येवं तदेव न सम्भवतीति प्रश्नोत्तराभ्यां मननेन तत्त्वावधारणप्रकारमाह—सत इति । अस्य व्याख्या संक्षेपेण क्रियते आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यत्वमुच्यते इति पूर्वपक्षसूत्रम् अस्यार्थः चोदनालक्षणोऽर्थो धर्म इत्युपक्रमात्तस्य ज्ञानमुपदेश इति मध्ये परामर्शाद् " तद्भूतानां क्रियार्थेन समाम्नायः" इत्युपसंहाराच्च

श्रीकविचूडामणिचक्रवर्त्तिकृताऽन्वयबोधिनी ।

आम्नायस्य क्रियार्थत्वमवगतं ततश्चायमर्थः आम्नायस्य वेदस्य क्रियार्थत्वात् यज्ञादिक्रियापरत्वात् " अनर्थानामक्रियार्थानां वेदानामानर्थक्यमनर्थता सोऽरोदीत् तद्रुद्रस्य रुद्रत्वं प्रजापतिरात्मनो वपामुदखिदत् देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्" इत्येवमादीनामानर्थक्यं धर्माधर्मरूपार्थप्रतिपादकत्वराहित्यं तस्मादेवं जातीयकं वाक्यजातमनित्यमुच्यते अनित्यमेव न पुनर्नित्यमेव अपौरुषेयत्वेन तन्निरासात् एवमादिवाक्यानामक्रियार्थत्वं तु रोदनकपोतागमनदिग्ज्ञानादिरूपासिद्धार्थबोधकत्वेनेति बोद्धव्यम् अस्य सिद्धान्तसूत्रमाह—तद्भूतानां क्रियार्थत्वेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्" इति सूत्रं अस्यार्थः तत्तेषु पदार्थेषु रोदनकपोतागमनदिग्ज्ञानादिषु भूतानां वर्त्तमानानां पदानां रोदोदीदित्यादीनां क्रियार्थेन पदेन यजेत्यादीनां समाम्नायः समुच्चारणं सम्बन्ध इत्यर्थः । कुतः अर्थस्य पदार्थस्य तन्निमित्तत्वात् वाक्यार्थप्रत्ययनिमित्तत्वात् पदानि तावत्स्वार्थानभिदधति पश्चात्ते पदार्था आकाङ्क्षा योग्यतासन्निधिमत्त्वाद्वाक्यार्थमवगमयन्ति अत आकाङ्क्षादिमहिम्ना रोदनादिवाक्यानां कथञ्चिद्विध्येकवाक्यता कल्पनीयेति तस्माद्यथाशक्ति आवेशेन क्रिया कर्त्तव्येत्यर्थः । कल्पते इत्यादि सूत्रे मीमांसायां तत्र तत्र जैमिनिना वेदस्य क्रियापरत्वाभिधानकथनात् उपनिषदामपि क्रियापरत्वमेव युक्तं यथोक्तं तन्त्रवार्त्तिककृता एतेन क्रत्वर्थकर्तृप्रतिपादनेनोपनिषदां नैरकाङ्क्ष्यमिति अस्यार्थः क्रत्वर्थः यज्ञाङ्गभूतो यः कर्त्ता यजमानः तस्य प्रतिपादनं तत्त्वमस्यादिवाक्यैरीश्वराभेदेन स्तुत्यत्वेन निरूपणं तेन उपनिषदां नैरकाङ्क्ष्यसार्थकत्वम् उपनिषद्भिर्यजमानः स्तूयते न तु निर्विशेषं ब्रह्म प्रतिपाद्यते इति भावः । तदेवं वेदस्य क्रियापरत्वाभिधानमुपनिषदां नैरकाङ्क्ष्यं ईश्वरस्य कर्माङ्गत्वमित्यादिकं किमपि न भवति इत्याह—नेतीति । "एकमेवाद्वितीयं ब्रह्म विज्ञानमानन्दमित्यादिभिः श्रुतिभिः तदुक्ताद्विपरीतस्यात्मनः प्रतिपादनात् नहि अद्वितीयपरमानन्दरूपस्यात्मनः कर्माङ्गत्वं युज्यते अतो न भवतीत्यर्थः । कथं तर्हि वार्त्तिककृता तथा व्याख्यातं सत्यं एतत्तस्यानुमतं न भवति तथा हि सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते पराक्चात्मविज्ञानादन्यत्रेत्यवधार्यतामिति तेनैवोक्तत्वात् अस्यार्थः असंसार्य्यात्मज्ञानं विना हि सर्वत्र विज्ञानं यत्किञ्चित् विविधज्ञानजातं संस्कारत्वेन वासनात्वेन गम्यते ज्ञायते पराक् च गम्यते परेषां कर्मणामङ्गं पराक् ज्ञानं प्राक् कृतस्यानुप्रवर्त्तकः संस्कारः जातमात्रस्य स्तनपानादिज्ञानं संस्कारवशादेव जायते औपनिषदं परमात्मज्ञानन्तु गुरूपदेशं विना न भवतीति तात्पर्यम् एतदर्थं मननाय मुनयः पर्यटन्तीत्युक्तं तत्र तावत् द्वैतस्य सत्यत्वे भवेदप्येवं तदेव न सम्भवति इति प्रश्नोत्तराभ्यां मननेन तत्त्वावधारणप्रकारमाह—सत इति । इदं विश्वं सतः परमेश्वरादुत्थितमतः सतः यदुत्पन्नं तत्तदात्मकमेव दृष्टं यथा कनकादुत्पन्नं कुण्डलादिकं तद्वत् एतद्दूषयति ननु भो वादिन् ! इति चेत्तर्हि तर्कहतं तत्र यदि सत्ता सद्भेदः साध्यते तदा अपादानत्वाभिदर्शनेनैव भेदप्रतीतेर्विरुद्धो हेतुरिति तर्केण हतः ननु भेदं साधयामः किन्तु तदुत्पन्नत्वेन भेदं प्रतिषेधामः यथा कनकादुत्पन्नं कुण्डलं कनकमेव भवति ब्राह्मणादुत्पन्नो ब्राह्मण एव स्यात् तदुत्पाद्यमेव एव स्यात् एवं स्यात् एवञ्चेत् अनैकान्तिकत्वेन दूषयति व्यभिचरति कचति पितृपुत्रादिषु मुद्गरघटध्वंसादिषु व्यभिचारदर्शनात् पितुर्निमित्तादुत्पन्नः पुत्रः पितरि स्थिते पुत्रक्षयमरणादिव्यभिचारः तथा मृत्तिकायां स्थितायां मुद्गरपातात् घटध्वंसो व्यभिचारः एवं तन्निमित्तात् जातस्य जगतो नाशादिव्यभिचारः अतो नैकान्तिकत्वमिति ननु तदुत्पन्नं नाम तदुपादानत्वं न तु तन्निमित्तं यथा मृत्पिण्डमादाय घटो भवति घटस्य मृदुपादानत्वम् अतो नैकान्तिकत्वं भवति एतद्दूषयति—कस्य मृषेति । क्वच कुत्रचित् रज्जुसर्पादौ तदुपादानत्वं मृषा मिथ्या भवति यथा गुणोपादानस्य फणिनो न गुणत्वं किन्तु मिथ्यात्वं गुणो रज्जुः रज्जुमुपादाय फणी भवति नहि फणिनो रज्जुत्वमस्ति मिथ्यात्वमेव अन्यथा कुण्डलादिवद्व्यवहारप्रसङ्गः स्यात् अतः पुनरनैकान्तिकत्वमेव ननु तत्र केवलं गुणमात्रं फणिनः उपादानं न भवति किन्तु अविद्यायुक्तं तथाभूतस्यावस्तुत्वायुक्तं फणिनो मिथ्यात्वमिति एवं चेत्तर्हि अत्रापि तदुत्पन्नमिति दूषयति—न तदुभययुगिति । उभाभ्याम् उपादानकारणाभ्यां सदविद्याभ्यां युनक्तीति उभययुक् उभययुजापि इदं जगत् तथा न सत् कुतः तयोरुभयोरुपादानत्वं हि परस्परान्यस्तत्वेनैव वक्तव्यम् अतस्तस्य च मिथ्यात्वं सर्ववादिप्रसिद्धमेव तस्मादत्रापि अविद्यायुक्तस्यैव सतः उपादानत्वम् एवम्भूतस्य न वक्तव्यं वस्तुतः सत्यत्वम् अतः सदुपादानत्वमसिद्धमिति हेतोः न वस्तु सत्त्वं प्रपञ्चस्येति ननु माभूदनेन हेतुना प्रपञ्चस्य सत्त्वं हेत्वन्तरेण साधयामः तथाहि सदिदम् अर्थक्रियाकारित्वात् न यदेवं न तदेवं यथा शुक्तिरजतमिति अस्यार्थः इदं जगत् सत्यत्वम् अर्थक्रियाकारित्वात् यत् एवं सत्यं न भवति तदेवमर्थक्रियाकारि न भवति यथा शुक्तिरजतमिति अर्थक्रियाकारि न भवति मद्रादिति एतद्दूषयति—व्यवहृतय इति । व्यवहृतये विकल्प इषितोऽन्धपरम्परया अन्धपरम्परया विकल्पो भ्रमः सद्व्यवहाराय अर्थक्रियार्थम् इषितः इष्टः एतत्कूटकार्षापणादिनापि क्वचित् व्यवहारदर्शनात् अत्र कूटं ताम्रमुद्रादिकं कार्षापणं वराटकः कपर्दकः इति पर्यायः अयं भावः संस्कारजन्यो भ्रमः संस्कारसिद्धये पूर्वप्रतीतिमात्रमपेक्षते न वस्तुसत्त्वं प्रतीतौ सत्यां वस्तु सत्त्वाभावेन भ्रमव्यतिरेकादर्शनात् अतोऽनादित्वात् पूर्वपूर्वभ्रमदृष्ट्योत्तरोत्तरः आरोपो भविष्यति इति अन्धपरम्परान्यायेन व्यवहारैः सेत्स्यतीत्यप्रयोजको हेतुरिति ननु "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति अपाम सोमममृता अभूम" इत्यादि श्रुतिभिः कर्मफलस्य नित्यत्वप्रतिपादनाद् सत्त्वं न घटते न हि नित्यं वस्तु असद्भवति तस्मात् वेदप्रतिपादितत्वात् द्वैतं सत्यमित्याशङ्क्याह—भ्रमयन्ति भारती त उरुवृत्तिभिरुक्थजडानिति । हे भगवन् ! ते तव भारती वेदलक्षणा वाणी उरुवृत्तिभिर्बहुभिर्गौणीलक्षणलक्षणादिवृत्तिभिः उक्थजडान् कर्मश्रद्धाभाराक्रान्तमन्दमतीन् भ्रमयति

श्रीकविचूडामणिचक्रवर्त्तिकृताऽन्वयबोधिनी ॥

मोहयति ॰अयं भावः न हि वेदः कर्मफलस्य नित्यत्वमभिप्रैति किन्तु वञ्चनया प्राशस्त्यमात्रे विध्येकवाक्यत्वात् तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयत इति न्यायोपबृंहितश्रुत्यन्तरविरोधाच्च अतः कर्मजडानाम् इदं भ्रममात्रमिति अथ तेषां गतागतप्रकारं पुण्यफलक्षयप्रकारं दर्शयति श्रुतिः अथ ये यज्ञेन दानेन तपसा लोकान् जयन्ति ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान् षण्मासान् दक्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ति तेषां यदा तत् पर्यवैत्यथेममाकाशमभिनिष्पद्यन्ते आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिव्यां प्राप्यान्नं भवति एवमेवाउपरि वर्त्तन्ते इति सुगमोऽर्थः धूममभिसम्भवन्ति प्रथमं धूमाभिमानिनीं देवतां प्राप्नुवन्ति एवमुत्तरोत्र ज्ञेयः अपक्षीयमाणपक्षं कृष्णपक्षं यान् दक्षिणादित्य एति तान् षण्मासान् कर्कादिचापान्तानित्यर्थः। अन्नं देवानामन्नं तत्रस्था देवा यथा चन्द्रं चन्द्रादमृतं पिबन्ति तथा तान् भक्षयन्ति तेभ्यः पुण्यफलमन्नं भक्षयन्तीत्यर्थः। तेषां तत्पुण्यं यदापर्य्यवैति नाशं गच्छति तदा सोमलोकात् इममाकाशमभिनिष्पद्यन्ते प्राप्नुवन्ति पृथिवीं प्राप्य मनुष्यादीनामन्नं भवति इति अन्नात् वीर्य्यरूपेण वनितातान् पुनर्जायन्ते इति शेषार्थः प्रवृत्तिमार्गपरेयम् अथ स्वामिनां —

> उद्भूतं भवतः सतोपि भुवनं सन्नैव सर्पस्रजः-
> कुर्वत् कार्यमपीह कूटकनकं वेदोपि नैवं परः ॥
> अद्वैतं तव सत्परं तु परमानन्दं पदं तन्मुदा—
> वन्दे सुन्दरमिन्दिरानुत हरे मामुज्झ मामानतम् ॥

सतोपि भवतः सकाशादुद्भूतं भुवनं न सत् यथा स्रजो भ्रमात् उद्भूतः सर्पो न सत् तद्वत् कार्य्यं व्यवहारं कुर्वदपि सत् न कूटकनकमिव वेदोपि एवं परः कर्मफलप्रतिपादनपरो न भवति अद्वैतपरमानन्दपर एव हे इन्दिरानुत ! इन्दिरा लक्ष्मीः तया नुत स्तुतस्तस्य सम्बोधनं हरे तव तस्मात् तव पदं मुदा वन्दे अन्यत्स्पष्टम् ॥ ३६ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सत इदमित्यस्य टीकायां आम्नायस्येति पूर्वपक्षसूत्रं तद्भूतानामिति सिद्धान्तसूत्रं तत्र प्रथमसूत्रस्य तस्मादनित्यमुच्यत इतिशेषः। अयमर्थः सोरोदीत्यदरोदीत् तद्रुद्रस्य रुद्रत्वं प्रजापतिरात्मनो वपामुदखिदत् देवा वै देवयजनमध्यवसायदिशो न प्राजानन्" इत्येवमादीनामतदर्थानां पुरुषार्थानधीनत्वेन विधौ पर्य्यवसाययितुमशक्यानामानर्थक्यं स्यात् यत आम्नायस्य क्रियामात्रार्थ(त्वं) तां विना फलासिद्धेः तस्मादेवं जातीयं वाक्यजातमनित्यमुच्यते धर्माधर्मप्रमितिरूपनित्यकार्य्यकर्तृत्वाभावात् न तु स्वतोप्यनित्यत्वम् अपौरुषेयत्वात् अथ तद्भूतानामिति सिद्धान्तसूत्रस्य तु अयमर्थः तन्निमित्तत्वादिति शेषः। अयमर्थः तेष्वेव पदार्थेषु भूतानां वर्त्तमानानां पदानां क्रियार्थेन कार्यार्थेन समाम्नायः समुच्चारणं संबन्ध इत्यर्थः। क्रियैव सर्वेषामर्थानां निमित्तं फलमिति यथोक्ते क्रियायां तथा तथाविधा बभूवुः नक्षत्रग्रहेऽपि यथाग्नित्वावेशेन कर्त्तव्या सेति भट्टवार्त्तिके गह्वतो गुणो रूपं संज्ञा च पृथ्व्येति विग्रहः पुनः श्रुतौ चातुर्मास्ययाजिन इति चतुर्षु चतुर्षु मासेषु क्रियन्त इति चातुर्मास्यानि प्राकृतानि वैश्वदेवादीनि तैरिष्टवान् तस्यानि तद्व्याख्यायां न तथोभययुगिति शिष्टालम् एव नञ् सङ्गच्छते व्याख्यायान्तु ननु कथमावर्त्तानां पुरुषसारत्वं विश्वस्यापि सच्छब्देन निर्दिष्टत्वात् सच्चिदानन्दघनात् त्वत्त उत्थितत्वेन स्वर्णतद्विकारवत्तदेकरूपत्वात् तदुत्थितत्वन्तु श्रूयते "यतो वा इमानि भूतानि जायन्ते" इत्यादौ अतो नारोपितत्वमपि मन्तव्यं · अनपातोर्विवर्त्ते प्रयोगाप्रसिद्धेः यदि वा युक्त्यन्तरेण गौणीवृत्तिमारोप्य तन्मन्यते तदा विवर्त्तवादे द्वैतमात्रस्य मिथ्यात्वात्परिणामदुःस्थत्व इत्यपि न घटते तस्यापि हेयत्वापातात् तस्य तु मोक्षादप्यधिकपुरुषार्थत्वमुक्तं न परिलषन्ति केचिदित्यादौ ततो युक्त्यन्तरं वाच्यं ज्ञेयं तदेतदाशङ्क्य न तदेकरूपत्वं न चारोपितत्वं किन्तु नश्वरादिरूपत्वमिति वदन्तः पूर्वोक्तमेव तात्पर्यं शेषामपि दर्शयन्ति सत इति तत्र स्मते पूर्वपक्षमनूद्यात्यन्ताभेदं निषेधयन्ति सतः सदेव सौम्येदमग्र आसीदिति सच्छब्देन कारणतया निर्दिष्टात्सच्चिदानन्दरूपात् त्वत्त उत्थितं जातमिदं विश्वं सत् तादृशत्वादभिन्नमिति चेत् तत्र घटते तु वितर्के तर्कहतं हि तत् अपादाननिर्देशेन स्वर्णतद्विकारादौ कारणत्वकार्य्यत्वरूपावस्थाभेददर्शनेन च भेदप्राप्तेः न च सतो जगत्तादृशो विकारः सत्त्वविरोधादेवेत्यर्थः। तस्माच्चिन्तामण्यादेर्नानापदार्थवदेव तस्मात्तदुत्थितमिति स्थिते तद्वदेव ततो विश्वस्य वैलक्षण्यमित्याहुः व्यभिचरति क्वचेति। ततः सम्यक् त्वद्धर्मानुगतेर्न सच्चिदानन्दरूपत्वं विश्वस्येति स्थितं ननु तर्हि न कथं रज्जुसर्पादिवद्विवर्त्तरूपमेवास्तां तत्राहुः कथं रज्ज्वादौ सर्पादिकं मृषा आरोपितमेव न तु तस्मादुत्थितं विश्वस्य तदुत्थितत्वमेव धर्मीकृतं तत्र शास्त्रे श्रूयत इत्यर्थः। ननु शास्त्रमप्युत्थितत्वमारोप्यैव वदतु तत्राहुः न तथोभययुगिति । सतु न तथा आरोप्यारोपकाभ्यां युज्यते अविषयत्वादित्यर्थः। यद्वा तत्रैव विवर्त्तो न्याय्यः यदध्यारोपापवादविषयांशयुग्भवति यथा रज्जूरज्जुत्वव्यञ्जकविशेषांशे तिरोहिते सामान्यांशे च प्रकटे सर्पत्वाध्यारोपभाक् स्यात् पुनर्विशेषांशे व्यक्तेऽपवादभाक् स्यात् नत्वेकस्मिन्नेवांशे विवर्त्तवादिनां तु नाशभेदस्वीकार इति । किञ्च अलादिमध्ये जगदिदं न प्रातीतिकमात्रसत्ताकं यथा स्वं यावदर्थक्रियाकारित्वात् यथैव तथैवं यथा मरीचिकाजलादि एवमाहुः विकल्पः कूटकनकादिरूपोऽर्थस्तु न तथा किन्तु कथञ्चित्कथादिलक्षणव्यवहारमात्रायैव ननु रसायनादिप्रयोगाय दानतः पुण्याय वा तत्र व्यवहारो न तदभिज्ञेषु किं त्वन्धपरम्परयैव स्यादिति यद्वा व्यवहारसिद्धये विवर्त्तवादः कल्पनादिसिद्धज्ञानपरम्परयैवेह अद्वैतभङ्गभयात् सचेत् दोष एव यथोक्तं शारीरकभाष्ये विज्ञानवादनिराकरणे । अनादित्वेऽप्यन्धपरम्परान्यायेनाप्रतिष्ठैवानवस्था व्यवहारलोपिनी स्यात् . नाभिप्रायसिद्धिरिति

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एतदुक्तं भवति यथेदं सुवर्णं केन क्रीतमिति प्रश्ने कश्चिदाह अमुनान्धेनेति अनेन कथं परिचितमिति पुनराह तेनान्धेन परिचायितं तेन च कथमित्याह केनाप्यपरेणान्धेनेत्यनवस्थाऽन्धपरम्परयापि न सिद्धो व्यवहारः किन्तु तत्रान्धपरम्परायां वर्तमानेऽपि चक्षुष्मान् सर्वाविप्रवर्तको भवति तदैव सिद्ध्यति यथा च तत्र सर्वेष्वपि चक्षुष्मत एव व्यवहारसाधकत्वं तथा कल्पितमिथ्यारोप्ये वस्तुनि सत्ये सत्येनान्यत्रारोपेण व्यवहारः सिद्ध्यति तदेवानुसन्धाय प्रवृत्तेः तद्विना भ्रमादर्शनव्यासङ्गश्च प्रयोगश्च जगत्परम्पराभ्रमासिद्धम् अनादिसिद्धद्रव्यवत् चक्रमसिद्धं द्रव्यं तत्रानादिसिद्धं यथा शुक्तिरजतादीति किञ्च कुत्रापि वस्तुनः कल्पना न दृश्यते चक्षुर्भूतादीनां कल्पयितुमशक्यत्वात् किन्तु सम्बन्धकल्पनैव दृश्यते सैव च मिथ्याशब्देनोच्यते यथा शुक्त्यादौ रजतादेः यथा अपामसोममृता अमूमेत्यादि मुख्यवृत्तेन पुनरनीश्वरवादिनः प्रत्युक्तिर्युक्ते तान् प्रत्याहुः भ्रमयतीति उक्तयाक्यान्मन्त्रविशेषान् वदन्ते तदादिभिर्जडान् भट्टेनापि सृष्ट्यादिकमङ्गीकृतं वदतीतिहासपुराणप्रामाण्यात् सृष्टिप्रलयावपीष्येते इति तस्मादिदमिदं न च सच्चिदानन्दरूपं न च विवर्तरूपं किन्तु नश्वरादिरूपमेवेति भिन्नं मुतयश्च यथोर्णनाभिः सृजते यथा पृथिव्यामोषधयः सम्भवन्ति यथासतः पुरुषात् केशलोमानि तथाक्षरात्सम्भवतीह विश्वमित्याद्याः अत्राक्षरशब्दाद्दर्शितकस्य वैलक्षण्यं च दर्शितवत्यः ॥ ३६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

उक्तकार्यसत्तापत्तिक्षेपेण कार्यमिथ्यात्ववादं चोद्यमुखेन प्रस्तुत्य प्रतिक्षिपति—सत इदमिति। सत उत्थितमिदं सदिति तर्कहते सत उत्पत्तिवैधर्म्यादिति चोद्यमिदं ननुशब्देन सूच्यते परिहरति क व्यभिचरतीति कार्यं सदित्ययमर्थः। क व्यभिचरति न कश्चिदपि व्यभिचार इत्यर्थः। ननु मायार्थशुक्तिरजतादौ व्यभिचार इत्यत्राह—क्व मृषेति। क मृषा न कश्चित् कार्यं मृषा स्वाप्नामपीश्वरसृष्टत्वान्न मृषात्वं शुक्तौ रजतसद्भावाच्च मृषात्वमित्यभिप्रायः। पञ्चीकरणप्रक्रियया सर्वत्र सत्यत्वं निर्वाह्यं सत उत्पत्तिवैयर्थ्यं परिहरति—न तथोभययुगिति। व्यभिचरति इत्यनुषङ्गः। क्वचिदपि मृत्सुवर्णादिद्रव्ये उभयावस्थादर्शनं न व्यभिचरति। कार्यत्वकारणत्वरूपावस्थावत्त्वेन मृत्सुवर्णादिकं सर्वं सर्वदा दृश्यते अतः सतोऽवस्थान्तरप्राप्तिः सफलेत्यर्थः। अवस्थाविकल्पश्च व्यवहृतये उदकाहरणाद्यर्थव्यवहृतये इषित इष्टः कार्यमिथ्यात्वविषया स्वङ्गारती अन्धपरम्परयाऽऽगता अन्धपरम्परया उक्थजडान् जडाकारकर्मपरम्परया जडान् अतत्त्वविदो भ्रमयतीति भावः ॥ ३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

इत्थं कार्यस्य सत्यत्वाभ्युपगममभिप्रेत्य अथ वः कार्यसत्ताप्रतिक्षेपेण कार्यमिथ्यात्ववादं चोद्यमुखेन प्रस्तुत्य प्रतिक्षिपन्ति—सत इदमिति। सत इत्यादिना तर्कहते इत्यन्तेन कार्यमिथ्यात्ववादिमतानुवादः व्यभिचरतीत्यादिना तत्प्रतिक्षेप इति विभागः तथाहि सतः परमार्थभूतात् परब्रह्मणः सकाशादुत्पन्नम् इदं जगदसत्परमार्थभूतं सत्यमिति यावत् ननु नैतदुक्तमित्यर्थः। कुतः यतस्तर्कहतमिति चेत् यद्यपि यद्यस्मादुत्पन्नं तत्तदात्मकमेव यथा मृद्धिरण्यादेरुत्पन्नं घटमुकुटादिकार्यं तथापि चेतनात्पुरुषाज्जातानां केशदन्तनखदन्तलोम्नामचेतनत्वदर्शनाच्चेतनाद्गोमयाज्जातानां वृश्चिकानां चेतनत्वदर्शनाच्च कार्यकारणयोः सालक्षण्यव्याप्त्यभावात् परमार्थभूतादपरमार्थगजतुरगादीनां तथा परमार्थशुक्तिशकलात् अपरमार्थरजतस्य चोत्पत्तिदर्शनात् सत उत्पत्तिवैधर्म्याच्च कार्यं सदित्येतत्तर्कहतमतः कार्यं मिथ्यैवेति चेदित्यर्थः। तर्कश्चात्र युक्तिः का पुनर्युक्तिरिति चेदुच्यते मृद्द्रव्यमात्रस्यानुवर्तमानत्वं तद्व्यतिरिक्तस्य च मानत्वं रज्जुसर्पादिष्वनुवर्तमानस्याधिष्ठानभूतस्य रज्ज्वादेस्सत्यता व्यावर्तमानस्य सर्पभूदलाम्बुधारादेरसत्यता दृष्टा तथा अनुवर्तमानम् अधिष्ठानभूतं मृद्द्रव्यमेव सत्यं व्यावर्तमानास्तु घटशरावादयोऽसत्यभूताः तथा निर्विशेषसन्मात्रात्सर्वाधिष्ठानभूताद्ब्रह्मणोऽन्योऽहङ्कारादिव्यवहारालम्बनः कृत्स्नः प्रपञ्चो मिथ्या कारणभूतं सन्मात्रं ब्रह्मैव सत्यं किञ्च सत आरम्भो विनाशायोगादसतः शशविषाणादेरुपलब्ध्यभावादुपलब्धिविनाशयोगि कार्यं सदसद्रूपमनिर्वचनीयमिति गम्यते अनिर्वचनीयश्च शुक्तिकारजतादिवन्मृषैव तस्य चानिर्वचनीयत्वं प्रतीतिबाधाभ्यां सिद्धं प्रतीयते हि प्रपञ्चः प्रत्यक्षेण "ऐतदात्म्यमिदं सर्वं तत् सत्यं। नेह नानास्ति किञ्चन मृत्योः समृत्युमाप्नोति य इह नानेव पश्यति। यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिभिर्वेदान्तैर्बाध्यते चेति ननु तर्कहतमिति पाठान्तरं तदा ननु सत उत्पन्नम् इदं सदिति चेन्न् तर्कहतं इत्यन्वयः इत्थमनूदितं कार्यमिथ्यात्वपक्षं प्रतिक्षिपन्ति—व्यभिचरतीत्यादिना। कार्यं सदित्ययमर्थः। क्व व्यभिचरति क्वेति काकुः न कश्चिद्व्यभिचार इत्यर्थः। केशपुरुषादिष्वपि अचेतनांश एव कार्यकारणभावादिति भावः। तथापि स्वप्नार्थे शुक्तिकारजतादौ मिथ्यात्वेन व्यभिचार इत्यत्राहुः—क्व मृषेति। क्व मृषा न कश्चिदपि कार्यं मृषेत्यर्थः। स्वप्नार्थानामपीश्वरसृष्टत्वाच्च मृषात्वं शुक्तौ रजतसद्भावादन्यथाख्यातिनाश्च न मृषात्वमित्यभिप्रायः सत उत्पत्तेर्वैयर्थ्यं परिहरन्ति—न तथोभययुगिति। व्यभिचरतीत्यनुषङ्गः क्वचिदपि मृत्सुवर्णादिद्रव्ये उभयावस्थादर्शनाच्च व्यभिचरति कार्यत्वकारणत्वरूपावस्थाद्वयवत्त्वेन मृत्सुवर्णादिकं दृश्यते अतः सतोऽवस्थान्तरप्राप्तिः सफलेत्यर्थः। विकल्पो घटशरावाद्यवस्थाभेदः स च व्यवहृतये घटेन जलमाहरेत्यादिवाक्यपूर्वकव्यवहारार्थमिषितः इष्टः यद्यन्यसत्येन प्रतीयेत सत्येन बाध्येत प्रतीयते बाध्यते च शुक्तिकारजतवत्प्रपञ्चरूपं कार्यमतः सदसद्रूपमनिर्वचनीयं कार्यं मृषैवेत्यत आहुः—न तथोभययुगिति। तथा तथाभूतमनिर्वचनीमुभययुक्सत्त्वविलक्षणत्वधर्मद्वययोगिरूपद्रव्यं स नास्त्येवेत्यर्थः। ननु शुक्त्यादिषु रजतादिप्रतीतेः प्रतीति-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

कालेपि तत्रास्तीति बाधेन चान्यस्यान्यथाभानायोगाच्च सदसदनिर्वचनीयमपूर्वमेवेदं रजतं दोषवशात्प्रतीयते इति कल्पनीयमिति चेन्न तत्कल्पनायामप्यन्यस्यान्यथाभानस्यावर्जनीयत्वादन्यथाभानाभ्युपगमादेव ख्यातिप्रवृत्तिबाधभ्रमत्वानामुपपत्तेरत्यन्तापरिदृष्टाकारणकवस्तुकल्पनायोगात् कल्प्यमानं हीदमनिर्वचनीयं न तदानीमनिर्वचनीयमिति प्रतीयते अपि तु परमार्थरजतमित्येवानिर्वचनीयमित्येव प्रतीतं चेद्भ्रान्तिबाधयोः प्रवृत्तेरप्यनुपपत्तिरतोन्यस्यान्यथाभानविरहे प्रतीतिप्रवृत्तिबाधभ्रमत्वानामनुपपत्तेः तस्यापरिहार्यत्वाच्च शुक्त्यादिरेव रजताद्याकारेणावभासत इति भवताऽभ्युपगन्तव्यं किञ्चानिर्वचनीयमपूर्वं रजतमत्र जातमिति वदता तस्य जन्मकारणं वक्तव्यं न तावत्प्रतीतिः तस्यास्तद्विषयत्वेन तदुत्पत्तेः प्रागात्मलाभायोगात्प्रतीविषया जाता तदुत्पाद्य तदेव विषयीकरोतीति [चेत्] महतामिदमुपपादनम् अर्थेन्द्रियादिगतो दोषः तत्र तस्य पुरुषाश्रयत्वेनार्थगतस्य कार्यस्य उत्पादकत्व योगात् नापीन्द्रियाणि तेषां ज्ञानकरणत्वात् नापि दुष्टानीन्द्रियाणि तेषामपि स्वकार्यभूते ज्ञान एव विशेषकरत्वाद्भ्रमादिमिथ्याज्ञानोपादानत्वमनवस्थादिदोषनिरस्तं किञ्चापूर्वमनिर्वचनीयमिदं वस्तुजातं रजतादिबुद्धिशब्दाभ्यां कथमिव विषयीक्रियते न घटादिबुद्धिशब्दाभ्यां रजतादिसादृश्यादिति चेत्तर्हि तत्सदृशमित्येव प्रतीतिशब्दौ स्यातां रजतत्वादिजातीयायोगादिति चेत्सापि किं परमार्थभूता उतापरमार्थभूता न तावत् परमार्थभूता तस्याः अपरमार्थान्वयायोगान्नाप्यपरमार्थभूता परमार्थान्वयायोगात् अपरमार्थे परमार्थबुद्धिशब्दयोर्निर्वाहकत्वायोगाच्च यत्पुनरुक्तं रज्ज्वादिवन्मृण्मात्रस्य कारणस्यानुवर्तमानत्वात्पारमार्थ्यं सर्पादीनामिव घटशरावादिकार्याणां मिथो व्यावर्तमानत्वादपारमार्थ्यम् एवं सन्मात्रस्य ब्रह्मणोनुवर्तमानत्वात् पारमार्थ्यम् अहङ्कारादिव्यवहारालम्बनाः सर्वे पदार्थाः मिथो व्यावर्तमानत्वादत एव बाधितत्वादपरमार्था इति तत्तुच्छं द्वयोर्ज्ञानयोर्विरोधे हि बाध्यबाधकभावः बाधितस्यैव व्यावृत्तिः अत्र घटपटादिषु देशकालभेदेन विरोध एव नास्ति यस्मिन् देशे यस्मिन् काले यस्य सद्भावः प्रतिपन्नः तस्मिन् देशे तस्मिन् काले तस्याभावः प्रतिपन्नश्चेत् विरोधाद्बलवतो बोधकत्वं बाधितस्य च व्यावृत्तिः देशान्तरकालान्तरसम्बन्धितयाऽनुभूतस्यान्यदेशकालयोरभावप्रतीतौ न विरोध इति कथमत्र बाध्यबाधकभावः अन्यत्र निवृत्तस्य अन्यत्र वृत्तिर्वा कथमुच्यते रज्जुसर्पादिषु तु तद्देशकालसम्बन्धितयैवाभावप्रतीतेर्विरोधे बाधकत्वं व्यावृत्तिश्चेति देशकालान्तरदृष्टस्य देशकालान्तरव्यावर्तमानत्वं मिथ्यात्वव्याप्तं न दृष्टमिति न व्यावर्तमानत्वमात्रं पारमार्थ्ये हेतुः यत्त्वनुवर्तमानत्वात्परमार्थ इति तत्सिद्धमेवेति न साधनमर्हति अतो न सन्मात्रमेव वस्तु सत उत्पत्तिवैयर्थ्यं परिहरन्ति व्यवहृतये विकल्प इषित इति । अस्य यथोक्त एवार्थः अतः सतोऽवस्थान्तरप्राप्तिः सफलेत्यर्थः । ननु तर्कहततत्वाभावेपि नेहनानेत्यादि श्रुतिरेव कार्यमिथ्यात्वं प्रमापयतीत्यत आहुः—भ्रमयतीत्यादिना । ते तव भारती वाग्रूपा" नेहनाना" इत्यादिश्रुतिः उरुवृत्तिभिरुक्थजडानन्धपरम्परया भ्रमयतीति सम्बन्धः उक्थजडाः कर्मजडा अनादिपापवासनादूषिताशेषशेमुषीकास्तानवभावः न केवलं कार्यमिथ्यात्वबोधनात्मिकैव नेह नानेत्यादि, श्रुत्यश्रान्त्याश्रुतिः अपितु अब्रह्मात्मकवस्तुतत्त्ववस्तुनिषेधबोधनात्मिका ब्रह्मस्वरूपं द्वैतमनुष्यादिमेव निषेधादिबोधनाद्यात्मिकाश्च बह्व्यो वृत्तयः सन्ति एवं तद्बुभुत्सवोऽप्युक्थजडास्तद्विपरीताश्च तत्र ये कर्मजडास्तान् प्रथमबुभुत्सुकुबुद्धिपरिकल्पितकार्यमिथ्यात्वकारणसत्यत्वपरत्वादिरूपबहुवृत्तिभिः प्रथमप्रतिपन्नकुबुद्ध्यनुवर्तिनां कर्मजडानामन्धपरम्परया कार्यमिथ्यात्वभ्रमं जनयति औपनिषदपरमपुरुषवरणीयताहेतुविशेषगुणविशिष्टानान्तु अब्रह्मात्मकस्वतन्त्रवस्तुनिषेधादिविषयां प्रमितिं जनयतीति किमस्माभिर्विधेयमिति ॥ ३६ ॥

---

श्रीश्रीनिवाससूरिकृततत्वदीपिका ।

अथ न हि विकृतिं त्यजन्ति कनकस्य तदात्मतया स्वभयभुजा भवन्त्यसुभृत इत्याद्युक्तकार्यसत्याप्रतिक्षेपेण कार्यमिथ्यात्वबोधमुखेन प्रस्तुत्य प्रतिक्षिपति । सत इदमिति । सत उत्थितमिदं जगत्सादीनिचेत्तर्केहतं कुतः सत उत्पत्तिवैधर्म्यात् न सत उत्पत्तिः संघटते असत एव घटादेरुत्पत्तिदर्शनादिति चोद्यं ननुशब्देन सूच्यते परिहरति व्यभिचरतीति । कार्यं सदित्ययमर्थः क्व व्यभिचरति न क्वापि व्यभिचार इत्यर्थः । कारणावस्थः मृत्सुवर्णादिकमेव घटकुण्डलादिकार्यावस्थं दृश्यते अतो जगत्कार्यमिथ्यात्ववाद असङ्गतः ननु स्वप्नपदार्थेषु शुक्तिरजतादिषु च व्यभिचार इति चेत्त्याह—क्वच मृषेति । क्व मृषा न क्वापि कार्यं मृषा तत्रापि स्वप्नपदार्थानां तत्तत्पुरुषानुभाव्यानां तत्तत्कालावसानानामामीश्वरसृष्टत्वान्न व्यभिचारः तथाच श्रीभाष्ये स्वप्नविषया श्रुतिः न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते इत्यादि स हि कर्तेत्यन्तं श्रीभाष्यकारैरुपन्यस्य यद्यपि सकलेतरपुरुषानुभाव्यतया तदानीं न भवन्त्यथापि तत्तत्पुरुषमात्रानुभाव्यतया तथाविधार्थानीश्वरः सृजते सहि कर्ता तस्य सत्यसङ्कल्पस्याश्चर्यशक्तेस्तथाविधं कर्तृत्वं सम्भवतीत्यर्थः य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चनेति सूत्रकारोपि सन्ध्ये सृष्टिराह हि निर्मातारं चैके पुत्रादयश्चेति सूत्रद्वयेन स्वप्नेष्वर्थेषु जीवस्य स्रष्टृत्वमाशङ्क्य मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादित्यादिना न जीवस्य सङ्कल्पमात्रेण स्रष्टृत्वमुपपद्यते जीवस्य स्वाभाविकसत्यसङ्कल्पत्वादेः कृत्स्नस्य संसारदशायामनभिव्यक्तस्वरूपत्वादीश्वरस्यैव तत्तत्पुरुषानुभाव्यतया आश्चर्यभूता सृष्टिरियं तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चनेति परमात्मैव स्रष्टेत्यवगम्यते इति निपुणतरं व्याख्यातमिति किञ्च यदि जीवः स्वाप्नपदार्थानां स्रष्टा तर्हि शुभानामेवार्थानां स्रष्टा भवेन्नाशुभानामिति अत ईश्वर एव स्रष्टेति न त्वीश्वरसृष्टं मिथ्येति वक्तुं शक्यत इति शुक्तिरजतादावपि न स्वरूपेण मिथ्यात्वं पञ्चीकरणप्रक्रियया तत्रापि तेजोंशस्य विद्यमानत्वात् यथार्थं सर्वविज्ञानमिति वेदविदां मतमिति सर्वविज्ञानस्याभियुक्तैः सत्यत्वप्रतिपादनाच्च ज्ञानस्य सत्यत्वे तद्विषयस्यापि सत्यत्वमवश्यमेवाङ्गीकार्यमिति. तथा च वैष्णवे पुराणे ——

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् ।
आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥ इति

सनत्कुमारसंहितायामपि "तस्माद्ब्रह्मस्य रूपोऽयं सत्यं सत्यमिदं जगत्" इति किञ्च तत्त्वनिर्णयेपि निरस्तशेषविशेषप्रत्यङ्चिन्मात्रं ब्रह्मैव परमार्थभूतं तदतिरेकिनानाविधज्ञातृज्ञेयतत्कृतज्ञानादि सर्वं तस्मिन्नेव परिकल्पितं मिथ्याभूतं सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्मेत्यादिश्रुतिभिश्चिन्मात्रं ब्रह्मैव सत्यं, तदन्यत्सर्वं मिथ्येत्यभिधानात्कूटस्थनित्यचैतन्यमात्रं ब्रह्मैवानाद्यविद्यया तिरोहितं स्वगतनानात्वं पश्यतीति चेत्तदसत् नित्यमुक्ताखण्डैकरसस्य प्रकाशमात्रस्वरूपस्य निरंशस्य तिरोधानासम्भवात् प्रकाशपर्यायस्य ज्ञानस्य तिरोधाने स्वरूपनाशप्रसङ्गः तिरोधाने नाम वस्तुस्वरूपे विद्यमाने तत्प्रकाशनिवृत्तिः प्रकाश एव वस्तु स्वरूपमित्यङ्गीकारे तिरोधानाभावः स्वरूपनाशो वा स्यात् न च वाच्यं स्वरूपप्रकाशस्य नित्यत्वेपि तद्विशेषमात्रमविद्यातिरोहितमिति विकल्पासहत्वात् तद्विशेषः किं स्वरूपादनतिरिक्तो वा अनतिरिक्तत्वे प्रागुक्तदोषतादवस्थ्यमेव अतिरिक्तत्वे सविशेषत्वप्रसङ्ग इत्यादिना स विस्तरं प्रपञ्चितमिति अतः सदेवेत्यादि श्रुतेरयमर्थः इदं विभक्तनामरूपबहुत्वावस्थापन्नं जगदग्रे सृष्टेः प्रागेकमेवाविभक्तनामरूपतया एकत्वावस्थापन्नमेवाद्वितीयम् अधिष्ठानान्तरशून्यं च सदेवासीदित्यर्थः । मूलमनाधारमित्यादिभिरैक्यार्थात् एवमेव श्रीभाष्ये श्रीभाष्यकारैरयमर्थो निर्णीतः तथाहि सर्वदा चिदचिद्वस्तुशरीरतया तत्प्रकारं ब्रह्म तत्कदाचित्स्वस्माद्विभक्तनामरूपव्यपदेशानर्हातिसूक्ष्मदशापन्नचिदचिद्वस्तुशरीरं तिष्ठति तत्कारणावस्थं ब्रह्म कदाचिच्च विभक्तनामरूपस्थूलचिदचिद्वस्तुशरीरं तच्च कार्यावस्थं तत्र कारणावस्थस्य कार्यावस्थापत्तावचिदंशस्य कारणावस्थायां शब्दादिविहीनस्य भोग्यत्वाय शब्दादिमत्तया स्वरूपान्यथाभावरूपविकारो भवति चिदंशस्य च कर्मविशेषफलभोक्तृत्वाय तदनुरूपज्ञानविकासरूपविकारो भवति उभयप्रकारविशिष्टे नियन्त्रंशे तदवस्थतदुभयविशिष्टतारूपविकारो भवति कारणावस्थायाः अवस्थान्तरापत्तिरूपो विकारः प्रकारद्वये प्रकारिणि च समानः अत एकस्यावस्थान्तरापत्तिरूपविकारापेक्षया येनाश्रुतं श्रुतमित्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय मृदादिदृष्टान्तो यथा सौम्येकेनेत्यादिना निदर्शित इति सिद्धान्तितमिति न च कार्यावस्थे ब्रह्मणि तदवस्थारूपविकारप्रसङ्गः प्रकारभूतचिदचिद्वस्तुगतत्वादपुरुषार्थस्वरूपपरिणामादेः ब्रह्म तु स्थूलसूक्ष्मावस्थचिदचिद्वस्तुशरीरं कार्यकारणोभयावस्थावस्थितमपि सर्वदा निरस्तनिखिलदोषगन्धं सत्यसङ्कल्पत्वादिकल्याणगुणाकरमेवावतिष्ठते यथा मनुष्यशरीरस्य बालत्वादयः शरीर एव तिष्ठन्ति ननु शरीरिणि आत्मनि तद्वदिति निरवद्यमिति इदानीमुत्पत्तिवैधर्म्यं परिहरति न तथाभययुगिति व्यभिचरतीत्यनुषङ्गः क्वचिदपि मृत्सुवर्णादिद्रव्ये उभयावस्थादर्शनं न व्यभिचरति कारणत्वकार्यत्वरूपावस्था यदेव मृत्सुवर्णादिकं दृश्यते । अतः सतो वस्त्वन्तरप्राप्तिः सफलेत्यर्थः । तर्ह्यवस्थाविकल्पः किमर्थमिति चेत् तत्कार्यकारणाद्यर्थव्यवहृतये अवस्थाविकल्प इषितः इष्टः अतः कार्यमिथ्यात्वविषया त्वद्भारती अन्धपरम्परयाऽऽगता अन्धपरम्परा अज्ञाकारकर्मपरा ज्ञकर्मजडान् कर्मजडान् अतत्त्वविदो भ्रमयन्ति तथा च पाद्मे शङ्करेणोक्तं पार्वतीं प्रति—

" मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते ।
मयैव कथितं देवि कलौ ब्राह्मणरूपिणा ॥
अपार्थं श्रुतिवाक्यानां दर्शयन् लोकगर्हितम् ।
कर्मस्वरूपत्याज्यत्वमत्र वै प्रतिपाद्यते ॥
सर्वकर्मपरिभ्रष्टं वैकर्म्यं तदुच्यते ।
परेशजीवयोरैक्यं मयाऽत्र प्रतिपाद्यते ॥
ब्रह्मणोऽस्य परं रूपं निर्गुणं वक्ष्यते मया ।
सर्वस्य जगतोऽप्यत्र मोहनार्थं कलौ युगे ॥
अपार्थं वै महाशास्त्रं मायावादमवैदिकम् ।
मयैव वक्ष्यते देवि जगतां नाशकारणात् ॥" इति

अतस्तत्प्रामाणिकैर्निःश्रेयसार्थिभिरनादरणीयमित्यलमतिपल्लवितेनेति ॥ ३८ ॥

---

योगिरामानुजाचार्यकृतसरलाव्याख्या ।

गृहस्थाश्रमसाधनीभूतकर्मणः उपादेयत्वं कथं वा नादृशकर्मोपयोगिगार्हस्थ्यस्य चोपादेयत्वं तथा च श्रुतिः "न कर्मणा न प्रजया धनेन त्यागेनैकेनामृतत्वमानशुः इति एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते इति भगवद्वचनाच्च तस्मात् सर्वेषामपि कर्मणाम् भूर्भुवादिलोकप्राप्तेरेव फलत्वात् जगतः असद्रूपत्वे स्थापिते तत्साधनीभूतकर्मणः असद्रूपत्वं स्वयमेव सिध्यतीति जगतः असद्रूपत्वमस्मिन् श्लोके निरूप्यते तत्र च जगतः सत्यत्ववादी पूर्वपक्षी तदुक्तः जगतः सत्यत्वस्थापकानुमानप्रयोगः सत इदमुत्थितं सदितीत्यन्तं तदुपरि तत्खण्डनपूर्वकं जगतः असद्रूपत्वनिरूपणमिति अस्य श्लोकस्य इयमेव सङ्गतिः परमरमणीया सतः इति इदमिति विश्वं पक्षः सदिति सत्स्वरूपस्साध्यः सतः सद्रूपात् विश्वं पक्षः सदिति सत्यरूपधर्मस्साध्यः सतः इति इदमिति ईश्वरसकाशात् उत्थितमुत्पन्नं तथा च सतः उत्पन्नत्वादिति हेतुः इति चेत् एवं वदसि चेदित्यन्तं पूर्वपक्षयुपन्यस्तअनुमानप्रयोगानुवादः तर्कहतमित्यनेन तत्खण्डनं ननु इति आक्षेपे तर्कहतं तर्केण त्वदुक्तानुमाननिरासकेन प्रतिकूलतर्केण हतं निरस्तम् अतः त्वदुक्तमनुमानमसङ्गतमिति भावः तर्कश्च युक्तायुक्तविचारणरूपः स चैवम्विधः कार्यकारणयोर्विजातीयत्वस्य बहुशो दृश्यमानत्वात् सतः उत्पन्नत्वरूपहेतुरस्तु सत्त्वरूपसाध्यं मास्तु इति प्रतिकूलशङ्काजनकस्तर्कः तादृशतर्केण हतमित्युक्तं तादृशशङ्कानिवर्तकस्य अनुकूलतर्कस्य वास्तविकस्याभावात् हतं त्वदुक्तानुमानमित्यर्थः कार्यकारणयोर्विजातीयत्वं च गोमयवृश्चिकादिषु प्रसिद्धम् अचेतनात् गोमयात् सचेतनं वृश्चिकमुत्पद्यते तथा सचेतनात् शरीरात् अचेतनानि नखदन्तरोमाणि उत्पद्यन्ते अतः कार्यकारणयोः समजातीयत्वनियमो नास्तीति भावः दोषान्तरमाह व्यभिचरतीति व्यभिचरति त्वदुक्तः सदुत्पन्नत्वहेतुः सत्त्वाभाववत्पदार्थेषु तिष्ठति कुत्र व्यभिचरतीत्यत्राह—क्वचकचेति । तत्र तत्र बहुषु स्थलेष्वित्यर्थः व्यभिचारदृष्टान्तो यथा सतः अङ्गराजात् असत् वेनः उत्पन्नः सतः श्रीकृष्णात् असद्रूपाः यादवाः उत्पन्नाः भूभारत्वेन तेषां प्रतिपादितत्वात् सद्रूपात्

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

न मत्तोन्य ईश्वरश्चेतनत्वादित्यादितर्कैर्वदन्ति वृथा तस्मात् कुतः सर्वात्मना एतदपि वचनं भगवत्प्रेरणयेत्यवगन्तव्यं तर्हि तर्कः प्रामाणिकः स्यादिति तत्राह नन्विति तर्कोऽव्यभिचरन्ति नन्वित्यन्वयः अत्र व्यभिचारित्वं पक्षधर्मत्वादिलक्षणाभावः तथा हि विशिष्टपक्षीकारस्य सिद्धान्तविरुद्धत्वादनुपपत्तिः निर्विशेषेश्वरपक्षीकारे हेतोरसिद्धिरित्यादिदूषणमुपेक्ष्याचार्यैः कालात्ययापदिष्टत्वं प्रादर्शि वेदोक्तो जीवव्यतिरिक्तेश्वरो न तर्कैरपनेतुं शक्यः यतस्तर्कोऽव्यभिचारिण इति "अनश्नन्नन्यो अभिचाकशीति" इति श्रुतेः जीवेश्वरौ विरुद्धधर्माक्रान्तत्वेन भिन्नौ छायातपवदित्यादेश्च दूषणान्तरमाह क्वचिदिति अभेदस्य सिद्धावसिद्धौ च तर्कस्य विशेषाभावादकत्वेनाप्रयोजकत्वात् अपिपासोः पयःपानवत् भोजनस्येष्टसाधनत्वतर्कोऽव्यभिचरितादौ व्यभिचारित्वेन व्यर्थश्च सर्वशरीरसमवेतसुखदुःखानुसन्धातृत्वेन कायपरिमाणो जीव इति क्षपणकदर्शनपरिकल्पिततर्कोऽपि —कुर्वेव अणुशरीरस्थस्य कर्मादिवशाद्धस्त्यादिशरीरप्राप्तौ विकारित्वापत्तेः ननु तर्हि तर्केभ्यः किं प्रयोजनमत्राह तत इति यतो दुष्टात्मनोभयदग्व्यवहितये भयदुष्टानां बुद्धिव्यवधानाय तर्का भवन्ति नतु धीराणां विदुषां ननु किमिति प्रवृत्ता इति तत्राह विकल्प इति विर्निषेधे पृथग्भावे इतिवचनात् विकल्पो वेदविरुद्धकल्पना जगतो मिथ्यात्वं जीवस्य ब्रह्मणोऽभेदो जगत् क्षणिकं षड्गुण ईश्वर इत्यादिलक्षणान्धपरम्परयैवान्वहमुषितः प्रवर्तितः "अन्धेनैव नीयमाना यथान्धाः" इतिश्रुतिः अन्धपरम्परायाश्च कोऽवलम्ब इति तत्राह भ्रमतीति भारती वेदवाणी च भ्रमति बहुधा वक्ति तात्पर्यार्थावबोधाकुशलानन्धानुद्दिश्येतिशेषः। इति यस्मात्तस्मादन्धपरम्परा—

> बह्वाक्तिरन्यथा ज्ञप्तिः परिवृत्तिश्च कथ्यते।
> भ्राम इत्येव विद्वद्भिस्तथा चङ्क्रमणं क्वचित्॥

इत्यतो भ्रमस्य बह्वाक्तित्वं सिद्धं वेदस्य बहुधोक्तेः किं कारणमत्राह तयोर्विति उरुशब्देनानन्तत्वं वृत्तिशब्देन गुणकर्माणि विवक्ष्यन्ते भवतो गुणकर्मणामनन्तत्वात्तानिवक्तुमूढजवा त्वरावती वेदवाणी अतो वेदेऽपि बहुधा वचनात्तदर्थनिर्णयशक्त्यभावात् योग्यतावशाद्विपरीतप्रतीतेश्च विरुद्धकल्पनायुक्ताऽन्धपरम्परयाऽसुराणाम्॥ २३—३७॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

एवं तीर्थमहिमश्रुतीरपि सन्महिमप्रतिपादकेषु स्वेषु पर्यवसाययन्ति श्रुतयश्च। भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे। नमः परमर्षिभ्यो नमः परमर्षिभ्य इत्याद्याः। ननु कथमाद्यानां पुरुषसारत्वं विश्वस्य सच्चिदानन्दघनात् त्वत्त उत्थितत्वेन सर्वतद्विकारवत्तदेकरूपत्वात्। तदुत्थितत्वञ्च श्रूयते। यतो वा इमानि भूतानि जायन्ते इत्यादौ अतो नारोपितत्वमपि मन्तव्यं जनधातोः विवर्ते प्रयोगासिद्धेः। यदि वा गौणीवृत्तिमारोप्य युक्त्यन्तरेण मन्यते तदा विवर्तवादेऽद्वैतमात्रस्य मिथ्यात्वात् पद्माम्बुजह्वदिति न घटते तस्यापि हेयत्वापातात् तस्य तु भावादप्यभिकपुरुषार्थत्वमुक्तं न परिचक्षन्ति केचिदित्यादौ ततो युक्त्यन्तरं चावश्यं हेयं। तदेतदाशङ्क्य न तदेकरूपत्वं नचारोपितत्वं किन्तु नश्वरादिरूपत्वमिति वदन्त्यः पूर्वोक्तमेव तेषामपि दर्शयन्ति सत इदमुत्थितम्॥ ३६॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

नन्वर्थवादोऽयं यत् भवचरणसुहृदोघभिञ्जलाइति नैवमित्याहुः सत इदमुत्थितमित्यादि इदं भगवद्भक्तमाहात्म्यं सतः सत्यात् त्वत्तः सकाशादेव उत्थितं त्वन्महिम्नैव तेषां महिमा अतः सत् इति मतं चेत् चेतयतीति तथा सर्वा एव न प्रबोधयति नु भो भगवन् तर्कहतं यो यद्भक्तः स एव सनातनोवेदमर्षयेदिति सतर्कः तथातेनैव प्रकारेण क्वच न व्यभिचरति क्वच कुत्रापि मतेन मृषा नकार उभयत्र योज्यः उभययुक् उभयं भेदाभेदौ तद्युनक्तीति तथा उपासकत्वेन भेदः महिम्ना अभेदः तत्र ये विकल्पयन्ति ते अन्धाः एवेत्याहुः—व्यवहृतय इत्यादि। अन्धपरम्परया हि विकल्प इषितः इष्टः किमर्थं व्यवहृतये व्यवहाराय व्यवहारं दृष्टुमित्यर्थः। उपास्योपासकभाव एव व्यवहारः कथं ते विकल्पयन्ति भवत्य इव भजनमाहात्म्यं कथं नानुवदन्तीत्याहु—भ्रमयतीत्यादि। ते तव भारती उरुशक्तिभिर्विशिष्टा उकूथजडान् तान् भ्रमयति कर्मश्रद्धावतस्तु तव भक्ता न तथाद्रियन्ते तेन त एव विकल्पयन्तीति भावः। तेतु कर्मप्रतिपादिकया तव भारत्यैव भ्रान्ताः॥ ३६॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं सर्वप्रकारैः भगवद्भजनं निरूप्य सम्यङ्मार्गानुसारेण स्थिरीकृत्य भजनीयनिर्धारार्थं यतमानाः सच्चिदानन्दो भगवान् भजनीय इतिवक्तुं लोके सच्चिदानन्दा एकत्र न सन्तीति किं वक्तव्यं प्रत्येकमपि कश्चिदपि धर्मो न सन्तीति कथनार्थं षड्भिः श्लोकैर्द्वाभ्यामेकैकस्य लोके ज सत्त्वं चेतनेऽचित्वं स्वर्गादावानन्दत्वं च नास्तीति नि कुर्वन्ति तत्र प्रथमं द्वाभ्यां जगति सत्त्वं निराक्रियते अन्यथा भगवानेव सच्चिस्थर्यो नोपपद्येत भजनीयनिर्धारे गौणस्य स्याप्रयोजकत्वात् ज्ञानार्थं दोषाभावार्थं वा तदुपयोगः असत्सेवया पूर्वं नाशो निरूपितः सत्सेवया कृतार्थता च यदि जगत्यपि सत्त्वं स्यात् तदा तत्रापि भजनं भवेत् भजने वा दोषो न स्यादिति तदवश्यं निराकर्तव्यं तत्र जगतः ये सत्त्वं वदन्ति तन्मतं वादमुद्रया निराकुर्वन्ति नन्वेवं संशयः यदस्य जगतः सत्त्वमुच्यते तत्किं प्रतीत्यनुरोधात् आहोस्वित् व्यवच्छापकं कारणमस्ति आहोस्वित् प्रमाणमस्तीति आशङ्क्य निराकुर्वन्ति प्रथमतः कारणवादस्य सत्त्वमिति पक्षो निराक्रियते तदा जगतः सत्त्वं अनुमानात्सत्त्वमिति तत्र पूर्वपक्षे अनुमानं इदं जगत् सदेव सत उत्पन्नत्वात् यो यादृशादुत्पद्यते स तादृश एव भवति यथा सुवर्णादुत्पन्नं कुण्डलं सुवर्णमेव भवति तथा ब्रह्मणोऽप्युत्पन्नं सदसदेव कथमसतः सज्जायेतेति श्रुत्या सतः कारणत्वं

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

मपि सदेव भवतीति निरूपितं तद्दूषयति इति चेन्नेति दूषणे प्रमाणं दूषणमाह—नु इति। वितर्के अनेन तर्कबाध उक्तः यतः पूर्वपक्षिणापि व्याप्तिबलं प्राप्तेन तर्केणैव पदार्थो निर्णीयते तर्कः शङ्कावधिरिति तदेवाह—तर्कहतमिति। अयमर्थः यज्जगति सत्त्वं साध्यते तत्किं कारणसत्त्वमेव कार्ये समायातीत्युच्यते आहोस्विदारम्भन्यायेन कार्ये सत्त्वान्तरं जन्यते तत्र नाद्यः पक्षः साधीयान् यतस्तर्केण हन्यते यदि कारणसत्त्वं कार्ये समागच्छेत् कारणमसत्स्यात् स्वनाशे आशङ्कमाने कार्यमपि न जनयेत् अतः स्वसत्त्वनाशशङ्कया भगवान् जगदपि न कुर्यात् नापि सत्त्वलक्षणो गुणः कश्चित् कारणे स्थितः कार्ये समागत इति आवयोः सम्प्रतिपत्तिरस्ति तस्माद्बहुतर्कपराहतत्वात् न कारणसत्त्वं कार्ये समायातीत्यर्थः अथ द्वितीयः पक्षः सत्त्वान्तरमारभ्य इति तदप्यसत् व्यभिचारित्वात् सतोप्यङ्कुरादेः असन्नेव जातः न च वक्तव्यं तत्रासन्दशः सङ्क्रान्ते स्थित इति तथासति तावन्मात्रमेव कार्येप्यसत्स्यात् ननु स्वभावादिः अतिरिक्तोपि ननु बीजे स एव सङ्क्रान्त इति चेत्तर्हि ततः पृथगाविर्भावो न स्यात् तस्मात्कार्यकारणयोर्वैलक्षण्यात् न कारणसत्त्वेन नियमेन कार्यसत्त्वमुत्पाद्यते ननु न कारणमात्रं कार्ये सत्त्वमुत्पादयति किन्तु समवायिकारणमेव बीजन्तु निमित्तकारणं तत्र योनिदोषगुणभूतमपि बलवता दोषेण तिरोहितं। समवायिकारणन्तु तदावयवा भिन्ना एवेति न व्यभिचार इति चेत्तत्राह—क्व च मृषेति शुक्तिकायां भ्रान्तप्रतिपन्नं रजतमुत्पद्यते शुक्तिकायाः सत्त्वेपि न तत्सत्यं भवति शुक्तिकाश्रयत्वात्तद्रजतस्य शुक्तिकैव समवायिकारणं तस्माद्व्यभिचारः सिद्धः ननु न केवला शुक्तिस्तत्रोपादानं किन्तु दोषसहिता चाकचक्यादिदोषाद्विशेषादर्शनसहकृताद्रजतं जायते न तु केवलाश्रयत्वात् ननु तथापि एकांशेन रजतं सत्यं स्यात् न तु सर्वथा असत्यं तदाह नेति ननु सन्दंशो दोषवशात्तत्र तिरोहित इति चेत्तर्हि प्रकृतेपि तथा प्रतीयतां मनोदोषेण जगदन्यथा प्रतीयत इति अन्यथा जगत् सच्चिदानन्दरूपेण कथं न भासेत किञ्च न केवलं ब्रह्मकारणवाद एव सर्वत्र वक्तव्यः किन्तु प्रकृतिपुरुषकारणवादोपि अत उभययोगाज्जगत् सदसदात्मकं न केवलं सदित्यर्थः। एवं हेतुं स्वरूपासिद्ध्याव्यवहारेण च दूषयित्वा हेत्वन्तरमाशङ्क्य निराकुर्वन्ति—व्यवहृतये विकल्प इषित इति। इदं जगत्सत् सत्त्वेन प्रतीयमानत्वात् ब्रह्मवदित्यनुमानं तदपि दूषयन्ति अयं विकल्पो विशिष्टकल्पना जगतः सत्त्वरूपा प्रातीतिकी न तु परमार्थरूपा व्यवहारमात्रत्वेनापि प्रतीतिसिद्धौ वास्तवसत्यत्वकल्पनायां प्रयोजनाभावात् नन्वनादिरयं संसारः सर्वेषाञ्चात्र सद्बुद्धिः अतो ज्ञायते सदेवेति तत्राह—अन्धपरम्परयेति। अन्धपरम्परापि परम्परा न चात्र चक्षुष्मत्परम्परेति प्रमाणमस्ति प्रत्युत महतां बुद्ध्या असदेवेदमित्याभासते ननु वेदानुरोधाज्जगतः सत्त्वमङ्गीक्रियते तत्राह भ्रमयति भारतीति भारती वेदरूपा त्वदीया वाणी उक्थपरान् कर्मजडान् भ्रामयति भ्रामणप्रकारस्तु द्वितीयस्कन्धे निरूपितः वेदोपि ब्रह्मगतमेव सर्वमाह लोकः परं भ्राम्यति जगद्गतमिति क्रियासक्ताः पदार्थान् न विचारयन्तीति उक्थजडा उक्ताः ॥ २६ ॥

सद्बुध्या सर्वथा सच्चिन्नं सेव्यमखिलं जगत् ॥
भ्रान्त्या सद्बुद्धिरत्रेति सन्तं कृष्णं भजेद्बुधः ॥ २३ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

नन्वावमथानां पुरुषसारहरत्वसारप्रवृत्त्याऽर्णां के इमे मिन्द्यास्तुती न हि मरीचिकाजलमिदं विरसं सुरसं मेत्युच्यम इत्यसत्कार्य्यवादिमताश्रयिणीभिः श्रुतिभिः सह सत्कार्य्यवादिमताश्रयिण्यः श्रुतयः सम्वदन्ते सत इति। इदं विश्वं सत उत्थितमिति सत् ननु स्वतः सत् यथा कारणगतमेव सत्त्वं स नघट इत्यत्र घटनिष्ठतया भासते तद्वदित्यर्थः। तत्र सतः कारणस्य कार्य्याभेदः साध्यते यदि तदा अपादाननिर्देशेनैव भेदप्रतीतेर्विरुद्धो हेतुरित्यत आह—ननु तर्कहतमिति चिज्जडयोरभेदस्य सर्वप्रमाणबाधितत्वादिति भावः। ननु नाभेदं साधयामः किन्तु तदुत्पन्नत्वेन कुण्डलादिवत्सत्त्वं प्रतिषेधामः नहि कारणसत्तातिरिक्ता कापि कार्य्यस्य सत्तेत्यत आह—व्यभिचरति क्व च मृषेति पितृपुत्रादिषु भेदस्यैव दर्शनात् ननु यथा शुक्तिसत्तातिरिक्तसत्ताकरूप्यस्य नास्ति तथा अधिष्ठानरूपपरमेश्वरसत्तातिरिक्ता सत्ता प्रपञ्चस्य नास्तीत्यत आह—नेति। यथा शुक्तिरूप्यादि मृषा तथेदं विश्वं मृषा न भवति किन्तु सत्यम् उभययुक् कारणकार्ययोरुभयस्मिन् युज्यत इत्युभययुक् तत् सत्यमिति श्रुत्युक्तं सत्यम् उभयत्राहनीत्यर्थः किन्तु कारणस्य सत्त्वं सार्वकालिकं कार्यस्य सत्त्वं कैश्चित्कालिकं तथा दृष्टेरिति। कार्य्यस्य सत्यत्वं विना व्यवहारोपि न सिध्यतीत्याह व्यवहृतये व्यवहारसिद्ध्यर्थं विकल्पः कार्यम इषित इष्टः स च सत्य एव सत्येनैव घटादिना व्यवहरणादिसिद्धेः असता घटादिना जलाहरणाद्यसिद्धेः ननु कूटकार्षापणादिनापि व्यवहारसिद्धिर्दृश्यत इत्यत आह अन्धपरम्परयेति सा सिद्धिरन्धपरम्परयैव न तु विज्ञपरम्परया न हि भ्रान्तानामिव विज्ञानां कूटकार्षापणाद्यैः क्रयविक्रयादिव्यवहारः सिध्यति न च तैरसायनप्रयोगः नापि पुण्यार्थिनां तद्दानादिकं सम्भवेत् तस्माज्जगदिदं सत्यमेव विज्ञानां नान्दस्नात्रयादीनामप्यर्थक्रियाकारित्वात् न यदेवं न तदेवं यथा शुक्तिरजतमित्यनुमानेनैव जगत् सत्यमेव किन्तु नश्वरत्वादनित्यं यत्तु कर्मिभिः अपाम सोमममृता अभूम इत्यादिभिर्वेदवाक्यैः कर्मफलस्य नित्यत्वप्रतिपादनात् नित्यमेव न कदाचिदनीदृशं जगदिति ब्रुवते सृष्टिप्रलयौ च न मन्यन्ते तन्मतमसदित्याहुः भ्रमयतीति हे भगवन्! तव भारती वेदलक्षणा उरुवृत्तिभिर्बह्वीभिर्मुख्यलक्षणादिवृत्तिभिरुक्थजडान् कर्मश्रद्धाजाड्याक्रान्तमतीन् भ्रमयति मोहयति अयं भावः न हि वेदः कर्मफलस्य नित्यत्वमभिप्रैति किन्तु लक्षणया प्राशस्त्यमात्रं विध्येकवाक्यत्वात् अन्यथा वाक्यभेदप्रसङ्गात् तत् यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते इति न्यायोपबृंहितश्रुत्यन्तरविरोधाच्च अतः कर्मजडानामिदं भ्रममात्रमिति अत्र श्रुतयः "यथोर्णनाभिः सृजते यथा पृथिव्यामोषधयः सम्भवन्ति यथा सतः पुरुषात् केशलोमानि तथाक्षरात् सम्भवतीह विश्वम्" इत्याद्याः प्रमाणवचनाद्दार्ष्टान्तिकत्व

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

कारणस्य निष्पत्तं कार्यस्यतु सत्यत्वमेव नतु मिथ्यात्वं नापि नित्यत्वमिति वैष्णवानां मतमेवोक्तं श्रुतिभिः ॥ ३९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तदेवं पूर्वोक्तं श्रुतिवाक्यानां सिद्धान्तं स्वोत्प्रेक्षिततर्कबलेनान्यथाकल्पमानानां वादनिरसनपूर्वकं निर्णीयते इदं जगत् सत् कुतः सत् उत्थितं सतो ब्रह्मण उत्थितत्वात् सत् कार्यंत्वात् कटककुण्डलादिवदितिसिद्धान्तः तथाचोक्तं नहि विकृतिं त्यजन्ति कनकस्यतदात्मतया किन्तु सदभिमृशन्ति इत्यादिना सदेव सौम्येदमग्र आसीत् तदैक्षत बहुस्यां प्रजायेय सोऽसृजत नारायणाज्जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी नारायणात् ब्रह्मा जायते नारायणात् रुद्रो जायते नारायणात् द्वादशादित्याः "इत्यादिश्रुतेः—

"अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ॥

इत्यादिस्मृतेश्च वैदिकसिद्धान्तमसहमानः शङ्कते ननु तर्कहतमिति चेदिति यदि सेश्वरं जगत् मिथ्या न स्यात्तर्ह्यद्वैतसिद्धान्तभङ्गप्रसङ्गः स्यादित्यादिभिस्तर्कैर्हतमिति चेत्तत्राह— क्वच क्वच व्यभिचरतीति तर्कस्य तर्कैरेव यत्र तत्र व्यभिचरितत्वात् तथा हि अर्थापत्तिप्रमाणकब्रह्माद्वैतविषयकोयं भवतां सिद्धान्तः सत्यो मिथ्या वा सत्ये द्वैतापत्तिः अन्त्ये सिद्धान्तबाधेन जगतः सत्यत्वं अपिच पूर्वोक्तसिद्धान्ते किं प्रमाणं शास्त्रमिति चेत्प्रमाणरूपं शास्त्रं सत्यं वा मिथ्या वा आद्ये ऽद्वैतप्रतिज्ञाभङ्गः द्वितीये च सम्प्रदायस्य तत्प्रवर्तकाचार्याणाञ्च सत्यत्वं मिथ्यात्वं वा प्रथमे द्वैतापत्तिः अन्त्ये सिद्धान्तस्य शशशृङ्गताडनोपमानत्वं यथा शशशृङ्गस्य मिथ्यात्वेन तत्ताडनस्य सुतरां तत्ता तथा प्रवर्तकानां मिथ्यात्वेन तत्प्रवर्त्यत्वेन तेषां सिद्धान्तस्य सुतरां तत्तुल्यतेति ननु व्यवहारे सर्वमस्माभिरभ्युपगम्यते व्यवहारस्याविद्याकल्पितत्वेन तन्निवृत्त्याऽद्वैतसिद्धौ न कापि हानिरिति चेत् तत्र पृच्छ्यते भवतां मते ऽविद्याकृतद्वैताभ्युपगमेऽविद्याया ब्रह्मणोऽभिन्नत्वं भिन्नत्वं वा आद्ये ब्रह्मणोऽविद्यावत्त्वे सति तद्रूपत्वात् मोक्षेप्यविद्यानिवृत्तिर्न स्यात् द्वितीये द्वैतापत्तिर्दुर्वारा उभयथापि पाशारज्जुरित्यलं तर्कैः किञ्च तर्काणां शास्त्रादपि व्यभिचारः प्रसिद्धः तथाहि नैषा मतिस्तर्केणापनेया इत्यादिश्रुतेः तर्काप्रतिष्ठानात् इति पारमार्षसूत्रात् अचिन्त्याः खलु ये भावा नतांस्तर्केण योजयेत् इत्यौषधरूपमनुवचनाच्च अस्माकं तु वैदिकानां न तथेत्याहुः न तथोभययुङ्मृषा उभययुक् श्रुतिस्मृतियुक्तः सिद्धान्तस्तथा मृषा न स्यात् यथा तर्कस्य मृषात्वं तथा न वैदिकस्येति भावः तथा च श्रुतिः "यथोर्णनाभिः सृजते गृह्णते च यथासतः पुरुषात्केशलोमानि यथा पृथिव्या ओषधयः सम्भवन्ति तथाक्षरात्सम्भवतीह विश्वं सन्मूलाः सौम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा इति ननु जगतः सत्कार्यत्वं भवतु परन्तु कार्यस्य सत्यत्वे किं प्रमाणमिति चेत् श्रुतिस्मृती एवास्माकं प्रमाणं तथाहि ऊर्ध्वमूलोवाक्शाख एषोश्वत्थस्सनातनः इति श्रुतेः ऊर्ध्वमूलमधश्शाखमश्वत्थं प्राहुरव्ययम इति भगवदुक्तेश्च ननु सनातनाऽव्ययपदयोरनादिवाचकत्वेनाविद्यादेरनादित्वमभीष्टमेव तथाचानादिसान्तत्वं तल्लक्षणमस्माभिः प्रतिपाद्यत एवेति चेत्तथा सति अनाद्यविद्यादेर्भावत्वमप्यकामेनापि त्वया स्वीकार्य्यं प्राप्तं एवञ्च तन्नाशे न कापि निगमना ननु प्रागभावदृष्टान्तेनानुमानस्यैवानादिसान्तत्वे निगमनास्त्विति चेन्न प्रागभावस्याभावरूपत्वेन भावसाधनदृष्टान्तविकलत्वात् अलं विस्तरेण अन्यत्र स्पष्टं कण्ठरवेण वक्ति श्रुतिः अथैनमाहुः सत्यकर्मेति सत्यं ह्येवेदं विश्वमसौ सृजते अथैनमाहुः नित्यकर्मेति नित्यं ह्येवायं कुरुते इत्यादिः ननु अत्यन्तप्रसिद्धतमस्य कथं प्रलापः क्रियते तत्राहुः व्यवहृतये विकल्प इषित इतिअज्ञानाशास्त्राचार्यसंस्कारवर्ज्जितानां बुद्धिभ्रंशाय विकल्पः तर्कबलेन विविधनिरीश्वरवादकल्पनया इष्ट एव यथा मन्दचक्षुषां वर्णिजामग्र एव कूटद्रव्यव्यवहारो न शुद्धचक्षुष्मतां तथाऽज्ञानामेव निरीश्वरभ्रंशेन वैदिकसम्प्रदायिनामिति नन्वप्रामाण्यस्य कथं प्रवृत्तिस्तत्राहुः अन्धपरम्परया अन्धपरम्परान्यायेन प्रवृत्तिरिति शेषः तथाच श्रुतिः अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः जङ्घन्यमाना अपियान्तिमूढा अन्धेनीयमाना यथान्धा इति तत्र कारणमाहुः भ्रमयतीति। ते तव भारती उरुवृत्तिभिर्गौणीलक्षणादिभिः स्वोत्प्रेक्षिताभिरुक्थजडान् ईश्वरपराङ्मुखो न निरीश्वरवादिनस्तर्काभिनिवेशेन जडीभूतान् दुराग्रहेणोन्मत्तान् भ्रमयति तव वचोऽपरिज्ञानात्तेषां तदीश्वर्यादौ भ्रान्तिस्तदनुगामिनां सुतरां भ्रम इति भावः ॥ ३९—२३ ॥

---

भाषा टीका ।

इस दृष्टान्त में जो२ मृत्तिका के कार्य्य हैं उनव में केवल मृत्तिका का मात्र हि वर्त्तमान रहती है और घटादि कार्य्य का परस्पर में अभाव होजाता है जैसे एक मृत्तिका से हि घड़ा भया घड़ा का नाश होकर उसी मृत्तिका से सराव भया उस का भी नाश होकर कालान्तर में उसी मृत्तिका से ईट होगई इस वास्ते मृत्तिका तो सर्वत्र वर्त्तमान रहती है और घटिकादि कार्य्य का अभाव होजाता है इस वास्ते मृत्तिका हि सत्य है और घटादि कार्य्य मिथ्या है इसी प्रकार परब्रह्म से उत्पन्न यह प्रपञ्च मिथ्या है क्योंकि कारण स्वरूप, ब्रह्म तो सर्वत्र कार्य्य में एक रूप वर्त्तमान है और प्रपञ्च रूप कार्य्य की उसी अधिष्ठान स्वरूप ब्रह्म में निवृत्ति होती है इस वास्ते ब्रह्म सत्य और जगत् मिथ्या है और सर्वत्र यह भी नियम नहि है कि जो जिस से उत्पन्न होता है वह निज कारण स्वरूप हि होवे जैसे मृत्तिका से उत्पन्न घटादि मृत्तिका स्वरूप होते हैं क्योंकि चेतन पुरुष से उत्पन्न केश नख दन्त अचेतन देखे जाते हैं और अचेतन गोवर से उत्पन्न बिछू चेतन देखे जाते हैं ऐसे२ और भी अनेक दृष्टान्त है इस वास्ते सत्य स्वरूप ब्रह्म से उत्पन्न जगत् को सत्य कहना उपरोक्त तर्क रूप युक्ति से बाधित है अत एव ब्रह्महि सत्य है और ब्रह्म से उत्पन्न जगत्

**न यदिदमग्र आस न भविष्यदतो निधनादनु मितमन्तरा त्वयि विभाति मृषैकरसे।**
**अत उपमीयते द्रविणजातिविकल्पपथैर्वितथमनोविलासमृतमित्यवयन्त्यबुधाः ॥ ३७ ॥**

भाषा टीका।

असत्य है इस मतका आप हि श्रुति खण्डन करती हैं कि सत्य स्वरूप ब्रह्म से उत्पन्न जगत सत्य हि है असत्य नहि क्योंकि मिथ्या का यह स्वरूप है कि जिस देश में जिस काल में जिस का सद्भाव प्रतीत हो उसी देश में उसी काल मे उस का अभाव प्रतीत होजावे तो वह वस्तु मिथ्या होता है जैसे रज्जु देश में रात्रि काल में किसी को इस प्रकार कार का भ्रम भया कि यह सर्प है उसी पुरुष को उसी रज्जु मे उसी रात्रि काल में रज्जु के देखने से यह यथार्थ ज्ञान होता है कि यह रज्जु है सर्प नहि इस प्रकार की प्रतीति होने से सर्प मिथ्या ठहरता है, और दृष्टान्त में मृत्तिका देश और दिन आदि काल में यह प्रतीति होतीहे कि यह घट है फिर उसी मृत्ति कामे और उसी काल में यह प्रतीति नहि होती कि यह घडा नहि किन्तु सर्व दायहि यथार्थ ज्ञान रहता है कियह घडा है. इस वास्ते मृत्तिका और उसी के कार्य्य घटादि वस्तु से वने सत्यहें' क्योंकि वह मृत्तिकाहि जलादि लाने प्रयोजन के वास्ते घटादि नाम रूप वाला होगया है इसी प्रकार प्रलयमें सूक्ष्मचेतनाचेतन विशिष्ट कारण रूप ब्रह्महि सृष्टि काल मे स्थूल चेतनाचेतन विशिष्ट कार्य्य रूपसे परिणत होगया है परन्तु दृष्टान्त से दार्ष्टान्त में इतना विशेष हे कि ब्रह्मका स्वरूप से परिणामनहि किन्तु चेतनाचेतन. द्वारा परिणाम हे' और जोजिस से उत्पन्न होताहे यह कारण स्वरूपहि होताहे यह नियम सर्वत्र देखा जाता है इस का कहूंभी बाध नहि हे' क्योंकि दृष्टान्त मे पुरुष के अचेतन शरीर सेहि अचेतन केश नख दन्तों की उत्पत्ति होती हे चेतन से नहि होती और अचेतन गोवरसे वीछू के अचेतन शरीर की हिउत्पत्ति होती हे चेतन की नहि होती क्योंकि चेतन स्वरूप आत्मानित्य हे उस की उत्पत्ति घटि नहि सकती' इस वास्ते सूक्ष्म चेतनाचेतन विशिष्ट कारण स्वरूप ब्रह्म से उत्पन्न स्थूल चेतनाचेतन विशिष्ट कार्य्य रूप ब्रह्म उक्त कारण स्वरूप ब्रह्महि हे इसी से परमात्मा के लीला आदि व्यवहारों के अर्थ यह प्रपञ्च सत्यस्वरूपहि मान्योगयो हे' परन्तु पुण्य पाप रूप कर्म परवश जडजीवों को अन्धपरम्परा से' आप की वेद रूपा वाणी अनेक प्रकार प्रति पादन शक्ति करके भ्रमाय रहीहे अर्थात् आप की भक्ति शून्य जीवों को वेद के विपरीतहि अर्थ प्रतीत होते हें ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

तदेवं प्रपञ्चस्य सत्त्वे साधकं नास्तीत्युक्तम् इदानीमसत्त्वे सृष्टिप्रलयश्रुतयः 'यतो वा इमानि भूतानि जायन्ते" इत्याद्यास्तन्मूलं चानुमानं प्रमाणमित्याह—न यदिदमिति। यदिदं विश्वमग्रे सृष्टेः पूर्वं न आस नाऽऽसीत् सदेव सोम्येदमग्र आसीत् आत्मा वा इदमेक एवाग्र आसीदित्यादिश्रुतेः न च निधनात्प्रलयादनु अनन्तरं भविष्यद्भविष्यति "नासदासीन्नो सदासीत्तदानीम्" इत्यादि श्रुतेः अतः कारणादन्तरामध्येऽप्येकरसे केवले त्वयि मृषा मिथ्यारूपमेव विभातीति मिथ्या निश्चितम् यत एवमतः श्रुत्या द्रविणजातिविकल्पपथैर्द्रविणजातीनां द्रव्यमात्राणां मृल्लोहकार्ष्णायसरूपाणां विकल्पाः भेदा घटकुण्डलादयस्तेषां पन्थानो मार्गाः प्रकारास्तैरुपमीयते सदृशतया निरूप्यते यथा तत्र कार्याकाराणां नामधेयमात्रताकारणं मृदाद्येव तु सत्यं तथा ऽत्राप्याकाशादीनां नाममात्रता ब्रह्मैव सत्यम् तथाच श्रुतिः 'यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं भवति वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येवसत्यं यथा एकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्याद् यथा एकेन नखनिकृन्तनेन सर्वं कार्ष्णायसम् 'इत्यादि तस्मादस्य सत्त्वे प्रमाणाभावादसत्त्वेप्रमाणस्य विद्यमानत्वाद्वितथमनोविलासमृतं सत्यमिति ये अवयन्ति जानन्ति तेऽबुधाः अज्ञा इत्यर्थः। अत्रैवं प्रयोगः विवादाध्यासितं न सत् आद्यन्तयोरविद्यमानत्वाद्विकारित्वादृश्यत्वाच्च शुक्तिरजतादिवत् इत्यन्वये दृष्टान्तः आत्मवच्चेति व्यतिरेके दृष्टान्तः ॥ ३७ ॥

मुकुटकुण्डलकङ्कणकिङ्किणीपरिणतं कनकं परमार्थतः।
महदहङ्कृतिखप्रमुखं तथा नरहरेर्न परं परमार्थतः ॥ २४॥

---

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी।

साधकं प्रमाणं तन्मूलं ताः श्रुतयो मूलं कारणं यस्य तत्तन्मूलं अनुमानमपि प्रमाणमित्याह—यदः तदानीं प्रलयेऽसत्कारणं महदादि सत्कार्यं पृथिव्यादि अतः कारणादाद्यन्तयोरविद्यमानत्वात् यत एवं मिथ्यारूपत्वेन निश्चितम् अतः तत्र दृष्टान्ते कार्याकाराणां कार्यरूपा ये आकारास्तद्विशेषाः घटादयस्तेषां अत्रापि दार्ष्टान्तिकेपि तथा च कार्यस्य मिथ्यात्वे कारणस्य सत्यत्वे प्रमाणं श्रुतिः विकारो घटादिः यतो वाचैव केवलमारभ्यते व्यवह्रियते तथाभूतं नामैव नाममात्रं मिथ्येत्यर्थः मृत्तिकैव सत्यं वस्तु इति एवमेव सिद्धान्तोऽस्तीत्यर्थः। लोहमणिना सुवर्णपिण्डेन लोहमयं सुवर्णकार्यं कुण्डलादि एतद्वाक्यमनन्तरमुत्तरवाक्यमनन्तरं वाचारम्भणमित्यादिकं च ज्ञेयं किन्तु लोहमित्येव सत्यमिति यथायथं वाक्यशेषो ज्ञेयः अत्र विश्वस्य मिथ्यात्वे एवं प्रयोगः इत्यर्थमनुमानस्योच्चारणं आत्मवच्चेति व्यतिरेके दृष्टान्तव्यतिरेकव्याप्तिश्चेयं साध्याभावे हेत्वभावो व्यतिरेकः यत् सत् इति न किन्तु सत्यमेव तदाद्यन्तयोरविद्यमानं दृश्यं विकारि

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

च न यथात्मेनि कनकमेव मुकुटादिरूपेण परिणतं परमार्थतः कनकमेव यथा तथा महदादिकं कार्यजातं परमार्थतः वस्तुतः नरहरेः परमकारणात्परं भिन्नं नास्ति ॥ ३७ ॥

---

श्रीकविपूडामणिचक्रवर्त्तिकृताऽन्वयबोधिनी ॥

तदेवं प्रपञ्चस्य सत्त्वे साधकं नास्तीत्युक्तम् इदानीं असत्त्वे श्रीदेवपञ्चभूतप्रसम्मूलश्रानुमान प्रमाणमित्याह—न यदिद-मिति । यद्यस्मादिदं विश्वम् अग्रे सृष्टेः पूर्वं नासीत् न च निधनात् प्रलयादनु अनन्तरं भविष्यत् भविष्यति अतः कारणात् अन्तरा मध्येपि एकरसे केवले त्वयि मृषा मिथ्या-रूपमेव विभातीति मितं निश्चितं यतः एवमतः कारणात् बुद्ध्या द्रविणजातिविकल्पपथैरुपमीयते सदृशतया निरूप्यते द्रविणजातीनां द्रव्यमात्राणां मृल्लोहकार्ष्णायसरूपाणां विकल्पाः भेदाः घटकुण्डलनखनिकृन्तनादयः तेषां पन्थानो मार्गाः प्रकारास्तैरुपमीयते विश्वमित्यर्थः यथा तत्र कार्य्याणां घटा-दीनां नामधेयमात्रताकरणं मृदादिकमेव तु सत्यं तथात्रापि आकाशादीनां नाममात्रता ब्रह्मैवतु सत्यमिति तस्मादस्य सत्त्वे प्रमाणाभावात् असत्त्वे प्रमाणस्य विद्यमानत्वात् वितथं मिथ्याभूतं मनोविलासं ऋतं सत्यमिति ये वयन्ति जानन्ति ते अबुधा अज्ञा इत्यर्थः अत्रैवं प्रयोगः विवादा-ध्यासितं न सत् आद्यन्तयोरविद्यमानत्वात् विकारित्वाच्च शुक्तिरजतादिवत् देहे आत्मवच्चेति न यदिदमग्र आसेत्यत्र श्रुतिः "आत्मा वा इदमेक एवाग्र आसीत् नासदासीन्नो सदासीत्तदानी" मिति अर्थः इदं जगदग्रे सृष्टेः पूर्वमात्मैवा-सीत् अखण्डैकरसो जगदधिष्ठानत्वेन वास्तवस्वरूपभूतः पदार्थ एवासीत्तत्तु तत्कार्यभूतं नामरूपात्मकं जगदासी-दित्यर्थः तदानीं प्रलयानन्तरं सृष्टेः पूर्वं असत्कारणं नासीत् सत्कार्यं नो आसीदित्यर्थः द्रविणजातिविकल्पपथैरित्यत्र श्रुतयः "यथा सौम्यैकेन मृत्पिण्डेन विज्ञानेन सर्वं मृन्मयं विज्ञातं भवति वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं तथैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात् वाचारम्भणं विकारोनामधेयं कार्ष्णायसमित्येव सत्यमिति. अर्थश्च हे सौम्य ! यथा एकेन घटादिकारणभूतेन मृत्पिण्डेन विज्ञा-तेन सर्वमन्यत् मृन्मयं कुम्भशरावादिकं विज्ञातं स्यात् कारणानन्यत्वात् कार्यस्य कथं तर्हि लोके इदं कारणमिदं कार्यमिति वदन्ति व्यवहरन्ति चेत् तत्राह—वाचारम्भणमिति वाचारम्भणं वाङ्मात्रं तत्सर्वं नामधेयमेव केवलं नतु विकारो नाम वस्त्वन्तरमस्ति परमार्थतो मृत्तिकैव सत्यं एवमुत्तरत्रापि योज्यं तथा लोहमणिना मणिकारणभूतेन सुवर्णपिण्डेन लोहमयं स्वर्णमयं नखनिकृन्तनेन नखनिकृन्तं न कारणभूतेन कार्ष्णायसपिण्डेन कार्ष्णायसं क्षुरिकादात्रा-दिकं यथाविकारो न सत्कारणं सत्यं तथा विकारस्य प्रपञ्चस्य परमंकारणं ब्रह्ममात्रत्वं सत्यमिति ॥ स्वामिना—

कटककुण्डलकङ्कणकिङ्किणीपरिणतं कनकं परमार्थतः ।
महदहङ्कृति खमुखं तथा नरहरे न परं परमार्थतः ॥

सुगमम् ॥ ३७ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

न यदिदमित्यस्य टीकायां श्रुतौ असत् कारणं महदादि सत् कार्य्यं पृथिव्यादिः पूर्वोक्तौ हेतुः वाचारम्भणमिति लोहमणिना सुवर्णपिण्डेन एतत्तुल्यमन्तरमुत्तरत्रुत्यन्तरं च वाचारम्भणमित्यादिकञ्च ज्ञेयं किन्तु लोहमित्येव सत्यमिति यथायथं वाक्यशेषो ज्ञेयः व्याख्यायामात्मवच्चेति व्यतिरेके दृष्टान्तः अथ स्वव्याख्यायां ननु तर्हि कथं न हि विकृतिं त्यजन्तीत्युक्तं तत्राध्याः सिद्धान्तयन्त्यः पूर्वार्धमेव दर्शयन्ति नयदिदमिति यद्यदि इदं विश्वं निधनात् प्रलयं प्राप्य अग्रे सृष्ट्यादौ नासीत् तदा न भविष्यत् त्वत्तो नामविन्ध्य-देव सिकताभ्य इव तैलम् अतः सत्तादात्म्येनैवं शर्वर्यादयस्य विश्वस्य सूक्ष्मरूपेण तदानीं स्थितिः श्रूयते "सदेव सौम्येद-मग्र आसीदित्यादौ नासदासीन्नो सदासीदित्यादि" श्रुतिस्तु प्राकट्यमेव निषेधति अतोऽनुमितं किं अन्तरास्थितिसमयेपि त्वय्येव विभातीति यद्भूतं भवच्च भविष्यच्चेति श्रुतेः किन्तु एकरसे शुद्धे त्वयि विभातीति यत् तन्मृषैव आविवेका-दृष्टेरित्यर्थः । अयमात्मा ऽपहतपाप्मे"ति श्रुतेः अयं भावः विश्वं यज्जायते तच्छक्तित्वेन त्वदनन्यस्मात्त्वदुपहितात्प्रधानादेव तदा-स्थितिप्रलयावपि तत्रैव ततस्त्वद्व्यतिरेकेण तद्व्यतिरेकादेव हि त्वयीत्युच्यते स्वतस्तु त्वमन्तरङ्गया चिच्छक्त्या बहिरङ्गतद-स्पृष्ट एवेति तदुक्तं प्रथमे श्रीमदर्जुनेन—

"त्वमाद्यः पुरुषः साक्षादीश्वरः प्रकृतेः परः ।
मायां व्युदस्य चिच्छक्त्या कैवल्ये स्थित आत्मनि ।

इति अतस्तदविवेकादेवेदं द्रविणजातिविकल्पपथैरुपमीयते न तु तद्विवेकात् ततश्च तदात्मतयेति तन्मात्रदृष्ट्यैव न हि विकृतिं त्यजन्तीत्युक्तं न तु विकृतिदृष्ट्येति तस्मादिदं वितथमनोविलासं मनःसङ्कल्पमात्रसिद्धं ये वदन्ति येच ऋतं स्वरूपान्ताभिन्नमपि वदन्ति ते उभयेपि मूर्खा एव मनसोपिकार्य्यान्तःपातात् अनिर्मोक्षप्रसङ्गाच्च श्रुतयस्तु तद-र्थिता एव ॥ ३७ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मृत्पिण्डतत्कार्यदृष्टान्तानां कार्यमिथ्यात्ववर्णनमविदुषामेव रोचते न विदुषामित्याह—न यदिति । पूर्वापरकालयोरिव मध्य-काले नास्ति कार्यम् अनुमितत्वात् दुर्निरूपकारणत्वात् अन्तरा ब्रह्मणि कल्पितं मृषा भातीति ब्रह्म मृत्पिण्डलोहमण्यादिभिरिव उपमीयते इति कुदृष्टीनां वितथं मनोविलसितं प्रतिपन्नो-पायो बाधादर्शनात् तस्मात् कुदृष्टिः कुदृष्टाभिमतकार्यमिथ्या-त्वम् ऋतं प्रामाणिकमिति अबुधाः अवयन्ति नतु विज्ञाश्च इत्यर्थः ॥ ३७ ॥

---

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यादि मृदादिदृष्टान्तेषु मृदादिकारणानामेव मृत्तिकेत्येव सत्यमित्यादिभिः सत्यत्वप्रतीतेः विकाराणां नामधेयानाञ्च वाचारम्भणमित्यनेन वागालम्बनं व्यवहारमात्रं न तु पारमार्थ्यमिति मिथ्यात्वप्रतिपादनाच्च दार्ष्टान्तिकेऽपि सन्मात्रस्य ब्रह्मणः पारमार्थ्यं कार्यस्य तु मिथ्यात्वमकामेनापि स्वीकार्यम् इत्याशङ्कायां मृत्पिण्डकार्यादिदृष्टान्तानां कार्यमिथ्यात्वपरत्ववर्णनमविदुषामेव रोचते न विदुषां इत्याहुः—न यदिति । अत्र विकल्पपदैरित्यन्तेन कार्यमिथ्यात्वपरत्ववर्णनानुवादः वितथेत्यादिना तत्प्रतिक्षेप इति विभागः तथा हि यत् यस्मादिदं विश्वमग्रे सृष्टेः पूर्वं नास नासीत् "सदेव सौम्येदमग्र आसीत् आत्मा वा इदमेक एवाग्र आसीत्" इति श्रुतेरिति भावः । निधनात्प्रलयादनु अनन्तरं न भविष्यन्न भविष्यति "नासदासीन्नो सदासीत्तदानीम्" इत्यादिश्रुतेरिति भावः । अतः कारणादन्तराऽमध्येऽपि एकरसे केवले त्वयि मृषा मिथ्यारूपमेवेदं विभातीति मितं निश्चितं यत एवमतः श्रुत्या द्रविणजातिविकल्पपथैः द्रविणजातीनां द्रव्यमात्राणां मृल्लोहकार्ष्णायसरूपाणां विकल्पानां भेदा घटकुण्डलादयस्तेषां पन्थानः मार्गाः प्रकारास्तैरुपमीयते सदृशतया निरूप्यते यथा तत्र कार्यकारणानां नामधेयमात्रताकारणं मृदाद्येव सत्यं तथाऽऽप्याकाशादीनां नामधेयमात्रता ब्रह्मैव सत्यं इति विरूप्यत इत्यर्थः तथा च श्रुतिः यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं यथा सौम्यैकेन लोहमणिना विज्ञातेन सर्वं लोहमयं विज्ञातं स्यात्तथैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसम् इत्यादि अथैतद्दूषयति वितथेति । कुदृष्टीनां वितथमनोविलसितम् एतत्कार्यमिथ्यात्वपरत्ववर्णनमित्यर्थः । प्रतिपन्नोपाधौ बाधादर्शनादिति भावः । तस्मात् कुदृष्ट्यभिमतं कार्यमिथ्यात्वमृतं प्रामाणिकं इत्यबुधाः "यथा सौम्यैकेन मृत्पिण्डेन" इत्यादिदृष्टान्तवाक्यार्थानभिज्ञाः अवयन्ति जानन्ति न तदर्थाभिज्ञा इत्यर्थः । अयं भावः । अत्र हि न कार्यमिथ्यात्वं कारणसत्यत्वं च प्रतिपाद्यते किन्तु कार्यकारणयोरनन्यद्रव्यत्वं तथा हि न "स्तब्धोऽस्युत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं स्यात्" इति कृत्स्नस्य जगतो ब्रह्मैककारणत्वं कारणात्कार्यस्यानन्यत्वं च हृदि निधाय कारणभूतब्रह्मविज्ञानेन कार्यभूतस्य सर्वस्य विज्ञाने प्रतिज्ञाते सति कृत्स्नस्य सूक्ष्मचिदचिद्विशिष्टब्रह्मैककारणतामजानता शिष्येण "कथं नु भगवः स आदेशः" इत्यन्यज्ञानेन अन्यस्य ज्ञातत्वासम्भवं चोदितो ब्रह्मैककारणतामुपदेक्ष्यन् लौकिकप्रतीतिसिद्धं कारणात्कार्यस्यानन्यत्वं तावद्यथा सौम्यैकेनेत्यादिना दर्शयति यथैकमृत्पिण्डारब्धानां घटशरावादीनां तस्मादनतिरिक्तद्रव्यतया तज्ज्ञानेन ज्ञाततेत्यर्थः । अत्र काणादवादेन कारणात्कार्यस्य बुद्धिशब्दान्तरादिभिर्द्रव्यान्तरत्वमाशङ्क्य लोकप्रतीत्यैव कारणात्कार्यस्यानन्यतोपपाद्यते वाचेत्यादिना आरभ्यते आलभ्यते स्पृश्यत इत्यारम्भणं कृत्यल्युट इति कर्मणि ल्युट् वाचा वाक्पूर्वकेण व्यवहारेण हेतुनेत्यर्थः । हेतुत्वं चात्राध्ययनेन वसतीतिवत् घटेनोदकमाहरेत्यादिवाक्पूर्वकोऽयुदकाहरणादिव्यवहारस्तस्य व्यवहारस्य सिद्धये तेनैव मृद्द्रव्येण पृथुबुध्नोदरत्वादिलक्षणो विकारः संस्थानविशेषः तत्प्रयुक्तश्च घट इत्यादिनामधेयं स्पृश्यते उदकाहरणादिव्यवहारविशेषसिद्ध्यर्थं मृद्द्रव्यमेव संस्थानान्तरनामधेयभाग्भवत्यतो घटाद्यपि मृत्तिकेत्येव सत्यं मृत्तिकाद्रव्यमित्येव सत्यं प्रमाणेनोपलभ्यत इत्यर्थः । ननु द्रव्यान्तरत्वेनातत्त्वस्यैव मृद्धिरण्यादेर्द्रव्यस्य संस्थानान्तरभाक्त्वमात्रेण बुद्धिशब्दान्तरादयः उपपद्यन्ते यथैकस्यैव देवदत्तस्यावस्थाभेदैर्बालो युवा स्थविर इति बुद्धिशब्दान्तरादयः कार्यविशेषाश्च दृश्यन्ते तद्वदिति एवं चैकमेव चिदचिद्विशिष्टं ब्रह्म सृष्टेः प्राङ्निधनानन्तरञ्च नामरूपविभागानर्हसूक्ष्मचिदचिद्विशिष्टत्वेनावतिष्ठते अन्तरा तु तद्विभागार्हस्थूलचिदचिदात्मकप्रपञ्चाकारेणावतिष्ठत्यवस्थानामानित्यत्वेऽपि तदाश्रयस्य द्रव्यस्योभयावस्थायोगिनः पारमार्थ्यमेवेति बुधा अवयन्ति इति "नासदासीन्नो सदासीत्" इत्यस्य स्थूलावस्थमचिद्द्रव्यं चिद्द्रव्यं च प्रलयदशायां नासीत् किन्तु तमः निरतिशयसूक्ष्मदशापन्नमचिद्द्रव्यं तमसा तमस्सदृशेनाचिद्द्रव्येण गूढं तिरोहितं प्रकेतं सूक्ष्मावस्थं चिद्द्रव्यं चासीदित्यर्थः । उक्थजडानबुधा इत्यनेन जीवानामज्ञत्वसम्भावना सूचिता ॥ ३७ ॥

---

## श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथ मृत्पिण्डलोहकार्ष्णायसदृष्टान्तैः कार्यमिथ्यात्ववर्णनमविदुषामेव रोचते न विदुषामित्याह न यदिदमिति । यदिदं विश्वं सृष्टेरग्रे पूर्वकाले नास नासीत् न च निधनात्प्रलयादनु अनन्तरं भविष्यद्भविष्यति अत अन्तरा मध्ये एकरसे त्वयि मृषा मिथ्यारूपमेव विभातीति अनुमितं निश्चितं अतो ब्रह्मद्रविणजातिविकल्पपथैर्मृत्पिण्डलोहमण्यादिपथैः प्रकारैरुपमीयते वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् यथा सौम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यादित्यादिभिः अतः पूर्वापरकालयोरिव मध्यकालेऽपि नास्ति कार्यं अनुमितत्वात् दुर्निरूपकारणत्वादन्तरा ब्रह्मणि कल्पितं शुक्तिकादौ रजतादिवत् मृषा भातीति कुदृष्टीनां वितथं मनोमात्रविलसितं कुतः प्रतिपन्नोपाधौ बाधादर्शनात् तथा च श्रुतिः "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् दिवं च पृथिवीं चान्तरिक्षमथो सुवः" इति । स्मृतिरपि ———

> यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
> दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥ इति

तस्मात् कुदृष्ट्यभिमतं कार्यमिथ्यात्वं ऋतं प्रामाणिकमिति अबुधा अवयन्ति जानन्ति न तु विद्वांस इत्यर्थः तदुक्तम्—

> या वेदबाह्याः स्मृतयः याश्च काश्च कुदृष्टयः ।
> सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥ इति

अप्रामाणिकन्तु पूर्वमेवोक्तम् अतः पूर्वापरप्रतिपादनविरोधात् प्रमाणान्तराविरोधाच्च एवमेव प्रामाणिकैरभ्युपगन्तव्यं ननु वाचारम्भणं विकारो नामधेयमित्यादिश्रुतिभिर्विकारनामधेयस्य वाचारम्भणमात्रत्वप्रतिपादनात् मृत्पिण्डस्थानीयस्य ब्रह्मण एव सत्यत्वात्कार्यस्य मिथ्यात्वं प्रतीयते इति चेन्न-

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

शिक्षोऽहि भवान् श्रुत्यभिप्रायस्य अत्रोपनिषद्वाक्याविवरणरूपायां विषयवाक्यदीपिकायां श्रीरङ्गरामानुजमुनिभिर्व्याख्यातेयं श्रुतिः तथा हि उपक्रमे उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति अत्रान्यज्ञानेनान्यज्ञानासम्भवादेकविज्ञानेन सर्वविज्ञानासम्भवमन्वानश्चोदयति कथं नु भगवः स आदेशो भवतीति हे भगवः ईदृशआदेशः कथं भवतीत्यर्थः । उपादानोपादेययोरेकद्रव्यत्वे तद्भवतीत्यभिप्रायेणोत्तरमाह—यथासोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् यथोपादानभूते मृत्पिण्डे ज्ञाते तदुपादेयघटशरावादिकं श्रुतं भवति' तद्वदित्यर्थः नैयायिकरीत्या असदेव घटादिकं मृत्पिण्डेनोत्पद्यते अतश्चोपादानोपादेययोर्भेदान्न मृत्पिण्डे ज्ञाते कार्यमृन्मयानां ज्ञातत्वं सम्भवतीति मन्वानं प्रत्याह वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं आरभ्यते स्पृश्यते इत्यारम्भणं कर्मणिल्युट् तेनैव मृद्द्रव्येण घटशरावादिरूपणो विकारो घटशरावादिनामधेयं च स्पृशत इत्यर्थः आरम्भणशब्दस्य पुंनपुंसकलिङ्गविकारनामधेयविशेषणत्वेपि नपुंसकैकशेषेण आरम्भणमिति नपुंसकैकवचननिर्देशः मृद्द्रव्येण विकारनामधेये कस्मै प्रयोजनाय स्पृश्येते इत्यत्राह वाचेति प्रयोजनस्य हेतुत्वविवक्षया तृतीया वाक्छब्दश्चाजहल्लक्षणया वागादिव्यवहारपरः ततश्च वाक् पूर्वकदानादिव्यवहारार्थं मृत्पिण्डेव नामरूपे स्पृश्येते मृत्पिण्ड एव नामरूपभाग्भवतीत्यर्थः । अत्र यद्यपि मृत्पिण्डमृन्मयाभेददर्शनं वाचारम्भणं विकार इत्येतावन्मात्रेणापि सिध्यति न नामधेयस्यापि स्पृश्यत्वं वक्तव्यं तथापि संज्ञाभेदादुपादानोपादेययोर्भेदशङ्का स्यात् तन्नुदासाय नामापि मृद्द्रव्येण स्पृश्यते इत्युक्तिरपेक्षितेति द्रष्टव्यं कार्यकारणयोरेकद्रव्यत्वे प्रमाणमाह मृत्तिकेत्येव सत्यमिति मृन्मयं घटादिकं मृत्तिकेत्येव प्रमाण—प्रतिपन्नं न तद्भिन्नत्वेनेत्यर्थः यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यं लोहमणिः सुवर्णपिण्डविशेषः यथा सौम्य केन नखनिकृन्तनेन सर्वं कार्ष्णायसम्विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्यं नखनिकृन्तनशब्देन कृष्णायसपिण्डो लक्ष्यते शिष्टं पूर्ववत् एवं स आदेशो भवतीति मयोक्त आदेशो मृत्पिण्डादितुल्य इत्यर्थः इति आदेशशब्दोपि तैरेव व्याख्यातः तथाहि प्रकृत्यर्थः । शासनं प्रसिद्धिप्राचुर्यात् अन्यथा स्वारस्यभङ्गात् आङ्पूर्वोदिशतिर्नियोक्तृप्रयोजनवचनः उपपूर्वस्तु नियोज्यप्रयोजनवचन इति न्यासकारः नियोक्तरि प्रयोजनं यस्य तस्यार्थस्य वाचक इत्यर्थः । किञ्चोपदेश्यत्वं लौकिकालौकिकधर्मब्रह्मभागार्थसाधारणं प्रशासितृत्वन्तु ब्रह्मणोऽसाधारणं "अन्तः प्रविष्टः शास्ता जनानाम्" एतस्य वा अक्षरस्य प्रशासने गार्गि" इत्यादिभिर्निरुपाधिकप्रशासनस्य ब्रह्मासाधारणत्वश्रवणात् घञ् प्रत्ययस्य करणे व्युत्पन्नत्वं विवक्षातः कारकाणां प्रवृत्तिरितिशाब्दोक्तन्यायेन कर्त्तर्य्येव कारणान्तरनैरपेक्ष्येण साधकतमत्वविवक्षया तथा प्रयोग उपपद्यते "अकर्त्तरि च कारके संज्ञायाम्" (३-३-१९) इति सूत्रस्य प्रयोजनं कारणत्वविवक्षया विना कर्त्तर्य्यसाधुत्वेन प्रयोगनिवृत्तिः उपदेशपक्षे प्रत्ययस्वारस्यमर्थौचित्यञ्च प्रशासनपक्षे प्रत्ययास्वारस्येपि प्रधानभूतप्रकृत्यर्थस्वारस्यमर्थौचित्यञ्चेति वैषम्यं अतः प्रशासनमेवादेशशब्दाभिधेयमिति स्थी. सुं युक्तमिति ' येनाश्रुतं श्रुतं भवतीत्यत्र कस्मिन्न भगवो विज्ञाते सर्वमिदं विज्ञातं भवति आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितं भवतीति मुण्डकबृहदारण्यकवाक्यानुसारेण येन श्रुतेन मतेन विज्ञातेनाश्रुतममतमविज्ञातं श्रुतं मतं विज्ञातं भवतीति येनाश्रुतमिति वाक्यस्य पर्यवसितार्थः । ब्रह्मस्वरूपसत्तामात्रदृष्टाश्रुतत्वादिहेतुत्वाभावादिति द्रष्टव्यं अवस्थाविशिष्टतया अश्रुतं स्वरूपेण श्रुतं भवतीत्यर्थः अत्र विज्ञातशब्दो निदिध्यासनपरः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति क्रमप्रत्यभिज्ञानादिति द्रष्टव्यमिति तस्मात्कार्यसत्यत्वे प्रमाणभूयस्त्वात् असत्यत्वे प्रमाणाभावाच्च न कुदृष्ट्यभिमतं मिथ्यात्वं प्रामाणिकमिति प्रतिप्रयोगश्च विवादाध्यासितं कार्यं सत् आद्यन्तयोर्विद्यमानत्वात् मृत्सुवर्णादिवदिति ॥ ३७ ॥

———

योगिरामानुजाचार्यकृतसरलाव्याख्या ।

प्रपञ्चस्यानित्यत्वरूपासत्त्वे "यतो वा इमानि भूतानि जायन्ते इत्याद्याः श्रुतयः तन्मूलमनुमानञ्च प्रमाणमित्याहुः न यदिदमिति । यद्यस्मादिदं विश्वं अग्रे सृष्टेः पूर्वं न आस नासीत् सदेव सौम्येदमग्र आसीत् आत्मा वा इदमेक एवाग्र आसीत् इतिश्रुतेः निधनात् प्रलयात् अनु अनन्तरं न भविष्यत् न भावष्यति नासदासीन्नो सदासीत्तदानीमित्यादिश्रुतेः अतःकारणादन्तरासृष्टिप्रलयकालयोर्मध्येऽपि एक रसे विकाररहित्यादेकरूपे त्वयि मृषा असत्यस्वरूपमेव विभाति इति मितं निश्चितम् असत्यासत्यमिथ्यामृषाशब्दानामेकार्थकत्वात् अत्र मृषाशब्दो असत्यत्वपरः जगतः असत्यशब्दवाच्यत्वं विधिप्राप्तभाष्ये प्रतिपादितमतस्तन्मतेऽप्यविरोधः यतः एवंरूपमतः श्रुत्याद्रविणजातिविकल्पपथैः द्रविणजातीनां द्रव्यमात्राणाम् मृत्कनककार्ष्णायसरूपाणाम् विकल्पाः भेदाः घटकुण्डलादयः तेषां पन्थानो मार्गाः प्रकाराः तैरुपमीयते सदृशतया निरूप्यते यथा तत्र कार्याकाराणां नामधेयमात्राकारणं तु मृदादेव सत्यम् तथात्रापि आकाशादीनां नाममात्रता ब्रह्मैव सत्यम् तथाच श्रुतिः यथासौम्येकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं भवति वाचारम्भणं विकारो नामधेयम् मृत्तिकेत्येव सत्यम् यथा एकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात् यथा एकेन नखनिकृन्तनेन सर्वं कार्ष्णायसमित्यादिरस्मादस्य जगतः सत्त्वे प्रमाणाऽभावात् असत्त्वे प्रमाणस्य विद्यमानत्वात् वितथमनोविलासं मनसो भ्रान्त्या कल्पितम् मनसो यादृशभ्रान्तिर्भवति तादृशाकारेण भासत इत्यर्थः । यथा रज्जुसर्पभूतलनाम्बुधारादिरूपेण यस्य यादृशभ्रान्तिर्भवति तस्य तथैव भासते तद्यथा इष्टमनिष्टं शुभमशुभम् स्वीयं परकीयञ्चेति यो यथा मनुते तस्य तथैव भासते स्वभावतस्तु इष्टानिष्टादिरूपत्वं नास्त्येव स्वभावत एव इष्टानिष्टस्वरूपत्वे सर्वेषामेवेष्टत्वाद्याकारेण भासेत अतः मनोविलासितम् मनःकल्पनानुरूपं वितथमसत्यं च सत् मनोविलासञ्चेति वितथमनो विलासं एव-

### योगिरामानुजाचार्यकृतसरलाव्याख्या ।

इदं विश्वं अबुधाः अज्ञाः ऋतमिति सत्यमिति अवयन्ति जानन्ति यस्मादिदं अग्रेनास निधनादनु न भविष्यत् अन्तरा एकरसे त्वयि मृषा विभातीति मितम् अतः द्रविणजाति-विकल्पपथैः उपमीयते तस्माद्वितथमनोविलासं इदमबुधाः ऋत-मित्यवयतीत्यन्वयः ॥ ३७ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

न यदिदमग्र आसनभविष्यदतो निधनादनिमित्तकमन्तरात्वयि विभाति मृषैकरसे । अतउपगीयनेद्रविणजातिविकल्पपथैर्वितथ-मनोविलासमिदमित्यवयन्ति बुधाः ॥ २४—३८ ॥

जीवस्येश्वरत्वे बाधकमाह—नेति । इदमीश्वरत्वमग्रे उत्पत्तेः पूर्वं जीवेषु गर्भस्थेषु नास नास्ति न भविष्यत् यदि गर्भस्थो भवेत्तर्हि उत्तरत्रापि अभविष्यत् नच तथेति यस्मादतो निधनान्मरणादनन्तरमपि नरकादिगमनान्न विद्यत इत्यर्थः । ननु अस्येशोहमिति किन्निमित्ता प्रतीतिरत्राह अनिमित्तकमिति अः विष्णुर्निमित्तं यस्य तत् अनिमित्तकं भगवन्निमित्तकमेव तस्य जन्ममरणयोरन्तरामध्ये त्वयि जीवे कुवेशित्वं भाति नतु वस्तुतः त्वं जीवः कुतः एकरसे प्रधानसारे न च वस्तुतः जीवः सर्वोत्तमसारः मृषैव तथा मन्यते अतो भ्रान्तिरेव तथाज्ञाने प्रयोजकत्याह—अत इति यतो जीवः सर्वसारो न भूयादतो द्रविणजातिविकल्पपथै-र्जीव उपगीयत इत्यन्वयः । भ्रान्त्या जीवो द्रविणवान् अभि-जातिमानित्यादिनानाविरुद्धकल्पनामार्गैः कथ्यते अज्ञैरिति शेषः विद्वद्भिस्तु भवानेव द्रविणादिमानित्युच्यते कुतः यतस्तपोदमाद्या अभिजन्मकारणभूताः गुणाश्च भवत एव कथमेतदिति तत्राह—वितथेति । यतोभिजात्यादिगुणास्तव मुख्याः अत इदं जीवस्येश्वरत्वं बुधास्तत्त्वज्ञानिनो वितथ-मनोविलासं मिथ्यामनोविकारमित्यवयन्ति जानन्ति—

> गुणा एवाभिजात्याख्यास्तज्ज्ञानेवाभिजातिमान् ।
> अतोभिजात्यवान्विष्णुस्तदन्ये तूपचारतः ॥

इति वचनात्—

> ये जगत्प्रवदन्त्यज्ञाजीवादन्येशवर्जितम् ।
> तेषामपि तु तां वाचमीश एव ददात्यजः ।
> नच नरैर्भवेदीशो जीवोवेदविरोधतः ॥

इत्यादिस्मृत्यर्थत्वेन श्रुत्यन्तरमप्यूह्यम् ॥ ३८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

ननु तर्हि कथं न हि त्रिकाले अजन्तीत्युक्तम् । तत्राभ्याः सिद्धान्तयन्त्यः पूर्वार्थमेव द्रढयन्ति न यदिदम ॥ ३७ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

न केवलं त्वत्परिजनाः एव त्वदभिन्नाः अपि तु तव वृन्दावनादि धामकदम्बमपि तथेत्याहुः न यदिदमित्यादि इदं तव वृन्दावनमथुराद्वारकादिकं यत् तत्सर्वं प्रपञ्चवत् न नश्वरम् अत्र आस अग्रे सृष्टेः प्रागपि आसीत् न भविष्यत् नष्टं भूत्वा पुनर्भविष्यतीति न अतः कारणात् निधनात् प्रलयादपि अनु पश्चात् आस्तेत्यर्थः । सृष्टिप्रलयोर्मध्येपि किं स्थितं कुत इत्याहुः एकरसे एकावस्थे त्वयि विभाति यथा स्वमेवकरसस्तथा तव धामापि अहमेवासमेवाग्रे इत्यादिना यथा त्वं त्रैकालिके सिद्धस्तथा तदपि तथैव एतच्च एतद्वृन्दावनं मत्स्यापि अहं अतोऽस्यापि त्रैका-लिकीसिद्धिरिति एतदेवाभिन्नत्वं दृष्टान्तेन स्पष्टयन्ति अत उपमीयत इत्यादि द्रविणजातीनां द्रव्यप्रकाराणां सुवर्णा-दीनां ये विकल्पा भेदाः घटकुण्डलादयः आकारास्ते वस्तुतस्तु सुवर्णमेव तेन त्वया सह तव लोकानामाकाराणाम् भेदो न वस्तुतः इति एवं प्रकारेण ऋतं तव वृन्दावनादि लोकं अबुधाः कुतर्कपराः वितथमनोविलासं वितथोमनोऽभिलाष स्तदात्मको यः प्रपञ्चः तमिव अवयन्ति बुधास्तु कैवल्यमिव मूर्तिमदित्याद्येव जानन्तीति भावः ॥ ३७ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु जगतः सत्यत्वं मास्तु तेन विशेषतः सेव्यमाना न सेविष्यन्ते ये तु पुनः स्वभावतः सेवन्ते तेषां निषेधः केन वा सिध्येत् सत्त्ववत् असत्यस्यापि जगत्प्रमाणाभावे यथा सत्त्वमस्य साधयितुं न शक्यं तथा असत्त्वमपि तैरेव हेतुभिः तस्माज्जगत् सदसद्विलक्षणमेवास्तु ततस्तत्-सेवायां न गुणो नापि दोषः ततो जगत्परित्यागः कथं सिद्ध्येदित्याशङ्कयाह न यदिदमग्र आसेति यद्यसत्त्व-साधकमत्र न भवेत् तदैवं वक्तुं शक्येतापि असत्त्व-साधकन्तु वर्तते इदं जगदसत्कादाचित्कत्वात् यथैवं तथैव यथा ब्रह्मेति केवलव्यतिरेकी हेतुरस्तीति निरूपयति यद्-दिति कादाचित्कत्वमेव निरूप्यते यद्यस्मादिदं जगदग्रे सृष्टेः पूर्वमासन्नवा अतो निधनात् प्रलयानन्तरञ्च न भविष्यति अतोमध्ये कदाचि-देव जातं तेन ज्ञायते असदिति यदि सत् तदा कालत्र-येपि भवति न हि सत् कदाचिदसद्भवति अन्यथा कदा-चिद्घटोपि पटः स्यात् तस्मादान्तरालिकत्वात् असज्जगत् न त्वनेन हेतुना सत्त्वाभाव एव सेत्स्यति न त्वसत्त्वं व्यति-रेकेणापि तदभाव एव साध्यत्वेन तु धर्मान्तरमिति चेत्तत्राह—अनुमितमन्तरात्वयि विभाति मृषेति । इदं जगन्मृषैव भाति तत्र हेतुस्त्वयीति यदि यस्मिन् विद्यमाने अतिरिक्तं भासते तत्तेन तन्मिथ्येति सिद्धं यथा शुक्तिकायां रजतं तत्तथा सर्वमिदं ब्रह्म श्रुत्या ब्रह्मविद्भिश्च निर्णीतं तथापि यदन्यथा भासते जगत्त्वेन तन्मृषैव भवितुमर्हतीत्यर्थः । हेत्व-न्तरमप्याह—अनुमितमन्तरेति । प्रत्यक्षेतु रजतं न स्फुरति इन्द्रियार्थसन्निकर्षस्य शुक्तिविषयत्वात् न हि रजतेन सह सन्निकर्षोस्ति सतोरेव संयोगात् सत्सम्प्रयोगे पुरुषस्ये-न्द्रियाणां बुद्धिजन्मतत्प्रत्यक्षमिति प्रत्यक्षलक्षणं रजतं तु तदनन्तरं बुद्ध्या जन्यते विषयीक्रियते च तत्र सा बुद्धि-रेव कारणं तेन ज्ञानकरणकं ज्ञानमनुमानमिति रजत-मनुमितिविषयं भवति किञ्च अन्तरा विभाति इन्द्रियाः

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

थयोर्मध्ये भाति तन्मृषा तथा ऽत्रापि प्रमातृचैतन्यब्रह्म-चैतन्ययोर्मध्ये जगत् भातीति यावदेतयोर्न सम्यक् परीक्षा तावत्प्रतिभासते अतोऽन्तरैव विभाति एतस्मिन्नुभयस्मिन् विचा-रिते तत्त्वमसीति वाक्ये अवगते पश्चात्सर्वत्र ब्रह्मैव भासते किञ्च एकरसे त्वयि यन्नानाप्रकारेण भासते तन्मृषैवेति तात्पर्यं यथैकस्मिन् चन्द्रे द्वैतप्रतीतिर्भ्रान्त्या ननु तथा-प्यसत्वं कथं सेत्स्यति नह्यसतः प्रतीतिरस्तीति चेदत आह अत उपमीयत इति असत्साहश्याज्जगदसदित्युपमीयते यथा द्रविणजातिविकल्पमार्गैः पदार्था उपमीयन्ते यथा गोसदृशो गवय इति वाक्यं श्रुत्वा अरण्ये गवयं पश्यन् सादृश्यं वाक्यावगतं स्मृत्वा तद्गवये पश्यन् गवयोयं गोसदृश-त्वादिति मन्यते द्रविणानां गवादीनां या जातिः गोत्वा-दिरूपा विकल्पोऽवान्तरभेदः स एवोपमाने मार्गः अन्यथा गौरित्येव प्रतीयेत एतस्मादेव विशेषाज्ञानुमानविषयता वह्निस्तु धूमादौ सर्वत्रैव जातिरेव सादृश्यज्ञानन्तु भिन्नजातीयं ज्ञापयति तथा ये असन्तो दृष्टाः ते विचारे क्रियमाणे न सम्भवन्तीत्येतद्धर्मसाम्याज्जगदप्यसदेवेति निश्चीयते भानन्तु शशशृङ्गस्यापि भवतीति नासत्वं निराकरोति सत्त्वमपि भासते असत्वमपि भासते परं विचारसहिष्णुगुणयुक्त-प्रमाणेन सद्भासते विचारासहिष्णुदोषसहितकरणेनासदिति विशेषः ननु वैदिकानां महतामपि जगति सद्बुद्धिः अन्य-थाऽध्यासत्वे स्थैर्याभावात् विश्रंभेण सर्वे व्यवहारा न भवेयुः तस्मात्सत्वं सदसद्विलक्षणत्वं वा वक्तव्यमिति चेत्त-त्राह—वितथमनोविलासमिति इदं जगत्सर्वं वितथमेव मिथ्या-भूतमेव यतो मनोविलासं यो हि जगति मनसा यद्यथा मन्यते तं प्रति तत्तथा प्रतिभाति इष्टं द्विष्टं शुद्धमशुद्ध-मात्मीयं परकीयं चेति नहि निसर्गतः जगति कश्चित् पदार्थः एवम्भूतोऽस्ति यः सर्वान् प्रति प्रियो भवति अतो मनोविलासकृतमेवैतदिति मनोरथवन्मिथ्याभूतमेव एतादृशमपि ये सत्यमिति मन्यन्ते ते अबुधाः न पण्डिताः विचार-रहिता इत्यर्थः ॥ ३७ ॥

> खपुष्पादिसमत्वाद्धि मिथ्याभूतं जगद्यतः ।
> अधिष्ठानाच्च सद्भानं तं कृष्णं नियतं भजेत् ॥२४॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एकमेवार्थं सत्कार्यवादिमताश्रयिण्यः श्रुतयः स्पष्टतया श्रीपदीक्षितमाहुः—नेति । यदिदं प्रसिद्धं विश्वं तत् अग्रे सृष्टेः प्राक् नासत् नासीत् अतः अस्माद्भाविनः प्रलयात् अनु पश्चात् न भविष्यत् न भविष्यति किन्तु अन्तरा मध्य एव मितं प्रमाणविषयीभूतं विभाति कुत्र मृषति परामृषतीति मृषः अग्रदेव सृजामीति परामर्शवान् यः परमेश्वरस्तस्मिन् त्वयि किञ्च प्रागभावध्वंसपरत्वादिदं यस्मान्नित्यत्वेन न प्रमितम् अतो द्रविणजातीनां मृत्सुवर्णादीनां विकल्पा भेदा घटकुण्ड-लादयः तेषां पन्थानो मार्गैः प्रकारास्तैरुपमीयते तत्सदृश-तया सत्यत्वेनैव ननु शुक्तिरजतरज्जुसर्पादिप्रकारैर्मिथ्या-त्वेन निरूप्यत इत्यर्थः । अत एव विभातीति विशिष्टमानार्थे विशब्दः प्रयुक्तः किञ्च तथापि वितथमनोविलासमिदं मिथ्येति ये विनीतज्ञानिनः चेत् श्रुतं सार्वकालिकसत्ताक-मिदमिति विनीतकर्मिणोऽवयन्ति जानन्ति ते अबुधाः अप-ण्डिताः ॥ ३७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इदानीं जगत्कारणभूते ब्रह्मणि परमेश्वरे विकारादि-शङ्का निराक्रियते द्वाभ्यां जन्मादितत्सम्बन्धतत्कारणाविद्या-तत्कार्यरागाभिनिवेशादि यद्यस्मात्सृष्टेः पूर्वं त्वयि नाप्ता नासीत् अतो निधनादनु मतोऽस्य विश्वस्य प्रलयानन्तरमपि न भविष्यच्च भविष्यति तथाच श्रुतिः "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः" इत्यादि—

> वेदाहं समतीतानि वर्तमानानि चार्जुन ।
> भविष्याणि च भूतानि मां तु वेद न कश्चन ॥

इति भगवदुक्तेश्च मध्येपि नैव कुतः तेषां विकारादीनां जडाभिमानवतः क्षेत्रज्ञस्य धर्मत्वादित्याहुः—एकरसे अप्र-च्युतस्वरूपगुणशक्तौ स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतेः ननु "यं देवं देवकी देवी वसुदेवादजीजनत्" इत्यादिशास्त्रस्य जन्मादौ प्रमाणत्वात्कथं निर्विकारत्वं तत्राहुः—मृषेति । अज्ञानां स्वतः पराङ्मुखानां त्वयि विकारादि मृषा भाति प्रतीयते न च तत्प्रतिपादकपूर्वोक्तवाक्यविरोधः शङ्कनीयः तस्य स्वाविर्भावादिपरत्वान्न बाधः किञ्च जन्मकारणीभूत-कर्मणो भावात् कथं तदुद्भवः सम्भावनीय इत्येतत् स्वय-मेव भगवता प्रतिपादितम् अजोपि सन्नव्ययात्मा भूतानामी-श्वरोपि सन्नित्यादि अजायमानो बहुधा विजायत इति श्रुतेः एतत्तव स्वरूपमस्माभिरेव श्रुतिभिर्मितं निर्णीतं न तर्कावकाशः "य आत्माऽपहतपाप्मा" इत्यादिभिः अत एव व्यतिरेकदृष्टान्तैर्द्रविणजातिविकल्पपथैर्विविधप्रकारैर्हर्षशोकादिना प्रणमन्ति न तथा भवानिति भावः ननु रामकृष्णादि-प्रादुर्भावे क्षत्रियत्वादिजात्यादिरपि सुव्यक्तः तथा चाकसिद्धान्त-भङ्ग इति चेत्तत्राहुः—वितथमिति । मूलप्रमाणहीनम् अज्ञानां मनोविलासमात्रं त्वयि जात्यादिर्जीवधर्मं येऽबुधाः पाषण्ड-निष्ठास्ते ऋतमिति मन्यन्ते न वैदिकसम्प्रदायानुकूलाः सूर्ये तमः कालत्रयेपि न दृष्टिश्रुतिगोचरं तद्वदित्यर्थः । अथ चैवं योजना इदं भूतभौतिकं कार्यम् अग्रः सृष्टेः प्राक् त्वयि साक्षान्नासीन्नापि प्रलयानन्तरं भविष्यति यद्यस्मादेवं तस्मा-दन्तरा मध्येपि त्वयि मृषैव भाति अयथार्थमेव प्रतीयते कुतः प्रकृतिकार्यस्य कालत्रयेपि स्वकारणरूपायां प्रकृतावेव निष्ठत्वात् कार्यस्य कारणे स्थितिनियमाच्च बीजाऽङ्कुरादिवत् तथाच श्रुतिः "नेह नानास्ति किञ्चन" इत्यादि ब्रह्मणि कार्य-सम्बन्धाभावं द्योतयितुं त्रिविशिनष्टि—एकरसे जन्मादिविकार-तत्सम्बन्धादिशून्ये अतएवेदं द्रविणजातिविकल्पपथैरुपमीयते द्रव्यस्य ये विकल्पाः परिणामादयो ज्ञातेश्च विकल्पाः सामर्थ्य-नानात्वादयस्तेषां प्रकारैरनित्यत्वपरिणामित्वादिभिस्तुल्यतया निरूप्यते यथा द्रव्यजातयो नियतस्वरूपाभावतया परि-णामादियुक्ता अनित्याश्च तथेदमपीत्यर्थः । ननु यदि परि-णामादिमत्वं वर्णकत्वमपि जीवस्यैवेति चेत्तत्राहुः—ऋतं

स यदजया त्वजामनुशयीत गुणांश्च जुषन् भजति सरूपतां तदनु मृत्युमपेतभगः।
त्वमुत जहासि तामहिरिव त्वचमात्तभगो महसि महीयसेऽष्टगुणितेऽपरिमेयभगः ॥ ३८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

वस्तुभावरूपं पदार्थं ये वितथं मिथ्या मनोविलासं मनोमात्रकल्पितमित्येवमवयन्ति निश्चिन्वन्ति तेऽबुधा मूर्खाः तथाच श्रुतिः असत्यमाहुर्जगदेतदज्ञाः शक्तिं हरेर्नैव विदुर्येपरां हि यः सत्यरूपं जगदेतदीदृक्सृष्टात्वभूत् सत्यकर्मा महात्मा इति —

"असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।
अपरस्परसम्भूतं किमन्यत् कामहैतुकम् ॥

इति भगवदुक्तेश्च व्यतिरेकेऽपि वितथत्वं निषिध्यते अनाद्यनन्तं जगदेतदीदृक् प्रवर्तते नात्र विचार्य्यमस्ति न चान्यथा क्वापि च कस्यचेममभूत् पुरा नापि तथा भविष्यत्" इति श्रुत्या ऊर्द्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् इत्यादिस्मृतेश्च नापि मनोमात्रविलसितमिदं ईश्वरसृष्टत्वात् "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः एतस्माज्जायते प्राणः सन्मूलाः सौम्येमाः सर्वाः प्रजा नारायणाज्जायते प्राण आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते इत्यादिश्रुतिप्रतिपादितत्वात् अत्र केचिज्जगदभावं प्रतिपादयन्ति ते विवेककुशलैः सर्वतोपेक्ष्याः उक्तशास्त्रविरोधात् मोघज्ञाना विचेतस इति भगवतैवोपेक्ष्यत्वेनोक्तत्वात् असत्कार्य्यवादाभ्युपगमे बौद्धमताविशेषाच्चेत्यलं विस्तरेण ॥ ३७–२४ ॥

---

### भाषाटीका।

फिरभी प्रपञ्च को मिथ्या मानने वारा कहता है कि जिस कारण से यह जगत् सृष्टिके पहले भी नहि रहा और प्रलय के अनन्तर भी नहि होगा इसीसे मध्य में एक रस आप पर ब्रह्म स्वरूप आधार में यह जगत् मिथ्याहि प्रतीत होताहै यह निश्चय हि पागया है इसी से श्रुतियों में मृत्तिका आदि द्रव्य के कार्य्य घटादिकों के दृष्टान्त मार्गों से प्रपञ्चको घटादिकों के तुल्य निरूपण किया गया है' इस पर श्रुति कहतीहैं कि उपरोक्त युक्तियों से प्रपञ्च को मिथ्या वर्णन करना यह उनका वृथाहि मन का विलास है क्योंकि उपरोक्त प्रकार से प्रपञ्चका बाध नहि दीखता किन्तु नाश दीखता है नाशमान वस्तु मिथ्या नहि होता मिथ्या तो वह होता है कि जिसका किसी काल में सद्भाव न होवे जैसे आकाश में पुष्प शश के शीङ्ग बन्ध्या का पुत्र आदिका कभी सद्भाव नहि है इस लिये जगत् का मिथ्या पना सत्य है ऐसा कहने वारे अविवेकी हैं ॥ ३८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

ननु यदि प्रपञ्चो नाम नास्त्येव तदाऽसता तेन न बन्धस्य सम्बन्धगन्धोऽपि तर्हि किमपराद्धं जीवेन यतोऽयं संसरति किम्वा बहुपुण्यमीश्वरस्य यतो नित्यमुक्तः किं विपर्ययेण च तदा कर्मकाण्डमित्यपेक्षायां जीवेश्वरविभागं "द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति। अजामेकां लोहितशुक्लकृष्णाम्" इत्याद्याः वदन्तीत्याह—स यदजयेति। सतु जीवो यस्मात् अजया मायया अजामविद्यामनुशयीताऽऽलिङ्गेत्ततो गुणांश्च देहेन्द्रियादीन् जुषन् सेवमानः आत्मतया ऽध्यवस्यंस्तद्गु तदनन्तरं सरूपतां तद्धर्मयोगञ्च जुषन्नपेतभगः तिरोहितानन्दादिगुणः सन् मृत्युं संसारं भजति प्राप्नोति तद्विषयमेव च कर्मकाण्डमितिभावः त्वमुत त्वन्तु जहासि तामजां मायाम् ननु सा सर्व्वेष्वास्ति कथं त्यागस्तत्राह अहिरिव त्वचमिति। अयं भावः यथा भुजङ्गः स्वगतमपि कञ्चुकं गुणबुद्ध्या नाभिमन्यते तथात्वमजाम् नाहं निरन्तराह्लादिसच्चित्कामधेनुवृन्दपतेरजया कृत्यमिति तामुपेक्षसे इति कुतः एतत्तत्राह आत्तभगो नित्यप्राप्तैश्वर्य्यः महसि परमैश्वर्य्येऽष्टगुणितेऽणिमाद्यष्टविभूतिमति महीयसे पूज्यसे विराजसे कथंभूतः अपरिमेयभगोऽपरिमितैश्वर्यः नह्यन्येषामिव देशकालादिपरिच्छिन्नं तवाष्टगुणितमैश्वर्यमपितु परिपूर्णस्वरूपानुबन्धित्वादपरिमितमित्यर्थः ॥ ३८ ॥

लुम्पन्ती तव वीक्षणाङ्गणगता कालस्वभावादिभि—
र्भावान् सत्त्वरजस्तमोगुणमयानुन्मीलयन्ती बहून् ॥
मामाक्रम्य पदा शिरस्यतिभरं सम्मर्दयन्त्यातुरं—
माया ते शरणं गतोऽस्मि नृहरे त्वामेव तां वारय ॥

---

### श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी।

यतः अपराधात् पुनश्च यतो बहुपुण्यात् यदा प्रपञ्चो नास्त्येव तदा कर्मकाण्डं किं विषयं को विषयोऽधिकारी यस्य तत्किं विषयं द्वेति द्वाविस्यर्थः। सुपर्णौ पक्षिणौ पक्षिरूपञ्च नानावृक्षरूपदेहस्वीकारपरित्यागात् तत्रैकस्य भोक्तृत्वेन अन्यस्य भोजयितृत्वेनेति ज्ञेयम् सयुजा संयुक्तौ मिथो व्याभिचारशून्यावित्यर्थः। समानमेकं वृक्षं वृश्च्यते छिद्यते इति नश्वरत्वेन सुखदुःखादिबहुफलवत्त्वेन पापपुण्यादि बहुबीजवत्त्वेन च वृक्षसदृशं देहं परिषस्वजाते भोक्तृत्वेन नियन्तृत्वेन चाधिष्ठितवन्तावित्यर्थः। तयोर्मध्येऽन्यो जीवः पिप्पलं कर्मफलम् अन्यो नित्यमुक्तो जीवान्तर्यामीश्वरः अभिचाकशीति साक्षितया प्रकाशते तदनन्तरमध्यासानन्तरं तद्विषयमेव चेति स संसारं प्राप्तो जीवो विषयेऽधिकारी यस्य तथाभूतमेव कर्मकाण्डमिति ॥ ३८ ॥

---

### श्रीकविचूडामणिचक्रवर्तिकृताऽन्वयबोधिनी।

ननु यदि प्रपञ्चो नाम नास्त्येव तदाऽसता तेन [illegible]

श्रीकविचूडामणिचक्रवर्त्तिकृतान्वयबोधिनी ।

नैतस्यस्य सम्बन्धगन्धोपि नास्ति तर्हि किमपराद्धं जीवेन यतोऽसौ नित्यबद्धः संसरति किम्वा बहुपुण्यमीश्वरस्य यतो नित्यमुक्तः किं विषयं च तदा कर्मकाण्डमित्यपेक्षायां जीवेश्वरविशेषमाह—स यदजयेति । सतु जीवः यतः यस्मादजया मायया अजाम् अविद्यामनुशयीत आलिङ्गेत् ततो गुणांश्च देहेन्द्रियादीन् जुषन् सेवमानः तदनु तदनन्तरं सरूपतां तद्धर्मयोगं च जुषन् अपेतभगः पिहितानन्दादिगुणः सन् मृत्युं संसारं भजति प्राप्नोति तद्विषयमेव कर्मकाण्डमितिभावः त्वमुत त्वन्तु तामजां मायां गुणयुक्तां नाभिमन्यसे कुत एतत्तत्राह आत्तभगो आत्तभगो महसि महीयसेऽष्टगुणिते अणिमाद्यष्टविभूतिमति महसि परमैश्वर्ये महीयसे पूज्यसे विराजसे कथम्भूतस्त्वं अपरिमेयभगः अपरिमेयानि अपरिमितानि भगानि ऐश्वर्याणि यस्य सः अपरिमितैश्वर्य इत्यर्थः न ह्यन्येषामिव देशकालादिपरिच्छिन्नं तवाष्टगुणितमैश्वर्यम् अपितु परिपूर्णस्वरूपानुबन्धित्वादपरिमितमिति अतो जीवेश्वरयोर्महान् विशेषः अत्र श्रुतिः "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति । अजामेकां लोहितशुक्लकृष्णामित्यादि अर्थः द्वा द्वौ सुपर्णा सुपर्णौ सयुजा सखाया सखायौ इति प्रतिपदानि ज्ञातव्यानि द्वौ सुपर्णौ शोभनगमनौ सयुजौ बिम्बाभावेन सदा संयुक्तौ सखायौ नित्योपकारको पकार्यत्वेन वर्त्तमानौ समानं एकमेव वृक्षं देहं परिषस्वजाते परिष्वक्तवन्तौ नियामकनियम्याद्युपाधिमत्त्वेन परिगृह्य वर्त्तेते तयोर्द्वयोर्मध्ये अन्यः प्रतिबिम्बभूतो जीवः पिप्पलं कर्मफलं स्वादु विविधं विषयास्वादनं यथा भवति तथा उपभुङ्क्ते तस्मादन्यो बिम्बभूतः परमात्मेश्वरः पिप्पलमनश्नन्नभिचाकशीति स्वप्रकाशाखण्डज्ञप्तिमात्ररूपेणास्ते इत्यर्थः । अत्र सुपर्णत्वं पक्षित्वं तयोर्नानाजात्यानङ्गीकारपरित्यागसाम्यात् अजामेकामित्यादेर्व्याख्याप्रागेव कृता । अथस्वामिनाम्—

नृत्यन्ती तव वीक्षणाङ्गणगता कालस्वभावादिभि—
र्भावान्सत्वरजस्तमोगुणमयानुन्मीलयन्ती बहून् ॥
मामाक्रम्य पदा शिरस्यतिभरम् सम्मर्दयन्त्यातुरं ।
मायां ते शरणं गतोस्मि नृहरे त्वामेव तां वारय ॥

भो नृहरे त्वामेव शरणं गतोस्मि तां मायां वारय का सा माया ? त्वां किङ्करोति इत्यत आह ते तव माया तव वीक्षणाङ्गणगता नृत्यन्ती कालस्वभावादिभिर्गुणमयान् भावानुन्मीलयन्ती सती मां शिरसि पदा पादेनाक्रम्य अतिभरं यथा स्यात्तथा सम्मर्दयन्ती तवैव माया तां त्वमेव निवारयेति ॥ ३८ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

स यदित्यस्य टीकायां श्रुतौ द्वेतिद्वावित्यर्थः । एवमुत्तरत्रापि सुपर्णत्वं पक्षित्वं तत्र नानाधिष्ठानस्वीकारपरित्यागसाम्यात् तत्रैकस्य भोक्तृत्वेनान्यस्य भोजयितृत्वेनातिशयं सयुजेति संयुक्तौ मिथो अभिचारशून्यावित्यर्थः । पिप्पलं कर्म फलमिति व्याख्यायां तु अथ श्रीमदीश्वरस्य प्रभावास्पृष्टत्वमेव जीववैलक्षण्येन दर्शयन्त्यः काश्चित्तदनुगताः स्तुवन्ति किञ्च ननु भवतु जगतो मद्वैलक्षण्यं नानाजात्यादितः जीवस्य त्वमाशाचिद्रूपत्वात् सालक्षण्यमेव तर्हि कथं ममैव भजनीयत्वं पूर्वाभिर्दर्शितं इत्याशङ्क्य तदंशमेव जीवेश्वरस्वरूपवैलक्षण्यं प्रतिपादयन्त्यः स्तुवन्ति स यदजयान्विति तैरेवव्याख्यातं तत्र कञ्चुको जीर्णत्वगिति जहासि नाभिमन्यसे इत्येव च व्याख्येयं तथाच पिहितानन्दादिगुणत्वेन सतोपि जीवस्य सविशेषत्वं प्राप्तं तत्र युक्तमीश्वरांशत्वादिति एतद्विवरणं च श्रीभागवतसन्दर्भतट्टीकयोर्दृश्यं यद्वा सजीवो यद्यस्मादजया मायया अजां स्वरूपाज्ञानमनु लक्षीकृत्य शयीत मुह्यति तत्तस्मात् अपेतस्वरूपसामर्थ्यः सन् सरूपतां मयाकार्योपाधिसाधर्म्यं भजन् गुणान् विषयांश्च भजन् अनुमृत्युं संसारं भजति इति अन्यस्तैः तत्रैकेनोपाधिना ह्यस्मिन् स्थितेन कस्यचित्स्पर्शः कस्यचिन्नेति सामर्थ्यवैलक्षण्यतारस्वरूपवैलक्षण्यमवगम्यते तच्च ब्रह्मस्तवे दर्शितमस्ति अत्र श्रुतयो द्वासुपर्णेत्याद्याः ॥ ३८ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

प्रकृत्यन्तरवस्थाने तुल्येपि जीवस्य तत्परवशत्वं परस्य तदभावत्वं चाह—स यदजयेति । सरूपत स्थूलत्वादिधर्मताम् अपेतभगः अपेतज्ञानैश्वर्यादिः जहासि नियमेन तत्परतन्त्रतया सम्बन्धरहितोसीत्यर्थः ॥ ३८ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ननु भगवत इव तेषामपि नित्यत्वैकरसत्वप्रकृतिसत्वाद्यविशेषेपि कथं तेषां तत्सम्भावना तव तत्सम्भावनाया अप्यभाव इत्याशङ्कायां प्रकृतिवश्यत्वतदवशभावाभ्याम एवेत्याहुः—स यदिति । स जीवो यद्यस्मादजया स्वमायया मोहित इति शेषः । अजां प्रकृतिपरिणामात्मिकां देवमनुष्यादिमूर्त्तिमनुशयीतां आलिङ्गति बिभर्त्तीति यावत् ततो गुणान् शब्दादिविषयान् जुषन् सेवमानः सरूपतां सूक्ष्मत्वादिस्थूलत्वादिदेहधर्मतां भजति देहात्माभिमानी भवतीत्यर्थः तदनु तदनन्तरं मृत्युं मरणं भजति प्राप्नोति इत्थं जन्ममरणादिरूपसंसृतिभाक्त्वादपेतो भगो ज्ञानैश्वर्यादिर्यस्य तथाभूतइव भवति त्वमुत त्वं तु अहिः सर्पः त्वचं कञ्चुकं इव तामजां जहासि नियमेन तत्परतन्त्रतया सम्बन्धरहितोसि अहिदृष्टान्तस्त्यागमात्राभिप्रायकः अत एवान्तः नित्यं परिगृहीतः भगो येन तथाभूतः —

"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णाम्भग इतीरणा ॥

इति भगशब्दार्थो ऽवगन्तव्यः अथापि किं जीववदेवाहमपि परिच्छिन्नभगः नेत्याहुः अपरिमेयभगः अपरिच्छिन्नैश्वर्यादिमान् अष्टगुणितेऽपहतपाप्मत्वादयोऽष्टौ गुणाः ते ऽस्य नित्यं सञ्जाता इत्यष्टगुणितं तारकादित्वादितच् तस्मिन्नित्यापिभूता-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

पहतपाप्मत्वादिगुणकाष्टयुक्ते महस्यपरिच्छिन्ने स्वयं प्रकाशस्वरूपे महीयसे महसि स्थित्वा पूज्यसे इत्यर्थः ॥ ३८ ॥

---

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथ जीवेश्वरयोः प्रकृत्यन्तरवस्थाने तुल्ये तयोः को विशेषः किं विषयो विधिनिषेधविधिरित्यत्र जीवस्य तत्परवशत्वं परस्य तदभावत्वं चाह स यदजयेति । सतु जीवः यद्यस्मादजया भगवदधीनया मायया अजां प्रकृति मनुशयीत आलिङ्गेत ततो गुणांश्च देहेन्द्रियादीन् जुषन् सेवमानः स्थूलोहं कृशोहमित्यात्मतया अध्यस्यन् सरूपतां स्थूलत्वादिसधर्मतां भजति तदनु तदनन्तरं अपेतभगः सङ्कुचितज्ञानैश्वर्यादिः मृत्युं संसारं भजति प्राप्नोति तद्विषयमेव विधिनिषेधरूपो विधिरिति भावः त्वमुत त्वन्तु तामजां प्रकृतिशब्दवाच्यां जहासि तिरस्कृत्य वर्त्तसे इत्यर्थः । ननु सा मच्छरीरतया मय्येव वर्त्तते कथं त्यागस्तत्राह अहिरिव त्वचमिति अयं भावः यथा भुजङ्गः स्वगतमपि कञ्चुकं गुणबुद्ध्या नाभिमन्यते तथा त्वम प्यजां स्वगतामपि न स्वप्रयोजनतया मन्यसे न हि निरन्तराह्लादी सच्चित्कामधेनुवृन्दपतेरजया किमपि कृत्यमस्ति अतस्तामुपेक्ष्य वर्त्तसे त्वमिति तत् कुतः आप्तभगः नित्यप्राप्तज्ञानाद्यैश्वर्य्योसि अत एव महसि परमोत्कृष्टैश्वर्ये अष्टगुणिते अणिमाद्यष्टविभूतिमहीयसे पूज्यसे कथम्भूतस्त्वं अपरिमेयभगः अनवच्छिन्नानन्तैश्वर्यः नह्यन्येषामिव देशकालादिपरिच्छिन्नं तवाष्टगुणितमैश्वर्य्यमस्ति अपितु पूर्णस्वरूपानुबन्धित्वादपरिमितं स्वाभाविकं चेति परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेतिश्रुतेः अतो महद्वैषम्यमीश्वरजीवयोस्तथा च श्रुतयः ज्ञाज्ञौ द्वावजावीशनीशौ द्वासुपर्णा सयुजा सखायासमानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो ऽभिचाकशीति अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपां प्रधानक्षेत्रज्ञपतिर्गुणेशः पातिं विश्वस्यात्मेश्वरम्"इत्याद्याः ॥ ३८ ॥

---

### योगिरामानुजाचार्यकृतसरलव्याख्या ।

द्वासुपर्णाविति श्रुत्युक्तम् जीवाद्विलक्षणम् भगवत्स्वरूपमाहुः—स इति । यद्यस्मात् सः जीवः अजया त्वन्मायया मोहित इति शेषः । अत एव तु अजां प्रकृतिपरिणामात्मिकां देवमनुष्यादिमूर्त्तिम् अनुशयीत आलिङ्गति बिभर्तीति यावत् ततः तत्सरूपतां भजति देवमनुष्यादिदेहात्माभिमानं करोति तदनु तत्पश्चात् गुणान् शब्दादीन् विषयांश्च जुषन् सेवमानः अपेतभगः तिरोहितज्ञानैश्वर्यानन्दादिगुणस्सन् मृत्युं संसारं भजति प्राप्नोति त्वमुत त्वन्तु अहिः भुजङ्गः त्वचमिव कञ्चुकमिव तामजां जहासि यथा भुजङ्गः स्वगतमपि कञ्चुकम् बुध्या नाभिमन्यते तथात्वमजामुपेक्षसे इत्यर्थः तत्र हेतुमाहुः—आप्तेति । आप्तभगः नित्यप्राप्तज्ञानादिगुणः ज्ञानादिगुणवत्त्वं जीवानामप्यस्तीत्यत आह—अपरिमेयभगः इति ते तु परिच्छिन्नैश्वर्यवन्तः त्वन्त्वपरिच्छिन्नैश्वर्यः अष्टगुणिते अणिमाद्यष्टविभूतियुक्ते अपहतपाप्मत्वादिगुणयुक्ते वा महसि तेजोरूपे स्वपरमानन्दस्वरूपे महीयसे पूज्यसे विराजसे अनन्याश्रयो भवसीतिभावः यद्यस्मात् सः अजयातु अजामनुशयीत ततः तत्सरूपतां भजति तदनुगुणान् जुषन् अपेतभगः मृत्युं भजति त्वमुत तामहिस्त्वचमिव जहासि आप्तभगः अपरिमेयभगः त्वमष्टगुणिते महसि महीयसे इत्यन्वयः ॥ ३८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उदगात्पुमाननुगीतगुणांश्च जुषन् भजति सरूपतां तदनु त्वमुत जहासि जिहासि तां । अहिरिव त्वचमपरमाप्तभगो महसि महीयसेऽष्टगुणोऽपरिमेयभगः ॥ २५–३९ ॥

> स्मरन् ब्रह्मगुणान्नित्यं मुक्तो ब्रह्मसरूपताम् ।
> दुर्भगां प्रकृतिं त्यक्त्वा हत्वा चान्यां दुरन्वयाम् ॥
> याति तत्र परेशानात्सहि पूज्यो य पूजकः ।
> तस्यैकस्य स्वतन्त्रत्वात्स चानन्तगुणो विभुः ॥

इति श्रुत्यर्थरूपस्य उदगात्पुमानित्यस्यायमर्थः अनुशब्दो विकल्पार्थः श्रुतिष्वनुगीतगुणान् चशब्दात्तव कर्माणि च जुषन् तदनुगुणस्मरणमनु उदगात्संसारादिति शेषः । अस्मात् संसारान्मुक्तो भवतीत्यर्थः । तव सरूपतां च भजति कश्चित् सायुज्यं कश्चित्सारूप्यं कश्चित्सालोक्यञ्च यद्वा गुणस्मरणमनुगुणाननुकूलान् प्रातरादिकालविशेषान् जुषन् यथार्थं पुमान् परमेण त्वयाप्तभगां अपहतप्रयत्नलक्षणशक्तिं प्रातिस्विकीं पूर्वोक्तां द्विविधां नीचां तां प्रकृतिं जहाति त्यजति जिहाति हन्ति च तदुभयमपि त्वमेव जहास्युत जिहासि च उत त्यागवधयोः समुच्चयार्थः जिहाति रावणं सङ्ख्ये राघवः परमास्त्रविदिति च—

> स्वातन्त्र्यात्प्रकृतित्यागकर्त्ता नारायणः परः ।
> यद्यप्येषा जीवसंस्थाहन्ताच भगवान् प्रभुः ॥

इति च किञ्च महसि असुरजनमोहनाय शिवादीन् पूजयसि महीयसे च सुरजनेन पूज्यसे च अणिमाद्यष्टगुणः ऽव्याप्तगुणो वा अशूव्याप्ताविति धातुः अपरिमेयभगः दुर्ज्ञेयपरमैश्वर्यादिगुणः ॥ ३९ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अथ श्रीमदीश्वरस्य प्रधानात्पृथक्त्ववैलक्षण्यं दर्शयन्त्यः काश्चित्तदनुगताः स्तुवन्ति—किञ्चानुभवतु जगतो महदैलक्षण्यं नाशजाड्यादित जीवस्यत्वनाशाचिद्रूपत्वात् साधर्म्यमेव ततः कथं ममैव भजनीयत्वं पूर्वाभिः दर्शितं इत्याशङ्क्य तदर्थमेव जीवेश्वररूपवैलक्षण्यं प्रतिपादयन्त्यः स्तुवन्ति । स यदजयात्मजामिति ॥ ३८ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

एवं श्रीकृष्णलोकस्य नित्यत्वमात्मनमवस्थाप्यत्वा [illegible]

श्रीमज्जीवगोस्वामिकृतवृहत्क्रमसन्दर्भः ।

स्वार्थवादानां जीवातिरिक्तत्वं दर्शयन्तो जीवनिरूपणं कुर्वन्ति स यदजयेत्यादि। स जीवः यत् यस्मात् अजया तव मायया अजां अविद्यां अनुशयीत न केवलं अविद्यां गुणांश्च तत्कृतान् धर्मांश्च अनुशयीत स्वीचकार पूर्वक्रियामनुवर्तयति युगपत् सेवमानो भक्तस्तु भजति अर्थात भवन्तं तेषां तेनाविद्यासम्बन्धो नास्ति तदनु भजनानन्तरं सरूपतां भजति रूपं शुद्धचैतन्यत्वं तेन सह वर्त्तमानस्तथा तव भाव शुद्धचैतन्यत्वमासाद्य त्वं भजतीत्यर्थः। उक्तं च यथाग्निना हेममलं जहाति ध्यातं पुनः स्वम्भजते च रूपं इत्यादि सतु जीवः तदनु अजानुशयनादनु मृत्युं भजिति कुतः अपेतभगः त्वद्भजनादपास्तसौभगः ननु कथं भजनपरोऽजया नवाध्यत इत्याहुः-त्वमुतेत्यादि। त्वमुत त्वन्तु तां अजां जहासि हापयसि अन्तर्भूतण्यर्थः भजनात् स्वयमेव भजतो जनान् जहतीं अजां त्वं हापयसि अनुकूलः सन् त्याजयसि अहिरिव त्वचं वस्तुतस्त्वहिं स्वयमेव त्वक् प्रथमतो जहाति शिथिलभावेन पश्चादहिस्त्यजति कालस्तत्रानुकूलो भवति अहि स्थानीयो भक्तस्त्वक्स्थानीया अविद्या-कालस्थानीयस्त्वं कालस्यानुकूलत्वात् त्वं कीदृशः आत्तभगः आत्तमाहात्म्यः तथैव ते माहात्म्यं यद्भजतः प्रत्यनुकूलो भवति अतः त्वमहसि महीयसे ब्रह्मस्वरूपे तेजसि महीयसे भासि तर्हि निर्विशेषब्रह्माहं नेत्याहुः अष्टगुणितेऽणिमाद्यष्टमहैश्वर्येऽपरिमेयभगः अन्यो योगी तु अष्टगुणितवैभवेऽपरिमेयभग एव भवति त्वन्तु न तथा इदमेव भगवत्त्वं तवेति वाक्यार्थः ॥ ३८ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं द्वाभ्यां भजनार्थमन्यत्र सत्यत्वं निराकृत्य तत्त्वेन ज्ञातत्वे तदेव भजनीयमिति सदंशं विचार्य द्वाभ्यां चिदंशं विचारयन्ति--स यदजयेति। चिरसेव्येति पक्षेऽपि भगवानेव सेव्यो नतु जीवाः स्वरूपस्थितो हि सेव्यः जीवास्तु स्वरूपात् प्रच्युताः तत्र हेतुमाह स एव भगवद्रूपोऽपि जीवः यदा यदस्मात्कारणात् वा अजया भगवन्मायया कृत्वा अजामाविद्यां प्रकृतिं वा अनुशयीत तामनुसृत्य जीवभावं प्राप्नुयात् तदा तस्या गुणान् जुषन् स्वानन्दं परित्यजन् जडेभ्यः आनन्दं प्राप्स्यामीति यदा जडानुभवं करोति तदा स्वयमपि स्वचैतन्यं परित्यज्य सरूपतां भजति जडभावं प्राप्नोतीत्यर्थः एवमविद्यासम्बन्धादानन्दांशश्चिदंशोऽप्यपगच्छति केवलं जडताऽऽपाद्यते जडस्योपास्यता पूर्वमेव निषिद्धा ननु जडभावे को दोषः रत्नादेर्महतोऽपि जडभावात् तत्राह तदनुमृत्युमपेतभग इति। कालो हि जडान् गुणान् क्षोभयति अन्नप्रायांश्च भक्षयति तथा एनमपि कालो भक्षयतीति तदनु जडतामनुमृत्युमपि प्राप्नोति नाप्येतावदेवानिष्टं यथा राजा यावज्जीवं सुखं जीवति अन्ते मृत्युं प्राप्नोति ततोऽप्यस्य जीवस्याधिकं दुःखमित्याह अपेता भगा ऐश्वर्यादिभाग्यानि यस्य एवं कोऽप्रायो मृत्युग्रस्तश्च यो जातः स कथं सेव्यो भवेदित्यर्थः ननु भगवतोऽपि मायासम्बन्धोऽस्ति मम माया दुरत्ययेति वाक्यात् ततः सोऽपि तथा भवेदित्याशङ्क्याह—त्वमुत जहासि तामिति। त्वन्तु तां मोहिकां जहासि "जहात्येनां भुक्तभोगामजोऽन्यः" इति श्रुतेः इदमेव जीवाद्वैलक्षण्यम् एतन्मूलकमन्यदाह आत्तभग इति ऐश्वर्यादिभगाश्च स्वीकृता एव भवन्ति नाशककारणाभावात् ननु तया सह स किमीरितः स्थितः तांश्च त्यजेत विशिष्ट तस्य स्वरूपमेवापगच्छेदिति कथं तां जहासीत्याह—अहिरिव त्वचमिति। सर्पाः कालेन कृत्वा जीर्यन्तो म्रियन्ते ततः कसर्णीरस्तेषां मुख्यः काद्रवेयः कांश्चिन्मन्त्रान् भूमिर्भूरित्यादीन् दृष्ट्वा तैः सर्वे सर्पाः जरातो विमोचिताः ततः सर्वे सर्पा जीर्णास्तनूरपाघ्नत तथा भगवानपि सहजसम्बद्धामपि त्वम्पूर्णां अजन्त एव स्वैश्वर्येण स्थितपूर्वावस्थां जहातीत्यर्थः। ननु सर्पाणां त्वक्परित्यागेऽपि न कोऽपि विशेषो जायते तथा भगवतोऽपि मायाग्रहणपरित्यागावस्थयोः कोऽपि विशेषो न स्यात् ततः परित्यागो व्यर्थ इति चेत्तत्राह-महसि महीयस इति। महसि पूर्णे तेजोरूपे अष्टैश्वर्यसहिते महीयसे विराजसे सत्यं तस्यां विद्यमानायाम अविद्यमानायां वा कोऽप्युपचयो वा सर्वदैव स्वरूपानन्दे परमप्रकाशमाने अष्टैश्वर्ययुक्ते विराजस्येव तथापि लोकदृष्ट्या तत्सम्बन्धे दोषप्रतिभाने एतदुच्यते तां जहासीति वस्तुतस्तु ताः सर्वा भगवत्येव वर्त्तन्ते न ताभिः कापि क्षतिः पृथग्भूतानामेव ताभिरनिष्टभवनात् त्वन्तु अपरिमेयभगः मा तु योगादि क्रियया निवर्त्त्यन्ते अंमयास्तु क्रियाशक्त्यापि किं नष्टा भवेयुः तस्मात्—

सर्वसाद्गुण्यमाहात्म्यः सर्वदोषविवर्जितः ।
भगवानेव सेव्यो हि न तु जीवाः कदाचन ॥

इत्यर्थः:–

कालादितृणपर्यन्ता न सेव्या मुक्तिमिच्छता ।
दोषत्याजनशक्तो हि सेव्यो दाता गुणस्य च ॥३८॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तदेवमिदङ्काराद्यपदस्य मायिकगुणमयस्य जगतः सत्यत्वमुक्त्वा तद्वर्त्तिनो जीवस्य चिद्रूपस्यापि मायाग्रस्तत्वादेव तथा गुणमयतो रूपमनुत्तमत्वमित्याहुः—सत् जीवः यत यस्मात् अजया अविद्यया अजां मायां अनुशयीम आलिङ्गत उपाधिलिप्तो भवेदित्यर्थः। अत एव गुणानां देहेन्द्रियादींश्च जुषन् सरूपतां तत्साधर्म्यं भजति नदनु तदनन्तरं अपेतभगः पिहितानन्दादिगुणः सन् मृत्युं संसारं भजति प्राप्नोति ननु चिद्रूपत्वाविशेषादहमपि कथमाविद्ययाऽऽलिङ्गितो न भवेयमितिचेत् मैवं जीवः खलु चित्कणः त्वन्तु चिन्महापुञ्जः ताम्रपित्तलस्वर्णादितेन एव तमसा आवृते भवेन्ननु सूर्य्यतेज इत्याहुः त्वमुत त्वंपुनस्तां जहासि अयमर्थः। मायाशक्तिर्हि तव स्वरूपभूतयोगमायांरथा तद्विभूतिरेव यदुक्तं नारदपञ्चरात्रे श्रुतिविद्यासम्वादे—

अस्या आवारिका शक्ति र्महामायाऽखिलेश्वरी ।
यया मुग्धं जगत् सर्वं सर्वे देहाभिमानिनः ॥ इति

सा अंशभूता तया स्वस्वरूपत्वेनानभिमन्यमाना स्वतः पृथक्कृत्य त्यक्ता भवति सैव बहिरङ्गा माया शक्तिरित्यु

यदि न समुद्धरन्ति यतयो हृदि कामजटा दुरधिगमोऽसतां हृदि गतोऽस्मृतकण्ठमणिः ।
असुतृपयोगिनामुभयतोऽप्यसुखं भगवन्ननपगतान्तकादनधिरूढपदाद्भवतः ॥ ३९ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

श्यते तत्र दृष्टान्तः अहिरिव त्वचं अहिर्यथा स्वतः पृथक्कृत्य त्यक्तां त्वचं कञ्चुकाख्यां स्वस्वरूपत्वेन नैवाभिमन्यते तथैव तां त्वं जहासि यत आत्तभगः नित्यप्राप्तैश्वर्यः एतदेवोक्तोपपन्यायेनाहुः—महसि परमैश्वर्ये अष्टगुणिते स्वतःसिद्धाणिमाद्यष्टविभूतिमति महीयसे पूज्यसे कथम्भूतः अपरिमेयभगः अपरिमितैश्वर्यः मदन्येषामिव देशकालादिपरिच्छिन्नं तवैश्वर्यं अपितु स्वरूपानुबन्धित्वादपरिमितमित्यर्थः । अत्र श्रुतयः अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः” इत्याद्याः ॥३८॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

प्रकारान्तरेण जीवेश्वरयोर्वैलक्षण्यमाहुः-- द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ज्ञाज्ञौ द्वावजावीशानीशावित्यादि श्रुतयः यद्यदा स जीवात्मा ऽजया हेतुभूतया ऽपेतभगः अपेत आवृतो भगो भगवदीयषाड्गुण्यं यस्य तथाभूतो भवति तदेवाजामविद्यां अनुशयीत स्वाज्ञानसङ्कोचेनान्याभिनिविष्टः तद्गुणानविद्याकार्य्यभूतान् देहादींश्च जुषन्नहङ्कारविषयीकुर्वन् तदनु सरूपतां सुखदुःखजन्मादिरूपतां च जुषन् अहं सुख्यहं जातो मरिष्य इत्याद्यनुकुर्वन् तदनुमृत्यं भजते निरतिशयप्रमादतां प्राप्नोति प्रमादं वै मृत्युमहं ब्रवीमीति सनत्सुजातः किञ्च त्वमुतेति ईश्वरस्यात्यन्तवैलक्षण्यद्योतक उतशब्दः त्वन्तु तां जहासि अनादरविषये दृष्टान्तः अहिरिव त्वचमिति तत्र हेतुः आत्तभगः नित्यप्राप्तस्वाभाविकाचिन्त्यानन्तैश्वर्यः अत एव महसि सर्वैरभिपूज्येऽष्टगुणिते अणिमाद्यष्टविभूतिमति स्वासाधारणैश्वर्ये महीयसे ब्रह्मरुद्रेन्द्रादिभिरीश्वरकल्पैः पूज्यसे बलिं हरद्भिश्चिरलोकपालैः किरीटकोटीडितपादपीठः । स्वयमीश्वराणां श्रीमत्किरीटतटपीडितपादपीठ इत्यादि वचनात् तदैश्वर्यस्य सातिशयत्वं वारयति अपरिमेयभगः अपरिमेय इत्यपरिच्छेदशून्यो भगोऽचिन्त्यमैश्वर्यं यस्य सः तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतं न तत्समश्चाभ्यधिकश्च दृश्यते परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाच इत्यादिश्रुतेः नत्वत्समोस्त्यभ्यधिकः कुतोन्यो लोकत्रयेप्यप्रतिमप्रभाव इति स्मृतेश्च ॥ ३८ ॥

---

### भाषा टीका।

यह जीव जिस कारण से आपकी माया से मोहित होकर माया का कार्य्य देव मनुष्यादि मूर्त्ति धारण कर रहता है इसी से संसार के विषयन का सेवन करत देह के तुल्य धर्म को प्राप्त होजाता है अर्थात् देह को हि आत्मा मानने लगता है उस के अनन्तर मरण को प्राप्त होजाता है इस प्रकार जन्म मरणादि भागी होने से इस के स्वाभाविक ज्ञान ऐश्वर्य्यादि मानो नष्ट होगए इस प्रकारका यह जीव होजाता है हे परमेश्वर ! आपतो जैसे सर्प कांचली छोड देता है तैसे हि उस माया को छोड देते हो अर्थात् आप माया के परतंत्र नहि हो इसी से ज्ञान शक्ति बल ऐश्वर्य्य वीर्य्य तेज रूप ऐश्वर्य्य का नित्य स्वीकार कर आप रहते हो और आप का उपरोक्त ऐश्वर्य्य नित्य निरवधि है तादृश ऐश्वर्य्य सम्पन्न होकर सदा पाप रहित जरा रहित २ मरण रहित ३ शोक रहित ४ भोजनेच्छा रहित ५ जलपानेच्छा रहित ६ सत्य काम सत्य संकल्प ८ रूप अष्ट गुण सम्पन्न अनन्त स्वतःप्रकाशमान स्वरूप में स्थित होकर आप पूजित होते है ॥ ३८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

एवं तावदुक्तसाधनकदम्बेन ये भगवन्तं भजन्ति ते मृत्युं तरन्ति इतरे संसरन्तीत्युक्तम् इदानीं ये बहिः सङ्गं परित्यज्य भगवन्मार्गे प्रवृत्ता अपि कथञ्चिदन्तर्वासनाशिनः कामाश्च मुञ्चन्ति ते न भगवन्तं प्राप्नुवन्ति न चेह सुखं लभन्ते केवलं कुयोनीरेव प्राप्नुवन्ति तान् शोचन्त ‘ कामान्यः कामयते मन्यमानः सकर्मभिर्जायते तत्र तत्र’ इत्यादिश्रुत्यर्थमाह—यदि न समुद्धरन्तीति। हे भगवन् ! ये यतयो हृदि स्थिताः कामजटाः कामस्य मूलानि वासना यदि न समुद्धरन्ति नोत्पाटयन्ति तेषामसतां भवान् हृदि गतोऽपि दुरधिगमो दुष्प्रापः कथम् अस्मृतकण्ठमणिर्विस्मृतो यः कण्ठमणिस्तत्तुल्यः स यथा कण्ठे वर्तमानो ऽप्यस्मृतत्वेदप्राप्त इव भवति तद्वदिति न केवलमेतावत्किन्त्वसुतृपयोगिनामिन्द्रियतर्पणपराणां योगच्छद्मनामुभयतोऽप्यसुखमिहामुत्र च दुःखमेव तदाह अनपगतान्तकादनिर्वृत्तान्मृत्योः लोकाराधनधनार्जनादिक्लेशाद्योगवैभवप्राकट्यभयाच्चेह तावद्दुःखम् भवत ईश्वरादपि दुःखम् कथम्भूतात् अनधिरूढपदात् अनधिरूढं पदं स्वरूपं यस्य तस्मात् त्वत्स्वरूपप्राप्त्यभावादविद्यावद्विषयत्वेन प्राप्तनिजधर्मातिक्रमनिबन्धनस्वदण्डरूपनरकप्राप्तेरमुत्राप्यसुखमित्यर्थः॥३९॥

दम्भन्यासमिषेण वञ्चितजनं भोगैकचिन्तातुरं—
सम्मुह्यन्तमहर्निशं विरचितोद्योगक्लमैराकुलम् ॥
आज्ञालङ्घनमक्षमज्ञजनतासम्माननासन्मदं-
दीनानाथ दयानिधान परमानन्द प्रभो पाहि माम् ॥२८॥

---

### श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी।

श्रुतौ कामान् विषयान्मन्यमानस्तद्गुणान् चिन्तयन् कामिभिस्तैरेव कामैः कर्माधर्मप्रवृत्तिहेतुभिर्विषयरूपैस्सह जायते भवि-

### श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

शब्दात्पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः' इति एतावत् भवत अप्राप्तिमात्रत्वेन तदाह लोकद्वयेपि दुःखमाह लोकाराधनेन धनार्जनादिक्लेशो भोगवैभवप्राकट्यभयश्चेत्येतद्द्वयं मृत्युरूपमेवेति मृत्युशब्देन द्वयं व्याख्यातम् अपितु भगवत्स्वरूपाज्ञानं तद्वन्तो विषया अधिकारिणो येषां निजधर्माणां तेषां प्रावत्तत्त्वं तेन हेतुना प्राप्ता ये निजाः स्वस्ववर्णाश्रमधर्मास्तेषामतिक्रमो दम्भन्यासाभिमानेनोल्लङ्घनं निबन्धनं कारणं यस्य एवम्भूतो यस्त्वहण्डरूपो नरकस्तस्य प्राप्तेः परलोके पितुः भयमित्यर्थः ॥ ३८ ॥

---

### श्रीकविचूडामणिचक्रवर्तिकृताऽन्वयबोधिनी ॥

एवं तावदुक्तसाधनकदम्बेन ये भगवन्तं भजन्ति ते मृत्युं तरन्ति इतरे संसरन्तीत्युक्तम् इदानीं ये बहिः सङ्गं परित्यज्य भगवन्मार्गे प्रवृत्ता अपि कथञ्चिदन्तर्वान्ताशिनः कामाननुसरन्ति ते भगवन्तं न प्राप्नुवन्ति नचेह सुखं लभन्ते केवलं दुर्योनीरेव प्राप्नुवन्तीति तान् शोचन्नाह-यदि नेति । हे भगवन् ! ये यतयः कुन्यासिनः , हृदि स्थिताः कामजटाः कामवासनाः यदि न समुद्धरन्ति नोत्पाटयन्ति तेषामसतां हृदि गतोपि भगवान् दुरधिगमः दुष्प्रापः कथं अस्मृतं कण्ठमणिः अस्मृतः विस्मृतः कण्ठे स्थितो यो मणिस्तत्तुल्योसि स यथा कण्ठे वर्तमानोपि विस्मृतत्वेऽप्राप्त इव भवति तद्वत् न केवलमेतावत् किन्तु असुतृपयोगिनामुभयतोऽप्यसुखं असुतृपाणामिन्द्रियतर्पणपराणां योगच्छलेन स्थितानामुभयत इहामुत्र च असुखं भवदुःखमेव भवति तदाह अनपगतान्तकात् अनिवृत्तात् अन्तकात् मृत्योर्हेतोर्लोकाराधनधनार्जनादिक्लेशात् भोगवैभवप्राकट्यभयाच्चेह दुःखं भवत ईश्वरादपि परत्र दुःखं कथम्भूतात् अनधिरूढपदात् अनधिरूढमप्राप्तं पदं स्वरूपं यस्य तस्मात् त्वत्स्वरूपप्राप्त्यभावात् अविद्यावच्छिन्नत्वेन प्राप्तनिजधर्मातिक्रमनिबन्धनात् दैत्यरूपनरकप्राप्तेरमुत्राप्यसुखमित्यर्थः । यदि न समुद्धरन्ति यतय . इत्यत्र श्रुतिः "कामान्यः कामयते मन्यमानः कामभिर्जायते तत्र तत्र पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः" इति अर्थः मुमुक्षोः कामत्याग एव प्रधानसाधनमिति दर्शयति कामाद्दृष्टां दृष्टेष्वेषु विषयान् यः कामयते मन्यमानः, तद्गुणान् चिन्तयानः सः तैः कामभिः कामैः सह जायते यत्र यत्र विषयप्राप्तिनिमित्तकामाः कर्मसु पुरुषं नियोजयन्ति तत्र तत्रैव विषयेषु तैरेव कामैर्वेष्टितो जायत इत्यर्थः । कृतात्मनस्तु इहैव सर्वे कामाः प्रविलीयन्ति विलयं गच्छन्ति कथम्भूतस्य पर्याप्तकामस्य परमार्थतत्त्वविज्ञानात् परि समन्ततः श्रीभगवद्गीतासु च—

आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी॥ इति

ननु अयमात्मनः कृतात्मा अयं कामीति कथं ज्ञायते तज्ज्ञानमाह , श्रुतिः. आत्मानं यः चेद्विजानीयादयमस्मीति पूरुषः किमिच्छन् कस्य कामाय शरीरमनुसञ्ज्वरेदिति अर्थश्च स्वस्वरूपात्मा देहादिव्यतिरिक्तोयमहमस्मीति आत्मानं यः पुरुषश्चेत् , यदि विजानीयात्तर्हि स किमिच्छन् किमात्मातिरिक्तवस्त्वन्तरमस्ति तदिच्छन् कस्य कामाय आत्मनो व्यतिरिक्तस्य कस्य वस्तुनः शरीरमनुसञ्ज्वरेत् शरीरोपाधिकृतसुखदुःखरागद्वेषभयाभिमानादिभिः सन्तप्तो भवेत् स्वार्थात् प्रेशेदिति तस्मादात्मज्ञानविमूढानां विषयासक्तचित्तानां कुयोगिनाम् उभयतो दुःखमित्युक्तम् अथ स्वामिचरणानां अत्रेतत् ज्ञातव्यं स्वयं परमहंसपभो निवृत्तसमस्तमायागुणेन्द्रियव्यापारोऽनवरतभगवद्गुणस्मरणकीर्तनादिभिः निदिध्यासितपरमात्मतत्त्वोपि स्वस्य सन्न्यासित्वात् कुसन्न्यासिनां दोषानात्मन्यारोप्य परमानन्दं श्रीकृष्णं प्रार्थयन्नाह दम्भन्यासेति—

दम्भन्यासमिषेण वञ्चितजनं भोगैकचिन्तातुरं-
सम्मुह्यन्तमहर्निशं विरचितोद्योगक्लमैराकुलम् ॥
आज्ञालङ्घिनमज्ञजनतासम्माननासन्मदं ।
दीनानाथ दयानिधान परमानन्द प्रभो पाहि माम् ॥

भो प्रभो परमानन्द ! मां पाहि मां कथम्भूतं दम्भन्यासमिषेण वञ्चितजनं दम्भेन यो न्यासस्तस्य मिषेण छलेन वञ्चिता जना येन दम्भन्यासत्वात् भोगैकचिन्तातुरं भोगेषु एकया चिन्तयाऽऽतुरं दुःखितं अत एवाहर्निशं मुह्यन्तं मोहं प्राप्नुवन्तं यतो विरचितोद्योगक्लमैराकुलं विरचिता य उद्योगः मठनिर्माणादिव्यापारस्तत्र यः क्लमः इतस्ततो धनाद्यर्थपरिश्रमस्तेनाकुलमवशम् अतः अहं अनन्तवाचाल्लङ्घिनं यावज्जीवमग्निहोत्रं जुहोति शान्तो दान्त इत्याद्याज्ञां विलङ्घ्य कृतसन्न्यासं तथापि सन्न्यासधर्मं परित्यज्य भोगाद्याकुलत्वादाज्ञालङ्घिनमिति तत्कुतः यत अज्ञजनतासम्माननासन्मदं अज्ञानां जनतानां जनसमूहानां सम्माननाभिः सत्कारैः सम्यक् मदो यस्य तं एवम्भूतं मां हे दीनानाथ पाहि इति एतेन एवम्भूतं जनं समुद्धर्तुं श्रीकृष्ण एव प्रभुर्भवतीति दर्शितम् ॥ ३९ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

यदीत्यस्य टीकायां श्रुतौ कामान् विषयान् मन्यमानस्तद्गुणान् चिन्तयन् कामभिस्तैरेव कामैर्धर्माधर्मप्रवृत्तिहेतुभिर्विषयेच्छारूपैः सह जायते आदिशब्दात्पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामा इति तेषां व्याख्येयं लोकाराधनेत्यादेरेतद्द्वयं मृत्युरूपमेवेति भावः । अत्र स्वव्याख्यायां तदेवं त्वत्सन्तनभक्त्यर्थमेवान्यपरत्वमपि यद्यपि वयं न सहाम इत्य(न्या)ज्ञानयोगमिश्रभक्तिप्रतिपादकश्रुतय आहुः—यदीति । यतयो विजितबाह्येन्द्रियाः सन्न्यासिनोपि यदि हृदि स्थिताः कामवासनाः समस्ता एव नोन्मूलयन्ति तर्हि तेषामसतामुन्मार्गस्थानप्राप्तानां हृदि गतो अन्तर्यामित्वेन मनस्याश्रितोऽपि भवान् दुरधिगमो यथा कथञ्चिदेव स्मृतिविषयः स्यात् नाभिगतचित्तत्वात् ननु परमदुर्लभोऽपि केनापि भाग्येन प्राप्तश्चेत् क इव तादृशः स्यात्तत्राहुः—अस्मृतेति । कण्ठे परिहितोऽपि महामणिः कामाद्यासक्ति(स)मये विस्मृतो दृश्यते इत्यर्थः । येऽस्मादिन्द्रियतर्पणतत्परास्तेषां योगिनां योगसिद्ध्यर्थं त्वद्रूपासनाप्रवृत्तानामप्युभयतोऽप्यसुखं ततोऽनपगतान्तकात् मृत्युपरम्परामयसंसाराद्वाध्यात्मिकादिदुःखं न अधिगतं नात्मोन्मुखीकृतं पदं चरणार-

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

चिन्हं यस्य तस्माद्भवतस्तूपेक्षारूपमिति श्रुतयस्तु तद्दर्शिता एव ॥ ३९ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भगवत्प्रावण्ये सत्यपि कामहतानामनर्थमाह—यदि नेति । न समुद्धरन्ति संसारमिति शेषः । कण्ठस्थोऽप्यस्मर्यमाणो मणिरिव त्वं हृद्गतोपि न ज्ञायसे इत्यर्थः । असुतृपयोगिनां प्राणेन्द्रियतर्पणपराणां योगिनां न सुखम् उभयत इह लोके परलोके चेत्यर्थः । अनधिरूढपदात् अनधिरूढपदत्वात् भावप्रधानो निर्देशः ॥ ३९ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थमपेतमगस्य पुनस्तत्प्राप्तौ किं निदानमित्यपेक्षाया-मनन्यप्रयोजनं त्वदुपासनमेवेत्यभिप्रेत्य तावद्भगवत्प्रावण्ये सत्यपि कामहतानामनर्थमाहुः—यदीति । यतयः मुनयः मनः प्रणिधानशीला अपि यदि हृदि स्थिताः कामजटाः कामानां मूलानि वासना इति यावत् न समुद्धरन्ति नोत्पाटयन्ति तर्हि तेषामसतां हृदिगतः स्थितोपि त्वं दुरधिगमः दुर्ज्ञेयः अस्मृतकण्ठमणिः कण्ठे स्थितोऽप्यस्मर्यमाणो मणिरिव स यथा-कण्ठे वर्त्तमानोऽप्यस्मृतश्चेदज्ञातप्राय एव हि भवति किञ्च हे भगवन् ! तेषाम् असुतृपयोगिनां प्राणेन्द्रियतर्पणपराणां योगिना-मुभयतोऽप्यसुखं इहामुत्रचासुखं दुःखमेव तदेवाहुः—अनपगतान्तकादनिवृत्तान्मृत्योः इह भोगपौष्कल्येपि मरणभयजं दुःखमस्त्येवेति भावः । परलोके त्वनधिरूढपदाद्भवतः सकाशाद्दुःखमनधिरूढम् अप्राप्तं पदं स्वस्थानं येन तस्माद्भावप्रधानो निर्देशः अप्राप्तस्वपदत्वात् स्वपदाप्राप्तेरिति यावत् भवतः निजधर्मातिलङ्घिनां शास्तुर्यमरूपात्त्वत्तो दुःखमित्यर्थः ॥ ३९ ॥

---

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथ भगवत्प्रावण्ये सत्यपि विषयासक्तचित्तानां महतामप्यनर्थ-माह—यदि नेति हे भगवन् ! यतयो यतनशीला अपि यदि न समुत्तरन्ति संसारमिति शेषः कथम्भूताः हृदि कामजटाः विषयवासनावासितचित्ता इत्यर्थः । तदा तेषां हृदि गतोपि त्वं असुतृपयोगिनामिन्द्रियपोषणपराणामत एवासतां विषया-विष्टचित्तानामस्मृतकण्ठस्थोऽप्यस्मर्यमाणो मणिरिव दुरधिगमो दुष्प्राप्यः न ज्ञायसे तैरित्यर्थः अतस्तेषां । दाम्भिकानां विषया-भिलाषेण योगच्छद्मना जगद्वञ्चकानामुभयतः इह लोके परे च न सुखं तदुक्तं प्रह्लादेन—

"मौनव्रतश्रुततपोऽध्ययनस्वधर्म—
व्याख्यारहोजपसमाधय आपवर्ग्याः ॥
प्रायः परं पुरुष ते त्वजितेन्द्रियाणां-
वार्त्ता भवन्त्युत नवात्र तु दाम्भिकानाम्" इति ॥

तथा अभियुक्तैरप्युक्तं—'

"हरति परधनं निहन्ति जन्तून्—
वदति तथाऽनृतनिष्ठुराणि यश्च ॥
अशुभजनितदुर्मदस्य पुंसः—
कलुषमतेर्हृदि तस्य नास्त्यनन्तः ॥
रागादिदूषिते चित्ते न हृदि मधुसूदनः ।
न बध्नाति रतिं हंसः कदाचित्कर्दमाम्भसि" इति ॥

उभयत्र सुखाभावे हेतुमाह अनपगतान्तकादनधिरूढपदाद्भवत इति । लोकरञ्जनपूर्वकधनार्जनक्लेशात् धर्महत्त्वलज्जया भोगप्रसिद्ध्यभावाच्च इह लोके तावत्सुखं नास्ति न दुःखनिवृत्तिरनापगतोन्तको मृत्युस्तस्मात् निष्कापट्यभगवद्भजनाभावेन भवतोऽनधिरूढपदात् अनधिरूढपदत्वात् भावप्रधानो निर्देशः भगवत्पदाप्राप्तेरित्यर्थः । यदि न समुद्धरन्तीति पाठे हृदि कामजटा न समुद्धरन्ति नोत्पाटयन्ति चेत्तदा तेषां दुरधिगम इत्यर्थः तथा सति विभक्तिपरिणामः हृदयादित्यर्थः ॥ ३९ ॥

---

### योगिरामानुजाचार्यकृतसरलाव्याख्या ।

भगवत्प्रावण्ये सत्यपि कामहतानामनर्थमाहुः—यदीति । हे भगवन् ! ये यतयः मन इन्द्रियादिप्रणिधानशीलाः हृदि स्थिताः कामजटाः कामस्य मूलानि वासनाः न समुद्धरन्ति नोत्पाटयन्ति यदि तेषामसतां कामवासनादुष्टान्तःकरणानाम् हृदि गतोपि हृदिस्थितोपि भगवान् अस्मृतकण्ठमणिरिव विस्मृतो यः कण्ठस्थमणिस्तद्वत् दुराधिगमः दुर्ज्ञेयः सः यथा कण्ठे वर्त्तमानोपि अस्मृतश्चेदप्राप्त इव भवति तद्वदिति अनर्थान्तरमाहुः असुतृपेति असुतृपयोगिनां योगच्छद्मना इन्द्रियतर्पणपराणाम् अनपगतान्तकात् अनिवृत्तात् मृत्योः तथा अनधिरूढपदात् अनधिरूढं अप्राप्तं पदं स्वरूपं स्थानं वा यस्य तस्मात् योगभ्रष्टैस्तैरप्राप्तस्वरूपादित्यर्थः । एवम्भूताद्भवतः सकाशात् उभयतोऽपि इहामुत्रचासुखं दुःखमेव भवतीति शेषः । अनपगतान्तकादिह लोके दुःखम् अनधिरूढपदात् भवतस्सकाशात् परलोके दुःखमित्यर्थः । अन्तकादिह लोके मरणरूपं दुःखं भवति अनधिरूढपदादीश्वरात् निजधर्मातिक्रमणनिमित्त-भगवद्दण्डनरूपनरकप्राप्तिरूपं दुःखं परलोके भवतीति भावः हे भगवन् ! ये यतयः हृदि स्थिताः कामजटाः न समुद्धरन्ति यदि तेषामसतां हृदि गतोपि भगवान् अस्मृतकण्ठमणिरिव दुरधिगमः असुतृपयोगिनां अनपगतान्तकात् अनधिरूढपदात् भवतश्चोभयतोऽप्यसुखं भवतीत्यन्वयः ॥ ३९ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

यदि न समुद्धरन्ति यततोपि हृदि कामजटा दुरधिगमो-ऽसतां हृदि गतोऽस्मृतकण्ठमणिः । असुतृप्तयोगिनामभवो भवत्यनपगतान्तकादनधिरूढपदाद्भवतः ॥ ३९–४० ॥

यदि न समुद्धरन्तीत्यस्यायमर्थः । यदि यततोपि हृदि कामजटात् जडशरीराविष्टकामात् न समुद्धरन्ति सम्यक् मोक्षकाङ्क्षिणो नोत्थिता भवन्ति विषयकामाः स्युरित्यर्थः । तर्हि हृदि गतोपि तेषामसतामप्रशस्तकर्मणां पुंसां दुरधिगमो दुर्ज्ञेयः

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अस्मृतकण्ठमणिरिति लुप्तोपमा विस्मृतकण्ठमणिः पुरुषो यथा कण्ठस्थितं मणिं न जानाति तथेत्यर्थः । अनेन स यथाकामो भवति तत्क्रतुर्भवति तत्कर्मकुरुते तदभिसम्पद्यते इति तु कामयमान् इत्येतद्विवृतं हे भगवन् ! अनुतृप्तयोगिनां अनुतृप्तानां विषयालम्बुद्धिं प्राप्तानां निष्कामानामित्यर्थः । निवृत्तिमार्गगानां पुंसां भवतोऽधीनादनधिरूढपदात् अनारूढवैकुण्ठादिपदानामादज्ञानामनवगतादज्ञातादन्तकात् कालादिलक्षणादभयोऽभयदः पूर्णानन्दादिलक्षणां मुक्तिं ददातीत्यर्थः । इन्द्रियाभिमानिदेवानां, वियोगाभावलक्षणाच्च अमुना च यथा कामयमानो यो कामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येतीति श्रुतिव्याख्यानं अस्याः श्रुतेः विशेषार्थः—

> निषिद्धकामयुक्तानामसतां तु विशेषतः ।
> दुर्ज्ञेयो भगवान्विष्णुर्हृदिस्थो ऽस्मृतहारवत् ॥

इत्यादिवाक्यादेव अवगन्तव्यः देवाश्च ऋषयश्चैव सुभक्त्या कामिनोऽपि तु इत्यादिना कामित्वे यतित्वमप्रयोजकमित्युक्तम् ॥ २९—४० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तदेवं तत्र सन्ततभक्त्यर्थमेवान्यमीषदपि वयं न सहाम इत्यन्याः ज्ञानयोगप्रतिपादकश्रुतय आहुः । यदि न समुद्धरन्तीन्ति । यतयो निर्जितबहिरिन्द्रियाः सन्न्यासिनोऽपि यदि हृदि कामवासनाः समस्ता एव नोन्मूलयन्ति तर्हि तेषां सतामुत्तमावस्थामप्राप्तानां हृदिगतोऽज्ञानसिद्ध्यर्थं मनस्याश्रितोऽपि भवान् दुरधिगमो यथा कथञ्चिदेव स्मृतिविषयः स्यात् ताभिरावृतत्वात् ननु परमदुर्लभोऽपि भाग्येन लब्धश्चेत् क इव तादृशः स्यात् तत्राहुः—अस्मृतेति । कण्ठपरिहितोऽपि महामणिःकामाद्यासक्तिसमये विस्मृतो दृश्यते इत्यर्थः । येत्विन्द्रियतर्पणतत्परास्तेषां योगिनां योगसिद्ध्यर्थं । त्वदुपासनाप्रवृत्तानामप्युभयतोऽप्यसुखं तत्रानपगतान्तकान्मृत्युपरम्परा संसाराद्याध्यात्मिकादिदुःखं तत्त्वधिगतं नात्मोन्मुखीकृतं पदं चरणारविन्दं यस्य, तस्माद्भवतस्तूपेक्षारूपमिति । श्रुतयस्तु तद्दर्शिता एव तच्छ्रुत्वा तदेकपरायणाः सोल्लासमभीष्टं स्पृहयन्ति ॥ ३९ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

अतस्त्वद्भक्ता एव मायां तरन्ति उक्तं च भगवतैव मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते इति अन्यथा यतयोऽपि नेत्याहुः यदीत्याहुः यतयो ज्ञानमार्गे यत्नशीलायदि त्वद्भजनेन हृदि कामजटा न समुद्धरन्ति नोन्मूलयेयुः तदा तेषां हृदि गतोऽपि त्वं दुरधिगमः दुष्प्रापः तत्र दृष्टान्तः अस्मृतकण्ठमणिः अस्मृतकण्ठमणिर्यथा कण्ठे स्थितोऽपि दुरधिगम एव समासगालुप्तोपमा अतः असुतृपयोगिनां त्वद्भजनविमुखतया ये असूनेव तर्पयन्ति तेषां उभयत इहामुत्र च असुखं भजतां तूभयत्रैव सुखं हे भगवन् ! कुतोऽसुखं तत्राहुः अनपगतान्तकात् अनपगतो योऽन्तकः कालस्तस्मात् कीदृशात् भवतोऽनधिरूढपदात् भवतो हेतोः अनधिरूढं पदं येन त्वं यस्य सहायस्तस्य कालः पदं कर्तुं न शक्नोति अतो भजतामुभयतः सुखमिति भावः ॥ ३९ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु भगवत्सेवापेक्षया जीवभजनमेव मुख्यं जीवे भगवानप्यस्ति जीवोऽप्यस्ति अतः सांशोभगवांस्तत्र वर्तत इति तं परित्यज्य निरंशः केवलः कथं सेव्य इति चेत्तत्राहुः यदि न समुद्धरन्तीति । यत्रांशः प्रकटः भगवांश्च प्रकटः तत्र तथैव अत एव पूर्वं पुरुषेष्वेव भगवदाराधनमुक्तं यत्र पुनः स्वरूपं जडतामापन्नं भगवांश्च सर्वथा न प्रकटः तत्र किं स्यात् न हि काष्ठे वह्निरस्तीति शीतनिवृत्त्यर्थं मोहार्थं वा काष्ठं सेव्यते तस्मादप्रकटभगवत्स्वरूपाः सर्वथैव न सेव्याः ननु कथं हृदि विद्यमानः स्वप्रकाशो भगवान् न प्रकाशते तत्राह यतयोऽपि यदि हृदि स्थिताः कामजटाः न समुद्धरन्ति तर्हि तेषामपि दुरधिगमः यथा निखातोपरि वृक्षेष्वारोपितेषु तन्मूलनव्यतिरेकेण यथाखाता उद्घाटयितुं न शक्यन्ते एवमन्तःस्थितो भगवान् मायाजवनिकाच्छन्नः तदुपरि अविद्यया आच्छादितः ततो वासनाकामक्रोधादिवृक्षैः सर्वथालुप्ताभिज्ञानः कथं दृश्यते तत्राप्यसतां देहाभिमानिनां ननु तथापि, वस्तुसामर्थ्यात् तत्र भगवानस्तीति फलं भविष्यतीति चेत्तत्राह अस्मृतकण्ठमणिरिति न स्मृतश्चासौ कण्ठमणिश्च तद्रूपो भगवानित्यर्थः यथा कण्ठमणिः कण्ठस्थितोऽपि तं न सुखयति प्रत्युत विस्मृत्या स्वरूपमात्रे स्मृते दुःखमेव प्रयच्छति तथा भगवानपि तमेव न सुखयति तत्पूजकं कुतः सुखयेत् प्रत्युत यतीनां परमदुःखदोऽपि जातः यथा विस्मृतमणेस्तदन्वेषणपरस्य दुःखं भवति तथा आत्मान्वेषणार्थं सर्वस्वपरित्यागं कृत्वा गतानां यतीनां परमदुःखदो भवति एतदामरणान्तं परित्यागधर्मपरिपालकानां ये तु पुनः बहिरात्मोपलम्भाभावात् अतिदुःखसाधनैः क्लिष्टाः यथाकथञ्चित् प्राणपोषणं कुर्वन्ति ते ह्यसुतृपाः पूर्वं योगिनश्च असुतर्पणार्थमेव योगिनो वा कृतेन सर्वेणापि जीवनमेव सम्पादयन्तीत्यर्थः । तेषामुभयतोऽप्यसुखं तदुभयं निर्दिशन्ति अनपगतान्तकाद्भवतश्चेति धर्मपरित्यागाद्यमसहितः कालोऽपि तेभ्यो दुःखं प्रयच्छति नरकं मृत्युञ्च प्रयच्छतीत्यर्थः । अस्मृत्वा भगवांश्च दुःखं प्रयच्छति तेन जीवनदशायामपि दुःखं ननु भगवान् कथं दुःखं प्रयच्छेत् अप्राप्तः परं भवेदित्याशङ्क्याह अनधिरूढपदादिति अनधिरूढं पदं यस्येति, भगवत्पदं तैर्नारूढमिति चिन्ताकुलाः क्लिश्यन्तीत्यर्थः—

> जीवेषु भगवानात्मा सन्छिन्नस्तेन तत्र न ।
> भजनं सर्वथा कार्यं ततोऽन्यत्रैव पूजयेत् ॥ ३९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तदेवं श्लोकत्रयेण प्रतिपादितमोक्षयानां पुरुषसार-

**त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयोर्गुणविगुणान्वयांस्तर्हि देहभृतां च गिरः ।**
**अनुयुगमन्वहं सगुण गीतपरम्परया श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥ ४० ॥**

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

इत्थं तत्र ये ऋषयः उक्तास्ते द्विविधाः निर्गुणब्रह्मोपासकाः ज्ञानिपदवाच्याः सगुणब्रह्मोपासकाः भक्तपदवाच्याश्च ते यदि विमदाः सदाचाराः स्युस्तदा ते उभये एव कृतार्थाः यदि तु दुराचाराः स्युस्तदा तेषां का गतिरित्यपेक्षायामाहुर्यदीति द्वयेन । हे भगवन् ! यतयः सन्न्यासिनो निर्गुणब्रह्मोपासकाः हृदि स्थिताः कामजटाः कामस्य मूलानि वासनाः यदि न समुद्धरन्ति नोत्पाटयन्ति तदा तेषाम् असतां भवान् हृदि गतोऽपि दुरधिगमो दुष्प्रापः कथं अस्मृतकण्ठमणिः विस्मृतो यः कण्ठमणिस्तत्तुल्यः स यथा कण्ठे वर्त्तमानोऽप्यस्मृतत्वेनाप्राप्त इव भवति तद्वदिति न केवलमेतावदेव किन्तु तेषामसुतृपयोगिनामिन्द्रियतर्पणपराणां योगच्छद्मनामुभयतोऽप्यसुखम् इहामुत्र च दुःखमेव तत्रैहिकं दुःखमाहुः—अनपगतोऽनिवृत्तो योऽन्तकस्तस्मात् लोकाराधनादिक्लेशधनार्जनादिक्लेशविषयभोगाच्छादनादिक्लेशरूपमृत्युत्रितयात् प्राप्तादित्यर्थः पारत्रिकं दुःखमाहुर्न अधिरूढं पदं स्वरूपं यस्य तथाभूतात् भवतः सकाशात् यत् दुःखं तत् त्वत्स्वरूपप्राप्त्यभावात् प्रत्युत त्वद्दत्तनरकयातनातिशयाच्चेत्यर्थः । अत्र श्रुतयः कामान् यः कामयते मन्यमानः सकामभिर्जायते तत्र तत्रेत्याद्याः मन्यमानः मननपरायणोऽपि यतिरित्यर्थः ॥ ३९ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इदानीं पूर्वोक्तस्वरूपाद्भगवतः पराङ्मुखानां वान्ताशिनां निष्ठामाहुः श्रुतयः कामान् यः कामयते मन्यमानः स कर्मभिर्जायते तत्रतत्रेत्याद्याः एवं सर्वभूतानां पतितानां पावने तवैव सामर्थ्यं शीलञ्चेति कृपामाविष्कारयन्त्यः सम्बोधयन्ति—हे भगवन्निति ये यतयः यतिवेषविडम्बकाः योगच्छद्मना मुण्डशिरस्काः हृदि कामजटा न समुद्धरन्ति अन्तर्भोगवासनां न मुञ्चन्ति तेषामसतां हृदि गतोऽपि भगवान् दुरधिगमः दुष्प्राप्यः तत्र दृष्टान्तगर्भितं विशेषणं अस्मृतकण्ठमणिः अस्मृतः कण्ठे वर्तमानो मणिर्यथा तद्वदित्यर्थः न केवलमियदेव दुःखं किन्तु अपरमपीत्याह—असुतृपेति । असुतृपाणामिन्द्रियतृप्तिकामानां योगच्छद्मपरिच्छन्नानां विषयाच्छादितबुद्धीनामुभयतोऽपि दुःखमेव भवतः अनपगतान्तकात् अनिवृत्तकालरूपात् परलोके भयम् अनधिरूढपदात् अप्राप्तभोगसाधनादस्मिल्लोके ऽपि दुःखमेवेति उभयत्र सुखाभावे सति कुतस्तरां संसारनिवृत्तिसाधनगन्धस्याशापीति भावः ॥ ३९—३९ ॥

---

### भाषा टीका ।

यत शील योगिजन निज हृदय में स्थित विषय वासना को यदि नहि उखाड़ते हैं तो जस कण्ठ में स्थित भी है मणि परन्तु उसके स्मरण न होने से अप्राप्त के हि समान है तैसे हि आप उन असत् पुरुषोंके हृदय में स्थित हो तथापि उनको दुःख से भी प्राप्ति के योग्य आप नहि हो इतना हि नहि है किन्तु प्राण इन्द्रियों की तृप्ति करने में परायण कुयोगियो कों इस लोक में तथा परलोक में दुःखहि होता है सुख नहि होता क्योंकि इस लोक में तो नहि निवृत्त भए मृत्यु से मरण के भयते दुःख हि रहता है और आप के पदकी प्राप्ति न होने से परलोक में कर्मानुसार दण्ड देने वारे यम रूप आप ते दुःख हि होता है ॥ ३९ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

ननु, यतेर्न किमपि कृत्यमस्ति प्रारब्धमेव सुखोपभोगेनापक्षप्यते अतः किमिति वृथा शप्यते उभयतोऽप्यसुखमिति श्रूयते च "एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान्"इत्यादि तत्राह त्वदवगमीति हे सगुण षड्गुणैश्वर्ययुक्त ! त्वदवगमी त्वज्ज्ञानवान् भवदुत्थशुभाशुभयोर्भवतः कर्मफलदातुरीश्वराद्धेतोरुत्थयोराविर्भूतयोः शुभाशुभयोः प्राचीनपुण्यापुण्यकर्मणोः फलभूतान् गुणविगुणान्वयान् सुखदुःखसम्बन्धांश्च वेत्ति नानुसन्धत्ते तर्हि तदानीं च देहभृतां देहाभिमानिनां प्रवृत्तिनिवृत्तिकरीर्गिरो विधिनिषेधलक्षणा न वेत्ति विगतदेहाभिमानतया कार्याकार्यबोधाभावान्न नियुज्यत इत्यर्थः । युक्तञ्चैतत् यतः कारणान्मनुजैरन्वहं श्रवणभृतः अनुदिनं श्रवणेन चेतसि धृतस्त्वं तेषामपवर्गगतिरपवर्गरूपा गतिर्भवसि कथं श्रवणभृतः अनुयुगं प्रतियुगं या गीतपरम्परा उपदेशसन्ततिस्तया सत्सम्प्रदायानुसारेणेत्यर्थः । एतदुक्तं भवति ये तावत्तत्त्वज्ञानिनो न तेषां कर्माधिकारशङ्काऽपि ये चानवरतं त्वत्कथाश्रवणादिनिष्ठास्तेषामप्यासन्नभवत्पदानां न विधिनिषेधबाधः इतरेषान्तु योगच्छद्मनेन्द्रियलालसानामुभयतो ऽप्यसुखमिति ॥ ४० ॥

अवगमं तव मे दिश माधव स्फुरति यन्न सुखासुखसंक्रमः ।
श्रवणवर्णनभावमथापि वा न हि भवामि यथाविधि किङ्करः ॥२७॥

---

### श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

अतः प्रारब्धमात्रभोगेन यतेरन्यकृत्याभावात् ब्राह्मणस्य ब्रह्मविदः एष स्वस्वरूपानुभवलक्षणः महिमा माहात्म्यं नित्य एकरूप अविकृतोऽस्ति यतः पुण्यकर्मणा न वर्द्धते पापकर्मणा च कनीयान् क्षीणो न भवतीति तर्हि तदानीं त्वदनुभवकालेन नियोज्यते विधिना न प्रवर्त्यते निषेधेन च न निवर्त्यते एतत् सुखदुःखाद्यज्ञानं युक्तञ्च युक्तमेव तव अवगमं त्वदनुभवरूपं ज्ञानं मे मह्यं दिश देहि यतः अवगमात् ॥ ४० ॥

श्रीकविचूडामणिचक्रवर्तिकृताऽन्वयबोधिनी ।

ननु यतेर्न किमपि कृत्यमस्ति प्रारब्धमेव सुखोपभोगेना-क्षिप्यते अतः किमिति वृथा शप्यते सः उभयतोऽप्यसुखमिति तत्राह–त्वदवगमीति । भो सगुण षड्गुणैश्वर्ययुक्त त्वदवगमी त्वज्ज्ञानवान्पुरुषः भवदुत्थशुभाशुभयोर्गुणाविगुणान्वयान्नवेत्ति नानुसन्धत्ते तर्हि देहभृतां च गिरो न वेत्ति भवतः कर्म-फलदातुरीश्वरादुत्तोदुत्थयोराविर्भूतयोः शुभाशुभयोः प्राचीन-पुण्यपापकर्मणोः फलभूतान् गुणाविगुणान्वयान्सुखदुःख-सम्बन्धान्न वेत्ति तर्हि तदानीं देहभृतां देहाभिमानिनां प्रवृ-त्तिनिवृत्तिकरीः विधिनिषेधलक्षणा गिरः न वेत्ति विगत-देहाभिमानतया कार्याकार्यबाधाभावात् न युज्यत इत्यर्थः । युक्त-मेतदित्याह–अनुयुगमिति । यतः कारणादनुयुगं गीतपरम्परया सत्सम्प्रदायानुसारेण उपदेशधारणया श्रवणेन चेतसि धृतः अपवर्गरूपा गतिरित्यर्थः । एतदुक्तं भवति एतावत्तत्त्वज्ञानिनः न तेषां कार्याधिकारशङ्कापि ये चानवरतं त्वत्कथाश्रवणादि-निष्ठाः न तेषामप्यासन्नभवत्पदानां विधिनिषेधबाध इत-रेषां योगच्छद्मना इन्द्रियलालनलालसानामुभयतोऽप्यसुख-मिति त्वदवगमीत्यत्र श्रुतिः एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्द्धते नो कनीयान् तस्यैव स्यात् पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेनेति अर्थः ब्राह्मणस्य ब्रह्मविदः एषः महिमा माहात्म्यं नित्यः अतः कर्मणाशु-भेन न वर्द्धते वृद्धिं न याति तथाऽशुभेन कर्मणा नो-कनीयान्न क्षीयते अन्ये तु महिमानः कर्मकृताः अनित्याः अतस्तं महिमानं विदित्वा तस्यैव परमात्मनः पदवित् स्वरूप-वित् स्यात् स पापकेन शुभाशुभलक्षणेन कर्मणा ज्ञानाज्ञान-कृतेन न लिप्यते इति ततः किमपि आह श्रुतिः नैनं पाप्मा पापो न तरति नातिक्रामति पतिसर्वं पाप्मानं तपति विपाप्मो रजोऽविचिकित्सो ब्राह्मणो भवतीति अर्थः एतं ब्रह्मविदं पाप्मा पापो न तरति नातिक्रामति स तु सर्वं भूतं भवत् भविष्यत्पापं तरति अतिक्रम्य वर्त्तते एवं योऽज्यं न तपति न तापयति स तु सर्वं तपति भस्मसात्करोति सुगम-मन्यत् स्वामिनां —

अवगमं तव मे दिश माधव—
स्फुरति यन्नसुखासुखसङ्गमः ॥
श्रवणवर्णनभावमथापि वा—
नहि भवामि यथाविधि किङ्करः ॥

अवगमं ज्ञानं सुगममन्यत् ॥ ४०–२७ ॥

———

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तच्छ्रुत्वा तदेकपरायणाः सोल्लासमभीष्टं स्पष्टयन्ति–त्वदिति । त्वद्याथार्थ्यानुभवीतु भवदुत्थयोर्भवद्भक्तिप्रभावेन ख्यातुमसमर्थयो-रपि साधनबाहुल्याय तद्देह विरचितुणा भवतैव तदा-भासत्वेन स्थापितयोः शुभाशुभयोः प्रारब्धरूपयोर्यौ गुण-विगुणौ सुखदुःखे तयोरन्वयाः अनुवृत्तयस्तान्न वेत्ति ते सन्ति न वेत्ति न जानात्यपि यदा तान्न वेत्ति तदा देहभृतां देहाभिमानिनां विधिनिषेधरूपास्तु गिरः सुतरां न वेत्तीत्यर्थः यद्वा देहभृतां गिरः स्वस्तुतिनिन्दारूपाश्च न वेत्ति इति अथवा भवत उद्भवत् उत्थं उत्थितञ्च देहभृतां तयोर्जायमानोत्थि-तयोर्देहभृद्भिः क्रियमाणयोः कृतयोरितियावत् तयोः शुभाशुभयोः पुण्यपापयोः गुणाविगुणान्वयान् गुणदोषसम्बन्धान् न वेत्ति कः किङ्करोमीति कृतवान् वा अतः अतो वा भद्राभद्रं किं जातं तत्सर्वं न जानातीत्यर्थः । तर्हि तेषां स्तुतिनिन्दा रूपान्यविषयकाः गिरश्च न वेत्ति त्वदनुभवानन्दाविष्टत्वादेवेत्यर्थः । तर्हि किं करो-तीत्यपेक्षायां तत्सम्प्रदायप्रवर्तकमहाजनदृष्टान्तेन दर्शो-यन्ति अनुयुगमिति यतोऽवगमाद्धेतोः स्वभक्तं ... मनुजैः श्रीस्वायम्भुवमनुतुल्यैः प्राणिभिरनुयुगं तथाप्यन्वहं गुण-गीतपरम्परया श्रवणद्वारा चेतसि धृतो भवसि तदुक्तं तृतीये श्रीमनुमुद्दिश्य—

अयातयामास्तस्यासन् यामाः स्वान्तरयापनाः ।
शृण्वतो ध्यायतो विष्णोः कुर्वतो ब्रुवतः कथाः ॥ इति ॥

तत्रहेतुः अपवर्गस्यापि गतिराश्रयो दशमपदार्थत्वं परमपुरु-षार्थत्वादेवेति भावः । तदेवं यावत्त्वच्छ्रवणादेरेवंभूतमाहा-त्म्यं जानन्ति तावदेव साधनान्तरं प्रवर्तन्ते इति च तावत्-कर्माणि कुर्वीतेत्यादिः अथवा कथं तादृशो मदवगामित्वं स्यात् तत्र तथैव सदाचारं दर्शयन्ति अनुयुगमन्वहमिति सर्वदेवेत्यर्थः यत इति यदर्थमित्यर्थः अतः पूर्ववन्नास्य साधनस्य दौर्बल्यमिति भावः श्रुतयस्तु तद्दर्शिता एव ॥ ४० ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भगवत्पदप्राप्तेः भगवज्ज्ञानवतां सम्पत्तिमाह– त्वदवगत-मिति । भवदुत्थयोः संसारोत्थयोः शुभाशुभयोः पुण्या-पुण्ययोर्गुणविगुणान्वयात् देहभृतां गिरश्च स्तुतिनिन्दावाक्यानि त्वदनुगमी त्वदनुभववान् न वेत्ति मनुजः सहास्मत्कुल-गीतपरम्परया श्रवणभृतः श्रोत्रेणावगतः चेतसि धृतः त्वं तेषाम् अपवर्गगतिः अपवर्गरूपा गतिर्भवसि सत्सम्प्रदाया-नुसारेण गीतः ॥ ४० ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अथानन्यप्रयोजनानां भगवद्भक्तानां तूभयतः सुखमेवेत्याहुः– त्वदवगमीति । त्वामवगच्छतीति त्वदवगमी त्वद्याथात्म्यज्ञानवान् "आर्त्तो जिज्ञासुरर्थार्थी ज्ञानी च" इत्युक्तेषु तुरीय इत्यर्थः भवतीति भवः संसारः तस्मिन्नुत्थयोरुपस्थितयोः फलजननाय समुत्थितयो-रित्यर्थः । तयोः शुभाशुभयोः पुण्यपापात्मकयोः कर्मणो-र्गुणविगुणान्वयान् फलभूतसुखदुःखसम्बन्धांस्तर्हि तदानीञ्च देहभृतां गिरः स्तुतिनिन्दावाक्यान्यपि न वेत्ति नानुसन्धत्ते कुतः यतस्त्वमपवर्गगतिः तस्य देहान्तेऽपवर्गसाधनभूतः अनेन परलोके सुखमुक्तम् इह तु मनुजैस्तादृशैः सहानुयुगं प्रतियुगमनुवर्त्तिन्या सगुणगीतपरम्परया सगुणस्यानन्तकल्याण-गुणयुक्तस्य तव गीतपरम्परया कथामृतपरम्परयाऽन्वहम् श्रवण-भृतः श्रवणेन चेतसि धृतः यतस्त्वत्कथामृतपानमत्तस्ततो न वेत्तीत्यर्थः ॥ ४० ॥

———

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका।

अथ भगवज्ज्ञानवतां सम्पत्तिमाह—त्वदवगमीति। हे सगुण निरुपाधिकज्ञानादिषड्गुणैश्वर्ययुक्त! यस्त्वदवगमी त्वज्ज्ञानवान् भगवदादिशब्दवाच्यो हेयप्रत्यनीककल्याणगुणाकरः परमात्मैव सर्वशेषी सर्वोत्पादकः सर्वपालकः सर्वसंहर्ता सर्वाधारश्चिदचिच्छरीरीति ज्ञानवानित्यर्थः। भवदुत्थशुभाशुभयोश्चेति द्वितीयार्थे षष्ठी चेतनानां स्वस्वकर्मानुगुणफलदातुर्भवतस्तव सङ्कल्पेन संसारोत्थौ शुभाशुभौ सुखदुःखौ न वेत्ति नानुसन्धत्ते तर्हि किमुत गुणविगुणान्वयाः गिरः स्तुतिनिन्दाप्रयुक्तवाक्यानि न वेत्तीति——

> अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्।
> यस्यां यस्यामवस्थायां यद्यत्कर्म करोति यः॥
> तस्यां तस्यामवस्थायां तत्तत्फलमवाप्नुयात्।
> मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम्॥
> वाचैव वाचिकं कर्म कायेनैव तु कायिकम्।
> हरिर्दुःखानि भक्तेभ्यो हितबुद्ध्या करोति हि॥
> क्षाराग्निशस्त्रकर्माणि पुत्रस्य च पिता यथा॥

इत्यादिप्रमाणानुसन्धानाच्च वेत्तीति भावः कुतो न वेत्तीत्यत आह—यतः यस्मात्कारणान्मनुजैस्त्वद्भक्तैरन्वहं प्रतिदिनं त्वं श्रवणभृतः श्रवणद्वारा चेतसि धृतस्त्वं तेषां स्वभक्तानाम् अपवर्गगतिरपवर्गरूपा गतिर्भवसि कथं श्रवणभृतः इत्यपेक्षायामाह—अनुयुगमिति। अनुयुगं प्रतियुगं या गीतपरम्परा तया सत्सम्प्रदायानुसारेणेत्यर्थः। तथाच भगवतैवोक्तम्—

> मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्।
> कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च॥
> तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
> ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥ इति

तथा तृतीये कपिलवाक्यम्—

> विसृज्य सर्वानन्यांश्च मामेवं विश्वतो मुखम्।
> भजन्त्यनन्यया भक्त्या तान्मृत्योरतिपारये॥इति

अतस्त्वदवगमी शुभाशुभौ न वेत्तीति सुष्ठूक्तमिति॥ ४०॥

———

### योगिरामानुजाचार्यकृतसरलाव्याख्या।

अनन्यप्रयोजनानां भगवद्भक्तानामुभयत्रापि सुखमेवेत्याहुः त्वदवगमीति। त्वामवगच्छतीति त्वदवगमी त्वद्यथार्थज्ञानवान् ज्ञानी त्वात्मैव मे मतमित्युक्तेः तर्हि तदा ज्ञानदशायाम् भवदुत्थ शुभाशुभयोः भवतः कर्मफलदातुरीश्वराद्धेतोः उत्थितयोः फलजननायोपस्थितयोः शुभाशुभयोः प्राचीनशुभाशुभाऽशुभात्मककर्मणोः गुणविगुणान्वयान् सुखदुःखसम्बन्धान् न वेत्ति नानुसन्धत्ते दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः इत्युक्तरीत्या सुखदुःखयोर्निर्विकारो भवतीत्यर्थः। तथा देहभृताम् देहात्माभिमानिनाम् गिरः निन्दास्तुतिवाक्यानि यद्वा प्रवृत्तिनिवृत्तिकारीणि विधिनिषेधरूपाणि वाक्यानि न वेत्ति गतदेहाद्यभिमानतया कार्याकार्यादिबोधाभावाच्च नियुज्यत इत्यर्थः। युक्तश्चैतत् यतः अनुयुगं प्रतियुगं या सगुणस्य तव उपदेशपरम्परा तया सत्सम्प्रदायानुसारेण मनुजैरन्वहम् अनुदिनं श्रवणेन भृतः चेतसि धृतस्त्वं तेषामपवर्गगतिः मोक्षसाधनं भवसि एतदुक्तं भवति मोक्षप्रदं त्वां श्रवणमननादिभिः ये हृदि धारयन्ति योजनमित्यर्थः। तदुक्तं श्रीभगवता——

> नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन।
> नचास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः॥ इति

त्वदवगमी तदा भवदुत्थशुभाशुभयोर्गुणविगुणान्वयं देहभृतां गिरश्च न वेत्ति यतः अनुयुगं सगुणगीतपरम्परया मनुजैरन्वहं श्रवणभृतस्त्वं अपवर्गगतिर्भवसीत्यन्वयः॥ ४०॥

———

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

मू०॥ तदवगमार्थसितासितयोर्गुणविगुणयोर्न हि देहभृतां सगिरः। अनुययुरत्र हंसकुलगीतपरंपरया न तुषावरणा इव रजांसि वान्ति॥ वयसा सह यच्छ्रुतयस्त्वयि सफलं पतन्ति न पतन्ति बन्धनाः॥ २७-४१॥

सकलश्रुतिस्मृतिभावसङ्ग्रहात्मनस्तदवगमार्थसितासितयोरित्यस्यायं भावः देहभृतां जीवानां सगिरः गिरा वाचा सहिताः श्रोत्रादयः गुणविगुणयोस्तदवगमार्थसितासितयोर्नानुययुर्हीत्यन्वयः द्वितीयार्थे षष्ठी गुणरूपा श्रीः विगुणो निर्गुणो विष्णुस्तौ पूर्वं प्रस्तुतो विष्णुस्तच्छब्देन परामृश्यते तस्य हरेरवगमो यस्याः सा तदवगमा तया श्रियाऽर्थ्यते ज्ञायते सम्यगित्यर्थः। परमस्तेन सिता बद्धा सर्वदा तदधीनत्वेन वर्तते इति श्रीः असितोऽबद्धो नित्यमुक्तो विष्णुस्तौ श्रीश्रीधरौ नानुययुः आनुकूल्येन यथास्थितरूपगुणविषयत्वेन न प्रापुः तद्विषयीकरणोपायमाह—अत्रेति। अत्र जीवराशौ हंसकुलगीतपरम्परयेति हंसानां ब्राह्मणानां कुलेन गीतस्य उपदिष्टस्य परम्परया इन्द्रियाण्यनुपयुश्च भूतयश्चानुययुरित्युपसङ्ख्यानम् कर्तव्यं अत्र रजांसीति रजःशब्दोपादानाद्रजोगुणप्रधाना मनुष्या उपलक्ष्यन्ते तुषा आवरणं कवचं येषां ते तुषावरणाः तुषावरणास्तण्डुलपदार्थाः रजांसीव यथा धूलीश्च वान्ति न स्पृशन्तीत्यर्थः। तथाच श्रुतयः वयसा महता कालेन सह रजोरूपान्मनुष्यानवाप्तिप्राप्तफलानकुर्वन्तीति यदतो बध्नन्तीति बन्धनाः विधिनिषेधरूपेण पुरुषं बध्नन्त्यः श्रुतयः सात्त्विकानामर्थे त्वयि सफलं पतन्ति त्वद्गुणगणान् प्रकाश्य त्वदुपासकानां पुरुषार्थहेतवो भवन्ति राजसानां बुद्धिव्यामोहकत्वेन त्वयि न पतन्ति पुरुषार्थहेतवो न स्युरित्यर्थः। अनेन—

> जानाति प्रकृतिर्विष्णुं ज्ञेयो विष्णुश्च निर्गुणः।
> तावुभौ न विजानन्ति ऋते ब्रह्मपरंपराम्॥

इति महोपनिषद्विवृता—

> अन्ये सर्वे श्रिया बद्धाः श्रीर्बद्धा विष्णुनैव तु।
> बन्धश्च विष्णुतन्त्रत्वं मुक्तानाश्च श्रियस्तथा॥

इत्यादि गारुडपुराणार्थोपि सङ्गृहीतः॥ २७—४१॥

———

### [illegible]।

त्वदिति—[illegible] भवत् [illegible]

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

उत्थमुत्थितश्च। देहभृतां तयोः जायमानोत्थितयोर्देहवद्भिः क्रियमाणकृतयोरिति यावत्। तयोः शुभाशुभयोः पुण्यपापयोः गुणविगुणान्वयात् गुणदोषसम्बन्धात् न वेत्ति कः किं करोति कृतवान् वा ततो वा भद्राभद्रं किं जातं तत् सर्वं न जानातीत्यर्थः। तर्हि तेषां स्तुतिनिन्दारूपाः स्वविषयिकाः गिरश्च न वेत्ति। स्वमनुभवानन्दाविष्टत्वादेवेति वेत्त्यर्थः। तर्हि किं करोति तत्राहुरनुयुगमिति। यतो ऽवगमात्रेतोः स्वभक्तैक-वत्सलं मनुजैः श्रीस्वायम्भुवमनुतुल्यैः प्राणिभिरनुयुगं तत्रा-प्यन्वहं गुणगीतपरम्परया श्रवणद्वारा चेतसि धृतो भवसि। तदुक्तं तृतीये श्रीमनुमेवोद्दिश्य। अयातयामास्तस्यासन् यामाः स्वान्तरयापनाः। शृण्वतो ध्यायतो विष्णोः कुर्वतो ब्रुवतः कथाः॥ इति। तत्र हेतुः अपवर्गस्यापि गतिराश्रयो दशम-पदार्थत्वमिति॥ ४०॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

इममेवार्थं पुनः प्रपञ्चयन्त्य आहुः—त्वदवगमीत्यादि। त्वाम् अवगन्तुं शीलं यस्य तव उपगमो यथार्थज्ञानं नित्यसच्चिदानन्दविग्रहत्वादिज्ञानं वर्त्तते यस्येति नित्ययोगे इनि वा त्वदेकान्तभक्त इति यावत् भवतः भवद्भक्तिरूपाद्वैतात् उत्थयोः शुभाशुभयोर्गुणविगुणान्वयान् न वेत्ति तस्य शुभाशुभ-जनकप्रारब्धाभावात् तर्हि तदा देहभृतां प्राकृतदेहिनां गिरश्च न जानाति अतः प्राकृतदेहिवार्त्तापि न तस्य कर्णगोचरः अथवा तर्हि तदा तत इतियावत् देहभृतां गिरो वार्त्तापि तत्र नास्तीति नकार एवानुवर्त्तनीयः तदिदं युक्तमेवेत्याहुः—यत-स्त्वं मनुजैर्यैः कैश्चिदेव जनैः श्रवणभृतः श्रुतमात्र एव सन् अपवर्गगतिर्भवसीति शेषः। स पुनस्त्वदवगमी अनुयुगं कल्प-कल्पम् मनु तत्रापि अन्वहं गुणगीतपरम्परया गुणगानपरम्परया विशिष्टः अतस्तस्य शुभाशुभजनकप्रारब्धाभाव इति यत् तत्किञ्चित्रमित्यर्थः। अनुयुगमिति नित्यत्वात्॥ ४०॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं विदंशा न पूज्या इति निरूप्य लौकिका आनन्दा अपि न सेव्याः किन्तु भगवदानन्द एव सेव्य इति निरूप-यति द्वाभ्याम् त्वदवगमीति। स्वभावत एव स्मृत्यादिषु सर्व एव आनन्दा निषिद्धाः यथेह साधारणास्त्रियो न सेव्या-स्तथाऽप्सरसोपि यथात्र कालादिनियमव्यतिरेकेण भोगेषु भुज्यमानेषु सर्वश्रुतिस्मृतिविरोधो भवति एवं स्वर्गलोके-ष्वपि ज्ञातव्यं यथात्रापकीर्त्तिस्तथा तत्रापि अतः स एव सुखानुभवो निषिद्धः ततो निषिद्धाचरणे सर्वथा दुःख-मिति सर्वमेव सुखं दुःखानुविद्धम् अतः कथं सेव्यं स्यात् भगवदानन्दस्तु सर्वैः सेव्यः न तत्र पूर्वोक्ता दोषाः सम्भ-वन्ति यतोऽत्रैव भगवत्स्वरूपज्ञाने भोगादिनापि न दुःख-निन्दाचिन्तादयो भवन्ति तदाह त्वदवगमी त्वत्स्वरू-पाभिज्ञः भवदुत्थशुभाशुभयोस्त्वन्निमित्तं प्राप्तसुखदुःखयोः यदि गुणविगुणान्वयात् वेद यथा परमस्त्रिग्धे जारे तदर्थं क्लिष्टापि कामिनी न क्लेशं बुध्यते यथावा राजसेवकः कस्तूर्यादिना राजोद्वर्त्तने स्वयं लिप्तोपि न सुखं न मन्यते एवं भगवतो महावैभवं सह सेवकत्वेनानुभवं कुर्वन्नपि तत्सुखं न मन्यते यथा सेवार्थं महदपि दुःखं प्राप्नुवन् तदपि न मन्यते यदि तदा विधिनिषेधचिन्तापकीर्त्यादिप्रतिपादकवाक्या-न्यपि न प्राप्नोति वस्तुतस्तानि वाक्यानि देहभृतां भवन्ति अत इह लोक एव भगवत्सम्बन्धे तस्य सर्वोपद्रवनिवृत्ति-रुक्ता अन्यस्य तु साधारणेपि सुखदुःखानुभवे रागद्वे-षयोर्जायमानत्वात् प्राणिनां सम्बन्धिविधिनिषेधवाक्यान्यपि तस्य भवन्तीति स्पष्ट एव भगवत्सम्बन्ध एव सुखं नान्यथेति स्पष्टं ननु कथं वा त्वदवगमी सुखदुःखयोः रागद्वेषौ न प्राप्नोति कथं वा तस्यापकीर्त्यादिकं न भवति इत्याशङ्काया-माहुः अनुयुगमन्वहमिति। मनुजैरन्वहमनुयुगमन्वहं त्वं श्रवण-भृतः यतस्त्वमपवर्गगतिः अयमर्थः भगवद्गुणानुश्रवणं नित्यं कर्मदेशकालविशेषनियमाभावात् यत्कालोपाधिना प्रवर्त्तते तत्सर्वं काम्यं कर्मेति पूर्वमेवोक्तं अतो भगवतः गुणातीतपरम्परा-गुणानां यानि गीतानि व्यासादिभिः कृतानि तेषां परम्परया स्वकर्णश्रवणद्वारा भगवान् श्रवणे भृतः तेनान्य-निषेधादिकं न शृणोति भगवतैव श्रवणस्य पूरितत्वात् नित्यकर्मणा भगवता च सर्वपापक्षयात् तदुःख--जनकमपकीर्त्यादिकं प्राप्नोति यतो भगवान् मोक्षद इति मोक्षदस्तस्य सिद्ध एव सर्वदैवायं धर्म इति न काल धर्मा बाधन्ते भगवांश्च स प्रसिद्धः भक्तहितकर्त्ता मनुजैः सर्वैरेव भगवान् धृत इति भगवत्से-वका भगवदैक्यं प्राप्ता इति न कोपि निन्दां करिष्यतीति अतो भगवत्सेवक एव निर्दोषसुखभोक्ता न त्वन्य इति निरूपितम्—

सुखसेवापरो यस्तु स आनन्दं हरिं भजेत्।
अन्यथा सुखसम्प्रेप्सुः सर्वथा दुःखमाप्नुयात्॥ ४०॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

ये तु ऋषयो भक्ताः दुराचारास्ते यतय इव नोभयलोक-भ्रष्टाः किन्तु कृतार्था एवेत्याहुः—त्वदवगमी त्वां भजनीयत्वेन अवगन्तुं शीलं यस्य स भवदुत्थशुभाशुभयोर्गुणविगुणान्वयान् न वेत्ति भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्येनामुष्मिन्मनः-कल्पनमेतदेव नैष्कर्म्यमिति श्रुतेर्भक्तस्य भजने सत्येव नैष्कर्म्ये जातेपि ये शुभाशुभे दृश्येते ते खलु न कर्मफले किन्तु भवदुत्थ एव स्वभक्तियोगस्य रहस्यत्वरक्षणार्थं बहि-र्मुखमतोत्पातामावार्थं च भक्तोत्कण्ठावर्द्धनार्थं वा भवतैव कल्पिते स्वभक्तापराधफले एव वा ते भवता कर्मफले इव दर्शिते इति भावः। तयोर्गुणविगुणान्वयान् गुणदोषसम्बन्धान् न वेत्ति अयं भक्तो दयालुः क्षमाशीलो वदान्यः इत्यादि—गुणानामन्वयान् अयं भक्तो विषयासक्तो धनलुब्धो दम्भीत्यादिदोषाणामप्यन्वयांश्च लोकैरुक्तान् स्वस्मिन् जानाति नाधिकमनुसन्धत्ते इत्यर्थः। तर्हि तस्मिंस्तस्मिन् समये देहभृतां मनुष्याणामुत्तमाधमानां गिरश्च स्तुतिनिन्दावती-र्वाचश्च नानुसन्धत्ते मामभी जना मिथ्या गुणदृष्ट्यैव स्तुवन्ति चेत् स्तुवन्तु माममी जनाः विषयासक्त्यादीन् मयि सत्यानेव दृष्ट्वा निन्दन्ति चेदेतदुचितमेव निन्दन्त्विति

द्युपतय एव ते न ययुरन्तमनन्ततया त्वमपि यदन्तराण्डनिचया ननु सावरणाः।
ख इव रजांसि वान्ति वयसा सह यच्छ्रुतयस्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधनाः ॥ ४१ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

मनसि विमृशतीति भावः। तत्र हेतुः अनुयुगं युगे युगे अवतीर्णस्य तवेत्यर्थः। अन्वहमहन्यहनि मनुजैर्या सगुणस्य अप्राकृतगुणसिन्धोस्तव गीतपरम्परा तादृशनामगुणसङ्कीर्त्तनप्रवाहः तया त्वं श्रवणभृतः तत्कर्णयोः परिपूर्णः सन् अपवर्गगतिः पञ्चमस्कन्धगद्यदृष्ट्या प्रेमभक्तिप्रदः अपकृष्टाः वर्णाश्रमाचारेपि यतस्तथाभूता वा गतिर्भवसीत्यर्थः। अत्र श्रुतयः "तैरहं पूजनीयो वै भद्रकृष्णनिवासिभिः तद्धर्मगतिहीना ये तस्यां मयि परायणाः कलिना ग्रसिता येवै तेषां तस्यामवस्थितिः यथा त्वं सहपुत्रैश्च यथा रुद्रो गणैः सह यथा श्रियाभियुक्तोऽहं तथा भक्तो मम प्रियः इति श्रीगोपालतापिन्यः तद्धर्मगतिहीना इति कलिना ग्रस्ता इति दुराचारत्वव्यञ्जकं तस्यां मथुरायां तदेवं दुराचारत्वे सति द्वयोरुपासकयोर्मध्ये—

> यस्त्वसंयतषड्वर्गः प्रचण्डेन्द्रियसारथिः।
> ज्ञानवैराग्यरहितस्त्रिदण्डमुपजीवति ॥
> सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा।
> अविपक्वकषायोऽस्मादमुष्माच्च विहीयते ॥

इति भगवता यतिर्निन्दितः—

> अपि चेत् सुदुराचारो भजते मामनन्यभाक्।
> साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ इति

स्वभक्तोऽभिनिन्दितो यथा तथैव स्वस्तवान्ते श्रुतिभिरपि तदनुवादिनोऽभिस्समवादीति ज्ञेयम् ॥ ४० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

नन्वेषवाहिमा ब्राह्मणस्य न कर्मणा वर्द्धते नो कनीयानित्यादि श्रुतिभिः स्तुत्यानां यतीनां न गुणदोषभाक्त्वं किमिति निन्देत्याशङ्क्य न वयं यतीन्निन्दामः किन्त्वसुतृपाणामिति तत् भ्रान्तिवारणाय तल्लक्षणमाहुः—तव भगवतो ब्रह्मणः परमेश्वरस्यावगमो ज्ञानं जगत्कारणत्वशास्त्रयोनित्वसर्वनियन्तृत्वस्वप्रकाशत्वादिगुणवतो ज्ञानं विद्यतेऽस्येति त्वदवगमी यतोवा इमानि भूतानि जायन्ते सर्वे वेदा यत्पदमामनन्ति यः सर्वज्ञः सर्ववित् सर्वस्य वशी सर्वस्येशानः तमेव भान्तमनुभाति सर्वम इत्यादिश्रुतेः भवदुत्थशुभाशुभयोर्गुणविगुणान्वयाच्च वेत्ति भवतः परमेश्वरादाविर्भूतयोरनादिपुण्यापुण्यकर्मणो गुणविगुणान्वयात् सुखदुःखात्मकफलसम्बन्धाञ्च जानाति नास्य तत्स्फूर्तिरिति भावः। यद्येवं तर्हि देहभृतां गिरो निन्दास्तुतिलक्षणा न वेत्ति इति का कथा नचात्रानुपपत्तिशङ्कागन्ध इत्याहुः—यद्यस्मान्मनुजैरनुयुगं तत्रान्वहम् अव्युच्छिन्नसम्प्रदायं यथा स्यात्तथा श्रवणभृतस्त्वं श्रवणमार्गेण हृदि प्रवेश्य ध्यातस्त्वं सर्वज्ञो भगवान् तेषां ध्यातॄणामपवर्गगतिर्भवासि अपवर्गस्य गतिर्मोक्षमार्गः तत्प्रापको दातेति यावत् कयेत्याशङ्कायांवैदिकत्वव्यावृत्त्यर्थं सम्प्रदायस्वरूपमाहुः सगुणगीतपरम्परयेति। सगुणस्य स्वाभाविकाचिन्त्यषड्गुणादिगुणवतस्तव गीतं गानं ध्येयगेयतया कीर्तनं यस्यां सा चासौ परम्परा चेति तया मच्छिष्यैः सनकादिभिरित्यादिस्वयमेव साभिमानवाक्येन श्रीभगवतोद्धवं प्रति वक्ष्यमाणयेत्यर्थः ॥ ४० ॥

---

### भाषा टीका।

आप कों यथार्थ जानने वारा भक्तजन संसार में उत्पन्न पुण्य पाप के फल सुखदुःखों के सम्बन्धन को नहि जानता और उस काल में देहधारी अज्ञानी जीवों की कही भई निन्दा स्तुति बाणीयों का भी अनुसन्धान नहि करता क्यों कि उनको मुक्ति देने वारे आप हो इस से उनको परलोक में मुक्ति सुख की प्राप्ति है और इस लोक में सर्व युग में रहने वारी अनन्त कल्याण सम्पन्न आप की कथा सुधा के परम्परा से आप के भक्तजन मनुष्यों के साथ आप की कथा के श्रवण करने से उनोंने अपने मन में आप को धारण किया है ॥ ४० ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

त्वदवगमी न वेत्ति सुखदुःखेन च विधिनिषेधावित्युक्तं तत्र ननु कथमवगन्तुं शक्यते दुरधिगमत्वस्योक्तत्वादित्येवमाशङ्क्य सत्यमेवमनवगाह्यमहिम्नोऽवाङ्मनसागोचरत्वादविषयत्वादविषयत्वेनैव ज्ञानमिति दर्शयन् यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं भवच्च भविष्यच्च इत्यादिश्रुतिप्रतिपादितमपरिमितं महिमानमाह—द्युपतय एवेति हे भगवंस्ते अन्तं द्युपतयः स्वर्गादिलोकपतयो ब्रह्मादयो न ययुर्न प्रापुः तत्कुतः, यदन्तवद्वस्तु तत्किमपि त्वं न भवसि आस्तां द्युपतयो न ययुरिति यद्यस्मात्त्वमप्यात्मनोऽन्तं न यासि कुतस्तर्हि सर्वज्ञता सर्वशक्तिता वाऽत आह—अनन्ततया अन्ताभावेन न हि शशविषाणाज्ञानं सार्वज्ञ्यं तदप्राप्तिर्वा शक्तिवैभवं विहन्ति अन्तत्वमेवाह—यदन्तरेति। यस्य तवान्तरा मध्ये ननु अहो सावरणा उत्तरोत्तरं दशगुणसप्तावरणयुक्ताः अण्डनिचया ब्रह्माण्डसमूहा वान्ति परिभ्रमन्ति वयसा कालचक्रेण खे रजांसीव सह एकदैव ननु पर्यायेण हि यस्मादेवमतः श्रुतयस्त्वयि फलन्ति तात्पर्यवृत्त्या पर्यवस्यन्ति ननु साक्षाद्वदन्त्यथमेतावानिति सगुणस्य गुणानन्त्यान्निर्गुणस्य वागोचरत्वात् कथं तर्ह्यपदार्थे तात्पर्यमिति तत्र विधिमुखवाक्ये भवेदयं नियमः पदार्थस्यैव वाक्यार्थत्वमिति निषेधमुखे तु नायं नियम इत्याह—अतन्निरसनेनेति। अन्यदेव तद्विदितादथो अविदितादधि अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् अस्थूलमनण्वित्यादिप्रकारेण लक्षणया च तत्त्वमसीत्यादयः पर्यवस्यन्ति मच वाच्यं निषेधैः शून्यमेव स्यात्

श्रीधरस्वामिकृतभावार्थदीपिका।

इति यतो भवन्निधनाः भवति त्वयि निधनं समाप्तिर्यासां तास्तथा नहि निरवधिर्निषेधः सम्भवत्यतोऽवधिभूते त्वयि फलन्तीत्यर्थः— ॥ ४१—४२ ॥

द्युपतयो विदुरन्तमनन्त ते—
न च भवान्न गिरः श्रुतिमौलयः ॥
त्वयि फलन्ति यतो नम इत्यतो—
जयजयेति भजे तव तत्पदम् ॥ २८ ॥

---

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी।

आभासे तत्र इत्युक्तौ शङ्कते नन्वित्यादि अविषयत्वेनैव ज्ञानमिति ब्रह्म वागादिविषयं न भवतीति ज्ञानमेव ब्रह्मणो ज्ञानमित्यर्थः यदूर्ध्वमिति गार्गीं प्रति याज्ञवल्क्यस्योक्तिः हे गार्गि यद्ब्रह्म दिवः उर्ध्वाण्डकटाहभागादप्यूर्ध्वं वर्त्तते एवं पृथिव्या अधस्तना ब्रह्माण्डकटाहादप्यधो वर्त्तते यद्ब्रह्म इमे द्यावापृथिवी अनयो-र्द्यावापृथिव्योरन्तरा मध्येऽस्ति यद्भूतमतीतं यच्च वर्त्तमानं यच्च भविष्यत् तत्सर्वं यदायत्तं वर्त्तते यद्ब्रह्म इति अनन्ततये त्युपलक्षणत्वान्निर्गुणस्य चेति व्याख्यातं श्रुतौ आविदितादधि अव्याकृतादुपरि अनादीत्यर्थः। अन्यत्रेति धर्माधर्मास्पृष्टं कृताकृतात् कार्यकारणाभ्यां भिन्नं यत् अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यन्ति तद्वदेति श्रुतिशेषः। अस्थूलमित्यादिका त्वीदृशी "अस्थूलमनण्वहृस्वमदीर्घमलोहितमस्नेहमच्छाय-मतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनो-ऽतेजस्कमप्राणमसुखमात्रमनन्तमबाह्यम्" इत्यादि तत्रालोहित-माग्नेयं गुणरहितम् अस्नेहं वारिगुणरहितं अमात्र मनंशं सर्वविशेषरहितमित्यर्थः। घटोऽस्ति पटोऽस्तीत्यस्ति मुखेन वर्त्तमानं वाक्यं विधिमुखवाक्यं नास्तीति व्यतिरेक-मुखेन वर्त्तमानं वाक्यं निषेधमुखवाक्यं। हे अनन्त द्युपतयो ब्रह्मादयस्तेऽन्तं न विदुः भवानपि स्वस्यान्तं न याति श्रुति मौलयः श्रुतिशिरोभूषणभूताः गिरः उपनिषदोऽपि तेऽन्तं न विदुः यतो नम इति नमस्कारोपलक्षितया भक्त्यैव त्वयि फलन्ति तात्पर्यवृत्त्या पर्यवस्यन्ति अतो जय जयेति प्रकारेण तव तत् प्रसिद्धं पदं चरणं स्वरूपं वा अहं भजे ॥ ४१ ॥

---

श्रीकविचूडामणिचक्रवर्त्तिकृताऽन्वयबोधिनी ॥

त्वदनुगामी सुखदुःखे न वेत्ति न च विधिनिषेधाविस्युक्तं तत्र ननु कथमवगन्तुं शक्यते दुरधिगमत्वस्योक्तत्वादित्या-शङ्क्य सत्यमेवमनवगाह्यमहिम्नो ऽवाङ्मनसागोचरत्वाद-विषयत्वेनैव ज्ञानमिति दर्शयन् श्रुतिप्रतिपादितमपरिमित-महिमानमाह—द्युपतय इति। ननु भो भगवन् ते तव अन्तं द्युपतयः स्वर्गलोकपतयो ब्रह्मादयो न ययुः न प्रापुरेव त्वमपि आत्मनोऽन्तं न यासि कुतः अनन्ततया अन्ताभावेन नहि खपुष्पशशविषाणादेरज्ञानं अप्राप्तिर्वा शाकवैभवं विदन्ति अनन्तत्वमेवाह—यदन्तरेति। यदस्य तव अन्तरा मध्ये सावरणाः सप्तावरणसहिता अण्डनिचयाः ब्रह्माण्ड-समूहाः सह एकदैव वयसा कालचक्रेण वान्ति परिभ्रमन्ति खे आकाशे रजांसीव यतः यस्मादेवमतः श्रुतयो निश्चितम् अतन्निरसनेन त्वयि फलन्ति निषेधमुखेन तात्पर्यवृत्त्या पर्यवस्यन्ति ननु साक्षादयमेतावानिति वदन्ति सगुणस्य गुणानन्त्यान्निर्गुणस्यागोचरत्वात् नच वाच्यं निषेधैः शून्य-मेव ज्ञाप्यते इति यतो भवन्निधनाः भवति त्वयि निधनं समाप्तिर्यासान्ताः नहि निरवधिर्निषेधः सम्भवति अतोऽव-धिभूते त्वयि फलन्तीत्यर्थः। अपरिमितमहिमानमाह श्रुतिः सहोवाच यदूर्ध्वम् गार्गि यदर्वाक् पृथिव्या यदन्तरा द्यावा-पृथिवी इमे च यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते आकाशे तदोतञ्च प्रोतञ्चेति अर्थः स ह याज्ञवल्क्य उवाच हे गार्गि! त्वयोक्तं यत् ऊर्ध्वम् उपरि दिवः अण्डकपालाद्यच्चार्वाक् अधः पृथि-व्या अधोऽण्डकपालात् यच्चान्तरा मध्ये द्यावापृथिवी द्यावापृथिव्यो-रण्डकपालयोरिमे द्यावापृथिवी यद्भूतमतीतं भवच्च वर्तमानं भविष्यच्च भवितव्यं तच्च यत्सूत्रमाचक्षते तत्सूत्रमाकाशे ओतं प्रोतञ्च यत् व्याकृतं सूत्रात्मकं जगत् अव्याकृताकाशे ब्रह्मरूपे वस्तुमात्रे त्रिष्वपि कालेषु वर्त्तत इत्यर्थः। अनन्त-परेयं श्रुतिः अतन्निरसनेनेत्यत्र श्रुतिः अन्यदेव तद्विदिता-दथो अविदितादधि अन्यत्र धर्मादन्यत्राधर्मादन्यस्मात् कृताकृतात् अन्यत्र भूतात् भव्याच्च यत्पश्यसि तद्वदेति अर्थः तद्वस्तु विदितात् ज्ञानात् वस्तुनोऽन्यत् पृथगेव भवेत् तर्हि अवच्छिन्नमज्ञातं प्राप्तमत आह अथो अविदितादधि अथो-प्यर्थे अविदितादज्ञातादपि वस्तुनोऽधि उपरि वर्त्तते उपर्यर्थ-लक्षणया अभ्यादित्यर्थः। यद्धि यस्मादुपरि भवति तद्धि तस्मादन्य-दिति प्रसिद्धं धर्मात् शास्त्रीयात् अन्यत्र तथा अधर्मा-दन्यत्र तथा कृतं कार्यम् अकृतं कारणं तस्मादन्यत्र भूतादति-क्रान्तकालात् भव्याद्भविष्यतः चकाराद्वर्त्तमानाच्च अन्यत्र यदीदृशं वस्तु सर्वव्यवहारगोचरातीतं पश्यसि जानासि तद्वदेति यमं प्रति नाचिकेतसः प्रश्नः अथैव श्रुत्यन्तरं यस्मिन्नाकाशे सर्वमोतं प्रोतं स कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति गार्गि प्रश्ने याज्ञवल्क्यो वदतीत्याह सहोवाचैतद्वै तद-क्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वहृस्वमदीर्घमलो-हितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्क-मश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन" इति यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति स कृपणोऽथ य एतदक्षरं विदित्वाऽस्माल्लोकात् प्रैति स ब्राह्मणः" इति सुगमत्वान्न व्याख्यायते हे गार्गि! यदेतत् कथितं तत् अक्षरं परमपरब्रह्म ब्राह्मणा ब्रह्मविदः अभिवदन्ति तत्राह— अस्थूल-मित्यादि। अलोहितम् अग्नेः गुणो लोहितः अपां गुणः स्नेहः ताभ्यामन्यत् सर्वथाप्यनिर्देश्यत्वाच्छायाच्छाया तद्रहितं अच्छायं तर्हि तमो न अतमः असङ्गमसारं मीयते येन तन्मात्रं मात्रारूपं तदस्य नास्तीत्यमात्रं छिद्रवदन्तरं नास्ति अनन्तरं तर्हि बाह्यं न अबाह्यमिति अतन्निरसनेन ब्राह्मणास्तदक्षरं वदन्ति तदक्षरं किञ्चन वस्तु नाश्नाति नोपभुङ्क्ते कश्चन कोपि पुमान् तन्नाश्नाति नानुभवति सुगममन्यत् स्वामिनाम्—

द्युपतयो विदुरन्तमनन्त ते-
न च भवान्न गिरः श्रुतिमौलयः॥

### श्रीकविचूडामणिचक्रवर्त्तिकृताऽन्वयबोधिनी।

त्वयि फलन्ति यतो नम इत्यतो—
जयजयेति भजे तव तत्पदम् ॥

हे अनन्त ते तवान्तं द्युपतयो न च भवान्वेत्ति न च श्रुतिमौलयो गिरो विदुः किन्तु यतस्ता गिरस्त्वयि नमो जयजयेत्युक्त्वा फलन्ति अतोऽहं त्वत्पदं नमो जयजयेति ब्रुवन्भजे ॥ ४१ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

द्युपतय इत्यस्य टीकायाम अनन्तत्वेत्युपलक्षणत्वान्निर्गुणस्य चेति व्याख्यातं श्रुतौ अविदितादधीति अव्याकृतादुपरि अनादीत्यर्थः। कृताकृतात्कार्य्यकारणाभ्याम् अस्थूलमित्यादि-कापीदृशी "अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेज—स्कमप्राणममुखममात्रमनन्तरमबाह्यम" इत्यादि तत्रालोहित माग्नेय-गुणरहितम अस्नेहं वारिगुणरहितं अमात्रमनंशं सर्वं विशेषरहितमित्यर्थः। स्वव्याख्यायान्तु तदेतं(श्रु)स्तुतौ संक्षेपदर्शित-निजाभिजार्थाः सर्वविधश्रुतीर्मुख्यया लक्षणया च वृत्त्या-तत्स्वरूपनिरूपणद्वारा तत्स्वरूपवैभवनिरूपणद्वारा च तत्र चरन्तीरपि पर्य्याप्तिमनाप्नुवतीर्दृष्ट्वा लब्धसमयास्तथैव सर्वासां तत्र चरणं युक्तमित्युपसंहरन्त्यः काश्चिदुपक्रमश्रुतीनां सम्वादेनाहुः—द्युपतय इति। अनादिकालपरम्परासम्बन्धिनोऽनन्तब्रह्माण्डसम्बन्धिनश्च नाना ब्रह्मरुद्रादयो त्वं सर्वकाल देशव्यापकोऽपि अनन्ततयेति द्युपतय इत्यस्य चान्ताप्राप्तौ हेतुः इदमेव टीकायां यदन्तरेत्यादिना पूर्वत्रापि योजितं यस्य तवांशेनाविर्भूतस्य कारणार्णवशायिरूपस्यापि अन्तरा एकैकरोमकूपमध्ये ब्रह्माण्डनिचया असङ्ख्यया वान्ति सृष्ट्यादौ लब्धप्राकट्या निष्क्रामन्ति प्रलयादौ लब्धाप्राकट्याः प्रविशन्ति चेत्यर्थः। गवाक्षे परमाणव इवेति भावः। वयसा तेषां परिच्छेदकेन कालचक्रेण सह इति देशकालानन्त्यं दर्शितं तच्च स्वरूपवैभवाभ्यामेव तत्तदीयतत्तत्सर्वाश्रयत्वात् यद्वस्मादानन्त्याद्धेतोः श्रुतयोऽप्यतन्निरसनेन अनन्तादनन्तवैभवाच्च त्वत्तो ऽन्येषां शान्तानां शान्तवैभवानाञ्च अनुवादपूर्वकत्यागेन भवत्येवानन्तेऽनन्तवैभवे पाराप्राप्त्या निधनं समाप्तिर्यासां तथा-भूताः सत्यः सर्वा अपि श्रुतयः फलन्ति सफला भवन्ति अनन्तपुरुषार्थप्राप्त्या सार्थका जायन्त एतदुक्तं भवति यस्माच्छ्रुतयः सर्ववाक्यान्वयेन त्वय्येव सार्थका जायन्ते तस्मात्तासामेकदेश वाक्यरूपस्तत्तदनुवादोऽपि तत्तन्निरसनपूर्वकत्वदुपदेशवाक्यार्थ-पर्य्यवसान एव अतन्निरसनवाक्यमपि त्वदवधिकमेव साक्षात् त्वदुपदेशवाक्यमपि तथैव अतन्निरसनपूर्वकमेवेति लक्ष्यो वा वाच्यो वा भवसि अस्मदेकप्रमाण्येन सर्वथैवाप्राकृतानन्त-स्वरूपतद्वैभवतया निर्णीयमानस्त्वमस्माकं परमपुरुषार्थोऽसि एतदेवोक्तमुपक्रमवाक्येऽपि जयजयजह्यजामित्यादीति तत्रानन्तत्वस्य प्रतिपादिकाः श्रुतयोऽपि यतो वाचो निवर्त्तन्ते इत्याद्याः सर्व-ब्रह्माण्डाद्याश्रयत्वस्य यदूर्ध्वं गार्गि दिव इत्याद्याः सर्व-कालाश्रयत्वस्य सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि इत्याद्याः सर्व श्रुत्यर्थरूपस्य सर्वे वेदा यत्पदमामनन्ति इत्याद्याः अतन्निरसनपूर्वकश्रुत्यर्थत्वस्य न तस्य कार्य्यमित्याद्याः अतन्निरसनन्तु प्रथमतस्तावत् द्विविधं साक्षाद्वृत्त्या तात्पर्य्यवृत्त्याचेति तथा न तस्य कार्य्यमित्यादिषु इन्द्रो यातोऽवसितस्य राजा सर्वं खल्विदं ब्रह्मेत्यादिषु च तत्पुनश्चतुर्विधं शान्तस्वरूपनिरसनं स्वाभाविकानान्तगुणत्वेन प्राकृत-नियतशान्तवैभवनिरसनं शान्तफलसाधनसाध्यत्वनिरसनं शान्त-सम्बन्धमानृजुमार्गमयतत्प्रतिपादननिरसनञ्च तत्राद्यम अन्यदेव तद्विदितादित्यादौ द्वितीयं अस्थूलमनण्वित्यादौ न तस्य कार्य्य-मित्यादौ च तृतीयं अन्यत्र धर्मादन्यत्राधर्मादित्यादौ चतुर्थं नैषा तर्केण मतिरपनेया नैवाभ्यसेद्बहून् शब्दान्वाचो विग्लापनं हि तत इत्यादाविति इति एवम् एतच्छ्रुत्युक्तमात्मानुशासनं जीवहितोपदेश सर्वमूलस्वरूपस्वयं भगवत्सम्बन्ध्युपदेशो वा आ सम्यक् श्रुत्वा अथ अत एव आत्मना जीवस्य गतिं गम्यं तादृशभगवतो ज्ञानप्रकारं वा ज्ञात्वा भगवद्वैभववर्णनस्य तादृशस्वभावत्वादपूर्ववदनुभूय सिद्धा अपि किं वा पूर्णमनोरथाः सन्तः ॥ ४१ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

भगवतो माहात्म्यस्यापरिच्छेद्यत्वमाह—द्युपतय इति। द्युपतयः इन्द्रादयः अन्तम् अवधि यदन्तरा यस्यान्ते खे वयसा पक्षिभिः सह रजांसि इव यदन्तरा सावरणा अण्डानि च धावन्ति सञ्चरन्ति भ्रमन्ति भवन्निधनाः त्वत्पर्यवसायिन्यः श्रुतयः अतन्निरसनेन फलन्ति सफलानि भवन्ति समस्तचेतनसाजात्यनिरसनेन त्वद्वैलक्षण्यं बोधयन्ती—त्यर्थः ॥ ४१ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

इत्थं यथामति संस्तुत्याथ त्वन्माहात्म्यस्यापरिच्छिन्नत्वात्साकल्येन स्तोतुं नाशक्नुम इति निगमयन्ति—द्युपतय इति। द्युपतयः स्वर्गादिलोकपतयः महेन्द्रब्रह्मादय एव ते तवान्तं स्वरूपस्वभावपारं न ययुः न जानीयुरित्यर्थः। किम्पुनर्मनुजादय इति भावः। किं बहुना त्वमपि न यासि कुतः अनन्ततया स्वरूपस्वभावयोरपरिच्छिन्नतया न चैतावता तव सर्वज्ञत्वभङ्गः यथावस्थितवस्तुविषयज्ञानस्यैव सर्वज्ञत्वावहत्वात् अपरिच्छिन्नस्य परिच्छिन्नत्वज्ञानस्याज्ञत्वावहत्वाच्चेति भावः। महिम्नोऽपरिच्छिन्नत्वमेव प्रतिपादयन्ति यदन्तरेत्यादिना। यस्य तवान्तरा मध्ये एकैकस्मिन् रोमकूपे सावरणाः सप्तभिरावरणैस्सहिताः अण्डानां ब्रह्माण्डानां निचयाः समूहाः वान्ति सञ्चरन्ति यथा खे आकाशे रजांसि च-रन्तीति जात्यभिप्रायमेकवचनं पक्षिभिः सह वान्ति तद्वत् यद्वस्मादेवं हि ततः श्रुतयः पारोक्ष्यनिर्देशः स्तुतेरभ्यगतत्वाभिप्रायकः त्वदन्यतन्निरसनेन तस्मादपारमहिम्नस्त्वत्तोऽन्यत्प्रकृति-पुरुषादिवस्तु तन्निरसनेन तत्साजात्यप्रतिषेधेन तत्पूर्वक-मित्यर्थः। भवन्निधनाः भवति निधनं निष्ठा पर्यवसानमिति यावत् तथाभूता ताः शब्दवृत्त्या तात्पर्यवृत्त्या च प्रकृतपुरुषसाजात्य-

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

निरसनेन तद्विलक्षणं त्वां बोधयन्तीत्यर्थः । फलन्ति सफला भवन्ति कृतार्था भवन्तीत्यर्थः । समस्तचेतनाचेतनसाजात्यनिरसनेन तद्वैलक्षण्यमात्रं बोधयन्ति नतु साकल्येन त्वत्स्वरूपस्वभावादिकं बोधयितुं शक्नुवन्तीति भावः ॥ ४१ ॥

---

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अथ भगवतः परमात्मनो माहात्म्यस्यापरिच्छेद्यत्वमाह द्युपतय इति । हे भगवन् ! ते अन्तम् अवधि द्युपतयो ब्रह्मादयोपि न ययुः न प्रापुः तथा च ब्रह्मवाक्यं नारदं प्रति " नान्तं विदाम्यहममी मुनयोऽग्रजास्ते मायाबलस्य पुरुषस्य कुतोऽपरे ये । गायन् गुणान् दशशतानन आदिदेवः शेषोऽधुनापि समवस्यति नास्य पारम् " ॥ इति किञ्चास्तां ते द्युपतयो न ययुरिति यतस्त एव न ययुरिति न ब्रूमो वयम् किन्तु त्वमपि स्वस्यान्तं न यासि तथाचोक्तं भगवता स्वेनैवोक्तं विभूत्युपदेशे—

संख्यानं परमाणूनां कालेन क्रियते मया ।

न तथा मे विभूतीनां सृजतोऽण्डानि कोटिशः ॥ इति

न चैतावता सर्वज्ञताहानिः यत अनन्तस्यानन्तत्वेन ज्ञातत्वात् यद्यनन्तत्वास्यान्तत्वेन जानाति तदा सर्वज्ञताहानिः स्यात् अतो यथावद्वस्तुज्ञानात्तव न सर्वज्ञत्वं गतमिति तदेवानन्त्यं प्रतिपादयति कुतो यत यस्मात् यदन्तराण्डानिचयानन्तु सावरणा इति यस्य तवान्तरा मध्ये रोमकूपेष्विति यावत् गन्धिस्याश्चर्ये सावरणा उत्तरोत्तरदशगुणितसप्तावरणैरावृता अण्डनिचया ब्रह्माण्डसमूहाः वयसा पक्षिभिः सह कालेन वा खे आकाशे रजांसीव यान्ति परिभ्रमन्ति यदा भगवदुदरगतब्रह्माण्डानां संख्या नास्ति तदा तद्गतविभूतीनां संख्या नास्तीति किं वक्तव्यमिति भावः । हि यत एवम् अत एव श्रुतयस्त्वय्यतन्निरसनेन त्वय्येव फलन्ति सफलीभवन्ति समस्तचेतनाचेतनसाजात्या सह निरसनेन स्ववैलक्षण्यं बोधयन्तीत्यर्थः । अत एव भवन्निधना भवत्येव निधनं पर्यवसानं यासां ताः तथाच श्रुतयः भोक्ता भोग्यं प्रेरितारञ्च मत्वा प्रधानक्षेत्रज्ञपतिर्गुणेशः अजामेकां लोहितशुक्लकृष्णां तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति यस्यात्मा शरीरं य आत्मानमन्तरो यमयति यस्य पृथिवी शरीरं यस्याक्षरं शरीरम् एष सर्वभूतान्तरात्मापहतपाप्मेत्याद्याः तथा–

ज्ञानानन्दमयस्त्वात्मा शेषोऽयं परमात्मनः ।

सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः ।

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।

अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥

परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ।

इत्याद्याः स्मृतयश्चेति अतः कथं चरन्ति साक्षात् श्रुतयः त्वयि सतः परे इति विष्णुरातप्रश्नस्य चिदचिद्वस्तुशरीरकस्य परब्रह्मणः स्वरूपतो गुणतो विग्रहतश्चानन्त्यादिति वेदस्तुतिं प्रमाणीकृत्य श्रीशुकाचार्यैश्चिदचिद्वस्तुविशिष्टे ब्रह्मणि साक्षात्प्रतिपादयितुमशक्यत्वाच्चिदचिद्द्वारा श्रुतीनां तत्प्रतिपादकत्वं सद्वारकं सम्भवतीति प्रत्युत्तरं दत्तमिति पर्य्यवसितोर्थः इति । अत्रेदं तत्त्वम् "उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये" ॥ इत्युक्तप्रकारेण षड्विधतात्पर्यलिङ्गेन सर्वैरपि प्रामाणिकैस्तत्त्वं निश्चीयते तत्र वेदस्तुतौ तावदुपक्रमे जयजयजह्यजामित्यस्मिन् श्लोके अजामिति पदेन प्रकृतेः स्वरूपं अगजगदोकसामित्यनेन जीवानां अजयाऽऽत्मना च चरतोऽनुचरेन्निगम इत्यनेन वाक्येन ईश्वरस्य च परस्परस्वरूपभेद एव प्रतिपादितः पुनः श्रुतीनामीश्वरस्य च प्रतिपाद्यप्रतिपादकसम्बन्धोप्युक्तः तथोपसंहारेपि द्युपतय इत्यनेन पदेन जीवानां अण्डनिचया इत्यनेन ब्रह्माण्डरूपविकारकारणभूत प्रकृतेः त्वमपि त्वयीति पदाभ्यामीश्वरस्य च स्वरूपभेद एवोक्तः अभ्यासोपि तथैव श्रूयते तथाहि बृहदुपलब्धमित्यादिना सूक्ष्मचिदचिद्विशिष्टं कारणभूतं ब्रह्मैव स्थूलचिदचिद्विशिष्टं कार्यावस्थमिति सदृष्टान्तेनोक्तं तदनन्तरं इति तव सुरय इत्यनेन जीवानां स्वरूपं ऽयधिपतेरित्यनेन प्रकृतेरीश्वरस्य च स्वरूपमुक्तं तदनन्तरं दृतय इत्यत्र असुभृत इति पदेन जीवस्वरूपं महदहमादय इत्यनेन प्रकृतिस्वरूपं ते पुरुषविधान्वयः चरमः सदसतः परमशेषं ऋतमित्येतैः परस्वरूपमुक्तं तदनन्तरम् उदरमुपासत इत्यस्मिन् उपासत इत्युपासककथनेन चेतनस्वरूपं उदरं हृदयं दहरमित्येतैः पदैः परस्वरूपं पदानामर्थस्तु पूर्वमेवोक्तः कृतान्तमुखे इत्यनेनाचित्स्वरूपमुक्तं ततः परं स्वकृतेत्यत्र स्वशब्देन परस्य योऽभिष्वित्यनेन प्रकृतेः विरजधिय इति चेतनानां स्वरूपमुक्तं ततः परं स्वकृतपुरेष्वित्यत्रापि स्वशब्देन अखिलशक्तिभृत इत्यनेन भवत इत्यनेनच परस्य पुरेष्वित्यनेनाचितः बहिरन्तरसंवरणमित्यनेन पुरुषम् अंशकृतं न इत्येतैश्चितः स्वरूपमुक्तं ततश्च दुरवगमात्मतत्त्वनिगमायेत्यत्र तव इत्यनेन ईश्वरपदेन च परमात्मनः परिश्रमणा इत्युपासकत्ववाचकेन चेतनानां ते सशरीरत्वेन प्रकृतेरपि स्वरूपभेद एवोक्तः ततः उत्तरत्र त्वदनुपथमित्यत्र त्वयि हिते प्रिये इत्यादिपदेषु परमात्मस्वरूपं न यत रमन्ति आत्महन इत्यादिपदैश्चेतनानां स्वरूपं असदुपासनया इति पदेन प्रकृतेः स्वरूपञ्चावदत् वेदः ततः परं निभृत इत्यत्रापि निभृतमरुन्मनोक्षदृढयोगयुज इत्यनेन प्रकृतेः दृढयोगयुज. मुनयः अरयः स्त्रियः वयमित्येतैः पदैश्चेतनानां हृदयं ते इति पदाभ्यां परस्य च स्वरूपमुक्तं ततश्च क इह नु वेद इत्यत्रापि अग्रसरमित्यनेनेश्वर उक्तः ऋषिर्देवा इत्यनेन जीवा उक्ताः कालजव इत्यनेनाचितः स्वरूपमुक्तं ततश्च जनिमित्यत्र सदसच्छब्देन त्रिगुणमय इत्यनेन च कार्यकारणरूपायाः प्रकृतेः आत्मनि ये च पुमानित्येतैः पदैर्जीवस्य जात्यभिप्रायेणैकवचनं त्वयीति पदेन च परस्य स्वरूपमवादीत् ये तदनन्तरं तव परि ततोप्यनन्तरं सदिव मन इत्यत्र अशेषमिदमित्यनेन चिदचित्स्वरूपमुक्तं त्वयीति पदेन परस्वरूपं आत्मवित् इत्यनेन जीवा उक्ताः चरन्तीत्यत्राप्यखिलसत्त्वनिकेतनया इत्यनेन चिदचिदात्मकं जगत् भगवच्छरीरमितिनिर्णीतं ततोप्यनन्तरं त्वदकरण इत्यत्राखिलकारकशक्तिधरस्तव भवत इत्येतैः परस्वरूपं अजया इत्यचित्स्वरूपं विश्वसृजः अधिकृताश्चकिता इत्येतैस्तु जीवानां स्वरूपमभाणि ततश्च स्थिरचरजा तय इत्यत्र स्थिरचरजातय इत्यनेन चिदचिद्वस्तुस्वरूपं परस्य परमस्य तव इत्येतैश्च परमात्मस्वरूपमुक्तं तदनन्तरं अपरि-

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

मिता इत्यत्रापि तनुभृत इत्यनेन चिदचितोः स्वरूपं शासिता नियन्तृभवेदित्यनेन चेश्वरस्वरूपं व्याजहार ततोऽप्यनन्तरं न घटत उद्भव इत्यत्र प्रकृतिपूरुषयोरजयोरित्यनेन चिदचितोः स्वरूपं त्वयि परमे इति पदाभ्यामीश्वरस्य चोक्तं तदनन्तरं नृषु तवेत्यत्रापि नृषु तव मायया इत्यादिभिश्चिदचिदीश्वराणां परस्परस्वरूपभेदं पुनः स्वाभिमानाश्रभयभयदानेन परस्य स्वतन्त्रत्वं चोक्तम् तत उत्तरस्मिन् अजित हृषीकवायुभिरित्यत्र हृषीकवायुभिरित्यनेन प्रकृतिरुक्ता उपायखिदः व्यसनशतान्विता इत्याभ्यां जीवा उक्ता अज इति पदेन परमात्मोक्तः ततः परस्मिन् स्वजनसुतात्मदार इत्यत्र त्वयीत्यादिपदैरीश्वरस्वरूपं नृणामित्यादिपदैः जीवानां स्वरूपं इह इतिपदेन संसृतिकारणभूतप्रकृतेः स्वरूपमुक्तं भवति तदनन्तरं भुवि पुरुपुण्यतीर्थसदनानीत्यत्र ऋषय इत्यादिपदैश्चेतनानां मन इत्युपलक्षणेन प्रकृतेः त्वयि नित्यसुखे इति पदाभ्यामीश्वरस्य च स्वरूपमवोचत् तत उत्तरत्र सत इदमित्यत्रेदमित्यनेन चिदचिदात्मविश्वस्योद्घाटनेन मिथ्यावादप्रस्तावपूर्वकप्रतिक्षेपेनाप्रकृतेः स्वरूपं ते इत्यनेन च परस्वरूपं उकृथजडानित्यनेन पदेन जीवा उक्ताः ततश्च न यदिदमित्यत्रापि इदमित्यनेन चेतनाचेतनमिश्रं जगन्निर्दिश्य त्वयि एकरसे इत्याभ्यां पदाभ्यां भगवत्स्वरूपमवदन् तदनन्तरं सदजयेत्यत्र अजया इत्यनेन प्रकृतिरुक्ता स अनुशयीत जुषन् अपेतभग इत्येतैः पदैर्जीवा उक्ताः त्वं आत्तभगः अपरिमेयभग इत्येतैः पदैः पर उक्तः तदनन्तरमपि यदि न समुद्धरन्तीत्यत्र कामजटा इत्यनेन वासनारूपायाः प्रकृतेः स्वरूपं असतां असुतृपयोगिनामिति पदाभ्यां चेतनानां स्वरूपं भगवन् भवत इति पदाभ्यां परमात्मनः स्वरूपं व्याजह्रुः तत उत्तरत्र त्वदवगमीत्यस्मिन् त्वदवगमीत्यनेनेश्वरजीवावुक्तौ शुभाशुभयोरित्यनेनाचित्स्वरूपमुक्तं तदनन्तरं द्युपतय इत्यनेन जीवा उक्ताः त्वमित्यनेन त्वयापि पदेन चेश्वर उक्तः अण्डनिचया इत्यनेन तत्कारणरूपा प्रकृतिरुक्ता इति अपूर्वतानामप्रमाणान्तराप्राप्तेः नहि चिदचिच्छरीरकं परं ब्रह्म शास्त्रं विना प्राप्यते तथा च सूत्रकारः शास्त्रयोनित्वादिति अतश्चिदचिदीश्वराणां परस्परं स्वरूपभेदः शास्त्रेणैव ज्ञायते फलमपि परमसाम्यरूपो मोक्षः सोऽपि पुनरिह यत्समेत्य न पतन्ति कृतान्तमुखे मुनय उपासते तदरयोऽपि ययुः स्मरणात् त उत पदा क्रमन्त्यविगणय्यशिरोनिऋतेः विरह उर्दास्या यदि परस्य विमुक्ततत‌ः कथमनुवर्त्ततां भवभयं गीतपरम्परया श्रवणभृतो यतस्त्वमपवर्गगतिरित्यादिभिस्तत्र तत्रोक्तः अर्थवादस्तु त्रिविधः तथा चोक्तम्—

विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥ इति

अत्र तु निभृतमरुन्मनोक्षदृढयो मनुजो हृदयामित्यस्मिन् श्लोके यस्मात्कारणादरयोऽपि स्मरणात् द्वेषेणापि तव स्मरणं कुर्वन्तस्त्वां ययुः प्रापुरिति भूतार्थवादमुक्त्वा अतस्तस्मान्मुनयस्त्वामुपासते इत्युपपत्तिरुक्तेति अतोऽत्र षड्विधतात्पर्यलिङ्गेन चिदचिच्छरीरं परं ब्रह्मैव प्रतिपादितं श्रुतिभिरिति न कचिदपि निर्विशेषकूटस्थचिन्मात्रप्रतिपत्तिरिति अभेदश्रुतीनान्तु सर्वं खल्विदं ब्रह्म आत्मैवेदं सर्वं तत्त्वमसीत्यादीनां समानाधिकरणतया चिदचिच्छरीरके ब्रह्मणि तात्पर्यं यथा देवदत्तः श्यामो युवा लोहिताक्ष इति श्यामत्वादिविशिष्टएक एव तद्वदिति निर्गुणश्रुतयोऽपि ब्रह्मणि हेयगुणराहित्यं प्रतिपादयन्ति निष्कलं निष्क्रियं शान्तमित्याद्याः अन्यथा निरुपाधिकसर्वेश्वरत्वादिप्रतिपादकानां यः सर्वज्ञः सर्ववित् परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च यस्य ज्ञानमयं तपः विज्ञातारमित्यादिश्रुतीनां विरोधः स्यादिति ॥ ४१ ॥

---

### योगिरामानुजाचार्यकृतसरलाव्याख्या ।

एवं भगवन्तं यथामति स्तुत्वा त्वन्माहात्म्यस्यापरिच्छिन्नत्वेन साकल्येन स्तोतुं न शक्नुम इति निगमयन्ति द्युपतय इति । द्युपतयः स्वर्गादिलोकपालाः महेन्द्रब्रह्मादयः ते अपरिच्छिन्नमहिम्नस्तवान्तं स्वरूपस्वभावयोरन्तं पारं न ययुर्न प्रापुः आस्तां ब्रह्मादीनां वार्ता त्वमपि सर्वज्ञस्त्वमपि त्वन्महिम्नोऽन्तं न यासि न जानासि तत्र हेतुमाहुः—अनन्ततयेति अन्ताभावेन ननु तर्हि कथं सर्वज्ञतेतिशङ्क्यं अनन्तस्यानन्ततया ज्ञानमेव सर्वज्ञत्वावहं तस्य परिच्छिन्नतया ज्ञानस्याज्ञत्वापादकत्वादिति भावः अन्यथा स्थितस्यान्यथाज्ञानमेव हि अज्ञत्वापादकं अनन्तत्वमेवोपपादयन्ति यदन्तरेति यस्य तवान्तरामध्ये सावरणाः उत्तरोत्तरं दशगुणपृथिव्यादिसप्तावरणयुक्ताः अण्डनिचयाः ब्रह्माण्डसमूहाः वयसा कालेन निमिषेन सह एकदैव ननु पर्यायेण वाति भ्रमन्ति नन्विति आश्चर्यं तत्र दृष्टान्तमाहुः—खे आकाशे वयसा वायुनेति श्लेषार्थः रजांसि यथा परिभ्रमन्ति तथेति यत् यस्मात्कारणात् अवाङ्मानसगोचरमहिमवत्त्वात् श्रुतयः वेदाः अतन्निरसनेन न तत् अतत् परमात्मभिन्नं प्रकृतिपुरुषतत्स्वभावरूपञ्च भगवदन्यं वस्तु तन्निधनाः भवति निधनं समाप्तिः यासां ताः शब्दवृत्त्या च प्रकृतिपुरुषसाजात्यनिरसेनेन तद्विलक्षणं त्वां बोधयन्त्यः सत्यः त्वयि फलन्ति सफलाः भवन्ति कृतार्था भवन्ति तात्पर्यवृत्त्या पर्यवस्यन्तीत्यर्थः नत्वयमेतावान् एतावद्गुण इति साक्षात्प्रतिपादयन्ति तथा च श्रुतयः अन्यदेव तद्विदितादथोऽविदितादपि अन्यत्र धर्मादन्यत्रास्मात् कृताकृतात् अस्थूलमनण्वित्यादयः द्युपतयोऽपि अनन्ततया ते अन्तं नैव ययुः त्वमपि अन्तं न यासि यतः यदन्तराः सावरणाः अण्डनिचयाः खे रजांसीव वयसा सह वान्ति ननु हि यस्मात् श्रुतयः अतन्निरसनेन भवन्निधनाः सत्यः त्वयि फलन्तीत्यन्वयः ॥ २८—४१ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इत्येतद्ब्रह्मणः पुत्रा आश्रुत्यात्मानुशासनम् ।
सनन्दनमथानर्चुः सिद्धा ज्ञात्वाऽऽत्मनो गतिम् ॥

इतिशब्द आदिवचनः एवमादि श्रुत्या गीतमात्मानुशासनं ब्रह्मज्ञानानश्रुत्य श्रुत्वा हृदिकृत्वा आत्मनः परमात्मनो गतिं स्वरूपस्थितिं ज्ञात्वा ॥ ४२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

नह स्तुतौ सङ्क्षेपदर्शितनिजानिजार्थाः सर्वविधश्रुतीर्मुख्यया लक्षणया वृत्त्या तत्स्वरूपनिरूपणद्वारा तत्स्वरूपवैभवनिरूपणद्वारा च तत्र चरन्तीरपि पर्याप्तिमनाप्नुवतीर्दृष्ट्वा लब्धसमया साध्येव तेषां तत्र चरणयुक्तमित्युपसंहरन्त्यः काश्चिदुपक्रमश्रुतीनां तन्निर्देशेनाहुः—द्युपतय इति ॥ ४१ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

हे नाथ! तर्हि त्वन्महिमा न कोऽपि जानीयादित्युपसंहरन्ति द्युपतय इत्यादि। द्युपतयो ब्रह्मादयो देवाः ते तव अन्तं न ययुः किं बहुना त्वमपि ते अन्तं न यासीः तर्हि किमहमसर्वज्ञः नेत्याहुः—अनन्ततया अनन्तस्यान्ताज्ञानेन न सर्वज्ञत्वहानिः अनन्ततामेवाहुः यत् यस्य तवांशरूपस्य सहस्रशिरसः श्रीनारायणस्य अन्तरा मध्ये अण्डनिचया ब्रह्माण्डसमूहाः सावरणा एव वान्ति संचरन्ति ननु भोः श्रीकृष्ण कस्मिन् क इव खे रजांसीव अतस्त्वमनन्त एव वयसा कालचक्रेण सह यत् यस्मात् श्रुतयो वयं त्वयि अतन्निरसनेन निद्रानिरासेन फलन्ति पर्यवस्यन्ति तज्जागरणम् अतन्निद्रा कथम्भूताः श्रुतयः भवन्निधनाः त्वन्निद्रया भवत सम्पत्स्यमानं निधनमिव निधनमप्रकाशो यासां त्वयि जागरितेऽस्माकमुत्साहः स्यादिति जागृहीतिभावः अथवा भवानेव निःशेषं धनं यासाम् अतस्तव जागरणमेवास्माकं श्रेय इति ॥ ४१—४५ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

किञ्च तदेव सुखं सेव्यं यन्नश्वरं न भवति सुतरां देशकालापरिच्छिन्नं न सेव्यमिति वक्तुं भगवदानन्दस्य देशकालापरिच्छेदमाह-द्युपतयः एव ते न ययुरिति द्युपतयः स्वर्गपतयो देवेन्द्रादयः न सुखतारतम्यं जानन्ति तेपि भगवतः स्वरूपानन्दस्य अन्तं न ययुः ब्रह्मानन्दपर्यन्तस्यापि शतसङ्ख्यया आनन्दपरिमाणस्य ज्ञातत्वादानन्दमयस्यैव परमतो न ज्ञायते नन्वन्तोऽस्ति चेत्किमज्ञानेन ज्ञातो वाऽज्ञातो वा विद्यमानः स्वसमाप्तौ दुःखानुभवं कारयत्येवेत्याशङ्क्याह—अनन्ततयेति। विद्यमाने अन्ते यदि न जानीयुस्तदैवेदं दूषणं तेषामसार्वज्ञ्यञ्च तदेव तु नास्ति किञ्च त्वमपि न वेत्सि नापि सर्वज्ञो भगवान् कथं न जानातीति मन्तव्यं विद्यमानस्यैवाज्ञानं सार्वज्ञ्यप्रतिबन्धकं न त्वविद्यमानस्य एवं कालापरिच्छेदमुक्त्वा देशापरिच्छेदमाह—यदन्तराण्डनिचया-ननु सावरणा इति। यस्य भगवतः अन्तः मध्ये अण्डनिचया अण्डसमूहा अन्तरा अण्डनिचया वा तेपि सावरणाः प्रकृतिपर्यन्तमुत्तरोत्तरं दशगुणावरणयुक्ताः अनेनैकस्य ब्रह्माण्डाधिपतेः ब्रह्मानन्दो गणित इति भगवदानन्दस्य अनन्तता समर्थिता ननु तथापि ब्रह्माण्डानां सङ्ख्यावत्त्वे आनन्त्यं नोपपद्यत इति चेत्तत्राह—ख इव रजांसि वान्त्युच्छलन्तीति यथा जालार्करश्मिषु कोटिशो रेणव उत्पतन्ति एवं भगवद्रोमकूपेषु ब्रह्माण्डानि इति केचित् वस्तुतस्तु एकं रोमकूपस्थानं अतिविशालमाकाशवत् तत्र यथा भूरेणवः कोटिशो वान्ति तथा ब्रह्माण्डानि परिभ्रमन्तीत्यर्थः। ननु तर्हि कालो महान् भविष्यतीत्याशङ्क्याह—वयसा सहेति। काला अपि तत्र कोटिशः परिभ्रमन्तीत्यर्थः वायुस्थानीयो वा कालः ननु तथापि प्रमाणेन परिच्छेदो भविष्यति अनन्तादिशब्दवाच्यादित्याह—यदन्तराश्रुतयोऽपि यद्यस्माद्वान्ति ब्रह्माण्डानन्त्यवत् वेदानन्त्यमपि तेनैकस्यैव ब्रह्माण्डस्य वार्तामेको वेदो वदतीति न वेदैरपि परिच्छेत्तुं शक्यते ननु एवं सति सर्वप्रमाणानामगम्ये भगवति तादृशानन्दे किं प्रमाणमिति चेत्तत्राह—त्वयि हि फलन्तीति। श्रुतय एव प्रमाणं पर्यवसानवृत्त्या न तु वाच्यवृत्त्या यथा अनन्तवृक्षा भूलग्ना तत उच्छ्रितान्यपि फलानि भूमावेव पतन्ति एवं सर्वे वेदाः स्वस्वरीत्या स्ववशक्यं माहात्म्यं भगवतो वदन्ति तानि ज्ञातानि फलान्युच्यन्ते तेषां क्वापि पर्यवसानाभावात् भगवत्येव पतन्ति पर्यवसिता भवन्ति एवमनन्तवृक्षाणाम् अनन्तानि फलानि भूमौ पतन्त्यपि भूमेः सहस्रांशमपि न पूरयन्तीति मेरुसर्षपन्यायेनार्थान् भगवन्माहात्म्यं ज्ञापयन्तीत्यर्थः। एवं विधिमुखतया भगवत्स्वरूपबोधकत्वमुक्त्वा निषेधमुखेनापि भगवद्बोधकत्वमाहुः—अतन्निरसनेन भवन्निधना इति यत्किञ्चिद्वेदप्रतिपाद्यं न तत्सर्वमनूद्य योऽस्मात् सर्वस्मात् पर इति भगवतः तदतिरिक्ततां बोधयन्ति न तद्भाति कश्चन यतो वाचो निवर्तन्ते इत्यादिश्रुतिसहस्रैः प्रतिपाद्यपदार्थनिषेधकैः निषेधस्य सावधित्वे पर्यवसानाभावात् पदार्थस्य चावधिभूतस्य परिज्ञानाभावात् वाक्यशक्तौ कुण्ठितायां अप्रमाणभावमिव प्राप्नुवन्तः भगवत्येव निधनं प्राप्नुवन्तीत्यर्थः। तस्मादेतादृशः परमानन्दः कृष्ण एव सेव्यो नान्य इति सर्वेषां वेदानां पर्यवसितोऽर्थ इति सूचितं वेदाश्च तमेव बोधयन्ति एवं ज्ञातुं भगवता बुद्धिरुत्पाद्यते इति सूक्ष्मेक्षिकया सर्वे वेदा एवं भगवन्तं प्रतिपादयन्तीति जानीयादिति अनिर्देश्येऽपि ब्रह्मणि गुणवृत्तीनामपि साक्षात्प्रतिपादनमिति निरूपितम् अत्र सर्वत्र श्रुतयो मूलभूताः स्वयं द्रष्टव्याः विवादविषयाश्च अतिविस्तरशङ्कया न लिखिताः एवं श्रुतिभिः प्रतिपादितोऽर्थः गूढोऽप्युपनिषत्सु:—

> कृष्णानन्दः परमानन्दो नान्यानन्दस्तथाविधः।
> वेदा अपि न तच्छक्ताः प्रतिपादयितुं स्वतः ॥ ४१ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

तदेवं सच्चिदानन्दमहासमुद्रस्य स्तुतिमिषेण तत्त्वं निरूपयितुं प्रवृत्ताः श्रुतयः इयत्तामप्राप्य परावृत्तास्तत्र स्वासामर्थ्यमभिव्यञ्जयन्त्यः स्तुतिमुपसंहरन्ति—द्युपतय इति। स्वर्गादिलोकपतयो ब्रह्माद्या अपि ते तवान्तं न ययुः न प्रापुः तत्र वयं काः ननु यूयं तेभ्यः सकाशादपि सूक्ष्मदर्शिन्योऽन्तं प्राप्यथ माविरमत तत्राहुः त्वमपि तवान्तं न यासि आसतां दूरे तावदन्ये इति भावः। कुतस्तर्हि सर्वज्ञता सर्वशक्तिता वा तत्राहुः-

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अनन्ततया अन्ताभावेन नहि शशविषाणाद्यानं सार्वज्ञ्यं तदप्राप्तिर्वा शक्तिवैभवं विद्वान्ति अनन्तत्वमेवाहुः यदन्तरेति यस्य तव अन्तरा मध्ये ननु अहो सावरणा उत्तरोत्तरं दशगुणप्राप्तावरणयुक्ता अण्डनिचयाः ब्रह्माण्डसमूहाः वान्ति परिभ्रमन्ति वयसा कालचक्रेण खे रजांसीव सह एकदैव ननु पर्य्यायेण यद्यस्मादेवं तस्मात् त्वयि विषये श्रुतयोऽस्मदाद्याः फलन्ति त्वां स्वविषयीकृत्य सफला भवन्ति त्वत्तत्त्वनिरूपणासामर्थ्येऽपि श्रुतयः खलु भगवद्विषयिण्य इति प्रथयैवास्माकं साफल्यमभूदिति भावः। कथमेवमतिविषण्णा भवथेति तत्राहुः— अतन्निरसनेन भवन्निधना इति। ब्रह्मतत्त्वपरमात्मतत्त्वभगवत्तत्त्वानि समासेनोक्त्वा पुनर्व्यासेन विवरीतव्यानां तेषां मध्ये यद्ब्रह्म तस्मिंस्तत्पदार्थे प्रथमं निरूपयितव्ये आदावतन्निरसनं कार्य्यं तत्र एतत् पदार्थौ माया मायिकवस्तूनि चेत्यत्राप्यभ्यापतन्तो नानावादाः समाहिता एव यथा मणिक्षेत्रे मृत्पाषाणजलादिषु दूरीकृतेष्वेव मणिलाभस्तथैवातत्पदार्थेषु दूरीकृतेष्वेव ब्रह्मलाभः अतोऽत्र मायिकवस्तूनां निरसनेनैव भवत् वर्त्तमानं निधनं मरणं यासां ताः वयं सृष्टिकालमारभ्य प्रलयकालपर्य्यन्तमपि अतद्वस्तूनां स्थावरजङ्गमानां प्रत्येकं जातिव्यक्तिगुणकर्मणामेतावती सङ्ख्येति गणयितुमप्यशक्यत्वात् तन्निरसनानन्तरं ब्रह्मपरमात्मभगवत्त्वानि ततोऽप्यतिदुर्गमाणि ततोऽप्यनन्तानि कथं विवृत्य निरूपयितुं प्रभवेमेति भावः। तस्मात् यदि त्वत्कृपां वयं लभेमहि अन्यो वा कश्चनापि लभेत तदैव दुर्गममपि तत्त्वं सुगमं भवेदिति प्रथम एव श्लोके अखिलशक्त्यवबोधकते इति तदनन्तरमपि तव परिये चरन्तीत्यत्र नृप तव माययेत्यत्रापि बुद्धीन्द्रियेत्यत्रापि व्यञ्जितमेव अत्रातन्निरसने श्रुतय अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणमसुखममात्रमनन्तरमबाह्यमित्याद्याः॥ ४१॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

इदानीं श्रीभगवतोऽपरिमितैश्वर्य्यं प्रतिपाद्योपसंहरन्ति श्रुतयः य ऊर्द्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यत् भूतं च भवच्च भविष्यच्च कोऽद्धा वेद यतः आबभूव योऽस्याध्यक्षः परमे व्योमन् सोऽङ्ग वेद यदि वा न वेद न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम्"इत्याद्याः द्युपतयो ब्रह्मरुद्रेन्द्रादयो लोकपालास्तव सर्वेश्वरस्यान्तं न ययुः भवत स्वरूपगुणशक्तिनाम्नामन्तमियत्तां न प्रापुः न ते विष्णो जायमानो न जातो देवस्य महिम्नः परमं तमाप विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि इत्यादिश्रुतिभ्यः मान्तु वेद न कश्चनेति भगवदुक्तेश्च अस्तां ब्रह्मादीनां वार्त्ता त्वमपि स्वस्यान्तं न वेत्सि तर्हि पूर्वोक्तसर्वज्ञत्वादीनां हाने रहस्याद्यापत्तेश्च निन्देव भवतीभिः क्रियते इति चेत्तत्राहुः अनन्ततयेति। अन्तस्यात्यन्ताभावतया शशविषाणताडनक्षताद्दर्शने गगनकुसुमगन्धाघ्राणे च न चक्षुर्घ्राणयोर्हानिर्यथा तद्वत् तथाभूतस्यैश्वर्यस्याऽगन्धस्य दिग्दर्शनेनानन्तत्वं लक्षयन्ति यदन्तरा यस्य भगवत अत्यल्पैकदेशविशेषे सावरणा उत्तरोत्तरदशगुणसप्तावरणयुक्ताः तथा च—

"एते सप्त मया लोका मैत्रेय कथितास्तव।
पातालानि च सप्तैव ब्रह्माण्डस्यैष विस्तरः॥
एतदण्डकटाहेन तिर्य्यगूर्द्ध्वमधस्तथा।
कपित्थस्य यथा बीजं सर्वतो वै समावृतम्॥
दशोत्तरेण पयसा मैत्रेयाण्डञ्च तद्वृतम्॥
सर्वाम्बुपरिधानोसौ वह्निना वेष्टितो बहिः।
वह्निश्च वायुना वायुर्मैत्रेय नभसा वृतः॥
भूतादिना नभः सोपि महता परिवेष्टितः।
दशोत्तराण्यशेषाणि मैत्रेयैतानि सप्त वै॥
महान्तञ्च समावृत्य प्रधानं समवस्थितम्।
अनन्तस्य न तस्यान्तः संख्यानं चापि विद्यते॥
तदनन्तमसङ्ख्यातप्रमाणं चापि वै यतः।
हेतुभूतमशेषस्य प्रकृतिः सा परा मुने॥

इत्यादि वैष्णवे पराशरोक्तिः अण्डनिचयाः उक्तप्रकाराणां ब्रह्माण्डानां समूहाः। वयसा वान्ति त्वत्कालरूपया शक्त्या प्रेरिताः परिभ्रमन्ति तत्र दृष्टान्तः खे रजांसीव आकाशे परमाणव इव ननु कालभेदेनैतत् सङ्गच्छत इति चेत्तत्राहुः सहेति एकदैवेत्यर्थः। तदेवाह श्रीपराशरः—

अण्डानान्तु सहस्राणां सहस्राण्ययुतानि च।
ईदृशानां तथा तत्र कोटिकोटिशतानि च॥

इति रामायणेपि सुन्दरकाण्डे त्रिजटावाक्यम्—

साण्डं सर्वं त्रिभुवनं सर्वतः सचराचरम्।
सर्वं ग्रस्तं मया दृष्टं रामेणाक्लिष्टकारिणा॥

इति यस्मादेवमपरिमितैश्वर्य्यस्त्वमसि अतः श्रुतयस्त्वय्येव फलन्ति त्वयि समन्वयन्तीत्यर्थः। कानिचित् "सत्यंज्ञानमनन्तं ब्रह्म यः सर्वज्ञः सर्ववित् इत्यादीनि वाक्यानि मुख्यया वृत्त्या स्वरूपप्रतिपादनेन 'कानिचिदस्थूलमनण्वित्यादीनि चातन्निरसनेन स्वरूपेतरपदार्थस्य स्वरूपत्वनिषेधेन आकाशो नामरूपयोर्निर्वहितेत्यादीनि रूढ्यान्यत्र प्रसिद्धान्यपि योगेन त्वयि समन्वयन्तीत्यर्थः। त्वय्येव फलन्तीति को नियम इति चेत्तत्राहुः भवन्निधना भवत्येव सर्वज्ञे सर्वकारणकारणे स्वयं कारणशून्ये निधानमवसानं यासां ता भवद्विषयका एव सर्वाः श्रुतय इत्यर्थः। सर्वे वेदा यत्पदमामनन्ति वेदैश्च सर्वैरहमेव वेद्यः इत्यादिशास्त्रवचनात् एतच्च समन्वयाध्याये निपुणं प्रपञ्चितं विस्तरभयादुपरम्यते॥ ४१॥

भाषा टीका।

स्वर्ग आदि लोकन के पति ब्रह्मा शिव इन्द्र आदि हि आप के अन्त को नहि प्राप्त भए फिर मनुष्यादिक नहि पार पावते हैं इस में तो कहना हि का है बहुत कहने से क्या है आप का स्वरूप रूपगुण विभूति अनन्त हैं इस वास्ते आप भी अपने अन्त को नहि प्राप्त होते प्रथम तो आप की विभूति हि अनन्त है स्वरूप रूप गुणो को कथा

श्रीभगवानुवाच।

इत्येतद्ब्रह्मणः पुत्रा आश्रुत्यात्मानुशासनम्।
सनन्दनमथानर्चुः सिद्धा ज्ञात्वाऽऽत्मनो गतिम् ॥ ४२ ॥
इत्यशेषसमाम्नायपुराणोपनिषद्रसः।
समुद्धृतः पूर्वजातैर्व्योमयानैर्महात्मभिः ॥ ४३ ॥

भाषा टीका।

हि क्या है क्योंकि पृथिवी जल तेज पवन आकाश अहंकार यह तत्व रूप सात आवरण वारे ब्रह्माण्डन के समूह आप के एक२ रोमकूप में इस प्रकार भ्रमत हैं कि जैसे आकाश में पाखियों सहित पृथिवी की रज उडी डोलती हैं इस प्रकार अपार महिमा स्वरूप आप हो इसी से आप सं मिल जीव माया के सजाति मात्र का आप के बीच में निषेध कर जीव माया से विलक्षण आप को प्रतिपादन करने वारी सफल होती हैं अर्थात परमात्मा जीव के सजाति नहि आप के सजाति किन्तु उन दोनोंन से विलक्षण पुरुषोत्तम है केवल इतना मात्र हि श्रुति प्रतिपादन करती हैं और परमात्मा का इतना हि स्वरूप इतने हि रूप इतने हि गुण इतनी हि विभूति है इस प्रकार परिच्छेद करके प्रतिपादन करने में वेद समर्थ नहि हैं ॥ ४१ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

इत्यशेषसमाम्नायपुराणोपनिषद्रस इति सर्वश्रुतिपुराणरहस्यतात्पर्यमित्यर्थः ॥ ४३ ॥

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी।

इति एवम् एतच्छ्रुत्युक्तम् आत्मानुशासनं परब्रह्मसम्बन्ध्युपदेशम् आ सम्यक् श्रुत्वा अथ अतएव आत्मनो ब्रह्मणः गतिं स्वरूपं ज्ञात्वा सिद्धाः पूर्णमनोरथाः सन्तः सनन्दनमानर्चुः ॥ ४२ ॥

इति अयं रसशब्दस्य तात्पर्यमिति व्याख्या समुद्धृतः गुरुकृताभ्यासाभ्य एव श्रुतिभ्य इतिशेषः विशेषजिज्ञासावच्छ्रीवैष्णवतोषिणी द्रष्टव्या ॥ ४३ ॥

श्रीकविचूडामणिचक्रवर्त्तिकृताऽन्वयबोधिनी।

ब्रह्मणः पुत्राः सनकादयः इत्यनेन प्रकारोक्तमेतदात्मानुशासनमाश्रुत्य आत्मनो गतिं ज्ञात्वा सनन्दनमानर्चुः पूजयामासुः ॥ ४२ ॥

अशेषाणां समाम्नायानां वेदानां पुराणानामुपनिषदामिति रसस्तात्पर्यं पूर्वजातैः सनकादिभिः समुद्धृतः व्योमयानैः व्योमाकाशस्तेन यानं गमनं येषां ते ॥ ४३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

॥ ४२ ॥

इत्ययं समाम्नायादिरसः पूर्वजातैः सर्वादौ ब्रह्मणः प्रादुर्भूतत्वात्सर्वतः श्रेष्ठज्ञानैरित्यर्थः। अतो व्योमयानैः सर्वत्रास्खलद्गतिभिः अत एव महात्मभिरुदारमतिभिः तैः सम्यगुद्धृतः गुरुकृताभ्यासाभ्य एव श्रुतिभ्य इति शेषः। इति योग्यता दर्शिता अत्र समाम्नायः सामान्यत उक्तः पुराणञ्च तदुपलक्षणत्वेनेतिहासश्च तत्रयं च वक्ष्यमाणावशिष्टत्वेन कर्मोपासनारूपं द्विविधमेव ग्राह्यम् उपनिषत्तु तत्र तत्र छान्दोग्यादि श्रीभगवद्गीतादिरूपो ज्ञानभागः पुराणस्य मध्ये पाठस्तद्भेदविवक्षया यथोक्तम् इतिहासपुराणानि पञ्चमो वेद उच्यते यद्ब्राह्मणानीतिहासपुराणानीति स्वाध्यायोपदेशश्रुतेः एवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासपुराणम् इत्यादितः सोदरत्वश्रुतेः ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासं पुराणं पञ्चमं वेदानां वेदमिति छान्दोग्योपनिषदि एतदेवानूद्यते पुराणेषु इतिहासपुराणानि पञ्चमो वेद उच्यते इत्यादिना तथाप्यत्र सूतादिषु अधिकारो भगवन्नामादिवद् विधिबलादवलभ्यते कौथुमशाखातश्च तेषां रसः पिबत भागवतं रसमित्यादिदृष्ट्या भगवद्भक्तिरसमयन्तात्पर्यं तच्च त्रिविधं प्रत्येकवाक्यगतं अवान्तरप्रकरणगतं महाप्रकरणगतञ्च तत्राद्ययोः पूर्वपूर्वं दर्शितं अन्त्यस्य तु उपक्रमोपसंहारावभ्यासोऽपूर्वता फलं अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णय इत्यनुसारेण षड्विधैर्लिङ्गैः तच्च सर्ववेदाद्यन्तस्थितस्य सुप्रपादनुवादेन दर्शितपरमार्थस्य प्रणवस्यार्थप्रकाशकनाप्रसिद्धानां प्रसिद्धानामपि श्रुतीनामैकार्थ्येन मूलपद्यैरेवोदाह्रियते यथा जयजयेति युष्मत्य इत्युपक्रमोपसंहारयोरैकथ्येन स यदजया त्वजामित्यादिभिरभ्यासेन अनुचरेत्त्रिगमः श्रुतयस्त्वयि हि फलन्तीत्याभ्यासपूर्वतया न परिलपन्ति केचिदित्यादिभिः फलेन त्वमकरणः स्वराडित्यादिभिरर्थवादेन दृतय इव श्वसन्त्यसुभृत इत्यादिभिरुपपत्त्या यथोक्तलक्षणः श्रीभगवानेव विवक्षित इति अत्र श्रीकृष्णत्वन्तु पूर्वोक्तयुक्त्या ज्ञेयम् ॥ ४३ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

इति वेदस्तुतिम् आश्रुत्य आत्मनो गतिम् आत्मतत्त्वम् ॥ ४२ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति सर्वश्रुतिपुराणरहस्यतात्पर्यमित्यर्थः ॥ ४३ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं श्रुतिगीतिसम्वादेन सनन्दनेनोक्तमुत्तरमवधार्य्य तं बहुमेनिरे इत्याह भगवान्नारायणः—इतीति । इति श्रुत्युक्तप्रकारेणैवम्विधं सनन्दनेनोक्तमात्मानुशासनम् आत्मा अनुशिष्यते येन आत्मानुशासनमुत्तरमाश्रुत्य ब्रह्मणश्चतुर्मुखस्य पुत्राः मरीच्यादयः सिद्धाः आत्मनः परमात्मनो गतिं प्रकारं याथात्म्यं ज्ञात्वा निश्चित्याथ सनन्दनमानर्चुः ॥ ४२ ॥

इतीति सर्वश्रुतिपुराणोपनिषत्तात्पर्यमेवं समुद्धृतम् इतिप्रकृतवेदस्तुतिप्रशंसा ॥ ४३ ॥

---

### श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

इति सर्वशास्त्रसारार्थवेदस्तुतिम् आश्रुत्य एकाग्रमनसा श्रुत्वा आत्मनो गतिं चिदचिच्छरीरकपरमात्मतत्त्वं ज्ञात्वा सनन्दनमानर्चुः प्रणिपातपुरस्सरं पूजयामासुरित्यर्थः ॥ ४२ ॥

इति सर्वश्रुतिस्मृतिपुराणेतिहासरहस्यतात्पर्यमित्यर्थः । स्पष्टमन्यत् ॥ ४३ ॥

---

### योगिरामानुजाचार्यकृतसरलाव्याख्या ।

आत्माऽनुशिष्यते शिक्ष्यते निरूप्यते येन तदात्मानुशासनं आत्मनः परमात्मनः गतिं प्रकारम् स्वरूपम् ॥ ४२ ॥

व्योमयानैः सर्वनिरपेक्षतयाकाशचारिभिः ॥ ४३ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

व्योमायनमहात्मभिः ब्रह्माभयेपूत्तमैः तैः पूर्वजैः सनकादिभिः अशेषाणां समीचीनानां आम्नायानां पुराणानामुपनिषदां च रसः सार इति समुद्धृतः ॥ ४३ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आत्मानुशासनं जीवहितोपदेशं सर्व्वमूलस्वरूपस्वयम्भगवत्सम्बन्ध्युपदेशं वा आत्मनो जीवस्य गतिर्गम्यं तादृशभगवतो ज्ञानप्रकारं वा ज्ञात्वा यथा स्वयमवधारितवन्तस्तथैवावधार्य्येत्यर्थः । समाम्नायादीनां रसः भगवद्भक्तिरसमयं तात्पर्य्यम् अथ सर्व्वश्रुतितात्पर्य्ये स्वयं भगवति श्रीकृष्ण एवावधार्य्ये सन्तोषात्तद्रूपनिजेष्टदेवाभेदेन तदवतारं स्वगुरुं श्रीनारायणर्षिं नमस्यति नम इति ॥ ४२—५० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

इत्येवं श्रुतिगीतायाः सङ्क्षेपेण निरूपितः अर्थराशिः सङ्क्षेपो हि यथाऽङ्गुल्या निरूप्यते श्रुतिभिरुक्तानि वाक्यानि सनन्दनोऽनुवादमात्रं कृतवान् ततो व्याख्यानव्यतिरेकेण तदर्थावगतिरस्ति न वेति सन्दिह्य औत्पत्तिकमनीषयैतत् ज्ञायत इति ज्ञापयितुं तस्यावबोधमाह—इत्येतदिति । नारदं प्रति नारायणवाक्यं श्रोतारो ब्रह्मणः पुत्राः सम्पूर्णश्रुतिगीतायाः सङ्क्षेपेणार्थम् आहुः आत्मानुशासनमिति आत्मनां जीवानामनुशासनमुपदेशः भगवानेव सेव्य एवेति च एतावानेव श्रुतिगीतार्थः स तेषां हृदये समागत इति गुरोः पूजनं कृतवन्त इत्याह—सनन्दनमिति । अथेति भिन्नप्रक्रमेण पूर्वं सर्वे समाः स्थिताः तुल्यश्रुततपःशीलाः इतिवाक्यात् इदानीं तु श्रुतिगीतारूपोऽर्थः तेनैव विशेषतो ज्ञायत इति प्रवचनाधिकारे दत्ते यत्सर्वैर्न ज्ञायते तदेव वक्तव्यमिति इदमुपाख्यानमुक्तवान् यदि तेषामयमर्थो न ज्ञातः स्यात् विशेषाकारेण तदा श्रुत्वाऽप्येनं वेद न चैव कश्चिदिति न्यायेन विशेषाज्ञानात् विशेषतः पूजां न कुर्युः अतोऽयमर्थः अपूर्वः जनवासिनामपि दुर्लभः केवलमिदानीमेव प्रकट इति ज्ञापितं ततः सिद्धाश्च जाताः नातः परं श्रोतव्यमस्ति पूर्वमपि तैरात्मा ज्ञातः परं तस्य गतिरेतादृशी केवलं भगवानेव सेव्यो नान्योऽस्त्युपाय इति इदानीमेव ज्ञातवन्तः सिद्धा इत्यर्थः ॥ ४२ ॥

नारदस्याप्येवं जिज्ञासोत्पन्ना एतादृशोऽर्थोऽन्योऽपि भविष्यतीति तत्राह—इत्यशेषसमाम्नायेति—

> अर्थः स्थलत्रये गूढः पुराणोपनिषच्छ्रुतौ ।
> सर्वतः सारमेतद्धि समुद्धृतमिहोच्यते ॥

अतो नान्योऽस्ति सारांश इति वक्तुं निरूपयति अशेषाः सर्व एव वेदाः पुराणानि उपनिषदश्च तेषां निर्मथनेनायमर्थो निर्गलित इति रसः स पूर्वं तत्रैव स्थितः पश्चात्पूर्वजातैर्व्योमयानैः सनकादिभिस्ततः समुद्धृत्य पृथक् स्थापितः नन्वेतत्समुद्धारे किं प्रयोजनमिति चेत्तत्राह—महात्मभिरिति महान्तस्ते सर्वोपकारकाः ॥ ४३ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

इत्येतदष्टाविंशत्या वेदस्तवश्लोकैः बुद्धीन्द्रियमनःप्राणानिति ब्रह्मोपनिषद्विवरणमयमात्मानुशासनं आत्मनः स्वस्य गतिं प्राप्यं भगवत्प्रेमाणम् ॥ ४२—४३ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अशेषसमाम्नायेति अशेषवेदपुराणादीनां सारः ॥ ४३—४५ ॥

---

### भाषा टीका ।

इस प्रकार श्रुतियों के से वाद को लेकर सनन्दन के कहे हुए परमात्मा के उपदेश को श्रवण कर ब्रह्मा के पुत्र सनकादिक सिद्ध और मरीचि आदि प्रजापति परमात्मा

त्वं चैतद्ब्रह्मदायाद श्रद्धयाऽऽत्मानुशासनम् ।
धारयंश्चर गां कामं कामानां भर्जनं नृणाम् ॥ ४४ ॥

श्रीशुक उवाच ।

एवं स ऋषिणादिष्टं गृहीत्वा श्रद्धयाऽऽत्मवान् ।
पूर्णः श्रुतधरो राजन्नाह वीरव्रतो मुनिः ॥ ४५ ॥

भाषा टीका ।

के अर्थ का निश्चय कर के अनन्तर सनंदन की पूजा करते भए ॥ ४२ ॥

सब से पहले उत्पन्न और आकाशचारी सनंदादि महात्माओं ने कर्मकांड की सब श्रुतियों उपनिषद् श्रुतियों का और इतिहास पुराणों का तात्पर्य इस प्रकार उद्धृत किया है ॥ ४३ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

ब्रह्मदायादेति ब्रह्मैव दायमिवायत्नप्राप्यमस्तिसेवत इति तथा ब्रह्मपुत्रेति वा ॥ ४४ ॥

पूर्णः कृतकृत्यः श्रुतधरः श्रुतमर्थं मनसि धारयन् वीरव्रतो नैष्ठिकः ॥ ४५ ॥

---

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

धारयन् हृदि मुखेच कामानां वर्जनं निवारकं भर्जनमिति पाठेऽपि स एवार्थः ॥ ४४ ॥

स्वगुरुणा स ऋषिणेति च पाठद्वयं आत्मवान् श्रीभगवन्निष्ठः स्वगुरुणा श्रीनारायणेन ॥ ४५ ॥

---

श्रीकविचूडामणिचक्रवर्तिकृताऽन्वयबोधिनी ॥

हे ब्रह्मदायाद ! ब्रह्मपुत्र त्वं चैतदात्मानुशासनं श्रद्धया धारयन् कामं यथेष्टं गां पृथ्वीं चर विचर कथम्भूतं नृणां कामानां भर्जनं कामकर्मवासनानां दाहकं ब्रह्मदायादेति ब्रह्मैव दायमिवायत्नप्राप्यमस्ति सेवते इति तथा यथा सनकादयो ब्रह्मदायादा ब्रह्मणः पुत्राश्च भवन्ति तथा त्वमपि अत एतद्गृहीत्वा चरेति ॥ ४४ ॥

स मुनिर्नारदः ऋषिणा एवमादिष्टं श्रद्धया गृहीत्वाह— कथम्भूतः पूर्णः कृतकृत्यः इदानीं मननेन पूर्णोभूदित्यर्थः । श्रुतधरः श्रुतमर्थं मनसि धरतीति तथा वीरव्रतो नैष्ठिकः ॥ ४५ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ब्रह्मदायादेति योग्यब्रह्मपुत्रोक्त्यापि योग्यतोक्ता धारयन् हृदि मुखे च कामं यथेच्छं गां चर पृथिव्यां परिभ्रमेत्यर्थः । किमर्थं नृणां कामानां वर्जनं निवारणरूपं भर्जनमिति पाठेपि स एवार्थः एतच्छ्रवणेन श्रीभगवद्भक्त्युत्पत्त्या नृणां कामा विनश्यन्तु एतदर्थमपीत्यर्थः ॥ ४४ ॥

यतो वीरव्रतो नैष्ठिकब्रह्मचारित्वादविक्षिप्तचित्तः अतः श्रुतधरः सकृच्छ्रवणमात्रेण शब्दतस्तद्धरः यतश्च मुनिर्मननशीलः आत्मवान् श्रीभगवन्निष्ठश्च अतस्तत्क्षणादर्थतोपि श्रद्धया निश्चयात्मिकया बुद्ध्या स्वगुरुणा श्रीनारायणेनादिष्टं गृहीत्वा पूर्णः प्राप्तस्वमनोरथपूर्त्तिः सन्नाह स ऋषिणेति पाठः क्वचित् राजन्निति तदभीष्टमुत्तरयित्वा प्रोत्साहयति ॥ ४५ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

ब्रह्मदायादेति ब्रह्मैव दायमिव अयत्नप्राप्यम् अस्तिसेवत इति वा ब्रह्मपुत्र इति वा ॥ ४४ ॥

पूर्णः कृतकृत्यः श्रुतधरः श्रुतमर्थं मनसि धारयन् वीराणामिव व्रतं यस्य सः ॥ ४५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

त्वमिति हे ब्रह्मदायाद ! ब्रह्मपुत्र दायभोक्तृत्वात्पुत्रस्य तस्मिन् दायादशब्दः उपचर्यते एतदात्मानुशासनं नृणां ये कामास्तेषां भर्जनं दाहकं श्रुतिस्तवनं धारयन् कामं यथेष्टं गां भूमिं तदुपलक्षितान् लोकान् चर पर्यट ॥ ४४ ॥

कथमेतत्त्वयाधिगतं इत्यपेक्षायां तद्वक्तुं प्रस्तौति मुनिः चतुर्भिः एवमिति । गुरुणा बदर्याश्रमवासिना श्रीनारायणेनादिष्टमुपदिष्टं श्रद्धया गृहीत्वा तस्मिन्नवहितमनाः पूर्णः विधूतसंशयत्वात्पूर्णमनाः श्रुतं यथाश्रुतं धरतीति तथाभूतः वीराणां जितेन्द्रियाणां व्रतं यस्य सः नैष्ठिको नारदः हे राजन् ! गुरुं श्रीनारायणं प्राह ॥ ४५ ॥

---

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

ब्रह्मदायादेति ब्रह्मैव दायमिवायत्नप्राप्यम् अस्ति सेवते इति वा ब्रह्मपुत्रेति वा ॥ ४४ ॥

नारद उवाच ।

नमस्तस्मै भगवते कृष्णायामलकीर्त्तये ।
यो धत्ते सर्वभूतानामभवायोशतीः कलाः ॥ ४६ ॥
इत्याद्यमृषिमानम्य तच्छिष्यांश्च महात्मनः ।
ततोऽगादाश्रमं साक्षात्पितुर्द्वैपायनस्य मे ॥ ४७ ॥

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

पूर्णः कृतकृत्यः श्रुतधरः श्रुतमर्थं धारयन् वीराणामिव व्रतं यस्य स नैष्ठिक इत्यर्थः मुनिर्नारदः ॥ ४५ ॥

योगिरामानुजाचार्यकृतसरलाख्याख्या ।

भर्जनं निवर्त्तकम् ॥ ४४ ॥
वीरव्रतो नैष्ठिको जितेन्द्रियः ॥ ४५ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ब्रह्मदायाद ब्रह्मपुत्र नारद कामयानां निधनं नाशकरं यद्वा कामानामभिष्टानां फलानां निधनं कुलं गृहं वा निधनो स्त्री कुले नाशे निर्दिशे क्रूरखड्गयोरितियादवः ॥ ४४ ॥
पूर्णः क्षतस्पृतः ॥ ४५ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं श्रुतिगीताया माहात्म्यमुक्त्वा नारदं विशेषमुप-दिशति त्वश्चैनद्ब्रह्मदायादेति ब्रह्मणः पुत्रो ब्रह्मदायादो भवति अत्र तु ब्रह्मण्येव दायं प्राप्तवानिति विशेषतो वचनम् अधिकारनिरूपणार्थं वा यस्तु ब्रह्मणि दायभाक् तस्य हृदये अयमर्थः स्फुरति अतः श्रद्धया आत्मानुशासनं तवात्यन्तोप-देशरूपम् अतो धारयन् इयमर्थं सर्वदा विचारयन् गां चर सर्वत्र परिभ्रमणं कुरु परित्यागेनैवास्य शास्त्रार्थस्य सम्भवात् आत्मानुशासनेनैव निरन्तरं भगवत्स्मरणं प्राप्तं नारदस्य सिद्धमप्यस्ति एकमेव बाधकं महतां भगवत्स्मरणे काम इति कश्चिन्महान् तस्य न कामनिर्जय इति वाक्यात् सर्वतत्काम-भञ्जनसाधनं कामानामिति बहुवचनं सर्वाकाङ्क्षानिवर्त्तकमिद-मिति सूचयति नृणामिति मनुष्याणां विशेषतो हितकारी इत्युक्तम् ॥ ४४ ॥

अयमुपदेशो नारदस्य हृदये समायात इति ज्ञापयितुं तस्य कथामाह—एवं स गुरुणादिष्ट इति । यद्यपि बहून्येव व्याख्या-नानि श्रुतानि तथाप्यत्र विशेषतः श्रद्धावान् जातः आत्म-वानित्यधिकारी पूर्ण इति तस्यार्थावबोधो जात इति सूचितं श्रुतधर इति श्रवणमात्रेणैव शब्दतोऽर्थतश्च धारयतीति नित्य-स्मरणमुक्तम् अभ्यासापेक्षा च निवारिता राजन्निति अयमर्थो ग्राह्य इति बोधनार्थं सोऽर्थस्तेन इति ज्ञात इति ज्ञापयितुं गुरुं प्रति किञ्चिदाह—यतो वीरव्रतः वीरवत् व्रतं यस्येति वीरः सकृदेव कार्यं करोति न तु विलम्बं सहते इति एवं क्रियाशक्त्याधिक्यमुक्त्वा ज्ञानशक्त्याधिक्यमाह मुनिरिति ॥४५॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ब्रह्मदायाद ब्रह्मात्मज ॥ ४४ ॥
श्रुतधरः श्रुतमर्थं मनसि धारयन् वीरव्रतः वीरस्येव व्रतं प्रतिज्ञा यस्य सः ॥ ४५ ॥

भाषा टीका ।

हे ब्रह्मदायाद नारद मनुष्यों के सब विषयको नाश करनेवारे परमात्मा के इस उपदेश को मन में श्रद्धासे धारण कर आप अपनी इच्छानुसार लोकन में विचरते रहो ॥ ४४ ॥

श्रीशुक उवाच ।

हे राजन्! इस प्रकार नारायण ऋषि के उपदेश किये तत्व को श्रद्धा से गृहण कर समाहित मन वारे गुरुन से श्रवण किए अर्थ को धारण करने वारे ज्ञान भक्ति से परिपूर्ण जितेन्द्रियों के व्रतको धारण करने नारद जी निज-गुरु नारायण ऋषि जी के प्रति बोले ॥ ४५ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

नम इति श्रीकृष्णावतारतया नारायणं नमस्यति—उक्तं हि 'एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयमि'ति ॥४६॥
साक्षात्पितुरिति योनिव्यवधानं विना जनकस्य अरणि मथनावसरे कथञ्चिदरणौ रेतः पतितं ममन्थ व्यासस्तदैव तत उत्पन्नः शुक इति हि वदन्ति ॥ ४७—४९ ॥

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

कृष्णावतारत्वेति कृष्णस्यावतारः कृष्णावतारस्तस्य भावं स्तेषा तया कलाः शक्तीश्चेत्त ॥ ४६ ॥
तदैव रेतोमथनकाल एव ततः मथितादरणेः ॥ ४७ ॥

श्रीकविचूडामणिचक्रवर्त्तिकृताऽन्वयबोधिनी ।

सर्वाः श्रुतयस्तावत् श्रीकृष्णमेव स्तुवन्तीति ज्ञात्वा सप्रेम श्रीकृष्णावतारतया श्रीनारायणं प्रणमति—नम इति । तस्मै श्रीकृष्णाय नम इति कोसौ यः सर्वभूतानामभवाय संसारनिवृत्तये उशतीः कमनीयाः कलाः अवतारान् धत्ते तस्मै उक्तं हि एतेचांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् इति ॥ ४६ ॥

इत्यनेन श्लोकेन ऋषिमानस्य महात्मनस्ताञ्छिष्यांश्चानस्य ततो मे मम साक्षात्पितुर्व्यासस्याश्रममगात् साक्षात्पितुरिति योनिव्यवधानं विना जनकस्य अग्निमथनावसरे कथञ्चिदरणौ पतितं रेतो ममन्थ व्यासः तदैव तत उत्पन्नः शुक इति वदन्ति ॥ ४७ ॥

—————

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तन्मनोरथपूर्त्तिमेव दर्शयितुमाह श्रीनारद उवाचेति । अथ सर्वश्रुतितात्पर्यं स्वयं भगवति श्रीकृष्ण एवावधार्य्य सन्तोषात्तद्रूपनिजेष्टदेवाभेदेन तदवतारं स्वगुरुं श्रीनारायणर्षिं नमस्यति —नम इति । तुभ्यमित्यनुक्त्वा तस्मा इत्युक्तिरेनमेव तत्रान्तर्भावयति नतु तमत्रेति तस्यैवावतारित्वं व्यक्तं भगवते कृष्णायेति तत्र कृष्णस्तु भगवान्स्वयमिति प्रमाणयति अहो तादृशस्यापि तस्य परमनीचेष्वपि जीवेषु महाकृपालुत्वमितिव्यञ्जयन्नाह अमला सर्वमलविशोधनी कीर्त्तिः अहो बकीयमित्यादिरूपा कृपालुत्वपर्य्यवसायिनी ख्यातिर्यस्य तस्मै युक्तं च तदित्याह, य इति । सर्वभूतानां पूतनापर्य्यन्तसत्त्वानामभवाय संसारनिवृत्तये कलाः शक्तीर्धत्ते न केवलं तन्मात्राय अपितु सर्वभूतानामुशतीः कमनीयाः प्रेमवर्द्धनीश्चेत्यर्थः धत्त इति वर्त्तमानप्रयोगेण स्वनमस्काराश्रयस्य तस्य नित्यत्वमपि स्पष्टीकृतम् ॥ ४६ ॥

साक्षादव्यवहितं तदानीं तेनाश्रितमाश्रमं ब्रह्मवैवर्त्ते तु श्रीशुकजन्मकथेयं श्रीद्वैपायनपत्न्या उदरे जातः श्रीशुकदेवो बहूनि वर्षाणि, योगबलेन स्थितः पित्रा मुहुः प्रार्थितोऽपि न निष्क्रान्तवानुक्तवांश्च कथं निष्क्रामाणि निष्क्रामणमात्रेण श्रीभगवन्मायाव्याप्तो भविष्यामि इति तच्छ्रुत्वा तदुपदेशेन द्वारकां गत्वा द्वैपायनेनानीतः स्वयं भगवान् श्रीकृष्णस्तमुवाच तव मातेयं दुःखिताऽस्ति कथं न निष्क्रामसीति तच्छ्रुत्वा तेन प्रार्थितं यदि भवता माया दूरीक्रियते तदाहं निष्क्रामाणीति भगवता तथाङ्गीकृतेऽसौ निष्क्रान्त एव प्रव्रजितवानिति ॥ ४७ ॥

—————

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

अभवाय अपवर्गाय कलाः मूर्त्तीः ॥ ४६—४९ ॥

—————

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तिमेवाह—नम इति । कृष्णाय सर्वलोकसुखकराय तदुपयुक्ता अमला अकर्मवश्यया मूर्त्तिर्यस्य तस्मै तुभ्यं नमः केनकारणेन कृष्ण इत्यतस्तं विशिनष्टि य इति यः भगवान् सर्वभूतानामभवायापवर्गाय उशतीः कमनीयाः निर्मला इति यावत् कलाः विद्याः धत्तेऽपेक्षितविद्योपदेशेन सुखकर इति भावः ॥ ४८ ॥

इतीत्थमाद्यमृषिं नारायणममलमन्तःकरणं येषां तांस्तस्य शिष्यांश्चामंत्र्य प्रणामपूर्वकमापृच्छ्य साक्षात् स्वयं द्वैपायनस्याश्रममगाज्जगाम ॥ ४९ ॥

—————

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

अभवाय अपवर्गाय कलाः मूर्त्तीः उशतीः कमनीयाः यो धत्ते तस्मै कृष्णायेति कर्षत्यरीनपि स्वपदं प्रतीति कृष्णः अथवा स्वगुणैर्वात्सल्यादिभिः कर्षति आकर्षति वशीकरोति भक्तानिति कृष्णः श्रीनारायणः तथा च भारते—

"एष नारायणः साक्षात् क्षीरार्णवनिकेतनः ।
नागपर्यङ्कमुत्सृज्य ह्यागतो मथुरां पुरीम् ॥

इतिसूक्तं केचित् नम इति कृष्णावतारतया नारायणं नमस्यति उक्तं हि एतेचांशकलाः पुंसः कृष्णस्तु भगवान्स्वयमितीति तत्स्वमतिविजृम्भितं प्रमाणान्तरविरोधात् तथाच न ते वागनृता काव्ये काचिदत्र भविष्यतीति ब्रह्मदत्तवरवाल्मीकिरामायणे—

"व्यक्तमेष महायोगी परमात्मा सनातनः ।
अनादिमध्यनिधनो महतः परमो महान् ॥
तमसः परमो धाता शङ्खचक्रगदाधरः ।
श्रीवत्सवक्षाः नित्यश्रीरजयः शाश्वतो ध्रुवः ॥
मानुषं वपुरास्थाय विष्णुः सत्यपराक्रमः ।
भवान्नारायणो देवः श्रीमांश्चक्रायुधो विभुः ।
एकशृङ्गो वराहस्त्वं भूतभव्यसपत्नजित् ॥
सीता लक्ष्मीः भवान् विष्णुर्देवः कृष्णः प्रजापतिः ।
अक्षय्यं मधुहन्तारं जानामि त्वां सुरोत्तमम् ॥

इत्यादीनि बहूनि प्रमाणानि श्रीरामचन्द्रस्यैव परत्वं प्रतिपादयन्ति एवमेव नृसिंहवामनाद्यवताराणां श्रीकृष्णांशत्वं न क्वापि श्रुतं एतेचांशकला इत्यस्य त्वयमर्थः—

"मनवो मनुपुत्राश्च ऋषयश्च महौजसः ।
एतेचांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् ॥
इन्द्रारिव्याकुलं लोकं मृडयन्ति युगेयुगे ॥

इत्यत्र मन्वादयः श्रीकृष्णस्यांशकला एवेन्द्रारिव्याकुलं लोकं मृडयन्ति कृष्णस्तु भगवान् स्वयमेवावतीर्य मृडयतीत्यर्थः तथाच भगवद्वाक्यम्—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥

इति ॥ ४८ ॥

साक्षात्पितुरिति योनिव्यवधानं विना जनकस्य अग्निमथनावसरे अरणौ पतितं रेतस्तदैव तत उत्पन्नः शुक इति

### श्रीनिवाससूरिकृततत्त्वदीपिका ।

वदन्त्याचार्याः अथवा व्यासस्य भार्या अरणिरिति प्रसिद्धिः अथवा मत्पितुर्द्वैपायनस्य साक्षादाश्रमंमगात् वदरीवृक्षैः सहितं साक्षात्स्वकीयमाश्रममगादित्यर्थः ॥ ४७ ॥

---

### योगिरामानुजाचार्यकृतसरलाव्याख्या ।

अभयाय संसारनिरसनाय उशतीः रमणीयाः कलाः मूर्त्तीः धत्ते ॥ ४६ ॥

महामनाः आनन्दितचित्तो नारदः ॥ ४७ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सर्वभूतानां धाता भृतिपोषणयोः कर्ता यः सर्वभूतानामिति प्रस्तुतास्ते जीवाः यस्य तव कलाः प्रतिबिंबांशाः ॥ ४६ ॥

ऋषिसत्पत्वादृषिः ॥ ४७ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

नमस्तस्मै भगवते कृष्णायेत्यादि कृष्णायेति कृष्णनमस्कारेणैव कृष्णपरैव श्रुतिस्तुतिरियमुपपद्यते ॥ ४६—५० ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स्वगुरुं नमस्यति—नमस्तस्मै भगवतइति । नारायणस्य स्वरूपं कृष्णः कृष्ण एव नारायणरूपेणावतीर्ण इति कृष्णो मूलं भवति यद्यपि लोके नारायणस्यैवांशः कृष्ण इति प्रसिद्धिः "ताविमौ वै भगवतो हरेरंशाविहागतौ"इति वाक्यात् तथापि श्रुतिगीतशिक्षया विपरीतं ज्ञातवान् तत्र हि स्त्रिय उरुगेन्द्रभोगभुजदण्डविषक्तधिय इति श्रुतितुल्या निरूपिताः तादृश्यः कृष्ण एव भवन्ति गोपिकाद्याः नाम्यावतारेष्विति स एव भजनीयः श्रुतिगीतासु निरूपित इति ज्ञातवान्—

> माहात्म्यं बहुधा ज्ञात्वा जीवानाञ्च गतिं पराम् ।
> सर्वं त्यक्त्वा विधायैतन्नित्यं कृष्णं स्मरंश्चरेत् ॥

एतावानेवोपाख्यानार्थ इति ज्ञात्वा कृष्णमेव नमस्यति अवतारेण दोषप्रतिभानं वारयति अमलमूर्त्तय इति अमलेषु वा मूर्त्तिर्यस्येति भगवत्प्राप्त्युपायो वा निरूपितः नन्वयं साक्षात् गुरुर्नारायणस्तस्य चावतारः तं प्रत्यक्षं विहाय तस्मा इति परोक्षः कृष्णं कथं नमस्कृत इति चेत्तत्राह—यो धत्ते सर्वभूतानामिति । स एव भगवानस्मदादि सर्वभूतमोक्षार्थं उशतीः कलाः धत्ते ॥ ४६ ॥

स एवैतद्रूपेणास्मदुद्धारार्थं समागतः तथा सत्ययं मूलभूतो न भवतीति तस्यैवचायमुपकार इति स एव नमस्कृत इति अर्थः ननु गुरुनमस्कारः कर्त्तव्यः स कथं न कृत इति चेत्तत्राह—इत्याद्यमृषिमानम्येति इत्येव गुरुः नमस्कृतः यतः स आद्यो ऋषिः स्वस्वरूपं जानाति कृष्णोहमिति तद्[illegible]ष्या-श्च तं जानन्ति यतो महात्मानः वस्तुस्वरूपं जानन्ति[illegible] ननु बहिर्मुखा इत्यर्थः । केवलपरमतत्त्वव्युदासाय व्यास[illegible]-माह— ततोऽगादाश्रममिति । यद्यपि व्यासस्य [illegible]बहून्येव स्थानानि सन्ति तथापि साक्षाच्च देवस्थानं ननु व्यासः [illegible] साक्षाद् भगवान् कथं स्वतो न ज्ञातवांस्तत्राह—द्वैपायन[illegible]येति । ततस्तेन सभाजितः महता पूजितः सन् आसनञ्च[illegible] तैदत्तं गृहीत्वा नारायणमुखाच्छ्रुतं यद्गूढं तैन्नर्णयामास [illegible] ततः परम्परया प्राप्तं मया ऽपि ते वर्णितं इति । [illegible] एतद्विचारप्रकारेणैव यथा निर्गुणे मनः प्रविशति तथा क[illegible]र्त्तव्यं भगवता चेत्तादृशी बुद्धिस्त्वयि कृता तदा तथा मनः प्रवे[illegible]क्ष्यतीति भावः । एतदर्थानवबोधात् पृष्टमन्यदुत्तरं चान्यदुक्तवानिति न मन्तव्यमित्येतदर्थमाह—यः प्रश्नः सोऽस्मान् प्रति त्वया कृतः तस्यैवैतदुत्तरमिति वेदास्तु निर्गुणं प्रतिपादयन्ति तत्केन प्रकारेणेति सन्देहे अनेनैव प्रकारेण प्रतिपादयन्तीति ज्ञातवतः निर्गुणेपि ब्रह्मणि मनश्चरेत् श्रीशुकोपि श्रुतिगीताप्रतिपाद्यमर्थं पुनः स्वयं सङ्क्षेपेणाह प्रतिपत्तिसौकर्याय योऽस्यो त्प्रेक्षक इति माहात्म्यं ज्ञात्वा भगवन्तं भजेदिति अर्थद्वयं श्रुतिगीतार्थः माहात्म्यं भजनञ्चेति तत्र भजनप्रतिपादिकाः सर्वा एकीकृत्याह ध्यायेदजस्रमिति अन्तर्भगवन्तं स्थापयित्वा तत्र सेवां कुर्यादिति अर्थः तस्य फलत्वायाह—अजस्रं सुखरूपं सर्वदुःखहर्तारं चेति तत्र भगवतो माहात्म्यं गुणरूपं दोषाभावरूपञ्च ॥ ४७-४९ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

वेदस्तुत्यर्थतात्पर्यं निर्द्धार्य्य सप्रतिज्ञमेव श्रीकृष्णस्यैव सर्वोत्कर्षमाभिव्यञ्जयति—नमस्तस्मै इति अत्र मार्गेषु ज्ञानयोगभक्तिषु मध्ये भक्तिरेव श्रेष्ठा उपासकेषु ज्ञानिप्रभृतिषु भक्त एव श्रेष्ठः उपास्येषु ब्रह्मस्वरूपादिषु भगवानेव श्रेष्ठः इति सकलश्रुतिवाक्यैरेव निर्द्धारितं भगवत्यपि सदसतः परं त्वमथ यदेष्ववशेषमृतमिति स्त्रिय उरगेन्द्रभोगभुजदण्डेति वाक्याभ्यां कृष्ण एव श्रेष्ठो निश्चित इत्यभिप्रायेण साक्षादपरोक्षस्य श्रीनारायणस्याग्रेपि नमस्तुभ्यं नारयणायेत्यप्रयुज्य नमस्तस्मै कृष्णायेत्युच्चारयामास अमला असुरेभ्योपि मोक्षप्रदत्वादविद्यामालिन्यनिवर्त्तिका कीर्त्तिरेव यस्य तस्मै ननु किं तमेव नमस्करोषि पुरःसन्तं श्रीनारायणं स्वगुरुं मां नैव प्रणमसि तत्राह य इति अभवाय भवनिवर्त्तये उशतीः कमनीयाः कलाः भवद्विधानवतारान् धत्ते इति तन्नमस्कारेणैव त्वन्नमस्कारोऽप्यभूदितिभावः श्लोकोयमशेषसमाम्नायपुराणोपनिषत्समुद्रमथनोत्थवेदस्तवामृतादपि सारभूत आकृष्टः श्रीनारदेन तथा च श्रुतिः तस्मात्कृष्ण एव परो देवस्तं ध्यायेत्तं रसयेत्तं भजेत्तं यजेदित्योन्तत्सदिति श्रीगोपालतापनी ॥ ४६ ॥

इतिशब्दः प्रकारे समाप्तौ वा इति प्रकारेणैव आद्यम् ऋषिमानम्य आनतो भूत्वा यद्वा इति कृष्णप्रणामसमाप्तौ वृत्तायां आद्यं तमृषिमानम्य ततो नारयणाश्रमात् ॥ ४७ ॥

---

**सभाजितो भगवता कृतासनपरिग्रहः।**
**तस्मै तद्वर्णयामास नारायणमुखाच्छ्रुतम् ॥ ४८ ॥**
**इत्येतद्वर्णितं राजन् यन्नः प्रश्नः कृतस्त्वया।**
**यथा ब्रह्मण्यनिर्देश्ये निर्गुणेऽपि मनश्चरेत् ॥ ४९ ॥**

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

श्रीनारदश्च श्रीमन्नारायणोपदिष्टं वेदविषयं स्वानुभवेन शक्ति—नम इति। कृष्णाय सदानन्दघनाय भगवते स्वाभाविकाचिन्त्यानन्तं भगं विद्यतेऽस्य तस्मै स्वाभाविकी ज्ञानबलक्रियाचेति श्रुतेः तथाच वैष्णवे—

"शुद्धे महाविभूत्याख्ये परे ब्रह्मणि वर्त्तते।
मैत्रेय भगवच्छब्दः सर्वकारणकारणे ॥

इति अमलकीर्त्तये अमला जगत्पावनी कीर्तिर्यस्य तस्मै सदैव विवृणोति यो भूतानां संसारनिवृत्तये मोक्षप्रदानायोपात्तीः कला लीलावताराख्याः धत्ते इत्यनेन प्रथमस्कन्धोक्तस्य श्रीकृष्णस्तु भगवान् स्वयं इत्यस्योपसंहारो ज्ञापितः ॥ ४६-४९ ॥

---

भाषा टीका।

सब लोक को सुख देने वारे नित्यनिर्दोष निरवधि ज्ञानादि ऐश्वर्य संपन्न अप्राकृत शुद्ध सत्वगुण प्रचुर मूर्त्ति युत आपके अर्थ मेरा प्रणाम होइ जोंकि आप सब प्राणियों को मोक्ष के अर्थ प्रकाशमान विद्या को धारण करते हो ॥ ४६ ॥

इस प्रकार पूर्व ऋषि नारायण को और उनके शिष्यन को प्रणाम कर उदार बुद्धि नारदजी साक्षात् आप हि हमारे पिता व्यासजी के आश्रम को जाते भए ॥ ४७ ॥

---

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी।

तच्छ्रुतीनां ब्रह्मणि पर्यवसानम् ॥ ४८ ॥

उपसंहरति—इतीति। यन्नः प्रश्नस्त्वया कृतः इति अस्मिन्प्रश्ने एतदुत्तरं मया वर्णितं किमित्यपेक्षायामाह—यथेति। यथा सगुणालम्बनेन प्रकारेण चरन्तीनां श्रुतीनां द्वारा निर्गुणे ब्रह्मणि मनोपि चरेत्प्रचरेत् किमुत श्रुतय इत्यर्थः ॥ ४९ ॥

---

श्रीकविचूडामणिचक्रवर्त्तिकृताऽन्वयबोधिनी।

भगवता व्यासेन सभाजितः सत्कृतो नारदः श्रीनारायणमुखात् यत् श्रुतं तत्तस्मै वर्णयामास ॥ ४८ ॥

हे राजन्! त्वया नोऽस्मान् यः प्रश्नः कृत इत्येतद्वर्णितं यथा-निर्गुणेपि ब्रह्मणि मनश्चरेत्प्रविशति तथा वर्णितम् ॥ ४९ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

भगवता श्रीद्वैपायनेन भगवच्छब्दनिर्देशेन सनकादिवत्तस्यापि तद्विज्ञानादिसामर्थ्येपि तच्छ्रवणं सूचितं तस्मिन् स्वभक्तिश्च ॥ ४८ ॥

उपसंहरति—इतीति। नोऽस्मान् प्रति यः प्रश्नः कृत इत्यत्र एतद्वर्णितं तदेतदिति पाठे तत्तत्र किमित्यपेक्षायामाह यथेति यथा भगवत्स्वरूपावलम्बनेन चरन्तीनां श्रुतीनां द्वारा मनोपि चरेत् प्रविशेत् किमुत श्रुतय इत्यर्थः। एता हि तत्तु-समन्वयादिति न्यायेन तदेकपर्यवसानतया पूर्वं दर्शिताः "शब्दब्रह्मपरब्रह्म ममोभे शाश्वती तनू" इति न्यायेन तदेकरूपत्वात्ताश्च श्रुतयश्च यथोक्तं स्वयं भगवति श्रीकृष्णे श्रुतीः विनापि शक्तिप्रागल्भ्यं निभृतमरुन्मनोक्षेत्यादौ तदरयोपि यच्छ्रुः स्मरणात् इत्यत्र ॥ ४९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

सभजितइति। ततो भगवता द्वैपायनेन सभाजितः पूजितः कृतः आसनस्य परिग्रहो येन सः तस्मै द्वैपायनाय नारायणस्य मुखाच्छ्रुतं निर्गतं श्रुतिस्मृत्यात्मकं वचो वर्णयामास उपदिदेशेत्यर्थः सतु मह्यमुपादिष्टवान् इति तु प्रसिद्धत्वान्नोक्तम ॥ ४८ ॥

एवञ्च त्वत्प्रश्नस्योत्तरमुक्तं इत्याह—तदिति। हे राजन्नोऽस्मान् प्रति यः प्रश्नः त्वया कृतः तत्तत्प्रश्ने एतच्छ्रुतिवचोवर्णितम उत्तरत्वेन कथितमित्यर्थः येनोपवर्णितनानिर्देश्ये निर्गुणेपि ब्रह्मणि श्रुतयश्चरेयुरिति मनश्चरेत्प्रसरेद्भिःसंशयं मनो भवेदित्यर्थः ॥ ४६ ॥

---

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका।

सभाजित इति स्पष्टम् ॥ ४८ ॥

ब्रह्माहि बृहद्गुणविशिष्टे अनिर्देश्ये चिदचिद्वस्तुसजातीयत्वेन वक्तुमशक्ये निर्गुणे हेयप्रतिभटे ईदृशे ब्रह्मणि यथा मनश्चरेत् तं विषयीकुर्यात् मनसा तु विशुद्धेनेत्यादिश्रुतेर्विशुद्धमनोग्राह्यमित्यर्थः ॥ ४९ ॥

---

योगिरामानुजाचार्यकृतसरलाव्याख्या।

सभाजितः पूजितः ॥ ४८ ॥

अत्र निर्गुणत्वं प्राकृतगुणपारतन्त्र्यराहित्यं स्वाभाविकगुणानां मूले स्पष्टोक्तेः अनिर्देश्यत्वं च साकल्येन निरूपणाशक्यत्वं

योऽस्योत्प्रेक्षक आदिमध्यनिधने योऽव्यक्तजीवेश्वरो-
यः सृष्ट्वेदमनुप्रविश्य ऋषिणा चक्रे पुरः शास्ति ताः ।
यं सम्पद्य जहात्यजामनुशयी सुप्तः कुलायं यथा-
तं कैवल्यनिरस्तयोनिमभयं ध्यायेदजस्रं हरिम् ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे
श्रीनारदनारायणसम्वादे श्रुतिस्तुतिर्नाम
सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

योगिरामानुजाचार्यकृतसरलाव्याख्या ।

मनश्चरेदित्युत्तरन्तु मनःपूर्वरूपं वागुत्तररूपमिति श्रुतेः वाङ्मनसयोः पूर्वोत्तरयोरभेदाभिप्रायेणेति ज्ञेयम् ॥ ४९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अत्र नारदेन व्यासाय कथाकथनं स्तुत्यर्थं नतु ज्ञापनाय—

कथाः कथयतीशस्य व्यासस्यान्ते स नारदः ।
स्तुत्यर्थं तस्य देवस्य ज्ञापनाय नतु क्वचित् ।

इत्यादि ॥ ४८ ॥

त्वया यः प्रश्नः कृतः तत्प्रश्नवचनमुद्दिश्यैतत्परिहारवचनं वर्णितं येन वर्णितप्रकरेणानिर्देश्ये निर्गुणे ब्रह्मणि मनश्चरेत् तथेति ॥ ४९ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

भगवता व्यासेन तस्मै व्यासाय ॥ ४८ ॥
यथा भगवत्प्रसादोत्थभक्तिप्रभावेनेत्यर्थः ॥ ४९ ॥

भाषाटीका ।

श्रीव्यास भगवान् से पूजित होकर आसन को स्वीकार कर नारदजी' जो नारायण के मुखसे श्रवण किया रहा उसको व्यासजी के अर्थ वर्णन करते भए ॥ ४८ ॥

हे राजन् । हमारे प्रति आपने जो प्रश्न किया रहा उस का उत्तर इस प्रकार वर्णन किया गया देव मनुष्यादिवत् निर्देश के अयोग्य मायिक गुण रहित ब्रह्मके विषय में जैसे श्रुति वर्त्तती है तैसेहि मनभी परमात्मा के विषय मे वर्त्ति सकता है ॥ ४९ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

समस्तवेदस्तुत्यर्थं सङ्गृह्यानुसारयति--योऽस्योत्प्रेक्षक इति । योऽस्य विश्वस्योत्प्रेक्षकः एवमेतदनुष्ठायिनां समस्तपुरुषार्थसिद्धये सृष्टिस्थितिप्रलयादिप्रापणीयमित्यालोचक इत्यर्थः अनेन निमित्तत्वमुक्तं एवमालोचयास्यादिमध्यनिधने आदिर्जन्म मध्यः पालनं निधनमन्तः एतेषु कर्मसु यो वर्त्तते अनेनोपादानत्वमुक्तम् ननु प्रकृतिपुरुषयोरुपादाननिमित्तत्वे प्रसिद्धे सत्यम तयोरपि तत एवोद्भूतत्वान्मूलकारणं स एवेत्याह--योऽव्यक्तजीवेश्वर इति प्रवेशनियमने दर्शयति--य इति । पूर्वोक्तप्रकारेणेदं सृष्ट्वा यदर्थमेतत्सृष्टं तेन ऋषिणा सह कार्येऽहमिति दर्शनात् ऋषिर्जीवस्तेन सहानुप्रविष्टः पुरः शरीराणि तस्य भोगायतनानि चक्रे ताः पुरः शास्ति तस्य भोगं ददत्परिपालयति उपासकस्य च कैवल्यरूपो भवतीत्याह—यं सम्पद्येति । यं सम्पद्य प्राप्यानुशायी अन्वनु दण्डवत्प्रणामैश्चरणमूलं शेते इति तथा स जीवोऽजां कार्यकारणरूपामविद्यां त्यजति ननु ब्रह्म सम्पन्नस्यापि जीवस्य तत्सम्बन्धो दृश्यतेऽत आह—सुप्तः कुलायं यथेति अयं भावः यथा सुप्तं शरीरवन्तमन्ये पश्यन्ति सतु नात्मानं तथा पश्यति एवं जीवन्मुक्तमप्यन्ये देहवन्तं पश्यन्ति सतु न किञ्चित्पश्यतीति तं हरिमजस्रमनवरतं ध्यायेत् किमित्यत आह—अभयं न भयं यस्माद्भयनिवर्तकमित्यर्थः कुत एतत् कैवल्यनिरस्तयोनिं कैवल्येनाप्रच्युतस्वरूपावस्थानेन निरस्ता तिरस्कृता योनिर्मूलकारणं माया येन तम् ॥ ५० ॥

सर्वश्रुतिशिरोरत्ननीराजितपदाम्बुजम् ।
भोगयोगप्रदं वन्दे माधवं कर्मिनम्रयोः ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
सप्ताशीतितमोऽध्यायः ॥ ८७ ॥
श्रीकृष्णाय नमः ।

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी ।

सङ्गृह्य सङ्क्षिप्य अनुशायिनामनुशय उपाधिस्तद्वताम् अनेन उत्प्रेक्षक इति विशेषणेन एतेषु जन्मादिकर्मसु अनेन जन्मादिषु वर्त्तनेन तयोरपि प्रकृतिपुरुषयोरपि तत एव हरेरेव यदर्थं जीवार्थं सृष्टमिति कार्यं देहादिकमहमिति जानाति अभिमन्यत इति ऋषिर्जीवस्तेन सह सर्वासां श्रुतीनां शिरोरत्नतुल्याभिरुपनिषद्भिर्नीराजिते पदाम्बुजे यस्य तं

श्रीराधारमणदासगोस्वामिकृतदीपिकादीपिनी।

कर्मिणां भजनेन भोगपदं नम्रस्य योगप्रदं ददामि बुद्धियोगं तं [ये]न मामुपयान्ति ते इति गीतोक्तेः॥ ५०॥

गोवर्द्धनोपलालस्य पुत्रः श्रुत्यर्थसम्भवम्।
राधारमणदासोऽयं व्याख्यानमकरोन्मुदा॥
कृष्णगोविन्दमित्रेण राधारमणसेविना।
राधारमणदासेन दीपिकादीपनं कृतम्॥

श्रीकृष्णयनमः॥

इति श्रीभागवते दशमस्कन्धे श्रुतिस्तुतौ
भावार्थदीपिकाया व्याख्याने दीपिकादीपने।
सप्ताशीतितमोऽध्यायः॥ ८७॥

---

श्रीकविचूडामणिचक्रवर्तिकृताऽन्वयबोधिनी॥

*समस्तवेदस्तुत्यर्थं सङ्ग्रहानुसारयति योऽस्योत्प्रेक्षकेति तं हरिभजनं ध्यायेत् कोसौ हरिस्तमाह योऽस्योत्प्रेक्षकः अस्य विश्वस्य उत्प्रेक्षकः जीवानामेवमिदं करिष्यामीत्यालोचकस्तम् इदं विश्वं सृष्ट्वा ऋषिणा जीवेन सह अनुप्रविश्य पुरः शरीराणि चक्रे ताः पुरः शास्ति तस्य भोगं ददात्पालयति यस्तम् अनुशयी जीवः यं सम्पद्य प्राप्य अजामविद्यां जहाति तं अत्र दृष्टान्तः सुप्तः कुलायं यथा यथा सुप्तः पुरुषः कुलायं शरीरं न पश्यति एवं जीवन्मुक्तमप्यन्ये देहवन्तं पश्यन्ति सतु न किञ्चित् पश्यतीति कैवल्यनिरस्तयोनिं कैवल्येनाप्रच्युतस्वरूपावस्थानेन निरस्ता तिरस्कृता योनिर्मूलकाणं माया येन तम् अभयं भयनिवर्त्तकं एवम्भूतं हरिं ध्यायेदिति यास्योत्प्रेक्षक इत्यादिश्रुतिः "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् तमीश्वराणां परमं महेश्वरं तं देवतानां परमन्तु दैवतं तमात्मस्थं येतु पश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्" इति सुगमोर्थः सर्वेश्वरपरेयं ऋषिणेति सृष्टेकार्ये सोहमिति दर्शनात् ऋषिर्जीवः तथा च श्रुतिः "आत्मैवेदमग्र आसीत् पुरुषविधः सोनुवीक्ष्य नान्यदात्मनोऽपश्यत् सोहमस्मीत्येवव्याहरत्ततोहं नामाभवत् तस्मादप्येतर्ह्यामन्त्रितोहमयमित्येवाग्र उक्त्वाथान्यन्नाम प्रब्रूत" इति अयंश्च अग्र सृष्टे कार्ये *प्रथमम्पुरुषविधः पुरुषाकारो जीवात्मा एव आसीत् स अनु अनन्तरं सर्वतो वीक्ष्यात्मनः स्वस्मादन्यन्नापश्यत् सोऽहमस्मीति प्रथमं व्याहरत् उक्तवान् ततः कारणादहं नामाऽभवत् तस्मात्कारणादेतर्हि इदानीमपि केनाप्यामन्त्रितः सन्नग्रे प्रथमं अहमपि त्वेवमुक्त्वाथानन्तरमन्यन्नामा ब्रूते कस्त्वमित्युक्तः अहममुकोस्मीति वक्तीति सुप्तः कुलायं यथेत्यत्र श्रुतिः "तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेदनान्तरमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमिति सुगमोर्थः स सम्भोगकाले मरणकाले वा प्रिययालिङ्गितः प्राज्ञेन सुषुप्तिसाक्षिणा विशुद्धात्मना परिष्वक्तः, एकीभूतः अथ श्रीस्वामिचरणानाम्—

सर्वश्रुतिशिरोरत्ननीराजितपदाम्बुजम्।
भोगयोगप्रदं वन्दे माधवं कर्मिनम्रयोः॥

श्रीमाधवमहं वन्दे कथम्भूतं सर्वश्रुतिशिरोरत्नैर्नीराजितं निर्मञ्छीकृतं पादाम्बुजं यस्य तं पुनश्च कर्मिनम्रयोर्भोगप्रदं नम्राणां भक्तानां भक्तियोगप्रदमित्यर्थः॥ ५०॥

वृन्दारण्यनिकुञ्जस्थः कविचूडामणिर्द्विजः।
श्रुतिस्तुतिश्रुतिव्याख्यामकरोत्सर्वसम्मताम्॥

ननु श्रीभगवत्तस्य श्रुतेश्च दुर्विज्ञेयमर्थं कथं ज्ञातवानसि सत्यं श्रीमच्चरणारविन्ददर्शितमार्गेणेत्याह—

हरिणा श्रीधराख्येन रचितां भावदीपिकाम्।
गृह्णन् भक्त्यजडोप्येसे परमार्थे नमत्सरी॥
अन्यच्च। यथोपदिष्टं गुरुणा बुद्धौ श्रीनन्दसूनुना।
तथैव कृतवानस्मि न मे दोषानु वा गुणाः॥

इति श्रीमद्भागवते दशमस्कन्धे श्रीकविचूडामणिचक्रवर्त्तिविरचितायाम् अन्वयबोधिन्यां
टीकायां सप्ताऽशीतितमोध्यायः।

श्रीकृष्णायनमः।

---

*श्रीसनातनजीवगोस्वामिकृतबृहत्तोषिणी।

श्रीकृष्णायनमः।

अहो पश्यन्तु दार्ढ्यं मे साहसञ्च सुबुद्धयः।
प्रवर्त्तेयं महत्कृत्ये व्याख्यानेपि श्रुतिस्तुतेः॥
स्वस्यायोग्येप्यशक्येर्थे कः प्रवर्त्तेत बुद्धिमान्।
महत्तमकृपामत्तं विना मां सुदुराग्रहम्॥
वन्दे तं परमात्मानमाश्चर्यचरितं प्रभुम्।
बलात्प्रवर्त्ते यद्यो मां नीचमुच्चप्रयोजने॥
श्रीधरस्वामिपादांस्तान् प्रपद्ये दीनवत्सलान्।
निजोच्छिष्टप्रसादेन ये पुष्णात्याश्रितं जनम्॥
वन्दे चैतन्यदेवं तं तत्तद्व्याख्याविशेषतः।
योऽस्फोरयन्मे श्लोकार्थान् श्रीधरस्वाम्यदीपितान्॥
श्रीमद्भागवतं नौमि यस्यैकस्य प्रभावतः।
वैष्णवानां कृपां विन्दन् मूर्खोपि स्याद्विशारदः॥
नमामीमं हरेर्दासवर्यं गोवर्द्धनं गिरिम्।
यदाश्रयबलादाशां दुर्लभार्थेप्यहं दधे॥

विष्णुनामसर्वैश्वर्यप्रकटनेन विश्वव्यापकेन श्रीभगवता राज्ञो जीवयित्वा श्रीयुधिष्ठिरादिभ्यो दत्तः किं वा आदत्तः स्वीकृत इति तस्य माहात्म्यभरः सूचितः अत उवाचेति तस्य तादृशप्रश्नो युक्त एवेति भावः। सन्मार्गमादिश्य स्वस्मिन् स्वभक्तौ ब्रह्मणि चामूर्ते स्वस्वरूपे वेदानां प्रवृत्तिप्रकारव्याख्ययोपदिश्येत्युक्तम् तत्र श्रीभगवति तदुक्तौ च तत्तन्माहात्म्यवर्णनादिना वेदानां प्रवृत्तिं सङ्गतां ब्रह्मण्यसङ्गतां मन्यमानः पृच्छति—ब्रह्मन्निति। वेदस्वरूपत्वात्त्वं तद्वेत्स्येवेति भावः। अनिर्देश्ये स्वरूपक्रियाजातिगुणैर्निर्देष्टुमशक्ये निर्गुणे गुणोऽग्न्यादीनामुष्णतादिवत् सहजधर्मस्तेन रहिते गुणेषु तत्तत्स्वभावक्रियाजात्यादिषु वृत्तिर्यासां ताः यद्वा निर्गुणे त्रिगुणातीते गुणवृत्तयः गुणत्रयाश्रयइत्यर्थः। तथा च गीतासु "त्रैगुण्यविषया वेदाः" इति अत एव सदसतः परे स्थूलसूक्ष्मव्यतिरिक्ते श्रुतयः उपनिषल्लक्षणाः कथं चरन्ति वर्त्तन्ते। साक्षादिति तात्पर्यवृत्तिरपि निरस्तैव तत्प्रकारं वदेति शेषः। तत्रायमभिप्रायः। जीवानां मोक्षार्थं प्रभु-

* एतासमध्यायेवं व्याख्याऽत एवान्ते सम्मुद्रयते॥

श्रीसनातनजीवगोस्वामिकृतबृहत्तोषिणी ।

बुद्ध्यादीनसृजत मोक्षस्तु ज्ञानेनैव ज्ञानञ्च महावाक्याद्यर्थावधारणात् तच्च प्रकारान्तरेणाघटमानं जहदजहत्स्वार्थलक्षणयैवं स्यादिति महावाक्यादि श्रुतीनां ब्रह्मणि वृत्तिः सम्भवेदित्युत्तरमुक्तं ज्ञेयम् । अथवा सतां वेदानां मार्गे स्वस्मिन् कृष्णाख्ये परब्रह्मणि साक्षात् प्रवृत्तिप्रकारमादिश्य श्रीभगवान् द्वारवतीमगादित्युक्तं तत्र राजा बुभुत्सुः पृच्छति- ब्रह्मन्निति । ब्रह्मणि परब्रह्मणि श्रीकृष्णे श्रीगोपालतापन्यादि श्रुतिषु श्रीकृष्णस्य परब्रह्मत्वं प्रसिद्धमेव । तथा "यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम् "इत्यत्रैव विरिञ्चिनोक्तं ब्रह्मत्वादेव अनिर्देश्ये शब्दगोचरे शब्दरूपाः श्रुतयः कथं चरन्ति तथा निर्गुणे गुणानां सत्त्वरजस्तमसां सम्बन्धरहिते तथा ह्यत्रैव वक्ष्यते—

" हरिर्हि निर्गुणस्साक्षात् पुरुषः प्रकृतेः परः ।
स सर्वदृगुपद्रष्टा तं भजन्निर्गुणो भवेत् " ॥ इति

ताः कथम्भूताः गुणवृत्तयः गुणेषु प्रकृतिगुणेषु सत्त्वादिषु तत्कार्येषु च वृत्तिर्यासां ताः ननु गुणात्मनः तेऽपि गुणान् विमातुमित्यादिवचनैः कृष्णस्य सगुणत्वमेव बोध्यते कथमसौ निर्गुण इतिचेन्न सर्वेषामेव श्रीकृष्णगुणानां चिच्छक्तिविलासत्वेन श्रीभगवत्स्वरूप एव पर्यवसानान्निर्गुणत्वमेव तथाच प्रथमस्कन्धे श्रीधरण्युक्तौ "एते चान्ये च भगवन्नित्या यत्र महागुणाः " इति गुणा अप्राकृता एव नित्याः स्युः तथा-चैकादशे—

" मां भजन्ति गुणास्सर्वे निर्गुणं निरपेक्षकम ।
सुहृदं प्रियमात्मानं साम्याः सङ्गादयो गुणाः" ॥ इति.

निर्गुणं प्रकृतिगुणैरसंस्पृष्टमेव मां गुणा भजन्ति कथम्भूतास्ते अगुणाः गुणपरिणामरूपा न स्युरिति । ननु तर्हि लक्षणया श्रुतयस्तत्र चरन्ति तत्राह साक्षादिति लक्षणया चरन्तु नाम साक्षान्मुख्यया वृत्त्या केन प्रकारेण चरन्तीति ननु हिरण्यगर्भे पुरुषे च चरन्त्यः श्रुतयस्तदभिन्नत्वात् तस्मिन् कृष्ण एव चरन्ति यद्येष हिरण्यगर्भे नैर्गुण्यसन्निकृष्टत्वात् निर्गुणवदेव पुरुषश्च प्रकृत्यधिष्ठाता स्वेच्छया स्वीकृतगुणत्वात् निर्गुण एवेति चेत्तत्राह सदसतः पर इति । सत् कार्यं हिरण्यगर्भादिरूपम् असत् कारणम् पुरुषादिरूपं ततः परे नितरामुत्कृष्टे कृष्णे हिरण्यगर्भादिषु चरन्त्योपि श्रुतयः कृष्णे चरितुं न शक्नुवन्ति तस्य ब्रह्मानन्दघनस्वरूपत्वात् तथाऽत्रैव श्रीदेवर्षिणोक्तम् "विशुद्धविज्ञानघनं स्वसंस्थया समाप्तसर्वार्थममोघवाञ्छितम "इति श्रीगीतासु च स्वयमेव श्रीभगवतोक्तम्—

. ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च '. ॥ इति.

ब्रह्मानन्दघनरूपोहमित्यस्यार्थः । यद्वा परे इति ब्रह्मणीत्यस्य विशेषणं परे ब्रह्मणि श्रीकृष्णे सदसतः कार्यकारणस्य सम्बन्धिन्यः श्रुतय इति श्रुत्यगोचरत्वमेव श्रीकृष्णस्य श्रीमदुद्धवेनोक्तं " भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम "इति. यत्पदव्यपि श्रुतिभिर्विमृग्यैव स कथं सतां गोचरः स्यादिति ॥ १ ॥

अत्र समाधत्ते-बुद्धीति । जनानां महाप्रलये लीनानां मात्रार्थं विषयभोगार्थं यद्वा मीयन्ते बुध्यः कार्याणि गुणातीतानि चाभिरिति मात्राः श्रुतयस्तदर्थं तद्वारत्वार्थं तद्वारणादिकं किमर्थमिति तदाह—भवार्थम् अभ्युदयार्थं ब्रह्मलोकाद्यैश्वर्यप्राप्त्यर्थम् आत्मने स्वस्वरूपप्राप्त्यर्थं मोक्षार्थमित्यर्थः । अकल्पनाय भजनाय निर्गुणो मदपाश्रय इत्याद्युक्तेः भजनस्य निर्गुणत्वेन कल्पनातीतत्वात् यद्वा आत्मने स्वस्य कृष्णस्य प्राप्त्यर्थं स्वप्राप्त्युपायमाह कल्पनायेति भक्तेः कल्पनाय विधानायेत्यर्थः । भक्त्यैवाहं लभ्यः स्याम नान्योपायेनेति भावः । तथा हि श्रीभगवतैवैकादशस्कन्धे वक्ष्यते "भक्त्याहमेकया ग्राह्यः" इति श्रीगीतासु च "पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया" इति अतोऽधोक्षजत्वादवाङ्मनसगोचरोपि श्रीभगवान् भक्तिं कुर्वन्ति जने भक्तिजन्येनैव प्रसादेन तत्र स्वशक्तिं सङ्क्रम्य वाङ्मघटमानामपि चक्षुरादिगोचरतां प्राप्नोतीत्यभिप्रेत्य भक्त्यैव श्रुतयः कृष्णे चरन्ति नान्यथेति प्रथमं सङ्क्षेपेणोत्तरं दत्वा श्रीसनन्दनमुखेन यथा शयानं सम्राजमिति दृष्टान्तितेन पद्येन श्रुतीनां भक्तिं वर्णयता श्रीशुकेन पूर्वं नारदकृतस्यैवास्य प्रश्नस्य विस्तरेणोत्तरतया श्रुतिगोचरताहेतुः श्रीभगवन्माहात्म्यभरप्रतिपादिका श्रुतिस्तुतिरेवोपक्षिप्ता तथा च स्तुत्यारम्भे कचिदजयात्मना च चरतोनुचरेन्निगमः इत्यनुचरणं वक्ष्यते अयं भावः । श्रुतयस्त्रिविधाः कर्मपराः ज्ञानपराः श्रीभगवत्पराश्चेति । तत्र कर्मपराः त्रैगुण्यविषयत्वात् कृष्णे चरितुं न शक्नुवन्ति ज्ञानपराश्च लक्षणया भगवत्स्वरूपविशेषे चरन्त्योऽमुमाऽपूर्या साक्षात्तमेव दिदृक्षवो तन्निरसनद्वारा भगवन्तं मृगयन्ते तदपेक्षयैवोक्तम "अद्यापि यत्पदरजः श्रुतिमृग्यमेव" इति श्रीभगवत्परास्तु श्रीनारायणोपनिषद्गोपालतापिनीप्रमुखाः भक्तिविशेषेण साक्षादेव श्रीभगवति चरन्त्यमुं प्राप्नुवन्ति । तथा तदनुगतानां चागमपुराणादीनां पदवाक्यानि तत्र चरन्तीति अत एव रासक्रीडाप्रसङ्गे कथितं "मनोरथान्तं श्रुतयो यथा ययुः" इति । अस्यार्थः । कर्मकाण्डादिश्रुतयः परमेश्वरमपश्यन्त्यस्तत्तत्कामाद्यनुबन्धैरपूर्णा भवन्ति भगवत्परास्तु तं लब्ध्वा मनोरथान्तं पूर्णकामतां गच्छन्तीति । तथा हि बृहद्वामने—

" ब्रह्मानन्दमयो लोको व्यापी वैकुण्ठसंज्ञितः ।
तल्लोकवासी तत्रस्थैः स्तुतो वेदैः परात्परः ॥
चिरं स्तुत्या ततस्तुष्टः परोक्षं प्राह तान् गिरा ।
तुष्टोस्मि ब्रूत भोः प्राज्ञाः वरं यन्मनसीप्सितम् ॥
श्रुतय ऊचुः ॥
यथा तल्लोकवासिन्यः कामतत्त्वेन गोपिकाः ।
भजन्ति रमणं मत्वा चिकीर्षाजनि नस्तथा ॥
श्रीभगवानुवाच ॥
आगामिनि विरिञ्चौ तु जाते सृष्ट्यर्थमुद्यते ।
कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथ" ॥ इति

शुद्धभक्तानामेव सहायो भवतीत्यस्मिन्नर्थे मोक्षधर्मे नारायणीयोपाख्याने वसुराजाश्वमेधे भीष्मादिवाक्यस्यैव प्रमाणं तथाहि—

" प्रीतस्ततोऽस्य भगवान् देवदेवस्सनातनः ।
साक्षात्तं दर्शयामास सोऽदृश्योऽन्येन केनचित् ॥

श्रीसनातनजीवगोस्वामिकृतबृहत्तोषिणी ।

रूपविकारस्य उत्पत्तिलयौ ऋषयस्त्वत्पूजनमाहात्म्यचमत्कारात् ऋषयस्ते मनोवचनाचरितं दुश्चैक्यं मनोवाक्कर्माणि त्वय्येव दधुरर्पयामासुः न च कथञ्चित् कदापि तत्र वैकल्यं स्यादित्याहुः—भुवि सर्वार्पणयोग्यस्थाने त्वयि नृणां नृभिः जीवैर्दत्तान्यपि तानि पदानि वस्तूनि व्यवसाया वा कथन मयथा व्यर्थानि भवन्ति अत एव दधुः ॥ १५ ॥

यतस्त्वमृषीणां त्रिविधक्रियाविषयः इति हेतोः ऽधिपते हे मनोवाक्कायकर्मेश्वर ! अखिलशब्दस्य लोकविशेषपरत्वे अधिकारापेक्षा निरस्ता मलविशेषणत्वे सर्वासमाशेषपापस्य पक्षान्तरे समूलदुःखस्य क्षपणमभिप्रेतम् अङ्घ्रिरूपकम् स्वरूपमात्रापेक्षया अवगाह्य सद्वेत्यर्थः । तल्लेशसम्पर्कमात्रेणैव सर्वदुःखत्यागसिद्धेः यद्वा समास्वाद्य तन्महामाधुर्येण तस्यागाशक्त्या स्वभावतद्व्याकुल्यस्यैव वा प्रवृत्तेः पुनर्वाक्यालङ्कारैः अन्यस्तैर्व्याख्यातं यतस्त्वद्भजनमेव सर्वसारमिति हेतो स्वस्वधाम्ना त्वद्भक्तिप्रभावेण विधुताशयकालगुणाः तत्रापि एवं त्वत्प्रियस्थानं श्रीमथुरामण्डलं किम्भूतम् अजस्रसुखस्यानुभवो यस्मात् तत् अखण्डसुखानुभवरूपं वा ये भजन्ते सेवन्ते तपांसि जहुरिति किं वक्तव्यमित्यर्थः । तथाहि पाद्मे——

"अहो मधुपुरी धन्या वैकुण्ठाच्च गरीयसी ।
क्षणमेकनिवासेन हरौ भक्तिः प्रजायते" ॥ इति

यद्वा स्वधाम्ना भवदीयमधुरामण्डले विधुताशयकालगुणाः जीवन्मुक्ताः ते तपांसि जहुरिति किं वक्तव्यं तथा च सौरपुराणे—

"अस्तीह मथुरानाम त्रिषु लोकेषु विश्रुता ।
पावनेन नरस्त स्यामुच्यते जन्मबन्धनात् ॥

यद्वा एवं स्वरूपं घनश्यामोज्ज्वलपूर्णानन्द श्रीविग्रहं मूर्त्तामूर्त्तयोर्भवत्स्वरूपयोर्मूर्त्तस्यैव सर्वथा श्रेष्ठत्वात् ॥ १६ ॥

दृतयो लोहकाराद्युपकरणचर्मकोषविशेषाः आदिशब्दादिन्द्रियतदधिष्ठातृदेवतादयः एषु अन्नमयादिषु यदवशेषं ब्रह्मतत्त्वम् अन्यस्तैर्व्याख्यातं तत्रोत्तरंस्यर्धवशाद्व्याख्यातं यद्वा विशुद्धवैष्णवसम्प्रदायानुसारेण व्याख्यायते भक्तिमाहात्म्यमेवाभक्तनिन्दापूर्वकं दर्शयन्ति—दृतय इति । ये दृतय इव श्वसदाभासा अपि असुभृतो जीवाः यदि तेऽनुविधाः त्वद्भक्तास्ते भवन्ति तदैव श्वसन्ति प्राणन्ति तेषामेव जीवनं जीवनमुच्यते नरत्वन्येषां समष्टिव्यष्टिजीवदेहकारणानां महदादीनामनुपादकस्यापि तथोपेक्षणाज्जीवदाभासत्वप्राप्ते इति तुल्यत्वमेव युक्तमिति भावः । न केवलं जगत्कारणमहदाद्यनुग्राहकत्वेन तथोपास्यत्वं किन्तु सर्वदा परमोपकारित्वेन तथैवासमोर्द्ध्वपरमैश्वर्यस्वभावेन चेत्याहुः—पुरुषेति । अन्नमयादिषु अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेषु पञ्चस्वात्मसु मध्ये यश्चरमः स आनन्दमयः त्वमेवासि आद्यानां त्रयाणाम् आद्यत्वं तत्राऽऽत्माध्यासेन कथम्भूतः अत्र एषु अन्नमयादिषु जीवानामुपकारार्थं अन्वयः प्राणादिचेष्टानां परमानन्दादेव त्वत्तः समुद्भव इति श्रुतिप्रसिद्धेस्तथोपकारित्वं तत्र अन्नमय आत्मा देह एव प्राणमयः पञ्चवृत्तिप्राणरूपोऽन्नमयादन्तरङ्गः यदपगमान्मृतिः स्यात् ततो जडरूपात् प्राणमनोमय आत्माऽन्तरङ्गः तस्य चित्सम्बन्धेन ज्ञानसामर्थ्यात् तस्मात् कारणरूपात् विज्ञानमय आत्मा जीवोऽन्तरङ्गः तस्य केवलत्वेन सर्वतः श्रेष्ठत्वात् पुनः कथम्भूतस्त्वं पुरुषविधः पुरुषस्यान्नमयादेः विधेव विधा शिरःपक्षादिकथनप्रकारो यस्य यद्वा पुरुषाणां चतुर्णामन्नमयादीनां विधा विधानं रचना यस्मात् तथाभूत आनन्दमयः पञ्चमः आत्मा त्वमसि तथाहि पारमर्षं सूत्रम् "आनन्दमयोऽभ्यासात्" (१-१-१३) इति सर्वथा प्रकृतिगन्धास्पृष्टः परिच्छेदातीतः परमानन्दो विवक्षितः श्रीरामानुजादिभिः सर्ववेदार्थविवेकाभिज्ञैः अस्यार्थस्यैव निरूपितत्वादत्र विरोधो नाशङ्क्यः इत्यानन्दमयआनन्दप्रचुर इति मयट् प्राचुर्यार्थत्वेपि प्रकाशप्रचुरो रविरिति त्वत् तद्विरोध्यान्तराप्रवेशात नानन्दैकस्वरूपताहानिः यद्वा ब्रह्ममोदादिरूपानन्दविशेषप्रकाशेभ्यश्चानन्दरूपप्रकाशस्यैव प्राचुर्यात्सद्भूतमेव किं वा स्वरूपार्थे मयट् स तु जीवन्मुक्तसेवकगुरुजनवयस्यप्रेयसीरूपेषु पञ्चविधेषूपासकेषु ब्रह्म मोदप्रमोदप्रियानन्दस्वरूपेण पुच्छदक्षिणपक्षोत्तरपक्षशिर आत्मतया निरूपितेन पञ्चधा प्रकाशते पूर्वेषामन्नमयादीनां चतुर्णामुक्तिस्तु शाखाचन्द्रन्यायेनोपलक्षणार्था तत्र श्रेष्ठ्यदृष्ट्या तावदार्थिकक्रमेण व्याख्यायते तथाहि द्विविधा जीवन्मुक्ताः एके भक्तिशून्याः स्वस्वरूपैकनिष्ठाः आत्मारामाः परे श्रीभगवत्कृपालब्धशान्तरतित्वादात्मारामता आत्मारामना सुखाः शान्तभक्ताः तेषु द्विविधेषु उपासकेषु प्रायः स्वाभेदेन यदास्य प्राकट्यं तादृशप्रकाश एव ब्रह्म तत्राद्येषु तावत् द्वैतेषु स्वस्वरूपानिर्विशेषं चिद्रूपमेव ब्रह्म प्रकाशते द्वितीयेषु तु चिद्घनरूपं मूर्त्तं परं ब्रह्म घनाघनत्वविशेषाविवेकेन द्वयोरभिन्नतैकयादस्य पृथक्त्वेन निर्देशः तस्य च निर्विशेषत्वेन स्वादविशेषाभावादनुत्तमाङ्गतया पुच्छत्वं पुच्छमेवेदं प्रतिष्ठामोदादीनामाधारः यद्यपि सर्वेषामानन्दमय एव प्रतिष्ठा तथापि तयोर्विशेषं सविशेषयोर्वस्तुन ऐक्याभिप्रायेण तथोक्तम् अथ अन्यनाधिकमामान्यास्त्रिविधाः उच्यन्ते तथात्मानमतिन्यूनतया जानन्तः श्रीभगवन्तं सर्वोत्कर्षे परत्वात् सर्वाधिकत्वेन जानन्त एव ये तमुपासते तेषूभयगौरवादिनम्रेषु परमाधिदैवततया स्फुरन्तं परममिष्टं उत्तरोत्तररुच्युत्पादनं प्रीतिरतेः प्रकर्षप्रमाणमनुभवत्सु तादृशचमत्कारकृदानन्दरूपत्वेन श्रीभगवतः प्रकाशविशेषो मोदः तस्य पुच्छतो वैशिष्ट्याद्दक्षिणपक्षत्वं ये लालकत्व पालत्वादिना आत्मनमधिकतया जानन्तो लाल्यत्वेनानुग्राह्यत्वादिना श्रीभगवन्तं न्यूनं जानन्त एवोपसेवन्ते ते व्रजेश्वरीप्रभृतयो गुरुजनाः तेषु पुत्रादिभावेनोपासीनेषु परमानुग्राह्यतया स्फुरन्तं वात्सल्यरतेः प्रकर्षं प्रेमविशेषमनुभवत्सु तादृशपरमानन्दरूपत्वेन श्रीभगवतः प्रकाशविशेषः प्रमोदः पूर्वतोस्य श्रेष्ठ्यादुत्तरस्य श्रेष्ठ्यार्थत्वादत एव प्रशब्दः येतु सहशयनासनक्रीडादिषु जयपराजयादिषु च निर्विशेषत्वेन श्रीभगवता तुल्यम्मन्याः स्वात्मना श्रीभगवन्तं चान्यूनाधिकं मन्यमाना उपासते ते तु श्रीदामादयो वयस्याः तेषु भयगौरवप्रायाभावादिशून्येषु परमस्वाभिन्नमैत्रीभावादिपूर्णं परमप्रणयितया प्रादुर्भवन्तं सख्यरतेः प्रकर्षप्रेमवरमनुभवत्सु तादृशभावानुसारेण परमप्रेमास्पदत्वेन श्रीभगवतः प्रकाशविशेषः प्रियशब्दरूपपरेदयः.

श्रीसनातनजीवगोस्वामीकृतबृहत्तोषिणी।

तस्य पर्वतः श्रेष्ठयाऽपिच्छरत्वं चतुर्विधा निरूपिताः पञ्चमाः उपासकजनाः निरूप्यन्ते येतु परमकान्तत्वेन कन्दर्पकोटिरम्यत्वेन स्वात्मकोटिप्रियतया च श्रीभगवन्तमुपासते ते प्रेयसीवर्गा व्रजदेवीप्रभृतयः तेषु मन्ततमसमोर्ध्वमाधुरीभरपूर्णमनुरागर्षि सदास्वादयन्तु तादृशमहाभावानुगुण्येन परमप्रेष्ठत्वेन श्रीभगवतः प्रकाशविशेषः आनन्दः तस्यामोदादिमयः श्रेष्ठदास्यत्वं एवं स्थिते तत्र प्रथमं ब्रह्मत्वमाहुः—सदिति। एषु पञ्चप्रकाशेषु मध्ये त्वं एवं सदसतः परं सत् स्थूलम् अन्नमयादित्रयं, असत् सूक्ष्मं विज्ञानमयं रूपं जीवाख्यं तयोः परं ब्रह्मासि। तथा पञ्चसु मध्ये ब्रह्मत्वे निरूपिते यत् अवशेषं अवशिष्टं मोदादिचतुष्टयं तच्च त्वमसि तत्र रश्मिस्थानीयं ब्रह्मस्वरूपममूर्त्तेः प्रकाशरूपं परब्रह्मरूपं तथा मोदादिचतुष्टयञ्च मूर्त्तं इत्येवशान्तप्रीतवत्सलप्रियोज्ज्वलानां पञ्चानां मुख्यारसानां विषयभूत एकोपि श्रीभगवानुपासकभेदेन पञ्चधोक्तः। किन्तु निरुपमपरमसान्द्रानन्दरूपत्वेनानुभवाधुक्तस्वरूपोऽयं रस एव भगवान् तथाह्यानन्दमयाधिकारे श्रुतिश्च "रसो वैसः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति प्रोक्तमेवार्थं, किञ्चिद्विशेषार्थमनुवदन् उपसंहरति ऋतमिति। श्रुत्युक्तप्रतिष्ठास्थानीयामिदं आनन्दमयत्वरूपम् ऋतं प्रतिष्ठा सर्वेषां मूर्त्तामूर्त्तानां प्रकाशानां तदेकस्वरूपत्वादिदमेवानन्दमयं तद्रूपं श्रीभगवद्गीतादिषु परमनिगूढोपदेशे इष्टसर्वोपरि प्रतिष्ठाभवत्वेन सर्वप्रतिष्ठारूपमित्यर्थः। तथाहि' सगुणान् समतीत्यैतान् ब्रह्म शून्यायकल्पते" इत्यस्यानन्तरं—

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च" ॥ इति

अस्यार्थः ब्रह्मविद्भिः स्वस्वरूपेण शान्तभक्तैस्तु ब्रह्मघनत्वेनोपास्यस्य श्रुत्या पुच्छत्वेनोक्तस्य ब्रह्मणः सर्वव्यापकस्यापि 'श्यामोज्ज्वलसर्वानन्दकदम्बमूर्त्तिरेषोऽहं प्रतिष्ठा तथा च ब्रह्मसंहितायामादिपुरुषरहस्यस्तोत्रे—

"यस्यप्रभाप्रभवतो जगदण्डकोटि—
कोटिष्वशेषवसुधादिविभूतिभिन्नम् ॥
तद्ब्रह्म निष्कलमनन्तमशेषभूतं—
गोविन्दमादिपुरुषं तमहं भजामि ॥ इति

तथा परमाभीष्टदैवतत्वेन सेवमानैः परमाराध्यस्य शाश्वतस्य धर्मस्य प्रीतभक्तितयाख्यातस्य प्रीतिभक्तिप्रकाश्यत्वात् श्रीभगवानेवोपचारेण शाश्वतधर्मरूपप्रीतिभक्तितयोक्त इत्यदोषः तस्य मोदस्य मुत् प्रकाशं विशेषस्याहं प्रतिष्ठा प्रोक्तेनामुना मोदरूपेण सेवकेष्वहं प्रतिष्ठितो भवामीति तथा गुरुजनैः प्रगाढवात्सल्यविषयत्वेनानुशीलयमानस्य अमृतस्याव्ययस्य सदैकरूपमाधुर्यसारस्वरूपस्य प्रमोदाख्य मत्प्रकाशविशेषस्याहं प्रतिष्ठा परमाचिन्त्यसर्वैश्वर्यभरपूर्णत्वज्जगदनुग्राहकाप्यहं पूज्येषु परमानुग्राह्येनैव प्रमोदरूपेण प्रतिष्ठितो भवसीत्यर्थः। पूर्वोक्तक्रमेण सेवकगणानन्तरमेषां निर्देशौचित्येपि गीतासु, शान्तभक्तान्तरनिर्देशः पूज्यत्वेनोभयेषां साम्यात् तथा परममप्रियजनैः परमप्रेयसीगणैः चानुशील्यमानस्य सुखस्यैकान्तिकस्य परमात्मात्यन्तिकसुखरूपस्य प्रियशब्दानन्दशब्दाभ्यां श्रुत्या व्यपदेशस्य सर्वोत्तममत्प्रकाशविशेषस्याहं प्रतिष्ठा परप्रेष्ठेषु परमप्रेयसीषु च सर्वोत्कृष्टतया प्रतिष्ठितो भवामीति पञ्चमस्य परमरहस्यत्वादर्जुनस्योपदेश्यत्वाच्च तदुभयमेवाविविक्ततया युगपत्सूचितं केचित्तु श्रीपुरुषोत्तमो महावैकुण्ठनाथः आनन्दपदवाच्यः तस्य चत्वारः व्यूहाः प्रियमोदप्रमोदानन्दशब्दव्यपदेश्याः तस्यामूर्त्तं स्वरूपं ब्रह्मेत्याहुः ॥ १७ ॥

वर्त्मानि ज्ञानमार्गाः आरुणयः अरुणवंश्याः 'सूक्ष्मदृशः इति भावः। अनन्त हे अपरिच्छिन्नेति धाम्नोऽप्यपरिच्छिन्नत्वमभिप्रेतम् इह अस्मिन् सदा सर्वानुभूयमानानन्दतु अमये सम्यक् एत्य योगाभ्यासादिना नितरां लब्ध्वा अन्यत्तैर्व्याख्यातं यद्वा भक्तिमाहात्म्यमेव दर्शयन्तोऽधिकारिभेदेन स्थूलसूक्ष्मोपासनयोः फलमाहुः—उदरमिति। उदरं स्थूलदृष्ट्युपास्यत्वात् स्थूलं ब्रह्माण्डान्तर्वर्त्तिविराडादिरूपं हृदयं सूक्ष्ममन्तर्यामिरूपम् अतो दहरं दुर्गं अत एव परिसरपद्धतिं स्वनिकटमार्गं यद्वा उदरं नभस्स्थलरूपं वैराजस्य नाभिविशिष्टोदरं "नभस्थलं नाभिसरो गृणन्ति" इति द्वितीयस्कन्धोक्तेः हृदयस्वर्गरूपं वैराजस्योरः स्थलम् उदरस्थलं उदरस्थलं ज्योतिरनीकमस्येति तत्रैवोक्तेः किम्भूतं परिसरपद्धतिं स्वनिकटप्रापकमित्यर्थः। उदरं गहनं ततस्तस्मादुपासना द्वयात् तव धाम सुषुम्नाख्यं कर्तृभूतं "सुषुम्नया ब्रह्मपथेन शोचिषा" इति द्वितीयस्कन्धोक्तेः आधिदैविकी सुषुम्ना ज्योतिर्मयी वर्त्तन्ते शिरः परमं कर्मभूतम् उदगात् उदसर्पत् शिरो ब्रह्मलोकः सत्यं च शीर्षाणि सहस्रशीर्षं इत्युक्तेः ततोऽपि परमं श्रेष्ठं वैकुण्ठपुरं प्रविशतीत्यर्थः। तेनोपासकाः वैकुण्ठं व्रजन्तीतिभावः। अतो यत् सुषुम्नाख्यं समेत्य नावर्त्तन्ते उपासका अथवा उदरं समुद्रं "कुक्षिस्समुद्राः" इत्युक्तेः समुद्रोपलक्षितं समुद्रशायिनमित्यर्थः। हृदयं ज्योतिरनीकं स्वर्गस्थविष्णुपदं ज्योतिषामनीकं चक्रं यत्रेति विष्णुपदाधारत्वात् ज्योतिश्चक्रस्य तेन विष्णुपदोपलक्षितं विष्णुमित्यर्थः कथम्भूतं परिसरपद्धतिं भजमानेषु स्वप्राप्त्युपायसम्पादनेनात्मोपलम्भकं स्वस्यैव साधनरूपत्वात् ततः तस्मात् आत्मशब्दवाच्याद्विष्णोः उदक् ऊर्ध्वं तव धाम वैकुण्ठाख्यं श्रीवैकुण्ठपुरविशिष्टमहानारायणमित्यर्थः। द्वयमत्राधिकारिण उपासकाः सत इति पूर्वेणान्वयः। तत्राधिकारिणामनुक्तिः सर्वोत्कृष्टत्वेन परमरहस्यत्वात् कथम्भूतं शिरः सर्वोपरितनत्वेन सर्वेषां लोकानां मुकुरूपं अतः परमं सर्वथा सर्वत उत्कृत्यं किम्वा परा सर्वोत्कृष्टं परा सर्वोत्कृष्टा या लक्ष्मीर्यस्मिन् तं यच्च स्वरूपं त्रयम् उपेत्य उपास्यतल उपासकाः पुनः संसारे न पतन्तीति ॥ १८ ॥

हेतुर्नियोजकः तत्तया अन्तर्यामित्वेनेत्यर्थः। द्रुमेति। वहिरपि वर्त्तमानत्वाच्च तारतम्येन चकास्ते हेतुः—द्रुमेति। तत्तद्योनितारतम्यानुसारादित्यर्थः। सात्त्विकेषु भगवतोऽधिकः प्रकाशः राजसेषु स्वल्पः तामसेषु स्वल्पतरः इति तत्तद्भावानुसारेण तारतम्यं व्यक्तमेव स्वशब्दद्वयेन स्वेच्छयैव लीलया प्रवेशोऽनुकृतिश्चेति जीवतो वैलक्षण्यमुक्तं वितथास्ववितथं सत्यरूपात् समं विषमासु वर्त्तमानमपि तारतम्यहीनं धामरूपं तु निश्चितं यन्ति जानन्ति अमूर्त्तेव प्राप्नुवन्ती वा एकरसं अविकारं यद्वा न केवलं प्रपञ्चाद्बहिरेव त्वं विरा·

श्रीसनातनजीवगोस्वामीकृतबृहत्तोषिणी ।

ऽसे किन्तु प्रपञ्चान्तरपीत्याहुः—स्वेति । स्वेन कृतासु विचित्रासु सात्त्विकादिभेदेन बहुविधासु योनिषु मत्स्यकूर्मवराहहंसक्षत्रदेवविप्रादिषु विशन्निव इवेत्यनधिकार्थे हेतुतया स्वातन्त्र्येण प्रविशन् तारतम्येन चकारात् सहजानन्दत्वादिषु सर्वे शक्तीनामनाविष्कारात् श्रीनृसिंहादिष्वाविष्कारात् तारतम्यं यथा अनलः कश्चिदल्पः कश्चित्स एव महत्तमः तथा यथोपयोगमेव शक्त्याविष्कारात् स्वकृतानुकृतिः स्वकृतानां मत्स्यादिजातीनाम् अनु सादृश्येन कृतिर्यस्य "पश्चात् सादृश्ययोरनु" इत्यमरः । तत्तज्जात्यनुरूपक्रिय इत्यर्थः । ननु यदि तत्तज्जातीयनिर्विशेषः स्यान्न तत्तद्रूपोऽहमिति कथं ध्यायेत तत्राह—अवेति । प्रवेशानन्तरमेव अमूषु वितथासु अनित्यासु जातिषु वर्त्तमानं तव धाम श्रीमूर्त्तिं कथम्भूतम् ? अवितथं तत्तज्जातिप्रादुर्भावेनापि तत्समवन्तत्त्वेनैव सत्यं विशुद्धबुद्धयो जानन्ति तत्र हेतुः समं सशोभम् एकरसं अभ्रक्रीडं चेति यथोक्तं यमलाभ्याम्—

"यस्यावताराः ज्ञायन्ते शरीरिष्वशरीरिणः ।
तैस्तैरतुल्यातिशयैर्वीर्यैर्देहिष्वसङ्गतैः ॥ इति

अविपन्यवः सर्वथा विगतव्यवहाराः परमार्थदर्शिनो भक्ताः इति यावत् इदं ज्ञाने हेतुः ॥ १९ ॥

पुरेषु स्थिरचरदेहेषु वर्त्तमानत्वात् पुरुषं तदंशकृतं तवाचिन्त्यशक्तेरंशेन सामान्यचिच्छक्तिवृत्तिविशेषेण कृतं विशिष्टं विदन्तु जीवं वदन्तीत्यर्थः । अतो न विद्यते बहिः क्रियाशक्तौ अन्तश्च ज्ञानशक्तावसञ्चरणं परिच्छेदाभावो यस्य तं परिच्छिन्नक्रियाज्ञानशक्तिकमित्यर्थः । तथा च महावराहे ——

"स्वांशश्चाथो विभिन्नांश इति द्वेधांश इष्यते ।
अंशिनो यत्तु सामर्थ्यं यत् स्वरूपं यथा स्थितिः ॥
तदेव नाणुमात्रोऽपि भेदः स्वांशांशिनोः क्वचित् ।
विभिन्नांशोऽल्पशक्तिः स्यात् किञ्चित्सामर्थ्यमात्रयुक् ॥ इति

तत्र स्वांशोऽवतारः विभिन्नांशो जीव इति अखिलाः सृष्ट्यादिशक्तीर्धरतीति तथा तस्येति जीवेभ्यः अत्यन्तवैलक्षण्यं इत्येवं नृगतिं भिन्नाभिन्नं जीवतत्त्वं कवयो विवेकिनः निगमावपनं सर्वकर्मार्पणपूर्वकमित्यर्थः । भुवि वर्त्तमानमिति श्रीवृन्दावनविहारि श्रीकृष्णपदाब्जाभिप्रायेण यद्वा स्वयमाविष्कृतेषु पुरेषु श्वेतद्वीपमहाकालादिषु सन्तं पुरुषं श्रीनारायणादिरूपं तदंशकृतं स्वाचिन्त्यशक्त्याविर्भावितं तवावतारविशेषमित्यर्थः । इति सर्वत्र प्राकट्याद्धेतोः कवयो भवतोऽङ्घ्रिं नृगतिं नृणां गम्यं विचार्य यद्वा स्वकृतेषु पुरेषु वैकुण्ठविशेषेषु समष्टिव्यष्टिदेहेषु च स्थितं पुरुषम्——

एकन्तु महतः स्रष्टृ द्वितीयन्त्वण्डसंस्थितम् ।
तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते ॥

इत्युक्तं पुरुषत्रयं तदंशकृतम् अंशेन चिच्छक्त्या प्रकटितं वदन्ति शास्त्रज्ञाः अखिलाः शक्तीर्या या लीला संविदाद्या धरतीति तस्य कथम्भूतं पुरुषत्रयम् ? अबहिरन्तरसञ्चरणं श्रीविग्रहज्ञानयोरपरिच्छिन्नं इति हेतोः नृषु जीवेष्वपि तव गतिम् अन्तर्यामितया प्राप्तिं विविच्य शास्त्रानुभवाभ्यां निश्चित्य विश्वसितास्सन्तः कवयो विवेकिनः भुवि हृदयस्थाने भवतोऽङ्घ्रिं सेवन्ते कथम्भूतम् ? निगमत्वपनं सर्ववेदानामाश्रयवत्तमं पुनः कथम्भूतम् ? अभवं संसारध्वंसकम् ॥ २० ॥

अभवमित्युक्तं तर्हि किं मोक्षार्थमुपास्यते? नेत्याहुः—दुरवगमेति । अचिन्त्यं यत् आत्मनस्तवं तत्त्वं तस्य एकस्याप्यनेकत्वं निर्विशेषस्यापि चमत्कारि बहुविशेषवत्त्वं चतुर्भुजादिमूर्त्तेरप्यपरिच्छिन्नत्वं चेत्यादिलक्षणं किम्वा सच्चिदानन्दघनमधुरमधुररूपगुणलीलादिमत्त्वं तस्य निगमाय अवबोधनाय आत्ततनोरिति श्रीकृष्णस्य प्राकट्याभिप्रायेण एतस्यैव मधुरमधुरानन्ताश्चर्यलीलत्वेन चरित्रस्य महामृताब्धित्वं चरितेत्यानुषङ्गिकत्वेन संसारभ्रमणे श्रमध्वंसः सूचित एव । अपिशब्दश्चतुर्वर्गेषु तस्य श्रेष्ठ्यात् तथापि परिहासेऽपि न लपन्ति दुःखाभावमात्रत्वेन तुच्छसुखत्वात् भक्तिरसविघातकत्वात्त्वाच्च हे ईश्वरेति त्वद्भक्तिप्रभावेणैव तेषां तादृशत्वमिति भावः । अन्यैर्व्याख्यातं यद्वा चरितमहामृताब्धि [illegible]मेव तच्चरणसरोजहंसकुलसङ्गविसृष्टगृहा इति । तदेकरसत्वमुक्तं चरणसरोजहंसा एकान्तिनो भगवत्प्रियाः तत्सङ्ग एव मोक्षतुच्छतापादकः यत उक्तं" तुलयाम लवेनापि न स्वर्गं नापुनर्भवं भगवत्सङ्गिसङ्गस्य" इति ॥ २१ ॥

श्रीभगवत्पादाब्जरतिरेव परमात्यन्तिकपुरुषार्थ इत्यभावेन रतिमुपदिशन्ति—त्वयीति । कुलायमिति नश्वरत्वं सूचितम् इदं मानुष्यं तस्यैव बहुपार्थिवत्वेन प्रायः कौ लयात् यद्वा इदं मानुष्यं तस्यैव बहुपार्थिवत्वेन प्रायः कौ लयात् यद्वा इदं प्रत्यक्षमेवात्मादिवज्जरन्ति तत्रात्मेति प्रायस्तस्मिन् लोकानाम् आत्मत्वाध्यासात् सुहृत्तमत्वातिशयात् किं वा आत्मनः सुहृदिति जन्मसम्बन्धात् हिताचरणाद्वा प्रियमिति पुत्रादिभ्योऽप्यधिकस्नेहविषयत्वात् निजेच्छाकारित्वाद्वा यतिप्रत्ययस्तत्त्वविचारेण तादृशत्वाभावात् नथा तथापि किं वा तथा तेऽप्यनिर्वचनीयप्रकारेण अस्य सर्वैरप्यन्वयः उन्मुखे अभिमुखे सहजनित्यकृपार्णवत्वात् हिते निरुपाधिबन्धौ प्रिये प्रीतिविषये प्रीतिकारिणि वा आत्मनि परमात्मनि अंशित्वेनात्मनोऽप्यत्यन्तप्रिये किंवा चेतयितरि सत्कर्मसु प्रवर्त्तके गुरावित्यर्थः एवमुभयथा रतेः साधनस्य च महायोग्यतोक्ता तथापि न रमन्ते तत्र हेतुः असदुपासनयाऽऽत्महनः इति । अथवा कुत्सितो लापः भस्मादिरूपत्वेन विनाशो यस्य तदिदं देहं त्वदपथं त्वद्भक्तिमार्गानुवर्त्तिचेद्भवति तर्हि चात्मसुहृदादिवदाचरति किञ्च त्वमप्यनुमुखादिः स्याः तथापि त्वयि श्रवणकीर्त्तनादिना न रमन्त इत्यर्थः ॥ २२ ॥

एवं तव विमुखानां संसारक्रमणमुक्त्वा तदुपासकानां तत्प्राप्तिमाहुः—निभृतेति । मुनयो मननशीलाः यन्महदुपासते यदुच्च तदरयोऽपि द्वेषेण स्मृतिमात्रतो ययुः किञ्च स्त्रियो वयं किम्वा मथुरापुरस्त्रियः तत्र उरगेति सौन्दर्यातिशयानुभावेनासक्तधीत्वात् भावविशेष उक्तः तथा समदृशः अन्तर्यामित्वेन समदृष्ट्याभक्ताः यद्वा समं सलक्ष्मीकं हरिं पश्यन्तः सालोक्यभाज इत्यर्थः । तथा अङ्घ्रिसरोजसुधाः विशुद्धभक्तिनिष्ठाः किंवा सेवादिनादिना साक्षात् सेवमाना अपि तव समाः तुल्याः एतेषां सर्वेषां प्राप्यस्यैक्यात् तत्र यद्यपि द्वेषिणां भक्तानां च प्राप्यस्यैक्यं न स्यात् तथापि ब्रह्मस्वरूपस्य श्रीभगवत्स्वरूपस्य च भेदविवक्षया तथोक्तं यद्वा पूर्वमुक्ता द्विविधा

श्रीसनातनजीवगोस्वामिकृतवृहत्तोषिणी ।

भक्तिशून्यत्वात्तथैव ? ययुः श्रीप्रभूनयस्तु तव समाः प्रियातया तुल्यास्त्वयि भावशालित्वात् ॥ २३ ॥

इत्थं श्रीभगवच्छ्रवणकीर्त्तनस्मरणमाहात्म्यमद्भुतमुक्तं तथापि ज्ञानं केनचिन्मन्यन्ते तच्चायुक्तमित्याहुः—क इति । नु वितर्के सर्वैर्भक्तैर्न कोपि वेदेत्यर्थः । तत्र हेतुः—अवरेति । अन्यानपेक्ष्यस्यापि लघ्वस्योक्तिः चिरजीवे सत्यपि तदसम्भवापेक्ष्या अवरो ब्रह्माद्यपेक्षया निकृष्टो जन्मयो यस्येति किञ्च अग्रेसरं त्वत एव पूर्वतो वर्त्तमानं किंवा इन्द्रियाणामग्रेसरं तदगोचरमित्यर्थः । यद्वा ऋषिः परमेष्ठी देवगणा इन्द्रादयः उभये च प्रवर्त्तिनिवृत्तिपराः मुनयः इति दिने सृष्ट्यादिव्यापारेण ज्ञानालिङ्गिः सूचिता रात्रौ शयानस्य तस्य नैश्चिन्त्येनापि न सिद्ध्यादित्याह—यदा तु श्रीनारायणनाभिपद्मे स ऋषिः शयीत तत्र तस्मिन् ज्ञाने तन्निमित्तं न महादि सत् स्थूलं पञ्चादिकमे "असत् सूक्ष्मे ध्यानादि उभयं सदसन्मिश्रितम् उपासनादि कालजवः नित्यं दिनराड्यादिपरिवर्त्तः शास्त्रं वेदागमादि तस्य प्रवृत्तिः त्रिलोक्यां नास्तीत्यर्थः । तस्यालयात् अनलोकदौ त्वस्त्येव यद्वा ऋषिः पुरुषः यत्र तत्र एव महदादीनां जन्म तथा तेभ्यो ब्रह्माण्डे उत्पन्ने तत्रान्तर्यामित्वा प्रविष्टस्य जलशायिनो भगवतः श्रीनारायणस्य नाभिकमलात् ब्रह्मणो* जन्म अत उभय इति कारणरूपा महदादयः कार्यरूपाश्च ब्रह्मादयः इति सर्वेषामर्वाचीनत्वं स्यादेव कालवाचिनोस्तर्हियदाशब्दयोः प्रयोगात् कालोऽस्त्येव तस्य तु जवो नास्ति शास्त्रं च वेदोऽस्त्येव श्रीभगवन्निश्वासमहत्त्वरूपत्वात्तस्मै किन्तु बहिर्न प्रवर्त्तनीति नास्तीत्युक्तम् महोपनिषदश्च बहिरपि सन्त्येव तदा ताभिरवाख्याः स्तुतेः क्रियमाणत्वात् अपकृष्य निखिलब्रह्माण्डमण्डलमेव संहृत्य तथा च विष्णुधर्मोत्तरे

अनन्तानि तथोक्तानि यान्यण्डानि मया पुरा ।
सर्वाणि तानि संहृत्य समकालं जगत्पतिः ॥
प्रकृतौ तिष्ठति तदा सा रात्रिस्तस्य कीर्त्तिता" ॥ इति

प्रकृतौ स्वरूपे शेषं समानम् ॥ २४ ॥

आत्मनि भिदां ब्रह्मतो ऽत्यन्तभिन्नत्वं यद्वा बहुविधं भेदं अभ्यस्तैरर्थाख्यातम असतः अनित्यस्य धनपुत्रादेः स्मरन्ति चिन्तयन्ति "ईहन्ते दानभोगार्थमन्यायेनार्थसञ्चयान्" इति श्रीगीतोक्तेः किम्वा दुष्टस्य स्वस्य दुष्टत्वादात्मानुरूपस्यैव पुत्रादेर्वाञ्छितनात् दुष्टं सतः साधुजनस्य स्वदोषेणैव साधुजनं विपक्षीकृत्य तस्य मृतिं मरणोपायं चिन्तयन्तीत्यर्थः । उत अपि आत्मन्यपि भिदां भिन्नत्वम् अन्यतो वैलक्षण्यम्—

"इदमद्य मया लब्धमिदं लप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥
असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्ये" ॥

इत्यादि गीताद्युक्तानुसारि दुर्मदत्वमित्यर्थः । विपणं व्यवहारं पुत्रदारधनाद्युपभोगसुखं ऋतं सत्यं ध्यायन्ति ये दुर्मतयः ते आकल्पितैः मनासि मिथ्यैवाध्यस्तैर्दुरभिमानिरेव कथयन्तीत्यर्थः ।

यतः पुमान् सर्वजीवः त्रिगुणमयः अतस्त्रेधासुरस्वभावाः निजराजसतामसादिस्वभावानुरूपं तत्तत् सदस्त्युपदिशन्ति चेति भावः । यद्वा त्रयो गुणाः सम्पत्पौरुषगर्वविद्याः यथोक्तमर्थशास्त्रे—

"सम्पदात्मोपभोगाय शत्रुनाशाय पौरुषम् ।
गोष्ठीजयाय विद्येति सङ्ख्याः पुंसां गुणास्त्रयः" ॥ इति

एतत्त्रिगुणमयः त्रिप्रचुरः पुमान् भवेदिति चोपदिशन्ति इति ईदृशी भिदा मतिभेदः यस्य तथायोधेन त्वद्विषयकज्ञानेन कृता तस्मिंस्त्वयि विषये सः भिदायाः सतां उपदेष्टा च पुमान् न भवेत् त्वादृग्ज्ञानवानपि न स्यादित्यर्थः । किन्तु घोरसंसारमेव प्राप्नुयादिति पूर्वं बहुवचनान्ततया निर्दिष्टस्यापि यत्तच्छब्दस्य पुनः स इत्येनैकवचनान्तेन परामर्शात्तेषां मिथ्योपदिश्यतां मध्ये कश्चिदेकोपि त्वदुन्मुखो न स्यादित्येतद्द्योतनार्थः । यद्वा स परमाज्ञानमयो दुर्व्यवसायस्त्वयि त्वद्विषयेनैव भवेत् त्वद्वर्त्मदिशमपि नस्पृशेत् किन्तु महानरकायैव कल्पत इति भावः कुतः ततस्तस्मात्तेषु सः परत्र दूरतो वर्तमाने तत्र कुतः अवबोधरसे ज्ञानघनत्वं तव ज्ञानेनापि दुर्लभत्वम् अतस्तथा भेदादिना अत्यधोगतिरेव ॥ २५ ॥

अहो भगवन् ! ईदृशोऽपि विदृशभेदोपदेष्टा पुमान् यदि कदाचित् केनापि दुस्तर्कभाग्योदयेन त्वदाश्रितः स्यात् तर्हि सोऽपि साधुर्भवेदित्याशयेनाहुः—सदिति । इयति लोकोक्तिरीत्या ऽनधिकारार्थं आमनुजात् मनुजः मनुष्यः तमभिव्याप्य तिर्यक्पर्यन्तं जीवजातं कथम्भूतं मतात्त्रिभूतं त्रिगुणात्मकं मत इत्यर्थः । तथाभूतमपि तथा असदपि त्वद्विषयकं यथा कथञ्चिद्भजनपरं चेत् स्यात् तर्हि सत् साधु स्वरूपं विशेषेण ज्ञानादिकृतशुद्धितोऽप्याधिक्येन भाति अत आत्मविदः "आनन्दस्याप्यमात्मन्यादात्माहि परमो हरिः" इति आत्मानं त्वां सत्यतया विदन्तीति त्वद्भक्ता इदं त्वद्भजनपरम अशेषं जीवजातं आत्मतया आत्मनोऽपृथक्तया सर्वाभिमृशन्ति साध्वेव जानन्ति अत एव जनाः कतकस्य विकृतामिव तत्तं न त्यजन्ति अपि तु स्वीकुर्वन्ति तदात्मतया तस्मिन् त्वयि आत्मा मनो यस्य तत् तदात्मकस्य भावस्तदात्मता तया तद्गतमनस्तया हेतुना गृह्णन्ति च भवता च इदं त्वद्भजनपरं स्वकृतं स्वस्य तव कृतं चरितं अनुप्रविष्टं आत्मतया प्रियतया अन्वितं निश्चितं यद्वा आमनुजात् मनुजादेस्तिर्यक्पर्यन्तस्य मतः प्रायस्त्रिभूम तापत्रयावर्त्तिनमपि असत् सर्वत्रापास्पदमपि यदि कथञ्चिद्भक्तकारुण्यादिना त्वयि त्वद्विषय स्यात् सत् किञ्चित्स्वत् सम्बन्धगन्धं भवेदित्यर्थः । तर्हि सद्यः सदेव स्यात् तदनन्तरं सदेव स्यादित्यर्थः । एवमसतोऽपि साधुत्वं स्यात् तर्हि त्वदीयेषु सत्यन्यपदार्थानां नैर्गुण्यपर्यवसायित्वे किञ्चिन्नमित्याद्यः सादिति ये तु आत्मविदः त्वद्विषयः यथा पाद्मे—

"चेतनस्तु द्विधा प्रोक्तः जीव आत्मेति च प्रभो ।
जीवा ब्रह्मादयः प्रोक्ता आत्मैकस्तु जनार्दनः ।
इतरेष्वात्मशब्दस्तु सोपचारोऽभिधीयते" ॥ इति

ते इदं त्वत्सम्बन्धिः प्रमेयजातं अशेषमेव सदभिमृशन्ति

* जनिः ।

श्रीसनातनजीवगोस्वामिकृतबृहत्तोषिणी।

आत्मतया व्यापकतादात्म्यापन्नतया सदैवानुभवन्तीत्यर्थः। श्रीमदेकादशस्कन्धे पञ्चविंशाध्याये ज्ञानं मन्निष्ठं निर्गुणं स्मृतं तथा मन्निकेतन्तु निर्गुणं तथा निर्गुणो मदपाश्रयः इत्यादिना सर्वेषां स्वसम्बन्धिनां श्रीभगवता नैर्गुण्यस्यापादितत्वात यत् प्राकृतस्यापि स्पर्शमणेः स्पर्शमात्रादेव लोहमपि सुवर्णी भवति किमुताप्राकृताचिन्त्यानन्तशक्तेः श्रीभगवतः सम्बन्धेनेति एतदेवाह—नहि विकृतिमिति। तदेवावधारणार्थमनुवदति-स्वकृतेनेति। स्वैर्भक्तैः कृतं स्वभक्तसम्बन्धीत्यर्थः। आत्मतया श्रीभगवत्तादात्म्यापन्नतया अनुप्रविष्टमित्यर्थाशिष्टमित्यवन्मितं यद्वा आत्मविदस्त्वद्भक्ताः इदं विश्वं अशेषमेव सत्यमनुभवन्ति सर्वस्यैव प्रपञ्चस्य सदसद्रूपत्वात त्वद्भक्त्या अस्यासद्रूपत्वं विलीने सत्यरूपतामेवानुभवन्ति अतः सत्यतानुभवेनैव तानिमानि गन्धपुष्पधूपदीपस्रक्चन्दनादीनि वस्तूनि प्रभवे निजाभीष्टदेवताय तुभ्यं समर्पयन्तीति इदमेव दृढयन्ति—नहीति। भवनापि भक्तकृतं आत्मतया प्रियतयाऽनुप्रविष्टं सुष्ठु स्वीकृतमिति अस्माभिर्निश्चितम् ॥ २६ ॥

अखिलसत्त्वनिकेततया प्राप्ततया सकलसत्त्वगुणनियामकतया पुरुषावतारो यः क्षितिकर्त्ता विष्णुस्तत्तयेत्यर्थः। परिचरन्ति भजन्ति उत अपि तेपि आक्रमन्ति किं पुनर्वृन्दावनादिविहारिश्रीकृष्णरूपत्वेन ये परिचरन्ति ते मृत्युमाक्रामन्तीति तत्राविगणय्यैति तस्यानायास सिद्धत्वेनानुपङ्क्तिकत्वमभिप्रेतं तान् कर्मण्येव पुरुषार्थबुद्ध्या स्वयग्रभक्तान् गिरा विधिनिषेधलक्षणया वाकृतन्त्या पविधयसे विबुधानपि सुबुद्धीनपि अनेन भक्तानां विधिनिषेधाधीनत्वं निरस्तं यद्वा त्वयि कृतसौहृदास्तु पुनन्ति येतु विमुखास्ते न पुनन्ति यतस्तान् पविधयस इति योग्यं अतस्ते मुहुः संसारदुःखं लभन्त इति भावः। अथवा पशूनिव पशुवदबुधान् मूर्खान् गिरा परिवयसे कर्मजडानित्यर्थः। तानपि त्वयि कृतसौहृदाः पुनन्ति ॥ २७ ॥

अकारणः प्राकृतजीवेन्द्रियसम्बन्धरहितः प्राकृताप्राकृतयोर्योगासम्भवात् तथाप्यखिलकारकशक्तिधरः कुतः स्वराट् स्वशक्तिविशेषेण स्वयं राजत इति तथा सः सम्बन्धाभावेपि त्वच्छक्तिप्रभावेणैव सर्वजीवेन्द्रियशक्तिप्रवृत्तेरित्यर्थः। अन्यत्तैर्व्याख्यातं यद्वा करणं कर्म घटादिनिर्माणे कुलालादेरिव व्यापारः तद्रहित एवात्राखिलानां कारकाणां सृष्टिहेतूनां महदादीनां शक्तिधरः सृष्ट्यादिसामर्थ्यप्रवर्त्तकः इच्छामात्रेणैव तत् सिद्धेः यतः स्वराट् अन्यनैरपेक्ष्येण स्वशक्त्या स्वयमेव राजसीत्यर्थः। इति सर्वे जीवाः त्वदधीना एवेति भावः। यद्वा जीववदिन्द्रियवदिन्द्रियरहितः चिदानन्दघनविग्रहत्वात् श्रीभगवति देहदेहिविभागवदिन्द्रियेन्द्रियविभागोपि नास्तीत्यर्थः। अपाणिपाद इत्यादि श्रुतेः अखिलानां ब्रह्मादीनां यानि कारणानि तेभ्योपि शक्तिदर्शनश्रवणादिसामर्थ्योत्कर्षं धरतीति कारणानामपृथक्त्वेपि सर्वातिशायिकरणसामर्थ्योत्कर्ष इत्यर्थः। अत एव स्वराट् केचित्तु वैष्णवास्तस्य देहेन्द्रियादेः पार्थक्यं मन्यन्ते बह्युद्वहनादेव सम्यक् सुखमदन्ति भुञ्जन्ति अनिमिषाः श्रीब्रह्मरुद्रादयो देवाः न च बल्युद्वहनेन शमदमेन च वर्षभुजामिव सम्राजश्चक्राशाभिर्भयतया क्षणमपि स्वातन्त्र्यसुखमित्याहुः—विश्वसृजः श्री ब्रह्मादयः चकिता इत्यनेन सदा सशङ्कत्वमुक्तम् ॥ २८ ॥

हे विमुक्तेति नित्यमायाकार्यसङ्गराहित्यं तत्र च विशब्देन मुक्तजीवेभ्योपि वैलक्षण्यं सूचितं सत्यनित्यसर्वैश्वर्यवत् विमुक्तत्वमवाभिव्यञ्जयति—परस्येति। हि निश्चितं स्थिरचरजातयः स्थिराः स्थावराः चरा जङ्गमाः जातयो भाविन्यो येषां ते परमेश्वरात् जीववृन्दानां प्रादुर्भावो महदादीनां च सर्गः स्यात् विरिञ्चेस्तु स्थिरचराणां विसर्ग इति तत एव तैर्व्याख्यातं जीवा भवेयुरिति ननु विहारोपि किमर्थं तत्राहुः विमुक्तेति। हे परमस्वातन्त्र्येति तत्रैव हेतुः परस्य परमेश्वरस्येति अनस्तवाभिप्रायः केन ज्ञातुं शक्यतमित्यर्थः। अन्यत्तैर्व्याख्यातम् यद्वा यदि स्थिरचरजातयो विविधा जीवाः तवोदीक्षया इच्छया भवेयुः। ततोऽजया तव विहारः स्यात् विचित्रविहारार्थमेव तव विसर्ग इत्यर्थः ननु तर्हि किमह मायाकार्येवासक्तत्वादित्यत आहुः—परस्येति। मायासङ्गरहितस्य यतो विमुक्त हे नित्यमुक्त ननु यदि नित्यमुक्त एवाहं तर्हि कथं देवासुरादिषु मैत्रीवैरादिकं मम दृश्यते इत्यत आहुः नहीति। कुत्रापि तवानुग्रहनिग्रहादिकं न स्यात् तवाश्रयत्वाज्ञैः केवलं जयपराजयाश्रयो दुःखिनः ततः कथं तथा भूता जीवाः मया सृजेरन्नित्यत आहुः—उत्थनिमित्तेति। स्थिरचरयोर्निमित्तानि कर्माणि तेषु सन्त्येव तानि तवेच्छया केवलमुत्तिष्ठन्ति ननु तेषां तान्यनादीनि दुष्कर्माण्यपनीय कथं ते सुखिन एव क्रियेरन् इत्यत आहुः—नहीति। परमस्य अविषमस्य कश्चिदुपकार्यः कश्चिदपकार्यश्च न स्यात् कथम्भूतस्य अपदस्य तैस्तैर्जीवैरकृतप्रतिपत्तेः अतस्तेषु वियत इव शून्यतुलां दधतः कदाचिदपि तत्कृतिपथमप्यनारोहत इत्यर्थः अयमर्थः भक्तेतरेषु सामान्यजीवेषु कर्मानुसारेण फलंप्रयच्छतस्तव साम्यमेव भक्तेषु तु प्रारब्धमपि क्षपयतो वैषम्यमपि साम्याशिरसि विराजमानत्वात् शोभैव ॥ २९ ॥

न तु प्रोक्तानां जीवानां किं स्वरूपमित्यपेक्षायां प्रथमं परमतव्याक्षेपेण तेषां स्वरूपमाहुः—अपरिमिता इति। असङ्ख्याः प्रति प्रतिमहाकल्पं कोटिशो मुच्यमानेषु अपि जीवेषु अनादिना कालेनापि तेषां बाहुल्याभावस्यादर्शनात ध्रुवाः वैष्णवानां मते नित्य एव स्युः अस्या तेषामविद्योपाधिषु लिङ्गदेहादिषु लीनेषु विशुद्धचिद्देहाविर्भावात् किन्तु अनन्ता ध्रुवाश्च यदि सर्वगता व्यापकाः स्युः ततस्त्वया साम्याच्छास्यता न स्यात् इतरथा उक्तास व्यापकत्वादेरन्यप्रकारेण तमेवाहुः—अजनीति। यन्मयं यद्वा ह्निमयं विस्फुलिङ्गादिकं अजनि तद्वह्निरूपं अविमुच्य स्वीयतया स्वीकृत्य तस्य विस्फुलिङ्गादेर्नियामकं भवेत् यस्यावृत्तिविशेषस्तत्प्रसादेन पारिषदगणे अन्तिमातु कालप्रधानजीवादिषु वर्त्तते इत्यतः सामान्यचिच्छक्तिवृत्तिविशिष्टाः वह्नेर्विस्फुलिङ्गा इव महाप्रलयस्यान्ते परमात्मलक्षणमहाचैतन्यरूपाद्वासुदेवाच्चिद्रूपा अनाद्यविद्याभाजो जीवा अपि व्यक्तिं यान्तीति श्रीभगवन्नियम्या एवामी ननु श्री विष्णुधर्मोत्तरे—

श्रीसनातनजीवगोस्वामिकृतबृहत्तोषिणी।

"कल्पानां जनसाम्येहि मुक्तिर्नैवोपपद्यते।
कदाचिदपि धर्मज्ञ तत्र पृच्छामि कारणम्॥
एकैकस्मिन्नरे मुक्तिं कल्पे कल्पे गते द्विज।
अभविष्यज्जगच्छून्यं कालस्यादेरभावतः"॥

इति श्रीवज्रेण पृष्टो मार्कण्डेयः प्राह ——

"जीवस्यानन्त्य सर्गेण नरे मुक्तिमुपागते।
अचिन्त्यशक्तिर्भगवान् जगत्पूरयते सदा॥
ब्रह्मणासह मुच्यन्ते ब्रह्मलोकमुपागताः।
सृज्यन्ते च महाकल्पे तद्विधाश्चापरं जनाः॥
सर्वे जीवप्रमाणाः स्युः सर्वे कल्पास्तथा नृप।

इति जीवानां सर्गश्रवणात कथं तेऽनादयः उच्यते सत्यं कूटीभूतकर्मकदम्बा अप्यनुपस्थित कर्मभोगत्वात् भगवन्माया-शक्तिविशेषगह्वर एवानन्ताः खलु * जवानां गणा लीना वर्त्तन्ते तेषां मध्ये केषाञ्चित्तत्र तत्र कल्पप्रादुर्भावनमेव सर्गः नतु नूतनजीवसृष्टिरिति सर्ववादिनां सम्मतम् वैष्णवसिद्धान्ते तेच अणव एव आराग्रमात्रत्वेन श्रुत्या प्रतिपादनात् तथा "सूक्ष्माणामप्यहं जीवः" इति श्रीभगवद्वचनात्—

"वालाग्रशतशो भागः कल्पितो यः सहस्रधा।
तस्यापि शतशो भागो जीव इत्यभिधीयते॥

इति श्रीविष्णुधर्मोत्तरवचनाच्च तेषामणुत्वेपि देहव्यापिचैतन्यं सम्भवेदेव यथा गृहैकदेशस्थोपि दीपः सर्वं गृहं तेजसा व्याप्नोति तथायमणुरपि चेतनालक्षणेन स्वप्रभावविशेषेण सर्वं देहं चेतयति यथा अयस्कान्तः स्वसन्निहितं लोहं चालयतीति तथा च ब्रह्माण्डपुराणे—

"अणुमात्रोप्ययं जीवः स्वदेहं व्याप्य तिष्ठति।
यथा व्याप्य शरीराणि हरिचन्दनविप्रुषः"॥ इति

किन्तु यद्यपि सामान्यतः सर्वजीवानां स्वरूपमिदमुक्तम् तथापि भक्तिप्रभावेणाविभूतालौकिकशक्तीनां भगवत्प्रियाणां स्वरूपं सर्वतो विलक्षणमेव तेहि भक्तैकप्रियतयैव श्रीभगवन्तमनुभवन्ति तदितरेतु सर्वत्र समतयैवेति निन्दति—सममिति। प्रियेषु प्रियेतरेषु च श्रीभगवन्तं सममनुजानतां यद्वा जीवानां नियम्यत्वात्तैस्त्वां सममनुजानतां मतम्., ज्ञानस्य दुष्टतया तत् अमतम् अज्ञानमेवेत्यर्थः। यद्वा ननु, भवन्तु ते जीवाः तस्य नियम्याः रुद्रादयस्तु तत्समा एवेत्यत आहुः—सममिति। रुद्रादीनापि त्वां समं तुल्यमिति॥ ३०॥

ननु स्थिरचरजातय इत्यादिना शक्तिसम्बन्धान्मत्तो जीवानां जन्मोक्तम् तत्र किं मत्प्रकृतेरंशस्य जीवरूपेण जन्म मदवतारस्य पुरुषस्य वेत्याशङ्क्य निराकरोति—न घटत इति। तत्र हेतुः अजयोरिति। ननु ततः कथमेते स्युरित्यपेक्षाया आहुः—उभयेति। उभयस्य प्रकृतिपुरुषयोर्द्वयस्य युजा योगेन योगस्तावत् प्रकृतौ पुरुषस्येक्षारूपस्तेन चिद्रूपाः जीवाः प्रादुर्भवन्ति तयोर्योगस्य स्वाभाविकप्रभावादुदयन्त इत्यर्थः। यद्वा उभयं प्रकृतिपुरुषरूपं युनक्ति नियोजयति इति उभययुक् सामान्यचिच्छक्तिः तथा च श्रीविष्णुपुराणे—

"प्रधानञ्च पुमांश्चैव सर्वभूतात्मभूतया।
विष्णुशक्त्या महाबुद्धे वृत्तौ संश्रयधर्मिणा"॥

यद्वा उभयस्य जीवाभिन्नाभिन्नत्वस्य युक् योगः समाधानं यया सा उभययुक् सामान्यचिच्छक्तिः तया तु भवन्त्येव अतस्ते त्वदीयशक्तिविलसितत्वात् त्वत्तो भिन्नाभिन्नाश्चेति भावः। चिच्छक्तिविशिष्टचित्कणत्वात् जीवस्य तत्रानुरूपो दृष्टान्तः जलेति। यथा बुद्बुदा वायुविशिष्टत्वात् जलाद्भिन्ना एव जलरूपत्वादभिन्नाश्चेति तदुपलक्षणं यथा सूर्यतत्किरणकणादयश्चेति अतस्ततो नात्यन्तभिन्नत्वात् त्वयि लयावशेषं प्राप्नुयुरित्याहुः—त्वयीति। परमे परमकारणे सरितामर्णवे लयेनात्यन्तभेदाभावमाशङ्क्य दृष्टान्तान्तरमाहुः-मधुनीति। मोक्षेण तेषां भगवति लये सत्यपि पृथक् सत्ता भात्येव अतो लिङ्गदेहादिसर्वोपाधिक्षयात् मुक्त्या लीनानामपि श्रीभगवदिच्छया पुनः कल्याणदेहभाक्त्वं सिद्ध्येत् तच्च ब्रह्माण्डपुराणादौ श्रीभगवति लीनस्यापि श्रीप्रह्लादस्य तादृशत्वोक्त्या व्यक्तमेव यद्वा ननु लक्ष्मीसहितस्य मम तत्रतत्र जन्मना जीवैः साम्यं किं न स्यात्? तत्राहु" नेति। प्रकृतिपुरुषयोर्लक्ष्मीनारायणयोरुद्भवः जीववदुत्पत्तिर्न घटत एव यतः अजयोः जीववन्न जायेथे किन्तु लीलया स्वयमेव प्रादुर्भवथ इत्यर्थः। असुभृतो जीवा एव उभययुजा मातापितृयोगेन भवन्ति उत्पद्यन्ते बुद्बुदा यथा वायुजलयोगेन युवयोः प्रादुर्भावोप्येषां संसारध्वंसायैवेत्याहुः— त्वयीति। युवयोर्विविधैर्नामभिर्गुणैश्च नाम्नां गुणैरनुशीलनैरितिवा अशेषरसाः अशेषा रसा येषु तथाभूताः सन्तः त्वयि मधुनि महामधुररसरूपे निलिल्युः इत्यतीतनिर्देशस्तन्निर्द्धारविवक्षया ध्रुवमत्यन्तसंयोगं प्राप्नुवन्तीत्यर्थः। शेषं समानम्॥ ३१॥

अहो भगवन्! तैः कुतोऽयं मोक्षस्वीकारोपि सुधीभ्यस्त्वद्भक्तेभ्यो न रोचत इत्याहुः—नृष्विति। अमीषु मुक्तेषु नृषु तव मायया भ्रमस्त्वद्भक्तिमहानन्दाधिक्यत्यागेन सर्वोत्तमतया मोक्षसुखस्यापि भक्तिसुखे एवान्तर्भावोऽभिप्रेतः कूपादिप्रयोजनस्य सम्प्लुतोदक इव तथाच गीतासु "यावानर्थ उदपाने सर्वतः सम्प्लुतोदकः" इत्यादि अनुप्रभवं प्रतिजन्म भक्तिरसिकतया मोक्षस्वीकारेण जन्मग्रहणात् ननु तर्हि जन्ममरणादि ना संसारदुःखं स्यादेव तत्राहुः कथमिति। तेषु संसारभयं कथमनुवर्त्तताम् भक्तौ प्रवृत्तं पुनः कथमायातीत्यर्थः। तत्र हेतुः तवेत्यादि। अभवच्चरणेष्विति स्वच्छरणागतेष्वपि कालभयं नास्ति भावं कुर्वत्सु च तत् कथं स्यात् अतो भक्तिवासनाभरानुवृत्त्या सदा सुखिनां तेषां; गर्भवासाद्यस्फुर्त्या कथञ्चिदपि दुःखस्पर्शोपि न स्यादेवेति यद्वा शुद्धबुद्धयस्तु त्वयि भक्तिं कुर्वन्ति कथम्भूतं प्रभवः प्रकृष्टो भवः अभ्युदयः स्वस्प्रसादरूपः यस्मात् तं ननु भक्तानामपि जन्म श्रूयते तस्मिंश्च सति कथं संसृतिभयनिवृत्तिरित्यत आहुः—कथमिति। अनुवृत्तिमात्रं कुर्वतामपि भवभयं नास्ति किं पुनर्भावं दधताम् अत एव श्रीप्रह्लादेन प्रार्थितम् 'नाथ योनिसहस्रेषु येषु येषु" इत्यादि अस्तुतावदनुवर्त्तिनां शरणागतानामपि तावत्कालभयं नास्ति, इत्याहुः—तवेति। तथा

* जीवानां॥

श्रीसनातनजीवगोस्वामिकृतबृहत्तोषिणी।

श्रीराघवेन्द्रवचनं "सकृदेव * प्रपन्नो यस्तवास्मीति च याचते" इत्यादि ॥ ३२ ॥

ननु किं मद्भक्त्या स्वयमेव योगशास्त्रमवेक्ष्य तन्निरूपितैरुपायैः सुधीभिर्निस्तरिष्यते इत्यत आहुः—विजितेति। विजितहृषीकवायुभिरपि योगिभिर्योऽदान्तो मनस्तुरगस्तमिति स्ववशत्वानियम्यत्वं सूचितम् यतोऽतिलोलं गुरोश्चरणाश्रयणं विना केनाप्यदमितं मनस्तुरगं ये गुरोश्चरणं सम्यगवहाय नियतं यतन्ते संरम्भेन कथञ्चिदाश्रयणेनापि संसारार्णवतरणं सूचयति उपायाखिदत्वात्वो हेतुः, हे अजेति। यतस्त्वं प्राणायामादिभिर्न प्रकटो भवसि किन्तु गुरोः परमभागवतत्वात् त्वत्पादाश्रयणेनैवेति भावः। वणिजः सांयात्रिकाः कर्णधरः कर्णधारः इह अस्मिन् लोके व्यसनशतान्विताः सन्ति भवन्ति बहुलसाधनसद्भावेऽपि एकाभावेन बहुव्यसनप्राप्तौ दृष्टान्तः जलधावकृतकर्णधरा वणिज इवेति ॥ ३३ ॥

स्वजना बान्धवाः यद्वा स्वाः ज्ञातयः जनाः भृत्याः सुताः अपत्यानि दाराः कलत्रं केवलं ते त्वदवेक्षणप्रयासमात्रमित्यर्थः। रथ इत्युपलक्षणं वाहनादिविभूतीनां भयतो जनस्य सर्वरसे सर्वसुखरूपे किम्वा सर्वे रसाः सान्द्रपरमानन्दाः यस्मात् तस्मिंस्त्वयि सति एतैः स्वजनादिभिः किं कोऽन्वर्थः अपि तु न कोपीत्यर्थः। तत्र हेतुः स्वेत्यादिपदत्रयम् अनेन नश्वरतया शोकावहत्वं वर्त्तमानेऽप्यतितुच्छतया तत्त्वतः सुखराहित्यं चोक्तम् सप्तम्यन्तपाठेऽपि स एवार्थः। अन्यत्तैर्व्याख्यातम् तत्र चार्थो वस्त्वित्यर्थः। यद्वा ननु कथं व्यसनशतान्विताः सन्तीत्युच्यते स्वस्ववैभवैरेव नृणां सुखित्वमनेन व्यसनित्वाभावादित्यत आहुः-स्वजनेति। आत्मा यत्नः शरीरादिपालनप्रयत्नः सुरथः शोभनरथः नृणाम् आत्मनि सर्वजीवानाम् अन्तर्यामिरूपे यद्वा नृणां सदजानतामित्युत्तरेणान्वयः। इत्येतत् सत् तत्त्वं मिथुनतः मिथुनभावात् रतये स्त्रीसम्भोगाय अर्थः पदार्थः ॥ ३४ ॥

अधुना वैराग्यसिद्ध्ये सत्सङ्गार्थं महातीर्थसेवामुपदिशन्ति—भुवीति। प्रायः पृथिव्यामेव तादृशतीर्थादिसद्भावात् ऋषयः सर्वशास्त्रार्थतत्त्वज्ञा विप्राः अतो विमदाः अत एव भवत्पदाम्बुजहृदः आत्मनि स्वतः प्रेष्ठे नित्यसुखरूपे च किं वा अतो नित्यम् अव्याहतं सुखं यस्मात् तस्मिन् पुनरिति वाक्यालङ्कारे किं वा तीर्थादिसेवनात् पश्चात् अन्यत्तैर्व्याख्यातं यद्वा ते महाभागवता ऋषयः भूमण्डले पुरुपुण्यतीर्थसदनानि महापुण्यहेतुतीर्थरूपाणि सदनानि आश्रमान् अर्थात् महापुण्यार्थिनः दधति पोषणार्थोऽत्र धाधातुः पुष्णन्ति दुष्टजनसङ्गमालिन्यनिरासेन सम्वर्द्धयन्तीत्यर्थः। पोषणे सामर्थ्यमाहुः—भवत्पदाम्बुजहृदः तीर्थीकुर्वन्ति तीर्थानि "स्वान्तःस्थेन गदाभृता" इत्युक्तेः अत एवाघभिदङ्घ्रिजलाः विमदाः सर्वाभिमानशून्याः यद्वा भुवि पुरुपुण्यतीर्थसदनानि दधति धारयन्ति कुर्वन्तीत्यर्थः। ऋषिजुष्टजलादीनामेव तीर्थत्वात् येच सकृदपि त्वयि मनो दधति तेपि पुरुषाणां सारं शान्ति ज्ञानादिकं हरन्तीति पुरुषसारहराः ते च ते आवसथाश्च नृपधनिप्रभृतीनामालयाः तांश्चोपासते तत्र न गच्छन्तीत्यर्थः। किमुत भवत्पदाम्बुजहृदः यद्वा पुरुषसार हे पुरुषोत्तम! हरावसथान् रुद्रस्यालयान् न सेवन्ते रुद्रमन्दिरसेवां न कुर्वन्तीत्यर्थः। किमुत प्राकृतदेवतनूपादीनां ननु श्रीरुद्रेण श्रीविष्णोः भेदे कृते शास्त्रे दोषः श्रूयते तथाच पुराणवचनम्—

"यो वै विष्णुः स वै रुद्रः स हरिर्यस्तु रुद्रकः।
भेदकृन्नरकं याति यावदाभूतसम्प्लवम्" ॥ इत्यादि

बहुलं न कृते भेदे गुणाश्च यथा अत्रैव—

"त्रयाणामेकभावानां यो न पश्यति वै भिदाम्।
सर्वभूतात्मनां ब्रह्मन् स शान्तिमधिगच्छति" ॥ इति

सत्यं तौ दोषगुणौ त्रैगुण्यधर्मनिष्ठतया वैष्णवदीक्षारहितेषु साम्येनैव देवत्रयं जानत्सु वैदिकेषु स्मार्त्तादिषु च विज्ञेयौ न तु परमभागवतेषु एकान्तिषु तथाच पद्मपुराणादिषु—

"यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः।
समत्वेनैव वीक्षेत स पाषण्डी भवेत् सदा" ॥

इत्यादीनि बहूनि वचनानि एतदेवाष्टाशीतितमाध्यायद्वये वृकासुरोपाख्याने सारस्वतमुन्युपाख्याने च श्रीविष्णोः सर्वातिशायिमहिमनिरूपणात् स्फुटीभविष्यति--श्रीविष्णुधर्मोत्तरे च लिङ्गस्फोटनृसिंहोपाख्यानमेवात्र प्रमाणं तथाहि—विष्वक्सेननामानमेकान्तिनं प्रति ग्रामाध्यक्षपुत्रवचनम्——————

"दैवकर्मण्यशक्तिर्मे तात पूजय शङ्करम्।
देवतायतनं गत्वा यत्र तात प्रतिष्ठितम् ॥
लिङ्गमस्ति सुरेशस्य महादेवस्य निर्मलम्।
एतदुक्तः प्रत्युवाच वयमेकान्तिनः श्रुताः ॥
चतुरात्मा हरिः पूज्यः प्रादुर्भावं गतोऽथवा।
पूजयामश्च नैवान्यं तस्मात् त्वं गच्छ मा चिरम्" ॥

इत्यादि। ततो ग्रामाध्यक्षपुत्रे तस्य विष्वक्सेनस्य शिरश्छेत्तुमुद्यते लिङ्गं स्फोटयित्वा निर्गतेन श्रीनृसिंहेन परिवारस्य ग्रामाध्यक्षपुत्रस्य शिरांसि छिन्नानीति किन्तु वैष्णवानां यथा शम्भुरित्यत्रैवोक्तत्वादस्मिन्नेकान्तिभिरपि प्रणादिभिरादरः कर्त्तव्यः निन्दा तु सर्वथा परिहर्त्तव्या।

"यो मां समर्चयेन्नित्यमेकान्तं भावमाश्रितः।
विनिन्दन् देवमीशानं स याति नरकं ध्रुवम्" ॥

इत्यादिपुराणवचनेभ्य इति ॥ ३५ ॥

वैराग्यार्थं तीर्थसेवनमुक्तं तच्च वैराग्यादिकं प्रपञ्चस्य मिथ्यात्वे घटेतेति सन्यायं तदुपपादयन्ति--सत इति। इदं विश्वं सत् सत्यं तत्र हेतुः एतः सत्यात् त्वदवतारविशेषादुत्थितं सत्यादुत्पन्नं सत्यमेव दृश्यते यथा ऊर्णनाभादुत्पन्नं तन्तुजालकमिति चेत् ननु भोः तर्कहतं युक्तिबाधितमिदं तदेवाह—व्यभिचरति क्वचिदिति। सत्यादैन्द्रजालिकादुत्पन्ने पदार्थे व्यभिचारः मुहूर्त्तान्तरे विलयनात् नन्वत्र निमित्तकारणोत्पन्ने व्यभिचार उक्तः। ऊर्णनाभिदृष्टान्तेन तु उपादानोत्पन्नं दर्शितं तत्राहुः—कचमृषेति। मरीचिकोपादाने जलमिथ्यात्वमेव ननु तत्र। ज्ञानयोगादेव मरीचिकायां जलत्वं प्रतीयते इह तदभावात् सत्यत्वमेव इतिचेन्न नेदं युक्तमित्यर्थः। इत्यपि तथा तथात्वमेवाहुः—उभययुगिति। मायासम्बन्धेन पुरुषादुत्पन्नत्वात् मायिकाद्धनासत्यमेव ननु मरीचिकाजलदृष्टान्तेनासत्यत्वं साध्यते

* प्रपन्नाय ॥

श्रीसनातनजीवगोस्वामिकृतबृहत्तोषिणी।

दृष्टान्तस्तु सादृश्ये सति प्रवर्त्तते तेनानयोः बहुवैसादृश्यात् दृष्टान्तो नोपपद्यते विश्वं हि विविधानन्तवैचित्रीभिर्विलक्षणं न तथा मरीचिकाद्युपादानं जलादिकमित्यत आहुः—व्यवहृतय इति। विकल्पो विविधकल्पना शतमप्यन्धानां पश्यन्तीत्यन्धपरम्परान्यायेन व्यवहारार्थम् इषितः प्राप्तः "इष गतौ" इत्यस्मात् ननु तर्हि कथं वेदार्थज्ञाः पण्डिताः अपि व्यवहारमात्रार्थेषु कर्मस्वाशक्त्या दृश्यन्ते तत्राहुः—भ्रमयतीति। यद्वा इदं सत्यं सत उत्थितत्वात् उभयो युक्तिबाधितमिति चेत न कश्च व्यभिचरति कश्च मृषा न स्यात् तथा अनेन प्रकारेण उभययुक् उभये न सत्तासत्तालक्षणेन युज्यत इति सदसद्रूपमित्यर्थः। प्रायः सद्रूपमेव कश्चिदसत् प्रतिभासते इति तथाहि जीवे मुच्यमाने तस्य भूतपञ्चकादि सङ्घाते आत्माद्यध्यासोऽसद्रूपत्वान्नश्यत्येव भूतपञ्चकादिकन्तु सद्रूपत्वादवशिष्यते चेति सदसद्रूपत्वं प्रपञ्चस्य ननु तर्हि कथं केचित् प्रवाहसातत्यरूपत्वेनैव नित्यत्वात् सत्यं मन्यन्ते केचित् क्षणिकं केचित्तु मिथ्याभूतमपि प्रातीतिकसत्तयैव सत्यमिति चेत्तत्राहुः—व्यवहृतये केवललौकिककृत्यनिर्वाहाय अन्धपरम्परया विकल्पः कृतः श्रुत्यादितात्पर्याज्ञानादन्धत्वं तदेव विशदयन्ती भ्रमयतीति उरुधजडान्। निजदुराग्रहरक्षाव्यग्रतया पूर्वापरपरामर्शशून्यात् भारती सरस्वती देवी तेषां हृदि तथा बहुधा वर्त्तनैः स्फुरन्ती इतः अस्मिन् अर्थे भ्रमयतीति वैष्णवानां सम्मतस्तु सिद्धान्तः सदभिमृशन्त्यशेषमिदमात्मतयात्मविद इत्यत्र लिखितः सत्कार्यवादिना वैष्णवविशेषाः परमाभीष्टदेवतात् परमाचिन्त्यशक्तेराविर्भूतत्वात् सदेव वदन्ति न च श्रीभगवतो विकारित्व शङ्का यत प्राकृतस्यापि चिन्तामण्यादेः स्वर्णरत्नादिप्रसवेऽप्यविकारित्वेन अचिन्त्यशक्तित्वं दृश्यते ततः किमुत अप्राकृताचिन्त्यानन्तशक्तेः श्रीभगवतः तथाच श्रीविष्णुपुराणे—

"सन्निधानाद्यथाकाशकालाद्याः कारणं तरोः।

तथैव परिणामेव विश्वस्य भगवान् हरिः॥" इति

तथापि विवर्त्तवादिनः तथा वैनाशिकादयश्चासदेव वदन्ति तच्चासद्रूपत्वं श्रीभगत एवासम्मतं तस्यासुरपक्षीयत्वेनोपेक्षाकक्षानिक्षिप्तत्वात् तथाहि तस्य वचनं गीतासु "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्" इति तत्र केषांचित् भगवदैश्वर्यस्याप्यविद्याकल्पितमात्रत्वेनैव स्वीकारात् तथोक्तं श्रीभगवदाज्ञया तत्सङ्गोपनपरैर्भगवद्भिः श्रीशङ्करपादपद्मैः शारीकभाष्ये तदेवमविद्यात्मकोपाधिकपरिच्छेदापेक्षमेवेश्वरस्येश्वरत्वं सर्वज्ञत्वं सर्वशक्तित्वं च न परमार्थतः इति केषाञ्चित्तु साङ्ख्यवैनाशिकादीनामीश्वरस्यास्वीकारात् अनीश्वरत्वमिति किन्तु कश्चित्वैराग्यार्थमेव विश्वस्यासत्यत्वं प्रतिपाद्यते यथा जीवः सर्वं मिथ्येति ज्ञानेन सर्वत्रानासक्तोभूत्वा श्रीभगवद्भजनोन्मुखस्स्यादिति॥ ३६॥

एतत्पूर्वोक्तमेव विशदयन्ति इदं विश्वं सृष्टेः पूर्वं त्वयि लीनत्वात् न आस पृथक् नासीदित्यर्थः। लयस्य साक्षित्वाच पृथङ्नभविष्यति। अतोऽन्तरा मध्ये एकरसे चिद्घने त्वयि यद्विभाति विभिन्नतया भाति तन्मृषा अत इदं चिदात्म्यापन्नत्वात् द्रविणजातिविकल्पपथैः द्रविणजातयः सुवर्णरजतादयः तद्विकल्पपथैः कटककिरीटकुण्डलादिभिरुपमीयते तानि यथा सुवर्णादितादात्म्यापन्नत्वात् तद्रूपाण्येव तथेदं विश्वमपि इति अतो हेतोः ऋतमेवेदं अबुधा मनोविलासमवयन्ति यद्वा ननु ते पाषण्डादयः शास्त्रयुक्त्यैव वदन्ति तत् कथमन्धत्वं तेषाम्? तत्राहुः इदं जैनजङ्गमम्लेच्छादिशास्त्रं अग्रे कृतयुगादौ यस्मान्नासीत् निधनादनु कल्किना करिष्यमाणात् पाषण्डिनां निधनादनन्तरं च न भविष्यति अतः अन्तरा मध्ये द्वापरान्तकालिसम्बन्धिनि काले त्वयि त्वद्विषये तेषां मितं मानं ज्ञानमिति यावत् मृषा विभाति एकरसे एकस्मिन् वेद एव त्वन्माहात्म्यबोधकत्वात् रसो यस्य अतो द्रविणजातिविकल्पपथैः द्रविणस्य स्वर्गादेर्जातये जन्मने मिश्रयं धुर्त्तधातुवादिनां ये विकल्पाः नानौषधादिभिः विविधकल्पनाः तेषां पथिभिर्मार्गैरुपमीयते तथा तेषां विविधकल्पना मृषा धातुवादेन वित्ताशाहताशान्तस्य दुर्मतेरिति प्रसिद्धेः तथैतेषां शास्त्रमपीति ननु तर्हि कथं सुबुद्धिप्राया अपि तत्पथानुवर्त्तितया तत्र सुष्ठु विश्वस्ता दृश्यन्ते तत्राहुः—विनर्थानि। मनोविलासं निर्मूलम् अबुधा एव ननु सुबुद्धय इत्यर्थः॥ ३७॥

एवं प्रपञ्चस्य मिथ्यारूपत्वेपि निजदुर्वासनया मायिकविषयभोगाभिनिवेशेन जीवो विविधदुःखं प्राप्नोतीत्याहुः—स इति। यथा अजया ननु मायया बहिरङ्गशक्त्या कथं चिद्रूपस्य मदंशस्य तस्येदृशोऽनर्थः सम्भवेत मायोपेक्षके त्वयि तद्वैपरीत्येनानर्थस्य मायिकाशक्त्यकहेतुकत्वाद्यगमादिभिर्व्यतिरेकमुखेनाहुः—त्वमिति। जहासि उपेक्षसे नाश्रयस इत्यर्थः स्वकगाया अपि दोषावहत्वात् त्यागे दृष्टान्तः, अहिरिवेति। अतो मायासम्बन्धेन महादोषं मायोपेक्षया महागुणं च विचार्य मिथ्याभूतेपि मायिकविषयभोगादौ कथमपि बुधैरासक्तिर्नैव कार्येति तात्पर्यम्। अन्यत्तैर्व्याख्यातम्। यद्वा यत यस्मात् अनुशयीत भोगार्थमनुवर्त्तते तत् तस्मात् गुणान् विषयान् जुषन् अपेतभगः ध्वस्तनिजज्ञानस्सन् किं वा त्वद्भक्तिभाग्यरहितः सरूपतां प्रपञ्चानीनोपि प्रपञ्चसाम्यम् अतोऽनु वारं वारं मृत्युञ्च भजति यद्वा प्रपञ्चस्यासद्रूपत्वेपि मिथ्यैव जीवो दुःखं प्राप्नोतीत्याहुः—स इति। हे अज! जीववज्जन्मरहित स जीवः अजाम् अविद्यातु प्राप्नोतु नाम यत यस्मात गुणान् जुषन् जीवितु हेतौ शतृप्रत्ययः। तामनु शयीत तत्र परमासक्तिं कुर्वीत तदनु सरूपतां जन्मेत्यर्थः। ननु प्रपञ्चमध्ये कृतावतारस्य ममापि तत्सम्बन्धे सम्भावनास्तु तत्राहुः त्वमुत त्वन्तु नाम अविद्याम आविद्यकसृष्टिं जहासि दूरतः परिहरसि अहिरिव कञ्चुकं यथा त्वक्तं कञ्चुके सर्पो दृशमपि नार्पयति तथा त्वम् आविद्यकसृष्टाविव्यर्थः किन्तु वैकुण्ठलोके त्वं सदा रमयस इत्याह महसीति परमाचिन्त्यप्रकाशरूपे ब्रह्मतादात्म्यापन्ने वैकुण्ठलोके अष्टगुणिते अष्टैश्वर्यपूर्णे आत्तभगः प्रकटितसर्वैश्वर्यः महीयसे शोभसे ननु सत्यलोकादिविभूतिवत्तदैश्वर्यस्यापि गुणविलासताऽस्तु तत्राहुः—अपरिमेयभग इति। तदैश्वर्यस्यानन्त्यात् सर्वगुणातीतमेवेत्यर्थः॥ ३८॥

इति विषयभोगस्य महानर्थावहत्वेऽपि यतयः कृतसंन्यासाः अपि न दृश्यन्ते निःशेषमुद्धरन्ति हृदि गतः सामान्येन

श्रीसनातनजीवगोस्वामिकृतबृहत्तोषिणी।

सर्वेषां अन्तर्यामितया स्वस्य च हृदि वर्त्तमानोऽपि स्वस्मिन् वर्त्तमानस्याप्यप्राप्यत्वे दृष्टान्तः, अस्मृतेति। हे भगवन्निति परमेश्वरस्य तवाज्ञालङ्घनादिना तेषां तदुचितमेवेति उभयत्र दुःखमेवाहुः—अनपगतेति। अनपगतः सन्न्यासेन निवृत्तमुमुक्षोऽपि विरुद्धाचरणेनानपयातो योऽन्तको यमस्तस्मात् अमुत्र नरकपातादि दुःखं तथा भवतः संसारात् कथम्भूतात् अनधिरूढपदात् अनधिरूढानि अलब्धानि पदानि वाञ्छितभोगवस्तूनि यत्र तस्मात् भोगेच्छायामुत्कटायामपि लोकनिन्दाशङ्कया भोगार्थमुद्यमाकरणादिहापि दुःखमिति ॥ ३९ ॥

एतच्चाशेषं त्वद्भक्तविषयकमेव त्वद्भक्तस्य तु दैवापतितविषयभोगेनापि न कुत्रापि दुःखं किन्तु सर्वत्रैव महत्सुखमित्याहुः—त्वदवगमीति। सर्वथा सर्वोत्कृष्टतया यस्त्वां जानाति स इत्यर्थः। किं वा तवागमो ध्यानादिलक्षणः यद्वा असम्भावनादिनिरासकयुक्त्या स्फोरणं तद्वान् भवदुत्थयोर्विचित्रविनोदार्थं भवदिच्छयोद्भूतयोरिति विशेषणं गुणविगुणान्वयावेदने हेत्वन्तरमपीदं यम भक्तैरीश्वरेच्छायाः परिपाल्यत्वात् गम्भीरभक्तवात्सल्यजातत्वादत एव प्रीत्यानुमोद्यत्वाच्च कथं भक्त इत्यपेक्षायामाहुः—अनुयुगमिति। प्रतियुगमन्वहं च मनुजैः सर्वमनुष्यैर्द्वारभूतैर्वा गीतपरम्परा तन्माहात्म्यसम्बन्धिगीतश्रेणी तया त्वं श्रवणभृतः ते परिपूर्णभृतः सदैव भृत इत्यर्थः। हे सगुणेति! तच्च त्वत्कारुण्यप्रभावादेवेति भावः। किं वा हे सर्वसद्गुणार्णवेति गीतपरम्पराया अपि तादृशत्वमभिप्रेतम्। न च तस्य त्वां विना किञ्चिदन्यत् साम्यमित्याहुः—अपवर्गगतिः अपवर्गस्यापि गतिराश्रयः किं वा अपवर्गेण गतिर्गम्योऽपि त्वमेवेत्यर्थः। अन्यत्तैर्व्याख्यातं यद्वा भवदुत्थयोर्भवदिच्छोद्भूतयोः शुभाशुभयोः सदसत्कर्मणोर्गुणदोषसम्बन्धान् न वेत्ति न मन्यते नापेक्षत इत्यर्थः। तत्र भवदुत्थेत्येष एव हेतुः यथा नियुक्तोऽस्मि तथा करोमि इति सर्वत्रेश्वरेच्छामननात् अतस्तर्हि तद्भक्तिप्रवृत्तिकाल एव देहभृतां गिरो न वेत्ति तत्रानधिकारात् तथा चोक्तं श्रीभगवता—

"तावत् कर्माणि कुर्वीत न निर्विद्येत यावता।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते" ॥ इति

अत एवोक्तकरभाजनेन "देवर्षिभूताप्तनृणां पितॄणाम्" इत्यादि सगुणा सर्वसद्गुणालङ्कृता या गीतपरम्परा तया यद्वा त्वद्भक्तस्तु सदा परमात्यन्तसुखे मग्न एवेत्याहुः—त्वदवगमी त्वयि मग्नमनाः परमभक्तः भवदुत्थशुभाशुभयोः भवत् जायमानं उत्थं उत्थितञ्च तयोः जायमानोत्थितयोः देहभृतां देहभृद्भिः क्रियमाणकृतयोरिति यावत् शुभाशुभयोः पुण्यपापयोः गुणविगुणान्वयान् गुणदोषसम्बन्धान् न वेत्ति कः किं करोति कृतवान् वा ततो वा भद्राभद्रं किं जातं तत् सर्वं न जानातीत्यर्थः। तर्हि तेषां स्वाविषयका गिरश्च न वेत्ति किञ्च यैर्मनुजैः युगे युगे सगुणा त्वदीयगुणसहिता या गीतपरम्परा तया श्रवणभृतः कर्णयोर्भृतस्त्वं तेषां अपवर्गगतिः प्राप्त्युपायो यस्य तथाभूतस्त्वं भवसि संसारदुःखेन निजसामीप्यप्रदो भवसीत्यर्थः ॥ ४० ॥

एवमनन्तमहिम्नो भगवतो माहात्म्यं वर्णयन्त्यः शक्तिरहिता इव तथैव स्तुतिमुपसंहरन्ति—द्युपतय इति। एते अपि द्युपतयोऽपि ते अन्तं त्वन्माहात्म्यावधिं यस्य श्रीचतुर्भुजमूर्तेस्तव अन्तरा एकरोमकूपमध्ये सह यान्ति तथा चोक्तं षष्ठे चित्रकेतुना—

"क्षित्यादिभिरेष किलावृतः सप्तभिर्दशगुणोत्तरैरण्डकोशः।
यत्र पतत्यणुकल्पः सहाण्डकोटिकोटिभिस्तदनन्तः" ॥ इति

एवं परिच्छिन्नत्वेऽप्यपरिच्छिन्नत्वमपरिच्छिन्नत्वेऽपि परिच्छिन्नत्वमित्येवं परमदुर्वितर्कस्वरूपत्वेनानन्तमाहात्म्यभरत्वमेव दर्शितम् वयसेति कालस्य नित्यत्वेन सदा तेषां परिभ्रमणं सूचितम् यच्छब्दस्य पूर्वेणैवान्वयः तच्च तैरपि व्याख्यातमेव यस्मात् त्वमपीत्यादि अतन्निरसनेन त्वद्व्यतिरिक्तनिवारणमात्रद्वारा अन्यैस्तैर्व्याख्यातं यद्वा हि अतो हेतोः मद्विधाः श्रुतयः त्वयि फलन्ति त्वद्भजनेन त्वां प्राप्नुवन्तीत्यर्थः। एवं परब्रह्मणि कथं श्रुतयश्चरन्तीत्यस्य प्रश्नोत्तरमन्तेऽप्युक्तमिति ज्ञानकाण्डश्रुतयस्तु अतन्निरसनेन भवन्निधना भवन्ति ब्रह्मरूपे निधनं पर्यवसानं यासां ताः यद्वा श्लेषेणान्ते प्रार्थितमिदं यस्मात् ईदृशः त्वन्महिमा अतः श्रुतयो मद्विधाः भवानेव निधनं यासां तथाभूताः सत्यः अतन्निरसनेन अन्यसर्वपरित्यागेन त्वयि फलन्ति सफलमनोरथा भवन्ति यद्वा अकारो विष्णुः अहो विष्णो! तवास्मन्मनोरथस्य निरसनेन निराकरणेन भवत् सद्यो जायमाने निधनम् मरणं यासां तथाभूता भविष्यन्तीति। वयमित्यनुक्तिर्लज्जादिना ततश्च श्रीभगवत्कृपया काले श्रीनन्दगोकुले अत्र गोप्यस्ता बभूवुरित्युपाख्यानं सुप्रसिद्धमेव ॥ ४१ ॥

यद्वा श्रीकृष्णे कथं श्रुतयश्चरन्तीति प्रश्नस्य भक्त्यैव चरन्तीत्युत्तरमुक्तम् तदेव कृष्णैकपरत्वमाह—स्वसृष्टमिति। शक्तिभिः शक्तिरूपाभिः पराङ्गनात्वेन वर्त्तमानाभिः श्रीराधाचन्द्रावल्यादिभिः सह शयानं निकुञ्जादौ निद्रां भजन्तं परमपुरुषोत्तमं श्रीकृष्णं किं कृत्वा शयानं स्वसृष्टम् इदं धर्ममर्यादावर्त्म आपीय ताभिः सह शयनेन समाच्छाद्य तदन्ते तस्या निशायाः शेषे श्रुतयो गोपीभावं प्राप्ताः बोधयाञ्चक्रुः जागरयामासुः कैः तल्लिङ्गैः बोधोचितैर्वचोभिरित्यर्थः। यथेति दृष्टान्तितं एवं सुसङ्गतमेव ॥

जयजयेति माङ्गल्ये हे अजित! अजां निद्रां जहि जहीत्यर्थः। ननु ममैका लीलेयं किमिति हेया? अत्राहुः, दोषेति दोषेण चरणामृतलीलावलोकाद्यनाविर्भावरूपेण यद्वा दोषेण व्रजग्रामाणिकजनागशङ्कालक्षणेन गृहीतो गुणो लीलात्वरूपो यस्यां गृहीतस्तिरस्कृतो गुणो लीलात्वलक्षणो यस्यास्तां निद्रालीलातो जाग्रल्लीलायाः सर्वसुखकरत्वेन वैशिष्ट्यादित्यर्थः। ननु भवतु लीलात्वे गौणताऽस्याः किन्तु विश्रामसुखकरीयं हातुं न युज्यते तत्राहुः, त्वमसीति। स्वस्वरूपेणैव ह्याप्तसर्वानन्दोऽसि ननु यद्यहं स्वस्वरूपानन्देनैवानन्दीत्युच्यते तर्हि वृन्दावनस्य द्रुमलतादयो भ्रमरमयूरमृगादयश्च ममानन्दोत्कर्षं कुर्वन्तीति युष्माकमभिप्रेतमित्याशङ्क्याहुः— अगजगदोकसां द्रुमादिभ्रमरादीनाम् अखिलशक्त्यवबोधक हे निजानन्दहेतुतत्तत्सर्वसामर्थ्यप्रकाशक! त्वत्कृपावलोकनाभावेऽपि परमदुःखेन क्षीणशक्तयस्युरिति भावः। अतः प्रबुध्य कृपावलोकेन तेषां शक्तिं बोधयित्वा तानानन्दयन् तद्द्वारा अस्मानानन्दयेत्यर्थः। न मया कथं वृन्दशो वृन्दावनस्था आनन्दयन्

श्रीसनातनजीवगोस्वामीकृतबृहत्तोषिणी।

तद्द्वारा आत्मानमानन्दयेत्यर्थः। नन्वेकेन मया कथं वृन्दशो वृन्दावनीया आनन्दनीया इत्याहुः—क्वचिदिति। वत्सवत्सपालहरणब्रह्मयोनिमोहनादौ रासक्रीडादौ च अजया बहुरूपतामिव तन्वया चिच्छक्त्या चरतश्चरन्तः सन्तं पार्श्वे विचरन्तः तेषां काचिच्च गोवर्द्धनोद्धारणादौ आत्मना एकेनैव स्वरूपेण चरन्तं निगमः श्रुतिः प्रतिपादयेत्, तथा च तापिनीश्रुतिः "एको वशी सर्वगः कृष्ण ईड्य एकोऽपि सन् बहुधा यो ऽवभाति" इति। यद्वा ननु म(पु)त् प्रेयस्यावपि किमिदानीं वृन्दावनजीवबद्धानन्दे नहि नहि इत्याहुः ते इति। ते राधाचन्द्रावल्यौ राधालक्षिते वा क्वचित् अन्तर्लीलायां अजया। निद्रया द्वारा काचिज्जाग्रल्लीलायां आत्मना तव स्वरूपभूतया चिच्छक्त्या तथा च श्रुतिः "ते ध्यानयोगानुगता च पश्यन् देवात्मभूतां स्वगुणैर्निगूढाम्" इति सर्वत्र चरतः समीपे चरन्त्या वानन्दत इत्यर्थः। स्वप्ने जाग्रति च ताभ्यां सह सदा वृन्दावने विहाराद् ननु मम स्वाप्निकविहारः कथमन्यवेद्यः स्यात्तत्राहुः निगमो मद्विषयः अनुचरेत् सेवेत स्वप्ने विश्रामसहचरत्वात्मादृशां यद्वा निगमो गोपीरूपो मद्विधः परिचरेत् निद्रावसरे स्वदङ्गे पुलकादिसौष्ठवेन विहारं जानीयादित्यर्थः। अत्र बहूनां वृत्तत्वात् काश्चिदाहुरिति सर्वपद्येषु ज्ञेयम् तथापि क्वचित् सङ्गतिः कार्या॥ क॥

ननु को विशान्तवृन्दावनं यत्र मे सदा विहारः इत्यत आहुः—बृहदिति। उपलब्धं दृष्टं एतत् वृन्दावनादिकं बृहत् ब्रह्मैव अवयन्ति अनुभवन्ति महाभागवताः कथम् अवशेषतया प्रलयेऽप्यवश्यशिष्यमाणत्वेन यतः वृन्दावनात् विकृतेव विकृतिवत् प्रतीयमानस्य पुष्पफलादेरुदयास्तमयौ प्रादुर्भावौ नन्वायान्तं तर्हि विकारित्वं तत्राहुः अविकृतात् पुष्पादेर्हेतुत्वेऽपि विकारशून्यात् प्राकृतोऽपि कल्पतरुः स्वर्णरत्नकुलं प्रसुवन्नप्यविकारी दृश्यते किमुत चिद्रूपं श्रीवृन्दावनम् तच्च स्वर्णरत्नादिकुलं सत्यमेव तथापि विकारशून्यादेवास्मात् प्रादुर्भवत् पुष्पादिकं सदैव किन्तु प्रादुर्भावतिरोभावाभ्यां विभूतीवत् प्रतीयत इत्यर्थः। मृदिना वाशब्दश्चार्थे वृन्दावनादिमृत्तिकायां च विवृत्तेस्तृणादिरूपाया उदयास्तमयौ अविकृतादिति लिङ्गादिविपरिणामेन मृदत्यस्य च विशेषणं ज्ञेयम् तथा वैशारसि एवं तिष्ठति तथा भूम्यां हि तिष्ठतीति किञ्च वृन्दावनस्य कृष्णवनत्वेन श्रुत्या प्रतिपादितत्वात् कृष्णवनं नित्यानन्दवनमित्यर्थः। यतस्त्वखिलासाधारस्य वृन्दावनादिकस्यापि ईदृशं महात्म्यम् अत ऋषयो नारदादयः मनश्चरणं च आचरितञ्च दैहिकचेष्टातत्त्वप्येव दधुः ननु क्वचिदन्यत्र ननु तर्हि मदवताराः किमुपास्यान्स्युः तत्राहुः कथमिति। भुवि दत्तपदानि यथा खर्परपाषाणादिभूपरिणामेन व्यभिचरन्ति तथा त्वद्भजनन्तवावतारायकश्चित्स्वदवतारभजनं च त्वद्भजनाय स्यादित्यर्थः। तव सर्वावताराविर्भावपदत्वाद्व यद्वा ऋषयोऽत्र श्रुतिस्वरूपा मद्विधा गोप्यः शेषं पूर्ववत् यद्वा त्वयि तु अयि इति पदद्वयं अयि भगवन्! ऋषयस्तु देवताप्यर्याभिज्ञाः अतः अत्र वृन्दावने सार्वविभक्तिकस्तस्य मनोवचनाचरितं दधुः मनो दधुर्ध्यानेन वचनं दधुस्तवादिना आचरितं दैहिक चेष्टां दधुः सर्वतः पर्यटनादिना ननु कृष्णादिकं ब्रह्मेरयुक्तं ब्रह्मप्रविष्टानामाद्दृष्टिर्न श्रूयते वृन्दावनप्रविष्टानान्तु ततो निष्कान्तिर्विषयभोगश्च दृश्यते तत् कथं तद्दृष्टतामित्यत आहुः—कथमिति। भुवि वृन्दावनभूमौ न्यस्तानि पदानि कथं व्यर्थानि भवन्ति अतस्तेऽपि सर्वानर्थक्षपणेन त्वत्पदाब्जमेव प्राप्नुयुरिति भावः॥ ख॥

इति निखिलस्वरूपेभ्यस्तवोत्कर्षोद्रेकतः यद्वा यतस्त्वदवृन्दावनस्यापि ईदृशो महिमा इति हेतोः ऽधिपते त्रयाणां त्रिविधानां मुनिचरीनित्यप्रियाणां गोपीकुलानां प्राणनाथ! देवीनामनुक्तिर्नित्यप्रियाणामशक्यत्वात् खिललोकमलक्षपणकथामृताब्धि खिलानि तपोयोगोपासनादिभिरप्यहतानि प्रहर्तुमशक्यानि दुष्प्रारब्धादीनि भक्तिप्रतिबन्धकानि त्वदपराधादीनि वा तेषां क्षपणीपरमचमत्कारिरासलीलादिकथा सेवामृतं तस्याब्धि अवगाह्य तत्र निमज्य सूरयो महाभागवताः तपांसि स्वधर्मान् ज्ञानमार्गादिगतिपरिश्रमान् हे परम! सर्वोत्कृष्ट! अजस्रसुखानुभवं यथा स्यात्तथा ये तव परं पदारविन्दं सेवन्ते पादसेवायाः सर्वविधभजनास्पदत्वात् तथा सर्वेषां सन्तापहरत्वात् आह्लादनत्वाच्च धाम्नां विधत्थ तस्यांशेश्वरे लीयन्ते अपुनरावर्त्तितया नश्यन्तीति स्वधाम विधुताशयाः तथाभूताः कालगुणाः येषां तत्र कालो मृत्युः गुणाः प्रकृतिगुणाः ते तपांसि जहुरिति किमुत वक्तव्यमिति॥ ग॥

एवं भक्तिनिचयान् प्रशस्य तद्विहीनानां गिरमसत्त्वयाजिनो द्विजानाक्रोशन्त्यः तत्प्रियजनप्रीणनं प्रार्थयन्ते दृतय इवेति। ते केन प्रसिद्धाः असुभृतः प्राणिनः दीक्षितत्वब्राह्मणत्वादेरनुक्त्या केवलमसुभृत्त्वेन निर्देशः परमक्रोधावेशात् अमून् प्राणानेव बिभर्त्ति पुष्णन्ति न तु त्वां विन्दन्तीत्यर्थोऽत्यर्थः। यदि यद्यपि अनुविधाः अनु अनन्तरं विधा बन्धविधयो येषां तादृशाः तथापि त्वत्प्रार्थनाभङ्गात् दृतय इव श्वसन्ति ननु मम गोपनन्दस्य प्रार्थनाभङ्गात् को नाम दोषः तत्राहुः—महदिति। यदनुग्रहात् यदीयांशपुरुषानुग्रहात् यद्वा यस्य गोपालवेषस्यानुग्रहात् महान् ब्रह्मा अहमादयो मद्विधादयश्चेत्यर्थः। तथा च तापनी श्रुतिः। "गोपवेषो मे पुरस्तादाविर्बभूव ततः प्रणता मयानुकूलेन हृदा मह्यमष्टादशाक्षरात्मरूपं सृष्टये दत्वाऽन्तर्हितः पुनः सिसृक्षा मे प्रादुरभूत्तेष्वक्षरेषु भविष्यज्जगद्रूपं प्राकाशत" इत्याद्याः अस्तु तावत् प्राक्तनमैश्वर्यं तथा आधुनिका श्रेजसम्पदेव लोकोत्तरेत्याहुः हे पुरुषविभो सम्भ्रू यद्वा पुरुषाणां ब्रह्मविष्णुरुद्राणां विधा प्रकाशक यश्च त्वं अश्ममयादिषु अत्र प्रचुराश्मकूटादिषु कुटीभूतचतुर्विधाश्मशालिगोवर्द्धनादिष्वित्यर्थः। आदिशब्देन बहुविधगोरसादिप्रचुरेषु बहुवचनेन नन्दीश्वरादिकं च संगृह्णन्ति अत्र एषु अन्वयः कृतासक्तिः स न रमते इति रसः स्वभक्तदत्तत्वेन परमप्रीत्याऽऽस्वादिन्याश्वादयन् रमस इत्यर्थः। एवम्भूतमपि त्वां येऽन्नाप्रदानेनावहेलयाश्नन्ति ते दृतय इव श्वसन्ति अथ अतः क्रीडापरत्वात् एषु गोवर्द्धननन्दीश्वरादिषु सत् वर्त्तमानं यत् गोष्ठं तत् अव रक्ष प्रीणयेति वा कथम्भूतं असतः परमदुर्जनस्य कंसादेः परं वैरिभूतं तेन वैरितया निश्चिनामित्यर्थः। अतस्त्वाभिन्नया तत्कृतोपद्रवशङ्कापि स्यात् पुनः किम्भूतम्? शेषं शेषिणस्तव यथेष्टविनियोगार्हम्—

श्रीसनातनजीवगोस्वामीकृतबृहत्तोषिणी ।
ईश्वरेण प्रियं सर्वं यथेष्टं विनियुज्यते ।
यथेष्टविनियोगार्हं शेषशब्देन कथ्यते ॥
इति श्रीवैष्णवाः शेषं किं भूतं ऋतं सत्यस्वरूपम् ॥ घ ॥

अथ काश्चित् माथुर वनद्वयस्य सर्वतः श्रेष्ठ्यं कथयन्त्यः प्रोक्तमेव गोष्ठमाहात्म्यमतृप्त्या भूयोऽप्याहुः—उद्दरमिति । ऋषिवर्त्मसु ऋषियोग्यभक्तिमार्गेषु ये कूर्पदृशः सूक्ष्मदृष्टयो वसिष्ठाद्याः वसिष्ठादीनां मथुपुरे आश्रमदर्शनात् ते माथुरमण्डलस्य उदरम् उदरस्थानीयं मधुवनमुपासते मधुवनस्य मुख्यभूतपुरीसमाश्रयत्वेनान्तरं गत्वा तथा त्वदीयजन्मसाधनत्वाच्च उदरत्वम् आरुणयोऽनुरागिणस्तु हृदयं वृन्दावनमुपासते हृदयं हि श्रीभगवद्वासः अतो भगवद्वासत्वाद्वृन्दावनस्य हृदयत्वं तथाहि तापिनी श्रुतिः "तमेकं गोविन्दं सच्चिदानन्दविग्रहं पञ्चपदं वृन्दावनसुरभूरुहतलासीनं सततम्" इत्यादि कथम्भूतं परिसरपद्धति परितः सरन्तीति परिसरा निर्वरादयः तेषां पद्धतिं आगतस्थानमित्यर्थः । तेन सुधाहेतुत्वं सूचितम् दहरं कुञ्जादिभिर्गह्वरं हे अनन्त ततस्तदनन्तरं शिरः शिरोभूतं परमश्रेष्ठमिति यावत् नन्दीश्वरमभिव्याप्य यद्वा ततस्तस्मिन् शिरः नन्दीश्वरशुद्धरूपं तव धाम निवासस्थानं उद्गात् परमं सर्वतोत्कृष्टं तथाच श्रुतिः "तवाम्वास्तन्युश्मगमध्ये यत्र गावो भूरिशृङ्गा अयासः अत्राह तदुरुगायस्य विष्णुः परमं पदमवभातिभूरि" इति । अस्या अर्थः तानि वास्तूनि गृहाणि स्वोचितस्थानानि वाग्मध्ये प्राप्तये उश्मसि कामयामहे तानि कानि यत्र येषु वास्तुषु भूरि शृङ्गाः गावः अयासः सर्वसुन्दराः अत्र वास्तुषु अह स्फुटं तत् अनिर्वचनीयं पदं गृहं उरुगायस्य विष्णोः सर्वकामवर्षणस्य भूरि यथा स्यात्तथाऽवभाति सदा नित्यतया वर्त्तते यत्तव धाम यम् एत्य अर्वाचीनजना अपि कृतान्तमुखे दैवमुखे न पतन्ति दैववशगा न भवन्तीत्यर्थः ॥ कृतान्तो यमसिद्धान्तदैवाकुशलकर्मस्वित्यर्थः ॥ ङ ॥

वृन्दावनादिप्रसङ्गेन काश्चिद्वत्सवत्सापाहरणे श्री भगवतस्ततस्तद्रूपतामुद्दिश्यन्त्यो भक्त्येकगम्यतामाहुः—स्वकृतेति । स्वकृतासु क्रीडार्थमत्र स्वयमाविर्भावितासु विचित्रासु बहुविधासु वत्सपादिरूपासु योनिषु आकृतिषु हेतुतया उपादानत्वेन विशन्निव तत्तद्रूपं भवन्निव श्रीव्रजेन्द्रनन्दनस्य पृथक्त्वेन तथैवस्थानादिवयस्यरूपत्वेन च तथा च कामनातारतम्यं अनलवत् यथा अग्निः काष्ठादीनां न्यूनाधिकत्वेन न्यूनाधिकस्तथा तत्तदाकृतीनां सादृश्येन त्वमपीत्यर्थः। ननु मायया तत्तद्रूपागतास्तु नेत्याहुः—स्वकृतेति । स्वकृतासु न कृता अनुकृतिर्मायया तद्रूपविडम्बनं येन स तथा ननु न भवतु मायिकत्वं तेषां किन्तु चिद्रूपविग्रहमायैव ते जीवविशेषा आविष्कृता इत्यस्तु कथमहमेव तत्तद्रूप इत्युच्यते इत्यत आहुः अथेति तद्रूपताविष्कारानन्तरमेव अमूषु वत्सपाद्याकृतिषु वितथासु अतत्प्रकारासु सर्वत्र तु त्वद्रूप लक्षणहीनास्वपीत्यर्थः । अभिविपणवः अभितः विशेषेण पणायन्ते स्तुवन्ति सेवते इत्याभिविपन्यवः परमभक्तास्तव धाम श्रीमूर्त्ति अवितथमबाधितं तत्तदाकृतिभिरनाच्छन्नं जानन्ति तत्तद्रूपस्त्वमेवासीति परिचिन्वन्तीत्यर्थः । तत्र चिह्नं सममिति मा परमं शोभा तत्सहितम् एकरसञ्च मुख्यरसं तत्तदसाधारणलीलारसिकमित्यर्थः ॥ च ॥

न केवलं गोकुलाविष्कृतवत्सपादिरूपं स्वस्वरूपतया परिचिन्वन्ति । किन्तु तत्रतत्राविष्कृतं तत्तद्रूपमपीत्याहुः—स्वकृतेति । स्वकृतेषु पुरेषु निवासेषु बदरिकाश्रमलीलाचलपाण्डुरङ्गाख्येषु सन्तं पुरुषं पुरुषत्रयं नारायणजगन्नाथविट्ठलस्वरूपं तवांशकृत् गोकुलं तस्यांशावतारविशेषमित्यर्थः । अबहिरन्तरसम्वरणं यथा स्यात् सुप्रकटमेव वदन्तीत्यर्थः। अथवा स्वकृतेषु पुरेषु स्वभक्तैः कृतेषु बृहद्वनवृन्दावननन्दीश्वरादिस्थितव्रजपुरेषु पुरुषं बलदेवप्रद्युम्नानिरुद्धरूपं व्यूहत्रयलक्षणं तत् स्वांशकृतं अंशेन आविर्भूतं तथाहि श्रुतिः "तत्र हि रामस्य राममूर्त्तिः प्रद्युम्नस्य प्रद्युम्नमूर्त्तिः अनिरुद्धस्यानिरुद्धमूर्त्तिः" इति । कथम्भूतम् ? अबहिरन्तरसम्वरणम् न विद्यते बहिः सुव्यक्तलीलायां अन्तरे अबहिर्लीलायां सम्वरणं अनभिव्यक्तिः सहावस्थानाभावो यस्य तत्र श्री बलदेवस्य बहिर्लीलायां सदावस्थानाभावो नास्ति किन्तु सहचरत्वमेव प्रद्युम्नानिरुद्धयोः सुव्यक्तव्रजलीलानुगुणाभावात् अबहिर्लीलायां सम्वरणं नास्ति किन्तु व्रजजनादृश्यतायामनभिव्यक्तिरित्यर्थः यद्वा पुरुषं बलदेवमेव कथम्भूतं स्वकृतपुरेष्वमीष्वबहिरन्तरसम्वरणम् बहुष तत्र तत्र प्रसिद्धत्वाद्बहुत्वं न विद्यते बहिर्वनशैलादिषु अन्तरेषु च व्रजगृहादिषु सम्वरणं यस्य अखिलशक्तिधृतः अनन्यसाधारणसर्वशक्तीः सम्प्रति प्रकटयतः इति परमैश्वर्याद्धेतोः कवयः सर्वज्ञाः ब्रह्मरुद्रादयः भुवि श्रीमाथुरभूमौ विराजमानस्य भवतः नृगतिं मनुष्यलीलां विविच्य सर्वोत्कर्षपदत्वेन विमृश्य विश्वासिताः अत्रैव लब्धविश्वासाः अङ्घ्रि श्रीमत्पादपद्ममुपासते कथम्भूतं निगमावपनं सर्वश्रुतीनां तात्पर्यविशेषम् ॥ छ ॥

अतस्त्वद्भक्तैरेव सर्वोत्कृष्टत्वात्त्वद्भक्तानामनन्यनिष्ठता युक्तेत्याहुः—दुरवगमेति । वित्तत्वेपि परिच्छिन्नत्वम् अजत्वेपि जनिमत्त्वं निरुपमैश्वर्यभरत्वेपि मलापनादिकार्यस्य वत्समित्यादि दुरवगमत्वं चरितानि दामबन्धनः स्वीकारगोवर्द्धनादिरासक्रीडादीनि चरणसरोजहंसकुलसङ्गविसृष्टगृहाः सत्यव्रतादयः तथाहि पाद्मे कार्त्तिकमाहात्म्ये सत्यव्रतवचनम् "वरं देवमोक्षं न मोक्षावधिर्वा न चान्यद्वृणे त्वद्वरेशादपीह" इति अत्र सोपस्तुतिश्च श्रीमदानन्दतीर्थपादपद्मैः "प्रमाग्रिता सर्वदैवमुपासीतयावद्विमुक्तिर्मुक्ता अपि ह्येनमुपासते" इति ॥ ज ॥

एवमसमोर्द्ध्वभक्तिमाहात्म्ये प्रस्तुते काश्चिच्छ्रुतयः कांश्चिद्यादवानपि भक्तिहीनानालोच्य तान् शोचन्त्य आहुः—त्वदनुपथमिति । इदमपरोक्षं स्वात्मनामहमदेवाविनाभावेन सम्बन्धम् अर्थाच्छरीरमित्यर्थः । अत एव आत्मसुहृत्प्रियवद्वर्त्तति आत्मनः स्वस्य सुहृत् प्रियवत् परमानुकूलत्वेन वर्त्तते इत्यर्थः। कुलायं कुलं त्वत्प्रभवयदुकुलं अयते जन्मना समेतीति यदुकुलोद्भवमित्यर्थः । अत एव त्वदनुपथं यावदवस्थास्वत् सेवाचितं बत कष्टं अहो आश्चर्यं तथा तथापि प्रसेनशतधन्वादयस्त्वयि रतिं न कुर्वन्ति त्वयि कथम्भूते उन्मुखे स्वबान्धवत्वात् तद्भजनापेक्षको आत्मनि स्वविषये हिते प्रियेच

श्रीसनातनजीवगोस्वामिकृतबृहत्तोषिणी ।

असतो धनादेरुपासनया आत्महनः आत्मघातिनः यदनुशया वा धनादौ अनुशयो वासना येषां तेषां ते कुशरीरभृतः त्वद्भजनाभावात् कुत्सितदेहं पुष्णन्तः उरुभये महति त्रासे भ्रमन्ति त्वत्तु धनप्राणादिनाशशङ्कया सदा भये मग्ना वर्त्तन्त इत्यर्थः । यथा "वृषमयात्मजाद्विश्वतो भयात्" इत्यादौ भविष्यमपि सूचितम् तद्वदत्रापि ॥ झ ॥

काश्चिच्छ्रुतयो गाढानन्दप्रकर्षकृतेन चापलेन मुखरीकृताः श्रीभगवति स्वेषामेव भावमाधुर्यसारप्रदर्शनाय भक्तिहीनानां प्राप्यमाहुः—निभृतेति । यद्ब्रह्म उपासते उपासनया प्राप्नुवन्ति अरयोऽप्यघामहादयस्तदेव प्रापुः स्त्रियस्तु गोपिकाः ते तवाङ्घ्रिसरोजसुधाः पादपद्ममकरन्दमकरन्दानमन्द्रानुरागधुरीरित्यर्थः तत्र हेतुः उरगेति । आसामसमोर्द्ध्वत्वन्माधुर्यमग्नत्वात्तदेवोचितमिति भावः वयमपि श्रुतयस्त्वदङ्घ्रिसरोजसुधा याियम कथम्भूताः समाः गोपीभिस्तुल्यास्तत्सखीत्वं प्राप्ताः अत एव समदृशः सजातीयभावाः मुनीनाममराणाञ्च प्राप्यस्यैकत्वादिति ॥ ञ ॥

गोपीनां प्रसङ्गे तासां महामोहनस्ववेणोर्माधुर्यवर्णनेन कृष्णं स्तुवन्ति—क इहेति । नु भो भगवन् ! अग्रसर अग्रे पुरतः शब्दरूपेण सरति गच्छतीति अग्रसरो वेणुः तम् इह अखिलभुवने अवरजन्मलयः अवरस्य प्राकृतस्य जन्मनो लयो यस्य सः प्रत्यासन्नचिद्रूप देहलाभ इत्यर्थः । तादृशोऽपि को वेद बत आश्चर्यं यतः वेणोः ऋषिमन्त्रः मोहनमन्त्ररूपो नाद इत्यर्थः । उदगात् स्वगमेवाभ्युत्थितः उद्गीति वा कृष्णस्य वंशी कदाचित् स्वयमपि शब्दायते इति हि प्रसिद्धिः यमनु यं वेणुनादमहामन्त्रमनु उत ये तत्रैके अधिकारिणो ब्रह्मरुद्रादयः अन्ये श्रीगरुडविष्वक्सेनादयो वैकुण्ठस्थानित्यपार्षदाः इति द्विविधा देवगणाः उदगुः वृन्दावनोपरि गगने उदयं चक्रुः यद्वा तु शान्तं गान्धर्वविद्याशास्त्रम् अवकृष्य समानीय स्वस्मिन् समावेश्य तत्र यदधरान्विश्वे शयीत परमाशङ्कया निवर्त्ते भवेत् वेणवधरयोः नामाग्रहणं मोहशङ्कया तर्हि न मत्प्रियजनकुलं तस्य परमानन्देन मोहात् न च असन्निहितादिकुलं तस्य केनाप्यनिर्वचनीयेन महाक्षोभकारिणा भावेन मोहात् यद्वा महात्रासेन मोहात् यथा जगत् प्रकाशिकापि भानुर्दीप्तिरुलूकानामन्धं करणी नचोभयं भक्तिद्वेषरहितं मध्यमं ज्ञानिकर्मिकुलं चेत्यर्थः । यद्वा न सत् चेतनकुलं तस्य मोहेन जाड्यातिशयात् न च असत् अचेतनकुलं पाषाणादि तस्य द्रवभावापत्तेः न च उभयं वस्तुत चेतनमपि जडत्वेन प्रतीयमानं तरुलतादि तस्य पुलकमधुधाराकस्पाणुद्गमेन वैलक्षण्याविशयात् नच कालजवः कालस्यापि सद्वृत्वात् मूर्च्छादीनां गत्यभावात् कालस्तम्भोऽनुमेयः । नचान्यत् किमपि नदीमरुदादीनां वहनादि कामित्यर्थः । सर्वमेव जगत् वेणुनादसन्दर्भाम्बुधौ मज्जतीत्यर्थः । तथाच श्रुतिः "यावीरवी कन्या चित्र आयुस्सरस्वती वीरपत्नीधियन्धाः या वीरवी तन्तुरं कपाजो दिवी भर्त्ता सिन्धुरापः समुद्रियः इत्यादि ॥ ट ॥

अथ केचिद्गोवर्द्धनोद्धरणादिलीलां सूचयन्त्यः स्तुवन्ति—हृदि चिन्तयन्ति न केवलं स्मरन्त्येव उपदिशन्ति सर्वत्र प्रकटयन्ति च तथा सतो गोकुलस्य मूर्तिं हन्ति नन्दगोष्ठजिघांसयेत्युक्तत्वात् किञ्च आत्मनि त्वयि भिदां श्रीजगदीश्वराद्भिन्नत्वं सामान्यमनुष्यदृष्टित्वमित्यर्थः । तथा ह्युक्तमिन्द्रेण "वाचालं बालिशं मुग्धम्" इत्यादि । विपणं व्यवहारमात्रं शत्रुध्वजोत्थापनादिना शत्रुमहं ऋतं नित्यं ते आरोपितैः स्वबुद्ध्यारोपितैः स्वबुद्ध्या निरूपितैर्वा शब्दैरेतदेवाहुः त्रिगुणैरतदेवाहुः त्रिगुणेति अवस्तुतावत् सम्मान्यस्य हीरुत्वं यद्यस्मात् कृष्णास्त्रिगुणमयः प्रकृत्याधिष्ठाता पुरुष इति भिदापि लीलापुरुषोत्तमादन्यत्वकथनमबोध कृता अज्ञानविजृम्भिता कथम्भूते त्वयि ततः पुरुषात् परत्र अत एवावयोधरसे अतस्त्वयि गोवर्द्धनोद्धरणेन व्रजपालके स इन्द्रस्य सङ्कल्पो न कुर्यात् भग्नस्तम्भो हतोद्यमः इत्युक्तत्वात् तथाच श्रुतिः "जजान एव व्यवाधतस्पृशः प्रापश्यद्वीरो अभिपौंस्य रणं अवृश्चदद्रिमवस्यदस्सृजदस्तभ्नान्नाकं स्वपस्यया पृथुम्" इति ॥ ठ ॥

अथान्याः काश्चिद्गोवर्द्धनस्वरूपप्रियस्थानकथनप्रसङ्गेन सर्वस्यैव भगवत्प्रियस्थानस्य सत्यताप्रतिपादनेन तं स्तुवन्ति—सदिवेति । आमनुजात् मनुष्यमभिव्याप्य स्थावरपर्यन्तं असदपि मम इदमस्थिरमपि त्रिवृत् तापत्रययुतमपि सदिव सर्वोत्तममिव विभाति तत्र हेतुः, त्वयीति । त्वयि सति त्वय्यवतीर्णे इति शेषो वा तवावतारादित्यर्थः । ननु मर्त्यभुवनान्तर्वर्त्तिमथुराद्वारकादिस्थानमपि किं सत्यमादित्युच्यते नेत्याहुः—सदिति । आत्मविदः आत्मनि त्वां जानन्तः इदम् अशेषं मथुराद्वारकादिकं तवस्थानं सत् सत्यं जानन्ति तत्र हेतुः आत्मतया चिद्रूपतया हेतुना चिदात्मस्यापन्नत्वादित्यर्थः । तत्र निदर्शनं महीति । अतः स्वकुले स्वयमेवाविर्भावितं इदं त्वदीयस्थानं आत्मतया निश्चितं तत्रापि अचिन्त्याद्भुतशक्तिना त्वया अनुप्रविष्टं निरन्तरं कृतप्रवेशम् त्वत्स्वरूपमिति यावत् तथाहि तापनी श्रुतिः "प्राप्य मथुरां पुरीं रम्यां ब्रह्मादिसेवितां । शङ्खचक्रगदाशार्ङ्गाङ्कितां मुसलादिभिः । यत्रासौ संस्थितः कृष्णः त्रिभिः शक्त्या समन्वितः" इत्यादि ॥ ड ॥

ननु कंसाद्भयेन वनं निलीय वसतो मे किमियमतिस्तुतिः क्रियते इत्याशङ्क्य कंसादि भयं तावदस्तु साधारणा अपि त्वत्सेवका मृत्योरपि न बिभ्यतीत्याहुः—नवेति । अखिलसत्त्वनिकेत हे सम्पूर्णसत्त्वस्याश्रय ! तवा प्रसिद्धया त्वत्प्रेयस्या सह त्वां ये ये केचिज्जनाः परिचरन्ति न ते पतन्तीति मृत्योरपि न बिभ्यतीत्याहुः तत्र को वराकः त्वयि कंस इत्यर्थः । नहि स्वरूपसिद्धाः श्रीमन्ति मां न भजेरन् ? इत्यत आहुः—परिवयस इति गिरा सौन्दर्यप्रतिपादकेन स्वरूपया नपः च वेदः येनाहं नामृतः स्यां किमहं तेन कुर्याम् इत्यादि खलु निश्चितं त्वयि कृतसौहृदाः पुलिन्दीप्रभृतयो भुवनानि पुनन्ति येतु विमुखास्त्याज्याः विप्रादयः ते नात्मानमपीत्यर्थः ॥ ढ ॥

श्रीभगवतोऽवश्यसेव्यताप्रतिपादनाय ब्रह्मादीनामपि सेव्यतामाहुः—स्वमिति । अजय हे अन्यकर्त्तृकजयरहित ! हे अजितेत्यर्थः । त्वम् अकरणः क्रियारहितः ननु विविधक्रीडां कुर्वन्नहं कथमक्रियः तत्राहुः—स्वराट् स्वेन स्वरूपभूतचिच्छक्तिविलासेन रासक्रीडादिना राजसे त्वं प्राकृतक्रियाशून्य

श्रीसनातनजीवगोस्वामिकृतवृहत्तोषिणी।

इत्यर्थः। कथं तर्हि जगत्सृष्ट्यादिकं कुर्वन्तीत्यर्थः। अतो विश्वसृजो ब्रह्माद्याः अनिमिषाश्चेन्द्रचन्द्रादयस्तव बलिमुद्वहन्ति सेवां कुर्वन्ति तत्र ब्रह्मेन्द्रादीनां गोविन्दनामाभिषेकादिनाथ सेवा पवनस्य मन्दरवायुरूपवात्यनुकूलमित्याद्युक्तप्रकारेण चन्द्रस्य रासविहारादौ सम्पूर्णमण्डलतया सहोदयेन अन्येषां च वैमानिकैः कुसुमवर्षिभिरीड्यमान इत्याद्युक्तेन प्रकारेण सा ज्ञेया तथात्वत्कृतेन दुर्गामहादुष्टासुरदमनेन यज्ञादिषु निर्विघ्नं बलिं च समदन्ति तत्र दृष्टान्तः वर्षभुज इति किञ्च न केवलं स्वस्वदेहेनैव ते भजन्ति किन्तु निजनिजैश्वर्यार्पणेन चेत्याहुः विदधतीति। यत्र यस्मिन् ऐन्द्रद्यैश्वर्ये ये इन्द्रादयोऽधिकृताः सम्भ्रान्तास्सन्तः तत्तैश्वर्येण भवतो विदधति सेवामिति शेषः। तथाहत्रैवोक्तम्—

"यद्यद्भगवता दत्तमाधिपत्यं स्वसिद्धये।<br>
सर्वं प्रत्यर्पयामासुर्हरौ भूमिगते नृप!" ॥

इति ॥ ण ॥

नातीवान्तरङ्गाणामधिकारिभक्तानां सेवामुक्त्वा परमाङ्गानां वृन्दावनवासिनां सेवामाहुः—स्थिरेति। विमुक्त हे विमुक्तचित्त! हे महायदान्यशेखरेत्यर्थः। परस्य पुरुषोत्तमस्य तव अजया योगनिद्रयापि हेतुभूतया यदि विहारः किं पुनर्लीलाशक्त्या ततो वृन्दावनस्थं स्थिरचरजातयः स्थिराश्च चराश्च जातयश्च सजातयः तास्तव उदीक्षया साभिलाषावलोकनेन उत्थानमित्थयुजः स्युः उतथा प्रकटा निमित्ता विहारकारणानां युक् योगो यासु तथाभूता भवेयुः। तत्र स्थिरेषु लताद्रुमादिषु विहारनिमित्तानि पुष्पकोरकपल्लवादीनि चरेषु मयूरभृङ्गकोकिलादिषु शिखण्डमधुरकूजितादीनि स्वजाति श्रीदामप्रभृतिषु व्रजसुन्दरीषु च तत्तदुचितवेषभूषणवैदग्धीनर्मादीनीति ज्ञेयम् इति बहिर्विहार इत्यन्तर्विहारेऽपि सर्वेषां भजनमुक्तं तत्र यदि विहार इत्यनेनान्तर्लीलायां सर्वविहारः कादाचित्क एवेति ध्वनति प्रेयसीभिर्विहारस्तु सार्वदिकः सतु न क्वचिदजयेत्यनेन पूर्वं समर्थितः यद्वा अजया लीलाशक्त्या शेषं समानं प्रियजनेषु श्रीभगवतो भावमुक्त्वा सामान्यजनेषु विद्विषिषु च क्रमेण साम्यमस्फूर्तिं चाहुर्नहीति परमस्य तव साम्येषु पुण्यपापकारिषु मध्ये कश्चिदपरो मित्रं हि निश्चितं न भवेत् परः शत्रुश्च न भवेत् पक्षपातं विना कर्मानुसारेण स्वर्गनरकादिरूपं फलं ददासीत्यर्थः। अत एवास्पदस्य तेषां चक्षुराद्यविषयस्य वियत इव यथा बाढ सदृश्ये वियति भ्रान्त्या नीलमाकाशमितिबुद्धिः स्यात् तथा तदाभासमात्रे विद्विषां त्वद्बुद्धिरिति भावः। यद्वा व्रजवासिजनेषु श्रीभगवतो भावमभिव्यज्य तस्यैवोत्कर्षाय परमैश्वर्यमाहुः, नहीति। परमस्य अस मोर्द्ध्वस्वातन्त्र्यादिवैभवस्य अपदस्य मन आद्यगोचरस्य अत एव वियत इव शून्यसादृश्यं दधतः स्वेच्छां विना परमशुद्धहृदयानामपि ब्रह्मरुद्रादीनां महासमधावपि क्षणमपि मनागस्य स्फुरत इत्यर्थः। तथा च बृहद्वामने रुद्रवचनम्—

"कुतस्समाधिस्ते द्रष्टुं सहस्रं परिवत्सरान्।<br>
अहो बत मम क्षीन्ताद्दूराद्दूरतरो हरिः" ॥ इति

अत एव निरतिशयैश्वर्यपरिपूर्णत्वात्तव न कुत्रापि परापरबुद्धिः एवम्भूतस्यापि तव व्रजवासिषु तादृक् प्रेमोद्रेक इत्यहो चित्रमिति भावः ॥ त ॥

ननु व्रजवासिषु मत्प्रेमा कथं ज्ञातः तेषां सर्वेषां पुत्रत्वस्वीकारात् इति चेन्न ते खलु जीवा एव भवन्तु किमिति तद्रूपा इत्युच्यते अपरिमिता इति। वत्सवत्सपालादिषु ब्रह्मणा हृतेषु ये केऽपि अपरिमिताः असङ्ख्याः ध्रुवा नित्याः सर्वगता व्यापकाः प्रादुर्भूताः ते यदि तनुभृतो जीवाः स्युः तर्हि हे ध्रुव त्वया सह तेषां सर्वथा साम्यात् शीलता न स्यात् इति नियमनं त्वदिच्छैकमयता न स्यात् इतरथा तेषां तादृशजीवत्वं विना सम्भवेदित्यर्थः। तदेवाहुः, अजनीति। यन्मयं यस्य तव स्वरूपभूतं वत्सपालादिरूपं अजनि प्रादुर्भूतं तत् तव स्वरूपं वत्सपालादिरूपस्य निजरूपत्वेन नियन्तृप्रादुर्भावादिषु समर्थं भवेत् तस्मात् त्वद्रूपा एव ते नतु जीवा इत्यर्थः। यद्यपीयं लीला पूर्वं स्वकृतविचित्रयोनिष्वित्यत्रोद्दिष्टा तथापि परममाधुर्यात् पुनरुच्यत इति अदोषः। ननु ब्रह्मरुद्रादीनां मत्साम्यात् एते तद्रूपाः किं न स्युरित्यत आहुः—सममिति। त्वत्सममन्यमनुजानतां यत् मतं तस्य दुष्टतया तदमतमेव ब्रह्मरुद्रादिभिस्तवाभेदेऽपि परमैश्वर्यादिपरमवैसादृश्यमित्यर्थः। तथाच श्रुतिः "न तस्यकार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते" इति ॥ थ ॥

ननु यस्य मम स्वरूपभूतास्ते वत्सपालादय उक्ताः सोऽहं प्रेयसीसहितः किं स्वरूपः परे मत्प्रियजना वा किं रूपाः। इत्यपेक्षायां प्रियजनसहितयोर्भगवत्प्रेयसीश्रीभगवतोः स्वरूपमाहुः—नेति। अयमुद्भवः युवयोः प्रादुर्भावः प्रकृतिपुरुषयोरिति न घटते राधामाधवावेव युवां प्रकृतिपुरुषयोर्न भवथ इत्यर्थः। तथा च ऋक्परिशिष्टं "राधया माधवो देवो माधवेनैव राधिका विभ्राजन्ते जनेष्वा" अघटने हेतुः रजयो सजयोरित्यर्थः। रजशब्दो इकारान्तोऽप्यस्ति ततोऽर्श आदित्वादच्प्रत्ययः अतो ह्लादिनी राधापुरुषोत्तमावेव युवामित्युक्तम् नन्वावयोरेव केवलं प्रकृतिपुरुषत्वनिरासेन मत्प्रियाणां व्रजलोकादीनां किं प्रकृतिपुरुषात्मकतां वदन्ति भवन्त्यः इत्याशङ्क्याहुः—उभयेति। उभयं चिच्छक्तिलीलाशक्तिश्चेति शक्तिद्वयं नतु प्रकृतिपुरुषरूपं "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतेः। तस्य युजा योगेन सम्बन्धेन असुभृतो व्रजवासिप्रभृतयो भवत् प्रियजना भवन्ति प्रादुर्भवेयुः अयं भावः द्विविधा नित्यसिद्धरूपाः गोविन्दप्रियजनाः एके विमलोत्कर्षणीत्याद्याः शक्तयः तथाष्टासु दलेषु पूज्यमानाः रुक्मिणीप्रभृतयः तथा कृष्णैकपरायण्यः साध्य नामदेवे विशेषादयश्च सदा चिच्छक्तिविलासरूपे तत्परमैश्वर्ये वर्त्तन्ते श्रीभगवदिच्छया कदाचिदेव व्रजे तद्वासिनामदृश्यतया प्रादुर्भवेयुः अन्ये श्रीदामाद्यास्तथा व्रजदेवीप्रभृतयश्च एते लीलाशक्तिमाधुरीरूपे व्रजविलासे सदा विराजन्ते एवं साधनसिद्धाश्रयो द्विविधाः ये मधुरैश्वर्यशालिनीं सार्वदिकतत्सङ्गतिमिच्छतः चिच्छक्तिप्रधानत्वेन गोविन्दमुपासते ते व्रजे प्रायः प्रकटा न स्युः किन्तु परमैश्वर्य एव सदा वर्तन्ते येतु लीलाशक्तिप्रधानत्वेन ते खलु व्रज एव सम्भवन्तस्तेन सह सदा क्रीडन्ति तत्राप्यावाऽस्तु इति ते परोक्षत्वेन वर्त्तमाना विच्छक्ति-

श्रीसनातनजीवगोस्वामिकृतबृहत्तोषिणी।

सम्बान्धिनः ततः कादाचित्कबहिः क्रीडानन्तरं त्वयि त्वदै-श्वर्ये परमैश्वर्यस्य तादात्म्यापन्नत्वात् त्वयीत्युक्तम् निलिल्युः निलीनाः स्युरित्यर्थः। तत्र दृष्टान्तः जलबुद्बुदवत् जल बुद्बुदा इव व्रजे तदा तेषामदृश्यत्वात् इमे प्रत्ययत्वेन वर्त्त-मानाः व्रजवासिजनाः मधु मधुरं यथा स्यात्तथात्वमिति लीनाः कथम्भूते विविधनामगुणैः परमे विविधानि नन्दनन्दन-कर्मगुणोपाधीनि नामानि व्रजेन्द्रनन्दनगोवर्द्धनधरभक्तवात्स-ल्यादीनि विविधा गुणाः सौन्दर्यमाधुर्यवैदग्धीप्रियम्वदता-दयः तैः परमे सर्वोत्तमे प्रेम्णा त्वन्नामरूपगुणादिषु निलीना वर्त्तन्त इत्यर्थः। सरित इवार्णव इति दृष्टान्तेन प्रेष्ठे प्रेयसी-भावेन मज्जनं बोधितम् कथम्भूताः अशेषरसाः सम्पूर्ण-रसास्वादनपरा इत्यर्थः॥ द॥

प्रियजनप्रसङ्गेन दीक्षितपत्नीनामपि भावमाहुः—नृष्विति। पुंसु पतिष्विति यावत् भ्रमं त्वयि मनुष्यदृष्टिरूपां भ्रान्ति सुदामस्यर्थं ज्ञात्वा भवे प्रपञ्चमध्ये सुधियो याज्ञिकभार्याः त्वयि भावं दधति कथम्भूतं भावम्? अनुभवम्। अनुभवमेव प्रकृष्टः स्वाभीष्टसाधकत्वेन श्रेष्ठो भवो जन्म तस्मात्तथाभूतं ननु दिदृक्षवो व्रजमथ कंसाद्भीता न चाचलन् इति विप्राणा-मपि मयि भक्तिर्जातैव ननु किमिति ते भ्रान्ता इत्युच्यते इत्याशङ्क्याहुः—कथमिति। अनु वर्त्ततां तवानुवृत्तिं कुर्वन्तीं जनानां भवभयं भवात् कालाग्निरुद्रादपि भयं कथं यद्यस्मात् तव भ्रुकुटिर्मन्युरूपो हरः त्रिनेमिः त्रिनेत्र इत्यर्थः। अभव-च्छरणेषु तवाभक्तेष्वेव मुहुः प्रतिप्रलयं भयं सृजति। भक्तास्तु प्रलयेपि निर्भयाः भक्त्यभावात्ते कंसाद्भीता इति भावः॥ ध॥

कर्मनिष्ठानामभक्तानां प्रसङ्गेन केवलशुष्कज्ञाने योगिनोपि निन्दन्ति—विजितेति। अज हे जीववज्जन्मरहित! गुरोः ब्रह्मादीनामप्युपदेशकस्य तव “तथा हि तापनी श्रुतिः असा-वत वरतं मेध्यतः स्तुतः परार्द्धान्ते सोऽवबुध्यत गोपवेषो मे पुरस्तादाविर्बभूव ततः प्रणतो मयाऽनुकूलेन हृदा मह्य-मष्टादशार्णं स्वरूपं सृष्टये दत्त्वाऽन्तर्हित इति चरणपद्मं सम वहाय सम्यग्दूरतस्त्यक्त्वा ये योगिनः प्रत्याहारप्राणायामादिना विजितैरपि इन्द्रियप्राणैर्मनोवशीकर्त्तुं प्रयत्नं कुर्वन्ति ते साधनक्लिष्टाः सन्तः इह संसारसमुद्रे व्यसनशतान्विताः वर्त्तन्ते तथाप्युक्तं तेषामसौ क्लेशल एव शिष्यन्ते नान्यत् इत्यादि शेष सुसङ्गतमेव॥ न॥

व्रजवासिनां गुणवर्णने तावदतृप्ताः पुनरपि तेषामेव भाव-माहुः—स्वजनेति। त्वयि आत्मनि प्रिये यद्वा आत्मानि स्व-विषये व्रजवासिजनविषये इत्यर्थः। सर्वरसे सम्पूर्णपरमा-नन्दरूपे सति विराजमाने नृणां व्रजवासिनां स्वजनसुता-त्मदारधनधामेति द्वन्द्वैकत्वं किं श्रूयते किं करोतीत्यर्थः। अपि तु न किञ्चिदपि कथम्भूतं धराश्च गिरयो गोष्ठाश्रयण-नन्दीश्वरादयः असवश्च प्राणाः रथाश्च श्रेष्ठशकटानि तैः विशिष्टम् एषामात्मार्थमेतैः कृत्यं नास्ति किन्तु भवदर्थमेव तत् सर्वमिति भावः। तथा ब्रह्मणाप्युक्तं “यद्धामार्थसुहृत-प्रियात्मतनयप्राणाशयास्त्वत्कृते” इति। इति एवंविधं त्वद्व्रजजनं सत् सत्यमजानतो जनान् कोऽन्यर्थः सुखयति त्वद्व्रजजनमन्त-रेणान्यत् किमपि सुखं नास्ति विषयसुखस्य प्रान्तविरसत्वान्न-श्वरत्वाच्चेत्यर्थः॥ प॥

अहाहुःत्वमेव लभन्त इत्युक्तम् त्वद्भक्ताः त्वन्नित्यप्रिया-स्पदं परमप्रेमवर्द्धनं माथुरमण्डलमेव सेवन्त इत्याहुः—भुवीति। भुवि पुरुपुण्यतीर्थसदनानि विश्रान्त्यादीनि सद-नानि च श्रीकृष्णजन्मगृहादीनि यद्वा पुरु सर्वतोधिकं भवद्भजनलक्षणं पुण्यं तस्मात्तत्र पुरुपुण्यं तच्च तत्तीर्थं च मथुराख्यं तथा च पाद्मे—

“अन्येषु पुण्यतीर्थेषु मुक्तिरेव महाफलम्।
मुक्तेः प्रार्थ्या हरेर्भक्तिर्मथुरायान्तु लभ्यते॥ इति

तत्र सदनानि आश्रमान् ते प्रसिद्धाः ऋषयः श्रीनारदादयः तत् भवत्पदाम्बुजहृदयः सदा हृदि भवत्पादपद्ममनुभवन्तोपि उपासते इत्युत्तरेणान्वयः इतिमथुराया माधुरी दर्शिता तथा च माथुरखण्डे नारदवाक्यम्—

“तस्मिन् वृन्दावने पुण्यं गोविन्दस्य निकेतनम्।
तत्सेवकसमाकीर्णं तत्रैव स्थीयते मया॥ इति

किंवा पुरुपुण्यः कृतपुण्यपुञ्जाः महाभाग्यवन्तः श्रीनन्दव्रजौ-कसो गोपादयः तथाचात्रैवोक्तम् “साकं विजह्रुः कृतपुण्य-पुञ्जाः महाभाग्यवन्तः श्रीनन्दव्रजौकसाम्” इत्यादि। तेषां तीर्थानि गोकुलजलपानार्थे श्रीयमुनाघट्टान् सदनानि च श्रीव्रजेन्द्र-गृहादीनि यतः भवतः पदं स्थानं मथुराख्यं तदेव मण्डलाकार-तया सकलतापहरत्वादिना च पद्मसादृश्यादम्बुजं मथुरा-मण्डलस्य पद्माकारत्वेन शास्त्रे कथितत्वात् तस्मिन् जितभावो येषां ते कथम्भूताः आत्मभिदाक्लिन्नजलाः आत्मभिदस्तव अङ्घ्र्यो-र्जलं येषु ते तादृशानां तु नेदं चित्रं किन्तु त्वयि व्रजेन्द्र-नन्दने ये सकृदपि मनो दधति कथम्भूते आत्मनि नित्य-सुखं गमोधायकरूपे स्वात्मन् विषये नित्यसुखे इति व्यधि-करणे सप्तम्यां स्वात्मानं प्रति स्मृतिमात्रेण नित्यपरमानन्द-प्रदे तेपि पाद्मकार्तिकमाहात्म्योक्ताः सत्यव्रतादयः पुरुषसार-हरावसथान्नोपासने किन्तु वृन्दावनमेव ये त्वदेकभक्ताः याज्ञिक-द्विजादयस्त एव गृहासक्ता इति भावः॥ फ॥

ननु—

“माथुरा मम पूज्या हि माथुरा मम वल्लभाः।
माथुरे परितुष्टे वै तुष्टोहं नात्र संशयः”॥

इति श्रीमहावराहदेवोक्त्या माथुराणां मद्भक्तत्वानुकूलोत्पन्नं दीक्षितब्राह्मणकुलं भक्तमेवेति चेदुच्यते तदाकर्ण्यतामित्याहुः—सत इति। इदं दीक्षितद्विजकुलं सत् मद्भक्तमाथुरकुलोत्पन्न-त्वात् यथा मद्भक्तपराशरकुलोत्पन्नः शुक इति चेत् तर्हि तर्कहतं युक्तिशून्यमिदं व्यभिचारादित्याहुः व्यभिचरति कचि-दिति। कर्णादौ व्यभिचारः मत्प्रियसुग्रीवजनकात् परम-भक्तात् सूर्यादुत्पन्नस्यापि कर्णस्य दुष्टत्वदर्शनात् कचित् सदुत्पन्नस्य मृषात्वं च दृश्यत इति आहुः—कचिदिति। अन्तर्निगूढदुष्टभाव एव बहिः सर्वतः साधुताप्रकटनेन सर्वैः साधुत्वेन ज्ञातोपि मृषा साधुरेव साधुतायाः कृत्रिमत्वात् यथा द्वैपायनादुत्पन्नोपि धृतराष्ट्रः ननु ईश्वरस्य विधि कोनु विधुनोत्यन्यथा पुमान्। भूमेर्भारावताराय यदोः कुले इति तदुक्तेः कथमभक्तो धृतराष्ट्र इत्यत आहुः—न तथेति। यथा श्रीविदुरादयस्त्वयि भक्तास्तथा नायं निगूढधूर्त्तभाव-

श्रीसनातनजीवगोस्वामिकृतबृहत्तोषिणी।

स्वात्तदुक्तेः ननु कर्णस्य सूर्योत्पन्नत्वेपि सहस्रकवचाख्यदैत्य-त्वाद्युक्तमेव दुष्टत्वं दीक्षितानान्तु विप्रत्वात् कथं तद्दुष्टता-मित्यत आहुः—उभययुगिति। दीक्षितेषु उभयस्य खलत्वस्य ब्राह्मण्यस्य च युक् योगो वर्त्तते कंसस्य हिताशंसनात् तद्वत-वृत्तिभोगाच्चेत्यर्थः। ननु तर्हि "कृताञ्जलिपुटान् विप्रान् दण्डवत् पतिता भुवि" इति मत्प्रियैर्गोपैः कथं तादृशास्तथा प्रणतास्तत्राहुः—व्यवहृतय इति। दुष्टेष्वपि विप्रेषु अयमन्ध-परम्परयागततादृशप्रवाहन्यायेन विकल्पा विविधकल्पना व्यवहारायैव न तु परमार्थाय खलेष्वपि ते ब्राह्मणजातित्वाद्गोपै-स्तथा व्यवहृतमित्यर्थः। ननु श्रुत्या तत्सुकृतस्याक्षयत्व-प्रतिपादनात् अक्षयस्य चास्य मल्लोकानिर्विशेष लोकप्रापकत्वात् ते खलु निन्दां नार्हन्तीत्यत आहुः-भ्रमयतीति। शेषं समा-नम्॥ व॥

ननु दीक्षितविप्रादय एव मुहुर्निन्दन्तु-ननु कथं कल-भाषणमारभ्य मच्चिन्तैकनिष्ठौ सुष्ठु दुरात्मानौ शिशुपालदन्त-वक्त्रौ इत्याशङ्क्य ताभ्यां कृतं दौरात्म्यं वास्तवं न स्यादि-त्याहुः—न यदिति। यद्यस्मात् इदं दौरात्म्यम् अग्रे जयविजय-भावे नासीत् तथा निधनात् पतत् क्षत्रदेहनाशादनु च न भविष्यति। पार्षदत्वप्राप्तेः अतोऽन्तरा मध्ये एव तयोः दौरात्म्यम् एकरसे कदाप्यव्यभिचारिपरमानुग्रहैकरसे त्वयि मृषा विभातीति मितं ज्ञातम् अतः द्रविणजातयः स्वर्णरूप्या-दयस्तासां विकल्पाः कटककुण्डलादयस्तेषां पथिभिः प्रकारैः यथा तत्र आद्यन्तवर्त्तिस्वर्णादिकमेव सत्यं न तु कुण्डलादि तथा तयोर्भक्तिरेव स्थायिनी ननु दौरात्म्यमित्यर्थः। वितथं मनोविलासमात्रं ब्रह्मशापेन कृत्रिमतया मनसि प्रकटितं दौरात्म्यं त्वयि द्वेषरूपम् अबुधाः शाल्वादयस्तु तत्सुहृदः सत्य-मिति जानन्ति॥ भ॥

ननु भवतु तयोः संसारित्वस्य मिथ्यात्वं निद्रादिरूपां प्रापञ्चिकजीवावस्थां भजतो मे जीवनिर्विशेषत्वेन कथं संसारित्वाभाव इत्याशङ्क्य साधारणजीवानामेव दुःखभरस्या-विच्छेदं वर्णयन्त्यः श्री भगवतो नित्यनिर्भरपरमानन्दास्वाद-माहुः—स इति। औघः जातावेकवचनम् अजया अविद्यया अजां अजाकार्यभूतां निद्रां दुःखमयस्वप्नं यद्यस्मात् तत्रैव स्वाप्निकविषयान् सेवमानः स्वरूपतां सुरनरतिर्यक्समान-रूपतां भजति तदनु कदाचित् मृत्युं मृत्युतुल्यां सुषुप्ति-मपि भजन्ति ततश्च अपेतभगः सर्वथा विस्मृत—निजसाध्यसाधनभावः स्यात् इतिघोरसंसारधर्ममज्जनेन सदा दुःखमेवानुभवेदित्युक्तं भवति त्वं पुनस्तां निद्रां जहासि दूरतः परिहरसि श्रीभगवतो जीववद्रजःकार्यभूता निद्रा नास्त्येव किन्तु विशेषविलासभूता सा योगनिद्रेषु ते तथापि तच्छब्देन तस्याः परामर्शो बहिर्वृत्त्यभावेन द्वयोः साम्यात् योगनिद्रायामपि आत्तभगः प्रकटितपरमैश्वर्यः तथाभूताया अपि परिहारः सर्वासु रात्रिषु रासादिमहालीलास्वभिनिवेशेन निद्राया अवसराभावात् तथा तादृशबहिर्लीलास्वभिनिवेशेन निद्राया अवसराभावात् तथा तादृशबहिर्लीलाया गौणत्वात् अतस्तमेवाह महसि रासादिरूपे महोत्सवे अपरिमेयभगः स न युगपत् सर्वव्रजसुन्दरीगणपार्श्ववर्त्तित्वादिप्रकटितपूर्वाणां सर्वगुणरूपमाधुरीविशेषाणां प्राकट्याच्च परमाद्भुतस्वरूपो विराजसे कथम्भूते अष्टगुणिते अष्टाभिर्मुख्यभूताभिः प्रेय-सीभिः श्रीराधादिभिर्गुणिते परिशीलिते॥ म॥

साधारण्येनाविद्याभाजां दुःखमुक्त्वा तत्रैव दाम्भिकानां गतिमाहुः—यदिति। यतयः परित्यक्तदारादिका अपि यदि हृदि स्थिताः कामस्य मन्मथस्य जटाः दुस्संस्कारान् नोन्मूलयन्ति गोकुललीलाश्रवणकीर्त्तनरूपया त्वद्भक्त्या न निरस्यन्ति किन्तु—

"नैतत् समाचरे जातु मनसापि ह्यनीश्वरः।
विनश्यत्याचरन्मौढ्याद्यथा रुद्रोऽब्धिजं विषम्॥

इत्यादिवाक्यमनाद्रियमाणाः प्रत्युत वयं श्रीगोपालवासिलैपाः कथमतिक्षुद्रकर्मणानेन बाधिता भवेमेति वदन्तः स्वच्छन्दं परदारसेवां कुर्वतीत्यर्थः। ततस्तेषामसतां त्वं साधारण्येन सर्वा-न्तर्यामित्वात् हृदि गतोपि दुरधिगमः दुर्बोधः यद्वा हृदि वृन्दावने गतोपि—

"वत्सैर्वत्सतरीभिश्च सरोमो बालकैर्वृतः।
वृन्दावनान्तरगतः सदा क्रीडति माधवः"॥

इतिस्कान्दमथुराखण्डोक्तेः सदा वृन्दावने विहरत्तया स्थितोपि दुरधिगमः दुर्बोधः परमाभक्त्योपहतान्तःकरणत्वात् प्रतीते-रविषयस्त्वमित्यर्थः। अस्मृतकण्ठे मणिरित्यनेन सर्वथैवास्म-रणात् त्वद्वर्त्तवार्त्तोप्येषां दरयसीति भ्रमसुखाकृष्टानाकृष्या-जैश्च सुखाकृष्टानाक्रोशति। असुतृपेति। असुपदस्येन्द्रि-यवाचित्वेप्यत्र दुर्वशत्वेन मुख्यत्वाज्जिह्वाया ग्रहणं—

"तावज्जितेन्द्रियो न स्याद्विजितान्येन्द्रियः पुमान्।
न जयेद्रसनं यावज्जितं सर्वं जिते रसे"॥ इत्युक्तेः

भगवन्! हे प्रजाविष्कृतविचित्रमधुरलीलैश्वर्यतदनादरेणैव जिह्वातर्पणार्थमेव प्रकटितदम्भयोगानां उभयतः परस्मिन् लोके इह च दुःखमेव तदेवाहुः—अनपगतान्तकात् उपस्थितकृता-न्तात् परत्र महानरकदुःखं स्वधर्मत्यागेन दम्भाचरणाच्च किञ्च भवतः भवात् संसारात् कथम्भूतात् अनधिरूढपदात् अज्ञातदुःखमात्रस्वरूपात् तेन जिह्वालौल्येन साप्ताहिकपाक्षिक-मासिकनिजसमाधिसूचनचातुर्योत्पन्नया प्रतिष्ठया द्वारभूतया तथा योगमठिकाध्यानगुहाव्याजपूजादिच्छलेन च धना-र्जने परमसङ्कोपनेन तद्भोगेच इहापि महद्दुःखमेवे-त्यर्थः॥ य॥

अभक्तानामुक्त्वा भक्तानां वर्णनस्य श्रीभगवत्स्तुतौ पर्य-वसानाच्च सिद्धान् साधकांश्च भक्तान् वर्णयन्ति—त्वदवगम-मीति। स्वामात्मकोटेरपि प्रेष्ठं जानन् प्रेमभरेण त्वयि कन्दर्प-वृन्दानन्दपादनखसौन्दर्यरसादिमधुरविविधलीलाशालिनि मग्न-चित्त इत्यर्थः। भवदाविर्भूतपुण्यपापयोः फलरूपसुखदुःख-सम्बन्धाच्च वेत्ति तदा प्रेमाब्धिमज्जने देहिनामन्येषां कर्म-पराणां भो इदं कुरु भो इदं मा कृथाः इत्यादि लक्षणाः गिरश्च न वेत्ति त्वदनुचरातिरिक्तसम्वेदनाभावात् इति सिद्धा-नुक्त्वा साधकानाहुः, अनुयुगमिति। गुणाः सौन्दर्यमाधुर्य-भक्तवात्सल्यवैदग्ध्यादयः तैः महिते प्रतियुगमनुवर्त्तमाना-या गीतपरम्परा गोविन्दादितुल्या नामावली तया. मनुजैः प्रत्यहं श्रवणेषु भृतः सन् मोक्षस्य प्रभुरपि त्वं यतः मीदतः दधीति शेषः श्रवणेन्द्रियद्वारा हृदि बद्ध इत्यर्थः॥ र॥

श्रीसनातनजीवगोस्वामिकृतबृहत्तोषिणी ।

भक्तानामेवम्भूतोपि त्वं ब्रह्मलोकाद्यधीश्वराणामप्यविज्ञातवीर्योसीति श्रीभगवन्महिमवर्णनेनैवोपसंहरन्ति । द्युपतय इति । द्युपतयो ब्रह्मरुद्रशक्रादयोपि तवान्तं नैव ययुः वत्सपालादिहरणाद्यवसरे रासक्रीडाद्युत्सवे च तव वैभवान्तं न प्रापुरित्यर्थः अनन्ततया तासां त्वन्मूर्त्तीनां पार्श्वे युगपद्ब्रह्माण्डकोटिदर्शनात् तथा कोटिसङ्ख्यव्रजसुन्दरीणां प्रत्येकं पार्श्ववर्त्तित्वेन च त्वद्वैभवस्यान्ताभावेन त्वमपि तदानीमात्मवैभवं चिद्विलासपर्यवसानं न लब्धवानसीति तस्य तव अन्तरा त्वल्लोमविवराणां मध्ये सावरणा ब्रह्माण्डसमूहाः द्विपरार्द्धकालचक्रेण सह घूर्णन्ति तथा ब्रह्मणाप्युक्तम् "क्वेदृग्विधाविगणिताण्डपराणुचर्या वाताध्वरोमविवरस्य" इति । अतोऽपरिच्छिन्नत्वात् ज्ञानकाण्डश्रुतयो ऽतन्निरसनेन त्वयि फलन्ति लक्षणया त्वयि पर्यवस्यन्ति वयन्तु प्रेमनिष्ठत्वात्त्वदेकपरायणतया भवन्निधनास्तन्मात्रमग्नात्मानः त्वां विनाऽन्यत्र जानीम इत्यर्थः । तस्मादस्मत्कृपया त्वं जानीहीति ॥ ४१ ॥

इति एवमीदृशा वा एते पूर्वोक्ताः श्रीसनकादयः एतदिति पाठे पाठान्तरे एतच्छ्रुत्युक्तं आत्मानुशासनं जीवहितोपदेशं आ सम्यक् श्रुत्वा तथाऽत एवात्मनो हरेर्गतिं ज्ञात्वा सिद्धा अपि योगेन किंवा पूर्णमनोरथाः सन्तः ॥ ४२ ॥

इति अयं रसः मधुरसारभागः सम्यगुद्धृतः प्रकटितः आकृष्य गृहीतो वा यतः पूर्वजातैः सर्वेभ्यो श्रीब्रह्मणः प्रादुर्भूतैः सर्वज्येष्ठैः श्रीभगवदवतारैरित्यर्थः । अतो व्योमयानैः सर्वभासकत्वा चरद्भिरपि किं वा सिद्धैः अत एव महात्मभिः उदारमतिभिः चतुर्भिस्त्वन्तु हे ब्रह्मदायादेति ब्रह्मपुत्रत्वेन तथापि तैः साम्यादत्र योग्यताऽस्तीति भावः । धारयन् हृदि मुञ्च कामं यथेच्छं गां चर पृथ्व्यां भ्रमेत्यर्थः । किमर्थम्? नृणां मनुष्याणां कामा विषयभोगादीच्छास्तासां वर्जनं निर्वाणं पाठान्तरेऽपि स एवार्थः । एतच्छ्रवणेन श्रीभगवद्भक्त्युत्पत्त्या नृणां कामा विनश्यन्त्विति एतदर्थमित्यर्थः । चशब्दोक्तोयं तेभ्यो विशेषः एवमित्थमेतद्वा आदिष्टं प्रयोजनं गुरुणेति पूर्वत एव तस्य श्रीनारायणशिष्यत्वात् किं वाऽधुना तादृशोपदेशात् श्रद्धया गृहीत्वा ओमित्यादरेण स्वीकृत्य यद्वा-उपदिष्टमात्मानुशासनं शिक्षित्वा यत आत्मवान् बुद्धिमान् किञ्च मुनिर्मननशीलः यतो धीरव्रतः अतः श्रुतधरः पूर्णश्च सन् हे राजन्निति परमगुरुत्वेनात्मनोपि धन्यतां सूचयति यद्वा राजमानस्सन् अभ्यर्त्तव्याख्यानम् ॥ ४३—४५ ॥

श्रीकृष्णबुद्ध्या माहात्म्यविशेषसम्मत्या श्रीनारायणं नितरां प्रीणयन्नमति—नम इति । प्रत्यक्षेपि परोक्षोक्तिरत्यन्तगौरवात् यद्वा अवतारी श्रीकृष्णं प्रति नत्यैव तस्य सा सम्पद्यते सन्तोषश्चेति श्रीकृष्णमेव भक्त्या प्रणमति—भक्तिः साक्षात् परमेश्वराय तत्रापि कृष्णाय निजैश्वर्यैश्वर्यप्रकटनेन सर्वचित्ताकर्षकाय अत एवामलकीर्त्तये । भगवत्त्वमेवाह—य इति सर्वभूतानामित्यधिकारापेक्षा निरस्ता अभवाय संसारदुःखनिवृत्तये कलाः रूपाणि नारायणाद्यवतारानित्यर्थः । कथम्भूताः उशतीः जगन्मङ्गलाः इति सुखप्रापकत्वादिकं चोक्तम् यद्वा अमलकीर्त्तित्वमेवाह—य इति । कलाः रासक्रीडादिवैदग्धीधर्मं पुष्णाति ॥ ४६ ॥

इत्येवमामन्त्र्य पृष्ट्वा अनुज्ञां प्रार्थ्येत्यर्थः । पाठान्तरं स्पष्टं तस्य शिष्यान् कलापग्रामवासिप्रमुखान् श्रीब्रह्मपुत्रेणापि तेन तेषामामन्त्रणे हेतुः महात्मनः तदेकभक्तिपरानित्यर्थः । ततः तत्पश्चादेवेति परमो विनय उक्तः यद्वा तिष्ठेत् श्रीनारद इति शेषः । अन्यत्तैर्व्याख्यातं यद्वा साक्षात् प्रकटं सुप्रसिद्धमाश्रमं यद्व्याख्यं तत्सम्बन्धेनैव श्रीबादरायणस्य च्यातः ॥ ४७ ॥

भगवता श्रीद्वैपायनेन भगवच्छब्देन तु तस्यापि तद्विज्ञानादिसामर्थ्यं सूचितं तस्मै भगवते इति तस्य श्रीनारदशिष्यतापि सूचिता ॥ ४८ ॥

नः अस्मान् प्रति यः प्रश्नः कृतः इत्यत्र एतद्वर्णितं पाठान्तरेपि तत्तु किमित्यपेक्षायामाह—यथेति । मनश्चरेत् श्रुतिद्वारा चित्तं प्रविशतीत्यर्थः । यद्वा मानयति ज्ञापयतीति मनो वेदः हे राजन्निति ईदृशं प्रश्नं कर्त्तुं त्वमेवार्हसि एतदुत्तरपात्रं च त्वमेवेति भावः । तस्य तादृशप्रश्नविषयत्वेनात्मनो बहुमानाच्च इति बहुत्वमिति ॥ ४९ ॥

अतः सर्वथा श्रीभगवन्तं प्रेम्णा भजेदिति सर्वश्रुतिस्तुतिफलितमित्यशेषसमाम्नायस्याद्युक्तं निरूपयन् कृपाभरेण भक्त्युद्रेकेण वा लोकान् उपदिशति—य इति । अस्योत्प्रेक्षक इत्यादिना जगत्कारणत्वं यो ऽव्यक्तजीवेश्वरः इति परमेश्वरत्वं च सद्वृत्त्यादिना सहजकारुण्यं यमित्यादिना भक्तवात्सल्यं कैवल्याय मोक्षसुखाय निरस्ता योनिर्जीवानामविद्या येन तं यद्वा केवला एकान्तिनः तेषां भावः कैवल्यं प्रेमभक्तिस्तस्य निरस्ताम् अन्तरहितां सदा प्रकाशमानां कारणं परमवेति परमपददातृत्वादिकं चोक्तं हरिमिति परमसौन्दर्यादिना मनोहरत्वमपि सूचितम् एषां यथोत्तरं ज्ञानहेतुत्वे श्रेष्ठ्यम् अतोऽजस्रं ध्यायेत् यद्वा प्रेम्णा भजेदित्यर्थः । प्रेमभजनस्यैव सदा सन्तोषवकारित्वात् किंवा सदा ध्यानेनैव प्रेमसम्पत्त्या तस्यैव परमापेक्षत्वादिति ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीसनातनजीवगोस्वामिकृत-
बृहत्तोषिण्यां टीकायां
सप्ताशीति-
तमोऽध्यायः ॥ ८७ ॥
श्रीकृष्णाय नमः ॥ हरिः ॐ ।

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

योऽस्योत्प्रेक्षकः आदिमध्यनिधन इति त्रिष्वपि कालेषु परमसाक्षित्वमुक्तं योऽव्यक्तजीवेश्वर इति कारणान्तर्यामित्वं तन्निजशक्तिद्वयद्वारेव चेतना(चेतन)सर्गोपादानत्वं च यः सृष्ट्वेमिति सृष्ट्युपलक्षितत्वेन सर्गस्थितिप्रलयकर्तृत्वम् अनुप्रविश्यति प्रवेशलीलासमष्ट्यन्तर्यामित्वं चकेयम आविणा ब्रह्मणा द्वारभूतेन पुरो व्यष्टिशरीराणि च चक्रे इति विसर्गकर्तृत्वं ताः शास्तीति व्यष्ट्यन्तर्यामित्वं तदेवं मायावैभवप्रवर्त्तकत्वेन तत्र स्वरूपशक्तिं दर्शयित्वा तदुच्छेदकत्वेनापि दर्शयति यं सम्पद्येति अजां मायावृत्तिमविद्याम् अनुशयी सोपाधिर्जीव इति मोक्षलीलादर्शिता तदेवं यथाक्रमतटकलक्षणेन स्वरूपशक्तिवैभवतया तं व्यज्य साक्षादपि व्यञ्जयति दमिति तत्र हरिमिति

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रसिद्धनाम्ना प्रसिद्धस्वरूपत्वमभिहितं यं सम्पद्येत्यादौ स्थिते स्वतस्तु सुतरामेव कैवल्येन शुद्धशक्तिवैभवैकाश्रयशुद्धस्वरूपत्वेन निरस्ता नित्यमेव दूरे क्षिप्ता योनिर्जगत्कारणं माया यस्मात्तमिति च एवमेवम्भूतः स एव परमशुद्धस्वरूपत्वात्तादृशपरमशक्तित्वाज्जीवहितार्थतत्तत्कर्तृत्वावगतपरमकारुण्यत्वात् ध्यानादिभक्तियोग्य इति वाक्यार्थः अत्र मायावैभवमनूद्य निरसनात् शुद्धशक्तिविलासवैभवपुरःसरश्रीभगवत्स्थापनात्तस्य च ध्यानोपलक्षितभक्तिसाध्यत्वव्यञ्जनाद्ध्यानादेश्च वेदोपदेशसापेक्षत्वात् प्राचीनस्तवेनैकार्थ्यं दर्शितं तत्तद्विशेषेण च द्रष्टव्यं एतत्तात्पर्यैकमेव जन्माद्यस्य यत इत्यादिकम् अत्र सर्गो विसर्गश्चेत्यादिकं चेति ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्यां
सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

आत्मेक्षकः स्वयमेवात्मनां साक्षात्कर्ता यद्वा आत्मनां शुभाशुभसाक्षी ऋषिणा चतुर्मुखेन सह संहिताश्चक्रे प्रावर्तयत् अनुशयी कर्मवश्यः कैवल्यनिरस्तयोनिं संसारिणां मोक्षप्रदानेन निरस्तः योनिं निरस्तयोनिप्रभवदुःखं वितीर्य पर्यायं कर्हिचित् कदाचित् ॥ ५० ॥

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अशेषसमाम्नायपुराणोपनिषद्रस इत्युक्तं कोऽसौ समाम्नायादीनां रसः यः श्रुतिगीत्या समुद्धृत इत्यपेक्षायाम्—

आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥

इत्युक्तरीत्या जगदुदयविभवलयलीलः सर्वान्तरात्मा बन्धमोक्षदो भगवानुपास्य इत्येष एवेति वक्तुं स्रष्टृत्वाद्युपयुक्तगुणैर्भगवन्तं विशिंषंस्तद्ध्यानं विधत्ते योऽस्येति अस्य जगतः आदिमध्यनिधने सृष्टिस्थितिलये निमित्ते उत्प्रेक्षकः "तदैक्षत बहुस्याम इत्युक्तविधेक्षिता यच्छब्दानां कैवल्यनिरस्तयोनिमित्यनेन सम्बन्धः यश्च अव्यक्तजीवयोः प्रकृतिपुरुषयोः कारणावस्थयोरीश्वरः अन्तः प्रविश्य नियन्ता अनेन कारणावस्थायां सूक्ष्मचिदचिद्वैशिष्ट्य तस्यैवोपादानत्वं तदुपयुक्तं सर्वशक्तित्वञ्च फलितम् उत्प्रेक्षक इत्यनेन निमित्तत्वं तदुपयुक्तं सार्वज्ञ्यञ्च यश्च इदं महदादिपृथिव्यन्तसमष्टितत्त्वजातं सृष्ट्वा ऋषिणा चतुर्मुखाख्यजीवेनानुप्रविश्य जीवद्वारा अनुप्रविष्टवानित्यर्थः । पुरः शरीराणि चक्रे निर्ममे 'ततस्ताः पुरः शास्ति नियमयति पुरुशब्दोऽत्र सजीवदेवादिशरीरपरः ऋषिणा चक्रे पुरः संहिता इतिपाठान्तरं तदा पुरः प्रथमं ऋषिणा चतुर्मुखेन संहिताः वेदसंहिताश्चक्रे प्रावर्तयदित्यर्थः । अनेन हितकृत्त्वम् उक्तं शास्त्रप्रवर्तनं हि हितार्थम् अनुशयो भुक्तावशिष्टं कर्म सोऽस्यास्तीत्यनुशयी कर्मवश्यो जीवः यं सम्पद्याजां जहाति प्रकृतिसम्बन्धं त्यजति आविर्भूतगुणाष्टको भवति मुक्तो भवतीति यावत् तथाच श्रूयते "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति तत्र दृष्टान्तः सुप्तः कुलायं यथेति यथा शकुनिर्नीडे कञ्चित्कालं सुप्तः तद्विहायोड्डीयते तद्वदजायां स्थितोऽनुशयी जीवो यं सम्पद्य तां जहातीत्यर्थः । कैवल्यनिरस्तयोनिः संसारिणां मोक्षप्रदानेन निरस्तायोनिप्रभवदुःखं येन तं न विद्यते भयं यस्मात्तं हरिमाश्रितार्तिहरं तमजस्रं नित्यं ध्यायेदिति ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां
सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

समस्तवेदस्तुत्यर्थं सङ्गृह्यानुस्मारयति—योऽस्यात्मेक्षक इति । तं हरिं अजस्रं ध्यायेदिति तं कम् ? यः अस्य विश्वस्य आदिमध्यनिधने उत्पत्तिस्थितिसंहारेषु आत्मेक्षकः स्वयमेवात्मना साक्षात्कर्त्ता निमित्तान्तरानपेक्षः "तदैक्षत तत्तेजोऽसृजत" इत्यादिश्रुतेः । यद्वा आत्मेक्षकः आत्मनां शुभाशुभसाक्षी तथाचोक्तमष्टमे गजेन्द्रेण—

क्षेत्रज्ञाय नमस्तुभ्यं सर्वाध्यक्षाय साक्षिणे ।
पुरुषायात्ममूलाय मूलप्रकृतये नमः ॥ इति

ननु प्रकृतिपुरुषयोः परस्पराध्यासाज्जगदुत्पत्तिं वदन्ति साङ्ख्या इति तत्राह—योऽव्यक्तजीवेश्वरः प्रकृतिपुरुषयोरपि नियन्ता हेत्वन्तरमाह यः ऋषिणा चतुर्मुखेन सह पुरः पूर्वं संहिताश्चक्रे प्रावर्तयदित्यर्थः । ननु अन्येपि ध्येया उक्ताः किमर्थं हरिरेव ध्येय इत्यत आह यं सम्पद्य ज्ञात्वा गत्यर्थास्ते ज्ञानार्था इत्युक्तेः अथवा यं सम्पद्य शरणं प्राप्य अनुशयी कर्मवश्यो जीवः अजां स्थूलसूक्ष्मरूपां प्रकृतिं जहाति त्यजति कथं सुप्तः कुलायं यथेति यथा सुषुप्तौ जाग्रत्स्वप्नानुभूतसुखदुःखाभावादानन्दप्राप्तिस्तद्वदित्यर्थः । तदेवाह कैवल्यनिरस्तयोनिमिति संसारिणां मोक्षप्रदानेन निरस्तायोनिः संसारो येन तमिति । नहि अन्यस्य कस्यचिदपि मोक्षप्रदाने शक्तिरस्ति कुतः इति चेत्तेषामविद्यान्तर्गतत्वात् तथा श्रीशौनकेनोक्तम्—

आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः ।
प्राणिनः कर्मजनितसंसारवशवर्तिनः ।
यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः" ॥ इति

अतः स एव मोक्षप्रदः तदुक्तं देवैर्मुचुकुन्दं प्रति—

वरं वृणीष्व भद्रन्ते ऋते कैवल्यमद्य नः ।
एक एवेश्वरस्तस्य भगवान् विष्णुरव्ययः ॥ इति
आलोड्य सर्वशास्त्राणि विचार्यैव पुनः पुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ इति-

श्रीश्रीनिवाससूरिकृततत्त्वदीपिका ।

च व्यासः अतः स एव ध्येयो मोक्षप्रदाताचेति तमेव हि ध्यायेदिति शुकाचार्याभिप्राय इति किञ्चात्र श्रीशुकोक्तयोरुपक्रमोपसंहाररूपयोरपि श्लोकयोस्तत्त्वत्रयमेव प्रतीयते न कचित्तन्मात्रमिति तथाहि उपक्रमे तावत् बुद्धीन्द्रियमनःप्राणानित्यनेन पदेन प्रकृतेः स्वरूपमुक्तं जनानामिति जीवानां स्वरूपं प्रभुरितीश्वरस्य चेति नहि तदितराभावे तस्य प्रभुत्वं सम्भवति उपसंहारेपि योऽव्यक्तजीवेश्वर इत्यनेनैवोक्तमिति अतः सन्मात्रस्य ब्रह्मणः प्रमाणाभावात् चिदचिदीश्वराणां स्वरूपभेदे सामानाधिकरण्येनाप्यभेदे प्रमाणसद्भावाच्च व्यासपराशरादिभिः चिदचिच्छरीरकं तद्विलक्षणमेव परं ब्रह्मोत्यभिमतं यत्तु कचित् श्रुतौ सन्मात्रं श्रूयते तत्तु मायावाजदांश्च व्यवस्थते ब्रह्मणि न पुनः सर्वज्ञत्वसर्वशक्तित्वादिकमपि स्वाभाविकी ज्ञानबलक्रियाचेति श्रवणात् अतः सर्वं निरवद्यमिति—

चिदचिद्व्यापकं ब्रह्म तथाप्यगुणवर्जितम् ।
हेयैर्गुणैश्च राहित्यान्निर्गुणं हि तदुच्यते ॥

अप्रमेयमनाद्यन्तमप्राकृतगुणार्णवम् ।
श्रुतिसूत्रपुराणादौ निश्चितं मुनिभिः स्फुटम् ॥

तथा श्रीभाष्ये समुदाहृतं ।
अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेत् ॥

अहं बुद्ध्या परागर्थात् प्रत्यगर्थो भिद्यते ।
निरस्ताखिलदुःखोऽहमनन्तानन्दभाक् स्वराट् ॥

भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्त्तते ।
अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति ॥

अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ।
मयि नष्टेपि मत्तोन्या काचिद्ज्ञप्तिरवास्थिता ॥

इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति ।
स्वसम्बन्धितया ह्यस्य सत्तापि ज्ञप्तितादि च ॥
स्वसम्बन्धवियोगे तु ज्ञप्तिरेव न सिध्यति ।
छेत्तुश्छेद्यस्य चाभावे छेदनादेरसिद्धिवत् ॥
अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम् ।
विज्ञातारमरे केन विजानीयादिति श्रुतिः ॥
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति च स्मृतिः ।
अत एवेत्यतो नात्मा ज्ञप्तिमात्रमिति स्थितिः ॥
एवं प्रमाणैः प्रबलैर्निरस्तं मायिनिश्चितम् ।
तत्त्वत्रयात्मकं विश्वं चिदचिच्छेषिसंयुतम् ॥
औपाधिकं वदन्त्येके वाञ्छितं तैरिदं जगत् ।
प्रामाणिकैरतो ग्राह्यं वैदिकैर्न कदाचन ॥

इति ॥ ५० ॥

श्रीगोवर्द्धनवासिनो गुणनिधेर्मूर्त्तेर्हि साक्षाद्धरेः
श्रीमद्वेङ्कटदेशिकस्य करुणापीयूषतत्त्वार्थवित् ॥
श्रीरङ्गाधिपपादपद्ममधुपः श्रीनिवासदासाभिधः ।
तेनेयं रचिता हरेर्गुणयुता व्याख्या हि वेदस्तुतेः ॥
वाधूलान्वयक्षीरान्धिचन्द्रमा निष्कलङ्ककः ।
सोयं श्रीवेङ्कटाचार्यः सन्निधत्तां सदा हृदि ॥

[२९८]

इति श्रीमद्भागवते दशमस्कन्धे
श्रीगोवर्द्धनकृतवासश्रीवेङ्कटाचार्यदासदासेन
श्रीनिवासदासेन विरचिता वेदस्तुतिव्याख्यायां
सप्ताशीतितमोऽध्यायः ॥ ८७ ॥
श्रीमते रामानुजाय नमः ॥

———

योगिरामानुजाचार्यकृतसरलाव्याख्या ।

समस्तवेदस्मृत्यर्थं सङ्गृह्यानुस्मारयति—योऽस्येति । यः परमपुरुषः अस्य विश्वस्य आदिमध्यनिधने सृष्टिस्थितिप्रलयेषु करणीयेषु उत्प्रेक्षकः सङ्कल्परूपेक्षणकारी स ऐक्षत बहुस्यां प्रजायेयेति श्रुतेः अनेन जगत्कारणत्वमुक्तं ननु प्रकृतिपुरुषौ हि जगदुपादाननिमित्तकारणीभूतौ कथं भगवतः कारणत्वमुच्यते इतिचेन्न तयोरपि तत एवोद्भूतत्वात् मूलकारणं स एवेत्याह योऽव्यक्तजीवेश्वरः इति अन्तःप्रवेशनियमने दर्शयति यः इदं विश्वं सृष्ट्वा ऋषिणा जीवेनानुप्रविश्य पुरः शरीराणि पृथिव्यादीनि क्षेत्राणि चक्रे यस्य पृथिवीशरीरं यस्यापः शरीरमित्यादिश्रुतेः ततः ता पृथिव्यादिक्षेत्राणि शरीराणीति यावत् शास्ति नियमयति यः पृथिवीमन्तरोयमयतीति श्रुतेः अनुशायी शयान इव शरीरात्मविवेकराहित्येन शरीररूपप्रकृतिपरिष्वक्तो जीवः "अजो ह्येको जुषमाणो नु शेते इतिश्रुतेः यं सम्पद्य यं परमात्मनं शरणं गत्वा अजां मायां जहाति मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते इति वचनात् मायां कथं त्यजतीत्यत आह सुप्तः पुरुषः कुलायं गृहमिव यथा गृहे सुप्तः पुरुषः पश्यतां अत्यक्तगृह इव भाति सतु परित्यक्तगृहाभिमाना एव एवंभगवत्प्रपन्नाः अपरित्यक्तगृहाद्यभिमाना इव दृश्यन्ते ते तु जीवन्मुक्तत्वेन परित्यक्तगृहाद्यभिमाना एव अभिमानत्याग एव हि त्यागः यथा राज्ये स्थितस्यापि अभिमानत्यागेन त्यक्तराज्यत्वव्यवहारः तद्वत् कैवल्यनिरस्तयोनिः कैवल्येन प्रकृतिपुरुषविलक्षणत्वाप्रच्युतस्वभावेन निरस्ता तिरस्कृता योनिः कारणं अविद्या येन तं अभयं नास्ति भयं यस्मादभयं स्वाश्रितानां भयनिवर्तकं हरिं स्वाश्रितानामशेषपापहारिणं तं भगवन्तं अजस्रं सर्वदा ध्यायेत् ॥ ५० ॥

योगिरामानुजार्येण श्रीवृन्दावनवासिना ।
व्याख्यावेदस्तुतेरेषा श्रीकृष्णचरणेऽर्पिता ॥
इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
योगिरामानुजाचार्यकृतसरला-
व्याख्यायां
सप्ताशीति-
तमोऽध्यायः ॥ ८७ ॥
श्रीकृष्णायनमः ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

उपासनार्थं स्वलक्षणैर्लक्षयति—योऽस्येति । आत्मा जगदादिमध्यनिधनानि उत्पत्तिस्थितिसंहाराः यस्मात्स तथा यश्चाव्यक्तजीवयोः प्रकृतिचेतनयोरीश्वरः यश्चेदं सृष्ट्वाऽनुप्रविष्टः यश्च ऋषिणा ऋषिरूपेण पुराणसंहितां चक्रे अनुशायी जीवः यं पुनः

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सम्पद्य प्राप्य अजां बन्धकशक्तिं जहाति सुप्तः कुलायं शरीरादावभिमानं च यथा त्यजति तं कैवल्यनिरस्तयोनिं समाधिकाभावेन निराकृतकारणं तं हरिं अजस्रं निरन्तरं ध्यायेदित्यन्वयः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

( श्रीविजयध्वजतीर्थटीका चतुर्नवतितमोऽध्यायः ॥ ९४ ॥ )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तत्र गुणरूपं द्वादशधा निरूपयति यो भगवान् अस्य सर्वस्यापि जगतः उत्प्रेक्षकः ऊर्ध्वं प्रेक्षते कथमेते जीवसङ्घा निस्तीर्णा भविष्यन्तीति विचार्य एवं भविष्यन्तीति तेषां हि चिन्तयतीत्यर्थः। अयमेको भजनीयगुण आविश्यकत्वाय गुणत्रयमाह—अस्य जगतः आदिमध्यावसानरूपः एवं चतुष्टयमेकं सृष्टिकारणरूपं माहात्म्यत्रयमाह यः अव्यक्त प्रकृतिः जीवः पुरुषः ईश्वरः कालो नियन्ता त्रितयरूप इत्यर्थः एवं सप्तगुणाः निरूपिताः अवशिष्टान् पञ्चगुणानाह यो भगवानिदं सृष्ट्वा-त्मकम् अनुप्रवेशो द्वितीयः ब्रह्माण्डं सृष्ट्वा ब्रह्माण्डमध्ये प्रविष्ट इत्यर्थः। ततो ऋषिणा वेदेन मुख्यजीवेन वा सहितो जात इत्यर्थः ततो देवतिर्यगादि पुरः चक्रे चतुर्थोऽयं शास्ति ता इति पञ्चमः दोषत्रयाभावमाह यं सम्पद्येति जीवा अपि यं प्राप्य मनसा भावनयापि लब्ध्वा अजां जहाति अविद्यां दूरीकुर्वन्ति ननु स्मरणेनैवं तर्हि मुक्ताः स्युस्तथा सति पुनर्देहग्रहणं न स्यात् तत्राह सुप्तः कुलायं यथेति नहि सर्वात्मना अजापरित्यागः किन्त्वेवं भगवतो माहात्म्यं निरूप्यते यत्सम्बन्धमात्रेणैव अजां सकार्यां पुरुषो जहाति सर्वथा न स्मरन्तीत्यर्थः। यथा सुप्तः पुरुषः शरीरं न स्मरति एवं परं परस्यापि दोषाभावो निरुक्तः साक्षादाह कैवल्येन केवलभावेन निरस्ता योनिः कारणभूता येनेति सर्वमेव भगवानिति योनिरधिका कुतः स्यात् अभयमिति तृतीयो दोषो निवार्यते स्वयं भयरहितः सर्वेषामपि भयनिवर्तक इति एवं निर्दोषपूर्णगुणरूपो भगवानिति स्वत एव परमानन्दं प्रयच्छति दुःखञ्च दूरीकरोतीति तमेव सर्वोऽपि भजेदित्यर्थः ॥ ५० ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभ-
दीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धविवरणे
अष्टत्रिंशाध्यायविवरणम् ॥ ३८ ॥ ८७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

समस्तवेदस्तुत्यर्थं सङ्गृह्यानुस्मारयति—य एव अस्य विश्वस्य उत्प्रेक्षकः मय्यनुशायिनां जीवानां कर्मिणां कर्मप्रोद्बोध्य कर्मफलस्य साधनार्थं भोगार्थं च तथा ज्ञानिनां ज्ञानफलस्य सायुज्यस्य साधनार्थं तथा भक्तानां भक्तिफलस्य प्रेमवत्पारिषदत्वस्य साधनार्थं बुद्धीन्द्रियादिकं सृष्ट्वा एवमेवं तत्रतत्र प्रेरयिष्यामीत्यालोचक इत्यर्थः त्रैकालिकं सत्वमाह—अस्य विश्वस्यादिमध्यनिधनेषु य एव वर्त्तते इति विश्वसृष्टेः पूर्वं विश्वमध्ये विश्वनाशेऽपि( य )तदुक्तं भगवतैव "अहमेवासमेवाग्रे नान्यद्यत् सदसत्परम । पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम" ॥ इति सर्वकारणत्वं सर्वनियन्तृत्वं चाह यो ऽव्यक्तेति सर्वं जगदिदं बन्मयं तयोर्मायाजीवयोरपि य एवेश्वरः कारणं नियन्ता च तयोस्तच्छक्तित्वाच्छक्तीनां च शक्तिमतोऽनन्यत्वादव्यक्तजीवावपि स एवेत्यतस्तस्यैवोपादानत्वं निमित्तत्वं नियन्तृत्वञ्च सिद्धं प्रवेशविसर्गावपि करोतीत्याह—य एवेदं सृष्ट्वा अनुप्रविश्य ऋषिणा ब्रह्मणा पुरः देवमनुष्यातिर्यगादिशरीराणि चक्रे तथा ऋषिणेति ऋषेरिव निर्लेपत्वादृषिरन्तर्यामी तेन स्वस्वरूपभूतांशेन ताः पुरः शास्ति यद्भक्त्यैव जीवः संसारं तरतीत्याह यं सम्पद्य प्रपद्य अनुशयी अविद्याश्लिष्टो जीवः अन्धनुदण्डवत् प्रणामेश्वरणमूले शेते इति स्वामिचरणाः अजां कार्यकारणरूपां मायां त्यजति ननु भगवत्प्रपन्नस्यापि मायिकं शरीरं दृश्यत एव तत्राह सुप्तो जनः कुलायं स्वशरीरं जहाति यथा वर्त्तमानमपि तन्नानुसन्धत्ते तद्वदिति भगवत्प्रपन्नानां शरीराभिमानत्याग एवाविद्यात्याग उच्यते इत्यर्थः कचितद्त्यागस्तु सम्यक्प्रपत्त्यभावमूलक एव ज्ञेयः। किञ्च साधननिरपेक्षमपि तस्य कञ्चित् संसारनिस्तारकत्वमाह—कैवल्येति। केवलस्य भावः कैवल्यमेकाकित्वं तेन जीवानुष्ठितमोक्षसाधनं विना भूतेनापि निरस्ता दूरीकृता योनिर्जीवाविद्या येन तं यमिह निरीक्ष्य हतागताः स्वरूपमिति भीष्मोक्तेरघबककेश्यादीनामन्येषाञ्च मोक्षसाधनं विनापि मोक्षदर्शनादिति भावः। विशेषणेनानेन स्वयं भगवान् श्रीकृष्णो द्योतितः हरिं स्वमाधुर्येण प्रेमवतां मनोहारकं तम् अभयं यथा स्यात्तथेति स्वीयकर्मकालकूटविविधवादिभ्यो भयं परित्यज्यैव निरन्तरं ध्यायेदिति विधिरुक्तः—

हे भक्ताद्वार्ध्ययञ्चञ्चद्वालधी रौति वो मनाक् ।
प्रसादं लभतां यस्माद्विशिष्टः श्वेवनाथति ॥

इति चञ्चती चञ्चला वाळा अङ्काधीर्यस्य स पक्षे चञ्चलवालधीः पुच्छो यस्य सः बाबहस्तस्तु वालधीरित्यमरः इति विश्वनाथपद-

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

च्युतरुचिः ॥ ५० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
सप्ताशीतितमोऽध्यायो दशमेऽजनिसङ्गतः ॥ ८७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

सर्वश्रुतिसमन्वितार्थस्योपसंहारात्मकेनैकेनैव श्लोकेन सङ्क्षिप्नोति श्रीशुकः—य इति। योऽस्योत्प्रेक्षकः जीवानां सर्वपुरुषार्थसिद्धये विश्वस्य सृष्टिस्थितिलयादिप्रापणीयत्वेनालोचकः स ऐक्षत बहुस्यां प्रजायेयेति श्रुतेः यश्चास्यादिमध्यनिधने वर्तमानो व्यभिचारिसत्ताक इति तत्रादौ कारणत्वेन मध्ये चाश्रयत्वेन अन्ते चावधित्वेनेति विवेकः सर्वांल्लोकानीशते ईशनीभिः य एवैक उद्भवे सम्भवे च य एतद्विदुरमृतास्ते भवन्तीत्यादिमन्त्रः किञ्चाव्यक्तजीवेश्वरः प्रकृतिजीवयोर्नियन्ता पुरुषोत्तमः प्रधानक्षेत्रज्ञपतिर्गुणेश इति मन्त्रः—

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥

इतिभगवदुक्तेश्च अयमर्थः चिदचिच्छक्तिमत्स्वरूपतो निर्विकारः शक्तितो विकृतः विश्वस्य अभिन्ननिमित्तोपादानहेतुरिति यश्च ऋषिणा चतुर्मुखरूपेणेदं सृष्ट्वान्तर्यामिसर्वज्ञरूपेण च शास्ति जीवस्य भोगं सम्पादयन् स्वयं पालयतीत्यर्थः "अन्तः प्रविष्टः शास्ता जनानाम्" इत्यादिश्रुतेः शरणापन्नानान्तु गतिरेवेत्याह—यं सम्पद्य प्राप्य अनुशयनशीलः परिचर्यापरायणो जीवात्मा अजां जहाति मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते इति भगवदुक्तेः न स पुनरावर्तत इति श्रुतेः अनावृत्तिः शब्दादितिचरमन्यायाच्च इतः पूर्वञ्च प्रपन्नस्यापि प्रारब्धकर्मसम्बन्धतया सर्वथा प्रकृतिसम्बन्धानिवृत्तौ सत्यामपि नेतरेषामिव तत् तन्त्रत्वेन संसरणं किन्तु तत्दुःखसुखादिभोगपरवश्यान्यदृष्ट्यैव तथाभानम् आत्मनो स्वातन्त्र्यकर्तृत्वादिलक्षणस्यावरणस्य भङ्गेन भगवत्प्रयोज्यत्वज्ञानवत्त्वादित्येतदर्थं बुद्धौ निधाय एतत् देहपातात् प्राक् तस्य वर्तने निदर्शनमाह—सुप्तः कुलायं यथा। यथा सुप्तः स्थूलशरीरं त्यजति तद्वत् यावच्छरीरसम्पात अनभिनिविष्टो वर्तेत इति भावः। तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्य इति श्रुतेः तं परमेश्वरं ध्यायेदितिविधिः निदिध्यासितव्य इति श्रुतेः कथम्भूतं कैवल्यनिरस्तयोनिम् निरस्ता योनिः कारणं यस्य सः कारणशून्यः कैवल्यश्चासौ निरस्तयोनिश्चेति तथा "न तस्य कश्चित् जनिता न चाधिपः केवलो निर्गुणश्च" इत्यादिश्रुतेः अभयं "न भयं यस्मात् संसाररूपभयनाशकं संसारबन्धस्थितिमोक्षहेतुः इतिश्रुतेः अजस्रं शाश्वतं क्रियाविशेषणं हरिं स्मृतिमात्रेण सर्वपापनिवर्तकं तथाचाह—श्रीपराशरः—

अपि पापप्रयुक्तोपि ध्यायन्निमिषमच्युतम्।
भूयस्तपस्वी भवति पंक्तिपावनपावनः ॥ इति

अत्र चाभिन्ननिमित्तोपादानकारणत्वप्रतिपादनेन समन्वयाध्यायाविरोधाध्यायार्थः सङ्गृहीतः अजस्रं ध्यायेदित्यनेन साधनाऽध्यायार्थः सम्पद्य जहात्यजामित्यनेन फलाध्यायार्थश्चेति सम्पूर्णा चतुरध्यायिनी ब्रह्ममीमांसा श्रीशुकेनैकस्मिन् श्लोके व्याख्याता इति भावः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
सप्ताशीतितमाध्यायार्थप्रकाशः ॥ ८७ ॥

---

भाषा टीका।

जो इस जगत्के सृष्टि पालन संहार के निमित्त सङ्कल्प करने वारा है और जो जीव माया का नियमन करने वारा है ओर जो महदादि तत्व को उत्पन्न कर चतुर्मुख जीव के द्वारा प्रवेश कर देव मनुष्यादि शरीरों को निर्माण कर ने वारा जो सब जीवों को नियमन करने वारा और जैसें पक्षी घूँसला में कुछ काल पर्य्यन्त शयन कर पश्चात् उसको छोड कर उडि जाता है तैसें यह कर्म परवश जीव अनादि कालसे माया रूपी घूँसला में शयन शयन कर पश्चात् उपासना से जिस को प्राप्त होकर माया को छोड देता है एतादृश पर ब्रह्म हरि का निरन्तर ध्यान करना हि कल्याण का साधन है क्योंकि मोक्ष प्रदान करने से सर्व योनियों का निरास करने वारा परमात्मा है इसी से उस के आश्रयण करने से जीव को फिर संसार से भय नहि होता ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्धमें सतासी अध्यायकी
भाषाटीका समाप्ता ॥ ८७ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

## इति श्रुतिस्तुतिस्समाप्ता।

## अष्टाशीतितमोऽध्यायः ।

राजोवाच ।

देवासुरमनुष्येषु ये भजन्त्यशिवं शिवम् ।
प्रायस्ते धनिनो भोजा न तु लक्ष्म्याः पतिं हरिम् ॥ १ ॥
एतद्वेदितुमिच्छामः सन्देहोऽत्र महान् हि नः ।
विरुद्धशीलयोः प्रभ्वोर्विरुद्धा भजतां गतिः ॥ २ ॥

श्रीशुक उवाच ।

शिवः शक्तियुतः शश्वत्त्रिलिङ्गो गुणसंवृतः ।
वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा ॥ ३ ॥
ततो विकारा अभवन् षोडशामीषु कञ्चन ।
उपधावन् विभूतीनां सर्वासामश्नुते गतिम् ॥ ४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अष्टाशीतितमे विष्णुभक्तः कैवल्यमश्नुते ।
ततोऽर्वाग्देवभक्तस्तु विभूतिमितिवर्ण्यते ॥

हरिर्भजतां मुक्तिद इत्युक्तमभयं ध्यायेदजस्रं हरिमिति तत्र पृच्छते—देवासुरेति । अशिवमवधीरितभोगम् भोजा भोगिनः लक्ष्म्याः पतिं सर्वभोगयुक्तम् ॥ १—२ ॥

अन्योन्योपमर्देन तमसत्त्वाविद्यात्रिलिङ्गः त्रिविधत्वमाह—वैकारिक इति । अहमहङ्कार इति ॥ ३ ॥

विकारा मन इन्द्रियभूतरूपाः षोडशेतीन्द्रियदेवानामभेदविवक्षया कञ्चन यत्किञ्चिद्विकारोपाधिकं भजन्नुपाध्यनुरूपाणां विभूतीनां स्वरूपं प्राप्नोतीति ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवं सर्वथा श्रीकृष्णस्योत्कर्षमाकर्ण्यापि कांश्चिदसन्तुष्टान् केवलत्रिदेवीमात्रदृष्टीन् ऐहिककामिनः शैवान् कटाक्षविषयीकुर्वन् कृपया शिक्षयन् पृच्छति—देवेति द्वाभ्याम् । अशिवम् अङ्गीकृतधनभोगं लक्ष्म्याः पतिं तत्तदधिष्ठात्र्याः साक्षादेव पतिरूपं धनिनो भोजाश्च भवन्ति प्राय इति प्रायिकत्वात्तयोः कदाचिद्व्यभिचारदर्शनेनुपाधिविशेषस्तत्र कारणमनुमेयमिति तेन सन्देहापगम इति भावः ॥ १ ॥

एतदिति । अत्र किं कारणं तदित्यर्थः । इच्छाम इति बहुत्वं तत्र वर्त्तमानानां शैवानां तेषां सकटाक्षसङ्ग्रहात् अत्र पूर्वोक्तविरोधे तमेव व्यञ्जयति—विरुद्धेति । विरुद्धं शीलं क्रमाद्भोगत्यागस्वीकारलक्षणः स्वभावो ययोस्तयोः प्रभ्वोरिति कर्मणि षष्ठी तौ भजतां विरुद्धा तत्तत्स्वभावविपरीता क्रमाद्धनभोगप्राप्तितदाशालक्षणा गतिः फलम् अतः श्रीशिवभक्तानां साक्षाद्धनादिविभूतिदर्शनाद्धरेः पत्न्यपि लक्ष्मीः श्रीशिवस्याधीनेति तस्यैवोत्कर्षो घटतेति भावः । साक्षात्तथानुक्तिस्तु सङ्कोचादेवेति ज्ञेयम् ॥ २ ॥

तत्र—"सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः । विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक्" ॥ इत्यादिकस्य द्वितीयादौ श्रीमदाद्युक्तस्यानुसारेण शाखान्तरविवरणं सर्ववेदेतिहासवेदान्तसारश्रीभागवतसिद्धान्तं यद्यत्तत्र वास्तौ तावत्पूर्वोक्तस्वयं भगवच्छ्रीकृष्णमाहात्म्यं तदंशांशस्यापि (तद्भक्तमाहात्म्येन) भूयसाधिक्येन कृतगुणाधिष्ठातृलीलस्यापि श्रीविष्णोर्वैलक्षण्यं श्रूयतामिति बोधयंस्तथा मेदश्रवणेपि शिववेष्णोरुपाधिधर्मयुक्तत्वा(त्व)युक्तत्वे निर्दिश्य प्रतिबिम्बवन्न्यूनाधिकशक्तित्वव्यञ्जनया आपातत्त्वप्रेक्षितगुण एव दोषत्वं दोष एव च गुणत्वं प्रतिपादयंस्तेन तद्विधानामतिमूर्खत्वं व्यञ्जयन्नाह—शिव इति । यावदध्यायसमाप्ति । तत्रैव शिवस्योपाधिधर्मयुक्तत्वं दर्शयंस्तादृशविभूतिहेतुत्वम् । योजयति द्वाभ्याम् । शश्वच्छक्तियुतः क्रमेणाविर्भवन् प्रथमतस्तावन्नित्यमेव शक्त्या गुणसाम्यावस्था प्रकृतिरूपोपाधिना युक्तः गुणक्षोभे सति त्रिलिङ्गो गुणत्रयोपाधिः प्रकटैश्च सन्निहितैर्गुणैः सम्वृतश्च ननु तम उपाधित्वमेव तस्य श्रूयते कथं तत्तदुपाधित्वं तत्राह—वैकारिक इति । अहमन्तत्वं हि

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तत्तद्रूपेण त्रिधा स च तदधिष्ठातेत्यर्थः। मुख्यतयामास्तां नाम अन्यद्गुणद्वयं गौणतया स्वास्त एवेत्यर्थः॥ ३॥

ननु भवत्वेवं सोपाधिरसौ प्रस्तुते किमायातं तत्राह—ततः इति। ततस्तेन भगवत्प्रतिनिधिरूपेणाधिष्ठितादहङ्कारात् षोडशविकारा ये अभवन् अमीषु विकारेषु मध्ये सर्वासां विभूतीनां सम्बन्धे किञ्चन उपाधावन् तदुपाधिकत्वेन तमुपासीनो गतिं प्राप्य फलं लभते इति॥ ४॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

॥ १—२॥

त्रिलिङ्गः वक्ष्यमाणाधिष्ठेयत्रैविध्यात् त्रिलिङ्गः वैकारिकः इति त्रिविधाहङ्काररूप इत्यर्थः। अहङ्कारोऽध्यात्मं अहं कर्तव्यमधिभूतं रुद्रस्तत्राधिदैवत मितिश्रुतेः आत्म इत्यहङ्कारतत्त्वमात्रं विवक्षितं अमीषु षोडशसु कञ्चन उपधावनविकाराभिमानिदेवेषु कञ्चन इन्द्रादिकं भजत इत्यर्थः॥ ३—४॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

"य सम्पद जहात्यजाम्। तं कैवल्यनिरस्तयोनिम्" इति जगत्कारणत्वादिवन्मोक्षदत्वमपि हरेरेवासाधारणो धर्म इत्युक्तम् अनेन रुद्रादीनां न मोक्षदत्वं किन्त्वर्थकामादिप्रदत्वमिति सूचितं तत्र सन्दिहानः पृच्छति राजा—देवासुरमनुष्येष्विति। देवादीनां मध्ये ये जनाः अशिवममङ्गलरूपमपि शिवं भजन्ति ते प्रायशः प्रायेण धनिनः आढ्या भवन्ति भोजा इति पाठे भोगिनो भवन्ति इत्यर्थः। हे ब्रह्मन्! लक्ष्म्याः पतिं हरिं तु ये भजन्ति ननु नाढ्याः लक्ष्म्याः पति इत्यनेन विपरीतमिदमित्यभिप्रेतं लक्ष्मीपतिभक्तैरेवाढ्यैर्भवितव्यमित्यभिप्रायः॥ १॥

एतदिति। एतद्वैपरीत्यनिदानम् वेदितुं इच्छामः अत्र वैपरीत्ये नोऽस्माकं महान् सन्देहो वर्त्तते विरुद्धं शीलं स्वभावो ययोस्तयोः प्रभ्वोर्हरिहरयोः कर्मणिषष्ठी तौ भजतां गतिः फलं विरुद्धा विसदृशीत्यर्थः एकस्वभावो भजतां कथं विसदृशं फलमिति शङ्कार्थः॥ २॥

एकस्वभावत्वेव नास्ति तत्कुतः फलम् एकरूपं स्यादिति परिहरति—शिव इत्यादिभिस्त्रिभिः। शिवः शक्त्योमया युक्तः शश्वत् सदा। त्रिलिङ्गः वक्ष्यमाणाधिष्ठेयत्रैविध्यात् त्रिलिङ्गः त्रिविधाहङ्कारप्रचुरमूर्त्तिः गुणेन तमोगुणेन संवृतः तमःस्वभाव इत्यर्थः अधिष्ठेयस्य त्रैविध्यमेवाह वैकारिक इति अहमहङ्कारः वैकारिभेदेन त्रिधा॥ ३॥

ततस्त्रिविधादहङ्कारात्षोडश विकाराः एकादशेन्द्रियाणि पञ्चभूतानि स तन्मात्राणि इति षोडशविकारा जाता इत्यर्थः। तत्र तामसाहङ्कारात्तन्मात्राणि पञ्चमहाभूतानि वैकारिकात्तु एकादशेन्द्रियाणि राजसाहङ्कारस्तूभयोरनुग्राहक इति विवेकः। त्रिविधोऽप्यहङ्कारो रुद्राधिष्ठेय इत्यर्थः "महङ्कारोऽध्यात्ममहं कर्तव्यमाधिभूतं रुद्रस्तत्राधिदैवतम्" इति श्रुतिः अस्त्वेवं ततः किमत आह—अमीष्विति। अमीष्वहङ्कारतद्विकाराधिदैवेषु रुद्रदिगभिमानिवातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रप्रजापत्यादिषु मध्ये कञ्चनान्यतममधिदैवतम् उपधावन् भजन्पुरुषः सर्वासां विभूतीनां ऐश्वर्याणाम् गतिं प्रकारमश्नुते नानाविधानि तत्तदधिदैवतेन दातुं शक्यान्यैश्वर्याणि प्राप्नोतीत्यर्थः॥ ४॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

शिवं भजन्तामप्यन्यतमं विष्णुं निषेवमाणः सात्त्विक एव शिवस्याप्यन्यापरिहार्यापात्तसमृद्धिविकरो नारायणः किमुतेतरेषामित्यर्थसारं वृकासुराख्यायिकया ख्यापयति तत्र राजा आख्यायिकामुत्थापयितुं—पृच्छति देवासुरेति। दिगम्बरत्वेन लोकदृष्ट्या शिवगजचर्मवस्त्रत्वाभिमानं निर्धनं वा "शिवो लोके पद्मरागे हरे काले शिवे जले" इत्यतः पद्मरागराहित्येन निर्धनत्वं लक्ष्यते अशिवमकीलं अनर्गलं सर्ववरप्रदमित्यर्थः। लक्ष्मीपतिमित्यनेन धनित्वमुपलक्षयति तथापि तद्भक्ता धनिनो न भवन्ति॥ १॥

एतद्धनित्वाधनित्वसन्देहे तन्निरासप्रश्नो घटते तदभावेऽनर्थं इत्यत्राह—सन्देह इति। नचायमौपचारिक इत्याह—महानिति। सन्देहबीजान्तरमाह, विरुद्धेति। श्मशाने पिशाचगणैः परिवृतत्वेनाटनशीलं रुद्रस्य इन्द्रादिदेवैः परीतत्वेनावस्थानं हरेः असुरादीनामपि वरदानेऽकृतत्वेन गतित्वमाश्रयत्वं ईशानस्य देवादीनां समृद्धिनिवर्तकत्वेन हरेः तथावान् प्रभ्वोः समर्थयोर्विषये महानस्माकं सन्देहोऽस्ति हि यस्मात्तन्निरसनप्रयासः सार्थक इत्यर्थः॥ २॥

जीवानां त्रैविध्यं केनाप्यनभिभूतं प्रमितं देवासुरमनुष्येष्वित्यनेन सूचितं तत्र शिवः स्वल्पसंपृक्तसत्त्वेन बहुलेन तमसा रजसा स्पृष्टत्वेन तदनुसृतस्वभावत्वेन हरिनियतप्रकृतिवश्यत्वेन तत्तत्प्राणिस्वभावसेवानुगुणफलदानकल्पतरुरिव इव तादृशं फलं वितरति हरिस्तु स्वाधीनसत्त्वादिगुणत्वेन तत्प्रवर्तकत्वेन तच्छक्त्यनुपहतशक्तित्वेन प्रकृतिपरत्वेन तन्निर्मितशरीररहितत्वेन तत्स्वभावेन कूटस्थत्वेन नित्यनिर्दोषज्ञानानन्दतनुत्वेन स्वसेवकेभ्यः स्वानुगुणं फलं प्रयच्छतीति भावेन परिहरति शिव इत्यादिना शक्तियुतः प्रकृतिसम्बद्धः अत एव शश्वत् त्रीणि लिङ्गानि वैकारिकादीनि यस्य स तथा ननु प्रकृतेरेकत्वेन तत्सम्बन्धेनैकविध्यमेवोचितं न त्रैविध्यम् अन्यथा चातुर्विध्यं किं न स्यादित्यत उक्तं गुणसंवृत इति गुणानां त्रित्वात्तत्सम्बन्धेन त्रित्वं युक्तं न चातुर्विध्यादिकं सूचितं त्रैविध्यं स्पष्टयति वैकारिक इति अहं अहङ्कारात्मको रुद्रः॥ ३॥

ततः अहङ्कारात् षोडशविकारा अभवन्निति शेषः पञ्चभूतानि दशेन्द्रियाणि एकं मनः ननु किमायातं प्रकृत इति तत्राह—अमीष्विति। यो भूतानां मध्ये अमीषु पञ्चस्वाकाशादिष्वधिष्ठानप्रकारेषु निधाय शिवमुपाधावन् सेवमानो भवति सपुरुषस्तस्मात्सर्वासां विभूतीनां गतिं सेवानुसारेण फलमश्नुते अत्र ग्रन्थबाहुल्यभयात् विशेषविशदीकरणादुपरम्यते॥ ४॥



श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

एवं तत्त्वविचारेण कृष्णमेव निर्धार्योपास्यविचारेणापि निर्धारयन् श्रीकृष्णांशविशेषस्य श्रीविष्णोर्माहात्म्येन निर्द्धारयन्ति—श्रीराजोवाचेत्यादिना। अशिवं अस्वीकृतधनभोगं शिवम् ॥ १—५ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

॥ १—८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं कृष्णस्य मूलस्य सन्दिहानस्य संशयः।
निवारितोऽनिपतन यत्र कृष्णः परः स्मृतः ॥
व्यवहारस्तथैवात्र कृष्णे पर्यवसानतः।
सर्वेन्द्रियाणां माहात्म्यं श्रुत्वानान्तु यथोदितम् ॥
भजनीयगुणत्वत्र सन्देहः कश्चिदुद्गतः।
तन्निवारयितुं प्रश्नः पुनाराज्ञा निरूप्यते ॥
पूर्वाध्यायो यशोक्त्यैव श्रियं चायमुदीरितः।
अतः श्रियं सदा कृष्णे नित्यामाहात्म्ययां क्वचित्।
तथाऽऽनन्दो न सर्वत्र तथा श्रीरपि देवता।
तथात्वं दूषणं लोके भ्रान्तबुद्ध्या निरूपितम् ॥
अत्रोत्र भजनीयार्थं लक्ष्मीनिर्णय उच्यते।
एकोनचत्वारिंशे च तत्प्रसङ्गात्कथान्तरम्।
शिवादिसर्वदेवानां दातृत्वमविचारतः ॥
विचारेण तु दातृत्वं कृष्णस्यैव विशेषतः।
अविचारितदानेन स्वयं दातापि नश्यति ॥
सम्प्रदानस्य का वार्त्ता तस्माच्छ्रीशो न तत्प्रदः।
तुष्टैव श्रीरन्यगता शुद्धा कृष्णैकतत्परा।
कृष्णमेव ततोवाञ्छेत् श्रियं बुद्धिमान् क्वचित् ॥

पूर्वाध्याये परब्रह्मरूपे भगवति प्रमाणविषयदोषान् परिहृत्य प्रमेयविषये भगवद्दोषपरिहारार्थमध्यायान्तरमारभते तत्र राजा भगवति दातृत्वे सन्दिहानः अदातृत्वस्य च लोके निन्दाश्रवणात् निर्णयार्थं पृच्छति—देवासुरमनुष्येष्विति द्वाभ्याम्। त्रिविधा जीवाः उपासनसमर्थाः तेषां भगवदुपासने विधीयते अन्योपासनव्यावृत्तिपूर्वकं तत्रान्येषामैहिकदातृत्वे कथं व्यावृत्तिः स्यात् इति महादेव उपक्षिप्यते त्रिविधेषु जीवेषु ये अशिवं लक्ष्मीकृतशोभारहितं नाम्ना शिवं कल्याणरूपं वा ये भजन्ति ते प्रायेण धनिनः ज्ञानार्थिनस्तु ततो धनं न वाञ्छन्ति इति प्रायेणोक्तं भोजा भोक्तारश्च दानभोगक्षमं धनं शिवः प्रयच्छतीति यदि भगवानपि प्रयच्छेत् तदोक्तं दूषणं न सङ्गच्छतीति प्रकृते निषेधति नतु लक्ष्म्याः पतिमिति विद्यते लक्ष्मीः स्वयं परदुःखहर्त्री च ये लक्ष्मीपतिमुपासते ते न धनिनो न वा भोजा इत्यर्थः। गुणानां तारतम्यमत्र विचार्यत इति तुल्यता ॥ १ ॥

नन्वेवमेव स्वभाव इति चेत्तत्राह—एतद्वेदितुमिच्छाम इति। एतदत्रत्यसन्देहनिवर्त्तक यतोऽत्र महान् सन्देहः हि युक्तश्चार्थमर्थः भक्तत्वाद्भजनीयगुणसन्देहो वारणीय इति नोऽस्माकं सर्वेषामेव यतोऽत्र कौतुकाविष्टानामपि सन्देहनिवृत्त्यर्थं प्रयत्न इति ज्ञापयितुमाह—विरुद्धशीलयोः प्रभ्वोरिति। एको लक्ष्म्या सहितः अपरो विहीनः तत्सेवकस्तु लक्ष्मीरहितः सहितश्चेति यस्य हि यद्रोचते स स्वभक्ताय प्रयच्छति प्रकृते तु तदभाव इत्यर्थः। अत्र सन्दिग्धः प्रष्टव्यः, शिवः कथं स्वयं न भुङ्क्ते कथं प्रयच्छतीति अत्र किं विषया राज्यादयः उत्कृष्टाः आहोस्विदपकृष्टा इति उत्कृष्टाश्चेत् शिवः कथं स्वयं न भुङ्क्ते अपकृष्टाश्चेत् कथं प्रयच्छतीति तत्रोत्तरमपकृष्टा एवेति अतस्तस्य भोगाभावः समर्थितः तादृशं कथं ददातीति चेत् उपासकानामेव दोषादिति वक्तुं ये धनार्थं शिवमुपासते ते साहङ्काराः सन्तः अहङ्काराभिमानिनमेव शिवमुपासते नतु शैवतन्त्रसिद्धं सदाशिवरूपा साधारणत्वात् ज्ञानाधिकाराभावाच्च ॥ २ ॥

अतस्तान् प्रति शिवस्तादृश एवेति तन्निरूपयति—शिवः शक्तियुत इति। अहङ्काराभिमानेऽपि शिवस्य तादृशत्वे हेतुः शक्तियुत इति शक्त्या युक्तो विचरति घोरया भगवान् भव इति वाक्यात् प्रलयकर्त्रीं शक्तिं यदि शिवः शान्तात्मा क्षणमपि परित्यजेत् तदा सा प्रलयं कुर्यात् यदि वा कण्ठे कालकूटं न स्थापयेत् तदा सर्ववस्तूनां दोषस्याधिक्यरूपमिति तत्परित्यागे सर्ववस्तुषु दोषोद्गमे सर्वोऽप्यन्नादिभक्षणेन म्रियते यदि वा सर्पांश्च धारयेत् तदा सर्व एव पुरुषाः कुण्डलिनी व्याप्ता तयैव हताः स्युः तदाधिदैविकान्निरुध्य स्थापयतीति न कुण्डलिनीकमपि हन्तीति सूचितं एवमग्निधारणं अन्यथा सर्वं दहेदिति एवं चन्द्रमसोऽपि अन्यथा सर्वं क्षीणं कुर्यादिति वस्त्राणां सर्वदेवतामयत्वाच्च बाधकत्वमिति न तद्धारणं शार्दूलचर्म तु मृत्योर्वा एष वर्णो यच्छार्दूलमिति श्रुतेः प्राणिनां मृत्युनिवारणार्थं बिभर्त्ति गङ्गाञ्च बिभर्त्ति सापि स्पर्शमात्रेणैव पूर्वदेहं दोषरूपं निवर्त्य भगवदीयं देहं सम्पादयति जटाश्च बिभर्त्ति अन्यथा वायुना हता मेघाः गच्छेयुः एव न त्वागत्य वृष्टिं कुर्युः एवं—सर्वेषां प्रयोजनानि शैवतन्त्रे निरूपितानि निर्दोषपूर्णगुणविग्रहप्रस्तावे एवं परमकृपालुरपि उपासकानुरोधात् त्रिलिङ्गो जातः ततो गुणैरपि सत्त्वरजस्तामोभिः संवेष्टितः ननु तस्य त्रिलिङ्गत्वे वा गुणवेष्टनत्वे वा को हेतुरिति चेत्तत्राह—वैकारिकस्तैजसश्चेति। वैकारिकः सात्विकः तैजसो राजसः अहमहङ्कारः तदधिष्ठाता जाता इति तस्य त्रिलिङ्गत्वाद्गुणसम्वृतत्वाच्च स्वयं चापि तथा जातः ततः संहिता शक्तिः पुरुषसम्बन्धाम् ॥ ३ ॥

प्रलयकर्तृत्वं परित्यज्य सृष्टिं कृतवतीत्याह—ततो विकारा अभवन्निति। भूतानीन्द्रियाणि च विकाराः षोडश महादेवः षोडश रूपो जात इत्यर्थः षोडशकलोऽयं पुरुष इति श्रुतेः तमोमिषु भगवन्मूर्त्तिषु कस्यनापि महादेवं उपाधावन् सर्वासामेकाधिभूतीनां गतिमश्नुते यतः स विभूतिपतिः ऐश्वर्याण्यक्षयरूपाणि कृत्वा बिभर्त्तीति अनेन तस्य विभूत्यभावो निराकृतः एवं महादेवे दोषं निराकृत्य भक्तानुरोधेन विका-

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

इज्यां प्रयच्छतीति निरूपितं भगवति च वार्ता प्रष्टव्यः किं लक्ष्मीरूपा विषयाः उत्तमा अधमा वेति उत्तमत्वे कथं न प्रयच्छति अधमत्वे कथं स्वयं भुङ्क्ते इति सन्देहः तत्र हि भेदः पूर्वपक्षोक्तं प्रकारं वारयति लक्ष्मीरूपा विषया उत्तमाः अतो भगवान् बिभर्तीति युक्तं दोषरूपपक्षस्थापनार्थं भगवता शिवरूपमेव कृतमिति नात्र पुनस्तत्पूर्वपक्षाः समायान्ति ॥ ४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अष्टाशीतितमे विष्णुरेव सेव्यः स निर्गुणः ।
सगुणस्तु वृकाच्छम्भुः स्वभक्तादपि सङ्कटम् ॥
निर्गुणौ विष्णुतद्भक्तौ मिथोऽप्यसमृद्धौ सदा ।
सगुणेषु मिथः क्लेशौ महेशवृकयोरिव ॥

ब्रह्मपरमात्मभगवत्स्वरूपेषु मध्ये भगवत्स्वरूपस्यैव तदुपासकस्य च श्रुतिवाक्यैरेव सर्वोत्कर्षमुक्त्वा इदानीं साङ्ख्यायेन ब्रह्मविष्णुरुद्रेष्वपि मध्ये विष्णोरेव सर्वोत्कर्षात् तस्यैव सेव्यत्वमाह—ननु ध्यायेदजस्रं हरिमिति । त्वं हरिभजनमेव विदधासि तदपि हरिभजने दारिद्र्यमाशङ्क्य किमिति हरमेव सर्वे भजन्तीति पृच्छति—देवेति । अशिवं चिताभस्मकपालपात्रादियोगाद्बहिर्दर्शिजनैरमङ्गलत्वेन प्रतीयमानं भोजा भोगवन्तश्च ते भवन्ति नत्विति लक्ष्म्याः पतिं भजन्तस्तु न धनिनो नापि भोगवन्तो भवन्ति कुतः इत्यर्थः ॥ १ ॥

विरुद्धेति । भिक्षुकं शिवं भजन्तः सम्पन्नाः स्युः लक्ष्मीपतिं विष्णुं भजन्तस्तु भिक्षवो भवन्तीति वैपरीत्यमनुचितमिति भावः ॥ २ ॥

शक्त्या मायया युतः संसृष्टः गुणैः संवृतः अस्मान् कृपया स्वीकुर्विति वृतत्वात् त्रिलिङ्गः त्रिगुणमयः ननु जीव इव तैर्बद्धश्च इति भावः । त्रिगुणमयत्वं विवृणोति वैकारिक इति अहं त्रिधेति अहङ्कारात्मकः स एवं त्रिविधो भवत्येवेत्यर्थः ॥ ३ ॥

विकाराः षोडशेति इन्द्रियाणां देवानाञ्चाभेदात्तानि दश मन एकं भूतानि पञ्चेति षोडश अमीषु मध्ये किञ्चनेति औपस्थ्यं जैह्वं मानसं वा सुखमुद्दिश्य उपधावन् शिवं भजन् सर्वासामेव विभूतीनां सम्पत्तीनां गतिं स्वरूपं प्राप्नोति तेषां परस्परसापेक्षत्वादेव प्राप्तावपि सर्वविषयसुखानि प्राप्नोतीत्यर्थः । तत सुख एव सर्वसम्पत्तीनां पर्य्याप्तेर्भजनतारतम्यात् तत्तारतम्यं प्राप्नोति अतः शिवस्य गुणमयत्वात् सम्पदामपि त्रिगुणमयत्वात्तद्भजने तत्प्राप्तिरिति नत्वयुक्तो विरोध इति भावः ॥ ४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पूर्वाध्यायान्ते वं सम्पद्य जहात्यजामनुशयीत्यनेन भगवान् वासुदेव एव स्वानुवर्तिनां कार्य्यकारणरूपप्रकृतिसम्बन्धं निवारयति ननु प्राकृतपदार्थदानेन स्वानुगान्संसारे क्षिपति किन्तु स्वप्राप्तिलक्षणं मोक्षं ददातीत्युक्तं तदेव पुनः श्रीशुकमुखेन दृढीकारयितुं पृच्छति देवासुरेति अशिवं तामसं निर्भोगं ये भजन्ति ते प्रायो धनिनो भोजाः भोगिनः लक्ष्म्याः पतिं परमैश्वर्य्याधिष्ठात्र्याः श्रियः पतिं हरिं सर्वक्लेशहर्तारं ये भजन्ति तेतु प्रायः धनिनो भोजा नेत्यन्वयः ॥ १—२ ॥

शक्तियुतः उमापतिः शिवः गुणेन तमोगुणेन संवृतः तदधिष्ठेयस्याहङ्कारस्य त्रिविधत्वात् त्रिविधाहङ्कारमयमूर्तिः अहङ्कारस्य त्रैविध्यमाह—वैकारिक इत्यादिना अहङ्कारस्य रुद्राधिष्ठितत्वमाह श्रुतिः अहङ्कारोऽध्यात्ममहङ्करणमधिभूतं रुद्रस्तत्राधिदैवतमिति ॥ ३ ॥

ततः शिवाधिष्ठितादहङ्कारात् एकादशेन्द्रियाणि पञ्चभूतानीति षोडशविकारा अभवन् अमीषु विकारेषु कञ्चन यत्किञ्चिद्विकारं शिवरूपस्योपधावन् भजन् सर्वासां तत्तद्विकारानुरूपाणां विभूतीनामैश्वर्याणां गतिं स्वरूपमश्नुते प्राप्नोति धनी भोजश्च भवतीत्यर्थः ॥ ४ ॥

---

भाषा टीका ।

राजोवाच ।

देव असुर मनुष्यों के मध्य में कोई अमङ्गलीक वेष धारि शिवका भजन करते हैं वे बहुत कर धनी तथा संसार के भोग भागी होते हे और लक्ष्मी पति हरि के भजन करने वारे बहुधा धनी भोगी नहि होते ॥ १ ॥

इस में हम को महान् सन्देह हे इस लिये हम इस के जानि वेकी इच्छा करते हैं परस्पर विरुद्ध स्वभाव वारे फलदेने में समर्थ हरि हर दोनोन के भजन करने वारेन को फलभी परस्पर विरुद्ध हि होना हे ॥ २ ॥

श्रीशुक उवाच ।

उमा रूप शक्ति सम्पन्न शिवजी सदा त्रिविध अहङ्कार से प्रचुर मूर्त्तिमान् और तमो गुण स्वभाव वारे हैं सात्विक राजस ताप स यह तीन प्रकार का अहङ्कार है ॥ ३ ॥

उस में सात्विक अहङ्कार सें एकादश इन्द्रिय उत्पन्न भई हैं और तामस अहङ्कार से सुक्ष्म रूप सहित आकाश पवन तेज जल पृथिवी पञ्च भूत उत्पन्न भए हैं और अहङ्कार का अधिष्ठाता देवता महादेव हैं इस प्रकार अहङ्कार और अहङ्कार से उत्पन्न इन्द्रिय आदि विकार इन के अधिष्ठाता रुद्र पवन सूर्य्य वरुण अश्विनी कुमार अग्नि इन्द्र उपेन्द्र मित्र प्रजापति आदि देवता ओंके मध्यमे किसी एक देवता का भजन करने वारा पुरुष भजनीय देवता के स्वभावानुगुण सर्वहि ऐश्वर्यों के प्रकार को प्राप्त हो जाता है अर्थात् उपरोक्त शिवादि देवता सांसारिक नाना विधऐश्वर्य्य के देने में समर्थ हैं इस लिये उन के भजन करने वारे पुरुष संसार के सर्वहि ऐश्वर्य्य को प्राप्त हो-जाते हैं ॥ ४ ॥

---

**हरिर्हि निर्गुणः साक्षात्पुरुषः प्रकृतेः परः ।**
**स सर्वदृगुपद्रष्टा तं भजन्निर्गुणो भवेत् ॥ ५ ॥**
**निवृत्तेष्वश्वमेधेषु राजा युष्मत्पितामहः ।**
**शृण्वन् भगवतो धर्मानपृच्छदिदमच्युतम् ॥ ६ ॥**

### श्रीधरस्वामिकृतभावार्थदीपिका ।

उपद्रष्टा साक्षी सन् यतः सर्वदृक् सर्वं पश्यति अतः प्रकृतेः पर इति अत्रेदं तत्त्वम्——

वस्तुनो गुणसम्बन्धे रूपद्वयमिहेष्यते ।
तद्धर्मायोगयोगाभ्यां बिम्बवत्प्रतिबिम्बवत् ॥
गुणाः सत्त्वादयः शान्तघोरमूढाः स्वभावतः ।
विष्णुब्रह्मशिवानाञ्च गुणयन्तृस्वरूपिणाम् ॥
नातिभेदो भवेद्द्वेधा गुणधर्मैरिहांशतः ।
सत्त्वस्य शान्त्या नो जातु विष्णोर्विक्षेपमूढते ॥
रजस्तमोगुणाभ्यान्तु भवेतां ब्रह्मरुद्रयोः ।
गुणोपमर्दतो भूयस्तदंशानाञ्च भिन्नता ॥
अतः समग्रसत्त्वस्य विष्णोर्मोक्षकरी मतिः ।
अंशतो भूतिहेतुश्च तथाऽऽनन्दमयी स्वतः ॥
अंशतस्तारतम्येन ब्रह्मरुद्रादिसेविनाम् ।
विभूतयो भवन्त्येव शनैर्मोक्षोऽप्यनंशतः ॥

इदमेवाभिप्रेत्य तत्रतत्रोच्यते श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युरिति तथा सत्त्वं यस्य प्रिया मूर्तिरिति तथा सत्त्वं तत्तीर्थसाधनमिति तथा "त्रयाणामेकभावानां यो न पश्यति वै भिदाम्" इति तथा "न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते" इत्यादि एवञ्च सति न किञ्चिदसमञ्जसम् । तदनभिज्ञानान्तु कलहो मोहमात्रमिति ॥ ५—७ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

अथ श्रीविष्णोरुपाधिराहित्यं दर्शयंस्तादृशपरमपुरुषार्थहेतुत्वं स्थापयति—हरिर्हीति । हि प्रसिद्धौ हेतौ वा प्रकृतेरुपाधितः परं तद्धर्मैरस्पृष्टः अत एव निर्गुणोऽपि कृताखिलिकृत्वादिकर्मेति भावः । तत्र हेतुः साक्षादेव पुरुष ईश्वरः नतु प्रतिबिम्बवत्तद्व्यवधानेनेत्यर्थः । अतो विद्याविद्ये मम तनू इतिवत् तनुशब्दोपादानात् कुत्राचित्सत्त्वशक्तित्वश्रवणमपि प्रेक्षादिमात्रेणोपकारित्वादिति भावः । अत एव सर्वेषां शिवब्रह्मादीनां दृक् ज्ञानं यस्मात्तथाभूतः सन् उपद्रष्टा तदादि साक्षी भवति अतस्तं भजन्निर्गुणो भवेत् गुणातीतफलभाग्भवति अतो यस्यालक्ष्म्याः पतिरसौ सापि स्वरूपभूतैव शक्तिर्नतु शिवाद्यधीना प्रतीत्यप्राकृतविभूतिं खण्डयत्येव यथैव वक्ष्यते यतः शान्तिर्यतोऽभयं धर्मः साक्षाद्यतो ज्ञानं वैराग्यञ्च तदन्वितम् । ऐश्वर्यं चाष्टधा यस्माद्यशश्चात्ममलापहम् ॥ इति । अतो गुणो वा दोषो वा विचार्यतामिति भावः ॥ ५ ॥

न केवलं तस्य स्वभावोऽयं किन्तु विचारश्चेति तद्योग्यं तद्वाक्यमथमितिहासमुपक्षिपति—निवृत्तेष्विति । समाप्तेषु इति नानामतमुनिसभायां श्रीभगवतैव निर्णीतमस्तीति प्रसिद्धमपीदमिदमिति भावः तदेवं शास्त्रान्तरविरोधस्य दौर्बल्यं दर्शितम् राजा युधिष्ठिरः युष्मत्पितामह इति तादृशभगवदात्मीयपौत्रत्वेन तस्य प्रोत्साहनार्थमत्र प्रश्ने योग्यताव्यञ्जनार्थञ्च अत एव गौरवाद्युष्मदित्युक्तं भगवतस्तस्मादेव भागवतधर्मान् शृण्वन् इदं त्वत्पृष्टमेव तदेवञ्च द्वयोर्माहात्म्यमुक्तम् अच्युतमिति सर्वैश्वर्येण भक्तवश्यतादिसद्गुणैर्वा परिपूर्णं किं वा तस्य गृहे सदा वर्त्तमानमिति भावः ॥ ६ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

उपद्रष्टा सर्वज्ञत्वाद्गुणदोषानुन्मता ॥ ५—१० ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

हरिर्हीति । निर्गुणः सत्त्वादिप्राकृतगुणवश्यतारहितः साक्षाद्भगवान् समग्रज्ञानैश्वर्यादिषाड्गुण्यपूर्णःप्रकृतेः भूमिरापोनलोवायुः अपरेयमितस्त्वन्याम् इतिश्लोकद्वयीक्तोभयविधायाः प्रकृतेर्विलक्षणः सर्वदृक् सर्वज्ञः अत एवोपद्रष्टा गुणदोषानुमन्ता रुद्रादयस्तूक्तविपरीतस्वभावा इति भावः । हि यस्मादेवं तस्मात् तं भजन्निर्गुणो भवेत्प्राकृतगुणसम्बन्धरहितो मुक्तो भवेदित्यर्थः । अयं भावः ब्रह्मरुद्रादीनां रजस्तमःप्रचुरस्वभावत्वाद्गुणवश्यत्वात्षाड्गुण्यपूर्णत्वाज्जीवत्वादसर्वज्ञत्वाच्च न मोक्षप्रदाने; सामर्थ्यं किं तु स्वशक्त्यनुसारेणार्थकामादिप्रदान एव भगवतस्तु यद्यपि चतुर्विधपुरुषार्थप्रदत्वशक्तिरस्त्येव तथापि स भगवान् सर्वज्ञः परमकारुणिको यद्यहं स्वभक्ताय त्रैवर्गिकफलं प्रयच्छेयं तर्ह्ययं तदन्ते पुनःपुनर्याचमानो मां नित्यदरिद्र एवावतिष्ठते अतस्तमनुगृह्णामीत्यालोच्य प्रायशः स्वभक्तेभ्यो मुक्तिमेव प्रयच्छतीति कस्मै चिन्निर्बन्धात्त्रैवर्गिकमपि प्रयच्छतीति ॥ ५ ॥

न केवलमयं स्वप्रश्नस्य परिहारोऽस्मद्बुद्धिकाल्पितः किन्तु भगवतैवोक्त इति वक्तुं प्रस्तौति निवृत्तेषु परिसमाप्तेषु सत्सु राजा युधिष्ठिरः भगवतः श्रीकृष्णात्सकाशाद्धर्मान् शृण्वंस्तमच्युतं प्रतीदं त्वत्पृष्टमपृच्छत् ॥ ६ ॥

---

### द्विजध्वजतीर्थकृतपदरत्नावली ।

तुशब्देन सत्त्वादिगुणराहित्यमेव नतु ज्ञानादिगुणराहित्यं

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

विवक्ष्यते तथात्वे सर्वदृगित्याद्यनुपपन्नं स्यात् हरिरविनश्वरम् अनन्तकालीनं फलं ददाति रुद्रस्त्वनित्यं दुःखोदर्कं ददातीत्यादिविशेषं वा दर्शयति उपद्रष्टा साक्षी सर्वेभ्यो द्रष्टृभ्योऽधिकद्रष्टा नान्यो वा नान्योऽतोऽस्ति द्रष्टेति श्रुतेः ॥ ५ ॥

न धनित्वं फलं ददातीत्यस्य कथं परिहार आगतः तं वक्तुमुपक्रमते—निवृत्तेष्विति ॥ ६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

न केवलं तस्य स्वभावोऽयं किन्तु विचारश्चेति तद्योग्यं तद्वाक्यमितिहासमुपक्षिपति—निवृत्तेष्विति। अतो मामित्यस्य पूर्वार्द्धं तद्ब्रह्मेति। कथम्भूतं। तत्तस्मात् प्रसिद्धात् ब्रह्मतोऽपि परमो अतः सूक्ष्मं दुर्ज्ञेयं चिद्रूपा मात्रा शक्तिर्यस्य तं। ब्रह्म अनन्तं च यत् कं परमानन्दस्तत्स्वरूपम् ॥ ६—२६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तत्र भक्तेभ्यः कथं न प्रयच्छतीति आशङ्कायामाह—हरिरिति। प्रयच्छत्येव ननु दुःखरूपान् यथा हरिर्गजेन्द्राय पूर्वावस्थास्थितदेहभार्यैश्वर्यादिकं त्याजयित्वा परमानन्दरूपान् तानेव दत्तवान् युक्तश्चायमर्थः। ननु शिववत् कथं न प्रयच्छतीति चेत्तत्राह—निर्गुण इति। गुणार्थं तदेव रूपं जातमिति तेनैव रूपेण तत्कार्यं सिद्ध्यतीति स्वयं गुणातीतः अत्र रूपे गुणग्रहणे प्रयोजनं नास्तीत्याह—साक्षात्पुरुष इति। अयं सर्वेषामुपासकानामात्मा अतस्तद्धितमेव विचारयति तदुपासनाविरोधं करोति किञ्च अस्य तादृशी कापि शक्तिर्नास्ति यद्दुरोधात्तां परिगृह्य सगुणो भवेत् ननु पुरुषत्वात् प्रकृतिरायातीति चेत् अत आह—प्रकृतेः पर इति। ननु तथापि भक्ते क्लेशं दृष्ट्वा कथं न सम्पादयतीति चेत्तत्राह स सर्वदृगिति। सः प्रसिद्धः आत्मा हितकारी सर्वस्यापि सर्वं पश्यति किञ्च अन्तर्यामित्वान्निकटेऽपि स्थितः पश्यति ततो यदैव यद्विना कार्यं न भवतीति जानाति तदैव तत्प्रयच्छतीति भावः। अत एवैतादृशं परमार्थलक्षणं भजन् स्वयमपि निर्गुण एव भवेत् गुणप्रयोजनाभावात् भगवांश्च तेनैव रूपेण प्रकट इति न भक्तोपेक्षते नापि भगवान् प्रयच्छतीत्यर्थः ॥ ५ ॥

प्रत्युत दोषरूपान् विषयान् भक्तेषु पश्यन् अपहरतीति विष्णूपाख्यानमाह—निवृत्तेष्वश्वमेधेष्विति। अश्वमेधत्रयं कृत्वा पश्चादन्ते धर्मश्रवणस्य विहितत्वात् भगवान् धर्मान् शृण्वन् भगवान् भक्तानां सम्पदो न वर्द्धयतीति तत्र सन्दिहानः इममेवार्थम् अच्युतमपृच्छत् स च भगवान् तत्रैव स्थितः स्वधर्मान् शृणोतीति, प्रीतः सन् गुह्यमपि सिद्धान्तं शुश्रूषवे प्रभुत्वात् निःशङ्कतामाह—ननु व्यासादयोऽपि भगवत्कृपासिद्धा इति अतः क एवमुक्तवानित्याशङ्क्याह—नृणां निःश्रेयसार्थायेति व्यासस्यापि शास्त्रद्वारा निःश्रेयससाधकत्वमाद्यकल्पयोरवतीर्ण इति रामव्यावृत्त्यर्थं पूर्वपदम् ॥ ६—७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

कुतो निर्गुणः यतः प्रकृतेः परः अत एव गुणानतिक्रम्य स्थितः अतो गुणातीतस्य भजनात् कथं गुणमयीं सम्पदं प्राप्नुयुरिति भावः। सर्वेषां शिवादीनामपि ज्ञानं यतः स इति तं भजन् ज्ञानचक्षुः प्राप्नोति न तु सम्पदुद्भूतमज्ञानान्ध्यमिति भावः। उपद्रष्टा गुणलेपाभावादौदासीन्येन केवलं साक्षीति तं भजन्नपि गुणलेपरहितो निर्गुणो भवेत् अत एवाग्रे वक्ष्यते यतः शान्तिर्यतोऽभयं धर्मः साक्षात् यतो ज्ञानं वैराग्यञ्च तदन्वितामित्यादि ॥ ५—७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हरिस्तु निर्गुणः समस्तप्राकृतगुणरहितः केवलो निर्गुणश्चेति श्रुतेः यतः पुरुषः पूर्णः भगवान् समस्तस्वाभाविककल्याणगुणनिधिः स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतेः प्रकृतेरिति जातावेकवचनं परापरप्रकृतिभ्यां परः विलक्षणबद्धमुक्ताभ्यां जीवमायाभ्यामन्यः तयोर्नियन्तेत्यर्थः। अक्षरात्परतः परः प्रधानक्षेत्रपतिरित्यादिश्रुतेः—

"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥

इति स्मृतेश्च सर्वदृक् सर्वज्ञः उपद्रष्टा साक्षी किम्बहुना य एव साक्षात्सर्वरूपः सर्वात्मा तं भजन् निर्गुणो निर्बन्धनः मुक्त एव भवेदित्यर्थः। सप्राकृतं धनादिकं तुच्छं प्रायो न ददातीति भावः ॥ ५—७ ॥

---

भाषा टीका।

इस प्रकार शिवादि देवता मायिकसत्वादि गुणों से के परवश है और श्री हरितो माया के गुणों से रहित है तथा साक्षात् जीव माया से परे है सब का अन्तरात्मा पुरुष है सर्वज्ञ है इसी से गुण दोष को जान ने वारा है और शिवादि देवता इस से विपरीत है इस लिये लक्ष्मी पति का भजन कर ने वारा माया के गुणों से रहित होकर संसार से छूट जाता है इस का भाव यह है कि परमात्मा से भिन्न शिवादि देवतानकों केवल सांसारिक फल देने में शक्ति है मोक्ष देने की शक्ति नहि इस वास्ते उन के भक्तों को संसार का ऐश्वर्य हि अधिक मिलता है और परमत्मा निज भक्तों को हित बुद्धि मे ऐश्वर्य्य का सङ्कोच कर मोक्ष देते हैं इस वास्ते उन के भक्त बहुधा धनी नहि होते ॥ ५ ॥

अश्वमेध यज्ञों के समाप्ति होने पर आप के पितामह राजा युधिष्ठिर भगवान से धर्मनको सुनतेर आप ने जो पूछा है इसी कों श्री कृष्ण के प्रति पूछते भए ॥ ६ ॥

---

स आह भगवांस्तस्मै प्रीतः शुश्रूषवे प्रभुः ।
नृणां निःश्रेयसार्थाय योऽवतीर्णो यदोः कुले ॥ ७ ॥

श्रीभगवानुवाच ।

यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः ।
ततोऽधनं त्यजन्त्यस्य स्वजना दुःखदुःखितम् ॥ ८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यस्याहमनुगृह्णामीति अयमर्थः यो विषयान् परिजिहीर्षुरपि कथञ्चिद्ध्रियमाणेषु विषयेषु सज्जते क्लिश्यति च तस्य विषयापहार एवानुग्रह इति यथा ध्रुवादीनामैश्वर्यविरोधात् अथवा प्रथमं विभूतीः कामानुरूपा दत्वा शनैर्विषयभोगावसाने तस्य निर्वेदमुत्पाद्य हरिष्यामि परमानुग्रहं कर्तुमिति तदुक्तं भगवतैव 'नमय्यावेशितधियां कामः कामाय कल्पते इति दुःखदुःखितमिति दुःखादनु पुनर्दुःखितमिव प्रतीयमानमित्यर्थः ॥ ८ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

आहेत्यत्र हेतुः प्रीतः स्वभावत एव तत्रापि शुश्रूषवे श्रोतुमिच्छवे किम्वा यतो भक्ताय ननु तथापि निजोत्कर्षं तादृशविनयादिसद्गुणगणार्णवो वक्तुं नार्हति तत्राहुः—यः प्रभुः स्वतन्त्र एव सन् नृणामित्यादिलक्षणं निजोत्कर्षता-प्रकाशनं विना स्वभक्त्यमनपत्त्या लोकानां मङ्गलासिद्धेरित्यर्थः । तदेवमपि यस्तादृशं तदुपदेशं न गृह्णीत तस्यैव दौर्भाग्यमिति भावः ॥ ७ ॥

अथ किमाहेत्यपेक्षायां सतु तेन देवासुरेत्यादिना प्रश्नस्योत्तरं सस्मितं तदभिप्रायविपरीतमेवाहेत्याह—श्रीभगवानुवाचेति । यमुपासकमनुगृह्णामीति यन्तु कामयमानं नानुगृह्णामि किन्तु यदभिरुचिमात्रमापाततः सम्पादयामि तस्मा एव धनं ददामीति भावः । हरिष्य इति लृट्प्रयोगोऽक्षमायाम् अनवक्लृप्त्यसमर्थयोरकिंवृत्तेऽपीति स्मरणात् तद्धनदर्शनाक्षमापूर्वकं हरामीत्यर्थः । शनैरिति सहसा हरणे तस्य सर्वोच्छादकः क्षोभ एव स्याच्छनैर्हरणे तु क्रमेण धनादुदासीनीभूतः सत्सङ्गरतिः स्यादित्यभिप्रेत्येति भावः । ततः किं तत्राह—ततः इति शनैरित्यस्य त्यजन्तीत्यनेनाप्यन्वयः अत एव दुःखेति वीप्सा च क्रमाद्दारिद्र्यातिशयप्राप्तमित्यर्थः ॥ ८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स इति । स पृष्टो भगवान् श्रोतुं इच्छवे तस्मै युधिष्ठिराय प्रीतः प्राह—तत्र हेतुत्वेन तं विशिनष्टि—नृणां इति । निःश्रेयसार्थाय निरतिशयपुरुषार्थप्रदानं तत्साधनज्ञापनायेत्यर्थः ॥ ७ ॥

यस्येति यामित्यर्थः कर्मणः शेषत्वविवक्षया षष्ठी ननु धनापहारो नानुग्रहः प्रत्युत निग्रह एव स्यादत आह तत इति । अधनमिति च्छेदः ततो धनापहाराद्धनान्निर्गमनमत एव दुःखपरम्पराग्रस्तमस्य ये स्वजनास्ते त्यजन्ति ॥ ८ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भूभारहरणाय प्रवृत्तेन धर्मकथनं कोपयुज्यत इत्यत आह नृणामिति अनेन न केवलमवतारप्रयोजनं भूभारहरणमपितु नृणां संसारनिर्मूलनलक्षणनिःश्रेयसञ्चेत्युक्तं भवति ॥ ७ ॥

अनुग्रहं कर्तुं शनैः यावत् यावत्प्रेम वर्धते तावत्तावद्धरिष्ये धनस्य मदहेतुत्वादेतद्धरणं तत्फलमाह तत इति अस्याधनस्य स्वजनाः दुःखदुःखितं दुःखातिशयोपेतं एनमधनं त्यजन्ति ॥ ८ ॥

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवानाह—यस्याहमनुगृह्णामीति । केवलं यमनुगृह्णामि तं नु ततोन्यत्र नीत्वा भक्तेः संयोज्य कृतार्थमेव मुख्यं करोमि न तत्र हरणादिप्रयासः यस्य तु सम्बन्धिनः सर्वानेवानुगृह्णामि सर्वापकारित्वात्तस्य धनं हरिष्ये चिरप्रवचनेलृट् तत्रापि शनैः यद्यल्पं ह्रियमाणे विवेको भवेत् तं नहरिष्यामीति ज्ञापयन् ननु धने हृते किं स्यादत आह अतोऽधनं तस्य जनाः सम्बन्धिनस्त्यजन्ति तत्र हेतुः दुःखदुःखितमिति अधनत्वेपि समर्थश्चेन्न त्यजन्ति तदीया दुःखिताः तेभ्योऽप्ययमत्यन्तं दुःखितः इति तेभ्यश्चेदन्नादिकं वाञ्छतीत्यर्थः । सर्वथा अप्रवृत्तस्येयं व्यवस्था बीजसंस्कारश्च गृहस्य जातः ॥ ८ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

दुःखात् धनविगमजन्यादपि पुनर्दुःखितं स्वजनकर्तृकत्यागात् दुःखमिदं भगवद्दत्तत्वात् तस्य न कर्मफलं सुखमपि भगवद्भक्तानां न कर्मफलं किन्तु भक्तेरननुसंहितं फलमिति प्रथमस्कन्धे धर्मस्य ह्यापवर्ग्यस्येत्यत्र श्रीष्मोक्तावपि प्रतिपादितं भक्तानां भक्तिमात्रे प्रवृत्त एवाप्रारब्धकूटबीजप्रारब्धकर्मणां क्रमेण नाश उत्पलसहस्रदलभेदवदिति भक्तिशास्त्रमतं तथाच श्रुतिर्गोपालतापनी भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्येनामुष्मिन्मनः कल्पनमेतदेव नैष्कर्म्यम्" इति

स यदा वितथोद्योगो निर्विण्णः स्याद्धनेहया ।
मत्परैः कृतमैत्रस्य करिष्ये मदनुग्रहम् ॥ ९ ॥
तद्ब्रह्म परमं सूक्ष्मं चिन्मात्रं सदनन्तकम् ।
* ( विज्ञायात्मतया धीरः संसारात् परिमुच्यते )
अतो मां सुदुराराध्यं हित्वाऽन्यान् भजते जनः ॥ १० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अयंश्च उपाधिनैराश्येन कामनाराहित्येन मनःकल्पनम् कृष्णे मनआदिसर्वेन्द्रियविनियोगो यस्तदेव भजनम् एतदेव भजनमेव नैष्कर्म्यमिति भवति हि तात्पर्यात्ताच्छब्द्यामतः सामानाधिकरण्याद्भजने प्रवृत्त एव भक्तानां नैष्कर्म्यं सर्वकर्मध्वंसो भवति देहस्थितिस्तु भजनाधिक्यतत्फलप्रतिपादकभगवदचिन्त्यशक्तेरेवेति येतु प्रारब्धे फले इव सुखदुःखे दृश्येते ते भगवद्दत्ते एव यदुक्तं श्रुतिभिर्भवदुत्थशुभाशुभयोरिति भक्तवत्सलो भगवान् भक्तेभ्यः कथं दुःखं ददातीति चेत् सत्यं पुत्रवत्सलोऽपि पितापुत्रेभ्यो भोगदूरीकरणेनाध्ययनादिकृच्छ्रं यद्ददाति तद्वात्सल्यं स एव जानाति नतु तदानीं तत्पुत्रा अपीति न च प्रह्लादध्रुवादिभ्यो भोगसम्पत्तिसुखमात्रदानात् साधकेभ्य एव हितार्थिना भगवता दुःखं दीयत इति वाच्यं सिद्धशिरोमणीनां युधिष्ठिरादीनामपि यत्र धर्मसुनो राजेत्यत्र सुहृत्कृष्णस्ततो विपदिति भीष्मोक्तौ दुःखश्रवणात् तस्मान्नह्यस्य कर्हिचिद्राजन् पुमान् वेदविधित्सितमिति भीष्मोक्तेस्तस्य विधित्सितं स एव भक्तवत्सलो वेद नान्य इति सिद्धान्तः किञ्चित्तत्र समाहितं यत्तदपि तत्रैव दृश्यं ननु च स्वकर्मोत्थयोर्भगवदुत्थयोश्च सुखदुःखयोर्भोग्यत्वेन तुल्यत्वात् को विशेषः उच्यते कर्मोत्थानां सुखदुःखानां भोगेनापि तद्बीजं तिष्ठत्येव तद्वृत्तौ नरकपातश्च कर्मतारतम्यवतां सुखदुःखतारतम्यञ्चेति त्रितयं भवेत् भगवदुत्थानां तु भगवदिच्छैव बीजं साच प्रयोजनपर्यन्तैव न तदुत्तरा जिह्वाग्रवर्त्ति भगवद्गुणनामधेयमित्यादि यमोक्तेस्तद्वृतौ न नरकपातः भगवतः स्नेहपात्रत्वात् नदुःखातिशयश्चेति कर्मोत्थभगवदुत्थयोः शत्रुकृतमातृकृतताडनोत्थयोरिव दुःखयोर्विषामृतयोरिव कुतस्तुल्यतेति विवेचनीयं ननु च सर्वसमर्थस्य भगवतो भक्तदुःखदानं विना किं तत् प्रयोजनं न सिध्येत् सत्यं लीलानिधिस्तस्यैवं सिध्येदेव भक्तियोगस्यरहस्यस्वरक्षार्थं नानान्यमतानामुत्खाताभावार्थं भक्तोत्कण्ठादिवर्द्धनार्थञ्च कचित् प्रियेभ्यो दुःखदानमपि तत्सुखोदर्कमेव यथा नयनाभ्यां कटुतराञ्जनदानमिति तथाहि यदि भक्ताः सदा सुखिन एव कृताः स्युस्तदा परित्राणाय साधूनां विनाशाय च दुष्कृतामितिगीतोक्तनिमित्ताभावे सति कृष्णरामाद्यवतारा अपि न स्युः यदि च न स्युस्तदा रासादिलीलामृतसिन्धौ भक्तानां खेलनं कथं स्यादिति ननु च साधु दुःखत्राणात्मकनिमित्तं विनापि तदवतारे को दोषः स्यात् सत्यं भो भ्रातस्त्वं न रसाभिज्ञोऽसि श्रूयतां यामिन्यां सत्यामेव सूर्योदयः शोभते ग्रीष्मे सत्येव शीतलाम्भः सुखद शीते सत्येवोष्णाम्भः तमस्येव दीपः शोभते नतु प्रकाशे क्षुत्पीडायां सत्यामेवान्नमति स्वादु भवतीत्यलमतिविस्तरेण ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तमनुगृह्णामि कम् यस्य धनं हरिष्ये ततः धनहरणानन्तरमधनं स्वजनास्त्यजन्ति भजनकण्टकधनादिवियोगहेतुरेको मदनुग्रह इत्यर्थः ॥ ८ ॥

भाषाटीका।

मनुष्यो के कल्याणार्थ जिस ने यदुकुल में अवतार लिया वह सर्वशक्ति कृष्ण भगवान् प्रसन्न होकर उपरोक्त अर्थ के श्रवण करने की इच्छा वारे राजा युधिष्ठिर के अर्थ उपरोक्त प्रश्न का उत्तर कहते भए ॥ ७ ॥

श्रीभगवानुवाच।

जिस के ऊपर मैं अनुग्रह करता हूं उस के धन को धीरे२ नाश करता जाहुं धन नाश होने के अनन्तर उस के बन्धुजन उस अति दुःखी को छोड़ देते हैं ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

स पुनर्यन्धूनामाग्रहेण धनेहया प्रवृत्तोऽपि मदनुग्रहेण यदा निष्फलोद्यमो निर्विण्णः स्यात्तदा मदनुग्रहमिति ममासाधारणमनुग्रहम् ॥ ९ ॥

तमेवाऽऽह—तद्ब्रह्मेति। अतः पश्चादपि मोक्षमरोचयन् अस्वासक्तो जन इत्यर्थः ॥ १०—११ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

ततोपि किं तत्राह—सइति सार्द्धकेन। निर्विण्णो विरक्तः ततश्च दीनदयया मत्परैर्जनैः कृतं मैत्रं हितं यस्य तस्य मद-

* इदमर्द्धं वङ्गाक्षरपुस्तके अधिकं दृश्यते।

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

नुग्रहं ममाभिरुचितमनुग्रहं करिष्ये अत्र तु लृट्प्रयोगो "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" इति स्मरणात् शीघ्रमेव करोमीत्यर्थः । तदेवं सवासनान् प्रत्येवोक्तं ननु निर्वासनान् श्रीमत्प्रह्लादादीन् प्रतीति कथ्यते तेभ्यो राज्यादिदानन्तु तन्महिमव्यञ्जनार्थमेव असाधारणतत्प्राप्तेस्तथाप्यनासक्तेश्च अनुग्रहस्य तादृशत्वमेव ब्रह्मसाम्येन व्यञ्जयति तदिति । तदनिर्वचनीयवस्तुस्वरूपं यतो ब्रह्म सर्वतो बृहत्तमं परमं सर्वत उत्कृष्टं दुर्लभं दुर्ज्ञेयञ्च सत् मनादिभक्तपरम्परास्वनादित एव सिद्धं अनन्तरमुत्तरकालेऽप्यपरिच्छेद्यं सर्वत्र हेतुः चिन्मात्रं चिच्छक्तिविलासमिति विज्ञायेत्यर्थः पद्यमधिकमसाम्प्रदायिकं तत्रानुग्रहफलत्वेन सर्वतस्तस्य भगवता सामान्यतयैव निर्देशः कृतः तद्विशेषतया तु ज्ञेयः अत इत्यर्थकम् अतो धनाप्राप्तेर्हेतोः जनः साधारणः ननु यस्याहमनुगृह्णामीत्युक्ताभिप्रायेण अकामः सर्वकामो वा इत्युक्तरीत्या च त्वमपि धनं ददासि तर्हि कथमन्यान् भजते तत्राह– सुदुराराध्यमिति तस्याराधनतत्त्वज्ञानाच्छ्रीभगवतश्च सुचिरादेव फलदातृत्वात् इति भावः । तथोक्तं तृतीये––

तं सुखाराध्यमृजुभिरनन्यशरणैर्नृभिः ।

कृतज्ञः को नु सेवेत दुराराध्यमसाधुभिः ॥ इति ।

अथवा तद्‌ज्ञानस्य हेतुत्वमेव व्यञ्जयन् स्वविशेषणत्वेन तद्ब्रह्मेत्यादिकं पूर्वार्द्धमुक्तं तस्माद्ब्रह्मतोऽपि परमं ब्रह्मणो हि प्रतिष्ठाहमित्यादिप्रसिद्धम् अतः सूक्ष्मं दुर्ज्ञेयं यतश्चित्स्वरूपं ब्रह्म च मात्रा अंशो यस्य यद्वा चिद्रूपा मात्रा शक्तिर्यस्य तं सच्च अनन्तं च कं परमानन्दस्तत्स्वरूपमिति ॥ ९–१० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततोऽप्ययं महानिग्रह इत्यत आह––स इति । वितथोद्योगः व्यर्थोद्यमः निर्द्धनस्य सर्वोऽप्युद्योगो व्यर्थ एवेति भावः । अत एव निर्विण्णो भवेत् तदाऽनीहया निराशया वैषयिकं सुखं सर्वथा मम दुर्लभम् इत्येवं तत्राशामपोह्यतीति भावः । मत्परैर्मद्भक्तैः सह कृतं मैत्रं यस्य तस्य मदनुग्रहं करिष्ये मदसाधारणोऽनुग्रहः मदनुग्रहः तमतो नमपौनरुक्त्यम ॥ ९ ॥

तमेवानुग्रहं दर्शयति––तस्मा इति । तस्मै मत्परैः कृतमैत्राय यद्ब्रह्म तद्दर्शयामीति शेषः । असावेव मदनुग्रह इति भावः । कथम्भूतं ब्रह्म परं प्रकृतिपुरुषाभ्यां विलक्षणं सूक्ष्मं सर्वान्तःप्रवेशयोग्यं चिन्मात्रं ज्ञानस्वरूपमात्रं मात्रशब्देन कचिदपि जडत्वव्यावृत्तिः अनन्तकं त्रिविधपरिच्छेदशून्यमत्र सत्यज्ञानादिवाक्यार्थ उपक्षिप्तः अनन्तावहःस्वावहत्वात्सुदुराराध्यं मां हित्वा "हि गतौ" गत्यर्थानुबुद्ध्यर्थाः ज्ञात्वेत्यर्थः । अन्यान् रुद्रादींस्तावत् सुखदान् ततस्तु दुःखदान्स्वयमपि दुःखितान् ज्ञात्वा केवलं सुखदा नित्यं बुध्वा भजत इत्यर्थः ॥ १० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ततो धनाभावात्स यदा धनेहया वितथोद्योगो निर्विण्णः स्यात्तदा मत्परैः कृतमैत्रस्य तस्यानुग्रहं मुक्तिलक्षणं करिष्य इत्यन्वयः ॥ ९ ॥

यतोऽहं भजमानस्य धनं हरिष्यामि अतस्तत्परमं ब्रह्म वेदान्तवेद्यं सूक्ष्मं नित्याव्यक्तं चिन्मात्रं प्रकृतिप्राकृतवैकृतज्ञानशून्यं सत्प्रशस्तं अनन्तकं अन्तत्रयवर्जितं सुदुराराध्यं मां हित्वा अन्यान् भजते परं ब्रह्मत्वादयः सुदुराराध्यत्वे हेतवः ॥ १० ॥

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

मत्परैरित्यादि करिष्ये मदनुग्रहमिति मम अनुग्रहो यस्मिन् स मदनुग्रहस्तं मद्भक्तं करिष्यामीत्यर्थः । अन्यथा 'यस्याहमनुगृह्णामी'त्यनेनैव पूर्वमेवानुग्रहोक्तेरुक्तोक्तदोषः स्यात् ॥ ९ ॥

मत्परः सह कृतमैत्रत्वस्यानन्तरं भक्तत्वकृतौ सत्यां यद्भवति तदाह–तद्ब्रह्मेति सार्द्धेन । अतः कारणात् मां सुदुराराध्यं सुखाराध्यं दुःखाराध्यञ्च द्वन्द्वात्परं श्रूयमाणः शब्दः प्रत्येकमभिसम्बध्यते हित्वान्यान् देवान् भजते मोक्षाकाङ्क्षिणां सुलभं प्रेमाकाङ्क्षिणां दुर्लभं मोक्षप्रदत्वेन सुलभं प्रेमप्रदत्वेन दुर्लभं उभयत्वेन विशेषणं विशेष्यञ्च तत्र मोक्षप्रदतया सुलभत्वे विशेषणं तद्ब्रह्मेति परमं सूक्ष्मं चिन्मात्रं चिदेकात्मकं सत् सत्तामात्रं अनन्तकं व्यापकं प्रेमप्रदतया दुर्लभत्वे चैतानि तथथा तद्ब्रह्म परमं तत्प्रसिद्धं यद्ब्रह्म निर्विशेषं निष्क्रियं ततोऽपि परा उत्कृष्टा मा शोभा यस्य सूक्ष्मं सुष्ठु शोभना क्ष्मा यस्मात् धरणी भारापहरकं सुशब्दस्य दीर्घत्वमार्षं पाणिनीव सूयवसादित्यादिवत् चिन्मात्रं चित् चैतन्यमात्रा शक्तिर्यस्य सदनन्तकं सतां भक्तानाम् अनन्तं कं यस्मात् इति मामित्यस्य विशेषणानि इति मोक्षतोऽपि प्रेम्णो दुर्लभत्वं दर्शितम् ॥ १०—४० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु, बन्धुपरित्यागे किं स्यादत आह––स यदा वितथोद्योग इति । यदा स त्यक्तबन्धुस्तदा धनमुपार्ज्य बन्धून् वशीकरिष्यामीति निश्चित्य धनार्थं यतते ततस्तदा धनवद्भगकारणमपि नाशयामीत्याह––वितथोद्योग इति । वितथाः उद्योगाः धनार्जनोपाया यस्य तदा केवलधनेहया उपायरहितया क्लिष्टः सन् निर्विण्णोऽभवति विरक्तो भवति तदा योग्यं योग्येन सम्बध्यत इति मत्परैः कृतमैत्रो भवति तदा मत् मत्त एव स्वत एवाहम अनुग्रहं करिष्ये ॥ ९ ॥

कोऽनुग्रह इति चेत्तत्राह––तद्ब्रह्मेति ममानुग्रहो ब्रह्मभावः पश्चान्मत्सेवया सर्वसुखमिति अत्रायं क्रमः सेवकैः सह मैत्र्या सेवकसमानव्यसनत्वे सेवकतुल्यता ततस्तैर्मैत्र्या अन्येन वा तस्य ज्ञानोदयः ततो ज्ञानपूर्णः केवल एव मां भजते शब्दब्रह्मव्यावृत्त्यर्थः परमं कार्यव्यावृत्त्यर्थं सूक्ष्मं सगुणव्यावृत्त्यर्थं चिन्मात्रम् अस्मज्जीवभावव्यावृत्त्यर्थम् अनन्तमिति एवं सत्यं ज्ञानमनन्तं ब्रह्मेति यल्लक्षणमुक्तं तदेव करोमीत्यर्थः नन्वेवंकृते कः पुरुषार्थः सिध्येत् कथं ज्ञानमेव प्रथमतो नोपदिश्यते सत्यम् अन्यदपि प्रयोजनमस्तीत्याह-अतो मां सुदुराराध्य-

ततस्त आशुतोषेभ्यो लब्धराज्यश्रियोद्धताः ।
मत्ताः प्रमत्ता वरदान् विस्मरन्त्यवजानते ॥ ११ ॥

श्रीशुक उवाच ।

*शापप्रसादयोरीशा ब्रह्मविष्णुशिवादयः ।
सद्यः शापप्रसादोऽङ्ग शिवो ब्रह्मा न चाच्युतः ॥ १२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मिति स्वयं न प्रयच्छति स्थितमपि हरति मुक्तिमेव प्रयच्छतीति नन्वैहिकं प्रार्थ्यमानमपि इति दुराराध्यता अतएव दैहिकाः मां हित्वा अन्यान् भजन्ते अन्यथा मद्भक्ता नानाविधाः दुष्टाः शिष्टा अपि भवेयुरिति तद्व्यावृत्त्यर्थं तथा करणमित्यर्थः ॥ १० ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

करिष्ये मदनुग्रहमिति द्वितीयोऽयमनुग्रहोऽसाधारणो भक्तिरसामृतवर्षी यदर्थमेव मे प्रथमोऽनुग्रहो दुःखमन्तापफलोऽभूदिति भावः । अत एवानुग्रहं करिष्ये इत्यप्रयुज्य मदनुग्रह मिति मामिवानुग्रहं करिष्य इत्यर्थः ॥ ९ ॥

अत एवानुग्रहं स्वतुल्यत्वेन विशिनष्टि-तद्ब्रह्मेति । बृहत्तमत्वात् बहिरङ्गलोकदुर्लक्ष्यत्वाच्च ब्रह्मतुल्यं परमं सर्वोत्कृष्टं अनुग्रहस्य भक्तस्याप्यगम्यत्वात् सूक्ष्मं प्रेमरसानुभावकत्वात् चिन्मात्रं प्राकृतसुखराहित्यात् मात्रपदप्रयोगः सत् सर्वकालसत्ताकम् अनन्तकं नास्त्यन्तकभयं यत इत्यनुसंहितफलरूपः संसारक्षयश्चोक्तः कश्चिदत्र विशेषविशेषपदमधिकं तद्धसाम्प्रदायिकमिति श्रीवैष्णवतोषणी व्यावहारिकसुखविनाशकत्वात् सुदुराराध्यम् ॥ १० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स यदा वितथोद्योगः अत एव निर्विण्णः स्यात्तदा तस्य मत्परैः कृतमैत्रस्य मत्परसेवया लब्धमद्विषयकज्ञानभक्तिरहस्य मदनुग्रहं मदसाधारणमनुग्रहं द्वितीयमनुग्रहं करिष्ये तं मुक्तं करिष्ये इत्यर्थः ॥ ९ ॥

मुक्तिमेवाह—तस्मै संसारात् निर्विण्णाय मद्विषयकज्ञानभक्तिसम्पन्नाय ब्रह्म ददामीतिशेषः परमं । परमात्मानं सूक्ष्मं प्रकृतिकालकर्माद्यग्राह्यम् चित् जीवो मात्रा कला अंशो यस्य तदंशिस्वरूपं चिन्मात्रम् सत् सत्यत्वज्ञानत्वादिगुणयुक्तम् अनन्तकं त्रिविधपरिच्छेदशून्यम् अतः मायामोहितानां निर्विण्णत्वभक्तिमत्त्वाद्यसम्भवाद्धेतोः मां दुराराध्यं तादृशैः दुराराध्यं हित्वा अन्यं रुद्रादिकं भजते ॥ १० ॥

भाषा टीका ।

फिर धन के वास्ते जो कुछ उद्योग करता है वह सब उद्योग उस का निष्फल होजाता है इस वास्ते धन के व्यापार से विरक्त होजाता है विरक्त होने पर मेरे भक्तों के साथ वह मित्रता करता है तब उस के विषय अनुग्रह करता हूं ॥ ९ ॥

यदि अनुग्रह करताहूं कि उस के अर्थ स्वरूप गुण कर के सब से बड़ा सर्वोत्तम सर्वान्तर्यामि ज्ञान स्वरूप सर्व काल में विद्यमान अनन्त एतादृश अपने स्वरूप को देताहूं इसी कारण अभक्त ओंको दुराध्य जान कर मोको छोड़ कर अज्ञ जन केवल संसार के ऐश्वर्य्य को देने अन्य देवतान का भजन करता है ॥ १० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

एतदेवेतिहासेन द्रढयितुमाह शापप्रसादयोरिति ब्रह्मा चेत्यन्वयः ॥ १२-१३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तच्च तेषां भजनं प्राप्ते फले वैपरीत्यायैव स्यादित्याह तत इति । आशुतोषेभ्यः विचारं विनैव तुष्यद्भ्योऽन्येभ्यः उद्धताः अतिक्रान्तमर्य्यादाः मत्ता गर्विताः प्रमत्ताश्चानवहिताः सन्तः वरदानपि तान् कालेन विस्मरन्त्येव कथञ्चित्स्मरणे ऽप्यवजानते च ॥ ११ ॥

श्रीभगवदुक्तरीत्या तेषामाशुतोषत्वप्राप्तविचारत्वं तथापि श्रीभगवदाश्रयबलेन सर्वसिद्धिं श्रीभगवतस्तु सुदुराराध्यताप्राप्तसुविचारत्वं तेषां श्रीभगवदाश्रय(मूलानां)भूतानां मदाङ्गीकारञ्चेतिहासेन दर्शयितुमुपन्यस्यति-शापेति । शापे प्रसादे वरदाने च ईशाः समर्थाः आदिशब्दादिन्द्रादयः अङ्ग भो राजन् ! इतिमत्यमेवेदमितिभावः । अच्युत इति निजतत्त्वगुणच्युतिराहित्यात् ॥ १२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मत्ताः गर्विताः प्रमत्ताः अनवहिताः ॥ ११—१३ ॥

* वीप इति वीरराघवी पाठः ।

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत इति । ततो भजनानन्तरं ते भक्ताः आशु तुष्यन्तीति आशुतोषाः तेभ्यो रुद्रादिभ्यः सकाशात् अनेनात्मनि चिरात्तोषत्वं सूचितं लब्धं राज्यं यैस्ते श्रिया सम्पदा उद्भूताः उत्पथाः मत्ताः गर्विताः प्रमत्ता अनवहिताश्च वरदान्देवानेव विस्मरन्त्य-वजानतेऽवज्ञां कुर्वन्ति च इत्थं स्वोक्तपरिहारो भगवदुक्त्या सम्पादितः ॥ ११ ॥

अथ "अव्यवस्थितचित्तस्य प्रसादोऽपि भयङ्करः । क्षणे रुष्टः क्षणे तुष्टः" इति न्यायेन देवतान्तराणामव्यवस्थितचित्तानां भजनमात्मघातायैव पर्यवस्यतीतीहासेन स्पष्टयितुमाह—कोपेति यद्यपि ब्रह्मादयः सर्वे देवाः कोपप्रसादयोर्निग्रहानुग्रहयोः दक्षास्तथाप्यङ्ग हे राजन्! शिवो ब्रह्मा च सद्य एव शापः प्रसादश्च यस्य तथाभूतः अच्युतस्तु नैवम्विधः किन्त्वनुग्रहैकस्वभावः कश्चिन्निग्रहोऽप्यन्ततो वरेणैव तुल्य इति भावः ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अन्योपासकास्ते मद्व्यानतस्तान् देवानपि जहतीति भावेनाह—तत इति । यतो मामवज्ञायान्यानुपासते अत एव दोषात् ॥ ११ ॥

देवेषु के शापप्रसादसमर्थास्तत्रापि सद्यः शापप्रसादाः क इति तत्राह शापेति ॥ १२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अन्योऽप्येवमेव को विशेष इत्यत आह—तत इति । सर्वे यात्या आशुतोषाः यथा यथा सूक्ष्मो बाह्यः तथा तथा शीघ्रं परितुष्यतीति लोकसिद्धोऽयमर्थः ततस्तेभ्यो राज्यादिकं लब्ध्वा राज्यश्रिया उद्धताः सन्तः आदौ मत्ता भवन्ति स्वात्मानमेव न जानन्ति ततः प्रमत्ताः असावधानाः सन्तः धर्मादिकार्येषु विमुखा भवन्ति तत उपजीव्यानपि न गणयन्तीत्याह—वरदान् विस्मरन्तीति स्मरन्त्येव न अथ यदि प्रमादात्कयेमव स्मृतिपथारूढा भवेयुः वरदास्तथाप्यवजानते तस्मादग्रे अनर्थः पर्यवस्यतीति भगवान् प्रथमत एव निवर्त्तत इत्यर्थः ॥ ११ ॥

आस्तां धनादिवार्त्ता शापप्रसादावेव भगवान्न करोति आत्मत्वात् दानवार्त्ता दूर इति निरूपयितुमुपाख्यानान्तरमारभते शापप्रसादयोरिति । अत्यन्तापराधेऽपि कृते भगवान् शापं न प्रयच्छति यथा शिशुपालाय आत्मत्वं तत्र हेतुः अत्यन्तसेवायां वरमपि न प्रयच्छति सुखरूपत्वं तत्र हेतुः नहि कामिनी उपभोगेन सेव्यमाना कदाचिदपि वरं प्रयच्छति तस्माद्भगवत्सेवैव परमपुरुषार्थरूपेति नन्वसमर्थो भविष्यतीति चेत्तत्राह—शापप्रसादयोः ब्रह्मशिवादयः सर्व एव ईशाः आदिशब्देन दुर्गागणेशादयोऽपि सामर्थ्येऽपि विद्यमाने सद्यः शापप्रसादः शिवो ब्रह्मा च अत्रैकस्य दकारस्य लोपश्छान्दसः अङ्गेति पाठे अन्यदा तु शापप्रसादवस्तु शिवो ब्रह्मत्येव अच्युतस्तु नैवम्विधः सहि पुरुषस्य स्वरूपं भावि अग्रे कार्यं विचार्यैव शापं वरं वा प्रयच्छति नत्वन्यथा ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

प्रमत्ताः परामर्शशून्याः ॥ ११—१५ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

उद्धता उत्पथाः मत्ताः अनवहिताः प्रमत्ता युक्तायुक्तविवेकरहिताः वरदान् विस्मरन्ति अवजानन्ते अवज्ञां कुर्वन्ति कृतघ्ना भवन्तीत्यर्थः ॥ ११ ॥

वासुदेवेतरप्रसादस्यानर्थहेतुभूतस्य सुलभत्वं वासुदेवप्रसादस्यामृतहेतुभूतस्य च दुर्लभत्वमाह शापप्रसादयोरिति ॥ १२ ॥

भाषा टीका ।

अनन्तर शीघ्र प्रसन्न होने वारे अन्य देवतानते प्राप्त भई राज्य सम्पत्ति से दुर्मार्ग गामी गर्वयुत असावधान होकर जिन देवतानते अपने को राज्य सम्पत्ति मिली उन हि को भूलकर वे अज्ञजन उन इष्ट देवन का अपमान करने लगते हैं ॥ ११ ॥

श्रीशुक उवाच ।

हे राजन् ! ब्रह्मा विष्णु शिव आदि देवता शाप और अनुग्रह करने में समर्थ हैं उन में ब्रह्मा और शिव ए दोनो शीघ्र हि शाप देदेते हैं और शीघ्र हि प्रसन्न भी हो जाते हैं परन्तु विष्णु भगवान् ऐसे नहि हैं किन्तु उनका तो केवल कृपा करने का हि स्वभाव है और किसी को दण्ड भी देते हैं उस का फल अनुग्रह हि होता है ॥ १२ ॥

अत्र चोदाहरन्तीममितिहासं (१)पुरातनम्।
वृकासुराय गिरिशो वरं दत्त्वाऽऽप सङ्कटम् ॥ १३ ॥
वृको नामाऽसुरः पुत्रः शकुनेः पथि नारदम्।
दृष्ट्वाऽऽशुतोषं पप्रच्छ देवेषु त्रिषु दुर्मतिः ॥ १४ ॥
स आह देवं गिरिशमुपाधावाशु सिध्यसि।
योऽल्पाभ्यां गुणदोषाभ्यामाशु तुष्यति कुप्यति ॥ १५ ॥
दशास्यबाणयोस्तुष्टः स्तुवतोर्वन्दिनोरिव।
ऐश्वर्यमतुलं दत्त्वा तत आप सुसङ्कटम् ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

शकुनेः पुत्रः ॥ १४—१५ ॥

सुसङ्कटमाप कैलासोत्पाटनं पुरपालनं च ॥ १५ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

पुराविदः पूर्ववृत्तान्तज्ञाः पौराणिका इत्यर्थः। पुरातनमिति काचित्कम् ॥ १३ ॥

पथि दृष्ट्वेति बुद्धिपूर्वकत्वाभावेनैव ततश्च सङ्गमेन तस्य दुष्टत्वं तत्रैवापृच्छीदिति सद्यवसायानभिज्ञत्वं च दर्शितं त्रिषु ब्रह्मादिषु मध्ये आशुतोषम् ॥ १४ ॥

आशु उपाधाव ततश्च सिद्ध्यसि समीप एव सेत्स्यसि· सिद्धे स्पष्टार्थो भविष्यतीत्यर्थः अल्पाभ्यामिति अल्पगुणेन तुष्यति अल्पदोषेण कुप्यति चेत्यर्थः ॥ १६ ॥

नन्वेवञ्चेत् तर्हि बिभेमिचेति नाशङ्क्यं यतो वरालब्धवरस्य तव न किञ्चित्कर्त्तुमसौ शक्ष्यतीति दृष्टान्तद्वारा दर्शयति दशेति। वन्दिनोरिव स्तुवतोः सकामत्वात् अत्र वाणासुरात् सुसङ्कटप्राप्तिः स्वेन युद्धप्रार्थनारूपा श्रीभगवता सह युद्धादिदुःखरूपाच ज्ञेया प्राचीनकल्पानुसारेणेदमुदाहृतम् ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

त्रिषु देवेषु आशुतोषं पप्रच्छेत्यन्वयः ॥ १४—१९ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अत्रेति। सद्यः शापप्रसादत्वे निदर्शनतयेतिहासमुदाहरन्तीत्यर्थः। कोसावित्यतस्तं वर्णयति—वृकासुरायेति। सङ्कटं दुःखमवापेत्यर्थः ॥ १३ ॥

कथं तदित्यतो विस्तरतो वर्णयति-वृक इति। शकुनेः पुत्रः त्रिषु देवेषु मध्ये शीघ्रसन्तोषं पप्रच्छ यतः स दुर्मतिः ॥ १४ ॥

स नारदः आदिदेश शशंस किमिति गिरिशमुपाधाव भज स आशु तुष्यति किञ्च स इति स गिरिशः ॥ १५ ॥

तथाहि दशास्यबाणयोः रावणबाणासुरयोरिव स्तुवतोरतुलमैश्वर्यं दत्वा ताभ्यां सकाशादेव सङ्कटं कैलासोत्पाटनपुरपालनात्मकं दुःखमवापेत्यर्थः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

शिवः रुद्रः शापप्रसादः इत्येतत्कथमित्यत्र इतिहासं वक्ति अत्रेति ॥ १३—१६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधनी।

अत्राविचारदानं वक्तुम् उपाख्यानमुपक्षिपति—अत्र चोदाहरन्तीममिति। इयमपि परमतभाषा अत आह—पुराविद इति। अविचारदानस्य सङ्क्षेपेण फलमाह—वृकासुरायेति। गिरिशो महादेवः स्वयमेव वरं दत्वा पश्चात्सङ्कटं परमक्लेशं प्राप्तवान् ॥ १३ ॥

कथमित्याकाङ्क्षायां सर्वमेव वृत्तान्तमाह—वृको नामेति। कर्मणापि वृक इति तस्य वृक एव नाम शकुनेः हिरण्याक्षपुत्रस्य पुत्रः सहि दुरात्मा सर्वान् मूलतो नाशयिष्यामीति विचार्य तेषां मूलभूताश्च य इति तन्निराकरणव्यतिरेकेण निराकर्त्तुमशक्या इति तेष्वेकस्यापि वाक्यं सर्वे मन्यन्त इति तत्कृतोपायेन ते मारणीया इति निश्चित्य तेषामन्यतमप्रसादे एवमर्थं साधयिष्यामीति. तदभिज्ञं नारदं पप्रच्छ सोपि नारदो देवसूत्रकर्त्ता पथि दैवगत्या मिलितः त्रयाणां मध्ये क आशुतोष इति पृष्टः सन् गिरिशमादिदेश सच दुर्मतिर्वृकः नहि नारदः कदाचिदपि देवनाशोपायं उपदेक्ष्यति नाप्यज्ञः एवं ज्ञात्वापि पृष्टवानपि दुर्मतिरेव नारदस्य

(१) पुराविदः इति वै० तो० पाठः।

इत्यादिष्टस्तमसुर उपाधावत्स्वगात्रतः ।
केदार आत्मक्रव्येण जुह्वानोऽग्निमुखं हरम् ॥ १७ ॥
देवोपलब्धिमप्राप्य निर्वेदात्सप्तमेऽहनि ।
शिरोऽवृश्चत्स्वधितिना तत्तीर्थक्लिन्नमूर्धजम् ॥ १८ ॥
तदा महाकारुणिकः स धूर्जटिर्यथा वयं चाग्निरिवोत्थितोऽनलात् ।
निगृह्य दोर्भ्यां भुजयोर्न्यवारयत्तत्स्पर्शनाद्भूय उपस्कृताकृतिः ॥ १९ ॥
तमाह चाङ्गालमलं वृणीष्व मे यथाऽभिकामं वितरामि ते वरम् ।
प्रीयेय तोयेन नृणां प्रपद्यतामहो त्वयाऽऽत्मा भृशमर्द्यते वृथा ॥ २० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

वाक्यं उपाधाव आशु सिध्यतीति सेवां कुरु शीघ्रमेव फलसिद्धिर्भविष्यतीत्यर्थः । तत्र हेतुमाह—सोऽल्पाभ्यामिति । स शिवः अल्पाभ्यामेव गुणदोषाभ्यामल्पेन गुणेन तुष्यति अल्पेनापि दोषेण कुप्यतीति ॥ १४—१५ ॥

त्वदभिलषितं जानामीति ज्ञापयन् दृष्टान्तमाह—दशास्यबाणयोस्तुष्ट इति । का तेषामुपासनेत्याकाङ्क्षायामाह—स्तुवतोरिति । स्तोत्रमात्रेणैव सन्तुष्टस्तदपि स्तोत्रं नैव भक्त्या किन्तु जिघृक्षयेति वक्तुं दृष्टान्तमाह, वन्दिनोरिवेति । यथा वैतालिकाः स्तुवन्ति ततस्तयोरैश्वर्यमतुलं दत्त्वा ततः स्वदत्तैश्वर्येणैव सङ्कटमाप तयोः पुरपालो जात इत्यर्थः ॥१६॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

सुसङ्कटं क्रमेण कैलासोत्पाटनं पुरपालनं च ॥ १६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वासुदेवेतरेषामाशुतोषत्वं तद्भजनस्यानर्थहेतुत्वमितिहासेन स्फुटीकरोति—अत्रैवेति ॥ १३—१४—१५ ॥

यश्च सुतुष्टः ऐश्वर्यं दत्त्वापि ततः ताभ्यां सकाशात् सुसङ्कटमतिदुःखं कैलाशोत्पाटनं पुरपालनं चाप ॥ १६ ॥

भाषा टीका ।

इस विषय में प्राचीन इतिहास को दृष्टान्त रूप से ऋषि जन कहते हैं वृकासुर को वरदान देकर महादेवजी सङ्कट को प्राप्त होगए रहे ॥ १३ ॥

शकुनिका पुत्र वृकनाम असुर दुर्बुद्धिने मार्ग में नारदजी को देख कर तीनो देवनमें जल्दी प्रसन्न होजाने वारे को पूछा ॥ १४ ॥

नारदजी बोले कि तू महादेवजी का पूजन कर शीघ्रही तु सिद्ध होजावेगा क्योंकि जो महादेवजी थोडेहि गुण से शीघ्र प्रसन्न होजाते हैं और थोडेहि अपराध से शीघ्रहि क्रोध होजाते हैं ॥ १५ ॥

वन्दी जनों के तुल्यस्तुति करने वारे रावण और बाणासुर को ऊपर शीघ्रहि प्रसन्न होकर उन को अतुल ऐश्वर्य्य देकर महादेवजी अति सङ्कट को प्राप्त हो गए ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

स्वगात्रत उपाधावत् कथम् आत्मक्रव्येण स्वमांसेन जुह्वान इति ॥ १७ ॥

अवृश्चच्छेत्तुमुद्यतः ॥ १८ ॥

मूर्तिमानग्निरिव देदीप्यमानः वयमधुनातना यथाकिञ्चिद्दुःखेन मर्तुकामं वारयामस्तद्वदिति स च उपस्कृताकृतिः परिपूर्णदेहोऽभवत् तं न्यवारयदेवमाह च ॥ १९ ॥

तोयेनापि भजतां प्रीतः स्यां त्वया तु देहो वृथापीड्यत इति ॥ २०—२१ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

एवमुभयोस्तोष्यतोषकयोराजसत्वं दर्शयित्वा समोभिभवं दर्शयति—इतीति द्वाभ्यां । केदाराख्ये शिवक्षेत्रे अग्निर्मुखं यस्येति सर्वदेवानामग्निमुखत्वात्तमुद्दिश्याग्नौ होमं कुर्वन्नित्यर्थः ॥ १७ ॥

देवस्य निजाराध्यस्य शिवस्योपलब्धिं समीपे प्राप्तिं दर्शनं वा निर्वेदात् दुःखात् स्वाधितिना खड्गेन परश्वधेन वा तत्र तीर्थेन आ सर्वतः क्लिन्ना आर्द्रा मूर्धजा यस्मिन् तत् नित्यं त्रिषवणपरत्वात् किंवा छेदनार्थं सद्यः स्नानात् ॥ १८ ॥

त्रिलिङ्गत्वात्सत्त्वगुणोदयमप्याह—तदेति । स एव सवेत्यन्वयः दुष्टेपि कारुण्योदयात् महाकारुणिकः यथा वयमिति अजहल्लक्षणया साधारणजनप्राप्तिः तद्दृष्टान्तत्वञ्च महाकारुणिकतयेश्वरत्वस्यागेन लौकिकसादृश्यप्राप्तेः ॥ १९ ॥

अङ्गेति सलालनसम्बोधनम् अलं स्वशिरश्छेदनेन प्रयोजनं नास्तीत्यर्थः । वीप्सा वैयर्थ्यात् मे मत्तो यथा निकामं स्वाभिके-

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

इच्छानुसारेण अभिकाममिति वा पाठः वरामित्युभयतोऽप्यन्वयः अहो खेदे ॥ २० ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

अर्धते क्लिश्यते ॥ २०-२४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

इतीति। इत्थमादिष्टोऽसुरः सुष्ठु मन्त्रितः प्रत्यादिष्टश्च तं गिरिशमेवोपाधावदाराधितवान् स्वगात्रत इति पाठे स्वदेहेन स्वदेहमांसहोमेनाराधितवानिति यावत् आत्मनः स्वस्य क्रव्यं मांसं तेन हविषाऽग्निमुखमं हरं जुहा-नोऽपि ॥ १७ ॥

देवस्य हरस्योपलब्धिं दर्शनमप्राप्य सप्तमेऽहनि (दिवसे) क्लिन्ना आर्द्रा मूर्धजाः केशाः यस्य तादृशात्मनः शिरः स्वधि-तिना ऽवृश्चच्छेत्तुमारब्धवानित्यर्थः। स्वधितिः पशुपुरोडाशादि-च्छेदनार्थः शस्त्रविशेषः ॥ १८ ॥

तदेति। स धूर्जटिः रुद्रः मूर्तिमानग्निरिव देदीप्यमानोऽग्ने-रुत्थितः स्वदोर्भ्यां तद्भुजयोः प्रगृह्य न्यवारयत्तस्य धूर्जटेः स्पर्शमात्रप्रभावात्पुनरुपस्कृता निर्व्रणा आकृतिः शरीरं यस्य तथा भूतो बभूवेत्यर्थः ॥ १९ ॥

तमिति। तं वृकासुरमाह च किमिति अङ्ग हे वृक! अलमलं होमेनेति शेषः यथा निकामं यथेच्छं वरं वृणीष्व तुभ्यं वितरामि प्रयच्छामि तोयेनापि प्रपद्यतां भजतां नृणां प्रीतः स्यां त्वया तु वृथा आत्मा देहो भृशमर्दितः पीडितः ॥ २०-२७ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अग्निमुखमुद्दिश्य जुह्वानिति च्छान्दसः जुह्वन् होमं कुर्वन् ॥ १७ ॥

देवोपलब्धिं देवदर्शनम् असिना शिरो हर्तुकामोऽभूत् ॥ १८ ॥

करचरणाद्यवयवी उपाकृताकृतिः उत्पन्नस्वरूपः ॥ १९ ॥

यथा निकामं नितरां काममनतिक्रम्य नृणां यत्प्रियतमं वस्तु स जीवः जीवनं प्राणधारणं तेन जीवेन प्रपद्यता प्रपन्नो भवतु भवानिति शेषः केनेत्यत उक्तं शिवेन मयेति किञ्च जीवो क्षुधाहरणतत्परः अनेन पूर्वमायुः परीक्षेत पश्चाल्लक्षणमधिशेदितिवचनात् जीवनं सर्वस्मादभीष्टमित्युक्तं भवति किञ्चात इति तत्राह—अहो इति। आत्मा शरीरम् अर्धते हिंस्यते अहो यस्मात्तस्मात् ॥ २० ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं स्वहितं श्रुत्वा तथाकृतवानित्याह—इत्यादिष्ट इति। तं महादेवं अकृत्वा स उपाधावत् उपाधावनमेवाह—स्व-गात्रतः स्वशरीरादेव स्वस्य क्रव्यं मांसमुद्धृत्य अग्नौ महा-देवं मन्त्रेण भावयित्वा केदारे अतिशुद्धे हिमालये अग्निमुखं रुद्रेणोपाधावदित्यनेन महादेवोद्देशेन स्वमांसमजुहोदिति ज्ञापितम् एवं सप्तदिनपर्यन्तं कृतवान् महादेवः वृकोऽपि भगवत्प्रतीक्षया सप्तदिवसानङ्गीकृतवन्तौ ततो भगवान् न फलदो जात इति निश्चित्य देवस्योपलब्धिमप्राप्य सप्तमेऽहनि मरणं वा फलं वा साधयिष्यामीति निश्चित्य स्वधितिना शिरः अवृश्चत् सङ्कल्पपूर्वकं तथा कृतवानिति ज्ञापयितुमाह—तत्तीर्थक्लिन्नमूर्धजः तत्र केदारोदकतीर्थं प्रसिद्धं यस्मिन् पीते उदरे लिङ्गानि भवन्ति तेन क्लिन्ना मूर्धजाः केशा यस्य ॥ १७-१८ ॥

एवं तस्य साहसं दृष्ट्वा महादेवो मूलकारणाकुलितमनाः प्रसन्नो जात इत्याह—तदा महाकारुणिक इति। परदुःखं दृष्ट्वा यो दुःखितो भवति स कारुणिक इति भगवांस्तु परमकारुणिकः दुःखोत्पत्तिसम्भावनायामपि दुःखितो भवति तत्र हेतुभूतं विशेषणमाह—स धूर्जटिरिति। श्मशाने वृथा मृतान् दृष्ट्वा दुःखितः तत्पांसुषु लोटनाद्धूसरवर्णा जटा जाता इति यथाऽऽह्वयमिति आहूयाह्वानं आगच्छ रुद्र इमं बलिं गृहाण स्वाहेत्यत्र एवैव शीघ्रमागच्छेत्याह्वानं कृतं तथैव समागतः सन्देहाभावार्थं प्रत्यक्षदृष्टं दृष्टान्तीकरोति अग्निरि-वेति। चकारान्मानसाह्वानं समाप्तेनैव समागत इति ज्ञापितं तदा भगवानालिङ्गनेन निष्पीड्य न्यवारयत् शिरश्छेदनं न कर्तव्यमिति नन्वेवञ्चेद्यथा प्रथमं गात्रच्छेद एव कथं न निवारित इति चेत्तत्राह—तत्स्पर्शनाद्भूय उपस्कृताकृतिरिति महादेवस्य स्पर्शमात्रेण भूयः उपस्कृता पूर्ववत् पुष्टा आकृति-र्देहो यस्य स्पर्शमात्रेणैव पूर्ववज्जात इत्यर्थः। एवं सति तस्य प्रत्यापत्तिरुक्ता ॥ १९ ॥

अधिकं दातुमाह—तमाहेति। वचनेनापि निराकृतवानि-त्यर्थः। तदेव वचनमाह—हे अङ्ग अलमलमिति मे मत्तो वृणीष्व यथाभिकामं यथेच्छं ते तुभ्यं वरं वितरामि दास्यामि ननु किमिति दास्यतीति चेत्तत्राह—यतः प्रीते प्रीतो भवामि प्रीतावेव किं कारणमिति चेत्तत्राह—नृणां प्रपद्यतामिति येन कारणेन प्रपन्ना भवन्ति प्राणिनस्ततः तेन कारणेन प्रीय इत्यर्थः प्रपत्तिः प्रीतिहेतुर्निरूपिता ननु प्रति-पत्तिमात्रेण कथं वाञ्छितं दास्यसीत्याशङ्कायामाह—अहो इति न ह्येतादृशी प्रतिपत्तिः क्वचित् दृष्टा वर्तते अत आश्चर्यरूपत्वात् प्रीत इत्यर्थः। एवं प्रमादान्तरमपि क्लेशं कुर्वन् वृथैवात्मा त्वया परितप्यते आत्मा देहो वृथैव खेदं प्राप्यते आत्मपदेन आत्महाननमपुरुषार्थ इति च ज्ञापितं त्वयैव केवलमेवं क्रियते नत्वन्येनेति ॥ २० ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

स्वगात्रतः सकाशात् आत्मक्रव्येण आत्मनैव छिन्नेन मांसेनेत्यर्थः ॥ १७ ॥

अवृश्चत् छेत्तुमुद्यत क्षुधितिना खड्गेन तत्तीर्थे एव आक्लिन्नाः सम्यगार्द्रीभूता मूर्धजाः यस्य तम् ॥ १८ ॥

वयमधुना यातना यथा दुःखेन मर्तुकामे जने वारयाम-स्तद्वत् स च उपस्कृताकृतिः परिपूर्णदेहोऽभूत् ॥ १९ ॥

देवं स वव्रे पापीयान् वरं भूतभयावहम् ।
यस्य यस्य करं शीर्ष्णि धास्ये स म्रियतामिति ॥ २१ ॥
तच्छ्रुत्वा भगवान्रुद्रो दुर्मना इव भारत ! ।
ओमिति प्रहसंस्तस्मै ददेऽहेरमृतं यथा ॥ २२ ॥
इत्युक्तः सोऽसुरो नूनं गौरीहरणलालसः ।
स तद्वरपरीक्षार्थं शम्भोर्मूर्ध्नि किलासुरः ।
स्वहस्तं धातुमारेभे सोऽबिभ्यत्स्वकृताच्छिवः ॥ २३ ॥
तेनोपसृष्टः सन्त्रस्तः पराधावन् सवेपथुः ।
यावदन्तं दिवो भूमेः काष्ठानामुदगादुदक् ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अलमलं शिरश्छेदेनेत्यर्थः ॥ २०—२२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मकव्येण स्वमांसेन जुह्वानः स्वगात्रतः सार्वविभक्तिकस्तसिः स्वकीयैर्गात्रैः स्तुत्यादिपरैर्वागादिभिश्च तं गिरिशम् उपाधावदाराधितवान् ॥ १७ ॥

स्वधितिना खड्गेन अवृश्चत् छेत्तुमुद्यतः ॥ १८ ॥

वयं यथाभक्तं मर्तुकामं निवारयामस्तद्वत् न्यवारयत् सच तस्य स्पर्शनात् उपस्कृता परिपूर्णा आकृतिर्यस्य स तथा अभवत् ॥ १९ ॥

अङ्ग हे वृक अलमलं शिरश्छेदेन अहन्तु प्रपद्यतामुपासकानां तोयेनापि प्रीयेय प्रीतः स्याम् त्वयातु आत्मा देहः वृथा अर्घते पीड्यते ॥ २०—२३ ॥

भाषा टीका ।

इस प्रकार नारदजी के उपदेश को प्राप्त भया वृकासुर केदारतीर्थ में निज शरीर से मांस को काट २ कर अपने मांस रूपी हविष्य से हवन करता अग्नि मुखी महादेवजी का आराधन करता भया ॥ १७ ॥

इस प्रकार छै दिन पर्य्यन्त हवन करने महादेव के दर्शन को नहि प्राप्त होकर सातवें दिवस वैराग्य होने से केदारतीर्थ में स्नान कर उस तीर्थ के जल से भीजे हुए केश युत मस्तक को छुरी से काटने को वृकासुर तयार भया ॥ १८ ॥

उसी समय महा करुणावान् वह महादेवजी मानो अग्नि कुंड से मूर्त्तिमान् अग्नि उठता हो इस प्रकार प्रकाशमान होकर अपने दोनो भुजान से उस को दोनो भुजान में गह कर मस्तक काटने से निवारण करते भए जैसे किसी प्रकार के दुःख से मरने को तैयार होने वारे किसी प्राणी को हम सब निवारण करते है महादेवजी के स्पर्श होने से उस के शरीर में सब घाव भर कर फिर ज्यों के त्यों उस के अंग होगए ॥ १९ ॥

फिर वृकासुर के प्रति महादेवजी बोले कि हे वृक ! तु मस्तक छेदन मतना कर तू अपने मनोवांछित वर को मोसे मांग तेरे वर को मे दूंगा जल मात्र समर्प्पण कर कर भजन करने मनुष्यों के ऊपर मै प्रसन्न होता हूं फिर तू तो वृथाहि अपने देह को अत्यंत खेद करता है बड़ा आश्चर्य है ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दातुमनर्हमपि दत्तवान् सर्पाय क्षीरमिव ॥ २२—२३ ॥
उपसृष्टोऽनुगतःसन् उदगादधावत् उदगुत्तरतः ॥२४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

देवात् सर्वसङ्कटप्रदादपि श्रीशिवात् देवमिति वा पाठः तादृशवरणे हेतुः पापीयानिति यस्य यस्येति वीप्सया तस्य सकृत्स्पर्श निवारयति देवादिकं सर्वमेव परामृशतिच ॥ २१ ॥

तच्छ्रवणात् दुर्मनाः दुःखितचित्त इवेति श्रीभगवतस्तत्प्रतीकारसम्भावनया दौर्मनस्य ह्रासात् तत्र हेतुः भगवान् सर्वज्ञ इति तस्य दुर्मतित्वेन प्रहसन् अमृतत्वसाम्यं वरस्य मात्रांशे हे भारतेति भरतवंशबीजभूतो भवान् यथा श्रीभगवता रक्षितस्तथा तद्वयाज्जगद्रक्षिष्यत इति भवता कापि चिन्ता न कार्य्येतिभावः ॥ २२ ॥

किल वार्त्तायां स्वकृतात् स्वयं दत्तवरात् अविभेत् भयं प्राप्तः अविभ्यदिति पाठश्छान्दसः ततश्च पराङ्मुखो ऽधावत्किंतु ज्ञेयं शिव इत्यात्मनोऽप्येषाञ्च सर्वभूतानां मङ्गलेच्छुरिति भावः ॥ २३ ॥

धुमप्रभृतीनामन्तमवधिं यावत्पराधावन् पलायमानः

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सन् प्राधावदितिपाठे वाक्यभेदः उदगादिति श्वेतद्वीपजिगमिषया ॥ २४ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

देवादिति । स पापीयान् वृकः देवाद्रुद्राद्भूतभयावहं वरं वृतवान्, वरमेव दर्शयति—यस्येति । यस्य यस्य शीर्ष्ण्यहं करं धास्ये स म्रियतामित्येवंविधं भूतभयावहमिति सम्बन्धः ॥ २१ ॥

तदिति । हे भारत ! स्थाणुः शिवः तद्वरणं श्रुत्वा तावत् दुर्मना इव दुःखितमना भूत्वा इवशब्दोऽनतिरिक्तार्थकः प्रसभं बलात् तस्मै ओमित्यङ्गीकृत्य ददे दत्तवान् यथाऽहेः सर्पस्यामृतं क्षीरं तद्वत् ॥ २२ ॥

सइति । सोऽसुरः वरस्य परीक्षार्थं किमयं वरः सत्य उत मिथ्यावेति परीक्षार्थमित्यर्थः स शिवः स्वकृताद्वराद्भयात्स्वयमबिभ्यत् ॥ २३ ॥

तेनासुरेणोपसृष्टेऽनुगतः सद्यःभूर्जातवेपथुः कम्पितगात्रः त्रस्तः पराधावत् सोऽपि पृष्ठतोऽन्वधावदित्यनुक्तमपि योज्यम् ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ओमित्युक्त्वा प्रहसन् आत्मनो दैन्यनप्रकाशयन् ॥ २२ ॥

अबिभेत् भीतवान् ॥ २३ ॥

उपसृष्टः उपद्रुतः दिवोऽन्तमवसानं यावदास्ति भूमेः काष्ठानां दिशानाम् अवसानञ्च यावत् भुवो धरमधःस्थलं पातालं च यावत्तावत्पर्यन्तं पराधावत् ॥ २४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

पूर्वं स्वाभिलषितं सिद्धमिति वरं याचितवानित्याह—देवं स वव्र इति । नन्वत्र न स्वस्य सुखं नापि दुःखाभावः किमित्येवं प्रार्थयति इति चेत्तत्राह—पापीयानिति । पापमेव निरन्तरं कर्तुं वाञ्छति । वधादिरूपं पापं क्लेशेनैव सिद्ध्यतीति अक्लेशार्थं मारणजनितदोषसम्पादनाय तादृशं वरं याचितवानित्यर्थः वरश्च श्रवणमात्रेणैव भूतानां भयमावहति वरस्य स्वरूपमाह—यस्य यस्य करं शीर्ष्णि इति । स्थापनमात्रेणैव प्रयत्नान्तरव्यतिरेकेणापि स म्रियतामिति ॥ २१ ॥

ततो महादेवस्य शङ्का उत्पन्नेत्याह—तच्छ्रुत्वेति । यतो रुद्रः प्राणिनो दुःखं दृष्ट्वा रोदिति इति ततो दुर्मना इव जातः ततः किं कर्त्तव्यमिति विचार्य वरे दत्ते किं भविष्यतीत्यग्रिमं विचारितवान् ततो भगवान् परमेश्वरेणायं वञ्चयित्वा मारणीय इति अग्रिमं सूत्रं विचारितवान् ततः ओमिति तथैवास्त्विति प्रहसन्नाह अन्यानिष्टं विचारयन् त्वमेव मारिष्यसीति भारतेति विश्वासार्थं सम्बोधनं ननु दानमात्रेणैव स्वानिष्टं करिष्यतीति किमज्ञात्वा दत्तवानित्याह—अहेरमृतं यथेति अहेरिव पायः पोषकमप्यनर्थकदिति स्वानिष्टं ज्ञात्वापि दत्तवानित्यर्थः ॥ २२ ॥

ततो यज्जातं तदाह स तद्वरपरीक्षार्थमिति । किलेति महतामिदं न वक्तव्यमिति न करिष्यतीति शङ्कां वारयति असुर इति अतः स्वहस्तं धातुमारेभे उद्योगं कृतवानिति ततस्तस्योद्योगं ज्ञात्वा अधिदेवः देवानामधिपतिरपि शिवः अबिभेत् भीतवान् शिवत्वात् परमार्थतो भयं न भविष्यतीत्यर्थः ॥ २३ ॥

ततः पलायित इत्याह तेनोपसृष्टमिति तेन वृकेण उपसृष्टः निकटे समागतः तदा सन्त्रस्तो जातः ततोऽत्यन्तमधावत् ततः कम्पमानोऽपि जातः ततः दिवः यावदन्तं भूमेश्च यावत्काष्ठानामपि पूर्वमूर्द्ध्वं निर्गमः ततोऽर्वाक् ततो दिक्चतुष्टये गत्वा व्यावृत्य पश्चादुदग्दिशं प्रति गतः तस्य खेदार्थं तावत् परिभ्रमणम् ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

स्वकृतात् स्वदत्तवरात् अबिभेत् भयं प्राप्तः अबिभ्यदिति पाठः आर्षः ॥ २३ ॥

तेनासुरेण उपसृष्टः अनुद्रुतः पराधावन् पलायमानः सन् दिवो भूमेः काष्ठानाञ्च यावदन्तं अन्तपर्यन्तं उदगात् उत्कर्षेणागात् अधावत् उदक् उत्तरतो दिशः सकाशात् ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तेन वृकेन उपसृष्टः अनुगतः पराधावन् पलायमानः सन् उदक् उत्तरतः उदगात् पुनः दिवो भूमेः काष्ठानाञ्च यावदन्तं अन्तपर्यन्तमुदगात् ॥ २४ ॥

---

भाषाटीका ।

उस पापी ने महादेवजी के प्रति प्राणियों के भयंकर वर को मांगा क्योंकि जिस २ के मस्तक पर मैं अपना हस्त धरों वह मर जावे यह वर मांगा ॥ २१ ॥

हे भारत ! भगवान् रुद्र उस वचन को सुन कर उदासीन मन के समान सर्प को जैसे दूध देते हैं ऐसा मान कर हँसते भए वरको अंगीकार कर उस के अर्थ देते भए ॥ २२ ॥

इस प्रकार महादेवजीने उस को कहा तब तो वह असुर गौरी के हरण करने में निश्चय लालसा वाला होकर उस वर की परीक्षा करने के अर्थ यह असुर शम्भु के मस्तक परहि अपने हस्त धरने का आरंभ करता भया तब तो यह शिवजी अपने किए वरदान से आपहि भय करते भए ॥ २३ ॥

हस्त धरने के वास्ते वह असुर महादेवजी के पास पहुंचा महादेवजी भयभीत होगये उनका शरीर कांपने लगा भूमिका और स्वर्गका जहां तक अन्त है तहां तक

अजानन्तः प्रतिविधिं तूष्णीमासन् सुरेश्वराः ।
ततो वैकुण्ठमगमद्भास्वरं तमसः परम् ॥ २५ ॥
यत्र नारायणः साक्षान्न्यासिनां परमा गतिः ।
शान्तानां न्यस्तदण्डानां यतो नावर्त्तते गतः ॥ २६ ॥
तं तथाव्यसनं दृष्ट्वा भगवान् वृजिनार्दनः ।
दूरात्प्रत्युदियाद्भूत्वा बटुको योगमायया ॥ २७ ॥
मेखलाजिनदण्डाक्षैस्तेजसाऽग्निरिव ज्वलन् ।
अभिवादयामास च तं कुशपाणिर्विनीतवत् ॥ २८ ॥

भाषा टीका ।

महादेवजी धावमे भए धावते २ दिवान के मध्य में उत्तर की तरफ जाते भए ॥ २४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वैकुण्ठं श्वेतद्वीपम् ॥ २५-२६ ॥

तं वृकासुरम् तथाव्यसनं तादृग्व्यसनं यस्य तम् वृजिनार्दनो दुःखहन्ता दूरत एव दृष्ट्वा मेखलादिभिरुपलक्षितः प्रत्युदियात्सम्मुखमागतः ॥ २७-२८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

प्रतिविधिं तत्प्रतीकारं सुरेश्वराः श्रीब्रह्मादयः अगमच्छ्रीशिवः भास्वरं सदा स्वयमेव प्रकाशमानं कुतः तमसः प्रकृतेः परं महावैकुण्ठावतारत्य श्वेतद्वीपाख्यस्यास्य पृथिवीगतत्वेपि ततः परत्वं श्रीभगवद्वदेव विकारवर्त्तिच तथाहि दर्शयतीति न्यायेन ॥ २५ ॥

तत्रैव हेतुमाह—यत्रेति । साक्षाद्वर्त्तते न्यासिनां भगवदर्थे त्यक्ताशेषाणां अतः शान्तानां रागद्वेषादिरहितानां भगवन्निष्ठचित्तानां वा अत एव न्यस्तदण्डानां हिंसारहितानां परमा सर्वोत्तमा गतिः प्राप्यः अत एव यतो यत्र गतो नावर्त्तेत पुनः संसारे न पतति अनावृत्तिःशब्दादितिन्यायेन ॥ २६ ॥

तमिति सार्द्धकम् । व्यसनं क्रोधजदोषाभिनिवेशो वा भगवानिति तत्तत्सर्ववृत्तान्तज्ञत्वस्य वक्ष्यमाणतत्तच्छक्तिमत्त्वस्य च वृजिनार्दन इति श्रीशिवस्यापि दुःखमोचनस्याभिप्रायेण दूरादिति श्रीवैकुण्ठाद्बहिरित्यर्थः । प्रति तदभिमुखत उदियात् आविर्भूत इत्यर्थः । योगमायया स्वभक्तिविशेषेण बटुको बालब्रह्मचारी भूत्वा अक्षं अक्षमाला तत्र बटुकत्वमादरस्नेहयोरुदयार्थं तत्र च तेजसेति दृष्टिमात्रेणैव तद्दुःखाद्यभिभवः उक्तः तस्मिन्नादरोत्पत्त्यतिशयश्च ॥ २७ ॥

अभीत्यर्द्धकं । तत्र वृकासुरं अभिवादयामास आशिषं ब्रुवन् तमात्मानमभिवादयामासेत्यर्थः । विनीतवदिति तत्त्वतो विनयाभावात् ॥ २८ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

वैकुण्ठं विष्णुलोकं नतु परमस्थानं मुक्तप्राप्यम् ॥ २५ ॥

यतः नाराणात् यत इति पदस्य देशपरत्वेपि विष्णुगतानां श्वेतद्वीपवासिनां पुनर्जन्माभाव इत्यविरोधः ॥२६-२८॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

काष्ठानां दिशां च यावदन्तं उदगात् उत्तरतः अगात् ऊर्ध्वमगच्छत् उदक् ऊर्ध्वमव्रजन् ॥ २५ ॥

अजानन्त इति । सुरेश्वराश्चतुर्मुखेन्द्रादयः प्रतिविधिं प्रतिक्रियामजानन्तः ततः वैकुण्ठमण्डान्तर्वर्त्तिनं कञ्चिद्विष्णुलोकं नतु परमस्थानं मुक्तप्राप्यं भास्वरं प्रकाशबहुलं तमसः परं प्रकृतिकार्यैरहितं यत्र वैकुण्ठं गतिः प्राप्यः न्यस्तदण्डानां भूतद्रोहरहितानां सर्वभूतसुहृदां इत्यर्थः । गतो यतो नावर्त्तेत श्रीविष्णुलोकगतानां श्वेतद्वीपवासिनांच पुनर्जन्माभावात् तं वैकुण्ठमगमदिति सम्बन्धः ॥ २६ ॥

तमिति । तं वृकासुरं तथा तादृशं व्यसनं दुःखं यस्य तं रुद्रं च दृष्ट्वा वृजिनार्दनो दुःखापहारी भगवान्योगमायया आत्मीयाश्चर्यशक्त्या बटुको भूत्वा मेखलादिभिरुपलक्षितः तेजसा विग्रहकान्त्याऽग्निरिव ज्वलन् दूरादेव प्रत्युदियादभिमुखमाजगाम ॥ २७ ॥

कुशपाणिः पवित्रपाणिरभिवादयामासाहचेति शेषः ॥ २८ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तल्लोकवासिनः शून्यप्रायाः किमत्राह अजानन्त इति प्रतिविधिं प्रतिक्रियाम् ॥ २५—२६ ॥

दारको बालब्रह्मचारी ॥ २७—२८ ॥

श्रीभगवानुवाच।

शाकुनेय! भवान् व्यक्तं श्रान्तः किं दूरमागतः।
क्षणं विश्रम्यतां पुंस आत्माऽयं सर्वकामधुक्॥ २९॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

दूरादिति। श्रीवैकुण्ठाद्बहिरित्यर्थः। प्रति तदभिमुखत उदियात आविर्भूत इत्यर्थः॥ २७॥

अभिवादयामासेति अभिवादनमुद्राप्रकाशनेनाभिवादनं कारयामासेत्यर्थः॥ २८—४०॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ननु तत्रत्यैः कथं महादेवसाहाय्यं न कृतमिति चेत्तत्राह—अजानन्तः प्रतिविधिमिति। सुरेश्वरा अपि तूष्णीमेव स्थिताः ततो महादेवो वैकुण्ठमागमत् इदं वैकुण्ठस्थानं बदर्यां नारायणपर्वतपश्चिमभागस्थं प्रसिद्धमेव तत्रत्यापि मूलवैकुण्ठधर्मसम्बन्धमाह—भास्वरं तमसः परमिति। वैकुण्ठावेशात् तत्रापि भास्वरत्वं प्रकृतेः परत्वञ्च तर्हि कि वैकुण्ठस्थानमित्याकाङ्क्षायामाह—यत्र नारायणः साक्षादिति। नारायणो बदरीनाथः साक्षात्सन्न्यासिनां परमा गतिः वैणवदण्डादिधारणेन परमहंसत्वात् साक्षान्न्यासिनां आधारभूतो भवति सजातीयत्वाच्च किञ्च शान्तानां न्यस्तदण्डानाम् अन्तर्बहिः साधनयुक्तानां विशेषतः परमा गतिः तत्रापि पूर्ववदेव भविष्यतीत्याशङ्क्याह—यतो नावर्त्तते गत इति। यत्र गतस्ततो नावर्त्तते अनेन वृकोपि नावर्तिष्यत इति सूचितं ततो यज्जातं तदाह तं तथाव्यसनं दृष्ट्वेति अशक्यं हरिरेवास्तीति भगवतैव तत्कर्त्तव्यमिति भगवान् यतो वृजिनार्दनः सर्वदुःखनाशकः अतो महादेवस्यापि दुःखं दूरीकरिष्यामीति दूरादेव प्रत्युदियात् आभिमुख्येन गतः ननु क्रूरस्याग्रे कथं गत इत्याशङ्क्याह योगमायया वटुको भूत्वेति अल्पो वटुर्वटुकः अतिसूक्ष्मब्रह्मचारी भूत्वा पूर्वविद्यां स्मृत्वा माययैव देवा मारणीया इति योगमायाकृतत्वात् मोहमेव प्राप्स्यति नतूपद्रवं करिष्यति इति प्रत्युद्गतः॥ २५—२७॥

भगवतो वेषं वर्णयन् वाक्यैर्मोहितवानित्याह—मेखलाजिनदण्डाक्षैरिति। मेखला मौञ्जी अजिनमुत्तरीयं दण्डः पलाशः अक्षमाला जपार्था एतैः कृत्वा अन्तःस्थितेन तेजसा च साक्षादग्निरिव सर्वप्राणिनामधृष्यः ज्वलन् देदीप्यमानः कुशपाणिर्भूत्वा तं हिरण्याक्षपौत्रं अतिश्रोत्रियं विनीतवदभिवादयामास अभिवादनेन तस्य आयुर्हृतवान् कुशैस्तत्पुण्यं मेखलादिभिश्चतुर्विधपुरुषार्थान् तेजसा तत्तेजः अग्नितुल्यतया तद्धृतबलादिकम्॥ २८॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शनी।

सुरेश्वरा ब्रह्माद्याः तमसः प्रकृतेः परम्॥ २५—२६॥

प्रत्युदियात सम्मुखमागतः॥ २७॥

अभिवादयामास आशिषं ब्रुवन् एवं नमस्कारयामास यद्वा अभिवादयामासेति अस्माकं ब्रह्मदर्शिनां सर्वभूतान्येवाभिवाद्यानि भवांस्तु शकुनेः पुत्रो ज्ञानी तपस्वी मम वटोरभिवाद्य एवेति द्योतयामास॥ २८॥

श्रीमन्निम्बार्कदेवकृतसिद्धान्तप्रदीपः।

वैकुण्ठं श्वेतद्वीपादिरूपं विष्णुलोकं तमसः परं प्राकृतपदार्थविलक्षणम्॥ २५॥

तं वृकं तथा तादृशं व्यसनं दुःखं यस्य तं रुद्रं च दूरादेव दृष्ट्वा वृजिनं दुःखमर्दयति नाशयतीति तथा सः। प्रत्युदियात् वृकसम्मुखमाजगाम॥ २६—२७॥

मेखलादिभिः उपलक्षितः तं वृकं अभिवादयामास अपूज्यस्य अभिवादनरूपया पूजया आयुरादिकं हृतवानित्यर्थः॥२८॥

भाषा टीका।

ब्रह्मादिक देवता महादेवजी को असुर से बचाने का उपाय नहि जान कर सब चुप चाप रह गए तब तो ब्रह्माण्ड के हि अन्तर्गत माया से परे प्रकाशमान वैकुंठ को महादेवजी गए॥ २५॥

जिस वैकुण्ठ में प्राणियों के द्रोह से रहित शांत स्वरूप सर्व धर्म त्यागी महात्मा पुरुषों के परम फल साक्षात् नारायण विराजते हैं जिस वैकुण्ठ में जाय कर फिर इस संसार में नहि लौटता है॥ २६॥

भक्तन के दुःख निवृत्त करने वारे वैकुण्ठ पति भगवान् महा दुःख सम्पन्न महादेवजी को देख कर अपने सङ्कल्प से ब्रह्मचारी का वेष बना कर दूर सेहि महादेवजी के सम्मुख आते भए॥ २७॥

मूंज का कटि सूत्र मृग छाला ढाक का दंड धारण किये हस्त में कुशा लिये तेज से अग्नि के समान प्रकाशमान श्रीमन्नारायण विनय पूर्वक महादेवजी के प्रति प्रणाम करते भए और वृकासुर के प्रति बोलते भए॥ २८॥

श्रीधरस्वामिकृतभावार्थदीपिका।

व्यक्तं निश्चितम् किं किमर्थम् आत्मा देहः सर्वपुरुषार्थहेतुः अतो मापीडयेति॥ २९॥

यदि नः श्रवणायालं युष्मद्व्यवसितं विभो ।
भण्यतां प्रायशः पुम्भिर्धृतैः स्वार्थान् समीहते ॥ ३० ॥

श्रीशुक उवाच ।

एवं भगवता पृष्टो वचसाऽमृतवर्षिणा ।
गतक्लमोऽब्रवीत्तस्मै यथापूर्वमनुष्ठितम् ॥ ३१ ॥

श्रीभगवानुवाच ।

एवं चेत्तर्हि तद्वाक्यं न वयं श्रद्दधीमहि ।
यो दक्षशापात्पैशाच्यं प्राप्तः प्रेतपिशाचराट् ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

प्रायशः पुम्भिर्धृतैर्भवान् स्वार्थान् समीहते साधयितुमिच्छति अथवा जनः पुम्भिः सहायैः स्वकार्याणि साधयति अतो नः कथ्यतामिति ॥ ३०—३१ ॥

पैशाच्यं पिशाचानामिव वृत्तिम् ॥ ३२—३३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

शाकुनेय ! हे शकुनिनन्दनेति पितृतः परिचिततया विश्वासनार्थं तत्सन्तोषणार्थञ्च भवामिति त्वादरज्ञापनार्थं ननु न विश्रामसमयोऽयं तत्राह पुंस इति । यस्य कस्यापि पुरुषस्य अयं निजभाग्यप्राप्तः किं पुनर्महापुरुषस्य तवेत्यर्थः । अन्यत्तैः यद्वा पुंसस्तव अयं सर्वसुगुणवान् देहः सर्वेषामन्येषामपि कामधुक् मनोरथपूरकः ॥ २९ ॥

विश्रान्तं—प्रत्याह यदीति । अलं योग्यं युष्मदित्यादरात् नः इति तद्विश्वासनार्थमात्मनो गौरवाय विभो हे सर्वं कर्तुं समर्थेति त्वद्व्यवसितं सेत्स्यत्येवेति अन्यत्तैः तत्र धृतैः वशीकृतैरित्यर्थः । अत एव पुरुषाढ्याग्रेति महापुरुषस्यान्यपुरुषद्वारा स्वार्थसाधनं किल योग्यमिति भावः । टीकायां प्रायशो धृतैः सहायैरिति पदत्रयमध्याहृतमेव पाठान्तरे तु धूर्तैरित्यस्य टीका पतिता ज्ञेया ॥ ३० ॥

अमृतमिव वर्षितुं शीलं यस्येति तात्पर्यतो ऽन्यथोक्तत्वेपि स्वरूपगुणो न हीयत इति भावः । तेन गतक्लमः श्रमापगमेन प्रीतः सन् ॥ ३१ ॥

प्रेतपिशाचराडिति पैशाच्यस्यैव गौरवं व्यक्तत्वं वा द्योतयति ॥ ३२ ॥

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

स्वार्थः स्वप्रयोजनं पुंभिः पुरुषैः साधयितुमीहते भवानित्यर्थः ॥ ३०–४० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवाह द्वाभ्याम् । शकुनेः सुत व्यक्तं नूनमयमात्मा देहः पुंसः सर्वान् कामान् दोग्धीति तथाभूतः किं किमर्थं दूरमागतः अहो श्रान्तस्त्वमतो मायासयेति भावः ॥ २९ ॥

यदीति । युष्मद्व्यवसितं यदि नोऽस्माकं श्रवणायालं श्रोतुं योग्यं तर्हि हे प्रभो भण्यताम् उच्यतां पुमान् स्वार्थं चिकीर्षितं स्वप्रयोजनं पुंभिराप्तैः सह समीहते आलोच्य करोत्यतो भण्यतां इत्यर्थः ॥ ३० ।

एवमिति । तस्मै भगवते अब्रवीत् कथयामास ॥ ३१ ॥

एवमुक्तः प्राह भगवान्—एवं चेदिति । अङ्ग हे वृक ! तद्वाक्यं रुद्रवचः वरदानात्मकं न श्रद्दधीमहि न विश्वसिमः तत्र हेतुत्वेन रुद्रं विशिनष्टि—यः रुद्रः दक्षशापात् पिशाचतां प्राप्तः प्रेतानां पिशाचानां च राडधिपतिर्बभूव नहि पिशाचवचो विश्वसनीयमिति भावः ॥ ३२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आत्मा शरीरम् ॥ २९ ॥

पुम्भिरर्थितम् ॥ ३०—३१ ॥

तस्य रुद्रस्य वाक्यं पैशाच्यं कर्म श्मशानाटनलक्षणम् ॥ ३२—३३ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं सर्वं हृत्वा वाक्येन बुद्धिं मोहयति—शाकुनेयेति द्वाभ्याम् । हे शकुनेः पुत्र ! भवान् व्यक्तं श्रान्तः प्रस्वेददर्शनात् अनेन दुःखानुवादेन कुशलमिवापृच्छत् किं कर्तव्यमिति चेत्तत्राह किं दूरमागत इति किं भावता दूरे समागतं प्रयोजनाभावाद्व्यर्थमागमनमित्यर्थः प्रश्नो वा अस्तु यदर्थं तदर्थं अस्मदाश्रमे क्षणं विश्रम्यतां ननु शीघ्रं स्वकार्यं कर्तव्यमिति चेत्तत्राह पुंसां स्वतन्त्राणां प्राणिनामयमात्मा देहः सर्वकामधुक् श्रमेण देहः पतिष्यतीति प्रतिभाति गतेच देहे किं कार्यं

यदि वस्तत्र विश्रम्भो दानवेन्द्र ! जगद्गुरौ ।
तर्ह्यङ्गाशु स्वशिरसि हस्तं न्यस्य प्रतीयताम् ॥ ३३ ॥
यद्यसत्यं वचः शम्भोः कथञ्चिद्दानवर्षभ ।
तदैनं जह्यसद्वाचं न यद्वक्ताऽनृतं पुनः ॥ ३४ ॥
इत्थं भगवतश्चित्रैर्वचोभिः स सुपेशलैः ।
भिन्नधीर्विस्मृतः शीर्ष्णि स्वहस्तं कुमतिर्न्यधात् ॥ ३५ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

क्लेक्ष्यतीति अतः कार्यं परित्यज्य शरीररक्षार्थं विश्रामः कर्त्तव्य इति भावः ॥ २९

किञ्च कार्यमेतादृशं येनैतादृशः श्रमो जात इति पृच्छति यदि नः श्रवणायालमिति । गुप्तं चेन्न वक्तव्यम् अस्मच्छ्रवणाय योग्यञ्चेत् तर्हि युष्मद्व्यवसितं एवं प्रयत्नेन कर्तुमभीष्टं भण्यतां पुरुषत्वात्प्रतिस्तुत्या सम्बोधनं कथनार्थं ननूक्तं भविष्यतीति चेत्तत्राह—पुम्भिः स्वार्थान् समीहत इति । सर्वोऽपि पुरुषः स्वमित्रैः पुरुषैः स्वकार्यं साधयतीत्यर्थः ॥ ३०—३१ ॥

एवमाकर्ण्य विनयवचनैश्च तेषां प्रापितः भगवद्वाक्यसामर्थ्यादेव गतश्रमो भूत्वा स्वाभिप्रायं स्वकृतं च भगवानिति बुद्ध्वा तस्मै अब्रवीत् यथापूर्वं नारदप्रश्नप्रभृति अनुष्ठितं तपस्यादि ज्ञातार्थ एव भगवाननन्तविश्वस्तं कृत्वा पश्चात्स्मयुक्तं गृहीष्यतीति निश्चित्य महादेवमोक्षार्थमुपायमाह- एवं चेदिति । अस्माभिर्ज्ञातं किञ्चित्कार्यान्तरं महदस्तीति एतच्चे महादेववाक्यपरीक्षामात्रं कर्त्तव्यं चेत् तदा मयापि उपाय उच्यते यदि मद्वाक्ये विश्वासस्तदा तद्वाक्यं न किञ्चिद्भविष्यतीत्यर्थः अनेन दत्तोऽपि वरः भगवता निषिद्ध इति भवति तथा सति न तस्य मरणं न वा लोके अनिष्टं नवा महादेवस्य पीडा यदि वृकोऽङ्गीकुर्यात् एवं निश्चित्याह—न वयं श्रद्दधीमहीति । ननु महानयं महादेवः कथमश्रद्धेय इति चेत्तत्राह, यो दक्षशापात्पैशाच्यमिति । पूर्वं दक्षः शापं ददौ देवैः सह भागं न लभतां देवगणेषु अधमश्च भवतु तत्र पिशाचा एव अधमाः अतः पैशाच्यं प्राप्तः दृश्यते च पैशाच्यं स्मशानादिषु परिभ्रमणात् किञ्च प्रेतपिशाचराट् स्वभावतोऽपि प्रेतानां पिशाचानां राजा पिशाचराजः पिशाच एव भवति अतस्त्वमपि चेत् मद्बुद्ध्या गृहीतमङ्गीकरिष्यसि तदा तस्य दत्तो वरः मिथ्याभूत इति अनङ्गीकृत्य निश्चितो भव ॥ ३२ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

आत्मा देहः सर्वकामप्रपूरकः अतस्तमभिश्रव श्रमेण मा पीडय ॥ २९ ॥

धृतैः पुम्भिः स्वसहायीकृतैः (शक्यं) पुरुषैः स्वार्थान् समीहते साधयति तेन मां प्रति स्वव्यवसितमुच्यतां यथा मयापि ब्रह्मतेजोबलेनापि तत्र साहाय्यं कर्तुं शक्यं स्यादिति भावः ॥ ३०-३२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे शाकुनेय ! किं किमर्थं दूरमागतः व्यक्तं निश्चितं भवान् श्रान्तः अतः क्षणं विश्रम्यताम् यतः पुंसः आत्मा देहः सर्वकामधुक् पीडितुं योग्यो नेत्यर्थः ॥ २९ ॥

प्रायशः मन्त्रित्वेन धृतैः पुम्भिः स्वार्थान् स्वकार्याणि समीहते साधयति जन इति शेषः यदि नः श्रवणायालं युष्मद्व्यवसितं तर्हि भण्यताम् ॥ ३०-३२ ॥

———

भाषाटीका ।

श्रीभगवानुवाच ।

हे शकुनि पुत्र ! तू निश्चय कर श्रम को प्राप्त होगया है तू किस प्रयोजन के वास्ते इतनी दूर आया इस वास्ते एक क्षण मात्र पर्यन्त तू विश्राम कर क्योंकि पुरुष का यह शरीर सब मनोरथ का पूर्ण करने वारा है इस वास्ते इस को पीड़ा मतना देवे ॥ २९ ॥

हे विभो ! आपने जिस का निश्चय किया है वह यदि हमारे श्रवण करने के योग्य हो तो कहि एगा क्योंकि लोक में सहाय मानि कर अङ्गी कार किए पुरुषों के साथ हि प्रायः कर अपने प्रयोजनों को साधता है ॥ ३० ॥

श्रीशुक उवाच ।

इस प्रकार भगवान ने अमृत सदृश वर्षा करने वारे वचन से जब उसको पूछा तब परिश्रम से निवृत्त होकर जिस प्रकार आप ने पहिले अनुष्ठानकि पारहा उसी प्रकार भगवान् के अर्थ वृका सुर कहता भया ॥ ३१ ॥

श्रीभगवानुवाच ।

यदि महादेव ने इस प्रकार का वर दिया है तो हम तो उस के वचन में विश्वास नहि करते हैं क्योंकि वह महादेव दक्ष के शापसे पिशाच भाव को प्राप्त हो गया है और प्रेत पिशाचों का राजा है ॥ ३२ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

यद्यथा वक्ता वदिष्यति ॥ ३४ ॥

चित्रैर्भ्रामकैः सुपेशलैरतिरम्यैः भिन्नधीर्भ्रंशितमतिः ॥ ३५-३८ ॥

अथापतद्भिन्नशिरा वज्राहत इव क्षणात् ।
जयशब्दो नमः शब्दः साधुशब्दोऽभवद्दिवि ॥ ३६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

जगद्गुराविति तत्त[था]था भवद्भिः प्रतीत इत्यर्थः । अपि एव स्वशिरस्येव आश्विति पाठः क्वचित् प्रतीयतां तद्वाक्यस्य अमिथ्यात्वं मद्वाक्यस्य मिथ्यात्वं वा ज्ञायताम् ॥ ३३ ॥

शम्भोरिति । तदेतत्पर्यन्तं सुखेन वर्त्तमानस्येति व्यञ्जना- तस्याधुना तु सुखं न भविष्यतीति बोधनाय कथञ्चिद- पीति तदेकांशस्यापि विघातेनेत्यर्थः । यद्वा कथञ्चिदन्येनं जहीत्यन्वयः । तदन्ते तत्पश्चात् यद्वा स्वरूपार्थोऽन्तशब्दः तदानी- मेवेत्यर्थः । तदेनमिति पाठः क्वचित् । न यदिति वचात्पश्चात् वचनाभावात् हे दानवर्षभेति ! तत्र त्वं शक्तोऽस्येवेति भावः ॥ ३४ ॥

चित्रैश्चातुरीयोगतो मोहनमन्त्ररूपतश्च विज्ञाप्य भ्रामकैरित्यर्थः । विनयादिना सुपेशलैश्च तैर्भिन्ना अन्यथात्वं गता धीर्यस्य सः विस्मृतः भीत्यादीत्यादेरनुसन्धानरहितः सन्नि- त्यर्थः । सर्वत्र मूलकारणन्तु कुमतिरिति ॥ ३५ ॥

अथानन्तरक्षणमेवासीद् यद्वा क्षणादभवदिति परेणा- न्वयः तं क्षणमतिक्रम्येत्यर्थः तस्माज्जयादीनैर्देवादिभिः तन्म- रणानिर्द्धारणार्थं जयशब्दादौ स्वर्ण विलम्बात् जयेत्युल्लासस्य व्यञ्जकं नम इति भक्तेः साध्विति विस्मयस्य ॥ ३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यदीति । हे दानवेन्द्र ! जगद्गुरौ जगद्गुरुतया त्वद- भिमानविषये तत्र रुद्रे यदि वो युष्माकं विस्रम्भो विश्वासस्तर्हि अङ्ग हे वृक ! स्वस्य शिरसि न्यस्य निधाय प्रतीयतां प्रतीक्ष्य- ताम् ॥ ३३ ॥

हे दानवर्षभ ! यदि शम्भोः वचः कथञ्चिदसत्यं स्यात्तर्हि तदन्ते तदनन्तरमसद्वचनमनृतवाचं रुद्रं जहि नाशय अन्यथा रुद्रः पुनस्तथाऽनृतं वक्ता वक्ष्यति त्वामिवान्यानपि अनृतं वद- न्वञ्चयिष्यत्यतस्तं जहीत्यर्थः ॥ ३४ ॥

इत्थमिति । चित्रैर्भ्रामकैः स्मेन पेशलैरतिरम्यैर्वचोभिर्भिन्नधी- र्भ्रंशितमतिः कुमतिरसुरः विस्मृतः स्वशिरसि स्वहस्तं न्यधात्नि- हितवान् ॥ ३५ ॥

अथ निधानानन्तरमेव वज्रेणाहत इव भिन्नं शिरो यस्य सः क्षणादपतत् जयशब्द इति स्पष्टार्थः ॥ ३६ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अथ यदि तव विश्वासः तदा मदुक्तप्रकारेण परीक्षा कर्त्तव्येत्याह–यदि वस्तत्र विस्रम्भ इति । व इति गौरवार्थे बहुवचनं हे दानवेन्द्रेति सम्बोधनञ्च एवं पुरस्कृतः स्वमा- हात्म्यमेव स्मरति ननु परमाहात्म्यमिति विश्वासे हेतुमाह जगद्गुराविति । तर्हि विश्वासे किं कर्त्तव्यमितिचेत्तत्राह तर्ह्य- ङ्गेति मद्विश्वासे तव जीवनं वा भविष्यति महादेवविश्वासे तु नाशमेव यास्यतीति भावः । अङ्गेति सम्बोधनं विश्वासाय आशु शीघ्रमेव विचारमकृत्वा स्वशिरसि हस्तं न्यस्य प्रती- यतां सत्यं वा मिथ्या वेति सत्यत्वे तस्य परीक्षा उत्तमैव भविष्यति ॥ ३३ ॥

असत्यत्वे तु दण्डं करिष्यामीत्याह—यद्यसत्यमिति । कथ- ञ्चित् केनाप्यंशेन यस्य यस्येति वीप्सया अन्यथैवाभिप्रेतः स्यात् मया वा नाङ्गीकृतमिति तदा असत्यं भवति दानवर्ष- भेति पूर्ववदपराधव्यतिरेकेण मारयितुं न शक्य इति असत्य- त्वादस्येनापराधे जाते तदन्ते अपराधान्ते असद्वाचं जहि तथा सति तव वधदोषोपि नास्तीत्याह—न यद्वक्तानृतं पुनरिति यतस्मात् पुनरयमनृतं न वक्ता यद्दोषात्पुरुषोधो याति अनेन तद्वधस्तस्य हि भेव इति तत्पक्ष उक्तः ॥ ३४ ॥

ततो यज्जातं तदाह—इत्थमिति । भगवतश्चित्रैर्वचोभिरिति इष्टादृष्टप्रकारेण वचनेन मोहकत्वमुक्तं स्वरूपतोपि मोहकत्व माह सुपेशलैरिति यथा कश्चिद् रूपविशेषे मुह्यति एवं भगवद्वाक्यसौन्दर्येणापि मुग्धः स्वतो भिन्नधीर्भूत्वा भगवद्वाक्य- मनृतमपि भविष्यतीत्यपि पक्षः तद्हृदये स्फुरितः अतः पक्षद्वये बुद्धिर्व्यापृतेति भिन्नत्वं ननु द्वितीयपक्षे स्वक्रिया- व्याघातः यदि महादेववाक्यं शतांशेनाप्यनृतं स्यात् स्वय- मेतादृशं क्लेशं कथं कुर्यात् ततश्च कथं तस्य बुद्धिभेदो जात इतिचेत्तत्राह विस्मृत इति पूर्वभावं विस्मृतवान् विक्षित इति वा भगवद्वाक्यात् न वयं अद्धीमहीति कथमकृवा- निति अतः स्वशीर्ष्ण्येव हस्तं व्यधात् ननु पाक्षिकोपि दोषः परिहरणीय इति द्वितीये स्वनाशलक्षणो महादोष इति कथमेवमङ्गीकृतवानिति चेत्तत्राह–कुमतिरिति ॥ ३५ ॥

ततो यज्जातं तदाह—अथापतदिति । भिन्नं शिरो यस्य तादृशो भूत्वा भूमावपतत् अथेति भिन्नप्रक्रमः न भगव- द्वाक्यानुसारेण तद्वाक्यानृतत्वं नापि सन्देहः किन्तु सत्यमेव जातमिति ननु भगवान् भक्तवत्सलः किमित्येवं कृतवानित्या- शङ्क्याह—वज्राहत इवेति । वज्रेणाहतः पर्वत इव तूष्णीम्भूतो वा जगदपकारित्वात् मारित इत्यर्थः । ततो भगवदनुभावं दृष्ट्वा जयशब्दः महादेवो मोचित इति नमःशब्दः भगवतो मोहक- वाक्यानि स्मृत्वा साधुशब्दः ॥ ३६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

यत् यथा न वक्ता क्वापि योगबलेनोत्पाद्यापि न वदि- ष्यति ॥ ३४ ॥

विस्मृतः विस्मृतियुक्तः ॥ ३५—३६—३७—३८ ॥

---

मुमुचुः पुष्पवर्षाणि हते पापे वृकासुरे ।
देवर्षिपितृगन्धर्वा मोचितः सङ्कटाच्छिवः ॥ ३७ ॥
मुक्तं गिरिशमभ्याह भगवान् पुरुषोत्तमः ।
अहो देव महादेव पापोऽयं स्वेन पाप्मना ॥ ३८ ॥
हतः को नु महत्स्वीश जन्तुर्वै कृतकिल्बिषः ।
क्षेमी स्यात् किमु विश्वेशे कृतागस्को जगद्गुरौ ॥ ३९ ॥
य एवमव्याकृतशक्त्युदन्वतः परस्य साक्षात्परमात्मनो हरेः ।
गिरित्रमोक्षं कथयेच्छृणोति वा विमुच्यते संसृतिभिस्तथाऽरिभिः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे
रुद्रमोक्षणं नाम
अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यद् यथा ऽनृतं पुनर्न वक्ता वदिष्यति ॥ ३४ ॥

चित्रैरद्भुतैः सुपेशलैः रम्यावयवैः भिन्नधीः भ्रंशितबुद्धिः ॥ ३५—३९ ॥

---

भाषा टीका ।

हे दानवेन्द्र ! यदि जगत्पूज्य महादेव के वीच में आपको विश्वास होइ तो प्रथम अपने शिर पर अपने हस्त को धर तू परीक्षा करलेओ ॥ ३३ ॥

हे दानवर्षभ यदि महादेव का वचन किसी प्रकार असत्य होइ तो इस मिथ्या वादी को तू मारदेओ जिसते यह महादेव फिर मिथ्या न बोले ॥ ३४ ॥

भगवान् के ऐसे २ चित्र विचित्र अति मनोहर वचनों से भ्रष्ट बुद्धि होने से वरदान के अर्थ को भूल कर कुमति वृकासुर ने अपना हस्तको अपने शिर पर धर दिया ॥ ३५ ॥

अनंतर उसी क्षण में मानो वज्र से हत होकर मस्तक भिन्न हो गिर पडा उस के मरने पर स्वर्ग में जय २ कार नमस्कार धन्यवाद होते भए ॥ ३६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

किमु वक्तव्यं विश्वेशे त्वयि कृतागस्कः कृतापराध इति ॥ ३९ ॥

अव्याकृतशक्त्युदन्वतो वाङ्मनसागोचरशक्तिसमुद्रस्य गिरित्रमोक्षं शिवमोचनरूपं चरितम् संसृतिभिर्नानायोनिसञ्चारैः ॥ ४० ॥

भक्तसङ्कटमालोक्य कृपापूर्णहृदम्बुजः ।
गिरिशं चित्रवाक्याशु मोक्षयामास केशवः ॥ १ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

जयशब्दे हेतुर्मोचितो भगवतेति यद्वा एवं मोचित इत्युपसंहारः ॥ ३७ ॥

मुक्तमित्यर्द्धकम् पत्यवैकुण्ठान्तर्निर्हृत्य स्थितं तं सङ्कस्य वक्ष्यमाणतादृशोक्तौ हेतुः भगवानपि पुरुषोत्तमः विनयादिभिः पुरुषगुणैस्तेभ्यः सर्वेभ्यः उत्तमः ॥ ३८ ॥

अहो इति सार्द्धकं अहो आश्चर्यं देव हे जगत्पूज्य ! तत्र हेतुः महादेव हे सर्वश्रेष्ठेति स्वेनैव पाप्मना ननु मयेत्यर्थः हे ईशेति तमपि त्वं स्वयमेव हन्तुं शक्तोऽपि केवलं निजाराधनापेक्षयोपेक्षितवानित्यर्थः किल्बिषमपराधम् ॥ ३९ ॥

श्रीशिवस्य सङ्कटान्मोचनेन साक्षात् श्रीभगवन्माहात्म्यमिदं नाल्पभवं यतस्तस्यैतच्चरितकथनेनापि सर्वेषां सर्वसंसारदुःखाद्विमुक्तिर्भवतीत्याह—य इति । अधिकारापेक्षा निरस्ता यः कश्चिदित्यर्थः एवमीदृशाम अव्याकृतानां प्रपञ्चातीतानां शक्तीनां स्वरूपशक्तिवृत्तीनां नदीरूपाणां समुद्रस्य सर्वसमावेशाश्रयस्य साक्षात्परस्य निरुपाधिकतया स्वयं परमेश्वरस्य ननु शिवादिवत्सोपाधिकतया तत्प्रतिरूपत्वेनैव तद्रूपस्येत्यर्थः । यतः परमात्मनः तेषामपि मूलस्वरूपतया सर्वशक्तिप्रवर्त्तकस्येत्यर्थः । अत एव हरेः तत्तत्सर्वाकर्षकशक्तितया तत्त्वाख्य इत्यर्थः । एवं

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

निष्कामस्य कथनादिफलमुक्त्वासमस्याप्याह-तथेति । समुच्चये एतच्च कामिलोकरोचनार्थं यद्वा कथं संसृतिभिर्विमुच्यते तदाह तेनाप्रयासेन प्रकारेणारिभिः षड्वर्गैर्विशेषेण समूलतया मुच्यत इति ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

देवादयः पुष्पवर्षाणि मुमुचुः इत्थं शिवः सङ्कटात् युक्त्या उपायेन मोचितः ॥ ३७ ॥

ततो भगवान् गिरिशमभ्येत्य प्राह—तदेवाह—अहो पापोयं वृकासुरः स्वेनैव पाप्मना पापेन हतः किल ॥ ३८ ॥

हे ईश ! महत्सु कृतकिल्बिषः कृतापराधः को वा जन्तुः क्षेमी स्यात्किमुत जगद्गुरौ जगद्धितकारिणि विश्वेशे त्वयि कृतापराधः क्षेमी स्यादिति महादेवत्वेशत्वविश्वेश्वरत्व-जगद्गुरुत्वव्यपदेशास्तदन्तरात्मभूतस्वात्माभिप्रायापन्नाः ॥ ३९ ॥

प्रकृतेतिहासप्रवचनश्रवणादिफलमाह—य इति । एवमित्थं वाङ्मनसावेद्यविविधविचित्रानन्तशक्तिपरस्य प्रकृतिपुरुष-विलक्षणस्यान्तःप्रवेशनियमनव्याप्यगतदोषास्पर्शलोकत्रयधार-कस्य आश्रितार्तिहरस्य भगवतो गिरित्रकर्ममोक्षणप्रतिपादक-मितिहासं यः पुमान् कथयेद्यो वा शृणोति स संसृतिभिः संसारिकदुःखैःशत्रुभिश्च मुच्यते ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

जगद्गुरौ जगद्धिरणशीले ॥ ३९ ॥

आख्यायिकाकथनादिफलमाह—य इति । अव्याकृतनित्य-शक्तिसमुद्रस्य संसृतिभिः पुत्रमित्रादिबन्धनलक्षणाभिः ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
अष्टाशीतितमोऽध्यायः ॥ ८८ ॥
( श्रीविजयध्वजतीर्थरीत्या द्विनवतितमोऽध्यायः ॥ ९२ ॥ )

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं त्रिविधः शब्दो दिव्यभयत सात्त्विकराजसतामसानां त्रिवीति देवानुमोदनेन वञ्चनेन मारणं महादेव निन्दा स्वयं न मन्यते इत्यन्यथा वचनञ्च न दोषाय भवतीति सूचितं. कायिकमाह—मुमुचुः पुष्पवर्षाणीति । देवर्षिपितृगन्धर्वाः सर्व एव देवगणाः नन्वत्र किं भगवच्चरित्रं जातमित्याशङ्क्याह—मोचितः सङ्कटाच्छिव इति स्वस्याजरामरत्वं स्ववाक्येन विरुद्ध्यत इति तन्मध्ये पतितो महादेवः सङ्कटे पतितः यत्रैव पक्षद्वयमपि विरुद्धं तत्सङ्कटस्थानमिति वदति लोकः इतो व्याघ्रस्ततो दरीतिवत् ॥ ३७ ॥

ततो भगवान् महादेवस्य लज्जया खेदो भविष्यतीति तन्निवारणार्थं महादेवं स्तौतीत्याह मुक्तं गिरिशमभ्याहेति पुरुषोत्तमत्वादतुल्यातिशयः ततो न केनापि कर्मणा न्यूनो भवतीति सूचितं भगवतस्तोत्रमाह अहो देवमहादेवेति अमरत्वं सर्वपूज्यत्वञ्च वदन् तस्य मृत्युसम्भावनामेव निराकृतवान् उपकारेण स कदाचित् व्याप्तो भवेदिति तन्निराकरणार्थम् अन्यथैव तन्मरणं निरूपयति—पापोयमिति । अयं केवलपापरूपः अतः स्वेनैव पाप्मना हतः किञ्च सर्वे पापमेकत्र ईश्वरावज्ञाचैकत्रेति तत्कृतवानित्याह—कोनु महत्सु कृतकिल्बिषः क्षेमीस्यात् महादेवसेवकेष्वप्यपकारकर्ता न क्षेमं प्राप्नोति ईशेति सम्बोधनात्तं भवानेव हन्तीति सूचितम् ॥ ३८—३९ ॥

मतान्तरत्वादस्य चरित्रस्य प्रकृतोपयोगित्वं कैमुतिकन्यायेन वदन् चरित्रश्रवणादेः फलमाह-य एवमिति । अव्याकृतीनां शक्तीनां उदन्वान् समुद्रो भगवान् तेनानन्तशक्तेश्चरित्राणामानन्त्यं सूचितं तस्यैकमेतत् गिरिशमोक्षलक्षणं चरित्रं न केवलं न केवलं शक्तिसम्बन्धादेव भगवच्चरित्रं किन्तु गुणातीतस्यापि चरित्रानन्त्यमस्तीत्याह-परस्येति । प्रकृतेरपि नियन्तुः भगवान् चरित्रकरणेन महानित्येव न किन्तु सर्वेषामात्मापीत्याह-परमात्मन इति । एवं प्रकारत्रयेण न हितमेव करोतीत्येव न किन्तु हरेः किन्तु सर्वेषां दुःखमपि दूरीकरोति शास्त्रदृष्ट्या सर्वेषामपि परमात्मत्वमस्तीत्याशङ्क्याह, साक्षादिति । वृकाद्गिरित्रस्य मोचनं ननु लोकसिद्धमोक्षः तं यः शृणोति कथयेद्वा श्रावयति वा ससंसारबन्धनैरपि मुच्यते अज्ञानवासनाभिः कामादिभिः शत्रुभिर्वा महदङ्कारनिवर्तनद्वारा सर्वान् मोचयति सोपि वेद

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

सङ्कटान्मोचितः तदा तच्चरित्रं महादेवादप्यधिकं संसारात् शत्रुभ्यो वा न मोचयेदिति भगवतो विवेकनिधेः श्रीप्रस्तावं दामस्वरूपं निरूपितं लोकानां दाता महादेवः तेनानर्थं जाते तस्यापि मोक्षदो भगवानिति ॥ ४० ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धविवरणे एकोनचत्वारिंशाध्यायविवरणम् ॥ ३९ ॥ ८८ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

अहो देवेति भो अपरिणामदर्शिन् ऋजुबुद्धे! एवं दुष्टेभ्यो वरो न देयः स्वयं यन्मारिष्यसि तदपि न परामृशसि त्वामहमरक्षमपरस्मिन् दिने किं भविष्यतीत्युपालम्भो यत्नमः एतत् खलु भगवत एव महत्त्वमसाधारणमिति दर्शितम् ॥ ३९ ॥

अव्याकृतानां प्रपञ्चातीतानां शक्तीनां स्वरूपशक्तिवृत्तीनां नदीरूपाणामुदन्वतः समुद्रस्य ॥ ४० ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्।
अष्टाशीतितमोऽध्यायो दशमेऽजनि सङ्गतः ॥ ८८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

अव्याकृतशक्त्युदन्वतः स्वाभाविकनित्यानन्तशक्तिसमुद्रस्य "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिश्रुतेः गिरित्रमोक्षं शिवमोचनात्मकं चेष्टितम् संस्मृतिभिः देवमनुष्यातिर्य्यगादिजन्मभिः अरिभिः कामक्रोधादिभिश्च विमुच्यते ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये।
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
अष्टाशीतितमाध्यायार्थप्रकाशः ॥ ८८ ॥

---

भाषा टीका।

पापी वृकासुर के मरने पर देवऋषि पितृ गंधर्व जन भगवान् के ऊपर पुष्पन की वर्षा करने भए इस प्रकार भगवान् ने शिव सङ्कट ते छुड़ाया ॥ ३७ ॥

सङ्कट ते छूटे भए शिव के प्रति पुरुषोत्तम भगवान् बोले कि हे देव! महादेव यह पापी अपने पाप सेहि मर गयो ॥ ३८ ॥

हे ईश! महात्मान के विषय में अपराध करने वारा कोई भी प्राणी सुखी नहि होसकता फिर जगत्पूज्य विश्वेश्वर आप के विषय में अपराध करने वारा सुखी न होई इस में तो कहनाहि क्या है ॥ ३९ ॥

इस प्रकार अप्राकृत स्वतः सिद्ध अनंत शक्तियों समुद्र जीव माया से परे भक्तन के सङ्कट हरन करने वारे साक्षात् परमात्मा के इस शिव संकट मोचचरित्र को जो कहता है अथवा सुनता है वह नाना प्रकार की योनियों के भ्रमण से छूट जाता है तथा संसार के देने वारे कामादि शत्रुओं से छूट जाता है ॥ ४० ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
उत्तरार्द्ध में अठासी अध्यायकी
भाषाटीका समाप्त ॥ ८८ ॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे अष्टाशीतितमोऽध्यायः ॥ ८८ ॥



## एकोनवतितमोऽध्यायः ।

श्रीशुक उवाच ।

सरस्वत्यास्तटे राजन्नृषयः सत्रमासत ।
वितर्कः समभूत्तेषां त्रिष्वधीशेषु को महान् ॥ १ ॥
तस्य जिज्ञासया ते वै भृगुं ब्रह्मसुतं नृप ।
तज्ज्ञप्त्यै प्रेषयामासुः सोऽभ्यगाद्ब्रह्मणः सभाम् ॥ २ ॥
न तस्मै प्रह्वणं स्तोत्रं चक्रे सत्त्वपरीक्षया ।
तस्मै चुक्रोध भगवान् प्रज्वलन् स्वेन तेजसा ॥ ३ ॥
स आत्मन्युत्थितं मन्युमात्मजायात्मना प्रभुः ।
आशीशमद्यथा वह्निं स्वयोन्या वारिणाऽऽत्मभूः ॥ ४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

नवाशीतितमे देवः को महानिति संशये ।
परीक्ष्य विष्णोरुत्कर्षं मुनिभ्योऽवर्णयद्भृगुः ॥

इतिहासान्तरमाह—सरस्वत्या इति ॥ १—३ ॥

स्वयोन्यः स्वस्यैव रूपान्तरेणाभिव्यक्तिस्थानेन स्वकार्येणेत्यर्थः । तेन यथा कश्चिद्वह्निं शमयति तथा स्वकार्येण पुत्रेण निमित्तेन क्रोधं शमयामासेत्यर्थः ॥ ४—१० ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेवं सोपाधिकरूपादाशुतोषकोपाच्छुद्धस्वरूपतयोदर्कशुद्धाङ्गीकारमयपरमार्थदातृविचारतया च श्रीब्रह्मणोरुत्कर्षमुक्त्वा परमापराधेऽपि विनयपूर्वकपरमाङ्गीकारमयकरुणया च वर्त्तन्तत्प्रसङ्गे ब्रह्मणोऽपि दर्शयति—सरस्वत्या इत्यादि आसत इति लट् सदा सत्रपरत्वेनाद्यापि सन्तीत्युपचारात इति तेषां कर्माविष्टत्वमनिर्णये हेतुरुक्तः को महानिति विचारो वितर्कः सम्यक् शास्त्रतर्कविचारेणाभूत् ॥ १ ॥

भृगुमिति महर्षीणां भृगुरहमिति महिम्ना तस्यैव योग्यत्वादितिभावः ब्रह्मसुतमिति तदभिमानाक्रान्तचित्तत्वेन तत्रासङ्कोचश्च तस्य दर्शितः ब्रह्मणि स्वस्य लाल्यत्वस्य शिवे भ्रातृत्वस्य ब्रह्मण्यदेवे श्रीविष्णौ तु ब्राह्मणत्वस्यातिशयस्फूर्तेः अत एव सोऽपि तज्ज्ञप्त्यै तस्य महत्त्वस्य ज्ञापनाय अभितस्तदाभिमुख्येन अभयं यथा स्यात्तथाच अगात् गतः ॥ २ ॥

यतो न तस्मा इत्यादि सत्वं महत्त्वापरपार्य्यायमुत्कृष्टत्वं तस्य परीक्षया हेतुना प्रह्वणं प्रणामं स्तोत्रञ्च न चक्रे एवमुत्तरत्रापि भगवान् जगत्सृष्ट्यादिना सर्वपूज्यः श्रीब्रह्मेत्यर्थः क्रोधविकारभरमाह स्वेनासाधारणतेजसा प्रकर्षेण ज्वलन्निति ॥ ३ ॥

आत्मनि मनसि आत्मना स्वयमेव क्षमापणां विनैवेत्यर्थः अशीशमत् शमयामास यतः प्रभुर्विचारसमर्थः तत्र हेतुः आत्मनः श्रीहरेः सकाशाद्भवतीति तथा सः विचारमेवाह स्वयोन्या स्वकार्य्यत्वात्स्वाभिव्यक्तिस्थानेन तद्रूपत्वेन पुत्रोयमिति भावेनेत्यर्थः । तत्र दृष्टान्तः यथा कथञ्चिद्वारिणा वह्निं शमयतीति ॥ ४ ॥

---

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

॥ १—५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्थं मोक्षप्रदत्वसर्वशक्तित्वादिभिर्भगवतः सर्वोत्कृष्टत्वं प्रदर्शितं किं बहुना ब्रह्मर्षिभिरेव भगवतः परत्वं निर्णीतमित्यभिप्रेत्य तद्विषयकं इतिहासान्तरं प्रस्तौति एकोननवतितमेन-सरस्वत्या इति । हे राजन् ! सरस्वत्याः नद्यास्तटे सत्रमासते सत्रानुष्ठानार्थमुपविविशुरित्यर्थः । अधीशेषु इन्द्रादिभ्योऽधिकेषु ब्रह्मविष्णुरुद्रेष्वपि को महानभ्यधिक इति तेषामृषीणां वितर्को विवादः समभूत् यद्यप्यधिगतपरावरतत्त्वविदां न वितर्कस्तथापि लोकान् ग्राहयितुमभूदित्यर्थः । यद्वेदानीं इव तदापि रुद्रादिपरत्वाभिमानिनां दुर्वासःप्रभृतीनां सत्त्वाद्वितर्को बभूवेत्यर्थः ॥ १ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तस्येति तस्य महत्त्वस्य जिज्ञासया ते ऋषयः हे नृप ! ब्रह्मण- श्चतुर्मुखस्य सुतं भृगुं तज्ज्ञप्त्यै महत्त्वं वेत्तुं इत्यर्थः प्रेषया- मासुः स भृगुस्तावद्ब्रह्मणश्चतुर्मुखस्य सभामभ्यगात् ॥ २ ॥

सत्त्वपरीक्षार्थं तस्मै ब्रह्मणे स्तोत्रं न कृतवान् ततस्तस्मै भृगवे भगवान् ब्रह्मा चुक्रोध ॥ ३ ॥

स इति । स ब्रह्माऽऽत्मजाय भृगवे आत्मनि मनस्युत्थितं मन्युं क्रोधमात्मना विवेकात्मिकया बुद्ध्याऽशामयत् यथा स्वयोन्या स्वस्यैव स्वरूपान्तरेणाभिव्यक्तिस्थानेन स्वकार्येणेति यावत् तेन वारिणा यथा कश्चिद्वह्निं शमयति तथा स्व- कार्येण पुत्रेण निमित्तेन क्रोधं शमयामासेत्यर्थः । यद्वा स्वस्याग्नेर्योनिररणिस्तस्या उत्थितं वह्निं जलेन कश्चिच्छमयति तथा भृगोरुत्पत्तिस्थानभूतात् स्वस्मात्समुत्थितं क्रोधं बुद्ध्या ऽशामयदित्यर्थः ॥ ४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

विष्णोः समोऽधिकोस्तीति संशयनिरासाय तस्य भक्तानु कम्पित्वप्रकटनाय च मुमुक्षुभिः क्षमागुण एवापाद्यस्तत्प्रसादः जनक इति द्योतनाय च तस्मिन्निरतिशयभक्तिजननाय चास्या- ध्यायस्य प्रारम्भः तत्रादौ मुनीनां सत्रसमये जिज्ञासाप्रकारं वक्ति--सरस्वत्या इति । वितर्को जिज्ञासा त्रिषु ब्रह्मादिषु अधीशेषु अधिकेश्वरेषु च महानुत्तमः ॥१॥

तस्याधिकस्य वा इत्यनेन लोकसंशयनिरासाय मन्दाधिकारिणां दृढनिश्चयाय न स्वार्थं परिज्ञातवेदान्तार्थत्वात्स्वेषामिति निर्धार- यति ॥ २--३ ॥

आत्मनः स्वस्यात्मनि मनस्यात्मजाय भृगवे उत्थितं मन्युमशीशमत् शान्तं कृतवान् प्रभुः समर्थः प्रभुः भृगोः पितृत्वेन स्वामी ॥ ४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

॥ १-६ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

॥ १—५७ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं दातृत्वसन्देहः कृष्णस्य विनिवारितः ।
अनेनैव महत्त्वञ्च हरौ निर्द्धारितं भवेत् ॥
तथापि स्पष्टमध्याये चत्वारिंशे निरूप्यते ।
महात्म्यं द्विविधं लोके प्रमाणाच्च प्रमेयत् ॥
वेदानां मूलरूपेण प्रथमं विनिरूप्यते ।
द्वितीयश्च प्रमेयेण हरिणैव निरूपितम् ॥
ज्ञानशक्तिश्च पूर्णात्र क्रियापर्यवसायिनी ।
मूलत्वात्सर्वसहनं जनकस्यैव रूप्यते ॥
यद्वा गुणा भगवतश्चत्वारो विनिरूपिताः ।
तदावशिष्टद्वितीयं स्वयमेवावदच्छुकः ॥

महत्त्वलक्षणज्ञानशक्तिनिरूपणार्थं शुकः स्वयमेव पूर्वसिद्ध- निर्णयरूपां कथामारभते—सरस्वत्यास्तट इति । सरस्वतीतीरे पूर्वं ऋषयः सत्रं कुर्वाणा जाताः देवाधिकारिकर्मणां प्रासङ्गि- कानामुत्कर्षो निरूपितः तदा तेषां कर्मफलसमर्पणार्थं जिज्ञासा उत्पन्ना क कर्मफलं समर्पणीयमिति ततः पितृत्वात् ब्रह्मणि समर्पणीयमिति केचित् यज्ञात्मकत्वात् विष्णौ समर्पणीय- मिति परे ज्ञानोपदेष्टृत्वात् गुरौ महादेवे समर्पणीयमित्यपरे ततः प्रयोजकानां त्रयाणां एकशेषनिर्णय कर्तुमशक्य इति महत्त्वं व्यवस्थापितं प्रयोजकत्वेन तच्च महत्त्वं सद्गुणैर्भवतीति सद्गुणानां मध्ये सर्वावस्थासु क्षोभाभावो महानिति कोवा क्षोभ्य इति विचारार्थं महत्त्वासाधनाय वितर्को जात इत्याह— वितर्कः समभूदिति । वितर्कशरीरमाह—त्रिष्वधीशेषु को महान् इति ॥ १ ॥

तर्हि एतन्महत्त्वं कथं ज्ञातव्यमिति जिज्ञासायां विचारे- णैव तज्ज्ञानं भवतीति निश्चित्य विचारार्थं प्रत्यक्षमेव प्रमाण- मङ्गीकृतवन्तः ततः प्रत्यक्षसम्वादी योगैः स एव निर्णायक इति तदर्थं प्रवृत्ता इत्याह—तस्य जिज्ञासयेति । सर्वेषां ब्रह्मशक्तिः ज्ञानात्मिका महत्त्वादृभृगौ समारोपिता तदा भृगुः साक्षात् परब्रह्माविष्टो जातः ततो विस्मृतदेहसम्बन्धः अक्षोभ्यपरीक्षार्थं सर्वैर्ब्राह्मणैः प्रेषितः आदौ ब्रह्मसभा- मगात् स चेदक्षोभ्यः स्यात् पितापि भवति पूर्वं यावन्तः समायान्ति ते नमस्कृत्य स्तुत्वा अवतिष्ठन्ते भृगुस्तु तं गुणं न कृतवान् अनेन मानसी अवज्ञा सूचिता ननु कर्तव्यं न कथं कृतवान् तत्राह–सत्त्वपरीक्षयेति । ब्रह्मशब्दवाच्योऽपि तस्य सत्त्वं विवेकधैर्यादिकं परीक्षणीयमिति अतः स्वभावतः अकरणं न भवतीति न तस्य दोषः ग्रामसेवापरित्यागो द्वेषमूलमिदं स्मृतमिति न्यायाद्ब्रह्मणः क्रोधो जात इत्याह, तस्मै चुक्रोधेति ननु ब्राह्मणः सोऽपि महान् तत्राह, भगवा- निति । नन्वेवं तत्रापि तुल्यं प्रज्वलनमिति वेदगर्भत्वात् ब्रह्मतेजसा प्रज्वलनमास्ते भृगावप्येवमस्तीति चेत् तत्राह, कृषेन तेजसेति । भृगौ तु ब्राह्मणैः स्वस्वतेजः स्थापितमिति विशेषः ॥ २-३ ॥

ततः सहजकृत्रिमयोः रूपं तुल्यमिति ब्रह्मास्त्रयोरिव स्वत एव तेजः शान्तमित्याह—स आत्मन्युत्थितमिति । आत्मजोऽपि स्वतः उत्पन्नः मन्युरपि अतस्तुल्यबलत्वेन कलहः परं भविष्यतीति एतावन्मात्रं विचार्य आत्मनैव स्वेनैव स्वतेजः अशीशमत् एवं करणे सामर्थ्यं प्रभुरिति एतत्तु ब्रह्मणो मनोरथमात्रं वस्तुतस्तु भृगुतेजसैव तच्छान्तमिति वक्तुं दृष्टान्तमाह, स्वयोन्या वारिणेति यथा वह्निं कश्चिच्छामयति वह्नेरेवोत्पन्नेन जलेन अप्ययमप इति श्रुतेः कारणेन कार्यनाशः प्रायेण सर्वत्र स्वतो धर्मतो वा ॥४॥

ततः कैलासमगमत्स तं देवो महेश्वरः ।
परिरब्धुं समारेभ उत्थाय भ्रातरम् मुदा ॥ ५ ॥
नैच्छत्त्वमस्युत्पथग इति देवश्चुकोप ह ।
शूलमुद्यम्य तं हन्तुमारेभे तिग्मलोचनः ॥ ६ ॥
पतित्वा पादयोर्देवी सान्त्वयामास तं गिरा ।
अथो जगाम वैकुण्ठं यत्र देवो जनार्दनः ॥ ७ ॥
शयानं श्रिय उत्सङ्गे पदा वक्षस्यताडयत् ।
तत उत्थाय भगवान् सह लक्ष्म्या सतां गतिः ॥ ८ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

नवाशीतितमे विष्णोः श्रैष्ठ्यं भृगुपरीक्षया
त्रिषु तत्रापि विप्रार्भाहृतेः कृष्णस्य भूमतः ॥

विष्णोरेव सर्वोत्कर्षात् सेव्यत्वे इतिहासान्तरमाह—सरस्वत्या इति ॥ १ ॥

तज्ज्ञप्सै स अभ्यगादित्यन्वयः प्रह्वणं नतिं सत्वस्य महत्त्वस्य तद्धेतोः सत्वगुणस्य वा परीक्षार्थम् ॥ ३ ॥

आत्मजाय आत्मजं तं हन्तुमित्यर्थः । स्वयोन्या स्वं वह्निरेव योनिरुत्पत्तिकारणं यस्य तेन वारिणा स्त्रीत्वमार्षं वारिणा वह्निकार्य्येण यथा वह्निं शमयति तथा स्वकार्य्येण पुत्रेण निमित्तेन स्वाकारीभूतं क्रोधं शमयामास यद्वा स्वस्य वह्नेर्योन्या कारणेन वारिणेव क्रोधस्य कारणेनात्मनैव क्रोधं शमयामास अग्नुयोनिः कृपीटयोनिरित्यादि वह्निनामदर्शनात् क्वचिज्जलादपि वह्निर्जायत इति प्रसिद्धेः ॥ ४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पूर्वाध्याये मोक्षप्रदत्वं श्रीविष्णोरेवेत्युक्तमथास्मिन्नध्याये तत्र कारणत्वेन भृग्वादिमहर्षिविनिश्चितं तच्छ्रैष्ठ्यं वर्णयति—सरस्वत्या इति सत्रं बहुकर्तृकं यागं कर्तुमासत उपविविशुः तेषां त्रिषु ब्रह्मविष्णुरुद्रेषु को महानिति वितर्को विवादः समभूत् ॥ १ ॥

ते ऋषयः तस्य महत्त्वस्य जिज्ञासया भृगुं प्रेषयामासुः स भृगुरपि तज्ज्ञप्त्यै महत्त्वज्ञानार्थं ब्रह्मणः सभामभ्यगादित्यन्वयः ॥ २ ॥

प्रह्वणं नतिं स्तोत्रं च न चक्रे ओन्तत्सदितिनिर्देशो ब्रह्मणस्त्रिविधः स्मृतः इति स्मृतेःसतो ब्रह्मणो भावः सत्त्वं तत्परीक्षार्थम् ॥ ३ ॥

स ब्रह्मा आत्मजाय आत्मजं हन्तुम् आत्मनि उत्थितं मन्युमात्मनैव अशीशमच्छयामास यथा प्रभुः सूर्यः स्वयोन्या वारिणा स्वप्रवर्तितवृष्ट्या यद्वारि तेन निदाघसन्तापकरं वाह्नं स्वप्रजानाशकरं शमयति. तद्वत् तमोभितरजआप्लुतो ब्रह्मा नरं ब्रह्मेति भावः ॥ ४ ॥

भाषाटीका ।

श्रीशुक उवाच ।

हे राजन् ! सरस्वती नदी के तीर पर एक समय सत्र नाम यज्ञ के अनुष्ठानार्थ ऋषिजन मिलकर बैठते भए उन ऋषियों को यह तर्कना भई कि ब्रह्मा विष्णु महेश इन तीनोंन के मध्य में सब से बड़ा देव कौन है ॥ १ ॥

हे नृप ! उस महत्त्व के जानिवे की इच्छा कर उन ऋषियों ने साक्षात ब्रह्माजी के पुत्र भृगु महर्षि को तीनों देवन के पास वह भृगु महर्षि महत्त्व के निश्चय के लिये पहले ब्रह्मा की सभा मे गया ॥ २ ॥

जायकर ब्रह्मा में सत्व गुण है अथवा नहि है इस की परीक्षा के अर्थ भृगु ने ब्रह्मा के न तो प्रणाम किया और न स्तुति करी अनंतर ब्रह्माजी अपनी अवज्ञा समझ कर अपने क्रोध रूप तेज से प्रज्वलित होकर भृगु के ऊपर क्रोध करते भए ॥ ३ ॥

निज पुत्र के ऊपर मन में उत्पन्न क्रोध का समर्थ ब्रह्माजी ने निज बुद्धि से इस प्रकार शमन कर दिया कि जैसे अग्नि ते उत्पन्न जल से अग्नि को शमन कर देते हैं ॥ ४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तदेवं ब्रह्मणः सत्त्वबाध्यं रजोदर्शितं शिवस्य तमोबाध्यं सत्त्वं सत्वबाध्यं तमश्च दर्शयति तत इति सार्धद्वाभ्याम् । देवो जगत्पूज्यः यतो महेश्वरः सर्वाहङ्काराधिष्ठातृत्वादितिभावः तथापि मुदा परिरब्धुं सम्यक् बाहुप्रसारादिना रेभे यतो भ्रातरम्भ्रातृत्वेनाङ्गीकृतम् ॥ ५ ॥

उत्पथगः श्मशानभस्मादिधारणेन पाषण्डमार्गे प्राप्तोऽसीति यद्वंस्तत्परिरम्भणं नेच्छदित्यर्थः । ततश्चुकोप तदेवाह शूलमिति । तिग्मलोचन इति क्रोधातेत्राग्निप्रसरणाभिप्रायेण ॥ ६ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

पतिस्त्वेत्यर्द्धकम् । गिरा सामपूर्वकसन्ध्यायोक्त्या वैकुण्ठं प्रपञ्चान्त र्विकण्ठासुतनिर्मितं विष्णुलोकविशेषम् एवं भुवति वैकुण्ठ इति वक्ष्यमाणात्——

पत्नी विकुण्ठा शुभ्रस्य वैकुण्ठैः सुरसत्तमैः ।
तयोः स कलया जज्ञे वैकुण्ठो भगवान् स्वयम् ॥
वैकुण्ठो निर्मितो येन लोको लोकनमस्कृतः ।

इत्यष्टमस्कन्धाच्च ॥ ७ ॥

श्रिय उत्सङ्गे शयानमिति तयोस्तदागमनाज्ञाने हेतुः मिथः प्रेमावृतज्ञानत्वात् तदेवं तदानीं तादृशदारुणकर्मणोऽत्यन्तायोग्यत्वमुत्तरोत्तरमविनयाधिक्यञ्च तस्योक्तं वैष्णवत्वञ्चैतदुत्तरकाले तादृशभगवद्गुणेनैव जातमिति ज्ञेयं तथापि तस्य तत्र गमनं श्रीभगवतो लोककृपार्थस्वगुणव्यञ्जनेच्छयैवेति च ततस्तस्मात्ताडनादनन्तरं तं दृष्ट्वेत्यर्थः सहसा सम्भ्रमेण लक्ष्म्या सहोत्थाय स्वतल्पादिति स्वशब्देन तल्पस्य परमधिष्ण्यत्वं सूचयति तत्तोऽप्यवरुह्य आश्वित्यस्य यथापेक्षं सर्वैरप्यन्वयः उत्थानादौ हेतुः सतां साधूनां गतिः सद्धर्माश्रयः तत्रैव हेतुर्भगवान् सर्वसद्गुणयुक्त इति यद्वा भगवान् साक्षात्परमेश्वरोऽपि ॥ ८ ॥

———

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

चुकोपेति उक्तोऽथ वैकुण्ठशब्दः पूर्ववत् ॥ ६—१४ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत इति स भृगुः कैलासं जगाम तं भृगुं परिरब्धुमालिङ्गितुम् ॥ ५ ॥

नैच्छदिति । त्वमुत्पथगः इति वदन् परिरम्भणं नैच्छदित्यर्थः । देवो रुद्रः तस्मै चुकोप किञ्च तीक्ष्णदृष्टिः सन् शूलमुद्यम्य तं भृगुं हन्तुमारब्धवान् ॥ ६ ॥

पतिस्त्वेति । देवी गिरा सान्त्वोक्त्या तं रुद्रम् अथेति वैकुण्ठशब्दः पूर्ववद्विष्णुलोकपरः श्रियो लक्ष्म्याः उत्सङ्गे शयानं वक्षसि पादेनाताडयत् तत इति सतां गतिरिति हेतुगर्भम् ॥ ७-८ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

महेश्वर इति साङ्केतिकं नाम अन्वर्थाङ्गीकारे प्राकृतानुपपत्तेः भ्रातरं मुदेति भ्रातृशब्दप्रयोगाच्च ॥ ५ ॥

श्मशानवासित्वेनाशुभाचार इति मत्वा ॥ ६-८ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ॥

वैकुण्ठं प्रपञ्चान्तर्वर्त्तिविकुण्ठासुतनिर्मितं विष्णुलोकविशेषम् ॥ ७ ॥

शयानमिति तादृशदारुणकर्मणोत्पत्त्या योग्यत्वमविनयाधिक्यं च तस्योक्तं वैष्णवत्वं त्वेतदुत्तरकाले तादृशभगवद्गुणेनैव जातमिति ज्ञेयम् । तथापि तस्य तत्र गमनं श्रीभगवतो लोककृतार्थस्वगुणव्यञ्जनेच्छयैव इति च ॥ ८-१५ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं तस्य क्षोभं दृष्ट्वा अयं महान् भवतीति निश्चित्य महादेवो लोकानां ज्ञानोपदेष्टा कदाचिदेवं भविष्यतीति तत् जिज्ञासार्थं भगवन्तं भोगाविष्टं मत्वा तं परित्यज्य प्रथमतः कैलासमगमत् तस्य भ्रातृत्वेन तुल्यत्वात् तूष्णीं भावो न क्षोभक इति वाचनिकोऽपराधः कृत इति वक्तुं तस्य प्रसङ्गमाह—सतं देवो महेश्वर इति । तुल्यत्वेऽपि तस्य तेजो दृष्ट्वा देवोऽपि ज्ञानशक्तियुक्तोऽपि ऐश्वर्ययुक्तोऽपि सन्माननार्थं परिरब्धुं समारेभे तत्राप्युत्थाय तत्रापि मुदा अनेन मानसः कायिकः ऐन्द्रियकश्च पुरस्कार उक्तः ॥ ५ ॥

अतिक्रममाह—नैच्छदिति । इच्छाभावो मानसः तेन सहितवाचनिकमाह, त्वमुत्पथगामीति । एवं वाचनिकातिक्रमे जाते देवत्वात् स्वच्छन्दचारित्वं न दोषायेति चुकोप इत्याश्चर्ये ज्ञानिनः कथमेवं क्रोध इति ततः पूर्वापेक्षया अस्य दण्डोऽप्यधिको जात इत्याह, शूलमुद्यम्येति तिग्मानि लोचनानि यस्येति ज्ञानशक्तितिरोभावः ॥ ६ ॥

तदा पार्वतीज्ञानशक्तिः तत्स्वरूपं ज्ञात्वा स्वक्रियया तद्दण्डे प्रतिबन्धरूपा जातेत्याह—पतित्वा पादयोरिति । गिरा जिज्ञासाप्रवृत्तिरूपया एवं तत्तद्गुणपुरःसरं उभयोः स्थाने गत्वा स्वरूपेणैव भिन्नप्रक्रमेण विष्णोः स्थाने गत इत्याह, अथाजगामेति स हि जामाता भृगोर्भवति लक्ष्मीपतिः अतो द्वारपालैररुद्ध एव श्रिय उत्सङ्गे शयानं परमेश्वरं अत्यन्तातिक्रमं पूर्वापेक्षयापि कुर्वाणः वक्षसि पदा अताडयत् स हि परीक्षार्थमागतः विलम्बं न सहते भगवांश्च शेते शयाने न कोऽप्यस्मादन्यः अतिक्रमो भवति अतः प्रबोधनमतिक्रमञ्च सहैव कृतवान् अयं कायिकोऽतिक्रमस्तत्रापि महान् देशकालावस्थासन्निधिकरणक्रियाफलानां षण्णामपि दुष्टत्वात् यदि भगवान् गुणैः प्रत्येकेन मिलितैर्वा भगवान् स्यात् तदा क्षोभं प्राप्नुयादेव भगवांस्तु स्वभावतोऽपि भगवान् मूलभूतः अतः सहजान् स्वषड्गुणान् तत्र प्रकाशयामासेत्याह—तत उत्थायेति चतुर्भिः मानसान् षड्गुणान् आदौ ततः काये सुसंस्थितान् ततो वाचनिकानाह, पूर्णो भगवान् हरिः प्रथमं अक्षोभ्यत्वाय मानसान् षड्गुणानाह—यतो भगवान् अत ऐश्वर्यविरुद्धं मारणानन्तरमुत्थानं कृतवान् तत्रापि सह लक्ष्म्या वीर्यविरुद्धमेतत् न हि सामर्थ्ये विद्यमाने कश्चित् सुखं परित्यजति यशो विरुद्धं चैतत् यतः सतां गतिः एवं सति सन्तः कथं भजेरन् अपकर्षख्यापनात् स्वतल्पादवरुह्येति श्रीविरुद्धं तस्या शोभाया विरोधानात् आश्विति विकलतया विरोधः समर्थितः ननामेति ज्ञानविरुद्धं हीनो हि नमस्करोति तत्रापि शिरसा शिरो हि ब्रह्मादीनामपि स्थानं वैराग्यविरुद्धञ्चैतत् मुनिमिति मुनित्वादयं क्रोधं करिष्यतीति तदभावापेक्षा न विरुद्धता इति कायिक-

स्वतल्पादवरुह्याथ ननाम शिरसा मुनिम् ।
आह ते स्वागतं ब्रह्मन्निषीदात्रासने क्षणम् ।
अजानतामागतान् वः क्षन्तुमर्हथ नः प्रभो ॥ ९ ॥
अतीव कोमलौ तात चरणौ ते महामुने ।
इत्युक्त्वा विप्रचरणौ मर्दयन् स्वेन पाणिना ॥ १० ॥
पुनीहि सह लोकं मां लोकपालांश्च मद्गतान् ।
पादोदकेन भवतस्तीर्थानां तीर्थकारिणा ॥ ११ ॥
अद्याहं भगवँल्लक्ष्म्या आसमेकान्तभाजनम् ।
वत्स्यत्युरसि मे भूतिर्भवत्पादहतांहसः ॥ १२ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

भगवद्धर्मविरुद्धानाह, आहेति । ते स्वागतं कुशलेनागमनं किं कृतमिति कुशलप्रश्नः समतामापादयन् ऐश्वर्यविरुद्धो भवति ब्रह्मन्निति तस्योत्कर्षेण सम्बोधनं वीर्यविरुद्धञ्च अत्रासने क्षणं निषीदेति प्रार्थना कीर्त्तिविरुद्धा क्षणमित्यतिदैन्यात् श्रीविरुद्धा च अजानतामागतान्व इति स्पष्टो ज्ञानविरोधः नोपराधं क्षन्तुमर्हथेति अपराधक्षमापनं सापेक्ष्यत्वं ज्ञापयतीति वैराग्यविरुद्धं प्रभो इति सम्बोधनम् ॥ ७—९ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एवं ब्रह्मण्यवज्ञारूपं मानसमपराधं कृत्वा तत्र रजोगुणं दृष्ट्वा तं परीक्षया वस्तुतस्त्वनुत्तीर्णं ज्ञात्वा ततोपि श्रेष्ठे महेश्वरे मानसादिकं वाचिकमपराधमकरोदित्याह—तत इति द्वाभ्याम् ॥ ५-७ ॥

महेश्वरे तमोगुणं दृष्ट्वा तदर्द्धभूतायां पार्वत्यां सत्वगुणञ्च दृष्ट्वा तमपि परीक्षया वस्तुतस्त्वनुत्तीर्णं दृष्ट्वा ततोप्यतिश्रेष्ठे विष्णौ वाचिकादप्यधिकं कायिकमपराधमकारोदित्याह अथो इति पुष्पपर्य्यङ्कोपरि शयानमपि तत्रापि श्रियः स्वपत्न्या उत्सङ्गे तत्रापि वक्षसि तत्रापि पदा ननु हस्तादिनेत्यपराधपराकाष्ठः कृत इति भावः ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हन्तुं आरेभे इति भ्रातृविषयकस्नेहेन रजोमूलेन परिरब्धुं प्रवृत्तोपि त्वमस्युत्पथग इति प्रतिकूलवचनमात्रश्रवणेन तमोजन्येन क्रोधेन तं भ्रातरं हन्तुं प्रवृत्तः रजोमिश्रितेन तमसा वृतो हर इत्यर्थः । देवी सान्त्वयामासेति पतिप्रकृतिनिरोधाचरणेन तत्कालानुरक्षणिकेन रजसा वृता भवानीति द्योत्यते ॥ ६ ॥

श्रिय उत्सङ्गे शयानमित्यनेन रजस्तमोभिभूतेषु तादृशी क्षमा कदाचिदपि लेशतोपि न सम्भवतीति द्योत्यते ॥ ७ ॥

सह लक्ष्म्येत्यनेन लक्ष्मीः पतिस्वभाववतीति गम्यते तत उत्थाय इत्यादिना भवत्पादहतांहस इत्यनेन ग्रन्थेन विष्णुः क्षमात्सत्वगुणवश्य इति नैवोच्यते यतः सत्वावृताः प्रत्युत्थानादिना गुर्वादीन् पूजयन्ति ननु पादत्राणावलम्बिनं भृत्यम् तस्मादनेन ग्रन्थेन प्रकृतितद्गुणावावृतनिखिलजीवनियन्तुः सर्वात्मनः सर्वेश्वरस्याचिन्त्यचेष्टितस्य श्रीविष्णोः सर्वदोषवर्जितत्वसर्वश्रेष्ठत्वख्यापनाय स्वभक्तभक्तिमत्त्वं प्रतिपाद्यते अहं भक्तपराधीनः अस्वतन्त्र इव द्विज भगवान् भक्तभक्तिमानित्युक्तिः ॥ ८ ॥

भाषाटीका ।

अनंतर भृगुजी वहां से कैलास में गए वहां महादेवजी उठ कर भ्राता भृगु से मोह के साथ मिलने को तयार भए ॥ ५ ॥

अनंतर तुम चिता भस्मादि धारण करने वारा होने से उत्पथगामी हो हमको मतना छुवो इस प्रकार कह कर भृगुने महादेव से मिलने को नहि चाहा भृगु के वचन को सुन कर महादेवजी ने क्रोध किया ॥ ६ ॥

क्रोध से क्रूर नेत्र वारा होकर महादेवजी त्रिशूल लेकर भृगु के मारने को तयार भए तब तो पार्वतीजीने महादेवजी के चरणों में दण्डवत् कर मधुरवाणी से उनको प्रसन्न कर लिए ॥ ७ ॥

अनंतर जहां श्रीजनार्दन देव विराजते हैं उस समय वैकुंठ में भृगुजी पहुचे वहां लक्ष्मीजी के अंक में भगवान् शयन करते रहे उन की छाती में भृगुने अपने पावन से लात मारी ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तीर्थकारिणा तीर्थत्वनिमित्तेन ॥ ११—१२ ॥

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ते..त्वया सुखेनागतं किमित्यर्थः । यद्वा तव स्वागतं शोभनमागमनं ब्रह्मन् हे वेदस्वरूपेति परमपूज्यत्वं सूचयति अत्र मत्तल्परूपे किम्वा विप्रायार्थं पृथक्स्थापिते किम्वा मयार्पिते अस्मिन्नासने एवञ्च स्वयमेव सत्वरमासनमानीतमिति ज्ञेयं ननु त्वया अभिगमनादिना न सम्मानितोऽहमित्यासनं न स्वीकरोमीति चेत्तत्राह अजानतामिति वो युष्मान् बहुत्वं गौरवात् नोऽस्माकमिति लक्ष्म्याद्यपेक्षया ॥ ९—१० ॥

क्षणोपवेशे प्रयोजनं च मम सुखमेवेत्येवमतिस्तुत्या प्रतिपादयति—पुनीहि इति द्वाभ्याम् । सह लोकं श्रीवैकुण्ठलोकेन चतुर्द्दशभुवन्याच सहितं लोकपालान् श्रीब्रह्मरुद्रादीन् मद्गतान् मयि वर्त्तमानानित्यर्थः । तस्य विश्वोदरत्वात्तेषां तदंशत्वाद्वा भगवन् हे परमपूज्य ! अतः क्षणमुपविष्टस्य ते पादौ प्रक्षाल्य तज्जलं धारयामीति भावः ॥ ११ ॥

ननु ममांदुःखभरेण मया महापराधः कृतः लज्जया कथमत्रोपवेष्टव्यमित्याशङ्क्य महाननुग्रह एव भवता कृत इत्याह अद्येति । एकान्तं परमं भाजनमाश्रयः तत्र च त्वमेव समर्थोऽसीत्याह भगवन् हे सर्वशक्तियुक्तेति अतो भूतिर्लक्ष्मीर्मे वक्षसि सदा वत्स्यतीत्यर्थः । तद्धेतुमेवाभिव्यञ्जयति भवदिति तदेवमस्मिन् श्रीवैकुण्ठास्पदे लक्ष्मीरेवाप्येतदनन्तरमेव भवष्यतीति गम्यते ॥ १२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

अतः सतल्पादाश्ववरुह्य मुनिं भृगुं शिरसा ननामाह च किमिति । हे ब्रह्मन् ! ते त्वया स्वागतं कुशलमागतं खलु अत्रास्मिन् आसने क्षणं निषीद उपविश हे प्रभो ! युष्मानागतानजानतां नोऽस्माकमपराधमितिशेषः क्षन्तुमर्हथ ॥ ९-१० ॥

पुनीहीति । सह लोकं सवैकुण्ठं मां मद्गतान् मदावेशितविग्रहान् मदार्यान् इति वा लोकपालांश्च हे भगवन् ! पादोदकेन पुनीहि कथम्भूतेन तीर्थानां गङ्गादीनामपि तीर्थकारिणा पवित्रकारिणा ॥ ११ ॥

अद्येति । हे भगवन्नद्याधुनाऽहं लक्ष्म्या एकान्तभाजनं नियताश्रय आसं तत्र हेतुत्वेनात्मानं विशिषन्नाह—भवतः पादेन पादताडनेन हतमंहः पापं यस्य तस्य ममोरसि विभूतिर्लक्ष्मीर्वत्स्यत्यनपायितया वर्त्स्यतीति ॥ १२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ते तुभ्यं निषीदोपविश आगसमपराधम् ॥ ९—१० ॥

अहमेव गतं गतिः आश्रयो येषां ते मद्गतास्तान् तीर्थकारिणा शुद्धिकारिणा तीर्थं शास्त्रेष्वम्भसि पावने इति यादवः ॥ ११ ॥

असुरजनमोहनार्थमाह-अद्येति । अद्याहं लक्ष्म्याः श्रिय एकान्तेन नियमेन भाजनं पात्रमासं भूतिर्लक्ष्मीः भूतिः श्रीजन्मभस्मक्षितिच नित्यकृतवासापि अद्यप्रभृति वत्स्यति स्पष्टवासं करिष्यति भवता नित्यशाकेन पादेन ज्ञानेन हतं महम् अंहो यस्मिंस्तथा नित्यमस्ताज्ञानात्मकत्वेन दोषरहितमिति वा तस्मिन्निति तथा बाह्यार्थः कथा यदि वाक्यार्थः ॥ १२ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

स्वगुणान् भगवांस्तत्र स्थापयतीति सूचयति, अमानी मानदो भगवानिति परीक्षायां निर्णयः सिद्धो भविष्यतीति एवं वचसा स्वापकर्षं ख्यापितवान् अपराधकर्त्तुः स्तोत्रञ्च वचसैव कायिकात् पूर्ववद्विरुद्धान् प्रतिपादयति—पुनीहीति द्वाभ्याम् परमपवित्ररूपं भगवान् पावित्र्ये परमैश्वर्ये प्राप्तः अत एव नखोदकरूपायां गङ्गायां आज्ञया पावित्र्यं स्थापितवान् अन्यथा कथं शास्त्रनिषिद्धं पावित्र्यं भवेत् तद्विरुद्धमेतत् पुनीहि मामिति लोकसहितत्वेन सुतरां स्वस्यापावित्र्यख्यापनं विरुद्धं भगवान् स्वधर्मान् तत्र स्थापयित्वा तद्धर्मान् स्वयं गृहीत्वा सर्वमेवमाह अन्यथा ब्राह्मणस्य नाशो भवेत् प्रमेयबलेन सन्मार्ग एव नाशितः स्यात् तथा महति राजद्रोहे कृते राजकीयास्तन्नाशयेयुरेव सचेद्राजा तमपराधकर्त्तारं स्वसिंहासने निवेशयेत् तदा बाधकाः सर्वे साधका भूत्वा न पीडां कुर्युः अन्यथा यथा कथञ्चिदपि तन्नाशयेयुरेव अतो भगवानेवं प्रघट्टकेन स्तोत्रं करोति स्वधर्मान् स्थापयितुं तुल्यत्वाभावाय च तद्धर्मान् गृह्णाति मोहिकेषा लीला हीनत्वप्रतिपादिका ज्ञातव्या अतिदैन्यं ख्यापयन् वीर्यविरुद्धमाह मद्गतान् लोकपालांश्च पुनीहीति स्वस्मिन् विद्यमानानां तस्य सम्बन्धाभाव एव पावनं भूरे तत्रापि पादोदकेन पावनं सुतरां कीर्त्तिविरुद्धं तीर्थानां तीर्थकारिणेति गङ्गादीनामप्यनेनैव तीर्थत्वमिति सहेतुकं तस्य पावनकर्तृत्वं निरूपितं लक्ष्मीविरुद्धमाह अद्याहं भगवान् लक्ष्म्या असमेकान्तभाजनमिति असिद्धा भगवति लक्ष्मीराधिदैविकी इयं चाधिभौतिकी सापि नित्या लक्ष्मीस्वरूपेण स्वस्यरूपेण चैतद्विरुद्धमिति ज्ञानविरुद्धमाह वत्स्यत्युरसि मे भूतिरिति नहि क्रियाशक्तिर्ज्ञानपूर्णे तिष्ठति तत्राप्यन्तरङ्गाभूत्वा वत्स्यतीत्याशंसनात् वैराग्यविरोधोऽपि भवत्पादहतांहस इति त्वच्चरणारविन्दसम्बन्धेन स्वस्य पापक्षयकथनं धर्मविरुद्धमपि एवं सर्वधर्मान् तत्र स्थापयित्वा तदीयं स्वस्मिन् गृहीत्वा तथोक्तवान् अनेनैव तस्य प्रायश्चित्तमप्युपदिष्टं यदा कदाचिदपि मच्चरणसेवां करिष्यसि तदा तव पापक्षयो भविष्यतीति ॥ १०—१२ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

विष्णौ तावानपराधः सत्त्वगुणदिदृक्षया कृतः वस्तुतस्तु तत्र विष्णौ शुद्धसत्त्वमेव दृष्टं नतु सत्त्वमपीत्याह—अत इति चतुर्भिः । सह लक्ष्म्येति लक्ष्म्या अपीति तादृशममयेऽपि तादृशविविक्तेऽप्यागन्तरि स्वाज्ञावलोकनसम्भविष्णावपि तस्मिन्मुनौ न कोपगन्धोऽपीति सत्त्वगुणधर्मप्रियत्वमात्रसाभप्रायत्वेन तत्तिरस्कारदर्शनेऽपि नान्तःकोप इति शुद्धसत्त्वधर्मः सतां गतिरिति वैकुण्ठमात्रपार्षदानामपि तादृग्धर्म्यमेव ॥ ९ ॥

त्वया अभिगमनाभ्युत्थानादिना मत्सम्माननाकरणात्त्वेद-

(पाठ० पाठः ( श्रीवत्समिति नामाहि जायतां पादलक्षणः । )

श्रीशुक उवाच ।

एवं ब्रुवाणे वैकुण्ठे भृगुस्तन्मन्द्रया गिरा ।
निर्वृतस्तर्पितस्तूष्णीं भक्त्युत्कण्ठोऽश्रुलोचनः ॥ १३ ॥
पुनश्च सत्रमाव्रज्य मुनीनां ब्रह्मवादिनाम् ।
स्वानुभूतमशेषेण राजन् भृगुरवर्णयत् ॥ १४ ॥
तन्निशम्याथ मुनयो विस्मिता मुक्तसंशयाः ।
भूयांसं श्रद्दधुर्विष्णुं यतः शान्तिर्यतोऽभयम् ॥ १५ ॥
धर्मः साक्षाद्यतो ज्ञानं वैराग्यञ्च तदन्वितम् ।
ऐश्वर्यं चाष्टधा यस्माद्यशश्चात्ममलापहम् ॥ १६ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मासनं न स्वीकरोमीति चेत् सत्यं मन्महापराधः खल्वभूदेव तत्र त्वत्कृपैव मे गतिरित्याह-अजानतामिति ॥ १० ॥

यदि चेमं महापराधमपि क्षान्तवानेवासि तर्हि देहि पादोदकमित्याह-पुनीहीति । तीर्थानां गङ्गादीनामपि तीर्थत्वकारिणेति एतत् प्राप्यैव गङ्गादीनि तीर्थान्यभूवन्नित्यर्थः । अत्र भृगुकृते एतावत्यपराधे सत्यैव सत्वगुणधर्मः प्रत्युत स्वापराधित्वमननेन तत्प्रसादनं यदेतत्तद्गुणसत्वधर्मो ज्ञेयः ॥ ११ ॥

ननु च तुभ्यं त्वत्प्रियायै प्रेमवत्यै लक्ष्म्यै च दुःखं ददानस्य ममाकल्पं नरकेष्वेव वासो भविष्यति यद्यपामरविप्रस्य महापापिनो ममापवित्रपादस्त्वद्वक्षसि लग्न इत्यनुतापजर्जरे सति तस्मिन् भो मुने कृपासिन्धो आवयोस्त्वं परममुत्सवमेव कृतवानसीत्याह—अद्येति ॥ १२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तीर्थानामपि तीर्थकारिणा पवित्रत्वकारिणा ॥ ११—१२ ॥

---

भाषा टीका ।

अनन्तर सत् पुरुषों के गति भगवान् लक्ष्मी सहित उठ कर अपनी शय्यासे नीचे उतर कर भृगु को मस्तक से प्रणाम करते भए ॥ ९ ॥

और बोले कि हे ब्रह्मन् ! धन्य आपका आगमन भया इस आसनपर थोडा क्षण मात्र आप बैठिएगा हे प्रभो आप भए आपको नहि जानने वारे हमारे अपराध को आप क्षमा कीजिएगा ॥ १० ॥

तीर्थन को भी पवित्र कर ने वारे आप के चरणोदक से वैकुण्ठ लोक सहित मोको आप पवित्र कीजिएगा और मेरे आश्रित लोकपालन को पवित्र कीजिएगा ॥ ११ ॥

हे तात ! हे महा मुने ! आप के चरण अत्यन्त कोमल है वज्र के समान कठिन वक्षस्थल के स्पर्श होने से इन मेंपीडा हुई होगी इस प्रकार कह कर निज हस्त से इन विप्रके दोनो चरण को सम्मर्दन करते बोले ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

तस्य मन्द्रया गम्भीरया गिरा निर्वृतस्तूष्णीं बभूवेति शेषः ॥ १३-१४ ॥

विस्मिता अपराधातिरेकेऽपि निर्विकारित्वेन भूयांसं श्रद्दधुः महत्तमं निश्चितवन्तः यतो यस्मिन् ॥ १५ ॥

वैराग्यञ्च चतुर्विधमिति पाठे तच्चातुर्विध्यमेवं द्रष्टव्यम् विषयांस्त्यक्तुमशक्नुवतोपि सम्मानेच्छात्याग आद्यं वैराग्यम् विषयाणां मध्ये लवणादिव्यतिरेकेणापि वृत्तिर्द्वितीयम् तथा वृत्तावपि मनसि रागशैथिल्येन बाह्येन्द्रियैरेव विषयसेवनं तृतीयम् तत्राप्यौदासीन्यं चतुर्थम् यथाऽऽहुः—

'वैराग्यमाद्यं यतमानसंज्ञं-
कश्चिद्विरागो व्यतिरेकसंज्ञः ॥
एकेन्द्रियाख्यं हृदि रागसौक्ष्म्यं—
तस्याप्यभावस्तु वशीकृताख्यम् ॥

इति ॥ १६—१८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

वैकुण्ठे श्रीविकुण्ठानन्दने निर्वृतः स्वस्थचित्तः तर्पितः प्रीणितः अतो भक्त्या सादरप्रेम्णा बाष्पहृद्धकण्ठत्वात्तदुत्सुकण्ठस्तदीयस्वरो यस्य सः तादृशः सन्नश्रुलोचनो बभूव ॥ १३ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

मुनीनां ब्रह्मवादिनां दीर्घसत्र एव मननार्थं वेदाभ्यासपराणां नतु निर्णीतवेदार्थानामित्यर्थः ॥ १४ ॥

विष्णुं स्वमाहात्म्येन विश्वव्यापकं भूयांसे त्रिष्वप्यधीशेष्वतिशयेन महान्तं नतु महन्मात्रं तच्च युक्तमेवेति तेषां वाक्यमप्यनुवदति यत इत्यादिना तत्तीर्थसाधनमित्यन्तेन । यतो हेतोरन्येषामपि भृगोरिव शान्तिरक्षोभो भवति किमुत स्वस्यैव तस्येत्यर्थः । स्वल्पे प्रदीपादावेव क्षोभो दृश्यते नतु महति सूर्य्यादाविति तेन महत्तमत्वमनुमितमिति भावः अतः सापराधतयाप्युपसन्नानां यतो भृगोरिव भयाभावोपि भवति ॥ १५ ॥

तदेवं महत्तमत्वस्य चिन्हमुक्तं हेतुमपि तथैव कैमुत्येन दर्शयंस्ततोऽप्राकृतमहासम्पत्तिमपि—दर्शयति धर्म इति त्रिभिः । साक्षाद्धर्मो भगवद्धर्मे यतः साक्षात्पदस्य सर्वैरप्यन्वयः तेन साक्षात् ज्ञाने श्रीभगवदनुभवः तदन्वितं त्रिक एककालः भक्तिर्विरक्तिर्भगवत्प्रबोधः इत्येकादशोक्तरीत्या सप्रेम तदनुभवान्वितमेव नतु शुष्कं चतुर्विधमिति पाठस्तद्व्याख्यानः तत्र यतमानलक्षणमिति यतः संयता मानः सम्मानमिच्छा यत्रेत्यर्थः । कश्चिदिति लवणादौ विरागो नाम व्यतिरेकसंज्ञं वैराग्यमित्यन्वयः एकेति । एकानि एकमुखीकृतानि इन्द्रियाणि यस्मिन् तत् रागसौक्ष्म्यं रागस्याल्पतयावसानमिति त्रयं यद्वा भक्त्येकरागतश्चतुर्वर्गत्यागेन चतुर्विधं ततश्चाष्टधाणिमादिभेदैरैश्वर्य्यमप्राकृतं तदप्रार्थितमपीति भावः । यथा तृतीये भक्तिरनिच्छतो मे गतिमगर्वीं प्रयुङ्क्ते इत्युक्त्वा श्रीकपिलदेवोऽवाह—अथो विभूतिं मम मायया चितामैश्वर्यमष्टाङ्गमनुप्रवृत्तं । श्रियं भागवतीं वा स्पृहयन्ति भद्रां परस्य मे तेऽश्नुवते हि लोके इति यत इति मुहुर्निर्देशः शान्त्यादीनां तदेकनिष्ठतां बोधयति यस्माच्चात्मनः सर्वेषां मनसः मलं चाञ्चल्यादिदोषं श्रवणादिना अपहन्ति दूरादेव नाशयतीति तथा तत् ॥ १६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

विकृतत्वात् ब्रह्मादयः प्रकृतिवश्याः परमपुरुषस्त्वप्रकृतिवश्यः अपितु परः ततः इन्द्रस्ततो हेयप्रत्यनीकः अतः प्रकृतिवश्येभ्यश्चेतनेभ्यः पर इति निश्चितवन्त इत्यर्थः ॥ १५ ॥

तदेव प्रपञ्चयति धर्मः साक्षादिति मायया प्रकृत्या गुणाः सत्वादयः विषमावस्थिताः ॥ १६—२५ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमिति । तस्य भवतो मन्द्रया गम्भीरया आशयगर्भया गिरा निर्वृतः सुखितः तर्पितश्च भक्त्युत्कण्ठया भक्त्युद्रेकेणाश्रूणि लोचनयोर्यस्य तूष्णीमास ॥ १३ ॥

पुनरिति । आब्रज्यागत्य हे राजन् ! येनात्मनाऽनुभूतमशेषेणावर्णयत् ॥ १४ ॥

तदिति तद्भृगुणोपवर्णितं निशम्य मुक्तसंशयाः अत एव निर्वृताः सुखिताः विष्णुमेव भूयांसं सर्वोत्कृष्टं मद्वपुर्मेनिश्चितवन्तः परत्वोपयुक्तगुणाविष्कारपूर्वकनिश्चयप्रकारमेवाह—यतः शान्तिरित्यादिना यच्छब्दानां त्रिविधाकृतयस्तस्येत्युपरिष्टात्सम्बन्धः यतः यस्मिन् शान्तिः यतः सेव्यमानादभयं मुक्तिः यद्वा यतो यस्मादुपासनादेव शान्तिरिति एवमुत्तरत्रापि ॥ १५ ॥

धर्मोत्र ब्रह्मण्यताज्ञानं सर्वविषयकं वैराग्यं विषयानभिलाषः तदन्वितं शान्त्यादिभिः सहितमष्टधाणिमादिभेदेनाष्टविधमैश्वर्यं चात्मनः भजतः पुंसः मलमपहन्तीति तथा तद्यशो यस्मिन्नित्यर्थः ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रिया सहितवत्समुरः श्रीवत्सं उरो वत्सश्च वक्षश्च भुजान्तरमुदीर्यत इति उत्पलमालाभिधानं पादलक्षणः पादाङ्कः श्रीवत्समिति नाम जायतामित्यन्वयः ॥ १३–१४ ॥

भूयांसमत्युत्तमं यतो यस्मादूरः शान्तिर्मोक्षो मङ्गलं वा पुंस इति शेषः ॥ १५ ॥

एकान्तभक्तानां धर्मादिष्वनपेक्षालक्षणं वैराग्यमात्मनो मनसो मलनाशनम् ॥ १६–१७ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

यद्यपि पूर्वं श्रीविष्णौ विनयाद्या एव गुणा उपलक्षितास्तथापि स खलु गुणः सर्वं पूरयितुमेव स्पर्शादिविषयराहित्यात् परम पूर्णतया सम्भवतीति तेनान्येऽपि तस्य गुणा लक्षिता इत्याह धर्म इति ॥ १६—५४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवममानित्वं मानदत्वञ्च स्वस्य प्रकटीकुर्वता भगवता सन्मार्गः समर्थितः ततो यज्जातं तदाह—एवं ब्रुवाण इति । ननु परीक्षार्थमागत इति तेन भगवति हीनभावो न मतः किन्तु गुणत्वेन कायवाङ्मनश्चरित्रं स्वीकृतवान् अत एव सर्वभावेन सन्तुष्ट इत्याह आर्द्रो तन्मन्द्रया गिरा निर्वृतः भगवता च तर्पितः स्वधर्मारोपणेन अतः सनकादिवत् प्रत्युत्तरसन्देहादिकं न कृतवान् किन्तु तूष्णीमास किञ्च भगवानद्भुतकर्मा भक्तिविरुद्धकर्मणा तस्मै भक्तिं दत्तवानित्याह भक्त्युत्कण्ठो ऽश्रुलोचन इति । भक्त्या प्रेमलक्षणया भगवति परमोत्कण्ठावान् जातः ॥ १३ ॥

अहो भगवच्चरित्रमित्याश्चर्येणाश्रुलोचनोऽपि भगवन्माहात्म्यं ज्ञात्वा निर्णयकथनार्थमागत इत्याह पुनः स्वसत्रमागत्येति मुनीनां ब्रह्मवादिनामिति ज्ञानक्रियावैशिष्ट्यं तेन विश्वासो ज्ञानं च भविष्यतीति अतो निःशङ्कं अशेषप्रकारेण स्वानुभूतमवर्णयत् उपसंहारे भृगुपदं तस्य वैष्णवत्वं ख्यापयति ततोऽपि किम्पुनः सन्देहस्ततो न चेति शङ्काप्युदासपूर्वकं

मुनीनां न्यस्तदण्डानां शान्तानां समचेतसाम् ।
अकिञ्चनानां साधूनां यमाहुः परमां गतिम् ॥ १७ ॥
सत्त्वं यस्य प्रिया मूर्तिर्ब्राह्मणास्त्विष्टदेवताः ।
भजन्त्यनाशिषः शान्ता यं वा निपुणबुद्धयः ॥ १८ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

निस्सन्देहं ख्यापयितुमाह तन्निशम्येति आदौ भगवच्चरित्रश्रवणाद्विस्मिताः अल्पोत्कर्षज्ञानार्थं प्रवृत्ताः परमोत्कर्षं ज्ञातवन्त इति ततो मुक्तसंशयाः भगवानेव महानिति निश्चयात् एवमपि सति भूयांसो विष्णुमेव महानिति पदार्थे श्रद्धां कृतवन्तः येतु पुनः पितृत्वेन अन्यत्रापि श्रद्धायुक्तास्तेषामन्याभिनिविष्टानां प्रमाणमपि बोधयितुमसमर्थमिति ते स्वसेव्यसदृशमेव भगवन्तं ज्ञातवन्त इति तद्व्युदासार्थं भूयांस इत्युक्तं सन्मार्गे भगवानेवोत्कृष्टो मन्तव्य इति ख्यापयितुं सन्मार्गोपयोगिनः सर्वानेव गुणान् भगवत्याह यतः शान्तिरिति तत्तीर्थसाधनमिश्रन्तेन आदौ सन्मार्गे गुणक्षोभनिवृत्तिरपेक्ष्यते ततो भगवद्धर्माः मार्गरक्षाचेति तत्रापि षड्गुणा भगवांश्च वक्तव्यः एवं षोडशकलो भगवान् मार्गे निरूक्तो भविष्यति शान्तिरान्तरो धर्मः इन्द्रियाणां रजोगुणक्षोभाभावः अनेन भवति यतः अभयं भयाभावः सत्त्वक्षोभनिवृत्तिः धर्मस्तामसाभावः ततो भगवद्धर्माः यस्मात् सर्वेषां प्राणिनां साक्षात् ज्ञानं निरुपाधिकं वैराग्यञ्च तद्विधमेव दयान्वितमित्युभयत्र विशेषणं ज्ञाने वैराग्येच प्राणिनां पीडा सम्भवतीति तदर्थमेतदुक्तं दयाभावार्थं हि भगवानर्जुनमुपदिदेश वैराग्ये च स्वर्कीयानां पीडा लोकसिद्धा तदन्वितमिति क्वचित्पाठः तदा ज्ञानसहितं वैराग्यं नतु मर्कटवैराग्यमितिअर्थः यतो भगवतः सकाशात् अष्टधा ऐश्वर्यं भवति अणिमादिप्रभेदभिन्न यशश्च भवति आत्मान्तःकरणस्य मलं दूरीकरोतीति यशसो विशेषणम् अनेनासत्प्रकारेण नष्टविद्यादिभ्यो दानेन यद्यशस्तद्व्यावृत्यर्थं श्रीः वीर्यञ्च प्रकृते तथा नोपयुज्यन इति दयायां वीर्यस्यान्तर्भावं अष्टधा ऐश्वर्ये श्रियाश्च मन्यते ॥ १४ —१६ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मन्द्रया गम्भीरया तूष्णीमित्यश्रुरुद्धकण्ठत्वेन स्तुत्यसामर्थ्यात् अत्र भगवल्लीलाविनोदसूत्रधारनर्त्तितस्य भृगोरेतत्कर्मणा नापराधो वाच्य इति प्राञ्चः ॥ १३—१५ ॥

साक्षाद्धर्मः श्रवणकीर्त्तनादिलक्षणो यतः साक्षात्पदस्य सर्वत्रान्वयात् ज्ञानं भगवदनुभवः तदान्वितामित्यस्य ज्ञानेप्यन्वयात् भक्तिः परेशानुभवो विरक्तिरिति त्रिकस्य यौगपद्यमेकादशोक्तमित्यत्रापि द्रष्टव्यं चतुर्विधमिति पाठे चतुर्वर्गोपेक्षालक्षणमेव चतुर्विधवैराग्यं नतु शुष्कं अष्टैश्वर्य्यमिति भक्तैरननुसंहितं फलं यदुक्तं श्रीकपिलदेवेन अथो विभूतिं मम माययाचितामैश्वर्य्यमष्टाङ्गमनुप्रवृत्तं । श्रियं भागवतीं वास्पृहयन्ति भद्रां परस्यमे तेऽश्नुवते हि लोके । इति यशश्चश्रोतुर्जनस्यात्मनो मनसो मलं मत्सरमपहन्तीति तत् ॥ १६ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तस्य विष्णोः मन्द्रया गम्भीरया गिरा निर्वृतः सुखितः तमेव सर्वश्रेष्ठमवधार्य लब्धपरमानन्द इत्यर्थः लब्धमनोरथत्वेन तर्षितश्च भक्त्युत्कण्ठः अश्रुलोचनः सन् तूष्णीं बभूवेति शेषः ॥ १३…१४ ॥

भूयांसं महत्तमं परं ब्रह्म ब्रह्मशिवयोरपि जनकं तथोक्तं विष्णुपुराणे ब्रह्मणैव——

यस्य प्रसादादहमच्युतस्य भूतप्रजासृष्टिकरोन्तकारी ।
क्रोधाच्च रुद्रः स्थितिहेतुभूतो यस्माच्च मध्ये पुरुषः परस्तात् ॥

इति अद्भुः ॥ १५ ॥

यतः श्रीकृष्णात् सेव्यात्साक्षाद्धर्मः तद्भक्तिः ज्ञानं तत्स्वरूपादिविषयकं तदितरस्मिन् च वैराग्यं तदन्वितं तद्भावापत्तिलक्षणं मोक्षश्च अष्टधा अणिमादिकम् ऐश्वर्य्यञ्च आत्ममलापहं यशश्च भवति यच्छब्दानां त्रिविधाकृतयस्तस्येत्यनेन सम्बन्धः ॥ १६ ॥

---

भाषा टीका ।

हे भगवन् ! इस काल मे लक्ष्मी का एकान्त निवास मे होगया क्योंकि आप के चरणस्पर्श होनेसे मेरे सब पाप नष्ट हो गए इसी से मेरे वक्षस्थल में लक्ष्मी नित्य निवास करैगी ॥ १३ ॥

श्रीशुक उवाच ।

इस प्रकार भगवान् के कहने उन की गम्भीर वाणी से सुखी और तृप्त होकर प्रेम से भृगु का कण्ठ रुक गया नेत्रों आंशु वहने लगे इस दशा को प्राप्त होकर भृगुजी चुपचाप होगए ॥ १४ ॥

हे राजन् वेद वादी मुनीन के सत्र में पुनः आव कर तीनो देवन का जो वृत्तान्त आप ने देखा उस को भृगु महर्षी वर्णन करते भए ॥ १५ ॥

भृगु के वर्णित वृत्तान्त को श्रवण कर आश्चर्य युत सन्देह निवृत्त होकर मुनिजन श्रीविष्णुहि सब से अधिक हैं इस विषय में विश्वास करते भए क्योंकि जिस में स्वाभाविक शान्ति आदि गुण और जिस की कृपासे जीव को अभय पद प्राप्त होता है वोहि अधिक है ॥ १६ ॥

त्रिविधाकृतयस्तस्य राक्षसा असुराः सुराः।
गुणिन्या मायया सृष्टाः सत्त्वं तत्तीर्थसाधनम् ॥ १९ ॥

श्रीशुक उवाच।

एवं सारस्वता विप्रा नृणां संशयनुत्तये।
पुरुषस्य पदाम्भोजसेवया तद्गतिं गताः ॥ २० ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तस्य भगवत एव यद्यपि त्रिविधा आकृतयः तथापि सत्त्वमेव तीर्थसाधनं पुरुषार्थहेतुः ॥ १९ ॥

इत्थं निश्चित्य सरस्वतीतीरवासिनो विप्रा हरिसेवया मुक्तिं प्रापुरित्यर्थः ॥ २० ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तदेवमैश्वर्यप्रदत्वेऽप्यनुपद्रवहेतुत्वान्मुनीनामित्यादि प्रथमतो मननशीलानां ततो भगवच्चिन्तनार्थं परित्यक्तमहादोषात्मक-भूतद्रोहाणां ततो भगवच्चिन्तया यदृच्छालाभतुष्टानां ततो भगवदेकस्पृहत्वेनान्यत्र स्वर्गापवर्गनरकेषु तुल्यदर्शिनां अत एव भगवन्तं विनान्यत्र ममताशून्यानां अत एव प्रोज्झित कैतवानामिति क्रमेणार्थः ॥ १७ ॥

एवमप्राकृतशुद्धसत्त्वात्मकवैभवत्वेऽपि प्राकृतसत्त्वे यस्यानुग्रहदृष्टिरिति तत्रैव गुणविशेषं दर्शयति मूर्त्तिरिव मूर्त्तिरधिष्ठानं प्रिया कृपादृष्टियोग्या तन्मयेष्वपि विशेषतो ब्राह्मणा इष्टदेवतावदाराध्यमानाः तादृशगुणाकृष्टत्वादेव यं वा यत्र निपुणबुद्धयो भजन्ति यद्यप्यनाशिषः शान्ताः सर्वत्र रागद्वेषरहिता इत्यर्थः ॥ १८ ॥

सत्त्वं प्रिया मूर्त्तिरित्युक्तं तत्रान्या वा का मूर्त्तय इत्यपेक्षायां विविच्य त्रिविधा आह—त्रीति। तत्र राक्षसास्तामस्यः असुरा राजस्यः सुराः सात्त्विकाः तत्तदुपलक्षणत्वेनान्येऽपि तत्तद्रूपा ज्ञेयाः ननु मायानासक्तस्य तस्य मायिकसत्त्वगुणे कथं रतिस्तत्राह—सत्त्वं खलु तस्य भगवतो यत्तीर्थं मागमस्तद्भक्तिप्रतिपादकशास्त्रं तस्य साधनमवगमद्वारभूतं भवति परम्परया भक्तिसम्बन्धादेवेति भावः ॥ १९ ॥

तदेवं तेषां निर्णयमनूद्य स्वयमेवाहेत्याह—श्रीशुक उवाचेति। इत्थं निश्चित्येति तैर्व्याख्यातं तत्र नृणां संशयनुत्तये निश्चित्येति योज्यं तदेवं शास्त्रद्वारा तु ते स्वयं निश्चितवन्त एवेति गम्यते तद्गतिं गताः तमुपलब्धवन्तः यद्वा तथान्येषां नृणां संशयनाशाय जातमित्यर्थः ॥ २० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

मुनीनामिति। न्यस्तदण्डानां भूतद्रोहरहितानां समचेतसां सर्वात्मब्रह्मबुद्धीनामकिञ्चनानां प्रयोजनान्तररहितानां परोपकारशीलानां यं परमां गतिं प्राप्यमाहुः ॥ १७ ॥

सत्त्वमिति। सत्त्वं रजस्तमोभ्यामननुविद्धं शुद्धसत्त्वं यस्य प्रिया मूर्त्तिः शरीरं यस्य चेष्टदेवताः ब्राह्मणा अनाशिषः निष्कामाः शान्ताः जितेन्द्रियाः निपुणा बुद्धिर्येषां ते यं भजन्ति ॥ १८ ॥

त्रिविधेति। तस्यैवंभूतस्य निःसमाभ्यधिकस्य गुणिन्या सत्त्वादित्रिगुणमय्या मायया सृष्टा राक्षसा असुराः सुराश्चेति त्रिविधा अप्याकृतयः तस्यैव शरीरभूता इत्यर्थः। तत्र देवाः सत्त्वप्रचुराः असुरास्तु रजःप्रचुराः राक्षसास्तमःप्रचुराः देवादिषु त्रिष्वप्यासुरमानुषदैवसम्पत्तिभिरभिजाताः सन्त्येवेति भगवद्गीतासूक्तं एवञ्च सर्वेऽप्येते नोपास्या इति भावः तथा चोक्तं शौनकेन—

"आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः।
प्राणिनः कर्मजनितसंसारवशवर्त्तिनः ॥
यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः।
अविद्यान्तर्गताः सर्वे ते हि संसारगोचराः।
पश्चादुद्भूतबोधाश्च ध्यानेनैवोपकारकाः।
नैसर्गिको न वै बोधस्तेषामप्यन्यतो यतः ॥
तस्मात्तदमलं ब्रह्म निसर्गादेवबोधवत्"।

इति एतदेवाह—सत्त्वं तत्तीर्थसाधनमिति यत्सत्त्वं शुद्धसत्त्वमयं भगवच्छरीरं तदेव तीर्थसाधनं उपास्यमानं सञ्चिदशेषप्रकृतिसम्बन्धक्षपणद्वारा आत्मशुद्धिसाधनमित्यर्थः ॥ १९ ॥

इत्थं इति सारस्वताः सरस्वतीतीरवासिनो विप्राः नृणां संशयनिवृत्तये इत्थं निश्चित्य परमपुरुषस्य पदाम्भोजसेवया तद्गतिं मुक्तिं प्राप्ताः ॥ २० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यस्य हरेः सत्त्वगुणः प्रियामूर्त्तिः प्रेष्ठप्रतिमा यस्य ब्राह्मणाः अनाशिषो निष्कामाः ॥ १८ ॥

तत्र तेषु गुणेषु सत्त्वं नाम गुणः आर्यं सर्वपूज्यं श्रीहरिं दर्शयतीत्यर्थः ॥ १९—२२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं भगवतः सकाशात् प्राणिनामेवं भवतीति निरूप्य

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

मार्गानुसारिणि भगवति मार्गसिद्ध्यर्थं गुणानाह—मुनीनामिति त्रिभिः । यस्तु भगवान् षड्गुणयुक्तानामपि परमा गतिः फलरूप इत्यर्थः आहुरिति प्रमाणं परमत्वं यतो नावर्त्तते यस्माद्ग्रे गन्तव्यं च नास्ति षड्गुणान् मुनीनां वर्णयति तेषामेव भगवान् फलमिति ज्ञानार्थं मननं ज्ञानसिद्धिः दण्डन्यासो वैराग्यं शान्तिः कीर्त्तिः समचित्तता श्रीः अकिञ्चनानामिति वीर्यं सम्भवति अपेक्षायाश्च तदग्रहणात् साधूनामिति सदाचाराणां अनेनैश्वर्यं निरूपितम् ॥ १७ ॥

लौकिकसामग्र्यावैदिकत्वसम्पादनात् एवं फलरूपता एको गुणः सन्मार्गे साधनोत्कर्षमाह सत्वं यस्य प्रियामूर्त्तिरिति सत्त्वगुणएव भगवन्निरूपकः सत्वोत्पादका अपि तत्र सुलभा इत्याह ब्राह्मणास्त्विष्टदेवता इति यस्य भगवतः इष्टदेवता ब्राह्मणाः अनेन प्रमाणप्रतिबन्धकता निवारिता किञ्च यस्मिन् मार्गे गुणत्रययुक्ता भवन्ति अनाशिषः फलाकाङ्क्षारहिताः शान्ताः साधनदोषरहिताः निपुणबुद्धयः विवेकज्ञानयुक्ता इति साध्योत्कर्षः वेत्यनादरे भगवद्भजने निपुणा बुद्धिर्नात्यन्तं प्रयोजिकेति ॥ १८ ॥

एवं गुणचतुष्टयं निरूपितं द्वयमाह त्रिविधाकृतय इति भगवतः आकृतयो रूपाणि त्रिविधानि तानि गणयति राक्षसास्तामसाः असुरा राजसाः सात्विकाः सुराः अनेन सर्वरूपो भगवानिति सर्वत्र भगवद्बुद्धिरेको गुणः तत्रापि सत्वं तीर्थानां पवित्रहेतूनां साधनमिति इदं वैराग्यस्थानीयं ततः पूर्वं भजनं श्रीः ब्राह्मणाः कीर्त्तिः सत्वं बलं गतिरैश्वर्यमिति यस्मादिति भगवानिति धर्मी निर्दिष्टः तस्मात् कृष्ण एव महान् सर्वप्रकारेणेति निरूपितम् ॥ १९ ॥

एतत्प्रासङ्गिकमुक्त्वा निर्णयकर्तॄणां किं जातमित्याकाङ्क्षायामाह इत्थं सारस्वता विप्रा इति । सरस्वतीतीरस्था मुनयः प्रमाणोत्कर्षमापन्नाः वाक्यमात्रेण नृणां संशयो न गच्छतीति संशयनिवृत्त्यर्थं स्वयं भजनं कृत्वा ततस्तयैव सेवया गन्तु योग्यं भगवन्तं गताः—

भक्त्यैवतुष्टिमभ्येति विष्णुर्नान्येन केनचित् ।
स एव मुक्तिदाता च भक्तिस्तत्रैवकारणम् ॥ इति

वाक्यात् ॥ २० ॥

---

## श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

मुनीनामिति । अत्र मुनिशान्तसाधव एकैकविशेषणयुक्ता मुमुक्षुमुक्तभक्ता ज्ञेयाः ॥ १७ ॥

तस्य त्रिगुणातीतत्वेपि सत्वं प्रिया मूर्त्तिः सात्विकलोकाः प्रिया इत्यर्थः । तत्रापि ब्राह्मणाः प्रियतराः इष्टदेवतुल्यत्वेनादरणीयाः यस्मा यमेव ये भजन्तीत्यर्थः ॥ १८ ॥

ननु निर्गुणस्य तस्य गुणे कथं प्रीतिः सम्भवेत्तत्र तस्यौदासीन्यमवोचितं तत्राह त्रिविधा यद्यपि तस्यैव सम्यक्तया कृतयः सृज्याः तथापि सत्वं तीर्थसाधनं पुरुषार्थहेतुरिति श्रीस्वामिचरणाः जगत्पालकस्य कृपालोस्तस्य जीवहितदृष्ट्यैव सत्वं प्रियवद्भासमानत्वादेव प्रियं नतु वस्तुत इति गुणेष्वौदासीन्यमेव ॥ १९ ॥

संशयनुत्तये संशयापनोदनाय प्रवृत्ताः ॥ २० ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

गम्यते अनयेति करणव्युत्पत्त्या गम्यते प्राप्यते इति कर्मव्युत्पत्त्या यं गतिमुपायोपेयमाहुरित्यर्थः ॥ १७ ॥

सत्वं यस्य प्रिया मूर्तिः यत्र सत्वगुणस्तत्र यस्योपलब्धिरित्यर्थः ॥ १८ ॥

यस्य तत्तदन्तर्यामिणो यद्यपि राक्षसाः तामसाः असुरा राजसाः सुराः सात्विकाः इति त्रिविधा आकृतयः शरीराणि तथापि सत्वं सात्विकी आकृतिः तस्य विष्णोरुपासनारूपं यत्तीर्थं तत्साधनतदुपाय इत्यर्थः ॥ १९ ॥

सारस्वताः विप्राः एवं नृणामुपासकानां संशयनुत्तये त्रिषु देवेषु कः महानिति सन्देहनिवृत्तये बभूवुरित्यर्थः । न केवलं परसंशयनिवृत्त्यर्थमेव ते बभूवुरपितु पुरुषस्य पुरुषोत्तमस्य पदाम्भोजसेवया तद्गतिं तस्य पदं गताः प्राप्ताः ॥ २० ॥

---

## भाषा टीका ।

जिसते धर्म प्रवृत्त होता है जिसते साक्षात्परमात्म ज्ञान तथा ज्ञान युत वैराग्य होता है जिसते अणिमा महिमा आदि आठ प्रकार का ऐश्वर्य मिलता भक्त जनो के मनके मल को नाश करने वारा जिस का पवित्र यश है ॥ १७ ॥

प्राणियों के द्रोह को त्याग करने वारे शान्ति युत वैराग्य सम्पन्न धर्म शील मुनिजनो के जिस विष्णु की परमगति कहते हैं ॥ १८ ॥

जिस विष्णु की अप्रा कृत शुद्ध सत्व मय प्रिय मूर्ति है जिस के ब्राह्मण इष्ट देववत् पूज्य हैं निष्काम शान्ति युत निपुण बुद्धि मन्त जिस का भजन करते हैं ॥ १९ ॥

यद्यपि भगवान्की त्रिगुण माया से उत्पन्न राक्षस असुर सुर ए तीन प्रकार की उसी की मूर्ति हैं तथापि शुद्ध सत्व मयी मूर्त्तिहि मोक्षका साधन है ॥ २० ॥

सूत उवाच।

इत्येतन्मुनितनयास्यपद्मगन्धपीयूषं भवभयभित्परस्य पुंसः॥
सुश्लोक्यं श्रवणपुटैः पिबत्यभीक्ष्णं पान्थोऽध्वभ्रमणपरिश्रमं जहाति॥२१॥

श्रीशुक उवाच।

एकदा द्वारवत्यां तु विप्रपत्न्याः कुमारकः।
जातमात्रो भुवं स्पृष्ट्वा ममार किल भारत॥२२॥
विप्रो गृहीत्वा मृतकं राजद्वार्युपधाय सः।
इदं प्रोवाच विलपन्नातुरो दीनमानसः॥२३॥
ब्रह्मद्विषः शठधियो लुब्धस्य विषयात्मनः।
क्षत्रबन्धोः कर्मदोषात्पञ्चत्वं मे गतोऽर्भकः॥२४॥

श्रीधरस्वामिकृतभावार्थदीपिका।

व्यासनन्दनस्य मुखपङ्कजाद्युद्गतं गन्धयुक्तपीयूषतुल्यं हरेः प्रशस्तं यशो यः संसारी सेवते स मुक्तो भवतीति॥२१॥

उक्तलक्षणो भगवान् कृष्ण एवेति दर्शयितुमाख्यानान्तरमाह—एकदेति॥२२—२५॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तदेतच्छास्त्रविदामपि महासंशयापनोदनं श्रीगुरुचरणोपदेशं परमसन्तुष्टः श्लाघते तेनान्यानप्यतीव भक्तापयति इतीति पूर्वप्रकारक्रमेणतत्पूर्वोक्तं मुनितनयेति साक्षादुभयनामाग्रहणं भक्त्युद्रेकात् तदास्यपद्मस्य गन्धः सौरभ्यमिवानुभवनीय आमोदविशेषो यत्र तादृशं पीयूषतुल्यञ्च तदेतत्स्वतः पुरुषार्थत्वं तच आनुषङ्गिकतया जरामरणाद्यात्मकभवभयच्छेदकञ्च सुश्लोक्यमिति समृद्ध्यर्थेऽव्ययीभावः सुशोभनः श्लोकः कीर्त्तिर्यत्र तदेतच्चरितं वा श्रवणपुटैरिति बहुत्वं तच्छ्रवणाय बहुलीकृतत्वादिव पान्थः संसारपथिकः अध्वपरिश्रमं जहाति तदानन्देन प्राचीनदुःखविस्मृतेः ततःपरं भ्रमणाभावाच्चेति तदेवं श्रीभागवतेन श्रीविष्णोरेव सर्वोत्कर्षे स्पष्टे शास्त्रान्तरेषु श्रीविष्णुशिवयोर्भेदमनने दोषो यच्छ्रूयते तदनैकान्तिवैष्णवशास्त्रत्वादनैकान्तिवैष्णवपरमेव तद्विपरीतं हि श्रूयते वैष्णवशास्त्रे यथा पाद्मादौ—

यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः।
समत्वेनैव वीक्षेत स पाषण्डी भवेद्ध्रुवम्॥

इत्यादौ तथाच विष्णुधर्मोत्तरान्ते लिङ्गस्फोटननृसिंहोपाख्यानं विष्वक्सेननामा विप्रः कश्चिदेकान्तविष्णुभक्त आसीत् तस्य पृथिवीं भ्रमतो दैवात्केनचिद्ग्रामाध्यक्षपुत्रेणमिलनमभूत् तयोः सङ्कथाचेयं—

देवकर्मण्यशक्तिर्मे तात पूजय शङ्करम्।
देवतायतनं गत्वा यत्र तात प्रतिष्ठितम्॥
लिङ्गमस्ति सुरेशस्य महादेवस्य निर्मलम्।
एवमुक्तः प्रत्युवाच वयमेकान्तिनः श्रुताः॥
चतुरात्मा हरिः पूज्यः प्रादुर्भावगतोऽथवा।
पूजयथामश्च नैवान्यं तस्मात्त्वं गच्छ माचिरम्॥

इत्यादिका ततो ग्रामाध्यक्षपुत्रे तस्य विष्वक्सेनस्य शिरश्छेत्तुमुद्यते तद्भयेन मृत्युमनभीप्सन् स इदं विचारयामास भवतु तत्रैव गच्छाम इति ततो लिङ्गसमीपं गत्वा तस्मिन्नधिष्ठाने नृसिंहाय नमः इति पुष्पाञ्जलौ विक्षिप्ते तच्छ्रुत्वा पुनः शिरश्छेत्तुमुद्यतस्य तल्लिङ्गं स्फोटयित्वा निर्गतेन श्रीनृसिंहेन सपरिवारस्य ग्रामाध्यक्षपुत्रस्य शिरांसि छिन्नानीति तदेतदुक्तं स्कान्दे श्रीशिवेन "शिवशास्त्रेषु तद्ग्राह्यं भगवच्छास्त्रयोगि यत्" इति श्रीहरिवंशेऽपि—

हरिरेव सदा ध्येयो भवद्भिः सत्त्वसंश्रयैः।
विष्णुमन्त्रं सदा विप्राः पठध्वं ध्यात केशवम्॥

इति यत्तु श्रीभागवतमेव—

त्रयाणामेकभावानां यो न पश्यति वै भिदाम्।
सर्वभूतात्मनां ब्रह्मन् स शान्तिमधिगच्छति॥

इत्यादि तत् खलु श्रीविष्णोः सकाशात् अन्यास्मानन्यापेक्षयैव तदुक्तं श्रीब्रह्मणा—

सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः।
विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक्॥ इति

अत्रैवोक्तं श्रीमत्सङ्कर्षणेन ब्रह्मा भवोऽहमपि यस्य कलाः कलायाः इति यत्पादनिःसृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन शिवः शिवोऽभूत् इति एतदभिप्रेत्यैवोक्तं पाद्मेऽपि शिवस्य श्रीविष्णोर्य इह गुणनामादि सकलं धिया भिन्नं पश्येत्स खलु हरिनामाहितकरः इति अत्र श्रीविष्णुनेति तृतीयाया अनिर्देशादत्रैव श्रीपद्मनाभ श्रीमतः सर्वशक्ति-

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

युनाद्विष्णोः सर्वव्यापकत्वेन तस्मात्तस्माद्यः शिवस्य गुणता माहिमकलं धिया भिन्नं स्वतन्त्रं पश्येदित्यर्थः । अतो मार्कण्डेयं प्रति श्रीशिववाक्यं चेदमेवमेव—

न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते ।
नात्मनश्च (जन) परस्यापि तद्युष्मान् वयमीमहि ॥

इति तत्तेऽश्योऽपि सर्वसमदर्शिभ्यो वयं युष्मानेव ईमहि प्रियत्वेन जानीम इति—

अथ भागवता यूयं प्रियाः स्थ भगवान् यथा ।
न मद्भागवतानाञ्च प्रेयानन्योऽस्ति कर्हिचित् ॥

इति चतुर्थे तस्यैवोक्तेः अत एवापि तत्पूर्वं—

नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत ।
भक्तिं परां भगवति लब्धवान् पुरुषेऽव्यये ॥ इति

शिवोक्तमहिमभक्त्या भगवति समाधिस्थस्य तस्य देव्यै महिमदर्शनार्थं हृदि छलेन स्वयं शिवे प्रविष्टे विरतिर्जाता यथोक्तं किमिदं कुत एवेति समाधेर्विरतोमुनिरिति तथान्यथा न सम्भवतीति अतः श्रीविष्णावेव सर्वोत्कर्षे सिद्धे श्रीविष्वक्सेनमार्कण्डेयादेस्तदीयत्वेनैव वैष्णवैः स आदरणीयः वैष्णवानां यथा शम्भुरिति द्वादशान्तवचनात्परमवैष्णवत्वेनतु सुतरां बत एवोक्तं आदिवाराहे—

जन्मान्तरसहस्रेण समाराध्य वृषध्वजम् ।
वैष्णवत्वं लभेद्धीमान् सर्वपापक्षये सति ॥

इति निन्दादिकन्तु सर्वथा परिहर्त्तव्यम्—

यो मां समर्चयेन्नित्यमेकान्तं भावमाश्रितः ।
विनिन्दन् देवमीशानं स याति नरकं ध्रुवम् ॥

इत्यादिश्रीभगवद्वाक्यादिभ्यः अत्र श्रुतयः यं कामयेतमुग्रं कृणोमि तं ब्रह्माणं तं सुमेधां मम योनिरप्स्वन्तरितिमहाशक्तिवचने मध्ये वामनमासीनं विश्वेदेवा उपासत इति तैत्तिरीयोपनिषदि रुद्रजापकशतमेकमथर्वाङ्गिरसशिखाध्यापकेन तत्समं अथर्वाङ्गिरसशिखाध्यापकशतमेकं मन्त्रराजाध्यापकेन तत्सममिति श्रीनृसिंहतापन्यां तदेतच्छ्रीभागवतसन्दर्भपरमात्मसन्दर्भभक्तिसन्दर्भेषु विस्तृतमस्तीत्यलमतिविस्तरेण ॥ २१ ॥

इत्थमुक्तः श्रीविष्णोरुत्कर्षः स्वयं भगवति श्रीकृष्ण एव पर्यवस्यतीत्याशयेन साक्षात्तन्माहात्म्यमेव विशेषतो निरूपयितुं प्रसङ्गान्तरमारभते—एकदेति । तुशब्दः पूर्वोक्ताद्विशेषापेक्षया किल प्रसिद्धौ सर्वत्र सुविख्यातमेवैतदित्यर्थः अतो भगवन्निवासेऽपि तदसम्भावितमिति न मन्तव्यमिति भावः ॥ २२ ॥

यस्य पत्नी सा स विप्रः राज्ञ उग्रसेनस्य द्वारि प्रोवाच सकाकु सुक्रोशत्यर्थः कथं विलपन् विलापं कुर्वन् यत आतुरः शोकपीडितः अत एव दीनमानसो दुःखितचित्तः ॥ २३ ॥

ब्रह्म वेदः ब्राह्मणजातिर्वा तद्द्वेष्टीति तथा ब्राह्मणमरणेऽप्यौदासीन्यादिति भावः यतः शठा धीर्यस्य तस्य तत्र हेतुः विषयेषु आत्मा मनो यस्य तस्य तत्रापि हेतुः क्षत्रबन्धोः क्षत्रियाधमस्य ॥ २४ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रकृतेतिहासश्रवणफलमाह सूतः—इतीति । मुनेर्द्वैपायनस्य यस्तनयः शुकस्तस्यास्यपद्मं मुखपद्मं तस्य गन्धो यस्मिंस्तत्पीयूषममृतमेतद्भगवतः परत्वप्रकाशकेतिहासात्मकं भयं संसृतिभयं भिनत्तीति तथा सुश्लोक्यं बहुमन्तव्यं प्रसिद्धामृतं तु नैवंविधमितिभावः अभीक्ष्णं पुनः पुनः कर्णपुटैः श्रोत्रचषकैः पिबन्पान्थः संसाराध्वगः, अध्वभ्रमणपरिश्रमं प्रकृतिमण्डलपरिभ्रमणजं श्रमञ्जहाति मुक्तो भवती—त्यर्थः ॥२१॥

अत्र केचिदध्यायं समापयन्ति अथ योऽसावुक्तविधः परमपुरुषः स एव श्रीकृष्ण इति दर्शयितुमितिहासान्तरं प्रस्तौति एकदेत्यादिना । विप्रस्य कस्यचित्पत्न्याः कुमारो हे भारत जातमात्रस्तदैव भुवं स्पृष्ट्वा ममार ॥ २२ ॥

विप्र इति । स विप्रः राजद्वारे उपाधय निधायेदं वक्ष्यमाणं प्रोवाच ॥ २३ ॥

इदमिति विवक्षितमेवाह द्वाभ्यां—ब्रह्मद्विष इति । ब्रह्म ब्राह्मणान् द्वेष्टीति तथा तस्य शठस्य मूर्खस्येव धीर्यस्य लुब्धस्य निषादतुल्यस्याजितेन्द्रियस्य क्षत्रबन्धोः क्षत्रियाभासस्य राज्ञः कर्मदोषात् दुर्व्यापारदोषान्ममार्भकः पञ्चत्वं मरणं प्राप्तः मयितु न कश्चिद्दोष इति भावः ॥ २४ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रीशुक उवाच ।

कदाचिद्वाजिमेधेन यष्टुमुद्यम्य केशवः ।
महीं प्रदक्षिणीकर्तुं प्राहिणोत्प्रोक्षितं हयम् ॥ १ ॥
हार्दिक्यं कृतवर्माणंयुयुधानञ्च सात्यकिम् ।
चारुदेष्णं सुदेष्णञ्च प्रद्युम्नं साम्बमेव च ॥ २ ॥
अंशुमन्तं सुभानुञ्च बहुसैन्यांश्च यादवान् ।
रक्षणार्थं तुरङ्गस्य प्राहिणोद्यदुनन्दनः ॥ ३ ॥
ते वै प्रदक्षिणं कृत्वा वसुधां प्रोक्षितं हयम् ।
उपानिन्युरदीर्घेण कालेन भरतर्षभ ॥ ४ ॥
यष्टुकामं हरिं श्रुत्वा हयमेधेन भारत ।
आजग्मुर्दीर्घतपसो मुनयः संशितव्रताः ॥ ५ ॥
होतारञ्च तथाध्वर्युमुद्गातारञ्च केशवः ।
कल्पयित्वा यथान्यायं तथान्यानपि ऋत्विजः ॥ ६ ॥
ऋषिभिर्ब्राह्मणैः श्रेष्ठैर्वेदविद्याविचक्षणैः ।
दीक्षां प्रपेदे भगवान् कृतपुण्याहमङ्गलः ॥ ७ ॥
तमुपास्तुं महीपाला नानाजनपदेश्वराः ।
आजग्मुर्देवसङ्काशाः किरीटमुकुटोज्ज्वलाः ॥ ८ ॥
पाण्डवाश्च महीपाला यज्ञदर्शनमिच्छवः ।
आहूता वासुदेवेन द्वारकामाययुर्नृप ॥ ९ ॥
तस्मिंस्तथा वर्त्तमाने हयमेधे महोत्सवे ।
आसंस्तृप्ता द्विजा भोज्यवस्त्रगोभूमिकाञ्चनैः ॥ १० ॥
दीक्षां प्रविश्य गोविन्दः कामैस्तर्पयति द्विजान् ।
भुञ्जानेषु द्विजाग्र्येषु प्रत्यगृह्णत्सु वाञ्छितम् ॥ ११ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आसीनेषु यथायोग भूपार्थेषु समन्ततः ।
वदत्सु मा शब्द इति वेत्रझर्झरपाणिषु ॥ १२ ॥
तृणमूलधरः कश्चिद्ब्राह्मणोऽभ्येत्य सत्वरः ।
सुक्रोश आर्त्त उच्चाद्भुर्यैद्वाटमुखे स्थितः ॥ १३
क्षुत्क्षामकण्ठः शुष्कास्यो गळद्बाष्पाकुलेक्षणः ।

लोकसंग्रहायाश्वमेधयज्ञकरणमन्यासाध्यमृतविप्रपुत्रानयनमाहात्म्यञ्च निरूपयत्यस्मिन्नध्याये तत्रादौ हयस्य प्रदक्षिणाप्रकारं वाक्ति कदाचिदिति उद्यम्य ध्वांगं विधाय ॥ १—२ ॥

बहवः सैन्याः सेनानायका येषां ते तथा तान् यदून्नन्दयतीति यदुनन्दनः ॥ ३—४ ॥

हयमेधेनाश्वमेधेन दीर्घकालं तपो येषां ते तथा ॥ ५-७ ॥
उपास्तुं निषेवितुं किरीटैः सुवर्णैश्चोज्ज्वलाः ॥८--११॥
वेत्रेण झर्झराः कर्कशाः पाणयो येषां ते तथा तेषु ॥ १२ ॥

'तृणमूलधरः' तृणानां मूलं चूडां धारयतीति तृणमूलं यष्टिं च धारयतीति वा ॥ १३ ॥

॥ २३—२४ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

"एवमुपाख्यानस्य फलपर्यन्ततामुक्त्वा तस्य च फलं सर्वदैव ज्ञापयितुं सूतः फलश्रुतिमाह-इत्येतदिति । इतीति कथासमाप्तिः एतदित्यनुवादः यतः कुतश्चिदपि श्रुतं भगवच्चरित्रं कार्यं साधयत्येव फलरूपता तु साधारणानामपि भक्तमुखश्रवणादेव भगवन्तं ज्ञापयितुं विशेषणं मुनितनयास्यपद्मगन्धपीयूषमिति मुनितनयत्वेनान्यथा ज्ञानं निवर्त्तयति आस्यपद्ममिति पाने क्लेशाभाव उक्तः अधः स्थितपद्मेतु निम्नतासम्पादनक्लेश इति गन्धयुक्तं पीयूषमिति भक्तिरसालोडितं चरित्रमुक्तं अनेन स्वतः पुरुषार्थता निरूपिता साधकत्वमप्याह—भवभयभिदिति । संसारभयं निवर्त्तयति भवपदं भयस्यानिवर्त्यत्वं ज्ञापयति कीर्त्ते एतत्साधकत्वे हेतुमाह, परस्य पुंस इति नहि प्रकृतिमध्यस्थितस्य चरित्रमेताहशं भवतीति शब्दतोप्युत्तमतामाह, सुश्लोकमिति । शोभनाः श्लोका व्यासादिकृता यस्मिन् श्रवणपुटैरित्युत्तम्भितकर्णपुटैरिति बहुवचनेन वरत्वेन प्राप्तिः विधत्स्वकर्णायुतमिति वाक्यात् एवं यः भूत्वा अभीक्ष्णं पिबति तस्य साधनदशास्थितोपि क्लेशो निवर्त्तते इत्यर्थः॥ २१ ॥"

एवं प्रमाणबलेन भगवतो ज्ञानशक्तिर्निरूपिता प्रमेयबलेन निरूपयितुमुपाख्यानान्तरमारभते शुकः स्वयमेव—एकदेति । इतीदृशमीत्यन्तेन । प्रमेयबलेन पूर्वपक्षे कालस्यापि बलं निरूपणीयं ततो न देशादीनां बलेन सह विरोधः एते दशलीलारूपाः प्राणरूपा वा निर्गुणया भक्त्या सह भक्तिरूपा वा येषां अर्थे भगवान् गच्छतीति तेजसः प्रत्यापत्तिरपि कर्त्तव्येति भगवतो गमनमित्येके अतिदृढचरित्रत्वादर्जुनेन सह गमन अर्जुने सर्वदेवतानामक्षाणि वर्त्तन्त इति तत्सामर्थ्ये निराकृते सर्वेषामेव सामर्थ्यं निराकृतं भवतीति ज्ञापयितुं तत्कथा एकदा यस्मिन् काले भगवतः स्वसामर्थ्यप्रदर्शनेच्छा तुशब्दो वैकुण्ठे कथमेवमितिशङ्काव्यावृत्त्यर्थः कस्याश्चिद्द्विजपत्न्याः कुमारकः पुत्रः जातमात्र एव तदानीं कालो भूमौ तिष्ठतीति भूमिस्पर्शमात्रेणैव मृतः किलेति प्रसिद्ध्या शुकः स्वदोषं परिहरति भारतेति विश्वासार्थम् ॥ २२ ॥

ततो ब्राह्मणः अभूतपूर्वोयमर्थ इति भगवता कालस्य पूर्वं भोगोपि व्यावर्तित इति विद्यमानेपि भगवति यत्पुत्रमरणं तच्छम्बुकन्यायेन जातमिति प्रत्यापत्तिर्भविष्यतीति राजदोषेणैवमिति तान् ज्ञापयन् बालकं गृहीत्वा राजद्वारि गत इत्याह—विप्रो गृहीत्वेति । उपचारव्यावृत्त्यर्थं मृतकमिति राजद्वारि स्थापयित्वेति विचारार्थं शवबाहकस्य वचनं उपभाय इदं प्रोवाचेत्याह—विलपन्निति । कृत्रिमत्वाद्युदासाय बाह्यो भाव उक्तः दीनमानस इत्यान्तरः ॥ २३ ॥

बोधनार्थमाह—ब्रह्मद्विष इति द्वाभ्यां । प्रकृताप्रकृतभेदात् द्वारकायां तादृशो राजा मृग्यते तादृशो ऽयमुग्रसेनो न भवतीति तद्दोषः प्रायेण भविष्यतीति आशयेनाह—राज्ञो दोष त्रयं महत ब्रह्मद्वेषो जडबुद्धिः लोभश्चेति विषयात्मकता च चतुर्थः साधारणः चतुर्विधेपि प्राधान्यं राजा ब्रह्मद्वेषेण तस्य धर्माभावः शठबुद्ध्या नार्थः लोभाच्च कामः विषयासक्त्या न मोक्ष इति स राजा सर्वपुरुषार्थवञ्चितो भवति तादृशस्य कर्माणि तस्य पुरुषार्थाभावात् तत्रापकारं कर्त्तुं समर्थानि मदुपरि पतितानीत्याह, पञ्चत्वं मे गतोर्भक इति चतुर्थं स एव गतः तस्यैव पञ्चत्वे क्षत्रबन्धुत्वाद्रक्षा न भविष्यतीति ब्राह्मणस्तदीया इति तेषु पतति ॥ २४ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

पद्मगन्धपीयूषमित्युपाख्यानस्यास्य पीयूषत्वाद्भवरोगनिवर्त्तकत्वं पद्मगन्धवत्वात् भक्तमधुकराकर्षकत्वञ्च ॥ २१ ॥
तदेवं भगवतएव सर्वोत्कर्षमुक्त्वा भगवत्त्वेपि कृष्णस्य सर्वमहोत्कर्षं वक्तुं किमपि तच्चरितमाह —एकदेति ॥२२-२३॥
क्षत्रबन्धोरिति मयि न कोपि दोषः अतो राजदोषेणैव मत्पुत्रो मृतः ॥ २४—२५ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

सुश्लोकं सुयशः ॥ २१ ॥

स च सर्वश्रेष्ठः पुरुषः श्रीकृष्ण एवेति दार्ढ्यार्थमितिहासान्तरमाह एकदेति ॥ —२२-२३-२४-२५ ॥

---

भाषाटीका ।

सरस्वती के तीर निवासी ऋषिजन मनुष्यों के सन्देह निवृत्ति के अर्थ इस प्रकार विष्णु भगवान् के महत्व का

हिंसाविहारं नृपतिं दुःशीलमजितेन्द्रियम्।
प्रजा भजन्त्यः सीदन्ति दरिद्रा नित्यदुःखिताः ॥ २५ ॥
एवं द्वितीयं विप्रर्षिस्तृतीयं त्वेवमेव च।
विसृज्य स नृपद्वारि तां गाथां समगायत ॥ २६ ॥
तामर्जुन उपश्रुत्य कर्हिचित्केशवान्तिके।
परेते नवमे बाले ब्राह्मणं समभाषत ॥ २७ ॥
किं स्विद्ब्रह्मंस्त्वन्निवासे इह नास्ति धनुर्धरः।
राजन्यबन्धुरेते वै ब्राह्मणाः सत्रमासते ॥ २८ ॥

भाषा टीका।

निर्णय कर परम पुरुष के चरणारविन्द की सेवा कर मुक्ति को प्राप्त होगए ॥ २१ ॥

सूत उवाच।

इस प्रकार जिसका पहले वर्णन किया गया तथा संसार भय का भेदन करने वारा और व्यास मुनि के पुत्र शुकदेवजी के मुख कमल की सुगंध मिश्रित अमृतके समान प्रशंसा के योग्य परम पुरुषनारायण के एतादृश महत्व को संसार मार्ग में वर्त्तमान जो कोई निज कर्ण रूप दोनान से निरंतर पान करता है वह संसार मार्ग के भ्रमण करने से परिश्रम को छोड देता है ॥ २२ ॥

श्रीशुक उवाच।

हे भारत! अनंतर एक समय द्वारका में विप्र की स्त्री का बालक जन्म लेतेहि भूमि का स्पर्श कर मर गया इस प्रकार का एक इतिहास है ॥ २३ ॥

पुत्र के मरण से दुखित मन वारा व्याकुल चित्त वह ब्राह्मण मरे हुए बालक को लेकर राजा उग्रसेन के दरवाजे पर उस को रख कर बिलाप करता भया यह बोला ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

ब्रह्मद्विष इत्यादिकां तां गाथां वाक्यम् मयि न कश्चिद्दोषोऽतो राजदोषेणैव मत्पुत्रा म्रियन्त इति वारम्वारं चुक्रोशेत्यर्थः ॥ २६—२७ ॥

ब्रह्मन्! किं स्विदिति किमर्थं वृथा रोदिषि यतस्त्वन्निवासे धनुर्धरमात्रोऽपि राजन्यबन्धुरपि नास्ति ब्रह्मण्यस्य तु का वार्ता एते तु सत्रे याग इव ब्राह्मणा मिलिता भवितुमर्हन्तीत्यर्थः ॥ २८ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

राजदोषेणात्मनो बालकमरणे शाक्यं प्रमाणयति हिंसेति। हिंसाविहारत्वे हेतुः दुःशीलं दुष्टस्वभावं तत्र च हेतुः अजितेन्द्रियं भजन्त्यः सीदन्ति कीदृशाः दरिद्राः नित्यं दुःखिताश्च विविधशोकार्त्ताः सत्यः ॥ २५ ॥

दुःख तृतीये च चकारादन्यमपि नवमान्तं विप्रर्षिरिति तस्य स्वतो दोषाभावेनावेगस्य योग्यत्वं दर्शितं तां गाथामिति तस्याभिधेयत्वेन ब्रह्मद्विष इत्यादिका तत्पोषकत्वेन हिंसेत्यादिका ज्ञेया ॥ २६ ॥

केशवस्यैवान्तिके वर्त्तमानस्तां गाथाम् उपश्रुत्य पारम्पर्येण श्रुत्वा ब्राह्मणमुपेत्य सम्यक् साश्वासनमुवाच ॥ २७ ॥

ब्रह्मन्नित्यादि सगौरवसम्बोधनं तस्य सान्त्वनार्थं विश्वासनार्थञ्च तत्रत्यानां तदुपेक्षादोषव्यञ्जनार्थञ्च राजन्यबन्धुरपि किमुत राजन्य इत्यर्थः वै उत्प्रेक्षायाम् ॥ २८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

द्वितीयं तृतीयपर्यायम् ॥ २६ ॥

कर्हिचित् कदाचित् ॥ २७—४० ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

क्षत्रबन्धोः कर्मदोषात्पञ्चत्वं मे गतोऽर्भकः इत्युक्तं तदेव दृढीकरोति हिंसैव विहारो यस्य तं दुष्टं शीलं वृत्तिर्यस्य तमजितेन्द्रियं नृपं भजन्त्यः प्रजाः सीदन्ति दुःख्यन्ति नित्यं दरिद्रा दुःखिताश्च भवन्ति ॥ २५ ॥

एवमिति। एवमेवचाष्टकृत्वः स विप्रो नृपद्वारि मृतकं विसृज्य तां गाथां ब्रह्मद्विष इत्यादिवाक्यमगायत प्रोवाच ॥ २६ ॥

तामिति। परेते मृते सति नवमे बाले पूर्ववद्विप्रेण गीतां तां गाथां श्रुत्वा ॥ २७ ॥

भाषणमेवाह—किं स्विदिति। त्रिभिः, हे ब्रह्मन् इह त्वन्निवासभूते पुरे धनुर्धरःकोऽपि नास्ति किं स्वित् धनुर्धरमात्रो राजन्यबन्धुरपि नास्ति किमित्यर्थः। ब्रह्मण्यो नास्त्येवेति भावः। एते तु सत्रमासते ये ब्राह्मणाः सत्रयागे ब्राह्मणा इव मिलिताः धनादिभिर्युक्ताः सुखमासत इत्यर्थः ॥ २८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

इत्युक्त्वा सपुनश्चैव चुक्रोश भृशदुःखितः ॥
तदाकर्ण्यार्जुनो मानी समुत्थाय वरासनात् ।
अपृच्छत्तत्त्वयमासाद्य ब्राह्मणं केशवान्तिकात् ॥
किमासन्नर्भका ब्रह्मंस्तव केनासि दुःखितः ।
ब्रूहि तत्त्वमशेषेण त्वामद्य सुखयाम्यहम् ॥
इत्युक्तो ब्राह्मणः प्राह जातो जातोऽर्भको मम ।
नीयते तात केनापि तत्क्षणे सूतिका गृहात् ॥

हिंसाविहारादिकर्मयुक्तं नृपतिं भजन्त्यः सीदति ॥ २५ ॥

द्वितीयं द्विवारं तृतीयं त्रिवारं पुनश्चतुर्वारम् ॥ २६—२७ ॥

केनापि पुंसा नीयते । ० ॥

किमाहेत्यत्राह किं ब्राह्मणेति । इह त्वन्निवासस्थाने धनुर्धरो नास्ति किमित्यब्रवीत् धनुर्धरेण किं कार्यमत्राह राजन्यबन्धो-रिति एते ब्राह्मणा राजन्यबन्धोर्हेतोः सत्रमासते वै ॥ २८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ननु पुरोहितविषयमेतत् गुरौ शिष्यश्च याज्यश्चेति वाक्यात् साधारणश्च ब्राह्मणस्त्वं तादृशः कथं दुःखी जात इति चेत्त-त्राह—हिंसाविहारमिति । राज्ञो महान् त्रिदोषः सर्वानेव नाशयति राज्यस्थितान् निषिद्धस्य कर्त्ता विहितस्याकर्त्ता दुष्ट-पोषकश्चेति दोषत्रयं क्रमेणाह—हिंसायामेव विहारो यस्य दुष्टं शीलं यस्य न जितानीन्द्रियाणि येनेति तादृशं नृपतिं भजन्त्यः प्रजाः क्रमेण तत्तद्दोषं प्राप्नुवन्ति आदावक्षत्वं हिंसाफलं मृतप्राया भवन्तीत्यर्थः दुःशीलत्वात् धर्माभावात् दरिद्रा भवन्तीत्यर्थः ततः शत्रुजयाभावात् नित्यदुःखिताः एवमुपदेशार्थमुक्त्वा बालकं गृहीत्वा गच्छति ॥ २५ ॥

एवमेकवारकथामुक्त्वा पर्यायान्तरेष्वप्युपदिशति एवं द्वितीयमिति । द्वितीयमप्येवमेव बालकमानीयैव वदति तत्तो लोकानां प्रतीतिर्जातेति पश्चात् षट् पुत्रा नानीताः परं स्वयमेवागत्य वाक्यं वदति तृतीयं तु तत्रैव त्यक्तवानिति लक्ष्यते द्वारकायां भगवान् मुख्यः स तूष्णीं तिष्ठति तत्रत्याः सर्वे एव तूष्णीं तिष्ठन्ति यथा कायिकोपराधः ब्राह्मणस्य सोढव्यः एवमवाचीनकोपीति यथा ब्रह्मविचारार्थं प्रवृत्तस्य तथेति ब्राह्मणः कार्यं तथात्रापि भगवता नीयत इति तूष्णीं भावः ॥ २६ ॥

ततो भिन्नस्वभावः जीवभावमेवापन्न इति द्वारकायामपि गतो लौकिकबुद्ध्याऽऽविष्टः साभिमानः किञ्चिदुवाचेत्याह—ताम-र्जुन इति । केशवान्तिक एवोपविश्य उपश्रुत्य ब्राह्मणं समभाष-तेति सम्बन्धः भगवान् भक्तार्थमेव सर्वं करोतीति ज्ञापयितुं तत्र विलम्बाभावार्थं परेते नवमे बाल इत्युक्तं गुणानां कार्ये जाते अहङ्कारदेवता असहमाना तथा प्रोवाच दशैव पुत्रा मर्यादायामेकस्यां दशाद्यां पुत्रानाधेहीति श्रुतेः अत एव एवा-वशिष्यते अतो विलम्बमकृत्वा ब्राह्मणं समभाषत अर्जुनो-प्येवं मन्यते मृत्युरेनं नयतीति समृत्युर्ब्राह्मणक्षत्रियो मित्रं तदु-पपादितं यस्य ब्रह्मक्षत्रं च उभे भवत ओदनः मृत्युर्यस्यो-पसेचनमित्यत्र तुल्यव्यसनत्वान्मित्रत्वं तत्रोभौ स्वधर्मपरौ मृग्येते ननु जातिमात्रपरावेति तदाह राजन्यबान्धवो वेनेति एतेनोत्तमाः क्षत्रियाः एतेषां पूर्वजाः परं राजन्या स्थिता इत्यर्थः ननु ब्राह्मणानामेव दोषः कुतो न भवतीत्याकाङ्क्षाया-माह, ब्राह्मणास्तु सत्रमासत एव अतः अलौकिकदोषेण बालकानां मरणं किन्तु क्षत्रियाणां दोषेणेत्याह, धनदारात्मजा-युक्ता इति । धनदारात्मजैः सर्वथा अपेक्षितैः अयुक्ताः रहिता एकाकिन इत्यर्थः यत्र ब्राह्मणाः एवं दुःखं प्राप्नुवन्ति ते वै निश्चयेन राजन्या नटा एव राजन्यवेषं कृत्वा लोकेभ्यो स्वं प्राप्य जीवन्तीत्यसुम्भरा ब्राह्मणश्चेद्दुःखितो भवेत् सोऽयं रक्षयेत् नत्वात्मानं स पालयितुं शक्तः तथा सति क्षत्रियनिर्माणं व्यर्थं स्यात् अतो हन्यांम्यमात्मानं ब्रह्म-सत्रञ्च रक्षतस्तत्प्राणायात्तुजश्चासाजनिति च नसादवश्यमत्र क्षत्रियेण रक्षा कर्त्तव्या अतोहं करिष्यामीत्याह, अहमिति द्वां स्त्रीपुरुषयोः तस्मिन् रक्षिते उभयोरुपकार इति तस्य दया-वत्त्वं सूचयितुमाह, दीनयोरिति । ननु त्वद्वाक्ये को विश्वास इति चेत्तत्राह, अनिस्तीर्णप्रतिज्ञ इति । नन्वाग्निप्रवेशे किं स्यात् बालकस्तु न जीविष्यत्येवेत्याशयेनाह, हतकल्मष इति । तदा तस्य पापं न भवति क्षत्रियदेहस्य परित्यागात् तदा ब्राह्मणस्तमुपदिशति अर्ह मत्वा मित्रत्वात् ॥ २७—३० ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तां ब्रह्मद्विड् इत्यादिकां गाथाम् ॥ २६-२७ ॥

राजन्यबन्धुरिति निकृष्टः क्षत्रियोऽपि किं नास्ति ब्रह्मण्यस्य का वर्त्तेति गर्वात् तत्रत्यान् प्रतिकटाक्षः ननु राजन्या अत्र सङ्कटे वद किं कर्त्तुमर्हन्ति तत्र तर्जन्यादर्शयन्नाह--एते ब्राह्मणाः अत्र सत्रयागमासते कुर्वन्त्येव तत्किलपाल्यमाना इमे एव नाशमर्हन्तीति वक्रोक्तिः ॥ २८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

तां गाथां ब्रह्मद्विड् इत्यादिवाक्यम् ॥ २६—२७ ॥

धनुर्धरः राजन्यबन्धुः निकृष्टक्षत्रियोऽपि किं स्विन्नास्ति एते राजन्यनामकाः वै निश्चितं सत्रमासते यागमुद्दिश्य तिष्ठन्ति ॥ २८ ॥

---

भाषा टीका ।

ब्राह्मणों के साथ द्वेष करने वारे शठ बुद्धि लोभी विष-यन में मगवारे क्षत्रियों में अधम इस राजा के दोषते मेरा पुत्र मरण को प्राप्त होगया ॥ २५ ॥

प्राणियों की हिंसा हि जिस का विहार, दुष्ट शील स्वभाववारा, इन्द्रियों को नहि जीतने वारा ऐसे राजा की सेवा करने वारी प्रजा, दरिद्री नित्य दुखी होकर क्लेश हि पावती है ॥ २६ ॥

धनदारात्मजापृक्ता यत्र शोचन्ति ब्राह्मणाः ।
ते वै राजन्यवेषेण नटा जीवन्त्यसुम्भराः ॥ २९ ॥
अहं प्रजां वां भगवन्रक्षिष्ये दीनयोरिह ।
अनिस्तीर्णप्रतिज्ञोऽग्निं प्रवेक्ष्ये हतकल्मषः ॥ ३० ॥

ब्राह्मण उवाच ।

सङ्कर्षणो वासुदेवः प्रद्युम्नो धन्विनां वरः ।
अनिरुद्धोऽप्रतिरथो न त्रातुं शक्नुवन्ति यत् ॥ ३१ ॥
तत्कथं नु भवान् कर्म दुष्करं जगदीश्वरैः ।
चिकीर्षसि त्वं बालिश्यात्तन्न श्रद्दध्महे वयम् ॥ ३२ ॥

भाषाटीका ।

इसी प्रकार दूसरे तीसरे मरे बालक को राजा के दरवाजे पर धरकर वह ब्राह्मण उसी गाथा का गान करता भया कि जिस को पहले कह आए हैं ॥ २७ ॥

किसी समय जब मे बालक के मरने पर राजा के समीप में स्थित श्रीकृष्ण के पास में स्थित अर्जुन उस गाथा को सुनकर उस ब्राह्मण के प्रति बोला ॥ २८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तदेवाह—धनदारात्मजापृक्ता यत्रेति धनादिभिर्वियुक्ताः सन्तो यत्र येषु जीवत्सु राजन्येषु शोचन्ति ते जीविकां सम्पादयन्ति ॥ २९ ॥

हतकल्मष इति अग्निप्रवेशेन ब्राह्मणविलापश्रवणपातकात्पूतो भवेयमित्यर्थः । अहतकल्मष इति वा ॥ ३०—३१ ॥

न श्रद्दध्महे न सम्प्रतीमः ॥ ३२—३४ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

किम्वा परमनीचत्वेनैव वितर्क्या इत्याह-धनेति धनादीनां यथोत्तरं श्रेष्ठ्यम् ॥ २९ ॥

वां युवयोरिति महाशोकेन ब्राह्मण्या अपि तत्रागमनात् किं वा तस्या सङ्ग्रहो दुःखाव्यञ्जनार्थं मन्यते: यद्वा अग्निप्रवेशे प्रयोजनमाह हतकल्मष इति स्यामिति शेषः ॥ ३० ॥

सङ्कर्षण इति युग्मकम् तत्र सङ्कर्षणादिचतुर्णां नाम व्युत्पत्त्यैव स्पष्टमहिमत्वात्साम्येऽप्युत्तरयोर्विशेषणदानेन पूर्वाभ्यां साम्यमभिप्रैति यत् मदपत्यरक्षणरूपं कर्म त्रातुं निर्विघ्नीकर्तुं न शक्नुवन्ति नोत्सहन्ते तत्खलु जगदीश्वरैस्तैरपि दुष्करं कर्म भवान् कथन्नु त्रातुं शक्नोति तस्माद्बालिश्यादेव त्वं तच्चिकीर्षसि तत एव वयं न श्रद्दध्महे ॥ ३१-३२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यत्र येषु जीवत्सु ब्राह्मणाः धनदारात्मजैःअयुक्ताः एवं शोचन्ति ते वै राजन्यरूपेण क्षत्रियवेषेण नटा इवअसुम्भरा स्वप्राणपोषणपराः जीवन्ति ते जीवच्छवप्राया इति भावः ॥ २९ ॥

अहमिति । दीनयोर्वां युवयोः प्रजां जनिष्यमाणं पुत्रमहम् इहैव स्थित्वा रक्षिष्ये यद्यहमनिस्तीर्णप्रतिज्ञः अनिष्पादितप्रतिज्ञः स्यां तर्ह्यग्निं प्रवेक्ष्ये ततो हतकल्मषः. ब्राह्मणविलाप श्रवणपातकादनृतभाषणाच्च पातकान्मुक्तो भवेयं अपहतकल्मष इति वा च्छेदः यद्यनिस्तीर्णप्रतिज्ञस्तर्ह्यनिरस्तपापस्तदपनोदनाय प्रवेक्ष्य इत्यर्थः ॥३२ ॥

एवमुक्तः प्राह विप्रः सङ्कर्षण इति द्वाभ्याम् सङ्कर्षणो बलदेवः वासुदेवः कृष्णः धन्विनां श्रेष्ठः प्रद्युम्नः न विद्यते प्रतिरथः समबलो यस्य सोऽनिरुद्धश्चेत्येते यन्मदपत्यं त्रातुं न शक्नुवन्ति । ३१ ॥

इत्थमुक्तः प्राहार्जुनं तज्जगदीश्वरैः अपि कर्तुमशक्यं मदपत्यत्राणात्मकं कर्म कथं भवान् कर्तुं शक्नोति यतस्त्वं बालिश्यादज्ञानान्मोर्ख्याद्वा चिकीर्षसि तत्तस्माद्वयं न श्रद्दध्महे नाविश्वसिमः ॥३२॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

राजापि स एव श्रेयानितरो दुःखहेतुरित्याह—धनदारेति । यत्र यस्मिन् देशे राजन्यवेषेणासुम्भरा नरा जीवन्ति तस्मिन् देशे स्थितास्ते भृत्या राज्ञा भरणीयाः ब्राह्मणाः धनदारात्मजैः सह शोचन्तीत्यन्वयः यद्वा यत्र येषु राजसु सत्सु ब्राह्मणा धनादिभिः सह शोचन्ति ते राजन्यवेषेण नटा एव जीवन्ति नतु सङ्ग्रहयाः कुतः असुं सुराः स्वप्राणपोषण-

अर्जुन उवाच ।

नाहं सङ्कर्षणो ब्रह्मन्न कृष्णः कार्ष्णिरेव च ।
अहं वा अर्जुनो नाम गाण्डीवं यस्य वै धनुः ॥ ३३ ॥
मावमंस्था मम ब्रह्मन् वीर्यं त्र्यम्बकतोषणम् ।
मृत्युं विजित्य प्रधने आनेष्ये ते प्रजां प्रभो ॥ ३४ ॥
एवं विश्रम्भितो विप्रः फाल्गुनेन परन्तप ।
जगाम स्वगृहं प्रीतः पार्थवीर्यं निशामयन् ॥ ३५ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

परायणा वै यस्मात्तस्मादिनियोर्गुणयोः अहत कल्मषः मिथ्याप्रति ज्ञत्वात् ॥ २९-३० ॥

तत्रार्जुनस्याहङ्काराविष्करणाय ब्राह्मणो वक्ति—सङ्कर्षण इति । सङ्कर्षणादयस्त्रातुं न शक्नुवन्ति यद्यस्मात्तस्माज्जगदीश्वरैर्दुष्करं कर्म कथं चिकीर्षसि बालिशो बालमूर्खयोरिति वचनात् बालिश्यात् आत्मशक्त्यनभिज्ञानात् इह कर्मणि तव वाक्यं न श्रद्दध्महे ॥ ३१-३२ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

सङ्कर्षणो वासुदेव इति चतुर्मूर्त्तिं भगवन्तं सर्वथा स्वभावतोपि रक्षकं निर्दिशति-सङ्कर्षण इति । धन्विनां वर इति लौकिकमपि सामर्थ्यं सूचितं पूर्वयोस्तु सामर्थ्यं दृष्टचरं अनिरुद्धस्त्वप्रतिरथः न केनापि रुद्ध इति सार्थकता तस्य निरूपिता एवं मिलिता अपि अस्मत्पुत्रं त्रातुं न शक्नुवन्ति यस्मात्कारणात् अस्ति किञ्चित् कारणं येन तेपि न शक्नुवन्तीत्यर्थः ॥ ३१ ॥

तावता किमित्यत आह-तत्कथमिति । एते जगदीश्वराः भगवदवतारत्वात् असाध्यं बाल एव वदतीति त्वं बालिशः अतस्तव वाक्यं न श्रद्दध्महे अर्जुनस्त्वेवं मन्यते चतुर्मूर्त्तिर्भगवान् प्रतिनियतकार्यकर्त्ता तदंशोपि तत्रैव निविशते यस्तु तदंशोपि भूत्वा विशेषकार्यार्थं उत्पन्नः स एवं कर्तुं शक्नोतीति ॥ ३२ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

अत्रत्यानां राजन्यबन्धुत्वे प्रमाणं शृण्वित्याह—धनादिभिः स्पृक्ता वियुक्ताः यत्र येषु जीवत्सु शोचन्ति ॥ २६ ॥

स्वामिति महाशोकेन ब्राह्मण्या अपि मौनवत्यास्तत्रागमनात् न निस्तीर्णा किन्तु भग्नैव प्रतिज्ञा यस्य तथाभूतश्चेदहं त्वां अग्निं प्रवेक्ष्यामीति तत एव हतकल्मषः प्रतिज्ञाभङ्गलक्षणदोषरहितः स्याम् ॥ ३०-३१ ॥

न श्रद्दध्महे न विश्वसिमः ॥ ३२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

किं बहुना यत्र येषु सत्सु धनादिभिः पृक्ता वियुक्ताः ब्राह्मणाः शोचन्ति ते असुम्भराः नटा एव राजन्यवेषेण जीवन्ति ॥ २९ ॥

[illegible] निर्णप्रतिज्ञश्चेत्तदा अग्निं प्रवेक्ष्ये ततः हतकल्मषः प्रतिज्ञाया अपालनेन भविष्यति यत्पातकं तद्विमुक्तो भविष्यामीत्यर्थः ॥ ३०-३४ ॥

---

भाषा टीका ।

हे ब्राह्मण ! तू वृथा रुदन क्यों करता है क्यों कि जहां तू रहता है इस द्वार का में धनुषधारी कोई उत्तम क्षत्रिय नहि है इसकी कथाहि क्या है किन्तु कोई अधम क्षत्रियभी नहि है और द्वारका निवासी जितने यदुवंशी है एसवतो समाज में मिले हुए ब्राह्मणों के समान बैठे हुए हैं ॥ २९ ॥

जिन क्षत्रियों के जीवते २ धन स्त्री पुत्रो से वियोग को प्राप्त ब्राह्मण शोच करते हैं वे क्षत्रियों के वेष से नटों के समान अपने प्राणों का पोषण कर केवल जीवते मात्र है ॥ ३० ॥

हे भगवन् ! दीन स्त्री पुरुष आप दोनों के बालकको इहां वर्तमान में रक्षा करूंगा यदि मै इस प्रतिज्ञा का निस्तार न करूंगा तो अग्नि में प्रवेश कर जाऊंगा अग्नि में जलने से मै पापते छूट जाऊंग ॥ ३१ ॥

ब्राह्मण उवाच ।

मेरे पुत्रकी रक्षा करने को बलदेवजी समर्थ नहि श्रीकृष्ण समर्थ नहि धनुषधारियों में श्रेष्ठ प्रद्युम्न समर्थ नहि जिस के समान दूसरा वीर नहि एतादृश अनिरुद्ध भी समर्थ नहि ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं प्रौढिवादैर्विश्रम्भितो विश्वासं प्रापितः निशामयन् शृण्वन् ॥ ३५-३६ ॥

**प्रसूतिकाल आसन्ने भार्याया द्विजसत्तमः।**
**पाहि पाहि प्रजां मृत्योरित्याहार्जुनमातुरः ॥ ३६ ॥**

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

सङ्कर्षण इति गर्भसङ्कर्षणस्य कृष्णश्चेति सुहृद्यामत्वमात्रस्याभिप्रायेण नञः पुनः प्रयोगो निषेधदार्ढ्यार्थं कार्ष्णिरेवच प्रद्युम्नोपि अत्यन्तावज्ञया अनिरुद्धस्य नामापि न प्रस्तुतम् ॥ ३३ ॥

त्र्यम्बकस्य किरात[त्व]च्छद्मनस्तोषणं तत्तुल्यतया प्रीतिकरं तथा भारताख्यानात् अथ विप्राश्वासनार्थं प्रतिजानीते मृत्युमिति प्रधने रणमध्ये विशेषेण मारणादिना जित्वा प्रजाः सर्वानपि पुत्रान् न केवलमेतां प्रजामिति पाठो बहुत्र श्रीमदर्जुनस्यापीदृशी गर्वोक्तिर्ब्रह्मण्यदेवस्य विप्रापेक्षया सख्येन क्रोधभवमनोदुःखविक्षेपोत्पत्तेः तेन तदुपेक्षाच्च द्विजात्मजा मे युवयोर्दिदृक्षुणेति श्रीमहाकालपुराधिपवक्ष्यमाणानुसारेण तदुत्कण्ठाप्रतिपालनाय तत उभयमपि समञ्जसम् ॥ ३४ ॥

निशामयन् पश्यन् अनुभवन् शृण्वन्निति यावत् परन्तप हे शत्रुनाशनेति त्वद्देतादृशत्वकारणस्य त्वत्पितामहस्य तस्योक्तौ वीर्ये वा विप्रस्य विश्वासो युक्त एवेति भावः ॥ ३५ ॥

प्रसूतिकाल इत्यनेन तदर्थं द्वारकायामेकाब्दमर्जुनस्य वासो ज्ञेयः आतुरो भयपीडितः सन्नाह—रात्रावर्जुनान्तिकमागत्येतिशेषः। एवमग्रेपि तद्विप्रगृहं गतः सन्निति शेषः तथाच हरिवंशेऽर्जुनवाक्यं "गतेऽर्द्धरात्रसमये ब्राह्मणो भयविक्लवः। उपागम्य भयादस्मानिदं वचनमब्रवीदित्यादि—

मुहूर्त्तेन वयं ग्रामं तं प्राप्य भरतर्षभ।
विश्रान्तवाहनाः सर्वे निवासायोपसंस्थिताः॥

इतिच ॥ ३६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

इत्युक्तः प्राहार्जुनः नाहमिति द्वाभ्याम् कार्ष्णिः कृष्णस्यापत्यं पुमान् प्रद्युम्नः चकारादनिरुद्धश्च न भवामि किन्तु तेभ्योप्यतिशयितशक्तिरर्जुनोऽहं यस्य अर्जुनस्य गाण्डीवं नाम धनुरस्ति ॥ ३३ ॥

हे ब्रह्मन्! मम वीर्यं मावमंस्थाः अवहेलनं माकार्षीः तत्र हेतुत्वेन विशिनष्टि त्र्यम्बको रुद्रः सन्तुष्यते ऽनेनेति तथा तत् अतो हे प्रभो! मृत्युमपि युधि विजित्य तव प्रजामानेष्ये ॥ ३४ ॥

एवमिति। इत्थं फाल्गुनेनार्जुनेन विस्रम्भितः विश्वासं प्रापितः विप्रः प्रीतः स्वगृहं जगाम ततो हे परन्तप! पार्थस्य वीर्यं निशामयन्नास्ते इति शेषः ॥ ३५ ॥

प्रसूतीति। भार्यायाः प्रसूतिकाले आसन्ने सति तदा द्विजसत्तमः आतुरः सन्नर्जुनं प्रतीत्यमाह-कथं मम प्रजां मृत्योः पाहि पाहीति ॥ ३६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

इति विस्रम्भयित्वा तं कृष्णमाहार्जुनो नृप।
अनुज्ञां देहि भगवन् ब्राह्मणार्थे प्रयास्यतः ॥ क ॥
यजतां वाजिमेधेन भवानेभिर्महात्मभिः।
इति ब्रुवन्तं बीभत्सुमनुज्ञां प्रेप्सुमच्युतः ॥ ख ॥
षड्तूणं च गाण्डीवं स्मयमानोऽब्रवीद्वचः ॥
श्रीभगवानुवाच।
अहमेवागमिष्यामि न त्वया शक्यतेऽर्जुन।
तमसाधारणं भूतं मन्ये येन हृतोर्भकः ॥ ग ॥
अर्जुन उवाच।
सलोकपालो देवेन्द्रः खाण्डवे विजितो मया।
किरातरूपी युद्धेन तोषितश्च त्रियम्बकः ॥ घ ॥
निवातकवचाश्चैव वामयेनापि दुर्जयाः।
मयैव निहताः सङ्ख्ये हिरण्यपुरवासिनः ॥ ङ ॥
तेभ्योऽधिकतरं भूतं किं नु दानवसूदन।
बिभीष्यसि मां कस्मादनुज्ञां देहि साम्प्रतम् ॥ च ॥
श्रीशुक उवाच।
इत्युक्तः प्रददौ कृष्णस्त्वनुज्ञां सव्यसाचिने।
निर्ययौ यज्ञशालायाः सङ्गृहीत शरासनः ॥ छ ॥
रथमास्थाय विपुलं समुच्छ्रितकपिध्वजम्।
अग्रे ब्राह्मणमारोप्य तद्ग्राममभितो ययौ ॥ ज ॥
तत्रगत्वा प्रविष्टायां तत्पत्न्यां सूतिकागृहम्।
ब्राह्मणं प्राह बीभत्सुरवरोप्य रथान्नृप ॥ झ ॥
अर्जुन उवाच।
याहि स्वभवनं ब्रह्मन्नभयं तव सर्वतः।
दत्तं मयाऽद्य तद्गीतां पत्नीमाश्वासयाशु ते ॥ ञ ॥
प्रोवाचद्रुतमभ्येत्य पार्थं शस्त्रभृतां वरम्।
एहि पार्थ महाबाहो यत्तो भव भद्युधां वर॥
अत्र पूर्वकृतानां हि पौरुषाणां निदर्शनम् ॥
श्रीशुक उवाच।
इत्युक्तो रथमारुह्य सज्यं कृत्वा तु गाण्डिवम्।
त्वरन् जगाम बीभत्सुः सूतिका भवनान्तिकम ॥
ब्राह्मणोपि प्रविश्याह मुहूर्तं सूतिकागृहे ॥

अत्रार्जुनः स्वगर्वमुद्वलयति अर्जुन इति धनञ्जयरणे रणं इति श्रुतिप्रसिद्धेः अहं धनञ्जयो नाम प्रख्यातः धनुष्मत्ता चेदशीत्याह-गाण्डीवमिति ॥ ३३ ॥

स उपस्पृश्य शुच्यम्भो नमस्कृत्य महेश्वरम् ।
दिव्यान्यस्त्राणि संस्मृत्य सज्यं गाण्डीवमाददे ॥ ३७ ॥
न्यरुणत्सूतिकागारं शरैर्नानाऽस्त्रयोजितैः ।
तिर्यगूर्ध्वमधः पार्थश्चकार शरपञ्जरम् ॥ ३८ ॥
ततः कुमारः सञ्जातो विप्रपत्न्याः रुदन् मुहुः ।
सद्योऽदर्शनमापेदे सशरीरो विहायसा ॥ ३९ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

मावमंस्था अवमानं न कुरु मृत्युं यमम् ॥ ३४—३५ ॥

ततः किं फलितमत्राह—इतीति ॥ क ॥

तत्र कृष्णाहङ्कारिणो देवप्रसादो न स्यादिति भावयानर्जुनं निवारयन्निव वक्ति इतीति वक्तुर्णं पृष्ठवक्तुर्णीरम् ॥ ख ॥

अल्पकार्यहेतोस्त्वद्गमनं किमर्थमित्यत्राह—तमसाधारणमिति भूतं देवयोनिम् ॥ ग ॥

अर्जुनः स्वगर्वमुद्गलयति सलोकपाल इति ॥ घ-ङ ॥

भूतं देवयोनिम् ॥ च-छ ॥

अभित उद्दिश्य ॥ ज-झ ॥

युधाम्वर युध्यन्तीति युधो योधास्तेषां वर पौरुषाणां पुरुषपराक्रमाणां निदर्शनं दृष्टान्तः ॥ ३६-३७ ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

अतो निषेधति—नाहं सङ्कर्षण इति । जगदीश्वरत्वमप्रयोजकं प्रतिनियतकार्यकर्त्तृत्वस्य प्रतिबन्धकत्वात् कार्ष्णिः प्रद्युम्नः चेत्यनन्तरः स्वस्यानिरुद्धांशात्वात् न साक्षान्निषेधं करोति अन्यथा अनृतवादी स्यात् अहं निश्चयेन अर्जुनः येन गावः प्रत्यानीताः मम चासाधारणं साधनं कार्यं चेत्याह—गाण्डीवं वै यस्य धनुरिति साधनोत्कर्षो निरूपितः त्र्यम्बकतोषणमिति कार्योत्कर्षः नहि मृत्युञ्जयः महान्येन मृत्युर्जेतुं शक्यः सोपि चेन्मद्वीर्येण तुष्यति तदा मम मृत्युजये कः सन्देह इति भावः यदि मृत्युः प्रार्थितश्चेत् दास्यति तदा न काचिच्चिन्ता यदि वा कलहं करिष्यति तथापि प्रधने मृत्युं विजित्य ते प्रजां, आनेष्ये यतोहं प्रभुः ॥ ३३—३४ ॥

एवं सोपपत्त्या निरूपणे ब्राह्मणस्य विश्वासो जात इत्याह एवं विश्रम्भित इति विश्रम्भो विश्वासः यतो ऽयं विप्रः विप्राः पाश्चिमवुद्धय इति परन्तपेति विश्वासार्थं सम्बोधनं फाल्गुनपदं लोके विघ्ननिवारकत्वेन प्रसिद्धमिति तद्वाच्यः कथं मृत्युं न निवारयेदिति विश्वासः ततो ग्राममध्ये सर्वत्र पार्थवीर्यं भावयन् स्वगृहं गतः ततो वर्षपर्यन्तं प्रीतः स्थितः ॥ ३५ ॥

ततो यज्जातं तदाह—प्रसूतिकाल आसन्न इति । द्विजसत्तमो महान् अन्यथा शापं दद्यात् मृत्योः सकाशात् प्रजां पाहि आतुर इति शरीरेपि दैन्यं प्रतिभातीत्युक्तम् ॥ ३६ ॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

गाण्डीवमिति तद्धनुर्दर्शयति ॥ ३३—३५ ॥

प्रसूतिकाल इति तद्वर्षमेकाब्दमर्जुनस्य द्वारकायामेव वासः स्वपुरादेव गर्भपूर्तिं ज्ञात्वा पुनस्तत्रागमो वा श्रेयः आनयार्जुनमिति भार्यावचनाद्द्वारावायस्याह—पाहीति ॥ ३६ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विश्रम्भितः विश्वासं नीतः पार्थवीर्यं निशामयन् शृण्वन् स्वगृहमगात् ॥ ३५—३६ ॥

भाषाटीका ।

इस प्रकार जगदीश्वरों से जो कर्म दुष्कर है, उसके करने को तुम कैसे समर्थ होसकते हो, इस वास्ते केवल मूर्खपने से उस दुष्कर कर्म करने की इच्छा करता है, इस लिये हम तेरे कहने का विश्वास नहि करते ॥ ३३ ॥

अर्जुन उवाच ।

हे ब्रह्मन् ! मैं बलदेव नहि हों मैं कृष्ण नहि हो, मैं प्रद्युम्न नहि हो मैं अनिरुद्ध नहि हो, [illegible] पराक्रम वाला मैं प्रसिद्ध अर्जुन हो जि मेरा गांडीव धनुष है ॥ ३४ ॥

आप मेरे पराक्रम का अपमान मतना करो क्योंकि मेरा पराक्रम महादेव को प्रसन्न करने वाला है। हे प्रभो ! संग्राम में मृत्यु को भी जीत कर आप के पुत्र को लाऊगा ॥ ३५ ॥

हे परन्तप ! इस प्रकार अर्जुन से विश्वास को प्राप्त भया ब्राह्मण प्रसन्न होकर अर्जुन के पराक्रम को सुनाता भया अपने गृह को चलागया ॥ ३६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ब्राह्मणोपेक्षकत्वेन कृष्णावज्ञया महेश्वरं नमस्कृत्य ॥ ३७ ॥

**तदाह विप्रो विजयं विनिन्दन् कृष्णसन्निधौ ।**
**मौढ्यं पश्यत मे योऽहं श्रद्दधे क्लीबकत्थनम् ॥ ४० ॥**

श्रीधरस्वामिकृतभावार्थदीपिका ।

न्यरुणदावृतवान् तदेवाऽऽह तिर्यगूर्ध्वमिति ॥ ३८ ॥
अदर्शनमापेदे देहोऽपि नावशिष्ट इत्यर्थः ॥ ३९—४० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

सोऽर्जुनः नमस्कृत्य महेश्वरमिति श्रीभगवद्वक्षायां शिवभजनमाकिञ्चित्करमिति द्योतितम् ॥ ३७ ॥

नानास्त्रैर्ब्रह्मास्त्रादिविविधास्त्रैर्योजितैः प्रयुक्तैः ॥ ३८ ॥

विहायसा आकाशमार्गेणादर्शनमापेदे तथाच तत्रैव—

अथाकाशे पुनर्वाचमश्रौष बालकस्य वै ।
हुंहेति ह्रियमाणस्य नच पश्यामि राक्षसम् ॥

इति ॥ ३९ ॥

तदा ततः विजयमिति सर्वविजयशीलस्य तस्य निन्दात्वाति दुःसहेति भावः ॥ ४० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

स इति । सोऽर्जुनः शुचिशुद्धमम्बु जलम् उपस्पृश्याचम्य ३७॥
न्यरुणदिति न्यरुणदावृतवान् तदेवाह तिर्यगूर्ध्वमिति॥३८॥

तत इति । विप्रपत्न्याः सञ्जातः कुमारो रुदन्नेव मृतः अदर्शनमापेदे देहोऽपि नावशिष्टः इत्यर्थः ॥ ३९ ॥

तदेति । अहो मम मौढ्यं पश्यत योऽहं क्लीबस्य षण्ढस्यार्जुनस्य कत्थनं प्रगल्भभाषणं श्रद्दधे विश्रब्धवानस्म्यतोऽहं मूढः ॥ ४० ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सूतिकागारं सूतिकागृहं शरैर्न्यरुणत् आवृतवान् ॥ ३८ ॥
भगवदनुग्रहरहितस्य साधनबाहुल्येन किं फलमिति भावेनाह— तत इति ॥ ३९ ॥

तदनन्तरं किमभूदित्यत्राह—तदेति । अथार्जुनं विनिन्दति तदेति ॥ ४० ॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

ततोऽर्जुनस्य रक्षाप्रकारमाह—स उपस्पृश्येति । अर्जुनो महादेवबलेन सर्वं करिष्यामीति सर्वदेवाविष्टस्तथा करोति उपस्पर्शनं देवतासान्निध्यार्थं शुच्यम्भ इति मन्त्रपूतं देवताप्रार्थनार्थं नमस्कारः दिव्यास्त्राणां सर्वेषां संस्मरणं सर्वेष सर्वसम्बन्धार्थं सज्यं आरूढं मौर्व्यं गाण्डीवमादद इति तस्य इच्छामप्रीनिरूपिता नाना ब्रह्मास्त्रयोजितैः शरैरिति देवतान्तरप्रवेशाय ततः सर्वतः शरपञ्जरं चकार ततः पञ्जरस्थ एव कुमारः सञ्जातः विप्रपत्न्याः सकाशात् भूमिस्पर्शाभावात् कठिनमार्गेण यच्छामीति सखो ऽदर्शनमापेदे सशरीर एव आकाशमार्गेण गतः आकाशं भित्वा कालं मायां च भगवत्स्थाने गत्वा भगवता सह लोकालोकात्परभागे आविर्भूत इत्यर्थः । तदा भार्यया वृत्तान्ते कथिते भगवत्सन्निधाने समागत्य अर्जुनं विशेषेण निन्दन् क्षोभजनकं वाक्यमाह—सार्द्धाभ्यां निन्दति अर्जुनो निर्दिष्टः अहमेव भ्रान्तः तत्कथमित्याकाङ्क्षायामाह मौढ्यं पश्यत ममैव योऽहं क्लीबस्य कत्थनं श्रद्दधे यदि तस्मिन् शौर्यसम्भावनापि स्यात् तर्हि तत्र क्लीबत्वं न भवेत् ॥ ३७-४० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

महेश्वरं न तु कृष्णमिति तत्र सख्यादेव ब्राह्मणोपेक्षकत्वदोषदर्शनात् ॥ ३७—३८ ॥

सशरीरमिति । कृष्णेच्छया विना दिव्यास्त्राणि तानि सं महेश्वरस्य बालकस्य शरीरमपि रक्षितुं नाशकन्निति भावः ॥ ३९ ॥

कृष्णसन्निधाविति स्वगृहान्तिके रहसि तन्निन्दते रसालाभादिति भावः ॥ ४० ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

महेश्वरं नमस्कृत्य वक्ष्यमाणहेतुना गीतोपदेशाभावेन तदानीं श्रीकृष्णतत्वज्ञानाभावात् ॥ ३७ ॥

न्यरुणत् आवृतवान् ॥ ३८-४० ॥

भाषाटीका ।

जब स्त्री का प्रसव काल समीप आयो तब व्याकुल हो कर ब्राह्मण अर्जुन से बोला कि प्रजा को मृत्युते रक्षा करो ॥ ३७ ॥

वह अर्जुन पवित्रजल का आचमन कर और महादेव का प्रणामकर तथा दिव्य अस्त्रों का स्मरण कर प्रतिञ्चा चढे हुए गांडीव धनुष को लेता भया ॥ ३८ ॥

अनंतर नानाप्रकार के मन्त्रों से युक्तकिए बाणों से नीचे ऊपर तिरछे चारों तरफ बाणों का पंजर करदिया अर्जुन ने और उस पंजर से सूति का गृह को चारो तरफ से रोक दिया ॥ ३९ ॥

अनंतर विप्र की स्त्री के कुमार उत्पन्नभया और वह वारंबार रुदन करत उसी क्षण में आकाश मार्ग से शरीर सहित अदर्श को प्राप्त होगया ॥ ४० ॥

न प्रद्युम्नो नानिरुद्धो न रामो न च केशवः ।
यस्य शेकुः परित्रातुं कोऽन्यस्तदवितेश्वरः ॥ ४१ ॥
धिगर्जुनं मृषावादं धिगात्मश्लाघिनो धनुः ।
दैवोपसृष्टं यो मौढ्यादानिनीषति दुर्मतिः ॥ ४२ ॥
एवं शपति विप्रर्षौ विद्यामास्थाय फाल्गुनः ।
ययौ संयमनीमाशु यत्रास्ते भगवान् यमः ॥ ४३ ॥
विप्रापत्यमचक्षाणस्तत ऐन्द्रीमगात् पुरीम् ।
आग्नेयीं नैर्ऋतीं सौम्यां वायव्यां वारुणीमथ ॥
रसातलं नाकपृष्ठं धिष्ण्यान्यन्यान्युदायुधः ॥ ४४ ॥
ततोऽलब्धद्विजसुतो ह्यनिस्तीर्णप्रतिश्रुतः ।
अग्निं विविक्षुः कृष्णेन प्रत्युक्तः प्रतिषेधता ॥ ४५ ॥
दर्शये द्विजसूनूंस्ते माऽवज्ञात्मानमात्मना ।
ये ते नः कीर्तिं विमलां मनुष्याः स्थापयिष्यन्ति ॥४६॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

यस्य प्रजाः तत्तत्र ॥ ४१—४४ ॥

प्रत्युक्तो वारितः उपपत्तिभिः प्रतिषेधं कुर्वता ॥ ४५ ॥

मावज्ञ मा ऽवजानीहि ये निन्दन्ति त एव मनुष्या नः कीर्तिं स्थापयिष्यन्ति निश्चलां करिष्यन्ति पाठान्तरं तु छन्दोभङ्गभयादागन्तुकमिति ॥ ४६—४७ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

यस्य यं तस्याविताऽन्यः क ईश्वरोऽस्ति तेषां चतुर्णामेकात्मत्वाद्द्वितीयेश्वराभावादन्यो नास्त्येवेत्यर्थः ॥ ४१ ॥

दैवेन प्रारब्धकर्मणा ईश्वरेच्छया वा उपसृष्टं हृतं मौर्ख्यात् मूर्खत्वात् न केवलं मूर्खः दुर्मतिर्दुष्टबुद्धिरपीत्यर्थः । नाहं सङ्कर्षण इत्याद्युक्तेः ॥ ४२ ॥

भगवान् भूतानां प्रवृत्तिनिवृत्त्यादिवेत्ता तद्बालकनयनेऽपि योग्य इत्यर्थः । अत एवादौ तत्रैव गमनमिति भावः ॥ ४३ ॥

विप्रेतिसार्द्धकम् । अचक्षाणः अपश्यन्निति विद्याबलादेव तस्य तद्रूपस्यादृष्टेः सौम्यामुत्तरदिग्वर्तिसोमपुरीमिति वारुणवायव्यपुरीद्वयातिक्रमेण प्राक् तस्यागमनं सर्वद्रष्टुः सर्वत्रदेशभ्रमणशीलस्य तस्य निजादिपुरुषस्य पृच्छेच्छया ततश्च मया न दृष्ट तथाप्यन्विष्यतामित्युक्तेः पश्चात्क्रमेण वायव्यां वारुणीमपि ऐशान्यामगमनञ्च स्वगुरुणा श्रीशिवेन तद्वचनासम्भवात् धिष्ण्यानि श्रीब्रह्मादिस्थानानि उदायुधः उद्यतशस्त्र इत्यस्य पूर्वैरप्यन्वयः ॥ ४४ ॥

ततस्त्वलब्धद्विजसुतः सन् हि निश्चितं प्रतिषेधता निवारयता तन्मुमूर्षा प्रातिकूल्येनोक्तः ॥ ४५ ॥

दर्शय इति । समाश्वासनार्थं सामीप्ये वर्तमानत्वं मोऽस्माकमिति सख्येनात्मना सह तस्याभेदं द्योतयन्नाश्वासयति विमलां प्रतिज्ञाहान्यादिसर्वदोषरहितां मनुष्या इति देवादयो विदन्त्येव केवलं तत्त्वाज्ञानेन मनुष्या एवाज्ञात्वा निन्दका अपि नः कीर्तिं स्थापयिष्यन्तीत्यर्थः । प्रियसखमहात्म्यां कातर्येण जातभगवद्वाग्विकारावेशात् कवेरपि छन्दोभङ्गः येन इह कीर्तिं विमलां मनुष्या स्थापयन्ति न इति तु पाठान्तरं अन्यत्तैः यद्वा ये त इति सर्वपदेत्यर्थः ॥ ४६ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

यस्य यम् अविता रक्षकः ॥ ४१—४६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

प्रद्युम्नादय एव यत्परित्रातुं न शेकुः न प्रबभूवुः मदपत्यमवितुं त्रातुं को वा ईश्वरः समर्थः ॥ ४१ ॥

अतोऽर्जुनं धिक् स निन्द्य इत्यर्थः । "उभसर्वतसोः" इति द्वितीया तत्र हेतुर्मृषा वदतीति तथा तमात्मस्तुतिशीलस्यास्य धनुर्गाण्डीवमपि धिक् तत्र हेतुर्योऽर्जुनः दुष्टा मतिर्यस्य स तथाभूतस्सन् दैवोपसादितं लोकान्तरप्रापितं मौढ्यादानिनीषत्यानेतुमिच्छतीति ॥ ४२ ॥

एवमिति । एवं विप्रर्षौ शपति निन्दति सति स फाल्गुनोऽर्जुनः विद्यां सर्वलोकसञ्चारावहां योगविद्यामाश्रित्य तावत्संयमनीं यमपुरीं प्रति ययौ यत्रसंयमन्यां भगवान् यम आस्ते तां इत्यर्थः ॥ ४३ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तत्र विप्रस्यापत्यमचक्षाणोऽपश्यन् एवं क्रमेणैन्द्र्यादिपुरीस्तत्र तत्राचक्षाणो ययौ याम्या पुरी संयमन्या अन्यैव यमस्यैव सम्बन्धिनीदक्षिणादिक्स्था रसातलं पातालं नाकपृष्ठं नाकस्य स्वर्गस्य पृष्ठम् उपरितनं लोकं किं बहुना सर्वांश्च लोकान्वायुवच्चचार ॥ ४४ ॥

ततस्तत्र सर्वत्राप्यलब्धो द्विजसुतो येन सः अत एवानिस्तीर्णप्रतिज्ञः अत एवाग्निं प्रवेष्टुम् इच्छुः प्रतिषेधता सामोक्तिभिः प्रतिषेधङ्कुर्वता श्रीकृष्णेन प्रत्युक्तो निवारितः ॥ ४५ ॥

प्रतिषेधपूर्वकनिवारणप्रकारमेवाह—दर्शये इति। द्विजस्य सूनूंस्ते तुभ्यं दर्शये दर्शयिष्यामि आत्मनः स्वस्यावज्ञां मा कृथाः एवञ्चेत्तवामलां कीर्त्तिम् एते मनुष्याः स्थापयन्ति निश्चलां करिष्यन्ति दूषयन्तीति पाठान्तरं तदात्मनोवज्ञां माकृथाश्चेत्कीर्त्तिं दूषयिष्यन्तीत्यर्थः ॥ ४६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

यस्य ममार्भकं परित्रातुं न शेकुः सोऽहं कृष्णस्य सन्निधौ यस्य तव विकत्थनं अहङ्कथनं त्वां धिक् आत्मश्लाघिनः स्वस्य तव धनुश्च धिक् तदधिकेश्वरः तेभ्यः प्रद्युम्नादिभ्योऽधिकेश्वरश्च कः ॥ ४१ ॥

किमित्येवं निन्दसीति तत्राह—दैवेति। दैवेनोपसृष्टयोरुपद्रुतयोरावयोः पुत्रमानिनीषति आनेतुमिच्छति ॥ ४२ ॥

विद्यां मनुष्यागम्यगमनसामर्थ्यकरीम् ॥ ४३ ॥

नैर्ऋतीं निर्ऋतेर्धिष्ण्यमानां दिशं सौम्यं सोमस्य वायव्यां वायोः वारुणीं वरुणस्य ॥ ४४ ॥

अनिस्तीर्णप्रतिश्रुतः असाधितप्रतिज्ञः प्रत्युक्तः नेत्युक्तः प्रतिषेधता निषेधं कुर्वता कथं नेत्युक्त इति तत्राह—दर्शय इति। आत्मनैव स्वयं आत्मानं मावधीर्मा हिंसीः सन्धिरार्षः एतेन पुत्रादानादिना त्वन्निमित्तेन मानुष्यं मनुष्यलोकस्थां यथास्यात्तथा ईश्वरादपि महानुत्तमः ॥ ४५—४८ ॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

यत्क्लीबानामप्यसाध्यं तत् क्लीबः कथं कुर्यात् इत्याह—न प्रद्युम्न इति। यदि धनदानेन पुत्रा रक्षितुं शक्याः स्युः तर्हि प्रद्युम्नः पालयेत् यदि बलेन तदाऽनिरुद्धः यदि रत्युत्पादनेन तदा रामः यदि सृष्टिप्रलयाभ्यां तदा केशवः एतेषां पुरे वासात् शक्तौ सत्यां पालनमावश्यकं यदेतैरप्यशक्यपरिपालनं तेन ज्ञायते कश्चिदन्य एवोपायो नास्तीति तथा सति कोऽन्यस्त्रातुमधीश्वरः धर्मेण चेद्रक्षा तर्हि मय्येव रक्षितः स्यादिति चत्वारो गणिताः एवं साधनपञ्चकरहितोपि अर्जुनः यद्रक्षार्थमुक्तवान् तेनार्जुनं धिक् यतो मृषावादमिति तस्य धनुरपि धनुः ज्यारूपतां ननु धनुषः कोऽपराध इति चेत्तत्राह आत्मश्लाघिन इति य आत्मानं वृथैव श्लाघते ननु शूराः प्रतिजानते ततः कदाचित् प्रतिज्ञा पूरिता भवति कदाचिन्नैतावता प्रतिज्ञाकर्त्तुर्दोष इति चेत्तत्राह, दैवोपसृष्टमिति आनिनीषति आनेतुमिच्छति सन्दिग्धेऽर्थे प्रतिज्ञा युक्ता ननु निश्चित इति भावः। एवमप्रतिज्ञां कुर्वन् दुर्मतिः ॥ ४१—४२ ॥

ततो यज्जातं तदाह—एवं शपतीति। विद्यामास्थाय देवानां विद्यामैच्छिकगतिप्रदां ततः फाल्गुनः अतिनिर्भयः संयमिनीं यमस्य पुरं ययौ संयमिनी यातनाभूमिरूपा यमराजधानी च भवति तत्र द्वारकायां ब्राह्मणगृहे उत्पन्नः यातनास्थाने न गमिष्यतीति निश्चित्य यत्रास्ते भगवान् यम इत्युक्तं ततस्तत्राप्यदृष्ट्वा पूर्वादिक्रमेण दशदिशः अन्विष्टाः सौम्या उत्तरा दिक् रसातलं अधः नाकपृष्ठमुपरि अन्यानि गन्धर्वादीनां स्थानानि तस्य सर्वत्र निर्भयतया गमने हेतुः उदायुध इति ॥ ४३—४४ ॥

ततः किं कृतवान् इत्याकाङ्क्षायामाह—तत इति ॥ न लब्धो द्विजसुतो येन अत एव न निस्तीर्णं प्रतिश्रुतं प्रतिज्ञा यत्र ततो द्वितीयां प्रतिज्ञां कर्त्तुमुद्यतः अग्निं विविक्षुः तामपि प्रतिज्ञां कर्त्तुं न शेकुः इत्याह कृष्णेन प्रत्युक्त इति अग्निप्रवेशं प्रतिषेधता प्रत्युक्तः प्रतिकूलतया उक्तः ॥ ४५ ॥

तदेव भगवद्वचनमाह—दर्शये द्विजसूनून् इति। ब्राह्मणपुत्रांस्तुभ्यं दर्शयिष्यामीति ततो हेतोः आत्मनैव स्वस्यावज्ञां मा कृथाः अपकीर्त्तिशङ्कया तव मरणं तन्मृते अधिकाप्यपकीर्त्तिर्भविष्यति मदुक्तप्रकारेण चेज्जीविष्यसि तर्ह्येतेन जीवनेन ते कीर्त्तिं विपुलामपि मनुष्याः स्थापयिष्यन्तीत्यर्थः। मनुष्यदृष्टिः दृष्टपराः न परमार्थं जानन्ति अतः पुत्रानयनं दृष्ट्वा कीर्त्तिमेव वक्ष्यन्तीत्यर्थः एवमुक्त्वा भगवान् अप्रतिहतः सर्वज्ञः तेनैव सह स्वस्य गरुडध्वजं रथं दिव्यं आधिदैविकरूपं स्वभावतो वा अलौकिकं पश्चिमां दिशमभिप्रस्थितः ॥ ४६—४७ ॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

यस्य यम् ॥ ४१—४३ ॥

सौम्यामुत्तरदिग्वर्त्तिनीं चन्द्रपुरीं ऐशानीमगमनं स्वगुरुणा शिवेन तत्रयनासम्भवमननात् ॥ ४४ ॥

प्रत्युक्तः वारितः प्रतिषेधं कुर्वता ॥ ४५ ॥

मावज्ञ मावजानीहि ननु मावारय लोका मां कथं निन्दिष्यन्ति तत्राहुः ये निन्दिष्यन्ति ते एव नः आवयोः कीर्त्तिं स्थापयिष्यन्ति यद्वा येऽपि मनुष्याः आवयोः कीर्त्तिमेव स्थापयिष्यन्ति येनेह कीर्त्तिं विमलां मनुष्याः स्थापयन्ति न इति पाठान्तरं छन्दोभङ्गभयादागन्तुकमिति स्वामिचरणाः ॥ ४६—४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

यस्य यं परित्रातुं प्रद्युम्नो न शशाक अनिरुद्धो न शशाक न चान्य उग्रसेनादिः शशाक तं परित्रातुं क ईश्वरः समर्थः न कोपि भगवत्प्रभावं संस्मृत्याह—केशवः अपितेति पदयोजना ॥ ४१ ॥

इति सम्भाष्य भगवानर्जुनेन महेश्वरः।
दिव्यं स्वरथमास्थाय प्रतीचीं दिशमाविशत् ॥ ४७ ॥
सप्तद्वीपान् सप्तसिन्धून् सप्तसप्तगिरीनथ।
लोकालोकं तथाऽतीत्य विवेश सुमहत्तमः ॥ ४८ ॥
तत्राश्वाः शैब्यसुग्रीवमेघपुष्पबलाहकाः।
तमसि भ्रष्टगतयो बभूवुर्भरतर्षभ ॥ ४९ ॥
तान् दृष्ट्वा भगवान् कृष्णो महायोगेश्वरेश्वरः।
सहस्रादित्यसङ्काशं स्वचक्रं प्राहिणोत्पुरः ॥ ५० ॥
तमः सुघोरं गहनं कृतं महत् विदारयद्भूरितरेण रोचिषा।
मनोजवं निर्विविशे सुदर्शनं गुणच्युतो रामशरो यथा चमूः ॥ ५१ ॥
द्वारेण चक्रानुपथेन तत्तमःपरं परं ज्योतिरनन्तपारम्।
समश्नुवानं प्रसमीक्ष्य फाल्गुनः प्रताडिताक्षोऽपिदधेऽक्षिणी उभे ॥ ५२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

दैवोपसृष्टं देवेन लोकान्तरं नीतम् ॥ ४२-४५ ॥

माऽवधी माऽवजानीहि ॥ ४६ ॥

भाषा टीका।

तवतो वह ब्राह्मण श्रीकृष्ण सन्निधि में अर्ज्जुन की निन्दा करता बोला कि मेरे मूर्खपने को सब कोई देखो मैंने नपुंसक अर्ज्जुन के मिथ्या संभाषण में विश्वास कर लिया ॥ ४१ ॥

जिस की रक्षा करने को प्रद्युम्न समर्थ नहि भया अनिरुद्ध समर्थ नहि भया बलदेवजी समर्थ नहि श्रीकृष्ण समर्थ नहि भए जब एहि समर्थ नहि भए फिर अन्य कौनसा ईश्वर है कि जो रक्षा करै ॥ ४२ ॥

इस वास्ते मिथ्यावादी अर्ज्जुन को धिक्कार है और अपनी बडाई करने वारे इस अर्ज्जुन के गांडीव धनुष को भी धिक्कार है ईश्वरने जिसको अन्य पहुचा दिया उस को जो यह दुर्गति, अर्ज्जुन मूर्खपने से लाने की इच्छा करता है ॥ ४३ ॥

इस प्रकार जब ब्राह्मण निन्दा करने लगा तब अर्ज्जुन दिव्य विद्या कोधा का धारण कर जहां भगवान् यमराज रहते हैं उस यमराज पुरी को शीघ्रहि जाता भया ॥ ४४ ॥

वहां ब्राह्मण की संतान को नहि देखा तब तो वहां से अर्ज्जुन इन्द्र की पुरी को गया इसी प्रकार अग्नि की पुरी को, नैर्ऋत की पुरी को, चन्द्रमा की पुरी को, वायु की पुरी को, वरुण की पुरी को, अनंतर रसातल में, स्वर्ग में, और भी जहां जाने की गम नहि है, उन ब्रह्मादिकों के स्थानो में भी आयुध उठाये अर्ज्जुन गया ॥ ४५ ॥

जब सर्वत्र खोज करने से भी अर्जुन को ब्राह्मण का पुत्र न मिला तब जो प्रतिज्ञा करी हि उस का निस्तार किया नहि इस लिये अर्जुन ने अग्नि में प्रवेश करने को इच्छा करी उस समय युक्तियों से निवारण करने वारे श्रीकृष्ण ने अर्जुन को निवारण करदिया ॥ ४६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

सप्तसप्तसङ्ख्या गिरयो येषु द्वीपेषु तान् ॥ ४८—५० ॥

कृतमिति प्रकृतिपरिणामरूपं नालोकाभावमात्रम् ॥ ५१ ॥

चक्रानुपथेन चक्रमनुगतेन द्वारेण तत्तमःपरं तस्मात्तमसः परं दूरे वर्तमानं श्रेष्ठं भागवतं ज्योतिः समश्नुवानं व्याप्नुवत्प्रसमीक्ष्य प्रताडिताक्षो नेत्रे न्यमीलयदिति ॥ ५२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

सम्यक् प्रतिज्ञापूर्वकं भाषित्वा भगवान् अत एवेश्वरः इच्छामात्रेण बालाद्यानयनसमर्थोऽपि दिव्याश्वं रथमेवास्थाय अधिष्ठाय प्रतीचीं दिशमेवाविशदित्यर्जुनयत्तत्कौतुकार्थं ततोऽप्यधिका नरवीरवर्य्यलीला चमत्कारिविर्व्याप्तिर्यैव प्रकटिता तत्वैश्वर्य्यमपि ज्ञापितम् अत एव परमदेवलीलस्य स्वाविर्भावविशेषस्याग्रे यज्ञाञ्जलित्वादिकमपि प्रपञ्चयितव्यं साक्षाद्वैकुण्ठागतानामप्यश्वानां तमसि भ्रष्टगतित्वादिकं चक्रादिनैव तदादिप्रतिकारश्चेति ज्ञेयं दिव्यं स्वरथमितिपाठः क्वचित् ॥ ४७ ॥

च अपि सप्तसिन्धून् सप्तसमुद्रव्यवहितानपि सप्तसिन्धूनिति पाठः स्पष्टः अथानन्तरं लोकालोकपर्वतञ्च ॥ ४८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

आश्चर्येण सम्बोधयति हे भरतर्षभेति ॥ ४९ ॥

तान् तथाभूतान् यतो भगवानतो योगेश्वरेश्वरः तथाभूतोपि पूर्वं चक्रनामकमस्त्रमेव प्राहिणोत् न तु स्वतेज आदिकं प्रकटयामासेत्यर्थः ॥ ५० ॥

गहनं निबिडं महत् विततञ्च यथा स्यात्तथा कृतं परमेश्वरेणैव सम्पादितं तमोभूमिगतामित्यर्थः। तथोक्तं हरिवंशे पङ्कभूतं हि तिमिरं स्पर्शाद्विज्ञायते ऽनघ इत्यादि ॥ ५१ ॥

तच्चक्रानुपथेनैव द्वारेण सप्तावरणभेदेन तमसः प्रकृतेः परं पारभूतं तत् वेदान्तादिप्रसिद्धं परं परब्रह्मभूतं भागवतं ज्योतिः प्रसमीक्ष्य चिच्छक्तिमयतया साक्षाच्चक्षुषा दृष्ट्वा परत्वमेवाह अनन्तेति। तत्रैव हेतुः सम्यगश्नुवानं सदा सर्वव्यापकं तत्रादर्शनन्तु मायावृतदृष्टित्वादेवेतिभावः तथा च हरिवंशे श्रीमदर्जुनवाक्यं

"ततस्तेजःप्रज्वलितमपश्यं तत्तदम्बरे।
सर्वलोकं समाविश्य स्थितं पुरुषविग्रहम्" इति ॥

तच्चरितसमाप्तौ तत्प्रश्नानन्तरं श्रीकृष्णोपदेशश्च—

"ब्रह्मतेजोमयं दिव्यं महद्यद्दृष्टवानसि।
अहं स भरतश्रेष्ठ मत्तेजस्तत्सनातनम् ॥
प्रकृतिः सा मम परा व्यक्ताव्यक्ता सनातनी।
तां प्रविश्य भवन्तीह मुक्ता योगविदुत्तमाः ॥
सा साङ्ख्यानां गतिः पार्थ योगिनाञ्च तपस्विनाम्।
तत्परं परमं ब्रह्म सर्वं विभजते जगत् ॥
ममैव तद्घनं तेजो ज्ञातुमर्हसि भारत" इति।

अत्राहं स इति तेजस्तेजस्विनोरभेदविवक्षया प्रकृतिः सा मम परेति तत्तत्तत्स्वरूपशक्तिरूपत्वात् परेति मायातीतत्वात् व्यक्ताव्यक्तेति सर्वमूलत्वात् अत एव तामित्यादि ममैवेत्येवकारस्तन्मध्यस्थेनाप्यर्जुनेन स्वाभेदापेक्षयेति ज्ञेयम् ॥ ५२ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

इतीति। सम्भाष्य सम्भाषणेन प्रतिबोध्य भगवान्महेश्वरः श्रीकृष्णोऽर्जुनेन सह स्वकीयं रथमारुह्य पश्चिमां दिशमाविशत् ॥ ४७ ॥

सप्तद्वीपानिति। सप्तसप्तगिरयो येषु तान् द्वीपांश्च ततो लोकालोकं पर्वतमतीत्य सुमहन्निबिडं तमोऽन्धकारं विवेश ॥ ४८ ॥

तत्र तमसि सैन्यादयोऽश्वाः प्रतिहतगतयो बभूवुः हे भरतर्षभ ॥ ४९ ॥

तानिति। तान् भ्रष्टगतीनश्वान् दृष्ट्वा श्रीकृष्णः स्वचक्रं सुदर्शनं पुरोऽश्वानां पुरतः प्राहिणोत्प्रायुङ्क्त ॥ ५० ॥

तम इति। गहनं दुष्प्रवेशं सुघोरं भयङ्करं महदपारं कृतं भगवतैव सृष्टं तमो भूरितरेण बहुतरेण स्वतेजसा विदारयन्मनोजवं सुदर्शनं विवेश यथा रामस्य दाशरथेः शरो गुणान्मौर्व्याश्च्युतः चमूं रावणसेनां विवेश तद्वत् ॥ ५१ ॥

द्वारेणेति चक्रानुपथेन चक्रमनुगतेन द्वारेण तस्मात्तमसः परं दूरे वर्त्तमानं भागवतमनन्तपारं ज्योतिः समश्नुवानं प्राप्नुवच्चक्रं प्रसमीक्ष्य फाल्गुनोऽर्जुनः प्रताडिते प्रतिहते अक्षिणी दृष्टी यस्य सः उभे अप्यक्षिणी पिदधे न्यमीलयत् ॥ ५२ ॥

———

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

गगनं छादयतीति गगनच्छदं गुणच्युतः मौर्व्यामुक्तः ॥ ५१ ॥
चक्रानुपथे सुदर्शनगतानुकूलमार्गे कृतद्वारेण समश्नुवानं गच्छन्तं यदुत्तमं प्रसमीक्ष्य आक्षिणी पिदधे इत्यन्वयः। अनन्तपारं अन्तपारवर्जितम् ॥ ५२ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततो बहुदूरे गत इत्याह—सप्तद्वीपानिति। जम्बूद्वीपादिसप्तद्वीपान् लवणादीनि सप्तसमुद्रान् प्रत्येकं द्वीपेषु सप्तसप्तगिरीन् मर्यादापर्वतान् उल्लङ्घ्य अथ सर्वान्ते सुवर्णभूम्यनन्तरं लोकालोकपर्वतमप्यतीत्य तत्परभागे वर्त्तमानं तमः प्रविष्टवान् ॥ ४८ ॥

तत्र तमसो माहात्म्यमाह—तत्राश्वा इति। भगवतश्चक्रस्यारोपि प्रसिद्धा अश्वास्तमसि भ्रष्टगतयो बभूवुः विश्वासार्थं सम्बोधनं तदा भगवान् अश्वानां तदगमनं दृष्ट्वा 'महायोगीश्वराणां ब्रह्मादीनामपि ईश्वरः समर्थः सर्वथा गन्तव्यमेवेति निश्चित्य सहस्रादित्यसङ्काशं स्वचक्रं सुदर्शनमग्रे प्राहिणोत् ॥ ४९-५० ॥

ततस्तस्मिन्नन्धकारे सुदर्शनस्य गतिमाह—सुघोरं तमः विदारयन् निर्विविश इति सम्बन्धः तमसः स्पर्शोपि निराकरणार्थं कठिन इति वक्तुं सुघोरत्वमुक्तं अतिभयानकमित्यर्थः। गहनमतिगम्भीरं महत्कृतं आलोकापेक्षयापि अधिकपरिमाणतो बलाच्च आगमनप्रतिषेधार्थं वा महत्कृतं नन्वेतादृशमन्धकारं कथं दूरीकृत्य निर्विशेत्तत्राह—भूरितरेण रोचिषेति। ततोप्याधिकेन तेजसा ननु भगवान् देशे वर्त्तते इति गमनेपि यावज्जन्म स्यात् ततो व्यर्थः प्रयास इति चेत्तत्राह मनोजवमिति ननु गन्तव्यदेशः कस्मिन् भागे वर्त्तत इति सुदर्शनस्य ज्ञानाभावात् तस्य कथमग्रे तद्देशागमनमित्याशङ्क्य दृष्टान्तमाह-गुणच्युत इति। यथा दाशरथेः बाणः यं देशमुद्दिश्य त्यज्यते तमेव देशं प्राप्नोति अचेतनोपि चेतनवत् प्रेरणा गतिसामर्थ्यात् रेखामात्रमपि नान्यत्र गच्छति तथा यदैव भगवान् सुदर्शनं प्रक्षिप्तवान् तदा तद्देशसम्मुखमेव, चिक्षेपेति यथा शरः गुणान्निर्मोकमेवापेक्षते तथात्रक्रमपि हस्तान्निर्मोकमेवापेक्षते इष्टदेशगमनार्थं नान्यदित्यर्थः ॥ ५१ ॥

ततः चक्रेणैव मार्गः कृतः इति तेनैव मार्गेण रथो गत इत्याह द्वारेणेति। चक्रानुपथेन द्वारेण चक्रनिर्मितमार्गेणैव तादृशमपि तमः कर्मपरमुत्कृष्टं ज्योतिर्यस्य तादृशं सुदर्शनं परं ब्रह्म तेजोरूपमनन्तपारमित्युभय विशेषणं तमस्तेजश्च उभयं सम्यगश्नुवानं अग्रपश्चाद्भावेन तमसा तेजसा च व्याप्तं रथं

ततः प्रविष्टः सलिलं नभस्वता बलीयसैजद्बृहदूर्मिभूषणम्।
तत्राद्भुतं वै भवनं द्युमत्तमं भ्राजन्मणिस्तम्भसहस्रशोभितम्॥ ५३॥
तस्मिन् महाभीममनन्तमद्भुतं सहस्रमूर्धन्यफणामणिद्युभिः।
विभ्राजमानं द्विगुणोल्वणेक्षणं सिताचलाभं शितिकण्ठजिह्वम्॥ ५४॥

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततः फाल्गुनः विद्युत्विचारकोपि प्रकर्षेण ताडिताक्षो विद्युता प्रतिहताक्ष इव भीतो जात इत्यर्थः। अगाधे मार्गे गच्छन् अग्रे पश्चाच्च रथदर्शनार्थञ्च चलदृष्टिः उभयोस्तुल्यत्वं दृष्ट्वा महान्धकारे विद्युदीव मायात् अक्षिणी अपिदधे मुद्रितवान् अनेन अर्जुनस्य ज्ञानगमनेशङ्कापि परिहृता॥ ५२॥

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तमसि भ्रष्टगतय इति वैकुण्ठीयानामश्वानाकुणातीतानामपि तेषां यत्तमसिभ्रष्टगतित्वं तद्भगवतो नरलीलत्ववत्तेषामप्यश्वलीलत्वमर्जुनादीनां द्रष्टृश्रोतृणां चमत्कारपोषणार्थमेव ज्ञेयम्॥ ४९—५०॥

गहनं निबिडं कृतं प्रकृतिपरिणामरूपम्॥ ५१॥

चक्रानुपथेन चक्रमनुगतेन द्वारेणेति चक्रेणैव सप्तावरणभेदो ज्ञेयः यत्तदनन्तरं गच्छन् फाल्गुनः तमःपरं तमसः प्रकृतेः परं प्रकृत्यावरणादूर्ध्वमात् परमित्यर्थः। परं श्रेष्ठं चिन्मयं ज्योतिः समश्नुवानमतिव्यापकं वीक्ष्य तेन प्रताडिताक्षो नेत्रे न्यमीलयत् तथाच हरिवंशे एतच्चरितसमाप्तौ—

"ब्रह्मतेजोमयं दिव्यं महद्यद्दृष्टवानसि।
अहं स भरतश्रेष्ठ मत्तेजस्तत्सनातनम्॥
प्रकृतिः सा मम परा व्यक्ताव्यक्ता सनातनी।
तां प्रविश्य भवन्तीह मुक्ता योगविदुत्तमाः॥
सा साङ्ख्यानां गतिः पार्थ योगिनाञ्च तपस्विनाम्।
तत्परं परमं ब्रह्म सर्वं विभजते जगत्॥
ममैव तद्धनं तेजो ज्ञातुमर्हसि भारत॥ इति।

अत्र मत्तेज इति तद्ब्रह्म मत्तेजोपि अहं स इति सोऽहमेव तद्ब्रह्मतेजस्तेजस्विनोरभेदात् प्रकृतिः सा मम परेति तच्चिन्मयं ब्रह्म ममैव स्वरूपशक्तिः परेति मायातीता व्यक्ता चिन्मयनेत्रग्राह्या अन्यथा अव्यक्तेत्यर्थः॥ ५२॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

द्विजानां तु का कथा येते ये केचिदपि मनुष्या नोऽस्माकं कीर्तिं स्थापयिष्यन्ति॥ ४७॥

सप्तसप्त पञ्चमस्कन्धासिद्धाः गिरयो येषु तान् सप्तद्वीपान् सुमहत् अति निबिडम् तमोऽन्धकारम्॥ ४८—४९॥

पुरः अश्वानामग्रतः प्राहिणोत्प्रायुङ्क्त॥ ५०॥

सुघोरम् अतिभयङ्करम् गहनं दुर्गमम् महाविबिडम् कृतं भगवतैव सृष्टम् न त्वालोकाभावमात्रम् रामस्य दाशरथेः शरः यथा चमू राक्षससेनाः विवेश तद्वत्॥ ५१॥

चक्रानुपथेन चक्रमनुगतेन द्वारेण छिद्रेण तमसः परं तस्मात्तमसः परे दूरे वर्तमानं परं श्रेष्ठं समश्नुवानं व्याप्नुवत् अनन्तपारं ज्योतिः फाल्गुनः प्रसमीक्ष्य प्रताडिताक्षो नेत्रे न्यमीलयत्॥ ५२॥

भाषाटीका।

और श्रीकृष्ण ने समझाया कि अपने से अपनी अवज्ञा तू मतकरे ब्राह्मण पुत्रों को मैं तेरे अर्थ दर्शाय दूंगा और जो तेरी निन्दा करते हैं वेहि हमारे मनुष्य तेरी विमल कीर्त्ति को स्थिर करवेंगे॥ ४७॥

इस प्रकार सम्भाषण कर निरवधि ज्ञानादि गुण सम्पन्न सर्व नियन्ता श्रीकृष्णचन्द्र अर्जुन सहित अपने दिव्य रथ पर विराजमान होकर पश्चिम दिशा में गए॥ ४८॥

सात सात मर्य्यादा पर्वत वारे सातों द्वीपन को सातों समुद्रन को तथा लोकालोक पर्वत को उल्लंघन कर अति सघन अन्धकार में प्रवेश करते भए॥ ४९॥

हे भरतर्षभ! भगवान् के शैव्य सुग्रीव मेघपुष्प बलाहक चारों अश्व उस अन्धकार में गति से भ्रष्ट होगए॥ ५०॥

महायोगेश्वरों के भी ईश्वर सर्व प्रकार के उपायों में समर्थ श्रीकृष्ण भगवान् उन घोडेन को नहिं चलते देख कर हजार सूर्योंके सदृश प्रकाश युत अपने सुदर्शन चक्रको रथ के आगे कर देते भए॥ ५१॥

गम्भीर: अति भयंकर माया कृत अपार अन्धकार को अपने अत्यन्त तेज से विदीर्ण करत मन के समान वेग युत सुदर्शन चक्र इस प्रकार प्रवेश करता भया कि जैसे शार्ङ्ग धनुष की प्रतिञ्चासे छूटा रामचन्द्रजी का बाण रावण की सेना में प्रविष्ट भया॥ ५२॥

श्रीधरस्वामिकृतभावार्थदीपिका।

एजन्तः उच्छलन्तो बृहन्तो महान्त ऊर्मयो भूषणं यस्य तत् तत्र सलिले भवनं महाकालपुरम् द्युमत्तमं द्युतिमत्सु श्रेष्ठम्॥ ५३॥

ददर्श तद्भोगसुखासनं विभुं महानुभावं पुरुषोत्तमोत्तमम् ।
सान्द्राम्बुदाभं सुपिशङ्गवाससं प्रसन्नवक्त्रं रुचिरायतेक्षणम् ॥ ५५ ॥
महामणिव्रातकिरीटकुण्डलप्रभापरिक्षिप्तसहस्रकुन्तलम् ।
प्रलम्बचार्वष्टभुजं सकौस्तुभं श्रीवत्सलक्ष्म्या वनमालयावृतम् ॥ ५६ ॥
सुनन्दनन्दप्रमुखैः स्वपार्षदैश्चक्रादिभिर्मूर्तिधरैर्निजायुधैः ।
पुष्ट्या श्रिया कीर्त्यजयाऽखिलर्द्धिभिर्निषेव्यमाणं परमेष्ठिनां पतिम् ॥ ५७ ॥
ववन्द आत्मानमनन्तमच्युतो जिष्णुश्च तद्दर्शनजातसाध्वसः ।
तावाह भूमा परमेष्ठिनां प्रभुर्बद्धाञ्जली सस्मितमूर्जया गिरा ॥ ५८ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

सहस्रं मूर्ध्नि भवाः फणास्तासु मणयस्तेषां द्युतिभिः द्विसहस्रनेत्रैरूर्जितं स्फटिकगिरिसङ्काशम् शितिकण्ठजिह्वम् कण्ठाश्च जिह्वाश्च कण्ठजिह्वाः शितयो नीलाः कण्ठजिह्वाः यस्य तम् ॥ ५४ ॥

तद्भोगसुखासनं तस्यानन्तस्य भोगो देहः सुखकरमासनं यस्य तम् ॥ ५५ ॥

महान्तो मणिव्राता येषु तेषां किरीटकुण्डलानां प्रभा तया परिक्षिप्ताः सर्वतः स्फुरन्तः सहस्रमपरिमिताः कुन्तला यस्य तम् ॥ ५६ ॥

कीर्त्यजया कीर्तिसहितया अजया अखिलर्द्धिभिरणिमादिविभूतिभिर्मूर्तिधराभिः ॥ ५७ ॥

ऊर्जया ऊर्जितया गिरा ॥ ५८ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततस्तत्रैव वर्तमानं सलिलं विरजानदीरूपं प्रधानपरमव्योम्नोरन्तरे विरजानदीतिपाद्मोत्तरखण्डात् प्रविष्टः फाल्गुन इति पूर्वतोऽनुषञ्जनीयं गमस्त्वता हेतुना अद्भुतं सर्वलोकातीतं वै प्रसिद्धौ द्युमत्तममिति पूर्वोक्ततेजसोऽप्याधिक्यमभिप्रेतं तत्रैव हेतुः भ्राजतां सदा स्वयमेव प्रकाशमानानां मणिमयस्तम्भानां सहस्रेण शोभितम् एवं भवनस्यातिविस्तारश्लोकः तैरदृष्टं महाकाल[रूप]पुरश्चैतं मृत्युञ्जयतन्त्राल्लभ्यते यतः—

ब्रह्माण्डस्योर्ध्वतो देवि ब्रह्मणः सदनं महत् ।
तदूर्ध्वे देवि विष्णूनां तदूर्ध्वे रुद्ररूपिणाम् ।
तदूर्ध्वे च महाविष्णोर्महादेव्यास्तदूर्ध्वगम् ।
कालातिकालयोश्चाथ परमानन्दयोस्ततः ॥
पारे पुरी महादेव्याः कालः सर्वभयावहः ।
ततः श्रीब्रह्मपीयूषवारिधिर्नित्यनूतनः ॥
तस्य तीरे महाकालः सर्वग्राहकरूपधृक् ।
तस्यान्तरे समुद्रासीरत्नद्वीपः शिवाह्वयः ॥

इत्यादि—

ध्यायेत्तत्र परानन्दं रामोपाख्यं परं महत् ।
सान्द्रवृन्दावने रम्ये मोहयन्तमनारतम् ॥
वल्लवीवल्लभं कृष्णं गोपकन्यासहस्रशः ।

इत्येवमन्तं बहुविस्तृतमस्ति ॥ ५३ ॥

तस्मिन्निति चतुष्कं । महान् फणादिभिरपरिच्छिन्नो भोगो देहो यस्य तम् अतोऽद्भुतं लोकातीतं इति कारणार्णवशायिनः शेषादपि विशेष उक्तः सहस्रशब्दोऽसङ्ख्यपरः मूर्धन्याः मूर्धनि भवाः विशेषेण तद्भवनादप्याधिक्येन भ्राजमानम् ॥ ५४ ॥

ददर्श फाल्गुन इत्येव प्रकरणलब्धं तस्यैव चमत्कृतेर्वर्णनीयत्वात् तस्य भोग एव सुखकरमासनं यस्य तञ्च ददर्श विभुं स्वतेजसा तत्तत्सर्वव्यापकं यतो महान् अपरिच्छिन्नोऽनुभावः प्रभावो यस्य तं कुतः पुरुषेषु त्रिषूत्तमः श्रीविष्णुस्तेभ्य उत्तमो गर्भोदशाय्यादिपुरुषो वा तस्मादप्युत्तमं सान्द्रेति सार्द्धं तैर्व्याख्यातम् ॥ ५५—५६ ॥

स्वैः असाधारणैः पार्षदैः मूर्तिधरैः स्वमस्तकोपरि तत्तच्चिह्नशोभितदेहैः निजैः स्वाभाविकैरायुधैः आदिशब्देन शङ्खगदाखड्गचर्मशरचापपाशाः अष्टभुजत्वात् श्रीर्माहिषी पुष्ट्याद्याः शक्तयो मूर्तिमत्य एव परमेष्ठिनां पतिं द्विपरार्द्धान्तं मुक्तानां ब्रह्मणां तत्र कूटीभूतानां पतिं मुक्तिप्रदत्वात्तस्य पदस्य ॥ ५७ ॥

आत्मानमिति । श्रीगोवर्द्धनपूजायां "तस्मै नमो व्रजजनैः सह चक्रेऽत्मनाऽऽत्मने" इतिवल्लीलाकौतुकमात्रार्थं तत्तदिति ज्ञापितम् अनन्तमित्यपरिच्छिन्नतेजोमयत्वादिना अच्युत इति तत्रापि स्वयं भगवत्त्वेन तत्रापि व्यापकत्वादिच्युतिरहितः स्वीयनरलीलाच्युतिरहितोऽपीत्यर्थः । जिष्णुस्तु तादृशोऽपि तस्य दर्शनाज्जातसाध्वसः सन् ववन्दे तावदङ्गीकृतात्मनरलीलो श्रीकृष्णोऽसौ ब्रह्माक्रूरादीन् प्रति तादृशवैभवानि कदाचिदेव प्रकाशयति-गोवर्द्धनपूजनलीलायामिव सदा तु कौतुकेन सतावदङ्गीकृतात्मनरलील एव तदनुसारेणार्जुनाद्या अपीति भावः । स तु भूमा श्रीगोवर्द्धनबलिभुग्वत्ततोऽपि दर्शितात्ममहत्त्वः तत्सहायाश्च तादृशा इत्याह—परमेष्ठिनां प्रभुरिति । अत ऊर्जया श्रीकृष्णेच्छानुसारेणैवार्जुनस्य स्वचाञ्चल्यादराद्युत्पत्तये ऊर्जितया सभागलज्यवेत्यर्थः । सस्मितमिति स्वप्रसादव्यञ्जनार्थम् ॥ ५८ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तत इति। ततस्तमसः परतो जलं प्रविष्टः कथम्भूतः बलीयसा प्रचण्डेन नभस्वता वायुना एजन्तः उच्छलन्तः बृहन्तः ऊर्मयस्तरङ्गाः तैर्भीषणं भूषणमितिपाठान्तरं तदा ऊर्मय एव भूषणं यस्य तथाभूतं तत्र जलस्याधस्तादद्भुतं भवनं प्रविष्ट इत्यनुषङ्गः कथम्भूतं द्युमत्तमं द्युतिमच्छ्रेष्ठं भ्राजतां मणिमयस्तम्भानां सहस्रेणोपशोभितम् ॥ ५३ ॥

तस्मिन्निति। तस्मिन् भवने तं प्रसिद्धमनन्ताख्यं महान्तमहिं ददर्शेत्युत्तरेण सम्बन्धः कथम्भूतमद्भुतं विस्मयनीयं सहस्रं मूर्द्धानः फणाः तेषु भवास्तेषां महतां मणीनां द्युभिर्दीप्तिभिर्विशेषेण भ्राजमानं द्विगुणैः द्विसंहस्रसङ्ख्यैरीक्षणैरुल्बणमुग्रं सिताचलः स्फटिकपर्वतः तस्याऽऽभा इवाभा यस्य तं शितिः नीलः कण्ठो जिह्वाश्च यस्य तं इति ॥ ५४ ॥

ददर्शेति। तस्यानन्तस्य भोगः शरीरमेव सुखासनं यस्य तं विभुं भगवन्तं ददर्श कथम्भूतं महाननुभावः प्रभावो यस्य तं पुरुषोत्तमानां ब्रह्मादीनामप्युत्तमं सान्द्रस्याम्बुदस्येवाभा यस्य शोभने पिशङ्गे वाससी यस्य प्रसन्नं वक्त्रं च यस्य रुचिरे सुन्दरे आयतेचक्षणे यस्य तम् ॥ ५५ ॥

महान्तो मणिव्राता येषु तेषां किरीटकुण्डलानां प्रभया परिक्षिप्ताः सर्वतः स्फुरन्तः अनन्ताः कुन्तलाः यस्य तं प्रलम्बा दीर्घाश्चारवो वर्तुलाश्चाष्टौ भुजा यस्य शोभनः कौस्तुभो यस्य श्रीवत्सं लक्ष्म चिन्हं यस्य तं वनमालया अलङ्कृतञ्च ॥ ५६ ॥

सुनन्दनादिभिः पार्षदैर्विग्रहधरैश्चक्रादिभिः स्वासाधारणैरायुधैश्च पुष्ट्यादिभिः शक्तिभिः मूर्तिमतीभिस्तथाऽखिलर्द्धिभिरणिमादिभिः सेव्यमानं परमेष्ठिनां ब्रह्मादीनां पतिम् ॥ ५७ ॥

ववन्द इति अजं हेयप्रतिभटं स्वस्मादनन्यं तमच्युतो ववन्द ननाम तथा जिष्णुरर्जुनश्च तस्य भगवतो दर्शनेन जातं साध्वसं भक्तिपूर्वकभयं यस्य सः ववन्दे ततो बद्धाञ्जली तौ कृष्णार्जुनौ प्रति परमेष्ठिनां पतिः प्रभुर्भगवान् ऊर्जितया गम्भीरया गिरा प्राह ॥ ५८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ततः सलिलं प्रविश्य गतो भवनं ददर्शेत्यन्वयः बलीयसा नभस्वता वायुना एजद्भिः कम्पमानैर्बृहद्भिरूर्मिभिः तरङ्गैर्भीषणं तत्र सलिले ॥ ५३ ॥

तस्मिन् भवने अनन्तं ददर्श सिताम्बराभं श्वेताकाशवत् शोभमानं शितिः नीलः कण्ठो यस्य सः शितिकण्ठः जिह्वगः भुजगास्तम् ॥ ५४ ॥

तस्यानन्तस्य भोगे सुखमासनं यस्य स तथा तद्भोगसुखासनः तम् ॥ ५५-५६ ॥

परमेष्ठिनां ब्रह्मणां पतिम् ॥ ५७ ॥

अच्युतः कृष्णः विष्णुरर्जुनः ॥ ५८ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

ददर्श तद्भोगसुखासनमित्यादिप्रकरणम ॥ ५५ ॥

एतद्वाक्यव्याख्यानान्तरप्रघट्टके ॥ ५६—६६ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

ववन्द आत्मानमित्यादि। अच्युतः श्रीकृष्णः आत्मानं देहं मूर्त्तिविशेषम् अदर्शीति यावत् कीदृशम् अनन्तं अन्तर्हितं अशात्वेपि तथात्वं स्वाभाविकमेव जिष्णुश्च ववन्दे कीदृशः तद्दर्शनजातसम्भ्रमः तस्य श्रीकृष्णकृतनमस्कारस्य दर्शनेन जातं साध्वसं यस्य भयं सर्वेश्वरेश्वर. कथममुमंशरूपिणं नमस्करोतीति विस्मयं कृत्वा ववन्द इत्यत्र साध्वसशब्दो विस्मयवाची साधुः असः असनं स्थितिर्यत्र चमत्कार इत्यर्थः। स भूमा नारायणः परमेष्ठिनां योगीन्द्राणां प्रभुः तौ आह बद्धाञ्जली इति श्रीकृष्णस्यापि बद्धाञ्जलित्वं कौतुकपरं स्वांशं प्रति सम्मानाधिक्यं स्वस्यैव यथा गोवर्द्धनोद्धरणलीलायां मूर्त्यन्तरमाविर्भाव्य तद्वन्दनादिना कौतुकप्रकटनम ॥ ५८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

ततो भगवदिच्छया ब्रह्माण्डमतिक्रम्य आवरणे जले रथः प्रविष्ट इत्याह—ततः प्रविष्टाविति। तदा जलमध्ये रथे प्रविष्टे रथस्थावपि जलं प्रविष्टौ तस्मात्सलिलं वर्णयति बलीयसा नभस्वता एजदिति महावायुना कम्पमानम् अत एव बृहदूर्मिभिः स्थूलतरङ्गैर्विशेषेण भीषणं भयानकम् अनेन अर्जुनस्य मनसाप्यगम्यो देश इतिसूचितम् एतादृशजलमध्ये एकं गृहमस्ति तत्प्रविष्टाविति वक्तुं तद्गृहं वर्णयति यत्राद्भुतं वै भवनमिति। द्युमत्तममतितेजोयुक्तं स्वतेजसैव प्रकाशमानं सूर्यादीनां प्रकाशकानामभावात् भ्राजन्तो ये मणिस्तम्भास्तेषां सहस्रेण शोभितम् अनेनैव सर्वोत्कर्षो भवनस्य वर्णितः ॥ ५३ ॥

तन्मध्ये एकः शेषं दृष्टवानित्याह—तस्मिन् महाभीममिति। सलिलं प्रविष्टौ गृहमपि प्रविष्टौ तेनो भगवान् कृष्णः तस्मिन् महाभीममनन्तं ददर्श तद्भोगसुखासनं भगवन्तमपि ददर्शेति सम्बन्धः सर्वमर्जुनस्य भयोत्पादनार्थम् आश्चर्योत्पादनार्थञ्च वर्णनं महाभीममिति भयानकसर्पविशेषं अद्भुतं कदाप्यदृष्टपूर्वम एवं स्वरूपभूतं गुणत्रयमुक्त्वा विशेषतो वर्णयति सहस्रसङ्ख्यायुक्तेषु मूर्द्धसु यानि रत्नानि तानि मूर्द्धन्यानि फणानां सम्बन्धिनो मणयः फणामणयः फणाशब्दः अकारान्तः मूर्द्धन्यानां फणामणीनां द्युभिः कान्तिभिः कृत्वा विशेषेण भ्राजमानम् अन्यथा तस्यादर्शने तथा भयं न भवेदिति दर्शनोपाय उक्तः यदर्थमेतदुक्तं तदाह, द्विगुणानीक्षणानि सहस्रद्वयमितानि चक्षूंषि तेनोल्बणमतिक्रूरं तादृशस्यापि महत्त्वमाह, सिताचलाभमिति। सिताचलः श्वेतपर्वतः कैलासो वा हिमालयो वा तत्सदृशमिति नीलवर्णः कण्ठो जिह्वा च यस्य नीलकण्ठो नीलजिह्वश्चेत्यर्थः। महादेवस्य

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तदाधिदैविकं रूपं तेन जिह्वायां मृत्युः कण्ठे कालकूट इति उभयोर्नीलं रूपं वर्णितम् एतादृशे अतिभयानके सर्पशरीरे सुखासीनं भगवन्तं ददर्श ननु सर्पे स्थितः कथं सुखेन तिष्ठतीति आह, विभुमिति। लोकानामेव स भयानकः न तु तस्यापि नियामकस्येत्यर्थः। किञ्च महानुभावं महाननुभावो यस्येति तादृशोपि क्रूरः भवतिस्थित्या भगवदनुभावेन अति ऋजुरित्यर्थः। तत्र स्थितं भगवन्तं वर्णयति पुरुषोत्तमोत्तममिति आदिभिः पुरुषोत्तमा ये सर्वे पुरुषेष्वतिसुन्दराः सर्वलक्षणसम्पन्नाः तेभ्योप्यत्युत्तमः सौन्दर्यमुक्त्वा रूपमाह, सान्द्राम्बुदाभमिति। अतिनिबिडो योयमम्बुदस्तद्वत् आभा कान्तिर्यस्येति नीलमेघश्यामम् इदं भगवतः सहजं रूपमिति सत्त्वगुणेन वा पर्यवसानेन वा इन्द्रियाणां दर्शनसामर्थ्याभावेन वा शृङ्गारेण वा कामेन वा आनन्दस्वभावेन वा भगवदिच्छया वा लक्ष्मीरुच्या वा तादृशस्यैव सहजत्वेन वा नीलरूपो भगवानिति ज्ञातव्यं सुष्ठु पिशङ्गं पीतवर्णं वासो यस्य एवं रूपवस्त्रयोः परब्रह्मशब्दब्रह्मता निरूपिता एवं प्रमेयप्रमाणे निरूप्य साधनं भक्तिं निरूपयति—प्रसन्नं वक्त्रं यस्य ज्ञानविज्ञाने साधनान्तरं निरूपयति रुचिरे आयते ईक्षणे यस्येति॥ ५४-५५॥

एवं सर्वसाधनसहितं भगवन्तं निरूप्य फलत्वाय प्रथमतो बहिः शोभामाह—महामणिव्रातेति। महामणीनां समूहः येषु तादृशाः किरीटकुण्डलमुकुटादयः तेषां प्रभाभिः परितः क्षिप्ताः सहस्रं कुन्तला यस्य कुन्तलानां मध्ये रत्नानां मध्ये तेजः प्रवेशात नीलमणिखचितपदकवत् भगवति उपरिभागो वर्णितः मध्यभागं वर्णयति प्रकर्षेण लम्बाः चारवः अष्ट भुजा यस्य जानुपर्यन्तं लम्बाः तादृशा अपि न केनाप्यंशेन विकृताः ये भगवतः अष्टौ गुणा अणिमादिप्रकृतिरूपाः तेषां मूलभूता ये योगाः क्रियाशक्तिरूपाः तेषामाधारभूताः भगवतो बाहवः कौस्तुभसहितः कण्ठभागः श्रीवत्स एव लक्ष्म चिह्नं यस्य वनमालया च वृत इति जीवमायाकीर्त्तय उक्ताः॥ ५६॥

भगवद्वलम्बा एव भगवत्स्वरूपमुक्त्वा एकाकी कदाचिद्भगवान् तत्र तिष्ठतीति शङ्कां वारयितुं सुनन्दादीन् पार्षदप्रवरान् वर्णयति—सुनन्दनन्दप्रमुखैरिति। स्वपार्षदैरनिरुद्धसंवकः एतैर्निषेव्यमाणमिति सम्बन्धः मूर्त्तिधराश्चक्रादयः आधिदैविकाः—

> चक्रं शङ्खस्तथा खड्गः चर्म शार्ङ्गं गदा तथा।
> बाणः पद्मं तथान्यानि मुशलाद्यायुधानि हि॥
> मूर्त्तिमन्तो हरेः पार्श्वे तिष्ठन्ति परितः सदा।

निजायुधान्यनिरुद्धायुधानि ततः पुष्ट्यादिशक्तयश्चतस्रोऽनिरुद्धस्य वर्ण्यन्ते पुष्टिः श्रीः कीर्त्तिः अजा प्रकृतिरिति अखिलाश्च ऋद्धयः धनधान्यादिसम्पत्तीनामाधिदैविकरूपाणि तैः सर्वैरेव निषेव्यमाणं एतावतापि साधारणमेवैश्वर्यमायातीति असाधारणब्रह्माण्डकोट्यैश्वर्यार्थमाह—परमेष्ठिनां पतिः एकैकस्य ब्रह्माण्डस्यैकैकः परमेष्ठी तादृशानां सहस्राणां पतिः॥ ५७॥

तादृशं सांख्यस्य मूलभूतं दृष्ट्वा भगवता लोकशिक्षार्थं यत् कृतं तदाह—ववन्द इति। आत्मानमेव भगवान् कृष्णो ववन्दे ननु मूर्त्तिभेदस्य प्रत्यक्षतो दर्शनात् कथमात्मत्वमत आह, अनन्तमिति। अनन्तमूर्त्तिर्भगवान् एक इत्यर्थः तर्हि खण्डशोनन्तता स्यादत आह, अच्युत इति। स्वरूपात् केनापि प्रकारेण न च्युतः जिष्णुरर्जुनश्च भगवद्दर्शनेन जातसाध्वसः ववन्द इति सम्बन्धः चकारात्तस्यापि भगवांस्तस्मात् ततो भगवान् अनिरुद्धः किञ्चिदुक्तवानित्याह वावाहेति भूमा वो वै वाचो भूमा तं न्यर्बुदमित्यत्र वाक्सम्बन्धिनं भूमानमुद्दिश्य न्यर्बुदत्वं विधीयते अनिरुद्धो हि मानसः पुरुष इतिशब्दात्मकत्वं तस्य सिद्धमिति अनिरुद्धमिति अनिरुद्धस्य प्रभुत्वमिति परमेष्ठिनां प्रभुरिति ब्रह्माण्डे समागच्छति तं प्रति तस्याज्ञा. चलतीति पुत्राणां नयने निर्भयतया तथा कथने च हेतुरुक्तः बद्धाञ्जली कृष्णार्जुनौ अर्जुनं वञ्चयितुं भगवानपि तथानाट्यं करोति अत एव कृष्णो भूमा च सर्वथैक इति अर्जुनाहङ्कारगञ्जनार्थमेव निरोधमध्यपातात् प्रपञ्चविस्मृत्यर्थं तच्च करोतीति सूचितम् ऊर्जया गिरा लोकसिद्धवाक्यापेक्षयापि महत्त्वा यथाकथञ्चित् कौतुकं वक्तव्यमिति किञ्चिदाह—द्विजात्मजा मीति सन्धिरार्षः अर्जुनं प्रति सम्बोधनं वा अदीर्घदर्शिनं ज्ञापयितुं द्व्यामुष्यायणत्वात् परम्परया व्यासात्मजत्वाच्च द्विजशब्दस्य च ब्राह्मणपरत्वेपि न दोषः युवयोर्दिदृक्षुणेति प्रयोजनं तयोर्महत्वात् साक्षादाकर्षणं न सम्भवति अतो द्विजात्मजा एव मया समानीताः ननु आवाङ्को किमर्थं वा तव दिदृक्षा तत्राह—द्विजधर्मगुप्तये अवतीर्णौ मम कलाविति युवयोः स्वरूपं मम कलायावतारः अतः अहादिदृक्षा कलावतारस्य प्रयोजनं द्विजधर्मगुप्तय इति एको द्विजगुप्तये अपरो धर्मगुप्तय इति उभयमुभयत्र वा अनिरुद्धस्य धर्मरक्षा प्रयोजनमिति द्विजैः स्वभावत एव धर्मः कर्त्तव्यः तत्रावयोः किं कर्त्तव्यमितिचेत्तत्राह—भूमेर्भाररूपान् असुरान् हत्वेति त्वरया इहैतं आगच्छन्तं मे मम अन्ति समीपे अनेनेदानीं स्थितिर्निविष्टा॥ ५८-५९॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

सलिलमिति कारणार्णवोदकम् एजन्त उच्चलन्तो बृहदूर्मय एव भूषण यस्य तत् अद्भुतं भवनमिति महाकालपुरमिति श्रीस्वामिचरणास्तच्च मृत्युञ्जयतन्त्रात् ज्ञेयम्

> ब्रह्माण्डस्योर्ध्वतो देवि ब्रह्मणः सदनं महत्।
> तदूर्ध्वं देवि विष्णूनां तदूर्ध्वं रुद्ररूपिणाम्॥
>
> तदूर्ध्वञ्च महाविष्णोर्महादेव्यास्तदूर्ध्वगम्।
> पारे पुरि महादेव्याः कालः सर्वभयापहः।
>
> ततः श्रीब्रह्मपीयूषवारिधिर्नित्यनूतनः।
> तस्य तीरे महाकालः सर्वग्राहकरूपधृक्॥

इति अत्र ब्रह्मणः सदनं सत्यलोकः विष्णूनां विकुण्ठासुतानां वैकुण्ठः रुद्ररूपिणामित्यहङ्कारावरणस्थो रुद्रलोकः महाविष्णोरिति महत्तत्त्वावरणस्थो महाविष्णुलोकः महादेव्या इति प्रकृत्यावरणस्थो महादेवीलोकः ब्रह्मपीयूषवारिधिः कारणार्णवः महाकालः परव्योमस्थो महावैकुण्ठनाथस्तस्यैव।

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

कारणार्णवजलान्तर्गतं भवनं महाकालपुरं फाल्गुनो ददर्शेति पूर्वस्योत्तरस्य चानुषङ्गः तद्वर्णयति द्युमत्तमं द्युतिमत्सु श्रेष्ठम्॥५३॥

तस्मिन् भवने प्रथमं महाभोगमनन्तं ददर्श सिताचलः कैलासस्तद्वदाभं शितयो नीलाः कण्ठा जिह्वाश्च यस्य तं शितिकण्ठमेचकाविलमरः॥५४॥

तस्यानन्तस्य भोगो देहएव सुखकरमासनं यस्य तं विभु पुरुषपूत्तमो महत्तद्वा तस्मादपीति पुरुषोत्तमोत्तमं॥५५—५६॥

चक्रादिभिर्मूर्त्तिधरैरिति स्वस्वमस्तकोपरि तत्तच्चिह्नयुक्तैः॥५७॥

आत्मानं ववन्द इति गोवर्द्धनपूजायां तस्मै नमो व्रजजनैः सह चक्रेऽमनात्मने इतिवल्लीलाकौतुकमात्रार्थमेव अनन्त मित्यात्मनोऽसङ्ख्यस्वरूपेणानन्त्यात सोप्यष्टभुज एक आत्मेत्यर्थः। अच्युत नरलीलत्वच्युतिरहित इति वन्दने हेतुरुक्तः कृष्णस्यास्य नरलीलत्वरक्षणार्थमेव सोऽष्टभुज ईश्वरलील एतदंशोपि तं न वन्दितवानितिभावः जातसाध्वसः प्राप्तसम्भ्रम इति कृष्णाद्प्ययमधिकैश्वर्य्यवानिति लब्धप्रतीतिक इत्यर्थः। भूमेति गोवर्द्धनपूजाग्राही यः कृष्णस्स इव कृष्णाद्प्याधिक्येन दर्शितात्ममहत्व इत्यर्थः। परमेष्ठिनां कोटिब्रह्माण्डस्थचतुर्मुखानां ऊर्जया प्रगल्भयेति श्रीकृष्णाभिप्रायानुरूपया तयैवार्जुनं मोहयितुमिति भावः। सस्मितमिति त्वदभिप्रायेणैव त्वदंशोऽप्यहं स्वैश्व्याधिक्यं स्ववाक्येन प्रकटीकरोमि वस्तुतस्तु तस्मिन्नेव वाक्ये तवैव रूपगुणैश्वर्य्याधिक्यं मद्दर्शितवश्च द्योतयामि पश्य मे चातुर्य्यं त्वयापि पश्चादर्जुनाय स्वतत्त्वमवश्यमाख्यमिति स्मितेन प्रार्थनाच द्योतिता॥५८॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तमसः परतो सलिलं प्रविष्टः अच्युतः तत्र भवनं तस्मिन्ननन्तं तद्भोगसुखासनं विभुञ्च ददर्श तच्चात्मानं स्वमूर्त्तिभूतं ववन्दे जिष्णुश्च ववन्दे तां भूमापि आहेति पण्णामन्वयः सलिले बिहितानि एजन्तः उच्चलन्तः बृहन्तो महान्तः ऊर्मयो भूषणं यस्य तत् तत्र सलिले द्युमत्तमं द्युतिमत्सु श्रेष्ठं भवनम्॥५३॥

अद्भुतं विस्मापनीयम् सहस्रमूर्द्धिभवाः फणाः तासु ये मणयस्तेषां द्युभिर्दीप्तिभिर्विभ्राजमानम् द्विगुणेक्षणैर्द्विसहस्रनेत्रैरुल्वणमुग्रम् सिताचलस्य स्फटिकगिरेरामेवाभा यस्य तम् शितयो नीलाः कण्ठजिह्वाः यस्य तम्॥५४॥

तद्भोगसुखासनम् तद्भोगः अनन्तदेहः सुखासनं यस्य तम् पुरुषोत्तमेभ्यः ब्रह्मादिभ्योप्युत्तमं तेषां पूज्य—मित्यर्थः॥५५॥

महान्तः अमौल्याः मणिव्राताः येषु तेषां किरीटकुण्डलानां प्रभया दीप्त्या परिक्षिताः सर्वतः स्फुरन्तः सहस्रपरिमिताः कुन्तला यस्य तम् प्रलम्बाः चारवः अष्टौ भुजा यस्य तम्॥५६॥

कीर्त्तिसहिता अजा तया अखिलाभिः पूर्णस्वरूपाभिः ऋद्धिभिः अणिमादिमहाविभूतिभिः परमेष्ठिनां ब्रह्मादीनाम्॥५७॥

अच्युतः सर्वदाऽखण्डस्वरूपगुणविग्रहः श्रीकृष्णः आत्मानं स्वमूर्त्तिभूतं भूमानं अनन्तं च ववन्दे ननाम यथा गोवर्द्धनपूजने तस्मै नमो व्रजजनैः सहचक्रेऽत्मनाऽऽत्मने इति नमश्चकार तद्वत् तद्दर्शनजातसाध्वसः उत्पन्नसम्भ्रमः जिष्णुश्च ववन्दे॥५८॥

---

भाषाटीका।

सुदर्शन चक्र से आवरणों का भेद न होने से ब्रह्माण्ड में छिद्र होगया इस प्रकार चक्र के पाछे मार्ग होता गया उसी मार्ग से उस अन्धकार के दूर वर्त्तमान और जिस के पार का अन्त नहि सर्वत्र व्यापक सब से श्रेष्ठ एतादृश भगवान् के तेज को देखकर अर्जुन के दोनो नेत्रो में चाकचौंध होगया तब तो भय से अर्ज्जुन ने दोनो नेत्र मूद लिए॥५३॥

उस अन्धकार से परे प्रचण्ड पवन से ऊपर को उछलती हुई तरङ्गों से भयङ्कर अप्राकृत जल में अर्ज्जुन सहित श्रीकृष्ण भगवान् प्रविष्ट होगए अनन्तर उस जल के नीचे अति प्रकाशमान आश्चर्य्य रूप प्रकाशमान मणियों के हजारहों खम्भान से शोभायमान सङ्कर्षण भगवान् के दिव्य भुवन में श्रीकृष्ण महाराज पहोंचे॥५४॥

उस महावैकुण्ठ लोक में अति भयंकर आश्चर्य्यरूप हजार मस्तकन मे हजार फणों की मणियों की कांतियों से प्रकाशमान अतिभयंकर दो हजार रक्त नेत्र युत स्फटिक पर्वत की कांति समान कांतियुत नीले कण्ठ और जिह्वाओं से युत एतादृश शेषजी का दर्शन श्रीकृष्ण और अर्ज्जुन ने किया॥५५॥

शेषजी का शरीर हि आनन्द कारी जिनका सिंहासन है सर्व व्यापक अनन्त गरुड विष्वक्सेन आदि पुरुषोत्तमो से भी उत्तम, सघन मेघ के समान कांति युत शोभायमान पीताम्बर धारण किये प्रसन्न मुखारविन्द युत विशाल नेत्र युत॥५६॥

अमोल मणियों के समुदाय जटित किरीट कुण्डलन की कान्ति स्फुरायमान अनन्त कुन्तल युत लम्बायमान मनोहर अष्ट भुजा धारी सुन्दर कौस्तुभ मणि धारण किये श्रीवत्स चिन्ह की शोभा से तथा वनमाला से युत॥५७॥

सुनन्दनन्द आदि अपने पार्षद जिनकी सेवा करतेहैं भार्तिया या चक्रादि निज आयुध जिनकी सेवा करतेहैं श्रीदेवी जिनकी सेवा करतीहैं कीर्ति सहित मूर्त्तिमान माया जिनकी सेवा करतीहै तथा अणि या महि या यात्रि अखिल सिद्ध जिनकी सेवा करतीहै अनेक ब्रह्माण्डनके अनेक ब्रह्मानिके स्वामी॥५८॥

---

द्विजात्मजा मे युवयोर्दिदृक्षुणा मयोपनीता भुवि धर्मगुप्तये।
कलावतीर्णाववनेर्भरासुरान् हत्वेह भूयस्त्वरयेतमन्ति मे ॥ ५९ ॥
पूर्णकामावपि युवां नरनारायणावृषी।
धर्ममाचरतां स्थित्यै ऋषभौ लोकसङ्ग्रहम् ॥ ६० ॥
इत्यादिष्टौ भगवता तौ कृष्णौ परमेष्ठिना।
ओमित्यानम्य भूमानमादाय द्विजदारकान् ॥ ६१ ॥
न्यवर्तेतां स्वकं धाम सम्प्रहृष्टौ यथागतम्।
विप्राय ददतुः पुत्रान् यथारूपं यथावयः ॥ ६२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका।

मे कलावतीर्णाविति सम्बोधनम् शीघ्रं मे अन्ति सकाशमिनमागच्छतम् ॥ ५९ ॥

आचरमाचरतम् इदं भारतयुद्धात्पूर्वमेव कृतमपि श्रेष्ठच-कथनप्रस्तावेनात्रोक्तम् ॥ ६०—६६ ॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

तथापि तस्य मुख्यास्तयोः स्वतोऽप्याधिकं माहात्म्यमुद्धृतमिति तादृशं तद्वाक्यमेवाह—द्विजेति हे धर्मगुप्तये। कलावतीर्णौ धर्मस्य ब्राह्मणत्वादिगुप्तये रक्षणाय कलाभिः सर्वाभिः शक्तिभिर्युक्तावेवावतीर्णौ सर्वांशसम्वलित तया प्रकटौ मध्यपदलोपी समासः युवयोर्युवां दिदृक्षुणा मया मे मम भुवि धाम्नि द्विजात्मजा उपनीता आनीताः एवमेव वक्ष्यतेऽर्जुनेन तत्तत्त्वे पृष्टे श्रीकृष्णेनापि श्रीहरिवंशे मद्दर्शनार्थं ते बाला हृतास्तेन महात्मना। विप्रार्थमेष्यते कृष्णो मत्समीपं नचान्यथेति। तदेतच्च नापूर्वं—

यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतम्।
विस्मापनं स्वस्य च सौभगर्द्धेः परम्पदं भूषणभूषणाङ्गम् ॥

इति तृतीयेऽपि श्रीमदुद्धवोक्तेः तदेवं यद्यपि तत्र तस्य स्पृहयालुत्वं तथा सर्वत्रापि करतलमणिवत्सर्वदर्शित्वं सर्वाकर्षित्वञ्च तथापि तेन स्वेच्छया निकटमागत्य दर्शनदानं विना स तं द्रष्टुं न शक्नोतीति कष्टकल्पनयैव तत्सम्पादितवानिति च शक्त्याधिक्यमप्यायातं किमुत सौन्दर्य्यादिगुणाधिक्यमिति स्थितं हरिवंशादत्रत्वयं विशेषः यः खल्वर्जुनं प्रत्यपि तथा तस्य दिदृक्षेति युक्तं चैतत्—

ययोरात्मसमं वित्तं जन्मैश्वर्य्याकृतिर्भवः।
तयोर्विवाहो मैत्री च नोत्तमाधमयोः क्वचित् ॥

इतिन्यायेन तदुक्तं विष्णुधर्मे श्रीकृष्णेनैव तं प्रति—

यस्त्वां वेत्ति स मां वेत्ति यस्त्वामनु स मामनु।
अभेदेनात्मनो वेद्मि त्वामहं पाण्डुनन्दन ॥

इतिप्रस्तुतपद्यावशेषो व्याख्यायते नन्वेवमपि जातमधुनातु किं कर्त्तव्यं तत्राह, भूयः पुनरपि अवशिष्टानवनेर्भरासुरान् हत्वा मे मम अन्ति अन्तिकाय समीपमागन्तुं त्वरयेतं त्वरयतं शीघ्रं प्रस्थापयतं मोचयतमित्यर्थः। तस्मान्नो मुक्तगम्यत्वेन हरिवंशोक्तत्वात् अन्तीत्यव्ययाच्चतुर्थ्या लुक् चतुर्थी च क्रियार्थोपपदस्य च कर्मणि स्थानिन इति स्मरणात् एधोभ्यो व्रजतीतिवत् त्वरयेतमिति हेतुर्णिजन्तस्य त्वरोर्लोटि रूपं व्याख्यातान्तक्रिययोरेककर्मत्वञ्च कटङ्कृत्वा प्रस्थापयेतिवत् अर्थान्तरे मे कलावतीर्णाविति व्यवहितान्वयः तथा त्वरयेतामिति सोपसर्गमेव प्रयुज्येत स्वनिकटप्रापणादेशे तथा व्यवहारात् आस्तान्तावदस्मन्मतं श्रीकृष्णस्य स्वयं भगवत्त्वं नित्यलीलत्वञ्चेति ॥ ५९ ॥

नन्वावां सर्वतः परिपूर्णौ कथं ब्रह्मण्यत्वादिधर्मतत्परौ स्यावेत्याशङ्क्य केवलं करुणया धर्मस्थापनार्थमेवेति सिद्धान्तयन्नुदाहरणं दर्शयति—पूर्णेति। युवामृषभौ सर्वाविर्भावश्रेष्ठावपि तत एव पूर्णकामावपि स्थित्यै सर्वपालनाय लोकसंग्रहं धर्ममाचरतां मध्ये नरनारायणावृषी तौ युवयोर्विभूतिरूपावंशावित्यर्थः। वक्ष्यतेह्युद्धवं प्रति श्रीकृष्णेनैव विभूतिप्रसङ्गे नारायणो मुनीनां चेति अतस्तावपि यदि तादृशौ तदा किमुत साक्षाद्भगवन्ताविति भावः। अत्र चाचरतमित्यर्थे खल्वाचरतामिति न प्रसिद्धमित्यपि तथा न व्याख्यातमिति ज्ञेयं किञ्च मदन्तिकमागच्छतमिति नरनारायणौ भूत्वा धर्ममाचरतमिति पारस्परिकविरोधश्च ज्ञेयः ॥ ६० ॥

इतीति सार्द्धकम्। इति पूर्वोक्तप्रकारेण गोवर्द्धनमखवर्द्धलाविशेषसम्पादनाभिप्रायेण आदिष्टौ आदिष्टावादेमुर्द्धयोक्तौ तत्र भगवदादिशब्दः स्पष्टैश्वर्य्यादिव्यपेक्षया कृष्णशब्दश्च स्वयं भगवति कृषिर्भूर्वाचकः शब्द इत्यादिप्रामाण्येन परब्रह्मत्वापेक्षया श्रीमदर्जुनेऽपि तत्सनामत्वेन निर्देशः पूर्ववत्समशीलत्वापेक्षया उभयत्र तादृशत्वेऽपि नराकृतिपरब्रह्मेत्यादिप्रसिद्ध्या नरलीलावित्यर्थः। स्वकं धामेति यथा तस्य तन्नित्यं धाम तथास्य च द्वारकाख्यमिति भावः। वक्ष्यते द्वारकाद्वशान्ते नित्यं सन्निहितस्तत्र भगवान्मधुसूदन इति सम्प्रहृष्टावित्यर्जुनस्याभीष्टसिद्धेः श्रीभगवत्तु तत एवेति तथागतमिति पूर्वव्युत्क्रमेण ज्योतिरादिभेदक्रमादित्यर्थः ॥ ६१ ॥

विप्रायेत्यर्द्धकम् यथारूपं तत्पित्रादिदृष्टरूपानतिक्रमेणेत्यर्थः। तत्र योग्यतामाह प्रभू दुर्घटघटनासमर्थौ इत्यर्जुनस्यापि तादृशत्वं व्यक्तम् ॥ ६२ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

उक्तिमेवाह द्वाभ्याम् द्विजात्मजा इति । युवयोर्युवां दिदृक्षुणा द्रष्टुमिच्छता मया द्विजात्मजा उपनीताः मदन्तिकं प्रापिताः । किमावयोर्दर्शनेनेत्यत आह धर्मगुप्तये भुवि कलया अवतीर्णौ कलावतीर्णाविति छत्रिन्यायेनोक्तं कृष्णस्तु भगवान् स्वयं इत्युपक्रमे पूर्णावतारत्वोक्तेः अतो मदवतारत्वान्मम दिदृक्षा जातेति भावः । अर्जुनस्य नरांशत्वप्रसिद्धिमुपजीव्येत्यमुक्तं नरस्य नारायणांशावतारत्वात् अवनेः भूमेर्भारायितानसुरान् हत्वा भूयस्त्वरया मे ममान्तिकं समीपं इतमागच्छतं "इयागतौ इत्यस्य रूपम् ॥ ५९ ॥

किञ्च पूर्णकामाविति युवां पूर्वं नरनारायणावृषीभूत्वेति शेषः ऋषभौ श्रेष्ठौ हेतुगर्भमिदम् । अतः पूर्णकामावपि स्थित्यै जगद्रक्षणार्थं लोकसंग्रहं धर्ममाचरतुराचरितवन्तौ लोकोर्वाचीनोजनः सङ्गृह्यते प्रवर्त्यतेनेनेति तथा तं अत्र यद्यदा चरति श्रेष्ठ इत्यादिगीतावचनार्थ उपाक्षिप्तः ॥ ६० ॥

इतीति भगवतो परमेष्ठिना इत्थमादिष्टौ तौ कृष्णौ श्रीकृष्णार्जुना ओमिति तदाज्ञामङ्गीकृत्य भूमान भगवन्तं प्रणम्य द्विजपुत्रानादाय सम्प्रहृष्टौ धाम स्वगृहं प्रति यथागतं स्वव र्त्मतामाजग्मतुः । विप्रायेति यथारूपाननतिक्रान्तस्वस्वपूर्वरूपान् प्रभू कृष्णार्जुनौ ददतुः ॥ ६१—६२ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

युवयोः कृष्णार्जुनयोः ॥ ५९ ॥

जगतः स्थित्यै लोकसङ्ग्रहं धर्मम् ॥ ६० ॥

कृष्णौ यदूत्तमार्जुनौ आनन्दभूमानं पूर्णानन्दम् ॥ ६१ ॥

प्रसूयतां प्रसवं गच्छतां रूपं यथा प्रसूतिकाले यद्रूपं तादृशं रूपं दधानान् ॥ ६२ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

द्विजात्मजा इत्यादि । द्विजात्मजाः मया उपनीताः कुतः दिदृक्षुणा कुत्र दिदृक्षुत्वमभवत इत्याशङ्क्य तत्प्रकटयति युवयोर्मध्ये भुवि ममोत्पत्तिस्थले श्रीकृष्णे दिदिदृक्षुत्वमित्यर्थः भवस्यस्मादिति भूः अपादाने क्विप् तथा च अहं सर्वस्य प्रभव इति श्रीमुखोक्तेः ननु दिदृक्षुश्चेत् तत्रैव कथं नागाः तत्राह—धर्मगुप्तये धर्मरक्षायै कुत्र धर्मरक्षेत्याह, कलावतीर्णौ कलानामस्मदादीनामवतीर्णैरवतारो यस्मात् तस्मिन् श्रीकृष्णे एतस्मिन् या धर्मगुप्तिः तदर्थं अहञ्चेत्तत्र गत्वा द्रक्ष्ये तदा द्विजबालानामरिष्यन् तदानयनप्रकारेण तत्कृतप्रयत्नेन नचास्य धर्मोऽयमभविष्यत् अत एवा धर्मरक्षाऽस्य भूयादिति मया तत्र न गतं अथवा दिदृक्षुत्वे हेतुः धर्मगुप्तय इति अंशो हि अंशिनं दिदृक्षतीत्येष एव धर्मः अतः वरं कृतार्थोऽस्मि ,तदधुना अवनेर्भारायमाणानसुरान् हत्वा अन्ति मे परमे कर्मणि स्वधाम गमने त्वरयेत त्वरां कुरुतं इह भूमौ भूयः प्रकृष्टं यथा भवति तथाहत्येत्यनुषङ्गः ॥ ५९ ॥

भवन्तौ नारायणौ त्वमादिनारायणः कथमावयोर्दिदृक्षुरासि तत्राह—पूर्णकामावपीत्यादि अपि सम्बोधने भो भगवान् श्रीकृष्ण । युवां पूर्णकामौ ईश्वरौ यद्यपि श्रीकृष्ण एवेश्वरः तथापि तत्सखित्वेनायमर्जुनोपि मे त्वत्सदृशः तथात्र यावान् स्नेहस्तावान् आत्मानं विना नान्यत्र भवति तेन तुल्यं मे युवयोर्दिदृक्षुत्वमिति युवामिति द्विवचनं तर्हि नरनारायणौ कानित्याह, नरनारायणावृषी मुनीभूत्वा लोकसंग्रहं धर्मं आचरतां कीदृशौ स्थित्यै स्थितिमर्यादा तन्निमित्तम ऋषभौ श्रेष्ठौ यद्वा स्थित्यै लोकसङ्ग्रहं धर्मं आचरतां मुनीनां ऋषभौ कृष्णावतारौ अर्जुनत्वेव उक्तञ्चतुर्थधर्मकलासर्गे नरनारायणावृषी इति अन्यथा एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयमित्युक्तस्यासङ्गतिः ॥ ६०—६१ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

न केवलं धर्मरक्षैव कर्त्तव्या अपितु धर्मः प्रवर्त्तनीय इत्याह—पूर्णकामाविति । ततो धर्मप्रयोजनाभावेपि करणावदर्थकर्तव्याय पूर्णकामत्वं धर्मकरणसामर्थ्ये निःस्पृहत्वं च हेतुः नरनारायणावृषीति नरनारायणात् पूर्णकामत्वं ऋषित्वाद्धर्मकरणसामर्थ्यमिति तथापि "प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्त्तते" इति प्रयोजनं वक्तव्यमितिचेत्तत्राह स्थिताव निरुद्धः पालक इति जगतः स्थित्यर्थं धर्मकरणं ननु नारायणेनैव स्थितिः सम्पाद्यत इति भूभारहरणार्थमेव समागतयोः किं धर्मेणत्यत आह—लोकसङ्ग्रहमिति ॥ ६० ॥

ततो यज्जातं तदाह—इत्यादिष्टाविति । उभयोः कृष्णनामत्वं समानांशत्वाय ननु भगवान् कथं भगवन्तमाज्ञापयति तत्राह परमेष्ठिनेति स्वयं भगवान् ब्रह्माण्डरक्षार्थं प्रवृत्त अतः स्वांशान् सर्वानेव तथा बोधयति अतः स्वस्य रूपं तथैवेति ओमिति तदुक्तं स्वीकृत्य भूमानं भगवन्तम[म] आनम्य यदर्थं गतो तान् बालकानादाय स्वकं धाम द्वारकां न्यवर्त्तता व्याधुत्य समागतौ ततो निःशङ्कौ प्रहृष्टौ गमनमार्गेणैव समागतौ इयञ्च लीला अन्यैः समहतां हीनताञ्च बोधयति ततः प्रतिज्ञासिध्यर्थं विप्राय ददतुः पुत्रान् एक प्रार्थितो रक्षार्थं सर्व एव च दत्ता इति महत्वं यथारूपं रूपमनतिक्रम्य रूपशब्देन वयः स्वभावादिकमपि जन्मकालीनं गृह्यते यथा यथावत् अन्यूनातिरिक्तं सान्दीपिनिपुत्रवदेषामपि व्यवस्था ननु कथमेवं प्रतिज्ञाय गतौ तत्राह प्रभू इति तथाकरणे या हेतुः एवमुभयोश्चरित्रमुक्त्वा तुल्यत्वमाशङ्क्य परिहरति निशम्येति अर्जुनस्तु यावद्गत्वा समागतः तावत्किमपि न ज्ञातवान् पश्चाद्भगवता स्वरूपे निरूपिते पश्चात् तद्वैष्णवं धाम ज्ञातवान् ॥६१—६२॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

युवयोर्वो मे कलया अवतीर्णाविति सम्बोधनं शीघ्रं मे अन्ति समीपं इत । आगच्छतमित्यर्जुनमोहप्रयोजकोऽर्थः वास्तवार्थस्तु हे कलावतीर्णौ कलाभिः स्वशक्तिभिः सहैवावतीर्णौ भूयः पुनरपि युवां अवनेर्भारान् असुरान् हत्वा मे अन्ति ममान्तिके तान् प्रस्थापयितुं त्वरयेतं व्यपन्ताल्लिङ्गरूपं अन्तीत्य

निशाम्य वैष्णवं धाम पार्थः परमविस्मितः।
यत्किञ्चित्पौरुषं पुंसां मेने कृष्णानुकम्पितम् ॥ ६३ ॥
इतीदृशान्यनेकानि वीर्याणीह प्रदर्शयन्।
बुभुजे विषयान् ग्राम्यानीजे चात्यूर्जितैर्मखैः ॥ ६४ ॥
प्रववर्षाखिलान् कामान् प्रजासु ब्राह्मणादिषु।
यथाकालं यथैवेन्द्रो भगवान् श्रैष्ठ्यमास्थितः ॥ ६५ ॥
हत्वा नृपानधर्मिष्ठान् घातयित्वाऽर्जुनादिभिः।
अञ्जसा वर्त्तयामास धर्मं धर्मसुतादिभिः ॥ ६६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्धे
द्विजकुमारानयनं नाम
एकोननवतितमोऽध्यायः ॥ ८९ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

व्यवधानुध्यन्तं अत्रागत्य ते मुक्ता भवंत्विति तत्त्वाऽमोमुक्तगम्यत्वेन हरिवंशोक्तत्वात् द्वितीयस्कन्धेपि क्रममुक्तिस्मृतौ अष्टावरणभेदानन्तरमेव मोक्षश्रवणात् ॥ ५९ ॥

आचरतां आचरतम् ॥ ६०—६२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

युवयोर्युवां दिदृक्षुणा मया द्विजात्मजाः उपनीताः स्वनिकटे नीताः धर्मगुप्तये कलाभिः स्वशक्तिभिः सह भुवि अवतीर्णौ अवनेर्भारासुरान् हत्वा भूयः पुनः युवां मे अन्ति सकाशमितमागच्छतम् असुरान् हत्वेत्युक्त्या नाहं सङ्कर्षणो ब्रह्मन् न कृष्ण इत्याद्यर्जुनोक्त्या च कतिपयासुरवधाद्गीतोपदेशाच्च पूर्वमियं लीला कृतेति गम्यते ॥ ५९ ॥

स्थित्यै लोकरक्षणार्थं धर्ममाचरताम् आचरतम् ॥ ६०—६२ ॥

भाषा टीका।

अपार महिमा सम्पन्न और श्रीकृष्ण के हि दूसरे रूप एतादृश भूमा पुरुष को श्रीकृष्ण ने प्रणाम किया तथा उनके दर्शन से सम्भ्रम युत अर्ज्जुन ने भी प्रणाम किया अनेक ब्रह्माण के स्वामी अपार महिमा न सम्पन्न पर वैकुण्ठ नाथ गम्भीर बाणी से अञ्जलि बांधे खड़े श्रीकृष्ण अर्ज्जुन दोनोंन के प्रति मन्दहासपूर्वक बोले ॥ ५९ ॥

आप दोनोन के दर्शन की मोको इच्छा भई इस वास्ते मैने हि ब्राह्मण के पुत्र अपने समीप में मगा लिए हैं धर्म की रक्षा के अर्थ कला सहित तुम दोनो ने भूमि में अवतार लिया इस वास्ते भूमि के भार असुरन का संहार कर फिर शीघ्र हि इहां मेरे समीप में दोनो आप जावो ॥ ६० ॥

आप दोनो नर नारायण ऋषी यद्यपि परिपूर्ण काम हो तथा श्रेष्ठ पुरुष हो तथापि जैसे संसारीजन धर्म में प्रवृत्त होंइ इस के लिये आप दोनो धर्म का आचरण भी करना ॥ ६१ ॥

इस प्रकार जब पर वैकुण्ठनाथ भगवान् ने दोनोन को आज्ञा तब उन की आज्ञा को अङ्गीकार कर और भूमा पुरुष को प्रणाम कर ब्राह्मण के पुत्रन को लेकर ॥ ६२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
एकोननवतितमोऽध्यायः ॥८९॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

एतच्चरितस्य फलितमाह—वैष्णवं धाम महाकालपुराख्यं तदीयपुरं तदीयप्रभावं वा निशाम्य निशाम्य दृष्ट्वा परमविस्मितोपि पुंसां सर्वेषामेव जीवानामीश्वरप्रादुर्भावानां च यत्किञ्चित्पौरुषं शक्तिस्तत्कृष्णस्यैवानुकम्पितं कृपा सम्पादितं मेने तादृशेनापि तेन तत्स्यावसरप्रार्थनात् स्वस्य च द्विजात्मजा मे युवयोर्दिदृक्षुणेत्यादिद्वयेन तादृशतयोक्तेः यद्वा पूर्वोक्तप्रकारेण तत्पर्यंतव्यापकतया विष्णुः श्रीकृष्णः तस्य धाम प्रभावं तद्गतं स्वगतञ्च निशाम्य द्विजात्मजा मे युवयोर्दिदृक्षुणेत्यादिना तन्मुखेन तच्छ्रुत्वेत्यादि हरिवंशेप्यर्जुने तत्तस्य पृष्टवति श्रीकृष्णः सर्वं तन्महापुरुषपर्य्यन्तं स्वस्यैव वैभवतया ज्ञापितमिति; तत्रैव दृश्यं तदेतद्व्याख्याकारणेमुलमेतेषांचकला पुंस कृष्णस्तु

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

भगवान्स्वयमित्येव प्रथमस्कन्धतृतीयाध्याये सर्वभगवदाविर्भावछन्दरूपे तस्य परिभाषारूपत्वात् सूच्यते विवरणीयार्थः सङ्क्षेपेण दर्श्यतेऽनेन तद्धिसूत्रं तत्र चानियमे नियमकारिणी परिभाषापि शास्त्रारम्भे सकृदेव पठ्यमाना सर्वमेव व्याप्नोति तस्मात्तदधीनान्येवैतद्व्याख्यानवाक्यान्यपि तथा श्रीभागवतस्य सर्ववेदेतिहाससारभूतत्वादन्यशास्त्रवृन्दान्यपि प्रतिज्ञावाक्यमात्रस्यान्यत्रापि सर्वोपमर्दकत्वं दृश्यते यथा आत्मनि विज्ञाते सर्वमिदं विज्ञातम्भवतीत्यादिवाक्यमाकाशादीनामनुत्पत्तिवाक्यमन्यथयति किञ्च श्रुतिलिङ्गवाक्यास्थानप्रकरणसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षादिति पूर्वमीमांसानिर्णयः श्रुत्यादिबलीयस्त्वाच्च बाधेत्युत्तरमीमांसासम्मतिश्च तत्र साक्षाच्छब्देनोपदेशः श्रुतिः यथा एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयमिति अन्यानि तु श्रीकृष्णसन्दर्भे विवृतानि तेषां परपरं दुर्बलं अर्थस्य दूरदूरप्रतीतेरिति सर्वश्रीभगवतोपदेशप्रवृत्तस्य भगवतः श्रीसूतस्य सर्वनिर्णयार्थं साक्षात्स्वयं भगवच्छब्देनोपदेशोऽयं सर्वतो बलवानेवेति इत्थमेव सर्वत्रैव तैरिदमेव वाक्यं प्रमाणीक्रियते लीलायाञ्च नानाकौतुकिनः श्रीभगवतो लाघवदर्शनं न तत्प्रमापकं गोवर्द्धनबलिभुग्रूपेऽपि नारदादावपि लघुतया व्यवहारादिति च स्थिते साध्वेवोपन्यस्तम् इत्थमुक्तं श्रीविष्णोरुत्कर्षः स्वयं भगवति श्रीकृष्ण एव पर्य्यवस्यतीति तथैव हि तेषामुपन्यासः सङ्गच्छते स चोक्तलक्षणो भगवान् श्रीकृष्ण एवेति दिक् ॥ ६३ ॥

अथैतत्प्रसङ्गेनान्यान्यपि तच्चरितानि स्मृत्वा सानन्दमाह तानि च सर्वाणि विवक्षन्नपि श्रीपरीक्षिदायुःस्वल्पतासङ्कोचेन सदुःखमुपसंहरन्नेव चाह इतीतित्रिभिः । इति पूर्वोक्तप्रकारेण ईदृशानि पूर्वोक्ततुल्यानि वीर्याणि अद्भुतकर्माणि इह लोके प्रकर्षेण दर्शयन् प्रकटयन्नपि लीलया ग्राम्यान् लौकिकानपि सर्वान् विषयान् बुभुजे तथेजे चेति अत्यूर्जितैः परमोद्भटैः ॥६४॥

प्रकर्षेण ववर्ष अविच्छेदेन पूरयामास कामान् इष्टार्थान् आदिशब्दादन्त्यजा अपि ज्ञेयाः तत्र यथाकालं अवसरोचितं तत्रापि बाहुल्ये दृष्टान्तः यथेति इन्द्रो यथा जलानि वर्षति तथैवेत्यर्थः । यतो भगवान् परिपूर्णैश्वर्यादिः यत एव च सर्वावतारावतारिभ्यः । श्रैष्ठ्यमास्थितः नित्यमेव तत्प्राप्त इति ॥ ६५ ॥

स्वयं हत्वा अर्जुनादिभिर्घातयित्वा च धर्मं स्वभक्तिपर्य्यन्तं वर्त्तयामास प्रावर्त्तयत् एवं भगवतः श्रीकृष्णस्य सर्वसुखकर्तृत्वं स्मृत्वा क्षणं रुदितवानिति ज्ञेयं टीकायामिदन्त्विति बोध्यं इयन्धकतोषणामित्यर्जुनेनोक्तत्वादप्यज्ञातवासानन्तरमेवार्जुनस्य तदिदं चरितं लभ्यते तथापि तदनन्तराभिमन्युविवाहपरिच्छिदाधानयोरन्तराले कालबाहुल्यमुपलभ्यते तदन्तरान्तरात्वार्जुनस्य द्वारकागमनं सम्भाव्यत इति ॥ ६६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिण्याम्
एकोननवतितमोऽध्यायः ॥ ८९ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

इति श्रीमद्भागवतव्याख्याने दशमस्कन्धे
श्रीसुदर्शनसूरिकृतशुकपक्षीये
एकोननवतितमोऽध्यायः ॥ ८६ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

निशम्येति । विष्णोः सम्बन्धि धाम स्थानं निशम्य दृष्ट्वा पुंसां यत्किञ्चित्पौरुषमस्ति तत्सर्वं कृष्णानुकम्पितं श्रीकृष्णकृपालब्धमेवेति मेने शब्दः स्वे पौरुषं नृष्विति गीभं दृष्टान्तमुखेन निश्चितवानित्यर्थः ॥ ६३ ॥

इतीति । ईदृशानि अतिदैवमानुषाणि चरित्राणि दर्शयन्नखिलेश्वरो भगवान् ग्राम्यान्विषयान् भोगान् बुभुजे अखिलेश्वर इत्यनेन भोगप्रयुक्तकर्मवश्यत्वं व्युदस्य ऊर्जितैः पुष्कलदक्षिणैर्मखैर्यज्ञैरीजे इष्टवान् ॥ ६४ ॥

प्रववर्षेति । ब्राह्मणा आदिर्यासां तासु प्रजास्वखिलानभिलषितान् कामान् प्रववर्ष यथेन्द्रो यथाकालं वर्षर्तुमनतिक्रम्य वर्षति तथा भगवानपि श्रैष्ठ्यं परत्वमाश्रितः कामान् ववर्ष ॥ ६५ ॥

हत्वेति । कांश्चिदधर्मिष्ठान् स्वयं हत्वा कांश्चिदर्जुनादिभिर्घातयित्वा धर्मसुतादिभिः युधिष्ठिरादिभिरञ्जसा ऋजुमार्गेण सुखेन वा धर्मं वर्णाश्रमाद्यनुगुणं प्रवर्त्तयामास ॥ ६६ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
एकोननवतितमोऽध्यायः ॥८९॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

तथा प्रविश्य गोविन्दो यज्ञवाटं पुनः स्वयम् ।
पूर्णं पुरोहितैर्विप्रैर्ऋत्विग्भिः क्षत्रियर्षभैः ॥ क ॥
प्रायश्चित्तन्तु चलने दीक्षायां य उदाहृतः ।
तं चकार यथान्यायं ब्राह्मणैरनुमोदितः ॥ ख ॥
समाप्य यज्ञविधिवत्तर्पयित्वार्थिनो द्विजान् ।
ऋत्विग्भ्यः पूजयित्वान्यानृपांश्च कुरुसत्तम ॥ ग ॥
यमुनायां महानद्यां कृत्वाऽवभृथमज्जनं ।
विजहार यथाकामं महर्षिभिर्यदूत्तमः ॥ घ ॥

पुंसां यत्किञ्चित्पौरुषं कृष्णानुकम्पितं मेने ॥ ६३—६६-क ॥
दीक्षायां मध्ये चलने तत उत्थाय गमने प्रायश्चित्तमुद्दिश्य यः कर्मविशेष उदाहृतः तं चकार ॥ ख—ग ॥
अवभृथनिमित्तमज्जनम् ॥ घ ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
एकोननवतितमोऽध्यायः ॥ ८९ ॥
( श्रीविजयध्वजतीर्थरीत्या शततमोऽध्यायः ॥ १००॥ )

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
एकोननवतितमोऽध्यायः ॥ ८९ ॥

———

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भे
एकोननवतितमोऽध्यायः ॥ ८९ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तदाह—निशम्येति । परमविस्मयं प्राप्तः विष्णोरेतादृशं स्थानमिति स हि जानाति यथेन्द्रादीनां स्थानं तथा विष्णोरपीति पश्चान्मेरुसर्षपयोरिवान्तरं ज्ञात्वा अत्यन्तं विस्मितः मन्येतावता किमर्जुनस्य सम्पन्नमित्याकाङ्क्षायामाह—यत्किञ्चित् पौरुषमिति । स्वतः करणेऽहङ्कारो भवति अतो यत्किञ्चित्पूर्वं कृतवान् तदन्यत्कृतं तत्सर्वं कृष्णानुकम्पितमेव मेने एवं निरोधे नन्दप्रभृति अर्जुनान्ता निरुद्धाः फल्गुनान्ताश्चावेशाः अतस्तस्मिन् निरुद्धे निरोधान्तरस्य वक्तव्यत्वाभावात् ॥ ६३ ॥

उक्तमात्रपरत्वं दूरीकर्त्तुं प्रकारमतिदिशति इतीदृश्यान्यनेकानीति । ज्ञानरूपाणि निरोधरूपाणि वा वीर्याणयलौकिकसामर्थ्यानि इह भूमौ माहात्म्यार्थञ्च स्वासक्त्यर्थं प्रदर्शयन् ग्राम्यान् विषयान् बुभुजे अन्यथा लोकसमानधर्माभावे माद्यं न भवेत् विश्वासश्च न भवेत् सर्वमुक्तिश्च स्यात् अतो लौकिकं वैदिकञ्च लोकवत् कृतवान् तदाह, ग्राम्यान् विषयान् बुभुजे अत्यूर्जितैर्मखैश्च ईजेति षड्वर्गपर्यन्तं सर्वानेव यज्ञान् कृतवानिति प्रसिद्धः दानमपि यज्ञसदृशं इति तस्यापि लोके उत्कर्षहेतुत्वात् विशेषणाह, प्रववर्षाखिलान् कामानिति प्राणिमात्रस्य कामनां पूरितवान् विशेषतो ब्राह्मणादिषु तत्रापि यथाकामं यावता तासां कामः पूर्णो भवति एतत्पूरणाभावे तदानीन्तना लोकाः सर्वे नष्टा एव भवेयुः इति ज्ञापयितुं दृष्टान्तमाह, यथैवेन्द्र इति सर्वे प्राणिनः अन्नेनैव जीवन्ति तदन्नं वृष्ट्यधीनं ततः पर्जन्यश्चेत् क्षणमात्रमप्युदासीनः स्यात् तदा प्राणिनः नष्टा एव भवेयुः तथैव भगवानित्यर्थः भजनार्थं पर्जन्याद्विशेषमाह, भगवान् श्रेष्ठ्यमास्थित इति । सर्वतः श्रैष्ठ्यं ज्ञापयन्नेव अखिलान् कामान् प्रववर्ष येन कृतार्थता भवति एवं प्रजापालनमुक्त्वा विशेषतः स्वावतारकृत्यमुपसंहरन् आह—हत्वा नृपानधर्मिष्ठानिति । नृपाणां वधं न दोषायेति ज्ञापयितुं विशेषणं ते नृपाः कंसादयः अर्जुनादिभिः भीष्मार्जुनभीमादिभिः कांश्चित् घातयित्वा दुर्योधनादीन् ततो निःकण्टकभूमौ अञ्जसा साम्यत्वेन धर्मं प्रवर्त्तयामास तत्र हेतवो युधिष्ठिरादयः भगवतः करणद्वय दुष्टनिवारणो अर्जुनादिः धर्मकरणे युधिष्ठिरादिरिति ६४—६६ ॥

इति श्रीमद्भागवतसुबोधिन्यां श्रीमल्लक्ष्मणभट्टात्मजश्रीवल्लभदीक्षितविरचितायां दशमस्कन्धे उत्तरार्द्धविवरणे चत्वारिंशाध्यायविवरणम् ॥ ४० ॥ ८९ ॥

———

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

परमविस्मित इति प्रथममात्यन्तिकमहैश्वर्य्यदर्शनेनाहो तावदहं पाण्डुपुत्रो मर्त्योऽपि कृष्णप्रसादादेव सैर्वमूलभूतं परमेश्वरमिमपश्यामिति विस्मितः यतः क्षणं परामृश्याहो तेन कथं युवयोर्दिदृक्षुणेत्युक्तं सर्वादिपरमेश्वरस्य तस्य स्वांशेकृष्णेदिदृक्षा कथं सम्भवेत् सम्भवतु वा सा कदाचित्की किन्तु दिदृक्षनेत्यनुक्त्वा दिदृक्षुणेति ताच्छील्यप्रत्ययेन दिदृक्षायाः सार्वदिकत्वं बुध्यते भवतु वा सार्वदिकी दिदृक्षा द्वारकास्थं कृष्णं विभुत्वात् स्वसृज्य विश्वस्य करामलकतुल्यत्वाच्च तत्र स्थित्यैव कथं न पश्यति मास्तु वा विभुत्वं विप्रापत्याहरणार्थं प्रतिवर्षं द्वारकां गच्छत्येव तत्रैत्य तैलिकताम्बूलकादिभिः परिदृश्यमानं कृष्णं कथं न पश्यति कृष्णस्येच्छां विना कृष्णदर्शनं न भवेदितिचेन्मास्तु कृष्णदर्शनं ब्रह्मण्यदेवो भूत्वापि ब्राह्मणं प्रतिवर्षं कथं दुःखयति तन्मन्ये कृष्णदर्शनोत्कण्ठ्यं त्यक्तुमपि न शक्नोति यदर्थमकृत्यमपि कुरुते करोत्वकृत्यमपि तदर्थं किन्तु विप्रापत्याहरणार्थं कमपि सेवकं किं न प्रहिणोति स्वयं कथं याति तन्मन्ये द्वारकातस्तदाहरणमप्यन्यैर्दुःशकं तस्मात् कृष्णनगरस्थं विप्रं तथा दुःखयामि यथा तद्दुःखं सोढुमसमर्थः कृष्णो मह्यं दर्शनं दास्यतीति तदभिप्रायोऽवगम्यते अत एवान्तर्यामिस्वरूपेण तेनैव प्रेरितो मुखरो विप्रः कृष्णसन्निधावेवागत्य प्रतिबालकनाशान्ते तां गाथां गायति तस्मात् ततोऽप्यस्य कृष्णस्यैव पारमैश्वर्य्यमधिकमनुमीयत इति विभाव्य परमविस्मितः ततश्च कृष्णमेव पृष्ट्वा तत्वमत्रावधारयामिति विमृश्यार्जुनेन पृष्टे सति कृष्णेनोक्तं यथा हरिवंशे मद्दर्शनार्थं ते बाला हृतास्तेन महात्मना । विप्रार्थमेष्यते कृष्णो मत्समीपं नचान्यथेति । मयातु विप्रार्थमपि न गतं तत्समीपं किन्तु सख्युस्तव प्राणरक्षार्थमेव यदि विप्रार्थमहमगमिष्यं तदा प्रथमबालहरणानन्तरमेव खल्वगमिष्यं नवमे बाले हते सत्येव यस्मादगमं तस्मात्त्वस्यानुरोधात् किन्तु त्वदनुरोधादेवेति सर्वन्तत्वं कृष्णमुखात् श्रुत्वाऽर्जुनो यत् किञ्चित्पौरुषं पुंसां परव्योमनाथपर्यन्तानामपि पुरुषाणां तत्सर्वं कृष्णानुकंपितं कृष्णानुकंपासम्पादितमेव मेने इत्येवं वेदस्तवमारभ्यैव तत्कथापर्य्यन्तमत्र दशमस्कन्धान्ते दशमस्याश्रयतत्वस्य कृष्णस्यैव सर्वोत्कर्षविवरणमभूदिति ज्ञेयम् इदन्तु भारतयुद्धात्पूर्वमेव कृतमपि श्रैष्ठ्यकथनप्रस्तावेनात्रोक्तमिति श्रीस्वामिचरणाः ॥ ६३—६६॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
ऊननवतितमोऽध्यायो दशमेऽजनि सङ्गतः ॥ ८९ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पार्थः पृथायाः श्रीकृष्णकृपापात्रभूतायाः पुत्रः स्वयं च नरावतारः वैष्णवं विष्णोः श्रीकृष्णस्यैव धाम स्थानं भूमाख्यं स्वरूपञ्च निशम्य दृष्ट्वा विस्मितः अष्टभुजेन रूपान्तरेण विप्र-

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

द्वारकाम् इयात् मम प्राणरक्षणार्थम् आनीय अभिमानिनो मेऽभिमानापयकस्य पुन सक्षिप्येव वर्णते ———

नाहं सङ्कर्षणो ब्रह्मन्न कृष्णः कार्ष्णिरेव च।
अहं वै अर्जुनो नाम गाण्डीवं यस्य वै धनुः॥

इत्येवंविकत्थमानमपि मामतिक्लिश्यत्स्वभावत्वात्तिरश्चकार अहो एवम्भूतोयं भक्तवत्सलः इत्येवं विस्मयं प्राप्तः सन् पुंसां यत्किञ्चित्पौरुषं तत्सर्वं कृष्णानुकम्पितं कृष्णप्रसाद-लब्धं मेनिरे कृष्णस्यैव सर्वपौरुषहेतुत्वात्॥ ६३-६६॥

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
एकोननवतितमाध्यायार्थप्रकाशः॥ ८९॥

---

भाषा टीका।

श्रीकृष्ण अर्ज्जुन दोनो अति हर्षित होकर जैसे गमन किया तैसेहि निज धाम द्वारका मे लौट आए अनंतर जैसा रूप जैसी उमरि के बालक रहे उसी प्रकार के बालकन को ब्राह्मण के अर्थ देते भए॥ ६३॥

वैष्णव धाम को देख कर अति आश्चर्य युत होकर अर्ज्जुन पुरुषों का जो कुछ प्रभाव है वह श्रीकृष्ण की कृपा से हि प्राप्त होता है ऐसा मानता भया॥ ६४॥

इस प्रकार ऐसे २ अनेक पराक्रमन को इस लोक में दर्शावत् श्रीकृष्ण भगवान् संसार के विषयों का भोग करते भए और परिपूर्ण दक्षिणा युत यज्ञों से देवतान का पूजन करते भए॥ ६५॥

श्रेष्ठ पद में विराजमान श्रीकृष्ण भगवान् ब्राह्मण आदि प्रजाओं में समय २ पर उन के सकल वांछित विषयन की वर्षा करते भए जैसे समय २ पर इन्द्र वर्षा करता है बहुत से अधर्मी राजान को आप मार कर और बहुत सेना को अर्जुन से वध कराय कर धर्म पुत्र युधि-ष्ठिर आदि पुरुषों से परिश्रम के विनाहि धर्म की प्रवृत्ति कराते भए॥ ६६॥

इति श्रीमद्भागवत महापुराण दशमस्कन्ध मे
उत्तरार्द्ध में नवासी अध्यायकी
भाषाटीका समाप्त॥ ८९॥

---

इति श्रीमद्भागवते महापुराणे दशमस्कन्धे उत्तरार्द्धे एकोननवति तमोऽध्यायः॥ ८९॥

---

## नवतितमोऽध्यायः ।

—————

### श्रीशुक उवाच ।

सुखं स्वपुर्यां निवसन् द्वारकायां श्रियः पतिः ।
सर्वसम्पत्समृद्धायां जुष्टायां वृष्णिपुङ्गवैः ॥ १ ॥
स्त्रीभिश्चोत्तमवेषाभिर्नवयौवनकान्तिभिः ।
कन्दुकादिभिर्हर्म्येषु क्रीडन्तीभिस्तडिद्द्युभिः ॥ २ ॥
नित्यं सङ्कुलमार्गायां मदच्युद्भिर्मतङ्गजैः ।
स्वलङ्कृतैर्भटैरश्वै रथैश्च कनकोज्ज्वलैः ॥ ३ ॥
उद्यानोपवनाढ्यायां पुष्पितद्रुमराजिषु ।
निविशद्भृङ्गविहगैर्नादितायां समन्ततः ॥ ४ ॥
रेमे षोडशसाहस्रपत्नीनामेकवल्लभः ।
तावद्विचित्ररूपोऽसौ तद्गेहेषु महर्द्धिषु ॥ ५ ॥
प्रोत्फुल्लोत्पलकह्लारकुमुदाम्भोजरेणुभिः ।
वासितामलतोयेषु कूजद्द्विजकुलेषु च ॥ ६ ॥

---

#### श्रीधरस्वामिकृतभावार्थदीपिका ।

चरमे तु पुनः प्रोक्ता कृष्णलीला समासतः ।
यदुवंशप्रसूतानामानन्त्यञ्च सकारणम् ॥

श्रीकृष्णविभूतिं समासेन दर्शयति—सुखं स्वपुर्यामिति । सर्वसम्पदादिविशिष्टायाम् श्रियःपतिः षोडशसहस्रपत्नीनामेकवल्लभः संस्तासां गेहेषु रेमे इत्यन्वयः ॥ १–५ ॥

गेहविशेषणं प्रोत्फुल्लेत्यादि श्लोकेन ॥ ६ ॥

—————

#### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

ततश्च चित्तं समाधाय समाप्तौ परमसुखमयं लीलाविशेषं स्मरन्नाह—सुखमित्यादिना स्त्रिय इत्यन्तेन । तत्राद्यं षट्कं स्वस्य स्वयं भगवतः पुर्यां इति स्वाभाविकता स्वललितासुखनिवासयोग्यता चोक्ता अतएव नितरां वसन्निति वैकुण्ठादिभ्योऽप्याधिक्यम् अतस्तदीयासाधारणलक्ष्म्या रुक्मिणीरूपाया अपि तथैव तत्र वास इत्याह—श्रियःपतिरिति । अत एव सर्वाभिस्तादृशतल्लीलायोग्याभिः सम्पद्भिः समृद्धायां एवमुत्तरोत्तरत्रापि वैशिष्ट्यमेवोह्यम् नवं नित्यमेव पूर्वपूर्वता विलक्षणं यौवनं कान्तिश्च यासां ताभिः एवं वेषवयःकान्तीरुक्त्वा वैदग्ध्यादिकमाह—कन्दुकेति आदिशब्दाद्गीत-, नृत्यादयः तत्र चेतस्ततः कन्दुकादिक्रीडया चलन्तीनां तडितामिव द्यौः शोभा यासां ताभिः एवमुत्तरीणां सम्पदमुक्त्वा बाह्यं वदन् सदा चतुरङ्गसेनासेवितत्वमाह, नित्यमिति । सङ्कुलाः सङ्कीर्णा मार्गा यस्यास्तस्यां अलङ्कृतैरित्यस्य मतङ्गजादिभिः सर्वैरप्यन्वयः तत्रापि रथैः कनकोज्ज्वलैः सौवर्णचित्रमयैः अधुना तद्बाह्यमप्याह—उद्यानेति । नादितायामिति भृङ्गादिभिर्हेतुभिः सञ्जातनादायामित्यर्थः रेमे बहुधा चिक्रीड कथं तदाह, षोडशेति एकोऽपि वल्लभः सन् युगपत्प्रीतिदानपूर्वकमिति भावः । नच तदसम्भाव्यं तस्य शक्तिविशेषादित्याह, तावन्तीति । रूपाण्येकस्यैव विग्रहस्य सर्वत्र स्फुरणानि चित्रं बतैतदेकेन वपुषेत्यादि श्रीनारदोक्तेः अतएवोक्तं श्रीहरिवंशे जलक्रीडाप्रसङ्गे—

अहमिष्टा मया सार्द्धं जले वसति केशव ।
इति ता मेनिरे सर्वा मुदा नारायणस्त्रियः ॥
सर्वाः सुरतचिह्नाङ्ग्यः सर्वाः सुरततर्पिताः ।
मानमूहुश्च ताः सर्वा गोविन्दबहुमानजम् ।
अहमिष्टाहमिष्टेति स्निग्धे परिजने तदा ।
नारायणस्त्रियः सर्वा मुदा शंसाश्चिरे शुभाः ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

किञ्च—

एकार्पितमनोदृष्ट्योर्नर्मान्ताश्रुकुरङ्गनाः।
नारायणेन देवेन तर्प्यमाणमनोरथाः॥
शिरांसि गर्वितान्यूहुः सर्वा निरवशेषतः।
वाल्लभ्यकैशवमयं बहन्त्यश्चारुदर्शनाः॥ इति

महत्यस्तासामपि पुर्य्यामुत्कृष्टा ऋद्धयो येषु तेषु कह्लारं सौगन्धिकं उत्पलकुमुदयोः श्वेतरक्तत्वेन भेदः॥ १—६॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

॥ १—१६॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

अथ भगवतः श्रीकृष्णस्य स्वपत्नीभिः सह क्रीडाप्रकारं तासां तस्मिन्ननुरागातिशयं पुत्रपौत्रादिसन्ततीःप्रकृतस्कन्धार्थश्रवणादिफलञ्च वर्णयति नवतितमेन सुखं स्वपुर्यामित्यादिना। श्रियः पतिरित्यस्य रेमे षोडशसाहस्रपत्नीनामेकवल्लभः इत्युपरिष्टात्सम्बन्धः वृष्णिपुङ्गवैः स्त्रिभीश्च जुष्टायां सेवितायां इति सम्बन्धः॥ १॥

कथम्भूताभिः नवयौवनेन कान्तिर्यासां ताभिः तडिता मिव द्योतिर्यासां ताभिः॥ २॥

नित्यमितिसङ्कुलाः सङ्कीर्णाः मार्गा यस्यां द्वारकायां इति पूर्वेण सम्बन्धः मदच्युद्भिर्मदजलस्राविभिः मतङ्गजैर्गजैः स्वलङ्कृतैर्भटैः कनकेनोज्ज्वलैरथैश्च॥ ३॥

किञ्च उद्यानैरुपवनैश्चाढ्यायां कथम्भूतैः पुष्पिता ये द्रुमास्तेषां राजिषु पङ्क्तिषु निर्विशन्तो भृङ्गाणां निवहाः समूहाः येषु तैः नादितायां इत्यस्य मतङ्गजादिभिरिति शेषः यद्वा निर्विशतां भृङ्गाणां निविहैर्नादितायाम्॥ ४॥

रेम इति। षोडशसहस्रपत्नीनामेकएव वल्लभः पतिस्सन् तावन्ति षोडशसहस्राणि रूपाणि मूर्तीर्बिभ्राणः तासां गृहेषु रेम इति सम्बन्धः कथम्भूतेषु महत्यः ऋद्धयः भोग्य भोगोपकरणादिसमृद्धयः येषु॥ ५॥

प्रोत्फुल्लानां उत्पलानां रेणुभिर्वासितान्यमलानि तोयानि येषु तेषु कूजन्ति द्विजानां पक्षिणां कुलानि समूहा येषु तेषु॥ ६॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

अनेनाध्यायद्वयेन गृहस्थधर्मानुकरणलक्षणं हरेः सन्निधानात्सर्वतीर्थोत्तमत्वं द्वारकायाश्च कथ्यते तत्र प्रथमं द्वारकापुरं वर्णयति सुखमिति॥ १॥

हर्म्येषु धनिनां योग्येषु समुन्नतगृहेषु सौधेषु सुधाधवलितेषूत्तमगृहेषु॥ २—३॥

निर्विशद्भिः मिथ उपभुञ्जानैः भृङ्गविहङ्गैः नादितायां घोषवत्कृतायाम्॥ ४—५॥

वासितामलतोयेषु परिमलीकृतजलेषु॥ ६॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

॥ १—७॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

॥१—४॥

रेमे षोडशेत्यादि षोडशसहस्र रूपाणि बिभ्रदपि पत्नीनां मध्ये एकवल्लभः एकश्चासौ वल्लभश्चेति तथा एक एव समषोडशसहस्रधा भासमानो रेम इत्यर्थः। ननु काय व्यूहेन कायव्यूहस्तु सामान्ययोगिनामेव सम्भवति अयन्तु योगेश्वरेश्वरः एक एव षोडशगृहेषु रमितवान् नैतत्तर्कसहमित्यपि न व्यापकत्वात्तस्य वपुषः परिच्छिन्नत्वेपि व्यापकत्वमिति॥ ५—६॥

---

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

एवं सर्वान् समुद्धृत्य क्रीडत्यस्माकमीश्वरः।
क्रीडायां प्राप्तसंसारस्त्रीणामपि निवार्यते॥
ज्ञानं निरूप्य वैराग्यं निरूपयितुमुद्यतः।
अद्भुतत्वाच्चरित्रस्य रागलीला निरूप्यते॥
स्वार्थे रतिः पूर्वमेव भगवत्त्वान्निरूपिता।
स्त्रीणान्तु रागसम्प्राप्तिस्ततोऽत्र विनिवार्यते॥
एकचत्वारिंशेऽध्याये भक्तानां सुखसिद्धये।
परमोत्सवलीलां हि श्रीशुको वर्णयन्मुदा॥

पूर्वाध्याये सर्वलोकार्थं चरित्रमुक्तमुपसंहृतम् इदानीं भक्तानां भगवति मनस्स्थैर्यार्थं परमानन्दलीलां निरूपयति—सुखं स्वपुर्यामिति। स्वभावतोऽपि सर्वचिन्ताभावः स्वपुर्यां भवति तत्रापि द्वारकायां श्रियःपतिरिति विलाससाधनसम्पत्तिरुक्ता लौकिकीमपि सम्पत्तिमाह, सर्वसम्पत्समृद्धायामिति। कदाचित्साधारणोपद्रवसम्भावनायामपि न स्वप्रयत्नोऽपेक्ष्यते वृष्णिश्रेष्ठैरेव तन्निवृत्तिसम्भवात् असाधारणानां पूर्वमेव निवृत्तत्वान्मुख्यभोगसाधनानि निर्दिशति स्त्रीभिश्च जुष्टायामिति पुरुषश्चैतन्यात्मकः काममयः इन्द्रियाणि तत्तदुःखनिवर्त्तकानि प्रवृत्त्यर्थं तेभ्यः सुखदानमान्तरीयकं तत्रात्मकामः स्त्रीभिरेव पूर्यते तत्र स्त्रीणां षडिन्द्रियसुखदातृत्वाय विशेषणानि उत्तमवेषाभिरित्यादीनि अलौकिकत्वेन मनोदृष्टिप्रीतिः नवयौवनकान्तिभिरिति स्पर्शरसयोः हर्म्येषु कन्दुकादिभिः क्रीडन्तीभिरिति शब्दघ्राणयोः चित्तचक्षुषोः वा तदा आद्येन व्यत्यासः अनेन विभावा अनुभावाश्चोक्ताः॥ १—९॥

तडिद्द्युभिरिति। इतररागविस्मारणं धर्मादिफलरूपत्वं वा तासां निरूपितम् एवं सर्वपुरुषार्थरूपां स्त्रियः भगवदर्थे निरूपिताः साधारणानां नागरीणां वा वर्णनं ततः केवलभोगस्थानत्वे गन्धर्वादिविमानवत् लोकोत्कर्षस्तथा न भविष्यतीति

श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

सेनां वर्णयति—नित्यं सङ्कुलमार्गायामिति। आसवन्मदैर्गजैः सर्वदैव सङ्कुला मार्गा यस्याः ततो भटा अपि स्वलङ्कृता अश्वारथाश्च एवं चत्वार्यङ्गानि उत्कृष्टानि निरूपितानि॥ ३॥

एवं शौर्यसिद्ध्यर्थं सेनां निरूप्य भोगसिद्ध्यर्थमुद्यानादीनि निरूपयति उद्यानं पुष्पप्रधानं उपवनं फलप्रधानं तैराढ्या सम्पन्ना कोमलायां गन्धोत्कर्षमुक्त्वा शब्दोत्कर्षमाह—पुष्पितद्रुमराजिषु निविशन्तो ये भृङ्गाः विहङ्गाश्च तैर्नादितायां राजिपदेन एकस्यां पङ्क्तौ एकजातीया एव विहगाः विशन्तीति ज्ञापितं अन्यथा विजातीयशब्दसाङ्कर्ये कोलाहलः स्यात्समन्तत इति पूर्वोक्ताः सर्वत्र ज्ञातव्याः तादृशद्वारवत्यां षोडशसहस्राणाम् एक एव वल्लभो रेमे सर्वासामेकप्रेव स्नेहः षोडशविकारेषु प्रतिविकारं मनसः सहस्रधा सुखसिद्ध्यर्थं षोडशसहस्राणि तावतीनामपि धर्मसाधकत्वमपत्न्याह, पत्नीनामिति। ननु भगवान् स्वकामनापूर्त्यर्थं न प्रवृत्तः किन्तु स्त्रीणां कामनापूर्त्यर्थं तदेवं प्रकारे सर्वथा कामो न पूर्यते एकगुणस्यापि कामस्य पूर्त्यर्थं बहुयोपेक्ष्यन्ते अष्टगुणकामानान्तु कथमेकेन पूर्त्तिः तथापि बह्वीनामेक इति दोषं व्यावर्त्तयितुमाह, तावन्ति विचित्ररूपाणीति यावत्यः स्त्रियः तावन्ति रूपाणि कृत्वा रेमे तासां कामनापूर्त्त्यर्थमेव तानि रूपाणि जातानीति एकस्याः कामः अष्टगुणोऽप्येकेन पूर्यते तदर्थमेव प्राकट्यात् सर्वासामेकत्र रमणे मात्सर्यकृतः क्लेशो भवेत् तदर्थमाह, तद्गृहेषु महर्द्धिषु इति तासामेव गृहेषु सर्वसमृद्धियुक्तेषु एकैकं हर्म्यं एकस्यै दत्वा तत्र सर्वसमृद्धिं सम्पाद्य स्वयमेकरूपेण तत्र प्रविष्टः सम्यग्यावता सुखस्फूर्त्तिर्भवति तथा रेमे इत्यर्थः॥ ४—५॥

एवं प्रत्येकरमणमुक्त्वा गृहस्थतुल्यता जातेति विशेषरमणकथनार्थं समुदायेनापि रमणमाह—प्रोत्फुल्लेति सप्तभिः। प्रकर्षेणोत्फुल्लाः जलपुष्पजातयः कह्लारकुमुदाम्भोजजातयः सन्ध्यारात्रिदिनविकासयुक्ताः तासां रेणुभिः वासितानि यान्यमलतोयानि तद्युक्तेषु भगवान् रेमे इति सम्बन्धः कूजतां द्विजानां कुलानि यत्र गन्धस्पर्शः शब्दसम्पत्तिश्च तत्रोक्ता स्पर्शरसौ तत्र सहजौ रूपन्तु सिद्धमेव अत्राम्भो विगाह्य विजहार जलक्रीडां कृतवान् ननु जलक्रीडायाः कोपयोग इतिचेत्तत्राह महोदय इति महानभ्युदयो यस्य तेनैवं कर्त्तव्यमित्यर्थः। तत्रापि शोभामाह कुचकुङ्कुमैरालिताङ्ग इति दूरीकरणार्थं वा जलावगाहनं तत्रत्यरसस्य स्वरूपमाह योषितां परिरब्ध इति योषितां सम्बन्धी ताभिश्च परिरब्ध इत्यर्थः॥ ६—७॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

नवतितमे जलकेलौ महिषीणां प्रेमवैचित्री।
यादवगणनाद्युक्तिर्लीलानां नित्यताद्योक्ता॥ १॥

अथ मधुरेण समापयेदितिन्यायेन कृष्णस्य जलविहारं वर्णयन् प्रथममुद्दीपनत्वेन नगररामणीयकमाह—सुखमित्यादिना। तद्गृहेषु तासां गृहेषु रेमे इत्यन्वयः गृहेषु रमणमुक्त्वा जलेषु रमणमाह प्रोत्फुल्लेति स्वासिताऽन्यमलानि यानि तोयानि तेष्वित्यर्थः॥ १—६॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

संक्षेपतः श्रीकृष्णलीलां माधवीनां श्रीकृष्णे परमासक्तिं तथा तासां मुक्तिं यदुवंशप्रसूतानामानन्त्यं श्रीकृष्णलीलाश्रवणादिफलञ्च नवतितमेनाध्यायेन वर्णयति—सुखमिति। श्रियः पतिः स्वपुर्यां सुखं निवसन् षोडशसाहस्रपत्नीनामेकवल्लभस्तद्गृहेषु रेमे इति पञ्चमेनान्वयः॥ १॥

स्त्रीभिश्च जुष्टायामिति पूर्वेण सम्बन्धः॥ २-५॥

गृहे रमणमुक्त्वा उपवनादिगतजलाशयक्रीडामाह प्रोत्फुल्लेति प्रोत्फुल्लानामुत्पलादीनां रेणुभिः वासितानि यान्यमलानि जलानि तेषु कूजन्ति द्विजकुलानि पक्षिसमूहा येषु तेषु रेमे॥ ६॥

---

भाषाटीका।

श्रीशुक उवाच।

सर्व सम्पदाओं से परिपूर्ण और श्रेष्ठ यदुवंशियों से सेवित एतादृश निज द्वारकापुरी में सुख पूर्वक निवास करते लक्ष्मीपति रमण करते भए॥ १॥

उत्तम वेष धारी नवीन यौवन की कांति धारी गेंद आदि से महलन के ऊपर क्रीडा करने वारी विजली के समान झंझमाट वारी स्त्रीयों से सेवित॥ २॥

मद चुवाते हस्तियों से नित्यं प्रति जिस के मार्ग परिपूर्ण सुन्दर अलङ्कार किये शूरवीरों से अश्वन से सुवर्ण से उज्ज्वल रथन से नित्यं प्रति जिस के मार्ग परिपूर्ण॥ ३॥

पुष्पवाटिका और बागन से सम्पन्न पुष्पित वृक्षों पक्तियों में निरन्तर प्रवेश करने वारे भृङ्ग और पक्षियों की जिस में चारों तरफ से गुञ्जार हो रही है॥ ४॥

एतादृश द्वारकापुरी में निवास करते सोरह हजार एक सो आठ पत्नियों के एक हि प्रिय और जितनी स्त्रीयें उतने हि विचित्र दिव्य रूपधारी वह श्रीकृष्ण भगवान्॥ ५॥

महासमृद्धि युत और प्रफुलित रक्त कमल कल्हार कुमोद श्वेतकमलों में पुष्पन की रेणुओं से वासित निर्मलजल सम्पन्न बावडी पुष्करणीयुत गुञ्जार करने वारे पक्षियों के समूहयुत उन पत्नीयों के एतादृश महलों में उनके साथ रमण करते॥ ६॥

विजहार विगाह्याम्भो ह्रदिनीषु महोदयः ।
कुचकुङ्कुमलिप्ताङ्गः परिरब्धश्च योषिताम् ॥७॥
उपगीयमानो गन्धर्वैर्मृदङ्गपणवानकान् ।
वादयद्भिर्मुदा वीणां सूतमागधवन्दिभिः ॥ ८ ॥
सिच्यमानोऽच्युतस्ताभिर्हसन्तीभिः स्म रेचकैः ।
प्रतिसिञ्चन्विचिक्रीडे यक्षीभिर्यक्षराडिव ॥ ९ ॥
ताः क्लिन्नवस्त्रविवृतोरुकुचप्रदेशाः सिञ्चन्त्य उद्धृतबृहत्कबरप्रसूनाः ।
कान्तं स्म रेचकजिहीरषयोपगुह्य जातस्मरोत्सवलसद्वदना विरेजुः ॥ १० ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तथा ह्रदिनीषु चाम्भो विगाह्य विजहार महानुदयो वैभवं यस्य सः योषितां कुचकुङ्कुमैर्लिप्ताङ्गः अतस्ताभिः परिरब्धः ॥७॥
सूतमागधवन्दिभिश्चोपगीयमानः ॥ ८—९ ॥

ताः क्लिन्नवस्त्राः अत एव विवृतोरुकुचप्रदेशाः उद्धृतानि विस्रस्तानि बृहत्कबरेभ्यः प्रसूनानि यासां ताः जातेन स्मरेण च उत्सवस्तेन लसन्ति वदनानि यासां ताः ॥ १० ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

विजहारेति । तैर्व्याख्यातं यद्वा सुखमित्यादिकं पञ्चकमेव प्रोत्फुल्लेति युग्मकम् । वासितेष्वामलेषु च तोयेषु च विजहार तत्प्रविगाह्येति ह्रदिनीष्वित्युपलक्षणं श्रीहरिवंशोक्तानुसारेण सागरेऽपि ज्ञेयं महोदय इति जलक्रीडोपकरणवर्गसम्पत्तिरपि महती सूचिता सा चोक्ता तत्रैव—

काश्चित्काष्ठमयैस्तेरुः प्लवैः सर्वाङ्गशोभनाः ।
क्रौञ्चबर्हिणनागानामाकारसदृशैः स्त्रियः ॥
मकराकृतिभिश्चान्या मीनाभैरपि चापराः ।
बहुरूपाकृतिधरैः पुप्लुवुश्चापराः स्त्रियः ॥

किञ्च—

नौभिर्गृहप्रकाशाभिश्चिक्रीडुरपराजिताः ।
स्नातानुलिप्ता मुदिताः सायाह्नेऽन्धकवृष्णयः ॥
आयताश्चतुरास्रश्च वृत्ताश्च स्वस्तिकास्तथा ।
प्रासादा नौषु कौरव्य विहिता विश्वकर्मणा ।

किञ्च—

भक्ष्यभोज्यानि पेयानि चोष्यं लेह्यं तथैव च ।
बहुप्रकारं मनसा ध्यातं तेषां भवत्युत ॥

किञ्च—

नारायणाज्ञया वृक्षाः पुष्पाणि मुमुचुर्भृशम् ।
ऋतवश्चानुरूपाणि विहायासि गतास्तथा ॥
ववौ मनोहरो वातो रतिखेदहरः सुखः ।
रजोभिः सर्वपुष्पाणां युक्तश्चन्दनशीतलभृत् ॥
शीतोष्णमिच्छतां तत्र बभूव वसुधापते ।
वासुदेवप्रसादेन भैमानां क्रीडतां तदा ॥

किञ्च—

उवाह सर्वगन्धाढ्यं स्वच्छं वीर महोदधिः ।
तोयञ्चालवणं वीर वासुदेवस्य शासनात् ॥
गुल्फदघ्नं जानुदघ्नमूरुदघ्नं तथैव च ॥
नारीणां स्तनदघ्नञ्च जलं समभिकाङ्क्षितम् ॥ इत्यादि ॥७॥

उपेति युग्मकं । गीतगानोपकरणत्वेन गन्धर्वैर्मृदङ्गादीन् वादयद्भिः सूतादिभिस्तु पुराणगानाद्युपकारणत्वेन वीणाभिरिति ज्ञेयं एते च जलं परितः पटप्राकाराद्बहिर्ज्ञेयाः रेचकैर्जलक्षेपकयन्त्रविशेषैः विविधं विक्रीडे विक्रीड अच्युत इति सर्वासां प्रत्येकं पार्श्वस्थित्यभिप्रायेण तत्र धाष्ट्यांशे दृष्टान्तः यक्षीभिरिति यक्षराट् कुबेरः ॥८-९॥

ततश्च ता अधिकमशोभन्तेत्याह ता इति कान्तं सिञ्चन्त्यः स्मेति विस्मये जिहीर्षया तन्मिषेणेत्यर्थः उत्सवः कमप्युत्कर्षं प्राप्तवत्स्मितं उत्सवेति पाठः क्वचित् ॥ १० ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

विजहारेति । ह्रदिनीष्वम्भो विगाह्य विजहार कथम्भूतः महानुदयो वैभवं यस्य सः योषितां योषिद्भिः परिरब्धः कुचोद्गतावत एव कुङ्कुमेन लिप्तमङ्गं वक्षो यस्य सः ॥ ७ ॥

किञ्चोपगीयमान इति । सूताः पौराणिकाः मागधाः वंशावलीपाठकाः कथम्भूतैर्वीणादीन्वादयद्भिः ॥ ८ ॥

सेव्यमान इति । ताभिर्योषिद्भिः सेचनैः जलसेचनैः हसन्तीभिः सेव्यमानः स्वयमपि ताः प्रतिषिञ्चन् यक्षीभिः यक्षराट् कुबेर इव विक्रीडे विक्रीडितवान् ॥ ९ ॥

ता इति । क्लिन्नानि सिक्तानि वस्त्राणि यासां ताः अत एव विवृतोरुकुचप्रदेशाः ताश्च उद्धृतानि विस्रस्तानि बृहत्कबरेभ्यः प्रसूनानि यासां ताः योषितः कान्तं भगवन्तं सिञ्चन्त्यः स्वसेचनजिहीर्षुतया स्मशब्दः कान्तपरः तस्य सेचनपरिहारेच्छया तमेवोपगुह्यालिङ्ग्य तेन जातेन स्मरेण उत्सवः उत्कृष्टहासः तेन लसन्ति वदनानि यासां ता विरेजुः ॥ १० ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

ह्रादिनीषु नदीषु स्त्रयोषितामिति षष्ठी तृतीयार्थे ॥ ७ ॥

वीणा इति द्वितीया ॥ ८ ॥

रेचकैः जलप्रक्षेपणचर्मपात्रैः शाकिभिर्भार्यादिभिः सह ॥ ९ ॥

क्लिन्नान्यार्द्राणि वस्त्राणि यासां ताः विवृता ऊरुप्रदेशाः कुचप्रदेशाश्च यासां ताः बृहन्ति कबराणि बृहत्कबराणि उद्धृतानि उन्मुक्तानि बृहत्कबरपूरितानि प्रसूनानि यासां ताः कान्तस्य कमनीयस्य कृष्णस्य चेतनजिहीर्षया चित्तव शीकरणेच्छया उपगूहनक्रियया जातेनाविर्भूतेन स्मरोत्स्मयेन उत्कटेन मन्दस्मितेन लसन्ति वदनानि यासां ताः ॥ १० ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

गन्धर्वादयः पटप्राकाराद्बहिः स्थिताः ज्ञेयाः ॥ ८—१२ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

ताः क्लिन्नवस्त्रेत्यादि उद्धृतेषु उद्ग्रथेषु बृहत्सु कबरेषु प्रसूनानि यासां जलक्लेदनभिया उद्धृत्य बद्धा ये कबरास्तेरित्यर्थः। कान्तं श्रीकृष्णम् उपगुह्य दोर्भिरापीड्यरेचकयन्त्रं तस्य जिहीर्षया रेजुः ननु जह्रुः विजहीर्षया रमणाभिनयनमेव चक्रुरित्यर्थः ॥ १०—१३ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी।

तदा प्राकाराद्बहिः स्थितैः रसोत्पादनार्थं गानस्तोत्रादिकं कर्त्तव्यं तदपि कृतवानित्याह—उपगीयमानो गन्धर्वैरिति उपगानं तन्नामगीतानां गानं वाद्यमप्याह मृदङ्गपणवानकान् वीणाश्च वादयद्भिरिति अन्येषामपि प्रशंसामाह सूतमागधवन्दिभिरिति एवं बहिरुद्दीपनादिकमुक्त्वा स्त्रीणां खेललीलामाह—सिच्यमानोऽच्युतस्ताभिरितिः अच्युतत्वात् बह्वीभिरपि न भगवतः कामस्य कापि हानिरिति रेचकैः चर्मवंशनिर्मितैः स्वभावतोपि हास्यं जयाद्वा उभयथापि तासां परमसन्तोष उक्तः अत्यन्तं स्पष्टः कामः ईश्वरस्य निरूपयितुं अनुचितेति स्मेत्याह, ताः प्रति सिञ्चन् विशेषेण विक्रीडे यक्षाः कामरसकलहे निपुणाः तथा स्त्रीणां भगवतश्चेति एकदेशप्रसिद्धिः माहात्म्यं सूचयतीति अयुक्तोपि कुबेरयाक्षिणीनां दृष्टान्तभावो निरूप्यते यथा समुद्र इव गाम्भीर्ये धैर्येण हिमवानिवेति वाक्यानि ॥ ८–९ ॥

ततस्तासां रसाभिनिवेशेन विस्मृतदेहानां कर्मलीलामाह—ताः क्लिन्नवस्त्रेति। क्लिन्नवस्त्रेण कृत्वा विवृता उद्घाटिताः ऊरुकुचप्रदेशा यासां तादृश्योपि सिञ्चन्त्यः उद्धृतानि बृहत्कबरेभ्यः प्रसूतानि यासां यथा ताः प्रसूनार्थं भगवत्समीपमायान्ति तथा भगवान् विवृतावयवा अपि सिञ्चन एव आसक्ता जाताः तदा केशपाशेभ्यः पुष्पाणि गृहीतवानित्यर्थः अनेन रेचकान्यपि गृहीतवानिति लक्ष्यते ततो भगवान् उभयहस्तः पुष्परेचकानि गृहीत्वा यदा स्थितः तदा रेचकजिहीर्षया कान्तमुपगूह्य मध्ये जातस्मरेण य उत्सव आसीत् परमानन्दस्तेन लसद्वदनाः सत्यः मध्ये नीलमणेः परितः पद्मरागाणीव विरेजुः ॥ १० ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी।

तडागादितोयसामान्येषु रमणमुक्त्वा नदीषु रमणमाह विजहारेति परिरब्धश्च अर्थात्ताभिः ॥७—८॥

रेचकैर्जलक्षेपकयन्त्रविशेषैः यक्षीभिरिति धाष्ट्यांशे दृष्टान्तः॥९॥

उद्धृतानि विस्रस्तानि बृहद् कबरेभ्यः प्रसूनानि यासां ताः ॥ १० ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

नदीषु विहारमाह—विजहारेति। पञ्चभिः महोदधेः महाद्रुदयो यस्माद्व्रजतां स भक्तमनोरथपूरकः श्रियःपतिः ह्रादिनीषु नदीषु अम्भो विगाह्य विजहार योषितां कुचकुङ्कुमैर्लिप्ताङ्गः यस्मात्ताभिः परिरब्धः ॥ ७—८ ॥

रेचकैः जलप्रक्षेपकयन्त्रैः ॥ ९ ॥

क्लिन्नानि आर्द्राणि वस्त्राणि यासां ता अतः विवृता ऊरुकुचप्रदेशा यासां ताश्च उद्धृतानि विस्रस्तानि बृहत्कबरबलप्रसूनानि यासां ताः कान्तं श्रीकृष्णं सिञ्चन्त्यः स्मरेचकस्याजिहीर्षतया हरणेच्छया तमेवोपगुह्य जातेन स्मरेण यः उत्सवः तेन विलसन्ति वदनानि यासां ता विरेजुः॥ १० ॥

---

### भाषा टीका।

महान् ऐश्वर्य सम्पन्न और स्त्रीयों के कुचकुङ्कुमाले चर्चित अङ्गवारे स्त्रीयों से आलिङ्गित हुए श्रीकृष्णं पुष्करिणीयों में जल का विलोडन कर स्त्रीयों के साथ विहार करते भए ॥ ७ ॥

मृदङ्ग पणव आन के वीणा आदि बाजेन के बजायवे वारे गन्धर्व और सूत मागध वन्दी जनों से समीप में जिनका गान होरहा है ॥ ८ ॥

हंसती हुई उन स्त्रीयों से पिचकारीन करके भीजते श्रीकृष्ण भी उनको भिजोवत जैसे यक्षणीये के साथ कुबेर विहार करता है तैसे हि उन स्त्रीयों के साथ आप भी विहार करते भए ॥ ९ ॥

बसन के भीजने से उनके ऊरु कुचा आदि अङ्ग दीखने लगे तथा तनके शिर के खोपन के बड़े २ चूड़ाते पुष्प बिखिर गए उत्पन्न कामदेव के उत्साह से जिन के बदन शोभायमान होरहे हैं प्यारे कांत के ऊपर पिचकारी छोड रही हैं एताहश वे स्त्रीजन प्यारे की पिचकारीन ले की इच्छा करके कांत से लिपट कर बड़ीशोभा को प्राप्त होती भई ॥ १० ॥

---

कृष्णस्तु तत्स्तनविषज्जितकुङ्कुमस्रक्क्रीडाऽभिषङ्गधुतकुन्तलवृन्दबन्धः।
सिञ्चन्मुहुर्युवतिभिः प्रतिषिच्यमानो रेमे करेणुभिरिवेभपतिः परीतः॥११॥
नटानां नर्तकीनाञ्च गीतवाद्योपजीविनाम्।
क्रीडालङ्कारवासांसि कृष्णोऽदात्तस्य च स्त्रियः॥१२॥
कृष्णस्यैवं विहरतो गत्यालापेक्षितस्मितैः।
नर्मक्ष्वेलिपरिष्वङ्गैः स्त्रीणां किल हृता धियः॥१३॥
ऊचुर्मुकुन्दैकधियो गिर उन्मत्तवज्जडम्।
चिन्तयन्त्योऽरविन्दाक्षं तानि मे गदतः शृणु॥१४॥

### श्रीधरस्वामिकृतभावार्थदीपिका।

तासां स्तनेभ्यो विषज्जितकुङ्कुमा स्रग्यस्य क्रीडाया अभिषङ्गेणाभिनिवेशेन धुतः कम्पितः कुन्तलवृन्दबन्धो यस्य सः॥११—१३॥

मुकुन्दैकधियः समाहिता इव क्षणमगिरः सत्यः पुनस्तमेवेशं चिन्तयन्त्यो जडं यथा भवति तथा यानि वाक्यानि ऊचुस्तानि मे मत्तो गदतः शृण्वित्यर्थः॥१४॥

---

### श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

श्रीभगवांस्तु परमानन्दं प्रापेत्याह कृष्णस्त्विति। तुशब्दो विशेषे तमेव दर्शयति तदित्यादिविशेषणैः जलक्रीडायां स्तनकुङ्कुमलेपोपायेपि तद्विषज्जितत्वं प्रागेव स्रजि संलग्नत्वेन तदानीमपि तस्यानपगमात् सिञ्चन्नित्यस्त्रा मुहुरित्यस्योभयतोऽन्वयः परीतः युवतिभिरेव वेष्टितः स्वच्छन्दतया जलक्रीडासुखे दृष्टान्तः करेणुभिरिवेति॥११॥

अतो नर्तकादीनप्यानन्दयामासेत्याह—नटानामिति षष्ठ्यश्चतुर्थ्यां स्त्रियश्चादुः॥१२॥

तत्रैवाद्भुतचर्याविशेषं वक्तुमाह—कृष्णस्येति द्वाभ्याम् एवं पूर्वोक्तप्रकारेण विहरतः कदाचिद्गृहे कदाचिज्जले च क्रीडतः कृष्णस्य गत्यादिभिः स्त्रीणां स्वभावत एवोल्लसितविचारप्रेमाभियोहृताः स्ववशीकृताः तत्र क्ष्वेलीस्तनालभनादि(भिः) गत्यादीनां यथोत्तरं धीहरणेश्रैष्ठ्यं किल वार्त्तायाम् इदमाश्चर्यं वृत्तं श्रूयतामित्यर्थः॥१३॥

तत्र कदाचिदुन्मत्तवत् धुस्तूरादिविक्षिप्तचित्ता इव तत्रैवागिरः मोहप्राप्त्याक्षणं निद्राणा इव च तूर्ष्णी स्थिताः सत्यः अरविन्दाक्षं प्रत्यक्षमपरोक्षं वा स्थितं चिन्तयन्त्यः परोक्षतया भावयन्त्यो जडं विचारशून्यं यथा स्यात्तथोचुः स्वप्न इव प्रलेपुः उन्मादेपि तच्चिन्तने हेतुः मुकुन्दे निजसर्वदुःखविमोचके तस्मिन्नेव एका अव्यभिचारिणी धीर्यासां ताः तत्रापरोक्षत्वपक्षे श्रीभगवांस्तु तच्छ्रवणकौतुकाय तत्र तूर्ष्णी स्थित इति ज्ञेयं वैचित्त्यविप्रलम्भाख्यो हि भावोयं मुक्ताफलादौ बोपदेवादिभिः स्वीकृतः वर्णितश्च श्रीहर्षमिश्रादिभिरिति॥१४॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

कृष्णस्त्विति। तासां स्तनेभ्यो विषज्जिता कुङ्कुमस्रग्यस्य सः क्रीडायामभिषङ्गेणाभिनिवेशेन धुतः कम्पितः कुन्तलवृन्दबन्धो यस्य सः स्वयं मुहुः सिञ्चन् युवतिभिः परिषिच्यमानश्च करेणुभिर्गजीभिः परिवृतो गजराडिव रेजे॥११॥

नटानामिति। गीतैर्वाद्यैश्चोपजीवन्तीति तथा तेषां नटादीनां नटादिभ्यः क्रीडार्थे येऽलङ्कारा भूषणानि वासांसि च तानि प्रादात्प्रयच्छत् तथा तस्य स्त्रियोपि नर्त्तकीभ्यः प्रायच्छन्॥१२॥

कृष्णस्येति कर्त्तरि षष्ठी गत्यादिभिरेवं विहरता कृष्णेन स्त्रीणां धियः हृताः॥१३॥

अत एव मुकुन्द एवैकस्मिन् धीर्यासां तास्तमरविन्दाक्षं चिन्तयन्त्यस्तत्सान्निध्याभावदशायामिति शेषः अगिर इतिच्छेदः क्षणमगिरः धृतमौना इत्यर्थः। तत उन्मत्त इव जडं यथातथा यानि वाक्यान्यूचुस्तानि सम्यगादरतः कथयतो मत्तः शृणु॥१४॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

तासां स्तनेभ्यः विषज्जितानि सङ्क्रान्तानि कुङ्कुमानि तत्स्तनविषज्जितकुङ्कुमानि तैर्मिश्रा स्रग्यस्य स तथा कुन्तलैः सह वर्त्तमानः सकुन्तलः क्रीडायामतिसक्तश्चायं सकुन्तलश्च कुन्दगन्धश्च तथा कुन्दपुष्पवत गन्धो यस्य स तथा सिञ्चन् जलमिति शेषः॥११—२७॥

गृहेषु तासामनिवार्यईश्वरो निरस्तसाम्यातिशयो व्यवस्थितः।
रेमे रमाभिर्निजसौख्यसम्प्लुतो यथेतरो गार्हकमेधिकांश्चरन्॥क॥

इत्थं रमापतिमवाप्य पतिं स्त्रियस्ता ब्रह्मादयोपि पदवीं न विदुर्यदीयाम्। भेजुर्मुदाऽविरतमेधितयानुरागहासावलोकनवसङ्गमलज्जयैव॥ख॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

आनेवार्य इत्यस्य विवरणमीश्वर इति । रमाभीरामाभिर्लक्ष्मीसन्निधानयुक्ताभिर्वा निजसौख्यसम्प्लुतः स्वरूपानन्दसमुद्रमग्नः गार्हकर्माधिकान् गृहस्थाश्रमयोग्यधर्मानाचरन् कुर्वन् ॥क॥

नवसङ्गमे या लज्जा सैव स्मिता तया अनुरागादियुक्तया ॥ ख ॥

[अत्र विजयध्वजरीत्या द्व्यधिकशततमोऽध्यायस्समाप्यते अग्रे सप्त विंशतिश्लोकावधि श्लोका न विद्यन्ते, अष्टाविंशति श्लोकमारभ्य त्र्यधिकशततमाध्यायत्वेन पठ्यते च ]

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

कृष्णस्यैवं विहरत इत्यादि ॥ १३—२४ ॥

---

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

ऊचुरित्यादि उन्मत्तवत् उन्मत्ता इव जडं यथा भवति तथा ऊचुः मुकुन्दे एका एकाग्रा धीर्यासां अथवा पूर्वं अगिरः सत्यः जडं यथा भवति तथा स्थितः पश्चात् ऊचुः तत्र कस्याश्चिद्दिनेपि रात्रिशेषभ्रमः तत्रैव कस्याश्चित् कृष्णपक्षभ्रमः कस्याश्चिदकालेपि जलदागमभ्रम इत्यादि असति विप्रलम्भेपि विप्रलम्भवदनुरागसागरस्योन्मर्यादतायां समीपस्थमपि श्रीकृष्णमालिङ्गतीनां तथा भावनादुन्मत्तता सा तु वैचित्र्याख्यभावव्यञ्जिका नतून्मादवैचित्र्यं यथा सम्भोगेपि वियोगाभगाढोत्कण्ठानवस्थितः । असम्बन्धं यदाचष्टे तद्वैचित्र्यं प्रकीर्त्यते तनु अतिशयप्रेमवैह्वल्यम् ॥ १४ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

एवं तासां सुखार्थमतिक्रमेपि तासां सौन्दर्यमिव भगवतोपि सुखमेव जातमित्याह—कृष्णास्त्वति । तासां स्तनेषु विषज्जितं कुङ्कुमं तद्युक्ता स्रक् माला यस्य तादृशो जातः ततः क्रीडायां योऽभिषङ्गः आसक्तिस्तेन धुता मुक्ताः कुन्तलवृन्दानां बन्धाः यस्य नानाविधकौतुकार्थं कृत इति प्रतिभाति यथा तासामवयवप्राकट्यं तथा भगवतोपि कुङ्कुमसम्बन्धःकेशविमोकश्च एवं तुल्यतया स्वयं स्निह्यन् अविचारार्थं तादृशावस्थायुक्ताभिः परिषिच्यमानः रेमे अमर्यादया रमणं प्रतिपादयन् गोपीष्विव दृष्टान्तमाह करेणुभिरिवेभपतिरिति करेणुभिर्वेष्टितो यथा गजेन्द्रो भवति ॥ २१ ॥

एवं समुदायवर्णनमुक्त्वा एतस्या लीलायाः षड्गुणवत्त्वं प्रतिपाद्य तदुपजीविनां दानेन तदुपसंहरति नटानां नर्तकीनाञ्चेति गीततालानुसारेण ये नृत्यन्ति ते नटाः केवलनृत्ये रसाभिनयज्ञः नर्तक्यः नटा एव स्त्रीपुरुषा वा चकारात्तत्सम्बन्धिभ्योपि भगवान् दत्तवान् गीतवाद्योपजीविनोन्ये क्रीडासाधनानि अलङ्काराः वासांसि च क्रीडार्थमेव वा येऽलङ्काराः तदर्थञ्च यानि वासांसि तानि कामशास्त्रे निरूपितानि सर्वाणि कालान्तरोपभोगार्थं न स्थापितानि किन्तु वन्दिभ्यः अदात् भगवान् दत्तवान् तथा तत्स्त्रियोप्यदुः एवं साधारणासाधारणलीला निरूपिताः ॥ १२ ॥

एतन्निरूपणस्य लौकिकफलव्यावृत्त्यर्थं फलान्तरमाह—कृष्णस्यैवं विहरत इति । एवं सामान्यविशेषप्रकारेण विहरतो विहारं कुर्वतः चतुर्विधैर्भावैः स्त्रीणामन्तःकरणचतुष्टयं हृतमित्याह आदौ गतिः सम्मुखमागमनं तत आलापः ततो जाते वाग्वैधकामकलाभिरीक्षणं ततो भावप्रकाशकानि स्मितानि ततः कायकादिविलासाः ततः नर्मपरिहासोक्तिः क्ष्वेलिः क्रीडा मानसी परिष्वङ्गाः द्वादशविधालिङ्गनानि अष्टविधानि वा एवं सर्वप्रकारैः स्त्रीणां धियः अन्तःकरणानि हृतानि किलेति प्रसिद्धिः पूर्ववत् एतानि प्रपञ्चविस्मृतौ साधनान्येव जातानि नतु प्रपञ्चे भावहावसाधकानीत्यर्थः ॥ १३ ॥

अस्मिन्नर्थे प्रमाणत्वेन तासां वाक्यानि निरूपयितुमाह—ऊचुर्मुकुन्दैकधिय इति । प्रपञ्चं विस्मृत्य कायमपि विस्मृत्य मुकुन्दे मोक्षदातर्येव एका धीर्यासां तादृश्यो भूत्वा गिर ऊचुः यथा स्वहृदयव्यापिकाः तर्हि ब्रह्मवादानिव तासां वाक्यानि भवन्तीत्याशङ्क्याह—उन्मत्तवदिति । असम्बद्धानि वाक्यानि उन्मत्तोगन्धर्वगृहीतः तथा भगवद्गृहीताः ननु लौकिकाः स्वस्थाः तत्रापि जडं यथा भवति अचेतनादिषु चेतनधर्मारोपात् ननु केवलप्रपञ्चविस्मृतिः जगति अरविन्दाक्षहेतुरत आह चिन्तयन्त्योऽरविन्दाक्षमिति अनेन पूर्णो हेतुः सिद्ध इत्युक्तं भवति तानि निरोधार्थं गदतः कथयतो मे मत्तः शृणु कदाचित्प्राकृतत्वशङ्का स्यात् तदर्थं सर्वथा श्रोतव्यमित्यर्थः ॥ १४ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

तासां स्तनेभ्यो विषज्जितकुङ्कुमा स्रक् यस्य सः ॥ ११ ॥

नटानामिति चतुर्थ्यर्थे षष्ठ्यः ॥ १२—१३ ॥

उन्मत्तवत् हृतबुद्धित्वात् धूस्तुरादिविक्षिप्तचित्ता इव अरविन्दाक्षममपरोक्षमपि परोक्षतया चिन्तयन्त्यो जडं विचारशून्यं यथा स्यात्तथा यान्यूचुस्तानि मे मत्तः शृणु इयं प्रेम्णः षष्ठी भूमिका अनुरागभेदः प्रेमवैचित्र्याख्यस्तल्लक्षणमुज्ज्वलनीलमणावुक्तम् यथा "प्रियस्य सन्निकर्षेपि प्रेमोत्कर्षस्वभावतः । या विश्लेषधियार्तिस्तत् प्रेमवैचित्र्यमुच्यते" इति ॥ १४ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कृष्णस्तु करेणुभिः गजीभिः परीतः इभपतिः गजपतिरिव युवतिभिः परिसिच्यमानः स्वयं मुहुः सिञ्चन् रेमे, कथम्भूतः तत्स्तनेभ्यः विषज्जितकुङ्कुमाः स्रजो यस्य सः क्रीडायां च अभिषङ्गः अभिनिवेशः तेन धुतः कम्पितः कुन्तलवृन्दबन्धो यस्य सः ॥ ११ ॥

गीतैर्वाद्यैश्चोपजीवन्तीति ते तथा तेषां नटादीनां नटा-

महिष्य ऊचुः ।

कुररि विलपसि त्वं वीतनिद्रा न शेषे स्वपिति जगति रात्र्यामीश्वरो गुप्तबोधः ।
वयमिव सखि कच्चिद्गाढनिर्भिन्नचेता नलिननयनहासोदारलीलेक्षितेन ॥ १५ ॥
नेत्रे निमीलयसि नक्तमदृष्टबन्धुस्त्वं रोरवीषि करुणं बत चक्रवाकि ।
दास्यं गता वयमिवाच्युतपादजुष्टां किं वा स्रजं स्पृहयसे कवरेण वोढुम् ॥ १६ ॥
भो भोः सदा निष्टनसे उदन्वन्नलब्धनिद्रोऽधिगतप्रजागरः ।
किम्वा मुकुन्दापहृतात्मलाञ्छनः प्राप्तां दशां त्वं च गतो दुरत्ययाम् ॥ १७ ॥
त्वं यक्ष्मणा बलवताऽसि गृहीत इन्दो क्षीणस्तमो न निजदीधितिभिः क्षिणोषि ।
कच्चिन्मुकुन्दगदितानि यथा वयं त्वं विस्मृत्य भो स्थगितगीरुपलक्ष्यसे नः ॥ १८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

विभ्यः क्रीडार्थानि यान्यलङ्कारवासांसि तानि ॥ १२ ॥

हृताः कृष्णैकविषयाः बभूवुः ॥ १३ ॥

मुकुन्दे एकस्मिन् धीयो बालान्ताः सविविभावेपि तमेवारविन्दाक्षं चिन्तयन्त्यः अनएव क्षणमगिरः धृतमौनाः सुखी तत उन्मत्त इव जडं विवेकशून्यं यथा भवति तथा यानि वाक्यानि ऊचुः तानि मे मत्तो गदतः शृणु ॥ १४ ॥

भाषाटीका ।

आलिङ्गन करनेसे स्त्रीनके कुचान के कुङ्कुम से लिप्त वनमाला धारण किये क्रीडा में आसक्ति होनेसे जिसके कुन्तल समूह का बन्धन खुलगया वारम्वार पिच कारी से स्त्रीन को भिजोय रहे हैं और स्त्रीजन उनको भिजोय रही हैं एतादृश श्रीकृष्णचन्द्र भी जैसे हस्तिनियों से युक्त होकर हस्ती रमण करते हैं वैसेहि स्त्रीयों के साथ रमण करते भए ॥ ११ ॥

नटन के लिये तथा नृत्य करने वारी वेश्यान के लिये और गाने बजाने करजी विकरने वारेन के लिये क्रीडा के अर्थ धारण कीये वस्त्र भूषण श्रीकृष्ण ने देदीए और उनकी स्त्रीयों नेभी वस्त्र भूषण नटादिकों के लिये देदीये ॥ १२ ॥

इस प्रकार विहार करने वारे श्रीकृष्ण के गति अलाप देखने मन्द हास क्रीडार्थ हास्य वचन आलिङ्गन इत्यादि चेष्टान से स्त्रियोंकी बुद्धिहरी गई ॥ १३ ॥

केवल एक श्रीकृष्ण के विषय मेहि तदाकारबुद्धि वारी कमल नेत्र श्रीकृष्ण का चिन्तवन करतीर स्त्रीयोंने क्षणमात्र मौन होकर उन्मत्तकी नाई जड की नाई जो वचन उच्चारण किए हैं उसे मैं कहता हो तुम श्रवण करो ॥ १४ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

ईश्वरः श्रीकृष्णः स्वपिति त्वन्तु निद्राभङ्गं कुर्वती विलपसि न शेषे न स्वपिषि तदनुचितमित्यर्थः अथवा नापराध-स्तवापीत्याशयेनाऽऽहुः—नलिननयनस्य भगवतो हासेन सहित-मुदारं यल्लीलेक्षितं तेन कच्चिद्गाढनिर्भिन्नचेतास्त्वमिति ॥ १५ ॥

नक्तं रात्रावदृष्टबन्धुः सती रोरवीषि किम्वा नैतावत् अपितु वयमिव स्पृहयसे ॥ १६ ॥

अलब्धनिद्रः सदा निष्टनसे क्रोशसि किम्वा अस्माभिः प्राप्तां दशां त्वमपि गतोऽसि अहो कष्टं यथा वयं मन्मथा-गेन मुकुन्दापहृतकुचकुङ्कुमादिलाञ्छनास्तथा त्वमपि यतोऽपहृत-श्रीकौस्तुभादिलाञ्छनो लक्ष्यसे ॥ १७ ॥

मुकुन्दगदितानि रहस्यानि विस्मृत्य तदेकचिन्तया कच्चित्त्वं क्षीणोऽसि वयमिव स्थगितगीस्तनुवाक् हे इन्दो नक्त-येवोपलक्ष्यसे ॥ १८ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

तत्र सर्वासामेवैकजातीयभावत्वात्कुरर्यादिवाक्यश्रवणेन वक्ष्यमाणा वाचो जाता इत्याह—श्रीमहिष्य ऊचुरिति । तत्र स्वभावत एव रुवतीं कुररीं प्रत्याहुः—हे कुररि ! जगति त्वमेवैका वीतनिद्रा सती न शेषे शयनेच्छामपि न कुरुष इत्यर्थः । यतो विलपसि उच्चैः परिदेवनमेव कुरुषे ईश्वरो-ऽस्माकं पतिस्तु राज्यान्तदन्वेषणशक्तिविरोधिन्यां गुप्तबोधः कुत्रा-प्याच्छन्नः सन् शेते यद्वा जगतीत्यस्यैवात्रैवान्वयः कुत्रापीत्यर्थः तस्मादिदमनुमीमह इत्याहुः-वयमिवेति । तस्मात् हे सखि मादृशगात्त सख्यं प्राप्तः गुप्तमेव मयेदमिति तयोर्विवेकोपायमस्मास्वपि सान्त्वयाय स्यादिति भावः ॥ १५ ॥

तस्या अप्यधिकमार्त्तनादं चक्रवाक्याः श्रुत्वा तथैवाहुः नेत्रे इति । बन्धुः प्रियतमः करुणं यथा स्यात्तथा रोरवीषि भृशमार्त्तनादं तनोषि बत खेदे अस्मत्सममेव त्वमपीति भावः । अहो बत ईदृश आर्त्तनादः स्वपत्यदर्शनमात्रेण न स्यात् किन्तु

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषणी ।

श्रीभगवति भावविशेषेणैवेति पक्षान्तरमाहुः—दास्यमिति वयमिव दास्यं गता दासीसती अच्युतस्य सदा सर्वगुणरूपादिपरिपूर्णस्य भगवतः पादाभ्यां जुष्टामुपभुक्तां चरणोपधानीकृतां वोढुं स्पृहयसे स्पृहयसि भावविशेषेण परम्परयापि तच्चरणस्पर्शकामवत इत्यर्थः । पादशब्दोऽत्र पातिव्रत्योचितभक्त्या श्रीभगवत्स्पृष्टनामात्र तु तात्पर्य्यं यद्वा वयमिव दास्यं गतासती तां तथा वोढुं स्पृहयसीति कान्ता भूत्वा तदुचितसौभाग्यमिच्छसीत्यर्थः । स्पष्टतयाऽनुक्तिस्तु शालीन्यात् यथोक्तं यज्ञपत्नीभिः "प्राप्ता वयं तुलसिदामपदावसृष्टम् केशैर्निवोढुम्" इति ॥ १६ ॥

तस्या अप्यधिकतरमाक्रोशन्तं समुद्रं तथैवाहुः—भो इति । श्रीभगवन्महाविभूतित्वेन सादरसम्बोधनं वीप्सातिखेदात् अलब्धनिद्रत्वादेवाधिगतः अधिकं प्राप्तः प्रकृष्टो जागरो येन तथाभूतः सन् किं निष्टनसे अस्माकं केनापि दुःखेन भवतु नाम तत्तत् भवतु तद्विनापि कथमिति भावः । क्षणं विमृश्याहुः किं वेति मुकुन्देन सर्वदुःखविमोचकेनापि अपहृतं आत्मलाञ्छनं स्वभावसिद्धस्थैर्य्यगाम्भीर्य्यादिरूपलक्षणं यस्य तथाभूतः सन् त्वञ्च अस्मद्विधवत्त्वमपि दुरत्ययामनतिक्रम्यां दशां तत्प्राप्तिदुरवस्थां गतोऽसि हा कष्टमिति भावः ॥ १७ ॥

नन्वहो यद्यप्येते तिर्य्यगाद्याः समुद्रान्तास्तद्भावातुरतरोत्तराधिक्येन क्रोशन्ति तदयं सर्वसद्गुणश्चन्द्रमाः कथं मौनी वर्त्तते ज्ञातश्चैदमपीति भङ्गीपूर्वकमाहुः—भो इन्दो त्वं बलवता सुधामूर्त्तेरपि तव पराभवात् प्रशस्तबलेन यक्ष्मणा निगृहीतोऽसि यतः क्षीणा हीनः सन् निजा यावत्पादीधितयस्ताभिः पूर्णिमायामपि तमो न क्षिणोषि सूर्य्यवत् क्षयं प्रापयितुं न शक्नोषि यथा वयं श्रीमुकुन्दविरहेण क्षीणा निजदुःखहरणेऽप्यसमर्थास्तथा त्वमपीत्यहो स्वत्योऽप्यधिककष्टमेवेति भावः । क्षणं परामृश्येवाहुः कच्चिदिति । किंवा मुकुन्दस्य गदितानि विश्लेषारम्भे समयवन्धादीनि विस्मृत्य तद्विरहभयमागलभ्येनापस्मृत्य तदनिश्चयेनैव क्षीणस्सन् तमो न क्षिणोषि यतो वयमिव त्वं स्थगितगीश्च नोऽस्माभिरुपलक्ष्यसे कुरर्य्यादिवदाक्रोशनादेतत् प्रश्नेऽप्युत्तरादानादिति भावः ॥ १८ ॥

---

श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

भो भो इति । तथा वयं मुकुन्दाङ्कनलाञ्छनाः तदपहृतगाम्भीर्य्यादिगुणः स्थगितगीः स्थगितबुद्धिः अपिबमितिपदम् ॥ १७—२० ॥

---

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

कानि पुनस्तानीत्यत्राह—कुररीत्यादिना । इतीदृशेनेत्यतः प्राक्तनेन ॥ तत्रैकस्या वाक्यमाह हे कुररि. अस्मिन् जगति राज्यामीश्वरः कृष्णः प्रस्त [गुप्त] बोधः विलुप्तबाह्यविषयज्ञानः सन्नन् स्वपिति शेते त्वन्तु विगतनिद्रा सती विलपासि ननु शेषे न स्वपिषि ननूचितं तन्निद्राभङ्गं करोषीति भावः । अथवा नापराधस्तवापीत्याशयेनाहुः—नलिननयनस्य हासेन सहितमुदारं यल्लीलयेक्षितं तेन हे सखि वयमिव त्वमपि गाढं यथा तथा निर्भिन्नं चित्तं यस्याःसा कच्चिदिकमिति प्रश्नः ॥ १५ ॥

अन्यस्या वाक्यमाह—नेत्र इति । एवमग्रेपि ज्ञेयं हे चक्रवाकि ! नक्तं रात्रौ अदृष्टबन्धुरदृष्टपतिः सती नेत्रे निमीलयसि किं किम्वा करुणं यथा तथा रोरवीषि वर्त्तते खेदेऽव्ययं नैतावदपितु वयमिव दास्यं प्राप्ता सती अच्युतपादेन जुष्टां सेवितां स्रजं कबरेण वोढुं स्पृहयसे किम्वा ॥ १६ ॥

कश्चिदुदन्वन्तं प्रत्याह—भोभो इति । हे उदन्वन् समुद्र ! अलब्धनिद्रः अधिगतप्रजागरश्चसदा निष्टनसे नितरां ध्वनसि ध्वन शब्दे इतिधातुः किम्वास्माभिः प्राप्तां दुरत्ययदशामवस्थां त्वमपि गतोऽसि अहो कष्टं यथा वयं स भोगेन मुकुन्दापहृतकुचकुङ्कुमाद्यात्मलाञ्छनास्तथा त्वमपि यतोपहृतश्रीकौस्तुभादिलाञ्छनो लक्ष्यसे अतस्त्वां पृच्छामीत्यर्थः ॥ १७ ॥

त्वमिति । हे इन्दो ! त्वं बलवता यक्ष्मणा क्षयरोगेण नितरां गृहीतः अत एव क्षीणः सन्स्वकान्तिभिः तमोन्धकारं न क्षिणोषि न विनाशयसि किं यथा वयं तथा त्वमपि मुकुन्दभाषितानि रहस्यानि विस्मृत्य तदेकचित्ततया स्थगितगीः स्तब्धवाक् सन्नोऽस्माभिरुपलक्ष्यसे ॥ १८ ॥

---

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ॥

तदेवाह—कुररीत्यादि । सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः इत्यादि दिशा आत्मनो भगवति यो भावस्तं सर्वभूतेषु पश्यन्तीनां प्रणयरशनया धृताङ्घ्रिपद्म इत्यादिना विभ्रियमाणां उत्तमभागवतदशामारूढानां महिषीणां पृथक्पृथक् भाषमाणमिदं हे कुररि ईश्वरः श्रीकृष्णः स्वपिति त्वं विलपसि कथं ते रीतिः तन्निद्राभङ्गभयं न करोषि ननु स्वपन् कथमसौ मद्विलापं श्रोष्यतीत्याह—अगुप्तबोधः निद्रायामपि अगुप्तः प्रकटो बोधो यस्य अतः श्रोष्यत्येव ततोमाविलपेति शेषः अथवा किमिति त्वमाक्षिप्यसे हे सखि वयमिव धित्व मप्येवाङ्कि तत वीतनिद्रा कथं जातमित्याह—न शेषे नस्वपिषि तस्य कारणमाह—नलिननयनेत्यादि । वयं यथा तस्य हासोदारलीलेक्षितेन निर्भिन्नचित्ताः सत्यो वीतनिद्राभूत्वा न शयामहे तथा त्वमपीति ॥ १५ ॥

प्रत्युवाच हे सखि ! कुरर्येव प्रलपतु कथमियं चक्रवाकी रौतीत्याह—नेत्र इत्यादि । हे चक्रवाकि त्वं किमिति रोरवीषि तथापीश्वरनिद्राभङ्गभयमास्ते आज्ञातस्त्वयमिव दास्यं गता सती अच्युतपादजुष्टां स्रजं कबरेण वोढुं स्पृहयसे तदुक्तमेवेदं तेऽसमाकलं अतएव नेत्रे मीलयसि ध्यायसि मत्वहं चक्रवाकादर्शनेन रोरवीषि तथापीश्वरनिद्राभङ्गभयञ्च तत मित्यत्राशङ्क्य इत्याह न अदृष्टबन्धुरेव भवति अस्यां पुरि कस्याप्यभीष्टविच्छेदो नास्ति ईश्वरस्य प्रभावात्तथापि यदेव रोरवीषि तेन यदनुमितं तदेव सत्यमिति भावः ॥ १६ ॥

त्वादृशीनां स्त्रीस्वाङ्गैर्य्यभावेसमुचितमेवैतत्कथनं त्वं अयन्तु वैगम्भीरोऽपि समुद्रः कथं स्तनतीति काचिदपराऽऽह भो भो

### श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः।

इत्यादि हे उदन्वन् जलधे! सदैव निस्तनसे ईश्वरानिद्राभङ्गभयं किङ्कुरुषे स्वयमलब्धनिद्रः निद्रां च न यासि आहोस्वित् किंवा मुकुन्दापहृतात्मलाञ्छनः सम्यगधिगतप्रजागरो भूत्वा त्वं च दुरत्ययां दशां गतः प्राप्ता स्वयमेवोत्पन्ना मुकुन्देन अपहृतो य आत्मा मनः स एव लाञ्छनम् उद्वेगचिह्नं यस्य तदुचितमेवैतदिति शेषः ॥ १७ ॥

भवतु आत्मापहरणादस्य तथाविधा दशा इन्दुः कथं क्षीयमाण आस्त इत्याशङ्क्य काचिदपराऽऽह—त्वं यक्ष्मणेत्यादि। हे इन्दो बलवता यक्ष्मणा क्षीण इव कथं दीधितिभिस्तमो न क्षिणोषि यक्ष्माबाधितो जनो यथा किमपि कर्तुं न शक्नोति तद्वत् कोऽर्थः आं ज्ञातं कच्चित् भो यथा वयं मुकुन्दगदितानि विस्मृत्य मुकुन्देन रहसि यदुक्तं तद्विस्मृत्य स्थगितगिरस्तथा त्वमपि स्थगितगीर्मोऽस्माभिरुपलक्ष्यसे तत्स्मरणे ध्यायन् क्षीणोऽसि वयं यथा अग्रे आनन्देन विस्मृतं पश्चात्तदनुस्मरणे क्षीणाः स्मस्तथा त्वमपि तदुक्तमेवैतत् ॥ १८ ॥

---

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी

तान्याह—दशभिः। कुररीति ————

> कुररी चक्रवाकोऽब्धिश्चन्द्रमा मलयानिलः।
> मेघकोकिलकैलत्यद्रि नद्यो हंस एव च ॥
>
> दशधा भगवत्स्नेहैरुक्ताः स्त्रीभिः स्वभावतः।
> मनस्सर्वनिरोधानमुक्तौ चोक्तश्च पूर्ववत् ॥
>
> आधिकेऽपि निरोधानं वाक्यैरेव निरूपितम्।
> विद्यमानेऽपि सम्भोगः सौख्यदेऽपि विशेषतः ॥
>
> तत्सङ्गलालसाः प्रोक्ता दृढासक्तिप्रसिद्धये।
> आसक्तिगृहकार्यादिविनिद्रादिनिवृत्तये ॥
>
> स्वधर्मान् स्वप्रियश्चापि कल्पयित्वाखिलेषु हि।
> बहिस्तत्र्यविरीक्ष्येनं प्रलपन्त्यस्तथा जगुः ॥

प्रथमं स्वाभिलषितलीलानन्तरं भगवति शयनलीलायामारब्धायां बहिः स्वाभाविकं कुररीविलापं श्रुत्वा राजसभावापन्ना महिष्यः कुररीविलापेन भगवत्प्रबोधमाशङ्कमानाः स्वकामलीलां परित्यज्य भगवति परमस्नेहेन निद्राभङ्गो मा भवत्विति कुररीनिवारणार्थं प्रवृत्ताः दुःखितां कुररीं दृष्ट्वा आश्वासनार्थं सम्बोधनं कुर्वन्त्य ऊचुः हे कुररीति भगवद्व्यतिरिक्तं सर्वं जगत् स्त्रीरूपमेवेति ताः पश्यन्ति अत एव सर्वासां भगवानेवैकपतिरिति अतो या काचित् दुःखं प्राप्नोति तत्र भगवद्विरह एव हेतुः अन्यदुःखं भगवतैव दूरीक्रियते इति। अत इयमपि स्त्री भगवद्विरहाकुला भगवता सम्भोगार्थमानीय कटाक्षविशेषैर्हता अतो विलापं करोतीति निश्चित्य तां प्रत्याहुः—हे कुररि अस्माभिर्ज्ञातं त्वं कोलाहलं करोषि तदयुक्तमिति निवारयितुमागताः त्वं किं विलपसि हा कष्टमित्यर्थः। विलापो निवारयितुं न शक्यते कारणदुःखस्य सह्यमानत्वात् वेदनावदितिभावः। निद्राभावशयनाभावौ तुल्यतया अनुवदन्ति त्वं किं वीतनिद्रा नापि शयनमपि करोषि निद्राभावे कश्चित् पतित्वा तिष्ठति तदपि तव नास्तीत्यर्थः ————

> यदा देहतिचिन्ता स्यात् धातुवैषम्यमेव वा।
> भयादिना विशेषेण तदा निद्रा न जायते ॥

भगवान् दुराराध्यः कथं वश्यो भविष्यतीति महतीति चिन्ता—

> यदाङ्गेषु समस्तेषु तापो निर्वृतिरेव वा।
> तदैकत्र जनः स्थातुं न शक्नोति कथञ्चन ॥

तापश्च विरहात् एतावपि स्वधर्मौ तर्हि अस्मत्दुःखं भगवति निवेदयिष्यतीति चेत् तत्राहुः—स्वपितीति। अयं च स्वापः विहितकाले तस्मादावश्यकत्वान्न निषेद्धुं शक्यः तदाह—राज्यामिति। ननु भगवान् गतनिद्रः परब्रह्मरूपः कथं निद्रां प्राप्नोतीति चेत् तत्राहुः—जगतीति। सर्वत्र जगति भगवानेव शेते नान्यो निद्रासुखभोक्ता भवति। सर्वेषां प्राणिनां सुखार्थं वा जगति जगन्निमित्तं निद्रां विस्तारयतीत्यर्थः। तर्हि तन्निद्रया लोकार्थं स्वीकृतया स्वात्मापि मुह्येदत आह—अगुप्तबोध इति। निद्रायामपि न गुप्तो बोधो यस्य तर्हि कथं तत्प्राप्यते इत्याशङ्कायामाहुः—ईश्वर इति ईश्वरोऽपि लीलया सुप्तो बोधयितुम् अशक्यः तस्मादस्माभिः सदृशगोष्ठ्या दुःखं दूरीकार्यमित्याहुः—वयमिवेति। हे सखि! तुल्यव्यसने कच्चिदिति कोपप्रश्नं गाढनिर्भिन्नचेतना इति दुःखानुसारेण हेतुं महान्तं कल्पयन्ति पीडा कामकृतैवेति कामः पुष्पायुध इति भगवन्नेत्रमपि नलिनमुच्यते नन्वविकम्पितं पुष्पं किं करिष्यतीत्याशङ्क्याह—नलिनसदृशे नयने यो हाससहित इति ननु हृदये वेधव्यतिरेकेण पीडा न भवतीत्याशङ्क्याह—ईक्षणेनेति। ईक्षणं तीक्ष्णबाणस्थानीयं ननु तथापि दयया न मारयिष्यतीति चेत्तत्राह—उदारेति। अत ऊर्ध्वं आगः यस्य उद्गता या दाराः अतः स्वयं पीडितः अन्यानपि पीडयिष्यति किञ्च लीलायुक्तं निरीक्षणं क्रीडायामासक्तो न कस्यापि सुखं विचारयति अतस्तेन गाढं यथा भवति तथा निर्भिन्नं ज्ञानशक्तिः क्रियाशक्तिर्भक्तियोगस्तथैव च। मायाविभवकालो च सतां हितकरीतथा। पञ्चैते हरिसम्बद्धाः यस्यान्तर्हृदये सदा। विराजन्ते स्वभक्तेषु भक्तो निर्वृत्त उच्यते ॥ १९ ॥

एवं तस्या दुःखं अनुवादेन शमीकृत्य अन्याः पुनः राजसमान्विक्यः चक्रवाकं पूर्ववन्निवारयितुं प्रवृत्ता आहुः नेत्रे निमीलयसीति। तासामवयवविशेषेण खेलनार्थं चक्रवाकौ स्थापिताविति मत्वा तौ द्रष्टुं काचिच्चक्रवाकी समागता ततस्तां निकटे दृष्ट्वा सापि रोदनीति विचार्य तस्या अपि दुःखं दूरीकर्तुं तामनुवदन्ति निद्राभावेऽपि कश्चिन्नेत्रे निमील्य तिष्ठति त्वन्तु तदपि न करोषीति किमिति निमील्य शेते प्रश्नः नक्तमिति निमीलनस्यैवायं काल इति निशापति स्वास्थ्ये सति निमीलितप्राणी त्वञ्चाहश्बन्धुः मम भर्ता क वर्तत इति नक्तं द्रष्टुं न निमीलनं करोषि अत एव त्वं रोरवीषि अत्यन्तं शब्दं करोषि करुणं यथा भवति तथा वतेति खेदे तत्रेदानीं द्वितीयमपि तथैवागतं चक्रवाकमुपलभ्य प्रायेणायं भक्ता भर्ता त्वया वसत वेति इयं भगवतो दासी भवति ततो दिनान्ते सेवां कृत्वा यथा दास्यो जाताः तथयमपि सेवाफलं वाञ्छति तच्च फलं प्रसादरूपं प्रसादश्च स्वचरणसमर्पितमालादिकं प्रयच्छति

### श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तदा भगवान् सेवां स्वीकृतवान् इति निश्चित्य तां भक्तिरूपां मालां शिरसि कृत्वा कृतार्थतामाप्यते इयश्च तत्र प्राप्तवती अतस्तत्कामनया खेदं करोमीत्याहुः—वयमिव अच्युतपादजुष्टां स्रजं कबरेण वोढुमिच्छति कबरादयः स्वधर्माः राजसतामस्यस्तु समुद्रध्वनिं श्रुत्वा तामपि पूर्ववत्सम्बोधयन्ति द्विरुक्तिः श्रवणार्थम् ॥ १६ ॥

त्वं यत् सदा निष्टनसे स्तनशब्दे नितरां शब्दं करोषि तेन ज्ञायते रात्रौ त्वमपि न शेषे तत्र शयनाभावे हेतुः हे उदन्वन्निति यस्तु जलवान् भवति स शीतार्त्तो भवति अत एव अलब्धनिद्रः न कुत्रचित्त्वम् ते न निद्रा प्राप्ता प्रत्युत प्रकृष्टजागर एव प्राप्तः यत्र हि जलन्तिष्ठति तत्र लक्ष्म्याः उत्तमं रमणं न भवतीति इन्द्रश्चेन्द्राणी च न तनस्तत्र भोगं कुर्वतः अतस्तादृश्याभावात् प्रजागर एव प्राप्तः ननु निद्रा ते न प्राप्ता ननु तथाप्याक्रोशे को हेतुस्तत्राहुः—किम्वा मुकुन्देति । पूर्वं यथा भगवान् अस्मद्धृदये शेते एवं समुद्रेपि शेषपर्यङ्के शयानः स्थितः तत इदानीमत्रावतीर्णस्तिष्ठति तथैवास्मद्धृदयाच्च तिरोहितः अत एव सर्वस्वे गते आक्रोशो युक्त एव मुकुन्देन मोक्षदात्रा अपहृतं आत्मन इव लाञ्छनं चिह्नं यस्य अतो मोक्षोपि नास्ति संशयोपि नास्ति अत उभयाक्रुष्टतया अस्माभिर्या दशा प्राप्ता तां दशां त्वमपि गतोसि एवं दुःखमनूद्य न दुःखं पञ्चभिः सहेति न्यायेन परिहृतं प्रकारान्तरेणापि परिहरन्ति दुरत्ययामिति इयं दशा अस्माकमिव तवापि नित्यैव जाता अतोऽस्य प्रतीकाराभावात् दुःखं न कर्त्तव्यमिति भावः ॥ १७ ॥

तामसनामस्यस्तु कालं शपन्त्यः रात्रिश्चेदपगच्छति तदा अस्माकं दुःखनिवृत्तिरिति निश्चित्य चन्द्रास्तमये प्रातःकालो भवतीति चन्द्रस्य गतौ दत्तदृष्टयः ज्योतिषां गतिरदृश्येति शनैश्चलति न चलतीति वा निश्चित्य अतिकामेनान्धा इव जाताः सर्वं तमसा व्याप्तं पश्यन्त आहुः—त्वं यक्ष्मणेति । यक्ष्मा क्षयरोगः सोपि बलवान् दक्षशापात् प्राप्त इति अत एव तेन गृहीतः अतो न चलसीति युक्तम् इदं स्वस्याश्चर्यं यतननिजदीधितिभिस्तमः क्षिणोपि अत्रास्मदनुभव एव प्रमाणं एवं चन्द्रमसि दोषमनूद्य प्रायेणास्यायं दोषः न स्वाभाविक इति निश्चित्योभयत्र हेतुं कल्पयन्ति—कच्चिदिति । मुकुन्दो मोक्षोपदेशार्थं कानिचिद्वाक्यानि उक्तवान् इति तानि दुर्लभानि मत्वा विस्मृत्य पश्चात्परमचिन्तया स्थगितगीर्जातः मुखाद्वाक्यमपि न निस्सरति चन्द्रमसो वाक्यमेव गोत्वात् किरणरूपं इन्द्रियरूपत्वेन चरणरूपत्वञ्च तदभावादुभयमपि तव न जायते शीघ्रं गमनमन्धकारदूरीकरणञ्च भो इति सम्बोधनं प्रश्नार्थे अस्माभिरुच्यमानमेवं भवतीति नवेति भवतीभिः कथं ज्ञात इतिचेत् तत्राहुः, एवं नोऽस्माभिरुपलक्ष्यसेति ॥ १८ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ततश्च आत्मनो भावमुग्धाद्यवशात् प्रायः सर्वत्र पश्यन्त्यः कुरर्य्यादीनाहुर्दशभिः । हे कुररि यस्य विरहेण त्वं विलपसि वीतनिद्रा गतनिद्रा सती सतु त्वयि प्रेमशून्यः ईश्वरोऽस्माकं पतिः स्वपिति अतस्त्वद्विलाप न शृणोति तत एव त्वद्विलापश्रवणोत्था कृपाप्यस्य सम्भवेत् न यतस्त्वत्सङ्गं कुर्यात् किं युष्माभिः सह स्वपिति नहि नहि गुप्तबोधः अस्माभिरज्ञाततत्त्व एव जगत्यस्मिन् क्वापि राज्यां तदन्वेषणविरोधिन्यां शेते अतस्त्वं वा किङ्करिष्यसि वयं वा किं कुर्मः इति भावः शिवशिव त्वं पक्षिजातिरपि हे सखि वयमिव गाढनिर्विद्धचेता अभूरवश्यमेवमेतत्सङ्गो भवत्विति निर्बन्धं त्यक्तुं किं न शक्नोषीति । भावः निर्बन्धे तु हेतुर्नलिनेत्यादि ॥ १५ ॥

अदृष्टबन्धुः किमदृष्टस्वभर्तृकासि अहो बत ईदृशं आर्त्तनादः स्वापत्यादर्शनेन सम्भवेदिति पक्षान्तरमाहुः दास्यं गता इति ॥ १६ ॥

भो उदन्वन् गाम्भीर्यं परित्यज्यातितरलल्लोक इव निष्टनसे शब्दायसे निर्निद्रः सन्नुच्चैः फूत्कृत्य रोदिषि अत्र कारणं वद अथवा अस्मत्कारण कथनेन ज्ञातमस्माभिरित्याहुः किम्वेति यथा सम्भोगमिषेणापहृतास्मत्कुङ्कुमहारमालाकः सचोरः तथैव त्वमपि तेनैवापहृतश्रीकौस्तुभादिलाञ्छनः ॥ १७ ॥

त्वं यक्ष्मणेति । अथवा नेदं कारणं कारणन्तु ज्ञातमस्माभिरित्याहुः—मुकुन्दगदितानि विस्मृत्येति । तस्य विश्लेषारम्भे तेन यः सत्यवधिसमयः सचाटु सबहुशपथमुक्तस्तत्र तदानीं वैक्लव्यातिशयास्थया मनो न दत्तमत इदानीं तानि मुकुन्दगदितानि विस्मृत्य महानुतापादेव स्थगितगीर्नोऽस्माभिरुपलक्ष्यसे कुरर्य्यादिवदाक्रोशनादेतत्प्रश्नेऽप्युत्तरादानादितिभावः । यथा वयमिति वयमपि तद्विश्लेषात्तथातद्वचनविस्मरणोत्थानुतापात् स्थगितगिरो विशीर्याम इति भावः ॥ १८ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे कुररि ! ईश्वरः श्रीकृष्णः प्रपन्नभवभञ्जनः जगति इहैव मनुष्यलोके गुप्तबोधः गूढबोधः राज्यां स्वपिति शेते अत्र कश्चिद्विलापहेतुर्नास्तीति भावः तथापि त्वं वीतनिद्रा सती विलपसि न शेषे न स्वपिषीत्यतिचित्रम् अथवा नैतच्चित्रम् नलिननयनस्य हासेन सहितमुदारं यल्लीलेक्षितं तेन वयमिव गाढनिर्भिन्नचेताकच्चित् त्वमसि ॥ १५ ॥

हे चक्रवाकि नेत्रे न मीलयसि बत अहो कष्टं करुणं यथा तथा रोरवीषि च यतो नक्तं रात्रौ अदृष्टबन्धुः न दृष्टः बन्धुः पतिर्यया सा पतिवियुक्तेत्यर्थः । किम्वा वयमिव दास्यं गता सती अच्युतपादेन जुष्टां सेवितां स्रजं कबरेण वोढुं स्पृहयसे ॥ १६ ॥

भो भो उदन्वन् समुद्र । सदा सर्वदा स्वभावादेव अलब्धनिद्रः अधिगतप्रजागरः त्वं निष्टनसे स्तनशब्दे शब्दं करोषि, किम्वा मुकुन्दापहृतसर्वस्वाभिः अस्माभिः प्राप्तां दशा मुकुन्देकच्चित्ततां त्वमपि मुकुन्दापहृतास्मलाञ्छनः मुकुन्दापहृतश्रीकौस्तुभादिसर्वस्वः गतः प्राप्तः ॥ १७ ॥

हे इन्दो ! त्वं यक्ष्मणा गृहीतोसि अतः क्षीणः सन् तमो

किं त्वाचरितमस्माभिर्मलयानिल तेऽप्रियम् ।
गोविन्दापाङ्गनिर्भिन्ने हृदीरयसि नः स्मरम् ॥ १९ ॥
*मुग्ध ध्यायसि किं गृहाण पुरतः कुन्द विकासोन्मुखं—
किं कुन्दं न ममामुना सुमनसः कीदृग्विधास्त्वत्प्रियाः ॥
पुन्नागं मृगये सखि श्रुतिशिरोभूषाविशेषाचितं—
गावोऽप्युज्झितसूनमासत तदामोदप्रकर्षोन्मुखाः ॥ ० ॥
मेघ श्रीमंस्त्वमसि दयितो यादवेन्द्रस्य नूनं श्रीवत्साङ्कं वयमिव भवान् ध्यायति प्रेमबद्धः ।
अत्युत्कण्ठः शबलहृदयोऽस्मद्विधो बाष्पधाराः स्मृत्वास्मृत्वा विसृजसि मुहुर्दुःखदस्तत्प्रसङ्गः॥२०॥
प्रियरावपदानि भाषसे मृतसञ्जीविकयाऽनया गिरा ।
करवाणि किमद्य ते प्रियं वद मे वल्गितकण्ठ कोकिल ॥ २१ ॥
*शुकराज माय यदुदेवसत्कथां कुर्मस्तवाङ्ग पयसोपसेचनम् ।
विरहाग्नितप्तहृदयेष्वलं रमारमणाभिधानसुधया च सिञ्च नः ॥ ० ॥
न चलसि न वदस्युदारबुद्धे क्षितिधर चिन्तयसे महान्तमर्थम् ।
अपि बत वसुदेवनन्दनाङ्घ्रिं वयमिव कामयसे स्तनैर्विधर्तुम् ॥ २२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

न च्छिन्नोपि कश्चित् किंवा यथा वयं तद्वत्त्वमपि मुकुन्दगदितानि रहस्यानि विस्मृत्य तदेकचिन्तया क्षीणोसि भो इन्दो ! यतो नोस्माभिः स्थगितगीस्तब्धवाक् च त्वं तथैवोपलक्ष्यसे ॥ १८ ॥

---

### भाषा टीका ।

हे कुररि इस जगत्मे ज्ञानको गुप्त कर श्रीकृष्ण भगवान् रात्रिमें सोयरहे और तू निद्रा रहित विलाप करतीहै सूती नहीहै तोको यह निद्रा भङ्ग करना उचित नहि अथवा तेरा अपराध नहि हे सखि हमारी नाई कमलनेत्र श्रीकृष्णके हसनि सहित उदार लीला पूर्वक देखनेसे क्या तेरो चित्तभी अत्यन्त भिन्न होगयाहै ॥ १५ ॥

हे चक्रवाक तू रात्रिमें नेत्रमीचताहै और दूसरीको करुण जैसे होइ तैसे वारम्वार रोइ रहीहै सो क्या तोको पतिका दर्शन नहि भया अथवा हमारी तरह दास्यको प्राप्त होकर श्रीकृष्णके चरणसे मर्दितमालाको जटामें धारण करनेके तू वाछा करतीहै इसीसे तू व्यग्र चित्त होरही है ॥ १६ ॥

हे हे समुद्र निद्राको नहिं प्राप्त होकर जागरणको प्राप्त होकर तू सदा पुकारता रहताहै सोक्या जिस मोह दशा हमें प्राप्त भईहै उसी दशाको तूभी प्राप्त होगया सम्भोग करनेसे जैसे हमारे कुङ्कुमादि चिन्ह कृष्णने हरि लियाहै तैसेहि तेरेभी कौस्तुभा चिन्ह उसने हरि लियेहैं तू एसा लख्यो परेहै ॥ १७ ॥

हे चन्द्र बलवान् क्षई रोगने तू ग्रस लियाहै इसीसे कलाक्षीण होकर अपनी किरणोंसे तू अन्धकारका नाश नहि करताहै क्या हमारी नाई मुकुन्दके कहे वचनोंको भूलकर केवल उसीकी चिन्तासे वाणी बन्द होकर तू खिन्नहै उसी प्रकारका हमको दीख पडताहै ॥ १८ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अप्रियाचरणं विना स्मरोदीरणेन व्यथा जननं हे मलयानिल । तवानुचितमित्यर्थः ॥ १९ ॥

मेघेति । आतपार्तिहरणादिसाम्यात्त्वं यादवेन्द्रस्य नूनं दयितः सखाऽसि अतो भवांस्तं ध्यायति ध्याने लिङ्गान्याहुः अत्युत्कण्ठ इत्यादि अहो किमिति त्वया तेन सख्यं कृतं यतो दुःखदस्तत्प्रसङ्ग इति ॥ २० ॥

हे कोकिल ! मे प्रियरावस्य प्रियस्वरस्य श्रीकृष्णस्य पदानीव पदानि शब्दांस्त्वं मृतान् सञ्जीवयतीति तथा तयाऽनया कोमलया गिरा वल्गितकण्ठ रमणीयकण्ठ मे कथय किं तव प्रियं करवाणीति ॥ २१ ॥

---

* शुक० वीर० विज० येषु अधिकपाठः ।

श्रीधरस्वामिकृतभावार्थदीपिका।

हे क्षितिधर त्वं न वदसि न चलसि अतो नूनं महान्तमर्थं चिन्तयसे बत तर्हि अपि किं यथा स्तनैर्विधर्तुं वयं कामयामहे तथा त्वं स्तनतुल्यैः शृङ्गैर्वोढुं कामयसे। ओमिति चेत्तर्हि तथाप्यस्मद्वत्स्था भविष्यतीति भावः ॥ २२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

रात्रिशेषे मृदुवहन्तं स्मरोद्दीपनं मलयवातं स्तुतिव्याजेन निन्दन्त्य आहुः–किन्त्विति। तत्र स्तुतिर्यथा हे मलयानिल मलयस्य परमार्थतः श्रीमदगस्त्यनिवासस्य व्यवहारतश्च-न्दनाकरस्यानिल ते तव प्रियमस्माभिर्नु अहो किमाचरितं यतो गोविन्दस्य पृथिव्याभारहरणायपृथिव्यामवतीर्णस्येत्यर्थः तस्यापाङ्गेन निर्भेदकत्वात् वाणरूपेण निःशेषेण भिन्ने हृदि जीवाधारकोशे स्मरं स्मृतिं चैतन्यमीरयसि पुनः प्रवेशयसि यद्वा स्मरं काममपीरयसि किमुत चैतन्यमिति भावः यद्वा अनिलेन त्वयेरणात्रिजानुभवात् स्मरस्य बहिस्त्वमवगम्यते ततस्तत्रिर्भिन्नत्वाम्मृतकल्पं प्राप्ते हृदि यदन्तिमक्रियोचितं तद्रूपवह्नीमीरयसि ददासि तस्मात् किन्त्वाचरितमित्यादि अथ निन्दा यथा हे तादृश! अस्माभिरेव तवाप्रियं किमाचरितं तद्वदेत्यर्थः। नु वितर्के विचारेणापि नास्मद्बुद्धिगोचरस्तदित्यर्थः कथं तदाह–तादृशगोविन्दापाङ्गनिर्भिन्नेऽप्यस्माकं तादृशेष्वपि तादृशं स्मरमीरयसि तन्नु विनाप्यप्रियाचरणमन्यहतस्य तत्रापि म्रियमाणस्यदहानं तादृशस्य तव नोचितं तथा क्षणविलम्बासहत्वात्परमचापल्यञ्चेति भावः। यद्वा तादृशेऽपि हृदि काममीरयसि अहो तव मूर्खत्वं वृथा विडम्बनकर्तृत्वं चेति भावः ॥ १९ ॥

अथ समुद्रान्तिके वर्षन्तं मेघं श्रीभगवद्विरहार्त्या रुदन्तं मत्वा तत्सारूप्यदर्शनप्रीतेनाकृत्रिमसौहृद्येनाहुः–मेघेति। नूनं वितर्के इति सर्वत्र वाक्ये योज्यं हे मेघ त्वं यादवेन्द्रस्य नूनं दयितः प्रियसखोऽसि यतः हे श्रीमन् प्राप्ततत्सारूप्यलक्ष्मीक ततः किं तत्राहुः प्राप्तसारूप्यादपि भवद्भिर्वाञ्छिलक्षणलक्ष्मीकममुं भवान् नूनं ध्यायति ननु प्राप्ते पर्य्यन्तफले फलस्य वा न्यूनत्वं किन्तद्ध्यानेन तत्राहुः प्रेमबद्ध इति तत्स्त्रीमूर्तेस्तथा स्वभावो यथा तत्र प्रेमैव जायते नौदासीन्यं नत्वैश्वर्येति भावः। तत्रोभयत्रापि दृष्टान्तः वयमिवेति यस्मादेवं प्रेमबद्धस्तस्मात् नूनमत्युत्कण्ठितेन निर्वेदादिनानाभावशबलचित्तोऽप्यसि तत्रापि हेतुः अस्माकमिव इति। प्रेमबद्धतासादृश्यात्स्वानुभवेन जायस इत्यर्थः। यद्वा अत्युत्कण्ठत्वेन लक्षण शवलहृदयः शवलं वैवर्ण्येन नानावर्णं हृदयं मध्यभागो यस्य तथाभूतोऽसीति तच्च युक्तमित्याहुः अस्माकमिव इति अहो नूनमत एव तं स्मृत्वा स्मृत्वा वृष्टिरूपा वाष्पधारा मुहुः सृजसि सर्वत्र विकिरसि युक्तञ्च तत्तदित्याहुः दुःखद इति प्रसङ्ग आसक्तिः प्रस्तावमात्रं वा ॥ २० ॥

अथ राज्यवसाने कूजन्तं कोकिलं पूर्ववत् स्तुतिनिन्दाभ्यामाहुः—प्रियरावेति तत्र स्तुतिः हे कोकिल पञ्चमगानप्रसिद्ध तत्रापि वल्लितः प्रियेणैव शिक्षाविशेषाद्वलगुकृतः कण्ठो यस्य हे तथाविध प्रियस्य राव इव रावः पञ्चमस्वरो यत्र तादृशानि पदानि गीतनिबद्धान् शब्दान् भाषसे। यद्वा प्रियस्य रावः शिक्षावचनं येषु तादृशानि पदानि तुल्यानुरूपान् शब्दान् भाषसे। ततस्तदैकत्व्यबोधकेन तद्विरहमृतान् सम्यग् जीवयसीति तथा तया गिरा हेतुना किं प्रियं करवाणि तुभ्यं मह्यं वद। कृपया ज्ञापय अत्रैकवचनं प्रत्येकमपि तत्तत्कर्ताविवक्षया पृथगुक्तेः अथ निन्दा हे वल्गुकण्ठ कोकिल मृतसञ्जीविकया तया गिरा हेतुना प्रियस्य रावः शिक्षा यत्र तादृशानि पदानि भाषसे। मया तद्विरहासहिष्णुत्वाज्जीवन्मरणमेव वरं मन्यते तत्तु स इव त्वमप्याप्ततो ऽमृतायमानवचनेन मध्ये मध्ये विधारयन् दुःखद एवासीदिति भावः तस्मात्तवाप्रियं तुण्डत्रोटनादिकमत्रापराधे किं करवाणि तत्त्वमेव वद स्वदण्डविशेषं स्वयमेवानुमन्यस्व अन्यथाऽपराधवत्त्वयो न भवेदिति भावः ॥ २१ ॥

महाचिरं रात्रौ प्रायः शयितसर्वजन्तुत्वात्तूष्णीं स्थितं चारुणोदये श्रीरैवतकं दृष्ट्वाहुः—नेति। हे क्षितिधर यद्यपि पञ्चाशत्कोटियोजनविस्तीर्णां पृथ्वीं धरसि तथापि न चलसि न च वदसि तस्मादेव हे उदारबुद्धे महाचित्त तदेव दर्शयन्ति कमपि महान्तमर्थं पुरुषार्थं चिन्तयसे चिन्तयसि कामयसे इति तत्रापि सशङ्कमाहुः अपि प्रश्ने बत खेदे सच महार्थो मतभेदान्नानाविध इति तत्रदेवदासत्पूज्यस्य श्वशुरस्य यो नन्दनः प्रधानपुत्रोऽस्मत्पतिरित्यर्थः। आर्य्यपुत्र इति वत् स्पष्टतया अनुक्तिर्लज्जया तस्य वसु परमधनरूपमङ्घ्रि द्वयमिव स्तनैर्विधर्तु स्वयं नाराध्यमानः स्तबीकृतैः शृङ्गैरालिङ्गितुं किं कामयसे यदि कामयसे तदास्माकमिव तवापि बुद्धिहीनत्वं स्वप्राणमात्रेऽपि धारणासामर्थ्यं भविष्यतीत्यर्थः। स्तनानां बहुत्वनिर्देशस्तु तस्य लोभातिशयं द्योतयति अत्र वसुदेवपदयोर्भिन्नक्रमतया प्रयुक्तयोरप्येकत्र सम्भापेन श्वशुरनामोच्चारणप्रमादः उन्मादोक्त्या न दोषायेति ज्ञेयं टीकायां न चलसि न वदसि नयोर्व्युत्क्रमनिर्देशः प्रायो लेखकभ्रमादिति ॥ २२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

किं त्वेति। हे मलयानिल! ते तुभ्यमस्माभिः किं वाऽप्रियमाचरितं कृतं यतस्त्वं गोविन्दस्यापाङ्गैर्नितरां भिन्ने नोऽस्माकं हृदि हृदये स्मरं काममीरयसि अप्रियाचरणं विना स्मरोद्दीपनेन व्यथाजननं तवानुचितमित्यर्थः ॥ १९ ॥

काञ्चित्प्रियमन्वेषयन्तीं पुष्पाण्यन्वेषयन्तीमिवालक्ष्य कस्याश्चिदुत्तरप्रत्युत्तररूपं वाक्यमाह—मुग्धेति। हे मुग्धे! किं ध्यायसि पुरतः स्थितं विकासोन्मुखं कुन्दं गृहाण एवमुक्ता प्राह, कुन्देन ममामुनेति। अमुना वर्णरहितेन कुन्देन किं न किञ्चिदपि प्रयोजनं किन्तु मुकुन्दमेवान्वेषयामि। नित्याभिसन्धिः पुनः प्राह, त्वत्प्रियाः सुमनसः पुष्पाणि। कीदृग्विधा सा पुनः प्राह, पुन्नागं मृगये सखि! श्रुतिशिरोभूषयिष्यमिति हे सखि श्रुतिशिरोभूषाविशेषायितं श्रोत्रये शिरसि च भूषणविशेषवदाचरन्तं पुन्नागं मृगये श्रुतिशिरस्सु वेदान्तेषु भूषाविशेषायितं पुन्नागपुरुषश्रेष्ठं मृगय इत्यभिसन्धिः ननु किम्बह्वीषु सुमनस्सु सतीषु विशेषेण पुन्नागमेव मृगयसे

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्यत आह गावोपीति । उज्झितं गलितं सूनं पुन्नागं कुसुमं तदामोदप्रकर्षेण उन्मुखा आसत मृगयन्त्योऽवतिष्ठन्ते पशवोऽप्येवं किम्पुनरहमिति भावः पक्षान्तरे गावः वेदान्तवाचोऽपि उज्झितसूनं त्यक्तजन्मानमजमित्यर्थः पुरुषश्रेष्ठं तदामोदप्रकर्षेण तत्कल्याणगुणप्रकर्षे उन्मुखाः प्रतिपादनोन्मुखाः औन्मुख्यतामात्रमेव तासां नतु कार्त्स्न्येन तत्प्रतिपादनमानन्त्यादिति भावः आसत केवलं मृगयन्त्यः समासत इत्यर्थः ॥ ० ॥

मेघेति । हे मेघ त्वं यादवेन्द्रस्य यदूत्तमस्य त्वं दयितः प्रियोसि नूनं आतपार्तिहरणादिलाभवात्त्वां तत्सखमालक्षये इति भावः । अतो भवान् वयमिव श्रीवत्साङ्के तद्विषयप्रेम्णा बद्धो निश्चलो ध्यायति किं ध्यानलिङ्गान्याह—अत्युत्कण्ठमित्यादि अस्मद्विधः वयमिवेत्यर्थः । अत्युत्कण्ठं यथातथा सजलहृदयः बाष्पधाराः सृजसि मुञ्चसि शुक्लैतदित्याह दुःखदस्तत् प्रसङ्ग इति ॥ २० ॥

प्रियेति । हे कोकिल प्रियरावस्य प्रियम्वदस्य श्रीकृष्णस्य पदानीव पदानि शब्दान् भाषसे मृतान् सञ्जीवयतीति तथा कोमलया गिरा वल्गितकण्ठ रमणीयकण्ठ मे कथय किं तेऽद्य प्रियं करवाणि इति ॥ २१ ॥

शुकराजेति । शुकराज । वसुदेवस्य सत्कथां गाय कथय "गैशब्दे" लटो मध्यमैकवचनम् अङ्ग हे शुक तव पयसा क्षीरेण उपसेचनमभिषेकं कुर्मः त्वत्तो ऽस्माकं विरहाग्निना तप्तेषु हृदयेषु रमारमणस्य लक्ष्मीकान्तस्याभिधानसुधया कथामृतेनालं नितरां सिञ्च ॥ ० ॥

न चलसीति । हे क्षितिधर ! त्वं न चलसि न वदसि च किन्तु महान्तमर्थं चिन्तयसे तर्हि किमयं यथा स्तनैर्वसुदेवनन्दनस्य श्रीकृष्णस्याङ्घ्रि विधर्तुं कामयामहे तथा त्वमपि स्तनतुल्यैः शृङ्गैर्धर्तुं कामयसे किम् ॥ २२ ॥

———

श्रीमज्जीवगोस्वामिकृतबृहत्क्रमसन्दर्भः ।

काचित्तत्रैव समये मेदुरं वहन्तमनिलमभिमृश्य तद्बाधितेव सासूयमाह—किन्त्वाचरितमित्यादि । हे मलयानिल अस्माभिस्ते किमप्रियमाचरितं न किमपीति चेत् कथमेवं पीडयसीत्याह गोविन्दापाङ्गनिर्भिन्ने किं स्मरं ईरयसि प्रेरयसि क्षेत्रेजमीररसमिवेति शेषः असूयाव्यभिचारी ॥ १९ ॥

तत्रैव काचिन्मेघमालोक्यैव निगदति—मेघ श्रीमन्नित्यादि हे मेघ श्रीमन् श्रीयुक्त ! त्वं यादवेन्द्रस्य दयितोसि मित्रमसि सावर्ण्यात् श्रीमत्त्वाच्च स श्रीमान् लक्ष्मीवान् त्वमपि शोभावानित्यर्थः । नूनं मन्ये वयमिव भवानपि श्रीवत्साङ्के प्रेमबद्धः सन् ध्यायसि प्रेमबद्धत्वं व्याकरोति अतीत्यादि अपि सम्भावनायां उत्कण्ठ उत्कण्ठावान् उद्ग्रीवो वा शबलहृदयो नानाभावशाबल्यबाधितमनाभूत्वा बाष्पधारां विसृजसि मुहुः अस्मद्विधः अस्मत्सदृशः सादृश्ये विधप्रत्ययः किङ्कृत्वा स्मृत्वा तव प्रेमानुबन्धस्मरणेन उचितमेवैतत् कथमित्याह दुःखदस्तत्प्रसङ्गः तत्प्रस्तावमात्रमपि दुःखदं किमुत निरन्तरानुस्मरणमिति ॥ २० ॥

तत्रैव काचित्पिकरवमाकर्ण्य प्रीयमाणाह प्रियरावेत्यादि हे कोकिल अद्य किं ते प्रियं करवाणि वद कथमकाण्डे नः प्रियं भवत्या कार्य्यमित्याह हे प्रियराव प्रियस्य राव इव रावो यस्य स तथा हे तथाभूत मृतसञ्जीविकया मृतसञ्जीविन्या अनया गिरा पदानि भाषसे यद्वा प्रियस्य श्रीकृष्णस्य राव पदपदानीरयसे क्रमेण पदं हे वल्गितकण्ठ चञ्चलकण्ठः ॥ २१ ॥

तदैव काचित् रैवतमनुस्मृत्य निगदति—न चलसीत्यादि । हे उदारबुद्धे ! क्षितिधर न चलसि न वदसि कोऽर्थः आं ज्ञातं महान्तं अर्थं प्रयोजनं किमपि चिन्तयसे तदेव गृहीत्याह अपिबतेत्यादि अपि सम्भावने बत खेदे वसुदेवनन्दनाङ्घ्रि स्तनैः स्तनप्रायैः शिखरैर्विधर्तुं कामयसे वयमिव वयं यथा स्तनैर्वोढुं कामयमाना निरन्तरं कमप्यर्थं चिन्तयामः त्वं पुरुषो भूत्वाऽपि स्त्रीभावमासाद्य कामयसे इति निगर्वः ॥ २२ ॥

———

श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

तामसराजस्यः कामेन पीडिताः मलयानिलं शपन्त्य आहुः—किन्त्वाचरितमस्माभिरिति । हे मलयानिल ! तुभ्यमस्माभिः किन्त्वा अप्रियमाचरितं मलयानिलस्य शीतलस्य अप्रियमुष्णत्वापादकं यदा भगवता सह स्थितं तदा स्वहृदयचन्दनादिभिः त्वमस्माभिरतिशीतलः कृतः [illegible] कथं त्वमपकारं करोषि कोऽपकारः कृत इति चेत्तत्राहुः—गोविन्दस्य अपाङ्गेनैव स्मृतेन निर्भिन्ने हृदये स्मरं प्रेरयसि यथा कश्चित् कोटरे अग्निं प्रयच्छति तेन सर्वोपि वृक्षः आर्द्रोपि दग्धो भवेत् तथा त्वमस्मान् करोषीत्यर्थः । गोविन्दपदेन गोकुलगतस्य भगवतो लीला स्मृता अतएव महत् दुःखं जातमिति सूचितम् ॥ १९ ॥

तामससात्त्विक्यस्तु मेघं भगवत्सदृशं दृष्ट्वा चन्द्रगावधायको जात इति क्षणं शैत्यं प्राप्ता इव तं स्तुत्वा आत्मस्वभावारोपेण तमपि दुःखितं कल्पयित्वा तद्दुःखापनोदनं सान्त्वेन कुर्वन्ति अथ यदि साम्प्रतं वयं नमा इति नव रोपस्तथापि मलयानिलः सर्पादिभिर्ग्रस्तः समायाति [illegible] केनापकारः कर्तव्य इति सूचितं मेघ श्रीमन्निति मेघे परमशोभाविद्युदादिरूपा वर्तन्त इति श्रीमान् भवति [illegible] तं सम्भावयन्ति त्वं भगवतः दयितोसि [illegible]त्वात् प्राणिभ्यो जीवनदातृत्वात् [illegible] अत एव दयितः ननु तर्ह्यहं सुखी युष्मानपि सुखयुक्तान् करिष्यामीत्याशङ्क्याहुः—श्रीवत्स एवाङ्कं चिह्नं यस्येति [illegible]क्रमं कुर्वन्तीति चिन्तया [illegible]त्यर्थः । यथास्माकं श्रीवत्से लक्ष्मीस्तिष्ठन्तीति साम्प्रतं तथा सा स्थितोऽस्मान्न गणयतीति दुःखं तस्मादेकस्यैव श्रीवत्सस्य उभयोः दुःखे निमित्तत्वमिति वयमिवेत्युक्तं विस्मरणं क्रियतामित्याहुः प्रेमबद्ध इति प्रेम्णा अन्तःकरणं बद्धो विस्मर्तुमशक्यः । नन्वहं सुखी

## श्रीमद्वल्लभाचार्यकृतसुबोधिनी ।

धर्मो मयि भवतीभिः के दृष्टा इत्याकाङ्क्षायामाहुः—कण्ठ इति । पञ्चविधः क्लेशस्त्वय्युपलभ्यते आद्यः ...अतिशयस्त्वयि मानसः शबलहृदय इति शबलं ...कर्मणि वाच्यत्वेनोपस्थिते हृदयं यस्येति अत एव ...तमपि गर्जनं न्यवारयति अतोऽस्मद्विधः धूसरो गति-वैकल्यायश्च जातः उपर्यासीनं दृष्ट्वा वदन्ति एतस्य सर्व-नियामकं दुःखमाहुः—बाष्पधाराविसृजसीति पुनःपुनः ...आयत इति स्मृत्वा स्मृत्वाकं पुनःपुनः स्मरणं दुःखदं नन्वस्माभिः कोपराधः कृतः येनास्माकं दुःखं ...त्याशङ्क्याहुः—दुःखदस्तत्प्रसङ्ग इति तस्य प्रसङ्गमात्र-दुःखहेतुः प्रकृष्टः सङ्गः सुतरामेव अन्यथाऽस्माभिर्वा ...राधः कृतः जगति च कोप्येतादृशो न दृश्यते यो भगवत्...प्राप्य क्षणं वा स्वस्थो भवति इदञ्च दूषणं प्रसङ्गा-...मिति अननुभूतो न जानातीति न बाधकत्वम् ॥ २० ॥

...त्विकसात्त्विक्यो निरूपयन्ति प्रियरावपदानि भाषसे ...ताः कोकिलशब्दं श्रुत्वा भगवानस्मानाकारयतीति परमानन्दमनुभूय एतादृशं सुखमस्मभ्यं कोकिलवाक्या-...मिति तं स्तुवन्ति प्रियस्वराव इव रावो (य)स्य हे प्रियरावेति ...त्सम्बन्धोऽस्मिन् वर्तत इति त्वया सह आलापेपि न ...त्र दूषणमस्ति ननु कथमेतदवगतं भगवद्वाक्यमेतन्न ...ते किन्तु कोकिलवाक्यमिति तत्राहुः पदानि भाषसे ...तदुच्चारिते वाक्यार्थो नावगम्य इति न तदुच्चारि-...वाक्यत्वं किन्तु भगवदुक्तपदानि सादृश्यात्पदत्वं तर्हि-...शरण्याः कोपयोग इतिचेत्तत्राहुः—मृतसञ्जीविकयाऽनया ...इति पूर्वं भगवद्विरहेण मृतप्राया जाताः यदि क्षणमयं ...शब्दो न श्रुतः स्यात् तदा मृता एव भवाम इति इयं वाणी ...सञ्जीविका अनया कृत्वा उपलक्षिताय किं प्रियं करवाम ...उपकारेणापि तस्याहेतुत्वाद्वा तृतीया तत्रैका विशेषतो ...मे वदेति । मम स्थाने एकान्ते कथय चीरोदनं ...यामीति भावः । परं त्वया एतादृशः शब्दः पुनः पुन-...य इति अभिप्रायेणाहुः—वलितकण्ठेति । वलितः कण्ठो ...स्य शब्दोच्चारणार्थं प्रयत्नं करोषि परं न वदसीति कथन-...नार्थं सम्बोधनं कोकिलेति सम्बोधनम् ॥ २१ ॥

तस्य शब्दप्राधान्यत्वाय सात्त्विकराजस्याह—न चलसि न वदसीति । अयमपि पर्वतः भगवच्चरणारविन्दधारणाच्छक्तो ...नीति निर्णीयते तादृशोपि यन्नामोच्चारणं न करोति अतस्तत्र कारणं पृच्छति—भ्रान्तत्वं निवारयन्त्येव हे उदारबुद्धे इति उदारता बुद्धेरस्येति तस्य बुद्धिरेवं विचारयति किं नामोच्चार-णेन आश्रयमात्रेणैव कृतार्थता भविष्यति तथोपायः कर्तव्यः येन विश्वमेव कृतार्थं भवतीति विचारयति अतः सर्व एव पुरुषार्थयुक्ता भवन्त्विति बुद्धिरुदारा भवति अत एव महा-न्तमर्थं चिन्तयसे अतो मनो निश्चलमिति कायोपि वागपि निश्चला तदाह—न चलसि न वदसीति अस्य सौबुद्ध्य उप-पत्तिरस्तीत्याहुः—अपिवतेति वसुदेवनन्दनस्यैव अङ्घ्रिरेतादृशो-भवति तमेकोपि चिन्तयन् विश्वं मोचयितुं शक्नोति अतो-ऽङ्घ्रिचिन्तनमेव प्रायेण तवाभिलषितं नन्वेतत्कथं ज्ञायते नहि साधारणोपि इममर्थं जानातीति चेत्तत्राहुः—वयमिव कामयस इति । अस्माकमप्येवैव कामना तस्योपरि भगवच्चरणः स्थाप-नीय इति इदन्तु शयाने भगवति अस्माकं पादसम्बाहन सिद्ध्यति भवतु त्वदुपरि भ्रमणे समाः प्रत्यन्तभागाः पर्व-तस्य विशेषेण साधारणसम्बन्धावौ तस्य च सात्त्विकभावो-द्रेकेण : प्रस्तरादिषु चरणाकृतिधारणे यथा गयायां एतावान् विशेष इत्यर्थः ॥ २२ ॥

---

## श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

हे मलयानिल ते किं अप्रियं वैरं । अस्माभिराचरितं यदस्मिन् विपत्समये त्वं वैरपरिशोधनं करोषीत्याहुः गोवि-न्देति ॥ १९ ॥

दयितः सखा त्वमसि प्रेमबद्धः प्रेम्णा प्राप्तबन्धनः सन् तं ध्यायति श्रीवत्साङ्कमिति तस्य च वर्णेन साम्येपि तस्य श्रीवत्साङ्कोऽधिक इति तत्र तवाशक्तिकारणमवगतमिति भावः । शबलहृदयः विषादमलिनचेताः वृष्टिमिषेण बाष्पधाराः विसृजसि वृष्टिमिषेण रोदिषि अहो किमिति त्वया तत्रासक्तिः कृता यतस्तत्प्रसङ्गोपि दुःखद एव ॥ २० ॥

हे प्रियराव कोकिल अनया गिरा पदानि अस्मद्विरह-दुःखत्राणान्येव भाषसे "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः वलितःवल्गूकृतःकण्ठो येन हे तादृश अत्र विरहे कोकिलशब्दस्य दुःखदत्वात् प्रियरावेत्यस्याः सर्वा एव विपरीतलक्षणया वक्रोक्तय एव तेन स्वशब्देन मां ज्वाल-यतस्तव किं प्रियं करवाणि तुण्डमेव भक्ष्यामीति भावः ॥ २१ ॥

हे क्षितिधर रैवतकपर्वत नूनं त्वं महान्तमर्थं स्वाभी-ष्सितं चिन्तयसि अपि बतेति [ बत ] इदं वा तवाभीप्सितमि-त्यर्थः । वयं यथा स्तनैर्धर्तुं कामयामहे तथा त्वं स्तनैः किं वोढुं कामयसे ओमितिचेत्तर्हि तवाप्यस्मदवस्था भविष्यतीति भावः ॥ २२ ॥

---

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हे मलयानिल ! ते तुभ्यं अप्रियमस्माभिः किमाचरित-तनुष्टितं गोविन्दापाङ्गैर्नितरां भिन्ने नोऽस्माकं हृदि स्मरं व्यथा जनकं काममीरयसि । १९ ॥

हे मेघ हे श्रीमन् त्वं श्यामत्वेन विद्युत्परत्वेन तापापहरत्वेन श्यामसुन्दरस्य पीतपट्टादिभीयुक्तस्य त्रिविधतापहरस्य यादवे-न्द्रस्य नूनं दयितः प्रियोसि भवान् प्रेमबद्धः वयमिव श्रीवत्साङ्कं ध्यायति यतः अस्मद्विधः वयमिव अत्युत्कण्ठः शबलहृदयस्सन् तमेव स्मृत्वा स्मृत्वा वाष्पधाराः मुहुः विसृजसि एवमवस्थापादकत्वात्तत्प्रसङ्गो दुःखदः ॥ २० ॥

मृतान्सञ्जीवयतीति तया तया अनया कोमलया गिरा हे वलितकण्ठ त्वं प्रियरावस्य प्रियभाषस्य श्रीकृष्णस्य पदानीव पदानि शब्दान् भाषसे अतः ते किं प्रियं करवाणि तन्नो कथय आविश ॥ २१ ॥

शुष्यद्ध्रदाः करशिता बत सिन्धुपत्न्यः-
सम्प्रत्यपास्तकमलश्रिय इष्टभर्तुः।
यद्वद्वयं यदुपतेः प्रणयावलोक-
मप्राप्य मुष्टहृदयाः पुरु कर्शिताः स्म ॥ २३ ॥
हंस स्वागतमास्यतां पिब पयो ब्रूह्यङ्ग शौरेः कथां
दूतं त्वां नु विदाम कच्चिदजितः स्वस्त्यास्त उक्तं पुरा।
किम्वा नश्चलसौहृदः स्मरति तं कस्माद्भजामो वयं-
क्षौद्रालापय कामदं श्रियमृते सैवैकनिष्ठा स्त्रियाम् ॥ २४ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

हे क्षितिधर हे उदारबुद्धे त्वं महान्तमर्थं कमपि चिन्तयसे यतः न चलसि नवदसि अपि किं वा वयमिव वसुदेवनन्दनाङ्घ्री स्तनैर्विधर्तुं कामयसे बत इति खेदे अहो कथं त्वमसि श्रीकृष्णेन लोकव्यवहारात् चालितोसीति भावः ॥ २१ ॥

---

भाषाटीका।

हे मलयानिल हमने तेरा क्या बिगार किया क्योंकि गोविन्द के कटाक्षों से प्रथमहि हमारा हृदय अत्यंत विदीर्ण होरहा है इस के ऊपर हमारे हृदय में तू कामको प्रेरणा करता है ॥ १९ ॥

हे श्रीमन्मेघ! तू निश्चय कर श्रीकृष्ण को प्रति प्यारो है इसी से हमारी नाई प्रेम से बध कर तू श्रीवत्स चिन्ह धारि श्रीकृष्ण का ध्यान करता है हमारी नाई अति उत्साह युक्त होने से प्रेम से भीजा चित्त वारा होकर. उस कृष्ण का वारंवार स्मरण कर के वारंवार तू आंसू. की धारा छोड रहा है उस का प्रसंग इसी प्रकार दुःख दाते है ॥ २० ॥

हे मनोहरकण्ठ! वारे कोइल प्रिय वचन बोलने वारे कृष्ण के वचन को तू मरे को जियाने वारी इस वाणी बोल रही है हे प्रिय! भोले वारे इस समय हम तेरा क्या प्रिय करें ॥ २१ ॥

हे पर्वत! हे महाबुद्धे! तू न चलता है और न कुछ कहता है इस से मालूम होता है कि तू किसी महान् अर्थ का चिंतवन करता है यदि ऐसा है तो वसुदेव नन्दन के चरण को स्तनों से धारण करें कि जैसे हम वांछा करती है. तैसेहि तूभी निज शिखरों से धारण. कर के वांछा करता है ॥ २२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका।

भोः सिन्धुपत्न्यो नद्यः सम्प्रति ग्रीष्मे सिन्धुर्मेघद्वारा अमृतवृष्ट्या युष्मानानन्दयति बत अहो कष्टम् अतः शुष्यन्तो ह्रदा यासां ताः अपगतकमलशोभाः कृशाश्च वयं यथा प्रियतमस्य भर्तुर्मधुपतेः स्म प्रासिद्धम् ॥ २३ ॥

तदैव दैवादागतं हंसं दूतं कल्पयित्वाऽऽहुः—हंसेति। नोऽस्मान् प्रति पुरा रहस्युक्तं किम्वा चलसौहृदः स्मरति स्मृत्वैव मां प्रस्थापितवानिति चेदत आहुः हे क्षौद्र क्षुद्रस्य दूत कस्मात्तं वयं भजामः कामार्थमाह्वयति युष्मानिति चेदत आहुः अहो तर्हि तमालापयाऽऽकारय ओमिति गच्छन्तमिव तं पुनराहुः यास्मान्वञ्चयित्वा एकाकिनी सेवते तां श्रियमृते तमेवाऽऽलापय सा तदेकनिष्ठा कथं परिहर्तुं शक्यत इतिचेदत आहुः स्त्रियाम् जातावेकवचनम् अस्मासु स्त्रीषु मध्ये किं सैवैक निष्ठा ननु वयमित्यर्थः। पाठान्तरे तु [illegible] मधु तद्वन्मधुरालापमात्रं यस्य तमकामदमरतिप्रदं श्रियमृते [illegible] कस्माद्भजामः किन्त्वनादृताऽपि सती पुनः पुनः सैव भजतु यतोऽस्माद्दृशो मानिन्यः स्त्रिय एकनिष्ठा एकत्रैव स्वसम्मानसिद्धौ निष्ठा यासामिति ॥ २४-२५ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

अथ निदाघे क्षुद्रा नदीर्दूरतो दृष्ट्वा ताश्च [illegible] पूर्वपूर्ववत्सम्बोध्य मिथ आहुः—शुष्यदिति बत [illegible] वा सिन्धोरपि पत्न्यः एताः सम्प्रति [illegible] श्रियो जाताः तथा शुष्यन्तो ह्रदास्तद्रूपहृदया [illegible] तथाभूताश्च जाताः किं कृत्वा दृष्टो भर्त्ता च [illegible] प्रणयावलोकं विरहात्मना निदाघेनैव विच्छेदनादप्राप्य तद्वदो अस्मत्साहश्यमेता अपि गता इति म्लानमुखमाहुः, यद्वद्वयमिति ततः पुरुकर्शिता इति पुरुशब्देनापेतमुखश्रीत्वमप्यन्तर्भावितम् ॥ २३ ॥

प्रातरागतं हंसं दूतं मत्वाहुः-हे हंसेति! स्वागतमिति! सुष्ठु आगतं किमित्यर्थः। यद्वा सुवत्सरे यत् स्वयमागतं तच्छोभनामेत्यर्थः तवश्चास्यतामुपविश्यतां पयः क्षीरं पिब एव

अर्हति ह्यच्युतः श्रैष्ठ्यं भगवान् सात्वतां पतिः ।
एष वै देवताः सर्वा देशकालधनादयः ॥ १९ ॥
यदात्मकमिदं विश्वं क्रतवश्च यदात्मकाः ।
अग्निराहुतयो मन्त्राः साङ्ख्यं योगश्च यत्परः ॥ २० ॥
एक एवाद्वितीयोऽसावैतदात्म्यमिदं जगत् ।
आत्मनात्माश्रयः सभ्याः सृजत्यवति हन्त्यजः ॥ २१ ॥
विविधानीह कर्माणि जनयन् यदवेक्षया ।
ईहते यदयं सर्वः श्रेयो धर्मादिलक्षणम् ॥ २२ ॥
तस्मात्कृष्णाय महते दीयतां परमार्हणम् ।
एवं चेत्सर्वभूतानामात्मनश्चार्हणं भवेत् ॥ २३ ॥
सर्वभूतात्मभूताय कृष्णायानन्यदर्शिने ।
देयं शान्ताय पूर्णाय दत्तस्यानन्त्यमिच्छता ॥ २४ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वरुणस्य राजसूये यथासन्निति शेषः ॥ १३—१५ ॥

अविस्मिता इति । कृष्णभक्तस्यास्य किमसम्भवमिति भावः ॥ १६ ॥

सुत्येऽहनि सोमाभिषवदिने ॥ १७ ॥

सदस्येषु मध्ये अग्र्यार्हणम् अग्रपूजा तस्याई योग्यम् अनेकान्त्यात् योग्यानां बहुत्वेनानिश्चयात् सभासदोऽलपन्ना एव ननु बहुभास्ते तु ब्रह्मकृष्णद्वैपायनादयो वयमधुना न पृष्टाः कथं ब्रूमहे किन्त्वात्मपरिकल्पितपरीक्षाप्रावीण्यविख्यातः सहदेवोऽत्र पूजायामधिकृत एव धर्मेन संवेत्स्यतीति यदत्तु दैवात्र आनीयात्तदा वयमपृष्टा अपि वक्ष्याम इत्येवमिति मनसि निश्चित्य तूष्णीमेव तत्र धर्मेन्ते स्मेति ज्ञेयम् ॥ १८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

पुरा पूर्वकाले वरुणस्य यथाभवन् उपकरण आसन्निति शेषः ॥ १३—१६ ॥

सुत्ये अहनि सोमाभिषवदिने अपूजयत पूजयितुमुपक्रान्तवान् ॥ १७ ॥

अग्र्यार्हणार्हम् विमृशन्तोऽपि नाध्यगच्छन् न ज्ञातवन्तः कुतः अनैकान्त्यात् एकस्मिन् अन्तः श्रेष्ठत्वेन पर्यवसानं यस्य तदेकान्तं ज्ञानं तस्य भावः ऐकान्त्यं तदभावो नैकान्त्यं तस्मात् तदा सहदेवः प्राहेति सम्बन्धः भीष्मादीनां तादृग्ज्ञानवतां तूष्णींभाव. सहदेवस्यैव श्रीव्यासाद्याज्ञया तत्राधिकृतत्वात् ॥ १८ ॥

भाषा टीका ।

पहले वरुण के राजसूय यज्ञ में जैसे पात्रआदि सुवर्णके रहो इसी प्रकार युधिष्ठिर के यज्ञ में भी यज्ञके पात्र आदि सुवर्ण के रहे ॥ १३ ॥

ब्रह्मा महादेव सहित तथा निज समूह सहित इन्द्रादि लोकपाल और सिद्धगन्धर्व विद्याधर बड़े २ नाग ॥ १४ ॥

मुनिजन यक्ष राक्षस पक्षी किन्नर चारण तथा बुलाए भए राजा लोग राजान स्त्री ॥ १५ ॥

वे सब पाण्डु के पुत्र राजा युधिष्ठिर के यज्ञ में आवते भए और वे सब आश्चर्य को प्राप्त भए श्री कृष्ण के भक्त राजा के राजसूय यज्ञ को सर्व प्रकार संपन्न मानते भए ॥ १६ ॥

देवगान के सदृश तेज वारे ऋत्विज लोग विधि के अनुसार राजसूय यज्ञ से राजा यजन कराते भए जैसे देवताओं ने पहले वरुण को यज्ञ कराते रहे ॥ १७ ॥

सोम के अभिषव दिवसमें राजा युधिष्ठिर सावधान होकर यज्ञके कराने वारे ऋत्विजन के तथा पूजा के योग्य अन्य सभापतीन के पूजन करने का प्रारम्भ करते भए ॥ १८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

साङ्ख्यं ज्ञानं योग उपासना ॥ २० ॥

ननु, साङ्ख्यं केवलपरं योगः सविशेषणपरः कथमुभयोरेकपरत्वं तत्राऽऽह—एक एवाद्वितीयोऽसावतः साङ्ख्यस्यैतत्परत्वं युक्तम् विशेषणभूतस्य सर्वप्रपञ्चस्य तन्मयत्वात्सविशेषणविषयस्य योगस्यापि युक्तमद्वितीयपरत्वमित्याह-ऐतदात्म्यमिति

द्वैपायनो भरद्वाजः सुमन्तुर्गौतमोऽसितः।
वसिष्ठश्च्यवनः कण्वो मैत्रेयः कवषस्त्रितः ॥ ७ ॥
विश्वामित्रो वामदेवः सुमतिर्जैमिनिः क्रतुः।
पैलः पराशरो गर्गो वैशम्पायन एव च ॥ ८ ॥
अथर्वा कश्यपो धौम्यो रामो भार्गव आसुरिः।
वीतिहोत्रो मधुच्छन्दा वीरसेनोऽकृतव्रणः ॥ ९ ॥
उपहूतास्तथा चान्ये द्रोणभीष्मकृपादयः।
धृतराष्ट्रः सहसुतो विदुरश्च महामतिः ॥ १० ॥
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा यज्ञदिदृक्षवः।
तत्रेयुः सर्वराजानो राज्ञां प्रकृतयो नृप ॥ ११ ॥
ततस्ते देवयजनं ब्राह्मणाः स्वर्णलाङ्गलैः।
कृष्ट्वा तत्र यथाम्नायं दीक्षयाञ्चक्रिरे नृपम् ॥ १२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका।

तानाह—द्वैपायन इति त्रिभिः ॥ ७—८ ॥

अकृतव्रणान्तानेतानृत्विगुपद्रष्ट्रादिभेदेन वव्रे ॥ ९ ॥

अन्ये चोपहूता यज्ञदिदृक्षवस्तत्रेयुरित्यन्वयः ॥ १०—११ ॥

देवयजनं यज्ञभूमिं कृष्ट्वा कर्षणादिभिः संशोध्य दीक्षयाञ्चक्रिरे दीक्षासंस्कारयुक्तमकुर्वन् ॥ १२ ॥

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी।

द्वैपेति त्रिकम्। द्वैपायनादीनां मुख्यत्वादेव एव वृताः अत्रान्ये इत्येवकारार्थः चकारः प्रत्येकमुक्तसमन्वये तत्र सर्वमुख्यो ब्रह्मा द्वैपायनः तथा च सभापर्वणि स्वयं "ब्रह्मत्वमकरोत् तत्र सत्यवतीसुतः" इत्यादि ॥ ७—९ ॥

उपेति युग्मकम्। अन्ये च ऋषयः द्रोणादयश्च तथा तेनोक्तेन श्रीकृष्णानुमोदनप्रकारेणैव हस्तिनापुरं श्रीनकुलं प्रेष्य उपहूताः आमन्त्रिताः आदिशब्दाद्बाह्लीकसोमदत्तादयः महामतिरिति ऐहिकपारलौकिकसर्वधर्मविदित्यर्थः तथा च तत्रैव "तत्र अध्यक्षोऽभवद्विदुरः सर्वधर्मवित्" इति ब्राह्मणाह्वानञ्च यथा तत्रैव श्रीयुधिष्ठिराज्ञया श्रीसहदेववाक्यम्—

आमन्त्रयध्वं राष्ट्रेषु ब्राह्मणान् क्षत्रियानपि।
विशश्च मान्यान् शूद्रांश्च सर्वानानयतेति च ॥

इति ॥ १०—११ ॥

यथाम्नायं वैदिकविध्यनुसारेण अस्योभयत्राप्यन्वयः ॥ १२ ॥



श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका।

तानेव निर्दिशति—द्वैपायन इति त्रिभिः। अकृतव्रणान्तान् एतान् ऋत्विगुपद्रष्ट्रादिभेदेन वव्र इति सम्बन्धः ॥ ७—९ ॥

उपहूता इति अन्ये च द्रोणादयः उपहूतास्सन्तो यज्ञं द्रष्टुमिच्छवः तत्रेयुराजग्मुरित्यन्वयः ॥ १०—११ ॥

तत इति। देवयजनं देवा इज्यन्तेऽस्मिन्निति तद्यज्ञभूमिं स्वर्णमयैर्लाङ्गलैर्हलैः कृष्ट्वा कर्षणादिभिः संशोध्य नृपं युधिष्ठिरं दीक्षासंस्कारयुक्तमकुर्वन् ॥ १२ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली।

उपहूताः मुनयः यज्ञान्ये अनुपहूता अपि तत्राजग्मुः तत्र द्रोणादयोऽप्युपहूताः ॥ १०—११ ॥

यत्र यज्ञकरणमभीप्सितं तद्देवयजनं स्वर्णलाङ्गलैः सुवर्णमयहलैः कृष्ट्वा विलिख्य संशोध्य शालां कृत्वा तत्र यथाम्नायं नृपं दीक्षयाञ्चक्रुरित्यन्वयः ॥ १२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

देवयजनं यज्ञभूमिं कृष्ट्वा कर्षणादिभिः संशोध्य दीक्षयाञ्चक्रिरे दीक्षासंस्कारयुक्तमकुर्वन् ॥ १२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

तान्निर्दिशति-द्वैपायन इति त्रिभिः ॥ ७—९ ॥

अन्ये उपहूताः यज्ञदिदृक्षवस्तत्रेयुरिति द्वयोरन्वयः ॥ १०-११ ॥

हैमाः किलोपकरणा वरुणस्य यथा पुरा ।
इन्द्रादयो लोकपाला विरिञ्चिभवसंयुताः ॥ १३ ॥
सगणाः सिद्धगन्धर्वा विद्याधरमहोरगाः ।
मुनयो यक्षरक्षांसि खगकिन्नरचारणाः ॥ १४ ॥
राजानश्च समाहूता राजपत्न्यश्च सर्वशः ।
राजसूयं समीयुः स्म राज्ञः पाण्डुसुतस्य वै ॥ १५ ॥
मेनिरे कृष्णभक्तस्य सूपपन्नमविस्मिताः ।
अयाजयन् महाराजं याजका देववर्चसः ।
राजसूयेन विधिवत्प्राचेतसमिवामराः ॥ १६ ॥
सुत्येऽहन्यवनीपालो याजकान् सदसस्पतीन् ।
अपूजयन् महाभागान् यथावत् सुसमाहितः ॥ १७ ॥
सदस्याग्र्यार्हणार्हं वै विमृशन्तः सभासदः ।
नाध्यगच्छन्ननेकत्वात् सहदेवस्तदाऽब्रवीत् ॥ १८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

हेमा इत्यन्ते यत्र तद्देवयजनं यथास्य स्थलं कृत्वा कर्षणा-दिना शोधयित्वा ॥ १२ ॥

---

भाषा टीका ।

व्यास भरद्वाज सुमन्तु गौतम असित वशिष्ठ च्यवन कण्व मैत्रेय कवष त्रित ॥ ७ ॥

विश्वामित्र वामदेव सुमति जैमिनि क्रतु पैल पराशर अथर्वा कश्यप धौम्य परशुराम भार्गव आसुरि वीतिहोत्र मधुच्छन्दा वीरसेन अकृतव्रण इतने ऋषियों यज्ञ कराने और ऋत्विज वरण किये गये रहे ॥ ८-९ ॥

हे नृप! इनके सिवाय अन्य भी बुलाए गए द्रोणाचार्य भीष्म कृपाचार्य से आदि लेकर तथा पुत्रन सहित धृतराष्ट्र महा बुद्धिमान विदुर ॥ १० ॥

ब्राह्मण क्षत्रिय वैश्य शूद्र तथा सब राजा लोग और राजान के मन्त्रि लोग ए सब यज्ञ के दर्शन करने की इच्छा करके आयते गए ॥ ११ ॥

उसके पश्चात वे ब्राह्मण लोग सुवर्ण हलन करके यज्ञ-भूमि को जोत कर वहां विधि के अनुसार राजा युधिष्ठिर को दीक्षा करते भए ॥ १२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

उपकरणा उपस्करा: वरुणस्य राजसूये यथा आसन्निति-शेषः किञ्च इन्द्रादयो देवगणाः ॥ १३—१४ ॥

ये च राजादयः समाहूतास्तत्र समीयुः स्म ते सर्वे श्रीकृष्ण-भक्तस्य पाण्डुसुतस्य राज्ञो युधिष्ठिरस्य राजसूयमविस्मिताः सन्तः सूपपन्नं सुसम्पन्नं मेनिरे इत्यन्वयः ॥ १५ ॥

याजका ऋत्विजः ॥ १६ ॥

सुत्येऽहनि सोमाभिषवदिने ॥ १७ ॥

अग्र्यार्हणमग्रपूजा तस्यार्हं योग्यम् अनेकान्त्याश्रोत्थानां बहुत्वेनैकस्यानिश्चयात् ॥ १८—१९ ॥

---

श्रीमज्जीवगोस्वामिकृतवैष्णवतोषिणी ।

हैमा इत्यर्धकम । उपकरणा उपकरणानि यज्ञपात्रादीनि किल निश्चये अत्रासम्भावनां माकुर्वित्यर्थः । इन्द्रादि त्रिकम विरिञ्चि-भवाभ्यां संयुता इति तयोस्तेषु यथा प्राधान्यम ॥ १३ ॥

तथा सगणा इत्यत्र सगणानामपि सूचितं गणाः श्रीगरु-डादयो वैकुण्ठपार्षदाः मुनयः आत्मारामाः श्रीसनकादयः खगाः श्रीगरुडपुत्रादयः चकारात् ब्राह्मणादयश्च सम्यक् स्वस्वगुणप्रदर्शनादिना ईयुः स्म हर्षे वै निश्चये मनने हेतुः पाण्डुसुतस्य सुतरूपेण स्वेन यशोविस्तारकस्येत्यर्थः । तथापि कृष्णस्य स्वयं भगवतो भक्तस्येति अत एवाविस्मिता आश्चर्यबुद्धिरहिताः देवादधिकं वर्चो दीप्तिर्येषां ते व्यासा-दयः मध्यपदलोपीसमासः अमराः देवर्षयः दृष्टान्तोयं प्राचीना सा परिपाटी यथाऽन्यत्र श्रुतास्ति तथैवात्र ज्ञेयेति सङ्केपार्थो दर्शितः ॥ १४—१६ ॥

सदसस्पतीन् सभाश्रेष्ठान् यतो महाभागान् परमपूज्यतमान् यथावत्तद्योग्यमेवापूजयत् यतः अवनीपालः दिग्विजयादिना पृथ्वीपतिः सुसमाहितः भक्तावधानोऽपीति ॥ १७ ॥

